## सौरपुराणम्

धर्मप्रमाणविचारः—

पुराणं पञ्चलक्षणम्, उपपुराणं मनवे सूर्यप्रोक्तं सौरम्, अष्टादशपुराणानां श्लोकसंख्या वक्तारश्च २८३.

## पराशरपुराणम्

धर्मप्रमाणविचारः—

शास्त्रलक्षणम्, अष्टादश उपपुराणानि, बौद्धादितन्त्राणि न प्रमाणानि वैदिकजनानाम् २८३. बौद्धार्हतादिशास्त्रमवैदिकजनानां प्रमाणम्, न वैदिकानाम् २८४.

## देवीपुराणम्

धर्मप्रमाणविचारः—

शैवं वैदिकं च शास्त्रं प्रमाणम् २८४.

## आदित्यपुराणम्

धर्मप्रमाणविचारः—

पञ्चरात्रागमः प्रमाणम् २८४.

## वासिष्ठलिङ्गपुराणम्

धर्मप्रमाणविचारः—

पूर्वोत्तरमीमांसे वैदिकमार्गसंस्थापिके, अवैदिकमार्गगामिनां कृते वैष्णवबौद्धादितन्त्राणि २८४.

## अचिन्त्यविश्वसादाख्यतन्त्रम्

धर्मप्रमाणविचारः—

शैवागमसारभूतः विश्वसादाख्यः आगमः २८५.

## मोहकूर्मोत्तरतन्त्रम्

धर्मप्रमाणविचारः—

शैवागमः अबाध्यः वेदेन आगमेन च २८५.

## सुप्रभेदतन्त्रम्

धर्मप्रमाणविचारः—

वेदसंमतः सिद्धान्तः २८५.

## संग्रहकारः ( स्मृतिसंग्रहः )

धर्मप्रमाणविचारः—

धर्मप्रवर्तकमुनीनां धर्मशास्त्राणि प्रमाणानि ; श्रुतिस्मृतिपुराणानां पूर्वं पूर्वं बलीयः २८५.

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

परशाखीयकर्मानुष्ठानानुमतिः ३५१. परशाखीयानुष्ठाननिषेधः ३५२.

## त्रिकाण्डमण्डनकारिकाः अथवा त्रिकाण्डमण्डनम्

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

स्वशाखास्वसूत्रपरित्यागान्यशाखान्यसूत्रपरिग्रहादिविचारः ३५२.

धर्मतत्त्वविचारः—

नित्यकाम्यनैमित्तिकाधिकाराः ; नित्यकाम्यकर्मणोर्विवेकः काम्यनैमित्तिकयोर्विवेकश्च ७४८. पतितस्य शास्त्रीयकर्माधिकारे चर्चा ७४९.

## रेणुकारिकाः

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

पारंपरिकशास्त्रीयकर्मणः कर्तव्यता ३५४.

## गृह्यासंग्रहः

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

स्वशास्त्रानुक्तस्य परशास्त्रीयस्य सर्वसाधारणस्य च कर्मणोऽनुष्ठेयत्वम् ३५४. स्वशास्त्रोक्तौ परशास्त्रीयानुष्ठाननिषेधः ३५५.

## विष्णुस्वामिकारिकाः

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

सूत्रपरिग्रहविचारः ३५७.

## स्मृत्यर्थसारः

धर्मप्रमाणविचारः—

समयाचाराः ग्रामाचाराः युगधर्माश्च प्रमाणम् २८६.

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

स्मार्ते कर्मणि स्वगृह्योक्तमेव ग्राह्यम्, श्रौते कर्मणि सर्वशाखोपसंहारः ३५२.

धर्मतत्त्वविचारः—

समर्थेन अनुकल्पो नाऽऽचरणीयः ७४८.

## अनिर्दिष्टकर्तृकवचनानि

धर्मप्रमाणविचारः—

श्रुतिस्मृतिरूपम् आर्षवाक्यं प्रमाणं प्रत्यक्षवत्; अष्टादश धर्मशास्त्रप्रवर्तकाः; ब्राह्मं पुराणमाद्यम्, तस्मात् अष्टादश पुराणानि; याज्ञवल्क्यस्मृतेः प्रामाण्यम्; शङ्खलिखितयोः प्रामाण्यम्; पुराणपाशुपतागमयोः प्रामाण्यम् २८६. प्रमाणं श्रुतिसंमतः लोकसंमतः शिष्टसंमतश्च धर्मः; लोकशास्त्रयोर्विरोधे लोकः बलीयः प्रमाणम्; स्मृतौ पुराणे च वेदविरुद्धोऽर्थस्तन्त्रार्थ एव, स वैदिकैर्न ग्राह्यः; धर्मनिर्णये परिषत् प्रमाणम्, एकोऽपि यतिः परिषत्; अनुष्ठात्रा आदितः स्वीकृतः बहूनां विकल्पानामेक एव सर्वदा अनुसर्तव्यः नान्यः; पुराणस्य वेदत्वम्; अष्टादश महापुराणानि २८७.

धर्मप्रमाणविचारः— वेदानां शाखाः शाखादिपरिग्रहविचारश्च—

स्वशाखाभावे स्वसूत्राभावे वा अन्यसूत्रपरिग्रहविचारः ३५७. स्वशाखापरशाखापरिग्रहतारतम्यविचारः ३५८. वेदशास्त्रपुराणहर्तुः शङ्खासुरस्य कथा ३५९. शुक्लकृष्णभेदः यजुर्वेदस्य, भारते प्रदेशभेदेन शाखापठनम् ३६०.

धर्मतत्त्वविचारः—

धर्म एव मृतानुगामी सहायः, धर्मो नानारूपः ७४९. सुखस्य ज्ञानस्य च साधनमार्गो धर्मोऽनुष्ठेयः ७५१.



# शुद्धिपत्रम्



| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १४ | १ | ३ | द्विषक | द्विषयक |
| ,, | ,, | १४ | प्रत्यक्षं धर्म | प्रत्यक्षं न धर्म |
| २३ | ,, | १५ | प्रतिये | प्रतीये |
| ३२ | २ | १६ | जनित | जनित- |
| ४३ | १ | २८ | दक्षणा | दक्षिणा |
| ६४ | ,, | १ | इदानी | इदानीं |
| ९८ | ,, | ३ | र्धगुर्णै | र्धर्गुर्णै |
| ,, | २ | २८ | णाकारे | णाकरे |
| ११० | ,, | २६,२७ | पौरुषय | पौरुषेय |
| १११ | १ | ५ | निष्फला | निष्फलाः |
| १२९ | २ | २४ | बन्धनि | बन्धनानि |
| १३२ | ,, | १७ | र्गस्त्वुदी | र्गस्त्वदी |
| १४४ | ,, | २० | दुखान्ताः | दुःखान्ताः |
| १६७ | १ | २५ | ( वाक्य च ) | ( वाक्यं च ) |
| १९७ | २ | ११ | पूर्वे पू | पूर्वैः पू |
| २२८ | ,, | ९ | दाश्वाला | दाश्वला |
| २३६ | ,, | २१ | प्ततम | प्ततम |
| २८१ | ,, | ८ | तछ्रुत्वा | तच्छ्रुत्वा |
| २८४ | ,, | १० | स्थापके | स्थापिके |
| ३०७ | १ | ९ | शाखोछ्रि | शाखोच्छ्रि |
| ३२२ | ,, | २६ | ब्राभ्रव्यं | बाभ्रव्यं |
| ३२३ | २ | १८ | चतुष्पादो | चतुष्पात् |
| ३४८ | ,, | १७ | र्वेदः आ | र्वेदमा |
| ३५४ | ,, | १३ | पारिक | परिक |
| ३५५ | ,, | १२ | रुल्पक | रल्पक |
| ३६३ | १ | ६ | यथका | यथाका |
| ३६६ | २ | २३ | प्रमाण्य | प्रामाण्य |
| ३७२ | १ | ३१ | ( हूयते ). | ( हूयते ) वसुः ( हविः ). |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३८९ | १ | ६ | दुखाभा | दुःखाभा |
| ४१२ | २ | २ | धानमी | धनमी |
| ४५९ | ,, | ११ | परिक्षा | परीक्षा |
| ४६० | ,, | २४ | रुचित्तं | रुचितं |
| ४६३ | १ | २३ | कुर्वन्तिः | कुर्वन्ति |
| ५२७ | २ | १० | दुखे | दुःखे |
| ५४० | ,, | १७ | उतये | ऊतये |
| ५४१ | ,, | २४ | वृत्युप | वृत्युपप |
| ५४६ | ,, | २१ | शथपथ | शतपथ |
| ५७३ | ,, | १० | न्वानक | न्वानकं |
| ५८१ | १ | २४ | काण्ड | काण्डे |
| ५८३ | २ | २६ | १२।१०५। | १३।१०५। |
| ६०४ | १ | ७ | बह्मध | बाह्मध |
| ६२९ | ,, | १५ | षिध्यतेवा | षिध्यते वा |
| ६४७ | २ | १९ | प्रकान्त | प्रक्रान्त |
| ७०४ | १ | १२ | स्वरूम् | स्वरूपम् |
| ७२६ | ,, | ५ | माङ्गल्यं | माङ्गल्यं |



# धर्मकोशः

## वर्णाश्रमधर्मकाण्डम्

### धर्मप्रमाणविचारः

#### वेदाः

वेदाः प्रमाणम्

[1]इयं या परमेष्ठिनी वाग्देवी ब्रह्मसंशिता ।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः ॥

परमे स्थाने तिष्ठतीति परमेष्ठिनी, परमेष्ठिनो ब्रह्मणः पत्नी वा, ब्रह्मसंशिता ब्रह्मभिर्मन्त्रैः सम्यगुत्तेजिता सकलवैदिकवाक्यप्रतिपादितस्वरूपा इयं विद्वद्भिः स्वात्मभूतेन सम्यगनुभूयमाना या वाग्देवी वर्तते, ययैव वाग्देव्या घोरं परेषामरुन्तुदं वचः शापादिरूपं ससृजे सृष्टम् उच्चरितम् , तयैव वाचा नः अस्मदर्थे शान्तिरस्तु वाचा सृष्टस्य घोरकर्मणः शान्तिर्भवतु । यत् वाचा अनर्थजातमुत्पन्नं तदेव स्वकृतमनर्थं परिहरत्वित्यर्थः । असा.

[2]स्तुता मया वरदा वेदमाता
प्र चोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं
द्रविणं ब्रह्मवर्चसम् ।
मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥

स्वानुष्ठितकर्मणो निरभिसंधिना सर्वार्थं फलाशासनं स्वस्याविकलं भवतीत्यभिप्रायेण मन्त्रद्रष्टा ऋषिः स्वानुष्ठितवेदाध्ययनेन गायत्रीजपेन वा द्विजानामायुरादिफलमाशास्य तन्मध्यवर्तिनः स्वस्यापि फलं सिद्धवदनुवदति— मया वेदाध्यायकेन सावित्रीं जपता वा स्तुता अभिष्टुता स्वभ्यस्ता, वरदा इष्टकामप्रदात्री, पावमानी— पवमानः पापात्परिशोधकः सूत्रात्मा, 'वायुरेव पवमानो दिशो हरित आविष्टः' (ऐआ. २।१।१) इति ऐतरेयकश्रुतेः, तत्प्रतिपादिका पावमानी, वेदमाता वेदस्य ऋगादिरूपस्य माता सर्ववेदसारत्वेन मातृवत्प्रधानभूता सावित्री, वेद एव वा माता, मातृवद्धितकारित्वात् , 'वेद एव द्विजातीनां निःश्रेयसकरः परः' इति स्मृतेः, द्विजानां द्विजन्मनां ब्राह्मणानां त्रैवर्णिकानां वा आयुरादिफलानि प्र चोदयन्ताम् । पूजायां बहुवचनम् । प्रेरयतु प्रयच्छतु । ब्रह्मवर्चसं ब्रह्मणां वर्चः ब्राह्मं तेजः अथ मह्यं स्तोत्रे सर्वेषां फलप्रार्थकाय दत्त्वा आयुरादिकं फलं वितीर्य ब्रह्मलोकम्— ब्रह्मणो लोकः सत्यलोकः, ब्रह्मैव वा लोकः लोक्यमानं विद्वद्भिरनुभूयमानं परतत्त्वम्, (तं) व्रजत इति प्रत्यक्षवादः । अत्रापि पूर्ववद्बहुवचनम् । शब्दावगम्यब्रह्माकारं परित्यज्य वाङ्मनसातीतार्थब्रह्मरूपा भवेति मन्त्रदर्शिना ऋषिणा साक्षात्कृतपरत्येन(? तत्वेन) उच्यते । असा.

[1]यस्मात्कोशादुदभराम वेदं
तस्मिन्नन्तरव दध्म एनम् ।
कृतमिष्टं ब्रह्मणो वीर्येण
तेन मा देवास्तपसाऽवतेह ॥

यस्मात् 'अभ्यसश्च व्यचसश्च' इति मन्त्रे प्रतिपादितात् मूलाधाररूपाद्वा कोशात् । कोशवत्कोशः ।

(१) असं. १९।९।३.
(२) असं. १९।७१।१.

(१) असं. १९।७२।१.

यथा कोशाद्धनवस्त्ररत्नादिपूर्णात् अपेक्षितं वस्तु आनीयते एवमस्य सर्ववर्णमन्त्रायतनत्वात् तत एवोद्धार इति तत्त्वेन व्यपदेशः । वेदम् । विदन्त्यनेन प्रत्यक्षाद्यविषयम् उपायम् इति वेदः । उक्तं हि– 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥' इति । श्रौतस्मार्तसकलकर्मप्रतिपादकमन्त्रब्राह्मणरूपं वेदम् उदभराम उद्धृतवन्तः, कर्मानुष्ठानार्थम् उच्चारितवन्तः स्मः, तस्मिन् पूर्वोक्ते स्थाने एनं येन कर्माण्यनुष्ठितानि तमेतम् *अन्वादिष्टं वेदम् अन्तः मध्ये अव दध्मः पुनः स्थापयामः । कर्मप्रयोगार्थं स्वमुखादुच्चारिता वर्णरूपा मन्त्रास्तथैव यदि निःसरेयुस्तर्हि उत्तरकाले मन्त्राभावेन कर्मानुष्ठानं न भवेदिति पुनः पूर्वोक्त एव वेदोद्धरणापादानस्थाने वेदनिधानम् उक्तमित्यभिप्रायः । ब्रह्मणः देशकालवस्तुपरिच्छेदशून्यस्य परमात्मनो वीर्येण वीर्यरूपेण कर्मप्रतिपादकेन वा वेदेन कृतं यत्कर्म ब्रह्मयज्ञादिकं निष्पादितम्, इष्टं यत् स्वाहावौषडादिशब्दैर्देवतार्थं हविः प्रत्तम्, तेन कृतेन इष्टेन च कर्मणा हे देवाः, यूयम् इह कर्मलोके तपसा । तपःशब्देन फलं विवक्ष्यते । कर्मफलेन मा माम् अनुष्ठातारम् अवत रक्षत तर्पयत । कर्म अविकलं कृत्वा तत्फलेन मां संयोजयतेति यावत् । यद्वा तपसा कृच्छ्रानुष्ठितेन कर्मणा माम् अवत । अथ वा तपसा, तपः पर्यालोचनम्, तद्रूपेण तेन ब्रह्मणो वीर्येण मां संतर्पयतेति । अस्मा.

* 'अन्वादिष्टम्' इति पदस्य 'पूर्वमुपात्तम्' इत्यापातप्रतीयमानोऽर्थो भाष्यकाराभिमत इति न सुकल्पम्, उपात्त–पुनरुपादीयमानयोरेकस्मिन् यत्तच्छब्दघटितमहावाक्ये स्थितत्वेन विशेषणस्यानपेक्षितत्वात्, पश्चादर्थकानुशब्दप्रयोगविरोधाच्च । तस्मादयमेवार्थः– मन्त्रे 'एनम्' इत्येनादेशसाधितम् एतच्छन्दस्य रूपं प्रयुक्तम् । एनादेशश्च अन्वादेशविषये विहितः । 'पूर्वमुपात्तस्य पुनरुपादानम्' अन्वादेशपदार्थः । तमिमं व्याकरणसंस्कारं बोधयितुमिदं विशेषणम् । अतः 'पुनरुपपादितम्' इति तदर्थः । सोऽयमन्वादेशः एनशब्दस्य न वाच्योऽर्थः, किंतु वाच्यार्थबहिर्भूतः प्रयोगोपाधिः ।

[1]ऋचः सामानि यजूꣳषि ।
सा हि श्रीरमृता सताम् ॥

वेदत्रयोक्ता मन्त्रविशेषा ऋगादयः । सतां सन्मार्गवर्तिनाम् ऋगादिरूपा सा खल्वमृता श्रीः । धनादिरूपायाः श्रियो बहुधा विनाशः संभावितः । ऋगादिरूपायास्तु पुनः पुनरभ्यासेनाभिवृद्धिरेव, न तूपक्षयः । तैब्रा.

[2]गौरी मिमाय सलिलानि तक्षती ।
एकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी ।
सहस्राक्षरा परमे व्योमन् ॥

परमे व्योम्नि ब्रह्मणि प्रतिष्ठिता गौरी गौरवर्णा वाग्देवी सृष्ट्युपक्रमे सलिलसदृशानि वर्णपदवाक्यानि तक्षती सृजन्ती मिमाय शब्दमकरोत् । कथम् ? प्रथमं प्रणवात्मना एकपदी ब्रह्मणो मुखान्निर्गता । अनन्तरं व्याहृतिरूपेण सावित्रीरूपेण च द्विपदी । ततो वेदचतुष्टयरूपेण चतुष्पदी । ततो वेदाङ्गैः षड्भिः पुराणधर्मशास्त्राभ्यां चाष्टापदी । ततो मीमांसान्यायसांख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्धर्वैर्नवपदी । ततोऽनन्तैर्वाक्यसंदर्भैः सहस्राक्षरा अनन्तविधा बभूवुषी संपन्ना । तैब्रा.

[3]यामृषयो मन्त्रकृतो मनीषिणः ।
अन्वैच्छन्देवास्तपसा श्रमेण ।
तां देवीं वाचꣳ हविषा यजामहे ।
सा नो दधातु सुकृतस्य लोके ॥

मन्त्रकृतः संप्रदायप्रवर्तकरूपेण मन्त्राणां कर्मकर्तारः, मनीषिणः बुद्धिमन्तः धारणशक्तियुक्ताः ऋषयः वसिष्ठाद्याः श्रमेण तपसा बहुप्रयाससाध्येन तपसा युक्ताः,

(१) तैब्रा. १।२।१।२६.

(२) ऋसं. १।१६४।४१ गौरी मि (गौरीर्मि); असं. ९।१०।२१ गौरी मि (गौरिन्मि) परमे व्योमन् (भुवनस्य पङ्क्तिस्तस्याः समुद्रा अधि वि क्षरन्ति); तैब्रा. २।४।६।११; ऐआ. १।५।३ ऋसंवत्, प्रथमचरणमात्रम्; तैआ. १।९।४; नि. ११।४० ऋसंवत्,

(३) तैब्रा. २।८।८।५.

तथा देवाश्च यां वाचमन्वैच्छन् अनुप्राप्तुम् इच्छामकुर्वन् । अत एव स्मर्यते– 'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥' इति । तां तादृशीं वाचं देवीम् अनेन हविषा यजामहे । सा च देवी सुकृतस्य कर्मणः फलभूते लोके नः अस्मान् दधातु स्थापयतु । तैब्रासा.

[1]**'अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञः । तस्य वा एतस्य ब्रह्मयज्ञस्य– वागेव जुहूः, मन उपभृत्, चक्षुर्ध्रुवा, मेधा स्रुवः, सत्यमवभृथः, स्वर्गो लोक उदयनम् । यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददल्लोकं जयति त्रिस्तावन्तं जयति भूयांसं चाक्षय्यम्, य एवं विद्वानहरहः स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥**

इत्थं प्रत्यहमनुष्ठेयान् चतुरो महायज्ञान् संग्रहेण प्रतिपाद्य तदुत्तरं बहु वक्तव्यत्वात् ब्रह्मयज्ञं प्रपञ्चयितुं प्रस्तौति– अथ ब्रह्मयज्ञ इति । इतःपरं ब्रह्मयज्ञोऽधिक्रियत इत्यर्थः । तस्य स्वरूपमाह– स्वाध्यायो वै ब्रह्मयज्ञ इति । स्वशाखाध्ययनं ब्रह्मयज्ञ इत्यर्थः । यज्ञसाम्यं संपादयति– तस्य वा एतस्येति । तस्य स्वशाखाध्ययनात्मकस्यैव एतस्य ब्रह्मयज्ञस्य वागिन्द्रियमेव जुहूः । तस्य वाचोऽधिष्ठानरूपं यन्मनः सा उपभृत् । मनसा संस्मृतमर्थं हि वाचा व्याहरति । यद्दर्शनसाधनं चक्षुरिन्द्रियं तदेव कृत्स्नयज्ञनिर्वर्तकहविर्धारणार्था ध्रुवा । चक्षुषा दृष्टमर्थं हि मनसा स्मरति । अत उपजीव्यत्वात्तस्य ध्रुवारूपत्वम् । मेधा स्रुवः । मेधा धारणासामर्थ्यं सैव स्रुवः । यत्सत्यं सत्यवदनं स एव तस्य यज्ञस्यावभृथः । स्वाध्यायेन प्राप्तव्यः फलभूतो यः स्वर्गो लोकः तदुदयनं तस्य यज्ञस्य समापनं न तु प्रधानफलम् । इत्थं यज्ञात्मना निरूपयित्वा तस्य प्रधानफलमाह– यावन्तमिति । वित्तेन धनेन पूर्णाम् इमां कृत्स्नां पृथिवीं ब्राह्मणेभ्यः प्रयच्छन् यावन्तं यत्परिमाणं लोकं जयति ब्रह्मयज्ञयाजी तु त्रिस्तावन्तं त्रिगुणितपरिमाणं लोकं जयति । ततोऽपि भूयांसमधिकतरम् अक्षय्यं क्षेतुमशक्यं क्षयरहितं लोकं प्राप्नोति । एवं विद्वानिति । वागादेर्जुह्वादिसंपत्तिपुरःसरं वेदाध्ययनस्य यज्ञरूपतां जानन्नित्यर्थः । इत्थं प्रेक्षावत्प्रवृत्तिप्रयोजनकं फलं प्रतिपाद्य तद्धेतुभूतमध्ययनं विधत्ते– तस्मात्स्वाध्याय इति । यस्मादेवं ब्रह्मयज्ञस्वाध्यायस्यैतावत् फलम्, तस्मात्स्वाध्यायः अध्ययनेन गुरुमुखादवगन्तव्यः । अध्ययनसंस्कारसंस्कृतो हि तावत्फलं साधयितुं शक्नोति, न तु प्रकारान्तरादागत इति विधेरभिप्रायः । शब्रासा.

**पयआहुतयो ह वा एता देवानां यदृचः । स य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते पयआहुतिभिरेव तद्देवांस्तर्पयति । त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहन्ति ॥**

अथ तस्मिन् ब्रह्मयज्ञे ऋचामध्ययनं पयआहुतिरूपत्वेन प्रशंसति– पयआहुतयो ह वा एता इति । क्षीरहविष्का या आहुतयः ता एवैता देवानाम् ऋचः इति यत् । ऋचामाहुतितादात्म्यमुक्त्वा तदध्ययनस्य फलमाह– स य एवं विद्वानिति । निगदसिद्धोऽर्थः । त एनं तृप्ता इति । एनम् अध्येतारं योगक्षेमादिभिः संतर्पयन्तीत्यर्थः । अप्राप्तस्य फलस्य प्राप्तिर्योगः । लब्धपरिपालनं क्षेमः । प्राणः प्राणनं जीवनम् । रेतः सुतादिनिमित्तं वीर्यम् । सर्वश्चासावात्मा च सर्वात्मा, चक्षुरादीन्द्रियसहितः कृत्स्नो देह इत्यर्थः । पुण्याभिः प्रशस्ताभिः धनसंपत्तिभिरित्यर्थः । अस्य च ऋचामध्येतुः पुरुषस्य पितॄनभिलक्ष्य घृतपूर्णा मधुपूर्णाः सरितः स्वधारूपेण वहन्ति, अन्नात्मना प्रवहन्तीत्यर्थः । शब्रासा.

**आज्याहुतयो ह वा एता देवानां यद्यजूंषि । स य एवं विद्वान्यजूंष्यहरहः स्वाध्यायमधीत आज्याहुतिभिरेव तद्देवांस्तर्पयति । त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहन्ति ॥**

यजुरध्ययनमाज्याहुतित्वेन स्तौति– आज्याहुतयो ह वा इति । यजूंषि यजुर्वेदपठितानि वाक्यानि इति

(१) शब्रा० ११।५।६।३–९.

यदस्ति एता देवानामाज्याहुतयः। तदध्ययनस्य फलमाह —स य एवं विद्वानिति। अहरहः स्वाध्यायमिति विशेषेण ग्रहणाध्ययनात्( ? मित्यविशेषेणाध्ययनग्रहणात् ) ब्रह्मयज्ञस्वाध्यायाव्यवच्छेदः। योगक्षेमेणेत्यादि उक्तार्थम्।

शब्रासा.

**सोमाहुतयो ह वा एता देवानां यत्सामानि। स य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवांस्तर्पयति। त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः। घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहन्ति॥**

अथ सामानि सोमाहुतित्वेन स्तौति— सोमाहुतयो ह वा इति। अथैतत्सोमाहुतिरूपतामुपजीव्य तेषां ब्रह्मयज्ञकाले अध्ययनं प्रशंसति— स य एवं विद्वानिति। गतमेतत्।

शब्रासा.

**मेदआहुतयो ह वा एता देवानां यदथर्वाङ्गिरसः। स य एवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेदआहुतिभिरेव तद्देवांस्तर्पयति। त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः। घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहन्ति॥**

अथ तुरीयं वेदं मेदआहुतित्वेन निरूपयति— मेदआहुतयो ह वा इति। मेदो हविष्यं मांसम्, तत्साध्या आहुतयो मेदआहुतयः। अथर्वणा ऋषिणा अङ्गिरसा च दृष्टाः शाखाः अथर्वाङ्गिरसः। स य एवं विद्वानित्यादि पूर्ववत्।

शब्रासा.

**मध्वाहुतयो ह वा एता देवानां यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंस्यः। स य एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंसीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवांस्तर्पयति। त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः। घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहन्ति॥**

इत्थं चतुर्णां वेदानां ब्रह्मयज्ञकाले अध्ययनं प्रशस्य तदङ्गभूतानामन्यासां विद्यानामध्ययनं वक्तुं ता मध्वाहुतित्वेन निरूपयति— मध्वाहुतयो ह वा इति। मधु माक्षिकम्, तत्साध्या आहुतयः मध्वाहुतयः। अनुशासनानीति। अनुशिष्यन्ते व्युत्पाद्यन्ते एभिरित्यनुशासनानि व्याकरणनिरुक्तादीनि षडङ्गानि। न्यायमीमांसादयः विद्याः। उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम्। इतिहासः पुरावृत्तप्रतिपादकं भारतादि। पुराणं वैष्णवादि। इतिहासः पुराणं चेति द्वन्द्वैकवद्भावः। नराः मनुष्याः तत्प्रशंसापादकाः श्लोकाः नाराशंस्यः गाथाः। इत्थं चतुर्दश विद्यास्थानानि ब्रह्मयज्ञकाले अध्येतव्यत्वेन उपलक्षितानि।

अन्ये त्वेवं व्याकुर्वते— मन्त्रब्राह्मणभेदेन वेदभागो द्विविधः। तत्र ऋगादिशब्दैर्मन्त्रभागस्याध्ययनं प्रतिपादितम्। अधुना ब्राह्मणभागस्याध्ययनं प्रतिपाद्यते। तत्र 'स वै संभारान्त्संभरति' (शब्रा. १४।१।२।१) इत्यादीनि विधिवाक्यानि अनुशासनानि। उपासनाविधिवाक्यानि विद्या। 'स वै गोतमस्य पुत्र वृतो वनं धावयेत्' (शब्रा. ११।४।१।७) इति उक्तिप्रत्युक्तिरूपं ब्राह्मणं वाकोवाक्यम्। 'आपो ह वा इदमग्रे सलिलमेवाऽऽस' (शब्रा. ११।१।६।१) इत्यादिकं सृष्टिप्रतिपादकं ब्राह्मणम् इतिहासः। 'उर्वशी हाप्सराः पुरूरवसमैडं चकमे' (शब्रा. ११।५।१।१) इत्यादीनि पुरातनपुरुषवृत्तान्तप्रतिपादकानि पुराणम्। 'महाहिमिव वै ह्रदात्' (शब्रा. ११।५।५।८) इत्यादयो मन्त्रा गाथाः। 'समानान्त्सदमुक्षन्ति ह्यान्' (शब्रा. ११।५।५।१३) इत्यादिका मनुष्यप्रशंसापरा नाराशंस्यः। एवं च अधीते इति अध्ययनलिङ्गमनुगृहीतं भवति। अन्यत्सर्वं पूर्ववत् योज्यम्।

शब्रासा.

**तस्य वा एतस्य ब्रह्मयज्ञस्य चत्वारो वषट्काराः— यद्वातो वाति, यद्विद्योतते, यत्स्तनयति, यदवस्फूर्जति। तस्मादेवंविद्वाते वाति विद्योत-**

**माने स्तनयत्यवस्फूर्जत्यधीयीतैव वषट्काराणामच्छम्बट्काराय। अति ह वै पुनर्मृत्युं मुच्यते। गच्छति ब्रह्मणः सात्मताम्। स चेदपि प्रबलमिव न शक्नुयात्, अप्येकं देवपदमधीयीतैव। तथा भूतेभ्यो न हीयते॥**

वातादीनि यानि अनध्यायनिमित्तानि तेषु सत्स्वपि ब्रह्मयज्ञस्यानिवृत्तिमभिप्रेत्य तेषां तदङ्गत्वमाह— तस्य वा एतस्येति। यज्ञत्वात् अस्य वषट्कारापेक्षायामुच्यते— चत्वारो वषट्कारा इति। तानेव चतुरः अनुक्रामति— यद्वातो वातीति। वातः वायुः प्रबलतरं वाति गच्छति इति यत् स प्रथमः वषट्कारः। विद्योतनं विद्युत्, स्तनयित्नुर्मेघगर्जनम्, अवस्फूर्जनं ध्वनिः, एते चत्वारो वषट्काराः। यस्मादेवं तस्मादेषां वातादीनाम् एवं वषट्काररूपतां जानन् वातादिषु सत्सु ब्रह्मयज्ञस्वाध्यायमधीयीतैव। किमर्थम्? एषां वषट्काराणां छम्बट्कारः वैयर्थ्यं तत्परिहाराय, न तु ग्रहणाध्ययनवत् अस्य नैमित्तिकानध्यायो विद्यत इति भावः। एवं वषट्कारेषु सत्सु यदध्ययनं तस्य फलमाह— अति ह वा इति। एवमधीयानः पुनर्मृत्युमतिमुच्यते। ब्रह्मणः सात्मतां समानरूपतां सायुज्यं गच्छति। अशक्तौ पक्षान्तरमाह— स चेदिति। स चाधीयानः पुरुषो यदि प्रबलमिव अधिकमध्येतुं न शक्नुयात् तथापि देवतावाचि एकं वैदिकपदमधीयीतैव, न तूष्णीमासीत। तथा सति भूतेभ्यः निवृत्तेभ्यस्तेभ्यो वषट्कारेभ्यः न हीयते हीनः प्रच्युतो न भवति। शब्रासा.

[1]**अथातः स्वाध्यायप्रशंसा। प्रिये स्वाध्यायप्रवचने भवतः। युक्तमना भवति। अपराधीनोऽहरहरर्थान् साधयते। सुखं स्वपिति। परमचिकित्सक आत्मनो भवति। इन्द्रियसंयमश्च। एकारामता च। प्रज्ञावृद्धिः। यशोलोकपक्तिः। प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभि निष्पादयति। ब्राह्मण्यं प्रतिरूपचर्यां यशोलोकपक्तिम्। लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्ति— अर्चया च दानेन चाज्येयतया चावध्यतया च॥**

अथास्मिन् ब्रह्मयज्ञस्वाध्याये पुरुषाणामादरातिशयं जनयितुं प्रशंसां कर्तुं प्रतिजानीते— अथातः स्वाध्यायेति। अतः परं वक्ष्यमाणैः फलैः स्वाध्यायस्य प्रशंसा प्रशंसनमेव क्रियते। तद्धेतुभूतानि फलान्यनुक्रामति—प्रिये इत्यादिना। स्वाध्यायः स्वाध्यायाध्ययनं प्रवचनम् अन्यस्याध्यापनम्। ते उभे अपि ब्रह्मयज्ञस्वाध्यायमधीयानस्य प्रिये अनुकूलवेदनीये भवतः। युक्तम् अविक्षिप्तम् एकाग्रं मनो यस्य स युक्तमनाः पराधीनो न भवतीति अपराधीनः अनन्यप्रेर्यः सन् अहरहः प्रत्यहं योग्यानर्थान् साधयते संपादयति। तथा सुखं यथा भवति तथा अव्याकुलितचित्तः स्वपिति निद्राति। दुःखसंस्पर्शनिमित्ता चिन्ता अस्य न भवतीत्यर्थः। आत्मनः स्वस्य परमचिकित्सको भवति। अन्ये हि भिषज औषधादिना शरीरस्यैव तात्कालिकीमेव उदरशिरोरोगादिपीडां निवर्तयन्ति। विद्वांस्तु देहव्यतिरिक्तस्याऽऽत्मनः उक्तेन स्वाध्यायेन पुनर्मृत्युप्राप्तिरूपां पीडां सर्वदैव निवर्तयतीति परमचिकित्सकत्वं तस्येत्यर्थः। तथा इन्द्रियसंयमश्चास्य भवति। इन्द्रियाणां चक्षुःश्रोत्रादीनां संयमः अनर्थहेतुभ्यो विषयेभ्यो व्यावृत्तिः। एक एव सन् आसमन्तात् भवतीत्येकारामः तस्य भावः। तथा भूत— भविष्यद्वर्तमानकालतयाऽवच्छिन्नकृत्स्नपदार्थविषया बुद्धिः प्रज्ञा तस्या अभिवृद्धिरस्य भवति। यशः कीर्तिः तत्प्रयुक्तो लोकः तस्य पक्तिः परिपाको भवति। अस्य प्रज्ञा वर्धमाना सती अध्ययनम् अध्यापनं यज्ञो याजनमिति चतुरो धर्मान् ब्राह्मणजातिमभिलक्ष्य निष्पादयति जनयति। तथा ब्राह्मण्यं ब्राह्मणभावं प्रतिरूपचर्यां तदनुरूपमाचरणं च संपादयति। प्रागुक्तां यशोलोकपक्तिमनूद्य तद्धेतुकमन्यत्फलमाह— यशोलोकपक्तिमिति। स च पच्यमानो यशसा युक्तो लोकः चतुर्भिः वक्ष्यमाणैः धर्मैर्ब्राह्मणं भुनक्ति पालयति। 'भुजोऽनवने' इति पर्युदस्तत्वात् भुजेरात्मनेपदाभावः। के पुनस्ते चत्वारो धर्माः? इति तानाह— अर्चया चेति। 'अर्च पूजायाम्' इति धातो रूपम्। अर्चा अर्चनं पूजनम्। इष्टस्य धनादेः समर्पणं

(१) शबा. ११।५।७।१-१०.

दानम् । ज्यानिः हानिः तदविषयत्वम् अज्येयता । 'ज्या वयोहानौ' इत्यस्मात् 'अचो यत्' (पासू. ३।१।९७) इति कर्मणि यत् । वधं हननमर्हतीति वध्यः तादृशो न भवतीत्यवध्यः तस्य भावस्तत्त्वम् । एतैश्चतुर्भिर्धर्मैः सर्वो लोको वेदाध्यायिनमाराधयतीत्यर्थः। शब्रासा.

**ये ह वै के च श्रमाः इमे द्यावापृथिवी अन्तरेण। स्वाध्यायो हैव तेषां परमताकाष्ठा। य एवं विद्वान् स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥**

अथ उत्कृष्टतपोरूपत्वमध्ययनस्याऽऽह– ये ह वै के च श्रमा इति । द्यावापृथिवी अन्तरेण अनयोर्द्यावापृथिव्योर्मध्ये ये केचन श्रमाः श्रमसाध्यास्तपोविशेषाः तेषां तपोविशेषाणां स्वाध्यायः एव परमताकाष्ठा परमता परमत्वम् उत्कर्षः तस्यावधिभूमिः । एतावन्ति फलानि विदुष एवाध्येतुरित्याह– य एवं विद्वानिति । तस्मादिति । प्रकृताध्ययनविधेर्निगमनम् । शब्रासा.

**यद्यद्ध वा अयं छन्दसः स्वाध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टं भवति । य एवं विद्वान् स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥**

अथ वेदाध्ययनशीलस्य कायिकव्यापारनिर्वर्त्ययागहोमादिफलमपि अयत्नतः सिध्यतीत्याह– यद्यद्ध वा इति । यद्यत् यस्य यस्य यज्ञक्रतोः प्रतिपादकच्छन्दसो वेदस्य संबन्धिनं स्वाध्यायं स्वशाखासंबन्धि स्वाध्यायानुवाकादिकमधीते अस्य अध्येतुः तत्प्रतिपाद्येन तेन तेनैव क्रतुना यज्ञकर्मणा इष्टं भवति यागः कृतो भवति । य एवं विद्वानित्यादि पूर्ववत् । शब्रासा.

**यदि ह वा अप्यभ्यक्तोऽलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीते । आ हैव स नखाग्रेभ्यस्तप्यते य एवं विद्वान् स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥**

अथ एतदप्यध्ययनं कृच्छ्रचान्द्रायणादितपोरूपत्वेन स्तौति– यदि ह वा इति । अभ्यक्तः तैलादिना कृताभ्यङ्गः । अलंकृतः स्रक्चन्दनादिभिर्भूषितः । सुहितः यथेष्टभोजनेन तृप्तः । सुखे सुखकरे शयने शय्यायां शयानः। एवमभ्यङ्गादीन्तपसः प्रतिकूलाम् चरन्नपि यः स्वाध्यायमधीते स आ नखाग्रेभ्यः नखाग्रपर्यन्तं यावच्छरीरपीडनेन तपस्तप्तवान् भवति । य एवं विद्वानित्यादि गतम् । शब्रासा.

**मधु ह वा ऋचः । घृतं ह सामानि । अमृतं यजूंषि । यद्ध वा अयं वाकोवाक्यमधीते क्षीरौदनमांसौदनौ हैव तौ ॥**

अथ एतेषामृगादीनां मध्वादिरूपतया तृप्तिहेतुतां वक्तुं सारूप्यमाह– मधु ह वा ऋच इति । या ऋचः तन्मधु । यानि सामानि तत् घृतम् आज्यम्। यानि यजूंषि तदमृतम् । यत् खलु अयम् अध्येता प्रागुक्तं वाकोवाक्यादिकमधीते क्षीरौदनमांसौदनावेव तौ । शब्रासा.

**मधुना ह वा एष देवांस्तर्पयति य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते । त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥**

इत्थं मध्वादिरूपतामुक्त्वा तदुपजीवनेन तेषामध्ययनं क्रमेण स्तौति– मधुना ह वा इति । निगदसिद्धोऽर्थः । ऋचामध्ययनं स्तौति– य एवं विद्वानिति । सर्वैः कामैरिति । काम्यमानैः सर्वैः शब्दादिविषयैः तन्निर्वर्त्यैर्भोगैश्चेत्यर्थः। शब्रासा.

**घृतेन ह वा एष देवांस्तर्पयति य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते। त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥**

साम्नामध्ययनं स्तौति– घृतेन ह वा इति । शब्रासा.

**अमृतेन ह वा एष देवांस्तर्पयति य एवं विद्वान् यजूंष्यहरहः स्वाध्यायमधीते । त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥**

यजुषामध्ययनं स्तौति– अमृतेन ह वा इति । शब्रासा.

**क्षीरौदनमांसौदनाभ्यां ह वा एष देवांस्तर्पयति य एवं विद्वान् वाकोवाक्यमितिहास-**

**पुराणमित्यहरहः स्वाध्यायमधीते । त एनं तृप्ता-स्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥**

वाकोवाक्यादीनामध्ययनं स्तौति— क्षीरौदनमांसौदनाभ्यामिति । क्षीरमिश्रितमोदनं क्षीरौदनम् । मांसमिश्रं शाल्योदनं मांसौदनम् । गतमन्यत् । वाकोवाक्यमितिहासपुराणमिति । इतिशब्दः प्रकारवाची कार्यादीनां संग्रहार्थः । शन्नासा.

**यन्ति वा आपः । एत्यादित्यः । एति चन्द्रमाः । यन्ति नक्षत्राणि । यथा ह वा एता देवता नेयुर्न कुर्युरेवं हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायं नाधीते । तस्मात्स्वाध्यायोऽध्येतव्यः । तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुम्ब्यां वाऽभिव्याहरेद्व्रतस्याव्यवच्छेदाय ॥**

सूर्यादिगतिवत् अखिलजगद्व्यवहारनिर्वर्तकत्वेन ब्रह्मयज्ञस्वाध्यायं स्तौति— यन्ति वा इति । नद्यादिरूपेण स्थिताः आपः खलु यन्ति गच्छन्ति । एति आदित्यः गच्छति । चन्द्रमाः अप्येति गच्छति । नक्षत्राण्यपि यन्ति गच्छन्ति । तत्रापां तिर्यग्गमनं स्नानपानादिकृत्स्नलोकव्यवहारार्थम् । सूर्यगमनम् अहनि प्रकाशप्रदानार्थम् । तथा चन्द्रनक्षत्राणां गमनं रात्रौ प्रकाशप्रदानार्थम् । यथा खलु एता अबाद्या देवता नेयुः न पुनर्गच्छेयुः । तदानीं न कुर्युः एव स्वस्वव्यवहारम् । ततस्तेषां निष्प्रयोजकत्वम् । एवमेतस्मिन्नहनि ब्राह्मणो निरर्थको भवति यस्मिन्नहनि स्वाध्यायं नाधीते । तस्मादित्यादि पूर्ववत् । यत एवम् अतोऽनध्यायादिनिमित्तेऽपि अध्यायादिप्रयुक्तसामर्थ्यविरहे च सत्यपि सर्वथा ब्रह्मयज्ञस्य वर्जनमयुक्तमित्युपसंहारव्याजेन प्रकारान्तरमाह— तस्मादप्यृचमिति । यस्मादेवं नित्यो ब्रह्मयज्ञस्वाध्यायः तस्मादनध्यायदिवसे अशक्तौ च आदावारभ्य एकामृचं वा अभिव्याहरेत् अधीयीत, एकं वा यजुः, एकं वा साम गाथारूपं मन्त्रम् । कुम्ब्याशब्देन एकार्थस्य प्रतिपादकं विध्यर्थवादात्मकं ब्राह्मणवाक्यमुच्यते । तद्धि अधीयते । सर्वथा लोपो न कार्य इत्यर्थः । किमर्थम्? ब्रह्मयज्ञस्वाध्यायलक्षणस्य व्रतस्याव्यवच्छेदाय व्यवच्छेदाभावाय । शन्नासा.

## आपस्तम्बपरिभाषासूत्रम्

मन्त्रब्राह्मणात्मको वेदो यज्ञे प्रमाणम्, मन्त्रब्राह्मणलक्षणे, अर्थवादानां ब्राह्मणशेषत्वम्, प्रवरोहादीनाममन्त्रत्वम्

[1]**मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ॥**

(१) केयं वेदप्रामाण्यप्रतिज्ञा मन्त्रब्राह्मणे यज्ञस्य प्रमाणमिति । हेतुश्च नोक्तः । स्थितेन वेदप्रामाण्येन धर्मसूत्रकाराणां व्यापारः । तत्राऽऽचार्येण यज्ञव्याख्यानं प्रतिज्ञातम् । स यज्ञोऽभिव्यक्तः फलाय भवति । यानि चान्यानि साधनानि तैश्चाभिव्यज्यते । कुत एतद्गृह्यत इति प्राप्ते इदमुच्यते— मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् । मन्त्रश्च ब्राह्मणं (चेति) जात्यभिधानवचनम् । मन्त्रो मननात् । ब्राह्मणमभिधानात् । मन्त्रब्राह्मणे तु यज्ञस्य प्रमाणम् । प्रमाऽभिधीयते( ? प्रमीयते ) येन प्रमेयार्थस्तत्प्रमाणम् । दृष्टमदृष्टं वा फलं यज्ञः साधयति, इमानि चास्य साधनानीति एतस्मिन् प्रतिपत्तव्ये मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् । इदं च प्रमाणं शास्त्राख्यं प्रत्यक्षम् । कथमप्रत्यक्षस्य( ? क्षम् )? यः पुनः पुरुषप्रणीतो ग्रन्थो विस्तरणाय तदनुमानमप्रत्यक्षस्येति( ? क्षमिति ) । अत्राऽऽहुः— देवतोद्देशेन द्रव्यत्यागात्मकेषु होमेषु भूतेषु 'सक्तुभिर्जुहोति, उन्नेता जुहोति, अञ्जलिना जुहोति, पदे जुहोति' इति येषु यागेषु एतानि विशेषाकारेण विहितानि तेषु तानि स्युः । येष्वेव तानि न विहितानि तेषु विहितेषु 'चोद्यमाने' इत्यादिभिः सूत्रैराज्यादीनि साधनानि विधाय प्रसङ्गात्पात्राणां धारणे तेषां प्रतितन्त्रं संस्कारे उपदिष्टे इयमाशङ्का— द्रव्यकारकदेवताकारकसाध्येषु यागेषु द्रव्यकारकाणि सामान्यविशेषसाधनानि यागान् साधयन्ते । केनोपलभ्यन्ते देवताः? तत्र कस्य यागस्य केन केन रूपेण यागे देवतोपकरोति? इति न ज्ञायत इत्यत आह— मन्त्रब्राह्मणे यज्ञस्य प्रमाणमिति । साङ्गो यज्ञः प्रमीयते ज्ञायते येन परिच्छिद्यते तस्य तत्प्रमाणम् ।

---

(१) आपप. १।३२–३९.

मन्त्रब्राह्मणाभ्यां हि साङ्गोपाङ्गो यज्ञः प्रमीयते । ब्राह्मणवाक्यैः तावत् 'आग्नेयमष्टाकपालम्' इत्येवमादिभिः 'धात्रे पुरोडाशं द्वादशकपालम्' इत्येवमादिभिश्च द्रव्यदेवताविशिष्टो द्रव्यदेवतासाध्योऽभिधीयते देवतातद्धितेन चतुर्थ्या च । मान्त्रवर्णिकदेवताविधिरपि– 'येन कर्मणेर्त्सेत्तत्र होतव्याः' इति अभ्यातानमन्त्रविशिष्टा अभ्यातानमन्त्रसाधनका होमा विधीयन्ते । 'अग्निर्भूतानाम्' इत्यनुवाकस्थानां मन्त्राणामभ्यातान इति संज्ञा । तेऽभ्यातानामन्त्राः तान् होमान् साधयेयुः यदि तत्प्रकाशिता अग्नीन्द्रादयः तेषां होमानां देवताः स्युः, अनुष्ठानकाले होमानामपेक्षिताङ्गभूतदेवताप्रकाशनात् । न ह्यन्यथाऽभ्यातानानां मन्त्राणां होमसाधनत्वम् । देवता अपि देवतोद्देशेन द्रव्यत्यागात्मकेषूद्देश्यरूपेण तेषामुपकुर्वन्ति । अतो देवता अपि यागनिर्वर्तकत्वेन तत्कारकत्वेनाङ्गानि । अतः साङ्गो यज्ञो मन्त्रब्राह्मणाभ्यां प्रतीयते । कपमा.

(२) मन्त्रश्च ब्राह्मणं च मन्त्रब्राह्मणे । यज्ञ इति यज्ञसाध्यमपूर्वमभिधीयते । मन्त्रब्राह्मणशब्देन सकलस्य वेदस्य ग्रहणम् । सकलो वेदः करणेतिकर्तव्यतानुबन्धस्यानुष्ठेयात्मकस्यापूर्वस्यैव प्रमाणम्, न भूतार्थस्य रुद्ररोदनादेः । तस्य प्रमाणानपेक्षत्वात् । मन्त्रप्रतिपाद्यार्थानां ब्राह्मणविहितानामपि उपसंहारार्थं मन्त्रग्रहणम् । यथा 'इयान् प्रादेशसंमितः' इति त्रिवृतः पवित्रस्य प्रादेशमात्रत्वम्, 'दशतः शक्वरीर्मम' इति मन्त्रवर्णादुभाभ्यां प्रतिग्रहणम्, 'उत्सादतोऽङ्गादङ्गादवत्तानाम्' इत्युत्सादतोऽवदानम्, 'होतृषदना हरिताः' इति मन्त्रवर्णाद्धरितानामेव दर्भाणामुपादानम्, 'नरो यत्ते दुदुहुर्दक्षिणेन' इति दक्षिणेनैव हस्तेन पीडनम्, 'दशावनिग्य:' इत्युभाभ्यामभिषवः, तथा 'विमान एष दिवो मध्य आस्ते' इति द्वाभ्यामश्मनिधानम्, पृश्निरश्मा निधीयते 'मध्ये दिवो निहितः पृश्निरश्मा' इति । एवंप्रकारैर्मन्त्रैरर्थवादैश्चानुष्ठेयोऽर्थः प्रतिपादितः । एवंविधा उपादीयन्ते । किंच, यत्र मन्त्रेण प्रयोगरूपाभिधानं दृश्यते, न च विनियोगो दृश्यते, तत्र मन्त्र एव प्रमाणम् । अतः तस्यार्थस्यानुष्ठेयतेति । हृद्व.

**मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥**

(१) ननु मन्त्रानुच्चार्य विहितकर्मप्रयोगं कुर्वन्ति, (न) ततोऽर्थमवगच्छन्ति । अतोऽनर्थका मन्त्राः । अनर्थकत्वाच्च मान्त्रवर्णिकी देवता सिध्यतीत्यत आह– मन्त्रब्राह्मणयोर्वेदनामधेयम् । वेद इति नामधेयं वेदनामधेयम् । नामैव नामधेयम् । निःश्रेयसकराणि कर्माण्यावेदयन्ति वेदाः । मन्त्रब्राह्मणयोर्वेद इति नामधेयम्, वेद इति समाख्या । ताभ्यां हि मन्त्रब्राह्मणाभ्यां निःश्रेयसकराणि अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनि साङ्गानि कर्माण्यवबुध्यन्ते प्रतीयन्ते । § व्युत्पन्नपदार्थानां यथैव ब्राह्मणवाक्यगतपदाभिहितवाक्या( ? हितपदा )र्थेभ्यो नानाविधवाक्यार्थबोधः, एवं मन्त्रवाक्येषु तेषां मन्त्राभिहितपदार्थेभ्यो बहुप्रकारवाक्यार्थज्ञानम् । विहितकर्मानुष्ठानमध्वर्य्वादयः संस्कारकर्मप्रतिपत्त्याऽनुष्ठेरन् । तत्प्रतिपत्तौ स्ववाक्यानि, ब्राह्मणवाक्यानि, मन्त्रा इत्यनेकोपायप्रसक्तौ मन्त्रा नियम्यन्ते पेषणमिव पिष्टकरणे । यथा पेषणापादितपिष्टकृतपुरोडाशयागादभ्युदयः, एवं मन्त्रप्रकाशितकृतकर्मभ्यः । अतोऽर्थवन्तो मन्त्राः । अतोऽभ्यातानमन्त्रप्रकाशिताग्नीन्द्रादयो होमानां देवताः । ये तु मन्त्रानुच्चार्य प्रयोगं कुर्वन्ति नि(? तैः)युक्तं तत्कर्मप्रकाशक(प्रकाशित?)त्वात् पूर्वं मन्त्रानुच्चार्यानन्तरमनुष्ठानम् । अत एव चैवं वक्ष्यति– 'मन्त्रान्तैः कर्मादीन् संनिपातयेत्' इति । एकेनैव प्रकाशितत्वान्न द्वितीयमन्त्रापेक्षेति वक्ष्यति– 'एकमन्त्राणि कर्माणि' इति । मन्त्राणां संस्कारकर्मप्रकाशकत्वादेवोहं वक्ष्यति– 'विकृतौ तु यथार्थमूहः' इति । तथा हि– दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामि' इति अग्निदेवताप्रकाशनसमर्थो मन्त्रः आम्नातः

---

§ व्युत्पन्नाः व्युत्पत्तिमन्तः पदानि अर्थाश्च येषां बुद्धिविषयास्तेषाम् । पदव्युत्पत्तिर्व्याकरणसंस्कारः, अर्थव्युत्पत्तिर्योग्यताकाङ्क्षितत्वादि । पदतदर्थव्युत्पत्तिं जानानानामित्यर्थः । एवमादिप्रकारेण यथाप्रतिभं व्युत्पादनीयमिदं पदम् ।

*चोदितः 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति सौर्ययागप्रविष्टः तत्राग्निदेवताभावात् तद्वाच्यग्निपदे निवृत्ते तत्र विद्यमानसूर्यदेवतावाच्यनाम्नातमपि सूर्यपदं प्रक्षिप्यते । स एवोहः । अतो मान्त्रवर्णिकी देवता सिध्यति । यत्तु मन्त्रार्थं नाधिगच्छन्तीत्युक्तं तदुक्तोत्तरम्– पुरुषदोषो न मन्त्रदोष इति । उक्तं च आचार्यैः– 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति' इति । कपभा.

(२) केश्चिन्मन्त्राणामेव वेदत्वमाख्यातम्, केश्चित्कल्पसूत्राणामपि । उभयनिरासार्थोऽयमारम्भः । सकलस्य वेदराशेः पारायणादिषु उपसंग्रहणं प्रयोजनम् । हवृ.

**कर्मचोदना ब्राह्मणानि ॥**

(१) तत्र मन्त्रब्राह्मणयोर्विवेकायाऽऽह– कर्मचोदना ब्राह्मणानि । साङ्गानि कर्माणि चोदयन्ति विदधति यानि यानि वाक्यानि तानि चोदनाः । तानि ब्राह्मणानि 'स्वर्गकामो यजेत', 'वायव्यꣳ श्वेतमालभेत भूतिकामः', 'व्रीहीनवहन्ति' इत्येवमादीनि । कपभा.

(२) कर्म चोद्यते विधीयते याभिस्ताः कर्मचोदनाः । 'वायव्यꣳ श्वेतमालभेत' इत्यादयः । ताः ब्राह्मणानीत्युच्यन्ते । हवृ.

**ब्राह्मणशेषोऽर्थवादः ॥**

**निन्दा प्रशंसा परकृतिः पुराकल्पश्च ॥**

(१) यदि कर्मोपदेशानि ब्राह्मणानि, कर्माणि न चोद्यन्ते (यैः), यथा– 'वायुर्वै क्षेपिष्ठा' इति, 'यथाऽतिथये प्रद्रुताय', 'यजमानमेव सुवर्गं लोकं गमयति', 'अग्निर्वा अकामयत', 'वसवो वा अकामयन्त', 'आपो वा इदमग्रे सलिलमासीत्' इत्यादिभिः, तेषामब्राह्मणत्वं प्राप्नोति । अत इदमुच्यते– ब्राह्मणशेषोऽर्थवादः । ब्राह्मणस्य विधायकस्य शेषः अङ्गम् उपकारकम् अर्थवादः । 'वायुर्वै क्षेपिष्ठा' ¶इत्यर्थवादः । 'यथाऽतिथये' इति निन्दा । 'यजमानमेव सुवर्गं लोकं गमयति' इति प्रशंसा । 'अग्निर्वा' इति, 'वसवो वा' इति परकृतिः । बहुपुरुषकर्तृकं पुराकल्प इति केचित् । 'आपो वा इदमग्रे सलिलमासीत्' इत्येषः अनिर्दिष्टकर्तृकः पुराकल्प इत्यपरे । चकारः 'नान्तरिक्षे न दिवि' इत्येवमादीनां समुच्चयार्थः । 'वायव्यꣳ श्वेतमालभेत' 'ओषधं जुहोति' 'एककपालमाहवनीये जुहोति' 'य एतेन हविषा यजते' 'यद्वराहविहतꣳ संभारो भवति' इत्येते विध्युद्देशप्रकाराः कर्माण्युभयानि(१) वाऽर्थवादादिपदैः स्तूयमानानि तैः सह विदधति, न तैर्विना । ततो विध्युद्देशानां स्तुतिपदानां चैकवाक्यभावः । अतो विधायकवाक्यब्राह्मणवाक्यानामर्थवादादयः शेषाः अङ्गानि, अवयवाः । कपभा.

(२) वेदस्यैव कश्चिद्भागः अर्थवादो नाम विधीयमानस्य स्तुत्या प्रतिषिध्यमानस्य निन्दया च विधायकस्य ब्राह्मणस्य शेषभूतत्वात् ब्राह्मण एवान्तर्भूत इत्यर्थः ।

निन्देति । 'तद्रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति' इति निन्दा । प्रशंसा– 'आग्नेयी वा एषा यदजा' । परकृतिः– 'इन्द्रो वृत्रमहन्' इति । पुराकल्पः– 'इदं वा अग्रे नैव किंचनाऽऽसीत्' इति पुरावृत्तमात्रकथनम् । 'बबरः प्रावाहणिरकामयत' इति वा परकृतेरुदाहरणम् । एवंविधा अर्थवादा ब्राह्मणशेषत्वेन उक्ता इत्यर्थः । हवृ.

**अतोऽन्ये मन्त्राः ॥**

(१) अतः सार्थवादेभ्यो विधायकेभ्योऽन्ये वाक्यशेषाः अनुष्ठेयार्थप्रकाशकाः ते (१ ये) 'उभा वामिन्द्राग्नी' 'उरु प्रथस्व' इति ऋग्यजुषात्मका आम्नाताः त एव मन्त्राः । कपभा.

---

* 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकेनातिदिष्ट इत्यर्थः । 'चोदकतः' इति पाठश्चेत्साधीयान् ।

¶ अर्थवादत्वस्य स्तुतिनिन्दादिसाधारणत्वं मीमांसाशास्त्रे हरदत्तवृत्तौ च प्रतीयते । कपर्दी त्वत्र तस्य स्तुतिनिन्दादिव्यावृत्तत्वमभिमन्यते इति प्रतीयते, तच्चिन्त्यम् ।

(२) उक्तलक्षणादन्ये मन्त्रा विज्ञेयाः; 'इषे त्वा' इत्येवमादयः । हवृ.

**अनाम्नातास्त्वमन्त्रा यथा प्रवरोहनामधेयग्रहणानीति ॥**

(१) प्रवरादीनां वाक्यैकदेशत्वेन अनुष्ठेयार्थप्रकाशकत्वेन च मन्त्रत्वं प्राप्तं पर्युदस्यति, 'अहे बुध्निय मन्त्रं मे गोपाय' इति ऋग्यजुःसामसु मन्त्रशब्दप्रयोगात् , स्वाध्यायपाठसमाम्नातानामृग्यजुःसामप्रसिद्धेः । अतस्तत्राऽऽम्नाता एव मन्त्राः, अनाम्नातास्तु अमन्त्राः । अनाम्नातास्ते के ? — यथेति । तेषां विविच्य प्रतिपादनायाऽऽह— प्रवरोहेत्यादि । प्रवरः— 'भार्गवच्यावनाप्नवानौर्वजामदग्न्य' इति । ऊहः — 'सूर्याय जुष्टं निर्वपामि' इत्यादि । नामधेयग्रहणम् , गृह्यते इति ग्रहणम् । द्विविधं नामधेयम्— ग्राह्यं (? गार्ह्यं) नक्षत्रनामधेयं च । 'पुरुषस्य नाम दधाति' इत्यादिना कृतं ग्राह्यं( ? गार्ह्यं ) तत्र भवति । नक्षत्रनाम च 'आशास्तेऽयं यजमानो रौहिणः' । इतिकरणादेतावतामेवामन्त्रत्वम् , न त्वेते समानविकरणादयः । यजमान इत्यादीनां तु इति तृचाख्ययोन्यामुत्पन्नं सामोत्तरयोर्गीयमानं मन्त्र एव । यत्तु यजुर्वेदाश्रयमेषामुपांशुत्वादि न तस्यामु( ? नु )त्पत्तिः । कपभा.

(२) अनाम्नाताः वेदे अपठिताः ते मन्त्रा न भवन्ति । यथेत्युदाहरणनिर्देशः । प्रवरः आर्षेयवरणम् 'आङ्गिरसायास्य' इत्येवमादि । ऊहः '(सूर्याय) जुष्टं निर्वपामि' इत्यादि । नामधेयग्रहणम् 'आशास्तेऽयं यजमानो देवदत्तः' इति । अमन्त्रत्वाच्चैषामन्यथाकरणे मन्त्रभ्रेषप्रायश्चित्ते न स्तः । यस्तु वेदाश्रय उपांशुत्वादिः तस्यानिवृत्तिः । हवृ.

**रथशब्दो दुन्दुभिशब्दश्च ॥**

(१) चशब्देन अमन्त्रत्वमनुकृष्यते । 'रथशब्देन महेन्द्रस्य स्तोत्रमुपाकरोति' इति रथदुन्दुभिशब्दयोरमन्त्रत्वम् । भिन्नसूत्रकरणम् , पूर्वेषां मन्त्रैकदेशत्वात् मन्द्रस्वरः , रथादिशब्दस्य अमन्त्रत्वाद्यथाप्राप्तस्वरः । कपभा.

(२) 'रथशब्देन महेन्द्रस्य स्तोत्रमुपाकरोति' । 'दुन्दुभिशब्देन माहेन्द्रस्य स्तोत्रम्' इति । तौ च मन्त्रौ न भवत इत्यर्थः । मन्त्रत्वप्रसङ्गाभावेऽपि मन्त्रस्य स्थानापत्त्या मन्त्रधर्मप्राप्त्याशङ्कानिरासायायमारम्भः । अनयोः प्रवरादिवदुपांशुत्वादिधर्मौ न भवतीति ख्यापनार्थं पृथगुपदेशः । हवृ.

## बौधायनगृह्यसूत्रम्

मन्त्रब्राह्मणात्मको वेदो यज्ञे प्रमाणम्

[1]**मन्त्रब्राह्मणं वेद इत्याचक्षते ॥**
**मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥**
**मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ॥**

## बौधायनगृह्यपरिभाषासूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

सदाचारस्य प्रामाण्यम्

[2]**तस्मादाचारः प्रमाणं संस्था आचारः क्रिया संततिरिति नित्या भावात् ॥**

[3]**तस्माद्यः कश्चन क्रियावान् सतामनुमताचारः स श्रोत्रिय एव विज्ञेयः ॥**

[4]**अथाऽप्युदाहरन्ति—**
**'निषेके गर्भसंस्कारे जातकर्मक्रियासु च ।**
**विधिवत्संस्कृता मन्त्रैश्चीर्णव्रतसमापनाः ॥**
**श्रोत्रिया इति ते ज्ञेयाः शाखापाराश्च ये द्विजाः ।**
**विधिवद्गृह्य ये पाणिमृतौ चीर्णव्रतावुभौ ॥**
**मन्त्रवत्संप्रयोगे तौ ब्राह्मण्यं गर्भमादधुः ॥'**
**इति तस्मादाचारः प्रमाणम् ॥**

---

(१) बौगृ. २।६।२-४.

(२) बौगृप. १।१।२५; हिगृशे. ४।८ या संततिरिति नित्या भा (यासंततिरिति नित्याभा).

(३) बौगृप. १।१।२६ ; हिगृशे. ४।८ चारः स ( चारस्य ).

(४) बौगृप. १।१।२७-२८ ; हिगृशे. ४।८.

## कौशिकगृह्यसूत्रम्

विधेः मन्त्रब्राह्मणात्मको वेदः प्रमाणम्, तदभावे संप्रदायः प्रमाणम्, नक्षत्रकल्पादीनां पञ्चानां वेदतुल्यं प्रामाण्यमन्यकल्पानां स्मृतितुल्यमिति टीकायाम्

**[1]अथ विधिं वक्ष्यामः ॥**

**स पुनराम्नायप्रत्ययः ॥**

**आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च ॥**

**तद्यथा ब्राह्मणविधिरेवं कर्मलिङ्गा मन्त्राः ॥**

**तथाऽन्यार्थाः ॥**

**तथा ब्राह्मणलिङ्गा मन्त्राः ॥**

**तदभावे संप्रदायः ॥**

**प्रमुक्तत्वाद्ब्राह्मणानाम् ॥**

'त्रिप्रमाणको विधिः प्रत्यक्षमनुमानं शब्दश्चेति' (इति) उपवर्षाचार्येणोक्तम् । मीमांसायां स्मृतिपादे कल्पसूत्राधिकरणे 'नक्षत्रकल्पो वितानकल्पस्तृतीयः संहिताकल्पश्चतुर्थोऽङ्गिरसां कल्पः शान्तिकल्पस्तु पञ्चमः । एते कल्पा वेदतुल्या हि' इति भगवानुप( ? वदुप)-वर्षाचार्येण प्रतिपादितम् । अन्ये कल्पाः स्मृतितुल्याः ।

दाकेटी.

## वैशेषिकसूत्राणि

ईश्वरकर्तृकत्वेन धर्मप्रतिपादकत्वेन वा वेदप्रामाण्यम्

**[2]तद्वचनादाम्नायस्य प्रामाण्यम् ॥**

ननु निवृत्तिलक्षणो धर्मस्तत्त्वज्ञानद्वारा निःश्रेयसहेतुरित्यत्र श्रुतिः प्रमाणम्, श्रुतेरेव प्रामाण्ये वयं विप्रतिपद्यामहे अनृतव्याघातपुनरुक्तदोषेभ्यः । पुत्रेष्टौ कृतायामपि पुत्रानुत्पादादनृतत्वम् । 'उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति' इति विधेः प्राप्त एवोदितादिकाले होमो व्याहन्यते 'श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति' इत्यादिना । तथा 'त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह' इत्यनेन प्रथमोत्तमसामिधेन्योस्त्रिरुच्चारणाभिधानात् पौनरुक्त्यमेव । न चाऽऽम्नायप्रामाण्यप्रतिपादकं किंचिदस्ति । नित्यत्वे विप्रतिपत्तौ नित्यनिर्दोषत्वमपि संदिग्धम् । पौरुषेयत्वे तु भ्रमप्रमादविप्रतिपत्तिकरणापाटवादिसंभावनयाऽऽप्तोक्तत्वमपि संदिग्धमेवेति न निःश्रेयसे न वा तत्र तत्त्वज्ञानं द्वारं न वा धर्म इति सर्वमेतदाकुलम्, अत आह– तद्वचनादिति । तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति । यथा 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' (न्यासू. २।१।५७) इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते । तथा च तद्वचनात् तेनेश्वरेण प्रणयनात् आम्नायस्य वेदस्य प्रामाण्यम् । यद्वा तदिति संनिहितं धर्ममेव परामृशति । तथा च धर्मस्य वचनात् प्रतिपादनात् आम्नायस्य वेदस्य प्रामाण्यम् । यद्धि वाक्यं प्रामाणिकमर्थं प्रतिपादयति तत्प्रमाणमेव यत इत्यर्थः । ईश्वरस्तदासत्वं च साधयिष्यते । यच्चोक्तम्– 'अनृतव्याघातपुनरुक्तदोषेभ्यः' इति, तत्रानृतत्वे जन्मान्तरीयफलकल्पनं कर्मकर्तृसाधनवैगुण्यकल्पनं वा, श्रौतात्साङ्गात् कर्मणः फलावश्यंभावनिश्चयात् । न च कारीरीवदैहिकमात्रफलकत्वम्, तत्र हि शुष्यच्छस्यसंजीवनकामस्याधिकारः, पुत्रेष्टौ पुत्रमात्रकामस्येति विशेषात् । न च व्याघातोऽपि, उदितादिहोमं विशेषतः प्रतिज्ञाय तदन्यकाले होमानुष्ठाने 'श्यावोऽस्याऽऽहुतिमभ्यवहरति' इत्यादिनिन्दाप्रतिपादनात् । न च पुनरुक्ततादोषोऽपि, एकादशसामिधेनीनां प्रकृतौ पाठात् 'पञ्चदशावरेण वाग्वज्रेणावबाधे तमिमं भ्रातृव्यम्' इत्यत्र सामिधेनीनां पञ्चदशत्वस्य प्रथमोत्तमसामिधेन्योस्त्रिरभिधानमन्तरेणानुपपत्तेस्तथाऽभिधानात् ।

१।१।३

ननु तेनेश्वरेण वेदः प्रणीत इत्यत्रैव विप्रतिपत्तिः, अत आह– तद्वचनादिति । इतिः शास्त्रपरिसमाप्तौ । तद्वचनात् तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य वेदस्य प्रामाण्यम् । तथाहि– 'वेदास्तावत्पौरुषेयाः, वाक्यत्वात्' इति साधितम् । न चास्मदादयस्तेषां सहस्रशाखा-

(१) कौसू. १।१–८.
(२) वैसू. १।१।३, १०।२।९ ; मेधा. १२।१०६.

वच्छिन्नानां वक्तारः संभाव्यन्ते, अतीन्द्रियार्थत्वात् । न चातीन्द्रियार्थदर्शिनोऽस्मदादयः । किंच, 'आप्तोक्ता वेदाः, महाजनपरिगृहीतत्वात् । यन्नाऽऽप्तोक्तं न तन्महाजनपरिगृहीतम् । महाजनपरिगृहीतं चेदम् । तस्मादाप्तोक्तम्' । स्वतन्त्रपुरुषप्रणीतत्वं चाऽऽप्तोक्तत्वम् । महाजनपरिगृहीतत्वं च सर्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम् । क्वचित्फलाभावः कर्मकर्तृसाधनवैगुण्यादित्युक्तम् । कर्तृस्मरणाभावान्नैवमिति चेन्न, कर्तृस्मरणस्य पूर्वमेव साधितत्वात् । तत्प्रणीतत्वं च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम्, न त्वस्मदादीनां सहस्रशाखवेदप्रणयने स्वातन्त्र्यं संभवतीत्युक्तत्वात् । किंच, प्रमाया गुणजन्यत्वेन वैदिकप्रमाया अपि गुणजन्यत्वमावश्यकम् । तत्र च गुणो वक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यः । तथा च तादृश एव वेदे वक्ता यः स्वर्गापूर्वादिविषयकसाक्षात्कारवान् । तादृशश्च नेश्वरादन्य इति सुष्ठु । उप. १०।२।९

वेदस्य पौरुषेयत्वम्

**[1]बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥**

संसारमूलकारणयोर्धर्माधर्मयोः परीक्षा षष्ठाध्यायार्थः । धर्माधर्मौ च 'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' इत्यादिविधिनिषेधबलकल्पनीयौ विधिनिषेधवाक्ययोः प्रामाण्ये सति स्याताम् । तत्प्रामाण्यं च वक्तुर्यथार्थवाक्यार्थज्ञानलक्षणगुणपूर्वकत्वादुपपद्यते, स्वतःप्रामाण्यस्य निषेधात् । अतः प्रथमं वेदप्रामाण्यप्रयोजकगुणसाधनमुपक्रमते— बुद्धिपूर्वेति । वाक्यकृतिः वाक्यरचना । सा बुद्धिपूर्वा वक्तृयथार्थवाक्यार्थज्ञानपूर्वा, वाक्यरचनात्वात्, 'नदीतीरे पञ्चफलानि सन्ति' इत्यस्मदादिवाक्यरचनावत् । वेदे इति वाक्यसमुदाये इत्यर्थः । तत्र समुदायिनां वाक्यानां कृतिः पक्षः । न चास्मदादिबुद्धिपूर्वकत्वेनान्यथासिद्धिः, 'स्वर्गकामो यजेत' इत्यादाविष्टसाधनतायाः कार्यताया वाऽस्मदादिबुद्ध्यगोचरत्वात् । तेन स्वतन्त्रपुरुषपूर्वकत्वं वेदे सिध्यति । वेदत्वं च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् । उप.

**ब्राह्मणे संज्ञाकर्म बुद्धिलिङ्गम् ॥**

प्रकारान्तरेण वेदवाक्यानां बुद्धिपूर्वकत्वमाह— ब्राह्मण इति । ब्राह्मणमिह वेदभागः, तत्र यत्संज्ञाकर्म नामकरणं तत् व्युत्पादकस्य बुद्धिमाक्षिपति, यथा लोके लम्बकर्णदीर्घनासलम्बग्रीवादिनामकरणम् । उप.

**बुद्धिपूर्वो ददातिः ॥**

प्रकारान्तरमाह— बुद्धिपूर्व इति । 'स्वर्गकामो गां दद्यात्' इत्यादौ यद्दानप्रतिपादनं तद्दानेष्टसाधनताज्ञानजन्यम् । ददातिरिति धातुनिर्देशो धात्वर्थं दानमुपलक्षयति । उप.

**तथा प्रतिग्रहः ॥**

प्रमाणान्तरमाह — तथेति । प्रतिग्रहप्रतिपादिका अपि श्रुतयो बुद्धिपूर्विकाः । प्रतिग्रहपदं स्वविषयां श्रुतिमुपलक्षयति । तेन भूम्यादिप्रतिग्रहप्रतिपादिकाः श्रुतयः प्रतिग्रहीतुः श्रेयःसाधनतापराः, कृष्णसारचर्मादिप्रतिग्रहप्रतिपादिकाः श्रुतयः प्रतिग्रहीतुरनिष्टसाधनताबोधिकाः । न चेष्टानिष्टसाधनते अर्वाचीनपुरुषबुद्धिगोचरौ भवितुमर्हतः । उप.

दृष्टे असति अदृष्टप्रयोजनकल्पना

**[1]दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥**

इदानीमाम्नायप्रामाण्यं द्रढयितुमुक्तमेवार्थमाह— दृष्टानामिति । दृष्टानां प्रमाणत उपलब्धानां कर्मणां यागदानस्नानादीनां दृष्टप्रयोजनानां दृष्टम् उपदिष्टं प्रयोजनं येषाम् । तथाहि— 'स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादौ विधिसमभिव्याहृतमेव फलम् । क्वचिदार्थवादिकम्, यथा— 'य एता रात्रीरधीयीत तस्य पितरं घृतकुल्या मधुकुल्याः क्षरन्ति' इत्यादौ । क्वचिच्चौपादानिकम्, यथा— 'विश्वजिता यजेत' इत्यादौ । अत्र हि न विधिसमभिव्याहृतं नार्थवादोप-

(१) वैसू. ६।१।१–३.

(१) वैसू. १०।२।८.

स्थितमित्यौपादानिकं काल्पनिकम् , स्वर्गस्यैव स्वतःसुन्दरस्य फलस्य कल्पनीयत्वात् । तथा चाऽऽशुतरविनाशिनामेतेषां कर्मणां चिरभाविने फलाय कारणत्वमनुपपद्यमानम् , अत एतेषां प्रयोगः अनुष्ठानम् अभ्युदयाय अपूर्वायेत्यर्थः । ननु श्रुतिप्रामाण्ये सति स्यादेवम् , तदेव तु दुर्लभम् । नहि मीमांसकानामिव नित्यनिर्दोषत्वेन श्रुतिप्रामाण्यं त्वयेष्यते, पौरुषेयत्वेनाभ्युपगमात् , पुरुषस्य च भ्रमप्रमादविप्रलिप्सादिसंभवात् । अत आह— दृष्टाभाव इति । दृष्टं पुरुषान्तरेऽस्मदादौ भ्रमप्रमादलिप्सादिकं पुरुषदूषणम् , तदभावे सतीत्यर्थः । क्षितिकर्तृत्वेन वेदवक्तृत्वेन वाऽनुमितस्य पुरुषधौरेयस्य निर्दोषत्वेनैवोपस्थितेः । तथा च तद्वचसां न निरभिधेयता, न विपरीताभिधेयता, न निष्प्रयोजनाभिधेयता । भूतेन्द्रियमनसां दोषात् भ्रमप्रमादकरणापाटवादिप्रयुक्ता एव वचसामविशुद्धयः संभाव्यन्ते । न चेश्वरवचसि तासां संभवः । तदुक्तम्— 'रागाज्ञानादिभिर्वक्ता ग्रस्तत्वादनृतं वदेत् । ते चेश्वरे न विद्यन्ते स ब्रूयात्कथमन्यथा ॥' इति । उप.

## $ जैमिनिसूत्राणि

वेदाध्ययनानन्तरं धर्मविचारस्य कर्तव्यता

**[1]अथातो धर्मजिज्ञासा ॥**

आद्येऽधिकरणे 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनस्य कर्मोत्पन्नतव्यश्रुत्या स्वाध्यायार्थत्वावगतेरक्षरग्रहणार्थत्वेन दृष्टार्थत्वात्तावतैव विध्यर्थविश्रान्तेर्विचारानाक्षेपान्मीमांसाशास्त्रं पूर्वपक्षे नाऽऽरभ्यते । विचारमकृत्वैव 'वेदमधीत्य स्नायात्' इति स्मृतेः समावर्तितव्यम् । ततश्च क्रतुभिरध्ययनविधिसिद्धविद्याभावेन स्वयमेव द्विजवच्छूद्रेऽपि विद्याक्षेपात्पुस्तकादिना विद्यां संपाद्य शूद्रस्याप्यधिकार उक्तः , षाष्ठे च शूद्राधिकरणपूर्वपक्षे । सिद्धान्ते त्वध्ययनस्यार्थधीहेतुत्वेन दृष्टार्थत्वात्साङ्गनामृगक्षराभिव्यक्तिद्वारा स्तोत्रार्थत्वमिव तव्यप्रत्ययावगतस्वाध्यायार्थत्वद्वाराऽर्थज्ञानार्थत्वाद्विचारं विना च तदयोगात्तदर्थं शास्त्रमारम्भणीयम् । एतच्च 'अथातो धर्मजिज्ञासा' इत्यत्राध्ययनविधेर्दृष्टार्थत्वादित्यतःशब्दव्याख्यायां शबरभाष्ये सूचितम् । शुक. ४—५

( २ ) तत्र द्वादशभिरध्यायैः प्रतिपाद्यमानं शास्त्रमारम्भणीयं न वेति संशये 'स्वाध्यायोऽध्येतव्यः' इति विहिताध्ययनस्य फलाकाङ्क्षायां विश्वजिन्न्यायेन स्वर्ग एव फलं कल्प्यम् । तथा चाक्षरग्रहणमात्रेण स्वर्गसिद्धौ विचारशास्त्रस्य अकिंचित्करत्वात् विचारशास्त्रं नाऽऽरम्भणीयमिति बहिःपूर्वपक्षे सिद्धान्तमाह— अथेति । अथ गुरुकुलस्थितिपूर्वकवेदाध्ययनानन्तरम् , अतः यतः अध्ययनस्य अर्थज्ञानं फलम् अतः , धर्मस्य वक्ष्यमाणलक्षणस्य जिज्ञासा ज्ञानेच्छासाध्यो विचारः , कर्तव्य इति शेषः । अयं भावः— दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् अध्ययनेन तदर्थनिश्चयसंपादनस्यैवोचितत्वात् अर्थतत्त्वज्ञानस्य विचारशास्त्रमन्तराऽसंभवात् इदं विचारशास्त्रमवश्यारम्भणीयमिति । सुबोधिनी.

धर्मलक्षणम्

**[1]चोदनालक्षणोऽर्थो धर्मः ॥**

( १ ) 'चोदना०', इति सूत्रे तु †कलञ्जभक्षणादेरधर्मस्यापि चोदनालक्षणत्वमङ्गीकृत्यार्थपदेन वारणं कृतमित्यवधेयम् । वीमि. ११७

( २ ) 'अथातो धर्मजिज्ञासा' इत्यत्र 'को धर्मः ?' इति जिज्ञासायां धर्मस्वरूपज्ञानार्थं लक्षणमाह— चोदनेति । चोदनेति प्रवर्तकशब्दनाम । लक्ष्यते ज्ञायते अनेनेति

---

$ अत्र सूत्रपाठाः श्रीकेवलानन्दस्वामिपरिगृहीताः समादृताः ।

(१) जैसू. १।१।१ ; मच. २।१० ; शुक. ५ ; संम. ४४ ; वीमि. ११।३ ; संर. ३०८ ; संवी. २।८३.

† 'विधिवन्निषेधोऽपि चोदनाशब्दार्थः, अतो विधेयार्थवन्निषेध्यार्थोऽपि चोदनालक्षणः' इति चोदनालक्षणशब्दार्थमाश्रित्येदं व्याख्यानमिति बोध्यम् । अन्यथा 'श्येनेनाभिचरन् यजेत' इत्यादिवत् कलञ्जं प्रत्यवयन् भक्षयेत् इत्यादिविधीनामभावादिदं व्याख्यानमसंगतं स्यात् ।

(१) जैसू. १।१।२ ; उ. २।२३।९ ; मनु. २।१ ; पमा. १।७९ ; आत. ३२७ ; मुक्ता. १६७ ; संम. ३ ; वीमि. ११७.

लक्षणम् । यथा धूमेन वह्निर्लक्ष्यत इति वह्निज्ञाने लक्षणं धूमः, तद्वद्धर्मज्ञाने लक्षणं चोदना । इत्थं च चोदना चोदनैव लक्षणं करणं यद्विषयकज्ञानस्य तत्त्वे सति अर्थत्वं लक्षणम् । अर्थत्वं च सुखाधिकदुःखाजनकत्वम् । इदं श्येनयागे धर्मत्वनिवृत्त्यर्थम् । एतेन चोदनातिरिक्तेन्द्रियादिगम्यत्वं धर्मस्य नेत्यपि सूचितम् । सुबोधिनी.

धर्मप्रमाणपरीक्षा कर्तव्या

[1]**तस्य निमित्तपरीष्टिः ॥**

इतरप्रमाणानि तत्र प्रसरन्ति न वेति संशयस्य परीक्षां विना निवृत्त्यसंभवात्, तत्परीक्षां प्रतिजानीते— तस्येति । तस्य धर्मविषयकतत्त्वज्ञानस्य निमित्तं करणम्, तस्य परीष्टिः परीक्षा युक्तिपूर्वकसाधकतर्ककलापैर्विचारः, कर्तव्य इति शेषः । सुबोधिनी.

प्रत्यक्षं धर्मप्रमाणम्

[2]**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥**

प्रतिज्ञातमेवार्थं विशदयति— सत्संप्रयोग इति । पुरुषस्येन्द्रियाणां सति विद्यमाने विषये संप्रयोगे संयोगे सति यत् बुद्ध्याः ज्ञानस्य जन्म तत् प्रत्यक्षम् । ईदृशं यत्प्रत्यक्षं तद्धर्मज्ञाने अनिमित्तं नोत्पादकम् । प्रत्यक्षप्रमासाधनीभूतानीन्द्रियाणि धर्मप्रमां न साधयन्तीति फलितम् । तत्र हेतुमाह— विद्यमानस्य वर्तमानस्यैव वस्तुनः इन्द्रियैरुपलम्भात् । धर्मस्य ज्ञानकालेऽसत्त्वेन इन्द्रियायोग्यत्वादिति भावः । इन्द्रियाणां तन्निमित्तत्वनिराकरणेन व्याप्तिज्ञानसादृश्यार्थापत्तीनां तन्निमित्तत्वं निरस्तम्, तेषां सर्वेषां प्रत्यक्षफलत्वात् । अतः चोदनामात्रगम्यत्वमेवेति सिद्धम् । सुबोधिनी.

विधिशब्दः धर्मप्रमाणम्

[3]**औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥**

शब्दार्थयोरुत्पत्त्यनन्तरं पुरुषेण कल्पितसंकेतात्मकसंबन्धस्य कल्पितत्वात् पुरुषकल्पितसंबन्धज्ञानापेक्षत्वाच्छब्दस्य यथा प्रत्यक्षज्ञानं शुक्तिकादौ सत्यत्वं व्यभिचरति य(? त)था पुरुषाधीनत्वेन शब्देऽपि सत्यत्वव्यभिचारसंभवान्न धर्मे चोदना प्रमाणमिति पूर्वपक्षे सिद्धान्तमाह— औत्पत्तिक इति । शब्दस्य नित्यवेदघटकपदस्य 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादेः अर्थेन तत्तत्प्रतिपाद्यार्थेन संबन्धः शक्तिरूपः औत्पत्तिकः स्वाभाविकः नित्य इति यावत् । अतः तस्य धर्मस्य ज्ञानम्, अत्र करणे ल्युट्, शक्तेर्यथार्थज्ञानस्य करणम् । ननु 'पर्वतो वह्निमान्' इति श्रुत्वाऽपि प्रत्यक्षेण वह्निं दृष्ट्वा शाब्दे प्रमाणत्वं गृह्णातीति लोके प्रसिद्धम् । तथा च प्रत्यक्षादीतरप्रमाणसापेक्षत्वात्कथं धर्मे प्रमाणत्वमत आह— अनुपलब्ध इति । अनुपलब्धे प्रत्यक्षादिप्रमाणैरनुपलब्धेऽर्थे उपदेशः अव्यतिरेकः अर्थाव्यभिचारी दृश्यते, अत इतरानपेक्षत्वात् प्रत्यक्षाद्यनपेक्षत्वात् तत् विधिघटितवाक्यं धर्मे प्रमाणं बादरायणाचार्यस्य अनुमतम् । अयं भावः— 'पर्वतो वह्निमान्' इति दोषवत्पुरुषप्रयुक्तम् अर्थे व्यभिचरति, अतः प्रामाण्यनिश्चये प्रत्यक्षादिकमपेक्षते, तथा 'अग्निहोत्रं जुहोति' इति वाक्यं कालत्रयेऽप्यर्थे न व्यभिचरति, अत इतरनिरपेक्षं धर्मे प्रमाणमिति । सुबोधिनी.

वेदस्य शाब्दबोधजनकत्वम्

[1]**उत्पत्तौ वा¶ऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥**

एवं शब्दस्य शब्दार्थसंबन्धस्य च नित्यत्वेऽपि चोदना धर्मे न प्रमाणमित्याक्षिपति— उत्पत्ताविति । उत्पत्तौ पदार्थज्ञानोत्पत्तौ सत्यां वाक्यवाक्यार्थयोः संबन्धाः रचनाः पुरुषकल्पिताः स्युः, अर्थस्य वाक्यार्थज्ञानस्य अतत् पदार्थज्ञानभिन्नं निमित्तं कारणं यस्य तत्त्वात् । न हि पदार्थ एव वाक्यार्थः । अतः पदस्य पदार्थे यथा

(१) जैसू. १।१।३.

(२) जैसू. १।१।४ ; उ. २।२।३।९ (प्रत्यक्षमनिमित्तम्) एतावदेव.

(३) जैसू. १।१।५ ; पमा. १।४ (तत्प्रमाणं बादरायणस्यान्यानपेक्षत्वात्) एतावदेव.

¶ 'अवचनाः' इति पाठे चोदनाः वाक्यार्थस्य अवाचकाः अप्रमाणमित्यर्थः ।

(१) जैसू. १।१।२४–३२.

शक्तिसंबन्धः तथा पदसमूहरूपवाक्यस्य वाक्यार्थे न शक्तिसंबन्धः, किंत्वन्यः। स च पुरुषकल्पित इति कृत्रिमः कथं धर्मे प्रमाणमिति पूर्वपक्षसूत्राभिप्रायः। सुबोधिनी.

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥**

सिद्धान्तमाह— तद्भूतानामिति। तेषु अग्निहोत्रादिष्वर्थेषु क्लृप्तानां प्रत्येकपदानां क्रियार्थेन क्रियावाचिना पदेन सह समाम्नायः पठनं दृश्यते अतः क्रियावाचकपदघटितपदसमूहादेव अपूर्वो वाक्यार्थग्रहः, अर्थस्य वाक्यार्थज्ञानस्य तन्निमित्तत्वात् तत् पदार्थज्ञानं निमित्तकारणं यस्य तत्त्वात्। 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यत्र च 'अग्निहोत्रनामकहोमेन स्वर्गं भावयेत्' इति वाक्यार्थज्ञानं न पदार्थोपस्थितिमन्तरा भवति, किंतु पदादुपस्थितानामर्थानां योग्यतया परस्परसंबन्धज्ञानमेव वाक्यार्थज्ञानमिति भावः। सुबोधिनी.

**लोके संनियमात् प्रयोगसंनिकर्षः स्यात् ॥**

लोके लौकिकशब्दे पदार्थं दृष्ट्वा पदार्थज्ञानपूर्वकं संनियमात् प्रयोगात् वेदेऽपि गुरुपरम्परया ज्ञानपूर्वकः प्रयोगस्य संनिकर्षः उपपत्तिः स्यात्। सुबोधिनी.

वेदस्य पौरुषेयत्वनिराकरणम्

**वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥**

वेदस्यानित्यत्वात् पौरुषेयत्वात् धर्मे न प्रमाणम्, पुरुषदोषसंभवादिति पुनराक्षिपति— वेदानिति। यतः पुरुषाख्याः 'काठकम्, कौथुमम्' इति पुरुषघटिताः आख्याः नामानि, अतः संनिकर्षम् आधुनिकं सादीन्। असमानवचनत्वं चिन्त्यम्, विस्तरभयात् बालबोधार्थत्वान्न लिख्यते। एके नैयायिका आहुः। सुबोधिनी.

**अनित्यदर्शनाच्च ॥**

इतोऽप्यनित्य इत्याह— अनित्येति। अनित्यानां जननमरणवतां पुरुषाणाम्, 'बबरः प्रावाहणिरकामयत', 'कुसुरुविन्द औद्दालकिरकामयत' इत्यादि वेदेषु दर्शनात् तेषां पुरुषाणां जननात् प्रागिमानि वाक्यानि नाऽऽसन्निति सादित्वात् अनित्यत्वं पौरुषेयत्वं सिद्धम्। सुबोधिनी.

**उक्तं तु शब्दपूर्वत्वम् ॥**

सिद्धान्तमाह— उक्तमिति। शब्दे पूर्वत्वं नित्यत्वम् उक्तं साधितं प्राक्। शब्दे नित्यत्वे सिद्धे वेदेऽपि नित्यत्वम्। 'वाचा विरूपनित्यया' इत्यप्युक्तम्। सुबोधिनी.

**आख्याः प्रवचनात् ॥**

आख्या काठकादिसमाख्या प्रवचनात् अध्ययनेन 'कठेनाधीतं काठकम्' इत्युपपन्ना। सुबोधिनी.

**परं तु श्रुतिसामान्यमात्रम् ॥**

यद्यपि 'बबरः प्रावाहणिः' इत्यस्ति, परंतु श्रुतिः प्रावाहण्यादिशब्दः सामान्यमन्यार्थस्यापि वाचकम्— प्रेत्यस्य उत्कर्षाश्रयः, वहनशब्दस्य गतिः, इकारस्य कर्ता। तथा च उत्कृष्टगत्याश्रयः। नापत्यार्थः प्रत्ययः। तथा च वायुपरः। स चानादिः। बबर इति वायुशब्दानुकरणम्। इति नानुपपत्तिगन्धोऽपि। सुबोधिनी.

**कृते वा विनियोगः स्यात्कर्मणः संबन्धात् ॥**

ननु 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् सभायां लशुनस्य कोऽर्घः॥' इतिवद्वेदे 'गावो वा एतत्सत्रमासत' इत्यादीनामसंबद्धप्रलापानां सत्त्वात् कथं वेदः प्रमाणम्? अत्राऽऽह— कृत इति। कर्मणः कर्मप्रतिपादकवाक्यस्य संबन्धात् परस्परसाकाङ्क्षपदघटितत्वात् 'गावो वै' इत्यादीनामपि कृते कर्मणि स्तुतिद्वारा विनियोगः। अयं भावः— 'य एवं विद्वांसः संवत्सरमुपयन्त्यनार्त्यै' इत्यनेन संवत्सरसाध्यसत्रयागः कार्य इत्युक्ते, केन? इत्युक्ते होमेनेति, कस्मै? आर्तिनाशाय, कथम्? इति 'ज्योतिष्टोमो वैश्वानरोऽतिरात्रः' इत्यादिरीत्या सर्वं संबद्धम्। तत्समीपे 'गावः सत्रमासत' इति न स्वार्थतात्पर्यकम्, किंतु गवादयः जडा अपि कर्मानुष्ठानं चक्रुः, किमुत विद्वांसः अनुष्ठेरन्? इत्यत्राशय इति स्तुतौ तात्पर्यम्। तस्मात्सर्वं संबद्धमिति। सुबोधिनी.

अर्थवादानां प्रामाण्यं विधिवाक्येन एकवाक्यतया

**'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥**

विधेर्धर्मे प्रामाण्यं व्यवस्थापितम् । अथ 'अर्थवादानां धर्मे प्रामाण्यमस्ति, न वा' इति संशये पूर्वपक्षमाह— आम्नायस्येति । आम्नायस्य वेदस्य क्रियार्थत्वात् प्रवृत्त्याद्यर्थत्वात् अतदर्थानां प्रवर्तकविध्याद्यघटितानां सिद्धवस्तुकथनरूपाणां 'वायुर्वै' इत्यादीनाम् आनर्थक्यं प्रवृत्त्याद्यजनकत्वं यतः( अतः ? ) तस्मात् अनित्यं धर्मप्रमित्यजनकम् उच्यते । सुबोधिनी.

**† शास्त्रदृष्टविरोधाच्च ॥**

इतोऽपि न प्रमाणमित्याह— शास्त्रेति । शास्त्रेण विरोधो यथा— 'स्तेनं मनोऽनृतवादिनी वाक्' इति सिद्धार्थस्य केवलस्य श्रूयमाणस्य निष्फलतया 'मनः स्तेनम्, वाचमनृतां कुर्यात्' इति विधिः कल्प्यः । तथा च 'नानृतं वदेत्' इतिशास्त्रविरुद्धम् । तथा दृष्टिः प्रत्यक्षप्रमाणम्, तद्विरुद्धं 'तस्माद्धूम एवाग्नेर्दिवा ददृशे' इति वाक्यस्यैवकारेण 'वह्निदर्शनं न' इति प्रतिपादनं प्रत्यक्षविरुद्धम् । सुबोधिनी.

**तथा फलाभावात् ॥**

दूषणान्तरमाह— तथेति । तथेति दूषणान्तरद्योतकम् । फलाभावात् । गर्गत्रिरात्रब्राह्मणे 'शोभतेऽस्य मुखं य एवं वेद' इति श्रुतम् । कुमुखस्यैतज्ज्ञाने मुखं न शोभते, अतः फलाभावो दृष्ट इति भावः । सुबोधिनी.

**अन्यानर्थक्यात् ॥**

'पूर्णाहुतिमुत्तमां जुहोति, सर्वमेवाऽऽप्नोति' इति श्रवणात्पूर्णाहुत्यैव सर्वफललाभे तदतिरिक्तानां यावतां कर्मणां वैयर्थ्यमित्यभिप्रायेणाऽऽह— आनर्थक्यादिति । आनर्थक्यात् वैयर्थ्यात् । सुबोधिनी.

**अभागिप्रतिषेधाच्च ॥**

लोके केनचित्प्राप्तस्य निषेधो दृश्यते, अर्थवादे अत्यन्तम( ? त्यन्ता )प्राप्तार्थनिषेधः 'नान्तरिक्षे चिन्वीत' इति, अतः स्वार्थे अप्रमाणं स धर्मे कथं प्रमाणं भवेदित्याह— अभागीति । अभागिनः अत्यन्तमप्राप्तस्य । सुबोधिनी.

---

† अत्र सुबोधिनीकृतः 'शास्त्रं च दृष्टं च शास्त्रदृष्टे' इति द्वन्द्व एव केवलोऽभिमत इति तद्व्याख्यानात् स्पष्टं प्रतीयते । भाष्यकारादीनां तु उक्तो द्वन्द्वः, 'शास्त्रेण दृष्टम्' इति तत्पुरुषः, 'शास्त्रदृष्टे च शास्त्रदृष्टं चेति शास्त्रदृष्टानि' इत्येकशेषश्चेति तिस्रो वृत्तयोऽभिमताः । 'शास्त्रदृष्टेन विरोधः' इति तृतीयविरोधस्योदाहरणं भाष्योक्तं यथा— "अपरः शास्त्रदृष्टेन विरोधः— 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा, न वा' इति । यदि प्रश्नोऽयम्, अक्रियार्थत्वादनर्थकः । अथ अनवक्लृप्तिः, शास्त्रदृष्टेन विरोधः" इति । 'दिक्ष्वतीकाशान् करोति' इति विधेः संनिहितमिदं वाक्यम् । प्राचीनवंशशालायां सर्वासु दिक्षु गवाक्षान् कुर्यादिति तदर्थः । 'को हि तद्वेद' इत्यत्र सुखविशेषात्मकः स्वर्गस्तत्पदार्थः । भाष्ये अनवक्लृप्तिः असंभावना, आक्षेप इत्यर्थः । आक्षेपे 'कोऽपि न वेद' इत्युपलब्ध्यभावबोधनद्वारा स्वर्गाभावे वाक्यतात्पर्यम् । वाक्यस्य प्रश्नार्थत्वे विध्यनुपयोग्यज्ञानादिपरत्वेनाऽऽनर्थक्यम्, आक्षेपपरत्वे 'स्वर्गकामो यजेत' इत्यादौ शास्त्रदृष्टेन स्वर्गसद्भावेन विरोध इति भाष्यतात्पर्यम् । अग्रे 'आकालिकेप्सा' इति सूत्रं शास्त्रदृष्टेन विरोधस्य समाधानार्थमिति भाष्यादीनामभिमतम् । सुबोधिनी तु 'को हि तद्वेद' इत्यत्रापि शास्त्रविरोधमेवाभिमत्य तत्परिहारार्थत्वं तस्य सूत्रस्याभिमन्यते । अत्र तृतीयविरोधस्यानुक्तत्वेन सुबोधिन्यां न्यूनतेव प्रतिभाति । तत्रेदं समाधानं विचारणीयम्— शास्त्रदृष्टेन विरोधस्य शास्त्रजन्यप्रमाविरोधत्वेन रूपेण शास्त्रविरोधाव्यतिरेकात् सुबोधिन्यां न न्यूनता, नापि भाष्यादिषु शास्त्रजन्यप्रमाविरोधस्यावान्तरविभागविवक्षया शास्त्रविरोध इति शब्दे शास्त्रशब्दप्रवृत्तिं संकोच्य शास्त्रशब्दस्य विधिनिषेधमात्रपरत्वं स्वीकृत्य विधेयनिषेध्यक्रियाविरोधे विधिनिषेधविरोधात् शास्त्रविरोधः, सामान्यतः श्रुतिरूपं शास्त्रपदार्थमादाय विधिनिषेधापेक्षितस्याक्रियारूपस्य शास्त्रदृष्टस्य स्वर्गादेः प्रमया विरोधे शास्त्रदृष्टविरोध इति विरोधद्वयकल्पनेऽप्यर्थाधिक्यमिति । शास्त्रविरोध-शास्त्रदृष्टविरोधयोर्वैलक्षण्यं कुत्रापि व्याख्यातं नोपलब्धम् ।

(१) जैसू. १।२।१।१-१६.

**अनित्यसंयोगात् ॥**

पूर्वं 'बर्बरः प्रावाहणिः' इति जन्मवत्पुरुषसंयोगाद्वेदा अनित्या इति योऽयमाक्षेपः, तमेवाऽऽक्षेपं प्रकृतपूर्वपक्षोपोद्बलकत्वेन अनुवदति— अनित्येति । पूर्वं व्याख्यातम् । सुबोधिनी.

**विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥**

सिद्धान्तमाह— विधिनेति । विधीनां विधिविषयाणां 'वायव्यं श्वेतमालभेत' इति विहितवायुदेवतादीनां स्तुत्यर्थेन स्तुतिसापेक्षेण विधिना वाक्यैकवाक्यत्वात् विधेयं स्तुवन्तः अर्थवादाः धर्मे प्रमाणानि स्युः । अयं भावः— यथाऽऽर्थभावनांऽशत्रयवती, तथा शब्दभावनाया अप्यंशत्रयम् । साध्याकाङ्क्षायां पुरुषप्रवृत्तिः साध्यतयाऽन्वेति, करणाकाङ्क्षायां लिङादिश्रवणम् । लिङादिश्रवणेन केवलेन पुरुषप्रवृत्त्यसंभवात् सहकारितया स्तुतिमपेक्षते । तदर्पकतयाऽर्थवादः विध्येकवाक्यतामापद्यत इति । सुबोधिनी.

**तुल्यं च सांप्रदायिकम् ॥**

ननु अर्थवादवाक्यानि पूर्वोक्तयुक्त्या संपातायातानीत्यत्राऽऽह— तुल्यं चेति । सांप्रदायिकं गुरुधर्मपरम्परासंप्रदायप्राप्तं स्वाध्यायविधिपरिगृहीतत्वानध्यायपाठाभावादिरूपपालनादिकं तुल्यं विध्यर्थवादयोः तुल्यम् । अतः न संपातायातम् । सुबोधिनी.

**अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥**

'शास्त्रदृष्टिविरोधात्' इत्यत्र शास्त्रविरोधस्य परिहारमाह— अप्राप्तेति । पूर्वोक्तशास्त्रविरोधः 'नानृतं वदेत्' इत्यादिना, स विरोधः 'अनृतवदनं कर्तव्यम्' इति तात्पर्ये सति स्यात् । विरोधे शब्दार्थः स्तुतिनिन्दादितात्पर्यकः । शब्दार्थः 'अनृता वाक्' इति अप्रयोगभूतः अप्रयोजकः विरोधे । अतोऽस्मन्मतेऽनुपपत्तिः विरोधरूपा अप्राप्ता, उपपद्यते च सर्वम् । सुबोधिनी.

**गुणवादस्तु ॥**

ननु 'विधिना तु' इति सूत्रे अर्थवादस्य विधेयस्तावकत्वमुक्तम्, तत्क्वचिद्व्यभिचरति, यथा— 'वेतसशाखयाऽवकाभिश्च विकर्षति' इति वेतसशाखावकयोर्विधिः अपां च स्तुतिः उदासीनानाम् । इदं कथम् ? अत्राऽऽह— गुणेति । गुणस्य विधेयकारणगतगुणस्य वादः कथनम् । वेतसशाखावकयोः कारणमापः, तद्वृत्तिगुणकथने 'कारणगुणाः कार्यगुणान् आरभन्ते' इति न्यायेन कार्येऽपि तद्गुणसत्त्वं ज्ञायत इति तस्यापि स्तुतिरिति भावः । सुबोधिनी.

**रूपात् प्रायात् ॥**

ननु अस्तेने मनसि स्तेनाभेदप्रतिपादनम्, तथा वाच्यनृतत्वप्रतिपादनं बाधितार्थम् 'गौरश्वः' इतिवत् । अत्राऽऽह— रूपादिति । रूपात् स्तेनवृत्तरूपात् धर्मवत्त्वात् स्तेनेन चोरेण सहाभेदं प्रायात् प्राप । अयं भावः— चतुर्थपादे वक्ष्यमाणो यथा 'आदित्यो यूपः' इति आदित्यवृत्तिरूपवत्त्वेन अभेदं प्राप, तथा स्तेने यथा प्रच्छन्नसंचारः तथा मनसि सत्त्वादभेदप्रयोग औपचारिक इति । सुबोधिनी.

**दूरभूयस्त्वात् ॥**

दृष्टिविरोधं परिहरति— दूरेति । दिवा दूरदेशस्थस्य धूम एव दृश्यते, न वह्निरिति न दृष्टेर्विरोधः । वह्नेर्दिवाऽदर्शनमिति सूत्रे पूरणीयम् । सुबोधिनी.

**स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ॥**

प्रवरानुमन्त्रणविधिसमीपे 'न चैवं विद्मो ब्राह्मणा वयमब्राह्मणा वा' इति श्रुतम् । प्रत्यक्षेण निश्चिते ब्राह्मणत्वे संशयकथनं प्रत्यक्षविरुद्धमुक्तं परिहरति । स्त्र्यपराधादन्यजातीयपुरुषयोगेनापि कर्तुः पुत्रत्वमन्यजात्युत्पन्नपुत्रत्वम्, तस्य दर्शनं संभावनम् अस्ति । अतः ब्राह्मणा अब्राह्मणा वेति विचिकित्सासंभवः । अयमर्थवादः 'आर्षेयं वृणीते' इतिविधिशेषः स्तावकः । सुबोधिनी.

† **आकालिकेप्सा ॥**

† 'आकालिकडाद्यन्तवचने' (पासू. ५।१।११४) इति सूत्रेण समानकालशब्दात् इकट् प्रत्ययः समानकाल-

'को हि तद्वेद यद्यमुष्मिंल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान् करोति ' ( तैसं. ६।१।१।१ ) इति ज्योतिष्टोमे प्राग्वंशशालायाः परिभयणं विहितं प्रथमम् । अमुष्मिन् लोके स्वर्गोऽस्ति न वा को वेद ? इदानीं धूमस्य मुखादिषु प्रवेशे सद्यो मरणं भविष्यति इति धूमनिर्गमार्थं चतुर्दिक्षु द्वाराणि करोतीति वाक्याभिप्रायः । तत्र ' ज्योतिष्टोमेन स्वर्गकामः ' इत्युक्त्वा ' स्वर्गोऽस्ति न वा ' इति कथनं शास्त्रविरुद्धं कथमुक्तमित्याक्षेपे उत्तरमाह– आकालिकेति । आकालिकस्य तत्कालोद्भवस्य सुखस्य दुःखनिवृत्तेर्वा ईप्सा इच्छा सर्वानुभवसिद्धा । तां गृहीत्वा कालान्तरभाविस्वर्गनिन्दया द्वारकरणमावश्यकमिति स्तौति चेदं वाक्यम् । सुबोधिनी.

**विद्या प्रशंसा ॥**

' शोभतेऽस्य मुखं य एवं वेद ' इति गर्गत्रिरात्रविधिस्तावकमित्याह– विद्येति । गर्गत्रिरात्रवेदनस्येदं फलम्, किमुत तदनुष्ठाने ? इति विद्याया वेदनस्य प्रशंसा, तद्द्वारा क्रतुस्तुतिः । सुबोधिनी.

**सर्वत्वमाधिकारिकम् ॥**

पूर्णाहुत्या सर्वे कामा इति शेषवैयर्थ्यमित्यस्योत्तरम्– सर्वत्वमिति । श्रूयमाणं सर्वत्वमाधिकारिकम् औपचारिकम् । यथा ' सर्वमन्नं शुद्धम् ' इत्यत्र सर्वपदं गेहस्थान्नमात्रपरम्, तथा सर्वपदं प्रकृतक्रतुसाध्यफलपरम् । यच्च क्रतुसाध्यं फलं तत्पूर्णाहुत्यनुष्ठानेन विना न भवतीति पूर्णाहुतिविधिस्तावक इति भावः । सुबोधिनी.

**(१)फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात् ॥**

---

शब्दस्य आकालादेशश्च निपात्यते । समानकालौ आद्यन्तौ उत्पत्तिविनाशौ अस्येत्याकालिकम् । पूर्वदिने यस्मिन् मध्याह्नादिकाले उत्पत्तिः, परदिने तस्मिन्नेव मध्याह्नादिकाले यस्य विनाशस्तदाकालिकम्, आशुविनाशीत्यर्थः । वार्तिककारैः अकालिकेत्यपि पाठमादाय कालशब्दस्य विप्रकृष्टकालपरत्वं स्वीकृत्य, काले भवं कालिकम्, तद्विरुद्धं संनिकृष्टकालभवम् अकालिकं तात्कालिकमिति तदर्थो वर्णितः ।

(१) जैसू. १।२।१७ ; मेधा. ५।५३,१२।८६ (लोक-

इदं समाधानं §शेषवैयर्थ्यपरिहारक्षमं न भवतीति समाधानान्तरमाह– फलस्येति । फलस्य स्वर्गादेः कर्मतः क्रियया निष्पत्तेः तेषां कर्मणां परिमाणतः फले विशेषः लघुगुरुभावः स्यात् लोकवत् । लोकेऽल्पक्रिययाऽल्पभृतिः, गुरुत्वे कर्मणः भृत्याधिक्यम्, तथा पूर्णाहुत्या अल्पकालभोग्यः स्वर्गः, ज्योतिष्टोमेन चिरभोग्य इति न शेषवैयर्थ्यमिति भावः । सुबोधिनी.

**'अन्त्ययोर्यथोक्तम् ॥**

अन्त्ययोः ' अभागिप्रतिषेधात् ' इति, ' अनित्यसंयोगात् ' इति सूत्रयोः समाधानं यथोक्तं पूर्वोक्तं ज्ञेयम् । स्वार्थे अप्रामाण्येऽपि ' रुक्ममुपदधाति ' इति विधेयस्तावकतया ( प्रामाण्यम् ), ' प्रावाहणिः ' इत्यस्य वायुपरत्वं चोक्तमिति भावः । सुबोधिनी.

विधिसदृशवाक्यानामर्थवादत्वम्

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥**

' औदुम्बरो यूपो भवति ' इति । अत्रौदुम्बरत्वमूर्क्पशुरूपफलमुद्दिश्य विधीयते, उतातिदेशप्राप्तयूपमुद्दिश्य विधीयते इति संशये पूर्वपक्षमाह– विधिरिति । वाशब्द एवार्थे । फलम् ' ऊर्जं पशूनाप्नोति ' इत्यंशप्रतिपादितमुद्दिश्य उ( ? औ )दुम्बरत्वस्य विधिरेव स्यात्, अपूर्वत्वात् गुणफलयोर्जन्यजनकभावस्याप्राप्तत्वात् । नन्वर्थवादोऽस्तु, अत आह– वादेति । वादमात्रम् अर्थवादमात्रं चेत् स्वार्थाप्रतिपादकतया अनर्थकं व्यर्थम् । यत्र सर्वथाऽगतिः तत्र लक्षणया स्तावकत्वम्, प्रकृते तथा नेति भावः । सुबोधिनी.

**लोकवदिति चेत् ॥**

सिद्धान्ती शङ्कते–लोकेति । लोके गोविक्रयवेलायाम् ' इयं गौः संपन्नक्षीरा स्त्र्यपत्या ' इति स्तुतिवाचकशब्दमपेक्षते 'त्वया क्रेतव्या' इति वाक्यम् । तथा 'औदुम्बरो

---

§ कुतो न क्षममिति व्याख्यातैव जानाति ।

वत् परिमाणतः फलविशेषः स्यात् ) एतावदेव, (=) ; प्रभा. २।२४ ( फलविशेषः ० ).

(१) जैसू. १।२।१८–३०,

यूपो भवति' इति स्तुतिमपेक्षते, अतोऽर्थवादो न फलप्रतिपादकः । सुबोधिनी.

**न पूर्वत्वात् ॥**

दूषयति—नेति । (दृष्टान्ते) पूर्वत्वात् प्रत्यक्षादिगम्यत्वात् विधिरप्रयोजक इति स्तुतौ पर्यवस्यति । इह तूर्कूपगुत्वादिसाधनत्वं न तथा । अतः शक्त्या फलजनकत्वबोधसंभवे लक्षणया स्तुतिकल्पनं न युक्तमिति भावः । सुबोधिनी.

**उक्तं तु वाक्यशेषत्वम् ॥**

सिद्धान्तमाह— उक्तमिति । विधिना त्वेकवाक्यत्वादिति सूत्रे वाक्यशेषत्वं विधिशेषत्वं स्तुतिद्वारा विध्येकवाक्यत्वम् उक्तम् । तथा च न निरर्थकत्वमिति भावः । सुबोधिनी.

**विधिश्चानर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥**

ननु शक्त्या विधिसंभवे लक्षणया स्तुतिकल्पनमन्याय्यम्, अत आह— विधिरिति । क्वचिद्वाक्यविशेषे विधिः विध्यर्थः प्रवर्तनारूपः अनर्थकः संभवति, यथा 'वायुर्वै क्षेपिष्ठा देवता' इति वाक्ये वायौ क्षिप्रगामित्वविषयप्रवर्तनार्थः । 'वायुः क्षिप्रगामी कर्तव्यः' इति योज्यम्, तन्न संभवति, वायोः क्षिप्रगामित्वस्य §स्वभावसिद्धत्वेन पुरुषकृत्यसाध्यत्वात् । अत आह— (‡ आनर्थक्यमिति । आनर्थक्यं विधावानर्थक्यं स्यात्) स्तुतिः 'वायव्यं श्वेतमालभेत भूतिकामः' इति विहितयागाङ्गभूतवायुदेवतास्तुतिः तत्समीपवृत्तित्वेन तस्माद्वाक्यात् प्रतीयेत निर्णीयेत । तत्सामान्यात् ¶विधिसमीपवृत्तित्वसामान्यात् साम्नायात् इतरेषु 'यजमानः प्रस्तरः' इत्यादिषु तथात्वं स्तावकत्वम्, न तु 'प्रस्तरकार्ये यजमानो योज्यः' इति विधिपरमिति भावः । सुबोधिनी.

**$ प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥**

---

§ अत्र स्वभावसिद्धत्वं पुरुषकृत्यसाध्यत्वे हेतुः कृतः । वार्तिके तु द्वयोरपि स्वातन्त्र्येण विध्यानर्थक्ये हेतुत्वं तत्र च व्यवस्था प्रतिपादिता । सा चेत्थम्— 'वायुर्वै क्षेपिष्ठा देवता', 'अप्सुजो वेतसोऽवकाश्च' इत्यादौ क्षेपिष्ठत्वाप्सुजत्वादेर्वायुवेतसादिषु स्वभावसिद्धत्वेन तद्विषयकविधेरानर्थक्यम्, 'ऊर्ग् उदुम्बरः', 'अप्सुयोनिरश्वः' इत्यादौ ऊर्क्त्वाप्सुयोनित्वादेः पुरुषकृत्यसाध्यत्वेन विध्यानर्थक्यमिति ।

‡ कंसस्थितोऽयं ग्रन्थो न संगच्छते । अत्र प्रतीकग्रहणात् व्याख्यानव्याख्येयभावदर्शनाच्च 'आनर्थक्यम्' इति पदं सूत्रेऽस्तीति व्याख्याताऽभिमन्यते इति प्रतीयते । तत्तु न संगच्छते । यद्यपि 'विधेश्चाऽऽनर्थक्यम्' इति सूत्रे पाठः संभवति, तथापि स न व्याख्यातुरभिमतः, पूर्वग्रन्थे प्रतीकग्रहणेन व्याख्यानेन च 'विधिश्चानर्थकः' इति पाठस्यैव तदभिमतत्वदर्शनात् । एतद्ग्रन्थस्थाने 'तस्मादिति' इति प्रतीकमात्रं यदि स्यात्, तत्संगच्छेत ।

¶ अत्र भाष्ये 'विध्यसंभवः स्तुतिसंभवश्च' इति सामान्यमुक्तम् । तदेव युक्तम्, विधिसमीपवृत्तित्वमात्रस्य स्तावकत्वे अप्रयोजकत्वात्, अश्वरोगनिमित्तकप्रायश्चित्तादौ (तैब्रा. ३।९।१७।१) अनेकानिष्टिविधीन् पठित्वा ततः क्रमेणैकैकविधिप्रशंसादर्शनेन स्तावकापेक्षया समीपतरवृत्तित्वेऽपि विधीनां परस्परस्तावकत्वाभावात् । समीपवृत्तित्वं केवलं सिद्धस्य स्तावकस्य स्तोतव्यनियामकम् ।

$ सूत्रस्यास्य अभिप्रेतार्थपरत्वं क्लिष्टबोधम् । अत एवानेकैर्व्याख्यातृभिस्तात्पर्यसंप्रतिपत्तावपि नानाविधः सूत्रार्थो वर्णितः । तत्र कैश्चित् 'प्रकरणे संभवन् । अपकर्षो न कल्प्येत' इति वाक्यद्वयं प्रकल्प्य, प्रथमवाक्ये 'निविशेत' इति क्रियापदमध्याहृत्य, 'यो विदग्धः स नैर्ऋतः' इति विदग्धतावाक्यार्थस्य सिद्धान्तिसंमतमर्थवादत्वं चेत् स वाक्यार्थः दर्शपूर्णमासप्रकरणे संभवन् स्तुतिरूपेण प्रकृतदर्शपूर्णमासयागसंबद्धः सन् प्रकरणे एव निविशेतेति प्रथमवाक्यार्थो वर्णितः । अत एव अपकर्षः प्रकरणादन्यत्र निवेशः न कल्प्येत प्रकरणाद्बहिर्यत्र कुत्र नैर्ऋतयागो भवति तत्र नैर्ऋतयागानुवादेन विदग्धताविधानरूपस्योक्तवाक्यार्थस्यापकर्षकल्पना नाऽऽपद्येतेति द्वितीयवाक्यार्थो वर्णितः । अपरैः 'प्रकरणे...... कल्प्येत' इत्येतदेकं वाक्यं कल्पयित्वा, 'अपकृष्यते इत्यपकर्षः' इति कर्मव्युत्पत्तिमाश्रित्य, तस्य च संभवत्पदार्थोद्देशेन विधेयतां स्वीकृत्य, स्तुति-

ननु 'यो विदग्धः स नैर्ऋतः' इत्यत्र यो निर्ऋतियागः तमुद्दिश्य विदग्धद्रव्यविधिसंभवे अर्थवादत्वकल्पनमन्याय्यमत (आह) — प्रकरण इति । प्रकरणे दर्शपूर्णमासप्रकरणे संभवन् निविशमानः अर्थवादरूपेण अपकर्षः प्रकरणवियोगः न कल्पेत विधिपरत्वं मुक्त्वा प्रकरणसंबन्धकल्पनपक्षो न संभवति( ? ), अतो विधिकल्पनानर्थक्यम् , दर्शपूर्णमासे निर्ऋतियागाभावादिति भावः ।

सुबोधिनी.

**विधौ च वाक्यभेदः स्यात् ॥**

ननु 'तस्मादविदहता श्रपयितव्यः' इति विधिस्तावकं सत् 'नैर्ऋतं चरुं परिवृत्त्यै गृहे' इत्यत्र हविषो दाहरूपगुणविधायकमप्यास्तामत आह— विधाविति । उभयतात्पर्ये वाक्यभेदः वाक्यावृत्तिरूपः स्पष्टः ।

सुबोधिनी.

हेतुबोधकं वाक्यमर्थवादः

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥**

चातुर्मास्ये श्रुतम् 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इति । अत्र 'तेन ह्यन्नम्' इति वाक्यस्य † हेतुविधित्वेन स्तावकत्वेन वा प्रामाण्यमिति संशये पूर्वपक्षमाह— हेतुरिति । उक्तवाक्यं हेतुः हेतुविधायकम्— शूर्पेण होमः कुतः ? इत्याक्षेपे यतः तेनान्नं क्रियते अतः । इत्थं च यद्यदन्नसाधनं तद्धोमसाधनमिति सिद्धम् । तथा च दर्वीस्थाल्यादीनामपि होमसाधनत्वविधायकतया अर्थवत्त्वं फलवत्त्वं शूर्पपदस्यान्नसाधनमात्रोपलक्षकत्वेन उपपत्तिश्चेति ताभ्यां हेतुभ्याम् † ।

सुबोधिनी.

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥**

सिद्धान्तमाह— स्तुतिरिति । स्तुतिः शूर्पस्तुतिः शब्दपूर्वत्वात् शब्दः शूर्पेणेति करणत्वबोधकतृतीयान्तः पूर्वं यस्य 'तेन ह्यन्नम्' इत्यस्य, तत्त्वात् तस्य दर्वीपिठरादेरचोदना न विधिः । होमस्य साधनाकाङ्क्षायां प्रत्यक्षश्रुतशूर्पेण निराकाङ्क्षत्वात् स्तुतिपरमिति भावः ।

सुबोधिनी.

**व्यर्थे स्तुतिरन्याय्येति चेत् ॥**

ननु प्रकृष्टान्नसाधनत्वं यथा स्थाल्यादौ, तथा न शूर्पे, इति अविद्यमानधर्मेण स्तुतिरन्याय्येत्याशङ्कते— व्यर्थ इति । व्यर्थे उक्तधर्मशून्ये । शेषं स्पष्टम् । सुबोधिनी.

**अर्थस्तु विधिशेषत्वाद्यथा लोके ॥**

समाधत्ते— अर्थ इति । विधिशेषत्वात् विधेयशूर्पस्तावकत्वात् अर्थः सफलः । यथा लोके 'चैत्रो बलवत्तरः मैत्रादीन्सहते' इत्युक्ते मैत्राद्बलवत्त्वेऽपि न सिंहाद्बलवान् , तथा शूर्पस्य अन्नं प्रति स्थाल्यपेक्षया बहिरङ्गत्वेऽपि लाङ्गलाद्यपेक्षयाऽन्तरङ्गत्वेन साधकत्वमस्तीति भावः ।

सुबोधिनी.

**यदि च हेतुरवतिष्ठेत निर्देशात् सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥**

'तुष्यतु दुर्जनः' इति न्यायेन हेतुविधित्वमङ्गीकृत्यापि न परसमीहितसिद्धिरित्याह— यदि हेत्विति । यदि हेतुः हेतुविधिः तदाऽपि निर्देशात् शूर्पस्य निर्देशात् तन्निष्ठमन्नहेतुत्वमेव अवतिष्ठेत प्राप्नुयात् , न तु दर्वीपिठरादिगतम् । पदश्रुत्यपेक्षया प्रत्ययश्रुतेः प्रबलत्वात्

---

रूपेण प्रकरणे संभवन् विदग्धतावाक्यार्थः अपकर्षः प्रकरणात् बहिर्निष्काशितः न कल्प्येतेति सूत्रार्थो वर्णितः । 'दर्शपूर्णमासयागेषु निर्ऋतिदेवताकयागाभावात् प्रकृतयागोद्देशेन विदग्धताविधेरसंभवात् विध्यानर्थक्यं स्यात्' इति शेषसूत्रार्थः सर्वत्र समानः । सुबोधिन्यां तु संभवदपकर्षपदयोः सामानाधिकरण्यं स्वीकृत्यापि 'प्रकरणवियोगः' इति भावप्रधानोऽपकर्षपदार्थो व्याख्यातः , स न संगच्छते । प्रकरणवियोगः प्रकरणे कथं निविशताम् ? किंच, 'विधिपरत्वं मुक्त्वा' इत्यादि वाक्यं विपरीतार्थकं भासते । तत्र 'प्रकरणसंबन्धं मुक्त्वा विधिपरत्वकल्पनपक्षो न संभवति' इति वाक्यव्यक्तिः साधुरिति भाति ।

† 'शूर्पं होमसाधनम् , अन्नसाधनत्वात् , यद्यदन्नसाधनं तत्तत् होमसाधनम्' इत्येवं होमसाधनत्वे साध्ये अन्नसाधनत्वरूपो हेतुः विधीयते प्रतिपाद्यते, सोऽयं हेतुविधिः तत्त्वेनेत्यर्थः । तेन च हेतुविधिना 'अन्नसाधनेन होमं भावयेत्' इति मुख्यो विधिः कल्प्यते इति भावः ।

† हेतुविधित्वेन प्रामाण्यमिति शेषः , अन्यथा वाक्यं साकाङ्क्षं स्यात् ।

अविशेषश्रुत्या तृतीयया अनुकरणसामान्यं बुध्यत इत्याशङ्कते– (सामान्यादिति)। सामान्यात् अविशेषतृतीयाश्रवणात्। समाधत्ते– अव्यवस्थेति। विधीनां तथा सत्यव्यवस्था स्यात्, वस्तुमात्रे किंचिन्निरूपितहेतुतायाः सत्त्वादिति भावः। सुबोधिनी.

वेदमूलकत्वात् स्मृतीनां प्रामाण्यम्

**[1]धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्॥**

उक्तदिशा विध्यर्थवादमन्त्राणां धर्मे प्रामाण्यं व्यवस्थाप्येदानीं स्मृतिशिष्टाचाराणां धर्मे प्रामाण्यं व्यवस्थापयन् पूर्वपक्षमाह– धर्मस्येति। धर्मस्य उक्तलक्षणलक्षितस्य शब्दः वेदः मूलं यस्य तत्त्वात् 'अष्टकाः कर्तव्याः' इति केवलपौरुषवाक्यप्रतिपाद्यम् अशब्दम् अवेदमूलम् अनपेक्ष्यम् अनादरणीयं स्यात्। सुबोधिनी.

**अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्॥**

सिद्धान्तमाह– अपि वेति। दृढवैदिकप्रणयनान्यथानुपपत्तिरूपमनुमानं स्मृतिमूलभूतश्रुतिसत्त्वे स्यात्। तदित्थम्– 'स्मृतिः स्वमूलभूतवेददर्शनवत्प्रणीता, वेदातिरिक्तगम्यो धर्मो न भवतीति निश्चयवता परेषां धर्मज्ञानार्थं प्रणीतत्वात्, $कल्पसूत्रादिवत्'। नन्विदं प्रतारकवाक्यमित्येव किं नोच्यते? इत्यत आह– (कर्तृसामान्यादिति।) कर्तृसामान्यात् वैदिकानुष्ठानस्मृत्योरेककर्तृकत्वात्। न हि वैदिकं कर्म धर्मबुद्ध्या अनुतिष्ठन् प्रतारको भवेदिति भावः। सुबोधिनी.

वेदविरुद्धस्मृतेः अप्रामाण्यम्

**[1]विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्॥**

(१) श्रुतिविरोधे स्मृतिवाक्यमनपेक्षम् अप्रमाणम् अनादरणीयम्। असति विरोधे मूलवेदानुमानमित्यर्थः। § मनु. २।१३

(२) प्रत्यक्षश्रुतिविरोधे स्मृत्यादि हेयम्। यथा 'सर्वौदुम्बरी वेष्टयितव्या' इति। असति तद्विरोधे अनुमानम्। यथा 'अष्टकाः' इति। स्मृतिवाक्यं वेदानुमापकतया मानमित्यर्थः। मच. २।६

(३) 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिविरुद्धा 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः पक्षे श्रुतिबाधिका संकोचिका वा सती धर्मे प्रमाणम्, स्मृतित्वादिति बहिःपूर्वपक्षे सिद्धान्तमाह– विरोध इति। विरोधे उपलभ्यमानश्रुतिविरोधे अनपेक्ष्यं स्मृतिप्रामाण्यमनादरणीयम्, कल्प्यश्रुत्यपेक्षया प्रत्यक्षश्रुतेः प्रबलत्वेन बाधासंभवादिति भावः। विरोधे असति श्रुतिकल्पकमनुमानं प्रवर्तते। सुबोधिनी.

दृष्टहेतुमूलकत्वे स्मृतेः अप्रामाण्यम्

**[2]हेतुदर्शनाच्च॥**

---

$ यद्यपि प्रकृतसूत्रे स्मृत्यादिप्रामाण्यं साध्यते, यद्यपि च कल्पसूत्राधिकरणस्य कल्पसूत्रादीनां वेदवत् स्वातन्त्र्येण वेदत्वेनैव वा प्रामाण्यस्याऽऽशङ्क्यमानस्य निरासार्थत्वेन तेषामपि वेदमूलकत्वेनैव प्रामाण्यस्य प्रकृतस्मृत्यधिकरणेनैव साध्यते, तथा च 'स्मृत्यादयः प्रमाणम्, वेदमूलकत्वात्' इति प्रामाण्यसाध्यकानुमाने कल्पसूत्रादीनां पक्षपतितत्वेन दृष्टान्तत्वासंभवः, तथापि व्याख्यात्रा उक्तानुमानगतहेत्वसिद्धिपरिहारद्वारा प्रामाण्यपर्यवसायिनो वेदमूलकत्वसाध्यकानुमानस्योपक्रान्तत्वेन तत्र संदिग्धसाध्यकानां मन्वादिस्मृतिशिष्टाचारादीनामेव पक्षता, न प्रत्यक्षवेदव्याख्यानरूपत्वेन प्रत्यक्षवेदमूलकत्वानां कल्पसूत्रादीनाम्। तेन कल्पसूत्रादीनामत्र न दृष्टान्तत्वासंभव इति बोध्यम्।

अत्र सुबोधिन्याम् "अनुमानशब्दो वेदमूलकत्वसाध्यकानुमानपरः, तत्समानाधिकरणः प्रमाणशब्दोऽपि तत्परः। 'कर्तृसामान्यात्' इत्ययं स्मृतिकर्तॄणां प्रतारकत्वेन हेतोरप्रयोजकत्वशङ्कायाम् 'यदि स्मृतीनां वेदमूलकत्वं न स्यात्, तर्हि स्मर्तॄणां वैदिकधर्मानुष्ठातृत्वमपि न स्यात्' इत्यनुकूलतर्कगर्भं उक्तानुमानप्रामाण्ये हेतुः" इति सूत्रयोजना प्रतीयते। अपरे तु अनुमानशब्दस्य मन्वादिस्मृतिपरतामाश्रित्य 'अनुमानं प्रमाणम्, कर्तृसामान्यात्' इति साक्षादेव कर्तृसामान्यहेतुकस्मृतिप्रामाण्यसाध्यकानुमानपरतां सूत्रस्य योजयन्ति।

(१) जैसू. १।३।१–२.

§ वीमि. ममुवत्।

(१) जैसू. १।३।३; उ. १।३०।९; मनु. २।१३ मानम् (मानकम्); मच. २।६; बौधि. १।२।९; वीमि. १।३ पेक्षं (पेक्ष्यं).

(२) जैसू. १।३।४; वीमि. १।३.

ननु 'सर्वा वेष्टयितव्या' इति स्मृतिप्रणयने किं कारणम्? अत्राऽऽह—हेत्विति। प्रणयने विस्तीर्णवस्त्रलाभो भवतीति लोभस्य स्मृतिप्रणयने कारणत्वदर्शनात्। एतेन 'वैसर्जनीयं वासोऽध्वर्युर्गृह्णाति' इति श्रुतिविरुद्धस्मृतेरपि मूलं लोभ एवेति सूचितम्। सुबोधिनी.

[ आनन्दाश्रममुद्रित—सव्याख्य—शाबरभाष्यसहित-मीमांसादर्शनोपोद्घाते विरूपाक्षशास्त्रिणः— स्मृत्यधिकरणे भाष्ये 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनां 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इत्यादिप्रत्यक्षश्रुतिविरोधान्मूलभूतश्रुत्यनुमाने जिज्ञासानुदयाच्च स्वरूपतोऽप्रामाण्यमूरीकर्तव्यमित्याशयिष्ट शबरस्वामी। तच्च स्वरूपतोऽप्रामाण्यमनधिगताबाधितार्थाबोधकत्वरूपम्। भट्टकुमारिलस्तु यावच्छ्रुतिदर्शनं तासां स्मृतीनामननुष्ठापकत्वरूपमप्रामाण्यं न पुनरनधिगता( बाधिता )र्थाबोधकत्वरूपमप्रामाण्यमिति व्याजहार। 'विरोधे त्वनपेक्षम्०' इति सूत्रगतानपेक्षपदस्य सामान्यतोऽप्रमाणार्थत्वादननुष्ठापकत्वरूपाप्रामाण्यविवक्षयाऽपि निर्वाहे सर्वथाऽप्रामाण्यं स्मृतीनां नारोचिष्ट वार्तिककृते।

प्राचीननैयायिका इव शबरोऽपि सिषाधयिषाया अनुमितिजनकत्वमभिमन्वानो जिज्ञासाया अनुमानाङ्गत्वमूरीकृत्य प्रत्यक्षश्रुतौ जाग्रत्यां निराकाङ्क्षतया जिज्ञासाभावादनुमानमेव न प्रवर्तत इत्यज्ञातमूलकस्मृतेः सर्वथैवाप्रामाण्यमङ्ग्यकार्षीत्।

वार्तिककारस्तु घनगर्जितेन मेघानुमानादौ व्यभिचारदर्शनादनुमित्साया अनुमितिजनकत्वं प्रत्याचक्षाणो मूलभूतां श्रुतिमनुमिमानस्तस्याः सर्वथाऽप्रामाण्यमसहिष्णुरननुष्ठापकत्वरूपमप्रामाण्यं व्यवातिष्ठिपत्।]

पदार्थप्राबल्यम्

[1]**शिष्टाकोपेऽविरुद्धमिति चेत्॥**

'* वेदं कृत्वा वेदिं करोति' इति श्रुत्या वेदवेद्योः पूर्वापरभावः प्रतिपाद्यते। तयोर्मध्ये 'क्षुत आचामेत्' इति क्षुन्निमित्तमाचमनं स्मृत्या प्राप्तम्। एवं श्रौतक्रमेण प्राप्ते स्मार्ताचमनस्य ¶विरोधे आचमनं बाध्यते न वेति संशये सिद्धान्तेनोपक्रमते— शिष्टेति। शिष्टानां वैदिकानां पदार्थानामकोपे अविरोधे आचमनमविरुद्धमनुष्ठेयम्। क्रमस्य पदार्थधर्मत्वेन आचमनेन प्रबलेन पदार्थेन बाधे बाधकाभाव इति भावः। सुबोधिनी.

[2]**न शास्त्रपरिमाणत्वात्॥**

पूर्वपक्षमाह— नेति। शास्त्रावगतं प्रयोगविध्यवगतं परिमाणं संख्याविशेषो यत्र तत्त्वात्पूर्वोक्तं न। प्रयोगविधिना अस्मिन्कर्मणि इयन्तः पदार्था इति संख्याविशेषो ग्राहितः, तद्विरोधादाचमनस्मृतिबाध इति भावः। सुबोधिनी.

अदृष्टमूलकस्मृतेः प्रामाण्यम्

[2]**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्॥**

सिद्धान्तं द्रढयति— अपि वेति। कारणानां स्मृतिप्रणयनकारणानां लोभादीनामग्रहणे अदर्शने सति प्रयुक्तानि अनुष्ठितान्याचमनादीनि अविरुद्धानि प्रतीयेरन्। न हि स्वगुणरूपसंख्यानुसारेण प्रधानपदार्थबाधो युक्त इति भावः। सुबोधिनी.

विरोधे आर्यप्रसिद्धः शब्दार्थः ग्राह्यः न म्लेच्छप्रसिद्धः

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्॥**

---

* वेदः शयानवत्सजान्वाकृति दर्भमयं संमार्जनसाधनम्। वेदिः आहवनीयगार्हपत्यमध्यवर्तिनी चतुरङ्गुलखाता संस्कृता भूमिः।

¶ अत्र विरोधस्य 'बाध्यते, न बाध्यते' इत्युभयविधेयनिरूपितोद्देश्यगतत्वेन प्रतीयमानं सिद्धत्वं नोपपद्यते, अग्रे अविरोधस्य सिद्धान्तितत्वेन 'न बाध्यते' इति सिद्धान्तकोटौ विरोधाभावात्, सिद्धान्ते अविरोधस्य साध्यत्वेन पूर्वपक्षे विरोधस्य साध्यत्वात् 'बाध्यते' इति पूर्वपक्षकोटावपि विरोधस्यासिद्धत्वात्। 'आचमनं विरुद्धं सत् बाध्यते, अविरुद्धं सत् न वा' इति विरोधस्य विधेयगतत्वं तूपपद्यते। अत एव भाष्ये 'किमेतानि श्रुतिविरुद्धानि न कर्तव्यानि, उत अविरुद्धानि कार्याणि' इति संशयोऽभिनीतः।

(१) जैसू. १।३।५.

(१) जैसू. १।३।६ ; निप्र. १।१६.

(२) जैसू. १।३।७–२३.

'यवमयश्चरुर्भवति' इत्यत्र आर्ययवनव्यवहारद्वैविध्येन यवपदार्थसंशये पूर्वपक्षमाह– तेष्विति । तेषु व्यवहारेषु विरोधस्य प्रबलदुर्बलभावस्य अदर्शनात् विप्रतिपत्तिः शक्तिग्रहः समा तुल्यः स्यात् । सुबोधिनी.

**शास्त्रस्था वा तन्निमित्तत्वात् ॥**

सिद्धान्तमाह– शास्त्रस्थेति । शास्त्रस्था शास्त्रप्रतिपाद्या प्रतिपत्तिः यवशब्दस्य 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥' इति शास्त्रप्रतिपत्तिर्बलीयसी । कुतः ? तन्निमित्तत्वात् । तस्य धर्मज्ञानस्य निमित्तं शास्त्रं तत्त्वात् । 'यवमयश्चरुर्भवति' इति धर्मसाधनयवशक्तिज्ञानं शास्त्रजमेव धर्मे उपयुज्यते, यवनानां व्यवहारस्य शक्तिभ्रमेणापि संभवादिति भावः । सुबोधिनी.

म्लेच्छेषु रूढः शब्दार्थः आर्यरूढ्यभावे ग्राह्यः

**चोदितं तु प्रतीयेताविरोधात् प्रमाणेन ॥**

पिकतामरसादिशब्दप्रयोगः आर्याणां न कुत्रापि, म्लेच्छास्त्वर्थविशेषे व्यवहरन्ति । तत्र म्लेच्छव्यवहारं परित्यज्य व्याकरणेन प्रकृतिप्रत्ययौ परिशोध्याऽऽर्थ-(?ध्यार्थ)कल्पनमुचितम् , म्लेच्छव्यवहारक्लृप्त एव वा इति संशये म्लेच्छव्यवहारस्य धर्मसाधनत्वाभावात् व्याकरणादिना कल्प्योऽर्थ इति बहिःपूर्वपक्षे सिद्धान्तमाह– चोदितमिति । चोदितं यवनैर्व्यवहृतं प्रतीयेत तत्पदार्थत्वेन ज्ञातव्यम् , बलवता प्रमाणेन अविरोधात् । यथाऽर्थवादविरुद्धो यवव्यवहारः तथाऽत्राभावादिति भावः । सुबोधिनी.

कल्पसूत्राणां न स्वतःप्रामाण्यम्

**प्रयोगशास्त्रमिति चेत् ॥**

बौधायनापस्तम्बादिसूत्राणि पौरुषेयाणि न वेति संशये पूर्वपक्षमाह– प्रेति । प्रयोगशास्त्रं कल्पसूत्रम् अपौरुषेयम् अनादि इति चेत् । सुबोधिनी.

**नासंनियमात् ॥**

सिद्धान्तमाह– नेति । न अपौरुषेयाः, असतः पूर्वमसतः बौधायनाचार्यादिभिः नियमात् निर्माणात् । तत्र कर्तुः स्पष्टमुपलभ्यमानत्वादिति भावः । सुबोधिनी.

**अवाक्यशेषाच्च ॥**

अवाक्यशेषात् । प्रयोगविधिसंनिधौ तच्छेषार्थवादपाठाभावाच्च न वेदतुल्यः(?ल्यम्) । सुबोधिनी.

**सर्वत्र च प्रयुक्तत्वात्संनिधानशास्त्राच्च ॥**

सर्वत्र सर्वकल्पसूत्रेषु संनिधानशास्त्रात् संनिधिपठितशास्त्रार्थात् , विरुद्धस्येति शेषः, विरुद्धार्थकस्य प्रयोगात् । यथाऽऽपस्तम्बसूत्रे 'सर्वाणि हवींषि पर्यग्नि करोति' इति 'पुरोडाशं पर्यग्नि करोति' इति प्रत्यक्षश्रुतिविरुद्धम् । एवमन्यसूत्रेष्वपि द्रष्टव्यानि । † अयं भावः– कल्पसूत्राणां वेदमूलत्वमुभयवादिसिद्धं तस्य नित्यत्वे श्रुत्यर्थानुवादकत्वात्प्रत्यक्षश्रुतिविरुद्धं वाक्यं न स्यात् अनित्यत्वे न्यायाभासज्ञानेन वाक्यरचनं संभवतीति ।

सुबोधिनी.

देशभेदेन अनुष्ठितानां होलाकादिशिष्टाचाराणां प्रामाण्यम्

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥**

होलाकाद्याचारः प्राच्यैरेव क्रियते । तन्मूलभूता कल्प्यमाना श्रुतिः 'होलाकाद्याचारः प्राच्यैः कर्तव्यः' इति कल्प्यते, उत सा प्राच्याद्यघटितेति संशये पूर्वपक्षमाह– अनुमानेति । अनुमानस्य अनुमितिकारणीभूतलिङ्गस्याऽऽचारस्य व्यवस्था(प?)नात् प्राग्देशे एव नियतत्वात् प्रमाणम् अनुमिता श्रुतिः तत्संयुक्तं प्राच्यादिपदघटितं स्यात् । सुबोधिनी.

---

† उपपत्तिविरोधात् चिन्त्योऽयं भावः । तथाहि– पूर्वे 'कल्पसूत्रम् अपौरुषेयम् , अनादि' इति पूर्वपक्ष उपक्षिप्तः । तत्र अपौरुषेयानादेर्वेदत्वमेव, वेदतुल्यत्वं वेति अवान्तरपक्षौ संभवतः । तयोरुभयोरपि पक्षयोः कल्पसूत्राणां वेदमूलत्वं न संभवति । अतो वेदमूलत्वस्योभयवादिसिद्धत्वं नोपपद्यते । किंच, 'तस्य नित्यत्वे' इति तच्छब्देनैकवचनान्तेन कल्पसूत्राणां परामर्शो नोपपद्यते, परामर्शेऽपि नित्यत्वस्यैव प्रतिवाद्यभिमतत्वेन 'नित्यत्वे, अनित्यत्वे' इति विकल्पो नोपपद्यते, पूर्वोक्तरीत्या श्रुत्यर्थानुवादकत्वं च नोपपद्यते । नापि वेदमूलत्वपरामर्शः, तस्य नित्यत्वानित्यत्वविकल्पानुपपत्तेः । नापि वेदपरामर्शः, तस्य प्रकृतत्वेऽप्यप्रधानत्वात् , परामर्शेऽपि वाक्यार्थानुपपत्तेश्च ।

**अपि वा सर्वधर्मः स्यात्, तन्न्यायत्वाद्विधानस्य ॥**

सिद्धान्तमाह– अपि वेति। होलाकादिः सर्वेषां धर्मः स्यात्। विधानस्याऽऽचारानुमितश्रुतेस्तन्न्यायत्वात्। †सः प्राच्याद्यघटितवाक्यकल्पको न्यायः तर्कः तत्त्वात्। प्राच्यत्वादेरनुगतस्य निर्वक्तुमशक्यत्वेन प्राच्यादिघटितवाक्यकल्पकोऽत्र हेतुर्नास्तीति भावः। सुबोधिनी.

**दर्शनाद्विनियोगः स्यात् ॥**

ननु शिखाकर्मवद्व्यवस्था किं न स्यात्? अत्राऽऽह– दर्शनादिति। शिखायां 'मुण्डा भृगवः' इति गोत्रोपपददर्शनात् श्रवणात् विनियोगः व्यवस्था। इह तथा नेति भावः। सुबोधिनी.

**लिङ्गाभावाच्च नित्यस्य ॥**

इतोऽपि नेत्याह– लिङ्गेति। नित्यस्य कर्तृविशेषनियमकर्तुः लिङ्गस्याभावात्। सुबोधिनी.

**आख्या हि देशसंयोगात् ॥**

ननु प्राच्यत्वजातिं स्वीकृत्य तद्घटितश्रुतिकल्पनं संभवतीत्यत्राऽऽह– आख्येति। प्राच्यत्वं न जातिः किंतु प्राचीदेशसंयोगाद्व्यवहारः। सुबोधिनी.

**न स्याद्देशान्तरेष्विति चेत् ॥**

ननु यः प्राच्य इति समाख्यावान् सोऽन्यस्यां दिशि गतः तदा प्राच्य इति व्यवहारो न स्यात्, प्राग्देशसंयोगस्य व्यवहारनिमित्तस्याभावादिति शङ्कते– न स्यादिति। सुबोधिनी.

**स्याद्योगाख्या हि माथुरवत् ॥**

'मथुरायां भवो माथुरः' इति योगवदत्रापि 'प्राच्यां भवः' इति योगः न देश(‡? काल)संयोगप्रयुक्त इति समाधत्ते– स्यादिति। सुबोधिनी.

**कर्मधर्मो वा प्रवणवत् ॥**

ननु माऽस्तु कर्तृपरिच्छेदः, तथापि करञ्जवृक्षादिपूजनस्य कृष्णमृद्वति देशे आचारात् तादृशभूः कर्मधर्मः कर्माङ्गम्, वैश्वदेवकर्मणि प्राचीनप्रवणदेशवत्। सुबोधिनी.

**तुल्यं तु कर्तृधर्मेण ॥**

यथा कृष्णवर्णकर्त्राऽनुष्ठिते कर्मणि कृष्णवर्णो नाङ्गं तथा देशवर्णोऽपीत्यभिप्रायेण समाधत्ते– तुल्यमिति। सुबोधिनी.

मन्त्रलक्षणं ब्राह्मणलक्षणं च

**[1]तच्चोदकेषु मन्त्राख्या ॥**

---

† सूत्रे विधानस्येत्यस्य तन्न्यायत्वादित्यत्र त्वप्रत्ययार्थे भावेऽन्वयात् तन्न्यायपदार्थविधानपदार्थयोरभेदो व्युत्पत्तिसिद्धः। स च व्याख्यात्रभिमते 'सः न्यायः तन्न्यायः' इति न्यायपदार्थप्राधान्ये नोपपद्यते। न हि विधानमेव न्यायः, अपि तु न्यायानुरोधेन विधानं कल्पनीयम्। अतस्तन्न्यायविधानपदार्थयोरभेदानुरोधेन तन्न्यायशब्दव्युत्पत्तिः कल्पनीया। सा च द्वेधा संभवति– 'नीयते उपपत्त्या निर्णीयते इति न्यायः' इति कर्मव्युत्पन्नोऽत्र न्यायशब्दः। न्याय्य इति तदर्थः। तच्छब्देन पूर्वप्रकृतः सर्वधर्मः परामृश्यते। सः सर्वधर्मः होलाकादिरूपः न्यायः न्यायप्राप्तः यस्मिन् विधाने तत् तन्न्यायमिति बहुव्रीहिः, तत्त्वादित्यर्थः। अत्र सर्वधर्म इत्यत्र विशेष्यांशस्य होलाकादिरूपस्य न्यायप्राप्तत्वाभावात् विशेषणांशे सर्वधर्मतायां न्यायप्राप्तत्वं पर्यवस्यति। सेयमेका व्युत्पत्तिः। अथापरा– 'न्यायः अस्य अस्तीति न्यायः' इति मत्वर्थीयार्शआद्यजन्तो न्यायशब्दः। न्याय्य इति तदर्थः। तच्छब्देन सर्वधर्मपरामर्शः बहुव्रीहिश्च पूर्ववत्। न्यायस्तु सुबोधिन्यां संक्षेपेण दर्शितः। तद्बलेन 'होलाका कर्तव्या' इत्येवमादीनि निरधिकारिविशेषाणि विधानानि कल्प्यन्ते, तानि च सर्वधर्मतापराण्येव।

‡ यथाश्रुतं तु नोपपद्यते, उक्तयोगे दिक्संयोगस्य प्रतीयमानत्वेन विरोधात्, त्रैकालिकप्राच्यादिदिक्संयोगाभाववत्यपि प्राच्यादिशब्दप्रवृत्त्यापत्तेश्च। 'न कालसंयोगप्रयुक्तः' इत्यस्य 'योगे प्रतीयमानो दिक्संयोगो न भूतत्ववर्तमानत्वभविष्यत्वान्यतमकालावच्छिन्नः अपि तु कालानवच्छिन्नः' इत्यर्थः। तेन दिगन्तरगते प्राच्यादिदिक्संयोगस्य भूतत्वेऽपि प्राच्यादिशब्दप्रवृत्तिरुपपद्यते। तदुक्तं भाष्ये– 'एषा योगाख्या योगमात्रापेक्षा, न भूतवर्तमानभविष्यत्संबन्धापेक्षा' इति।

(१) जैसू. २।१।३२; बोमि. १।३.

(१) चत्वारो वेदाः प्रत्येकं द्विविधाः— मन्त्रब्राह्मणभेदात् । तत्र यानि प्रयोगकालेऽनुष्ठानोपयिकार्थाभिधानरूपाणि वेदवाक्यानि तानि मन्त्रशब्देनोच्यन्त इति 'तच्चोदकेषु मन्त्राख्या' इति मन्त्राधिकरणे व्यवस्थितम् । तत्रापि मन्वादीनां मन्त्रप्रसिद्धिरेव मन्त्रलक्षणं विवक्षिताविवक्षितविवेकेन पर्यवस्यति । अत एव 'प्रायिकमिदमभियुक्तप्रसिद्धलक्षणार्थम्, यत्राभियुक्तानां मन्त्रप्रसिद्धिः स मन्त्र इत्यर्थः' इति पार्थसारथिमिश्राः । भगवान् जैमिनिरपि ऊहप्रवरनामधेयानां मन्त्रत्वनिरासाय 'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्' इति मन्त्रप्रसिद्धिमेवोपलक्षयति । आहुश्च भट्टपादाः— 'याज्ञिकानां समाख्यानं लक्षणं मन्त्रलक्षणम्' इति । अत्र मन्त्रेत्युपलक्षणमिति ब्राह्मणस्य ऋग्यजुःसामादीनां सूक्तानुवाकादीनां चेत्थमेव लक्षणं निरवद्यम्, संभवप्राचुर्यात्तु लक्षणान्तराण्यभिधीयन्त इति । वीमि. ११३

(२) प्रसङ्गात् वेदो द्विविधः— मन्त्रो ब्राह्मणमिति विभज्याऽऽद्यस्य लक्षणमाह— तदिति । तत् कर्मसमवेतार्थस्मरणं चोदकं फलं येषां तेषु मन्त्राख्या मन्त्रनाम । सुबोधिनी.

[1]शेषे ब्राह्मणशब्दः ॥

शेषे मन्त्रभिन्ने ब्राह्मणशब्दः ब्राह्मणपदं वाच्यम् । सुबोधिनी.

[2]अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥

ऊहप्रवरनामधेयेषु मन्त्रत्वमस्ति न वेति संशये तत्रापि पूर्वोक्तलक्षणाक्रान्तत्वादस्ति मन्त्रत्वमिति पूर्वपक्षे सिद्धान्तमाह— अनाम्नातेष्विति । हि यतः विभागः मन्त्रो ब्राह्मणमिति विभागः आम्नातेषु कण्ठरवेण पठितेष्वेव, अतः ऊहे 'सूर्याय जुष्टम्' इति, प्रवरे 'काश्यपावत्सार' इति, सुब्रह्मण्यानिगदादिषु 'कृष्णशर्मा यजते' इत्यादिषु अनाम्नातेषु अमन्त्रत्वम् । सुबोधिनी.

(१) जैसू. २।१।३३ ; वीमि. ११३.

(२) जैसू. २।१।३४ ; वीमि. ११३.



ऋग्यजुःसाम्नां लक्षणानि

[1]तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥

(१) मन्त्रा अपि 'ऋचो यजूंषि सामानि निगदा मन्त्राः' इति कात्यायनेन विभक्ताः । यत्रार्थवशेन पादव्यवस्था स मन्त्रः ऋक् । यदाह— 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' । नियताक्षरमन्त्रः ऋगिति पर्यवसितार्थः । अगीयमानत्वं चात्र विशेषणम्, अर्थात् ( अपुरस्कृतगानः ), अन्यथा साम्न्यतिप्रसङ्गात् । वीमि.

(२) एवं मन्त्रसामान्यलक्षणमुक्त्वा ऋक्सामयजुषां प्रत्येकं लक्षणमाह ऋगित्यादिना । यत्र वाक्ये अर्थवशेन छन्दोविशेषवशेन (वा) पादव्यवस्था सा ऋक् । सुबोधिनी.

[2]गीतिषु सामाख्या ॥

(१) गीयमानो मन्त्रः साम । यद्यपि गीतमेव सामशब्दार्थत्वेनासिद्धान्तयत् सप्तमेऽध्याये, तथापि 'रथन्तरेण स्तुवीत' इत्यादिदर्शनादक्षरेषु तद्व्यपदेशः । एवं च मन्त्रविभागप्रकरणे सामशब्दस्य गीयमानाक्षरपरतामेवाभिप्रयन्नसूत्रयत्— 'गीतिषु सामाख्या', अक्षरपरतया कथंचित्सूत्रयोजनादिति । वीमि. ११३

(२) तत्रैव गीतिषु गाने सति साम । सुबोधिनी.

[3]शेषे यजुःशब्दः ॥

(१) अनियताक्षरावसानो मन्त्रः (पुरस्कृतगानः ?) यजुः । इदं तु नान्तरीयकतया कटाक्षयन्नेव यजुर्लक्षणमाह — 'शेषे यजुःशब्दः' इति । ऋक्सामभ्यां यदन्यत् प्रश्लिष्टपठितं तद्यजुः । वीमि. ११३

(२) शेष इति स्पष्टोऽर्थः । सुबोधिनी.

(१) जैसू. २।१।३५ ; वीमि. ११३.

(२) जैसू. २।१।३६ ; उ. ११।१०।२० ; वीमि. ११३.

(३) जैसू. २।१।३७ ; वीमि. ११३.

निगदा यजूंषि एव

'निगदो वा चतुर्थं स्याद् धर्मविशेषात् ॥

( १ ) निगदास्तु 'प्रोक्षणीरासादय( ति ? )' इत्येवमादयः परसंबोधनरूपा मन्त्राः निगदाधिकरणे 'निगदो वा चतुर्थं स्याद्धर्मविशेषात्' इत्याक्षिप्य यजुर्विशेषा एवेत्यसिद्धान्तयत् । अत एव 'अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रयीविदो विदुः । ऋचः सामानि यजूंषि' इति श्रुतौ त्रिधैव मन्त्रः कथितो यद्यपि, तथापि 'उपांशु यजुषा, उच्चैर्निगदेन' इत्यादौ विशेषसंज्ञापुरस्काराद्यजुर्विशेषप्रदर्शनाय निगदाः कात्यायनेन पृथगुपात्ता इति मन्तव्यम् । वीमि. १।३

( २ ) निगदानां यजुष्यन्तर्भावो न वेति विचारे पूर्वपक्षमाह– निगद इति । निगदः चतुर्थः ऋग्यजुःसामभ्योऽतिरिक्तः, 'उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेन' इति यजुषः उपांशुत्वात् अतिरिक्तधर्मत्वात् । सुबोधिनी.

'व्यपदेशाच्च ॥

साधकान्तरमाह– व्यपेति । व्यपदेशात् 'यजूंषि, निगदाः' इति भिन्ननाम्ना व्यवहाराच्च यजुर्भ्यो भिन्नः । सुबोधिनी.

यजूंषि वा तद्रूपत्वात् ॥

सिद्धान्तमाह– यजूंषि वेति । निगदा यजूंषि तद्रूपत्वात् यजुर्लक्षणसत्त्वात् । सुबोधिनी.

वचनाद्धर्मविशेषः ॥

यश्चोच्चैस्त्वरूपो धर्मविशेषः स पूर्वोक्तवचनात् । सुबोधिनी.

अर्थाच्च ॥

उच्चैस्त्वधर्मस्य अर्थात् परप्रत्यायनरूपफलवत्त्वाच्च । न हि 'अग्नीदग्नीन्विहर' इत्युपांशु निगदोच्चारे परो शास्यतीत्युच्चैस्त्वमिति भावः । सुबोधिनी.

गुणार्थो व्यपदेशः ॥

(१) जैसू. २।१।३८; वीमि. १।३.

(२) जैसू. २।१।३९–४९.

पूर्वोक्तसंज्ञाभेदस्य का गतिः ? तत्राऽऽह– गुणेति । गुणार्थः गुणनिमित्तः व्यपदेशः भेदेन व्यवहारः ब्राह्मणपरिव्राजकवत् । सुबोधिनी.

सर्वेषामिति चेत् ॥

उच्चैस्त्वगुणेन साम्यादृगादीनामपि निगद इति व्यवहारापत्तिरिति शङ्कते– सर्वेषामिति । सुबोधिनी.

न ऋग्, व्यपदेशात् ॥

समाधत्ते– नेति । न ऋक् निगदः, 'अयाज्या वै निगदाः, तस्माद्दचैव यजन्ति' इति ऋग्भ्योऽन्यत्वेन व्यवहारात् । सुबोधिनी.

एकवाक्यतालक्षणम्

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात् ॥

अथैकवाक्यतालक्षणमाह– अर्थेति । विभागे वाक्यघटकपदानां विभागे साकाङ्क्षम् एकपदरहितस्यापरपदस्य शाब्दबोधाजनकत्वं तयोरेवार्थैकत्वम् एकफलप्रतिपादकत्वम् । विभागे साकाङ्क्षत्वे सत्येकफलप्रतिपादकं यत्तदेकं वाक्यमित्यर्थः । यथा 'अग्नये जुष्टं निर्वपामि' इत्यत्र विभागे परस्परसाकाङ्क्षं निर्वापरूपैकार्थप्रतिपादकम् । सुबोधिनी.

समेषु वाक्यभेदः स्यात् ॥

तथा समेषु परस्परनिरपेक्षेषु पदेषु तु वाक्यभेदः स्यात् । यथा 'इषे त्वा, ऊर्जे त्वा' इति । सुबोधिनी.

अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥

ज्योतिष्टोमे 'या ते अग्नेऽयाशया या ते अग्ने रजाशया या ते अग्ने हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा' इत्याम्नातम् । अत्र 'तनूर्वर्षिष्ठा' इत्यनुषङ्गेण त्रिषु योज्यम्, उत चरममन्त्र एवेति संशये संनिहितत्वाच्चरममन्त्र एवेति पूर्वपक्षे सिद्धान्तमाह– अन्विति । वाक्यस्य असंनिहितवाक्यस्य परिसमाप्तिः आकाङ्क्षाशान्तिः यस्मात्तादृशोऽनुषङ्गः कार्यः, सर्वेषु वाक्येषु तुल्ययोगित्वात् आकाङ्क्षापरिपूरकत्वस्य तुल्यत्वात् । सुबोधिनी.

**व्यवायान्नानुषज्जते ॥**

'सं ते प्राणो वायुना गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा' इत्यत्र प्रथममन्त्रस्थं गच्छतामिति पदं चरममन्त्रे नानुषज्यते । मध्यममन्त्रेऽङ्गानीतिकर्तृवाचकपदसमानवचनकत्वोपपत्तये गच्छन्तामित्यस्य बहुवचनान्तस्याध्याहारे अनुषङ्गविभेदात्तृतीयेऽपि नानुषङ्गः, किं त्वध्याहार इत्याह– व्यवायादिति । सुबोधिनी.

## ब्रह्मसूत्राणि

ईश्वरकर्तृकत्वं वेदानां वेदप्रमाणकत्वं च ब्रह्मणः

[1]**शास्त्रयोनित्वात् ॥**

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, तदेव द्रढयन्नाह– शास्त्रयोनित्वादिति । महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति । यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृउ. ४।५।११) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ।

अथवा– यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे– 'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रम्, यावता पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते– तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत, तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते शास्त्रयोनित्वादिति । शंकर.

अक्रियार्थत्वेऽपि ब्रह्मतात्पर्यकत्वेन वेदान्तानां प्रामाण्यम्

**तत्तु समन्वयात् ॥**

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' (जैसू. १।२।१) इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात् । कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम्, उपासनादिक्रियान्तरविधानार्थत्वं वा । न हि परिनिष्ठितवस्तुप्रतिपादनं संभवति, प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः, तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' (जैसू. १।२।७) इति स्तावकत्वेनार्थवत्त्वमुक्तम्, मन्त्राणां च 'इषे त्वा' इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् । न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते– तत्तु समन्वयादिति ।

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तत् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम्? समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छाउ. ६।२।१) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐउ. १।१।१) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म सर्वानुभूः' (बृउ. २।५।१९) 'ब्रह्मैवेदममृतं पुरस्तात्' (मुउ. २।२।१२) इत्यादीनि । न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पना-

(१) ब्रसू. १।१।३, ४.

प्रसङ्गात् । न च तेषां कर्तृस्वरूपप्रतिपादनपरताऽवसीयते, 'तत्केन कं पश्येत्' (बृउ. २।४।१४) इत्यादिक्रियाकारकफलनिराकरणश्रुतेः । न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' (छाउ. ६।८।७) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैष दोषः, हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः । न तु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति, एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपद्येत । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टम्, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् । न चानुमानगम्यं शास्त्रप्रामाण्यम्, येनान्यत्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ।

अत्रापरे प्रत्यवतिष्ठन्ते— यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते । यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत् । कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य । तथाहि शास्त्रतात्पर्यविद आहुः— 'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति, 'चोदनेति क्रियायाः प्रवर्तकं वचनम्', 'तस्य ज्ञानमुपदेशः' (जैसू. १।१।५), 'तद्भूतानां क्रियार्थेन समाम्नायः' (जैसू. १।१।२५), 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' (जैसू. १।२।१) इति च । अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्, तच्छेषतया चान्यदुपयुक्तम् । तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात् । सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम् । नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्— कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति । तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति । नार्हत्येवं भवितुम्, कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात् । 'आत्मा वा अरे द्रष्टव्यः' (बृउ. २।४।५) इति, 'य आत्माऽपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छाउ. ८।७।१), 'आत्मेत्येवोपासीत' (बृउ. १।४।७), 'आत्मानमेव लोकमुपासीत' (बृउ. १।४।१५), 'ब्रह्म वेद ब्रह्मैव भवति' (मुउ. ३।२।९) इत्यादिविधानेषु सत्सु 'कोऽसावात्मा, किं तद्ब्रह्म?' इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः 'नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म' इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति । कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासंभवात् 'सप्तद्वीपा वसुमती', 'राजाऽसौ गच्छति' इत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात् । ननु वस्तुमात्रकथनेऽपि 'रज्जुरियम्, नायं सर्पः' इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात् । स्यादेतदेवम्, यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः, संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत । न तु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृउ. २।४।५) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात् । तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति ।

अत्राभिधीयते— न, कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात् । शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यम्, यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा' (जैसू. १।१।१) इति सूत्रिता । अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय । तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले

प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे। मनुष्यत्वादा( ? ध्यादा )रभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते। ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते। धर्मतारतम्यादधिकारितारतम्यम्। प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम्। तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम्, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम्। तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' (छाउ. ५।१०।५) इत्यस्माद्गम्यते। तथा मनुष्यादिषु नारकस्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः। तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते। एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथा च श्रुतिः— 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छाउ. ८।१२।१) इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते। अशरीरत्वमेव धर्मकार्यमिति चेन्न, तस्य स्वाभाविकत्वात् 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥' (काउ. २।२१), 'अप्राणो ह्यमनाः शुभ्रः' (मुउ. २।१।२), 'असङ्गो ह्ययं पुरुषः' (बृउ. ४।३।१५) इत्यादिश्रुतिभ्यः। अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्। तत्र किंचित्परिणामि नित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते। यथा पृथिव्यादि जगन्नित्यत्ववादिनाम्, यथा च सांख्यानां गुणाः। इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावम्, यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते। तदेतदशरीरत्वं मोक्षाख्यम्, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च' (काउ. २।१४) इत्यादिश्रुतिभ्यः। अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता, तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्। तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत। नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते। अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः।

अपि च 'ब्रह्म वेद ब्रह्मैव भवति' (मुउ. ३।२।९), 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मुउ. २।२।९), 'आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चन' (तैउ. २।९), 'अभयं वै जनक प्राप्तोऽसि' (बृउ. ४।२।४), 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' (बृउ. १।४।१०), 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ईउ. ७) इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति। तथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' (बृउ. १।४।१०) इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम्। यथा 'तिष्ठन्गायति' इति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते। 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्रउ. ६।८), 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' (छाउ. ७।१।३), 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' (छाउ. ७।२६।२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवाऽऽत्मज्ञानस्य फलं दर्शयन्ति। तथा चाऽऽचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्— 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (न्यासू. १।१।२) इति।

मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति। न

चेदं ब्रह्मात्मैकत्वविज्ञानं $ संपद्रूपम्, यथा 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति' (बृउ. ३।१।९) इति। न चाध्यासरूपम्। यथा 'मनो ब्रह्मेत्युपासीत' (छाउ. ३।१८।१), 'आदित्यो ब्रह्मेत्यादेशः' (छाउ. ३।१९।१) इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः। नापि विशिष्टक्रियायोगनिमित्तं 'वायुर्वाव संवर्गः', 'प्राणो वाव संवर्गः' (छाउ. ४।३।१,३) इतिवत्। नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम्। संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' (छाउ. ६।८।७), 'अहं ब्रह्मास्मि' (बृउ. १।४।१०), 'अयमात्मा ब्रह्म' (बृउ. २।५।१९) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत, 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' (मुउ. २।२।९) इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन्, 'ब्रह्म वेद ब्रह्मैव भवति' (मुउ. ३।२।९) इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिपक्षे न सामञ्जस्येनोपपद्येरन्। तस्मान्न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम्। अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या। किं तर्हि? प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रा। एवंभूतस्य ब्रह्मणस्तज्ज्ञानस्य च न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम्।

न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः, 'अन्यदेव तद्विदितादथो अविदितादधि' (केउ. १।४) इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृउ. २।४।१४) इति च। तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति— 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केउ. १।५) इति। अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत् न, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति। किं तर्हि? प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्य–वेदितृ–वेदनादिभेदमपनयति। तथा च शास्त्रम्— 'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्' (केउ. २।३), 'न दृष्टेर्द्रष्टारं पश्येः', 'न विज्ञातेर्विज्ञातारं विजानीयाः' (बृउ. ३।४।२) इति चैवमादि। अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः। यस्य तूत्पाद्यो मोक्षस्तस्य मानसं वाचिकं कायिकं वा कार्यमपेक्षत इति युक्तम्। तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम्। न हि दध्यादि विकार्यम् उत्पाद्यं वा घटादि नित्यं दृष्टं लोके। न चाऽऽप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात्। स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाऽऽप्यत्वम्, सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मणः आकाशस्येव।

नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत। संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा। न तावद्गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य। नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य। स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययाऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते, यथाऽऽदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेत्, न, क्रियाश्रयत्वानुपपत्तेरात्मनः। यदाश्रया क्रिया तमविकुर्वती नैवाऽऽत्मानं लभते। यद्यात्मा क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत, 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन्। तच्चानिष्टम्। तस्मान्न स्वाश्रया क्रियाऽऽत्मनः संभवति। अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयाऽऽत्मा संस्क्रियते। ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः। न, देहादिसंहतस्यैवाविद्यागृहीतस्याऽऽत्मनः संस्क्रियमाणत्वात्। प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम्। तया देहाश्रयया तत्संहत एव कश्चिदविद्ययाऽऽत्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम्। यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभि-

$ 'आरोप्यप्रधाना संपत्, अधिष्ठानप्रधानोऽध्यासः' इति कल्पतरुः। तथा च काव्यालंकारशास्त्रोक्तोऽतिशयोक्तिविषयोऽध्यवसायः संपत्, रूपकविषय आरोपोऽत्राध्यास इत्यर्थः।

मानिन आरोग्यफलम्, 'अहमरोगः' इति यत्र बुद्धिरुत्पद्यते। एवं स्नानाचमनयज्ञोपवीतादिना 'अहं शुद्धः संस्कृतः' इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते। स च देहेन संहत एव। तेनैव ह्यहंकर्त्राऽहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते, तत्फलं च स एवाश्नाति, 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुउ. ३।१।१) इति मन्त्रवर्णात्, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (काउ. ३।४) इति च। तथा च 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥' (श्वेउ. ६।११) इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' (ईउ. ८) इति च। एतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः। ब्रह्मभावश्च मोक्षः। तस्मान्न संस्कार्योऽपि मोक्षः। अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम्। तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते।

ननु ज्ञानं नाम मानसी क्रिया। न, वैलक्षण्यात्। क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च। यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'संध्यां मनसा ध्यायेत्' (ऐब्रा. ३।८।१) इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम्, पुरुषतन्त्रत्वात्। ज्ञानं तु प्रमाणजन्यम्। प्रमाणं च यथाभूतवस्तुविषयम्। अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम्। केवलं वस्तुतन्त्रमेव तत्, न चोदनातन्त्रम्, नापि पुरुषतन्त्रम्। तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथा च 'पुरुषो वाव गौतमाग्निः', 'योषा वाव गौतमाग्निः' (छाउ. ५।७।१, ८।१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति। केवलचोदनाजन्यत्वात्क्रियैव सा पुरुषतन्त्रा च। या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा। किं तर्हि? प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतत्, न क्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात्। किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः 'इष्टं मे भूयात्, अनिष्टं मा भूत्' इति, न च तत्राऽऽत्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि। तस्याऽऽत्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चाऽऽत्मतत्त्वमुपदिश्यते 'इदं सर्वं यदयमात्मा' (बृउ. २।४।६), 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयाद्विज्ञातारमरे केन विजानीयात्' (बृउ. ४।५।१५), 'अयमात्मा ब्रह्म' (बृउ. २।५।१९) इत्यादिभिः।

यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलंकारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। तथा च श्रुतिः— 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥' (बृउ. ४।४।१२) इति, 'एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' (भगी. १५।२०) इति स्मृतिः। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम्।

यदपि केचिदाहुः— 'प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति' इति, तन्न, औपनिषदस्य पुरुषस्यानन्यशेषत्वात्। योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ 'नास्ति', 'नाधिगम्यते' इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' (बृउ. ३।९।२६) इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यै-

वाऽऽत्मत्वात् । नन्वात्माऽहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् । न, तत्साक्षित्वेन प्रत्युक्तत्वात् । न ह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्याऽऽत्मा । अतः स न केनचित्प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अत एव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' (काउ. ३।११), 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृउ. ३।९।२६) इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्व उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् । यदपि शास्त्रतात्पर्यविदामनुक्रमणम्— 'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् ।

अपि च 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः । प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः ? न हि भूतमुपदिश्यमानं क्रिया भवति । अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः । क्रियार्थत्वेऽपि क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टम्, किं तव तेन स्यादिति ? उच्यते— अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति । तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियते इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन । अपि च 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिरुपदिश्यते । न च सा क्रिया, नापि क्रियासाधनम् । अक्रियार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम् । तच्चानिष्टम् । न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण । नञश्चैष स्वभावो यत्स्वसंबन्धिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्यकारणम् । सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात्पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् ।

यदप्युक्तम्— कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् 'सप्तद्वीपा वसुमती' इत्यादिवदिति, तत्परिहृतम्, 'रज्जुरियम्, नायं सर्पः' इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् । ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम् । अत्रोच्यते— नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुम्, वेदप्रमाणजनितब्रह्मात्मभावविरोधात् । न हि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् । न हि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । न च कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति । तदुक्तं श्रुत्या— 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छाउ. ८।१२।१) इति । शरीरे पतितेऽशरीरत्वं स्यात्, न जीवत इति चेन्न, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वाऽन्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेन्न, शरीरसंबन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः । शरीरसंबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेत-

रेतराश्रयत्वप्रसङ्गादन्धपरम्परैषाऽनादित्वकल्पना । क्रियासमवायाभावाच्चाऽऽत्मनः कर्तृत्वानुपपत्तेः । संनिधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न, धनदानाद्युपार्जितभृत्यसंबन्धित्वात्तेषां कर्तृत्वोपपत्तेः । न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिसंबन्धनिमित्तं किंचिच्छक्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षः संबन्धहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् ।

अत्राऽऽहुः— देहादिव्यतिरिक्तस्याऽऽत्मनः आत्मीये देहादावभिमानो गौणः, न मिथ्येति चेन्न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः, नाप्रसिद्धवस्तुभेदस्य । तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतः, न गौणौ । यथा मन्दान्धकारे 'स्थाणुरयम्' इत्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्मात् 'रजतम्' इति निश्चितौ शब्दप्रत्ययौ, तद्वद्देहादिसंघाते 'अहम्' इति निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्? आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः । तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव, न गौणः । तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथा च ब्रह्मविद्विषया श्रुतिः— 'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' (बृउ. ४।४।७) इति, 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च— 'स्थितप्रज्ञस्य का भाषा' (भगी. २।५४) इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्, यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् ।

यत्पुनरुक्तं श्रवणात्पराचीनयोर्मननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणः, न स्वरूपपर्यवसायित्वमिति । न, अवगत्यर्थत्वान्मनननिदिध्यासनयोः । यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम् । न तु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवं च सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवाऽऽरब्धत्वान्न पृथक्शास्त्रमारभ्येत, आरभ्यमाणं चैवमारभ्येत— 'अथातः परिशिष्टधर्मजिज्ञासा' इति, 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' (जैसू. ४।१।१) इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः— 'अथातो ब्रह्मजिज्ञासा' इति । तस्मात् 'अहं ब्रह्मास्मि' इत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि, न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाऽऽहुः— 'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् । सद्ब्रह्माऽऽत्माऽहमित्येवं बोधे कार्यं कथं भवेत् ॥ अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः । अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥ देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥' इति । शंकर.

देवतानां विग्रहवत्त्वेऽपि वेदानां नित्यत्वं प्रामाण्यं च

'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः प्रसञ्जि । शब्दे तु विरोधः प्रसज्येत । कथम्? औत्पत्तिकं हि शब्दस्यार्थेन संबन्धमाश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्यं स्थापितम् । इदानीं

(१) ब्रसू. १।३।२८–३०.

तु विग्रहवती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसंबन्धीनि हवींषि भुञ्जीत, तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्ये संबन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेत्, नायमप्यस्ति विरोधः। कस्मात्? अतः प्रभवात्। अत एव हि वैदिकाच्छब्दाद्देवादिकं जगत्प्रभवति।

ननु 'जन्माद्यस्य यतः' (ब्रसू. १।१।२) इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवधारितम्। कथमिह शब्दप्रभवत्वमुच्यते? अपि च यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथमेतावता विरोधः शब्दे परिहृतः? यावता वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्येतेऽर्था अनित्या एव, उत्पत्तिमत्त्वात्। तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते? प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति। तस्माद्विरोध एव शब्द इति चेत्। न, गवादिशब्दार्थसंबन्धनित्यत्वदर्शनात्। न हि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्, द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते, नाऽऽकृतयः। आकृतिभिश्च शब्दानां संबन्धो न व्यक्तिभिः। व्यक्तीनामानन्त्यात्संबन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते। तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽप्याकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम्। आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः। स्थानविशेषसंबन्धनिमित्ताश्चेन्द्रादिशब्दाः, सेनापत्यादिशब्दवत्। ततश्च यो यस्तत्तत्स्थानमधिरोहति स स इन्द्रादिशब्दैरभिधीयत इति न दोषो भवति। न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणाभिप्रायेणोच्यते। कथं तर्हि? स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसंबन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः अतः प्रभवः इत्युच्यते।

कथं पुनरवगम्यते शब्दात्प्रभवति जगदिति? प्रत्यक्षानुमानाभ्याम्। प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्। अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात्। ते हि शब्दपूर्वां सृष्टिं दर्शयतः। 'एते इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः' (ताब्रा. ६।९।१५) इति श्रुतिः। तथाऽन्यत्रापि 'स मनसा वाचं मिथुनं समभवत्' (बृउ. १।२।४) इत्यादिना तत्र तत्र शब्दपूर्विका सृष्टिः श्राव्यते। स्मृतिरपि– 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥' इति। उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः, अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासंभवात्। तथा 'नाम रूपं च भूतानां कर्मणां च प्रवर्तनम्। वेदशब्देभ्य एवाऽऽदौ निर्ममे स महेश्वरः॥' इति, 'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवाऽऽदौ पृथक्संस्थाश्च निर्ममे॥' (मस्मृ. १।२१) इति च। अपिच चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत्। तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः, पश्चात्तदनुगतानर्थान्ससर्जेति गम्यते। तथा च श्रुतिः– 'स भूरिति व्याहरत्स भूमिमसृजत' (तैब्रा. २।२।४।२) इत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादिलोकान् सृष्टान् दर्शयति।

किमात्मकं पुनः शब्दमभिप्रेत्येदं शब्दप्रभवत्वमुच्यते? स्फोटमित्याह। वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वान्नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्यात्। उत्पन्नध्वंसिनश्च वर्णाः, प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमानत्वात्। तथाहि– अदृश्यमानोऽपि पुरुषविशेषोऽध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्यते– 'देवदत्तोऽयमधीते, यज्ञदत्तोऽयमधीते' इति। न चायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानम्, बाधकप्रत्ययाभावात्। न च वर्णेभ्योऽर्थावगतिर्युक्ता। न ह्येकैको वर्णोऽर्थं प्रत्याययेत्, व्यभिचारात्। न च वर्णसमुदायप्रत्ययोऽस्ति, क्रमवत्त्वाद्वर्णानाम्। पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितो-

ऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति यदुच्येत, तन्न। संबन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेद्धूमादिवत्। न च पूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति, अप्रत्यक्षत्वात्संस्काराणाम्। कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति चेत्। न, संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात्। तस्मात्स्फोट एव शब्दः। स चैकैकवर्णप्रत्ययाहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते। न चायमेकप्रत्ययो वर्णविषया स्मृतिः, वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः। तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वम्, भेदप्रत्ययस्य वर्णविषयत्वात्। तस्मान्नित्याच्छब्दात्स्फोटरूपादभिधायकात्क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति।

'वर्णा एव तु शब्दः' इति भगवानुपवर्षः। ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तम्। तन्न, 'त एव' इति प्रत्यभिज्ञानात्। सादृश्यात्प्रत्यभिज्ञानं केशादिष्विवेति चेत्, न, प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः। प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत्, न, व्यक्तिप्रत्यभिज्ञानात्। यदि हि प्रत्युच्चारणं गवादिव्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरंस्तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात्। न त्वेतदस्ति। वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते। 'द्विर्गोशब्द उच्चारितः' इति हि प्रतिपत्तिः, न तु 'द्वौ गोशब्दौ' इति। ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते, देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तम्। अत्राभिधीयते— सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यङ्ग्यत्वाद्वर्णानामभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्णविषयो विचित्रः प्रत्ययः, न स्वरूपनिमित्तः। अपि च वर्णव्यक्तिभेदवादिनाऽपि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः। तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यम्। तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः, स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम्। एष एव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत्प्रत्यभिज्ञानम्। कथं ह्येकस्मिन्काले बहूनामुच्चारयतामेक एव सन्गकारो युगपदनेकरूपः स्यात्— उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्चेति? अथवा ध्वनिकृतोऽयं प्रत्ययभेदो न वर्णकृत इत्यदोषः। कः पुनरयं ध्वनिर्नाम? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति, प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयति। तन्निबन्धनाश्चोदात्तादयो विशेषाः, न वर्णस्वरूपनिबन्धनाः, वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात्। एवं च सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति। इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात्संयोगविभागकृता उदात्तादिविशेषाः कल्प्येरन्। संयोगविभागानां चाप्रत्यक्षत्वान्न तदाश्रया विशेषा वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैत उदात्तादिप्रत्ययाः स्युः। अपि च नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति। न ह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति। न हि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते। वर्णेभ्यश्चार्थप्रतीतेः संभवात्स्फोटकल्पनाऽनर्थिका। न कल्पयाम्यहं स्फोटं प्रत्यक्षमेव त्वेनमवगच्छामि, एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासनादिति चेत्, न, अस्या अपि बुद्धेर्वर्णविषयत्वात्। एकैकवर्णग्रहणोत्तरकाला हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया, नार्थान्तरविषया। कथमेतदवगम्यते? यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्तन्ते, न तु दकारादयः। यदि ह्यस्या बुद्धेर्गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात्ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्तेरन्। न तु तथाऽस्ति। तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः। नन्वनेकत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तम्। तत्प्रतिब्रूमः— संभवत्यनेकस्याप्येकबुद्धिविषयत्वम्, पङ्क्तिर्वनं सेना दश शतं सहस्रमित्यादिदर्शनात्। या तु गौरित्येकोऽयं शब्द इति बुद्धिः, सा बहुष्वेव वर्णेष्वेकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव। अत्राऽऽह— यदि वर्णा एव साम-

स्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युस्ततो जारा राजा, कपिः पिकः इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात्। त एव हि वर्णा इतरत्र चेतरत्र च प्रत्यवभासन्त इति। अत्र वदामः— सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति। तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते। वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसंबन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना। स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्। अथापि नाम प्रत्युच्चारणमन्येऽन्ये वर्णाः स्युः, तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्यत्वाद्या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु संचारयितव्या। ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम्।

शंकर.

**अत एव च नित्यत्वम् ॥**

स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवात्' इति परिहृत्येदानीं तदेव वेदनित्यत्वं स्थितं द्रढयति— अत एव च नित्यत्वमिति। अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दे नित्यत्वमपि प्रत्येतव्यम्। तथा च मन्त्रवर्णः— 'यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्' (ऋसं. १०।७१।३) इति स्थितामेव वाचमनुविन्नां दर्शयति। वेदव्यासश्चैवमेव स्मरति— 'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥' इति।

शंकर.

**समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥**

अथापि स्यात्— यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि संतत्यैवोत्पद्येरन्निरुध्येरंश्च ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात्संबन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते, प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति तदा कथमविरोधः ? इति। तत्रेदमभिधीयते— समाननामरूपत्वादिति। तदाऽपि संसारस्यानादित्वं तावदभ्युपगन्तव्यम्। प्रतिपादयिष्यति चाऽऽचार्यः संसारस्यानादित्वम्— 'उपपद्यते चाप्युपलभ्यते च' (ब्रसू. २।१।३६) इति। अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम्। स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते— 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदेनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौउ. ३।३) इति। स्यादेतत्— स्वापे पुरुषान्तरव्यवहाराविच्छेदात्स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धम्। महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसंधातुमशक्यत्वाद्वैषम्यमिति। नैष दोषः, सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः। यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति, तथाऽपि न प्राकृतवदीश्वराणां भवितव्यम्। तथाहि— प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान्भवन्दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नास्तीति वदितुम्। ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादु-

भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत्कल्पान्तरव्यवहारानुसंधानोपपत्तिः । तथा च श्रुतिः— 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥' ( श्वेऊ. ६।१८ ) इति । स्मरन्ति च शौनकादयः— 'मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टाः' इति । प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते । श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति— 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते' इत्युपक्रम्य 'तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति । प्राणिनां च सुखप्राप्तये धर्मो विधीयते, दुःखपरिहाराय चाधर्मः प्रतिषिध्यते । दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतः, न विलक्षणविषयौ, इत्यतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते । स्मृतिश्च भवति— 'तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥' इति । प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते, शक्तिमूलमेव च प्रभवति, इतरथाऽऽकस्मिकत्वप्रसङ्गात् । न चानेकाकाराः शक्तयः शक्याः कल्पयितुम् । ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणां वर्णाश्रमधर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिन्द्रियविषयसंबन्धनियतत्ववत्प्रत्येतव्यम् । न हीन्द्रियविषयसंबन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुम् । अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात्कल्पान्तरव्यवहारानुसंधानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति । समाननामरूपत्वाच्चाऽऽवृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः । समाननामरूपतां च श्रुतिस्मृती दर्शयतः— 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥' ( ऋसं. १०।१९०।३ ) इति । यथा पूर्वस्मिन्कल्पे सूर्याचन्द्रमःप्रभृति जगत्क्लृप्तं तथाऽस्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः । तथा 'अग्निर्वा अकामयत । अन्नादो देवानां स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' (तैब्रा. ३।१।४।१) इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपद्यस्मै वाऽग्नये निरवपत्तयोः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या । स्मृतिरपि— 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ यथाऽभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥' इत्येवंजातीयका द्रष्टव्या । शंकर.

## न्यायसूत्राणि

वेदाप्रामाण्यहेतवः, तन्निराकरणम्, आप्तोक्तित्वात् वेदानां प्रामाण्यम्

† [1]तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥

पुत्रकामेष्टिहवनाभ्यासेषु तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः । तस्येति शब्दविशेषमेवाधिकुरुते भगवानृषिः । शब्दस्य प्रमाणत्वं न संभवति । कस्मात् ? अनृतदोषात्पुत्रकामेष्टौ 'पुत्रकामः पुत्रेष्ट्या यजेत' इति । नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यम् 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्याद्यनृतमिति ज्ञायते । विहितव्याघातदोषाच्च हवने । 'उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यम्' इति विधाय विहितं व्याहन्ति— 'श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते

† अत्र विश्वनाथवृत्तौ अवतरणम्— 'शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तं तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति— तदप्रामाण्येति ।' इति ।

(१) न्यासू. २।१।५७-६८.

जुहोति' । व्याघाताच्चान्यतरन्मिथ्येति । पुनरुक्तदोषाच्च । अभ्यासे दृश्यमाने 'त्रिःप्रथमामन्वाह त्रिरुत्तमाम्' इति पुनरुक्तदोषो भवति, पुनरुक्तं च प्रमत्तवाक्यमिति । तस्मादप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति । वाभा.

**न कर्मकर्तृसाधनवैगुण्यात् ॥**

नानृतदोषः पुत्रकामेष्टौ । कस्मात् ? कर्मकर्तृसाधनवैगुण्यात् । इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति इष्टेः करणं साधनम्, पितरौ कर्तारौ, संयोगः कर्म । त्रयाणां गुणयोगात्पुत्रजन्म, वैगुण्याद्विपर्ययः । इष्ट्याश्रयं तावत्कर्मवैगुण्यं समीहाभ्रेषः । कर्तृवैगुण्यम् अविद्वान् प्रयोक्ता कपूयाचरणश्च । साधनवैगुण्यं हविरसंस्कृतमुपहतमिति, मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति, दक्षिणा दुरागता हीना निन्दिता चेति । अथोपजनाश्रयं कर्मवैगुण्यं मिथ्यासंप्रयोगः । कर्तृवैगुण्यं योनिव्यापादो बीजोपघातश्चेति । साधनवैगुण्यम् इष्टावभिहितम् । लोके च 'अग्निकामो दारुणी मथ्नीयात्' इति विधिवाक्यम्, तत्र कर्मवैगुण्यं मिथ्याभिमन्थनम्, कर्तृवैगुण्यं प्रज्ञाप्रयत्नगतः प्रमादः, साधनवैगुण्यम् आर्द्रं सुषिरं दार्विति । तत्र फलं न निष्पद्यत इति नानृतदोषः, गुणयोगेन फलनिष्पत्तिदर्शनात् । न चेदं लौकिकाद्भिद्यते 'पुत्रकामः पुत्रेष्ट्या यजेत' इति । वाभा.

**अभ्युपेत्य कालभेदे दोषवचनात् ॥**

न व्याघातो हवने इत्यनुवर्तते । योऽभ्युपगतं हवनकालं भिनत्ति, ततोऽन्यत्र जुहोति, तत्रायमभ्युपगतकालभेदे दोष उच्यते— 'श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति' । तदिदं विधिभ्रेषे निन्दावचनमिति । वाभा.

**अनुवादोपपत्तेश्च ॥**

पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम् । अनर्थकोऽभ्यासः पुनरुक्तम्, अर्थवानभ्यासोऽनुवादः । योऽयमभ्यासः 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यनुवाद उपपद्यते, अर्थवत्त्वात् । त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति । तथा च मन्त्राभिवादः— 'इदमहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण बाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति । पञ्चदशसामिधेनीर्वज्रं मन्त्रोऽभिवदति तदभ्यासमन्तरेण न स्यादिति । वाभा.

**वाक्यविभागस्य चार्थग्रहणात् ॥**

प्रमाणं शब्दो यथा लोके । वाभा.

**विध्यर्थवादानुवादवचनविनियोगात् ॥**

विभागश्च ब्राह्मणवाक्यानां त्रिविधः— विध्यर्थेति । त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि— विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति । वाभा.

**विधिर्विधायकः ॥**

तत्र यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोऽनुज्ञा वा । यथा— 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादि । वाभा.

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥**

विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः संप्रत्ययार्था स्तूयमानं श्रद्दधीतेति, प्रवर्तिका च । फलश्रवणात्प्रवर्तते । 'सर्वजिता वै देवाः सर्वमजयन् सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति' इत्येवमादि । अनिष्टफलवादः निन्दा वर्जनार्था, निन्दितं न समाचरेदिति । 'स एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽन्येन यजते गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा' इत्येवमादि । अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः । 'हुत्वा वपामेवाग्रेऽभिघारयन्ति, अथ पृषदाज्यम् । तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमभिदधति' इत्येवमादि । ऐतिह्यसमाचरितो विधिः पुराकल्प इति । "तस्माद्वा एतेन (पुरा) ब्राह्मणा बहिष्पवमानम् ( सामस्तोमम् ? )अस्तौषन् ( ? अस्तोषत ) 'योनेर्यज्ञं प्रतनवामहे" ( ताब्रा. ८।६।४ ) इत्येवमादि । कथं परकृतिपुराकल्पावर्थवादाविति ? स्तुतिनिन्दावाक्येनाभिसंबन्धाद्विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति । वाभा.

**विधिविहितस्यानुवचनमनुवादः ॥**

विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादः, अपरोऽर्थानुवादः । यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि । किमर्थं पुनर्विहितमनूद्यते ? अधिकारार्थम् । विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा विधिशेषो वाऽभिधीयते । विहितानन्तरार्थोऽपि चानुवादो भवति । एवमन्यदप्युत्प्रेक्षणीयम् । लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम् । 'ओदनं पचेत्' इति विधिवाक्यम् । अर्थवादवाक्यम्— 'आयुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम्' । अनुवादः— 'पचतु पचतु भवान्' इत्यभ्यासः, 'क्षिप्रं पच्यताम्' इति वा, अङ्ग पच्यतामित्यध्येषणार्थम्, पच्यतामेवेति चावधारणार्थम् । यथा लौकिके वाक्ये विभागेनार्थग्रहणात्प्रमाणत्वमेवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हतीति । वाभा.

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥**

पुनरुक्तमसाधु, साधुरनुवाद इत्ययं विशेषो नोपपद्यते । कस्मात् ? उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते । चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति । वाभा.

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥**

नानुवादपुनरुक्तयोरविशेषः । कस्मात् ? अर्थवतोऽभ्यासस्यानुवादभावात् । अर्थवानभ्यासोऽनुवादः । शीघ्रतरगमनोपदेशवत् । 'शीघ्रं शीघ्रं गम्यताम्' इति क्रियातिशयोऽभ्यासेनैवोच्यते । उदाहरणार्थं चेदम् । एवमन्योऽप्यभ्यासः— 'पचति पचति' इति क्रियानुपरमः, 'ग्रामो ग्रामो रमणीयः' इति व्याप्तिः, 'परि परि त्रिगर्तेभ्यो वृष्टो देवः' इति परिवर्जनम्, 'अध्यधि कुड्यं निषण्णम्' इति सामीप्यम्, 'तिक्तं तिक्तम्' इति प्रकारः । एवमनुवादस्य स्तुतिनिन्दाशेषविधिष्वधिकारार्थता विहितानन्तरार्थता चेति । वाभा.

**मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥**

किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति ? अतश्च—मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् । किं पुनरायुर्वेदस्य प्रामाण्यम् ? यत्तदायुर्वेदेनोपदिश्यते— 'इदं कृत्वेष्टमधिगच्छति, इदं वर्जयित्वाऽनिष्टं जहाति' तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थता अविपर्ययः । मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभाव एतत्प्रामाण्यम् । किंकृतमेतत् ? आप्तप्रामाण्यकृतम् । किं पुनराप्तानां प्रामाण्यम् ? साक्षात्कृतधर्मता, भूतदया, यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माणः 'इदं हातव्यम्, इदमस्य हानिहेतुः, इदमस्याधिगन्तव्यम्, इदमस्याधिगमहेतुः' इति भूतान्यनुकम्पन्ते । तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति । न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति । 'हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः, त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्ति, अधिगन्तव्यमेवाधिगमिष्यन्ति' इत्येवमाप्तोपदेशः एतेन त्रिविधेनाऽऽप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति । एवमाप्तोपदेशः प्रमाणम्, एवमाप्ताः प्रमाणम् । दृष्टार्थेनाऽऽप्तोपदेशेनाऽऽयुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति, आप्तप्रामाण्यस्य हेतोः समानत्वादिति । अस्यापि चैकदेशः 'ग्रामकामो यजेत' इत्येवमादिर्दृष्टार्थस्तेनानुमातव्यमिति । लोके च भूयानुपदेशाश्रयो व्यवहारः । लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम्, तत्परिग्रहादाप्तोपदेशः प्रमाणमिति ।

द्रष्टृप्रवक्तृसामान्याच्चानुमानम् । य एवाऽऽप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवाऽऽयुर्वेदप्रभृतीनामित्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति ।

नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम् । शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वम्, न नित्यत्वात् । नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः । नानित्यत्वे वाचकत्व-

मिति चेन्न, लौकिकेष्वदर्शनात् । तेऽपि नित्या इति चेन्न, अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः । नित्यत्वाद्धि शब्दः प्रमाणमिति, अनित्यः स इति चेत्, अविशेषवचनम् । अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति । यथानियोगं चार्थस्य प्रत्यायनान्नामधेयशब्दानां लोके प्रामाण्यम्, नित्यत्वात्प्रामाण्यानुपपत्तिः । यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात्प्रत्यायको भवति, न नित्यत्वात् । मन्वन्तरयुगान्तरेषु चातीतानागतेषु संप्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्, आप्तप्रामाण्याच्च प्रामाण्यम् । लौकिकेषु शब्देषु चैतत्समानमिति । वाभा.

## § सांख्यसूत्राणि

अदृष्टरूपधर्माधर्मसाधकानि प्रमाणानि

**[1]न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥**

अत्रैवाध्याये कर्मनिमित्ता प्रधानप्रवृत्तिरिति यदुक्तं तत्र परपूर्वपक्षं समाधत्ते प्रघट्टकेन— नेति । अप्रत्यक्षतया धर्मापलापो न संभवति, प्रकृतिकार्येषु वैचित्र्यान्यथानुपपत्त्या तदनुमानादित्यर्थः । भिक्षुभा.

**श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥**

प्रमाणान्तरमप्याह— श्रुतिलिङ्गादिभिरिति । 'पुण्यो वै पुण्येन भवति पापः पापेन' इत्यादिश्रुतेः, 'स्वर्गकामोऽश्वमेधेन यजेत' इति विध्यादिरूपाल्लिङ्गात् योगिप्रत्यक्षादिभिश्च तत्सिद्धिरित्यर्थः । भिक्षुभा.

**न नियमः प्रमाणान्तरावकाशात् ॥**

प्रत्यक्षाभावाद्धर्मासिद्धिरिति परस्य हेतुमाभासीकरोति — नेति । प्रत्यक्षाभावाद्वस्त्वभाव इति नियमो नास्ति, प्रमाणान्तरेणापि वस्तूनां विषयीकरणादित्यर्थः । भिक्षुभा.

**उभयत्राप्येवम् ॥**

धर्मवदधर्ममपि साधयति— उभयत्रेति । धर्मवदधर्मेऽप्येवं प्रमाणानीत्यर्थः । भिक्षुभा.

**अर्थात् सिद्धिश्चेत् समानमुभयोः ॥**

ननु विध्यन्यथानुपपत्तिरूपयाऽर्थापत्त्या धर्मसिद्धिः, सा च नास्त्यधर्मे इति कथं भौतलिङ्गातिदेशोऽधर्मे इति इति चेन्न । यतः समानमुभयोर्धर्माधर्मयोर्लिङ्गमस्ति । 'परदारान्न गच्छेत्' इति निषेधविध्यादेरेवाधर्मलिङ्गत्वादित्यर्थः । भिक्षुभा.

वैदिकशब्दानां शक्तिग्रहसाधनं लोकव्यवहारः

**[1]लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ॥**

ननु भवतु लोके सिद्धे शक्तिग्रहोऽर्थप्रत्ययादिदर्शनात् । वेदे तु कथं भविष्यति ? अकार्यबोधनवैयर्थ्यादिति, तत्राऽऽह— लोक इति । लोके शब्दशक्तिव्युत्पन्नस्य पुरुषस्य तदनुसारेणैव वेदार्थप्रतीतिः । न हि लोके शक्तिर्भिन्ना वेदे च भिन्ना, 'य एव लौकिकास्त एव वैदिकाः' इति न्यायात् । अतो लोके सिद्धार्थपरत्वसिद्धौ वेदेऽपि तत् सिध्यतीत्यर्थः । भिक्षुभा.

**न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥**

अत्र शङ्कते— नेति । ननु त्रिभिराप्तोपदेशादिभिर्वेदशब्देन शक्तिग्रहः संभवति, वेदस्यापौरुषेयत्वेन तदर्थेष्वाप्तोपदेशासंभवात् । तथा वेदार्थस्यातीन्द्रियतया तत्र वृद्धव्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य च ग्रहीतुमशक्यत्वादित्यर्थः । भिक्षुभा.

**न, यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥**

तत्रातीन्द्रियार्थत्वमादौ निराकरोति— नेति । यदुक्तं तन्न । यतो देवतोद्देश्यकद्रव्यत्यागादिरूपस्य यज्ञदानादेः स्वरूपत एव धर्मत्वं वेदविहितत्वम्, वैशिष्ट्यात् प्रकृष्टफलकत्वात् । यज्ञादिकं चेच्छादिरूपत्वान्नातीन्द्रियम् । न तु यज्ञादिविषयकापूर्वस्य धर्मत्वम्, येन वेदविहितस्यातीन्द्रियता स्यादित्यर्थः । ननु तथापि देवताद्यतीन्द्रिया-

§ एतानि सांख्यसूत्राणि नोद्धृतानि कुमारिलशंकरभगवत्पादादिभिः । प्रत्युत तैरीश्वरकृष्णप्रणीताः सांख्यकारिका एवोद्धृताः । अत आधुनिकैरितिहासपद्धतिविद्भिः सांख्यकारिकोत्तरत्वेनैवानुमितानि सांख्यसूत्राणि, अतो मन्वते च ते यदिमानि सूत्राणि न कपिलमुनिप्रणीतानि । सूत्रोक्तदर्शनं तु कापिलसांख्यमेवेत्यत्र न संदेहः ।

(१) सांसू. ५।२०–२४.

(१) सांसू. ५।४०–५१.

र्थघटितत्वमस्तीति चेन्न, अतीन्द्रियेष्वपि पदार्थतावच्छेदकेन सामान्यरूपेण प्रतीतेर्वक्ष्यमाणत्वादिति । भिक्षुभा.

**निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥**

यच्चोक्तमपौरुषेयत्वेनाऽऽप्तोपदेशाभाव इति, तदपि निराकरोति– निजशक्तिरिति । अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी याऽर्थेषु शक्तिरस्ति सैवाऽऽप्तैर्वृद्धपरंपराभिर्व्युत्पत्त्या 'अस्य शब्दस्यायमर्थः' इत्येवंरूपया व्यवच्छिद्यते शिष्येभ्योऽर्थान्तराद्व्यावर्त्योपदिश्यते, न त्वाधुनिकशब्दवत् स्वयं संकेत्यते, येन पौरुषेयत्वापेक्षा स्यादित्यर्थः । भिक्षुभा.

**योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥**

ननु तथाप्यतीन्द्रियदेवताफलादिषु कथं शक्तिग्रहो वैदिकपदानां स्यात्? तत्राऽऽह– योग्यायोग्येष्विति । प्रत्यक्षाप्रत्यक्षेषु पदार्थेषु सामान्यधर्मपुरस्कारेण तत्सिद्धिः शक्तिग्रहो भवति, साधारण्येन पदानां प्रतीतिजनकत्वस्यानुभवसिद्धत्वात् । विशेषस्त्वतीन्द्रियोऽपूर्व एव वाक्यार्थः, न च तस्य ग्रहणं प्रागपेक्ष्यते इत्यर्थः । भिक्षुभा.

वेदानामपौरुषेयत्वेऽप्यनित्यत्वम्, अनित्यत्वेऽपि स्वतःप्रामाण्यम्

**न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥**

शब्दप्रामाण्यप्रसङ्गेनैव शब्दगतं विशेषमवधारयति– न नित्यत्वमिति । 'स तपोऽतप्यत । तस्मात् तपस्तेपानात्त्रयो वेदा अजायन्त' इत्यादिश्रुतेर्वेदानां न नित्यत्वमित्यर्थः । वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि । भिक्षुभा.

**न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥**

तर्हि किं पौरुषेया वेदाः? नेत्याह– न पौरुषेयत्वमिति । ईश्वरप्रतिषेधादिति शेषः । सुगमम् । भिक्षुभा.

**न मुक्तामुक्तयोरयोग्यत्वात् ॥**

अपरः कर्ता भवत्वित्याकाङ्क्षायामाह– नेति । जीवन्मुक्तधुरीणो विष्णुर्विशुद्धसत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात् सहस्रशाखवेदनिर्माणायोग्यः । अमुक्तस्त्वसर्वज्ञत्वादेवायोग्य इत्यर्थः । भिक्षुभा.

**नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥**

नन्वेवमपौरुषेयत्वान्नित्यत्वमेवाऽऽगतम्, तत्राऽऽह– नेति । स्पष्टम् । भिक्षुभा.

**तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥**

नन्वङ्कुरादिष्वपि कार्यत्वेन घटादिवत्पौरुषेयत्वमनुमेयम्, तत्राऽऽह– तेषामिति । 'यत्पौरुषेयं तच्छरीरजन्यम्' इति व्याप्तिर्लोके दृष्टा, तस्या बाधादिरेवं सति स्यादित्यर्थः । भिक्षुभा.

**यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥**

नन्वादिपुरुषोच्चरितत्वाद्वेदा अपि पौरुषेया एवेत्या- (? वेत्यत आ)ह–यस्मिन्निति । दृष्ट इवादृष्टेऽपि यस्मिन् वस्तुनि कृतबुद्धिः बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियत इत्यर्थः । एतदुक्तं भवति– न पुरुषोच्चरिततामात्रेण पौरुषेयत्वम्, श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयत्वव्यवहाराभावात्, किंतु बुद्धिपूर्वकत्वेन । वेदास्तु निःश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयंभुवः सकाशात्स्वयं भवन्ति । अतो न ते पौरुषेयाः । तथा च श्रुतिः– 'तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिरिति । भिक्षुभा.

**निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥**

नन्वेवं यथार्थवाक्यार्थज्ञान(? ना)पूर्वकत्वाच्छुकवाक्यस्येव वेदानामपि प्रामाण्यं न स्यात्, तत्राऽऽह– निजशक्त्यभिव्यक्तेरिति । वेदानां निजा स्वाभाविकी या यथार्थज्ञानजननशक्तिस्तस्या मन्त्रायुर्वेदादौ अभिव्यक्तेः उपलम्भात् अखिलवेदानामेव स्वत एव प्रामाण्यं सिध्यति, न वक्तृयथार्थज्ञानमूलकत्वादित्यर्थः । तथा च न्यायसूत्रम्– 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्' इति । भिक्षुभा.

## गौतमः

धर्मे श्रुतिस्मृतिशिष्टाचाराः प्रमाणानि

**(1)वेदो धर्ममूलम् ॥**

(१) गौध. १।१ ; उ. १।१।३ ; मुक्ता. २.

(१) सर्वकार्याणां कारणतः प्रवृत्तिदर्शनात् पूर्वं कारणविशेषप्रतिपादनार्थमाह— वेद इति। ननु विधिप्रतिषेधरूपत्वाच्छास्त्रस्य 'उपनयनं ब्राह्मणस्याष्टमे' (गौध. १।७) इत्याद्येव वक्तव्यम्, न त्वनुवादरूपत्वात् 'वेदो धर्ममूलम्' इत्यादि, निष्प्रयोजनत्वादनुवादस्येति। न चानेन वेदस्य प्रामाण्यं प्रतिपाद्यते, तस्य स्वत एव सिद्धेः। अन्यथा येन प्रामाण्यं प्रतिपाद्यते तस्याप्यन्येन प्रामाण्यं तस्याप्यन्येनेत्यनवस्था स्यादिति।

उच्यते— वेदस्य धर्ममूलत्वानुवादः तद्द्वारेण स्मृतिशीलयोरपि धर्ममूलत्वप्रतिपादनार्थः। कथम्? इति चेत्, उच्यते— वेदवचनादुच्चरितात्तत्पदार्थविदां विशिष्टेऽर्थे या प्रतिपत्तिर्निःसंदिग्धा जायते, न च कालान्तरे देशान्तरे पुरुषान्तरेऽवस्थान्तरे वा विपर्येति, सा धर्ममूलमिति। यच्च निःसंदिग्धमविपरीतं च ज्ञानमुत्पद्यते तस्य प्रामाण्यमध्यवसितुं शक्यते। न च वेदजनितप्रत्ययस्य कारणदोषकृतं मिथ्यात्वम्, कर्तुरनभ्युपगमात्। कर्तृगतो हि दोषः शब्दजनितस्य प्रत्ययस्य मिथ्यात्वमापादयति। एवमुत्तरार्थोऽनुवादः।

इदानीं सूत्रं विव्रियते— तत्र वेदः मन्त्रब्राह्मणाख्यो ग्रन्थराशिः। 'विद ज्ञाने'। ज्ञायते अनेन धर्मादिस्वरूपमिति वेदः। यद्यपि स्मृत्यादेरेतत्तुल्यत्वम्, तथापि परिव्राजकादिवत् रूढत्वाददोषः। तथा च स्मृत्यन्तरम्— 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः' (मस्मृ. २।१०) इति। स च ऋग्वेदादिभेदेन भिद्यते। जात्यपेक्षयैकवचनम्। धर्मः कर्म आचार इत्यर्थः, अपूर्वाख्यो वा। मूलं कारणं ज्ञापकम्, प्रमाणमित्यर्थः। तत्र विधिप्रतिषेधात्मको हि वेदो धर्माद्यवबोधकत्वं प्रतिपद्यते, न तु मन्त्रार्थवादरूप इति चेत्, उच्यते— अर्थवादादेरपि विध्येकवाक्यत्वेनोपकारकत्वात् पारम्पर्येण धर्ममूलत्वमविरुद्धम्। अर्थवादस्तावत् स्तुतिनिन्दाद्वारेण विधिप्रतिषेधरूपत्वं प्रतिपद्यते, मन्त्रस्तु अनुष्ठानकाले विहितार्थस्मारकत्वात्। ततः सर्वप्रकार एव वेदो धर्ममूलमिति। केचिन्मन्त्रार्थवादमूलमेव प्रतिजानते, यथा— 'धन्वन्निव प्रपा असि' इत्यत्र प्रपा कर्तव्येत्यादि। अन्ये त्वाहुः— अध्ययनमात्रादेव धर्मसिद्धिः। यथाऽऽह— 'आ हैव स नखाग्रेभ्यः परमं तप्यते तपः। यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्॥' इति। अतः पाठ एव धर्ममूलमिति। तदयुक्तम्, कर्मफलश्रुतेः आनर्थक्यप्रसङ्गात्, मीमांसकैरध्ययनफलस्य निरस्तत्वाच्च। †अथवा, वेदवाच्या क्रिया वेदशब्देनोच्यते, स धर्मस्य मूलमिति। श्येनादिषु न भवतीति चेत्, उच्यते— तत्रापि वैरिवधात् प्राणधनपुत्रदारादिरक्षणद्वारेण धर्मोऽस्त्येवेति। ततश्चावगम्यते— यदिदं पुत्रपशुग्रामादि दृष्टम्, यच्च स्वर्गादि अदृष्टम्, तत्सर्वं धर्महेतुकमिति।

धर्मः पञ्चप्रकारः— वर्णधर्मः, आश्रमधर्मः, गुणधर्मः, वर्णाश्रमधर्मः, निमित्तधर्म इति। वर्णधर्मः अध्ययनादिः। आश्रमधर्मः समिदाधानादिः। गुणधर्मः अभिषेकादिगुणयुक्तस्य रक्षणादिः। वर्णाश्रमधर्मः 'ब्राह्मणस्य पालाशो दण्डः' इत्यादिः। निमित्तधर्मः प्रायश्चित्तादिः। मूलं कारणम्। तथा चाऽऽह— 'वेदाद्धर्मो हि निर्बभौ' इति। सूत्रारम्भप्रयोजनं च यथैव वेदो धर्ममूलं तथा स्मृतिशीले अपीति। मभा.

(२) कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः, तस्य मूलं प्रमाणं वेदः मन्त्रब्राह्मणात्मकः। जातावेकवचनम्। चत्वारो वेदाः ऋग्यजुःसामा(थर्वणा)त्मकाः। त एव धर्मे प्रमाणम्, न योगिप्रत्यक्षम्, नानुमानम्, नार्थापत्तिः, न शाक्याद्यागमः। तेन तन्मूला एवोपनयनादयो धर्मा वक्ष्यन्ते, न चैत्यवन्दनकेशोल्लुञ्चनादय इति। धर्मग्रहणमुपलक्षणम्। अधर्मस्यापि प्रतिषेधात्मको वेद एव मूलम्। निषेधविधयो हि ब्रह्महत्यादौ विषये प्रवृत्तं निवर्तयन्ति। न च रागद्वेषादिना विषये प्रवृत्तस्ततो निवर्तयितुं शक्यः, यद्यसौ विषयोऽनुष्ठितः प्रत्यवायहेतुर्न स्यादिति निषेधविधिरेव प्रत्यवायहेतुतां गमयति। * गौमि.

† अस्मिन् पक्षे धर्मशब्दोऽपूर्वपरः, मूलशब्दश्चोत्पादकहेतुपरः, न प्रमाणपर इति प्रतीयते।

* मुक्ता. गौमिगतम्।

[1]**तद्विदां च स्मृतिशीले ॥**

(१) न तु केवलं वेद एव धर्ममूलम्, किं तर्हि? वेदविदां च ये स्मृतिशीले ते अपि धर्ममूले भवतः, ते अपि वेदाविरोधिनी, तद्विदामित्यारम्भात्। मूलशब्दश्चेह द्वाभ्याममिसंबध्यमानो द्विवचनान्तो द्रष्टव्यः। तच्छब्देन षडङ्गो वेदो लक्ष्यते। स्मृतिः उपनिबन्धनं मनुयमवसिष्ठभृग्वङ्गिरोबृहस्पत्युशनोभारद्वाजगौतमापस्तम्बसंवर्तव्यासशातातपशङ्खलिखितहारीतबोधायनयाज्ञवल्क्यप्रचेतआदिभिः कृतम्। शीलम् अनुपनिबद्धः समाचारः कौतुकमङ्गलादिः। बहुत्वात् प्रतिदेशं भिद्यमानत्वाच्चानुपनिबद्धः। चकारः अनुक्तसमुच्चयार्थः। यथाऽऽह मनुः— 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥' (मस्मृ. २।६) इति।§संध्योपरमणकाले त्रिः प्रदक्षिणादिः शिष्टाचारः। वेदविदां सकलानुष्ठानपराणां निर्दोषत्वेन यद्विज्ञानमुत्पद्यते, सा आत्मतुष्टिः। वक्ष्यति— 'यच्चाऽऽत्मवन्तो वृद्धाः' (गौध. ९।६२) इत्यादि। केचिद्वर्णयन्ति— अष्टकादिवद्येषां कौतुकमङ्गलादीनां अनुपनिबन्धः, अकरणे प्रत्यवायाभावात्। आचारात्मतुष्टी अपि शील एवान्तर्भूते इति न पृथगुपन्यस्ते। चकारोऽपि उक्तसमुच्चयार्थ एवेति। मभा.

(२) अथ यत्र प्रत्यक्षो वेदो मूलभूतो नोपपद्यते तत्र कथम्? — तद्विदां चेति। तद्विदां वेदविदां मन्वादीनां या स्मृतिस्तत्प्रणीतं धर्मशास्त्रम्, यच्च तेषां शीलम् अनुष्ठानम्, ते स्मृतिशीले अस्मदादीनां प्रमाणम्। न च तेषामनुष्ठानं निर्मूलं संभवति। संभवति च वैदिकानामुत्सन्नपाठवेदानुभव इति। तेषां तु तदानीं विद्यमानत्वेन संप्रदायाविच्छेदाच्च वैदिकानुष्ठानं वेदमूलमेव। यथाऽऽह आपस्तम्बः— 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' (आध. १।१२।१०) इति। गौमि.

§ अत्र विसंगतिरिव प्रतीयते। तथा हि— 'शीलम् अनुपनिबद्धः समाचारः' इति पूर्वं व्याख्यातं गौतमोक्तं शीलम्, अत्र शिष्टाचारशब्देन व्याख्यातो मनूक्तः साध्वाचारश्चेत्यनयोः परस्परभेदोऽस्ति वा, न वा? नाऽऽद्यः, कौतुकमङ्गलादिषु त्रिःप्रदक्षिणादिषु च समाचारेषु अनुपनिबद्धाचारत्वस्य साधारणत्वेन भेदाप्रतीतेः। न द्वितीयः, गौतमेन शीलशब्देनोक्तस्य साध्वाचारस्य चकारसमुच्चेयानुक्तत्वाभावेनाव्याख्येयत्वात्, गौतमोक्तशीलविलक्षणस्य मनूक्तशीलस्यानुक्तत्वेन व्याख्येयत्वेऽप्यव्याख्यानाच्च। सेयं प्रतीयमाना विसंगतिः सुधीभिः समाधेया।

(१) गौध. १।२; मभा. ६।२३; उ. १।१।३; मुक्ता. २.

शिष्टानां धर्मव्यतिक्रमे साहसे च विषये न शिष्टाचारः प्रमाणम्

[1]**दृष्टो धर्मव्यतिक्रमः ॥**

[2]**साहसं च महताम् ॥**

(१) इदानीं पूर्वपक्षीकरोति (शीलम्—) वेदविदां शीलं धर्ममूलं न भवति, यतः— दृष्टो धर्मव्यतिक्रमः। धर्ममूलत्वं न प्राप्नोतीति शेषः। यथा प्रजापतिः स्वां दुहितरमभ्यध्यायत्, यथा इन्द्रस्याहल्यागमनादि, यथा व्यासभीष्मादीनामनाश्रमावस्थानम्।

किंच, साहसं च महताम्। अत्रापि धर्ममूलत्वं न प्राप्नोतीति शेषः, चशब्दोपादानात्। सहःशब्देन बलमुच्यते। यथा च नारदः— 'सहो बलमिहोच्यते' इति। तेन शास्त्रं लोकसंव्यवहारं चानवेक्ष्य यत् क्रियते तत् साहसम्। महतां लोकविख्यातानामित्यर्थः। यथा रामस्य ताटकादिस्त्रीवधः, जामदग्न्यस्य मातुः शिरश्छेदः, वसिष्ठस्य जलप्रवेशः इत्यादि। तेन अयुक्तं शीलस्य धर्ममूलत्वमिति। कथं पुनर्धर्मव्यतिक्रमसाहसयोः भेदः? विषयाभिलाषेण यदयुक्तमाचर्यते स धर्मव्यतिक्रमः, क्रोधाद्यभिभवेन यत्क्रियते तत् साहसम्। मभा.

(२) यदि शीलं प्रमाणम्, अतिप्रसङ्गः स्यात्। कथम्? कतकभरद्वाजौ व्यत्यस्य भार्ये जग्मतुः, वसिष्ठः चण्डालीमक्षमालाम्, प्रजापतिः स्वां दुहितरम्,

(१) गौध. १।३; गौमि. १।३; स्मृच. १।६; मुक्ता. ५; संप्र. ७२४.

(२) गौध. १।४; गौमि. १।३; स्मृच. १।६ (साहसं च) एतावदेव; मुक्ता. ५; संप्र. ७२४.

रामेण पितृवचनादविचारेण मातुः शिरश्छिन्नमित्यादि साहसमपि प्रमाणं स्यात् । नेत्याह– दृष्टो धर्मव्यतिक्रम इति । महतामेतादृशं साहसमपि धर्मव्यतिक्रम एव दृष्टः, न तु धर्मः, रागद्वेषनिबन्धनत्वात् । ‡ गौमि.

[1]न तु दृष्टार्थेऽवरदौर्बल्यात् ॥

(१) अत्रोत्तरमाह– न त्विति । तुशब्दः पक्षनिवृत्त्यर्थः । दृष्टार्थः दृष्टप्रयोजनः, तस्मिन् दृष्टप्रयोजने शीलं धर्ममूलं न भवति । तथा च वसिष्ठः– 'अगृह्यमाणकारणो धर्मः' इति । नैतद्द्विवचनं दृष्टार्थे धर्मव्यतिक्रमसाहसे इति । तस्मिन् गृह्यमाणे 'ईदूदेत्' (पासू. १।१।११) इत्यादिना प्रगृह्यसंज्ञायां सत्यां 'दृष्टार्थे अवरदौर्बल्यात्' इति पाठः प्राप्नोति । अवरदौर्बल्यात्, न वरः अवरः निकृष्टः द्वेषाद्यभिभूतः अपरमार्थज्ञान इत्यर्थः, तस्य दौर्बल्यात् धर्माधर्मपरिज्ञानाशक्तेरित्यर्थः । एतच्चानेन ज्ञापितं भवति– महतामपि तद्विदां कदाचिदभिभवोऽस्तीति, शरीरवतः प्रियाप्रिययोरवश्यंभावित्वात् । तस्माद्यावदेतेषां रागादिदोषेणाभिभवः, तावत्तेषामाचारोऽपि न ग्राह्यः । तथा च वसिष्ठः– 'शिष्टः पुनरकामात्मा' (वाध. १।६) इति । अथवा, अवरशब्देन इदानींतनाः कलियुगपुरुषा उच्यन्ते, तेषां दौर्बल्यात् असामर्थ्यात् । $ मभा.

(२) न च तेषामेवंविधं दृष्टमित्येतावताऽस्मदादीनामपि प्रसङ्गः । कुतः ? – अवरदौर्बल्यादिति । अवरेषाम् अस्मदादीनां दुर्बलत्वात् । तथा च श्रूयते– 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः ॥' (आध. २।१३।८, ९ ?) इति । † गौमि.

....येषां मते साङ्गस्य वेदत्वं तेषां वेदाध्ययनविधिनैव तदध्ययनं सिध्यतीति न पृथक् तदध्ययनविध्यपेक्षा । येषां मन्त्रब्राह्मणयोरेव वेदत्वं तेषामङ्गाध्ययनविधिः पृथगपेक्षितः । संप्र. ५०७

वेदशब्दार्थः

[1]मन्त्रब्राह्मणयोर्वेदः षडङ्गमेके ॥

प्रमाणयोः विरुद्धयोस्तुल्यबलत्वे विकल्पः

[1]तुल्यबलविरोधे विकल्पः ॥

(१) एवं स्मृतिप्रमाणमुक्त्वा अधुना एकार्थोपनिपतितानां वाक्यानां परस्परविरोधे सति किं कर्तव्यमित्यत आह– तुल्यबलविरोध इति । तुल्यप्रमाणप्रापितः पदार्थः तुल्यबलः । तयोः परस्परविरोधे सति विकल्पो वेदितव्यः, अयं वा अयं वेति । नोभयपरित्यागः, उभयोः प्रमाणप्रापितत्वात् । नान्यतरपरिग्रहः, एकस्मिन् गृह्यमाणे द्वितीयस्य आनर्थक्यप्रसङ्गः स्यादिति । किमुदाहरणम् ? श्रुतौ तावत् 'उदिते होतव्यम्, अनुदिते होतव्यम्' इत्येवमादि । स्मृतावपि 'नित्यमभोज्यं केशकीटावपन्नम्' (गौध. १७।८,९) इति गौतमः । 'पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥' (मस्मृ. ५।१२५) इति मनुः ।

ननु चात्र सामर्थ्यादेव विकल्पप्रसिद्धेः अनर्थकमिदं सूत्रम्, समुच्चयस्तावदत्र न संभवतीति । न ह्यनुदिते हुत्वा पुनरुदिते होतुं शक्यते, गुणभूतकालवशेन प्रधानस्य होमस्य आवृत्तेरन्याय्यत्वात् । प्रधानवशवर्तिनो हि गुणाः, न गुणवशवर्ति प्रधानमिति । न चानावृत्तमुभयोः कालयोर्होतुं शक्यते । एवं स्मृतावपि शुद्धिपरित्यागयोर्नैव समुच्चयः संभवतीति, परस्परविरोधादिति । न चोभयपरित्यागो युक्त इत्युक्तम् । तेनात्र विकल्प एव प्राप्नोतीति नार्थोऽनेनेति ।

एवं तर्हि न्यायप्राप्तानुवादोऽयं विशेषार्थः । को विशेषः ? तुल्यबलयोरेव विरोधे विकल्पः, अतुल्यबलयोस्तु बाध एवेति । तेन श्रुतिस्मृत्योर्विरोधे स्मृतिरेव बाध्यते । श्रुतौ हि प्रत्यक्षः शब्दः, स्मृतौ आनु-

‡ स्मृच. गौमिगतम् ।
$ मुक्ता. मभागतम् ।
† संप्र. गौमिवत् ।

(१) गौध. १।५ ; गौमि. १।४ (न तु दृष्टार्थे०) ; मुक्ता. ५ ; संप्र. ७२४ गौमिवत्. (२) संप्र. ५०७.

(१) गौध. १।६ ; ब्रक. ४२ ; गौमि. १।५ ; स्मृच. १।१६ ; मभु. २।१४ ; कुर. ३७ ; गप. १३ ; मुक्ता. ७.

मानिकः । न चानुमानं प्रत्यक्षविरोधे प्रमाणीभवति । एवं स्मृत्याचारविरोधे च मातुलदुहितृपरिणयनाद्याचारो बाध्यत इति, तत्र ह्याचारात् स्मृत्यनुमानमिति । विरोधे विकल्पवचनात् अविरोधे तु तुल्यप्रमाणशिष्टानां समुच्चयः, यथा आचमनादीनां श्रौतेषु कर्मस्विति ।

ननु च यदि वेदलिङ्गप्रभवत्वाभ्युपगम एव स्मृतेः श्रुत्या सहातुल्यबलत्वमुपपाद्यते, तदा हि मन्त्रार्थवादवाक्येष्वन्यपरेष्वपि यानि स्मार्तधर्ममूलभूतानि लिङ्गानि 'कुमारा विशिखा इव' इत्येवमादीनि तेषां प्रत्यक्षवेदवाक्यविरोधे सति विरोधिवाक्यानुमानविरोधात् दुर्बलत्वं प्रसज्यते । यदा तूत्सन्नशाखापूर्विका स्मृतिरभ्युपगम्यते, यथाऽऽह आपस्तम्बः— 'ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' (आध. १।१२।१०) इति, तदोभयोश्च वैदिकत्वात् तुल्यबलतैव प्रसज्यते । न ह्यनुमितस्य वेदवाक्यस्य प्रत्यक्षस्य च बलाबलविशेषोऽस्ति प्रत्यक्षानुमानपरिच्छिन्नाग्निवदिति । स्यादेतत्— यत्र स्मृतिवचने वेदविरोधोऽस्ति तन्नैव वेदवाक्यानुमापकं भवति, किं तर्हि ? भ्रान्त्यादिप्रभवमेवैतदिति । तच्च न युक्तम्, धर्मशास्त्रप्रणेतुरनाप्तत्वाभ्युपगमे अविश्वासप्रसङ्गात् । यदाऽपि वेदवदविच्छिन्नपारंपर्येणाऽऽगता स्मृतिरभ्युपगम्यते तदाऽपि तुल्यबलत्वमुपपद्यते इति तत्रापि ¶ तन्नैवोपपद्यते । यस्तावन्मातुलदुहितृपरिणयनादिकः समाचार उपन्यस्तः स कामाद्यभिभवे सति दुष्टाचारत्वाच्छिष्टाचार एव नोपपद्यते । यस्त्वविगानेनोक्तलक्षणैः शिष्टैराचर्यते तस्य वेदमूलत्वाविशेषात् स्मृत्या सह तुल्यबलत्वमेव प्राप्नोति । निबन्धनानिबन्धनयोस्त्वन्यदेव प्रयोजनमुपदिष्टम् । न च समाचारस्य स्मृतिवाक्यान्तरितरूपस्य वेदवाक्यानुमानसंनिकर्षकृतं बलाबलत्वं सिध्यति ।

अत्रोच्यते— अतुल्यबलत्वं तावत् वेदादीनां सूत्रारम्भसामर्थ्यादेवावगम्यते । यदा हि तुल्यबलान्येतानि स्युः तदा विरोधे विकल्पः सामर्थ्यादेव सिद्धः, किमनेन सूत्रेणेति तुल्यबलग्रहणं चानर्थकं स्यादिति । अस्मिन्पक्षे वेदात् दुर्बलतरत्वं स्मृतेरुपपद्यते । तत्र लिङ्गप्रभवत्वमुपपद्यते इत्युक्तम् । तेनायमेव पक्षो युक्तः । यस्तु स्वतन्त्रपक्षोऽभिहितः, स पक्षः 'तद्विदां च स्मृतिशीले' (गौध. १।२) इत्येतस्मिन् सति दुरुपपाद एवेति । तस्माद्वेदलिङ्गप्रभवत्वमेव स्मृतीनां निर्दोषतरमिति ।

ननु चैवमपि नोपपद्यते, क्वचित् स्मृत्या श्रुतेर्बाधदर्शनात्, यथा सामान्येन प्रवृत्तो वैदिककर्माधिकारः, स्मृत्या उपनीतादिपुरुषविशेष एवाधिक्रियते; तथा संस्कारैकदेशेनाप्यात्मगुणयोगे सति विशिष्टफलाभिधानात्; 'गामालभेत' इति श्रुतिचोदितोऽपि गोवधः स्मार्तप्रतिषेधबलीयस्त्वान्न क्रियते; तथाऽग्निहोत्रादिकं चोदितजीवनोपाधिकं कर्म द्रव्यसाध्यमपि न स्मार्तचौर्यादिप्रतिषिद्धेनापि द्रव्यमार्जयित्वा तत्क्रियते । अतः श्रुत्या स्मृतिर्बाध्यत इत्ययुक्तमुक्तमिति ।

उच्यते— विरोधे सति प्रमाणानां बलाबलचिन्ता युज्यते । यत्र तु विरोधाभावः तत्र दुर्बलोऽपि नैव बाध्यत इति । यस्तावदुपनीतस्य कर्माधिकारः स श्रुत्या नैव विरुध्यते, उपनयनस्य वेदग्रहणार्थत्वात्, तस्य च कर्मार्थत्वात्, न चापूर्व(? च पूर्व)संयोगमन्तरेण प्रधानसिद्धिः । यच्चोक्तं गोवधस्तु श्रुतिचोदितोऽपि न क्रियत इति, तदपि न केवलं स्मृत्या, किंतु मन्त्रवर्णाच्च 'मा गाः प्रमापयाश्वान् प्रमापय' इत्यादि । अतः स्मृत्या श्रुतिर्नैव बाध्यते । केचिदुत्सन्नशाखापूर्विकां स्मृतिमाहुः । तदयुक्तम् । तत्र विचार्यते— किं स्मरणात्पूर्वमेव नष्टाः शाखाः उतोत्तरकालमिति । यदि पूर्वम्, तत्र स्मरणं नोपपद्यते, विनष्टत्वात्, पूर्वविज्ञानसदृशत्वात् स्मृतेः । यद्युत्तरकालम्, तदोत्सन्नशाखापूर्वकत्वं वक्तुं न युज्यते, तदानीमुपलभ्यमानत्वात् । आपस्तम्बोक्तस्याप्ययमभिप्रायः— उत्सन्नाः क्वचित्क्वचिद्देशे, न सर्वत्रेति । 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इत्यत्रापि (एवं) व्याख्या कर्तव्या । मभा.

(२) अथ यत्र द्वे विरुद्धे तुल्यबले प्रमाणे उपनिपततः, यथा— 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति', 'उदिते जुहोति'

¶ तत् दुर्बलत्वमित्यर्थः ।

'अनुदिते जुहोति' इति श्रुतिः । 'नित्यमभोज्यं केशकीटावपन्नम्' इति गौतमः (गौध. १७।८, ९), 'पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । केशकीटावपन्नं च मृत्प्रक्षेपेण शुध्यति ॥' (मस्मृ. ५।१२५) इति मनुः । तत्र किं कर्तव्यम्? तुल्यप्रमाणप्रापितयोरेवंजातीयकयोरर्थयोर्विकल्पः तद्वा इदं वा इत्यन्यतरस्वीकारः, न समुच्चयः, असंभवात् । प्रकर्षबोधने तु श्रुतिस्मृतिविरोधे स्मृत्यर्थो नाऽऽदरणीयः, अतुल्यबलत्वात् । अत एव जाबालिराह– 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा ॥' इति । ¶ गौमि.

आत्मतुष्टेर्वैकल्पिकविषये प्रामाण्यम्

'**वैकल्पिकेष्वात्मतुष्टिः ॥**

शिष्टाचारः शिष्टोक्तं च प्रमाणम्, शिष्टलक्षणानि

'**तन्मूलत्वाद्धर्मस्य ॥**

( १ ) यच्छ्रुतवानाचरति तदपि धर्मस्य मूलत्वेन पूर्वमेव प्रतिपादितम्– 'तद्विदां च स्मृतिशीले' इति । तथा च मनुः– 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥' ( मस्मृ. २।६ ) इति । अथवा वेदार्थपरिज्ञानपूर्वकत्वात् स्मृतेः । यथाऽऽह मनुः– 'श्रुतिं पश्यन्ति मुनयः स्मरन्ति तु तथा स्मृतिम् ॥' इति । मभा.

( २ ) कुतः पुनः श्रुतं सर्वेभ्यो गरीय इत्यत आह– तन्मूलत्वादिति । श्रुतमूलम् अनुष्ठानम्, अनुष्ठानमूलो धर्म इति । गौमि.

† '**यत्राऽऽत्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभमोहवियुक्ता वेदविद आचक्षते तत्समाचरेत् ॥**

¶ मुक्ता. गौमिवत् ।

† व्याख्यानसंग्रहः 'गृहस्थधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) कुम. ११७२.

(२) गौध. ६।२३ ; गौमि. ६।२०.

(३) गौध. ९।६२. शेषः स्थलादिनिर्देशः 'गृहस्थधर्माः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

राजव्यवहारे श्रुत्यादीनि प्रमाणानि

'**तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् ॥**

व्यवह्रियते अनेनेति व्यवहारः । तस्य प्रजापालनाधिकृतस्य राज्ञो व्यवस्थासाधनान्येतानि । वेदादीनि प्रसिद्धानि । वेदे 'गर्तां इगिव सनये धनानाम्' इत्यादिव्यवहारदर्शनात्, धर्मशास्त्रे वर्णाश्रमादिप्रतिपादनात्, अङ्गे शब्दादिव्यवस्थाप्रतिपादनात्, उपवेदे अस्त्रादिव्यवहारप्रतिपादनात्, पुराणे जगत्स्थितिविज्ञानात् । विसमासः पूर्वस्य पूर्वस्य बलीयस्त्वज्ञापनार्थः । ततश्च पूर्वोत्तरविरोधे पूर्वोक्तमेवाऽऽचरेत् । व्यवहारतत्त्वदर्शने वेदादीन्यङ्गानि भवन्ति इति व्यवहारशब्देनोच्यन्ते । एतान्यालोच्य व्यवहारान् स्थापयेदित्यर्थः । † मभा.

देशजातिकुलाचाराणां श्रुतिस्मृत्यविरोधे प्रामाण्यम्

'**देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणम् ॥**

(१) आम्नायैः वेदाद्यैः श्रुतिस्मृत्यादिभिः । § व्रक.

(२) देशधर्मः कौतुकमङ्गलादिः । जातिधर्मः आभीरादीनां दन्तरागाभावादिः । कुलधर्मः दक्षिणतश्चूडा वसिष्ठानामित्यादिः । आम्नायैः वेदधर्मशास्त्रादिभिः पूर्वोक्तैः, बहुवचनप्रयोगात् । अविरुद्धाः अबाधिताः प्रमाणम् । वक्ष्यमाणानां कर्षकादीनामप्याम्नायाविरुद्धत्वज्ञापनार्थश्चकारः । देशधर्मादीनपि सम्यक् ज्ञात्वा आम्नायाविरोधेन गृह्णीयात्, विरोधे त्यक्तव्या इत्येवमर्थमुपदेशः । $ मभा.

† गौमि. मभागतम् ।

§ कुर. व्रकवत् ।

$ बौवि. मभागतम् ।

(१) गौध. ११।२१ ; गौमि. ११।१९.

(२) गौध. ११।२२ ; व्रक. ४३ ; गौमि. ११।२० ; उ. २।१५।१ (जाति०) ; स्मृच. १।२६ धर्माश्चाऽऽ( धर्मा आ ) ; कुर. ३७ ; बौवि. १।२।७ ; मुक्ता. १२८ स्मृचवत् ; पप्र. २८ स्मृचवत् ; आन. ५०९.

(३) देशधर्मेषु जातिधर्मेषु च प्रतिनियतमनुष्ठीयमानेषु यद्यपि वेदादि मूलभूतं नोपलभ्यते तथापि यदि वेदादिभिर्विरोधो न भवति तथैव ते परिपालनीयाः, न तु मूलानियोगेन विहन्तव्या इति। तत्र देशधर्माः— मेषस्थे सवितरि चौलेषु कुमार्यो नानावर्णै रजोभिर्भूमावादित्यं सपरिवारमालिख्य सायं प्रातः पूजयन्ति, मार्गशीर्ष्यां चालंकृता ग्रामे पर्यट्य यल्लब्धं तद्देवाय निवेदयन्ते, कर्कटस्थे सवितरि पूर्वयोः फल्गुन्योर्भगवतीमुमामाराध्य यथाविभवं मरुभ्योऽङ्कुरितान् मुद्गान् लवणं च प्रयच्छन्ति, मीनस्थे सवितर्युत्तरयोः फल्गुन्योर्गृहमेधिनः श्रियं देवीं पूजयन्ति। जातिधर्माः— शूद्रा विवाहे मध्ये स्थूणां निखाय सहस्रवर्तीरेकस्यां स्थाल्यां निधाय प्रतिवर्ति दीपानारोप्य वधूं हस्ते गृहीत्वा प्रदक्षिणयन्ति। अन्यदप्येवंजातीयकं द्रष्टव्यम्। कुलधर्माः— केचिन्मध्यशिखाः, केचित्पृष्ठशिखाः, प्रवचनादयस्तु कालमेदेनोभयतःशिखाः। संकल्पश्चैतैस्तैः स्ववर्गैरिति। ये त्वाम्नायविरुद्धाः मातुलसुतापरिणयनम्, अनधीत्य वेदानन्यत्र श्रम इत्यादयो देशधर्मा नेह प्रमाणम्। गौमि.

(४) अथैतेषां विरोधे बलाबलम्। तत्र श्रुत्योर्विरोधेऽगृह्यमाणविशेषत्वात् द्वयोरपि तुल्यबलत्वम्, अनुष्ठाने परं विकल्पः। यथा षोडशिग्रहणाग्रहणादौ। एवं स्मृत्योराचारयोरपि विरोधे द्रष्टव्यम्, तुल्यन्यायत्वात्। श्रुतिस्मृत्योर्विरोधे तु श्रुतिर्बलीयसी, निरपेक्षत्वात्। स्मृतेस्तु मूलभूतवेदानुमानसापेक्षत्वेन विलम्बितत्वात् दुर्बलत्वम्। यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' 'औदुम्बरी सर्वा वेष्टयितव्या' इति। स्मृत्याचारयोर्विरोधे स्मृतिर्बलीयसी, स्मृतेः साक्षाच्छ्रुत्यनुमापकत्वात्। आचारस्तु स्मृतिद्वारा तदनुमापकत्वात् दुर्बलः। यथा 'सूर्याविदे वधूवस्त्रं दद्यात्' इति स्मृत्या चतुर्थेऽह्नि वधूवस्त्रपरिधानाद्याचारो विरुद्धः। सूर्याः तद्देवत्या ऋचः। तथा मातुलकन्यापरिणयनं 'मातुलस्य सुतामूढ्वा' इति स्मृतिविरुद्धम्। श्रुत्यादीनां विशेषग्रहणे बाध्यबाधकभाव उच्यते। तथा हि— संदिग्धमसंदिग्धेन बाध्यते। यथा 'अक्ताः शर्कराः' इति 'तेजो वै घृतम्' इत्यनेन। दुर्बलाश्रयं बलवदाश्रयेण। यथा 'वेदं कृत्वा वेदिं कुर्यात्' इति दुर्बलक्रमाश्रयं बलवत्पदार्थाश्रयेण क्षुतादिनिमित्ताचमनवाक्येन। उपसंहारस्थमुपक्रमस्थेन। यथा 'उच्चैर्ऋचा क्रियते' इत्युपसंहारस्थमृक्पदं 'त्रयो वेदा अजायन्त' इत्युपक्रमस्थवेदपदेन। बहुबाधोऽल्पबाधेन। यथा 'यावतोऽश्वान्प्रतिगृह्णीयात्' इत्यत्र प्रतिग्रहीतुरिष्टिश्चेत् 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्' इति वाक्ये वरुणायेति चतुर्थी पञ्चम्यर्थे नयतिर्गृह्णात्यर्थो देवतापदं चाविवक्षितार्थमिति बहुबाधो दातुरिष्टौ गृह्णातिरेको दानलक्षणार्थ इत्यल्पबाधेन बाध्यते। वेदान्तरोत्पन्नं वेदान्तरविहितेन। यथा सामवेदोत्पन्नं वारवन्तीयाभयमुच्चैस्त्वम् 'उपांशु यजुषा' इति विनियोजकयजुर्वेदस्वरेणोपांशुत्वेन। परशाखाविहितमग्नीषोमीयादेर्द्वादशकपालत्वादि स्वशाखाविहितैनैकादशकपालत्वादिना। नित्यं 'पञ्चदश सामिधेनीरनुब्रूयात्' इति पाञ्चदश्यं नैमित्तिकेन 'सप्तदश वैश्यस्य' इति साप्तदश्येन। द्विविधमप्येतत्क्रत्वर्थं चेत्पुरुषार्थेन 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्याद्येकविंशतित्वादिना। अनारभ्याधीतं 'सप्तदश सामिधेनीरनुब्रूयात्' इति साप्तदश्यं प्राकरणिकेन पाञ्चदश्येन। 'यद्युद्गाताऽपच्छिन्द्याददक्षिणेन यजेत, यदि प्रतिहर्ता सर्वस्वदक्षिणेन' इत्यदाक्षिण्यसर्वस्वदाक्षिण्ययोर्निमित्तक्रमेण पौर्वापर्यप्राप्तौ परेण पूर्वस्य बाधः। 'कुशमयं बर्हिर्भवति' इत्यतिदेशप्राप्तं 'शरमयं बर्हिर्भवति' इति वैकृतेन। औद्गात्रसमाख्याते श्येने अतिदेशप्राप्तेषु प्राकृतेष्वङ्गेषु प्रयोगवचनात्प्राप्तमुद्गातृमात्रकर्तृकत्वं चोदकाश्रयेण नानर्त्विक्कर्तृकत्वेन। ब्राह्मणक्रमावगतमाग्नेयस्याग्नीषोमीयोत्तरत्वं मन्त्रक्रमावगतेनाग्नीषोमीयात्पूर्वत्वेन बाध्यते। 'आहवनीये जुहोति' इति होमसामान्ये विहित आहवनीयः 'पदे जुहोति' इति होमविशेषविहितेन पदेन। 'यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इति यत्किंचिदिति सर्वनाम्ना सावकाशेन दीक्षणीयादावपि प्रथितमुपांशुत्वं 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्' इति निरवकाशेन दीक्षणीयामात्रे विहितेनोच्चैस्त्वेनेति। एवं स्मृति-

ष्वपि । 'नाऽऽत्मानं घातयेत्प्राज्ञः' इत्याद्याप्तमन्वादिस्मृत्या 'केदारे पातयेद्देहम्' इत्याद्यनाप्तपाखण्डस्मृतिर्बाध्यते । तथा 'भार्याश्चतस्रो विप्रस्य' इत्याप्तस्मृतिरपि 'यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । न तन्मम मतम्' इति याज्ञवल्क्याद्यविगीतस्मृतिभिर्विगीता । तथा 'न जातु ब्राह्मणं हन्यात्' इत्यदृष्टार्थया 'जिघांसन्तं जिघांसीयात्' इत्याद्यात्मरक्षणादिदृष्टार्था । तथा 'पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णीयात्' इति होमादीतिकर्तव्यताविषयत्वाच्छ्रुतिप्रभवया 'न शेषो अग्ने अन्यजातमस्ति' इत्यादेः 'शेषोऽपत्यनाम, अपत्यमन्योत्पादितं नास्ति' इत्याद्यभिधायित्वेन दत्तपुत्रनिषेधलिङ्गत्वात्तत्प्रभवा 'बीजिनो यस्य ये जातास्तस्य ते नेतरस्य तु' इत्याद्या । तथा 'तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते' इति मन्थनार्थवादप्रभवा 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इत्याद्या 'मा गामनागामदितिं वधिष्ट' इतिविधिश्रुतिप्रभवया 'गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् । न निन्दाताडने कुर्यात्' इत्याद्यया । एवमाचारेष्वपि । अभियुक्ततराणामार्याणां पीलवादिशब्दस्य वृक्षविशेषे प्रयोगाचारेण म्लेच्छानां हस्त्यादौ प्रयोगाचारो बाध्यते । आचारात्मतुष्टिसम्यक्संकल्पजकामानां पूर्वपूर्वबलीयस्त्वमिति मिताक्षरायाम् । क्वचित् दुर्बलेनापि बलवतो बाधः । यथा 'सौत्रामण्यां सुराग्रहान् गृह्णाति' इति प्रत्यक्षश्रुतेरपि 'कलौ युगे त्विमान् धर्मान्वर्ज्यानाहुर्मनीषिणः' इति स्मृत्या, अन्यथाऽऽनर्थक्यापत्तेः । मनुविरुद्धा स्मृतिरप्रमाणमित्याह बृहस्पतिः — 'वेदार्थोपनिबन्धत्वात्प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥' इति । कल्पतरुरप्येवम् । गौतमः 'देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्' । आम्नायैः वेदस्मृतिपुराणैः । देशाद्याचाराणां बलवत्प्रमाणविरुद्धानामपि 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन बलवत्त्वे प्राप्ते इदमुच्यते— एते देशादिधर्मा आम्नायविरुद्धा नैव प्रमाणम्, किंतु प्रमाणाभासा वामागमवत् इत्यर्थः । स्मृतिरित्यनुवृत्तौ भविष्यपुराणे— 'श्रुत्या सह विरोधे तु बाध्यते विषयं विना । व्यवस्थयाऽविरोधेन कार्योऽन्यत्र परीक्षकैः ॥' । विषयं विना कुत्रापि विषयेऽवकाशमन्तरेण यतः स्मृतिर्बाध्यते बाधितार्थिका भवति अतस्तस्या अविरोधेन व्यवस्थया अविरोधेन व्यवस्थायै अन्यत्र †विरुद्धश्रुत्यदर्शनकालादौ विषयः कार्यः अबाधितार्थकत्वं कल्पनीयमिति कल्पतरुस्वरसः । व्यवस्थयेति चतुर्थ्यर्थे तृतीया । शबरानुसारिणस्तु— विषयं विना विषयबाधाद्विरुद्धा स्मृतिर्बाध्यते एव । यत्र तु विषयान्तरकल्पनं संभवति तत्राऽऽह व्यवस्थयेत्यादीत्याहुः । भाट्टास्तु—विरुद्धा स्मृतिर्विषयं विना श्रुतिमूलकत्वसंदेहेन प्रामाण्यसंदेहाद्विषयनिश्चयं विना बाध्यते तत्प्रतिपाद्यार्थानुष्ठानं बाध्यते इत्यर्थमाहुः । तत्राऽऽद्ये पक्षे बाधितार्थस्मृतिकर्तुः भ्रमप्रमादादिदोषकल्पनादविरुद्धस्मृत्याचारेष्वप्यनाश्वासप्रसङ्गः । द्वितीये तु स्मृतेः प्रमाणत्वात्तन्मूलभूतश्रुतेः क्वचित्कदाचित्केनापि पुरुषेणानुपलम्भस्य निष्प्रमाणत्वादनुपसंहरणीयार्थश्रुतिद्वयस्य च ग्रहणाग्रहणवत्संभवात् किंनिमित्तमननुष्ठानम् ? न च "श्रुतिविरुद्धा स्मृतिः किम् 'अङ्कं वा समभिव्याहारात्' इतिवन्न्यायाभासमूला, उताष्टकादिस्मृतिवच्छ्रुतिमूला" इत्यप्रामाण्यसंशयात्तदिति वाच्यम्, अविरुद्धस्मृतिष्वपि तस्यानिवार्यत्वादिति । अत्र वदन्ति— 'अतः स परमो धर्मो यो वेदादवगम्यते । अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥' इति व्यासवचनाद्वेदस्मृत्यवबोधितयोर्धर्मयोरुत्कर्षापकर्षाववगम्येते । तथा च वैदिको धर्मो मुख्य उत्कृष्टत्वात्, स्मार्तोऽनुकल्पः अपकृष्टत्वात् । मुख्यासंभवे

† 'विरुद्धश्रुतेरदर्शनं यस्मिन् कालादौ' इति व्यधिकरणपदो बहुव्रीहिः । कालादिश्च स्मृतिविधेयार्थावच्छेदकः । आदिशब्देन देशावस्थादिसंग्रहः । श्रुत्यविरोधो यथा भवेत्तथा स्मृत्यर्थावच्छेदकः कालादिः कल्पनीय इत्यर्थः । यथा स्पर्शविधायकश्रुत्यविरोधाय स्मृत्युक्तसर्वपदार्थं संकोच्य स्पर्शप्रदेशातिरिक्तः सर्वः प्रदेशः औदुम्बरीवेष्टनावच्छेदकत्वेन कल्पयितव्यो विच्छिद्य विच्छिद्य वेष्टनस्य निवृत्त्यै इति ।

चानुकल्पानुष्ठानात्फलं भवति न तत्संभवे, 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥' इति मनूक्तेः । तथा च श्रुतिविरुद्धार्थाननुष्ठाने फलाभाव एव बीजम्, न तु अप्रामाण्यसंदेहादि । अविरोधे तु स्मृत्यर्थानुष्ठानादेव फलम्, तस्मा अपि धर्मे प्रमाणत्वात् इति सर्वं सुस्थम् ।

पप्र. २५-२९

अज्ञाते विप्रतिपत्तौ वा दशावरशिष्टपरिषत् श्रोत्रियो वा एकः प्रमाणम्, परिषत्सदस्यलक्षणानि

[१]**अनाम्नाते दशावरैः शिष्टैरूहवद्भिरलुब्धैः प्रशस्तं कार्यम् ॥**

( १ ) आम्नातं ज्ञातम्, तद्विपरीतमनाम्नातम्, तस्मिन्, यथावदनवगते वा, संदिग्धे वा दशावरैः सर्वाल्पैरित्यर्थः । शिष्टैः अवगतवेदार्थैः । तथाऽऽह मनुः— 'धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥' (मस्मृ. १२।१०९) इति । ऊहवद्भिः ऊहापोहसमर्थैः मीमांसादिशास्त्रकृतबुद्धिभिरित्यर्थः, अलुब्धैः वीततृष्णैः प्रशस्तं स्तुतम् 'इदमत्र युक्तम्' इति, तत्कार्यम् अनुष्ठेयम् । तत्संनिधाने कर्तव्यमित्यभिप्रायः । ¶ मभा.

(२) ज्ञायते इव आम्नातम्, तद्विपरीतमनाम्नातम् । ‡ गौमि.

[२]**चत्वारश्चतुर्णां पारगा वेदानां प्रागुत्तमात्त्रय आश्रमिणः पृथग्धर्मविदस्त्रय एतान् दशावरान् परिषदित्याचक्षते ॥**

( १ ) यत्तु 'प्रागुत्तमात् त्रय आश्रमिणः' इति वैखानसाभिप्रायं तद्भिक्षोः समवायप्रतिषेधाद्दशावरादिविषयं द्रष्टव्यम् । तत्रापि तु यदि कश्चित् स्वनियमातिलङ्घनेन समवेयात्ततः परिषत् सगुणैव । विश्व. १।९

( २ ) उत्तमाः प्रव्रजिताः । ब्रक. ४०

( ३ ) ब्राह्मणा एव, धर्मप्रवचने तेषामेवाधिकारात् । तथाऽऽह वसिष्ठः— 'ब्राह्मणो धर्मान् प्रब्रूयात्' (वाध. १।४०) इति । चत्वारः, नैकश्चतुर्वेदोऽपि । चतुर्णां वेदानां पारगाः सरहस्यमध्येतारः वेदानां साङ्गानाम् । उत्तमात् प्राक्त्रय आश्रमिणः तृतीयाध्याय उक्ताः । ब्राह्मणग्रहणं मा भूदित्याश्रमग्रहणम् । एतेऽपि वेदार्थज्ञा एव परिगृह्यन्ते, अज्ञानामनधिकारात् । स्वधर्मानुष्ठानापेक्षया त्वेवमुक्तम् । पृथग्धर्मशास्त्रज्ञाः त्रयः नैकः सर्वधर्मज्ञोऽपि । ते च वेदवित्त्वे सत्याश्रमित्वे च तात्पर्यमङ्गीकृत्य पृथगुच्यन्ते । एतान् दशावरान् परिषदिति शिष्टा आचक्षते । एतदपि स्मृत्यन्तरेण सहैकवाक्यत्वार्थम् । तदप्येषामसंभवे त्र्यवरादीनामुपसंग्रहार्थम् । तथा च मनुः— 'दशावरा वा परिषद्यं धर्मं परिकल्पयेत् । त्र्यवरा वाऽपि वृत्तस्थास्तं धर्मं न विचालयेत् ॥' (मस्मृ. १२।११०) इति । तथा वसिष्ठोऽप्याह— 'चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्वेदपारगाः । स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥' (वाध. २।७) इति । तत्र बहुत्वासंभवे स्वल्पं ग्राह्यमिति द्रष्टव्यम् । मभा.

( ४ ) के पुनस्ते दशावरास्तानाह— चत्वार इति । चतुर्णां वेदानां पारगाः साङ्गानामध्येतारोऽर्थज्ञाश्च । एवंभूताश्चत्वारः, न चातुर्वैद्य एकः । आश्रमिणस्तृतीयेऽध्याय उक्ताः— 'ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः' इति । तेषूत्तमात् वैखानसात् पूर्वे त्रय आश्रमिणः । पृथग्धर्मशास्त्रविदस्त्रयः । पृथग्ग्रहणमेकमेव धर्मशास्त्रं विदुषां त्रयाणां ग्रहणं मा भूदिति । तानेतान्दशावरान् परिषदित्याचक्षते धर्मज्ञाः । गौमि.

[१]**असंभवे त्वेतेषां श्रोत्रियो वेदविच्छिष्टो विप्रतिपत्तौ यदाह ॥**

¶ स्मृच. मभागतम् ।

‡ शेषं मभागतम् ।

(१) गौध. २८।४९ ; गौमि. २८।४६ वद्भि ( विद्भि ) ; स्मृच. १।७ ज्ञाते ( म्नाते ).

(२) गौध. २८।५० ; विश्व. १।९ 'प्रागुत्तमात् त्रय आश्रमिणः' एतावदेव (=) ; ब्रक. ३९ (वेदानां०) मात् त्रय ( माः त्रय) ( परिषदित्याचक्षते० ) ; गौमि. २८।४७ ; बौधि. १।१।८ (प्रागुपोत्तमात्त्रय आश्रमिणः) एतावदेव.

(१) गौध. २८।५१ ; ब्रक. ३९ ( यदाह० ) ; गौमि. २८।४८.

( १ ) विप्रतिपत्तौ इत्यत्र यदा( ? यदाह ) तत् कार्यमिति शेषः । ब्रक. ४०

( २ ) तत्कार्यमिति शेषः । तुशब्दोऽवधारणे । असंभव एव एतेषाम् , न यथासंभवं कतिपयानामप्यसंभव इति । '( अ ? )श्रोत्रियो वा ' इत्यभावविकल्पेन वाशब्देनैव सिद्धौ एवमुपदेशः पूर्वोक्तानां सर्वेषामसंभवे, न दशावरासंभवमात्र इति । श्रोत्रियः समस्तवेदपारगः , न स्मृत्यन्तरोक्तमन्त्रब्राह्मणाध्यायी, बहुपाठस्याभीष्टत्वात् परिच्छेदे । वेदवित्तदर्थज्ञः । विनाऽपि च ग्रन्थप्रकर्षेण तदर्थज्ञानस्य दर्शनाच्छ्रोत्रियग्रहणम् । शिष्टः स्वधर्मावस्थितः । विप्रतिपत्तौ अभिप्रायभेदे एकोऽपि प्रमाणम् । ¶ मभा.

[1]यतो यमप्रभवौ भूतानाम् ॥

[2]हिंसानुग्रहयोगेषु ॥

(१) अयमिति योग्यत्वाद्वेदः परामृश्यते । अप्रभवः अपौरुषेयः । ब्रक. ४०

(२) अत्र कारणमाह— यत इति । यस्माद्वेदात् यमप्रभवौ । यमशब्देन संसारनिवृत्तिरुच्यते, प्रभवशब्देन तस्यैव प्रवृत्तिः । उभयसाधनस्य च वेदादधिगमः । तेन वेदः प्रमाणं विप्रतिपत्तौ । यथाऽऽह मनुः— ' चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाऽऽश्रमाः पृथक् । भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यति ॥ ' ( मस्मृ. १२। ९७ ) । आदौ च यमग्रहणं संसारनिवृत्तिः परमपुरुषार्थ इति ज्ञापनार्थम् ।

किंच— हिंसानुग्रहयोगेषु । वेद एव प्रमाणमिति वाक्यशेषः । हिंसासंबन्धे— एते पश्वादयो यज्ञे हिंस्या इत्यत्र, अनुग्रहयोगे— सर्वे ब्राह्मणादयोऽनुग्राह्या इत्यत्रापि वेद एव प्रमाणम् । तद्द्वारेण च वेदविदित्यभिप्रायः । मभा.

( ३ ) कस्मात्पुनरेकस्यापि श्रोत्रियस्य वेदविदः शिष्टस्य वचनं कर्तव्यमित्यत आह— यत इति । प्रभवत्यस्मादिति प्रभवः कारणम् , तन्न विद्यते त( ? य )स्य सोऽप्रभवः । यस्मादयं भूतानां हिंसानुग्रहयोगेषु दण्डप्रायश्चित्तादिष्वगृह्यमाणकारणः केवलं शास्त्रनेत्रस्तस्मादेकस्यापि वचनमनुष्ठेयमिति । अपर आह— प्रभवनं प्रभवः प्रभुत्वम् , तद्यस्य नास्ति सोऽप्रभवः । न ह्यसौ शास्त्रनिरपेक्षः स्वतन्त्रः किंचिदनुगृह्णाति निगृह्णाति वा । तस्मादस्य वचनमनुष्ठेयमिति । गोमि.

## वृद्धगौतमः

श्रुतिस्मृतिशिष्टाचाराणामुत्तरोत्तरदौर्बल्यम्

[1]धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयं तु स्वशास्त्राणि तृतीयं लोकसंग्रहः ॥

## हारीतः

श्रुतिस्मृतिशिष्टवचनानि प्रमाणानि, तत्प्रामाण्यविषये नास्तिकानां निन्दा

[2]वेदाः प्रमाणं स्मृतयः प्रमाणं
धर्मार्थयुक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत्प्रमाणं
कस्तस्य कुर्याद्वचनं प्रमाणम् ॥

न यस्य वेदा न च धर्मशास्त्रं
न वृद्धवाक्यं च भवेत्प्रमाणम् ।
सोऽधर्मकृद्दिष्टहतो दुरात्मा
नाऽऽत्माऽपि तस्येह भवेत्प्रमाणम् ॥

वेदाङ्गोपबृंहिता श्रुतिर्धर्मे प्रमाणम् , वेदतन्त्रभेदेन श्रुतिद्वैविध्यम्

[3]अथातो धर्मं व्याख्यास्यामः । श्रुतिप्रमाणको धर्मः । श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च ॥

---

¶ गौमि. मभागतम् ।

(१) गौध. २८।५२ ; ब्रक. ३९ यतो यमप्रभवौ ( यतोऽयमप्रभवो ) ; गौमि. २८।४९ ब्रकवत्.

(२) गौध. २८।५३ ; गौमि. २८।४९.

(१) वृगौस्मृ. १४।४३.

(२) प्रपा. ३ ; मुक्ता. २ वाक्यं च ( वाक्यं हि) द्दिष्ट ( द्दृष्टि ).

(३) मम्. २।१.

[1]**वेदो वै विद्या ब्राह्मणस्य । तत्परिज्ञानार्थमङ्गानि ॥**

तत्परिज्ञानं वेदपरिज्ञानम् । संप्र. ५१२

शिष्टाचारः प्रमाणम्, शिष्टलक्षणम्, त्रयोदशविधं शीलम्

[2]**शिष्टाः श्रुतिस्मृतिविहितावस्थिताः प्रतिपत्तव्याः ॥**

अवस्थिताः ज्ञानानुष्ठाननिष्ठाः । § ब्रक. २७

[3]**साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ॥**

**तेषामाचरणं यत्तु सदाचारः स उच्यते ॥**

**$ [4]ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मैत्रता प्रियवादिता कारुण्यं कृतज्ञता शरण्यता प्रणतिश्चेति त्रयोदशविधं शीलम् ॥**

§ कुर. ब्रकवत् ।

$ अस्य व्याख्यानानि 'वेदोऽखिलो धर्ममूलम्' इति मनुवचने द्रष्टव्यानि ।

(१) स्मृच. १।१३० ; मुक्ता. ११५ ( वै० ) ; संप्र. ५१२ मुक्तावत्.

(२) ब्रक. २७ ; कुर. ३३.

(३) पमा. १।१३४ ; इन्दु. २ षाः स्युः ( षास्तु ) सदाचारः स ( स सदाचार ).

(४) ब्रक. २० रुष्यं ( रुष्यता ) ( कारुण्यं० ) ; मनु. २।६ वादिता ... शरण्यता ( वादित्वं कृतज्ञता शरण्यता कारुण्यं) प्रणतिश्चेति (प्रशान्तिश्चेति) ; चव. १७–१८ सूयता ( श्लीलता) मैत्र (मित्र) वादिता ( वादित्वं) प्रणति ( प्रशान्ति ) ; कुर. २६ ( कारुण्यं० ) ; पमा. १।६८२ ब्रह्मण्य (ब्राह्मण्य) भक्तता + (समता) मृदुता... प्रणतिश्चेति ( अनुद्धतता अपारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति ) ; दीक. १।७ वादिता ( वादित्वं ) ( कारुण्यं० ) प्रणति ( प्रशान्ति ) ; निप्र. १७ ( ब्रह्मण्यता ... पारुष्यं ) एतावदेव ; मच. २।६ ( ब्रह्मण्यता पितृदेवभक्तता अपरोपतापिता मृदुता अनसूयता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिरिति त्रयोदशविधं शीलम् ) ; गप. १२ ( ब्राह्मणता देवपितृभक्तता ) एतावदेव ; बौमि. १।७ मैत्र ( मित्र ) प्रणति ( प्रशान्ति ) ; पप्र. ९ ( मृदुता० ) प्रणति ( कारुण्यं प्रशान्ति ) ( शीलम्० ).

शिष्टानां दुराचारा न प्रमाणम्

[1]**अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।**
**नानुष्ठेयं मनुष्यैस्तु तदुक्तं कर्म चाऽऽचरेत् ॥**

दशावरा परिषत्, प्रशस्यजघन्यभावः सदस्येषु

[2]**चतुर्विद्याविद्विकल्पाङ्गविद्धर्मवित्त्रयाश्रमिण इति परिषदं दशावरामाहुः । चत्वारस्तासां पूर्वा श्रेयस्यो भवन्ति ( ? ) ॥**

## वृद्धहारीतः

चतुरवयवा परिषदध्यात्मविदेको वा धर्मे प्रमाणम्

[3]**चत्वारो ब्राह्मणाः शिष्टाः पर्षदित्यभिधीयते ।**
**तैरुक्तमाचरेद्धर्ममेको वाऽध्यात्मवित्तमः ॥**

## बौधायनः

श्रुतिस्मृतिशिष्टाचारा धर्मे प्रमाणानि, तेषां बलाबलम्, शिष्टलक्षणम्

[4]**उपदिष्टो धर्मः प्रतिवेदम् ॥**

उपदिष्टः प्रदर्शितः प्रतिवेदं प्रतिशाखम् । अतीन्द्रियार्थप्रतिपादको नित्यो ग्रन्थराशिः वेदः । तत्प्रतिपाद्यो धर्मः । यद्यप्येकैकस्यां शाखायां परिपूर्णान्यङ्गानि तथापि कल्पसूत्रान्तरैः शाखान्तरोक्ताङ्गोपसंहारः क्रियत एव । बौवि.

[5]**तस्यानु व्याख्यास्यामः ॥**

(१) प्रपा. २ ; आम. ४ चाऽऽच (आच) ; आर्क. ५० स्तु त ( स्तत्त ) ; इन्दु. ४ स्तु त ( स्तत्त ) चाऽऽच ( आच ).

(२) ब्रक. ३९.

(३) वृहास्मृ. ९।२३५–२३६.

(४) बौध. १।१।१.

(५) बौध. १।१।२–३ ; विश्व. १।७ पृ. २२ ( द्वितीयस्तदनुव्याख्या स्मार्तः ) (=).

अन्विति । पश्चादित्यर्थः । बौवि.

**स्मार्तो द्वितीयः ॥**

अनुभूतविषयासंप्रमोषः स्मृतिः । तदभिव्यञ्जको ग्रन्थः स्मृतिशब्देनोपचर्यते । स्मार्तः स्मृत्युपदिष्टः । अनुव्याख्याग्रहणं स्मार्तस्य धर्मस्य कल्प्यविधिमन्त्रार्थवादमूलत्वप्रदर्शनार्थम् । तद्य 'धन्वन्निव प्रपा असि' 'तस्माच्छ्रेयांसं पापीयान् पश्चादन्वेति' इत्यादि । अत एव प्रपागुर्वनुगमनादीनां कर्तव्यतामवगम्य तत्कर्तव्यता स्मृतिशास्त्रकारैरुपदिश्यते । अत एव द्वितीयः । एवं चास्य श्रौतधर्मविरोधे सति दौर्बल्यं द्रष्टव्यम् । स च स्मार्तो धर्मः पञ्चविधो भवति— वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मश्चेति । तत्रापि साधारणविशिष्टधर्मभेदेन द्वैविध्यं द्रष्टव्यम् । 'द्विजातीनामध्ययनम्' इत्यादिः साधारणधर्मो वर्णधर्मः । 'ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः' इत्यादिर्विशिष्टः । तथा आश्रमधर्मो दयादिः साधारणः । अग्नीन्धनादिः विशिष्टः । तथा वर्णाश्रमधर्मोऽप्यग्नीन्धनादिः साधारणः । बैल्वदण्डधारणादिः विशिष्टः । अभिषेकादिगुणयुक्तस्य राज्ञो रक्षणं गुणधर्मः । हिंसादिः निमित्तधर्मः (१) । उपादेयानुपादेयताकृतो गुणनिमित्तयोर्विशेषः । बौवि.

**[1]तृतीयः शिष्टागमः ॥**

धर्म इत्यनुषज्यते । शिष्टैः आगम्यते इति शिष्टागमः । शिष्टैराचरित इत्यर्थः । तत्र प्रत्यक्षश्रुतिविहितो धर्मः प्रथमो धर्मः । विप्रकीर्णमन्त्रार्थवादमूलो द्वितीयः । तृतीयस्तु प्रलीनशाखामूलः । सर्वेषां वेदमूलत्वेऽपि दौर्बल्यमर्थविप्रकर्षाद्वेदितव्यम् । बौवि.

**[2]शिष्टाः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः ॥**

(१) शिष्टस्वरूपमाह बौधायनः— शिष्टा इति । कुम्भीधान्या इति वृत्तिसंकोचोपलक्षणपरम् ।

अप. १।७ पृ. १९

(२) मत्सरः परोत्कर्षासहिष्णुत्वम् । निरहंकाराः निरभिमानाः । कुम्भीधान्याः अल्पसंतुष्टा इति विवक्षिताः । अलोलुपाः विषयालम्पटाः । दम्भः ख्यात्यर्थं धर्मानुष्ठानम् । ¶ ब्रक. २६-२७

(३) अथ शिष्टानाह— शिष्टा इति । खल्विति वाक्यालंकारार्थो निपातः । मात्सर्यं परगुणाक्षमता । अहंकारः अभिजनविद्यानिमित्तो गर्वः । कुम्भीधान्याः दशाहं जीवनोपयिकधान्याः । अनेन च संतुष्टतोपलक्ष्यते । अलोलुपता वैतृष्ण्यम् । दम्भः लोकप्रत्ययार्थं धर्मध्वजोच्छ्रायः । दर्पः धर्मातिरेकमूलोऽतिहर्षः । लोभः प्रसिद्धः । मोहः कृत्याकृत्यविवेकशून्यता । दम्भादिविवर्जिताः । बौवि.

**[1]धर्मेणाधिगतो येषां वेदः सपरिबृंहणः ।**
**शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥ इति ॥**

(१) 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति मनुवचनात् इतिहासपुराणानि वेदस्य परिबृंहणानि, अविनाभावाच्च व्याकरणादीनि । तदनुमानज्ञाः स्मृतिज्ञाः । स्मृतिर्हि तस्य वेदस्य अनुमानं लिङ्गम् । श्रुतिप्रत्यक्षहेतवः, † श्रुतिः प्रत्यक्षहेतुः येषां संमतस्ते तथोक्ताः । स्मृतिवचनमाचारश्च प्रत्यक्षगामित्वात् प्रत्यक्षम् ।

अप. १।७ पृ. १९

---

(१) बौध. १।१।४.

(२) बौध. १।१।५ ; अप. १।७ (दर्प०) क्रोध (कोप) ; ब्रक. २६ विवर्जि (वर्जि) बौधायनो यमश्च ;

¶ कुर. ब्रकवत् ।

† शास्त्रगतश्रुतिप्रत्यक्षत्वप्रसिद्धया पूर्ववाक्योक्तस्मृत्यनुमानत्वेन च विरुद्धं लक्षितलक्षणया स्मृत्याचारप्रत्यक्षत्वव्याख्यानमिदं न मनोहरम्, ब्रकबौविकृतं व्याख्यानमेव समीचीनमिति प्रतीमः ।

कुर. ३२ शिष्टाः खलु (लोके शिष्टा) बौधायनो यमश्च ; पमा. १।१३४ ; मुक्ता. ३ ; इन्दु. २ विगत (गत).

(१) बौध. १।१।६ ; अप. १।७ येषां (यैश्च) ; ब्रक. २६ (इति०) बौधायनो यमश्च ; कुर. ३३ (इति०) बौधायनो यमश्च.

(२) धर्मेण अध्ययनमिति( १ नेति )कर्तव्यतया। सपरिबृंहणः साङ्गेतिहासपुराणः। तदनुमानज्ञाः वेदे तूहापोहकुशलाः। श्रुतिः वेदः प्रत्यक्षः श्रवणेन्द्रियग्राह्यः हेतुः उपायः धर्मज्ञाने येषां ते तथोक्ताः। § ब्रक. २७

(३) किंच– धर्मेणेति। $ येषामिति कृद्योगे षष्ठी 'कर्तृकर्मणोः कृति' (पासू. २।३।६५) इति। इतिहासपुराणाभ्यां सहितो वेदो ग्रन्थतोऽर्थतश्च यैरवगत इत्यर्थः। बृंहणग्रहणं स्मृति–सदाचारशास्त्राणामभ्युपलक्षणार्थम्। श्रुतिप्रत्यक्षहेतवश्च श्रुतिरेव प्रत्यक्षं कारणमस्य धर्मस्येति येषां दर्शनमिति विग्रहः। अनेन मीमांसकाः कीर्तिताः। अत एव तदनुमानज्ञास्ते भवन्ति। स्मार्तशिष्टागमयोः श्रुत्यनुमानविद इत्यर्थः। एवं च शास्त्राधिगतो यो धर्मः सोऽनुष्ठेय इत्यभिप्रायः। बौवि.

शिष्टानां दुराचारो न प्रमाणम्

**[1]अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्।**
**नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्॥**

देवादिभिः कृतं मनुष्यैर्न कार्यम्। कृम. १०१२

शिष्टाचाराभावे दशावरा परिषत् प्रमाणम्, परिषदनुकल्पाः, परिषदर्हा अनर्हाश्च, प्रायश्चित्यवस्थासापेक्षः प्रायश्चित्तनिर्णयः

**[2]तदभावे दशावरा परिषत्॥**

(१) तदभावे श्रुत्याद्यभावे। स्मृच. १।८

(२) उक्तलक्षणशिष्टाभावे दशावरा परिषत्, तया यो विधीयते सोऽनुष्ठेय इत्यर्थः। बौवि.

**[1]अथाप्युदाहरन्ति–**

**चातुर्वैद्यं विकल्पी च अङ्गविद्धर्मपाठकः।**
**आश्रमस्थास्त्रयो विप्राः पर्षदेषा दशावरा॥**

* तत्र परकीयमतेन, स्वमतं प्रदर्शयितुमाह– चातुर्वैद्यमिति। चतस्रः एव विद्याः चातुर्वैद्यम्, तेन तद्विदो लक्ष्यन्ते। विकल्पी मीमांसकः। अङ्गं व्याकरणादि, तज्ज्ञः। धर्मपाठकः, तन्मूलिका तदर्थावगतिरिति पाठग्रहणम्, तदभिज्ञ इत्यर्थः। † तान् विशिनष्टि– आश्रम-

---

§ कृर. ब्रकवत्।

$ व्याख्यानमिदं न साधु, 'न लोकाव्ययनिष्ठा०' इत्यनेन 'कर्तृकर्मणोः कृति' इत्यस्य बाधात्, षष्ठ्याः कृद्योगप्रयुक्तत्वाभ्युपगमेऽपि 'उभयप्राप्तौ कर्मणि' इतिनियमप्रसक्तेश्च। अधिगमेर्बुद्ध्यर्थत्वम् 'अधिगतः' इत्यस्य वर्तमानार्थकक्तान्तत्वं चाभ्युपेत्य 'क्तस्य च वर्तमाने' इत्यनेन षष्ठीव्युत्पादनमेव साधु।

(१) स्मृच. १।१९६ वृद्धमनुः; पमा. १।४७३; मुक्ता. ५; संप्र. ७२४ (=); साप्र. ८ कर्म (धर्मे); संर. ४१२ स्तदुक्तं कर्म स (स्तु तदुक्तं धर्मं); कृम. १०१२ तु (च) स्तदुक्तं कर्म स (स्तत्तदुक्तं धर्मं).

(२) बौध. १।१।७; स्मृच. १।७.

* अवतरणीग्रन्थोऽयं चित्तं व्याकुलयति। तथाहि– यदीदमवतरणीरूपं वाक्यद्वयम्, तदाऽग्रिमग्रन्थस्य स्वमतत्वात् पूर्वं परकीयमतसूत्रेण भाव्यम्, तत्तु न दृश्यते। 'तदभावे०' इति तु न परकीयमतम्, उत्तरग्रन्थेनाविरोधात्। यदि त्वेकमेवेदं वाक्यम् 'परकीयमतविलक्षणं स्वमतं प्रदर्शयितुमुपोद्घातत्वेन तच्च परिषत्स्वरूपं परकीयमतेनाऽऽह' इत्यर्थतात्पर्यकम्, तदा वक्ष्यमाणदशावरापरिषत्स्वरूपस्य परकीयमतत्वेन तदुत्तरं स्वमतेन तदुक्त्या भवितव्यम्। साऽपि नोपलभ्यते। एवं स्थिते व्याख्यानमिदमप्रामाणिकमिति वा, तत्प्रामाण्यात् परकीयमतसूत्रं स्वमतसूत्रं वोच्छिन्नमिति वा न निर्णीयते।

† अनयाऽवतरण्या 'एवंगुणास्त्रय आश्रमिणो दशावरा परिषद्भवति' इत्युपसंहारेण च आश्रमित्वं न पूर्वार्धोक्तेभ्य ऋग्विद्यादिधर्मविद्यान्तेभ्यः परिषद्घटकविभागोपाधिभ्यः पृथग्विभागोपाधिः, अपि तु पूर्वोक्तगुणैस्तस्य समुच्चय इति व्याख्यातुरभिप्रायः प्रतीयते। पूर्वार्धे च सप्तैव विभागोपाधयो गुणा उक्ताः। तथा च पूर्वोक्तगुणवद्व्यक्तीनामेवानेकत्वं परिकल्प्य दशत्वसंख्या पूरणमापद्यते। तच्च पूर्वोक्तगुणवद्व्यक्त्यनेकत्वं तत्तद्गुणयोगेन द्वित्वादिसंख्यया आश्रमभेदेन च व्यवस्थितम्, यथासंभवमव्यवस्थितं वा व्याख्यातुरभिमतमिति न ज्ञायते। 'चत्वारश्चतुर्णां पारगाः०' इति गौतमसूत्रे तदीयमस्करिभाष्ये च आश्रमित्वस्य पृथगुपाधित्वमाश्रमभेदेन तत्त्रित्वं च स्पष्टं प्रतीयते। बौधायनसूत्रस्यापि तदेकमूलत्वसंभवात् बौधायनस्यापि गौतमवदेवाभिप्रायस्यास्ति संभवः।

(१) बौध. १।१।८; ब्रक. ३६ ('अथाप्युदा-

स्यास्त्रयो विप्राः । अवानप्रस्थास्त्रयो गृह्यन्ते । वानप्रस्थानां पुनर्वनाधिवासत्वात् अनधिकारो धर्मोपदेशस्य। परिव्राजकोऽपि भिक्षार्थी ग्राममियादेव । तथा च गौतमः— 'प्रागुपोत्तमात्त्रय आश्रमिणः' (गौध. २८।५०) इति । विप्रा इति । क्षत्रियवैश्ययोः धर्मोपदेशानधिकारप्रदर्शनार्थं विप्रग्रहणम्, 'ब्राह्मणो धर्मान् प्रब्रूयात्' इति वसिष्ठवचनाच्च । 'आश्रमस्थास्त्रयो मुख्याः' इति पाठे नैष्ठिकब्रह्मचारी गृह्यते । यथा $धर्मस्कन्धब्राह्मणे तान‌नुक्रम्य 'सर्व एते पुण्यश्लोका भवन्ति' इति । एवंगुणास्त्रय आश्रमिणो दशावरा परिषत् भवति। बौवि.

**'पञ्च वा स्युस्त्रयो वा स्युरेको वा स्यादनिन्दितः ।**
**प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्रशः॥**

अथानुकल्पमाह— पञ्च वेति । संभवापेक्षो विकल्पः । अनिन्दितः पातकादिदोषरहितः । तृतीयो वाशब्दः अपिशब्दस्यार्थे द्रष्टव्यः । आह च— 'एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।' (मस्मृ. १२।११३) इति । अपिशब्दादेकेन न वाच्यम् । वक्ष्यति च— 'बहुद्वारस्य धर्मस्य' (बौध. १।१।१३) इति । तुशब्दोऽवधारणार्थः । बौवि.

**'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते॥**
**इति ॥**

$ छान्दोग्ये 'त्रयो धर्मस्कन्धाः' इत्यारभ्य आम्नातं ब्राह्मणं धर्मस्कन्धब्राह्मणम् ।

हरन्ति०) वैद्यं (विद्यो) विप्राः (मुख्याः) वसिष्ठबौधायनौ; मभा. ३।२ (अथाप्युदाहरन्ति०) वैद्यं (वैद्यो) अङ्गविद्ध (नैरुक्तो ध) तृतीयचरणे (ब्रह्मचारी गृही भिक्षुः) स्मृत्यन्तरम्; बौवि. 'विप्राः' इत्यत्र 'मुख्याः' इत्यपि पाठान्तरं निर्दिशति.

(१) बौध. १।१।९.

(२) बौध. १।१।१०; ब्रक. ४० मनुवसिष्ठयमबौधायनपैठीनसयः.

'नेतरे तु सहस्रशः' इति (सामर्थ्ये?) सिद्धे सत्यारम्भादत्यन्तापदि अव्रतादीननुगृह्णाति । आह च— 'जातिमात्रोपजीवी च कामं स्याद्ब्राह्मणब्रुवः । धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥' (मस्मृ. ८।२०) इति । बौवि.

**'यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।**
**ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥**

'नेतरे तु सहस्रशः' इत्युक्तम्, तत्रैव निन्दामाह— यथेति । स्पष्टम् । बौवि.

**'यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः ।**
**तत्पापं शतधा भूत्वा वक्तॄन् समधिगच्छति॥**

अत्यन्तापद्यपि एकोद्दिष्टभोक्तृवत् वक्तॄणामपि दोषोऽस्तीति दर्शयितुमाह— यद्वदन्तीति । व्यवहारं प्रायश्चित्तादिकं वा यद्वदन्ति । तमसा अन्धकारेण आविष्टाः । अजानतः अजानन्तः । यस्मिन्पापकर्मण्येभिः प्रायश्चित्तं विहितमिति शेषः । बौवि.

**'बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः ।**
**तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये ॥**

'एको वा स्यादनिन्दितः' (बौध. १।१।९) इति यदुक्तम्, तत्राऽऽह— बहुद्वारस्येति । अनेकश्रुतिस्मृतिसदाचारप्रमाणकत्वाद्धर्मस्य बहुद्वारत्वम् । अत एव चास्य सूक्ष्मत्वं दुरनुगत्वं च । तथा हि— 'शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात्सूक्ष्मा दुरनुगा गतिः ॥' । तस्मादित्युपसंहारः । बौवि.

**'धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।**
**क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः॥**

(१) बौध. १।१।११.

(२) बौध. १।१।१२; ब्रक. ४० यद्व (यं व) मूढा (भूता) जानतः (तद्विदः) वक्तॄन् समधि (तान्वक्तॄननु) मनुवसिष्ठयमबौधायनाः.

(३) बौध. १।१।१३.

(४) बौध. १।१।१४; मुक्ता. ३ यद्ब्रू (यं ब्रू).

बहवः पुनः— धर्मशास्त्ररथारूढा इति । शिष्टानां प्राबल्यं प्रदर्शयितुं धर्मशास्त्राणि वेदाश्च रथायुधे-रुपमीयन्ते । बौवि.

[1]यथाऽश्मनि स्थितं तोयं मारुतोऽर्कः प्रणाशयेत् ।
तद्वत्कर्तरि यत्पापं जलवत्संप्रलीयते ॥

शिष्टैर्हि वर्णाश्रमादयो व्यवस्थापिताः । तेषु पापं न लिप्यत इत्याह— यथाऽश्मनीति । बौवि.

[2]शरीरं बलमायुश्च वयः कालं च कर्म च ।
समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत् ॥

अथैनामधिनोऽध्यवस्थां परिशाय प्रायश्चित्तं विधीयते इत्याह— शरीरमिति । शरीरं वातप्रकृतिकं पित्तप्रकृतिक-मित्यादि । आयुः ज्ञानम् । अयतेर्गत्यर्थादौणादिकः उण्-प्रत्ययः । वयः बाल्यादिलक्षणम् । कालः शीतोष्णादि-लक्षणः । कर्म प्रायश्चित्तस्य निमित्तभूतं सानुबन्धं हिंसादि । बौवि.

दक्षिणदेशाचारा उत्तरदेशाचाराश्चान्यत्राप्रमाणान्यपि तत्त-द्देशे प्रमाणानीति मतं श्रुतिस्मृतिविरोधादप्रमाणम्

§ [3]पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः ॥

(१) विप्रतिपत्तिः धर्मशास्त्रविरुद्धप्रतिपत्तिः । ¶ ब्रक. २९

(२) श्रौतः स्मार्तः शिष्टागम इति त्रिविधो धर्मो व्याख्येयः । तथा तत्र तत्र व्यवस्थिततया शिष्टाचरितानां धर्माणाम्— पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः । दक्षिणेन नर्मदामुत्तरेण कन्यातीर्थम् । उत्तरतस्तु दक्षिणेन हिमवन्तमुदग्विन्ध्यस्य । एतद्देशप्रसूतानां शिष्टानां परस्परं पञ्चधा विप्रतिपत्तिः विसंवादः यान् पदार्थान् अनुतिष्ठन्ति दाक्षिणात्याः, न तानुदीच्याः; यानुदीच्याः, न तान् दाक्षिणात्याः इति । बौवि.

[1]यानि दक्षिणतस्तानि व्याख्यास्यामः ॥

तत्र प्रथमम्— यानि दक्षिणतस्तानि व्याख्यास्यामः । निगदव्याख्यातमेतत् । बौवि.

[2]यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृ-गमनमिति ॥

---

§ एतदादिसूत्राणां संप्र. व्याख्यानमग्रे 'मिथ्यवैदिति गौतमः' इत्यादिसूत्रेषु द्रष्टव्यम् ।

¶ कुर. ब्रकवत् ।

(१) बौध. १।१।१५.

(२) बौध. १।१।१६ ; पमा. २।१०० समीक्ष्य (परीक्ष्य) चतुर्थपादे (प्रायश्चित्तं प्रकल्पयेत्).

(३) बौध. १।२।१ ; विश्व. १।५३ ; अप. १।५३ पृ. ८२ (पञ्चविधा विप्रतिपत्तिः) एतावदेव ; ब्रक. २८ ; स्मृच. १।२४, १९८ (दक्षिणतस्तथोत्तरतः०) ; कुर. ३५ ; पमा. १।४७२ स्मृचवत् ; चमव्या. ४९ स्मृचवत्, ९६ ; मुक्ता. १३१ ; आर. ११४ स्मृचवत् ; सिन्धु. १०११ ; संम. ५३ ; विपा. ३।१ पृ. ६९५ ; संप्र. ७२१ ; संकौ. १७५ ; आन. ५०७ ; संग. १७३ ; संर. ४१२.

(१) बौध. १।२।२ ; ब्रक. २८ ; उ. २।९।७ ; स्मृच. २४, १९८ (दक्षिणतः) एतावदेव ; कुर. ३५ ; पमा. १।४७२ स्मृचवत् ; चमव्या. ४९ (दक्षिणतः) एतावदेव : ९६ यानि (यानि तु) स्तानि व्या (स्तान्य-नुव्या) ; मुक्ता. १३१, ४२६ ; संम. ५३ स्तानि व्या (स्तान्यनुव्या) ; विपा. ३।१ पृ. ६९५ संमवत् ; संप्र. ७२१ संमवत् ; आन. ५०७ ; संग. १७३ यानि (या) ; संर. ४१२ संमवत्.

(२) बौध. १।२।३ ; अप. १।५३ पृ. ८२ (अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनमुच्छिष्टभोजनं पितृष्वसृ-मातुलदुहितृपरिणयनमिति) ; ब्रक. २८–२९ पेतेन (पनीतेन) गमन (परिणयन) ; उ. २।९।७ (पर्युषित ... गमनमिति०) ; स्मृच. १।२४ यथैत... स्त्रिया सह (अनुपनीतेन भार्यया च सह) गमन (परिणयन) : १।१९८ अपवत् ; कुर. ३५ पेतेन (पनीतेन) (पर्युषितभोजनं०) गमन (परिणयन) ; पमा. १। ४७२ मातुल (मातुलदुहितृ) शेषं स्मृच. १।२४ वत् ; चमव्या. ४९ : ९६ तदनुपेतेन (तत् अनुपतनं) ष्वसृदु (ष्वसुर्दु) ; मुक्ता. १३१ : ४२६ (मातुल-पितृष्वसृदुहितृगमनमिति०) ; सिन्धु. १०११ यथैतदनु-पेतेन सह भोजनं स्त्रिया (अनुपेतेन स्त्रिया च) गमन (परिणयन) ; संम. ५३ यथैतदनुपेतेन (तथैतदनुपदेन) ;

( १ ) तत्रेमान्युदाहरणानि– यथैतदनुपेतेनेति । मातुलदुहितृगमनं पितृष्वसृदुहितृगमनमिति संबन्धः । ऋज्वन्यत् । बौवि.

( २ ) मातुलपितृष्वसृदुहितृगमनं परिणयनम् । मुक्ता. १३१

[1]अथोत्तरत ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रसंयानमिति ॥

ऊर्णायाः तद्विकारस्य च कम्बलादेः विक्रयः । उभयतोदन्ताः अश्वादयः । व्यवहारः विक्रयादिः । आयुधीयकं शस्त्रधारणम् । समुद्रसंयानं नावा द्वीपान्तरगमनम् । ‡ बौवि.

‡ मुक्ता. बौविवत् ।

सम. ११० ( मातुलपितृष्वसृदुहितृगमनम् ) एतावदेव; विपा. ३।१।६९५ (यथा दक्षिणदेशे अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलसुतायाः पितृष्वसृसुतायाः परिणयश्च ); संप्र. ७२१ ब्रकवत् ; आन. ५०७–५०८ ; साप्र. ८ मातुल (मातुलदुहितृ) शेषं स्मृच. १।२४ वत् ; संग. १७३ पेतेन ( पनीतेन ); संर. ४१२.

( १ ) बौध. १।२।४; अप. १।५३ पृ. ८२ अथोत्तरतः ( तथोत्तरतः पञ्च ); ब्रक. २९ शीधु ( सीधु ) यकं ( यता ) संयान ( यान ); स्मृच. १।२४ अथो ( तथो ) शीधु ( सीधु ) संयान ( यान ) : १।१९८ अथोत्तरत ( तथोत्तरतः पञ्च ) संयान (यान); कृर. ३५ शीधु ( सीधु ) संयान ( यान ); पमा. १।४७२ ऊर्णा ( ऊर्ण ) शेषं स्मृच. १।२४ वत् ; चमव्या. ९६ स्मृच. १।२४ वत्; मुक्ता. १३१ ; सिन्धु. १०११ निर्देशरूपेण ; संम. ५३ कृरवत् ; विपा. ३।१।६९५–६९६ ( तथा उत्तरदेशे सिन्धुपारगमनमुभयतोदद्भिर्व्यवहार ऊर्णाविक्रय आयुधविक्रयः समुद्रयानं च ); संप्र. ७२१–७२२ कृरवत् ; आन. ५०८ संयान ( यान ); संग. १७३ शीधुपान ( सिन्धुपार ) शेषं आनवत् ; संर. ४१२ आयुधी ( सायुधी ) शेषं कृरवत् ; कृम. १०११ आनवत् .

[1]इतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन् ॥

[2]तत्र तत्र देशप्रामाण्यमेव स्यात् ॥

( १ ) 'तत्र देशप्रामाण्यमेव स्यात्' इति पूर्वपक्षः । ¶ ब्रक. २९

( २ ) अयमर्थः– इतरः दाक्षिणात्यः इतरस्मिन् उत्तरदेशे मातुलसंबन्धादिकं कुर्वन् दुष्यति, न स्वदेशे । तथा इतरः उदीच्यः इतरस्मिन् दक्षिणदेशे शीधुपानादिकं कुर्वन् दुष्यति, न स्वदेशे । कुतः ? देशप्रामाण्यात् देशनिबन्धनादाचारप्रामाण्यस्येत्यर्थः । अत एव देवलः– 'यस्मिन् देशे य आचारो न्यायदृष्टस्तु कल्पितः । तस्मिन्नेव स कर्तव्यो देशाचारः स्मृतो भृगोः ॥' इति । न चैवं सति उदीच्यानां स्वदेशे परदेशे वा मातुलसंबन्धाद्यविरुद्धमिति शङ्कनीयम् । यदाह आपस्तम्बः– 'येषां परम्पराप्राप्ताः पूर्वैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरैः पुनः ॥' । येषां पितृपितामहादिपरम्पराप्राप्ताः पूर्वैश्च त्रैविद्यवृद्धैः अनुष्ठिताः आचाराः सन्ति त एव तैः आचारैः अनुष्ठीयमानैर्न दुष्येयुः, नेतरैः । न

¶ कृर. ब्रकवत् ।

( १ ) बौध. १।२।५ ; विश्व. १।५३ ; अप. १।५३ पृ. ८२ तरदि ( तर इ ); ब्रक. २९ ( इतरदितरस्मिन् कुर्वन् ) एतावदेव ; स्मृच. १।२४, १९८ अपवत् ; कृर. ३५ कुर्वन् ( कुर्वाणो ) शेषं अपवत् ; पमा. १।४७२ अपवत् ; चमव्या. ९६ ; मुक्ता. १३१; आर. ११४ ( कुर्वन्० ) ष्यतीत (ष्यति नेत) शेषं अपवत् ; संम. ५३ ( तत्रेतरदितरस्मिन् कुर्वन् दुष्यति ) एतावदेव; विपा. ३।१।६९६ ( तत्रेतर इतरस्मिन् कुर्वन् दुष्यति ) एतावदेव ; संप्र. ७२२ इतर ( तत्रेतर ) ; आन. ५०८ ; संर. ४१२ (तत्रेतर इतरस्मिन् कुर्वन् दुष्यति) एतावदेव.

( २ ) बौध. १।२।६ ; अप. १।५३ पृ. ८२ (देशे प्रामाण्यात् ) एतावदेव ; ब्रक. २९ ; स्मृच. १।२४, १९८; कृर. ३५ तत्र तत्र ( तत्र ); पमा. १।४७२ ( तद्देशप्रामाण्यात् ) ; चमव्या. ९६ ( तत्तद्देशप्रामाण्यात् ) ; मुक्ता. १३१ देशप्रा ( देशे प्रा); आर. ११४ ( देशप्रामाण्यात् ) एतावदेव ; संम. ५३ पमावत् ; संप्र. ७२२ ; आन. ५०८ मुक्तावत् ; संर. ४१२ चमव्यावत् .

मुदीच्यानां तथाविधा आचाराः सन्ति यथा दाक्षिणात्यानाम् । अतस्तैरेव स्वदेशे कार्याणि नान्यैरिति सिद्धम् । देशव्यवस्थया प्रामाण्यमुक्तं वार्तिककारैः— 'सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया । आपस्तम्बेन संस्कृत्य दुष्टादुष्टत्वमाश्रितम् ॥' इति ।

$ स्मृच. १।१९८–१९९

(३) इतरत् अनुपेतेन सह भोजनादि, इतरस्मिन् उत्तरापथे कुर्वन् दुष्यति, तत्रत्यैः शिष्टैः दूष्यते इत्यर्थः । एवमूर्णाविक्रयादीनि कुर्वन्नितरत्र । तस्मादनुपेतेनसह-भोजनादीनि दाक्षिणात्यैः शिष्टैः आचर्यमाणत्वात् दोषाभावाच्च तैरेव कर्तव्यानि । ऊर्णाविक्रयादीनि चोदीच्यैरेव । तदेतन्द्भट्टकुमारिलैर्निरूपितम्— 'स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ।' इति । तथाहि— 'अहिच्छत्र-ब्राह्मण्यः सुरां पिबन्ति' इति च ।

ननु किमिति व्यवस्था ? यावता मूलश्रुतिरेषामविशेषेण कल्प्यते यथा होलाकादीनाम् । यथा वा बौधायनीयं धर्मशास्त्रं कैश्चिदेव पठ्यमानं सर्वाधिकारं भवति । गौतमीयगोभिलीये छन्दोगैरेव पठ्येते, वासिष्ठं तु बह्वृचैः, अथ च सर्वाधिकाराणि । यथा वा अन्यानि शास्त्राणि, यथा वा गृह्यशास्त्राणि सर्वाधिकाराणि तद्वदनुपनीतसहभोजनादीन्यपि समानि कस्मान्न भवन्तीत्याशङ्क्याऽऽह— तत्र तत्रेति । एवं व्यवस्थितविषयैव मूलश्रुतिः कल्प्यते । किंनामानुपपत्तिर्न कल्पयतीत्यभिप्रायः । तस्मात् व्यवस्थितविषयमेवानुष्ठानं तद्वर्जनं च । ¶ बौवि.

¹मिथ्यैतदिति गौतमः ॥

$ पमा., संर. स्मृचगतम् ।

¶ मुक्ता. बौविवत् । विपा. बौविगतम् ।

(१) बौध. १।२।७ ; अप. १।५३ पृ. ८२ ; ब्रक. २९ ; स्मृच. १।१९९ ; कुर. ३५ ; चमव्या. ९६ दिति + (तु) ; मुक्ता. १३१, ४२६ ; संम. ५३ ; संप्र. ७२२ ; संकौ. १७५ ; आन. ५०८ गौतमः (हारीतः) ; साप्र. ८.



²उभयं चैव नाऽऽद्रियेत ॥

¹शिष्टस्मृति[?]विरोधदर्शनाच्छिष्टागमविरोधदर्शनाच्च ॥

(१) स्मृतिविरोधश्च दर्शितः— 'ऊर्ध्वं मातृबन्धुभ्यः पञ्चमात्' इति । शिष्टविरोधश्चाविगमात् (? अविगानात्) । यत्पुनरुक्तम् 'न तत्र शिष्टा न सन्ति' इति, तदसंबद्धम्, 'शिष्टः पुनरकामात्मा' इति वसिष्ठस्मरणात् । न शिष्टाः कामकारेण शास्त्रविरोधे प्रवर्तन्ते । गौतमग्रहणमेकवाक्य( ता )प्रतिपादनार्थम्, अनिराकरणात् । तथा च वसिष्ठः— 'देशकुलाचारा आम्नायाविरुद्धाः प्रमाणम्' इति । आम्नायः वेदः, तदविरोधोऽस्तीति चेत्, नैतत्, भगिन्यादिगमनेऽपि तदविरोधदर्शनादतिप्रसक्तेः । तस्मान्नान्धपरंपरया अन्यायागतस्य व्यवहारस्य प्रामाण्यम् । अप. १।५३ पृ. ८२–८३

(२) यत्तु बौधायनेन 'देशप्रामाण्यम्' इत्येवमन्तमुक्त्वोक्तम्— 'मिथ्यैतदिति...दर्शनाच्च' इति, तन्न पूर्वोक्तनिराकरणार्थम्, गौतमग्रहणात्, किंतु शिष्टस्मृतिविरोधदर्शनात् गौतमस्य मातृसपिण्डापरिणयनम् $ अभि-

$ अत्र 'अभिप्रेतम्' इत्युभयोरादर्शपुस्तकयोः पाठः । स तु पूर्वशब्दे मातृसपिण्डाशब्दस्य परिणयनशब्देन समासेऽभिप्रेतेऽनुपपन्न इत्यपरिणयनशब्देन समासमुपेत्योपपादनीयः । परिणयनशब्देन समासेऽभ्युपगम्यमाने तु 'अनभिप्रेतम्' इति शुद्धिः कल्पनीया ।

(१) बौध. १।२।८ ; विश्व. १।५३ चैव (त्वेव) ; अप. १।५३ पृ. ८२ चैव ना (त्वेतन्ना) ; ब्रक. २९ चैव ना (त्वैतन्ना) ; स्मृच. १।१९९ ; कुर. ३५ (उभयं त्वेतन्नाऽऽद्रियते) ; चमव्या. ९६ यं चैव (यमेव) ; मुक्ता. १३१ चैव ना (चैतन्ना) : ४२६ ; संम. ५३ चमव्यावत् ; संप्र. ७२२ चमव्यावत् ; संकौ. १७५ चमव्यावत् ; आन. ५०८ ; साप्र. ८ चमव्यावत्.

(२) बौध. १।२।९ ; अप. १।५३ पृ. ८२ (शिष्टस्मृतिविरोधात्) एतावदेव ; ब्रक. २९ (शिष्टस्मृतिविरोधदर्शनात्) एतावदेव ; स्मृच. १।१९९ (शिष्टागमविरोधदर्शनात् शिष्टस्मृतिविरोधदर्शनाच्च) ; कुर. ३५ ब्रकवत् ;

(१ अनभि )प्रेतमिति दर्शयितुम् । एवं च यदुक्तमन्यैः— 'स्यादेवं यद्यनन्तरमेव मिथ्यैतदिति न ब्रूयात्' इति, तदप्यपास्तम् । तेन श्रुतेः स्मृतेराचाराच्च सिद्धं मातुलदुहितृपैतृष्वसेयीपरिणयनमिति सर्वमनवद्यम् ।

स्मृच. १।१९९–२००

(३) गौतमग्रहणमादरार्थम्, नाऽऽत्मीयं मतं पर्युदसितुम् । स ह्येवमाह— 'देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणम्' । तद्विरुद्धो देशादिधर्मो न कर्तव्यः । तद्विरुद्धश्चायम् । आह च गृत्समदः— 'अनुपनीतसहभोजने द्वादशरात्रमुच्छिष्टभोजने द्विगुणम्' इति । प्रायश्चित्तविधानान्निषेधः कल्प्यते । तथा 'स्त्रिया सह भोजने त्रिरात्रोपवासो घृतप्राशनं च' इति । तथा 'पर्युषितभोजने अहोरात्रोपवासः' इति संवर्तः । तथा मातुलदुहितृगमने अप्याह— 'सखिभार्यां समारुह्य मातुलस्याऽऽत्मजां तथा । चान्द्रायणं द्विजः कुर्याच्छ्वश्रूमपि तथैव च ॥' इति । तथा विवाहेऽपि— 'पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुतः ।' इति । आह च— 'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तां च गत्वा चान्द्रायणं चरेत् ॥' । एवमूर्णाविक्रयादिष्वप्याम्नायविरोधः प्रसिद्धः । ऊर्णा तावदपण्येषु पठिता । शीधुपाने गौतमः— 'नित्यं मद्यमपेयं ब्राह्मणस्य' इति । तथोभयदन्तव्यवहारे वसिष्ठः 'अश्वलवणमपण्यम्' इति प्रकृत्य 'ग्राम्यपशूनामेकशफाः केशिनश्च' इत्याह । तथा च श्रुतिः (१ तौ) 'य उभयादत्प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेत्' इति प्रायश्चित्तम् । तथा आयुधीयकेऽपि 'परीक्षार्थोऽपि ब्राह्मण आयुधं नाऽऽददीत' इति । स्वयमेव पतनीयेषु 'समुद्रसंयानम्' (२।२।२) वक्ष्यति । एवमादीन्यालोच्य 'आम्नायैरविरुद्धाः प्रमाणम्' इत्युक्तम् । अतः 'मिथ्यैतदिति गौतमः' इत्युपपन्नं भवति ।

एतदेव स्वमतमित्याह— उभयमिति । चशब्दः पक्षव्यावृत्त्यर्थः । अनुपेतादिसहभोजनमूर्णाविक्रयादि चोभयमपि न कर्तव्यमित्यभिप्रायः ।

कस्मादित्याह— शिष्टेति । शिष्टागमविरोधस्तावत् स्वयमुदितः 'पञ्चधा विप्रतिपत्तिः' (१।२।१) इत्यत्र । स्मृतिविरोधश्चानुपनीतादिसहभोजने प्रायश्चित्तविधानात् । शिष्टस्मृतिविरोधः मनुविरोधः । शिष्टो हि मनुः, तद्विरोधश्च । तत्स्मृतिः शिष्टस्मृतिः । शिष्टस्मृतिविरोधः सोऽपि दर्शित एव । एकसूत्रतां त्वेके मन्यन्ते— यथा होलाकादयो व्यवस्थितदेशविषया अप्यव्यवस्थिताः कर्तव्याः, इत्थमिमेऽपीत्यस्य चोद्यस्य व्यवस्थितदेशश्रुत्यनुमानमुक्तं 'तत्र तत्र देशप्रामाण्यमेव स्यात्' (१।२।६) इति, तत्राऽऽह— 'उभयं चैव नाऽऽद्रियेत शिष्टस्मृतिविरोधदर्शनात्' इति । स च विरोध उक्तः । तस्मादविरुद्धत्वाद्धोलाकाद्यनुष्ठानं सर्वाधिकारकम्, इह विरोधादनुपनीतसहभोजनादिवर्जनं सर्वाधिकारमिति विशेषः । आहुश्च न्यायविदः— 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति । बौवि.

(४) अथ विधिनिषेधयोः प्रत्यक्षभौतलिङ्गद्वयानुमितश्रुतिद्वयमूलकयोस्तुल्यबलतया विकल्प एव देशभेदेन व्यवस्थितो मन्तव्यः । तथा च बौधायनः— 'पञ्चधा विप्रतिपत्तिर्...देशप्रामाण्यमेव स्यात्' इति । अस्यार्थः— विप्रतिपत्तिः विरुद्धार्थानुष्ठानम् । इतरदिति । दक्षिणदेशीयं कर्मोत्तरदेशे उत्तरदेशीयं च कर्म दक्षिणदेशे कुर्वन् दुष्यति, न स्वस्वदेशे, तत्र तत्र देशनिबन्धनप्रामाण्यादिति चेत्, न, 'मिथ्यैतदिति गौतमः । उभयमेव नाद्रियेऽऽयेत । शिष्टस्मृतिविरोधदर्शनात्' इति बौधायनेनैवाग्रे विकल्पनिराकरणात् ।

तर्हि कथमयं विरोधः परिहर्तव्यः ? प्रमिताक्षरोक्तप्रकारेण इति ब्रूमः । तथाहि— '(तद्येषु पदेषु) स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात् । अथानन्वितेऽर्थे प्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन । अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्' (नि. २।१) इत्यादिनिरुक्तपरिभाषया

चमव्या. ९६ ब्रकवत् ; मुक्ता. १३१ ( दृष्टस्मृतिविरोधदर्शनात् ) एतावदेव : ४२६ ब्रकवत् ; संम. ५३ ब्रकवत् ; संप्र. ७२२ ब्रकवत् ; आन. ५०८ ब्रकवत् .

श्रुतिस्मृतिविरुद्धस्यार्थस्य अनन्वितत्वेन प्रादेशिकविकारेणार्थे निर्णीयाविरुद्धोऽर्थः संपादनीयः । स च यथा 'आ नो भर प्रमगन्दस्य वेद' इत्यादौ नित्यानित्यसंयोगविरोधेन प्रसिद्धमपि राजानं प्रमगन्दपदस्य अर्थं विहाय 'प्रकृष्टं मह्यं गमयिष्यतीति यो ददाति स प्रमगन्दः' इति व्युत्पत्त्या वार्धुषिकः प्रमगन्दपदस्य अर्थः कल्प्यते, यथा वा कीकटशब्दार्थे प्रसिद्धमपि देशविशेषं विहाय 'किं कृतेन इति ये वदन्ति ते कीकटा नास्तिकाः' इति कल्प्यते, तथा 'मातुस्तुल्यं लक्षणं यस्य' इति निरुक्त्या मातुलशब्देन मातृमुखो गृह्यते । पितृष्वसाशब्देन च 'स्वसा सुअसा स्वेषु सीदति इति वा' (नि. ११।३२) इति च निरुक्त्या पितुः स्वे रूपे सीदति इति पितृष्वसा इति पितृसदृशमुखी इत्यर्थो निर्णेयः । तथा च मातृमुखेन पुरुषेण पितृमुख्यां कन्यायामुत्पादिता कन्या यथा भजनीया भवति तथा इयं वपा तव भजनीया इत्यर्थः । उक्तं च सामुद्रिकसारे– 'धन्या पितृमुखी कन्या धन्यो मातृमुखः सुतः । तयोर्धन्यतरोत्पन्ना कन्या भाग्येन लभ्यते ॥' इति । 'मातुलस्येव योषा, पैतृष्वसेयीव' इति च दृष्टान्तद्वयं विशिष्टकन्या–अलाभे अन्यतराऽपि प्रशस्तेति गमयितुम् । यद्येवमपि 'मातुलस्य योषा पैतृष्वसेयी लोकस्य भजनीया' इत्यन्वये लोकस्य इति कर्त्रध्याहारो दोषः, तर्हि 'मातुलस्य योषा कन्या भागिनेयस्य, पैतृष्वसेयी मातुलपुत्रस्य' इति भवताम् अध्याहारद्वयं कथमदोषमापद्यते ? वस्तुतस्तु अस्माकमीषदपि नाध्याहारः, यतः मातुस्तुल्यं लक्षणं नाम यस्य इति व्युत्पत्त्या मातृसमाननामा पुलोमापत्यं पुलोमा गृह्यते । तस्य मातुलस्य पुलोम्नः या अपत्यं शची सा च पैतृष्वसेयी, पितॄणामग्निष्वात्तादीनां स्वसा शची, तदपत्यत्वात् । शची इन्द्राणी यथा ते भागः तथा इयं वपा ते भाग इत्यर्थः । तदेतत्सर्वं महाभारतमत्स्यपुराणादिषु स्पष्टमभिहितम्– 'पुलोमा कालका चैव वैश्वानरसुते उभे । बह्वपत्ये महासत्त्वे मरीचेस्तु परिग्रहः ॥ तयोः पुत्रसहस्राणि षष्टिर्दानवनन्दनाः ॥' इत्युपक्रम्य 'पौलोमाः कालकेयाश्च दानवास्ते महाबलाः ।' इति मध्ये अभिधाय, 'वैश्वानरः पुलोमा च विद्रावणमहार्णवा ।' इत्युक्त्वा, 'स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता' इत्यन्ते अभिहितम् । तथा– 'अग्निष्वात्तादिकानां तु पितॄणां सा शची स्वसा । पुलोमा जनयामास तस्यां नाम्ना शचीं सुताम् ॥' इति । तथा– 'शच्यां तु जनयामास जयन्तं तनयं हरिः ।' इत्यादि । तस्मादिदमित्थमेव व्याख्येयम्, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥' इति स्मरणात् । तस्मात् एतन्मन्त्रलिङ्गकल्पितविधिवशेन मातुलकन्यापरिणयनं न कथंचन सिध्यति । यदस्य 'आगमिष्यन्ति शक्रो देवताः' (नि. १४।३१) इत्याद्येतन्मन्त्रनिरुक्तत्वेन केचित्पठन्ति, तदपि सर्वदेशीयवैदिकपाठाभावेन भाष्यकारापरिग्रहेण च न प्रमाणत्वेन शङ्कनीयम् ।

यद्यपि प्रद्युम्नानिरुद्धार्जुनादीनां मातुलकन्यापरिणयनमत्र प्रमाणमिति, तदपि विधवयोः प्रभावत्युलूप्योः परिणयनवत्, 'कतकभरद्वाजौ व्यत्यस्य भार्ये जग्मतुः', 'वसिष्ठश्चाण्डालीमक्षमालामुपयेमे', 'प्रजापतिः स्वां दुहितरमभ्यध्यायत्' इत्यादिवत्, परशुरामस्य मातृशिरश्छेदवत्, पाण्डवानां द्रौपदीपरिणयवच्च धर्मव्यतिक्रम एव, प्रत्यक्षश्रुतिस्मृतिविरोधात् । तथा च गौतमः– 'दृष्टो धर्मव्यतिक्रमः साहसं च महताम्' (गौध. १।३,४) इति । न च तैः कृतमिति अस्मदादिभिरपि कर्तव्यम् । तत्रापि हेतुमाह स एव– 'अवरदौर्बल्यात्' (गौध. १।५) इति । अवरेषां अस्मदादीनां दुर्बलत्वात् । तथा च श्रूयते– 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः ॥' इति । 'अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् ॥' इति । भागवतेऽपि– 'तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ।' इति । अत एव बृहस्पतिरपि 'उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।' इति अनाचारेष्वेव तत्परिगणयति । सोऽपि कलौ निषिद्धः, 'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ।' इति ब्रह्मपुराणात् ।

मातुः सपिण्डो मातुलः अत एव कलिनिन्दाप्रक्रमे व्यासोऽपि– ' तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा । शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥ ' । इत्यलं वृद्धविरोधेन । संप्र. ७२२–७२५

आर्यावर्तशिष्टाचारः प्रमाणम्

**[1]प्रागदर्शनात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्यावर्तम् । तस्मिन् य आचारः स प्रमाणम् ॥**

अथ शिष्टदेशानाह– प्रागदर्शनादिति । तत्रापि शिष्टस्मृतिविरोधेऽनपेक्ष्यमेव । बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

वेदाः धर्मज्ञसमयश्च प्रमाणम्

**[2]अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः ॥**

अथशब्द आनन्तर्ये । अतःशब्दो हेतौ । उक्तानि श्रौतानि गार्ह्याणि च कर्माणि । तानि च वक्ष्यमाणान् धर्मानपेक्षन्ते । कथम् ? ' आचान्तेन कर्म कर्तव्यम् ', 'शुचिना कर्तव्यम् ' इति वचनादाचमनशौचादीनपेक्षन्ते । ' संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । ' इति वचनात् संध्यावन्दनम् । एवम् ' अशुचिकरनिर्वेशः ' (आध. १।२९।१८, २।१२।२२) 'द्विजातिकर्मभ्यो हानिः पतनम्' (गौध. २१।४) इति वचनात् ब्रह्महत्यादिप्रायश्चित्तानि च । एवमन्येष्वपि यथासंभवमपेक्षा द्रष्टव्या । अतस्तदनन्तरं सामयाचारिकान् धर्मान् व्याख्यास्यामः । पौरुषेयी व्यवस्था समयः । स च त्रिविधः– विधिर्नियमः प्रतिषेधश्चेति । तत्र प्रवृत्तिप्रयोजनो विधिः ' संध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ' (आध. १।३०।८) इत्यादिः । निवृत्तिप्रयोजनावितरौ । 'प्राङ्मुखोऽन्नानि भुञ्जीत' (आध. १।३१।१) इति नियमविधिः । क्षुदुपघातार्था भोजने प्रवृत्तिः । शक्यं च यत्किंचिद्दिङ्मुखेनापि भुञ्जानेन क्षुदुपहन्तुम् । तत्र नियमः क्रियते– ' प्राङ्मुख एव भुञ्जीत, न दक्षिणादिमुखः ' इति । परिसंख्या तु नियमस्यैव क्रियानपि भेदः । एवं द्रव्यार्जने रागात्प्रवृत्तं प्रति नियमः क्रियते– ' याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो द्रव्यमार्जयेत्, न कृषिवाणिज्यादिना ' इति । ' ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ' ( आध. १।३१।६ ) इत्यादिः प्रतिषेधः । समयमूला आचाराः समयाचाराः, तेषु भवाः सामयाचारिकाः । एवंभूतान् धर्मानिति । कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः । तद्धेतुभूतकर्तव्याख्यानमेव तद्व्याख्यानम् । तत्र विधिषु तावद्विषयानुष्ठानाद्धर्म इति नास्ति विप्रतिपत्तिः । नियमेष्वपि नियमानुष्ठानाद्धर्मः, प्रतिषेधेष्वपि नञर्थानुष्ठानाद्धर्म इति केचित् । अत एव धर्मानित्यविशेषेणाऽऽह । अन्ये तु– विधिष्वेव धर्मः, इतरयोस्तु विपरीतानुष्ठानादधर्मः केवलम्, न तु विषयानुष्ठानात् कश्चिद्धर्मः । न ह्यप्रतिगृह्णन्नपिबन्वा सुरां धार्मिक इति लोके प्रसिद्धः । सूत्रे तु धर्मग्रहणमधर्मस्याप्युपलक्षणमिति स्थितिरिति । § उ.

**[1]धर्मज्ञसमयः प्रमाणम् ॥**

**वेदाश्च ॥**

( १ ) किं भोः समयः अपि प्रमाणम् ? यदि स्यादिदमपि प्रमाणं भवितुमर्हति– 'चैत्यं वन्देत स्वर्गकामः', ' प्रगे भुञ्जीत ', ' केशानुल्लुञ्छेत् ', ' तिष्ठन् भुञ्जीत ', 'न स्नायात् ' इति । तत्राऽऽह– धर्मज्ञेति । न हि ब्रूमः समयमात्रं प्रमाणमिति । किं तर्हि ? धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः । कथं पुनरिदमवगतं मन्वादयो धर्मज्ञाः, न बुद्धादय इति ? यदुच्यते– बुद्धादीनामतीन्द्रियेऽर्थे ज्ञानं न संभवतीति, तन्मन्वादिष्वपि समानम् । अथ तेषां धर्मज्ञानातिशयादतीन्द्रियेऽपि ज्ञानं

---

( १ ) बौध. १।२।१०.

( २ ) आध. १।१।१; हिध. २६।१।१; आन. १४; आभू. २.

§ आभू. उज्ज्वलानुवादः ।

( १ ) आध. १।१।२–३; हिध. २६।१।२–३ (धर्मज्ञसमयः ॥ प्रमाणं वेदाः ॥ ); स्मृच. १।९, ३२; पमा. १।१२७; मुक्ता. २; आन. १४.

संभवतीति, तत् बुद्धादिष्वपि समानम् । यथाऽऽहुः— ‘सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा । तावुभौ यदि धर्मज्ञौ मतभेदः कथं तयोः ॥’ इति । वक्तृभ्यो वा विशेषः । तमाह— वेदाश्चेति । चोऽवधारणे । वेदा एव मूलप्रमाणं धर्माधर्मयोः । न च नित्यनिर्दोषेषु वेदेषूक्तोपालम्भसंभवः । स्वतःप्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामाण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणम्, धर्मज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह— ‘वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥’ (मस्मृ. २।६)। गौतमोऽपि— ‘वेदो धर्ममूलम् । तद्विदां च स्मृतिशीले’ (गौध. १।१–२) इति । यद्यप्यप्रत्यक्षो वेदः मूलभूतोऽस्मदादिभिर्नोपलभ्यते, तथापि मन्वादय उपलब्धवन्तः इत्यनुमीयते । वक्ष्यति— ‘तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते’ (आध. १।१२।१०) इति । $ उ.

(२) ननु ‘वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥’ (मस्मृ. २।६) इत्यादिना श्रुतेरेव मुख्यं प्रामाण्यमभिहितम्, तन्मूलकत्वेन स्मृत्यादीनाम् । आपस्तम्बादिभिस्तु ‘‡ धर्मज्ञसमयः प्रमाणम् । वेदाश्च । अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः’ इत्यादिना धर्मज्ञानां मन्वादीनां समयः शास्त्रम्, तदेव प्रमाणम् इति प्रथममुपन्यस्य ‘वेदाश्च’ इति वेदानां प्रामाण्यमुपसर्जनतया उपन्यस्तमिव भाति । कथमिदमिति चेत्, उच्यते— यद्यपि सर्वप्रमाणमूलतया श्रुतिरेव मुख्यं प्रमाणम्, अथापि श्रुतिपुराणेषु विशकलिततयोपदिष्टानां धर्माणां तत्तद्वर्णाश्रमव्यवस्थापुरःसरं सर्ववेदपुराणार्थतत्त्वज्ञैर्मन्वादिभिरभिहितं धर्मशास्त्रमेव मुख्यं प्रमाणमित्यभिप्रायेणेति वेदितव्यम्, वेदस्यातिगम्भीरार्थत्वात् । तथा चात्रिः— ‘बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति’ (अत्रिसं. ३।७)। प्रतरेदिति वञ्चयेदित्यर्थः । अन्यथाऽर्थकल्पनादित्यर्थः । यथा— धर्मशास्त्रे युगान्तरविषये ‘शशः कूर्मश्च पञ्चमः’ इति पञ्चनखभक्षणं विहितम् । अल्पश्रुतः कश्चित् “‘न कूर्मस्याश्नीयात्’ इति श्रुत्या कूर्मभक्षणे निषिद्धे स्मृतिवाक्यात् कथं कूर्मभक्षणं भवति ? स्मृत्यपेक्षया श्रुतेर्बलीयस्त्वात्” इति ब्रूते । एवंवादिनं प्रति वेदो बिभेतीत्यर्थः, अस्य कृतकूर्मोपधानपुरुषविशेषे व्यवस्थितत्वात् । तथा ऋग्वेदे कांचिदृचमुदाहरन्तः केचन मातुलसुतादिविवाहमाचरन्ति । यदि तस्याः श्रुतेर्मातुलसुताविवाहविधानमर्थः, तदा ‘पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तां च गत्वा चान्द्रायणं चरेत् ॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नरः ॥’ (मस्मृ. ११।१७१, १७२) इति मनुर्न ब्रूयात् । भगिनीं भगिनीतुल्यामित्यर्थः, मातुर्भ्राता मातुलः, तस्य आप्तां दुहितरमित्यर्थः, इति तद्व्याख्याने । ज्ञातित्वेन ज्ञातित्वेनेत्यर्थः । गौतमोऽपि मातृयोनिसंबन्धागो महापातकितुल्य इति नोपदिशेत् । तथा प्रत्यक्षश्रुत्या शूद्रेण दोहे निषिद्धेऽपि ‘दुह्याद्वा’ (आपश्रौ. १।१२।१६) इत्यापस्तम्बसूत्रमेव प्रमाणयन्ति शिष्टाः । अतः सर्वैर्गम्भीरार्थस्य वेदस्य दुर्ज्ञेयार्थत्वेन वेदतत्त्वार्थवेदिभिर्मन्वादिभिः प्रणीतधर्मशास्त्रमेव मुख्यं प्रमाणमित्यङ्गीकर्तव्यमिति भावः, तेषामेव वेदार्थवित्तमत्वात् । अतो धर्मशास्त्रसिद्ध एवाऽऽचारोऽङ्गीकर्तव्य इति स्थितम् । आन. १४–१६

श्रुतिराचाराद्बलीयसी, आचारः दृष्टमात्रप्रयोजनः न प्रमाणम्, प्रत्यक्षश्रुत्याऽनुक्तः अदृष्टप्रयोजनः आचारः प्रमाणमुत्सन्नश्रुतिमूलकत्वेन

**[1]श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥**

केचित्तु श्रुतिविप्रतिषिद्धमाचारशेषमुपयुञ्जाना दृश्यन्ते पूर्वैः पूर्वं आचारः प्रमाणमिति वदन्तः । तान्निराकरोति

$ स्मृच. उद्धृतम् ।

‡ अत्र सूत्रक्रमभेदो लेखकप्रमादात् ।

(१) आध. १।४।८–१०; हिध. २६।१।१२७–१२९.

– श्रुतिरिति । अनुमानाय प्रभवतीत्यानुमानिकः । आचारात् हि श्रुतिः स्मृतिर्वाऽनुमीयते । तस्मात् आनुमानिकात् आचारात् प्रत्यक्षश्रुतिः बलीयसी । तद्विरोधे तु नानुमातुं शक्यते, 'अनुमानमबाधितम्' इति न्यायात् । एवं च ब्रुवता ब्रह्मचारिणः क्षारलवणादिप्रतिषेधः प्रत्यक्षब्राह्मणमूल इति दर्शितं भवति । यद्यपि क्षारादिप्रतिषेधश्रुतेरुच्छिष्टव्यतिरिक्तो विषयः संभवति तथापि संकोचोऽपि तस्या अविशेषप्रवृत्ताया आनुमानिकात् आचारात् अयुक्तः । उ.

**दृश्यते चापि प्रवृत्तिकारणम् ॥**

ननु परस्परविरुद्धा अपि श्रुतय उपलभ्यन्ते– '§गृह्णाति, न गृह्णाति' इति । तत्किमाचारात् संकोचिका श्रुतिः नानुमीयते ? अत आह– दृश्यत इति । स्यादेवं यद्ययमाचारोऽगृह्यमाणकारणः स्यात् । गृह्यते तु तत्र कारणम् । उ.

**प्रीतिहर्युपलभ्यते ॥**

किं तत्– प्रीतिरिति । क्षारादिभोजने भुञ्जानस्य प्रीतिर्भवति । ततश्च 'यत्र प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति तदनुवर्तमानो नरकाय राध्यति' (आध. १।१२।११, १२) इति न्यायान्न संकोचिका श्रुतिरनुमीयते इति । उ.

† '**ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते ॥**

(१) प्रत्यक्षा हि श्रुतयः श्रौतेषु, स्मार्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः । स्मार्तानामपि हि वेदमूलत्वमुक्तम् । तस्मात् प्रत्यक्षश्रवणात् तान्येव पूर्वमभिधीयन्ते, न गर्भाधानादीनि । अपरे त्वन्यथा वर्णयन्ति– स्मरणादेव स्मृतीनां प्रामाण्यम् । अव्यवच्छिन्नं हि स्मरणमष्टकादीनाम् 'अष्टकाः कर्तव्याः' इति । अनादिरयं संसारः, स्मरणमप्येषामनाद्येवेति । ननु चोक्तमापस्तम्बेन– 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति । अतो वेदमूलकत्वम् । नैतदेवम् । शाखानां सतीनामुत्सादो भवति, नासतीनाम् । तत्रायं दोषः स्यात्– य एव कश्चित् कांचित् शाखां न पठति तस्यैतद्विहितं स्मार्तं स्यात्, यस्तु पुनः पठेत् तस्य श्रौतमिति । तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्तं चेत्ययुक्तरूपता स्यात् । स्मरणात् स्मृतिरिति चान्वर्थिका संज्ञा । युक्तकर्मानुष्ठानं(? न–) स्मरणं मनुगौतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम् । तस्मात् कर्तृसामान्यादनुष्ठेयोऽयमर्थः इत्यनुमीयते । तथा च लिङ्गम्– नैमित्तिकं व्याहृतिहोमं प्रकृत्याऽऽमनन्ति– 'यद्युक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ, यदि यजुष्टो भुव इत्याग्नीध्रीये, अन्वाहार्यपचने वा हविर्यज्ञे, यदि सामतः स्वरित्याहवनीये' इति प्रकृत्याऽऽह– 'यद्यविज्ञातं तत्सर्वाण्यनुद्रुत्याऽऽहवनीये जुहवथ' (शब्रा. ११।५।८।६) इति । अविज्ञातं च यत्र विज्ञायते किमार्ग्वेदिकं याजुर्वेदिकं सामवेदिकं वेति विनष्टं कर्म तत्स्मार्तमविज्ञातमित्युच्यते । वेदमूलत्वे ह्यवश्यमेवान्विष्यमाणं ज्ञायेत तत्किंमूलमिति । तस्मात् स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते । कभा. १–२

(२) केचिदुत्सन्नशाखापूर्विकां स्मृतिमाहुः । तदयुक्तम् । तत्र विचार्यते– किं स्मरणात्पूर्वमेव नष्टाः शाखाः, उतोत्तरकालमिति । यदि पूर्वम्, तत्र स्मरणं नोपपद्यते, विनष्टत्वात्, पूर्वविज्ञानसदृशत्वात्स्मृतेः । यद्युत्तरकालम्, तदोत्सन्नशाखापूर्वकत्वं वक्तुं न युज्यते, तदानीमुपलभ्यमानत्वात् । आपस्तम्बोक्तस्याप्ययमभिप्रायः– उत्सन्नाः क्वचित्क्वचिद्देशे, न सर्वत्रेति । 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इत्यत्रापि (एवं) व्याख्या कर्तव्या । मभा. १।६

§ 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति श्रुतिः ।

† अस्य सूत्रस्य विश्वव्याख्यानमस्मिन्नेव प्रकरणे 'श्रुतिः स्मृतिः' (यास्मृ. १।७) इति याज्ञवल्क्यवचने द्रष्टव्यम् ।

(१) आध. १।१२।१० ; हिध. २६।४।१०–११ ; विश्व. १।७ पृ. २५ ; मेधा. २।६ पृ. ६३ ; कभा. १ (ब्राह्मणोक्ता विधयः०) ; मभा. १।६ पृ. ७ : पृ. ९ कभावत् ; गौमि. १।२ कभावत् ; जभा. ४ ; मुक्ता. १ कभावत् ; संग. ४ (तासामुच्छिन्नाः पाठाः प्रयोगैरनुमीयन्ते) एतावदेव.

(३) कथं पुनरार्यसमयः प्रमाणम्? यावता न तेषामतीन्द्रियेऽर्थे ज्ञानं संभवति, तत्राऽऽह— ब्राह्मणोक्ता इति। विधीयन्त इति विधयः कर्माणि। ते सर्वे स्मार्ता अपि ब्राह्मणेष्वेवोक्ताः। नन्विदानीं ब्राह्मणानि नोपलभ्यन्ते। सत्यम्, तेषामुत्सन्नाः पाठा अध्येतृदौर्बल्यात्। कथं तर्हि तेषामस्तित्वम्? प्रयोगात् अनुमीयन्ते। प्रयोगः स्मृतिनिबन्धनमनुष्ठानं च। तस्माद्ब्राह्मणानि अनुमीयन्ते मन्वादिभिरुपलब्धानीति। कथमन्यथा स्मरेयुरनुतिष्ठेयुर्वा? संभवति च तेषां वेदसंयोगः। उ.

(४) श्रौतस्मार्तत्वचिन्ताप्रयोजनं नित्यत्वादिज्ञापनार्थं श्रौतं नित्यं काम्यं स्मार्तं च नित्यमिति। † धमा. ४

(५) यद्यप्यप्रत्यक्षो वेदो धर्मस्य मूलभूतोऽस्मदादिभिर्नोपलभ्यते तथापि मन्वादय उपलब्धवन्त इति अनुमीयते। यथाऽऽहाऽऽपस्तम्बः— 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति। तथा च प्रत्यक्षो वेदः तेषां धर्मप्रमाणम्, अन्येषां वेदाः स्मृत्यादिकं च प्रमाणमित्यर्थः। मुक्ता. १

[1]यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ॥

(१) लौकिकप्रमाणतः प्रीतिसाधन(त्व)ज्ञानाद्यत्र प्रवर्तते न तत्र शास्त्रव्यापारः। ब्रक. १८

(२) अथ प्रसङ्गादपस्मृतिरुच्यते— यत्रेति। यत्र पितृष्वसृसुतामातुलसुतापरिणयनादौ प्रीत्युपलब्धितः प्रवृत्तिः, न तत्र उत्सन्नपाठं शास्त्रमनुमीयते, प्रीतेरेव प्रवृत्तिहेतोः संभवात्। उ.

(३) 'यत्र प्रीत्युपलब्धितः' इति लौकिकप्रमाणतः प्रीतिसाधनत्वज्ञानाद्यत्र प्रवर्तते न तत्र निन्दिते शास्त्रं प्रयुङ्क्ते। कुर. २४

---

† शेषं कभावत्।

(१) आध. १।१२।११; हिध. २६।४।१२; ब्रक. १७ (तु०) तत्र (त्वत्र); कुर. २४ लब्धितः (लम्भितः); मुक्ता. १३१.

[1]तदनुवर्तमानो नरकाय राध्यति ॥

(१) नरकाय राध्यति नरकवशो भवति, '‡रध्यतिर्वशगमने' (नि. ६।३२) इति निरुक्तकारवचनात्। † ब्रक. १८

(२) ततश्च— तदिति। तत् विधानम् अनुतिष्ठन् नरकायैव राध्यति कल्पते। उ.

आर्यैः प्रशंसितो धर्मः, गर्हितः अधर्मः, आर्यलक्षणानि च

[2]यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः ॥

(१) यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह— यमिति। आर्याः शिष्टास्त्रैवर्णिकाः। बहुवचनाच्चत्वारस्त्रयो वा। यथाऽऽह याज्ञवल्क्यः— 'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः॥' (यास्मृ. १।९) इति। उ.

(२) धर्मज्ञाने लक्षणमाह— यं त्विति। आन. ५

[3]सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥

---

‡ चिन्त्यमिदम्। राध्यतिः प्रकृतः, रध्यतिविषयकं तु निरुक्तवचनम्। राध्यतिः रध्यतिश्च भिन्नौ धातू। धातूनामनेकार्थत्वात्तु राधेरत्र वशगमनार्थत्वं सुवचम्, वशगमनक्रियाया अकर्मकत्वात्, 'राधोऽकर्मकाद्वृद्धावेव' इति गणसूत्रेणाकर्मकक्रियावाचिन एव राधेः श्यनो विधानात्।

† कुर. ब्रकगतम्।

(१) आध. १।१२।१२; हिध. २६।४।१३; ब्रक. १७; कुर. २४ राध्यति (वाध्यति); मुक्ता. १३१.

(२) आध. १।२०।७; हिध. २६।६।२१ यं त्वा (यत्त्वा) यं ग (यद्ग); ब्रक. ६ गर्हन्ते (विगर्हन्ति); बस. १० ब्रकवत्; कुर. ८ ब्रकवत्; मुक्ता. ३ हिधवत्; पप्र. ३२ ब्रकवत्; आन. ५ (यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः) एतावदेव.

(३) आध. १।२०।८; हिध. २६।६।२२ मार्याणां (माचार्याणां); कुर. ८ मात्मवताम (मेवम); मुक्ता. ३.

इदानीं श्रुतिस्मृत्योः प्रत्यक्षयोरदर्शने शिष्टाचारादप्यवगम्यो धर्मः कार्य इत्याह— सर्वजनेति । सम्यग्विनीताः 'आचार्याधीनः स्यात्' (आध. १।२।१९) इत्यादिना विनयसंपन्नाः । वृद्धाः परिणतवयसः । यौवने विषयवश्यताऽपि स्यादितीदमुक्तम् । आत्मवन्तः जितेन्द्रियाः । अलोलुपाः अकृपणाः । अदाम्भिकाः अधर्मध्वजाः एकान्तप्रकाशयोरेकवृत्ताः । एवंभूतानामार्याणां सर्वजनपदेषु यत् एकान्तेन अव्यभिचारेण समाहितम् अनुमतं वृत्तम् अनुष्ठानम्, न मातुलसुतापरिणयनवत्कतिपयविषयम्, तद्वृत्तसादृश्यं भजेत तदनुरूपं चेष्टेत । न तेषामनुष्ठानं निर्मूलम्, संभवति च वैदिकानामुत्सन्नपाठब्राह्मणानुभव इति । † उ.

'एवमुभौ लोकावभिजयति ॥

एवं श्रुतिस्मृतिसदाचारमूलमनुष्ठानं कुर्वन् उभौ लोकावभिजयति इमं चामुं च । † उ.

श्रुतिः स्मृतेर्बलीयसी

'विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥

( १ ) विप्रतिषेधे श्रौतेन होमादिना सह विरोधे श्रुतिलक्षणं श्रौतमेवानुष्ठेयत्वेन बलीयः, न स्मार्तम् । निक. २३

(२) विरोधः विप्रतिषेधः । अग्निहोत्रिणो बहिरासनमग्निहोत्रहोमश्च विरुध्येते । तथा च श्रूयते— 'समुद्रो वा एष यदहोरात्रस्तस्यैते गाथे तीर्थे यत्संधी तस्मात्संधौ होतव्यम्' इति । तत्र श्रुतिलक्षणम् अग्निहोत्रमेव कर्तव्यम्, न स्मार्तं बहिरासनम्, तस्य कल्प्यमूलत्वात्, इतरस्य च क्लृप्तमूलत्वादिति । जैमिनिरप्याह— 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति । ¶ उ.

( ३ ) श्रुतिस्मृत्योर्विप्रतिषेध इत्यर्थः । आन. ९७

धर्मव्यतिक्रम—साहसरूपशिष्टाचारस्य न प्रामाण्यम्

'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् ॥

( १ ) शिष्टाचारप्रामाण्येऽतिप्रसङ्गनिवारणायाऽऽह आपस्तम्बः — दृष्ट इति । व्यतिक्रमः बुद्धिपूर्वं रागादाचरणम्, यथेन्द्रस्याहल्यागमनम् । साहसं क्रोधादिना अविमृष्यकरणम्, यथा वसिष्ठस्य जलप्रवेशः । ब्रक. २७

(२) यदि पूर्ववत्यादिषु मैथुने दोषः, कथं तर्हि उतथ्यभारद्वाजौ व्यत्यस्य भार्ये जग्मतुः ? वसिष्ठश्चाण्डालीमक्षमालाम् ? प्रजापतिश्च स्वां दुहितरम् ? तत्राऽऽह— दृष्ट इति । सत्यम्, दृष्टः अयमाचारः पूर्वेषाम् । न चैतावदेव, साहसं च पूर्वेषां दृष्टम् । यथा जामदग्न्येन रामेण पितृवचनादविचारेण मातुः शिरः छिन्नम् । उ.

( ३ ) सोऽयं पुरुषविशेषस्यैव व्यतिक्रमः । कश्चित्तु देशाचारव्यतिक्रमरूपः । † कुर. ३५

'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥

तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः ॥

( १ ) अवलः अतेजस्कः अब्रह्मज्ञ इति यावत् । अवरजः इदानींतनः ।

तेजः ब्रह्मज्ञानम् । तद्विशेषेण साक्षात्करणम्-(?णेन) । 'यथा पुष्करपालाश आपो न श्लिष्यन्ति ।

---

† मुक्ता. उगतम् ।

( १ ) आध. १।२०।९ ; हिध. २६।६।२३ एवमु ( एवं वर्तमान उ ) ; कुर. ८ ; निप्र. २।४८१ जयति ( जायते ) ; मुक्ता. ३.

( २ ) आध. १।३०।९ ; हिध. २६।८।९ ; निक. २२ ; स्मृच. २।३९९, ६२४ ; मुक्ता. ३१५, ३३८ ; आप्र. १४७, ५५४ ; आन. ९७ ; आभू. ८८.

¶ स्मृच., मुक्ता., आप्र., आभू. उगतम् ।

† शेषं ब्रकवत् ।

( १ ) आध. २।१३।७ ; हिध. २७।३।७ ; ब्रक. २७ च ( चैव ) ; कुर. ३३ ब्रकवत् ; मुक्ता. ५.

( २ ) आध. २।१३।८–९ ; हिध. २७।३।८–९ ; ब्रक. २७ वरः ( वरजोऽबलः ) ; गौमि. १।४ वरः ( वरको जनः ) श्रुतिः ; स्मृच. १।७ ब्रकवत् ; कुर. ३३ ( तेषां० ) शेषं ब्रकवत् ; मुक्ता. ५ ; संप्र. ७२४ सर्वं गौमिवत्.

एवमेवंविदि पापं कर्म न श्लिष्यते ' (छाउ. ४।१४।३) इति ब्रह्मज्ञानिन एव पापानाश्लेषश्रुतेः । ब्रक. २८

( २ ) किमिदानीं तेषामपि दोषः ? नेत्याह– तेषामिति । तादृशं हि तेषां तेजः यदेवंविधैरपि पाप्मभिर्न प्रत्यवयन्ति, ' तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य ( सर्वे ) पाप्मानः प्रदूयन्ते ' ( छाउ. ५।२४।३ ) इति श्रुतेः ।

न चैतावताऽर्वाचीनानामपि तथा प्रसङ्ग इत्याह– तदन्वीक्ष्येति । तत् इति ' नपुंसकमनपुंसकेन ' ( पासू. १।२।६९ ) इत्येकशेष एकवद्भावश्च । तं व्यतिक्रमं तत्र साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि तथा प्रयुञ्जानः अवरः इदानीन्तनः सीदति प्रत्यवैति । न ह्यग्निः सर्वं दहतीत्यस्माकमपि तथा शक्तिरिति । उ.

( ३ ) अवरजः इदानीन्तनः । अबलो निषिद्धक्रियाजन्यानिष्टोदयविरोधिधर्मशून्यः । § कुर. ३४

**'त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते ॥**

( १ ) शैवादिशास्त्रोक्तस्याप्रामाण्यमाचारस्याऽऽह आपस्तम्बः– वेदा इति । अप. ११७ पृ. १३

( २ ) त्र्यवयवा विद्या त्रिविद्या त्रयो वेदाः । तां ये पाठतश्चार्थतश्च विदन्ति ते त्रैविद्याः । तेषु पक्वज्ञानाः त्रैविद्यवृद्धाः । तेषां वेदशास्त्रविदां वेदाः एव प्रमाणमतीन्द्रियेऽर्थे इति निष्ठा निर्णयः । यथाऽऽह भगवान् जैमिनिः– ' चोदनालक्षणोऽर्थो धर्मः ' (जैसू. १।१।२ ) इति ' प्रत्यक्षमनिमित्तम् ' ( जैसू. १।१।४ ) इति च । ततश्च तत्र वेदे यानि कर्माणि श्रूयन्ते, किंलक्षणानि ? व्रीहियवादिभिः संबद्धानि ' उच्चैः ऋचा क्रियते, उपांशु यजुषा ' इत्येवंप्रकाराणि ( च ), तैः विरुद्धः आचारः प्रमाणं न भवतीति मन्यन्ते । एतदुक्तं भवति– सर्वेषु वेदेषु सर्वासु च शाखासु अग्निहोत्रादीनि विश्वसृजामयनपर्यन्तानि कर्माण्येव तात्पर्यतया विधीयन्ते । अतो गार्हस्थ्यमेव श्रेष्ठम् । ऊर्ध्वरेतसां त्वाश्रमास्तद्विरुद्धा नैवाऽऽश्रयणीयाः, यदि वेदाः प्रमाणमिति । तथा च गौतमः– ' ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य ' ( गौध. ३।३६ ) इति । एवं गार्हस्थ्यं प्रशस्यते । † उ.

§ शेषं ब्रकगतम् ।

( १ ) आध. २।२३।९ ; हिध. २७।५।१६३ ऽप्र (न प्र) ; अप. ११७ पृ. १३ ( त्रैविद्यवृद्धानां तु० ) पत्नी (पात्री) कार्यमिति तै (कार्याणीति । तै) ; मुक्ता. १६७.

धर्मविशेषनिर्णयः धर्मसामान्यनिर्णयात्

**'कृच्छ्रा धर्मसमाप्तिः समाम्नानेन, लक्षणकर्मणाऽऽत्तु समाप्यते ॥**

समाम्नानं प्रतिपदपाठः । तेन धर्मसमाप्तिः कृच्छ्रा न शक्या कर्तुम् । किंतु लक्षणकर्मणा समाप्यते, येन सामान्येन भिन्नानामप्यधिगमो भवति तल्लक्षणम् , तस्य कर्मणा करणेन समाप्यते । कर्मणा त्विति द्वितकारपाठोऽयमार्षः । आदिति वा निपातस्य प्रश्लेषः । स च सद्य इत्यस्यार्थे द्रष्टव्यः । उ.

**तत्र लक्षणम् ॥**

**‡ 'सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत । एवमुभौ लोकावभिजयति ॥**

पूर्वेण गतम् । उ.

स्त्रीणां सर्ववर्णानां च आचाराः तत्तद्देशाचाराश्च तत्तद्देशेषु प्रमाणम्

**'स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयादित्येके ॥**

† मुक्ता. उगतम् ।

‡ अस्य व्याख्यानम् आध. १।२०।८, ९ ( वका. पृ. ६४ ) इत्यत्र द्रष्टव्यम् ।

( १ ) आध. २।२९।१३–१४.

( २ ) आध. २।२९।१५. शेषस्थलादिनिर्देशः आध. १।२०।८–९ इत्यत्र द्रष्टव्यः.

( ३ ) आध. २।२९।१६ ; ब्रक. २७ ; कुर. ३३ ; वीमि. १।९ भ्यः सर्ववर्णेभ्यश्च (भ्यश्चावरवर्णेभ्यो).

(१) एके ये पूर्वमापस्तम्बेन ' स्त्रीषु शूद्रेषु चाऽऽथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ' ( आध. २।२९। ११–१२ ) इत्युक्ताः । ¶ ब्रक. २७

(२) उक्तव्यतिरिक्ताः ये धर्माः ते धर्मशेषाः, तान् स्त्र्यादीनामपि सकाशात् प्रतीयात् इत्येके मन्यन्ते । ते च प्रतिजनपदं प्रतिकुलं च भिन्नास्तथैव प्रतिपत्तव्याः । तत्र द्राविडाः कन्यामेषस्थे सवितर्यादित्यपूजामाचरन्ति भूमौ मण्डलमालिख्य इत्यादीन्युदाहरणानि । उ.

(३) ' स्त्रीभ्यःसर्ववर ... ( इत्येके ? ) ' इत्यापस्तम्बोक्तस्त्रीशूद्राद्याचारोऽपि वेदाद्यविरुद्धः परंपराप्राप्तः सदाचारशब्देनैव संग्राह्यः । एक इत्यनेनान्याद्दशतदाचारेऽस्वरसः सूचितः । न च स्त्र्यादीनां निरुक्तसत्त्वाभावात् शास्त्रविरोधश्च( ? श्च ) कथमेवमिति वाच्यम्, क्षीणदोषत्वेन प्रकृतार्थे भ्रा( ? र्थभ्रा )न्तेरुपलक्षणात्, अन्यथेदानींतननानां प्रायशोऽव्यापनात् । शास्त्र( ? स्त्रा)विरोधश्च सर्वथैव तदाचारेषूपसंहर्तव्यः, अन्यथेन्द्रकृताहल्यासङ्गमादेर्वशिष्ठकृताक्षमालोपयमादेश्च धर्मे प्रामाण्यापत्तेः । अत एव महाभारते– ' कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा । न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥ ' इति । आस्तामतिविस्तरः । वीमि. ११९

**'एतेन देशकुलधर्मा व्याख्याताः ॥**

' ज्येष्ठो दायादः ' ( २।१४।६ ) इत्यादिकं शास्त्रविप्रतिषेधादप्रमाणमित्युक्तम् । एतेन देशधर्माः कुलधर्माश्च व्याख्याताः । शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयनादयोऽप्रमाणम्, विपरीताः प्रमाणमिति । उ.

**'येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।**
**त एव तैर्न दुष्येयुराचारैर्नेतरे पुनः ॥**

(१) येषां पितृपितामहादिपरंपराप्राप्ताः पूर्वजैश्च त्रैविद्यवृद्धैरनुष्ठिताः आचाराः सन्ति त एव तैः आचारैः अनुष्ठीयमानैः न दुष्येयुः, § नेतरैः( ? तरे ) । स्मृच. १।१९९

(२) यत्तु वार्तिके मातुलकन्यापरिणयस्य दुराचारत्वमुक्तम्, तत्तु आसुरादिविवाहितापुत्रविषयम् । अत एव शिष्टाचारप्रामाण्यविचारवार्तिके दाक्षिणात्यमातुलकन्याविवाहस्य स्मृतिविरुद्धत्वमाशङ्क्य " सर्वेषामेवमादीनां प्रतिदेशव्यवस्थया । आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥ येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरे पुनः ॥ येषां तु पित्रादिभिरेव नानुष्ठितः स्मृतिविरुद्धस्ते परिहरन्त्येव, अपरिहरन्तो वाऽन्यैः स्वजनैः परिह्रियन्ते " इत्युक्तम् । तदप्यासुरादिविषये येषां देशे मातुलकन्यापरिणयस्य धर्म्यत्वाभिमानस्तान् प्रति । अन्येषु श्रुतिस्मृतिसंमत एव स इत्युपपादितमेव । अत एव ' सर्वत्र दुर्बलस्य प्रमाणस्य बाधे यदि किंचिदनर्थकं तदा विपरीतो बाधो बोध्यः ' इति तृतीये वार्तिके उक्तम् । साप्र. १०

## वसिष्ठः

श्रुतिस्मृतिशिष्टाचाराः प्रमाणानि

**'श्रुतिस्मृतिविहितो धर्मः ॥**

§ अत्रास्मदादर्शपुस्तकयोरुभयोरपि 'नेतरैः' इति तृतीयान्तः पाठो मुद्रितः । तत्र मैसुरपुस्तके मूलवचनेऽपि तृतीयान्त एव पाठः स्वीकृतः । सूक्ष्मेक्षिकया संशोधयद्भिरपि विद्वद्वरैर्मैसुरपुस्तकसंपादकमहोदयैस्तृतीयान्तपाठस्वीकारात्तत्र किंचिदुच्यते– यत्र पूर्वं वाक्यं सावधारणम्, उत्तरवाक्यं निषेधकं व्यावृत्तिबोधकेतरादिपदघटितं च, तत्रोत्तरवाक्यगतेतरादिपदानां पूर्ववाक्यगतावधारणव्यावृत्त्यर्थपरत्वस्यैव दरीदृश्यमानत्वेन व्युत्पन्नत्वात् ' त एव ' इत्यवधारणानुरोधेन ' नेतरे ' इति प्रथमान्तः पाठ एव साधुः । धारपुरेपुस्तके व्याख्याने ' त एव ' इत्यत्र ' तत्र ' इतिपाठसत्त्वेऽपि स प्रकृतविषयेऽकिंचित्करः, मूलवचने ' त एव ' इति पाठस्यैव तत्रापि सत्त्वादिति ।

¶ कुर. ब्रकवत् ।

(१) आध. २।१५।१ ; हिध. २७।३।३१.

(२) स्मृच. १।१९९ ; मुक्ता. १३१ राचारैर्ने (राचारा ने) ; साप्र. १०.

(१) वाध. १।४ ; अप. १।७ पृ. २० ; ब्रक. २६ ; स्मृच. १।१६, १९८ ; चव. २० ; कुर. ३२ ; मुक्ता. ७, १२८.

¹तदलाभे शिष्टाचारः प्रमाणम् ॥

(१) आचारस्यापि स्मृतिविरोधे बाध एव स्यात्, 'श्रुतिस्मृतिविहितो धर्मः । तदभावे शिष्टाचारः प्रमाणम्' इति वसिष्ठस्मरणात् । एवं परिषद्वचनेऽपि द्रष्टव्यम् । तदुक्तं चतुर्विंशतौ– 'स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत् ॥' (चम. १९२) इति । स्मृच. १।१६

(२) शास्त्रविरोधे शिष्टाचारो न प्रमाणमित्यर्थः । तथा गौतमः– 'देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्' (गौध. ११।२२) इति । मुक्ता. १२८

शिष्टलक्षणम्

†²शिष्टः पुनरकामात्मा ॥

³पारंपर्यागतो येषां वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥
⁴यं न सन्तं न वाऽसन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥

इतिहासपुराणोपबृंहिता श्रुतिः प्रमाणम्

$⁵इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥

(१) इतिहासपुराणान्यङ्गानि च वेदस्य परिबृंहणानि । तथा च बृहस्पतिः– इतिहासेति । स्मृच. ११६

(२) इतिहासोऽपि पुराण( ? प्रमाण )मेव, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् । पञ्चरात्रपाशुपतादीन्यपि शास्त्राणि वेदाविरुद्धभागे प्रमाणमेवेति पारिजातः । कृर. ३१

(३) 'बृह बृहि वृद्धौ' । अर्थविचारादिना पोषयेदित्यर्थः । अत्राधिकारो ब्राह्मणस्य । स्मृकौ. ४६

(४) एवं च वेदवेदाङ्गपुराणेतिहासपञ्चरात्रादिसिद्धान्तधर्मशास्त्रेभ्योऽधीतेभ्यो ज्ञात्वा धर्मोऽनुष्ठेयः । भट्टाचार्याः– 'तस्माद्यान्येव शास्त्राणि वेदमुद्रानतिक्रमात् । अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥ वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता । नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥ तेषां त्रिपरिवर्तेषु कुर्वतां धर्मसंहिताः । वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥' । समुपबृंहयेत् वर्धयेत् । निप्र. २।१९

आर्यावर्तीयशिष्टाचारः प्रमाणम्, शिष्टवचनं प्रमाणम्, देशजातिकुलधर्मेषु मनुस्मृतिः प्रमाणम्

¶ ¹तस्मिन्देशे ये धर्मा ये चाऽऽचारास्ते सर्वत्र प्रत्येतव्याः ॥

²न त्वन्ये प्रतिलोमकल्पधर्माः ॥

(१) अत्रापि सर्वशब्दो बाहुल्याभिप्रायेण । न त्वन्ये प्रतिलोमेति । अत्रापि देशान्तरीयाः सर्वे धर्मा आचाराश्च न प्रत्येतव्याः । यतस्तेषु बाहुल्येन लोभादि-

---

† अस्य सूत्रस्य ममान्याख्यानमस्मिन्नेव प्रकरणे 'न तु दृष्टार्थे०' इति गौतमधर्मसूत्रे (वका. पृ. ४४) द्रष्टव्यम् ।

$ अस्य वचनस्य आनव्याख्यानमस्मिन्नेव प्रकरणे एतादृश एवात्रिवचने द्रष्टव्यम् ।

¶ तस्मिन्निति पूर्वप्रकृते आर्यावर्ते इत्यर्थः ।

(१) बाध. १।५ ; अप. १।७ पृ. २० ; ब्रक. २६ ; स्मृच. १।१६ लाभे (भावे), १९८ ; चव्र. २० ; कृर. ३२ ; मुक्ता. ७, १२८.

(२) बाध. १।६ ; विश्व. १।७ पृ. १३ ; मेधा. १२।१०९ ; अप. १।५३ पृ. ८२ ; मभा. १।५.

(३) बाध. ६।४३ ; ब्रक. २७ ; चव्र. २० ते शिष्टा (विशिष्टा) ; कृर. ३३. (४) बाध. ६।४४.

(५) बाध. २७।६ ; अप. १।७ पृ. १९ पू., मनुः ; स्मृच. १।६ णाभ्यां (णेभ्यो) प्रहरि (प्रतरि) बृहस्पतिः ; कृर. ३१ पू. (=) ; स्मृकौ. ४६ पू. ; निप्र. १।१६ पू., २।१९ ; संप्र. ७२४ स्मरणादित्युक्तम् ; आन. १४ पू. (=).

(१) बाध. १।१० ; अप. १।७ पृ. २० (तस्मिन् देशे०) ये चाऽऽचा (य आचा) सर्वत्र (सर्वे) ; ब्रक. ४७ (तस्मिन् देशे०) सर्वत्र (सर्वे) ; चव्र. २८ ब्रकवत् ; कृर. ४४ (ये धर्मा ये आचारास्ते प्रत्येतव्याः) एतावदेव ; पप्र. ५७ (तस्मिन् देशे ये०) सर्वत्र (सर्वे).

(२) बाध. १।११ ; अप. १।७ पृ. २० ( कल्प० ) धर्माः (धर्माणः) ; ब्रक. ४७ (न ह्यन्ये प्रतिलोमकक्ष्यधर्माणः) ; चव्र. २८ लोमकल्प (लोमक) ; पप्र. ५७ ब्रकवत्.

पूर्वका आचाराः, केचिदेव श्रुतिपूर्वका इति तस्माऽऽर्थेऽनुमेयाः ( १ र्थोऽनुमेयः ) । अन्यथा देशान्तरासर्पसंभवाद्धोमादिमूल आचारो निर्मूलः स्यात् (१) ।
अप. १।७

(२) (प्रतिलोमकक्षधर्माणः) विपरीताः, अस्फुटस्वभावाः । कक्षशब्देन घनतृणावृतदेशवचनेनास्फुटता लक्ष्यते । ‡ व्रक. ४८

(३) तत्र वसति धर्मोऽवश्यमिष्टापूर्तादिरूपः, तत्प्रतिपादकं च मुख्यतो धर्मशास्त्रम् । कुर. ४४

**¹त्रैविद्यवृद्धा यं ब्रूयुर्धर्मं धर्मविदो जनाः ।**
**पतने पावने चैव स धर्मो नात्र संशय इति ॥**

(१) त्रिविधा विद्या त्रिविद्या, तां वेदेत्यर्थेऽण्प्रत्ययः । तिस्रो विद्या वेदेति तु क्रियमाणे 'द्विगोर्लुक्' ( पासू. ४।१।८८ ) इति लुक्प्रसङ्ग इति महाभाष्यटीकाकारः । अथवा त्रैविद्ये तिसृष्वपि विद्यासु ये वृद्धाः ज्ञानवन्तः । त्रैविद्यमिति स्वार्थेऽप्यण् । पतने पतननिमित्ते पापे, पावने स्नानादौ यं धर्मं ब्रूयुः स धर्मः ।
व्रक. ३४–३५

(२) त्रैविद्यवृद्धाः शिष्टाः पतने अधर्मे, पावने धर्मे यं ब्रूयुः स धर्मः । कुर. ४०

**²देशधर्मजातिधर्मकुलधर्माञ्छ्रुत्यभावादब्रवीन्मनुः ॥**

धर्मपरिषत् पारिषदाश्च

**³अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥**

**¹यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः ।**
**तत्पापं शतधा भूत्वा तद्वक्तृनधिगच्छति ॥**
**²चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्वेदपारगाः ।**
**स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥**
**³चातुर्विद्यं विकल्पी च अङ्गविद्धर्मपाठकः ।**
**आश्रमस्थास्त्रयो मुख्याः पर्षदेषां दशावरा ॥**

श्रुत्यादिष्वप्रामाण्यबुद्ध्याऽऽत्मनाशः

**⁴अथाप्युदाहरन्ति–**
**अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम् ।**
**अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः ॥**

## वृद्धवसिष्ठः

देशकुलाचारस्य प्रामाण्यम्

**⁵महर्षिभिः शास्त्रवितर्कबुद्ध्या**
**न दूषणीयाः कुलदेशधर्माः ।**
**तन्मूलमज्ञातसमस्तवेदा-**
**स्तस्मात्प्रमुख्याः प्रथमं हि तेऽपि ॥**

## विष्णुः

श्रुतिस्मृतिसदाचाराः प्रमाणानि

**⁶श्रुतिस्मृत्युदितं धर्म्यं साधुभिश्च निषेवितम् ।**
**तमाचारं निषेवेत धर्मकामो जितेन्द्रियः ॥**

---

‡ पप्र. व्रकवत् ।

(१) बाध. १।१६ पतने (पवने) ; व्रक. ३४ (इति०) ; स्मृच. १।८ पावने (पातने) (इति०) ; कुर. ४० व्रकवत् .

(२) बाध. १।१७.

(३) बाध. ३।५; व्रक. ४० मनुवसिष्ठयमबौधायनपैठीनसयः .

(१) बाध. ३।६ ; व्रक. ४० यद्व (यं व) मूढा (भूता) मजानतः (मतद्विदः) तद्वक्तृनधिग (तान्वक्तृननुग) मनुवसिष्ठयमबौधायनाः .

(२) बाध. ३।७ ; व्रक. ३८ वेद (धर्म).

(३) बाध. ३।२० ; व्रक. ३६ विद्यं (विद्यो) देषां ( देषा ) वसिष्ठबौधायनौ.

(४) बाध. १२।४१ ; प्रपा. २ (अथाप्युदाहरन्ति०) चैव (चापि) स्था च (स्थाऽपि) ; मुक्ता. ६ (अथाप्युदाहरन्ति०); सस्मृ. ५ (अथाप्युदाहरन्ति०) चैव (चापि) तृतीयचरणे (अप्यवस्थादि सर्वत्र) एतन्ना (एवं ना).

(५) वृवसं. ३२।२४१ ; विसौ. २८ पू०, वसिष्ठः .

(६) विस्मृ. ७१।९० ; गृक. २८६ पूर्वार्धे ( श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः । ) ; गृर. ४८२–४८३ गृकवत् ; मपा. १२ (=); आपा. २ पूर्वार्धे (श्रुति-

( १ ) आचारश्च मध्यदेशादिप्रसूतेभ्यो विज्ञेयः । मपा. १२

( २ ) धर्मकामः पुण्यकामः । मर. ८

( ३ ) अनुष्ठेयमाचारं विशिनष्टि– श्रुतीति । 'मातुलस्येव योषा' इत्यादिश्रुतिलिङ्गावगतोऽपि मातुलकन्यापरिणयो नानुष्ठेयः, स्मृतिनिषेधविरोधात् । ततश्च स्मृत्युपसंहृतमेव श्रौतलिङ्गादि अनुमापकम्, नानुपसंहृतम्, 'योषा जारमिव प्रियम्' इत्यादावपि स्मृति-(१ श्रुति)कल्पनाप्रसङ्गात् । 'ओं कल्पयत' इत्यादिस्मृतिविहितोऽपि मधुपर्कगवालम्भः 'मा गामनागामदितिं वधिष्ट' इति श्रुतिविरोधादननुष्ठेयः, श्रुतिस्मृतिविहितोऽपि श्येनाद्यभिचारः दृष्टार्थत्वात् धर्माजनक इति नानुष्ठेयः, श्रुतिस्मृतिविहितं धर्मजनकं च दर्शपूर्णमासयोः जाघन्या पत्नीसंयाजनं शिष्टापरिग्रहादननुष्ठेयमिति श्रुतिस्मृतिभ्यां विहितमदृष्टसाधनं शिष्टानुष्ठितमाचारं संध्यास्नानादिकं दृष्टार्थानीन्द्रियाणि तत्परिपन्थीनि जित्वा कुर्वीतेति । वे.

श्रुत्यादिप्रमाणानां तर्केणाबाधः

**'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।**
**आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥**

## शङ्खः

तुल्यश्रुतिविरोधे विकल्पः, श्रुतिमूलकत्वेन स्मृतिप्रामाण्यम्, स्मृतिकर्तारः, परस्परं प्रमाणविरोधे पर्षत् प्रमाणम्

**'तुल्यश्रुतिविरोधे विकल्पाः श्रुतयः । श्रुतिरिह गरीयसी । स आम्नायः ॥**

आम्नायत्वेन निरपेक्षत्वमुक्तम् । ब्रक. ४२

**'तत्र वेदमूलाः स्मृतयः ॥**

स्मृत्युदितो यश्च साधुभिर्यश्च सेवितः । ) षेवे (रीक्षे); मर. ८ गृकवत्, मनुः.

(१) स्मृच. १।४; प्रपा. २; मुक्ता. ६. मनुस्मृतौ १२।११० इत्यस्यानन्तरं प्रक्षिप्तत्वेनोद्धृतः, पाठस्तु न शुद्धः ।

(२) ब्रक. ४२.

(३) स्मृच. १।३; मुक्ता. २ (तत्र०).

एतदप्यदृष्टार्थानामेव न पुनर्दृष्टार्थानाम् । तथा च पुराणम्– 'सर्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु ।' इति । स्मृच. १।३

**'मनुयमदक्षविष्णवङ्गिरोबृहस्पत्युशनआपस्तम्बगौतमसंवर्तात्रेयहारीतकात्यायनशङ्खलिखितपराशरव्यासशातातपप्रचेतोयाज्ञवल्क्यादयः ॥**

**'श्रुतिविरोधे त्रैविद्यसमवायेषु निर्णयः ॥**

**'यथावलेपं शास्त्रतस्तेऽनुब्रूयुः ॥**

श्रुतिग्रहणं स्मृत्याचारधर्मप्रमाणमात्रोपलक्षणार्थम् । ब्रक. ३५

## शङ्खलिखितौ

श्रुतिस्मृतिशिष्टाचाराः प्रमाणानि, स्मृतिप्रणेतारः, शिष्टेष्वकिंचित्करो निषिद्धशिष्टाचारो न प्रमाणम्, धर्मशास्त्राण्यज्ञानविपरीतज्ञाननिवर्तकानि

**'वेदा वै विप्रकीर्णत्वाद्दुर्ज्ञेया धर्मसाधनम् ।**
**सुबोधास्त( ? धा त )स्समर्था हि ब्रह्मणा विहिता श्रुतिः ॥**

**श्रुतिस्मृत्युदितान्धर्मान्मानवास्तान्पृथक्पृथक् ।**
**कुर्वन्तः प्राप्नुयुर्धर्ममन्यथा नरके गतिः ॥**
**श्रौतं स्मार्तं क्रियावाक्यं हेतुभिर्यो विघातयेत् ।**
**असच्छास्त्रमुपाश्रित्य स ज्ञेयः शिष्टनिन्दितः ॥**

**'स्मृतिर्धर्मशास्त्राणि । तेषां प्रणेतारो मनुविष्णुयमदक्षाङ्गिरोत्रिबृहस्पत्युशनआपस्तम्ब-**

(१) स्मृच. १।२; मुक्ता. ८ नआप (नाप).

(२) विश्व. १।९; ब्रक. ३५ निर्णयः + (दशावरेषु).

(३) विश्व. १।९.

(४) चव. २४.

(५) अप. १।५ (यम०) वसिष्ठ... प्राचेतसादयः (गौतमसंवर्तात्रेयकात्यायनशङ्खलिखितपराशरव्यासशातातपप्रचेतोयाज्ञवल्क्यादयः) गौतमः; ब्रक. १३; चव. १८ तिर्धर्म (तयो धर्म) वसिष्ठ (वशिष्ठ); चवा. ५२७ तिर्धर्म (तयो धर्म) वसिष्ठ (वशिष्ठ) प्राचेत (प्रचेत); कुर. २८; वीमि. १।५ प्राचेत (प्रचेत) सादयः + (शिष्टाः); पप्र. १६; बाल. १।५ पृ. ९ (मनुविष्णुयमदक्षाङ्गिरो०) शङ्खः.

**वसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्त-गौतमशातातपहारीतयाज्ञवल्क्यप्राचेतसादयः ॥**

(१) वेदमूलग्रन्थप्रणेतारः आदिशब्देन अत्र प्रगृह्यन्ते । तथा च मनुः– 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।' ( मस्मृ. २।६) इति । अत एवावशिष्टः श्रौतो वाक्यैकशेषः( ? ) । अप. १।४–५

(२) आदिशब्दग्राह्याश्चैते बुधदेवलसोमजमदग्नि-विश्वामित्रप्रजापति¶वृद्धशातातपपैठीनसी( ? सि )पितामहबौधायनच्छागलेयजाबालच्यवनमरीचिकाश्यपाः। तथा च भविष्यपुराणे– 'अष्टादशपुराणेषु यानि वाक्यानि पुत्रक । तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ॥ मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः । तासां वाक्यानि क्रमशः समालोच्य ब्रवीमि ते ॥' इति गुहं प्रति ईश्वरवाक्ये । मन्वादिस्मृतयः , ताश्चानन्तरोक्ताभिरेव सर्वपरिगृहीताभिः पूर्यन्ते । वृद्धशातातपयोगियाज्ञवल्क्यवृद्धवसिष्ठवृद्धमनुलघुहारीतादीनि तु प्रसिद्धषट्त्रिंशदन्तर्गतकर्तृकाण्येव, अवस्थाभेदेन तैरेव करणात् । §ब्रक. २४

(३) धर्मशास्त्रप्रणेतृकथनद्वारा तदनुक्रममाहतुः शङ्खलिखितौ– स्मृतय इति । आदिशब्दाच्च बुधदेवलसोमप्रजापतिवृद्धशातातपपैठीनसिच्छागलेयच्यवनमरीचिवत्सपारस्करपुलस्त्यपुलहक्रतुऋष्यशृङ्गात्रेयाणां ग्रहणम् । चदा. ५२७

**[1]आम्नायप्रामाण्यादाचारः सर्वेषामुपदिश्यते ॥**

आचार्यैः । ‡ब्रक. २६

**[2]आपत्स्वपि हि काष्ठासु परस्वं नैव कामयेत् ।**
**नाभक्ष्यं भक्षयेत्किंचिन्न पूर्वचरितं चरेत् ॥**

पूर्वचरितं निषिद्धमात्रा( ? त्रम )भिप्रेतम् । ‡ब्रक. २८

**[3]तेजोमयानि पूर्वेषां नवीनानीन्द्रियाणि च ।**
**पापैस्ते नोपलिप्यन्ते पद्मपत्रमिवाम्भसा ॥**

तेजोमयानि ज्ञानप्रधानानि । ब्रक. २८

**[4]सुरां पिबन्ति त्रिदशा या चापेया द्विजातिभिः ।**
**हरन्ति वित्तं यत्सिद्धास्तच्चासिद्धे न विद्यते ॥**

---

¶ कृत्यरत्नाकरे परिभाषाप्रकाशे च कल्पतर्वनुवादे वृद्धशातातपस्थाने यथाक्रमं सुमन्तुः नारदश्च पठ्यते । तदन्यतर एव पाठः साधुः , शङ्खलिखितवचने शातातपस्य स्वशब्देनोक्तत्वेन 'वृद्धशातातप०' इत्यग्रिमग्रन्थानुरोधेन वृद्धशातातपस्याऽऽदिशब्दग्राह्यत्वानुपपत्तेः । नाप्युभयोरुपसंहारः , षट्त्रिंशत्त्वसंख्यापूरणस्याभिप्रेतत्वेन एकविंशतेः स्वशब्दगृहीतत्वेन च पञ्चदशानामेवाऽऽदिशब्दग्राह्यत्वात् ।' अत एव 'द्वन्द्वघटकविभागं प्रत्याययितुं द्वन्द्वघटकान्तरालेषु तिर्यञ्चो ह्रस्वरेखा दीयन्ते' इत्याधुनिकरीतिमनुसृतवद्भिरादर्शपुस्तकसंपादकैः शङ्खलिखितशब्दयोरन्तराले रेखादानाभावात् 'शङ्खलिखितौ' इत्येको महाद्वन्द्वघटक इति यत् स्वीकृतं सा भ्रान्तिरेव, एकविंशतित्वसंख्याया असंपत्तेः । चदाग्रन्थे तु षोडशानामादिशब्दग्राह्यत्वोक्तेर्मूलवचने शङ्खलिखितावित्येको द्वन्द्वघटकोऽभिप्रेत इति बोध्यम् । तत्र मूलवचने शङ्खलिखितशब्दयोरन्तराले विभाजकरेखादानात् तत्संपादकानां शङ्खो लिखितश्चेति द्वौ द्वन्द्वघटकाविति मतिर्भ्रान्तिरेव । इदं त्वत्र विचार्यम्– येषां मते शङ्खस्य लिखितस्य च स्वातन्त्र्येण षट्त्रिंशदन्यतमत्वम् , तेषां मते शङ्खलिखितोभयकर्तृकैकस्मृतेः षट्त्रिंशत्कर्तृकस्मृतिष्वन्तर्भावो नानुपपन्नः , उभयकर्तृकत्वमित्यत्र ज्ञानेच्छाकृतीनां चेतनभेदेन भेदात् शङ्खलिखितयोरेकस्मिन्कर्तृत्वे समुच्चयासंभवात् एकस्मिन् स्मृतिरूपकार्ये शङ्खनिष्ठलिखितनिष्ठकर्तृत्वयोरेव समुच्चयस्याभ्युपेयत्वेन याज्ञवल्क्याद्येककर्तृकाणामनेकस्मृतीनामिव शङ्खलिखितरूपानेककर्तृकैकस्मृतेरपि षट्त्रिंशत्कर्तृकस्मृतिष्वन्तर्भावोपपत्तेः । येषां तु मते शङ्खलिखितयोर्मिलित्वा षट्त्रिंशदन्यतमत्वम् , तेषां मते उक्तरीत्या शङ्खलिखितयोरेकस्मिन् कर्तृत्वे समुच्चयासंभवात् प्रत्येकं च षट्त्रिंशदन्यतमत्वाभावात् शङ्खकर्तृकलिखितकर्तृकयोः स्मृत्योः षट्त्रिंशत्कर्तृकस्मृतिष्वन्तर्भावः कथमुपपादनीयः ? अनन्तर्भावश्चेत्स कथमौचित्यं भजेत ? इति ।

§ चश्र. , कृर. , पप्र. , ब्रकगतम् ।

‡ कृर. ब्रकवत् ।

(१) विश्व. १।७ पृ. २२ ( आम्नायप्रामाण्यादाचारः) एतावदेव (=) ; ब्रक. २६ ; कृर. ३२.

(२) ब्रक. २८ ; कृर. ३४ काष्ठासु (कष्टासु) परस्वं (परमं).

(३) ब्रक. २८ ; कृर. ३४.

(४) ब्रक. २८ स्तच्चासि (स्तद्वाऽसि); स्मृच. १।१९६ शा या ( शाः सा ) स्तच्चासिद्धे न ( स्तव सिद्धिर्न ) ; कृर. ३४.

'सुरां पिबन्ति' इत्यादि द्विजातीनां देवतात्वमुररीकृत्य । कुर. ३४

'रागद्वेषाग्निदग्धानामज्ञानविषपायिनाम् ।
चिकित्सा धर्मशास्त्राणि व्याधीनामिव भेषजम् ॥

(१) रागद्वेषांशेन तन्मूलं भ्रान्तिज्ञानं लक्ष्यते । ब्रक. ३३

(२) रागद्वेषादिदग्धानां सताम् अज्ञानविषपायिनां भ्रमरूपज्ञानभाजां चिकित्सा धर्मशास्त्राणि, ‡ वैषयिकज्ञानाधानद्वारा मोहनिवर्तकत्वात् । कुर. ३९

दशावरा पञ्चावरा वा परिषत् मतभेदेन,
यथादोषं प्रायश्चित्तनिर्णयः

'ऋग्यजुःसामम( ? सामा )थर्ववेदषडङ्गविदुच्छवृत्तिर्नैष्ठिको ब्रह्मचारी पञ्चाग्निरिति दशावरा पर्षत् । तत्समवाये धर्मव्यवहरणम् ॥

नैष्ठिकग्रहणमुपकुर्वाणव्यवच्छेदार्थम् । ब्रक. ३७

'त्रयोश्चत्वारो वेदविदो धर्मशास्त्रविदिति पञ्चावरामेके । दशावरेषु धर्मानुव्यवहरणं यथावलेपं शास्त्रतस्तेऽनुब्रूयुः स धर्मः ॥

यथावलेपं यथादोषम् । ब्रक. ३७

## महाभारतम्

इतिहासपुराणानि वेदोपबृंहणानि

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥

'यद्ध त्यं मायिनं मृगं तमु त्वं माययाऽवधीः' (ऋसं. १।८०।७) इति मन्त्रावयवो हि रामायणीयमारीचवधशेनैवोपबृंहितुं शक्यः, न त्वन्येन । अतस्तस्मादल्पश्रुताद्वेदस्य भयमुचितमेव । वेदार्थजिज्ञासुना इदमवश्यमध्येतव्यमित्यर्थः । नीटी.

श्रुतिस्मृतिशिष्टाचाराः धर्मप्रमाणानि, उपादेयाः
शिष्टाचाराः, शिष्टलक्षणानि

'दुर्ज्ञेयः शाश्वतो धर्मः स तु सत्ये प्रतिष्ठितः ।
श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ॥

शाश्वतो धर्मः आत्मदर्शनम् । यदाह याज्ञवल्क्यः— 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥' (यास्मृ. १।८) इति । सत्ये त्रैकालिकबाधशून्ये वस्तुनि प्रतिष्ठितः पर्यवसितः । अन्यो धर्मस्त्वसत्ये प्रतिष्ठित इत्यर्थासिद्धम् । नीटी.

व्याध उवाच—

'यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥

शिष्टाचारमाह— यज्ञ इति । नीटी.

'कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्म इत्येव संतुष्टास्ते शिष्टाः शिष्टसंमताः ॥

शिष्टलक्षणमाह— कामेति । नीटी.

'न तेषां विद्यतेऽवृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥

वृत्तं वृतं स्वेच्छोपात्तमिति यावत् । 'वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि मृते वृते' इति मेदिनी । नीटी.

'अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ॥

---

‡ विषयशब्दोऽत्र सद्विषयपरः । वैषयिकज्ञानं यथार्थज्ञानमित्यर्थः ।

(१) ब्रक. ३३ ; कुर. ३९ ग्नि (दि).

(२) ब्रक. ३७. (३) ब्रक. ३७.

(४) भा. १।१।२०४ ; भामु. १।१।२६७–२६८ प्रतरि (प्रहरि) ; ब्रह्म. २४ ; मुक्ता. २९२ वेदं समुप (वेदार्थमुप)पू.

(१) भा. ३।१९७।३९ ; भामु. ३।२०६।४१ स तु (स च).

(२) भा. ३।१९८।५७ ; भामु. ३।२०७।६२ नित्यदा (सर्वदा).

(३) भा. ३।१९८।५८ ; भामु. ३।२०७।६३ धर्म इ (धर्ममि).

(४) भा. ३।१९८।५९ ; भामु. ३।२०७।६४ तेऽवृत्तं (ते वृत्तं).

(५) भा. ३।१९८।७३ ; भामु. ३।२०७।७८ भवन्ति ते (भवन्त्युत) ; पमा. १।१३४.

(१) अत्र शिष्टानामभिमतो दयादाक्षिण्यविनयाद्यन्वितो वृत्तविशेष आचारः इत्युक्तं भवति । पमा. १।१३५

(२) अहंकारः दर्पः, मत्सरः परदोषासहिष्णुत्वम्, तद्वर्जिताः। शिष्टं गुरुशास्त्रोक्तम् आचरन्तः शिष्टाचाराः। नीटी.

**[३]त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ।**
**गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत ॥**

त्रैविद्यवृद्धाः तिस्रो विद्या ऋग्यजुःसामात्मिकाः यत्र स त्रिविद्यो यज्ञः । तत्र साधवः त्रैविद्या याज्ञिकाः। वृत्तं शीलम्, तद्वन्तः । मनस्विनः जितचित्ताः । नीटी.

**[२]वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः ।**
**शिष्टाचीर्णश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥**

वेदोक्तः अग्निहोत्रादिः । धर्मशास्त्रोक्तः अष्टकाश्राद्धादिः । शिष्टाचारः होलाकादिः । शिष्टानाम्, तुष्टिरिति शेषः । तदुक्तमभियुक्तैः– 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणस्य वृत्तयः ।' इति । अस्यापि शिष्टाचारे एवान्तर्भावात् त्रिविधमित्युक्तम् । नीटी.

**[३]पारणं चापि विद्यानां तीर्थानामवगाहनम् ।**
**क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ॥**

पारणं समापनम् । नीटी.

**[४]सर्वभूतदयावन्तो अहिंसानिरताः सदा ।**
**परुषं न प्रभाषन्ते सदा सन्तो द्विजप्रियाः ॥**
**शुभानामशुभानां च कर्मणां फलसंचये ।**
**विपाकमभिजानन्ति ते शिष्टाः शिष्टसंमताः ॥**

विपाकं क्रमेण पुण्यपापयोः क्षयम् । तेन पुण्यह्रासहेतुः सुखं नेष्टव्यम्, पापह्रासहेतुः दुःखं सोढव्यमिति भावः । नीटी.

**न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ।**
**सन्तः स्वर्गजितः शुक्लाः संनिविष्टाश्च सत्पथे ॥**

न्यायः युक्तिः, गुणाः शमादयः, तदुपेताः । शुक्लाः हिंसाशून्यधर्मवन्तः । सत्पथे ब्रह्ममार्गे । नीटी.

**[१]दातारः संविभक्तारो दीनानुग्रहकारिणः ।**
**सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसंमताः ॥**

संविभक्तारः कुटुम्बेषु । श्रुतधनाः विद्याधनाः । नीटी.

**[२]श्रुतिप्रमाणो धर्मो हि वृद्धानामिति भाषितम् ।**
**सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥**
**[३]तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना**
**नैको ऋषिर्यस्य मतं प्रमाणम् ।**
**धर्मस्य तत्त्वं निहितं गुहायां**
**महाजनो येन गतः स पन्थाः ॥**

अप्रतिष्ठः निर्णयशून्यः । श्रुतयोऽपि विभिन्नाः परस्परविरुद्धार्थवादिन्यः । मुनयोऽपि तद्व्याख्यातारस्तादृशा एव । अतोऽनन्तासु धर्मशास्त्रादिविद्यासु श्रममकृत्वा बहुजनसंमतमेव मार्गमनुसरेदित्यर्थः । नीटी.

**[४]य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ।**
**एते प्रमाणं भवत उताहो नेति वासव ।**
**नहुषो नेति तानाह तमसा मूढचेतनः ॥**

गवां प्रोक्षणे प्रोक्षणोपाकरणमारणादिसंस्कारे ये मन्त्राः 'देवांश्च याभिर्यजते ददाति च' (ऋसं. ६।२८।३),

---

(१) भा. ३।१९८।७४ ; भाम्. ३।२०७।७९ ; पमा. १।१३५ भवन्त्युत (भवन्ति ते).

(२) भा. ३।१९८।७८ ; भाम्. ३।२०७।८३ चीर्णश्च (चारश्च).

(३) भा. ३।१९८।७९ ; भाम्. ३।२०७।८३–८४ चतुर्थपादे (सतामाचारदर्शनम्).

(४) भा. ३।१९८।८०–८२ ; भाम्. ३।२०७।८४–८७.

(१) भा. ३।१९८।८३ ; भाम्. ३।२०७।८७–८८ पूर्वोत्तरार्धयोर्मध्ये (सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः । ) इत्यधिकम्.

(२) भा. ३।२००।२ ; भाम्. ३।२०९।२ पूर्वार्धे (श्रुतिप्रमाणो धर्मोऽयमिति वृद्धानुशासनम् । ).

(३) भाम्. ३।३१३।११७ ; विश्व. १।९ तृतीयपादमात्रम् (=) ; मेधा. २।१, ५।२३ चतुर्थपादमात्रम्, न्यायः.

(४) भा. ५।१७।९–१० ; भाम्. ५।१७।९–११,

'गावः सोमस्य प्रथमस्य भक्षः' (ऋसं. ६।२८।५) इत्यादयः । याभिः पशुभूताभिर्गोभिः । भक्ष इति भक्षणान्तयाग उच्यते । नहुषस्तु– 'ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥' इति शास्त्रप्रामाण्यात् ब्राह्मणवद्गवामवध्यत्वं मन्वानो वेदमप्रमाणीचकार । वेदस्य ब्राह्मणानां चावमानादधोगतिः प्राप्यत इत्याख्यायिकातात्पर्यम् । नीटी.

ऋषय ऊचुः–

अधर्मे संप्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥

धर्मसभा

[1]न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥

[2]यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ।
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥

आरुजति हिनस्ति अनुकूलजान् कूलं कूलमनुसृत्य जातान् वृक्षादीन् । नीटी.

शिष्टाचारः प्रमाणम्

[3]यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

[4]न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥

(१) भा. ५।३५।४९ ; भामु. ५।३५।५८ नानुविद्धम् (नाभ्युपेतम्).

(२) भा. ५।९३।४८–४९ ; भामु. ५।९५।४८–५०.

(३) भा. ६।२५।२१ ; भामु. ६।२७।२१ ; पमा. १।४४ पू., न्यायः ; मच. ९।१०९ पू., स्मृतेरित्युक्तम् ; आन. १७ रो जनः ( रे जनाः ).

(४) भा. ६।२५।२२–२४ ; भामु. ६।२७।२२–२४.

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥

कर्मणि वर्ते एव अहम्, कर्म करोम्येवेत्यर्थः । यद्यहं कर्मणि न वर्तेयं तर्हि मनुष्याः ममैव वर्त्म अनुवर्तन्ते अनुवर्तेरन्, कर्म न कुर्वीरन्नित्यर्थः । अतन्द्रितः अनलसः । सर्वशः सर्वप्रकारैः । ततश्च किमित्यत आह– उत्सीदेयुरिति । यद्यदाचरतीत्यादेरपरा योजना–न केवलं लोकसंग्रहं पश्यन् कर्तुमर्हसि, अपि तु श्रेष्ठाचारत्वादपीत्याह– यद्यदिति । तथा च मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्तिना त्वयाऽनुष्ठेयः, न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाऽऽचारः यो मयाऽनुवर्तनीयः ? इत्याकाङ्क्षायां 'न मे पार्थ' इत्यादिभिस्त्रिभिः श्लोकैस्तत्प्रदर्शनमिति मधुसूदनश्रीपादाः । नीटी.

शास्त्रं प्रमाणं कार्याकार्यविषये

[1]तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥

यस्माच्छास्त्रातिगः शुद्ध्यादिकं त्रयं नाऽऽप्नोति तस्मात्ते तव शुद्ध्यादिकामस्य शास्त्रमेव प्रमाणं किं कार्यं किं न कार्यमित्यस्यां व्यवस्थायाम् । एवं ज्ञात्वा शास्त्रम् 'इदं कर्तव्यम्, इदं न कर्तव्यम्' इति शासनं वेदाख्यरूपम्, विधानं च तदुल्लङ्घने प्रतिसमाधानम्– अग्निहोत्राद्यकरणेऽयं दोषः, तत्परिहारार्थमिदं कृच्छ्रादिकं प्रायश्चित्तम्, ब्रह्महत्यादिकरणेऽयं दोषः, तत्परिहारार्थमिदमश्वमेधाद्यन्यद्वा प्रायश्चित्तम् । शास्त्रं च विधानं च ताभ्यामुक्तं कर्मेह मनुष्यलोके कर्तुमर्हसि । लोकान्तरे कर्मस्वनधिकारं दर्शयितुमिहेत्युक्तम् । तदेवं शास्त्रानुवर्तिन एव चित्तशुद्ध्यादिकम्, नान्यस्येति सिद्धम् । नीटी.

(१) भा. ६।३८।२४ ; भामु. ६।४०।२४.

आगममात्रबोध्यार्थो न शङ्कनीयः,
देशजातिकुलाचाराः प्रमाणम्

[1]न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः।
आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ॥

एवमिष्टवियोगे शोको न कार्य इत्युक्त्वाऽमुत्र नरकपातभयादपि शोको न कार्य इत्याह– न दृष्टपूर्वमित्यादिना। आगमैकगम्यः परलोकः, आगमे च युद्धे शत्रुघातिनां स नश्यतीति न दृष्टम्, अतो वृथैव ते शोक इत्यर्थः। नीटी.

[2]न ह्येव पुरुषो द्रष्टा स्वर्गस्य नरकस्य वा।
आगमस्तु सतां चक्षुर्नृपते तमिहाऽऽचर ॥

[3]जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः।
वर्जयेन्न हि तं धर्मं येषां धर्मो न विद्यते ॥

जातिः ब्राह्मणत्वादिः। श्रेणी गृहस्थादीनां पङ्क्तिः। अधिवासः जन्मभूमिः। जात्यादिधर्मांश्च ये वर्जयन्ति तेषां धर्मः प्रायश्चित्तादिस्वरूपः न विद्यते। नीटी.

दशसदस्या त्रिसदस्या वा धर्मपरिषत्

[4]दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः।
यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये ॥

पाठकाः शोधकाः विचारका इति यावत्। कार्ये प्रायश्चित्तनिमित्ते दोषे। नीटी.

शिष्टाचारः प्रमाणम्, शिष्टलक्षणम्

विश्वामित्र उवाच–

[5]शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये।
परां मेध्याशनादेतां भक्ष्यां मन्ये श्वजाघनीम् ॥

(१) भा. १२।२८।४१ ; भाम्. १२।२८।४२.

(२) भा. १२।२८।५३ ; भाम्. १२।२८।५४ ह्येव (चैव) वा (च).

(३) भा. १२।३७।१४ ; भाम्. १२।३६।१९ येन्न हि तं (यन्ति च ये) येषां (तेषां).

(४) भा. १२।३७।१५ ; भाम्. १२।३६।२०.

(५) भा. १२।१३९।६९ ; भाम्. १२।१४१।७३ देतां (देनां).

शिष्टा अगस्त्यादयः। नीटी.

श्वपच उवाच–

[1]असता यत्समाचीर्णं न स धर्मः सनातनः।
नावृत्तमनुकार्यं वै मा छलेनानृतं कृथाः ॥

[2]शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान्।
येषु वृत्तिभयं नास्ति परलोकभयं न च ॥

[3]नाऽऽमिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च।
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ॥

[4]सुखं दुःखं परं येषां सत्यं येषां परायणम्।
दातारो न गृ(? ग्र)हीतारो दयावन्तस्तथैव च ॥

[5]पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च।
सर्वोपकारिणो धीराः सर्वधर्मानुपालकाः ॥

[6]सर्वभूतहिताश्चैव सर्वदेयाश्च भारत।
न ते चालयितुं शक्या धर्मव्यापारपारगाः ॥

सर्वं प्राणपर्यन्तमपि देयं परार्थे दातुं योग्यं येषां ते। नीटी.

[7]न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम्।
न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः ॥

(१) भा. १२।१३९।७० ; भाम्. १२।१४१।७४ न स (न च) नावृत्तमनुका (नाकार्यमिह का) नानृतं (नाशुभं).

(२) भा. १२।१५२।२० ; भाम्. १२।१५८।२२–२३ येषु वृ (येष्वावृ).

(३) भा. १२।१५२।२१ ; भाम्. १२।१५८।२३–२४.

(४) भा. १२।१५२।२२ ; भाम्. १२।१५८।२४–२५ परं (समं) गृही (ग्रही).

(५) भा. १२।१५२।२३ ; भाम्. १२।१५८।२५–२६ धीराः (वीराः).

(६) भा. १२।१५२।२४ ; भाम्. १२।१५८।२६–२७ पारगाः (कारिणः).

(७) भा. १२।१५२।२५–२६ ; भाम्. १२।१५८।२७–२९.

**ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता ।**
**कामक्रोधव्यपेता ये निर्ममा निरहंकृताः ।**
**सुव्रताः स्थिरमर्यादास्तानुपास्व च पृच्छ च ॥**

पृच्छ च धर्ममिति शेषः । नीटी.

[1]**न गवार्थे यशोर्थे वा धर्मस्तेषां युधिष्ठिर ।**
**अवश्यकार्य इत्येव शरीरस्य क्रियास्तथा ॥**

क्रियाः आहारादयः । नीटी.

[2]**न भयं क्रोधचापल्यं न शोकस्तेषु विद्यते ।**
**न धर्मध्वजिनश्चैव न गुह्यं किंचिदास्थिताः ॥**

गुह्यं गोपनीयं कंचित् पाखण्डधर्मम् । नीटी.

[3]**येष्वलोभस्तथाऽमोहो ये च सत्यार्जवे रताः ।**
**तेषु कौन्तेय रज्येथा येष्वतन्द्रीकृतं मनः ॥**

अमोह इति छेदः । येषां वृत्तमिति शेषः । नीटी.

[4]**ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ।**
**निर्ममा निरहंकाराः सत्त्वस्थाः समदर्शिनः ॥**

[5]**लाभालाभौ सुखदुःखे च तात**
**प्रियाप्रिये मरणं जीवितं च ।**
**समानि येषां स्थिरविक्रमाणां**
**बुद्धात्मनां सत्त्वमवस्थितानाम् ॥**

[6]**सुखप्रियैस्तान् सुमहाप्रतापान्**
**यत्तोऽप्रमत्तश्च समर्थयेथाः ।**
**दैवात्सर्वे गुणवन्तो भवन्ति**
**शुभाशुभा वाक्प्रलापा यथैव ॥**

हे शुभ हे भद्र, सर्वे वाक्प्रलापाः गुणवन्तो भवन्ति । तान् देवान् प्रधानान् । अन्ये तु मूढानां वाक्प्रलापा अशुभे अशुभार्थमेव भवन्तीति शेषः । लोभं जेतुकामेन सत्सङ्गः कर्तव्य इत्यर्थः । नीटी.

श्रुतिः स्मृतिः सदाचारोऽर्थश्च धर्मप्रमाणानि

**भीष्म उवाच–**

[1]**सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।**
**चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ॥**

तत्र 'चोदनालक्षणोऽर्थो धर्मः' इति स्मृतेर्मुख्यं धर्मस्य लक्षणं वेद एव, इतरदपि तन्मूलतया धर्मलक्षणम्, न स्वत इति सिद्धं पूर्वतन्त्रे । कवयः विद्वांसः अर्थं प्रयोजनमेव धर्मलक्षणमाहुः । यथोक्तम्– 'परिनिर्मथ्य वाग्जालमिदमेव सुनिश्चितम् । नोपकारात्परं पुण्यं नापकारादघं परम् ॥' इति । अधर्मलक्षणमपकार इत्यपि प्रश्लेषेण ध्येयम् । नीटी.

[2]**लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ।**
**सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् ॥**

दयाप्रधानमित्यर्थः । सूक्ष्मधर्मलाभाय नियतं नियमितम् । नीटी.

श्रुत्यादिप्रामाण्ये आक्षेपः समाधानं च

**युधिष्ठिर उवाच–**

[3]**सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम् ।**
**प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ॥**

अत्र प्रत्यवतिष्ठते– सूक्ष्ममिति । ब्रह्मलक्षणं चोदनालक्षणं वेदैकबोध्यं धर्मजातम् । प्रतिभा स्फूर्तिः सा चानुमानलक्षणा । त्वदुक्तं युक्तिविरुद्धमित्यर्थः । नीटी.

---

(१) भा. १२।१५२।२७ ; भामु. १२।१५८।३० गवार्थे (धनार्थे) अवश्य (अवश्यं).

(२) भा. १२।१५२।२८ ; भामु. १२।१५८।३१ चापल्यं (चापल्ये) किंचि (कंचि).

(३) भा. १२।१५२।२९ ; भामु. १२।१५८।३२ रताः (स्थिताः) चतुर्थचरणे (येषां न भ्रश्यते पुनः).

(४) भा. १२।१५२।३० ; भामु. १२।१५८।३३.

(५) भा. १२।१५२।३१ ; भामु. १२।१५८।३४ चतुर्थचरणे (बुभुत्सतां सत्त्वपथे स्थितानाम्).

(६) भा. १२।१५२।३२ ; भामु. १२।१५८।३५ पूर्वार्धं (धर्मप्रियांस्तान् सुमहानुभावान् दान्तोऽप्रमत्तश्च समर्चयेथाः ।) दैवात् (दैवान्) शुभाशुभा (शुभाशुभे) पा यथैव (पास्तथाऽन्ये).

(१) भा. १२।२५१।३ ; भामु. १२।२५९।३.

(२) भा. १२।२५१।२५ ; भामु. १२।२५९।२६.

(३) भा. १२।२५२।१ ; भामु. १२।२६०।१ समादि (समुद्दि) भवता धर्म (नियतं ब्रह्म).

[1]**भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया ।**
**इममन्यं प्रवक्ष्यामि न राजन्विग्रहादिव ॥**

निग्रहात् कुतर्काग्रहेण । नीटी.

[2]**इमानि हि प्रापयन्ति सृजन्त्युत्तारयन्ति च ।**
**न धर्मः परिपाठेन शक्यो भारत वेदितुम् ॥**

इमानि भूतानि शरीरवन्ति हि प्रसिद्धम् । स्वेन स्वयमेव आत्मानं प्राणयन्ति जीवयन्ति सृजन्ति उत्तारयन्ति देहाकारात् च्यावयन्ति । तथा च श्रुतिः— 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्ति' इति । त्वया हि परस्य सुखदुःखोत्पादनेन जातौ धर्माधर्मौ स्वस्यापि कालान्तरे सुखदुःखप्रदौ भवत इत्युक्तम् । तत्केवलं परिपाठेन आम्नायमात्रेण न निश्चेतुं शक्यम्, अन्नस्यैव जन्मसुखादिहेतुत्वदर्शनात्, दृष्टेनैव कारणेन स्वाभाविकेन धर्मेण जगद्वैचित्र्यसिद्धौ वैदिकधर्मस्यादृष्टस्य कल्पनाया अनुदयाच्चेत्याशयः । नीटी.

[3]**अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ।**
**आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ॥**

व्यवस्थित्यभावादपि वैदिकधर्मो दुर्ज्ञेय इत्याह— अन्य इति । आपदामानन्त्यात्तद्धर्मा अप्यनन्ता इति दुर्ज्ञेय एव धर्म इत्याह— आपदस्त्विति । तस्मादव्यवस्थितरूपस्य वैदिकधर्मस्य न धर्मत्वमित्याशयः । नीटी.

[4]**सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः ।**
**साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणम् ॥**

सतामाचारो धर्मः धर्माचरणाच्च सत्त्वमित्यन्योन्याश्रयेण लक्ष्यलक्षणयोः साध्यासाध्ययोरविवेकादपि न सदाचारोऽपि धर्मे मानमित्याह— सदाचार इति । नीटी.

(१) मा. १२।२५।२।२ भामु. १२।२६०।२ उत्तरार्धे (इदं त्वन्यत्प्रवक्ष्यामि न राजन्विग्रहादिव । ).

(२) मा. १२।२५।२।३ ; भामु. १२।२६०।३ प्राप (प्राण).

(३) मा. १२।२५।२।४ ; भामु. १२।२६०।४.

(४) मा. १२।२५।२।५ ; भामु. १२।२६०।५ लक्षणम् ( लक्षणः )

[1]**दृश्यते धर्मरूपेण अधर्मं प्राकृतश्चरन् ।**
**धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥**

'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणम्' इत्यादिनिषेधे श्रूयमाणेऽपि प्राकृताः शूद्राः मुमुक्षवो वेदान्तान्धर्मबुद्ध्या शृण्वन्ति । अगस्त्यादिरप्राकृतोऽपि बहुहिंसाकरं दण्डकारण्यशापाख्यमधर्मं चकार । अतो भ्रष्टेषु शिष्टलक्षणदर्शनात् शिष्टेषु च भ्रष्टलक्षणदर्शनात्सदाचारोऽपि दुर्निर्णेय इत्यर्थः । नीटी.

[2]**पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः ।**
**वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतम् ॥**

कालभेदेन धर्ममन्यथयन्तो वेदा अप्यश्रद्धेयाः, अनवस्थितत्वादित्याह— वेदेति । नीटी.

[3]**अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।**
**अन्ये कलियुगे धर्मा यथाशक्तिकृता इव ॥**

[4]**आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ।**
**आम्नायेभ्यः परं वेदाः प्रसृता विश्वतोमुखाः ॥**

लोकसंग्रहः लोकरञ्जनमात्रम् । वेदयन्त्याम्नायार्थमिति वेदाः स्मृतयः । नीटी.

[5]**ते चेत्सर्वे प्रमाणं वै प्रमाणं तन्न विद्यते ।**
**प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥**

ते आम्नायाः अत्र स्मृतिषु प्रमाणम् (प्रमाणत्वम् ?)। प्रमाणं श्रुतिर्निरपेक्षत्वात्, अप्रमाणं स्मृतिर्मूलश्रुतिसापेक्षत्वात् । तयोः परस्परविरोधे 'औदुम्बरी सर्वा

(१) मा. १२।२५।२।६ ; भामु. १२।२६०।६ दृश्यते+(हि) पेण अ (पेणा).

(२) मा. १२।२५।२।७ ; भामु. १२।२६०।७ न्तीति ह (न्तीतीह).

(३) मा. १२।२५।२।८ ; भामु. १२।२६०।८ रेऽपरे (रे परे) क्तिकृता (क्ति कृता).

(४) मा. १२।२५।२।९ ; भामु. १२।२६०।९ भ्यः परं (भ्यः पुनर्) ता विश्व (ताः सर्व).

(५) मा. १२।२५।२।१० ; भामु. १२।२६०।१० त्सर्वे प्र (त्सर्वप्र) तन्न (ह्यत्र) तृतीयचरणे (प्रमाणेऽप्यप्रमाणेन).

वेष्टयितव्या ' ' औदुम्बरीं स्पृष्ट्वोद्गायेत् ' इति, तत्र वेष्टनस्मृतिः सापेक्षत्वादप्रमाणं चेत् तत्सामान्यात्सर्वाऽपि स्मृतिरप्रमाणम्, ततश्च तन्मूलभूतायाः श्रुतेरप्यप्रमाणत्वेन विनिगमनाविरहात्प्रत्यक्षाप्रत्यक्षयोरपि श्रुत्योरप्रामाण्यमित्याह– प्रमाणेऽपीति । नीटी.

**[1]धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।**
**या या विक्रियते संस्था ततः साऽपि प्रणश्यति ॥**

संस्था स्वरूपम् । जनमेजयाश्वमेधे इन्द्रापराधादश्वमेधसंस्थालोपो दृष्टः । नीटी.

**[2]विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा ।**
**अणीयान्क्षुरधाराया गरीयान्पर्वतादपि ॥**

स्वयं विद्म, न वा विद्म, उक्तं वा वेदितुं शक्यं न वा । दुर्ज्ञेयं धर्मतत्त्वमित्यर्थः । नीटी.

**[3]गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ।**
**अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ॥**

प्रथमं कर्मकाण्डे ' अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । अपाम सोमममृता अभूम ' इत्यादिश्रुतेर्गन्धर्वनगरवदद्भुत इव दृश्यते । कविभिरन्वीक्ष्यमाणः ' यत्कृतकं तदनित्यं कार्यत्वाद्घटवत् ', ' तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते ' इत्युपपत्तिपूर्वकमुपनिषत्सु ईक्ष्यमाणः अदर्शनं याति तुच्छ इव भवति । नीटी.

**[4]निपानानीव गोभ्याशे क्षेत्रे कुल्येव भारत ।**
**स्मृतोऽपि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥**

(१) भा. १२।२५२।११ ; भामु. १२।२६०।११ ह्रिय (क्रिय).

(२) भा. १२।२५२।१२ ; भामु. १२।२६०।१२ यान्पर्वतादपि (यानपि पर्वतात्).

(३) भा. १२।२५२।१३ ; भामु. १२।२६०।१३.

(४) भा. १२।२५२।१४ ; भामु. १२।२६०।१४ गोभ्याशे (गोभ्योऽपि) कुल्येव ( कुल्ये च ) स्मृतोऽपि (स्मृतिर्हि).

निपीयते पशुभिर्जलमस्मिन्निति निपानं वाप्यादिसमीपस्थः क्षुद्रजलाधारः कुल्या वा केदारान् प्रति नीयमाना यथा सद्यः शुष्यति एवं शाश्वतो वैदिको धर्मो विप्रहीणः सन् कलेरन्ते न दृश्यते इति स्मृतिरस्ति भविष्यविषया । नीटी.

**[1]कामादन्ये क्षयादन्ये कारणैरपरैस्तथा ।**
**असन्तो हि वृथाचारं भजन्ते बहवोऽपरे ॥**

विप्रहीणत्वमेवोपपादयति– कामादिति । कामात् काम्याग्निहोत्रादिः, अन्येच्छया भृतकाध्यापनादिः, अपरैः कारणैः यज्ञाद्युद्देशेन धनलाभार्थं व्रतादिः । असन्तः दाम्भिकाः । वृथा श्रद्धाराहित्यात् । नीटी.

**[2]धर्मो भवति स क्षिप्रं विलीनस्त्वेव साधुषु ।**
**अन्ये तानाहुरुन्मत्तानपि चावहसन्त्युत ॥**

सः कामादिमद्भिः कृतो धर्मः भवति मूढदृष्ट्या । साधुषु च धर्मः प्रलापमात्रं ' धर्मो नास्ति ' इति वदन्ति मूढाः । प्रलापमेवाऽऽह– अथेति । नीटी.

**[3]महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः ।**
**न हि सर्वहितः कश्चिदाचारः संप्रदृश्यते ॥**

महाजनाः द्रोणाचार्यादयः । ब्रह्मकर्मादरे सुरकार्यं न स्यात्, अनादरे शिष्टाचारव्याकोप इति भावः । नीटी.

**[4]तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः ।**
**दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया ॥**

तेनैव आचारेणैव । अन्यः विश्वामित्रादिः । अपरं जामदग्न्यादिकम् । सः आचारवान् । तुल्यरूपः वसिष्ठादिः । नीटी.

(१) भा. १२।२५२।१५ ; भामु. १२।२६०।१५ न्ये क्षयाद (न्येच्छया चा) हि (ऽपि).

(२) भा. १२।२५२।१६ ; भामु. १२।२६०।१६ विलीन (प्रलाप) अन्ये ता (अथैता).

(३) भा. १२।२५२।१७ ; भामु. १२।२६०।१७ दृश्यते (वर्तते).

(४) भा. १२।२५२।१८ ; भामु. १२।२६०।१८.

**[1]येनैवान्यः प्रभवति सोऽपरानपि बाधते ।**
**आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् ॥**

उक्तानुवादपूर्वकमाचाराणामनैकाग्र्यं व्यभिचारित्वमाह– येनैवेति । नीटी.

**[2]चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।**
**तेनाऽऽचारेण पूर्वेण संस्था भवति शाश्वती ॥**

एवं श्रुतिस्मृतिसदाचाराणामप्रामाण्यमुक्त्वा स्वमतमाह– चिराभिपन्न इति । अनाद्यविगानप्रवृत्तेन स्वभावेनैव सुखदुःखकार्याकार्यव्यवस्था, न श्रुत्यादिप्रमाणकेन धर्मेणेत्यर्थः । संस्था मर्यादा । नीटी.

धर्मज्ञलक्षणम् , धर्मज्ञवृत्तं धर्मः, प्राणिकल्याणं धर्मप्रयोजनम्

**भीष्म उवाच–**

**§[3]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**तुलाधारस्य वाक्यानि धर्मे जाजलिना सह ॥**

अत्र सुखादिव्यवस्थायां स्वभाव एव नियामक उत धर्म इति विमर्शे तुलाधारवाक्यानि धर्मे प्रमाणत्वेनोदाहरन्तीत्यर्थः । नीटी.

**[4]सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।**
**कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥**

ननु 'लाक्षालवणमांसानि पतनीयानि विक्रये ।' इति लाक्षादिविक्रये दोषस्मृतेस्तद्वतः कथं धार्मिकत्वमित्याशङ्क्याऽऽह– सर्वेषामिति । अयमर्थः– लोके हि उपकारिणं प्रत्युपकुर्वन्ति, अद्रोहिणे न द्रुह्यन्ति चेत्युत्सर्गः । तत्सामान्यादैहिकौ उपकारापकारौ जन्मान्तरेऽपि सुखदुःखप्रदानाय प्रभवतः , न त्वाकस्मिकं कस्यचित्सुखं दुःखं वाऽस्ति जन्मान्तरीयं कारणं विनेत्यनुमीयते । अतः स्वभाववादस्तावदयुक्त एव । श्रुत्यादीनां धर्मे प्रामाण्यमपि वक्ष्यमाणरीत्या युज्यत एवेति । नीटी.

**[1]यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।**
**अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम् ॥**

'मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः' (ऋसं. ८।३०।३) इति मन्त्रलिङ्गात्कुलाचारस्य प्रामाण्यं गम्यते, तदप्यस्मास्वस्तीत्याह– यथावदिति । अहिंस्राणामिति हिंसामयः कुलाचारोऽप्यप्रमाणमित्युक्तम् । मन्त्रार्थस्तु– पित्र्यात् पित्रादिसंसेवितात् मानवात् मनुः मन्त्रः , तत्प्रकाशितात् वेदाविरुद्धादित्यर्थः । पथो मार्गात् नः अस्मान् दूरं मा नैष्ट नयत । परावतः बह्वायुष्मतः अस्मानिति । नीटी.

**[2]प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः ।**
**तेन वैद्यस्तपस्वी वा बलवान्वा विमोह्यते ॥**

शिष्टाचारं प्रमाणयति– प्रनष्ट इति द्वाभ्याम् । शाश्वतः शश्वद्भवः परंपरया वेदमूलकत्वादनादिर्धर्मः शिष्टाचारः , स प्रनष्टः, यतः सदाचारेण क्वचिदंशे विरुद्धेन मोहितः मोहं प्रापितः । यथा 'अवर्त्या शुन आन्त्राणि पेचे' ( ऋसं. ४।१८।१३ ) 'यः पूजयितुं पितृदेवमनुष्यान्पेच आन्त्राणि शुनः' इति श्रुतिस्मृतिभ्यां वामदेवस्य श्रेष्ठतमस्यापि बीभत्स आचार आपदि श्वमांसभक्षणरूपः प्रदर्शितः । पुराणे वा ऋषभादीनां महायोगिनामाचारं दृष्ट्वा आर्हतादयो मोहिताः पाषण्डमार्गमनुगता इत्युक्तम् । तेन मोहरूपेण कारणेन वैद्यो विद्यावान् , तपस्वी जितेन्द्रियः , बलवान् जितकामक्रोधः , सोऽपि विमुह्यते । विमुच्यते इति पाठे तेन सदाचारेणेत्यर्थः । अयं भावः– 'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धनाशे समुत्पन्ने सर्वं त्यजति

---

§ एतदादिनाऽध्यायद्वयेन पूर्वोक्ताक्षेपस्य सविस्तरं समाधानं कृतम् । तत्र प्रामाण्यविचारानुपयोगिनं कथांशं धर्माधर्मविवेकांशं च विहाय प्रामाण्यसंबद्धः कश्चिदेवांशोऽत्र संगृहीतः ।

(१) भा. १२।२५२।१९ ; भामु. १२।२६०।१९ प्रभ (स म) मेव ल (मुपल).

(२) भा. १२।२५२।२० ; भामु. १२।२६०।२०.

(३) भा. १२।२५३।१ ; भामु. १२।२६१।१.

(४) भा. १२।२५४।९ ; भामु. १२।२६२।९.

(१) भा. १२।२५४।२० ; भामु. १२।२६२।१९.

(२) भा. १२।२५४।२१ ; भामु. १२।२६२।२० मोह्य (मुह्य).

दुर्मतिः ॥' इति न्यायेन मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति, स्वभाववादं चानुरुध्यन्ते । बुद्धास्तु श्रुत्यन्तरविरुद्धं विरुद्धांशमात्रं त्यक्त्वा तेनैव सदाचारेण मुच्यन्त इति । नीटी.

**[1]आचाराज्जाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ।**
**एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा ॥**

एतदेवाऽऽह– आचारादिति । धर्मे मोक्षोपयोगिनमधिकारम् । उपसंहरति– एवमिति । साधुभिश्चीर्णे धर्मे यश्चरेत्स धर्ममाप्नुयादित्यन्वयः । नीटी.

**[2]अकारणो हि नेहास्ति धर्मः सूक्ष्मोऽपि जाजले ।**
**भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥**

अकारणः कारणम् अनुष्ठानप्रयोजकं फलम्, तद्धीनः। सूक्ष्मः अभयदानात्मकः । भूतं ब्रह्म, भव्यं स्वर्गादि, उभयार्थमेव धर्माणां शमादीनां यज्ञादीनां च प्रवचनम् अध्ययनं वेदे कृतम् । अतः स्थूलधर्माद्यज्ञादेरन्यः सूक्ष्मधर्मोऽस्तीति भावः । नीटी.

**[3]सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः ।**
**उपलभ्यान्तरा चान्यानाचारानवबुध्यते ॥**

कुतः सूक्ष्मधर्मो दुर्ज्ञेयः ? यतो बहुनिह्नवः । 'सप्तदश प्राजापत्यान् पशूनालभते, सप्तदशः प्रजापतिः, प्रजापतेराप्त्यै' इत्यादिविधयः श्रेयःसाधनत्वेन हिंसामुपदिशन्तोऽहिंसाशास्त्रमुपमृद्नन्तीत्यर्थः । तर्हि तदप्रमाणमेवेत्याशङ्क्याऽऽह– उपलभ्येति । 'उक्षाणं वा वेहतं वा क्षदन्ते' ( ऐब्रा. ३।४ ), 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' ( यास्मृ. १।१०९ ) इति श्रुतिस्मृतिविहितो मधुपर्के गवालम्भ एक आचारः । 'मा गामनागामदितिं वधिष्ट' ( ऋसं. ८।१०१।१५ ) इति मन्त्रलिङ्गावगतो गवोत्सर्गविधिस्तद्विरुद्धोऽन्य आचारः । तत्रानागामिति विशेषणात् क्रत्वर्थहिंसाविधेरहिंसाविधि-

(१) भा. १२।२५४।२२ ; भामु. १२।२६२।२१.
(२) भा. १२।२५४।३५ ; भामु. १२।२६२।३५. नेहा (नैवा) सूक्ष्मोऽपि (सूक्ष्मो हि).
(३) भा. १२।२५४।३६ ; भामु. १२।२६२।३६.

र्ज्यायानिति गम्यते, अनागस्त्वस्य प्राजापत्यपशुष्वपि तुल्यत्वादित्यास्तां तावत् । नीटी.

**[1]ईदृशानशिवान्घोरानाचारानिह जाजले ।**
**केवलाचरितत्वात्तु निपुणान्नावबुध्यसे ॥**

केवलेति । मधुपर्कादौ गवाद्यालम्भः पूर्वैः कृत इत्यन्धपरंपरामात्रात्करोषि, न तु तत्त्वबुद्ध्या । नीटी.

श्रुतिस्मृती धर्मप्रमाणे, निषिद्धशिष्टाचारो न प्रमाणम्

**कपिल उवाच–**

**[2]वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः ॥**

कर्मणां ज्ञानाङ्गत्वं विवक्षुस्तद्वैयर्थ्यशङ्कां तावत्परिहरत्यर्धेन– वेदा इति । नीटी.

**[3]कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।**
**नाऽऽचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥**

( १ ) कर्माणि निषिद्धानि । कुर. ३४

( २ ) ननु कर्मफलस्यापरिहार्यत्वे कथं विश्वामित्रेण वसिष्ठस्य पुत्रशतं हतम् ? तत्फलं नरकपातश्च न प्राप्तः ? इत्याशङ्क्यालौकिकत्वान्न तदुदाहरणमित्याह– कृतानीति । नीटी.

**[4]धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप ।**
**श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ॥**
**[5]प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।**
**वेदशास्त्रप्रमाणं च प्रमाणं तत्सनातनम् ॥**

(१) भा. १२।२५४।४९ ; भामु. १२।२६२।५२ निपुणान्ना (निपुणो ना).
(२) भा. १२।२६२।१ ; भामु. १२।२७०।१.
(३) भा. १२।२८०।१७ ; भामु. १२।२९१।१७ नाऽऽचरे (न चरे) ; ब्रक. २८ ; कुर. ३४–३५ दैवतैर्मु (सदैव मु) कुत्सयेत् (विश्वसेत्) ; बौमि. १।९ भामुवत्.
(४) भा. १२।२८६।४० ; भामु. १२।२९७।४० ; व्य. २४.
(५) भा. १२।२९३।१८; भामु. १२।३०५।७ यच्च वे (यत्त्ववे) प्रमाणं च (द्वयं चैव).

यद्वेदे शास्त्रे च प्रमाणत्वेन पठ्यते तद्वेदशास्त्रं प्रमाणमित्यर्थः । 'तस्माद्यद्वेदेषूक्तं तद्विद्वांस उपजीवन्तीति। तस्माद्ब्राह्मणो नावैदिकमभिधीयेत' इति मैत्रायणीये वेदस्य प्रामाण्यं तदन्यस्याप्रामाण्यं श्रूयते । 'तस्माच्छास्त्रं प्रमाणं ते' ( भगी. १६।२४ ) इति च । ननु वेदशास्त्रस्य प्रामाण्यं स्वोक्त्यैव चेच्छाक्यग्रन्थानामपि तथैव प्रामाण्यं स्यादित्याशङ्क्याऽऽह– सनातनमिति । वेदस्य हि दृष्टकर्तृस्मरणाभावादपौरुषेयतया नित्यत्वेनाप्रामाण्यशङ्कानास्पदत्वमस्ति, न तु संभवद्भ्रमविप्रलम्भानां शाक्यादिपुरुषाणां वाक्यस्येति भावः । नीटी.

पञ्चरात्रागमस्य प्रामाण्यं चित्रशिखण्डिसंज्ञकसप्तर्षिकर्तृकत्वं मन्वादिस्मृतिमूलत्वं वसुराजनिधनोत्तरमन्तर्धानं च

[1]ये हि ते मुनयः ख्याताः सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥

[2]वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ॥

[3]मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः ॥

[4]सप्त प्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः ।
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम् ॥

सप्त प्रकृतयः महदहङ्कारादिमूर्तयः, स्वायंभुवस्तु मूलप्रकृतिरेव । ‡ महत्कर्तृकत्वादिदं शास्त्रमुपादेयमिति पाञ्चरात्रागमस्मृतेः स्तुतिरध्यायशेषेण । नीटी.

‡ 'महाकर्तृकत्वात्' इति साधु ।

(१) भा. १२।३२२।२६ ; भामु. १२।३३५।२७–२८ मुनयः (ऋषयः).

(२) भामु. १२।३३५।२८–२९.

(३) भा. १२।३२२।२७ ; भामु. १२।३३५।२९ ज्ञा एते (जास्ते हि).

(४) भा. १२।३२२।२८ ; भामु. १२।३३५।३०.

मुनीनां धर्मशास्त्रप्रणयनरीतिः, धर्मशास्त्रस्य उत्पत्तिः, धर्मशास्त्रप्रवर्तकाः

[1]एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान् संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥

[2]तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥

आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥

नारायणानुशास्ता हि तदा देवी सरस्वती ।
विवेश तानृषीन् सर्वाल्लोकानां हितकाम्यया ॥

ततः प्रवर्तिता सम्यक्तपोविद्भिर्द्विजातिभिः ।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ॥

[3]आदावेव हि तच्छास्त्रमोङ्कारस्वरभूषितम् ।
ऋषिभिर्भावितं तत्र यत्र कारुणिको ह्यसौ ॥

[4]ततः प्रसन्नो भगवाननिर्दिष्टशरीरगः ।
ऋषीनुवाच तान् सर्वानदृश्यः पुरुषोत्तमः ॥

कृतं शतसहस्रं हि श्लोकानामिदमुत्तमम् ।
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते ॥

[5]प्रवृत्तौ च निवृत्तौ च योनिरेतद्भविष्यति ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥

(१) भा. १२।३२२।२९ ; भामु. १२।३३५।३१–३२ प्रथमार्धानन्तरम् + (भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः । ).

(२) भा. १२।३२२।३०–३३ ; भामु. १२।३३५।३३–३६.

(३) भा. १२।३२२।३४ ; भामु. १२।३३५।३७ भूषितम् (पूजितम्) भिर्भावितं (भिः श्रावितं) तत्र यत्र (यत्र तत्र).

(४) भा. १२।३२२।३५–३६ ; भामु. १२।३३५।३८–३९.

(५) भा. १२।३२२।३७ ; भामु. १२।३३५।४०, योनिरे (यस्मादे) ऋग्यजुःसा (यजुर्ऋक्सा).

[1]तथा प्रमाणं हि मया कृतो ब्रह्मा प्रसादजः ।
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा ॥
[2]सूर्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च ।
सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ॥
अधिकारेषु वर्तन्ते यथास्वं ब्रह्मवादिनः ।
सर्वे प्रमाणं हि यथा तथैतच्छास्त्रमुत्तमम् ॥
[3]भविष्यति प्रमाणं वै एतन्मदनुशासनम् ।
अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ॥
[4]उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥
[5]स्वायंभुवेषु धर्मेषु शास्त्रे चोशनसा कृते ।
बृहस्पतिमते चैव लोकेषु प्रविचारिते ॥
[6]युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥
[7]स हि मद्भावितो राजा मद्भक्तश्च भविष्यति ।
तेन शास्त्रेण लोकेषु क्रियाः सर्वाः करिष्यति ॥
[8]एतद्धि सर्वशास्त्राणां शास्त्रमुत्तमसंज्ञितम् ।
एतदर्थ्यं च धर्म्यं च यशस्यं चैतदुत्तमम् ॥
[9]अस्य प्रवर्तनाच्चैव प्रजावन्तो भविष्यथ ।
स च राजा श्रिया युक्तो भविष्यति महान्वसुः ॥

[1]संस्थिते तु नृपे तस्मिञ्छास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सत्यमेतद्वः कथितं मया ॥
[2]एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः ।
विसृज्य तानृषीन्सर्वान्कामपि प्रस्थितो दिशम् ॥
[3]ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः ।
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् ॥
†उत्पन्नेऽऽङ्गिरसे चैव युगे प्रथमकल्पिते ।
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ॥
[4]जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः ।
धारणात्सर्वलोकानां सर्वधर्मप्रवर्तकाः ॥

प्रवृत्तिधर्मप्रवर्तका निवृत्तिधर्मप्रवर्तकाश्च द्वितये सप्तर्षयः

[5]मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मानसा निर्मिता हि वै ॥
[6]एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्येन कल्पिताः ॥
[7]अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः ।
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥

---

(१) भा. १२।३२२।३८ ; भामु. १२।३३५।४१ तथा प्र (यथाप्र) दजः (दतः).
(२) भा. १२।३२२।३९–४० ; भामु. १२।३३५।४२–४३ तथैत (तथा त).
(३) भा. १२।३२२।४१ ; भामु. १२।३३५।४४ अस्मा (तस्मा).
(४) भा. १२।३२२।४२ ; भामु. १२।३३५।४५.
(५) भा. १२।३२२।४३; भामु. १२।३३५।४६ चोशनसा (चौशनसे) प्रविचा (प्रतिचा).
(६) भा. १२।३२२।४४ ; भामु. १२।३३५।४७.
(७) भा. १२।३२२।४५ ; भामु. १२।३३५।४८ मद्भा (सद्भा).
(८) भा. १२।३२२।४६ ; भामु. १२।३३५।४९ सर्वशा (युष्मच्छा) यशस्यं (रहस्यं).
(९) भा. १२।३२२।४७ ; भामु. १२।३३५।५० वन्तो (नन्तो) राजा श्रि (राजश्रि),

† “ ‘आङ्गिरसे’ इति आकारलोपश्छान्दसः” इति महाभारतादर्शपुस्तके टिप्पणी ।

(१) भा. १२।३२२।४८ ; भामु. १२।३३५।५१ तत्सत्य (तत्सर्व).
(२) भा. १२।३२२।४९; भामु. १२।३३५।५२ प्रस्थितो (प्रसृतो).
(३) भा. १२।३२२।५०–५१; भामु. १२।३३५।५३–५४ न्नेऽऽङ्गि ( न्नेऽङ्गि ).
(४) भा. १२।३२२।५२; भामु. १२।३३५।५५ णात्सर्व (णाः सर्व).
(५) भा. १२।३२७।६१ ; भामु. १२।३४०।६९ हि वै (हि ते).
(६) भा. १२।३२७।६२ ; भामु. १२।३४०।७० पत्येन (पत्ये च).
(७) भा. १२।३२७।६३–६४ ; भामु. १२।३४०।७१–७२.

सनः सनत्सुजातश्च सनकः ससनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥
[1]सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तं धर्ममास्थिताः ॥
[2]एते योगविदो मुख्याः सांख्यधर्मविदस्तथा ।
आचार्या मोक्षशास्त्रे च मोक्षधर्मप्रवर्तकाः ॥

सांख्ययोगवेदारण्यकपञ्चरात्रपाशुपतशास्त्राणि, तेषां प्रवर्तकाः

[3]सांख्यं योगं पञ्चरात्रं वेदारण्यकमेव च ।
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥
[4]सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥

(१) नानामतानि भिन्नप्रस्थानानि । नीटी.

(२) इति वचनात्पाशुपतागमानां सांख्ययोगादिवैदिकप्रस्थानात्प्रस्थानान्तरत्वं प्रतिपन्नम् । तथाभूतानां च तेषां ब्रह्ममीमांसायां तावत्( १ स्मृति )पादे सः( १ सह) सांख्ययोगपाञ्चरात्रैः प्रामाण्यनिराकृतिः । सस्मृ. २०–२१

[5]सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥

सर्वेषां प्रामाण्यसिद्धये विशिष्टकर्तृत्वेन सर्वाणि स्तौति – सांख्यस्येत्यादिना । नीटी.

अपान्तरतमाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥

[1]पञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान् स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥
[2]यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ।
न चैनमेवं जानन्ति तमोभूता विशांपते ॥

आगमं वेदं ज्ञानमनुभवं चानतिक्रम्य एतेषां सर्वेषां निष्ठा परमतात्पर्यविषयीभूतोऽर्थस्तु नारायणः परमात्मैवेति दृश्यत इत्यर्थः । अत्र ‡ भिन्नप्रस्थानत्वाभिमानो मूढानामेवेत्याह– न चेति । नीटी.

[3]तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥

स्वमतमाह– तमेवेति । नीटी.

[4]निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान् हेतुबलान्नाध्यावसति माधवः ॥

निःसंशयेषु, श्रुत्यनुभवबलादिति शेषः । हेतुबलात् कुतर्कबलात् ससंशयान् । नीटी.

‡ परस्परभिन्नार्थेषु परमतात्पर्यकाणि उक्तानि प्रस्थानानीत्यभिमान इत्यर्थः । अभिमानमूढपदाभ्यामुक्तप्रस्थानेष्वन्यतमस्य प्रामाण्यमितरेषामप्रामाण्यमिति सूचितम् । पूर्वत्र तु 'नानामतानि' इति मूलपदस्य 'भिन्नप्रस्थानानि' इति व्याख्याने 'एकस्मिन्नर्थे परमतात्पर्यकाणि विभिन्नोपायेष्ववान्तरतात्पर्यकाणि च, अत एव सर्वाण्येवाबाधितप्रामाण्यानि प्रस्थानानि' इति भिन्नप्रस्थानशब्दस्यार्थः । एवं भिन्नप्रस्थानशब्दस्योभयत्रार्थभेदो बोध्यः । न चोभयत्र समानार्थत्वं संभवति, उक्तमतानां विशिष्टकर्तृकत्वेन स्तुतेर्नारायणरूपैकार्थतात्पर्यकत्वोक्तेश्च नानामतपदव्याख्यानभूतभिन्नप्रस्थानशब्दस्य मूढाभिमतार्थविषयत्वानुपपत्तेः ।

(१) भा. १२।३२७।६५ ; भामु. १२।३४०।७३ निवृत्तं (निवृत्तिं).

(२) भा. १२।३२७।६६ ; भामु. १२।३४०।७४.

(३) भा. १२।३३७।१ ; भामु. १२।३४९।१ योगं (योगः) पञ्च (पाञ्च).

(४) भा. १२।३३७।५९ ; भामु. १२।३४९।६४ गं पञ्च (गः पाञ्च) ; सस्मृ. २० भामुवत्.

(५) भा. १२।३३७।६०–६२ ; भामु. १२।३४९।६५–६७ ; पप्र. २१.

(१) भा. १२।३३७।६३ ; भामु. १२।३४९।६८ पञ्च (पाञ्च); विपा. ३।२।५२१ पञ्च (पाञ्च) द्वितीयचरणे (वक्ता नारायणः परः) तेषु दृश्यते (तद्विशिष्यते); पप्र. २१ वेत्ता (वक्ता) पू.

(२) भा. १२।३३७।६४ ; भामु. १२।३४९।६९; विपा. ३।२।५२१ मेवं (मेव).

(३) भा. १२।३३७।६५ ; भामु. १२।३४९।७० र्तारं (र्तारः) च वादिनः (वचो मम).

(४) भा. १२।३३७।६६ ; भामु. १२।३४९।७१.

[1]वेदमेकं सांख्ययोगं योगारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते ॥

[2]पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ॥

ईदृशा एव पाञ्चरात्रा अपि मुच्यन्त इत्याह– पाञ्चरात्रेति । नीटी.

[3]यशः कान्तिर्धनं धर्मो नारायणपरात्मकः ॥

' वेदमेकं...नारायणपरात्मकः ॥ ' इति नारदपञ्चरात्रस्य वेदात्मकत्वमुक्तम् । विपा. ३।२।५२२

[4]सांख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन् ।
सर्वैः समस्तैर्ऋषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणम् ॥

सनातने श्रुतिप्रतिपादितत्वादाद्यन्तशून्ये उमे अपि । तेन पञ्चरात्रस्य पुंप्रणीतत्वं वेदविरुद्धत्वं च सूचितम् । तथाऽप्यवान्तरतात्पर्यभेदेऽपि परमतात्पर्यं त्वेकमेवेत्याह– सर्वैरिति । ' इदं विश्वं नारायणः ' इति ' इदं सर्वं यदयमात्मा ' ' ब्रह्मैवेदं सर्वम् ' इत्यादिश्रुतेरर्थो ब्रह्माद्वैतरूपो दर्शितः । नीटी.

[5]यः प्रवृत्तां श्रुतिं सम्यक्शास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥

(१) विपा. ३।२।५२२.

(२) भा. १२।३३७।६७ ; भामु. १२।३४९।७२ पञ्च (पाञ्च) यथाक्र (यथा क्र); विपा. ३।२।५२२ चतुर्थचरणे (तं हरिं प्रविशन्ति ते).

(३) विपा. ३।२।५२२.

(४) भा. १२।३३७।६८ ; भामु. १२।३४९।७३.

(५) भा. १३।२५।८ ; भामु. १३।२४।८ ; गृक. ३०० वृत्तां (वृत्तिं) सम्यक्शास्त्रं वा (मोहाच्छास्त्रं च) भिः कृतम् (भाषितम्) दूष (द्वेष) घातिनम् (घातकम्); वृर. ५०४ (यः प्रवृत्तां श्रुतिं हन्यात् शास्त्रं च मुनिभाषितम् । भूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातकम् ॥ ).

[1]स्वयं वृतेति सावित्री पित्रा वै प्रत्यपद्यत ।
तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा नेतरे जनाः ॥

पित्रा आज्ञप्ता सती स्वयं वृतेनैव भर्त्रा योगं प्रत्यपद्यत, तच्च इतरे धर्मज्ञा न प्रशंसन्ति । नीटी.

साधूनामाचारः प्रमाणम्

[2]एतत्तु नापरे चक्रुर्न परे जातु साधवः ।
साधूनां पुनराचारो गरीयो धर्मलक्षणम् ॥

तत्र हेतुः– एतदिति । अपरे पुनः शिष्टाचारत्वादिदमपि गरीय इत्याहुः । नीटी.

[3]आचारलक्षणो धर्मः सन्तश्चाऽऽचारलक्षणाः ।
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ॥

सन्तः शिष्टाः । इन्दु. २

श्रुतिस्मृतिशिष्टाचाराः प्रमाणानि धर्मे

[4]यानीहाऽऽगमशास्त्राणि याश्च काश्चित्प्रवृत्तयः ।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ॥

[5]इमे तु लोकधर्मार्थं त्रयः सृष्टाः स्वयंभुवा ।
पृथिव्याः सर्जने नित्यं सृष्टास्तानपि मे शृणु ॥

त्रयो धर्माः । सर्जने सर्जनकाले । नीटी.

[6]वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
शिष्टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः ॥

(१) भा. १३।४५।५ ; भामु. १३।४५।४ ति सावित्री (न साऽऽज्ञप्ता).

(२) भा. १३।४५।६ ; भामु. १३।४५।५ र्न परे (रपरे) चतुर्थचरणे (गरीयान् धर्मलक्षणः).

(३) भा. १३।१०७।९ ; भामु. १३।१०४।९ श्चाऽऽचार ( श्चारित्र ) यथा वृ ( यथावृ ) ; पमा. १।१३३ यथा वृ ( यथावृ ) ; इन्दु. २ पमावत्.

(४) भा. १३।१२३।३ ; भामु. १३।१२२।४.

(५) भा. १३।१२९।४; भामु. १३।१४१।६४ तु लोक (ते लोक) पृथिव्याः (पृथिव्यां) सृष्टास्ता (सृष्टांस्ता).

(६) भा. १३।१२९।५ ; भामु. १३।१४१।६५ र्णः परः (र्णोऽपरः).

आगमः प्रत्यक्षम् आचारश्च त्रयं प्रमाणम्

[1]**निर्णये वा महाबुद्धे सर्वधर्मभृतां वर ।**
**प्रत्यक्षमागमो वेति किं तयोः कारणं भवेत् ॥**

श्रुतिप्रत्यक्षयोः किं बलवदिति प्रश्नः । नीटी.

**भीष्म उवाच–**

[2]**नास्त्यत्र संशयः कश्चिदिति मे वर्तते मतिः ।**
**शृणु वक्ष्यामि ते प्राज्ञ सम्यक्त्वमनुपृच्छसि ॥**
[3]**संशयः सुगमो राजन्निर्णयस्त्वत्र दुर्गमः ।**
**दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनम् ॥**

अनन्तं क्वचिच्छ्रुत्यपेक्षया प्रत्यक्षं प्रबलं क्वचित्प्रत्यक्षापेक्षया श्रुतिरित्यर्थः । नीटी.

[4]**प्रत्यक्षं कारणं दृष्टं हैतुकाः प्राज्ञमानिनः ।**
**नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च ।**
**तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ॥**

केचित्प्रत्यक्षं प्रबलं मत्वा हैतुकाः तार्किकाः परमाण्वादीन् प्रज्ञया नित्यत्वादिगुणयुक्तान् कल्पयन्तः सत्यम् अबाधितं वाङ्मनसाऽतीतं वस्तु नास्तीत्येव निश्चयं कुर्वन्ति, परैर्वैदिकैरुपालब्धाः सन्तस्तत्र संशयं कुर्वन्ति । नीटी.

[5]**अथ चेन्मन्यसे चैकं कारणं किं भवेदिति ।**
**शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च ।**
**प्राणयात्रामनेकां च कल्पयानेन भारत ॥**

यदि त्वमपि एकम् असंहतं ब्रह्म कारणं कथं भवेदिति संशयवानसि तर्हि दीर्घकालसेवनादिनाऽयमर्थो युक्तेन योगेन वेदितुं शक्यः । नीटी.

(१) भा. १३।१४७।२ ; भामु. १३।१६२।२ भृतां (विदां).
(२) भा. १३।१४७।३ ; भामु. १३।१६२।३ क्त्वमनु (क्त्वं मेऽनु).
(३) भा. १३।१४७।४ ; भामु. १३।१६२।४ पूर्वार्धे ( संशयः सुगमस्तत्र दुर्गमस्तस्य निर्णयः । ).
(४) भा. १३।१४७।५ ; भामु. १३।१६२।५–६ दृष्टं हे ( दृष्ट्वा है ).
(५) भा. १३।१४७।६ ; भामु. १३।१६२।६–७ कल्पया (कल्पमा).

[1]**तत्परेणैव नान्येन शक्यं ह्येतत्तु कारणम् ।**
**हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम् ।**
**ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते ॥**

एतस्य सत्यवस्तुनः । हेतूनामन्तम् । सर्वसंशयोच्छेदे सति कल्पनासंज्ञा हेतवो निवर्तन्ते । संशयोच्छेदश्च यदा ज्योतिः प्रत्यक्चैतन्यं विपुलम् अनन्तं प्रतिपद्यते तदैव भवति । नीटी.

[2]**तत्त्वेनाऽऽगमनं राजन् हेत्वन्तगमनं तथा ।**
**अग्राह्यमनिबद्धं च वाचः संपरिवर्जनम् ॥**

हेतुतः तर्कात् यद्वस्त्वधिगमनं तदधिगमनं न भवति । तर्केणापि हि शून्यप्रधानपरमाणवः कारणत्वेन प्रतिपाद्यन्ते, तच्चाग्राह्यम् । यतो यत् वाचा वेदेन अनिबद्धम् अप्रतिपादितं तद्वर्जयेदिति न्यायः, ‘ईक्षतेर्नाशब्दम्’ (ब्रसू. १।१।५) इति प्रतिपादनात् । एतेन सर्वप्रमाणापेक्षया श्रुतेर्बलीयस्त्वं सिद्धम् । नीटी.

**युधिष्ठिर उवाच–**

[3]**प्रत्यक्षं लोकतः सिद्धं लोकाश्चाऽऽगमपूर्वकाः ।**
**शिष्टाचारो बहुविधो ब्रूहि तन्मे पितामह ॥**

( प्रत्यक्षम्, ) लोकतः सिद्धिः अनुमानम्, आगमपूर्वः शिष्टाचारश्चेति प्रमाणानि । एतेषां मध्ये किं प्रबलमिति प्रश्नार्थः । नीटी.

**भीष्म उवाच–**

[4]**धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।**
**संस्था यत्नैरपि कृता कालेन परिभिद्यते ॥**

(१) भा. १३।१४७।७ ; भामु. १३।१६२।८–९ ह्येतत्तु कारणम् (ह्येतस्य दर्शनम्).
(२) भा. १३।१४७।८ ; भामु. १३।१६२।९ तत्त्वेना (न त्वेव) हेत्वन्तग (हेतुतो ग) वाचः ( वाचा ) र्जनम् (र्जयेत्).
(३) भा. १३।१४७।९ ; भामु. १३।१६२।१० द्धं लोकाश्चाऽऽगमपूर्वकाः (द्धिर्लोकश्चाऽऽगमपूर्वकः) धो ब्रूहि तन्मे (धस्तन्मे ब्रूहि).
(४) भा. १३।१४७।१० ; भामु. १३।१६२।११ परि (प्रति).

शिष्टाचारस्य दुरात्मभिरुच्छेदितत्वाद्वेद एव मुख्यं प्रमाणम् , प्रत्यक्षानुमानयोर्व्यभिचारित्वेनाविश्वसनीयत्वादित्याह– धर्मस्येत्यादिना । नीटी.

[1]अधर्मा धर्मरूपेण तृणैः कूपा इवाऽऽवृताः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥

वृत्तं शिष्टाचारः । नीटी.

[2]अवृत्त्या ये च भिन्दन्ति श्रुतत्यागपरायणाः ।
धर्मविद्वेषिणो मन्दा इत्युक्तास्ते न संशयः ॥

भिन्दन्ति वृत्तम् । तेषु प्रत्यक्षानुमानाचारेषु । नीटी.

[3]अतृप्यन्तस्तु साधूनां य एवाऽऽगमबुद्धयः ।
परमित्येव संतुष्टास्तानुपास्स्व च पृच्छ च ॥

अतृप्यन्तः नित्यं सोत्कण्ठाः । आगमजन्याः बुद्धयः येषां ते एव परं श्रेष्ठं प्रमाणमित्यन्वयः । नीटी.

[4]कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ ।
धर्म इत्येव संबुद्धास्तानुपास्स्व च पृच्छ च ॥

[5]न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायकर्मभिः ।
आचारः कारणं चैव धर्मश्चैव त्रयं पुनः ॥

वृत्तं प्रत्यक्षदृष्टं शीलम् । आचारः शौचादिः । कारणं वेदः । त्रयं मिलित्वैको धर्मः । स धर्मः साधनीय इत्यर्थः । स्वाध्यायकर्म वेदरक्षार्थमाचारान्तर्गतमेव ज्ञेयम् । नीटी.

(१) भा. १३।१४७।११ ; भामु. १३।१६२।१२ अधर्मा (अधर्मो) पा इवाऽऽवृताः ( प इवाऽऽवृतः ).

(२) भा. १३।१४७।१२ ; भामु. १३।१६२।१३ त्त्या ये च ( त्ता ये तु ) श्रुत ( श्रुति ) चतुर्थचरणे (इत्युक्तस्तेषु संशयः ).

(३) भा. १३।१४७।१३ ; भामु. १३।१६२।१४.

(४) भा. १३।१४७।१४ ; भामु. १३।१६२।१५ बुद्धास्ता ( बुद्धस्ता ).

(५) भा. १३।१४७।१५ ; भामु. १३।१६२।१६ यज्ञस्वाध्यायकर्मभिः ( यज्ञाः स्वाध्यायकर्म च ) व त्रयं ( कस्त्रयं ).

युधिष्ठिर उवाच–

[1]पुनरेवेह मे बुद्धिः संशये परिमुह्यते ।
अपारे मार्गमाणस्य परं तीरमपश्यतः ॥

[2]वेदाः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते चैषां धर्मश्चैकस्त्रयं कथम् ॥

प्रमाणभेदात्प्रमेयैर्धर्मैरपि त्रिभिर्भवितव्यम् । नीटी.

भीष्म उवाच–

[3]धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ॥

कथमेको धर्मस्त्रितयप्रतिपाद्य इत्याशङ्क्याऽऽह– धर्मस्येति । हे राजन् , यद्येवं धर्मत्रयं मन्यसे, तन्नेति शेषः । किंतु ह्रियमाणस्यैकस्यैव धर्मस्य त्रिधा त्रिप्रकारा विचारणा । एक एव प्रमाणत्रयसंवादेन परीक्षणीय इत्यर्थः । नीटी.

[4]एक एवेति जानीहि त्रिधा तस्य प्रदर्शनम् ।
पृथक्त्वे चैव मे बुद्धिस्त्रयाणामपि वै तथा ॥

त्रिधेत्यस्य व्याख्यानम्– एक एवेति । त्रयाणां प्रमाणानां पृथक्त्वे प्रत्येकं स्वातन्त्र्येण धर्मप्रतिपादकत्वे मम बुद्धिर्न च । नीटी.

[5]उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर ।
जिज्ञासा तु न कर्तव्या धर्मस्य परितर्कणात् ॥

प्रत्यक्षस्यातीन्द्रिये धर्मे प्रमाणाभावादाचारस्य च प्रध्वंसितत्वात्त्रयाणां प्रमाणानां मध्ये परिशेषाद्य उक्तो वेदे स एव मार्गः , न तु परितर्कणाद्धर्मस्य विचारः कर्तव्य इत्यर्थः । नीटी.

(१) भा. १३।१४७।१६ ; भामु. १३।१६२।१७ मुह्यते ( मुह्यति ).

(२) भा. १३।१४७।१७ ; भामु. १३।१६२।१८ वेदाः ( वेदः ).

(३) भा. १३।१४७।१८ ; भामु. १३।१६२।१९.

(४) भा. १३।१४७।१९ ; भामु. १३।१६२।२० तस्य प्रद ( धर्मस्य द ) चैव मे ( च न मे ).

(५) भा. १३।१४७।२० ; भामु. १३।१६२।२१ तु न ( न तु ).

[1]सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ।
अन्धो जड इवाशङ्को यद्ब्रवीमि तदाचर ॥

अत्र वेदे । अशङ्की शङ्काशून्यः । नीटी.

[2]प्रमाणमप्रमाणं वै यः कुर्यादबुधो नरः ।
न स प्रमाणतामर्हो विवादजननो हि सः ॥

विभिन्ना धर्मशास्त्रप्रणेतारः

¶[3]श्रुता मे मानवा धर्माः ॥

¶ भाण्डारकरप्राच्यविद्यासंशोधनसंस्थामुद्रित–आश्वमेधिकपर्वपरिशिष्टे ( परिशिष्टम् १ संख्या ४ ) एते श्लोकाः समुपलभ्यन्ते– ' श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा । गार्गीया गौतमीयाश्च तथा गोपालकस्य च ॥ पराशरकृताः पूर्वं मैत्रेयस्य च धीमतः । औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ॥ ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया । धूम्रायणकृता धर्माः काण्डवैश्वानरा अपि ॥ भार्गव्या याज्ञवल्क्याश्च मार्कण्डेयकृतास्तथा । भारद्वाजकृता ये च बृहस्पतिकृताश्च ये ॥ कुणेश्च कुणिबाहोश्च विश्वामित्रकृताश्च ये । सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च ॥ पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च । अगस्त्यगीता मौद्गल्याः शाण्डिल्याश्चैव पावनाः ॥ वालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः । आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ॥ प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया । वैय्याघ्रा व्यासगीताश्च 'विभाण्डककृताश्च ये ॥ नारदीयाः श्रुता धर्माः कापोताश्च श्रुता मया । तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा ॥ क्रौञ्चा मृदङ्गगीताश्च सौर्या हारितकाश्च ये । ये पिशङ्गकृताश्चापि कौतुपा हंसपालकाः ॥ उद्दालककृता धर्मा औशनस्यास्तथैव च ॥ वैशम्पायनगीताश्च ये चान्येऽप्येवमादयः । एतेभ्यः सर्वधर्मेभ्यो देव त्वन्मुखनिःसृताः । पावनत्वात्पवित्रत्वाद्विशिष्टा इति मे मतिः ॥ तस्माद्धि त्वां प्रपन्नस्य त्वद्भक्तस्य च भावतः । युष्मदीयान्वरान्धर्मान्पुण्यान्कथय मेऽच्युत ॥ ' इति ।

(१) भा. १३।१४७।२१ ; भाम्. १३।१६२।२२ शङ्को ( शङ्की ).

(२) भा. १३।१४७।२४ ; भाम्. १३।१६२।२५ नरः ( जनः ).

(३) पमा. १।९९–१००.

औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ।
ब्रह्मणा कथिताश्चैव कौमाराश्च श्रुता मया ॥

धूम्रायणकृता धर्माः कण्वा वैश्वानरा अपि ।
भार्गवा याज्ञवल्क्याश्च मार्कण्डेयाश्च कौशिकाः ॥

भरद्वाजकृता ये च बृहस्पतिकृताश्च ये ।
कुणेश्च कुणिबाहोश्च विश्वामित्रकृताश्च ये ॥

सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च ।
पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च ॥

अगस्त्यगीता मौद्गल्याः शाण्डिल्याः सोलभायनाः ।
वालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः ॥

वैयाघ्रा व्यासगीताश्च विभण्डककृताश्च ये ।
तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा ।
वैशम्पायनगीताश्च ये चान्ये एवमादयः ॥

आश्वमेधिके पर्वण्यपि तत्तन्मुनिप्रोक्तधर्मानुक्रमणाद्धर्मशास्त्रकर्तारो गम्यन्ते । ' श्रुता मे मानवा धर्माः ' इत्युपक्रम्यैवं पठ्यते– औमा माहेश्वरा इत्यादि ।
पमा. १।९९

[1]धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः ॥

[2]श्रुतिः स्मृतिर्ममैवाऽऽज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥

[3]यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।
उदितेऽनुदिते चैव होमभेदो यथा भवेत् ॥
तदा कुलक्रमायातमाचारं त्वाचरेद्बुधः ।
स गरीयान् महाबाहो सर्वशास्त्रोदितादपि ॥

(१) पमा. १।१२–१३.

(२) पमा. २।८ पूर्वार्धे ( श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । ) द्रोही मद्भक्तोऽपि ( द्वेषी न स भक्तो ) स्मर्यते इत्युक्तम् ; मुक्ता. ४ आश्वमेधिके.

(३) आन. ५८७.

## वाल्मीकिरामायणम्

आचारः प्रमाणम्

**[1]द्विजातिचरितो धर्मः शास्त्रदृष्टः सनातनः ॥**

द्विजातिचरितः राजर्षिभिः आचरितः । राभू.

## मनुः

प्रजापतिना देवेन वेदशब्देभ्यः सर्वेषां नामानि कर्माणि धर्माधर्मरूपाणि च निश्चितानि

**[2]सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।**
**वेदशब्देभ्य एवाऽऽदौ पृथक्संस्थाश्च निर्ममे ॥**

( १ ) ‡स प्रजापतिः सर्वेषाम् अर्थानां नामानि चक्रे । यथा कश्चित् पुत्राणां जातानामन्येषां वा संव्यवहारार्थं करोति– ‘ वृद्धिरादैच् ’ ‘ धीश्रीस्त्रीम् ’ इति । शब्दार्थसंबन्धं कृतवान् ‘ गौरश्वः पुरुषः ’ इति । कर्माणि च निर्ममे धर्माधर्माख्यानि अदृष्टार्थान्यग्निहोत्रादीनि च । सृष्ट्वा च कर्माणि तत्र संस्थाः व्यवस्थाः चकार– ‘ इदं कर्म ब्राह्मणेनैव कर्तव्यं कालेऽमुष्मै च फलाय ’ । अथवा दृष्टार्था मर्यादा संस्था– ‘ गोप्रचार इह च प्रदेशे न कर्तव्यः ’ ‘ इदमुदकं सस्यसेकार्थममुष्मिन् ग्रामे न देयं यावत्तस्माद्ग्रामादस्माभिरयमुपकारो न लब्धः ’ । दृष्टार्थानि च कर्माणि निर्ममे । तत्र यानि अदृष्टार्थानि तानि वेदशब्देभ्यः वैदिकेभ्यो वाक्येभ्यः ।

ननु सर्वस्य तेनैव सृष्टत्वात्तस्यैव स्वातन्त्र्यात् वेदं सस्र्जे कर्मानुष्ठानपरिपालनार्थमित्येवं वक्तव्यम् । वेदसृष्टिश्च वक्ष्यते ‘ अग्निवायुरविभ्यश्च ’ इत्यत्रान्तरे (मस्मृ. १।२३ ) ।

उच्यते– भिन्नमत्र दर्शनम् । केचिदाहुः, अन्यस्मिन् कल्पे वेदास्तेनाधीतास्ते च महाप्रलयेन प्रलीनाः, पुनरन्यस्मिन् कल्पे सुप्तप्रतिबुद्धवत्सर्वे प्रथमं प्रतिभाति, स्वप्नपठितो यथा कस्यचित् श्लोकः प्रतिभाति । ( भाति च ? ) वेदे ‘ गौरनुबन्ध्यः ’ ‘ अश्वस्तूपरो गोमृगः ’ ( शुसं. २४।१ ) इत्यादिवाक्येभ्यः शब्दानुस्मृतिपूर्वकं झटिति तानर्थान् स्मृत्वोत्पद्यमानांश्च पदार्थान् दृष्ट्वा ‘ अस्यार्थस्य अयं शब्दः नामाऽऽसीत्, संप्रत्यस्यैव क्रियताम् ’ इत्युभयं वेदशब्देभ्य एव नामानि कर्माणि च सृष्टवान् । अथवा नैव वेदाः प्रलीयन्ते महाप्रलयेऽपि । योऽसौ पुरुषः केषांचिदिष्टस्तथा वेदा आसते । स एवान्तरण्डं ब्रह्माख्यं पुरुषं निर्माय वेदानध्यापयामास । एवं स ब्रह्मा वेदशब्देभ्यः सर्वं निर्मितवान् ।

यदत्र तत्त्वं तदस्माभिरुक्तमेव । अथ पौराणिकी प्रक्रिया प्रयुज्यते । साऽस्माभिः प्रदर्श्यत एव ।

आदौ जगत्सर्गे इत्यर्थः । अथवा आदौ यानि नामान्यनपभ्रष्टानि, न पुनरिदानीन्तनान्यशक्तिजानि गाव्यादीनि । पृथक्, न यथा शरीरं तत्त्वसमुदायरूपमेवं निर्ममे, किं तर्हि ? पृथक् । ¶ मेधा.

( २ ) पृथक् विभिन्नाः संस्थाः संस्थानानि द्विपात्त्वादीनि । † मवि.

( ३ ) भगवता व्यासेनापि वेदमीमांसायां वेदपूर्विकैव जगत्सृष्टिर्व्युत्पादिता । तथा च शारीरकसूत्रम्– ‘ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्’ (१।३।२८) । अस्यार्थः– देवतानां विग्रहवत्त्वे वैदिके वस्वादिशब्दे देवतावाचिनि विरोधः स्यात्, वेदस्याऽऽदिमत्त्वप्रसङ्गात् इति चेत्, नास्ति विरोधः । कस्मात् ? अतः शब्दादेव जगतः प्रभवात् उत्पत्तेः । प्रलयकालेऽपि सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थितः । स इह कल्पादौ हिरण्यगर्भस्य परमात्मन एव प्रथमदेहिमूर्तेर्मनस्यवस्थान्तरमनापन्नः सुषुप्तप्रबुद्धस्येव प्रादुर्भवति । तेन प्रदीपस्थानीयेन सुरनरतिर्यगादिप्रविभक्तं जगदभिधेयभूतं निर्मिमीते । कथमिदं गम्यते ? प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । प्रत्यक्षं श्रुतिः, अनपेक्षत्वात् । अनुमानं

---

‡ टीकायामस्यां मतद्वयम्, वेदकर्ता देवः इति वेदोपदेष्टा देवः इति च ।

(१) वारा. २।६६।३५ तिचरितो ( तिभिरयं ) ; वाराकु. २।६१।२५.

(२) मस्मृ. १।२१.

¶ गोरा., नन्द., भाच. मेधागतम् ।

† शेषं मेधागतम् ।

स्मृतिः, अनुमीयमानश्रुतिसापेक्षत्वात्। तथा च श्रुतिः— 'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभि सौभगेत्यन्याः प्रजाः'। स्मृतिस्तु— 'सर्वेषां तु स नामानि' इत्यादिका मन्वादिप्रणीतैव। पृथक्संस्थाश्चेति। लौकिकीश्च व्यवस्थाः 'कुलालस्य घटनिर्माणम्, कुविन्दस्य पटनिर्माणम्' इत्यादिकं विभागेन निर्मितवान्। ‡ ममु.

(४) पृथक्संस्थाः कुलालस्य कम्बुग्रीवादिघटनिर्माणं कुविन्दस्य पटनिर्माणं द्विचतुष्पदाद्याकृतीर्वा निर्ममे इत्यन्वयः, 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः' इति श्रुतेः। पुरः शरीराणि। † मच.

प्रजापतिना ऋग्यजुःसामानि निर्मितानि निष्कृष्टानि वा अग्निवायुरविभ्यः

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥**

(१) तिस्र एव देवता अग्निप्रभृतयः इति नैरुक्ताः, सत्यप्यभिधाननानात्वे। अतस्तेन दर्शनेनोच्यते। एताभ्यस्तिसृभ्यो यज्ञसिद्ध्यर्थम्। यागसंप्रदानत्वात्तासां चतुर्थी। त्रयम् ऋग्यजुःसामलक्षणं ब्रह्म वेदाख्यं दुदोह। द्विकर्मकोऽयं धातुः। प्रधानं कर्म त्रयम्। अप्रधानेन द्वितीयेन कर्मणा भवितव्यम्। न च तदस्ति। अतः पञ्चम्येवेयमिति मन्यामहे। अग्न्यादिभ्यो दुदोह अक्षारयत् अभावयत्।

कथं पुनरग्न्यादिभ्यो वर्णात्मा शब्दो मन्त्रवाक्यानि ब्राह्मणवाक्यानि च भवेयुः। किं नोपपद्यते? कः शक्तीरदृष्टाः असतीर्वक्तुमर्हति? नाऽऽख्यातार्थो विकल्पयितुं युक्तः। पञ्चमी तर्हि किमर्था? 'दुहि याचि' इति द्वितीयया भवितव्यम्। किंच, दृष्टप्रमाणविरोधी प्राग्वृत्तोऽर्थ उच्यमानो न मनःपरितोषमाधत्ते प्रामाणिकानाम्। परिहृतो विरोधः स्वरूपपरत्वाश्रयणेनैषामागमानाम्— 'ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्' इति। अग्न्यादयोऽपि देवता ऐश्वर्यभाजो निरतिशयशक्तिश्च प्रजापतिः, तत्र का नामानुपपत्तिः? अस्मिन् दर्शने पञ्चम्यपि विवक्षया। अतः कारकाणि कथितानि यत्रापादानसंज्ञेत्यपादानविवक्षायां भाष्ये समर्थितानि(१)।

अन्यदर्शने कथम्? चतुर्थी तावद्युक्तैव। अर्थवादाश्चैते। तत्र द्वितीयं कर्म आत्मैव 'प्रजापतिरात्मानं दुदोह'। दोहनं चाध्यापनं परसंक्रान्तिसामान्येन।

अथापि पञ्चमी, तत्राप्याग्नेया मन्त्राः आदौ ऋग्वेदे, अतः 'अग्नेरजायत' इत्युच्यते। यजुर्वेदे 'इषे त्वोर्जे त्वा' इति। इट् अन्नम्, तत् मध्यस्थानत्वात् वायुना वर्षदानेन क्रियते। ऊर्क् प्राणः, स वायुरेव। अत आदितो वायुकार्यसंबन्धात् वायोरित्युपमा। अथवा आध्वर्यवमार्त्विज्यं बहुप्रकाराश्चेष्टाश्च सर्वा वायोरित्यनेन सामान्येन वायोर्जन्म यजुर्वेदस्य। अनधिकारस्य सामगीत्ययोग्यत्वात् उत्तमाध्ययनानि(१ ध्येयानि) सामानि, उत्तमस्थानश्चाऽऽदित्य इति। मेधा.

(२) ऋग्यजुःसामाख्यं ब्रह्मत्रयं सनातनं नित्यमपि सूक्ष्मम् आदौ दैव्या शक्त्या अग्निवायुरविभ्यः आकृष्टवान्। यज्ञसिद्ध्यर्थम्, आगमिकत्वाच्च नातिशङ्क्यमेतत्। तथा च 'ऋग्वेद एवाग्नेरजायत' इत्यादि ब्राह्मणम्। ¶ गोरा.

(३) ब्रह्म ऋग्यजुःसामसंज्ञं वेदत्रयम् अग्निवायुरविभ्यः आकृष्टवान्। सनातनं नित्यम्। वेदापौरुषेयत्वपक्ष एव मनोरभिमतः। पूर्वकल्पे ये वेदास्त एव परमात्ममूर्तेर्ब्रह्मणः सर्वज्ञस्य स्मृत्यारूढाः। तानेव कल्पादौ अग्निवायुरविभ्य आचकर्ष। श्रौतश्चायमर्थो न शङ्कनीयः। तथा च श्रुतिः— 'अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः' इति। आकर्षणार्थत्वात् दुहिधातोर्नाग्निवायुरवीणामकथितकर्मता, किंतु अपादानतैव। यज्ञसिद्ध्यर्थम्, त्रयीसंपाद्यत्वाद्यज्ञानाम्।

‡ शेषं मेधागतम्।

† शेषं ममुगतम्।

(१) मस्मू. १।२३.

¶ मवि., माच. गोरागतम्।

आपीनस्यक्षीरवत् विद्यमानानामेव वेदानामभिव्यक्ति-प्रदर्शनार्थमाकर्षणवाचको गौणो दुहिः प्रयुक्तः । ममु.

(४) दुदोह आदित्यादिद्वारा आविश्चकार, अन्यथा वेदस्य कर्तृमत्त्वप्रसङ्गात् । मच.

(५) अग्निं वायुं रविं च सृष्ट्वा तेभ्य इत्यर्थः । ब्रह्म वेदाभिमानिनीं देवतां प्रादुष्कृतवान् । मन्व.

स्वयंभुकृतं मानवं धर्मशास्त्रम्

**'इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः ।**
**विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन् ॥**

(१) इह शास्त्रशब्देन स्मार्तो विधिप्रतिषेधसमूह उच्यते, न तु ग्रन्थः, तस्य मनुना कृतत्वात् । तथा हि मानव इति व्यपदेशोऽस्य । इतरथा हि हैरण्यगर्भ इति व्यपदिश्येत । केचित्तु हिरण्यगर्भेणापि कृते ग्रन्थे मनुना बहूनां प्रकाशितत्वात्तेन व्यपदेशो युज्यत एव । यथा हिमवति प्रथममुपलभ्यमाना गङ्गाऽन्यतोऽप्युत्पन्ना हैमवतीति व्यपदिश्यते, यथा च नित्यं दर्शनात्काठकं प्रवचनं कठेन व्यपदिश्यते । सत्स्वप्यन्येष्वध्येतृष्वध्यापयितृषु च प्रवचनप्रकर्षात्कठेन व्यपदेशः । नारदश्च स्मरति— ' शतसाहस्रोऽयं ग्रन्थः प्रजापतिना कृतस्ततः स मन्वादिभिः क्रमेण संक्षिप्तः ' इति । अतोऽन्यकृतत्वेऽपि मानवव्यपदेशो न विरुद्धः । शास्त्रशब्देन ग्रन्थाभिधानमपि शासनरूपार्थप्रतिपादकत्वात् दृष्टमेव ।

मामेव ग्राहयामास अहं तेनाध्यापित इत्यर्थः । स्वयमादितः विधिवत् इत्येभिः पदैरागमस्याविभ्रंश उच्यते । ग्रन्थकारेण हि स्वकृतो ग्रन्थो यः स्वयमध्याप्यते प्रथमं तत्र मात्राऽपि न परिहीयते । अन्यस्य हि तस्मादधिगतवतोऽन्यमध्यापयतो न तद्ग्रन्थाविनाशे यत्नो भवति । कर्तुरप्यध्यापितपूर्वस्य ' प्रतिष्ठापितो मया पूर्वमयं ग्रन्थः ' इति द्वितीयवारं प्रमादालस्यादिना भ्रंशः संभाव्यते । अत आदित इत्युक्तम् । विधिवत् शिष्योपाध्याययोरनन्यमनस्कतादिगुणोऽवहितचित्तता विधिः । अर्हे वतिः ।

मरीच्यादींस्त्वहं मुनीन् । मरीच्यादयः प्रसिद्धप्रभावाः, तैरप्येतन्मत्सकाशादधीतमित्यात्मनो विशिष्टशिष्यसंबन्धेन सिद्धमौपाध्यायिकं($ १यकं) दर्शयन् महर्षीणां शास्त्रमाहात्म्येन च श्रद्धातिशयं जनयत्यध्ययनाविरामाय । एवंविधमेतन्महच्छास्त्रं यन्मरीच्यादिभिरप्यधीतम्, एष चेदृशो महात्मा मनुस्तेषामुपाध्याय इति युक्तमेतस्य सकाशादेतद्ग्रन्थाध्ययनमित्या शास्त्रपरिसमाप्तेर्नोपरमन्ते श्रोतार इत्युभयथाऽपि शास्त्रप्रशंसा । मेधा.

(२) सः ब्रह्मा इदं शास्त्रम् इमं ग्रन्थं कृत्वा शास्त्रस्य ' इदं कर्तव्यम्, इदं न ' इत्येवंस्वरूपनित्यत्वान्मामेवाऽऽत्मनाऽऽदौ यत्नतोऽध्यापितवान् । ततो मरीच्यादीन् मुनीनहमध्यापितवान् । गोरा.

(३) इदं स्मार्तं धर्माधर्मोपादानहानात्मकम्, न ग्रन्थम्, शास्त्रं सर्वशो हिरण्यगर्भात्प्राप्य मां भृगुनामानमेव कृपयाऽध्यापयामास, पुनरहं मरीच्यादिदशमुनीन् बहुविशिष्टेभ्यः शिष्येभ्यः आदितः सर्वेभ्यः पूर्वम् । मवि.

(४) इदं तूच्यते— ब्रह्मणा शतसाहस्रमिदं धर्मशास्त्रं कृत्वा मनुरध्यापित आसीत्ततस्तेन च स्ववचनेन संक्षिप्य शिष्येभ्यः प्रतिपादितमित्यविरोधः । तथा च नारदः ' शतसाहस्रोऽयं ग्रन्थः ' इति स्मरति स्म । ¶ ममु.

(५) चतुर्मुखस्य स्मृतिशास्त्रकर्तृत्वं मनुनाऽप्युक्तम् — इदमिति । पमा. १।१०६

(६) गुरुपरम्परागतमिदं शास्त्रं न स्वमनीषाकल्पितमित्याह— इदमिति । आदितः सृष्ट्यादौ असौ विराट् ब्रह्मा मां मनुम्, अहं मनुः मरीच्यादीन्मुनीन् ग्राहितवानस्मीत्यन्वयः । आदावस्य मनुवक्तृत्वम्, कर्तृत्वं तु विराज एवेति ध्वनिः । मच.

(७) एवं तावत् जगत्सृष्टिप्रलयावुक्तौ, इदानीं मर्यादानां स्थापनं शास्त्रसंप्रदायोपन्यासद्वारेण स्थितिमप्याह

---

(१) मस्मृ. १।५८ ; पमा. १।१०६ दींस्त्वहं (दीनहं) ; बाल. १।१ पृ. ३ पमावत् .

$ ' योपधाद्गुरूपोत्तमाद्वुञ् ' (पासू. ५।१।१३२) इति भावे वुञ् उपपद्यते । उपाध्यायत्वमित्यर्थः ।

¶ शेषं मेधागतम् ।

— इदमिति । शास्त्रस्य तदा मनसि विपरिवर्तमानत्वा-
दिदमिति परामर्शो युज्यते । नन्द.

(८) मनुरुवाच— असौ ईश्वरः इदं शास्त्रं कृत्वा मामेव आदितः विधिवत् स्वयं ग्राहयामास । तु पुनः मरीच्यादीन् मुनीन् ग्राहयामास † ग्राहयति स्म । भाच.

धर्मे पञ्च प्रमाणानि— सर्वो वेदः, वेदविदां स्मृतिः
शीलं च, साधूनामाचारः आत्मतुष्टिश्च

**'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥**

(१) कोऽस्याभिसंबन्धः ? यावता धर्मोऽत्र वक्तव्यतया प्रतिज्ञातः । स च विधिप्रतिषेधलक्षणः । तत्र न वेदस्य धर्ममूलता विधेया— 'वेदो धर्ममूलत्वेन ज्ञातव्यो धर्मप्रामाण्य आश्रयणीयः' इति, अन्तरेणैवोपदेशं तत्सिद्धेः । न हि मन्वाद्युपदेशसमधिगम्यं वेदस्य धर्ममूलत्वम्, अपि तु अबाधितविषयप्रतीतिजनकत्वेनापौरुषेयतया च पुरुषसंसर्गदोषैरपि मिथ्याभिधानाशङ्काभावात् । स्वतश्च शब्दस्यादुष्टत्वात्प्रत्यक्षवत्स्वतःप्रामाण्यसिद्धिः । अथोच्यते— न्यायतः सिद्धं वेदस्य प्रामाण्यमनूद्य मन्वादिस्मृतीनां तन्मूलता वचनेन ज्ञाप्यत इति, तदपि न । तत्रापि पूर्वज्ञानसापेक्षत्वात्स्मरणस्य भ्रान्तिविप्रलम्भादीनां महाजनपरिग्रहादिना निरस्तत्वादतीन्द्रियार्थदर्शनस्याशक्यभावाच्च पुरुषस्य च स्वानुभवसिद्धेर्वेदार्थस्मरणस्य वेदमूलतैवावशिष्यते । न हि वेदविदां कार्यार्थविषयं स्मरणं (न) संभवति । वेदस्य च मूलत्वेन मूलान्तरकल्पनाया अनवसरः ।

नाप्येतद्युज्यते वक्तुम्— 'स्मृतिशीले च तद्विदाम्' इत्येतदप्यनूद्यते बाह्यस्मृतीनामप्रामाण्याय, यतस्तासां न्यायत एव सिद्धमप्रामाण्यम् । न हि शाक्यभोजकक्षपणकादीनां वेदसंयोगसंभवः, येन तन्मूलतया स्वविषये प्रमाणं स्युः, स्वयमनभ्युपगमात्, तैश्च वेदस्याप्रामाण्याभिधानात् । प्रत्यक्षवेदविरुद्धार्थोपदेशाच्च तत्रासंभवः, तासु स्मृतिषु वेदाध्ययननिषेधात् । सति हि वेदाध्येतृत्वे बुद्धादीनां तन्मूलता स्यान्न वेति जायते विचारणा । यत्र तु तत्संबन्धो दूरापेतस्तत्र का तन्मूलताशङ्का ? स्वयं च मूलान्तरं परम्परायातमभ्युपगच्छन्ति— 'पश्याम्यहं भिक्षुकानां दिव्येन चक्षुषा सुगतिं दुर्गतिं च' । एवं सर्व एव बाह्या भोजकपाञ्चरात्रिकनिर्ग्रन्थानार्यवादपाशुपतप्रभृतयः स्वसिद्धान्तानां प्रणेतॄन् पुरुषातिशयान् देवताविशेषांश्च प्रत्यक्षतदर्थदर्शिनोऽभ्युपयन्ति, न वेदमूलमपि धर्ममभिमन्यन्ते । प्रत्यक्षेण च वेदेन विरुद्धास्तत्रार्था उपदिश्यन्ते । तथाहि— हिंसा चेद्धर्म उच्यते, संसारमोचकादिभिः सा चात्र प्रत्यक्षतः प्रतिषिद्धा । तथाऽन्यत्र तीर्थस्नानमधर्मोऽभ्युपेयते, इह तु 'अहरहः स्नायात्' 'तीर्थानि सेवेत' इति च विधिः । तथाऽग्निष्टोमीयवधः क्वचित्पापहेतुरिष्यते, स च ज्योतिष्टोमविधिना विरुद्धः । तथाऽन्ये सर्वानेव यागहोमानात्मार्थान् संमन्यन्ते, देवताभेदविधिभिर्नानादैवत्यास्तेऽवगमिताः । अतो विरोधः ।

येऽप्याहुः— ग्रहणाग्रहणवदुदितानुदितहोमकालवत्प्रत्यक्षश्रुतिविरोधदर्शनात्स्यात्संभवः शाखान्तरस्योच्छिन्नस्यानुच्छिन्नस्य वा तद्विरुद्धार्थविधिपरस्य । अनन्ता हि वेदशाखाः । ताः कथमेकस्य प्रत्यक्षाः ? उत्सादश्च संभवतीति । तत्र स्यात्तादृशी वेदशाखा यस्यामयं नरास्थिपात्रभोजनब्रह्मचर्यादिरुपदिष्टो भवेत् । उच्यते— न

† 'ग्राहयति' इति प्रथमपुरुषप्रयोगात् भावार्थचन्द्रिकाकारो मूले 'अहम्' इत्यत्र 'ततः' इत्यादिकं किंचित् पाठान्तरम्, ततश्च मरीच्यादीनपि ईश्वर एव ग्राहयामासेति चतुर्थचरणतात्पर्यं चाभिप्रैतीति प्रतीयते ।

(१) मस्मृ. २।६ ; विश्व. १।७ पृ. १३ द्वितीयचरणमात्रम्, १।७ पृ. २२ (वेदो धर्ममूलम्) एतावदेव ; मेधा. २।१८ तृतीयचरणमात्रम् ; अप. १।४–५ पृ. : १।५३ पृ. ८२ चतुर्थचरणो नास्ति ; बाक. २० ; मभा. १।२, ६।२३ ; उ. १।१।३ ; स्मृच. १।५ ; चत्र. १७ ; कुर. २६ ; प्रपा. २ ; दीक. १।७ ; मिप्र. १।१६ ; गप. १० ; मुक्ता. १ ; विपा. ३।२।५।११ ; वीमि. १।७ ; पप्र. ८ ; आन. १४ (=) : ७९, १२७ तृतीयचरणमात्रम् (=) : ३०४ (आत्मनस्तुष्टिरेव) एतावदेव (=).

वयं ब्रूमः वेदे विरुद्धार्थोपदेशासंभव इति । किंतु समकक्षत्वात्तयोर्विकल्पितप्रयोगयोरव्याघातः । इह तु कल्प्यो वेदः । न च प्रत्यक्षविरोधिकल्पनाया अवसरः । न च संभवमात्रेण तावता निश्चयः । निश्चितस्तु तद्विरुद्धप्रत्यक्षविधिः । अनिश्चितेन न वा निश्चितं बाध्यते । शास्त्रोत्सादपक्षं चात्रैव श्लोके परस्तात्प्रपञ्चयिष्यामः । सर्वत्र च प्रत्यक्षश्रुतिभिर्मन्वादिस्मृतीनां व्यतिषङ्गः क्वचिन्मन्त्रेण, क्वचिद्देवतया, क्वचिद्द्रव्यविधिभिः । न च बाह्यासु तत्संभवतीति तासामप्रामाण्यम् । एवमाचारस्यापि वेदविद्भिरदृष्टार्थतयाऽऽचर्यमाणस्य स्मृतिवदेव प्रामाण्यम्, मूलसंभवात् । असाध्वाचारस्यापि दृष्टकारणादिसंभवादविदुषां च भ्रान्त्यादिसंभवादप्रामाण्यम् । एवमात्मनस्तुष्टेरपि । यदि च वेदस्मृत्याचाराणां मन्वाद्युपदेशसमधिगम्यं प्रामाण्यम्, मन्वादीनां कथम्? तत्राप्युपदेशान्तरात् 'स्मार्ते च मनुरब्रवीत्' इत्यादेः । तत्र कथम्? तस्मादिदं प्रमाणमिदमप्रमाणमिति युक्तित एतदवसेयम्, नोपदेशतः । तथा चायमनर्थकः श्लोकः । एतत्समानरूपा उत्तरेऽपि ।

सिद्धान्तः— अत्रोच्यते— इह ये धर्मसूत्रकारा अव्युत्पन्नपुरुषव्युत्पादनार्थं पदार्थसंपादनपरतया ग्रन्थसंदर्भानारभन्ते तत्र यथैवाष्टकादीनां वेदात् स्वयं कर्तव्यतामवगम्य परावबोधनार्थमुपनिबन्धः, एवं प्रमाणान्तरसिद्धस्य वेदप्रामाण्यादेः । सन्ति केचित्प्रतिपत्तारो ये न्यायतस्तत्त्वविवेचनासमर्थाः, ऊहापोहादिरूपबुद्ध्यभावात् । तान् प्रति न्यायसिद्धोऽप्यर्थः सुहृदुपदेशवदुपदिश्यते । तत्र यन्न्यायतः सिद्धं वेदस्य धर्ममूलत्वं तदेवानेनानूद्यते— वेदो धर्ममूलम् । धर्मस्य मूलत्वेन वेदो विचार्य युक्त्या सिद्धः, नात्राप्रामाण्यशङ्का कर्तव्या । भवन्ति च लोके प्रमाणान्तरसिद्धानामर्थानामुपदेष्टारः— 'न त्वयाऽजीर्णे भोक्तव्यम्, अजीर्णप्रभवा हि रोगाः' । न चैतद्वक्तव्यम्— 'ये न्यायतो वेदस्य धर्ममूलत्वं न शक्नुवन्ति प्रतिपत्तुम्, ते वचनादपि न प्रत्येष्यन्ति' । यतो दृश्यते— य आप्तत्वेन प्रसिद्धास्तदीयं वचनमविचार्यैव केचन प्रमाणयन्ति । तदेवं सर्वमिदं प्रकरणं न्यायमूलम्, न वेदमूलम् । अन्यत्रापि व्यवहारस्मृत्यादौ यत्र न्यायमूलता तत्र यथावसरं दर्शयिष्यामः । अष्टकादीनां यथा वेदमूलता तथाऽत्रैव निर्दिश्यते ।

वेदशब्देनर्ग्यजुःसामानि ब्राह्मणसहितान्युच्यन्ते । तानि चाध्येतॄणां वाक्यान्तरेभ्यः प्रसिद्धभेदानि । उपदेशपरम्परासंस्कृता अध्येतारः श्रुत्वैव 'वेदोऽयम्' इति प्रतिपद्यन्ते, यथा 'ब्राह्मणोऽयम्' इति । तत्र वाक्यसमूहेऽपि §'अग्निमीळे' (ऋसं. १।१।१) 'अग्निर्वै देवानामवमः' (ऐब्रा. १।१) इत्यादौ 'संसमिद्युवसे' (ऋसं. १०।१९१।१) 'अथ महाव्रतम्' (ऐआ. १।१।१।१) इत्यन्ते वेदशब्दः प्रयुज्यते, तदवयवभूतेषु केवलेषु वाक्येष्वपि । न च ग्रामादिशब्दवद्गौणमुख्यता विद्यते । तत्र समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इत्येष न्यायः । ग्रामशब्दो हि प्रसिद्धभूयिष्ठप्रयोगः समुदाय एव, 'ग्रामो दग्धः' इत्यादिपदसंबन्धात्तदवयवे वर्तते । कतिपयशालादाहेऽपि लौकिकाः 'ग्रामो दग्धः' इति प्रयुञ्जते । अथवा तत्रापि समुदायवचन एव । दाहस्त्वेकदेशवर्ती समुदायसंबन्धितया व्यपदिश्यते । अवयवद्वारक एव समुदायस्य क्रियासंबन्धः । एष एव समुदायस्य क्रियासंबन्धो योऽवयवानाम् । न ह्यवयवान्परिहाप्य समुदायो द्रष्टुं स्प्रष्टुं वा शक्यते । व्युत्पाद्यते च वेदशब्दः— विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थमस्मादिति वेदः । तच्च वेदनमेकैकस्माद्वाक्याद्भवति, न यावानृग्वेदादिशब्दवाच्योऽध्यायानुवाकसमूहः । एवं च 'उदाहरणे जिह्वाच्छेदः' (गौध. १२।४) इत्येकवाक्यविषयोऽप्ययं दण्डः । 'कृत्स्नोऽधिगन्तव्यः' (मस्मृ. २।१६५) इति कृत्स्नग्रहणं सकल-

§ अत्र 'अग्निमीळे' इत्यादौ 'संसमिद्युवसे' इत्यन्ते 'अग्निर्वै देवानाम्' इत्यादौ 'अथ महाव्रतम्' इत्यन्ते इति यथासंख्यमन्वयः प्रतीयते। तत्र 'संसमिद्' इति संहितान्तिमसूक्तारम्भो यथाऽन्तत्वेन गृहीतस्तथा ब्राह्मणैकदेशारण्यकान्तिमखण्डारम्भस्यान्तत्वेन ग्रहीतुमुचितत्वेऽपि 'अथ महाव्रतम्' इति प्रथमारण्यकारम्भोऽन्तत्वेन गृहीत इत्यनुचितमिव भाति ।

वेदवाक्याध्ययनप्राप्त्यर्थम् । अन्यथा कतिचिद्वाक्यान्यधीत्य कृती स्यात्, न पुनः कृत्स्नं वेदमिति । अत्रैतन्निरूपयिष्यामः । स च वेदो बहुधा भिन्नः । सहस्रवर्त्मा सामवेदः सात्यमुग्रिराणायनीयादिभेदेन, एकशतमध्वर्यूणां काठकवाजसनेयकादिभेदेन, एकविंशतिर्बाह्वृच्या आश्वलायनैतरेयादिभेदेन, नवधा आथर्वणं मोदकपैप्पलादकादिभेदेन । ननु—नैव केचिदाथर्वणं वेदं मन्यन्ते, यतः 'त्रयी विद्या ऋचः सामानि यजूंषि' इति, 'वेदैरशून्यस्त्रिभिरेति सूर्यः', तथा 'त्रैवेदिकं व्रतं चरेत्' इत्यादौ न क्वचिदाथर्वणनामाप्यस्ति । प्रतिषेधश्च श्रूयते— 'तस्मादाथर्वणेन न शंसेत्' इति । अतस्त्रयीबाह्यानाथर्वणिकान् पाषण्डिनः प्रतिजानते । तदयुक्तम्, अविगानेन शिष्टानां वेदव्यवहारात् । 'श्रुतीरथर्वाङ्गिरसीः' इत्यत्रापि व्यवहारः । श्रुतिर्वेद इत्येकोऽर्थः । न च वेदशब्दवाच्यताऽग्निहोत्रादिवाक्यानामपि धर्मप्रामाण्ये कारणम्, इतिहासायुर्वेदयोरपि वेदव्यवहारदर्शनात् 'इतिहासपुराणं पञ्चमं वेदानां वेदम्' इति । किं तर्हि ? अपौरुषेयत्वे सत्यनुष्ठेयार्थावबोधकत्वात् विपर्ययाभावाच्च । तच्चाथर्ववेदेऽपि सर्वमस्ति, ज्योतिष्टोमादिकर्मणां यजुर्वेदादिष्विव तत्राप्युपदेशात् । अभिचारमूलककर्मणां बाहुल्येन तत्रोपदेशादवेदत्वमिति विभ्रमः केषांचित् । अभिचारा हि परप्राणवियोगफलत्वात्प्रतिषिद्धाः, आथर्वणिकैश्च त एव प्राधान्येनानुष्ठीयन्ते राजपुरोहितैः अतस्ते निन्द्यन्ते । यत्तु 'वेदैरशून्यः' इत्यादावथर्ववेदस्यानिर्देश इति, अर्थवादा एते । किं तत्र निर्देशेनानिर्देशेन वा ? मन्त्रभेदाभिप्रायं वैतद्वचनं 'त्रयो वेदास्त्रयी विद्या' इत्यादि । न हि चतुर्थं मन्त्रजातमस्ति ऋग्यजुःसामव्यतिरेकेण, प्रैषनिविन्निगदेन्द्रगाथादीनामत्रैवान्तर्भावात् । अथर्ववेदे चर्च एव मन्त्रत्वेन समाम्नाताः । अत ऋग्वेद एवायं मन्त्राभिप्रायेण । यस्तु प्रतिषेधः स विपरीतसाधनः, प्राप्तौ सत्यां प्रतिषेधोपपत्तेः । अयं वाऽस्यार्थः— अथर्ववेदाधीतैर्मन्त्रैस्त्रैवेदिकं कर्म न मिश्रयेत् । वाचःस्तोमे सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि विनियुक्तानि, तत्राथर्ववेदाधीतानां प्रतिषेधः ।

स वेदो विशिष्टः शब्दराशिरपौरुषेयो मन्त्रब्राह्मणाख्योऽनेकशाखाभेदभिन्नः धर्मस्य मूलं प्रमाणं परिज्ञाने हेतुः । कारणं मूलम् । तत्र वेदस्मृत्योर्धर्मं प्रति ज्ञापकतयैव, न निर्वर्तकतया, न च स्थितिहेतुतया वृक्षस्येव । धर्मशब्दश्च प्राक् व्याख्यातः । यत् पुरुषस्य कर्तव्यं प्रत्यक्षाद्यवगम्यविलक्षणेन स्वभावेन श्रेयःसाधनम् । कृषिसेवादि भवति पुरुषस्य कर्तव्यम्, तस्य च तत्साधनत्वस्वभावोऽन्वयव्यतिरेकाभ्यामवगम्यते । यादृशेन व्यापारेण कृष्यादेर्व्रीह्यादिसिद्धिः साऽपि प्रत्यक्षाद्यवगम्यैव । यागादेस्तु साधनत्वं येन च रूपेणापूर्वोत्पत्तिव्यवधानादिना, तन्न प्रत्यक्षाद्यवगम्यम् । श्रेयश्चाभिलषितस्वर्गग्रामादिफलप्राप्तिः सामान्यतः सुखशब्दवाच्या; व्याधिनिर्धनत्वासौख्यनरकादिफलप्राप्तिः सामान्यतो दुःखशब्दवाच्या, तत्परिहारश्च । अन्ये तु परमानन्दादिरूपं श्रेयः । अयं धर्मो ब्राह्मणवाक्येभ्योऽवगम्यते लिङादियुक्तेभ्यः । क्वचिच्च मन्त्रेभ्योऽपि 'वसन्ताय कपिञ्जलानालभते' ( शुसं. २४।२० ) इत्येवमादिभ्यः । तत्र कामपदयुक्तानि वाक्यानि फलार्थमनुष्ठानमवगमयन्ति । 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः' इति । तानि फलमनिच्छता न क्रियन्ते । अन्यानि यावज्जीवादिपदैर्नित्यतया समर्पितानि । तानि न फलहेतोरनुष्ठीयन्ते, फलस्याश्रुतत्वात् । न च 'विश्वजिता यजेत' इत्यादिवदश्रुतफलत्वेऽपि फलकल्पना, यतो यावज्जीवादिपदैर्विनैव फलेन कर्तव्यतयाऽवगम्यन्ते । तत्राकरणे शास्त्रार्थातिक्रमदोषः । तत्र तत्परिहारार्थं तानि क्रियन्ते । प्रतिषेधानामपि 'ब्राह्मणो न हन्तव्यः' 'सुरा न पेया' इत्येषैव वार्ता । न हि फलार्थं प्रतिषिद्धवर्जनम्, अपि तु प्रत्यवायपरिहारार्थम् । अखिलः कृत्स्नः । न किंचित्पदं वर्णो मात्रा वा यन्न धर्माय । अत्र चोदयन्ति— ननु च— विध्यर्थवादमन्त्रनामधेयात्मको वेदः । धर्मश्च कर्तव्यतास्वभाव इत्युक्तम् । तत्र युक्तं यद्विधिवाक्यानि धर्मे प्रमाणं स्युः । तेभ्यो हि यागादिविषया कर्तव्यता प्रतीयते । 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' 'यदग्नये च प्रजापतये च सायं

जुहोति ' ' स्वर्गकामो जुहोति ' इति । अत्र अग्नि-होत्राख्यं कर्म कर्तव्यतया प्रतीयते । ' दध्ना ' इति तत्रैव द्रव्यम् । ' यदग्नये च ' इति देवता । ' स्वर्ग-कामः ' इत्यधिकारः । यत्तु ' अग्निर्वै सर्वा देवता अग्निरेव दैव्यो होता स देवानाह्वयति च जुहोति च ' इत्यादयः, तथा ' प्रजापतिर्वपामात्मन उदखिदत् ' इत्यादयः, न तैः किंचित्कर्तव्यमुपदिश्यते । केवलं पुरावृत्तमन्यद्वाऽसांप्रतिकं भूतमनुवदन्ति— प्रजापतिना पुरा आत्मनो वपोत्खाता । उत्खिदतु, किमस्माक-मेतेन ? तथाऽग्नेरपि सर्वदेवतात्मत्वं नाऽऽग्नेयकर्मण्युप-युज्यते, अग्निशब्देनोद्देशार्थनिर्वृत्तेः । अन्यदेवत्येऽन्यत्वा-दग्नेरुद्देश एव नास्ति । आवाहनस्यापि वचनान्तरेण ' अग्निमग्न आवह ' इत्यादिना विहितत्वात् ' स देवा-नाह्वयति च जुहोति च ' इत्यादिरनर्थकः । मन्त्रा अपि ' न मृत्युरासीदमृतं न तर्हि ' ' सुदेवो अद्य पतेदनावृत् ' इत्यादयो भाववृत्तपरिदेवनादिरूपार्थाभिधायिनः कं धर्मं प्रमिमते ? तस्मिन् काले न मृत्युर्जातो नाप्यमृतं जीवितम् । प्राक्सृष्टेर्भूतानामनुत्पन्नत्वान्न कस्यचिज्जीवित-मासीन्नापि मृत्युः, प्रलये सर्वेषां मृतत्वात् । भवतु वा मृत्युर्मा वा, न किंचिदेतेन कर्तव्यमुपदिष्टं भवति । एवं सुदेवोऽसौ महापुण्यो देवतुल्यो मनुष्यो योऽद्य प्रपतेत् श्वभ्र आत्मानं क्षिपेत् अनावृत् आवृत्तिः प्रत्युज्जीवनं यस्मात् प्रपातान्न भवति । उर्वश्या विप्रलब्धः पुरूरवाः परिदेवयाञ्चक्रे । तथा नामधेयम् ' उद्भिदा यजेत ' ' बलभिदा यजेत ' इत्यादि न कस्यचिदर्थस्य क्रियाया द्रव्यस्य वा विधायकम्, आख्यातेन क्रियाया विधानात् अद्रव्यवचनत्वाच्च बलभिदादेः । सोमस्य वाऽव्यक्तचोदन-त्वेन प्रकृतितः प्राप्तत्वान्न क्लेशेन द्रव्यवचनता कल्प्यते । तस्मान्नाम्ना न धर्म उपदिश्यते । अतः कथमुच्यते कृत्स्नो वेदो धर्ममूलमिति ? उच्यते— अनयैवाऽऽशङ्कया-ऽखिलग्रहणं कृतम्, यतः सर्वेषामेतेषां धर्मप्रतिपादन-परत्वम् । तथाहि— अर्थवादा नैव विधायकेभ्यो वाक्येभ्यः पृथगर्थाः येन धर्मं न प्रमिमीरन् । विभज्यमान-साकाङ्क्षत्वे विधिपरत्वावगमात् । तत्परत्वे च सिद्धाया-मेकवाक्यतायां यथा तदर्थानुगुण्यं प्रतिपद्यन्ते तथा व्याख्येयाः । अतः प्रजापतेर्वपोत्खादनवचनं न स्वार्थ-निष्ठम्, किं तर्हि ? विधिशेषम् । न च विधेयं द्रव्यगुणादि अर्थवादेभ्यः प्रतीयत इति प्रकारान्तरेण विधेयार्थस्तावकत्वेन तच्छेषतां प्रतिपद्यन्ते । तदपि तत्र प्रतीयत एव । इत्थं नाम पशुयागः कर्तव्यो यदसत्सु पशुषु गत्यन्तराभावात्प्रजापतिनाऽऽत्मैव पशुत्वेन कल्पितो वपा चोत्खिन्ना । यतस्तत्सहितान्येव विधायकानि यत्रार्थवादाः सन्ति । यद्यपि तैर्विनाऽपि भवति विध्यर्थावगतिः विध्युद्देशादेव ' वसन्ताय कपि-ञ्जलानालभते ' इति, तथाऽपि न तेषामानर्थक्यम् । तेषु हि सत्सु न केवलादवगतिः । न च केनचित्कृतो वेदः, येनोच्यते ' यथाऽन्यत्र न सन्ति तथाऽत्रापि मा भूवन् ' । सत्स्वर्थवादेष्वस्माभिर्गतिर्वक्तव्या, सा चोक्ता । न चायमलौकिकोऽर्थः । लोकेऽपि हि स्तुतिपदानि दृश्यन्ते विधिशेषभूतान्येव । यथा भृतिदाने प्रवृत्तस्य स्वामिनः कश्चिद्भृतकः प्रीत्याऽऽचष्टे— ' साधुर्देवदत्तो नित्यसंनिहितः परिचर्याभूमिज्ञस्तत्परश्च ' इति । अतो विधेयार्थस्तुतिद्वारेणार्थवादा विधायका एव । तथा क्वचिदर्थवादादेव विधेयविशेषावगतिः । यथा ' अक्ताः शर्करा उपदधाति ' । अत्र अञ्जनसाधनं सर्पिस्तैलादि यत्किंचिद्विधिनाऽपेक्षितं ' तेजो वै घृतम् ' इत्यर्थ-वादे घृतस्तुत्या घृतमध्यवसीयते । एवं ' प्रतितिष्ठन्ति य एता रात्रीरुपयन्ति ' इति रात्रिष्वर्थवादादधिकारा-वगमः । तस्मादर्थवादा अपि धर्ममूलम् । मन्त्रास्तु केचिद्विधायका एव । यथा ' वसन्ताय कपिञ्जलान् ' इति । आधारे देवताविधिर्मान्त्रवर्णिक एव । न हि तत्र देवता कर्मोत्पत्तिवाक्ये श्रुता, नापि वाक्यान्तरेण विहिता । मन्त्रस्तु विहितो नियुक्तः ' यत इन्द्र ' इत्यादिः । अतोऽ-स्मान्मन्त्रवर्णाद्देवताप्रतिपत्तिः । सहस्रशश्च मान्त्रवर्णिका देवताविधयः सन्ति । येऽप्यन्ये क्रियमाणानुवादिनस्तेऽपि स्मृतिलक्षणं धर्ममेव बुद्धं कुर्वन्तीति भवन्ति धर्ममूलमनु-ष्ठेयार्थप्रकाशनेन । नाम त्वाख्यातार्थादभिन्नार्थमाख्याता-र्थवत्सुप्रसिद्धधर्ममूलभावम् । गुणविधयश्च प्रायशो नामा-

भया एव । ‘ § शरदि वाजपेयेन यजेत स्वाराज्यकामो वाजपेयेन ’ इति । तस्मात्सिद्धं कृत्स्नस्य वेदस्य धर्ममूलत्वम् । अन्ये तु श्येनादिवाक्यानां धर्मोत्पत्तिमत्त्वाभावमाशङ्कमाना निषेधानां च ‘ न लशुनं भक्षयेत् ’ इत्यादीनाम् †अखिलग्रहणं मन्यन्ते । अभिचारा हि श्येनादयो मारणात्मानो हिंसारूपाः । क्रूरत्वाच्च हिंसाया अभिचाराणां च प्रतिषेधादधर्मत्वम् । अतो न कृत्स्नो वेदो धर्ममूलम् । कर्तव्यश्च धर्म उक्तः । ब्रह्महत्यादिश्च न कर्तव्यः । अतः कथं तद्वाक्यानि धर्ममूलं स्युः ? किंच, येऽपि पशुयागा अग्नीषोमीयादयस्तेऽपि हिंसासाधकत्वाद्दूरापेतधर्मभावाः । हिंसा हि पापमिति सर्वप्रवादेष्वभ्युपगमः । उक्तं च– ‘ यत्र प्राणिवधो धर्मो अधर्मस्तत्र कीदृशः ’ । कथं पुनरियमाशङ्काऽपनुद्यते ? अखिलग्रहणात् । न ह्यस्यान्यत्प्रयोजनमस्ति । हेतुर्नोक्त इति चेत्, आगमग्रन्थोऽयं सिद्धमर्थमाह । हेत्वर्थिनो मीमांसातो विनीयन्ते । $अस्माभिरुक्तं य आगममात्रेण प्रतियन्ति तान् प्रत्येतदुच्यते । विवरणकारास्तु युक्तिलेशमात्रं दर्शयन्ति । यदुक्तम्– श्येनादयः प्रतिषिद्धत्वादधर्म इति तत्सत्यम्, तथापि प्रतिषिद्धेष्वपि तेषु योऽत्यन्तप्रवृद्धद्वेषः ‘ न हिंस्याद्भूतानि ’ इत्यतिक्रान्तनिषेधाधिकारस्तस्य ते शत्रुवधलक्षणां प्रीतिमनुष्ठीयमानां निर्वर्तयन्तीत्येतावतांऽशेन वेदस्य धर्ममूलत्वं श्येनादिवाक्येष्वपि न विहन्यते । निषेधेष्वपि यो रागतः प्रवृत्तो हनने स निषेधे नियुज्यते । एतदेव निषेधस्यानुष्ठानं यन्निषिध्यमानस्याननुष्ठानम् । अग्नीषोमीयादौ तु नैव हिंसाप्रतिषेधोऽस्ति, द्वेषलक्षणाया लौकिक्या हिंसाया निषेधेन निषिद्धत्वात् । शास्त्रीया तु विधिलक्षणा न निषेधेन विषयीक्रियते, लौकिक्यां चरितार्थत्वान्निषेधस्य । न च सामान्यतो दृष्टेन हिंसात्वाल्लौकिकवद्वैदिक्याः पापहेतुत्वमापादयितुं शक्यते । यतो न हिंसात्वं पापहेतुत्वे कारणम्, अपि तु प्रतिषेधेन विषयीकरणम् । न चात्र प्रतिषेधोऽस्तीत्युक्तम् । केचित्तु मूलशब्दः कारणपर्यायो व्याख्यायते– धर्मस्य वेदो मूलं प्रतिष्ठाकारणं साक्षात्प्रणाड्या च । ‘ स्वाध्यायमधीयीत ’ ‘ ऋग्वेदं धारयन् विप्रः ’ इत्यादिचोदनासु साक्षात्, अग्निहोत्रादिकर्मस्वरूपज्ञापकतया प्रणाड्या च ।

स्मृतिशीले च तद्विदाम् । अनुभूतार्थविषयं विज्ञानं स्मृतिरुच्यते । तच्छब्देन वेदः प्रत्यवमृश्यते । तं विदन्ति तद्विदः । वेदार्थविदाम् ‘ इदं कर्तव्यम्, इदं न कर्तव्यम् ’ इति यत्स्मरणं तदपि प्रमाणम् । ननु च– स्मृतिर्न प्रमाणम् इत्याहुः । सा हि पूर्वप्रमाणावगतप्रमेयानुवादिनी नाधिकमर्थं परिच्छिनत्तीति वदन्ति । सत्यम् । ये स्मरन्ति तेषामाद्यमेव तत्र शब्दादि प्रमाणम्, नाऽऽस्मीया स्मृतिः । अस्माकं तु मन्वादिस्मृतिरेव प्रमाणम् । न हि वयं तामन्तरेणान्यतोऽष्टकादिकर्तव्यतामवगच्छामः । तच्च मन्वादीनामीदृशं स्मरणं तत्कृतेभ्यो वाक्येभ्यः स्मृतिपरम्परायातेभ्योऽवसीयते । तस्माच्च स्मरणादनुभूतोऽयमर्थः प्रमाणेन मन्वादिभिरिति निश्चिनुमो यत एते स्मरन्ति । न ह्यननुभूतस्य स्मरणोपपत्तिः । ननु कल्पयित्वा ग्रन्थमुपनिबध्नीयुरननुभूयैव केनचित् प्रमाणेन, यथोत्पाद्य वस्तुकथानकं केचन कवयः कथयेयुः । अत्रोच्यते– भवेदेवं यद्यत्र कर्तव्यतोपदेशो न स्यात् । कर्तव्यतोपदेशो ह्यनुष्ठानार्थः । न च केनचित् स्वेच्छया कल्पिते बुद्धिपूर्वव्यवहारिणोऽनुष्ठातुमर्हन्ति । भ्रान्त्याऽप्यनुष्ठानसिद्धिरिति चेत् । स्यादप्येकस्य भ्रान्तिः, सर्वस्य जगतो भ्रान्तिर्बीजत्संसारभाविनी चेत्यलौकिकी कल्पना । न च संभवति

§ आदर्शपुस्तकसंपादकानामिदमेकं वाक्यमभिमतमित्यवतरणचिह्नभेदाभावात्प्रतीयते । वाजपेयेनशब्दपौनरुक्त्यात्तु वाक्यभेदोऽवगम्यते । अन्वेषणपरैरप्यस्माभिरस्य वैदिकं स्थलं नोपलब्धम् ।

† अखिलेन अखिलशब्देन ग्रहणमित्यर्थः, न तु अखिलशब्दस्य ग्रहणमिति । तेन न वाक्यगतषष्ठ्यन्तपदयोरनन्वयापत्तिः ।

$ ‘ अस्माभिर्विनीयन्ते ’ इत्येवमस्माभिःपदं पूर्ववाक्यशेषः, उक्तमित्याद्युत्तरवाक्यमिति वाक्यव्यक्तिरुपपन्नतरा प्रतिभाति । आगमेन यदुक्तं तत् आगममात्रेण, निर्हेतूक्तिकेनेत्यर्थः, ये प्रतियन्ति तान् प्रति ‘ वेदोऽखिलो धर्ममूलम् ’ इत्येतत् निर्हेतूक्तिकमुच्यते इत्युत्तरवाक्यार्थः । यथाश्रुतं तु योग्यताहीनमिव भाति ।

मन्वादीनां वेदमूलत्वे भ्रान्त्यादेरवसरः । अत एव प्रत्यक्षतो मन्वादयो धर्मान् ददृशुरिति नाभ्युपगम्यते । इन्द्रियैरर्थानां संनिकर्षे यज्ज्ञानं तत्प्रत्यक्षम् । न च धर्मस्येन्द्रियैः संनिकर्षः संभवति, तस्य कर्तव्यतास्वभावत्वात् । असिद्धं च कर्तव्यम्, सिद्धवस्तुविषयश्च संनिकर्षः । अनुमानादीनि तदात्वे यद्यप्यसन्तमर्थमवगमयन्ति, पिपीलिकाण्डसंचारेण हि भविष्यन्तीं वृष्टिमनुमिमते, तथापि न तेभ्यः कर्तव्यतावगतिः । तस्मात्कर्तव्यतास्मरणस्यानुरूपकारणकल्पनायां वेद एवोपदिश्यते । स च वेदोऽनुमीयमानो मन्वादिभिरुपलब्धः । इदानीमुत्सन्ना सा शाखा यस्याममी स्मार्ता धर्मा आसन् । तथा किमेका शाखा, अथ बह्व्यः, तासु च कश्चिदष्टकादिः कस्यांचिदित्येतदनुमानं प्रवर्तेत ? अथाद्यत्वे पठ्यन्त एव ताः शाखाः, किंतु विप्रकीर्णास्ते धर्माः, कस्यांचिच्छाखायामष्टकादीनां कर्मणामुत्पत्तिः, कस्यांचिद्द्रव्यम्, क्वचिद्देवता, क्वचिन्मन्त्र इत्येवं विप्रकीर्णानां मन्वादयोऽङ्गोपसंहारं सुखावबोधार्थं चक्रुः; अथ मन्त्रार्थवादलिङ्गमात्रप्रभवा एते धर्माः, अथायमनादिरनुष्ठेयोऽर्थोऽविच्छिन्नपारम्पर्यसंप्रदायायातो वेदवन्नित्यः; उतास्मदादीनामिव मन्वादीनामपि परप्रत्ययानुष्ठानो नित्यानुमेयश्रुतिक इत्येवमादि बहुविकल्पं विचारयन्ति विवरणकाराः । एतावांस्तु निर्णयः— वैदिकमेतदनुष्ठानम्, स्मार्तानां वैदिकैर्विधिभिर्व्यतिषङ्गावगमादनुष्ठातॄणां च तद्दृष्ट्वाऽनुष्ठानात् । व्यतिषङ्गश्च दर्शितः— क्वचिद्वैदिकमङ्गम्, प्रधानं स्मार्तम्; क्वचिदेतदेव विपरीतम्, क्वचिदुत्पत्तिः, क्वचिदधिकारः, क्वचिदर्थवाद इति । एवं सर्व एव स्मार्ता वैदिकैर्व्यतिषक्ताः । निपुणतश्चैतन्निर्णीतमस्माभिः स्मृतिविवेके— ‘स्मार्तवैदिकयोर्नित्यं व्यतिषङ्गात्परस्परम् । कर्तृतः कर्मतो वाऽपि वियुज्येते न जातु तौ ॥ प्रत्यक्षश्रुतिनिर्दिष्टं येऽनुतिष्ठन्ति केचन । त एव यदि कुर्वन्ति तथा स्याद्वेदमूलता ॥ प्रामाण्यकारणं मुख्यं वेदविद्भिः परिग्रहः । तदुक्तं कर्तृसामान्यादनुमानं श्रुतीः प्रति ॥’ । विशेषनिर्धारणे तु न किंचित्प्रमाणम्, न च प्रयोजनम् । उत्सादोऽपि संभाव्यते । दृश्यन्ते हि प्रविरलाध्येतृका अद्यत्वेऽपि शाखाः । ताभ्यः संभाव्यमाभ्युत्सादाभ्यो विधिमात्रमर्थवादविरहितमुद्धृत्योपनिबद्धं स्मृतिकारैरिति केचिदभ्युपगम्यते । ‘ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते’ (आध. १।४।१०) इत्यापस्तम्बः । अत्र तु यैवं महाप्रयोजना शाखा, यस्यां सर्वे स्मार्ता गार्ह्याश्च सर्ववर्णाश्रमधर्मा आम्नाताः, तस्या उपेक्षणमसंभाव्यम्, सर्वाध्येतॄणां चोत्साद इत्यादि बह्वदृष्टं प्रकल्प्यम् । विप्रकीर्णानां त्वर्थवादगहनानां क्रत्वर्थपुरुषार्थतया च दुर्विज्ञानानां प्रयोगोन्नयनमभियुक्तानां न्यायतो निश्चितार्थानां घटते । अस्मिंस्तु पक्षे विरोधद्वयस्यापि प्रत्यक्षश्रौतत्वाद्विकल्पेन स्मृतेर्बाधः । स च विशिष्टानां नाभिप्रेतः । स्मृतिकाराश्च बाधमनुमेयश्रुतिमूलत्वं च प्रतिपन्नाः । एवमप्याह गौतमः— ‘ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य’ (गौध. ३।३५) इति । यदि हि मन्वादीनां प्रत्यक्षास्ताः शाखा अभवन्, कथं वाचोयुक्तिर्गार्हस्थ्यस्य प्रत्यक्षविधानादिति ? ननु सर्व एवाऽऽश्रमाः प्रत्यक्षविधानाः । स्वमतमेव चैतद्गौतमेनाऽऽचार्योपदेशेनोपदिष्टम्, ‘तस्याऽऽश्रमविकल्पम्’ (गौध. ३।१) इत्याद्युपक्रम्यानेनोपसंहृतत्वात् । मन्त्रार्थवादप्रमाणभावोऽप्यविरुद्धः । यद्यप्यर्थवादा विध्युद्देशस्तुतिपरा न स्वार्थस्य विधायकास्तथापि केषांचिदन्यपरतैव नोपपद्यते यावत्स्वार्थविषयो विधिर्नावगमितः । यथा ‘स्तेनो हिरण्यस्य सुरां पिबंश्च’ (छाउ. ५।१०।९) इत्यादेः पञ्चाग्निविधिशेषतैवमेतावतैव नोपपद्यते यावद्धिरण्यस्तेयादेः प्रतिषेधो नावगमितः । य एतां विद्यामधीते स हिरण्यस्तेयाद्यप्याचरंस्तैश्च संवसन्न पतति, अन्यथा तु पततीत्यवगतिरविरुद्धा । अथ “विध्युद्देशो विधेः प्रतिपादकः, नार्थवाद इति केनैषा परिभाषा कृता ? ‘एते पतन्ति चत्वारः’ (छाउ. ५।१०।९) इत्यत्राप्याख्यातश्रवणमस्ति । लिङादयो न सन्तीति चेत्, ‘प्रतितिष्ठन्ति’ इति रात्रिष्वपि नैव लिङ्श्रुतिरस्ति । अथ तत्राधिकाराकाङ्क्षायामेकवाक्यतायां सत्यां पञ्चमलकारादिकल्पनया विध्यवसायः, एवमत्रापि भविष्यति । बहवश्च द्रव्यदेवता-

विधयोऽर्थवादावगम्याः सन्ति । तत्र यस्य विधेः शेषा अर्थवादास्तद्विधिनैव द्रव्यदेवतादेरपेक्षितत्वाद्विशेषसमर्पणमात्रे व्यापारान्तर्गतविशेषावगतिरर्थवादाधीना न दोषाय । इह तु तदसंबद्धस्य विध्यन्तरस्यैष्यमाणत्वाद्वाक्यभेदापत्तिरतश्च न प्रकृतिशेषता । तदभावे च तन्मूला प्रतिषेधावगतिर्न स्यात् । अतश्च ‘अक्ताः शर्करा उपदधाति’ ‘तेजो वै घृतम्’ इत्यनेन वैषम्यमित्याहुः।” तदसत् । सत्यप्यर्थान्तरत्वे तदेकवाक्यतामूलत्वादस्यावगतेर्नास्ति वाक्यभेदाभिचोद्यापत्तिः । मन्त्राः प्रयोगप्रकाशकत्वेन रूपादेवावगतास्तस्य प्रयोगस्यान्यतोऽसिद्धेः प्रकाशकत्वनिर्वहणाय प्रकाश्यं कल्पयन्ति । न चाऽसतोरुत्पत्त्यधिकारयोः प्रकाशनमष्टकायाः संभवतीत्युत्पत्त्यधिकारविनियोगप्रयोगबोधका मन्त्राः । एवं मान्त्रवर्णिकाश्च विधयोऽप्युपगम्यन्ते । यथाऽऽघारे देवताविधिः । चतुष्पाद्धि धर्मोऽभ्युपगतः, तत्राल्पतरांशः श्रुतः, सकलेतरांशबोधहेतुस्तथाविध एव, विधौ संबन्धग्रहणादिति । सर्वथा तावत् संभवति वेदसंयोगः । मनुर्बहुभिर्बहुशाखाध्यायिभिः शिष्यैरन्यैश्च श्रोत्रियैः संगतस्तेभ्यः शाखाः श्रुत्वा ग्रन्थं चकार । ताश्च मूलत्वेन प्रदर्श्य प्रमाणीकृतवान् । एवमन्ये तत्प्रत्ययादनुष्ठानमादृतवन्तो न मूलोपलम्भे यत्नं कुर्वन्ति । अस्माकं चैतदनुमानम् । अतो विरोधे सत्यपि तुल्ये श्रौतत्वे बाधोपपत्तिः । प्रत्यक्षया श्रुत्या प्रयोगसंपत्तौ श्रुत्यन्तरं प्रत्याकाङ्क्षैव नास्ति । यथा सामिधेनीषु साप्तदश्यपाञ्चदश्ययोः पाञ्चदश्येन प्रकृतिरवरुद्धा साप्तदश्यं प्रत्यक्षश्रुतमपि नाऽऽकाङ्क्षति । आभिधानिको ह्यर्थः संनिकृष्यते, अभिहितार्थाकाङ्क्षावगम्यं प्रत्ययं विप्रकर्षाद्दुर्बलं बाधते । न चैतावताऽप्रामाण्यापत्तिः । यथा प्राकृतान्यङ्गानि विकृतिषु चोदकप्राप्तानि वैकृतिकैर्विरुध्यमानानि बाध्यन्ते तद्वदेव द्रष्टव्यम् । यत्र संप्रदायविच्छेदस्तत्र च परम्परापत्तिः । न हि तत्र कस्यचित्प्रमाणं प्रवृत्तम् । नित्यानुमेयपक्षोऽपि संप्रदायपक्षान्नातीव भिद्यते । मन्वादिस्मरणस्य वयं मूलं परीक्षितुं प्रवृत्ताः । यदि च तेषामप्यसावनुमेयो वेदः, वयमिव न ते स्मर्तारः । न च यः पदार्थो न कस्यचित्प्रत्यक्षस्तस्यानुमेयता संभवति, अन्वयासंभवात् । क्रियादिषु सामान्यतोऽस्त्येव संबन्धदर्शनम् । यदि वाऽर्थापत्त्यवसेयाः क्रियादयः । न चेहान्यथानुपपत्तिरस्ति । तस्मादस्ति मन्वादीनामस्मिन्नर्थे वेदसंबन्धः, न पुनरयमेव प्रकार इति निर्धारयितुं शक्यम् । द्रढीयसी कर्तव्यतावगतिर्वेदविदां वेदमूलैव युक्ता कल्पयितुम्, न भ्रान्त्यादिमूलेत्यवगत्यनुरूपकारणकल्पना कृता भवति । तत्रोत्सादविप्रकीर्णे मन्त्रार्थवादे प्रत्यक्षवेदानां कारणानां संभवात्कल्प्यत्वमुपक्षेते । प्रत्यक्षोऽपि विधिः क्वचिन्मूलत्वेन दृश्यते ‘न मलवद्वाससा संवदेत्’ इति । स चाध्ययने चोपनयने च पठ्यते । तदेतल्लेशतोऽस्माभिरुक्तम् । विस्तरस्तु स्मृतिविवेकाज्ज्ञातव्यः । ‘शाखाः काश्चित्समुत्सन्नाः पक्षो नैष मतो मम । पक्षेऽस्मिन्न प्रमाणं हि बहुदृष्टं प्रसज्यते ॥ उपपन्नतरः पक्षो विक्षिप्तानां ततस्ततः । उत्पत्त्यादिसमाहारः प्रायशो दृश्यते ह्यदः ॥ अनेकशिष्योपाध्यायैः श्रोत्रियैरादृतोऽपरैः । शक्तो रचयितुं श्रुत्वा शाखां तां तां कुतश्चन ॥ उपपन्नस्तदानीं च दृष्टमूलैः परिग्रहः । निश्चयोऽस्माकमप्यद्य यथा संभवतः स्थितः ॥ प्रयोगद्योतका मन्त्रा द्योतनं तस्य नामतः । नर्तेऽधिकारोत्पत्तिभ्यां प्रयोगस्यास्ति संभवः ॥ विशिष्टदेवतालाभ आघारे मान्त्रवर्णिकः । प्रकाशकत्वान्मन्त्रस्य तन्निर्वहणहेतुकः ॥ या सिद्धरूप एकस्मिन् रूपान्तरगतिर्भवेत् । न सा स्वरूपनाशाय विश्वजित्यधिकारवत् ॥ प्रतिपन्ने विधौ युक्तं तत्संबन्धार्थकल्पनम् । गतिर्मन्त्रार्थवादेभ्यो न दृष्टा चेद्विधेः क्वचित् ॥ लिङादिगम्यं भगवान् विधिं स्मरति पाणिनिः । न शक्तास्ते विधिं वक्तुं सिद्धवस्त्वभिधायिनः ॥ व्याख्येयो गुणवादेन योऽर्थवादादतत्परात् । अर्थोऽधिगन्तुमिष्येत कथं स्यात्तस्य सत्यता ॥ भिन्द्याद्वाक्यं न प्रतिष्ठा साकाङ्क्षा रात्रयो यतः । विशेषे तद्गते युक्ता वाक्यशेषावगम्यता ॥ स्तेयादीनां निषेधेऽपि विध्यन्तरगतिर्ध्रुवा । ततश्च वाक्यभेदः स्यान्नोपन्यासस्ततः समः ॥ वाचःस्तोमे प्रयुज्यन्ते सर्वे मन्त्रविधिश्रुतेः । नाष्टकादौ विशेषोऽस्ति हेतुर्मन्त्रस्य बोधने ॥ विना सामान्यसंबन्धाल्लिङ्गं च विनियोजकम् ।

न च नास्त्यस्य संबन्धो विना प्रकरणादिभिः ॥ परिहारं ब्रुवन्त्यत्र केचित्तन्मूलवादिनः। रात्रिषु प्रतितिष्ठन्तीत्यस्यस्येव लिङ्गादिषु ॥ पञ्चमेन लकारेण तदर्थगतिरिष्यते। यतन्ति न म्लेच्छितवा इत्यादिषु तथा भवेत् ॥ ऋचां विधिर्वाचःस्तोमे सर्वदाशतयीरिति। दशभ्यो मण्डलेभ्यस्ता वर्जिताः पठिता बहिः ॥ सामान्यसंबन्धकारी समाख्यैवेति गीयते। समाख्या गृह्यमन्त्राणां तेन तेनास्ति कर्मणाम् ॥ पञ्चाग्निविद्याशेषत्वं हिरण्यस्तेननिन्दया। स्तेनो हिरण्यवाक्यस्य न विना तन्निषेधतः ॥ शेषत्वावगमोऽर्थात्तु तदकर्तव्यता तु या। द्रढिम्ने शेषतायाः सा न पुनस्तद्विरोधिनी ॥ नित्यानुमेयपक्षो यो वाऽप्यागमपरम्परा। तयोरन्धप्रवाहत्वं न भेदः कश्चिदीक्ष्यते ॥ '। एवं च सति या गौतमेन प्रत्यक्षविधानता गार्हस्थ्यस्योक्ता सा शब्दस्याव्यवहितव्यापाराभिप्रायेण। श्रवणानन्तरं योऽर्थः प्रतीयते स प्रत्यक्षः। यस्तु प्रतीतेऽर्थे तत्सामर्थ्यपर्यालोचनया गम्यः स विलम्बितत्वात्प्रतिपत्तेर्न प्रत्यक्ष इति सर्वमुपपन्नम्।

स्मृतिशीले च तद्विदाम्। स्मृतिश्च शीलं च स्मृतिशीले। शीलं रागद्वेषप्रहाणमाहुः। तच्च धर्ममूलं वेदस्मृतिवन्न ज्ञापकतया, किंतु निर्वर्तकत्वेन। रागद्वेषप्रहाणाद्धि धर्मो निर्वर्तते। ननु च 'श्रेयःसाधनं धर्मः' इत्युक्तम्। रागद्वेषप्रहाणमेव च तत्स्वभावम्। तत्रासति व्यतिरेके किमुच्यते रागादिप्रहाणाद्धर्मो निर्वर्तत इति? उक्तमस्माभिर्धर्मशब्दोऽयं स्मृतिकारैः कदाचिद्विधिनिषेधविषयभूतायां क्रियायां प्रयुज्यते कदाचित्तदनुष्ठानजन्य आफलप्रदानावस्थायिनि कस्मिंश्चिदर्थे। तस्य च सद्भावे शब्द एव प्रमाणम्। यदि हि यागस्तथाविधं वस्त्वनुत्पाद्य विनश्येत्तदा कालान्तरे कुतः फलोत्पत्तिः? तदेतद्वस्तु धर्मशब्देनात्राभिप्रेतम्। तस्य शीलं मूलमिति न किंचिदनुपपन्नम्। तदभिप्राया एव व्यवहाराः– 'एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः' इति। क्रियाया अनुष्ठानसमनन्तरमेव नाशात्कुतः कालान्तरान्वयः? अत्र चोद्यते– ननु सर्व एव श्रुतिस्मृतिविहितोऽर्थो धर्मस्य मूलम्। शीलस्यापि तत्रान्तर्भावात् भेदेनोपादानमनर्थकम्। विधायिष्यते च– 'इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्' ( मस्मृ. ७।४४ ), 'यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ' ( मस्मृ. २।९२ ) इति। अयमेव मनसो जयो यो रागद्वेषयोः परित्याग इति वक्ष्यामः। केचिदाहुः– आदरार्थः पृथगुपदेशः। एतद्धि सर्वकर्मणामनुष्ठान उपयुज्यते, स्वप्रधानं च अग्निहोत्रादिकर्मवत्। सर्ववर्णधर्मश्चायं सर्वाश्रमधर्मश्च। अतः सामान्यधर्मलक्षणावसरेऽस्मिन्नुच्यते। वयं तु ब्रूमः– समाधिः शीलमुच्यते। तथाहि– 'शील समाधौ' इति धातुषु पठ्यते। समाधानं च मानसो धर्मः। यच्चेतसोऽन्यविषयव्याक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणता तच्छीलमुच्यते। द्वन्द्वश्चायमितरेतरयोगे। तेन परस्परसापेक्षयोः स्मृतिशीलयोः धर्मं प्रति प्रामाण्यमेवाभिप्रेतम्, न पूर्ववन्निर्वर्तकत्वम्। एतदुक्तं भवति– समाधानवती या स्मृतिः सा प्रमाणम्, न स्मृतिमात्रम्। तेन सत्यपि वेदार्थवित्त्वे यदतत्पराणां स्मरणं न तद्धर्ममूलम्, भ्रान्त्यादिसंभवाच्छास्त्रार्थावधानशून्यानाम्। चशब्द इह पठ्यते, स 'तद्विदाम्' इत्यस्मादनन्तरं द्रष्टव्यः। वृत्तानुरोधात्त्वेवं पठितः। समुच्चयार्थश्चासौ पूर्वप्रकृतस्य च समुच्चेतव्यस्याभावात्तृतीये पादे यत्साधूनामित्युक्तं तत्समुच्चिनोति। अतस्त्रीणि विशेषणान्यत्राऽऽश्रीयन्ते। विदुषामुपाध्यायादागमितविद्यानां तथा तदभ्यासपराणामनुष्ठानपराणां च स्मृतिः प्रमाणम्। एतत्सर्वं मन्वादीनामासीदिति स्मर्यते। नान्यथा तत्कृतेषु ग्रन्थेषु शिष्टानां परिग्रहोपपत्तिः। यद्येवं स्पष्टमेव वक्तव्यम् 'मन्वादिवाक्यानि धर्ममूलम्' इति, किमेतेन लक्षणेन? सत्यम्। यः कथंचित्तत्प्रामाण्ये विप्रतिपद्येत तं प्रति न्यायशास्त्रप्रसिद्धं प्रामाण्यहेतुकथनमेतत्। अद्यत्वेऽपि यस्यैतद्धेतुसद्भावः सोऽपि मन्वादिवद्ग्राह्यवाक्यः स्यात्। तथा च विदुषां प्रायश्चित्ताद्युपदेशे तथाभूता एव परिषत्त्वेन प्रमाणीभवन्ति– 'एकोऽपि वेदविद्धर्मं यो व्यवस्येद्द्विजोत्तमः' (मस्मृ. १२।११३) इति। अत एव स्मर्तृपरिगणना 'मनुर्विष्णुर्यमोऽङ्गिराः' इति निर्मूला। तथा हि– पैठीनसिबौधा-

यनप्रचेतःप्रभृतयः शिष्टैरेवंरूपाः स्मर्यन्ते, न च परिगणनायामन्तर्भाविताः । सर्वथा यमविगानेन शिष्टाः स्मरन्ति वदन्ति वा एवंविधैर्गुणैर्युक्तं तेन चैतत्प्रणीतमिति तस्य वाक्यं सत्यपि पौरुषेयत्वे धर्मे प्रमाणं स्यादिति 'स्मृतिशीले च तद्विदाम्' इत्यस्यार्थः । अद्यत्वे य एवंविधैर्गुणैर्युक्त ईदृशेनैव च हेतुना ग्रन्थमुपनिबध्नीयात् स उत्तरेषां मन्वादिवत्प्रमाणीभवेत् । इदानीन्तनानां तु यदेव तत्र तस्य बोधकारणं तदेव तेषामस्तीति न तद्वाक्यादवगतिः । इदानीन्तनो हि यावन्मूलं न दर्शयति तावन्न विद्वांसस्तद्वाक्यं प्रमाणयन्ति । दर्शिते तु मूले प्रमाणीकृते ग्रन्थे कालान्तरे यदि कथंचिदष्टकादिमूलतुल्यता स्यात्तदा तेषां शिष्टपरिग्रहान्यथानुपपत्त्या तन्मूलानुमानं युक्तम् ।

आचारश्चैव साधूनाम् । चशब्देन वेदविदामिति संबध्यते । पदद्वयेन शिष्टत्वं लक्ष्यते । शिष्टानां य आचारः सोऽपि धर्मे मूलम् । आचारः व्यवहारः अनुष्ठानम् । यत्र श्रुतिस्मृतिवाक्यानि न सन्ति, शिष्टाश्च धर्मबुद्ध्याऽनुतिष्ठन्ति, तदपि वैदिकमेव पूर्ववत्प्रतिपत्तव्यम् । यथा विवाहादौ कङ्कणबन्धनादि माङ्गलिकत्वेन यत्क्रियते, या च कन्यायास्तदहर्विवाहयिष्यमाणायाः प्रख्यातवृक्षयक्षचतुष्पथादिपूजा देशभेदेन, तथा चूडासंख्या देशभेदश्च, या चातिथ्यादीनां गुर्वादीनां चानुवृत्तिः प्रियहितवचनाभिवादनाभ्युत्थानादिरूपा, तथा पृश्निसूक्तं तृणपाणयोऽधीयते, अश्वमेधमश्वं यथा(१ ‡ यव-)समर्पयन्तः । ईदृश आचारः । एषोऽपि हि स्वभावभेदेन पुरुषाणां मनःस्वास्थ्यदौःस्थ्यादिभेदेनानेकरूपः प्रतिविशेषमानन्त्यादशक्यो ग्रन्थेनोपनिबद्धुम् । यदेव बहुशः प्रियमस्येत्युपलक्षितं तदेवावसरान्तरे विपरीतं संपद्यते । तथा पर्युपासनं गृहस्थेनातिथेः क्रियमाणं कस्यचित्प्रीतिकरं 'ममायं भृत्यवत्तिष्ठति', अन्यस्त्वन्यथा 'निर्यन्त्रणया न लभ्यत आसितुमस्मिन् संनिहिते' इति पर्युपासनयैव विरज्यति । न तत्र सामान्यतः शक्यं वेदानुमानम्, न विशेषतः । अष्टकादीनां तु नियतैकरूपसमस्तप्रयोगस्मरणमित्येष स्मृत्याचाराणां भेदः ।

आत्मनस्तुष्टिरेव च । धर्ममूलमित्यनुषज्यते, वेदविदां साधूनामिति च । अस्याश्च धर्ममूलत्वं प्रामाण्येनैवेत्याहुः । यत्र ह्येवंविधानामनुष्ठेयेऽर्थे मनः प्रसीदति, द्वेषो न भवति, स धर्मः । ननु च यस्य प्रतिषिद्ध एवार्थे मनः प्रसीदेत्स धर्मः प्राप्नोति, विहिते च $किंकथिका स्यात्, स न धर्म इति । एवमेतदीदृशानां महात्मनां मतिमतां महाप्रभावो मनःप्रसादः, येनाधर्मोऽपि धर्मतामेति, धर्मश्चाधर्मताम्, न रागद्वेषादिदोषवताम् । यथा ¶रुमायां यत्किंचिद्द्रव्यं प्रविशति तत्सर्वं लवणसात्संपद्यते, एवं वेदविदां सहजोत्पन्नेन मनःपरितोषेण सर्वं निर्मलीक्रियते । अतो यथा प्रतिषिद्धमपि ग्रहणं षोडशिनि विधिनाऽनुष्ठीयमानं न दोषाय । न चात्र ग्रहणवद्विकल्पः । प्रतिषेधा ह्यात्मतुष्टिव्यतिरेकेणान्यत्र विषये व्यवस्थाप्यन्ते । अथवा नैव तेषामधर्मे आत्मा परितुष्यति । यथा विषघ्नीमेवौषधीं नकुलो दशति, नान्याम् । अत उच्यते— 'नकुलो यां यां दशति सा सा विषघ्नी' इति । ‡ इह भवन्तश्चाऽऽहुः—

‡ यथापदार्थस्यानाकाङ्क्षितत्वात् 'अर्पयन्तः' इत्यस्य मुख्यकर्मसाकाङ्क्षत्वाच्च 'अश्वमेधमधीयानाः केचिदश्वस्य घासमाहरन्ति' इतिशाबरभाष्यानुरोधेन (जैसू. २।४।८) शुद्धिरियं कल्पिता । 'अश्वमेधमधीयते' इति संबन्धः । गच्छतेर्गतिप्रापणोभयार्थत्वात् 'गतिबुद्धि०' (पासू. १।४।५२) इत्यनेन वा, अर्थपरिगणनपक्षे नयतिसमानार्थत्वेन दुह्यादित्वाद्वा द्विकर्मकत्वम् ।

$ कथैव कथिका । किमिति कुत्सितार्थे । कुत्सितोक्तिः निन्देत्यर्थः । यदि विहितविषये निन्दा स्यात्, स न धर्म इति प्राप्नोतीत्यर्थः ।

¶ रुमा लवणदेशविशेषः । 'रुमा सुग्रीवदारेषु विशिष्टलवणाकारे ।' इति मेदिनी ।

‡ अत्र 'इह' इत्यत्र न सप्तम्यन्तात् 'हः' अपि तु 'इतराभ्योऽपि दृश्यन्ते' (पासू. ५।३।१४) इति सूत्रेण 'भवदादियोग एव' इति भाष्येष्टया च विहितः सार्वविभक्तिकः प्रथमान्तभवच्छब्दसामानाधिकरण्यात् 'इमे' इत्यर्थे प्रथमान्तादिदंशब्दादिति ज्ञेयम् । इहभवत्तत्रभवदादिशब्दा व्यस्ताः समस्ता वा पूज्यत्वे प्रयोगोपाधौ रूढाः । केचिदत्र

ये वैकल्पिकाः पदार्थास्तेषु यस्मिन् पक्षे मनः प्रसीदति स पक्ष आश्रयितव्यः । वक्ष्यति च द्रव्यशुद्धौ प्रायश्चित्तेषु च– 'तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत् ।' ( मस्मृ. ११।२३३ ) । अथवा योऽश्रद्दधानो नास्तिकतया तस्यानधिकारमाह । नास्तिकस्य हि न वैदिकं कर्म कुर्वतोऽप्यात्मा तुष्यति । अतस्तेन क्रियमाणमपि कर्म निष्फलमेव । अथवा सर्वकर्मविषयो भावप्रसाद उपदिश्यते अनुष्ठानकाले क्रोधमोहशोकादि त्यक्त्वा प्रमुदितेन भाव्यम् । अतश्च शीलवदस्याः सर्वशेषतया धर्ममूलत्वाभिधानम् । § मेधा.

( २ ) शीलम् अद्रोहादि । तथा च महाभारते– 'अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा । अनुग्रहश्च दानश्च शीलमेतद्विदुर्बुधाः ॥' । हारीतः– 'ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, मृदुता, अपारुष्यता, मैत्रता, प्रियवादिता, कृतज्ञता, शरण्यता (प्रणतिः) चेति त्रयोदशविधं शीलम्' । एतस्य चाऽऽचारवत् प्रामाण्यम् । ¶ व्रक. २०–२१

(३) संध्योपरमणकाले त्रिःप्रदक्षिणादिः शिष्टाचारः । वेदविदां सकलानुष्ठानपराणां निर्दोषत्वेन यद्विज्ञानमुत्पद्यते साऽऽत्मतुष्टिः । मभा. १।२

( ४ ) एवं धर्मं व्यवस्थाप्य तत्र प्रमाणान्याह– वेदोऽखिल इति । अखिलः सार्थवादः , तेषामपि विधितात्पर्यात् । स वेदो धर्मस्य मूलं प्रमाणम् । यत्र साक्षाच्छ्रुतिर्नोपलभ्यते तत्र कथम् ? तदुक्तम्– स्मृतिशीले चेति । वेदविदां या स्मृतिः वाक्यविशेषविवक्षोत्पादिकाऽर्थविशेषे विषयचिन्ता, तत्प्रभवत्वात् वाक्यमपि स्मृतिः । वेदेऽनुपलभ्यमाने सा धर्मे प्रमाणम् । तस्या अप्यनुपलम्भे यत्र वेदविदां बहूनां शीलं चित्तस्य स्वभावप्रवणता साऽपि धर्मस्य मूलम् । यथा श्रुतिः– 'यद्वै किंचानूचानोऽभ्यूहति तदार्षेयं वेदयन्ति' इति । तस्याप्यनुपलम्भ उक्तम्– आचार इति । साधवो वेदार्थसाधनप्रवृत्ताः , तेषामाचारः स्वस्वपूर्वकालीनसाध्वनुष्ठितस्य प्रतिसंधानमनुष्ठानम् , तच्च प्रमाणं धर्मे लब्धशीलादन्यप्रयुक्तत्वशङ्कारहितान्निर्धारितमूलं मिथ्याप्रसिद्धमूलताशङ्काकलुषितमीषत्प्रत्यवरमिति क्रमार्थः । यत्राऽऽचारोऽपि नोपलभ्यते तत्राऽऽह– आत्मन इति । वक्ष्यति च– 'यत्कर्म कुर्वतोऽस्य स्यात्परितोषः' (मस्मृ. ४।१६१) इति । तदयमर्थः– यत्र विषये वेदादिकं धर्मप्रमाणचतुष्टयं सदपि नोपलम्भमुत्सादादिवशात् तत्र यत्कर्म कुर्वतश्चेतसो लाघवापरनामा प्रसादातिशयः तस्य साधकत्वे स एव प्रमाणम् । किंत्वेकपुरुषप्रतिभानतयाऽस्याः शीलाचाराभ्यां बहुजनप्रतिभानतदनुष्ठानरूपत्वेनान्योन्यसंवादप्राप्तदार्ढ्याभ्यां किंचिदपकृष्टत्वमिति । मवि.

( ५ ) अखिलः साङ्गः । स्मृतिर्मन्वादिः । शीलं स्मृतिश्रुति( ? श्रुतिस्मृति )प्रत्यक्षदृष्टनिषेधव्यतिरिक्तनिषेधपरिपालनं स्वभावकृतम् । यत्तु भारते 'अद्रोहः सर्वभूतानाम्' इत्यादि शीललक्षणमुक्तम् , यच्च हारीतेन 'ब्रह्मण्यता, देवपितृभक्तता , सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यम्' इत्याद्युक्तं शीलत्वेन, तत्र ब्रह्मण्यता अब्रह्मण्यताव्यावृत्तिः इत्येवं निषेधपरिपालनपरमेव । उपलक्षणं चैतत् । निषेधव्यावृत्तिमात्रं शीलमित्येव तत्त्वम् । अत एव याज्ञवल्क्येन 'सम्यक्संकल्पजः कामः' इति शीलस्वरूपमुक्तम् । संकल्पः निवृत्तिसंकल्पः । तज्जन्यः कामः निवृत्तीच्छा । आचारः श्रुतिस्मृतिप्रत्यक्षदृष्टव्यतिरिक्तधर्मानुष्ठानम् । आत्मतुष्टेर्धर्मसंदेहे निर्णायकत्वम् । भट्टाचार्यैस्तु शिष्टात्मतुष्टिविषयत्वेन पूर्वमसदेव धर्मतत्त्वमुत्पद्यते नकुलदन्तस्पृष्टौषधिवदित्युक्तम् । एतच्च प्रत्यक्षश्रुतिस्मृत्यविरोधिविषये । § निप्र. १।१६–१७

(६) अधुना प्रत्यक्षवेदमात्रप्रमितो धर्म इति तु नार्थ इत्याह– वेद इति चतुर्भिः । अखिलः ऋग्यजुःसामाथर्वाणः धर्ममूलं धर्मे प्रमाणम् । स्मृतिशीले, स्मृतिर्मन्वाख्याद्या, शीलं वृत्तं चरित्रम् । तद्विदाम्

---

नित्यसमासमिच्छन्ति, तत्तु भाष्याद्यनुक्तत्वान्न प्रामाणिकम् । तेन ग्रन्थेषु दरीदृश्यमानं व्यस्तसमस्तयोरुभयोरपि मुद्रणं साध्वेव ।

§ गोरा. , स्मृच. , मेधागतम् ।

¶ शेषं मेधागतम् । ममु. , कुर. व्रकवत् ।

§ गप. निप्रगतम् ।

अनुष्ठेयत्वेन वेदार्थविदाम् । ‘ब्रह्मण्यता, पितृदेवभक्तता, अपरोपतापिता, मृदुता, अनसूयता, अपारुष्यम्, मैत्रता, प्रियवादित्वम्, कृतज्ञता, शरण्यता, कारुण्यम्, प्रशान्तिरिति त्रयोदशविधं शीलम्’ इति हारीतोक्तं वा । अत्र स्मृतिः श्रुत्यविरोधिनी ग्राह्या । तथा च सूत्रम्– ‘विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्’ इति । प्रत्यक्षश्रुतिविरोधे स्मृत्यादि हेयम् । यथा ‘सर्वौदुम्बरी वेष्टयितव्या’ इति । असति तद्विरोधेऽनुमानम्, यथा ‘अष्टकाः कर्तव्याः’ इति । स्मृतिवाक्यं वेदानुमापकतया मानमित्यर्थः । आचारः विवाहादौ कङ्कणबन्धादिः साधूनाममत्सराणाम् । तुष्टिः मनसः परिणामविशेषः । सोऽपि धर्मे मानमित्यन्वयः । मच.

(७) सद्भिः संभावनीयताहेतुः आत्मगुणसंपच्छीलम् । तदुक्तं महाभारते– ‘तत्तत्कर्म तथा कुर्याद्येन श्लाघ्येत संसदि । शीलं समासेनैतत्ते कथितं कुरुनन्दन ॥’ इति । अत्रोदाहरणं युधिष्ठिरस्य यक्षरूपधारिधर्मात् स्वसोदरानादरेण नकुलस्य जीवितवरणम् । § मुक्ता. १

(८) वेदः ‘मन्त्रब्राह्मणयोर्वेदनामधेयम्’ (आपप. १।३३) इत्यापस्तम्बाद्युक्तो मन्त्रब्राह्मणसमुदायः । अखिलः लिङ्गवाक्यप्रकरणस्थानसमाख्यानुमितोऽतिदेशकल्प्यश्च । ‘यज्ञं व्याख्यास्यामः, स त्रिभिर्वेदैर्विधीयते’ (आपप. १।१, ३) इत्यापस्तम्बादिवचनात्त्रय्या एव धर्ममूलत्वम्, नाऽऽथर्वणस्येतिशङ्काव्यावृत्त्यर्थं वाऽखिलग्रहणम् । आथर्वणस्य प्राधान्येन वैतानिकाग्निहोत्रादिधर्माप्रतिपादकत्वेऽपि तुलापुरुषशान्त्यादिसर्ववर्णसाधारणधर्मप्रतिपादकत्वाद्युक्तं धर्ममूलत्वमिति भावः । ... शीलम् ... अत्र प्रवृत्तिभिन्नाद्रोहाद्याचारस्य प्रामाण्यमुच्यते, आचारश्चेत्यत्र तु प्रवृत्त्यात्मकस्येत्यपौनरुक्त्यम् । साधूनामिति । ... तुष्टिर्धर्मे प्रमाणम् ... । अनेन पर्षद्रूपमपि प्रमाणमुक्तं भवति । अथवा ‘आचारश्चैव साधूनाम्’ इति छेदः । एवं चावेदविदामपि क्षीणदोषपुरुषाणामाचारः प्रमाणम् । तथा च सच्छूद्राद्याचारस्तत्पुत्रादीन् प्रति भवति प्रमाणम् । आत्मनस्तुष्टिरेव चेति वैकल्पिकेऽर्थे । सा चाऽऽत्मानं प्रत्येव । तथा च याज्ञवल्क्यः– ‘श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥’ (यास्मृ. १।७) । § पप्र. ८–९

(९) ¶ एषु पूर्वं पूर्वं बलीयः । ‡ नन्द.

(१०) अखिलो वेदो धर्मस्य प्रमाणम् । च पुनः । तद्विदां धर्मविदां स्मृतिशीले । स्मृतिश्च शीलं च स्मृतिशीले धर्मस्य मूले भवतः । ‘शुचौ तु चरिते शीलम्’ इत्यमरः । आचारः सदाचारः । साधुतुष्टिकर्ता च पुनः आत्मनः स्वस्य तुष्टिकर्ता । भाच.

वेदमूलकत्वं मनुस्मृतेः

**[1]यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥**

(१) यदुक्तं वेदवित्संबन्धेन स्मृतेः प्रामाण्यं तदनेन प्रकटयति । यः कश्चिद्धर्मो वर्णधर्म आश्रमधर्मः संस्कारधर्मः सामान्यरूपो विशेषरूपश्च कस्यचिद्ब्राह्मणादेर्वर्णस्य मनुना परिकीर्तितः स सर्वोऽपि वेदे अभिहितः प्रतिपादितः । यथा चैतत्तथा पूर्वश्लोक उक्तम् । सर्वज्ञानमयो हि सः । सर्वेषां ज्ञानानामदृष्टविषयाणां हेतुर्निमित्तं वेदः । सर्वैर्ज्ञानैर्निर्मित इवेति ज्ञाने (? वेदे) तद्विकारत्वमध्यारोप्य मयट् कृतः । यो हि यद्विकारः स तन्मयस्तत्स्वभाव इत्युच्यते । वेदश्च ज्ञानहेतुत्वात्तन्मय इति । सत्कार्यदर्शने कारणं कार्यस्वभावमिति । अथवा सर्वज्ञानाद्धेतोः आगतः ‘†हेतुमनुष्येभ्यः’ (पासू. ४।३।८२) इति मयट् क्रियते । मेधा.

---

§ शेषं मेधागतम् ।

§ शेषं ब्रकवत् ।

¶ एतद्व्याख्यानमुत्तरश्लोकव्याख्यानोपक्रमत्वेन आदर्शपुस्तकयोर्मुद्रितमपि प्रकृतश्लोकव्याख्यानशेषत्वोपपत्तेरत्र संगृहीतम् ।

‡ शेषं मुक्तागतम् ।

† ‘हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः’ इति चतुर्थतृतीये एकाशीतितमं सूत्रं रूप्यस्य विधायकम्, न मयटः । ‘मयट्

(१) मस्मृ. २।७ ; विश्व. १।७ पृ. १८, २२, २५

( २ ) तथा च वेदमूलत्वमेषां दर्शयति– य इति । यः कश्चित् श्रुतिशीलाचारात्मतुष्टिप्रमाणकः धर्मः कस्यचिद्ब्राह्मणादेः मनुना कथितः स सर्वैः ( ? सर्वः ) वेदेरुक्तः , उच्छिन्नविप्रकीर्णमन्त्रार्थवादलिङ्गमूलत्वात्तत्स्मरणस्य, अतीन्द्रियार्थप्रतिपादने हि वेदविदामग्रप्रमाणकारणानां वेदस्यैव मूलत्वे संभवात् । यस्मात्सर्वदृष्टार्थज्ञानहेतुत्वात्सर्वज्ञानमयः सर्वज्ञानारब्ध इव वेदः । § अत्र चाष्टकादीनां महाप्रत्यवायादीनां ग्रन्थेनोपनिबन्धः , शीलाचारात्मतुष्टीनां पुनरल्पप्रत्यवायत्वात् (न) उपनिबन्धः ।
गोरा.

( ३ ) यः कश्चित् इदानीमनुपलभ्यमानमूलवान् ( वेदोऽपि ? ) । कस्यचित् संकीर्णस्यापि । सर्वेषां वेदानां यज्ज्ञानं तत्प्रायो हि स इत्यनुधापयेऽपि ( ? नुमेयोऽपि ) तस्य स वेदः प्रत्यक्ष एवेत्यर्थः । मवि.

( ४ ) वक्त्रनपेक्षत्वेन वेदश्च प्रमाणम् । तन्मूलत्वेन स्मृत्याचारावपि । तन्मूलत्वं च तत्प्रतिपादितार्थाभिधायित्वात् । तथा च भृगुः– ' यः कश्चित् ··· ॥ ' इति । स्मृच. १।३

( ५ ) वेदादन्येषां वेदमूलत्वेन प्रामाण्येऽभिहितेऽपि मनुस्मृतेः सर्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह– य इति । यः कश्चित्कस्यचिद्ब्राह्मणादेर्मनुना धर्म उक्तः स सर्वो वेदे प्रतिपादितः , यस्मात्सर्वज्ञोऽसौ मनुः । सर्वज्ञतया चोत्सन्नविप्रकीर्णपठ्यमानवेदार्थं सम्यक् ज्ञात्वा लोकहितायोपनिबद्धवान् । गोविन्दराजस्तु सर्वज्ञानमय इत्यस्य सर्वज्ञानारब्ध इव वेद इति वेदविशेषणतामाह । ममु.

च ' इति तत्रत्यं द्व्यशीतितमं मयट्विधायकम् । तथापि तत्र ' हेतुमनुष्येभ्यः ' इतिपदानुवृत्त्या संपन्नां ' हेतुमनुष्येभ्यो मयट् च ' इति वाक्यव्यक्तिमभिसंधाय ' हेतुमनुष्येभ्यः ' इति सूत्रनिर्देशोऽत्र कृत इति बोध्यम् । अत एवास्माभिरत्र ' ८२ ' इति सूत्राङ्को निर्दिष्टः , न प्रमादादित्यपि ज्ञेयम् ।

§ ग्रन्थोऽयमनेकानुपपत्तिप्रतिभानाद्दुर्बोधः ।

तृतीयचरणमात्रम् ; स्मृच. १।३ सर्वं (ब्रह्म) भृगुः ; व्यमा. २०७ सर्वोऽभि ( सर्वो वि ).

( ६ ) सर्वासां स्मृतीनां वेदमूलत्वेऽपि मनुस्मृतेरतिशयमाह– य इति । कस्यचित्पुंसः सः वेदः सर्वज्ञानमयः सर्वेषां ज्ञानानामदृष्टविषयाणां हेतुतया निर्मितः सर्वविषयज्ञानबलः , भगवतः पूर्वपूर्वसर्गसदृशतया कार्यत्वेऽपि सर्वार्थप्रकाशकत्वात् । मच.

( ७ ) वेदविदां स्मृतिः प्रमाणमित्युक्तम् । वेदवित्तमत्वान्मनुना प्रणीतं शास्त्रं स्मृत्यन्तरेभ्यः प्रमाणमित्यभिप्रायेणाऽऽह– यः कश्चिदिति । सर्वज्ञानमयः सर्ववेदार्थज्ञानप्रकृष्टः । नन्द.

( ८ ) स वेदः सर्वज्ञानमयः सर्वं जानातीत्यर्थः । † भाच.

स्वधर्माचरणं श्रुत्यर्थनिर्णयेन

[1]सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥

( १ ) सर्वं ज्ञेयं कृतकाकृतकं शास्त्रगोचरं प्रत्यक्षादिगोचरं ( च ) समवेक्ष्यैतज्ज्ञानचक्षुषा तर्कव्याकरणनिरुक्तमीमांसादिविद्यास्थानश्रवणचिन्तनात्मकेन । चक्षुरिव चक्षुः शास्त्राभ्यासः , ज्ञानस्य कारणत्वसामान्यात् । यथा चक्षुषा रूपं ज्ञायते एवं शास्त्रेण धर्म इति सामान्यम् । समवेक्ष्य सम्यग्विचारपूर्वकं निरूप्य श्रुतिप्रामाण्यतः वेदप्रामाण्येन धर्मे निविशेत धर्ममनुतिष्ठेत् । सर्वेषु हि शास्त्रेषु सम्यग्ज्ञातेषु वेदप्रामाण्यमेवावतिष्ठते, नाज्ञातेषु । तथा हि– तानि शास्त्राणि निपुणत्वेन चिन्तयन् न तेषां प्रामाण्ये सम्यग्युक्तिरस्ति, वेदे त्वस्तीति निश्चिनोति । सर्वग्रहणं ज्ञेयविशेषणम् । निखिलशब्दश्च समवेक्ष्येति क्रियाविशेषणम् । निखिलं समवेक्ष्य निःशेषेण पूर्वपक्षेण शास्त्रान्तराणां प्रामाण्ये वेदस्य वाऽप्रामाण्ये यावन्त्यः काश्चन युक्तयः प्रतिभासन्ते ताः सर्वाः प्रदर्श्य, सिद्धान्तसिद्धैर्हेतुभिर्यथालक्षणलक्षितैर्निराकृत्य स्वपक्षसाधने चोपन्यस्ते वेदप्रामाण्यमवतिष्ठत इति निखिलशब्देन प्रदर्श्यते । तेन तौ निखिलसर्वशब्दौ पर्यायावपि भिन्न-

† शेषं ममुगतम् ।

(१) मस्मृ. २।८.

विषयत्वान्न पुनरुक्तौ। स्वग्रहणमनुवादः। यो ह्यन्यस्य धर्मः सोऽन्यस्याधर्म एव। मेधा.

(२) यावत्किंचिच्छास्त्रजातं तत्सर्वं विज्ञानाख्येन चक्षुषा निखिलं निःशेषं कृत्वा पर्यालोच्य वेदप्रामाण्येनैव शास्त्रशः स्वधर्मेऽवतिष्ठेत, वेदस्यैव धर्मं प्रति प्रामाण्यात्, न वेदबाह्यशास्त्रप्रामाण्येन। ज्ञानं चक्षुरिव, प्रमेयपरिच्छेदात्। गोरा.

(३) सम्यगवेक्ष्य आलोच्य इदं मानवशास्त्रम् एतच्छास्त्रोक्तेन ज्ञानरूपचक्षुषा, अनुपलभ्यमानवेदमूलेषु कर्मसूपलभ्यमानतन्मूलेन( ? लेषु) च श्रुतेरपि प्रामाण्यतः प्रमाणत्वेन सिद्धेः तदुक्ते स्वधर्मे स्वसंपाद्ये धर्मे निविशेत नितान्तमन्तर्भवेत्। वै प्रसिद्धौ। मवि.

(४) सर्वं शास्त्रजातम्। निखिलं तद्विशेषेण पर्यालोच्य। ‡ ममु.

(५) ततः किम्? तत्राऽऽह– सर्वमिति। ज्ञानचक्षुषा ज्ञायतेऽनेनेति ज्ञानं गुरुः, स एव चक्षुः, तेनोपदिष्टमवेक्ष्य शब्दतोऽर्थतश्चाधीत्येत्यर्थः। इदं मनुशास्त्रं श्रुतिप्रामाण्यतः † श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिर्गृहीततात्पर्यार्थः विद्वान् स्वधर्मेऽनुष्ठेये कर्तव्याकर्तव्येतिविशेषतः प्रवर्तेत। मच.

(६) शीलादिभ्यः श्रुतिस्मृती बलीयस्यावित्यभिप्रायेणाऽऽह– सर्वमिति। इदं श्रुत्यादिप्रमाणजातम्। निखिलं निरवशेषम्। ज्ञानचक्षुषा बुद्ध्या। श्रुतिप्रामाण्यतः। श्रुतिशब्दः स्मृतेरप्युपलक्षणार्थः, उत्तरश्लोकानुगुण्याच्छ्रुतिसमत्वाभ्युपगमाच्च। नन्द.

(७) इमं निखिलं सर्वं धर्मं विप्रादीनां धर्मं ज्ञानचक्षुषा अवेक्ष्य विचार्य विद्वान् श्रुतिप्रामाण्यात् वै निश्चयेन निविशेत स्वधर्मे प्रविष्टो भवेत्। भाच.

अष्टादश स्मृतिकाराः चतस्रो मानवसंहिताश्च

[1]**विष्णुः पराशरो दक्षः संवर्तव्यासहारिताः।**
**शातातपो वसिष्ठश्च यमापस्तम्बगौतमाः॥**

[2]**देवलः शङ्खलिखितौ भारद्वाजोशनोत्रयः।**
**शौनको याज्ञवल्क्यश्च दशाष्टस्मृतिकारकाः॥**

[3]**भार्गवी नारदीया च बार्हस्पत्याङ्गिरस्यपि।**
**स्वायंभुवस्य शास्त्रस्य चतस्रः संहिता मताः॥**

वेदस्मृत्योः अप्रामाण्यबुद्धिर्निषिद्धा

[4]**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।**
**ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥**

(१) किमिदं शब्दार्थसंबन्धस्मरणमभिधानकोशशास्त्रम्? 'आत्मभूः परमेष्ठी' इत्यादिवत्, न धर्मशास्त्रम्, येनेदमुच्यते 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः' इति। उच्यते– इह सदाचारो न श्रुतिः, न स्मृतिः, निबन्धाभावात्। निबद्धाक्षरा हि स्मृतयः प्रसिद्धाः। अतस्तस्य स्मृतित्वमुपपादयति। यत्कार्यं धर्मं शास्ति (अर्थ ?) तत् धर्मशास्त्रम्। यत्र धर्मः शिष्यते कर्तव्यतया प्रतीयते सा स्मृतिः। निबन्धानिबन्धावप्रयोजकौ। शिष्टसमाचारादपि धर्मस्य कर्तव्यतावगतिः। सोऽपि स्मृतिरेव। ततश्च यत्र कस्मैचित्कार्याय स्मृतेरुपा-

---

‡ शेषं मेधागतम्।

† वस्तुतस्तु श्रुतिलिङ्गादीनि प्रमाणान्यङ्गाङ्गिभावबोधकानि, न तात्पर्यग्राहकाणि। तात्पर्यग्राहकाणि तु उपक्रमोपसंहारादीनि। यदि तु अङ्गाङ्गिभावविषयकतात्पर्यग्राहकत्वमभिप्रेतम्, तदा मनुशास्त्रस्याल्पीयांसमेकदेशं श्रुतिप्रामाण्यतो विद्वानित्युक्तं भवति, न कृत्स्नं शास्त्रमित्यनौचित्यमापद्यते।

(१) **बबा.** ५२८; **विपा.** ४।२९९ दक्षः (दक्ष) हारिताः (हारीताः) गौतमाः (गोतमाः).

(२) **बबा.** ५२८ भार (भर) ष्टस्मृतिकारकाः (ष्टौ स्मृतिकारिणः); **विपा.** ४।३०० जोशनो (जयतो).

(३) **बबा.** ५२८ क्रमेण मनुः; **विपा.** ४।३०० क्रमेण मनुः.

(४) **मस्मृ.** २।१०; **मिता.** १।७ पृ.; **मभा.** १।१ पृ., स्मृत्यन्तरम्; **गप.** १० मनुयाज्ञवल्क्यौ; **मच.** र्थेष्वमी (र्थेषु मी); **वीमि.** १।७ श्रुतिस्तु (श्रुतिश्च) पृ.; **आन.** १३ र्थेष्वमी (र्थेषु मी) हि निर्बभौ (विनिर्बभौ); **बाल.** १।४-५ पृ. १० पृ.

दानं तत्र सदाचारोऽपि ग्रहीतव्यः । धर्मशास्त्रं चेत्स्मृतिः वेदोऽपि सर्वमुख्यं धर्मशासनमिति तस्यापि स्मृतित्वप्रसक्तिः, तन्निवृत्त्यर्थमाह— श्रुतिस्तु वेदो विज्ञेयः । यत्र श्रूयते धर्मानुशासनशब्दः सा श्रुतिः, यत्र च स्मर्यते सा स्मृतिः । तच्च समाचारेऽप्यस्तीत्यतः सोऽपि स्मृतिरेव । न हि तत्राप्यस्मृतवैदिके( ?क- )शब्दे प्रामाण्यम् । अथवा श्रुतिग्रहणं स्मृतेर्वेदतुल्यत्वार्थम् । किं पुनः श्रुतिस्मृत्योः समानं कार्यम् ? यत्सदाचारेऽप्यनेन प्राप्यते । उच्यते— ते सर्वार्थेष्वमीमांस्ये । ते श्रुतिस्मृती । सर्वेष्वर्थेषु अत्यन्तातीन्द्रियेष्वपि दृष्टविषयैः प्रमाणैः, यथा तस्मादेव हिंसालक्षणात्पदार्थात्क्वचिदभ्युदयः, क्वचित्प्रत्यवायः; सुरापानान्नरकः, सोमपानात्पापशुद्धिः इत्यादौ पक्षप्रतिपक्षगमनेन विचारो न कर्तव्यः । आशङ्कापक्षान्तरसंभावनं मीमांसनम् । यथा— हिंसा चेत्पापहेतुः स्वरूपाविशेषाद्वैदिक्यपि तथा भवितुमर्हति । अथ वैदिक्यभ्युदयहेतुः, लौकिक्यपि तथा स्यात्, तद्रूपसमानत्वात् । यस्य यद्रूपं वेदादवगतं तस्य तद्विपरीतरूपसंभावनमसत्तर्काश्रयैरसम्यग्घेतुभिर्यद्विचारणं तत्सिद्धान्ताभिनिवेशः स इह प्रतिषिध्यते, न पुनरयमर्थो वेदस्य(आद्यः ?) पूर्वपक्षः, उतस्विद्यः( ? स्विदयं) सिद्धान्त इत्येषा मीमांसा निषिध्यते । यतो वक्ष्यति— 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' ( मस्मृ. १२। १०६ ) इति । किं पुनरयमदृष्टार्थो मीमांसनप्रतिषेधः ? नेति ब्रूमः । ताभ्यां धर्मो हि निर्बभौ । अनेन तार्किकप्रमाणानां वेदार्थविपरीतसाधनानामाभासतामाह । ईदृशा हि तेषां हेतवः— 'वैदिकी हिंसा पापहेतुः, हिंसात्वात्, लौकिकहिंसावत्' । तत्र हिंसायां पापहेतुत्वं न कुतश्चिदन्यतः प्रमाणात्सिद्धमन्तरेणाऽऽगमम् । एवं चेन्नास्ति हिंसायाः पापसाधनसिद्धौ हेतुः यावदागमः प्रामाण्येन नाभ्युपगतः । अभ्युपगते चाऽऽगमप्रामाण्ये तद्विरुद्धो हेतुर्न युज्यते, अप्रामाण्यापत्तेरागमस्य । ततश्चेतरेतरव्याघातः— पूर्वं प्रामाण्येन परिग्रहः पश्चादप्रामाण्यमिति । सोऽयं स्ववचनविरुद्धः पक्षः । नैनं तार्किका अनुमन्यन्ते 'मम माता वन्ध्या' इतिवत्, आगमविरुद्धश्च ।

अथोच्यते— नैवाऽऽगमः प्रमाणम्, कथं तद्विरोधोद्भावनं दूषणम् ? अनृतव्याघातपुनरुक्तदोषेभ्यः । कारीर्यादिकर्मणां तत्समनन्तरं फलार्थितयाऽनुष्ठीयमानानां न नियमतोऽनुष्ठानसमनन्तरं फलप्राप्तिः । कालान्तरे भविष्यतीति चेत्, उक्तमत्र— 'कृता शरदि कारीरी भृशं शुष्यत्सु शालिषु । वसन्ते जायते वृष्टिस्तस्येदं न भवेत्फलम् ॥' इति । यान्यप्यन्यत्रभाविफलानि ज्योतिष्टोमादीनि तत्रापि निरन्वयविनाशात्कर्मणो वर्षशते फलं भविष्यतीति निःसंदिग्धवैतालिकव्यवहारोपममेतत् । तस्मादनृतम् । व्याघातः— उदिते होतव्यम्, अनुदिते जुह्वतो दोषः— 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्'; तथाऽनुदिते होतव्यम्, 'यथा अतिथये प्रद्रुताय दद्यात्तादृगेतद्यज्जुहुयात्' इत्येकत्रोदितहोमो विधीयतेऽनुदितहोमनिन्दया, तदेव विपरीतमन्यत् । तत्र कः पक्ष आश्रीयतामित्यनध्यवसायः । यदेवाग्निहोत्राद्येकस्यां शाखायां विद्यते तदेव शाखान्तरेऽपि । सर्वशाखाप्रत्ययमेकं कर्मेत्यभ्युपगमः । ततश्च पुनरुक्तम् । तत्रानृतमेव तन्न भवतीतेत्येतेनैव पादेन प्रतिपाद्यते । यतो वेदाद्धर्मः एव कर्तव्यतामात्रं यागादिविषयं निर्बभाविति गम्यते, न पुनः कालविशेषः फलस्योत्पत्तौ, अधिकारवाक्येषु कालविशेषाश्रवणात् । विधितो हि फलं भवतीत्येतावद्गम्यते । कालावच्छेदो न विधिः । धात्वर्थसंबन्धिनो हि कालविभागा भूतभविष्यद्वर्तमानाः । न चैतद्धात्वर्थफलम्, किंतु वैधम् । धात्वर्थफलं हि तदानीमेव निर्वर्तते देवतोद्देशेन द्रव्यत्यागो हविर्विकारादि । यदि कश्चित्कस्यचिदाज्ञाकरो भवति, तेन प्रेष्यते— 'गच्छ, याहि ग्रामम्' इति । स आज्ञासंपादने प्रवृत्तः कदाचित्प्रारम्भ एव वेतनफलं लभते, कदाचिन्मध्ये, कदाचित्कृते आज्ञाविषये समनन्तरमन्येद्युर्वा कालान्तरेऽथवा । एवमेतच्छास्त्रफलमनियतकालम् । दिव्यवृष्ट्यादेस्तु स्वाभाव्येन प्रत्यासत्तिमात्रं गम्यते, न तु तदहरेवोत्पत्तिः । प्रतिबन्धकानि च यथा फलस्यैवंविधस्य लोके भवन्ति, तथा वेदेऽपि पुराकृतं दुष्कृतादि । तथा च वेद एवैतद्दर्शयति— 'यदि न वर्षेत्तथैव वसेत्' इति ।

सर्वस्त्वारे तु विवदन्ते— नैतत्क्रतुफम् । अङ्गमेतन्मरणम् । क्रतुफलं ' यः कामयेतानामयः स्वर्गंलोकमियात् ' इति । यथोक्तं हिंसायां लोकवेदयोर्न विशेष इति तत्र शास्त्रावगम्यो हि तस्या अयं स्वभावः, न प्रत्यक्षादिगोचरः । तत्र च भेदः— रागलक्षणा लौकिकी हिंसा, विधिलक्षणाऽलौकिकी हिंसा । विधिलक्षणा त्वग्नीषोमीयस्येति महान्भेदः । तस्मा[न] किंचिद्वेदेऽनृतम् । व्याघातं परस्तात्परिहरिष्यति श्लोकेनैव । मेधा.

( २ ) मन्दबुद्धिव्युत्पादनार्थं मीमांसाप्रतिषेधादि, व्यवहारफलं लोकसिद्धपदार्थकथनम्— श्रुतिः वेदः, धर्मशास्त्रं स्मृतिरिति । स्मृतिग्रहणं शीलादेरपि स्मरणप्रभेदत्वात्प्रदर्शनार्थम् । ते श्रुतिस्मृती सर्वार्थेषु आद्युनरकफलसुरापानाद्यात्मकेषु कुतर्कविकल्पैर्न विचारयितव्ये कथमेतत्स्यादिति । यतः प्रमाणान्तरागोचरो धर्मस्ताभ्यामेव निर्बभौ प्रकाशतां गतः । गोरा.

( ३ ) तुशब्देन शीलादिशब्दव्यवच्छेदः । वे इति प्रसिद्धतामाह । ¶ धर्मशास्त्रप्राधान्येन यत्रानुशासनीयं तद्धर्मशास्त्रम् । अमीमांस्ये तद्विरुद्धतर्कविचारादिभिर्न बाधनीये । शीलादिकं तद्विरोधे बाध्यमेवेत्यर्थः । निर्बभौ प्रकाशितः । † तथा च शीलादिभिस्तदपवादे धर्मव्यवस्थैव न स्यात् । अतस्तदुभयं न विचार्यम् । मवि.

(४) लोकप्रसिद्धसंज्ञासंज्ञिसंबन्धानुवादोऽयं श्रुतिस्मृत्योः प्रतिकूलतर्केणामीमांस्यत्वविधानार्थं स्मृतेः श्रुतितुल्यत्वबोधनेनाऽऽचारादिभ्यो बलवत्त्वप्रतिपादनार्थं च । तेन स्मृतिविरुद्धाचारो हेय इत्यस्य फलम् । श्रुतिः वेदः, मन्वादिशास्त्रं स्मृतिः, ते उमे प्रतिकूलतर्कैर्न विचारयितव्ये । यतस्ताभ्यां निःशेषेण धर्मो बभौ प्रकाशतां गतः । ‡ ममु.

¶ 'धर्मः शास्त्रे प्राधान्येन यत्रानुशासनीयस्तद्धर्मशास्त्रम्' इति शुद्धिरत्र संभाव्यते ।

† ग्रन्थोऽयमादर्शपुस्तकयोः 'योऽवमन्येत' इतिश्लोकव्याख्यानोपक्रमत्वेन मुद्रितोऽप्युपपत्तिवशादस्माभिरत्राऽऽकृष्टः ।

‡ माच. ममुगतम् ।

( ५ ) श्रुतिस्मृत्युदितमित्युक्तम्, तत्र का श्रुतिः का च स्मृतिः इत्याकाङ्क्षायामाह— श्रुतिस्त्विति । धर्मशास्त्रं धर्मप्रतिपादकं मन्वादि तस्य च कर्तृविशेषात्प्रामाण्यम् । तदाह याज्ञवल्क्यः— 'कर्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः । वसिष्ठदक्षसंवर्तशातातपपराशराः ॥ आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती । गौतमः शङ्खलिखितौ हारीतोऽत्रिरहं तथा ॥ ' इति । श्रुतिस्मृती सर्वार्थेषु ज्ञातव्येषु अमीमांस्ये प्रतिकूलतर्केण न विचारयितव्ये इति कुल्लूकः । तन्न । 'सर्वार्थेषु मीमांस्ये' एवेति ( ? इत्येव ) पाठः । तथा च सर्वार्थेषु ज्ञातव्येषु मीमांस्ये एव, धर्मस्यातीव सूक्ष्मत्वात् । ' यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः । ' इति, ' त्रयं सुविदितं ज्ञेयं कार्यसिद्धिमभीप्सता । ' ( मस्मृ. १२।१०६, १०५ ) इति । त्रयं प्रत्यक्षानुमानशब्दाः । मीमांसाशब्दो हि पूजितविचारवचने ' अथातो धर्मजिज्ञासा ' इत्यादि( ? दौ ) । तत्राज्ञाततया § श्रुत्यादिषट्कैर्निर्णेतव्ये ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इत्यस्याः श्रुतेरग्निपरतावत् । मच.

( ६ ) विनिर्बभौ प्रादुरासीदित्यर्थः । आन. ११

( ७ ) श्रुतिस्मृत्योस्तुल्यकक्ष्यतामेव प्रकारान्तरेणाऽऽह — श्रुतिस्त्विति । नन्द.

'श्रुतिं पश्यन्ति मुनयः स्मरन्ति च यथाश्रुति ।
तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि ॥

§ बहुवचनमिदं स्वार्थे कप्रत्ययमुपेत्य योजनीयम् । श्रुत्यादिभिः षड्भिरित्यर्थः । अथवा श्रुत्यादिविनियोजकप्रमाणषट्कं श्रुत्यर्थपाठादिक्रमबोधकप्रमाणषट्कम् उपक्रमोपसंहारादितात्पर्यनिर्णायकप्रमाणषट्कं चेति षट्कबहुत्वं ज्ञेयम् ।

(१) मस्मृ. २।१५ इत्यस्यानन्तरं प्रक्षिप्तः श्लोकोऽयम् । च यथाश्रुति (तु यथास्मृति) णमुभयं प्रमाणैः (णं मुनयः प्रमाणं) ; मभा. ६।२३ च यथाश्रुति ( तु तथा स्मृतिम् ) पू.; पमा. १।१२ यथाश्रुति ( तथा स्मृतिम् ) प्रमितं ( प्रापितं ) ; प्रपा. २ ; मुक्ता. २ यथाश्रुति ( तथा स्मृतिम् ) ; आम. १३ मुक्तावत्; सस्मृ. ५ यथाश्रुति ( यथास्मृति ).

वेदस्मृत्यवमन्ता बहिष्काराहः

'योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥

(१) असत्यप्रामाण्यहेतौ वेदस्य यो द्विजो हेतुशास्त्राश्रयात्, हेतुशास्त्रं नास्तिकतर्कशास्त्रं बौद्धचार्वाकादिशास्त्रम्, यत्र वेदोऽधर्मायेति पुनः पुनरुद्घुष्यते, तादृशं तर्कमाश्रित्य † योऽवज्ञां कुर्यात् श्रुतौ स्मृतौ च, केनचिदकार्यान्निवर्त्यत 'मैवं कार्षीः, प्रतिषिद्धं वेदेन' इति, तमनादृत्य विक्रोशेत् 'किं नाम यदि वेदे स्मृतिषु वा प्रतिषिद्धम्? न हि किंचित्तयोः सम्यक् प्रामाण्यमस्ति' इति कथयेत् मनसा वा विचिन्तयेत्, तर्कशास्त्रेषु निबद्धादरो यदि दृश्येत, स साधुभिः शिष्टैः बहिष्कार्यः तिरस्कार्यः तत्तत्कार्येभ्यो याजनाध्यापनातिथिसत्कारादिभ्यः। क्रियाविशेषस्यानिर्देशाद्विद्वद्र्हेभ्य इति गम्यते । यतोऽविद्वान् सम्यगसंस्कृतात्मा तार्किकगन्धितयैवं व्यवहरति । आसु च क्रियासु विद्वानधिक्रियते । अत एव पूर्वश्लोके विचार ईदृशः प्रतिषिध्यते यस्तदवज्ञानपरतया क्रियते, न तु यस्तदर्थविशेषजिज्ञासया । एवमर्थमेव हेतुमाह— नास्तिको वेदनिन्दकः । अतश्च पूर्वपक्षे यो वेदस्याप्रामाण्यं ब्रूयान्नासौ नास्तिकः स्यात् । सिद्धान्तदार्ढ्यार्थमेव पूर्वपक्षे हेतुकथनम् । वेदनिन्दक इति स्मृतिग्रहणं न कृतम् । तुल्यत्वेनोभयोः प्रकृतत्वादन्यतरनिर्देशेनैव सिद्धमुभयस्यापि ग्रहणमित्यभिप्रायः । ¶ मेधा.

(२) एवं कर्तुः बहिःकरणमाह— योऽवमन्येत ते तूभे इति । यः श्रुतिस्मृतिभ्यामेवोपात्तद्विजभावः संस्तत- (? संस्ते) एवासत्तर्कशास्त्रावलम्बनेन निन्देत्, 'नास्ति परलोकादिः' इत्येवं स्थितप्रज्ञो वेदनिन्दको द्विजसंपाद्यात्कर्मणोऽध्ययनादेः शिष्टैः परिहार्यः । गोरा.

(३) हेतुशास्त्रं श्रुतिविरोधि तर्कशासनम् । बहिष्कार्यः साधुभावात् । स हि नास्तिकः 'नास्ति परलोकः' इत्येवं च वर्तते, वेदानां च निन्दको भवति, अतो बहिष्कार्य इत्यर्थः । मवि.

(४) न च श्रुत्यादीनां पौरुषेयत्वादितर्कबलेनाप्रामाण्यं शङ्कनीयम्, तस्याप्रतिष्ठितत्वाद्दोषाभिधानाच्च । तथा च मनुः— य इति । उभे श्रुतिस्मृती । स्मृच. १।४

(५) यः पुनः ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत स शिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्मणो निःसार्यः । पूर्वश्लोके सामान्येनामीमांस्ये इति मीमांसानिषेधादनुकूलमीमांसाऽपि न प्रवर्तनीयेति भ्रमो मा भूदिति विशेषयति— हेतुशास्त्राश्रयात् । 'वेदवाक्यमप्रमाणं वाक्यत्वात् । विप्रलम्भकवाक्यवत्' इत्यादिप्रतिकूलतर्कावष्टम्भेन । चार्वाकादिनास्तिक इव नास्तिकः, यतो वेदनिन्दकः । ममु.

(६) वेदनिन्दा त्रिविधा— बुद्धार्हतादिशास्त्राण्यभ्यस्य वेदानामप्रामाण्यप्रतिपादने निर्बन्ध एका निन्दा । सेयं याज्ञवल्क्येन ब्रह्महत्यासमेषूपवर्णिता । सत्यामपि वेदप्रामाण्यबुद्धौ जल्पवितण्डादिहेतुशास्त्रव्यसनितया श्रुतिस्मृत्युक्तस्यानुष्ठानस्यावज्ञा द्वितीया निन्दा । एतदेवाभिप्रेत्य मनुराह— य इति । सेयं निन्दा सुरापानसमेषु मनुनोदाहृता । यस्तु वैदिकं कर्मानुतिष्ठन्नपि नात्यन्तं तत्फले श्रद्धत्ते 'किमनेन भविष्यति? जनापवादभयादेव केवलमनुतिष्ठामि' इत्येवं निन्दति, सेयं निन्दोपपातकेषु पठयते । पमा. २।४२४

(७) अत एवाऽऽह— य इति । अवमन्येत (? योऽवमन्येतेति) । "अप्रमाणोऽयं वेदः, 'स्वर्गकामो यजेत' इत्यादेः 'भुञ्जानस्तृप्यति' इतिवत्कार्यकारणादृष्टेः, 'ग्रावाणः शृणुत' इत्यादेरर्थव्यभिचाराच्च"

---

† अत्र 'यः' इति पुनरुक्तम् ।

¶ नन्द., भाच. मेधागतम् ।

(१) मस्मृ. २।११; गोरा. मूले (तूभे); स्मृच. १।४ याद्द्वि (यो द्वि) शेषं गोरावत्; पमा. १।१२, २।४२४ गोरावत्; प्रपा. २ याद्द्विजः (यो नरः) शेषं गोरावत्; गप. १० गोरावत्, मनुयाज्ञवल्क्यौ; मुक्ता. २; आन. १३-१४ मूले (तूभे) याद्द्विजः (याक्षरः) स साधुभिर्ब (स शूद्रवद्ध); सस्मृ. ५ स साधुभि (स च सद्भि) शेषं आनवत्.

इत्यादि हेतुशास्त्रम् । वेदनिन्दकत्वेन पतितत्वात् सर्वधर्मानधिकारित्वमाह– बहिष्कार्य इति । मच.

( ८ ) यद्यपि मनुना श्रुतिस्मृत्योरेव प्रामाण्यमुक्तम्, न तु पुराणस्य, तथापि– 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इति चतुर्दशविद्यानामपि धर्मनिश्चये प्रमाणत्वेन विधानात् पुराणमपि प्रमाणमेव, वेदाङ्गतुल्ययोगक्षेमत्वात् वेदोपबृंहकत्वाच्च 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् । उपबृंहणं गुरूकरणम् इत्यर्थः । आन. १४

चत्वारि धर्मप्रमाणानि वेदः स्मृतिः सदाचारः स्वप्रियं च

**[1]वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥**

( १ ) यस्त्वेतमर्थमविदित्वा वेदशब्दस्य $ विवक्षितार्थत्वमेव मत्वा स्मृतिनिन्दकस्य न बहिष्कारः, अनेन वेदनिन्दकस्यैव विहित इति प्रतिपद्येत, तं प्रत्याह– वेद इति । नात्र कश्चिद्विशेषः । वेदनिन्दाप्रतिषेधेन स्मृतिसदाचारात्मतुष्टीनामपि निन्दकस्य बहिष्कारोऽनेन विहितः । तेषामपि वेदमूलधर्माभिधानम् । अतः स्मृत्यादिनिन्दको वेदनिन्दक एव । ननु श्लोकद्वयेन नार्थः । एवं वक्तव्यम्– 'श्रुत्यादीनात्मतुष्ट्यन्तान्हेतुशास्त्राश्रयाद्द्विजः । यो निन्देत्स बहिष्कार्यः साधुभिर्नास्तिकत्वतः ॥' । उच्यते– नाऽऽचार्या ग्रन्थगौरवं मन्यन्ते । बुद्धिगौरवं यत्नेन परिहरन्ति । तस्मिन् हि सति असम्यगवबोधो धर्मस्य । स च पुरुषार्थं विहन्ति । भेदनिर्देशोऽपि हि चोदयेयुः– वेदग्रहणमेव कर्तव्यम्, सर्वस्य धर्मस्य वैदिकत्वात् । तस्माद्विस्पष्टार्थं भेदेनोभयनिर्देशः, संक्षिप्तरुचीनां पूर्वश्लोकः, अन्येषां श्लोकद्वयम् । स्वस्य च प्रियमात्मनः इत्यनेन प्रागुक्ता आत्मतुष्टिरेवोक्ता । स्वग्रहणं वृत्तपूरणार्थम् । एतत्साक्षाद्धर्मस्य लक्षणं निमित्तम्, ज्ञापकम्, न पुनः प्रत्यक्षम्, यथाऽन्यैरुक्तं 'साक्षात्कृतधर्माणः' इति । विधाशब्दः प्रकारवचनः । एकमेव धर्मे प्रमाणं वेदाख्यम् । तस्य त्वेते भेदाः स्मृत्यादयः । अन्ये तु उपसंहारार्थमिमं श्लोकं व्याचक्षते समाप्तं धर्मलक्षणप्रकरणमिति । पुनःपाठः समाप्तिं सूचयति, यथा हिरण्याक्षो वेदाङ्गेषु 'सत्याजघनेनोपतिष्ठन्त उपतिष्ठन्ते' ( आश्वौ. १।१।११ ) इति । तथा च पिण्डीकृत इव प्रागुक्तोऽर्थो हृदि वर्तते । यथा नैयायिकाः 'अनित्यः शब्दः' इति प्रतिज्ञाय साधनोपन्यासं कृत्वा निगमयन्ति 'तस्मादनित्यः शब्दः' इति । प्रायेण चैषा ग्रन्थकाराणां रीतिः । तथा महाभाष्यकारोऽपि क्वचित्सूत्रं वार्तिकं वा पठित्वा व्याख्याय पुनः पठति । मेधा.

( २ ) इदानीं स्मृतिशीलाचारात्मतुष्ट्यात्मकप्रकारभेदस्यातन्त्रतां दर्शयितुं शीलापातेन( ? पेतेन ) चतुर्धा धर्मलक्षणमाह– वेदः स्मृतिरिति । श्रुत्या( ? स्मृत्या )दीनां प्रकारमात्रभेदः, न तु वस्तुतः, सर्वेषां शिष्टानुस्मरणरूपत्वाच्च । तथा च– 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।' इति स्वयमेवावोचत् । सदाचारः साध्वाचारः, स्वात्मनश्च प्रियम् आत्मतुष्टिः । गोरा.

( ३ ) वेदस्मृत्योरेवात्र पुनः पुनरभिधानात् शीलादीनां व्यवच्छेदो मा भूदिति प्रागुक्तानि मूलानि संक्षिप्य दर्शयति– वेद इति । सदाचारपदं बहूनां साधूनामपि प्रतिपत्तिविषयतामात्रकृतानुष्ठानपरम् । तेन शीलग्रहः । स्वस्य स्वीयस्य आत्मनः मनसः प्रियं साक्षात् साक्षादिव साक्षात्कारः इवेत्यर्थः । आचारवदात्मप्रीतिरपि प्रमाणमेव धर्मे, किंतु तयोः नात्यन्तं श्रुतिस्मृतिवन्निःशङ्कं प्रवृत्तिहेतुतेति च तात्पर्यसंक्षेपः । मवि.

( ४ ) इदानीं शीलस्याऽऽचार एवान्तर्भावसंभवाद्वेदमूलतैव तन्त्रम्, न स्मृतिशीलादिप्रकारनियम इति दर्शयितुं चतुर्धा धर्मप्रमाणमाह– वेद इति । वेदो धर्म-

---

$ विवक्षितार्थशब्दस्यात्र कथंचिदभिधेयार्थपरता ग्राह्या, अन्यथा पूर्वश्लोकव्याख्यानान्ते 'वेदनिन्दकः' इत्यत्र वेदशब्देन वेदस्मृत्युभयग्रहणस्योक्तत्वेन लक्षणया स्मृतेरपि विवक्षितार्थत्वात् स्मृतिनिन्दकबहिष्काराभावस्यानापत्तेः।

(१) मस्मृ. २।१२ ; मवि. ४।१६१ द्वितीयचरणमात्रम् ; दीक. १।७ वेदः (श्रुतिः) (=) ; वीमि. १।७ ; आन. १३ लक्षणम् ( कारणम् ).

प्रमाणम्, स क्वचित्प्रत्यक्षः, क्वचित्स्मृत्या(द्य)नुमित इत्येवं तात्पर्यम्, न तु प्रमाणपरिगणने । अत एव 'श्रुतिस्मृत्युदितं धर्मम्' इत्यत्र द्वयमेवाभिहितवान् । सदाचारः शिष्टाचारः । स्वस्य चाऽऽत्मनः प्रियम् आत्मतुष्टिः । ममु.

(५) 'वेदोऽखिलः' इत्यत्रोक्तमनुवदंस्तत्रान्येषां संमतिमाह— वेद इति । वेद इत्यत्र पाठक्रमः स्मृतेर्वेदो मूलमिति सूचनार्थः । स्मृतिपूर्वकत्वाद्द्व्यन्तरित आचारः । आचारेष्वनुष्ठानं प्रत्यक्षम्, कर्तव्यताधीस्तु स्मृतिमूलैव । लोभाद्यसत्त्वे स्वस्य ¶ वेदार्थानुष्ठातुः प्रियं रागाद्यनुपहितं तदपि धर्मे प्रमाणमित्यन्वयः । संमतिं द्योतयति— प्राहुरिति । लक्षणं मानम् । मच.

(६) साक्षात् श्रुत्यनुग्राहकतया लक्षणं प्रमाणम् । वीमि. १।७

(७) आत्मनः प्रियमिति विकल्पितस्थले, 'मनःपूतं समाचरेत्' (विस्मृ. ९६।१७) इति स्मृतेः । आन. १३

(८) धर्मप्रमाणान्युपसंहरति— वेद इति । सदाचारशब्देनात्र शीलस्यापि परिग्रहः । लक्ष्यतेऽनेनेति लक्षणं प्रमाणम् । नन्द.

(९) वेदः वेदोक्तधर्मः, स्मृतिः स्मृत्युक्तधर्मः, सदाचारः सतामाचारः, आत्मनः स्वस्य यत्प्रियं तद्यथा स्वकीयस्य बन्धोः आत्मनश्च प्रियं यत् । चकारः समुच्चये । आत्मनः प्रियं परदाराभिमर्शनं भवेत् चेत्तन्न बन्धूनां प्रियम्, तस्मात्स्वस्य आत्मनः प्रियम् । एतच्चतुर्विधं धर्म( १ मेलक्षणं ) प्राहुः । भाच.

¶ अनेन व्याख्यानेन प्रियस्यानुष्ठान-स्मृति-वेदव्यवधानेन त्र्यन्तरितत्वं सूचितमिति ज्ञेयम्, अन्यथा पाठक्रमस्य विवक्षितत्वोक्तेः 'स्मृतेर्वेदो मूलम्' इत्येकान्तरितत्वेन स्मृतिक्रमः, 'कर्तव्यताधीस्तु स्मृतिमूलैव' इति द्व्यन्तरितत्वेनाऽऽचारक्रमश्च यथोपपादितस्तथा त्र्यन्तरितत्वेन प्रियक्रमो नोपपादित इति न्यूनता स्यात् ।

अनासक्तस्य धर्मज्ञाने अधिकारः

**'अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।**
**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥**

(१) धर्मशब्दश्च भगवतोऽपि चतुर्वर्गोपलक्षणार्थः । विश्व. ११

(२) गोभूमिहिरण्यादिधनम् अर्थः । तत्र सक्तिस्तात्पर्येण तदर्जनरक्षणार्थं कृषिसेवादिव्यापारकरणम् । कामः स्त्रीसंभोगः । तत्र सक्तिः नित्यं तदासेवनं तदङ्गानां च गीतवादित्रादीनाम् । तद्वर्जितानां पुरुषाणां धर्मज्ञानं धर्मावबोधः विधीयते विशेषेण धीयते, व्यवस्थितं भवति । 'धीङ् आधाने( १ रे )' इत्यस्यैतद्रूपम् । किमर्थं पुनस्तत्र सक्तानां न भवति धर्मज्ञानम्? यावता तेऽपि यथाक्षणं तदविरोधिन्यवसरे भोजनादावितिहासश्रवणादन्योपदेशात्समाचाराद्वा शक्नुवन्ति ज्ञातुम् । इत्यत आह— धर्मं जिज्ञासमानानामिति । मुख्यं प्रमाणं धर्मे वेदः, स च तैर्न शक्यो ज्ञातुम् । अत्यन्तदुर्विज्ञानो ह्यसौ निगमनिरुक्तव्याकरणतर्कपुराणमीमांसाद्यङ्गश्रवणमपेक्षते स्वार्थबोधे । न चेयान् ग्रन्थराशिः सर्वव्यापारपरित्यागेन विना शक्य आसादयितुम् । समाचारेतिहासादेः कतिपये धर्मा अवगम्यते, न वेदादिव समस्ताङ्गयुक्तो ज्योतिष्टोमादिप्रयोगः । अत उक्तम्— प्रमाणं परमं श्रुतिः । न तु समाचारादेः प्रामाण्यापकर्षः । तदुक्तम्— 'बोऽहेरिव धनाद्भीतो मिष्टान्नाच्च विषादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥' ।

¶अपरे त्वर्थकामा दृष्टफलैषिण उच्यन्ते । तत्र सक्तानां पूजाख्यात्यादिकामानां दृष्टफलार्थितया लोकपक्तिमात्रप्रयोजनानां न धर्मज्ञानं धर्मानुष्ठानं विधीयते उप-

¶ एतदादिः 'विधीयते उपदिश्यते' इत्यन्तो ग्रन्थोऽनेकानुपपत्तिमत्त्वादतीव व्याकुलः प्रतीयते ।

(१) मस्मृ. २।१३ ; विश्व. १।१ उत्त. ; मेधा. १२।१०९, ११० प्रथमचरणमात्रम् ; प्रपा. २ कामे (शास्त्रे) ज्ञानं (ज्ञानां) श्रुतिः (स्मृतिः) स्मृत्यर्णवे ; गप. १० ; सस्मृ. ३ पूर्वार्धे (अथ शास्त्रावसक्तानां धर्मज्ञानां विधीयते । ) परमं (प्रथमं) स्मृत्यर्णवे.

दिश्यते । ज्ञायतेऽस्मिन्निति ज्ञानम् अनुष्ठानमित्युच्यते । अनुष्ठीयमानो हि धर्मो व्यक्ततरो भवति शास्त्रावगमकालतोऽपि । अतोऽनुष्ठानं धर्मज्ञानमुच्यते । अत एतदुक्तं भवति– यद्यपि धर्मानुष्ठानाल्लोकपक्त्यादि दृष्टं प्रयोजनमुपलभ्यते, तथापि न तत्सिद्धिपरतया तत्र प्रवर्तितव्यम् , किं तर्हि ? शास्त्रेण तच्चोदितमिति कृत्वा । तथा च प्रवृत्तौ यदि दृष्टमपि भवति, भवतु, न विचार्यते । तथा च श्रुतिः स्वाध्यायस्य दृष्टं फलमनुवदति 'यशोलोकपक्तिः' इति, 'लोकः पच्यमानश्चतुर्भिर्धर्मैरेनं भुनक्ति अर्चया दानेनाजे( ? ज्ये )यतया चावध्यतया' (शब्रा. ११।५।७।१) इत्यादि । श्लोकश्चात्र भवति– 'यथेक्षुहेतोरिह सेचितं पयस्तृणानि वल्लीरपि च प्रसिञ्चति । तथा नरो धर्मपथेन संचरन् यशश्च कामांश्च वसूनि चाश्नुते ॥' । ननु च यस्य यः स्वभावोऽवगतः सोऽन्योद्देशेनाप्यनुष्ठीयमानो न स्वभावाच्च्यवते, करोत्येव तत्कार्यम् । यथा विषमौषधोद्देशेनापि पीतं हन्त्येव । अतो दृष्टार्थतयाऽप्यनुष्ठीयमानानि कर्माणि शास्त्रीयाण्यदृष्टार्थान्यपि भविष्यन्ति । को भवतो मत्सरः ? लोकावर्जनहेतुतया न प्रवर्तितव्यमिति येनाऽऽत्थ । अत आह– धर्मं जिज्ञासमानानाम् । वेदो धर्मे प्रमाणम् । तेन चैतदुक्तम्– दृष्टफलकामार्थानां नादृष्टं भवति । न केवलमदृष्टं न भवति, यावत्प्रतिषिद्धसेवनादधर्मोऽपि भवति । मेधा.

(३) तथा च श्रुतिस्मृत्यादिविरोधे सति तं ज्ञातुमिच्छतां श्रुत्यादीनां मध्यात् श्रुतिः प्रकृष्टं प्रमाणम् । अतश्च श्रुतिविरोधे स्मृत्यबबाधः, प्रत्यक्षविरोधे अनुमानस्य दुर्बलत्वात् । § गोरा.

(४) तत्रापि श्रुतेः प्राधान्यमाह– अर्थेति । धर्मविरोधिनोरर्थकामयोः प्रबन्धेन प्रवृत्तिः सङ्गः, तद्रहितानामेव धर्मज्ञानं विधेयम् , तदीयस्यैव धर्मज्ञानस्य प्रवृत्तिपर्यन्तत्वात् । तेषां च परमं प्रमाणं श्रुतिरेव । अतः श्रुतेरेकवाक्यतयैव स्मृतेरप्यादरणीयतेत्यर्थः । मवि.

§ शेषं मेधागतम् ।

(५) अत एव जाबालः– 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा ॥' । भविष्यपुराणेऽप्युक्तम्– 'श्रुत्या सह विरोधे तु बाध्यते विषयं विना ।' । जैमिनिरप्याह– 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' (जैसू. १।३।३)। श्रुतिविरोधे स्मृतिवाक्यम् अनपेक्ष्यम् अप्रमाणम् अनादरणीयम्, असति विरोधे मूलवेदानुमानमित्यर्थः । † ममु.

(६) संप्रति अधिकारिणं विशिनष्टि– अर्थकामेष्विति । असक्तानाम् अलोलुपानाम् , तद्व्यग्राणां धर्मे अनाश्वासात् । धर्मज्ञानं धर्मानुष्ठानं विधीयते कर्तव्यतया उपदिश्यते । परमं प्रमाणं परं तत्त्वम् । मच.

(७) यथा धर्मस्य श्रुत्यादीन्यध्यवसायमूलं तथाऽर्थकामेष्वनतिशक्तिरपीत्यभिप्रायेणाऽऽह– अर्थेति । प्रमाणेषु बलाबलजिज्ञासायामुक्तमुत्तरार्धम् । श्रौतस्मार्तसंनिपाते श्रौतं प्रमाणं बलीय इत्यर्थः । नन्द.

## वेदो धर्मे प्रमाणम्

[१]**वेदाद्धर्मो हि निर्बभौ ॥**

(१) धर्मस्याधर्मस्य च यत्कथनं तद्वेदादेव, पौरुषेयाणामप्रामाण्यात् । ... निर्बभौ निःशेषेण भातः प्रकाशतां गतः इति यावत् । मेधा.

(२) अतो नान्यप्रमाणको धर्मो वेदादेव निर्बभौ प्रकाशतां गतः । एवं च नात्र कुतार्किकवितर्का आक्रमन्ते । $ गोरा.

(३) अधर्मो यथा वेदप्रमाणकस्तथा धर्मस्तत्प्रमाणक इति भावः , 'कर्म ब्रह्मोद्भवं विद्धि' (भगी. ३।१५) इति स्मृतेः । मच.

(४) वेदाद्धर्मो हि निर्बभौ, न प्रमाणान्तरात् । नन्द.

† शेषं गोरावत् ।

$ मवि., ममु., माच गोरागतम् ।

(१) मस्मृ. ५।४४ ; ममा. १।१ ; गृर. ३९१.

वेदमहिमा

**[1]पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥**

( १ ) ननु च यदुक्तं सर्वात्मैकत्वेनायं पश्येत्तत्प्रत्यक्षविरुद्धमिव । प्रत्यक्षेण हि भिन्नो भावः प्रतिभाति । तेन कथमेकत्वेन ग्राह्यः ? अनारम्य स्वार्थ उपदिष्टः स्यात् । कथं भिन्नमभिन्नं द्रष्टुं शक्यम् ? न हि खरो गौरिव बुद्ध्या ग्रहीतुं शक्यः । इन्द्रियदोषेणान्यत्रावभासरूपया प्रतीयते शुक्तिकादौ रजताकारतया( ? रता), न तूपदेशतः । यो ह्युपदिशेत्तं हस्तिनं प्रतिपद्यते । नासौ वचनफलमञ्जसाऽश्नुवीत । अत आह— पितृदेवेति । अयमर्थः— वेदोऽत्र वक्तुः(? चक्षुः) प्रमाणम् । चक्षुरिव चक्षुः, दर्शनहेतुत्वसामान्यात् । यथा चक्षुःपरिच्छिन्नेष्वनेष्टितः (?षु निश्चितः) रूपप्रत्ययो भवत्येवं वेदादिति चक्षुरित्युक्तम् । सनातनं शाश्वतं नित्यम् । अनेनापुरुषकृतत्वमाह । पुरुषकृतत्वे हि तत्प्रामाण्यात् प्रमादोऽपीत्यत्र न प्रामाण्यमस्ति, ( अतः ? ) पुरुषगतगुणदोषसद्भावनिश्चयात् । तदभावादपौरुषेयत्वेन वेदः प्रमाणम् । अतो वेदप्रामाण्यात् दृश्यार्थस्य न कश्चन विरोधः । ननु च यद्येवमुपदिशेत्— 'अग्निना सिंचेदुदकेन च दीपयेत् ', किं न भवेद्विरोधः ? विषम उपन्यासः । तत्र हि दृष्टया पदार्थशक्त्या दृष्ट एवार्थः कर्तव्यतयोपदिश्यते । तत्र प्रमाणान्तरगोचरत्वं तस्यार्थस्य । तद्विपर्ययाद्युक्तं तदेतदुक्तम् । इह तु विधिपरत्वात् वाच्या( ? क्या )नां प्रमाणान्तराणां च विधिविषयत्वाभावात्सिद्धस्वरूपवस्तुगोचरत्वेनासत्येकविषयत्वे कुतो विरोधः ? इह ह्यनात्मभूतानामाभासतो भावानामात्मत्वेन दर्शनं विधीयते स्वाराज्यफलाय । तत्र यत्राधिकं भेददर्शनं तस्याभ्यासतः शक्यमन्यथाकर्तुम् । तथाहि— रागादयश्चित्तधर्मा भावनातिशययोगाद्भ्यासेन शक्यन्ते नियन्तुम् । द्वेष्यमपि( ? ष्यादपि ) मैत्रादिना द्वेष्यताबुद्धिर्निवर्तत इति सर्वस्यैतत्स्वसंवेद्यं दृष्टं च । भावनाया( ? नया ) अविद्यमानवस्तुस्वाभाव्यमवभासते, सामर्थ्यात् । यथा विप्रलम्भे कामिनः सर्वत्र कामिनीवत्( ? नीमेव ) पश्यन्ति, किमङ्ग यत्र तात्त्विकमेकत्वमस्ति ? तत्कथं भेदेन विरुद्धत्वादवभासते ? तद्रूपा हि सर्वभावना, सा भिन्ना विद्यते । ईदृशं चात्र दर्शनं समत्वेन विधीयते, यत्र ' ममैतत् ' ' नेदं मम ' इति बुद्धेरनुपपत्तिः । यथोक्तम्— ' ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम् । ' इति । तस्मान्नास्ति विरोधः । पितृदेवमनुष्याणामित्यादीनि श्रुति( ? स्तुति )-पदानि । देवादयोऽपि रिध्यन्ति संयुक्ता( ? सिद्धिसंयुक्ता) न चेदृक्( ? दृशं )तेऽतीन्द्रियमर्थं पश्यन्ति, श्रुतिमन्तरेण ज्ञातुमशक्यत्वात् । अप्रमेयं चापरिमाणम्, अनन्तत्वाद्वेदशाखानाम् । अथ च प्रमातुमशक्यमर्थतः । वेदाङ्गं( ? वेदशास्त्रं ) वेदाः । मेधा.

( २ ) पितॄणां देवतानां च ' वयं हव्यकव्य(सं)-प्रदानभूताः ' इत्येवंविधोऽवबोधो (वेदादेवेति) वेद एवाविनश्वरं चक्षुरिव, तेषां संप्रदानत्वस्य वेदावगम्यत्वात् । मनुष्याणामपि ' वयं ( हव्यकव्यसंप्रदातारः ' इति बोधो वेदादेव ), हव्यकव्यसंप्रदातृत्वस्य वेदावगम्यत्वात् । अशक्यं च कर्तुं वेदशास्त्रम्, तदर्थस्यातीन्द्रियत्वात् ; प्रमातुं चाशक्यम्, कृत्स्नशास्त्रसमूहस्याध्येतुमशक्यत्वादिति व्यवस्था । गोरा.

( ३ ) ' पितृदेव ... ॥ ' इत्यादिना मन्वादिभिरैहिकामुत्रिकार्थप्रकृष्टसाधकत्वं तु वेदस्योक्तम्, न शैवादिशास्त्रस्य । अप. १।७ पृ. १२

( ४ ) अतर्क्यं तर्केणान्यथाऽसंभाव्यम् । अप्रमेयं प्रमाणान्तरेण विरोधिनाऽन्यथाऽकल्प्यम् । वेदरूपं शास्त्रं शासकम् । मवि.

( ५ ) अशक्यं च वेदशास्त्रं कर्तुम् । अनेनापौरुषेयतोक्ता । अप्रमेयं च मीमांसादिन्यायनिरपेक्षतयाऽनवगम्यमानप्रमेयमेवं व्यवस्था । ततश्च मीमांसया

(१) मस्मृ. १२।९४ ; अप. १।७ पृ. १२ अशक्यं (अतर्क्यं) ; मवि. अपवत् ; स्मृच. १।१२९ तनम् (तनः) पू. ; पमा. १।३०७ पितृ (ऋषि) पू. ; संप्र. ५१० पितृ (ऋषि) तनम् (तनः) पू. ; नन्द. अपवत् ; भाच. अपवत् ; संग. ४ संप्रवत् .

ब्याकरणाद्यङ्गैश्च सर्वब्रह्मात्मकं वेदार्थं जानीयादिति व्यवस्थितम् । ¶ मनु.

( ६ ) तर्हि कृतं वेदान्ताभ्यासेन, अनुमानादिनाऽप्यात्मज्ञानसिद्धेः । तत्राऽऽह– पित्रिति । वेदश्चक्षुरिति । असंदिग्धाविपर्यस्तानधिगतफलवदात्मापरोक्षधीहेतुत्वात्, ‘ तं त्वौपनिषदं पुरुषं पृच्छामि ’ ( बृउ. ३।९।२६ ) इति श्रुतेः । सनातनं नित्यम्, ‘ ब्रह्म स्वयंभु ’ ( बृउ. २।६।३ ) इति श्रुतेश्च । त्रिंशदुत्तरैकादशशतशाखत्वात् वेदस्याशक्यमध्येतुं कर्तुं च । तथा अप्रमेयम्, भेदाभेदसदसद्धर्मादितात्पर्यानिरूपणादिति । वेदश्चासौ शास्त्रं चेति, अनधिगताबाधितशासनात् । अथवा सनातनं नित्यम् । चर्मचक्षुर्हि जन्मान्तरे इहापि कदाचिल्लुप्यते, इदं तु न तथा जन्मान्तरे विलुप्यते, ‘ तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ’ ( बृउ. ४।४।२ ) इति श्रुतेः, ‘ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।’ (भगी. ६। ४५ ) इति स्मृतेश्च, ‘ जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः । ’ इत्युक्तेः । अशक्यं शक्तेरविषयः ब्रह्म, $ तदप्रतिपादकत्वात् । अप्रमेयम्, प्रमा बोधः फलम्, तद्विषयकं ब्रह्म, ‘ एतदप्रमेयं ध्रुवम् ’ ( बृउ. ४।४।२० ), ‘ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ’ ( तैउ. २।९ ) इति श्रुतेः । एवंभूतं ब्रह्म ( विषयं ? ) वेदशास्त्रं वेदेनैव शास्यते शाप्यते, शक्त्या अबोध-

¶ शेषं गोरावत् ।

$ अत्र यथाश्रुतग्रन्थात्प्रतीयमाने ‘ ब्रह्म शक्त्यविषयः ’ इति ब्रह्मपक्षकानुमाने हेतुघटकतच्छब्देन ब्रह्मणः शक्तेर्वा ग्रहणे हेतोरनुपपत्तेः ‘ शक्तिः ब्रह्माविषयिका ’ इति शक्तिपक्षकमनुमानं तच्छब्देन च ब्रह्म ग्राह्यम् । ब्रह्माप्रतिपादकत्वं ब्रह्माविषयीकरणस्वभावः । तथा च ब्रह्मादिशब्दशक्तेर्ब्रह्माविषयीकरणस्वभावात् ब्रह्म न शक्तिविषय इत्यर्थः इति कथंचित् ग्रन्थो योजनीयः । एवमग्रेऽपि ‘तदविषयकं ब्रह्म’ इत्यत्र बहुव्रीह्यनुपपत्तेः स्वार्थिककप्रत्ययान्तत्वं विषयशब्दस्याविषयशब्दस्य वाऽभ्युपेत्याविषयकशब्देन तच्छब्दस्य तत्पुरुषो ग्राह्यः । तथापि विषयशब्दस्य नित्यपुंलिङ्गत्वात् नपुंसकत्वं न साधु ।

कत्वेऽपि जहदजहल्लक्षणया तत्त्वमस्यादिवाक्योत्थाखण्डचैतन्यानन्दाकारवृत्तिविषयत्वेऽपि( ? यत्वात्, ) चैतन्यघनत्वेन वृत्तिप्रतिफलितबोधाविषयत्वादिति । तदुक्तम्– ‘ फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते । स्वयंप्रकाशमानत्वान्नाऽऽभास उपयुज्यते ॥ ’ इति । स्थितिः शास्त्रतात्पर्यम्, ‘ तं त्वौपनिषदं पुरुषं पृच्छामि ’ ‘ ब्रह्म वेद ब्रह्मैव भवति ’ ( मुउ. ३।९ ) ‘ एतदप्रमेयं ध्रुवम् ’ इत्यादिश्रुतीनां तत्रैव तात्पर्यात् । पदार्थसंग्रहे विस्तरग्रन्थगौरवभयादुपरम्यते । मच.

( ७ ) आत्मज्ञानेन च शमेन च समानता वेदाभ्यासस्योक्ता तस्य युक्त(त्व)मुपपादयन्वेदस्य शास्त्रान्तरेभ्यो विशेषमाह– पितृदेवमनुष्याणामिति । पितृदेवमनुष्याश्चक्षुषेव सर्वानर्थान्वेदेन पश्यन्तीति पितृदेवमनुष्याणां वेदश्चक्षुरित्युक्तम् । सकलकल्पमन्वन्तरानुयायित्वात्सनातनम् । अतर्क्यम् ईदृशमित्यध्यवसातुमशक्यम्, अपौरुषेयत्वात् । अप्रमेयम् एतावदित्यध्यवसातुमशक्यम्, अक्षयफलत्वात् । नन्द.

( ८ ) पितृदेवमनुष्याणां वेदः सनातनं चक्षुः । अतर्क्यं तर्केणान्यथाऽसंभाव्यम् । अ( प्र )मेयं प्रमाणान्तरेण विरोधिनाऽन्यथाऽल्पम् ( ? ‡ ऽकल्प्यम्, अथवाऽनल्पम् ), अनन्तशरीरवत्त्वात् । माच.

[1]या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः
स्मृताः ॥

( १ ) पूर्वं त्वपौरुषयत्वेन वेदस्य प्रामाण्यमुक्त्वा इदानीं पौरुषयाणां वेदा( ? वेदबाह्या )नामप्रामाण्यम्

‡ अत्र मविवच्छुद्धिकल्पनेऽपि हेतोरनुपपत्तेरियं शुद्धिः कल्प्यते ।

(१) मस्मृ. १२।९५ ; मेधा. प्रेत्य ( प्रेते ) इत्यपि पाठं निर्दिशति ; अप. १।७ पृ. १४ स्मृतयो (श्रुतयो) काश्च (काश्चित् ) प्रेत्य तमोनिष्ठा (प्रोक्तास्तमोभूता) ; बक. २६२ स्मृतयो (श्रुतयो) प्रेत्य त ( प्रोक्तास्त ) ; मबि. स्मृतयो (श्रुतयो) ; बौबि. २।१६।१३ (=).

( उच्यते )। अथ वेदबाह्या वेदविरुद्धा अवेदमूलाः। श्रुतयः ग्रन्थसंदर्भेषु नोदनाः 'चैत्यवन्दनेन स्वर्गो भवति' इत्याद्याः निर्ग्रन्थसौगतादिसिद्धान्ताः प्रसिद्धाः। कुदृष्टयः असत्तर्कदर्शनानि। वेदकर्तुः साधनमपूर्वदेवतादिनिराकरणमेवमाद्याः कुदृष्टयः। सर्वास्ता निष्फला प्रेत्य प्रकर्षं प्राप्य। संनिरूपितहेतुदृष्टान्ताः अन्ततो निष्फला उक्ताः, तत्र युक्तीनामाभासरूपत्वात्। ताश्च युक्तयोऽन्यवति वर्त्मनि रात्रीयन्ति महाग्रन्थविस्तारा भवन्ति संक्षेपरूपाः। तथा पौरुषेयाणामुपदेशे न प्रामाण्यम्, पुरुषाणामतीन्द्रियार्थदर्शनशक्त्यभावात्, सत्यामपि शक्तौ उपदेशिकस्य प्रमाणाभावात्। 'अयं सर्वज्ञः, तेनायमागमः प्रणीतः' इति न किंचिदत्र प्रमाणं क्रमते। विद्यमानेऽपि कर्तृपूर्वत्वे दृष्टार्थादृष्टकल्पनाप्रसङ्गः, तत्प्रमाणत्वे देवतात्वसिद्धिः। अतस्ता युक्तयो व्यामोहमूला इत्यर्थः। अन्ये तु व्याचक्षते– प्रेत्य मृतस्य ता निष्फलाः। तमोनिष्ठाः तामसयोनिहेतुत्वात्। अस्मिन् पक्षेऽसमानकर्तृकत्वात्प्रेत्येति दुर्लभ( त्व ? )म्। निष्ठान्ताद्वा सप्तमी पठितव्या प्रेते इति। ‡ मेधा.

(२) यानि वेदविरोधीनि इत्यागमाभासरूपाणि शास्त्राणि, यानि च कानिचिद्धिनैव शास्त्रेणापवर्गादिहेत्वाभासरूपाणि दर्शनानि, सर्वाणि तानि परलोके निष्फलानि, यस्मान्नरकफलानि तानि मन्वादिभिः स्मृतानि। § गोरा.

(३) वेदबाह्या वेदार्थविरोधिन्यः श्रुतयः शब्दाः, कुदृष्टयः वेदविरोधितया कुत्सितदृष्टयः प्रमाणाभासान्यनुमानादीनि ऐहिकलौकिकभोगादेकफलसाधनत्वे दृश्यमानेऽपि निष्फलाः। तमोनिष्ठा मोहप्रभावाः। मर्वि.

(४) याः स्मृतयो वेदमूला न भवन्ति दृष्टार्थवाक्यानि चैत्यवन्दनात्स्वर्गो भवतीत्यादीनि, यानि चासत्तर्कमूलानि देवतापूर्वादिनिराकरणात्मकानि वेदविरुद्धानि चार्वाकदर्शनानि सर्वाणि परलोके निष्फलानि यस्मान्नरकफलानि तानि मन्वादिभिः स्मृतानि। ममु.

(५) ननु किमिति वेदगम्यमात्मतत्त्वम्? वेदबाह्यानामपि तत्प्रसिद्धेः, तत्राऽऽह– या इति। वेदबाह्या वेदार्थबहिष्कृता बौद्धाद्यागमाः याश्च कुदृष्टयः तेषां नैयायिकानां वा अनुमानात्मविषयज्ञानानि ताः सर्वाः प्रेत्य निष्फलाः, इह लोके ख्यात्यादिबलात् वह्न्यादिसिद्धत्वेऽपि वेदैकसमधिगम्यात्मरूपादिसर्वधर्महीनब्रह्मस्वर्गापूर्वादौ तदभावात्। अत एव तमोनिष्ठाः, तमः नरकम्, तन्निष्ठाः भोग्यत्वेन तदेकशरणाः। तर्कितकर्मणः फलाजनकत्वेनाकरणादविशेषात्। स्मृताः मन्वादिभिः। मच.

(६) कुदृष्टयः कुतर्कयुक्तानि शास्त्राणि। नन्द.

(७) वेदबाह्या याः स्मृतयः च पुनः याः काः कुदृष्टयः ताः सर्वाः प्रेत्य निष्फला भवन्ति। तास्तमोनिष्ठाः तमःप्रभावाः स्मृताः। भाच.

'उत्पद्यन्ते विनश्यन्ति यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च॥

(१) अतो वेदाद्यानि अन्यानि शासनानि तान्युत्पद्यन्ते विनश्यन्ति च। उत्पादविनाशित्वादनित्यानि। वेदस्तु तद्विपर्ययान्नित्यः। अर्वाक्कालिकतया इदानीन्तनेन पुरुषेण केनचित्कृतत्वादतो निष्फलानि, अदृष्टस्य फलस्याभावात्। यानि कानिचित् विप्रलम्भमूलकादिलक्षणानि। मेधा.

(२) वेदव्यतिरिक्तानि यानि कानिचिच्छास्त्राणि पुरुषोद्भवत्वादुत्पद्यन्ते, अत एवाऽऽशु विनश्यन्ति, तानीदानीन्तनत्वान्निष्फलान्यसत्यरूपाणि च। स्मृतीनां वेदमूलत्वान्नैतद्दोषावतारः। † गोरा.

(३) एतद्विवृणोति– उत्पद्यन्त इति। उत्पद्यन्ते केनचिदुत्पाद्यन्ते उत्सीदन्ति च। यानि शास्त्राणि।

‡ ब्रक. मेधागतम्।

§ अप. गोरागतम्।

† ममु. गोरावत्।

(१) मस्मृ. १२।९६ ; अप. १।७ पृ. १२ विनश्यन्ति ( व्ययन्ते च ) तोऽन्यानि (तो यानि) ; ब्रक. २३२ विनश्यन्ति (च्यवन्ते च) ; भाच. विनश्यन्ति (विलीयन्ते).

अर्वाक्कालिकतया वेदादनुत्पन्नादविनाशिनश्चार्वाचीनतया। निष्फलत्वे हेतुः– अनृतानीति। मवि.

(४) अत्र हेतुः– उत्पद्यन्त इति। उत्पद्यन्ते पुंमतिप्रभवत्वेनोर्ध्वमूर्ध्वं पद्यन्ते अन्यथाऽन्यथा भवन्तीति। अतः वेदात्। अर्वाक्कालीनतया आधुनिकपुरुषज्ञानजन्यतया पुंसां च मतेश्च वैरूप्यात्। अत एवाग्रे फलापर्यवसायितया निष्फलानि, वेदार्थस्य धर्मादेः अनैन्द्रियकत्वेन, योगजधर्मस्यापि वेदानुष्ठानजन्यत्वेनान्योन्याश्रयतया अयथार्थविषयत्वात्फलासाधनत्वात्(?)। न केवलमेवम्, वेदमूलविकलतया स्वतोऽनृतानि प्रतारकादिवाक्यवत्। मच.

(५) उत्पद्यन्ते दोषबहुत्वे( ? ले )षु कालेषु। एवं वेदबाह्यानामनादर्तव्यत्वं प्रतिपादितम्। नन्द.

(६) यानि कर्माणि उत्पद्यन्ते च पुनः विलीयन्ते अतः अन्यानि कानिचित् तानि अर्वाक्कालिकतया निष्फलानि ज्ञेयानि। च पुनः अनृतानि अनृतस्य रूपाणि। भाच.

**'चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाऽऽश्रमाः पृथक्।**
**भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥**

(१) इयमपि स्तुतिरेव। चातुर्वर्ण्यं वेदात्प्रसिध्यति अधिकारित्वेनावतिष्ठते 'वसन्ते ब्राह्मणो ग्रीष्मे राजन्यः' इत्यादि। स्वरूपं तु व्यवहारावगम्यं सर्ववर्णेषु तुल्यत्वादन्यत्र दर्शितम्। त्रयो लोकाः 'इतःप्रदानं देवा उपजीवन्ति'। अनेन त्रैलोक्यस्थितिहेतुत्वं वेदस्य सिद्धमेव। वेदमूलत्वात्स्मृतीनां च। आश्रमः(? माः) अपि वेदादेव। भूतम् अतीतं जन्मसुखदुःखादि। यच्च भवत् वर्तमानं यच्च भविष्यं तत्सर्वस्य वेद एव शरणीयम्। मेधा.

(२) यथा गोमहिष्यादीनां इतरेतरभेद इन्द्रियगोचरः (न तथा चातुर्वर्ण्यस्य, तस्मात्) तच्चातुर्वर्ण्यं वेदादेव प्रसिध्यति। तथा वेदोक्ताग्निहोत्र( ? आदि )कर्मफलोपभोगार्थत्वात् पृथिव्या( दयो ) लोका( येति ? ) वेदादेव प्रसिध्यन्ति। एवमाश्रमा अपि चत्वारो ब्रह्मचार्यादयः परस्परविलक्षणवेदि( ? णा वेदै )कगोचरत्वाद्वेदादेव प्रसिध्यन्ति। किंच पुनः अग्नौप्रास्ताहुतिन्यायेन यत्किंचिदतीतं वर्तमानं भविष्यद्वा तत्सर्वं वेदादेव (प्रमाणं ?) सिध्यति। ‡ गोरा.

(३) भव्यं भवत्। प्रसिध्यति जायते। मवि.

(४) 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिवेदादेव चातुर्वर्ण्यं प्रसिध्यति, ब्राह्मणीभूतमातापितृजनितत्वमिति तदुपजीवितया। † ममु.

(५) न केवलमात्मतत्त्वं धर्मादि च वेदगम्यमपि तु सर्वमित्याह– चातुर्वर्ण्यमिति द्वाभ्याम्। वेदेनैव, चातुर्वर्ण्याश्रमादीनामितरेतरविभाजकत्वात्। 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥' (ऋसं. १०।९०।१२) इति चातुर्वर्ण्यम्। भूर्भुवः स्वरिति त्रयो लोकाः। 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्' इत्यादिश्रुतेश्चत्वार आश्रमा वेदादेव प्रसिध्यन्ति ज्ञायन्ते। मच.

(६) चातुर्वर्ण्यादि सर्वं वेदात्प्रसिध्यति। भाच.

**'शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः।**
**वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः ॥**

(१) शब्दादीनां भोग्यत्वेन सुखसाधनानां वेदादेव प्रसिद्धिः। वैदिककर्मानुष्ठानाद्गीतादिशब्दोपपत्तिः। तत्परित्यागाच्छ्रुतिकटुशब्दश्रवणम्। अतः शरीरारम्भकाः शब्दादयस्ताभ्यां स्वविषयत्वेनोपतिष्ठमाना वेदात्प्रसिध्यन्तीत्येतदभिप्रायमेतत्, न पुनर्वेद उपादानकारणम्।

---

(१) मस्मृ. १२।९७; मभा. २८।५२ ध्यं च (ध्यञ्च) सिध्यति (सिद्धिमैत्); स्मृच. १।१२८ ध्यं च (ध्यञ्च); मच. चतुर्थचरणे (वेदेनैव प्रसिध्यति); संप्र. ५०९; संग. ४ स्मृचवत्.

‡ नन्द. गोरागतम्।

† शेषं गोरागतम्।

(१) मस्मृ. १२।९८; मेधा. 'प्रसूतिर्गुणधर्मतः' इत्यपि पाठान्तरम्; मवि. चतुर्थचरणे (प्रसूतिगुणधर्मतः); भाच. मविवत्.

( अतः शरीरारम्भकाः शब्दादयस्ताभ्याम् ? ) एतदेवाऽऽह– प्रसूतिगुणकर्मतः । प्रसूतिः शब्दादीनामुत्पत्तिः । तदर्थं गुणकर्म । फलार्थत्वात्प्रधानकर्म च चित्रादि- ( ? अग्निहोत्रादि ) गुणकर्म इत्युक्तम् । पाठान्तरं ‘ प्रसूतिर्गुणधर्मतः ’ इति । गुणाः सत्त्वादयः , तेषां धर्मः विपरिणामः , तस्य या प्रसूतिः साम्यावस्थायाः प्रच्युतिस्तदुद्रेको विष्वग्भावश्च, तत्र वेद एव हेतुः अदृष्टनिमित्तत्वात् । वैचित्र्यपाठान्तराणि निष्प्रयोजनत्वान्न लिख्यन्ते । ‡ मेधा.

( २ ) प्रसूतिः जन्महेतुः , गुणः उत्कटत्वादिः , धर्मः सुरभित्वादिः । तृतीयार्थे तसिः । एतैरुपलक्षिताद्वेदादेव प्रसिध्यन्ति ज्ञायन्ते । एषामपि विवेको वेदाधीन इत्यर्थः । ¶ मवि.

( ३ ) य इह लोके परलोके च शब्दादयो विषयाः प्रसूयन्ते प्रयुज्यन्ते एतैरिति प्रसूतयः , प्रसूतयश्च गुणाश्चेति सत्त्वरजस्तमोरूपाः तन्निबन्धनवैदिककर्महेतुत्वाद्वेदादेव प्रसिध्यन्ति । ममु.

( ४ ) ‘ तस्मादक्षरान्महान्महतो वै अहंकारस्तस्मादेवाहंकारात्पञ्चतन्मात्राणि तेभ्यः पञ्च भूतानि ’ इति श्रुतेः । प्रसूतिगुणकर्मतः । एषामपि प्रसिद्धिर्वेदादेव । प्रसूतिः उत्पत्तिरुक्ता । गुणा आकाशादीनां शब्दादयः । कर्म आकाशस्यावकाशादि, वायोः शरीरधारणादि, तेजसः पाकादि, जलस्य क्लेदनादि, भूमेर्धारणादि । यद्वा प्रसूतिः मात्रादि, अम्बष्ठस्य वैश्या माता विप्रः पितेत्यादि । गुणाः सत्त्वादीनि तदनुरूपयाजनादीनि । कर्म अग्निहोत्रादि तानि च । मच.

( ५ ) प्रसूतिः शब्दादीनामुत्पत्तिस्थानमाकाशादिकम्, गुणाः तेषां शब्दादिकाः, कर्म तेषां व्यापार इन्द्रियलक्षणादिकः , एतैर्युक्ताः शब्दादयो वेदादेव प्रसिध्यन्ति । शब्दादीनां विविधा भेदा मोक्षधर्मेषु स्मर्यन्ते । नन्द.

‡ गोरा. मेधागतम् ।

¶ भाच. मविगतम् ।



‘बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥

( १ ) सर्वभूतभरणं च वेदशास्त्रस्य दर्शितं ब्राह्मणे । तथा च– ‘ हविरग्नौ हूयते सोऽग्निरादित्यमुद्गयति तत्सूर्यो रश्मिभिर्वर्षयति तेन वृष्टिर्भवति ततो ह वैषामुत्पत्तिः स्थितिर्वेति हविर्शायते ’ इति । इहाप्युक्तम्– ‘ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । ’ ( मस्मृ. ३।७६ ) इत्येवमादि । तस्मादेतत्परं मन्ये पुरुषार्थकारणम् । यद्येवं कारणेन जन्तोरस्य धर्मानुशासनमेतस्मात्कारणाच्चेषु यथा दर्शितोपपत्तिः (?) । ननु च यद्योपादानिकमर्थे किं तन्नेदमुक्तं लौकिकमर्थमिति ? (?) उच्यते– अनुष्ठानमस्य वैदिकम् , कार्यं तु दृष्टत्वाल्लौकिकमेव । ¶ मेधा.

( २ ) नित्यं वेदशास्त्रं सर्वभूतानि धारयति । तस्माच्छास्त्रम् एतच्छास्त्रं वेदस्य प्रकृष्टं वेद्मि । प्रकृष्टं यस्मादस्याधिकारपुरुषस्यैतत्पुरुषार्थसाधनम् । † गोरा.

( ३ ) बिभर्ति यज्ञादिकर्मस्वरूपोपदेशद्वारा वर्तनात्ततश्च वृष्ट्याद्युत्पत्तेरुक्तत्वात् । वेदशास्त्रं वेदरूपं शास्त्रम् । यदस्य जन्तोः साधनमपवर्गसाधनं परं ध्यानं ध्येयादिति तदेतस्माद्वेदादेव मन्ये जाने । मवि.

( ४ ) साधनं संपादकं ज्ञानफलकत्वेन ।
निप्र. २।५६

( ५ ) प्राणिमात्रस्य स्वर्गापवर्गयोः साधनं वेदप्रमाणकमिति संक्षिप्याऽऽह– बिभर्तीति । बिभर्ति यागादिद्वारा पुष्णाति । अस्य स्वर्गापवर्गादेः । जन्तोरिति व्यधिकरणे षष्ठी । एतत् वेदाख्यम् । मच.

( ६ ) बिभर्ति पुष्णाति होमोद्देशेनेत्यभिप्रायः । तथाहि पूर्वमुक्तम्– ‘ अग्नौ प्रास्ताहुतिः सम्यक् ’ इति । अस्य जन्तोर्यत्परं साधनं तदेतद्वेदशास्त्रं मन्ये इत्यन्वयः । नन्द.

¶ ममु. मेधागतं गोरागतं च ।

† शेषं मेधागतम् ।

(१) मस्मृ. १२।९९ ; निप्र. २।५६.

(७) यः सनातनं वेदशास्त्रं बिभर्ति स सर्वशास्त्राणि बिभर्ति तस्मात्कारणादेतद्वेदशास्त्रं परम् उत्कृष्टं मन्ये । यत् यतः अस्य वेदशास्त्रं धनम् । माच.

'सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥

(१) अतिस्तुतिरियम् । दण्डनेतारः दण्डनायका ग्रामनगरयोः कृताकृतप्रेक्षणनियुक्ताः । सेना हस्त्यश्वरथपादातम्, तस्याः पतिः । राज्यं मण्डलेश्वरत्वम् । सर्वलोकाधिपत्यं सार्वभौमत्वम् । ‡ मेधा.

(२) दण्डनेतृत्वं राजनियुक्त्या । मवि.

(३) राजन्यबन्धुर्न राज्याधिकारी, अपि तु वेदविदेवेत्याह– सैनेति । सैनापत्यं चतुरङ्गसेनाध्यक्षताम् । मच.

'यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥

(१) इयमपि पूर्ववत् । स्पष्टा पदयोजना प्रसिद्धाश्च पदार्थाः । मेधा.

(२) यथाऽतिप्रवृद्धोऽग्निः आर्द्रानपि वृक्षान् दहति एवं वेदज्ञानसामर्थ्यात् शिष्टाकरणनिषिद्धसेवनजं पापमात्मनो नाशयतीति । एवं च न केवलं वेदो दृष्ट(? इष्ट)प्राप्तिहेतुः, यावदनिष्टनिवृत्तिरपि । $ गोरा.

(३) कर्मजं निषिद्धाचरणजम् । मवि.

(४) स एव कर्मदोषं विनाशयतीति सदृष्टान्तमाह– यथेति । जातबलो वायुतृणाभ्याम् । 'ज्ञानाग्निः' (भगी. ४।३७) इत्युक्तेः । मच.

'वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राऽऽश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥

(१) ब्रह्मभूयाय ब्रह्मभावाय ब्रह्मत्वप्राप्तये इति यावत् । यत्र तत्रेति व्युत्थाय व्युत्क्रमेणापि । यथोक्तम्– 'विद्वेषणात्(? एतस्मात्रयात्) चाप्युत्थाय ब्राह्मणा भिक्षाचर्यमनुविश्य व्रजन्ति' इति । मेधा.

(२) यः पारमार्थिकवेदार्थज्ञः, विषयदोषावबोधे सति रागादिप्रणोदात् । यस्मिंस्तस्मिन् ब्रह्मचर्याद्याश्रमे व्यवस्थितोऽस्मिन्नेव लोके तिष्ठन्ननेनैव शरीरेण ब्रह्मत्वाय संपद्यते । गोरा.

(३) यत्र तत्र गार्हस्थ्येऽपि । ‡ मवि.

(४) यस्तत्त्वतो वेदं तदर्थं च कर्म ब्रह्मात्मकं जानाति स नित्यनैमित्तिककर्मानुगृहीतब्रह्मज्ञानेन ब्रह्मचर्याद्याश्रमावस्थितोऽस्मिन्नेव लोके तिष्ठन् ब्रह्मत्वाय कल्पते । ममु.

(५) न केवलमेवम्, जीवन्मुक्तः स एवेति । ब्रह्मभूयाय ब्रह्मत्वाय । मच.

(६) अर्थतत्त्वज्ञः अर्थतत्त्वाध्यवसायी । नन्द.

(७) ब्रह्मभूयाय कल्पते ब्रह्मरूपसमर्थो भवति । माच.

तुल्यबलानेकप्रमाणविरोधे विकल्पः

'श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥

(१) प्रागुक्तो व्याघातः परिह्रियते । यत्र श्रुत्योर्द्वैधं विरुद्धाभिधानम्, यं 'धर्मोऽयम्' इति काचिच्छ्रुतिराह, तमेवाधर्ममित्यन्या, तत्र उभावपि तौ धर्मावनुष्ठेयौ विकल्पेन । तुल्यबले हि ते श्रुती । तत्रैवं प्रमाण-

---

‡ गोरा., ममु., माच. मेधागतम् ।

$ ममु., नन्द. गोरागतम् ।

(१) मस्मृ. १२।१००; ममु. सैना (सेना); मिप्र. २।५६; मुक्ता. २९ ममुवत्; नन्द. ममुवत्.

(२) मस्मृ. १२।१०१; स्मृच. १।१२९; पमा. २।१७२.

(३) मस्मृ. १२।१०२; स्मृच. १।१३२ तत्राऽऽश्रमे वसन् (यत्राऽऽश्रमे वसेत्) लोके तिष्ठन् (तिष्ठंल्लोके); प्रपा. २६१ तत्राऽऽश्रमे वसन् (कुत्राऽऽश्रमे वसेत्) भूयाय (लोकाय); मिप्र. २।५४, ५६ कल्पते (कल्प्यते); संप्र. ५१० तत्राऽऽश्रमे वसन् (यत्राऽऽश्रमे वसेत्); संग. ५ संप्रवत्.

‡ शेषं गोरागतम् ।

(१) मस्मृ. २।१४; मेधा. १२।८६ पू.; ब्रक. ४१; स्मृच. १।१५–१६; प्रपा. ३ श्रुति (स्मृति); मुक्ता. ७; बाल. १।४–५.

मियं नेत्यशक्यो विवेकः । अत एकार्थतुल्यबलविरोधे विकल्प इति । उभावपि तौ धर्मावित्युक्तम् । तत्र समुच्चयः प्राप्नोति । एवमुभौ धर्मौ भवतः, अन्यथा एकः स्यात् । नेति ब्रूमः । पर्यायेणापि प्रयोगे नोभयशब्दस्य प्रवृत्तिविरोधः । न ह्ययं सापेक्षो द्वयविषय एव । न्याय्यश्च विकल्पः । यथाऽग्निहोत्राख्यमेकं कर्म, तस्य कालत्रयमुपदिष्टम् । तत्र कर्म प्रधानम्, कालो गुणः । न चैकस्मिन् प्रयोगे कालत्रयसंभवः । न च कालानुरोधेन प्रयोगावृत्तिर्युक्ता । नाङ्गानुरोधेन प्रधानमावर्तनीयम् । तस्मान्न्याय्योऽयम्, 'तुल्यबलविरोधे विकल्पः' ( गौध. १।६ ) इति वचनात् । उभावपि हि तौ धर्मौ । ननु च को भेदः 'तत्र धर्मौ' इत्यस्मादेतस्य ? न कश्चित् । पूर्वेण स्वमतमुपन्यस्तम्, उत्तरेणान्यैरपि मनीषिभिरेतदेवोक्तमिति स्वमतमाचार्यान्तरमतसंवादेन द्रढयति । § मेधा.

(२) यत्र पुनः श्रुत्योरेव द्वैविध्यं परस्परं विरुद्धाभिधानं तत्र तत्प्रतिपाद्यौ द्वावपि विकल्पानुष्ठेयत्वेन मन्वादिभिः( ? भ्यः ) पूर्वतरैरपि विद्वद्भिर्द्वावपि तौ धर्मौ सम्यक् समीचीनौ इत्युक्तम् । नात्र कस्यचिदपि हानं युज्यते, तुल्यप्रमाणशिष्टत्वात् । एवं च समानन्यायत्वात् स्मृत्योरपि विरोधे एतदेव विज्ञेयमिति प्रकृतोपयोगः । † गोरा.

(३) द्वैधं विरुद्धार्थद्वयदर्शकत्वम् । तस्मिन्व्यवस्था — उभौ धर्मौ तत्तच्छाखीयपरतया विकल्पेन वा । सम्यगित्यव्ययम् । समीचीनौ मनीषिभिरुक्तौ यत इत्यर्थः । मवि.

(४) तुल्यबलतया विकल्पानुष्ठानविधानेन च विरोधाभावः । ‡ ममु.

(५) 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' 'यथाऽतिथये प्रद्रुताय बलिं हरन्ति यदुदिते जुहो( ? ह )ति' इत्यर्थवादोपेतोदितेजुहोतीत्यनुदितेजुहोतीत्यादिश्रुतिमाश्रित्याऽऽह— श्रुतिद्वैधमिति द्वाभ्याम् । मच.

§ माच. मेधागतम् ।
† स्मृच. गोरावत् ।
‡ शेषं गोरागतम् ।

**'उदितेऽनुदिते चैव समयाध्युषिते तथा ।**
**सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥**

(१) उदाहरणमिदं समनन्तरप्रदर्शिते विरोधे । य एते त्रयः काला इतरेतरनिन्दया होमस्य विहिताः तत्रायमर्थः श्रुतिवाक्यानाम्— सर्वथा वर्तते यज्ञः । सर्वप्रकारो होमः प्रवर्तते, प्रवर्तनीय इत्यर्थः । या उदितहोमनिन्दा सा न तत्प्रतिषेधार्था । किं तर्हि ? अनुदितहोमविध्यर्था । एवमितरत्रापि । तेनायमर्थ उक्तो भवति— सर्वथा कर्तव्य एतेषां कालानामन्यतमस्मिन् काले । तत्र यस्मिन् कृतस्तत्र संपूर्णः शास्त्रार्थो भवति । इतीयं वैदिकी श्रुतिः एवंपरा । अस्मिन्नर्थेऽस्यास्तात्पर्यम्, न पुनर्निन्द्यमानप्रतिषेधे । यज्ञः होमः अत्राग्निहोत्राख्योऽभिप्रेतः, यागहोमयोर्यतो नात्यन्तं भेदः । देवतामुद्दिश्य द्रव्यस्य स्वत्वत्यागः 'नेदं मम, देवताया इदम्' इति यागः । एतच्च स्वरूपं होमेऽप्यस्ति । अयं तु विशेषः होमे— द्रव्यस्य प्रक्षेपः अधिकरणविशेषेऽग्न्यादौ । अतो यज्ञशब्देनात्र होमस्याभिधानम् । होमे ह्येते कालाः श्रुताम्नाताः, न यागमात्रे । उदितादिशब्दैश्च 'उदिते होतव्यम्' इत्यादिका श्रुतिरेकदेशेन लक्ष्यते । येयं 'उदिते होतव्यम्, नोदिते होतव्यम्' इति श्रुतिः सैवंपरेत्येवं योजना । समयाध्युषितशब्देन समुदायेनैवोषसः काल उच्यते । अन्ये तु पदद्वयमेतदित्याहुः । समयशब्दः समीपवचनः समीपिनमपेक्षते । उदितानुदितयोः संनिधानात्तत्समीपी संध्याकालः । अध्युषितं रात्रेर्विवास-

(१) मस्मृ. २।१५ ; मक. ४२ ; स्मृच. २।४२६ ; हमा. १११ इतीयं ( इत्यर्था ) ; पमा. १।२८८ ; मपा. १७५ तेऽनु ( तानु ) ; गमा. ११३ पू. ; गप. ११, १५१ ; चमभा. ३५ पू. ; मुक्ता. ७ याध्युषिते ( याविष्टिते ) : ३५७ ; आर. ५१ ; सिन्धु. ११५७ ; आम. ४८ पू. ; आर्क. १९ ; आन. १६७ याध्युषिते ( याविषिते ) पू. ; संग. ३०८ पू. ; संर. ६०५ यज्ञ (होम).

कालः । व्युष्टायां रात्रावित्यर्थः । कासुचिच्छ्रुतिष्वेवं पठितं कासुचिदेवमिति श्रुतिवाक्यानुकरणमेषा स्मृतिः, तत्र किं पदद्वयमेतदुतैकमिति तत एव निर्णयः । अतो विकल्पेनैकं होमाख्यं कर्म प्रति कालत्रयविधानान्नास्ति विरोधः । सिद्धरूपे हि वस्तुनीतरेतरविरुद्धरूपसमावेशासंभवात्स्याद्विरोधः, न साध्ये । साध्यं ह्यनेनापि सिध्यत्यनेनापीत्यवगम्यते । तत्र कुतो विरोधः ? एष एव च स्मृतीनां विरुद्धानां विकल्पो न्याय्यः । § मेधा.

(२) समयाध्युषिते उषःकाले । ब्रक. ४२

(३) अत्र दृष्टान्तमाह– उदितेऽनुदिते चैवेति । सूर्यनक्षत्रवर्जितः कालः समयाध्युषितशब्देनोच्यते । उदयात्पूर्वमरुणकिरणवान् प्रविरलतारकोऽनुदितकालः । $ ममु.

(४) संपूर्णादित्यमण्डलदर्शनोपलक्षितः उदितः । † हमा. १११

(५) समयाध्युषिते सूर्यनक्षत्ररहिते काले । अत्र व्यवस्थितविकल्पोऽधिकारिभेदेन । सर्वथा त्रिष्वपि पक्षेषु होमस्य नित्यत्वसिद्धिरित्यर्थः । वर्तते कर्तव्यतया । मच.

(६) समयाविषिते उदितानुदित इत्यर्थः । अयं च यथाकल्पसूत्रं व्यवस्थितविकल्पः । ¶ मुक्ता. ७

(७) कात्यायनः– 'रात्रेस्तु षोडशे भागे ग्रहनक्षत्रभूषिते । कालं चानुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः ॥ तथा च प्रातःसमये नष्टे नक्षत्रमण्डले । रविर्यावन्न दृश्येत समयाध्युषितं च तत् ॥ रेखामात्रं च दृश्येत रश्मिभिश्च समन्वितः । उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥' । बौधायनापस्तम्बाश्वलायनप्रभृतिभिरुदिते उदयानन्तरं होमः कार्यः । मध्यन्दिनवाजसनेयिभिरनुदिते उदयात्पूर्वं होमः कार्य इत्युक्तम् । ‡ माच.

§ गोरा. , मवि. मेधागतम् ।
$ शेषं मेधागतम् ।
† शेषं ममुगतम् । गमा. हमावत् ।
¶ नन्द. मेधागतं मुक्तागतं च ।
‡ शेषं मेधागतम् ।

शिष्टाचारप्रामाण्यापवादः

**[१]धर्मव्यतिक्रमो दृष्टो महतां साहसं तथा ।**
**तदन्वीक्ष्य प्रयुञ्जानः संसीदत्यवरोऽबलः ॥**
**[२]तेजोमयानि पूर्वेषां शरीराणीन्द्रियाणि च ।**
**दोषैस्ते नोपलिप्यन्ते पद्मपत्रमिवाम्भसा ॥**

कतकभरद्वाजावन्योन्यं व्यत्यस्य भार्ये जग्मतुः, वसिष्ठश्चाण्डालीमक्षमालीम्, प्रजापतिश्च स्वां दुहितरमित्यादि धर्मव्यतिक्रमो दृष्टः । जामदग्न्येन रामेण पितृवचनादविचारेण मातुः शिरश्छिन्नमित्यादि साहसं दृष्टम् । तदन्वीक्ष्य प्रयुञ्जानः, तदिति 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पासू. १।२।६९) इत्येकशेष एकवद्भावश्च । तं व्यतिक्रमं तच्च साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि तथा प्रयुञ्जानोऽवरः इदानीन्तनः अबलः दुर्बलः संसीदति प्रत्यवैति । तेषामपि किं दोषः ? नेत्याह– तेजोमयानीति । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छाउ. ५।२४।३) इति श्रुतेः । अत्राऽऽपस्तम्बः– 'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् । तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः' (आध० २।१३। ७–९) इति । मुक्ता. ५

सदाचारलक्षणम्

**[३]तस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।**
**वर्णानां सान्तरालानां स सदाचार उच्यते ॥**

(१) मस्मृ. २।१५ इत्यस्यानन्तरं प्रक्षिप्तश्लोकोऽयम्, ष्टो महतां (ष्टः श्रेष्ठानां) नः संसीदत्यवरोऽबलः (नाः सीदन्त्यपरधर्मजाः); स्मृच. १।७ चतुर्थचरणे (सीदत्यवरजोऽबलः); मुक्ता. ५.

(२) मुक्ता. ५.

(३) मस्मृ. २।१८; मेधा. तस्मिन् (अस्मिन्); अप. १।७ पृ. १९ पर्यक्र (पर्याप्त); ब्रक. ६ स सदाचार (सदाचारः स); ह्र. ४३ नां सान्तरालानां (नामाश्रमाणां च); पमा. १।१३४; मपा. १२; गप. ११ तस्मिन् (यस्मिन्); मुक्ता. ५ तस्मिन् (यस्मिन्) उत्तरार्धे (श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते ॥) स्मृतिमञ्जर्याम्: ९ गपवत्; विपा. ३।२।५११ मुक्तावत्,

अथास्मिन् देशे य आचारस्तस्य प्रामाण्ये किं विद्वत्ता शिष्टता चोपाधिरङ्गीक्रियते ? अथाविदुषामशिष्टानां च देशोपाधिरेव प्रमाणम् ? किं चातः ? यदि नापेक्ष्यते, यत्तदुक्तम्– 'आचारश्चैव साधूनाम्' इति विशेषणद्वयमनर्थकम् । न त्वसाध्वाचारस्य धर्ममूलतोपपद्यते, वेदसंयोगासंभवात् । अथापेक्ष्यते, देशविशेषसंबन्धानुपकारः । न हि देशान्तरेऽपि शिष्टसमाचारस्याप्रामाण्यं शक्यते वक्तुम् । उच्यते– प्रायिकमेतदभिधानम् । प्रायोवृत्त्याऽस्मिन् देशे शिष्टानां संभव इत्युक्तम्– तस्मिन् देशे य आचारः स सदाचारः इति । अन्ये तु देशान्तरे मातुलदुहितुः परिणयनाद्देशाचारनिषेधार्थमिदमित्याहुः । तदयुक्तम् । अविशेषेणैवोक्तम्– 'तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत् ।' ( मस्मृ. ८।४६ ) । स च विरुद्धः 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः' 'मातृबन्धुभ्यश्च पञ्चमात्' ( गौध. ४।३, ५ ) इत्येतेन । अस्मिन्नपि देशेऽनुपनीतेन सहभोजनादिराचारो नैव धर्मत्वेनेष्यते । न च स्मृतिविरुद्धस्याऽऽचारस्य प्रामाण्यसंभवः, श्रुतिविप्रकर्षात् । आचारात्स्मृतिरनुमातव्या, स्मृतेः श्रुतिः । स्मृतिस्त्वव्यवहितामेव श्रुतिमनुमापयति । किंच कारणग्रहाश्चैवमादेराचारस्य । रूपवतीं मातुलकन्यां कामयमाना राजभयादूढवन्तः कन्यागमनं( ? ने ) दण्डो मा भूदिति । अन्ये त्वविद्वांसः 'येनास्य पितरो याताः' (मस्मृ. ४।१७८) इत्यस्य यथाश्रुतमर्थं गृहीत्वा धर्मोऽयमिति प्रतिपन्नाः । अपि च( ? § यथा च ) 'एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्' ( मस्मृ. ११।१७२ ) इति प्रायश्चित्तं श्रुतमपि भ्रान्तिहेतुः 'आभ्यस्तिसृभ्योऽन्या न प्रतिषिद्धा' इति । यथा चास्य नायमर्थस्तथा वक्ष्यामः । न च दृष्टकारणयोः स्मृत्याचारयोः प्रामाण्यम् । उक्तं च भट्टपादैः– 'विरुद्धा च विगीता च दृष्टार्था दृष्टकारणा । स्मृतिर्न श्रुतिमूला स्याद्या चैषा संभवश्रुतिः ॥' । तस्मात् 'एतान् द्विजातयो देशान् संश्रयेरन्' ( मस्मृ. २। २४ ) इत्येतद्विधिशेषा देशप्रशंसार्थवादा एते । परम्परैव पारम्पर्यम् । अन्यस्मादन्यमुपसंक्रामति, तस्मादन्यम्, ततोऽप्यन्यमित्येवंरूपः प्रवाहः परम्परा । क्रमः तदविच्छेदः, तत आगतः संप्राप्तः । संकीर्णयोनयः अन्तरालाः । तत्सहितानां वर्णानाम् । ‡ मेधा.

'येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते ॥

§ अस्मदुपलब्धेषु पञ्चस्वपि मेधातिथिभाष्यपुस्तकेषु 'अपि च' इत्येवात्र मुद्रितमस्ति । तेन 'आभ्यस्तिसृभ्योऽन्या न प्रतिषिद्धा' इति भ्रान्तेर्मातुलकन्यापरिणये दृष्टकारणत्वरूपेण पूर्वोक्तदृष्टकारणेन सह समुच्चयः प्रतीयते । स तु नोपपद्यते, 'एतास्तिस्रस्तु' इत्यत्र मातुलकन्यायास्तिसृष्वन्तर्भावात् । अतोऽत्रेयं शुद्धिः कल्प्यते । एवं सति "यथा 'एतास्तिस्रस्तु' इत्यत्र केषांचिद्भ्रान्तिस्तथा 'येनास्य पितरः' इत्यत्राप्यविदुषां यथाश्रुतार्थग्रहणमूलिका 'धर्मोऽयम्' इति भ्रान्तिः" इति दृष्टान्तदार्ष्टान्तिकभावप्रतीतेर्न काचिदनुपपत्तिः ।

तत्र 'येन (यश्च)' इति विशेषः, स्मृतिः ; पप्र. ५५ मेधावत् व्रकवच्च ; आन. ४४८ प्रतीकमात्रम् ; सस्मृ. १३१ मेधावत् ; इन्दु. ३ मुक्तावत् : ५ व्रकवत्, इन्दु. ३ इत्यत्र मनुनिर्देशात् तत्स्थलनिर्देशोऽत्र कृतः, तदनुरोधेन च मुक्ता. ५ इत्ययं विधानपारिजातस्य च स्थलनिर्देशोऽत्र कृतः । वस्तुतस्तु मुक्ता-त्रिपाकारयोरेतत्पाठभेदविशिष्टस्यास्य वचनस्यामानवत्वमेवाभिप्रेतमिति तद्ग्रन्थालोचने प्रतिभाति । ततश्चेन्दुकृतो मनुनिर्देशः प्रामादिकः स्यादिति भाति ।

‡ अन्यानि सर्वाणि व्याख्यानानि मेधागतानि ।

(१) **मस्मृ.** ४।१७८ ; **विश्व.** १।७ पृ. १३ रिष्यते ( रिष्यति ) (=) ; **मेधा.** विश्ववत् : २।१८, २।२९ निर्देशमात्रम् ; **मिता.** १।२५४ रिष्यते (दुष्यति) (=) ; **गृक.** २८६ विश्ववत् ; **स्मृच.** १।९ विश्ववत् : ४।४३१ चतुर्थचरणे ( तत्र गच्छन्न रिष्यति ) (=) ; **गृर.** ४८३ विश्ववत् ; **पमा.** १।५२३ विश्ववत् ; **मर.** ६२ विश्ववत् ; **निप्र.** १।६८, २।६२७ यायात् ( गच्छेत् ) च्छन्न रिष्यते ( च्छंस्तरिष्यति ) ; **मच.** विश्ववत् ; **गप.** २७६ निप्रवत् ; **समव्या.** ७८ विश्ववत् : ९४ निर्देशमात्रम् ; **मुक्ता.** ७ विश्ववत् ; **आर.** ६७ निर्देशमात्रम् ; **संम.** ४८ पृ. ; **विपा.** ३।१।६९५ रिष्यते (दुष्यति) : ३।२।२०४ निर्देशमात्रम् ; **संको.** १७४ मितावत् ; **नन्द.** विश्ववत् ; **माध.**

(१) यो धर्मः पित्रादिभिरनुष्ठितः, येश्च सह प्रीतिर्भाविता, यैः सह कन्याविवाहादिः कृतः, येव च शाखा अधीता, स एव पन्था आश्रयणीयः। तथा कुर्वन्न रिष्यति न बाध्यते, लोके न निन्द्यते। अन्ये तु अविदुषः पुरुषधर्मेष्वहिंसादिषु प्राप्त्युपायोऽयं राजपटह इव म्लेच्छादीनाम्। अग्निहोत्रादयस्तु स्वप्रत्ययापेक्षा एव। अत्र चोदयन्ति– यदि निर्मूलः पित्रादिभिरनुष्ठितोऽर्थः, कथं तस्य धर्मत्वम्? अथास्ति मूलम्, तत्पुत्रस्यापि भविष्यति, किं पित्रादिग्रहणेन? तदेतत्परिहृतम्– अविदुषां मूलमजानानामुपदेशोऽयमिति। अन्ये तु यत्र निपुणतोऽपि निरूप्यमाणे संदेहो न निवर्तते, उभयथा वाक्यार्थप्रतिपत्तिः, तत्र पित्राद्याचरितः पन्था आश्रयणीय इत्याहुः। एतदपि चिन्त्यम्। न हि नित्यसंदिग्धं नाम प्रमाणमस्ति। अवश्यं ह्येकार्थनिष्ठेन वाक्येन भवितव्यम्। विकल्पितेषु वा पदार्थेषु पित्राद्याचरितं कर्मानुचरणीयम्। यतोऽन्य आचरितवन्तः। सतां मार्गमिति। यदि पितृपितामहादिभिः कैश्चित्कथंचिदधर्म आचरितपूर्वः स न आश्रयणीय इति सतां मार्गमित्याह। † मेधा.

(२) यत्तु 'येन ...' इति मनुवचनं तत् वैकल्पिकेषु समेषु पूर्वपरिगृहीतग्रहणविषयम्, न तु मुख्यानुकल्पविषयम्। ‡ श्रुत्यर्थव्याख्यासंदेहेऽन्यतरपक्षपरिग्रहविषयं चेति मेधातिथिना व्याख्यातम्। निप्र. १।६८

(३) न हि पितुः पितामहस्य वा बहुत्वं संभवति। स्मरन्ति च बहुवचनादाद्यर्थावगतिरिति। ततश्च पित्रादयः पितामहादयो वेत्यर्थः, समुच्चये तूत्तरवैयर्थ्यापत्तेः। बाल. १।८९ पृ. २५८

† गोरादिव्याख्यानानि मेधागतानि। तत्र गोरा., ममु. संदिग्ध-वैकल्पिकोभयार्थपरत्वमाहतुः, मवि., स्मृच. संदिग्धार्थमात्रपरत्वमाहतुः, गृक. वैकल्पिकार्थमात्रपरत्वमाह।

‡ मेधातिथिव्याख्याने त्वस्य पक्षस्य चिन्त्यत्वमुक्तम्।

विश्ववत्; साप्र. ६ निर्देशमात्रम्; बाल. १।८९ पृ. २५८ मितावत्; संग. १७३ मितावत्; संर. ३८९ गै तेन गच्छन्न रिष्यते (गैमेवं गच्छंस्तरिष्यति); कृम. ११७० मितावत्; संदी. २१९ मितावत्.

'सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः।
तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत्॥

(१) सन्तः प्रतिषिद्धवर्जकाः, धार्मिकाः विहितानुष्ठायिनः। यद्यप्येक एव शब्द उभयमर्थं प्रतिपादयितुं शक्नोति तथापि भेदोपादानाद्विषयविभागेनैवं व्याख्यायते। तैर्यदाचरितमनुपलभ्यमानश्रुतिस्मृतिवाक्यं तद्देशकुलजातीनां प्रकल्पयेत् अनुष्ठापयेत्। अविरुद्धं श्रुतिस्मृतिभिरुपलभ्यमानाभिः। यदुक्तम् 'जातिजानपदान् धर्मान्' (मस्मृ. ८।४१) इत्यत्र श्लोके देशकुलाद्याचारस्य प्रामाण्यम्, तस्यानेन विशेषः कथ्यते। आम्नायेनाविरोधे तत्प्रमाणम्, न विरोधे तत्प्रमाणम्। तेन दृष्टार्थान्यपि ग्रामदेशराजकार्याणि शास्त्राविरुद्धान्यादरणीयानि, न विरुद्धानि। यथा क्वचिद्देशे ऋणिक आत्मानं विक्रय्य धनं दाप्यते। तच्च 'कर्मणाऽपि समम्' (मस्मृ. ८।१७७) इत्यनेन विरुद्धम्। अन्यच्च श्लोकेन दर्शितम्। अन्यस्य स्वाचारस्य शिष्टसंबन्धितयैव प्रामाण्यमुक्तम् 'आचारश्चैव साधूनाम्' इति। न च तद्विरुद्धार्थसमाचरणेन साधुत्वमुपपद्यते। तस्मात् यन्नादृष्टाय तद्विषयोऽयमुपदेशः। अन्यस्त्वाह– देशान्तरे धार्मिकैः सद्भिर्द्विजैर्यदविरुद्धं श्रुत्या स्मृत्यन्तरेण वाऽऽचर्यते तद्देशान्तरेऽपि राजा प्रकल्पयेत्। यथा ¶उद्वृषभयज्ञादय उदीच्येषु प्रसिद्धास्ते प्राच्यैर्दाक्षिणात्यैः प्रतीच्यैश्चानुष्ठेयाः। कुतः? आचाराद्धि स्मृतिरनुमातव्या, स्मृतेः श्रुतिः। सा च यद्येवमनुमीयते– 'उदीच्यैरेतत्कर्तव्यम्' इति, तत्र तद्धितस्य बहुष्वर्थेषु स्मरणात् 'तत्र जातः' (पासू. ४।३।२५) 'तत्र भवः'

¶ 'ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति, सोऽयमुद्वृषभयज्ञः' इति मीमांसान्यायविस्तरः।

(१) मस्मृ. ८।४६; मेधा. २।१८ उत्त.; स्मृच. १।२५ यत्स्याद्धा (यच्च धा); मुक्ता. १३१ यत्स्याद्धार्मिकैश्च (यस्माद्धार्मिकैस्तु).

( पासू. ४।३।५३ ) 'तत आगतः' ( पासू. ४।३।७४ ) '¶ तमभिप्रस्थितः' (इति), 'शेषे' (पासू. ४।२।९२) इति चैतस्य लक्षणाधिकारोभयरूपत्वादन्येष्वप्यर्थेषु प्रतिपदमनुपात्तेषु तद्धितस्मरणान्नास्त्यनुदीच्यो नाम, य उदीच्यशब्देन निवर्त्येत। ततश्च पुरुषमात्रेणैतत्कर्तव्यमित्यापतति, देशसमाख्याया नियतनिमित्तत्वाभावेनानियामकत्वात्। अथैवं वाक्यमनुमीयेत– 'उदीच्यां जातेन तद्देशवासिना वा', तदपि व्यभिचारि। तत्र जातोऽपि नान्यत्र करोति, तन्निवास्यप्यन्यत्र जातो न करोत्येव। अथ 'उदग्देशाभिजनस्तन्निवासी च' इति, अनित्यत्वादभिजननिवासयोस्तदपि न युक्तमेव। न हि जातिगुणगोत्राणीवाभिजननिवासौ नित्यौ। तस्मान्नित्यस्य कस्यचिदनुष्ठातॄणामवच्छेदकस्यानुपपत्तेः सर्वविषया धर्माः, न देशधर्मा नाम केचन सन्ति। अनेनैव न्यायेन कुलधर्मा अपि। कथं तर्हि 'देशधर्माः, कुलधर्माः' इति च स्मृतिकारैर्भेदेन व्यपदिश्यन्ते। उक्तम्– दृष्टार्था नियता व्यवस्था। तत्र धर्मस्तस्य च नियम उपपद्यत इति उक्तम्। कुलं च गोत्रैकदेशः। यस्तु कृत्स्नगोत्रधर्मः, यथा– 'न वासिष्ठा वैश्वामित्रैः संबध्नीयुः' इति, स नित्यत्वाद्गोत्रव्यपदेशस्य नित्य एवेति विरम्यते।

‡ मेधा.

( २ ) एवं च विरुद्धं व्यवहारेषु वादिनं गृह्णीयात्। इह च सद्भिराचरितमित्युपादानादिदं सदाचारविषयम्, 'जातिजनपदान्' ( मस्मृ. ८।४१ ) इत्येतत् पुनः सदाचारव्यतिरिक्तधर्मविषयम्। गोरा.

( ३ ) सद्भिः दोषरहितैः देवादिभिः। तत् वस्तु प्रकल्पयेत् प्रकृष्टं व्यवहारेषु कल्पयेत्। यदि देशाद्यविरोधि। विरोधे तु तद्देशादिधर्म एव तद्देशजानाम्। एवं सामान्यतो राजधर्मा व्यवहारानुगुणा उक्ताः। मवि.

(४) विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिर्यद्दृश्यमानशास्त्रमनुष्ठितं तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्। ममु.

( ५ ) आचरितं शास्त्र( ? स्त्रा )दृष्टमप्यनुष्ठितम्। सद्भिरिति द्विजातीनां विशेषणम्। ( द्विजातिपदं ) शूद्रव्यावृत्त्यर्थम्। धार्मिकैः प्रतिषिद्धवर्जनपुरःसरं धर्मानुष्ठातृभिः। तद्देशकुलजातीनामविरुद्धमेव प्रकल्पयेत् प्रमाणं कुर्यात्, ( 'जातिजानपदान्धर्माञ्श्रेणीधर्मांश्च धर्मवित्। समीक्ष्य) कुलधर्मांश्च' (मस्मृ. ८।४१) इत्यत्रोक्तत्वात्। मच.

( ६ ) तदनुरूपनिर्णयोपायपरिग्रहार्थमशास्त्रीयमपि सद्भिराचरितं धर्ममनुपालयेदित्याह– सद्भिराचरितं यत्स्यादिति। स्वधर्मनिरता अध्यात्मविदः सन्तः। (अ-)विरुद्धं ( विरुद्धं ? ) चेत्प्रकल्पयेत् अनुपालयेत्। नन्द.

( ७ ) अविरुद्धं दण्डं प्रकल्पयेत्। भाच.

**[1]शिष्टाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम्॥**

लक्षणं प्रमाणमित्यर्थः। स्मृच. १।६, १९७

धर्मनिर्णयसाधनं प्रत्यक्षानुमानशास्त्राणि

**[2]प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्।**
**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥**

( १ ) सुहृद्भूत्वोपदिशति लौकिकमर्थम्। धर्मः वेदार्थः, तस्य शुद्धिः विवरणं पूर्वपक्षनिराकरणेन निश्चित-

¶ 'तमभिप्रस्थितः' इत्येवंरूपः 'तत्र जातः' इत्यादिवज्ज विशेषाधिकारः 'द्युप्रागपागुदक्प्रतीचो यत्' ( पासू. ४।२।१०१ ) इति सूत्रं 'शेषे' इतिसामान्याधिकारस्थम्। तेनायमर्थः 'अन्येष्वप्यर्थेषु' इति वक्ष्यमाणान्यार्थेष्वन्तर्भूतत्वान्न पृथक् वक्तव्यः।

‡ स्मृच. मेधागतम्।

(१) स्मृच. १।६, १९७; मुक्ता. १३१ चारः स्मृ ( चारस्मृ ).

(२) मस्मृ. १२।१०५; नाक. ३२ क्षं चानु (क्षमनु) शास्त्रं ( शब्दं ); चप्र. २२ क्षं चानु ( क्षमनु ) शास्त्रं (शाब्दं); कुर. ३८ शुद्धि (सिद्धि) शेषं चप्रवत्; प्रपा. ३ पूर्वार्धे ( प्रत्यक्षमनुमानं च शब्दश्च विविधागमः। ) शुद्धि (सिद्धि) अङ्गिराः; निप्र. २।५७ नाकवत्; मच. २।१० कार्यं धर्मशुद्धि ( ज्ञेयं कार्यसिद्धि ) उत्त. (=); गप. १७ गमम् ( गमः ) शेषं चप्रवत्.

सिद्धान्तव्यवस्थापनम् । एतत् प्रत्यक्षादिप्रमाणनिश्चये सति भवति । सुविदिते हि प्रत्यक्षे ज्वालादिवैषम्येण प्रत्यभिज्ञायते शब्दनित्यत्वादिसिद्धिः । यस्य तु सम्यक् नास्ति विवेकः तस्योभयोरविशेषेण प्रत्यक्षमध्यवसायः स्यात् , ज्वालादिषु च प्रत्यक्षेण क्षयं दृष्ट्वा शब्देऽपि तथा संभावयेत् , तथाऽनित्य( ? त्यः )शब्दसमुदायात्मको वेदः स्यात् । यस्य तु विहितानि कुशलप्रमाणेषु प्रशब्दोऽतद्ग्रहणनिबन्धनो नास्त्यभिज्ञानो मन्यमानो ज्वालाविदुषो भेदग्रहणनिबन्धनमिव सितविशितं विशेषो न ज्वालाबाधेन शब्दे बाधं संभावयति(?) । एवमनुमानमपि सुविवेचितं न भारतादिग्रन्थप्रमाणोपलक्षणत्वाच्च । तेन शौर्यादिशास्त्रान्ते कर्मण्यतासिद्धिः । येन न विवेचितं ह्यनुमानं (स) सपक्षविपक्षयोर्दर्शनादर्शनमात्रेणानुमानप्रवृत्तिं मन्वानो वेदेऽपि कर्तारं कल्पयेत् । यदा तु निपुणमतिर्भवति तत्तत्प्रयोजकस्य स्ना(?शा)तव्यलक्षणया तस्य कर्तृत्वस्वकरणस्याभावादपौरुषेयत्वमध्यवस्यति । शास्त्रं च विविधागमम् । शास्त्रे विविधविधिप्रतिषेधात्तस्य (तत्त्वम्) । विविधः अनेकप्रकारः आगमः यत्र । आगम्यते स आगमः । बहुशाखत्वाद्वेदस्य श्रुतिस्मृतिभेदेन च विविधत्वमुक्तम् । स चायमर्थः स्वाध्यायविध्याक्षिप्तः सुहृद्भावेनोपदिष्टः । न च द्वयमपि प्रशंसेव । मेधा.

( २) धर्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षा( ? क्षम )नुमानेन( ? मानं च ) शास्त्रं च वेदस्मृतिरूपमनेकमन्त्रभेदभिन्नं सुविज्ञातं कर्तव्यम् । प्रत्यक्षानुमानस्वरूपावबोधे हि कर्मसाधनभूतद्रव्यगुणजातिस( ? )तत्त्वविज्ञानतमं ( ? ) युज्यते । गोरा.

( ३ ) शब्दं शब्दज्ञानादसंनिकृष्टेऽर्थे विज्ञानम् । विविधागमं विविधः श्रुतिस्मृतीतिहासपुराणरूप आगमो यस्य ज्ञानस्य करणं तद्विविधागमम् । ब्रक. ३२

( ४) प्रत्यक्षम् इन्द्रियज्ञानम् । अनुमानम् लिङ्गजम् । शास्त्रं वेदरूपं शास्त्रं शब्दजम् । आगच्छन्ति जायन्त इत्यागमाः स्मृतिपुराणार्थाः , तैर्नानाविधैः सहितम् । सुविदितं सम्यक्तर्केण निर्णीततत्त्वम् । धर्मस्य शुद्धिः सम्यक् ज्ञानम् । मणि.

( ५ ) प्रत्यक्षमिति । धर्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षमनुमानं च धर्मसाधनभूतद्रव्यगुणजातित्व( ? तत्त्व)ज्ञानाय, शास्त्रं च वेदमूलं स्मृत्यादिरूपं नानाप्रकारधर्मस्वरूपविज्ञानाय, सुविदितं कर्तव्यम् । तदेव च प्रमाणत्रयं मनोरभिमतम् । उपमानार्थापत्त्यादेश्चानुमानान्तर्भावः । † ममु.

( ६ ) शाब्दं शब्दज्ञानानन्तरजम् । § कुर. ३८

( ७ ) त्रयं प्रत्यक्षानुमानशब्दाः । २।१०

धर्मादेः शास्त्रगम्यत्वमुक्तमनुवदंस्तत्सहकारितया प्रत्यक्षानुमाने आह– प्रत्यक्षेति । प्रत्यक्षं साधुमनस्तुष्ट्यादि द्रव्यगुणब्राह्मण्यादिजात्यादिविषयकं वा, अनुमानं 'प्रपञ्चो मिथ्या, दृश्यत्वात् , शुक्तिरूप्यवत् ', ' सुखं धर्मैकनियतम् ' इत्यादि त्र्यवयवं पञ्चावयवं वा । शास्त्रं हितोपदेष्टृ वेदाख्यं विविधागमं शब्दत्वावच्छिन्नं बौद्धवाक्येतरपुराणादयो विविधागमाः सहकारिणो यस्य तत् । त्रयं प्रत्यक्षादि सुविदितं कार्यं मीमांसादिना प्रत्यक्षाभासशब्दाभासहेत्वाभासनिरासेन स्वस्वविषयप्रतिष्ठितं कार्यम् । धर्मशुद्धिमभीप्सता । धर्मपदं ब्रह्माप्युपलक्षयति, जगद्विधारकत्वात् । मच.

( ८ ) नैश्रेयसफलं कर्माऽऽह– प्रत्यक्षमनुमानं चेति । विविधागमं बहुकर्तृकम् । सुविदितम् अवगतदोषबलाबलम् । नन्द.

शास्त्रेण धर्मनिर्णये तर्कः सहायः

[1]आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥

---

† माच. ममुगतम् ।

§ शेषं ब्रकवत् ।

(१) मस्मृ. १२।१०६ ; विश्व. ३।१०० प्रथमचरणे (आर्षं धर्म( प्र )वचनं) ; मेधा. २।१०३ उत्त. ; अप. १।९ ; ब्रक. ३२ नेतरः (नापरः) ; मभा. ८।६ उत्त. ; चव. २३ णानुसं (ण तु सं) ; कुर. ३८ ; मिप्र. २।५७ ; मच. २।१० उत्त. (=) ; गप. १७ ; वीमि. १।९.

(१) ऋषयो ब्रह्मविदः, ‡ तेषामिदमिति आर्षं ब्रह्मस्वरूपप्रतिपत्त्यर्थम्। स्पष्टमन्यत्। विश्व. ३।१००

(२) ऋषिः वेदः, तत्र भवः आर्षः धर्मोपदेशः यो वैदिकः। यः तर्केण † अनुमानान्तरेण युक्त्या निरूपयति स धर्मं वेदेति पदयोजना। तर्क ऊहापोहान्तर्थ-सिद्धिः, इदमत्र युक्तमूहितुमिदमपोहितुम्। यदा(? या) सौर्ये कर्मणि निर्वापमन्त्रे 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामि' (शुसं. २।११) इति प्रकृतितः प्राप्ते मन्त्रेऽग्निपदस्यार्थासमवायादपोहः सूर्यपदस्य च क्षेपः। अयं तर्को न विरुध्यते वेदेन। योऽप्येवं मन्यते– 'सौर्ये कर्मण्यग्नेर्देवतायाः अभावादर्थेन च मन्त्राणां प्रयोज्यत्वादेकदेशोपशमे च मन्त्रत्वाभावात् कृत्स्नस्य वै मन्त्रस्य लोपः' (इति), एष वेदार्थविरोधी तर्कः। यदुच्चारणं मन्त्राणां प्रयोज्यत्वं मन्यते, अतश्चाविकृत एव मन्त्रः प्रयोक्तव्य इति, सोऽपि शास्त्रविरोधी तर्कः। न चायं विधिः, अयमर्थवादः; अस्यात्र तात्पर्यम्, ईदृश्युपेक्षा यदत्रैतच्च मीमांसातो ज्ञायतेऽतो धर्मशुद्ध्यर्थं मीमांसावेदनमेतेन चोदितम्। अन्ये तु व्याचक्षते– तर्केणेति तर्कप्रधाना ग्रन्था लौकिकप्रमाणनिरूपणपरा न्यायवैशेषि(कलोकायति ?)का उच्यन्ते। तत्र वेदविरुद्धानि बौद्धलोकायतिकनैर्ग्रन्थादीनि पर्युदस्यन्ते। तानि वेदविरुद्धानि। न तत्र प्रमाणं वेदः। कपिलकणादक्रियामविरथतानिग्रहान्तादिषु(?) हि शब्दः प्रमाणम्। तथा चाक्षपादसूत्रम्– 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' (१।१।३)। वैशेषिका अपि– 'तद्वचनादाम्नायस्य प्रामाण्यम्' (१।१।३) इत्याहुः। अतस्तानि शास्त्राणि श्रोतव्यानीति च। तथा च महाभारते भगवता कृष्णद्वैपायनेन दर्शितम्– 'श्रोत्रियस्येव ते राजन् मन्दकस्याल्पबुद्धयः (? स्याविपश्चितः)। अनुवाकहता बुद्धिर्नैषा सूक्ष्मार्थदर्शिनी॥' (भामु. ३।३५।१९)। अनुवाकहता इति तर्ककृतामप्युपपत्तिमाह केवलत्वादसत्तया। तथेदमपरमुत(? मुच्यते)– 'कश्चिन्न लोकायतिकान् ब्राह्मणान् § स्मार्तः सेवते। अनर्थकुशला ह्येते मूर्खाः पण्डितमानिनः॥' इति। अनेनासत्तर्कश्रवणं प्रतिषिद्धम्, पूर्वेण सत्तर्कानुज्ञानं तदेव तदिति। केचित् प्रामाण्यं वेदस्याऽऽहुरीश्वरप्रणेतृकतया। न च तस्यास्ति संभवः। न च तस्मिन् पक्षे वेदः प्रमाणम्, तस्य ह्यसावीश्वरः समयोपस्थापकः। एतेषु श्रूयमाणेषु अप्रामाणिको विपरीतोऽभिनिवेशो जायते। अतोऽसत्तर्का एव ते। न च वैदिकस्य वाक्यावबोधे कस्यचिदप्युपयुज्यन्ते। तथा च सांख्याः 'स ह्यविशुद्धिक्षयातिशययुक्तः' (सांका. २) इत्याहुः। अक्षपादैरपि तदप्रामाण्यं मन्यते। तथा च याज्ञिकपूर्वपक्षे (न्यासू. २।१।५७) निर्धारितं यदपि केनचित्पठितम्। कर्ममीमांसावेदान्तभाष्यमेवमभिधानं यथाश्रुतिं विज्ञायते, 'देवा अस्माल्लोकादमुं लोकमायंस्तानृषयोऽन्वीयुस्तान् मनुष्या अब्रुवन् कथमथो भविष्याम एभ्यः सर्वकर्म ऋषयः प्रायच्छन्। तस्माद्यत् ब्राह्मणोत्तमास्तर्कयन्त्यार्षमेव तद्भवति' इति श्रुतेः। एषा यथोक्ततर्कपदार्थानुवादिनी। मेधा.

‡ 'प्रथमान्तेन परिनिष्ठितविभक्त्यन्तेन वा समासः' इति प्रक्रियाद्वैविध्यात् प्रथमान्तेन विगृह्य 'आर्षम्' इति पुंलिङ्गद्वितीयान्तं व्याख्यातुमनूदितमिति बोध्यम्, विशेष्योपदेशशब्दस्य पुंलिङ्गत्वात्।

† अत्र भिन्नार्थकान्तरशब्देन समासो नोपपद्यते, वेदशास्त्रविरोधिनो भेदप्रतियोगिनोऽनुमानस्य पूर्वमनुक्तत्वात्। नापि बुद्धिस्थं तादृशानुमानमपेक्ष्य प्रयोगोपपत्तिः, अनुसंधानानुमानेन वेदशास्त्रविरोधिनोः प्रत्यक्षाशिष्टवाक्ययोरपि बाध्यत्वेनानुमानस्यैव केवलस्याबाध्यत्वात्। किंच, वेदशास्त्रविरोध्यनुमानप्रतियोगिकभेदस्य 'वेदशास्त्राविरोधिना' इति विशेषणेनैवार्थसिद्धत्वात् न तद्बोधार्थं शब्दापेक्षा। स्पष्टप्रतिपत्त्यर्थताऽपि बुद्धिभेदजनिका न मनोहरा।

§ ज्ञापुस्तके 'स्मार्त' निर्विसर्गः पाठो मुद्रितः। स तु कस्यचिदुपदेष्टुरुपदेश्यमुद्दिश्येयमुक्तिश्चेत्संबुद्ध्यन्तत्वेन सुयोजत्वात् वृत्तभङ्गदोषाभावाच्च वरम्। पुस्तकान्तरेषु त्रिषु सविसर्गः पाठः। तत्र वृत्तभङ्गो दोषः। तथापि पाठान्तराणि संगृह्णानैरपि ज्ञामहोदयैः सविसर्गं पाठान्तरं न संगृहीतमिति निर्विसर्गमुद्रणं संबुद्ध्यन्तत्वाभिप्रायेण बुद्ध्या कृतं वा प्रमादेन वेत्यस्ति संदेहः।

(३) ऋषिभिर्दृष्ट आर्षः वेदः, धर्मोपदेशः स्मृतिः, तौ संदिग्धव्याख्यातपुनरुक्ताशङ्कायां वेदस्मृत्यविरोधेन न्यायेन तयोर्विचारयति स धर्मं जानाति, न तु तर्कानभिज्ञः। गोरा.

(४) संशयकोटौ प्रामाणिकत्वारोपे कृते बाधकदर्शनाद्भवितव्यमत्र प्रमाणेनेति प्रत्ययस्तर्कः। स च वेदाविरोधी ग्राह्य इत्युक्तं तेनैव– 'आर्षं धर्मो...॥' इति। आर्षं स्मृतिपुराणादि। उपदेशो वेदः। तदविरोधिना वेदादि( विरोध )वर्जितेन तर्केण पूर्वोक्तस्वरूपेण अनुसंधानमुपपादना। अप. ११९

(५) आर्षं वैदिकम्। तर्केण मीमांसादिना। एतच्च प्रमाणमात्रोपलक्षणार्थम्। तथा चार्थापत्त्युपमानाभावानामपि धर्मप्रयोग इत्युपमायोगः( ? धर्मप्रमायामुपयोगः) कथितो भवति। ब्रक. ३२

(६) एतदेव स्पष्टयति– आर्षमिति। आर्षम् ऋषिप्रणीतं स्मृत्यादि धर्मोपदेशकत्वहेतुत्वम् (?)। वेद एव शास्त्रम्, तदविरोधिना। अनुसंधत्ते वेदेन सह संघटयति। मवि.

(७) ऋषिदृष्टत्वात् आर्षं वेदं धर्मोपदेशं च तन्मूलस्मृत्यादिकं यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति स धर्मं जानाति, न तु मीमांसानभिज्ञः। धर्मे करणं वेदः, मीमांसा चेतिकर्तव्यतास्थानीया। तदुक्तं भट्टवार्तिककृता– 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥'। † ममु.

(८) तर्केण मीमांसादिना। चम्र. २२

(९) आर्षम् ऋषिप्रणीतम्। तर्केण न्यायविमर्शेणेति केचित्। अन्ये प्रसङ्गरूपेणेति। पूजितविचारया मीमांसयेत्यपरे। भेदेऽभेदे वा सहकारित्वानुवादात् सर्वमिदमविरोधि। कल्पतरुकारस्तु प्रमाणमात्रोपकारकतयैव तर्कमवतारयति स्म, सर्वस्यैव प्रमाणस्य यथायथं तर्कसहकारित्वात्। प्रमाणविभागविवादस्त्वन्य एव। कृर. ३८

† गप., नन्द., भाच. ममुगतानि।

(१०) अनुसंधत्ते विचारयति, श्रुतिलिङ्गादिभिरुपक्रमादिना च संधत्ते। धर्मं ब्रह्म च वेद निश्चिनोति, नेतरः बहिर्मुखः इत्यन्वयः। § मच.

शास्त्रानुक्तेषु धर्मेषु शिष्टवचनं प्रमाणम्

**'अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।**
**यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥**

(१) ननु च– अनाम्नातेषु कः संदेहः? नो जाने नेह कथं स्यादिति चेत्, यतो नैव तेषां तत्। उच्यते– नेहेदृशमनाम्नातमभिप्रेतम्। किं तर्हि? यत्सामान्यत आम्नातम्, विशेषतस्तु न ज्ञायते। ननु च तत्रापि कः संदेहः? सामान्यस्य विशेषमात्रापेक्षा- (? क्षत्वा )येन केनचित्सिद्धं शास्त्रार्थम्, यथा 'अद्भिराचमेत्' इति कूप्यस्थावरनादेयादिभेदेन भिन्नास्त्वप्सु ताः काश्चिदुपादीयमानाः संपादयन्ति शास्त्रार्थम्। सत्यम्। यत्र प्रतिषेधश्रुतिः, न च वैशेषिकं प्रायश्चित्तमुपदिष्टम्, तत्रेदमुपदिश्यते। यदा शूद्रोच्छिष्टं किंचित्पात्रं तदशुद्धं तत्संपर्कादशुचि तस्मिन्नकृते शुद्धे यदि केनचिद्भुक्तं स्यात्तदा किं प्रायश्चित्तमिति संदेहः। स हि जिज्ञासा च निश्चयावसानेन च प्रत्यक्षादिषु सम्यङ्निधिः स्त्रीशूद्रोच्छिष्टमेवेत्यदत्तं भवितुमर्हति। न हि तच्छूद्रस्योच्छिष्टमिति शक्यं वक्तुम्। किं तेन तदुच्छिष्टमिति। एवमादौ संदेहे तु शिष्टवचनं प्रमाणीकर्तव्यम्। यथा ये शूद्रादयो विप्रांशास्तेषामयं धर्मसंदेहः। शिष्टोपदिष्टमेव युक्तं कर्तुम्। ततश्च न्यूनाधिकभावेन या कृता कल्पना स एव तत्र धर्मः। तेषामपि तथोपदिशतां न दोषः। यत आह– स धर्मः स्यादशङ्कित इति। अधर्मं ब्रुवतो दोषः, धर्मे तु का विचिकित्सा? तथा गोत्रप्रवर-

§ शेषं ममुगतम्।

(१) मस्मृ. १२।१०८; अप. ११९; ब्रक. ३५ अनाम्नातेषु (अनाज्ञातेषु); स्मृच. ११७; कृर. ४०; प्रपा. २ धर्मेषु ( वेदेषु ); गप. १७; वीमि. ११९.

संदेहे कथंचित्स्मृतिविच्छेदे ब्राह्मणवचनात् गोत्रप्रवर-सिद्धिः । तत्र च प्रवरसंदेहे 'सर्वेषां मानवे( ति ) संशये' ( आश्रौ. १।१।३ ) इत्युक्तम् । गोत्रसंशये तर्हि भविष्यति । तत्र च गोत्रसंशयाभावे कुतः प्रवरसंशयः ? प्रतिगोत्रं प्रवराणां भेदेन पठितत्वात् । उपपद्यत एव-मेतद्गोत्रनामधेयम् । प्रवराश्च भिन्ना नाना गोत्राणि । तत्र सत्यपि प्रवरनिश्चये गोत्रसंदेह उपपद्यते । मेधा.

( २ ) एवं रहस्याभिधानं प्रतिज्ञाय सकलकर्मानभि-धानेन प्रतिज्ञाहान्याशङ्कायामाह– अनाम्नातेष्विति । सग्रन्थकाग्रन्थकत्वेनोभयरूपत्वात् स्मरणस्यानुपदिष्टेषु धर्मेषु उपदिष्टेष्वपि चानुक्तेतिकर्तव्यताकेषु 'किं ते कर्तव्याः, उत न ?' इति, 'कथं वा कर्तव्याः ?' इति यदि संशयः स्यात्तदा यं वक्ष्यमाणाः शिष्टाः ब्राह्मणा ब्रूयुः स निश्चितो धर्मः स्यात् । गोरा.

( ३ ) अनाम्नातेषु वाक्यपाठादेवानिर्णीयमाने-ष्वित्यर्थः । अप. ११९

( ४ ) अनाज्ञाते अनवगते संदिग्धे वा । व्रक. ३५

( ५ ) इदानीं मनूक्तस्य ग्रन्थस्य सतत्त्वं रहस्यं विगूढं तदुदीक्षते । अनाम्नातेषु विशेषत इति । चेद्भवेत् संशयः । शिष्टाः ब्राह्मणाः परिषद्भूताः । मवि.

( ६ ) यत्र मनुस्मृत्यादयो न सन्ति तत्र परिषद्वचनं प्रमाणमित्याह मनुः– अनाम्नातेष्विति । धर्मेषु धर्म-प्रमाणेष्वित्यर्थः । ते च शिष्टाः दशावराः । तदाह गौतमः– 'अनाम्नाते दशावरैः शिष्टैः ऊहवद्भिः अलुब्धैः प्रशस्तं कार्यम्' ( गौध. २८।४९ ) इति । स्मृच. ११७

(७) अस्य शास्त्रस्यासमस्तधर्माभिधानमाशङ्क्या-नया सामान्योक्त्या समग्रधर्मोपदेशकत्वं बोधयति । सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्तव्यं स्यादिति यदि संशयो भवेत्तदा यं धर्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः स तत्र निश्चितो धर्मः स्यात् । ममु.

( ८ ) ननु वेदार्थस्यातीव दुरवगमत्वात्तेनास्पृष्टेषु धर्मेषु का गतिस्तत्राऽऽह– अनाम्नातेष्विति । ब्रूयुः 'अयं धर्मः' इति । सः अशङ्कितः ‡ फलाजनकत्वेन शङ्का-रहितः । मच.

( ९ ) अनाम्नातेषु धर्मेषु अज्ञा(?ज्ञा)तेषु सत्सु कथं स्यादिति भवेत्, तत्राऽऽह– यं धर्मं शिष्टा ब्रूयुः स धर्मः अशङ्कितः स्यात् । भाच.

शिष्टलक्षणम्

'धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥

( १ ) शिष्टलक्षणमनेन कथ्यते । ननु च 'अर्थ-कामेष्वसक्तानाम्' इत्यत्रोक्तमेव शिष्टलक्षणम् । अन्यो-ऽपि तस्य तत्रार्थे आशङ्कितः, अतो न तस्य लक्षणपरतैव । यच्च वशिष्ठेनोक्तम् 'शिष्टः पुनर-कामात्मा' इति तत्र विद्वत्तायाः (अ)श्रुतत्वात् ( । ?) यत्र( ? ) (अ)परिपूर्णत्वात्( । ) अधिगतोऽर्थतश्च विदितः । स सपरिबृंहणः । तथा च भगवान् व्यासः– 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।' इति । स्मृतयोऽ-प्येवं गृहीतार्था भवन्ति । ब्राह्मणग्रहणमनुवादः, तेषा-मेव धर्मप्रवचनाधिकारात् । श्रुतिप्रत्यक्षहेतवः । प्रत्यक्षं हेतवश्च प्रत्यक्षहेतवः । हेतुशब्देन प्रत्यक्षादन्यप्रमाणा-न्युच्यते । श्रुतिः प्रत्यक्षो हेतुश्च( ? प्रत्यक्षहेतवः ) येषां ते श्रुतिप्रत्यक्षहेतवः । एतदुक्तं भवति– यथा प्रत्यक्षं निर्विवादं प्रमाणमेव, तादृशीं श्रुतिं मन्यन्ते; यान्यपि हेतूत्थानि प्रमाणानि तेषु (न) विश्वसन्ति, श्रुतिमेव तर्कं मन्यन्ते, हेतुशास्त्राश्रयणेन चेदं( ? चेमां ) न ( ? ना-) प्रमाणीकुर्वन्ति । अथवा श्रुतिः प्रत्यक्षश्रुतिः प्रत्यक्षशब्दः श्रौते प्रत्यये प्रत्यक्षतुल्यत्वात्प्रयुक्तः, सा च हेतुः धर्मा-धर्मपरिज्ञाने कारणं येषां त एवमुच्यन्ते । मेधा.

---

‡ फलाजनकत्वेन या शङ्का तद्रहित इत्येकदेशान्वयेन ग्रन्थो योज्यः ।

(१) मस्मृ. १२।१०९ ; अप. १।५३ पृ. ८२ धर्मेणा (न्यायेना) (=) ; स्मृच. ११६ ; गप. १७ णाधिगतो ( णाराधितो ).

( २ ) ब्रह्मचर्योक्तेतिकर्तव्यतया यैः अङ्गमीमांसापुराणाद्युपबृंहकसहितो वेदोऽधीतस्ते ब्राह्मणा वेदगोचरपदार्थोपदेशकारणभूताः शिष्टा विज्ञेयाः । ¶ गोरा.

( ३ ) शिष्टानेव लक्षयति– धर्मेणेति । परिबृंहणम् अङ्गधर्मशास्त्रपुराणादि । श्रुतेः वेदस्य प्रत्यक्षं श्रोत्रप्रत्यक्षं तद्धेतवः अध्ययनसंप्रदायकर्तारः । मवि.

( ४ ) श्रुतिप्रत्यक्षहेतवः श्रुतिप्रत्यक्षानुमानानि( ? ) हेतवः प्रमाणत्वेन धर्मादौ वर्तन्ते येषां शिष्टानां ते । श्रुतेः प्रत्यक्षकरणे हेतवः गर्भाधानादिसंस्कारा वा (येषां) ते तथोक्ताः । $ मच.

( ५ ) के पुनः शिष्टा इत्यपेक्षायामाह– धर्मेणेति । सपरिबृंहणः इतिहासपुराणसहितः । येषां श्रवणं प्रत्यक्षं च धर्मज्ञानवचनयोर्हेतुः ( ते ) श्रुतिप्रत्यक्षहेतवः । नन्द.

( ६ ) यैः धर्मेण धर्मशास्त्रपुराणादिना वेदः अधिगतः प्राप्तः , सपरिबृंहणः शिक्षाकल्पादिषडङ्गयुक्तः , ते शिष्टा ज्ञेयाः । भाच.

धर्मपरिषद्

[1]**दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।**
**त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ॥**

( १ ) दश अवरे यस्याः दशावरा । यदि बहवो न संनिधीयन्ते दशावश्यं संनिधातव्याः । तदभावे त्र्यवरा । वृत्तस्थेति । यदुक्तम् ‘ अर्थकामेष्वसक्तानाम् ’ इति, तस्यैवायमनुवादः । न चैषा पुरुषसंख्या, अपि तु गुणसंख्या । तथा च वक्ष्यति– ‘ एकोऽपि वेदविद् ’ इति । एकस्य यतो गुणसमूहस्य बाहुल्येनासंभवात् पुरुषप्रधानतया संख्याया निर्देशः कृतः । † मेधा.

( २ ) यद्युत्पन्नयूनास्तदा( ? ) दश वक्ष्यमाणा विद्वांसो यस्यां परिषदि, तदभावे त्रयो वा यस्यां साध्वाचाराः । यं धर्मं निश्चिनुयात्तद्धर्मत्वेन प्रतिपाद्यम् । गोरा.

( ३ ) दशसंख्या अत्यन्तापकृष्टा यत्र सा दशावरा । वा इति त्र्यवरापेक्षया विकल्पः । एवं त्र्यवरा वृत्तस्था स्वयमपि धर्मचारिणी कुर्यात् ( ? ) । मवि.

( ४ ) परिकल्पयेदिति । अनुष्ठानक्षमनिर्णयविषयं कुर्यात् । निप्र. १।६९

( ५ ) उक्तब्राह्मणानां समूहः परिषदिति ज्ञापयन् ब्राह्मणसंख्यां विकल्पेनाऽऽह– दशेति । दश ब्राह्मणा अवरा न्यूनसंख्यावच्छेदका यस्यां सा तथा । एवं त्र्यवराऽपि । वृत्तस्था, वृत्तं जीवनं तद्युक्ता, वृत्तिकर्षणाल्लोभादिना धर्मच्युतेः संभाव्यमानत्वात् । न विचालयेत् अप्रमाणतया फलाहेतुशङ्कया वा । मच.

( ६ ) दशावरा दशभ्यः अवरा न्यूना सा परिषत् यं धर्मं परिकल्पयेत् , च पुनः त्र्यवरा त्रिभ्यः अवरा वृत्तस्था, स्व( ? तं )धर्मं न विचालयेत् । भाच.

[1]**त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः ।**
**त्रयश्चाऽऽश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥**

( १ ) तानिदानीं परिषत्त्वहेतुगुणान् दर्शयति । पुरुषप्रधानेऽपि निर्देशे गुणपरतैव विज्ञेया । यः त्रैविद्यः वेदत्रयस्याध्येता तदर्थस्य च वेदिता । ( हैतुकः ) अनुमानादिकुशलः । तर्की, अयमूहापोहबुद्धियुक्तः । ननु च नैवंविदो वेदार्थवित्त्वमेव संभवतीत्युक्तम् । सत्यम् । परोपदेशादपि कस्यचिद्याचनावती वेदार्थमात्रा संभवत्यपि । अतश्च प्रत्ययेन विना वेदार्थग्रहणार्थहेतुकेन भावीत्युक्तम्( ? ) । एतेन नैरुक्तो व्याख्यातः । धर्मपाठकः मन्वादिस्मृतिशास्त्राणामध्येता । त्रयश्चाऽऽश्रमिणो ह्येते ह्यनुष्ठानपराः कुशलतरा धर्मेषु भवन्ति । पूर्वे ब्रह्मचारी, गृहस्थः , भिक्षुरित्येके । तस्य हि ग्रामप्रवेशो नानि( ? न नि )षिद्धः , गौतमेन चेयमानुपूर्वी पठिता– ‘ ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः ’ इति । अन्ये

¶ स्मृच. गोरागतम् । ममु. गोरावत् ।

$ शेषं गोरागतम् ।

† व्रक. , ममु. मेधागतम् ।

(१) मस्मृ. १२।११० ; ब्रक. ३५ ; निप्र. १।६९ स्था त ( स्यास्तं ) ; गप. १७ त्र्यवरा वाऽपि ( बहुभावाऽपि ).

(१) मस्मृ. १२।१११ ; अप. १।९ परिषत्स्याद् (पर्षदेषा द) ; ब्रक. ३५-३६ हैतुकस्तर्की ( हेतुकस्तर्कः ) परिषत्स्याद् ( पर्षत्स्यात्सा द ) मनुपराशरौ ; निप्र. १।६९ अपवत् ; मच. हैतुक ( हेतुक ) ; वीमि. १।९ ; नन्द. मचवत् .

स्त्वाहुः— § हिंसानुज्ञा नास्तीति कथमसौ धर्मां(? अधर्म) भवेत्? तस्मात्तापससकाशमन्यैः सह गन्तव्यम्। मेधा.

(२) वेदत्रयशाखाध्येतारः, श्रुतिस्मृत्यविरुद्धन्यायशास्त्रवित्, ऊहापोहार्थबुद्ध्युपेतः, निरुक्तज्ञः, मानवादिधर्माध्येता, ब्रह्मचारिगृहस्थवानप्रस्थाः इत्येषा दशावरा परिषत्स्यात्। गोरा.

(३) हेतुकः अनुमानज्ञः। तर्कोऽस्यास्तीति तर्की। संशयकोटौ प्रामाणिकत्वारोपे कृते बाधकदर्शनाद्भवितव्यमत्र प्रमाणेनेति प्रत्ययस्तर्कः। स च वेदाविरोधी ग्राह्य इत्युक्तं तेनैव, 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥' इति। पूर्वे गृहस्थादयः वृद्धाः(? वृद्धत्वात्)। वृद्धत्वोपेता हि †दशावरेति दशभ्यो न न्यूना। $ अप. १।९

(४) हेतुकः अत्र वेदाविरुद्धानुमानव्यवहारी। तर्कः वक्ष्यमाणो ‡ विकल्पः। व्रक. ३६

(५) त्रैविद्य इत्येकोपाध्यपेक्षमेकवचनम्, ऋग्यजुःसामार्थशास्त्रज्ञ इत्यन्वयः। हेतुकः अनुमानज्ञः। तर्की मीमांसावाक्यार्थानुकूलतर्कज्ञः। नैरुक्तः पदार्थनिरुक्तिकुशलः। धर्मं भणयति धर्मभाणकः स्मृतिपुराणेतिहासज्ञः। त्रय आश्रमिणो व्रतिगृहस्थवनस्थाः पूर्वे परिव्राजकादन्ये। एतदभावे च त्र्यवरा ग्राह्या। ¶ मवि.

(६) (तर्की) मीमांसात्मकतर्कवित्। * ममु.

(७) परिषद्द्वयं क्रमेण विवृणोति— त्रैविद्य इति द्वाभ्याम्। त्रैविद्यः ऋग्यजुःसामानीति त्रयी विद्याऽस्तीति वेदत्रयशाखाध्येतारः। हेतुकः तार्किकः, हेतुः पञ्चावयवानुमानम्, तेनैव व्यवहरति। तर्की मीमांसकः। नैरुक्तः, निरुक्तं वेदाङ्गम्, तेन व्यवहरति। तदुक्तम्— 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्' इति। निरुक्तपदं षण्णामुपलक्षणम्। धर्मपाठकः मन्वादिधर्मशास्त्राध्यायी। आश्रमिणः पूर्वे ब्रह्मचारी गृही वानप्रस्थश्चैकैकशः। मच.

(८) त्रैविद्यः त्रयीवेत्ता। हेतुकः अनुमानज्ञः। तर्की सत्तर्कक्षुण्णमतिः। तथा च मनुः— 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥' (मस्मृ. १२।१०६) इति। नैरुक्तो निरुक्तज्ञः। धर्मपाठकः धर्मशास्त्राभिज्ञः प्रायश्चित्तादिनिर्देष्टा, यमनुवादक इति लोका वदन्ति। पठन्ति च— 'वेदविद्याव्रतस्नातः सत्यसंधो जितेन्द्रियः। अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः॥'। पूर्वे ब्रह्मचारिगृहस्थवानप्रस्थाः एते च कल्प्याः कार्यलाघवगौरवयोः गुणप्रकर्षनिष्कर्षयोश्च तारतम्येन व्यवस्थाप्याः। सर्वं चेदं प्रदर्शनार्थम्। यावद्भिर्यत्र धर्मनिरूपणं संभवति तावद्भिस्तत्र परिषत्। अत एव यमः— 'एको द्वौ वा त्रयो वाऽपि यद्ब्रूयुर्धर्मपाठकाः। स धर्म इति विज्ञेयो नेतरेषां सहस्रशः॥'। वीमि. १।९

(९) के पुनस्ते दश? तानाह— त्रैविद्यो हेतुकस्तर्कीति। त्रिवेदी त्रिविद्या, यस्तामधीते वेत्ति वेति स त्रैविद्यः ऋग्वेदविद्यजुर्वेदवित्सामवेदविच्चेति त्रयः इत्यर्थः। हेतुकः हेतुभिरर्थनिर्णये कुशलः। तर्की ऊहापोहसमर्थः। नैरुक्तः निरुक्तवित्। धर्मपाठकः धर्मशास्त्राध्यायी। आश्रमिण इति प्रशंसार्थे प्रत्ययः। ब्रह्मचर्यं येन सम्यगनुष्ठितम्, येन गार्हस्थ्यम्, येन वानप्रस्थम्, ते त्रयोऽपीति एते दशपुरुषा दशावरा परिषदिति। नन्द.

**'ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च।**
**त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये॥**

(१) मस्मृ. १२।११२; अप. १।९ त्र्यवरा (अवरा); स्मृच. १।८; दीक. १।९; वीमि. १।९.

§ अत्र हिंसाशब्दस्थाने ग्रामप्रवेशार्थकेन केनचिच्छब्देन भाव्यम्।

† अत्रत्यो ग्रन्थस्त्रुटित इति भाति।

$ निप्र. अपगतम्।

‡ विकल्पशब्दार्थबोधार्थमस्मिन्नेव प्रकरणे 'धर्मस्य पर्षद०' इत्यङ्गिरोवचनं द्रष्टव्यम्।

¶ भाच. मविगतम्।

* शेषं गोरावत्।

( १ ) निरुक्तव्याकरणमीमांसाभिर्वेदार्थो ज्ञायते । ते च सर्वे साधारणाः । न हि तत्रैकस्य वेदस्यार्थो ज्ञायते नान्यस्य नित्यमयं प्रकारोऽस्ति । अथ ऋग्वेदादीत्यादि कथं भेदोपपत्तिः ? तथा तत्र गृह्यसूत्रभेदेन चेदमुक्तम् । मेधा.

( २ ) ऋग्यजुःसामवेदानां येऽर्थज्ञाः तु यस्माद्धर्मसंदेहव्युदासार्थं त्र्यवरा परिषद् बोद्धव्या । गोरा.

( ३ ) तानाह– ऋग्वेदविदिति । तद्वित् तदर्थवित् । मवि.

( ४ ) ऋग्यजुःसामवेदशाखानां येऽध्येतारस्तदर्थज्ञाश्च त्रयः, सा धर्मसंदेहनिरासार्थं त्र्यवरा परिषद्बोद्धव्या । ममु.

( ५ ) त्र्यवरा त्रयः ऋग्वेदादिविदः अवराः येषु धर्मनिर्णयकर्तृषु, धर्मसंशयनिर्णये कर्तव्ये परिषत् ज्ञेया । मच.

( ६ ) त्रयः अवराः चरमः पक्षः यस्यां सा । एतेन संख्यान्तरमपि सूचितम् । वीमि. १।९

( ७ ) ऋग्यजुःसामवेदवित् । भाच.

**$'एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।**
**स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥**

( १ ) व्यवस्येत् निश्चित्य कथयेदित्यर्थः । न अज्ञानां मूर्खाणाम् अयुतैरप्युदितः । उत्तरः प्रागेव व्याख्यायते । मेधा.

( २ ) तदसंभवेऽपि– एक इति । एकोऽपि वेदार्थज्ञो यं धर्मं निश्चिनुयात् स प्रकृष्टो बोद्धव्यः, न वेदानभिज्ञानामयुतैरप्युक्तः । अयुतं दशसहस्राणि । † गोरा.

( ३ ) वेदत्रयार्थवित् । विचक्षणः तर्ककुशलः । न तु अज्ञानां वेदद्देत्वादिज्ञानशून्यानाम् । मवि.

( ४ ) वेदविच्छब्दोऽयं वेदार्थधर्मज्ञपरः । एतच्च श्रेष्ठोपलक्षणम् । स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोऽपि गुरुपरम्परोपदेशविच्च ज्ञेयः । तथा– ' केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः । युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥ ' । तेन बहुस्मृतिज्ञोऽपि यदि सम्यक् प्रायश्चित्तादिधर्मं जानाति तदा तेनाप्येकेन धर्म उक्तः प्रकृष्टो धर्मो ज्ञेयः । अत एव यमः– ' एको द्वौ वा त्रयो वाऽपि यद्ब्रूयुर्धर्मपाठकाः । स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥ ' । ¶ ममु.

( ५ ) एकोऽपि वेदत्रयार्थवित् यं धर्मं व्यवस्येत् विचालयेत् ( ? ) स परो धर्मः । अज्ञानामयुतैः यो धर्म उदितः स न कार्यः । भाच.

**'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥**

( १ ) अव्रतानामिति प्रागुक्त एवार्थो व्यतिरेकद्वारेण कथ्यते । व्रतिनो वेदाध्यायिनः यं निश्चयं ब्रुवते तत्र न विचिकित्सितव्यं विद्वद्भिरविद्वद्भिर्वा । अत एव न लघुपरिकल्पो गुणतुल्यवद्विकल्प्यते । मेधा.

( २ ) सावित्र्यादिब्रह्मचारिव्रतरहितानां वेदाध्ययनशून्यानां ब्राह्मणजातिमात्रोपजीविनां सहस्राणामेकीभूतानां परिषत्त्वं नास्ति, धर्मनिर्णयासामर्थ्यात् । ‡ गोरा.

**'यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः ।**
**तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥**

---

$ अस्य वचनस्य बौविव्याख्यानमस्मिन्नेव प्रकरणे ( वका. पृ. ५४ ) 'पञ्च वा स्युस्त्रयो वा ' इति बौधायनवचनव्याख्याने द्रष्टव्यम् ।

† मच. गोरागतम् ।

(१) मस्मृ. १२।११३ ; विद्व. १।९ पू. ( = ) ; समु. १०० वेदवि (धर्मवि) व्यवस्येद्द्विजोत्तमः ( व्याचष्टे समाहितः ) नामुदितोऽयुतैः ( न्मधु ते न तु ? ) ; मेधा.

¶ शेषं गोरावत् ।

‡ ममु. गोरावत् । मवि., मच., भाच. गोरागतम् ।

२१६ पृ. ६७ यं व्य ( यो व्य ) पू. ; मवि. द्विजोत्तमः ( विचक्षणः ) ; गप. १७ मविवत् ; बौवि. १।१।९ मविवत्, पू. ( = ).

(१) मस्मृ. १२।११४ ; ब्रक. ४० मनुवसिष्ठयमबौधायनपैठीनसयः .

(२) मस्मृ. १२।११५ ; ब्रक. ४० तद्व ( तान्व ) मनुवसिष्ठयमबौधायनाः .

(१) वक्तॄणामविदुषां दोषकथनम्। मेधा.

(२) ये मूढा विवेकाभावात् तमोरूपा धर्मानभिज्ञाः सन्तः पापकारिणो यत्प्रायश्चित्तमुपदिशन्ति तत्प्रायश्चित्तनिमित्तभूतं पापं शतगुणं भूत्वा तेषां प्रायश्चित्तदातॄणां भवति। गोरा.

(३) तमः विपरीतज्ञानम् उद्भूताः तत्प्राप्ताः। मूर्खाः अनधीतवेदाः। अतद्विदः धर्ममजानन्तः। तत् धर्माभासकरणे यथोक्तधर्मपरित्यागेन यत्पापं तत् शतधा शतप्रकारं शतगुणमित्यर्थः। तद्वक्तॄन् तद्धर्मान् वक्तॄन् तानेव मूर्खान्। † मवि.

(४) तमोगुणबहुला मूर्खाः धर्मप्रमाणवेदार्थानभिज्ञाः अत एव प्रश्नविषयधर्माविदः प्रायश्चित्तादिधर्मं यं पुरुषं प्रत्युपदिशन्ति तदीयं पापं शतगुणं भूत्वा वाचकान् बहून् भजेत्। ममु.

(५) न केवलं परिषत्त्वाभावः, अपि तु तन्निर्णीतमनर्थावहमित्याह– यमिति। तमोभूताः तमसा अविवेकेन अभिभूताः। तत्पापं कर्तुः पापं शतगुणं भूत्वा तद्वक्तॄन् धर्मनिर्णयकर्तॄन् अनुगच्छति। फलायेति शेषः। मच.

## याज्ञवल्क्यः

साङ्गवेदादीनि चतुर्दश विद्यास्थानानि पुराणसहितानि धर्मनिर्णयोपकारकाणि, टीकासु पाञ्चरात्राद्यागमप्रामाण्याप्रामाण्यविचारः

**'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥**

(१) पुराणादीनां धर्मोपयोगित्वं प्रसिद्धम्। न्यायमीमांसा इति चैकं विद्यास्थानम्। पुराणम् इति च इतिहासपुराणयोर्ग्रहणम्। धर्मशास्त्रं स्मृतिः। अङ्गानि षट् शिक्षादीनि। वेदाः चत्वारः। एवं चतुर्दश। अन्ये तु न्यायमाक्षपादादिकं वर्णयन्ति। तन्मतेनेतिहासपुराणयोरैक्यम्। मिश्रण(?मिश्रित)त्ववचनाच्च वेदोपकरणत्वेन पुराणादीनां वेदस्वातन्त्र्यमभिहितम्। विद्यानां धर्मस्येति द्वे षष्ठ्यौ विद्याशब्दस्य धर्मपर्यायान्वयकथनार्थे। चतुर्दश इति शाक्यादिग्रन्थव्यावृत्त्यर्थम्। तुशब्दोऽवधारणार्थः। चतुर्दशैव, नाम्यधिकानीत्यर्थः। नन्वेवं सति अशेषस्मृत्यात्मकमेकं धर्मशास्त्रम्, अन्यथा संख्या–अयोगात्। नैष दोषः, प्रतिस्मरणावसायित्वेऽपि धर्मशास्त्रस्य समुदायालम्बनत्वेनैकवचनोपपत्तेः, वनवत्। विश्व.

(२) 'शौचाचारांश्च शिक्षयेत्' इत्याचार्यस्य धर्मशास्त्राध्यापनविधिः। शिष्येण तदध्ययनं कर्तव्यमिति कुतोऽवगम्यते? इत्यत आह– पुराणेति। पुराणं ब्राह्मादि। न्यायः तर्कविद्या। मीमांसा वेदवाक्यविचारः। धर्मशास्त्रं मानवादि। अङ्गानि व्याकरणादीनि षट्। एतैरुपेताश्चत्वारो वेदाः। विद्याः पुरुषार्थज्ञानानि। तासां स्थानानि च चतुर्दश, धर्मस्य च चतुर्दश स्थानानि हेतवः। एतानि च त्रैवर्णिकैरध्येतव्यानि, तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम्। तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि, क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय। तथा च शङ्खेन विद्यास्थानान्युपक्रम्योक्तम्– 'एतानि ब्राह्मणोऽधिकुरुते। स च वृत्तिं दर्शयतीतरेषाम्' इति। मनुरपि द्विजातीनां धर्मशास्त्राध्ययनेऽधिकारः, ब्राह्मणस्य प्रवचने, नान्यस्येति दर्शयति– 'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कर्हिचित्॥ (मस्मृ. २।१६) विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः। शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचित्॥' (मस्मृ. १।१०३) इति। ‡ मिता.

[ तर्केति। अनेनोभयोः संग्रहः। वेदेति। अनेनापि तथा। एतैरिति। अङ्गान्तद्वन्द्वेन तत्पुरुष इति भावः। पुरुषार्थज्ञानेति। तत्साधनज्ञानेत्यर्थः। क्वचित्तथैव पाठः। उभयत्र स्थानपदार्थमाह– हेतव इति। बाल. ]

---

† भाच. मविगतम्।

(१) यास्मृ. १।३; विश्व. च (तु); मिता.; अप.; व्यक. २१; स्मृच. १।५; चव्र. १८ णन्याय (णं न्याय); कर. २७; स्मृकौ. ४६; निप्र. १।१७; गप. १३; मुक्ता. ६; सूक. २५; वीमि.; पप्र. १०.

‡ मुक्ता. मितागतम्।

( ३ ) ज्ञानपूर्वमनुष्ठानं धर्मस्येति धर्मज्ञानोपायांस्तावदाह– पुराणेति । पुराणं ब्र( ? ब्रा )ह्मादि । न्यायः सतर्कः । मीमांसा वेदवाक्यविचारः । धर्मशास्त्रं मन्वादिस्मृतिः । अङ्गैः षड्भिर्व्याकरणादिभिः सहिताश्चत्वारो वेदाः ऋग्वेदादयः । एतानि चतुर्दश ज्ञानानां निमित्तानि धर्मस्य च ज्ञानद्वारेण, एतदुत्पन्नस्यैव ज्ञानस्य धर्महेतुत्वात् । ततश्च प्रयोगपद्धत्यादिसमुत्थितं ज्ञानं न धर्महेतुरिति सिद्धम् । 'एवं चतुर्दशैतानि विद्यास्थानानि सन्त्यथ । वेदान्तः पञ्चदशकं विद्या षोडशिका भवेत् ॥' इति ब्रह्मपुराणे यद्वेदान्तविद्ययोर्ग्रहणं तन्मोक्षसाधनविद्यास्थानाभिप्रायमितीहानुपयोगित्वान्नोक्तम् । वेदान्तः शारीरकम् । विद्या बृहदारण्यकादिरहस्यम् । यत्तु विष्णुपुराणम्– 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या अष्टादशैव ताः ॥', तत्केवलं विद्यास्थानत्वाभिप्रायम् , न धर्मस्थानत्वाभिप्रायम् , आयुर्वेदादीनां च धर्मस्थानत्वाभावात् । चतुर्दशग्रहणादृतेऽथर्ववेदसंग्रहो न स्यात् । † अप.

( ४ ) विद्यानां पुरुषार्थज्ञानानां धर्मस्य च स्थानानि व्यवस्थापकानि बोधकत्वेन । $ ब्रक. २२

( ५ ) पुराणादीनां वेदोपबृंहकत्वं दर्शयति– पुराणेति । अङ्गानि निरुक्तव्याकरणादीनि षडङ्गानि । धर्मशास्त्राणि स्मृतयः । मीमांसा वेदान्तभाट्टप्राभाकरशास्त्राणि । न्यायः तर्कः । वेदान्त एव सांख्ययोगयोरनुप्रवेशः , ज्ञानोपयोगित्वात्तयोः । स्मृकौ. ४६

( ६ ) यद्विष्णुपुराणवचनम्– 'अङ्गानि वेदाश्चत्वारो... विद्या ह्यष्टादशैव ताः ॥' ( विष्णु. ३।६।२६–२७ ) इति, तत् आयुर्वेदादिचतुष्टयमुपवेदत्वेन वेदान्तर्भूतम् । § दीक.

( ७ ) यत्र 'अत्र स्मृतिः' 'अत्र श्लोकः' इति प्रामाणिकानां लिखनम् , तदपि प्रमाणम् , 'श्लोकाः सूत्राणि' ( बृउ. २।४।१० ) इति काण्वपाठात् । महाभाष्ये च 'भ्राजा नाम श्लोकाः' इति प्रमाणमुपन्यस्य 'किंनु खलु भोः श्लोकाः अपि प्रमाणम् ?' इति पृष्ट्वा महाजनपरिग्रहात् प्रामाण्यं प्रतिपादितम् । यत्तु षट्त्रिंशन्मतादि तत्कैश्चिदेव परिग्रहात् विगानाच्चाप्रमाणमिति लक्ष्मीधरः । विज्ञानेश्वरादियोगीश्वरलिखनात्तु तद्वाक्यान्यप्याद्रियन्ते । तत्रास्मदादिप्रवृत्तावात्मतुष्टिरेव प्रमाणम् । § निप्र. १।२२

( ८ ) अथ धर्मस्य प्रयोजनहेतून् प्राधान्यगुणत्वाभ्यामापाततः संमुग्धानेव प्रमितिप्रयोजकांश्च प्रदर्शयन् प्रकृतशास्त्रस्य पूर्वकटाक्षितधर्मप्रयोजकताप्रकटनेन प्राक्सूचितं प्रयोजनसंबन्धं स्फुटयति– पुराणेति । पुराणानि– 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥' इति लक्षितानि, 'ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥ आग्नेयमष्टमं चैव भविष्यं नवमं तथा । दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥ वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् । चतुर्दशं वामनकं कौर्मं पञ्चदशं स्मृतम् ॥ मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥' इति विष्णुपुराणे दर्शितानि । कौर्मे तु विष्णुपुराणमनन्तर्भाव्य वायुपुराणमुपादायाष्टादशत्वमुक्तम् , तदनयोर्विकल्प एव । भागवतं प्रसिद्धमेव, 'अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनैव यदीच्छसि भवक्षयम् ॥' इति वचनात् , 'यत्रोपक्रम्य गायत्रीमुच्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥' इति लक्षणस्य तत्रैव संभवाच्च, प्रसिद्धे गायत्र्योपक्रमस्य व्याख्यातृभिर्दर्शितत्वात्पुराणान्तरे तल्लेशस्याप्यभावादिति निपुणमालोचनीयम् । अत्र पुराणशब्देनोपपुराणादीन्यप्युपलक्ष्यन्ते । तत्र कूर्मपुराणम्– 'अन्यान्यपि पुराणानि मुनिभिः कथितानि तु । आद्यं सनत्कुमारोक्तं नारसिंहमतः

† स्मृच. अपगतम् ।

$ कृर. ब्रकवत् ।

§ शेषम् अपगतम् ।

§ शेषम् अपगतम् । गप. निप्रगतम् ।

परम् ॥ तृतीयं पाद्म( ? स्कान्द )मुद्दिष्टं कुमारेण सुभाषितम् । चतुर्थं शिवधर्माख्यं साक्षान्नन्दिप्रवर्तितम् ॥ दुर्वाससोक्तमाश्चर्यं( ? ) नारदोक्तमतः परम् । कापिलं वामनं चैव तथैवोशनसोदितम् ॥ ब्रह्माण्डसंज्ञकं चैव कालिकासंज्ञमेव च । माहेश्वरं तथा साम्बं सौरधर्मानुसंश्रयम् ॥ पराशरोक्तमपरं मारीचं भार्गवाह्वयम् । इदं च पञ्चदशमं पुराणं कौर्ममुच्यते । पद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् । तदष्टादशसाहस्रं नारसिंहमिहोच्यते ॥ नन्दाया यत्र माहात्म्यं कार्तिकेयेन वर्ण्यते । नन्दापुराणं तल्लोके नन्दाख्यमिति कीर्त्यते ॥ यत्तु साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् । तत्प्रोच्यते पुनर्लोके साम्बमेव मुनिव्रताः । एवमादित्यसंज्ञा( ? ज्ञं ) च तत्रैव परिगण्यते ॥ अष्टादशभ्यस्तु पृथक्पुराणं यत्तु दृश्यते । विजानध्वं मुनिश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥' इति । विनिर्गतम् उद्धृतम् । प्रमाण( प्र )करणे भविष्यत्पुराणम्— 'अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ कार्ष्णं च पञ्चमं वेदं( ? मो वेदो ) यन्महाभारतं स्मृतम् । सौराश्च धर्मा राजेन्द्र मानवोक्ता महीतले ॥ जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥' इति ।

न्यायः 'प्रमाणप्रमेय' ( न्यासू. १।१।१ ) इत्यादि 'हेत्वाभासाश्च यथोक्ताः' ( न्यासू. ५।२।२४ ) इत्यन्तं पञ्चाध्यायीशास्त्रमक्षपादप्रणीतम् । न्यायपदेन च साक्षाच्छ्रुतिविचारोदासीनानि वैशेषिकसांख्यपातञ्जलान्यपि गृह्यन्ते ।

मीमांसा श्रुत्यादिविचारः कर्मविषयकः 'अथातो धर्मजिज्ञासा' ( जैसू. १।१।१ ) इत्यादिद्वादशाध्यायीरूपो जैमिनिप्रणीतः, ब्रह्मविषयकश्च 'अथातो ब्रह्मजिज्ञासा' ( ब्रसू. १।१।१ ) इत्यादिचतुरध्यायीरूपो व्यासप्रणीत इति द्विविधः ।

धर्मशास्त्राणि स्मृतयो मन्वादिप्रणीता धर्मसंहिताः 'दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथा परा । दृष्टादृष्टार्थरूपाऽन्या न्यायमूला तथा परा ॥ अर्थवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ॥' इति भविष्यत्पुराणे त्रिभक्ताः । गृह्याणि स्मृतिरूपाण्येव । स्मृतिपदेन पञ्चरात्राण्यपि गृह्यन्ते, तेषामपि मन्वादिस्मृतिवदेव प्रामाण्यात्, 'अलाभे वेदमन्त्राणां पञ्चरात्रोदिते नये । आचारेण प्रपद्यन्ते मामायास्यन्ति मानवाः ॥' इति वाराहे श्रीभगवद्वाक्यात्, 'अभावे वेदमन्त्राणां पञ्चरात्रोदितो विधिः ।' इति तत्रैव वचनान्तरात्, 'पञ्चरात्रविधानेन संपूज्य मधुसूदनम् ।' इति ब्रह्मपुराणात्, महाभारते पञ्चरात्राणां प्रशंसितत्वाच्च । एवं च वेदान्ते भट्टवाक्ये च पञ्चरात्राप्रामाण्याभिधानं वेदविरुद्धपञ्चरात्रविषयमिति मन्तव्यम् । तथा हि— स्मृतिपादे 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' ( जैसू. १।३।३ ) इति सूत्रे प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यमनपेक्ष्यमिति व्यवस्थाप्यते । 'हेतुदर्शनाच्च' ( जैसू. १।३।४ ) इति सूत्रेऽपि भट्टपादाः— 'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किंचित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासंबद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिबलेनाहिंसासत्यवचनदमदानदयाश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनि, तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते' इति प्राहुः । अत एव रत्नमालायां भोजराजेन 'प्रोक्तानि' इत्यादिभगवद्वचनमुदाहृत्य कूर्मपुराणवचनं प्रत्युदाहृतम्— 'अन्यानि चैव शास्त्राणि लोकेऽस्मिन् मोहनानि तु । वामं पाशुपतं सोमं लक्षणं( ? ) चैव रौरवम् । असत्यमेतत्कथितं वेदबाह्यं तथैव तत् ॥', तथा— 'वामपाशुपताचारास्तथा वै पाञ्चरात्रिकाः । भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥' । पाञ्चरात्रिकाः वेदविरुद्धपञ्चरात्रव्यवहारिणः । अत एव चाग्निपुराणे पञ्चरात्रपरिगणने पाशुपतादिपञ्चरात्राणि पठितानि । यथा—

'हयग्रीव उवाच— प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया। व्यक्तानि मुनिभिर्लोके पञ्चविंशतिसंख्यया॥ हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम्। वैभवं पौष्करं तन्त्रं प्राह्लादं गार्ग्यमालवम्॥ नारदीयं च माण्डव्यं शाण्डिल्यं वैश्वकं तथा। सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरम्॥ स्वायंभुवं कापिलं च तार्क्ष्यं नारायणीयकम्। आत्रेयं नारसिंहाख्यं मानदाख्यं तथाऽऽरुणम्॥ बौधायनं तथावार्णं(?) मित्युक्तस्तस्य विस्तरः॥'। एतत्सर्वमभिसंधायाऽऽह्निके 'पञ्चरात्रनिर्मूलत्वाभिधानं निर्मूलम्' इति श्रीदत्तोपाध्यायानां सिंहनादः, 'पञ्चरात्रपाशुपतादीन्यपि शास्त्राणि वेदाविरुद्धभागे प्रमाणमेव' इति पारिजातश्चेति सकलशिष्टानुमतार्थव्यवस्थापने कृतं बहुभिरावेशैरिति। एवमन्यान्यपि 'स्मृतिः' इति 'शिष्टाः' इत्याद्युक्तप्रामाणिकनिबन्धेषु लिखितानि वाक्यानि ग्राह्याणि, महाजनपरिग्रहात्। षट्त्रिंशन्मतादीन्यपि तथेति केचित्। नेति कल्पतरुः।

अङ्गानि 'शिक्षाव्याकरणनिरुक्तच्छन्दःकल्पज्योतिषाणि वेदाङ्गानि' इति देवलोक्तानि। शिक्षा वेदाध्ययनेतिकर्तव्यताप्रतिपादको याज्ञवल्क्यपाणिनिपराशरादिग्रन्थः। व्याकरणं 'वृद्धिरादैच्' (पासू. १।१।१) इत्यादि 'अ अ' (पासू. ८।४।६८) इत्यन्तमष्टाध्यायीशास्त्रं पाणिनिप्रणीतम्, अन्येषां वैदिकाव्युत्पादकत्वात्। निरुक्तं यास्कप्रणीतो वैदिकपदार्थादिव्युत्पादको ग्रन्थः। छन्दः गायत्र्यादिच्छन्दःप्रतिपादकं पिङ्गलप्रणीतं शास्त्रम्। कल्पः ज्योतिष्टोमाद्यनुष्ठानपद्धतयः कात्यायनबौधायनादिप्रणीताः। ज्योतिः(? ज्योतिषं) ग्रहगत्यादिबोधकं होराशास्त्रमिति प्रसिद्धं गर्गादिप्रणीतम्।

एतैः पुराणादिभिर्मिश्रिताः युक्ताः वेदाः वैदिकयाज्ञिकानां मन्वादीनामभियुक्तानां 'वेद(?दाः)' इति प्रसिद्ध(?द्धि)विषयाः शब्दाः, मन्त्राधिकरणन्यायात्। अपौरुषेयवाक्यत्वं वेदत्वमित्येके। मीमांसासिद्धपौरुषेयान्यजातीयव्याख्यानवाक्यत्वं तदिति कण्टकोद्धारः। केचित्तु न्यायनिबन्धप्रकाशे 'कथात्वं जातिः' इति वर्धमानचरणानां सोपपत्ति लिखनं पश्यन्तस्तद्दिशा 'वेदत्वं जातिः' इति परिष्कुर्वते। अखण्डोपाधिर्वेदत्वमिति तूच्छृङ्खलाः। ते पुनश्चतुर्विधाः 'ऋग्यजुःसामाथर्वाणो वेदाः' इति देवलादिभिर्विभज्य प्रतिपादिताः। तत्र ऋग्बहुलो वेदभाग ऋक्, यजुर्बहुलः स यजुः, सामबहुलस्तु साम। अदृष्टद्वारा दृष्टप्रयोजनककर्मप्रतिपादकवाक्यबहुलश्चाथर्वा। खिलशुक्रियौ त्वेतच्चतुष्टयान्तर्भूतावेव। तत्रानिरुक्त इदानीमनुष्ठानप्रयोजको वेदभागः खिलः। शुक्रोक्तत्वेन ब्राह्मणे कीर्तितो वेदभागः शुक्रियः। आङ्गिर(स)स्त्वथर्वैकदेश एवेति। अथैतेऽपि चत्वारो वेदाः प्रत्येकं द्विविधाः— मन्त्रब्राह्मणभेदात्। तत्र यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानरूपाणि वेदवाक्यानि तानि मन्त्रशब्देनोच्यन्त इति 'तच्चोदकेषु मन्त्राख्या' (जैसू. २।१।३२) इति मन्त्राधिकरणे व्यवस्थितम्। तत्रापि मन्वादीनां मन्त्रप्रसिद्धिरेव मन्त्रलक्षणं विवक्षिताविवक्षितविवेकेन पर्यवस्यति। अत एव 'प्रायिकमिदमभियुक्तप्रसिद्ध्युपलक्षणार्थम्। यत्राभियुक्तानां मन्त्रप्रसिद्धिः स मन्त्र इत्यर्थः।' इति पार्थसारथिमिश्राः। भगवान् जैमिनिरपि ऊहप्रवरनामधेयानां मन्त्रत्वनिरासाय 'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्' (जैसू. २।१।३४) इति मन्त्रप्रसिद्धिमेवोपलक्षयति। आहुश्च भट्टपादाः— 'याज्ञिकानां समाख्यानं विज्ञेयं मन्त्रलक्षणम्' इति। अत्र मन्त्रेत्युपलक्षणमिति ब्राह्मणस्य ऋग्यजुःसामादीनां सूक्तानुवाकादीनां चेत्थमेव लक्षणं निरवद्यम्। संभवप्राचुर्यात्तु लक्षणान्तराण्यभिधीयन्त इति। मन्त्रभागातिरिक्तो वेदभागो ब्राह्मणम्। यदाह— 'शेषे ब्राह्मणशब्दः' (जैसू. २।१।३३)। मन्त्रवाक्यावशिष्टं वेदवाक्यं ब्राह्मणमित्यर्थः। मन्त्रा अपि 'ऋचो यजूंषि सामानि निगदा मन्त्राः' (काश्रौ. १।३।१) इति कात्यायनेन विभक्ताः। यत्रार्थवशेन पादव्यवस्था स मन्त्रः ऋक्। यदाह— 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (जैसू. २।१।३५)। नियताक्षरमन्त्र ऋगिति पर्यवसितार्थः। अगीयमानत्वं चात्र विशेषणमर्थात्, अन्यथा साम्न्यतिप्रसङ्गात्। अनियताक्षरावसानो मन्त्रः पुरस्कृतगानो यजुः। इदं तु नान्तरीयकतया कटाक्षय-

नैव यजुर्लक्षणमाह— 'शेषे यजुःशब्दः' (जैसू. २।१।३७) । ऋक्सामभ्यां यदन्यत्प्रश्लिष्टपठितं तद्यजुः । गीयमानो मन्त्रः साम । यद्यपि गीतमेव सामशब्दार्थत्वेनासिद्धान्तयत्सप्तमेऽध्याये, तथाहि(?पि) 'रथन्तरेण स्तुवीत' इत्यादिदर्शनादक्षरेषु तद्व्यपदेशः । एवं च मन्त्रविभागप्रकरणे सामशब्दस्य गीयमानाक्षरपरतामेवाभिप्रयन्नसूत्रयत्— 'गीतिषु सामाख्या' (जैसू. २।१।३६) इति, अक्षरपरतया कथंचित्सूत्रयोजनादिति । निगदास्तु 'प्रोक्षणीरासादयति' इत्येवमादयः परसंबोधनरूपा मन्त्राः । निगदाधिकरणे 'निगदो वा चतुर्थं स्याद्धर्मविशेषात्' (जैसू. २।१।३८) इत्याक्षिप्य यजुर्विशेषा एवेत्यसिद्धान्तयत्, अत एव— 'अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रयीविदो विदुः । ऋचः सामानि यजूंषि' इति श्रुतौ त्रिधैव मन्त्रः कथितो यद्यपि तथापि 'उपांशु यजुषा, उच्चैर्निगदेन' इत्यादौ विशेषसंज्ञापुरस्काराद्यजुर्विशेषप्रदर्शनाय निगदाः कात्यायनेन पृथगुपात्ता इति मन्तव्यम् । ब्राह्मणं तु द्विविधं विध्यर्थवादभेदात् । परकृतिपुराकल्पौ त्वर्थवादान्तर्भूतावेव । तत्र विधिश्चतुर्धा उत्पत्तिविनियोगप्रयोगाधिकारभेदात् । विध्यन्तराविषयपदार्थस्वरूपप्रतिपादको(ऽपि?) विधिरुत्पत्तिविधिः, आद्यप्राप्तेरुत्पत्तित्वात् । तत्र चास्य शब्दान्तराभ्यासगुणसंख्यानामधेयप्रकरणाख्यानि षट् सहकारीणि । अथ-(? यथा) 'अग्निष्टोमेन यजेत' इत्यादिप(? दिः । पा)-रार्थ्यरूपशेषत्वबोधको विधिर्विनियोगविधिः । नियोगे चास्य श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट् सहकारीणि । फलस्वामित्वरूपाधिकारबोधको विधिरधिकारविधिः । यथा 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादिः । साङ्गप्रधानस्य युगपत्कर्तव्यताबोधको विधिः प्रयोगविधिः । करणानुगृहीतप्रत्येकविधिविनियुक्तप्रयाजादीनामष्टदोषदुष्टविकल्पसमाधानाय सर्वाङ्गोपेतप्रधानकर्तव्यतां बोधयन् प्रधानविधिरेवप्रयोगविधिरित्युच्यते । यथा 'ज्योतिष्टोमेन यजेत' इत्येवमादिरेवेत्याकाराद्विवेक्तव्यम् । उत्पत्तिविधिस्त्रिविधः— कर्ममात्रोत्पादकः 'अग्निहोत्रं जुहोति' इत्येवमादिः, गुणविशिष्टकर्मोत्पादकः 'सोमेन यजेत' इत्येवमादिः, गुणमात्रोत्पादकः 'दध्ना जुहोति' इत्येवे(? त्येवमादिरि)ति । विनियोगविधिरपि त्रिधा— अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति । यदाहुः— 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते ॥' । तत्राऽऽद्यः '†ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादिः । द्वितीयः 'व्रीहीनवहन्ति' इत्यादिः । तृतीयः 'अश्वाभिधानीमादत्ते' इत्यादिः । भाष्ये तु 'पञ्च पञ्चनखा भक्ष्याः' इति तृतीयोदाहरणम् । प्रकृतकारिका विस्तरभयान्न विव्रियते इति । अर्थवादास्तु स्तुतिनिन्दारूपाः । तत्राऽऽद्यः 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिः । द्वितीयस्तु 'न तस्याऽऽहुतिमभ्यवहरन्ति य उदिते जुहोति' इत्यादिरित्याद्यन्यत्रानुसंधेयमित्यास्तां प्रसक्तानुप्रसक्ति(? क्त)विस्तरः । पुराणादीनामुपसर्जनीकरणं वेदानां प्राधान्यसूचनाय । विद्यानां पुरुषार्थसाधनज्ञानानाम् । अत एव धर्मस्यापि स्थानानि उपायाः, विद्यायाः प्रवृत्तिद्वारा धर्मप्रयोजकत्वात् । यद्यप्यन्यत्राष्टादश विद्यास्थानान्युक्तानि, तथा च विष्णुपुराणम्— 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादश स्मृताः ॥', तथापीह वेदशब्देनोपवेदरूपाणामायुर्वेदादीनां ग्रहणात् न न्यूनतेति बोद्धव्यम् । तेषां विद्यास्थानत्वेऽपि न धर्मस्थानत्वम्, धर्मे तात्पर्याभावादित्यप्याहुः । यत्तु ब्रह्मपुराणम्— 'वेदान्तः पञ्चदशमं विद्या षोडशकं भवेत्' इति, तत्र वेदान्तः शारीरकम्, विद्या बृहदारण्यकादिरहस्यम् । ते चात्र मीमांसावेदपदाभ्यामेव गृहीते इति सर्वं चतुरस्रम् । वीमि.

(९) ननु सांख्ययोगपञ्चरात्रपाशुपताद्यागमाः किं धर्मे प्रमाणम्, उत न ? आद्ये 'धर्मस्य च चतुर्दश' इति संख्याव्याकोपः । द्वितीयेऽविगीतमहाजनपरिग्रह-

† एतदुदाहरणप्रदर्शनं लेखकादिप्रमादकृतम्, अत्र विनियोगाभावात् विनियोगविध्यवान्तरापूर्वविधित्वायोगात् । 'व्रीहीन् प्रोक्षति' इत्यादिना केनचिदुदाहरणेनात्र भवितव्यम् ।

विरोधः। उच्यते– तेऽपि वेदाविरुद्धाः प्रमाणमेव। तथा च योगियाज्ञवल्क्यः– 'न वेदशास्त्रादन्यत्तु किंचिच्छास्त्रं हि विद्यते। निःसृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात्॥ दुर्बोध्यं तु भवेद्यस्मादध्येतुं नैव शक्यते। तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम्॥ पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्॥' इति। अत्र 'सांख्यं योगः पञ्चरात्रम्' इत्युपक्रम्य 'हेतुभिर्न विरोधयेत्' इत्युक्तेस्तेषामदूष्यत्वमात्रे तात्पर्यम्, न तु प्रामाण्यमित्यपरार्कोक्तमनादरणीयम्, अतिप्रमाणानीत्यभिधानात्। तथा महाभारते– 'पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः। प्रापणं भगवत्प्रोक्तं भुञ्जते चात्र भोजनम्॥ तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः। नाऽऽनृता वाक्समभवन्मनो दुष्टं न चाभवत्॥' इति उपरिचरराजप्रशंसामुखेन पञ्चरात्रस्य प्राशस्त्यमुक्तम्। प्रापणं नैवेद्यम्। तथा– 'सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते। हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः॥ अपान्तरतमाश्चैव वेदाचार्यः स उच्यते। प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥ उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः॥ पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम्॥'। बृहत्पराशरोऽपि– 'वैदिकं तु जपं कुर्यात्पौराणं पाञ्चरात्रिकम्। यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः। पञ्चरात्रविधानेन स्थण्डिले वाऽथ पूजयेत्॥' इति। विष्णुधर्मोत्तरेऽपि– 'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे॥'। कृतान्तः सिद्धान्तः, 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मणि' इति त्रिकाण्डीस्मरणात्। किंच, पाशुपतागमानां तावद्वैदिकावैदिकभेदेन द्वैविध्यमवश्यं वाच्यम्, 'निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम्। गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये॥' इत्यारभ्य 'एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः। भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतिः॥' इति वेदसारमयत्वमेकस्याभिधाय 'अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि वै। वेदवादविरुद्धानि मयैव कथितानि तु॥ वामं पाशुपतं सोमं लाकुलं चैव भैरवम्। न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत्॥' इति वेदविरुद्धस्यान्यस्य कौर्मेऽभिधानात्। वायुसंहितायां तु– 'शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च संस्मृतः। श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः॥ स्वतन्त्रो दशधा पूर्वम्' इत्यारभ्य 'श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः। परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते॥' इत्यन्तेन श्रौताश्रौतविभागः स्पष्टीकृतः। अत्र 'शैवागमोऽपि द्विविधः' इत्यपिना स्वसमानयोगक्षेमवैष्णवपञ्चरात्राद्यागमानामपि श्रौताश्रौतभेदेन द्वैविध्यमुक्तं भवति। उक्तं च पञ्चरात्रादेर्वैदिकत्वं हेमाद्रौ विष्णुधर्मोत्तरे– 'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे॥ संसारक्षपणे स्वर्गभावोपकरणेषु च। सेतुरा वैष्णवाद्धर्मात्सारमेतत्प्रकीर्तितम्। एतावानेव सकलो वेदमार्गस्त्वुदीरितः॥' इति। भावः ऐश्वर्यम्। सेतुः मार्गः। एवं च कौर्मे 'कापालं पञ्चरात्रं च यामलं वाममार्हतम्। एवंविधानि चान्यानि मोहनार्थानि तानि तु॥' इति पञ्चरात्रस्य यन्मोहकत्वाभिधानं तदवैदिकपञ्चरात्रपरम्, 'यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु। श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी॥' इति तत्रैव वेदविरुद्धानामेवोपक्रमे श्रवणात्। 'विरोधे त्वनपेक्षं स्यात्' इति मीमांसाधिकरणं च 'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि' इत्यादिग्रन्थदर्शनादवैदिकागमविषयत्वेनाप्युपपत्तेर्नाविश्वमागममात्रस्याप्रामाण्यमापादयति। कथं तर्हि 'धर्मस्य च चतुर्दश' इति संख्यानिर्देश उपपद्यते? उपलक्षणमात्रतयेति ब्रूमः, अन्यथा रामायणशिष्टाचारादीनामप्यनुपसंग्रहादप्रामाण्यापत्तेः। यदि तु 'तथा स्मृत्यन्तरेषु च' इति पूर्वोदाहृतभविष्यत्पुराणवचनेन तदुपसंग्रहस्तदा स प्रकृतेऽपि तुल्यः। यत्तु, साम्बपुराणे– 'श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः। क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत्॥' इति, यच्च कौर्मे–

' अथांशुः सात्वतो नाम विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदां वरः ॥ स नारदस्य वचनाद्वासुदेवार्चने रतः । शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥ तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् । प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥ ' इति, श्रीभागवतेऽपि– ' तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् । यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥ ' इत्यादिवचनैः श्रुतिभ्रष्टादीनामेवागमेष्वधिकारप्रतिपादनाद्वेदविदामनधिकार इति कैश्चिदुक्तम्, तन्न न्यायविदामभिधानम् । तथाहि– श्रुतिभ्रष्टादिवाक्येषु न तन्त्रमुद्दिश्य कर्तारो विधीयन्ते राजसूयोद्देशेन राजेव, येनान्येषामनधिकारः स्यात् ; किंतु श्रुतिभ्रष्टादीनुद्दिश्य तन्त्रं विधीयते । तथा च ' स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। अतो भारतमाख्यानम् ' इति वचनाच्छूद्रादीन् प्रति भारतप्रवृत्तावप्यन्येषां भारताधिकारवदागमेष्वप्यविरुद्धेष्वविहतोऽधिकारः । ‡ पप्र. २०–२५

मन्वादयः विंशतिः स्मृतिकर्तारः, टीकायामन्येषामपि स्मृतिकाराणां परिगणनम्

**§ 'मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।**
**यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥**
**पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥**

(१) अभेद एव सिद्ध इति चेत् , नेत्याह– वक्तार इति । वक्तार इति प्रमाणान्तरपूर्वकताभिप्रायम् । वेदादवगम्य वक्तारो वयम् , न स्वयं द्रष्टार इत्यर्थः । धर्मशास्त्राणामिति बहुवचनं भेदकथनार्थम् । मनुर्विष्णुरिति ख्याततमैर्नामभिः सामर्थ्यकथनार्थम् । अहमित्यन्तत आत्माभिधानम् ‡ आचारपरिपालनार्थम् । तथेति चानुक्तोपसंग्रहार्थम् । तथा च वृद्धयाज्ञवल्क्यो धर्मप्रवक्तॄनुक्त्वाऽऽह– ' भूयांसो धर्मवक्तार उत्पन्ना भाविनस्तथा । निधानं सर्वधर्माणां वेद एव हि शाश्वतः ॥ ' इति । पुनश्चाऽऽह– ' नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः । बौधायनो जातुकर्णो विश्वामित्रः पितामहः ॥ ' इति । मननान्मनुः । विविधज्ञानेन स्नातः शुद्धो वेष्टितो वा विष्णुः । यमनात् धर्मस्य प्रजानां वा यमः । इत्यादि सर्वत्र योज्यं स्तुत्यतिशयार्थम् । किं पुनरस्याः स्मृतेर्मूलम् ? न तावदाम्नायो धर्मशास्त्रभेदप्रतिपादकः । न च तत्प्रभवो न्यायः । अपि तु श्रौतानां कृत्स्नोपसंहारात् तत्पूर्वकत्वाच्च तथैवात्रापि प्राप्नोति । कार्त्स्न्येन चैवं धर्मावगतिः , न ह्येकस्मृत्यध्ययने सकलधर्मावाप्तिर्यतः । भेदे च द्वयोरप्यध्ययनं न स्यात् शाखान्तरवत् । इष्यते च तत् , § ' स्मृतिद्रोणपाठकः ' इति वचनात् । नैतदेवम् । न हि परस्परापेक्षं मन्वादीनां धर्माभिधानम् , सर्वत्र कार्त्स्न्याभिधानात् । इतरथा हि क्वचिदेव पदार्थाभिधानं स्यात् , अन्यत्र गुणविधयः । क्वचिच्च सापेक्षत्वं दृश्यते, वचनात् । तद्यथा– ' आम्नायात्सम्यगुद्धृत्य शङ्खश्च लिखितस्तथा ' इति । न चानुमेयेष्वर्थेष्वैक्यं शक्यते वक्तुम् , लिङ्गानुसारेण लिङ्गिनोऽपि भेदावगतेः । भिन्नानि चाष्टकादिलिङ्गानि प्रतिशाखम् , तथैवोपलब्धेः । तथा च स्मरणं भेदेन । अन्यथा

‡ शेषं वीमिगतम् ।

§ एतदादिस्मर्तृगणनाविषये मेधातिथिमतं ' वेदोऽखिलो धर्ममूलम्' इति मनुवचनव्याख्याने ( वका. पृ. ९७-९८ ) द्रष्टव्यम् ।

(१) **याज्ञ.** १।४–५ ; **विश्व.** ( वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः । वसिष्ठदक्षसंवर्तशातातपपराशराः ॥ आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती । गौतमः शङ्खलिखितौ हारीतोऽत्रिरहं तथा ॥ ) ; **मेधा.** २।६ पृ. ६७ ( मनुर्विष्णुर्यमोऽङ्गिराः ) एतावदेव ; **मिता.** ; **अप.** ङ्गिराः (ङ्गिरः) ; **मपा.** ११ ; **निप्र.** १।१९ विश्ववत् . **मच.** २।१० वक्तारो ( कर्तारो ) शेषं विश्ववत् ; **गप.** ११ विश्ववत् ; **मुक्ता.** ८ ; **संम.** २ प्रयोजकाः ( प्रवर्तकाः ) ; **बिपा.** ४।२९९ नोऽङ्गिराः ( नाङ्गिरः ) ; **वीमि.** ;

‡ ' आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ ' इत्याचारपरिपालनार्थमित्यर्थः ।

§ ' द्रोणेति षोडशके ' इत्यादर्शपुस्तके टिप्पणी ।

**पप्र.** १५ ; **आन.** ११ नोऽङ्गि ( नाङ्गि ) ; **संग.** १० संमवत् (=).

ह्येकरूप एव प्रयोगः स्मर्येत । यत्तु शाखान्तरवदुपसंहरणमुक्तं तच्छ्रौतकर्मणां प्रत्यक्षत्वेन प्रकरणा( ? प्रधाना )-भेदाद्युक्तम् । इह तु प्रधाने भेदोऽभिहितो लिङ्गभेदात् । अतो वैषम्यम् । यानि तु नामतो गुणविधानानि तान्यविशेषादत्रापि समुच्चीयन्त एव । यथा शातातपः श्राद्धमनुक्त्वैव तद्गतान् गुणानाह– 'विना यज्ञोपवीतेन गन्धैर्यस्तु समालभेत् । ' इत्यादि । सर्वार्थता च कथं स्यादिति गुणार्थस्मृत्यारम्भः । यत्तु स्मृतिद्रोणाध्ययनं तज्ज्ञानात्वेऽपि बह्वङ्गप्रयोगकरणे फलभूयस्त्वलाभार्थम् अधिकगुणोपसंहारार्थं च । द्रोणवचनात्तु नियमादृष्टं व्रताध्ययनवत्, भूयस्त्वविवक्षया वा द्रोणशब्द इत्यवसेयम् । यत्तु 'नैकत्र कार्त्स्न्यं धर्मस्य' इति, तत् वैतानिकानेककर्मकलापानभिधानात् कार्त्स्न्येऽपि नैव । अखिलपरोक्षार्थाश्रयित्वेन कार्त्स्न्यमिति चेत्, तदपि कर्णवेधाद्यनुपसंहृतेरसिद्धम् । आचारप्रामाण्याभिधानात् तदुपसंहृतमिति चेत्, 'वेदो धर्ममूलम्' इत्यनेनैव सिद्धत्वान्नमः शास्त्राय । धर्मप्रवक्तृसंख्यानियमानवधारणाच्च सापेक्षत्वेन सर्वस्मिन् धर्मशास्त्रे समाप्तिः स्यात् । ततश्चाननुष्ठानम् । न च संख्यावधारणमस्ति, परिगणनस्य प्रदर्शनार्थत्वात् हेत्वन्तरस्य चाभावादित्येषा दिक् । ननु च प्रयोगभेदेऽपि गुणार्थस्मृत्यन्तरापेक्षाणां तदवस्थमेवाननुष्ठानम् । मैवम् । यदि परिपूर्णेऽपि प्रयोगेऽभ्युदयाय गुणान्तरोपसंहारः, नित्यवत्करणं त्वनुपसंहृतेरप्युपपन्नमित्यविरोधः । यद्वाऽस्तु नियोगतस्तदुपसंहारः । सति तु ज्ञाने ज्ञातगुणान्तरत्यागे नैकस्मृत्यवगतप्रयोगानुष्ठानादेव कृतकृत्यता । अवगतश्च प्रयोगोऽनुष्ठेयः । गुणान्तराणि चान्वेष्याणि । उपलब्धगुणानुपसंहाराच्च प्रत्यवायः । सापेक्षत्वे तु स्मृतीनां प्राक्प्रयोगावधृतेरनुष्ठातुमशक्यत्वादवधारणोपायासंभवाच्चाननुष्ठानमिति वैषम्यम् । परिपूर्णे तु प्रयोगे नैमित्तिकाङ्गान्वयोऽभिमतः 'भिन्ने जुहोति' इतिवत् । ज्ञानगतमपि च गुणानां नैमित्तिकत्वं दृष्टम् । तद्यथा– वैश्वानरग्रहग्रहणे 'स यदि चरकेभ्यो वा पततोऽनुब्रुवीत' इति । एवमत्रापि । यद्यप्रमाद्भिरन्विष्यमाणं गुणान्तरमुपलभ्येत, तत उपसंह्रियेत । अनुपलब्धौ त्वदोषः । यदा चान्विष्यमाणस्य यस्योपलब्धिः तदा तस्यानुपसंहारे प्रत्यवायादव्याहतमनुष्ठानम् । यत्र त्वपरिपूर्णः प्रयोगः कर्तव्यतोपदेशमात्रं च, यथोपनयनादिषु, तत्रानुमितैव स्मृत्यन्तरापेक्षा । यथा च मृद्भिरिति मृदां बहुत्वेऽवगते तिस्रः पञ्च वेति स्मृत्यन्तरात् । एवं सर्वत्रोन्नेयम् । स्मरणवैचित्र्यमेवास्याः कल्पनायाः प्रमाणमिति न हेत्वन्तरं मृग्यम् । प्रयोगैक्ये तूक्ताऽनुपपत्तिः । अतः सूक्तं 'वक्तारो धर्मशास्त्राणाम्' इति स्मृतिबहुत्वम् । § विश्व.

( २ ) अस्तु धर्मशास्त्रमध्येतव्यम्, याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातम् ? इत्यत आह– मन्वत्रीति । उशनःशब्दपर्यन्तो द्वन्द्वैकवद्भावः । याज्ञवल्क्यप्रणीतमिदं धर्मशास्त्रमध्येतव्यमित्यभिप्रायः । नेयं परिसंख्या, किंतु प्रदर्शनार्थमेतत् । अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम् । एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते । विरोधे विकल्पः । ‡ मिता.

( ३ ) इदानीं धर्मशास्त्राणां तदाभासेभ्यो विवेकाय तत्प्रणेतॄनाह– मन्वत्रीति । प्रयोजकाः प्रणेतारः । अतिरोहितमन्यत् । अत्र गौतमः "स्मृतिर्धर्मशास्त्राणि । तेषां प्रणेतारः– 'मनुविष्णुदक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बगौतमसंवर्तात्रेयकात्यायनशङ्खलिखितपराशरव्यासशातातपप्रचेतोयाज्ञवल्क्यादयः" इत्यादिशब्दं प्रयुक्तवान् । वेदमूलग्रन्थप्रणेतार आदिशब्देनात्र प्रगृह्यन्ते । तथा च मनुः– 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । ' ( मस्मृ. २।६ ) इति । अत एवावशिष्टः श्रौतो वाक्यैकशेषः । अङ्गिरःशब्दपर्यन्तः समाहारद्वन्द्वो नपुंसकलिङ्ग एकवचनान्तः । अत एव भविष्यत्पुराणे गुह्येश्वरवाक्ये स्मृतयः षट्त्रिंशदेवाभिहिताः– 'मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः । तासां वाक्यानि क्रमशः समासेन ब्रवीमि ते ॥ ' । ताश्च मनुविष्णुयमदक्षाङ्गिरो-

§ मपा. विश्वगतं मितागतं च ।

‡ मुक्ता. मितागतम् ।

त्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्ख-लिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्रचेतोबुध-देवलसोमजमदग्निविश्वामित्रप्रजापतिनारदपैठीनसिपिता-महबौधायनच्छागलेयजाबालिच्यवनमरीचिकश्यपा इति षट्त्रिंशदेव स्मृत्यन्तरे पठिताः। एवं वृद्धमन्वादयश्च वयो-वस्थादिभेदेन मन्वादिप्रणेतार एव द्रष्टव्याः। अविरोधि-त्वाच्छ्रुतिस्मृत्युपबृंहकत्वाच्छिष्टपरिगृहीतत्वादाप्तोक्तत्वाच्च चतुर्विंशतिमतपरिशिष्टादयोऽपि धर्मशास्त्रत्वेनैव ज्ञेयाः।

¶ अप.

(४) अहं याज्ञवल्क्यः। अयं तु अष्टादशस्मृति-वक्तृभ्योऽभ्यधिकः। अष्टादशस्मृतिवत् मत्प्रणीतधर्म-शास्त्रमध्येतव्यमित्यर्थः। † गप. ११

(५) धर्मशास्त्रस्य प्रयोजनवत्त्वेऽपि प्रकृते किमा-यातमित्याशङ्क्य स्वसंहितायां धर्मशास्त्रत्वं दर्शयितुं तद्व्यवस्थायै धर्मशास्त्रप्रणेतॄनाह— मन्वत्रीति। उशन-इत्यन्तमेकभावी द्वन्द्वः। प्रयोजकाः प्रणेतारः। वसिष्ठ-श्चेति। चोऽनुक्तसमुच्चये, तेनान्येषामपि ग्रहणम्। तथा च शङ्खलिखितौ— 'स्मृतिर्धर्मशास्त्राणि। तेषां प्रणे-तारो मनुविष्णुयमदक्षाङ्गिरोत्रिबृहस्पत्युशनआपस्तम्बवसि-ष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहा-रीतयाज्ञवल्क्यप्रचेतसा( ? तआ )दयः शिष्टाः'। 'मनु-र्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः। योगीश्वरः प्रचेताश्च शातातपपराशरौ॥ संवर्तोशनसौ शङ्खलिखिता-वत्रिरेव च। विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः॥ एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः। जाबालिर्ना-चिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ॥ व्यासः सनत्कुमार-श्च सुमन्तुश्च पितामहः। व्याघ्रः कार्ष्णाजिनिश्चैव जातूकर्णः कपिञ्जलः॥ बौधायनश्च काणादो विश्वा-मित्रस्तथैव च। पैठीनसिर्गोभिलश्च उपस्मृतिविधा-यकाः॥'। तथा— 'वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः। बभ्रुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः॥ जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः। आत्रेयश्छागलेयश्च मरीचिर्वत्स एव च॥ पारस्कर-ऋष्यशृङ्गौ वैजवापस्तथैव च। इत्यन्ये स्मृतिकर्तार एकविंशतिरीरिताः॥ एभिर्यानि प्रणीतानि धर्म-शास्त्राणि वै पुरा। तान्येतानि प्रमाणानि न हन्तव्यानि हेतुभिः॥'। अत्र मन्वादिभिरष्टादशभिः प्रणीताः स्मृतयः, जाबाल्यादिभिरष्टादशभिस्तु प्रणीता उपस्मृतय इत्यवान्तरविभागवत्योऽपि भविष्ये 'मन्वादिस्मृतयो याश्च षट्त्रिंशत्परिकीर्तिताः' इति सामान्येनैवोक्ताः, वसिष्ठाद्येकविंशतिप्रणीतास्तु 'तथा स्मृत्यन्तरेषु च' इत्यनेनोक्ताः। वृद्धमनुवृद्धवसिष्ठवृद्धशातातपलघुहारीत-योगियाज्ञवल्क्यादयस्त्ववस्थाभेदेन सविशेषणसंज्ञाव्यपदेश-भाजो मन्वादय एवेति न पृथगुक्ताः। एवं च याज्ञ-वल्क्यप्रणीतत्वात्स्वकृतसंहिता धर्मशास्त्रमिति दर्शितम्।

वीमि.

(६) उशनःशब्दान्तस्य द्वन्द्वे एकवचनान्तत्वम्। शङ्खश्च लिखितश्च द्वावेकसंज्ञौ। आहत्याष्टादशाधिका इत्यर्थः। आन. ११

(७) सूत्रान्तरानुक्तमपि स्मृत्युक्तं ग्राह्यम्। तत्रा-ऽऽदौ स्मृतिकर्तार उच्यन्ते— 'मन्वत्रि ... प्रवर्तकाः॥'। बुधदेवलसोमाग्निप्रजापतिविश्वामित्रपैठीनसिपितामहबौधा-यनच्छागलेयजाबालिच्यवनमरीचिशाटयायनकाश्यप-प्रचेतःसुमन्तुजातूकर्ण्यनारदाः। चकारादेतेषां ग्रहणम्। केवलसूत्रोक्तकर्मकरणे दोषमाह पाकयज्ञप्रदीपे देवीपुराणे वचनम्— 'अन्यथा ये प्रकुर्वन्ति सूत्रमाश्रित्य केवलम्। निराशास्तस्य गच्छन्ति सर्वे देवा न संशयः॥'। अथ पौरुषा आचार्याः कथ्यन्ते। कर्काचार्यवासुदेवहरिहर-मिश्ररेणुदीक्षितपरशुरामढौण्ढुमिश्रवैजनाथमिश्रगङ्गाधर-भर्तृयज्ञश्रीअनंतदेवयाज्ञिकमुरारिमिश्रगदाधरदीक्षितगर्गोपा-ध्यायजयरामादयो बहवः सन्ति। तन्मध्ये कर्काचार्यहरि-हरवासुदेवदेवयाज्ञिकरेणुदीक्षितानां मतं मुनिमतमिव शिष्टैरादि्रयते। अत एवास्माभिर्मूलभूतं यत्र मुनिवाक्यं लभ्यते तत्र तदेव लिखितम्। यत्र पुनर्मूलभूतं मुनिवाक्यं न लभ्यते तत्रैतानि कर्कादिवाक्यान्येव शिष्टसंमतत्वा-ल्लिख्यन्ते, मुनिवाक्येभ्य उत्पन्नत्वात्। उक्तं च— 'आर्षेयं

¶ दीक., मिप्र., पप्र. अपगतम्।
† शेषम् अपगतम्।

पौरुषं वाऽपि शास्त्रं द्राक् सिद्धिमाश्रयेत् । यथोत्तमाज्जघन्याद्वा प्राप्तं रत्नं हि तद्भवेत् ॥' इति ।

संग. १०–११

स्मृतिपदव्युत्पत्तिः , वेदमूलकतया स्मृतिसदाचारप्रामाण्यम् , आत्मप्रियतायाः सम्यक्संकल्पजकामस्य च धर्मे प्रमाणतामीमांसा टीकायाम्

**'उत्सन्नशाखा याः काश्चित्तासां वेदान्तराणि च।
अन्तर्धानं गतानीह स्मृत्वा ताः स्मृतयः कृताः॥**

**'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥**

(१) यदि हि स्मृत्यादयो वेदानपेक्षा धर्ममूलमित्युच्येरन् , तदा निर्मूलता स्यात् । यदा त्वेषामपि वेदाविनिर्भागः(? दाविर्भावः) तदा निर्मूलवचनं प्रलापः । वेदपूर्वकतया चैषां प्रामाण्यम् । अतः सुष्ठूच्यते— धर्ममूलमिदं स्मृतमिति । तथा चाऽऽह मनुः— 'स्मृतिशीले च तद्विदाम्' ( मस्मृ. २।६ ) इति । वेदस्मृती प्रसिद्धे । अकामात्मानो दम्भादिरहिता वेदार्थविदोऽनुष्ठातारश्च सन्तः , तेषां यददृष्टायाऽऽचरणं स सदाचारः । तथा च वसिष्ठः— 'शिष्टः पुनरकामात्मा । अगृह्यमाणकारणो धर्मः' (वस्मृ. १।६-७) इति । अनुपनिबन्धनाच्च स्मृतितो ब्राह्मणपरिव्राजकवद्भेदेनोपन्यासः । अनुपनिबन्धनं तु स्मृत्यन्तरार्थवत् । वेदाविरोध्यसाहसं स्वस्याऽऽत्मनः प्रियम् , यथाऽवसीदति कुटुम्बे संन्यासः । विचिकित्साशङ्कया तु स्मृत्याचारयोर्भेदेनोपन्यासः । यथैतदेवं तथा तदाश्रमनिरूपणे वक्ष्यामः । अनात्मद्रुहा प्रीत्युत्पादः सम्यक्संकल्पजः कामः । यथा वैकल्पिकयोरन्यतरावधारणम् । इच्छया तु प्रवृत्तेः पौरुषेयाशङ्का मा भूदिति भेदेनोपन्यासः । ऋज्वन्यत् । प्रत्येकविशेषणं वा सम्यगिति । वेदस्य सम्यक्त्वं वाक्यविवेकावधृतिः । तन्मूलत्वनियमोपरस्मृतेः (?) । यद्वा स्वस्य चेति कुलधर्मः पित्राद्याचारोऽभिप्रेतः । सतामदृष्टाय चेत्यत्रापि योज्यम् । तथा चाऽऽहुः— 'येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति ॥' इति । प्रियं त्वात्मनः आत्मतुष्टिः । तदपि धर्ममूलम् । किं पुनरात्मनः प्रियम् ? सम्यक्संकल्पजः कामः । कस्यचित् स्वाप्ताभिहितमात्रेण तत्त्वावधृतिः स्यात् , अन्यस्य मूलप्रमाणप्रतिपत्त्या । यावदस्य निर्विचिकित्सं सम्यक्संकल्पजः कामः स्यात् , तदा तस्याऽऽत्मनः प्रियं धर्ममूलतयाऽवसेयम् । विचित्रधियामपि पुंसां सम्यक्संकल्पजत्वेनेच्छानियमादनवद्यम् । समानमन्यत् । अथवा स्वस्य च प्रियमात्मन इत्यपवर्गलक्षणम् , सम्यगित्याद्यर्थकामयोः । धर्मस्य तूक्तम् । तदेतत्सर्वं स्मृतिशास्त्रेण प्रतिपाद्यते । तच्च वेदमूलत्वात् वेद एवेत्यभिप्रेत्योच्यते— धर्ममूलमिदं स्मृतमिति । न्यायमूलत्वाच्च श्लोकस्यानेकार्थत्वमदोषः ।

कुतः पुनरिदमाम्नायमूलत्वं स्मृतेरवगमितम् ? न तावत् सर्वस्मृतीनां मूलभूतवेदवाक्योपलब्धिः । कतिपयवाक्यदर्शनं त्वसदागमेष्वप्यविशिष्टम् । न च वेदः स्वयं मूलतामलं प्रतिपादयितुम् । अनुमानादेस्त्वसामर्थ्यमतिप्रसिद्धम् । विपर्यये वा तत्प्रवृत्तिः , सर्वात्मकवेदमूलत्वानुपपत्तेः । न तावत् विधिरूपः , अदर्शनात् स्मृत्यानर्थक्याच्च । तथा हि— 'प्रत्यक्षे विधिरूपे च वेदे सति मुधा स्मृतिः । कल्पकारास्तदा कुर्युर्लघुतायै प्रकल्पनम् ॥ वाक्यानां विप्रकीर्णानां स्मृतिः संग्रहणाय चेत् । तदसत्स्मार्तता मा भूत्ताद्रूप्याज्ज्योतिषोऽपि हि ॥ संहारादेकशाखात्वेऽप्यादिमध्यान्तवर्तिनाम् । शाखान्तरगतानां च समाहारः प्रवर्ग्यवत् ॥ मैवं न ज्योतिषा तुल्यं विप्रकीर्णत्वमत्र नः । इतिकर्तव्यता तद्वत्क्लृप्ता न ह्यस्ति संनिधौ ॥ एकैकशः प्रकीर्णाङ्गप्रधानैकध्यसंहृतेः । ज्योतिष्टोमादितुल्यत्वं स्मृतीनामतिदुर्भणम् ॥ शाखानां विप्रकीर्णत्वात् पुरुषाणां

(१) प्रपा. ३.

(२) यास्मृ. १।७ ; विश्व. १।७ श्रुतिः (वेदः) : १।८ चतुर्थचरणमात्रम् ; मिता. ; अप. प्रथमचरणे (श्रुतिस्मृतिसदाचाराः) ; व्रक. २१ ; चम. १८ ; कृर. २७ ; प्रपा. २ ; निप्र. १।१७ तृतीयचरणमात्रम् ; गप. १२ उत्त. ; मुक्ता. १ ; संम. २ ; वीमि. १।९ निर्देशमात्रम् ; पप्र. ९ ; आर्क. १ ; बाल. १।१४ द्वितीयचरणमात्रम् (=) ; इन्दु. ३.

प्रमादतः । नानाप्रकरणस्थत्वात्स्मृतिमूलं न गृह्यते ॥ कार्योऽतश्चोपसंहारः पुरुषानुग्रहात्मकः । तद्भेदादृदृश्य-मानत्वं न दोषायात्र जायते ॥ स्मृतिमूला हि विषयः सन्ति वेदे सहस्रशः । संप्रदायविनाशात्तु भीतेः साक्षादसंहृतिः ॥ उत्कृष्टव्यस्तु ख्यातोऽयं मलवद्वाससा सह । न संवसे-दिति विधिः स्मृतिमूलत्वसंमतः ॥ आत्रेय्या योषितैनस्वी भवेद्घातयितेत्यपि । वृत्तं तस्मादभिम्लायस्य नापक्रामेदितीति च ॥ अनारम्य च सौवर्णे हिरण्यं भार्यमित्ययम् । रूप-संपत्तये चैवं भवितव्यं सुवाससा ॥ नन्वेवं भिन्नरूपत्वं स्मृतीनां नोपपद्यते । उपसंहरणीयानामैक्यात्कृच्छ्रादि-कर्मणाम् ॥ नैतदस्त्येव भिन्नत्वं प्रत्यक्षाध्ययनेऽपि हि । कर्मणां भेदकैः संख्यागुणप्रकरणान्तरैः ॥ भिन्नत्वाच्च प्रधानानामङ्गभेदस्तदाश्रयः । भिन्नाश्चातोऽष्टकादीनां प्रयोगाः स्मार्तकर्मणाम् ॥ उद्दिश्यैक्यं प्रधानं च विशिष्ट-गुणलक्षितम् । अङ्गं विधीयमानं हि न सर्वार्थं प्रसज्यते ॥ साधारणं हि नामैकं भविष्यत्यक्षशब्दवत् । स्मृतीनां भिन्नरूपत्वमतो भिन्नार्थसंग्रहात् ॥ एकैकं चाष्टकाकर्म कृत्वैव कृतिनो नराः । फलसाम्याद्भवन्त्यस्मान्नैक-कर्त्रोऽखिलग्रहः ॥ सर्वेषां ये नृणां धर्माः सर्वैस्ते तूपसंहृताः । मन्वादिभिर्यमाः प्रायो नियमाश्चा-विशेषतः ॥ एवं च विप्रकीर्णैकशाखाशाखान्तरा-श्रयम् । दृश्यमानं स्मृतेर्मूलमपहातुं न शक्यते ॥ सम्यगालोचितं नैतदाचार्येणेत्र लक्ष्यते । प्रकीर्णविधि-वाक्यानां मूलत्वानुपपत्तितः ॥ जीवतः कामिनो वा स्या-दधिकारोऽष्टकादिषु । जीवतश्चेत्ततः सर्वं कर्तव्यं सर्व-कर्तृभिः ॥ कर्तव्यत्वाविशेषात्स्युः कृतार्था नैककर्मणा । अकृत्वेष्टिं हि तुल्यत्वात्कृतिनो नाग्निहोत्रिणः ॥ तथा-ऽस्त्विति यदि ब्रूयादताद्रूप्योपसंहृतेः । मानवाद्यप्रमाणत्व-मनुष्ठानं च दुर्लभम् ॥ स्मर्तॄणां जायते दोषो नन्वकर्तव्य-संग्रहात् । न पुनर्निखिलत्वेन कर्तव्यानुपसंहृतौ ॥ अन्यो-न्यनिरपेक्षत्वं स्मृतीनां यच्च वर्णितम् । एकक्रियाप्रयोगे हि तच्चेयं नाखिलग्रहे ॥ नैवमेकप्रयोगेऽपि न वेदोक्तो-ऽखिलग्रहः । अनुष्ठानविरोधस्तु तुल्यो भेदेऽपि कर्मणाम् ॥ कर्तुरेकस्य यत्कार्यं नियोगेनैककालिकम् । तत्सार्यं नैर-पेक्ष्यार्थमेकैकत्राखिलात्मनाम् ॥ सर्वं चैतत्प्रपञ्चेन वक्ष्यामः श्राद्धसंग्रहे । यथा स्मृत्यप्रमाणत्वमुक्तरूपानुपग्रहे ॥ कालैक्येन विरुद्धत्वादथैककरणं मतम् । तथाऽपि यावतां शक्तिः कृतिर्भवति तावताम् ॥ पूर्वाङ्गानुपसंहारादक्रिया चेद्गुणत्वतः । प्रधानबाधनात्तस्य न युक्तेरुपसंहृतिः ॥ संस्कारत्वादथैकेन न कुर्युः संस्कृताः परम् । संस्कारत्वं तथा वाच्यं सर्वस्मृत्युक्तकर्मणाम् ॥ कृत्स्नैकां चाष्टकां कुर्युर्नैकगृह्योदितामपि । कामिनामधिकारे तु याथाकाम्या-दनित्यता ॥ नित्यवत्स्मरणं तत्र स्मर्तॄणां स्यादमूल-कम् । न चान्यथाऽधिकारोऽस्ति तस्मादिय-मकल्पना ॥’ । किंच– ‘एकैकशः प्रकीर्णाङ्गप्रधाने-ष्वसंहृतौ । स्मार्तत्वं वैकृतानां स्यात्पौष्णचर्वादि-कर्मणाम् ॥ क्लृप्तोपकारसंबन्धात्तत्र चेदप्रकीर्णता । पौर्ण-मासविकारत्वात्तद्वत्स्यादष्टकाद्यपि ॥ न चास्ति पठ्य-मानत्वे स्मार्तानामविकारता । दर्विहोमेष्वपूर्वत्वमुक्तं सादृश्यहानतः ॥ अन्वारुह्योक्तमेतच्च विधिवाक्यप्रकीर्ण-ताम् । शाखासहस्रमध्येऽपि न त्वेका पठ्यतेऽष्टका ॥ प्रकीर्णा ये तु दृश्यन्ते नृधर्मा विधयः क्वचित् । निय-मानां यमानां च ते स्युर्मूलं न कर्मणाम् ॥ प्रत्यक्षं पठ्य-मानानां प्रकीर्णत्वाद्धि कर्मणाम् । कल्पकाराश्च निन्द्याः स्युरसामर्थ्यादकल्पने ॥ मन्त्रार्थवादमूलत्वं स्मर्तारः कीर्तयन्ति यत् । तच्चासत्स्याद्वसिष्ठादौ कथं लाङ्गल-मुद्वपेत् ॥ व्याख्यानतः शुनःशेप इत्युक्तेश्चार्थवादजाः । श्रुत्या सह विरोधे च विकल्पो विधितुल्यतः ॥ तत्र शङ्खवचो दुःस्थं तयोश्च ज्यायसी श्रुतिः । द्वितीयस्तदनु-व्याख्या स्मार्तो बौधायनस्य च ॥ अनयाऽयं दिशा पक्षः प्रपद्येवं त्रिवेकतः । सर्वथा परिशोध्यस्तु स्मृत्यप्रामाण्य-वादिभिः ॥’ । एवं तावत् विप्रकीर्णविधिमूलत्वमनु-पपन्नम् । मन्त्रार्थवादयोस्त्वन्यपरतयैवामूलत्वम् । किंच, मन्त्रः प्रकरणे वा स्यादप्रकरणे वा । प्राकरणिकस्तावत् परार्थ एव । इतरोऽप्युपादानशून्यलिङ्गविनियोजकत्वान-भ्युपगमादमूलम् । स्वाध्यायाध्ययनविधेरपि जपयज्ञाद्युप-योगित्वेन नैराकाङ्क्ष्यादौदासीन्यम् । अर्थवादास्तु येऽना-रभ्य पठ्यन्ते, तेषां प्राक् विधिकल्पनादपर्यवसानात्,

कल्पिते च तादर्थ्यादकारणत्वम् । अथ मन्त्रार्थवादान्वितपदार्थसत्यतोपपादनार्थे तदनुसारिकाल्पनिकविध्यन्तरमूलतोच्येत, यथा 'प्र ते यक्षि' इत्यन्यभिधानपरे मन्त्रे 'धन्वन्निव प्रपा असि' इत्येतत् दृष्टान्तपदं लोकप्रसिद्धयाऽनुपपद्यमानं स्वसिद्धयर्थं विध्यन्तरं 'प्रपा कर्तव्या' इति कल्पयति, तथाऽर्थवादेऽप्यश्वानुगतौ रासभस्य 'तस्माच्छ्रेयांसं यन्तं पापीयान् पश्चादन्वेति' इति हेत्वभिधानात् तत्सिद्धये 'श्रेयाननुगन्तव्यः' इत्याद्यनुमितविध्यर्थमूलतोच्येत । तदप्यसारम् । भ्रान्तिजनितोऽपि व्यवहारः पदार्थालम्बनहेतुतां प्रतिपद्यते । भ्रान्तिः किमिति चेत्, अस्मादेव वाक्यार्थविपर्ययात् । सत्यतया वा सालम्बनत्वे को विरोधः ? 'विज्ञानघनः' इत्यादेरपि सत्यता वचनीया । ततश्च नैरात्म्यापत्तेश्चोदनाव्यवहारो दुःश्लिष्टः स्यात् । तथाऽस्त्विति चेत्, कः स्वल्पकल्पनयैवोपपद्यमानप्रामाण्यं वेदं कल्पनामारोप्याप्रमाणीकुर्यात् ? यथा च कुदृष्टीनां भ्रान्तिजनितानामेव प्रतिषेध्यत्वेन पदार्थालम्बनत्वं तथैतेषामपीत्यदोषः । कल्पनायामपि फलवत्प्रयोगवचनान्तर्गतेस्तादर्थ्यादपुरुषार्थत्वेन स्मृत्यविषयताप्रसङ्गः । नाम्नां तु गुणफलान्वयमात्रोपयोगित्वात् दूरापेतं मूलत्वम् ।

एतेनोत्सन्नशाखामूलत्वं व्याख्यातम्, उत्सन्ना अपि ह्येवंरूपा एवेति । किंच, उत्सादोऽपि प्रमाणशून्यः कल्पनीयः स्यात् । न हि शाखोत्सादः संभवति, एवंरूपशाखान्तरानुपलब्धेः । चतुर्णामपि वेदानां काश्चिच्छाखाः पठ्यन्ते । न चैकस्यामपि स्मृत्यभिहितधर्मसादृश्योपलब्धिरस्ति । न चात्यन्तविलक्षणत्वेन शाखान्तरत्वोपपत्तिः । न हि मैत्रायणी शाखा काठकस्यात्यन्तविलक्षणा । शाखैकदेशमूलत्वे वा महत्यदृष्टकल्पना स्यात् । उत्सन्नवेदमूलत्वं तु वेदचतुष्टयप्रसिद्धेर्नातीव पेशलम् । प्राक् चोत्सादात् स्मृत्यभावप्रसङ्गः । उत्सादाशङ्कया वा स्मरणेऽग्निहोत्रादीनामपि स्मार्तत्वं स्यात् । अतोऽयमसारः पक्षः ।

ये तु वेदवत् स्मृतीनामपि नित्यतया प्रामाण्यं मन्यन्ते प्रवचननिमित्ता मन्वादिसमाख्येति वदन्तः, ते खलु मौनमात्रो दुर्निवाराः । अबाधकत्वेऽपि हि पुरुषाप्रणीते- वेदः प्रमाणम् । सर्वलोकबाधा चात्र तदप्रणीतिः । दुर्निवारं चासदागमनात्( ? गमानां ) तादूप्यमेवं सति स्यात् । तथाऽस्त्विति चेत्, अलं स्मृतिशास्त्रेण । इदानीमदृष्टमात्रेणोपरतकर्तृकाणां कूपारामादीनामपि तदकर्तृकत्वप्रसङ्गः । मन्वादीनां च 'स सर्वोऽभिहितो वेदे' इत्याद्यभिधानं मृषेत्यापद्येत । तद्यशःप्रोत्सारणेन वा कथंचित् क्लिष्टकल्पनयाऽर्थवादत्वं योजनीयम् । कठादिचरणानि च तां तां शाखां बिभ्रति । न च मानवादिचरणोपलब्धिरस्ति । न च छान्दोग्यब्राह्मणवत् त एव शाखिनो धारका इति शक्यं वक्तुम्, अन्यतमवेदशाखानन्तर्गतत्वात् । यदपि शाखिनां धारणमुपलभ्यते, तदपि स्मृतित्वेनावेदतया अङ्गवत् । प्रताध्ययनादरश्चैवमुपपद्यते । ताश्च स्मृतयो नित्या इति वाच्यम् । यदि तावत् कतिपयमन्वादिप्रणीता एवेत्युच्येत, नारदादेरप्रामाण्यप्रसङ्गः । तथाऽस्त्विति चेत्, विशेषहेतुर्वाच्यः । इदानींप्रणीतबौधायनादिस्मृतेश्च मन्वादिवदादरो न स्यात् । यत्नप्रयत्नपूर्वकं सर्वा ब्रह्मणो मुखान्निःसृता इति तच्छाक्यमुनिदेशनेवातिस्थूलम् । अपि च नित्यत्वे स्मृतीनामध्ययनविध्यभावात् संप्रदायविच्छित्तिः स्यात् । नन्वस्ति 'विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।' इति । न तेनाखिलस्मृत्यध्ययनविधानम्, इदमिति च प्रकृतपरत्वात् । प्रकृते च विरोधादसमर्थत्वम् । यदि चाध्येतव्यमित्यस्य विधेरर्थावगम्यतोच्येत तदाऽनुपनीतस्य शूद्रसमत्वात् वेदार्थत्वेन चोपनीतस्य तदध्ययनात् संध्योपासनादिकतिपयार्थशिक्षणवचनाच्च स्मृत्यनध्ययनम् अधीतवेदस्य च गुरुकुलनिवर्तनमित्यादि प्रपञ्चनीयम् । पाठमात्रपर्यवसायित्वे त्वस्याप्यदृष्टार्थत्वात् स्मृतिसंप्रदायो दुर्घटः स्यात् । वेदमूलत्वे तु स्वाध्यायाध्ययनविधिविजृम्भणात् कथंचिदुपपद्येतापि । तदेव दुरुपपादमित्युक्तं पुरस्तात् । नैवं त्रुटितविकल्पजालेन परावृत्तिचतुरप्रज्ञासहाया गृह्यन्ते । को वा वेदमूलतया स्मृतीनां प्रामाण्यं ब्रूयात् ? संप्रदायाविच्छेदात् वेदवत् स्मृतयोऽपि स्वतन्त्रा यतः । न च पूर्वाभिहितदोषप्रपञ्चनम् । ग्रन्थनित्यत्वानभ्युगमात् । ग्रन्थेन च नातीव प्रयोजनम्, स्मार्त-

क्रियानुष्ठानरहितकालाभावात् । यथैव हि कृष्यादयो विशिष्टफलोपायान्वितत्वेन लोकत उपलभ्यन्ते तथाऽष्टकादयोऽपि यतः । इयांस्तु विशेषः— संनिकृष्टफलाः कृष्यादयः, ¶ अनियतफलाश्चाष्टकादयः । न चैतावता लौकिकत्वं शक्यं वक्तुम्, अस्मादेव विवेकावधारणात् । प्रमाणान्तरतः स विवेको भ्रान्त्याऽपीति चेत्, न, प्रमाणान्तरस्य निराकृतत्वात् । दृढत्वावगतेश्चाभ्रान्तिः । भ्रान्तिकल्पने चावेद एव वेदतया गृहीत इत्यप्याशङ्क्येत । यथैव ‘ वेदोऽयम् ’ इति बुद्धिर्लौकिकत्वेऽपि वाचकत्वस्मरणान्न भ्रान्तिरित्युच्यते तथाऽष्टकाद्युपायफले स्वरूपनियमोऽपीत्यवगन्तव्यम् । न च परोक्षत्वात्फलसाधनशक्तेरलौकिकत्वाभिधानं शब्दशक्तिवत् । प्रतिपत्त्यन्यथानुपपत्त्या सेति चेत्, तदत्रापि समानम्, दृढत्वात् प्रत्ययस्य । यथैव हि शब्दाः प्रत्यायकत्वेन शक्तिकल्पनानिमित्तं तथा निरूढप्रतिपत्तिहेतवोऽर्था अपीत्यदोषः । कस्य वाऽत्र परोक्षता ? अष्टकादयस्तावत् पुरुषान्तरैरनुष्ठीयमानाः प्रत्यक्षत्वेनाशेषाङ्गा उपलभ्यन्ते । तत्र च वेदशब्दवदष्टकादिशब्दव्युत्पत्तिः । विशिष्टकार्यनिमित्तं च तदनुष्ठानमिति स्वरूपवदनुष्ठातृभ्य एवावगम्यते । तत्प्रसिद्ध्यनुपपत्तिकल्पिते च संबन्धिनि बोधकशक्तिवत् प्रवृत्तेरव्याघातः । तस्मात् स्वातन्त्र्यं स्मृतीनामित्युक्तम् । तथा चाऽऽह— ‘ अग्रन्थकानामर्थानां चकारोपनिबन्धनम् । ’ इति । आम्नायश्च— ‘यद्युक्तो भूः’ इत्याद्युपक्रम्य ‘ यजुष्टः, सामतः ’ इत्युक्त्वा ‘ यद्यविज्ञातम् ’ इत्याह । स्मार्तं चाविज्ञातमिति संप्रदायः । तच्च वेदमूलत्वे सत्यनुपपन्नम्, सर्वथाविज्ञानासंभवात् । न हि विद्यमानमूलं निरूप्यमाणेऽविज्ञातमिति शक्यं वक्तुम् । पुरुषान्तरापेक्षया त्वविज्ञानेऽतिप्रसङ्गः । स्वातन्त्र्यपक्षे त्वविरोधः ।

साहसिक, मैवम् । § राजन्वान् जनपदः । न खलु सद्भिः परिगृहीता नार्यः स्वतन्त्रा भवन्ति । न हि लौकिकमनुष्ठानं प्रमाणरहितं स्मृत्यर्थसतत्त्वायालं भवितुमर्हति । मा भूच्चैत्यवन्दनादिक्रियास्वपि तथात्वम् । अवेदविदां तदनुष्ठानात् वैषम्यमिति चेत्, किं वा स्वातन्त्र्यवादिनां वेदविद्भिः प्रयोजनम् ? न खलु वेदो वेदवित्परिग्रहात् प्रमाणम् । नापि लोकनिबन्धनाः कृष्यादयो वेदविदपेक्षाः । सांदृष्टिकफलास्त इति चेत्, अन्यथा वा कथं लोकनिबन्धनत्वम् ? न ह्यसांदृष्टिकमर्थमागमानपेक्षो लोकः प्रतिपत्तुं क्षमः । अथ वाचकशब्दवल्लोकव्यवहाराधीनतोच्येत, तदसत् । तत्रार्थप्रत्ययानुपपत्तिः कल्पनामूलम् । इह तु किं नोपपद्यते ? व्यवहारस्य चैत्यवन्दनादिष्वपि दर्शनात् । न चाभियुक्तमन्वादिस्मरणात् विशेषोपपत्तिः, व्यवहारमूलत्वेऽसदागमैरविशेषात् । ननु च वेदस्तावत् प्रमाणमित्युक्तम् । तद्विहितदर्शपूर्णमासाद्यनुष्ठातारश्च धर्मे प्रत्यभियुक्ताः । ते चाष्टकादीनामनुष्ठातारः । तेनेतरव्यवहारात् वैषम्यम् । मैवम्, विपर्ययेण सुतरामस्योपपत्तेः । वेदविदां हि तेनैव निराकाङ्क्षत्वान्न व्यावहारिकधर्मादरः । परित्यक्तवेदमूलव्यवहाराणां त्वनन्यगतिकत्वात् व्यवहारे सुलभता । अस्तु, तेषामपि कार्यतेति चेत्, सुश्लिष्टमेवं सति प्रामाण्यम् ।

¶ विरुद्धधर्मयोरेव परस्परविशेषरूपत्वात् संनिकृष्टफलत्वानियतफलत्वयोर्विरोधाभावाच्च यथाश्रुतोऽयं ग्रन्थो नोपपद्यते । अष्टकादीनामनियतफलत्वमपि नोपपद्यते । किंच, ‘ अष्टकाद्युपायफले स्वरूपनियमोऽपि ’ इत्यग्रिमग्रन्थविरोधश्च स्पष्ट एव । तस्मादष्टकादियोगिविरुद्धधर्मबोधिका शुद्धिरत्र कल्पनीया । तत्र सरूपशब्दस्यैव प्रमादलेखनकल्पनौचित्यात् असंनिकृष्टफलानियतफलशब्दयोर्वैरूप्याच्च अनियतशब्दस्थाने असंनिकृष्टशब्दशोधनं न श्लिष्यते । अतः ‘ संनिकृष्टफलाः कृष्यादयः अनियतफलाश्च, असंनिकृष्टफला नियतफलाश्चाष्टकादयः ’ इति शुद्धिरत्र सुकल्पा । शब्दसादृश्यात् प्रमादेन लेखनोत्प्लुतिर्दरीदृश्यत एव ।

§ यथा नियामके राजनि जाग्रति जनपदस्याऽऽचारमर्यादातिक्रमो न सह्यः, तथाऽस्मासु जाग्रत्सु भवतो विचारमर्यादातिक्रमो न सह्य इत्यर्थः । तथा सदाचारसंपन्नै रक्षणसमर्थैश्च परिगृहीता नार्यो यथा स्वतन्त्रा न भवन्ति, तथा स्वतःप्रमाणैर्वेदैः प्रामाण्ये स्वोपजीवकत्वेन परिगृहीताः स्मृतयः स्वतन्त्रा न भवन्तीत्यर्थः ।

एवं तर्हि चोदनार्थानुष्ठातृव्यवहारसामान्यादेव तत्प्रवृत्तिसमर्थं कारणमनुमीयताम् । ननु तदेव नास्तीत्युक्तम् । अत एवानुमीयते । किमसदप्यनुमीयते ? न ह्यनुमापकलिङ्गसंभवे सत्यसदिति शक्यं वक्तुम् । किं पुनस्तल्लिङ्गम् ? त्रैवर्णिकानामसांदृष्टिको व्यवहारश्चोदनामूलो दृष्टः । तथाविधश्चायम् । तस्मादत्राप्यस्ति चोदना मूलभूतेति । नापि तद्वदुपलब्धिप्रसङ्ग इत्येवं विशेषणविरुद्धत्वम्, अदर्शनस्याबाधकत्वात् । इतरव्यवहारे तु व्याप्त्यभावात् वैषम्यम् । किमनुपलभ्यमानैव चोदना व्यवहारं प्रवर्तयति ? किमनयाऽनुपयुज्यमानविचारणया ? सर्वथा प्रवर्तयति । न चानुपलब्धिः, सामान्यतो विशेषतश्चानुमानात् । नियतकारणानि हि कार्याणि तथैव स्वकारणान्यप्यवगमयन्ति । एवं च विध्यर्थानुष्ठानमुपपद्यते । स्वातन्त्र्ये तु क्रियानुष्ठानम् । तत्र च फलाभावप्रसङ्गो$ऽनन्तरोत्पादनानन्वयफलानाम् । न च संस्कारोत्पत्तिद्वारेण कालान्तरे फलोत्पादकत्वमिति शक्यं वक्तुम्, लौकिकाभिधानव्याघातात् कल्पनाहेत्वभावाच्च । अतोऽयमेव पक्षः श्रेयान् । दर्शनानि चात्राप्युपपद्यन्त एव ।

नायं पक्षो निर्वहणीयः । न खलु प्रमेयगम्यानि प्रमाणानि भवन्ति । अनुष्ठानानुपपत्त्या हि कारणं कल्पयतः कुतोऽनुष्ठानम् ? न हि प्राक् कारणकल्पनातोऽनुष्ठानसिद्धिः । तत्सिद्धौ मुधा कारणकल्पना । अथोच्येत—पुरुषान्तरस्थमनुष्ठानं दृष्ट्वा तदनुपपत्त्या कारणमनुमाय ततोऽनुष्ठानप्रवृत्तेरदोष इति, तदयुक्तम् । न हि पुरुषान्तरानुष्ठानानुपपत्तिः, तस्य सिद्धत्वात् । यदप्यनुमानमुक्तं कर्तृसामान्यादिति, तत्रापि हेतोरप्रयोजकत्वम् । न हि दर्शपूर्णमासादीनां त्रैवर्णिकानुष्ठानात् धर्म्यत्वम्, अपि तु वेदविहितत्वात् । न चैषां तदस्ति । अथासांदृष्टिकं तदनुष्ठानं धर्म इति, तदपि व्यभिचारि, अवैदिकत्वेऽपि विगुणधर्मानुष्ठानदर्शनात् । भ्रान्तेस्तदिति चेत्, एवं सत्यत्रापि भ्रान्त्युपप्लवात् व्यभिचारः । अथाबाधाभावादभ्रान्तिरित्युच्येत, तदप्यसिद्धम् । वेदविरुद्धे हि स्मृत्यर्थेऽबाधादर्शनात् । अथ यत्र तदभावस्तत् प्रमाणमित्युच्येत, तदपि दुरधिगमम् । सर्वं चावेदविहितं तद्विरुद्धमेवानुष्ठानमसांदृष्टिकम् । अतोऽयमप्यसारः पक्षः । 'स सर्वोऽभिहितो वेदे' इत्याद्यसंबद्धं स्यात् । प्रमाणरहितकारणकल्पनायां त्वन्धपरम्परा । न्यायोक्ते तु दर्शनानामात्मलाभः । '¶वचनानि त्वपूर्वत्वात्' (जैसू. ३।५।२१, १०।४।२२) इत्यस्यायमविषयः । अनया दिशा परिचोदनीयं प्रपञ्चनीयम् । सर्वथा तु स्मृतीनामप्रामाण्यम्, मूलकारणानुपलब्धौ स्मृतित्वात्, वन्ध्यादौहित्रस्मरणवत् । अत्राभिधीयते— नैवं स्वोत्प्रेक्षितविकल्पजालैः स्मृतीनामप्रामाण्यारोपणं युक्तम् । स्वयं हि मन्वादिभिरुक्तम्— 'स सर्वोऽभिहितो वेदे', 'वेदो धर्ममूलम्,' 'आम्नायप्रामाण्यादाचारः', 'द्वितीयस्तदनुव्याख्या स्मार्तः', 'वेदः स्मृतिः सदाचारः' इत्यादि । न चैवंरूपाभ्युपगमातिक्रमेण मूलान्तरान्वेषणं युक्तम् । युक्तश्चायमभ्युपगमः, अस्मिन्नर्थे प्रमाणान्तरा-

---

$ कर्मसमाप्त्यनन्तरं या उत्पादना तया सह अनन्वयः असंबन्धः येषां तानि अनन्तरोत्पादनानन्वयानि । कर्मसमाप्त्यनन्तरमनुत्पादितानीत्यर्थः । तथाभूतानि फलानि येषामष्टकादीनां तानि तथा, तेषाम् । कर्मसमाप्त्यनन्तरं फलोत्पादनाभावात् फलाभावप्रसङ्ग इत्यर्थः ।

¶ वचनानि विधायकवचनानीत्यर्थः । विधेयमिदम् । प्रकृतानि सोमभक्षादिबोधकविशेषवचनान्युद्देश्यानि । एवमस्य सूत्रस्य विशेषवचनोद्देशेन प्रवृत्तावपि हेतूक्तेः सामान्यन्यायपरत्वमस्त्येव । अत एव विशेषवचनपरत्वेन स्मृतिवचनान्यस्याविषय इत्यर्थोऽत्र नाभिप्रेतः । सूत्रोक्तः सामान्यन्यायश्चेत्थम्— सिद्धप्रामाण्यानां येषां वचनानां विषयभूतार्थस्यापूर्वत्वमस्ति, तानि वचनानि तस्मिन्नपूर्वार्थविषये विधायकवचनानि भवन्ति, विधित्वप्रयोजकस्य विषयापूर्वत्वस्य सत्त्वात् । नानेन वचनानामपूर्वतया प्रामाण्यं साध्यते, अपि तु सिद्धं प्रामाण्यमर्थान्तरे संचार्यते । तेन न्यायस्यास्य सिद्धप्रामाण्यवचनविषयत्वम् । येषु वचनेषु विधिविभक्तिर्नास्ति, अस्ति चेदर्थान्तरावरुद्धाऽस्ति, तद्वचनविषयत्वमस्य न्यायस्यार्थसिद्धम् । स्मृतिवचनानामपूर्वार्थविषयत्वमात्रेणैतन्न्यायविषयत्वं मनस्याशङ्कितम् । स्मृतिवचनानां प्रामाण्यस्य साध्यमानत्वेन सिद्धत्वाभावादेतन्न्यायाविषयत्वमित्युत्तराभिप्रायः ।

भावात्, 'चोदनालक्षणः एव धर्मः' इति नियमो यतः। न च भ्रान्त्यादिकल्पनोपपत्तिः, वेदवित्परिग्रहविरोधात्। नाप्यन्यमूलत्वे तत्परिग्रहोपपत्तिः चैत्यवन्दनादिवत्। भ्रान्त्यादिकल्पने वा वेदेऽप्यवेदताप्रसङ्गः। न चार्थभाव्यं वेदमूलत्वम्, 'वेदविदो हि मन्वादयः' इति स्मरणात्। न चैतत् भ्रान्तेः, स्मर्तृत्वस्मरणवत्। अतः सूक्तं वेदमूलत्वम्। आह च– 'भ्रान्तेरनुभवाच्चापि पुंवाक्याद्विप्रलम्भनात्। दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी॥' इति। ननु तदेव वेदमूलत्वं दुरुपपादमित्युक्तम्। उक्ता हि सर्वथा वेदस्य मूलत्वानुपपत्तिः। न तत् सम्यगुक्तम्, प्रमाणतो हि मूलत्वोपपत्तेः। उपलभ्यते(? पद्यते) हि स्मृतीनां तन्मूलत्वम्, विध्यर्थान्यथानुपपत्तिलभ्यत्वात्। तथाहि– 'स्वाध्यायोऽध्येयः' इत्युक्ते 'विद्यां चाध्यापयेत्' इति द्वयस्यानुपपत्त्याऽन्यो विधिस्तत्र प्रकल्प्यते। 'विद्यामध्यापयेत्' इति हि विधिरात्मोपपादनायाध्ययनं प्रयुङ्क्ते। अध्ययनविधिरपि तत्प्रयुक्त्यैवोपपन्नानुष्ठानोऽधिकारान्तरकल्पनामन्तरेणौदासीन्यं प्रतिपद्यते। न चाध्यापयिताऽध्येतारमनुपनीयाध्यापयितुं क्षमः। तत्र विधिद्वयोपपत्त्यर्थं विध्यन्तरानुमित्या(?मितिः)– 'ब्राह्मणादीनुपनयीत' इति। एवं वेदार्थावगत्युत्तरकालं विधिद्वये चरितार्थे सत्यनन्तरं प्रजोत्पादनविध्यपेक्षायां पत्न्यभावे तदनुपपत्तेः कामैकसाधनत्वाच्च 'लक्षण्यां स्त्रियमुद्वहेत्' इति विध्यन्तरोत्थानम्। अग्निहोत्राद्यनुष्ठानस्य च पत्न्यपेक्षत्वात् तत्संनिधानाच्च 'तया सह यजेत' इत्यनतिक्रमणविध्युदयः। तथा 'ऋतावुपेयात्' इत्यादि। तत्र तत्र प्रधानोपपादका विषयः साधिकारा अनयैव दिशा कल्पनीयाः। तथाऽङ्गसंबन्धः प्रत्यक्षैरानुमानिकैश्च श्रुत्यादिभिरध्यवसेयः। निपुणतस्तु ग्रन्थव्याख्यायामेव प्रदर्शयिष्यामः। न चैवं सति दुःश्लिष्टता स्मृतिप्रामाण्यस्य। नन्वेवं सत्यर्थगम्याः स्मार्ताः विषयः प्रसज्यन्ते। तद्यथा– 'जुहुयात्सर्पिषेत्युक्ते स्रुवेणावद्यतीति च। आज्यं स्रुवेण गृह्णीयादिति विध्यन्तरोदयः॥'। यथा हि चतुरवत्तविशिष्टः सर्पिषा होमोऽवदानसमर्थद्रव्यविशेषापेक्षः स्रुवाद्याकाङ्क्षति, तथा 'स्रुवेणावद्यति' इति स्रुवविधिः स्वशक्त्यनुसारात् द्रवद्रव्यविषयतयोपप्लवमानस्तद्विशेषाभिमुखतां चाऽऽलोच्य विध्यन्तरमाविर्भावयति– 'स्रुवेणाऽऽज्यं गृह्णीयात्' इति। एवंजातीयकाः सर्वे विषयः स्मार्ताः प्रसज्येरन्। मैवम्, एषां विनियोगमात्रावसायित्वात्। यो ह्युत्पादकः पदार्थस्यानुष्ठापको वा स्यात् स एवोपदेशकारणम्, न तूत्पन्नेदमर्थ्यमात्रनियामकोऽपीत्यविरोधः। एवं तर्हि स्मृतिविनियुक्तानामप्यस्मार्तत्वप्रसङ्गः। न, स्मृतेः पदार्थोत्पादकत्वेन वैषम्यात्। का वार्ताऽष्टकादिषु? न तदभावे कस्यचित् विधेरनुपपत्तिः, स्वाध्यायाध्ययनविधेर्मन्त्राणां चोपपन्नत्वात्। उच्यते– अत्राप्यष्टकादिसमाख्यातमन्त्रवान् स्वाध्यायाध्ययनविधिर्नोपपद्यते। न हि जपयज्ञाद्यन्वये सति समाख्यानोपपत्तिः। न च स्पष्टतरविनियोगोपलब्धिः, यद्बलेनाऽऽख्याया बाधः। शक्यते च मन्त्रैर्द्रव्यदेवतासंयोगोऽधिकारहेतुत्वं च प्रतिपादयितुम्, तद्युक्ताध्ययनविध्यनुपपत्तितश्च कार्यतावगमः। अङ्गान्वयप्रकारस्तूक्त एव। नन्वेवं समाख्यानाभेदाद्देशैर्मन्त्रैरेकमेवाष्टकाकर्मानुमीयेत। मैवम्, सामर्थ्यभेदात्। स्वशक्त्या हि मन्त्राः कर्म प्रतिपादयन्ति। न चैककर्मप्रतिपादनशक्तिरस्ति। अतः सिद्धोऽष्टकादिकर्मणां भेदः। न चैवं सत्यशेषशाखाधिगताष्टकाद्यनुष्ठानमेकस्यैव स्यात्। न खल्वेकशाखाधिगतक्रियानुष्ठाने तदकरणनिमित्तप्रत्यवायो न परिहृतः स्यात्। पठ्यमानत्वे हि कर्मणां भिन्नानां समाननाम्नामप्येकक्रियायामकृती स्यात्, कर्तव्यतावगतेः समानत्वात् प्रयोजनैक्यानवगमाच्च। अनुमेयत्वे तदनुपपन्नम्, अष्टकाद्यभिन्नकालसंबन्धिनस्तदनुसारेण प्रयोजनस्याभेदात्। अवगतकालादिसंबन्धाविरोधेन हि प्रयोजनं कल्पनीयम्। तस्मानेककर्मानुष्ठानेऽनुपपन्नम्। न ह्येकस्मिन् कालेऽनेककर्मानुष्ठानोपपत्तिः। न चानुमेयत्वे पूर्वाह्णादिकालस्याङ्गत्वकृतः कश्चित् विशेषोऽस्ति पठ्यमानवत्। किंच, पठ्यमानं कर्माऽऽत्मानं कारयितुमक्रियायां प्रत्यवायं कल्पयति, काल्पनिकं पुनः पठ्यमानान्यथानुपपत्त्या कल्प्येत। तच्च कल्प्यकर्माननुष्ठाननिमित्तदोष-

कल्पनामन्तरेणैवोपपन्नमिति न कल्पनावसरोऽस्ति । अथ क्लृप्तकर्मानुष्ठानावगमानुपपत्त्या कल्प्येत, तदेवंरूपा कल्पना स्यात्– यो ह्यस्मिन्कालेऽष्टकाख्यं कर्म न कुर्यात् स प्रत्यवेयादिति । एवं सति तदाख्यैककर्मकरणेऽपि कृती स्यात् । न चैकैकत्र कल्पनाहेतुसद्भावादनेककल्पनाप्रसङ्ग इति शक्यं वक्तुम्, तस्यैककल्पनायामप्यविरोधात् । अथागृह्यमाणविशेषत्वादनेककल्पनमित्युच्यते, तदेकशाखापठ्यमानविषयत्वादेकैकशाखाधिगतत्वेऽनुपपन्नम् । न हि भिन्नशाखाधिगतत्वेऽप्यगृह्यमाणविशेषताऽस्ति । पठ्यमानेऽप्येतत् समानमिति चेत्, न, तस्य स्वमहिम्नैवानुष्ठापकत्वात् । इह तु स्वरूपस्यान्यतोऽधिगतेर्वैषम्यम्। किंच, अनुष्ठानोपपत्त्यर्था कल्पना । न चैककर्तृविषयतया सर्वकर्मानुष्ठानाभ्युपगमे तदुपपत्तिः । न हि स्वहेतुविरोधिन्यः कल्पनाः संभवन्ति । प्रत्यक्षाध्ययने त्वप्राधान्यात् कालस्य प्रसक्तावाप( ? क्तोऽपि ) विरोधः परिह्रियेत, न त्वनुमेयत्वेऽपि । अतः सूक्तमेककरणेऽपि कृती स्यादिति । विरोधादर्शनात्तु चतस्रोऽष्टकाः क्रियन्त इत्यनवद्यम् । एवं च सामान्यतः कार्यावगमः । क्वचिच्च प्रत्यक्षतोऽपि पठ्यमानत्वेन सामान्यतः कार्यावगतौ मन्त्रार्थवादा विशेषसमर्पका भवन्ति । तान्यपि स्मृतिमूलानि । यथा– 'एतदु खल्वद्धा तपो यदहिंसा यद्दमो यद्दानं यदतिथिसपर्या । अथ परमं तपो भूतानां यदनुजिघृक्षा । तस्मादेवंवित्सर्वेषां भूतानामद्धैवोपकुर्यात्' इति ब्राह्मणम्। अद्धोपकारश्च दृष्टकारणरहित उपकारः । तदपेक्षितप्रकारविशेषो मन्त्रार्थवादैरन्यपरैरपि प्रतिपाद्यमानो नापेशलः । यथा– 'स्थलयोदकं परिगृह्णन्ति' इति तटाकादिकरणम्, 'धन्वन्निव' इति प्रपाकरणम् । यत्तु फलवत्प्रयोगान्तर्गतेः कल्प्यमानस्यापि तादर्थ्यमिति, तत् लिङ्गेन प्रकरणस्य बाध्यमानत्वादचोद्यम् । यमनियमास्तु प्रायशः प्रत्यक्षमूला एव । यत्र पुनः प्रत्यक्षं तदनुपपत्तौ क्लृप्तं वा न सामान्यकरणमस्ति, तत्राप्यन्यपरत्वान्मृषार्थत्वेन चोपपन्नत्वान्न मन्त्रार्थवादाः स्वान्वितपदार्थसत्यताभाजो भवन्ति । तेनासदागमैर्वैषम्यम् । स्मृतयोऽपि च तद्रूपा एव बाध्यन्ते । न चैतावता समूलत्वेऽपि तन्मिथ्यात्वकल्पनेत्यलं प्रसङ्गेन । सर्वथा वेदमूलत्वं स्मृतीनामुपपन्नम्। शक्यते चैवं सति स्मृतीनामविज्ञातत्वं वक्तुम्, काल्पनिकत्वात् । कल्पनानिमित्तमेवर्ग्वेदादयः, न व्यपदेशकारणम्। तथा च मनुः 'स सर्वोऽभिहितो वेदे' (मस्मृ. २।७) इत्याद्यभिधानमन्त्रं( ? मात्रं ) ब्रुवन् कल्प्यत्वात् विधेर्वेदव्यपदेशो नास्तीति दर्शयति, आपस्तम्बश्च 'ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' (आध. १।१२।१०) इति वदंस्तेषां मूलसत्यताम् । उत्सन्ना इव प्रयोगादनुमीयन्त इत्यर्थः । स्मार्तव्यपदेशानादिता चैवमुपपद्यत इत्येषा दिक् । विरोधे चैवं बाध उपपन्नतरो भवति । अन्यथा तु विरोधे विकल्पः स्यात् । न च भवत्विति शक्यं वक्तुम्, शिष्टानभ्युपगमात् । ननु विपरीतः शिष्टाभ्युपगमः । न खलु स्मृतिविरुद्धं श्रुत्युक्तमप्याद्रियमाणा दृश्यन्ते । तथाहि– 'गोवधं नानुमन्यन्ते श्रुत्युक्तमपि तद्विदः । तस्योपपातकश्रैष्ठ्यं स्मृतौ यस्मादुदाहृतम् ॥ करणं च श्रुतेर्शांतं ज्योतिष्टोमादिकर्मणाम् । स्तेयाद्यर्जनेनापि न तत्स्मृतिविरोधतः ॥ मैवं न खलु शिष्टानां क्वचित्स्मृतिविरोधतः । श्रुत्युक्तार्थाननुष्ठानं दृढमल्पीयसामपि ॥ नहि छागवधं तज्ज्ञा न कुर्वन्ति निवारितम् । अवारितः स चेत्स्मृत्या गोवधोऽपि हि तत्समः ॥ स्मार्ता हि विषयः सर्वे श्रुत्युक्तव्यतिरेकिणः । तेन स्मृतिविरुद्धत्वं नाननुष्ठानकारणम् ॥ स्मार्तोऽपि गोवधोऽस्त्यर्घ्यमर्हयेत्प्रथमं गवा । नित्यानि चाष्टकादीनि हेतुस्तदकृतौ च यः । वेदमूलबलं वाऽपि भ्रान्तिर्वा वैदिके च सः । न तु स्मृतिबलाच्छिष्टा न कुर्युः कर्म वैदिकम् ॥ अर्धास्तमित आदित्ये प्रारम्भार्क्षविभावनात् ॥ जपः स्मृत्युदितस्त्यक्तो विरोधादग्निहोत्रिभिः ॥ अनुष्ठानाननुष्ठाने कारणं न बलाबले । मा भूद्धर्मः स्वरारूढा( ढ ? )वस्त्रसंछादनाद्यपि ॥ वेदमेव त्वदृष्टार्थे प्रमाणं मन्यते मनुः । प्रमाणं परमं धर्मे श्रुतिरित्यादिभाषणात् ॥ मन्यन्ते चातिदौर्बल्यं स्मर्तारः श्रुतितः स्मृतेः । धर्ममूलतया वेदं वदन्तस्तद्विदामिति ॥ तेन वेदविरुद्धायाः

स्मृतेर्बाध इति स्थितिः। श्रूयमाणविरुद्धत्वात्कल्पनानुपपत्तितः॥ प्रत्यक्षोऽप्युपकारादिविधिः सामान्यगोचरः। यायादालोच्य दौर्बल्यं विशेषविषयां स्मृतिम्॥ विध्यर्थान्यथाभावक्लृप्तेः प्रायो विधायकैः। इत्थमिर्बहुधा भिन्नैः स्मृतयः संप्रवर्तिताः॥ प्रत्यक्षतः कल्पनया च सम्यक्सिद्धस्य सामान्यविधायकस्य। मन्त्रार्थवादैर्विधिभिश्च कुर्याद्दृश्यानुमेयैः परिपूरणानि॥ इत्थं च गाढं नृकृतत्वपङ्कं विधूय धर्माख्यहिरण्यमाला। आम्नायसूर्यांशुविकासितानि बिभर्ति विध्यर्थसरोरुहाणि॥ एवं प्रामाण्यमालोच्य वेदमूलतया स्मृतेः। ते सर्वार्थेष्वमीमांस्ये इत्याह भगवान् मनुः॥'। विश्व.

(२) इदानीं धर्मस्य ज्ञापकहेतूनाह— श्रुतिरिति। श्रुतिः वेदः। स्मृतिः धर्मशास्त्रम्। तथा च मनुः— 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।' (मस्मृ. २।१०) इति। सदाचारः सतां शिष्टानाम् आचारः अनुष्ठानम्। स्वस्य चाऽऽत्मनः प्रियं वैकल्पिके विषये। यथा 'गर्भाष्टमेऽष्टमे वाऽब्दे' इत्यादावात्मेच्छैव नियामिका। सम्यक्संकल्पाज्जातः कामः शास्त्राविरुद्धो यथा 'मया भोजनव्यतिरेकेणोदकं न पातव्यम्' इति। एते धर्मस्य मूलं प्रमाणम्। एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम्। § मिता.

[इदानीमिति। तदुत्तरमुक्तहेतुत्वनिश्चयार्थमत्रैव जिज्ञासोदयादिति भावः। स्वपदं वृत्तपूरणार्थमिति केचित्। वस्तुतस्तु आत्मशब्दश्चेतनमात्रपर इति परात्मवारणाय तत्। यद्वा स्वपदस्य विवरणमात्मन इत्यर्थान्तरवारणायेति बोध्यम्। चः कामपदोत्तरं योज्यः। कर्मधारयनिरासायाऽऽह— सतामिति। बहुवचनेन कादाचित्कशिष्टकृतान्यथाचरणस्य तस्याभावः सूचितः। शिष्टलक्षणं पृषोदरादिसूत्रे भाष्ये स्पष्टम्। स्वस्य चेति। इदं न सार्वत्रिकम्, किंतु व्यवस्थितमित्याह— वैकल्पिक इति। सम्यगर्थमाह— शास्त्रेति। अत्रैव तात्पर्यम्, न तु शास्त्रसिद्धत्वे एव। तेन लौकिकस्यापि संग्रहः। तदाह— यथेति। जनकत्वनिरासाय सर्वानुरोधेनाऽऽह— प्रमाणमिति। यथाकथंचित् ज्ञापकम्, न पुनः प्रत्यक्षमेवेत्यर्थः। साक्षादिति शेषः। न चैवं 'साक्षात्कृतधर्माणः' 'प्रत्यक्षधर्माणः' इति विरोध इति वाच्यम्, तस्य श्रुतिमात्रपरत्वात्। सैव हि धर्मे मुख्यं प्रमाणम्। स्मृत्यादयस्तु तद्भेदा इति भावः। अत एवाऽऽह— एतेषामिति। बाल.]

(३) संप्रति धर्मप्रमाणान्याह— श्रुतिरिति। श्रुत्यादिकं प्रत्येकं धर्ममूलं धर्मनिश्चयस्य कारणम्। 'पुराणन्याय' (यास्मृ. १।३) इत्यत्र श्रुतिस्मृत्योः सामान्यतो धर्ममूलत्वमुक्तम्, अत्र तु निवार्य(? निर्धार्य) तन्मूलत्वमुच्यते। अर्थादन्येषां विद्यास्थानानां वेदानुरोधकत्वम्। स्मृतेर्न व्याकरणादिवद्वेदानुरोधकत्वम्, किंतु तदनुमापकत्वमिति पृथगुक्तिः। आचारादेः पुनरत्रैव धर्ममूलत्वोक्तिरिति न पुनरुक्तता। श्रुतिः वेदः। स्मृतिः धर्मतो वेदमूलं शास्त्रम्। सदाचारः शिष्टाचारः। स्वस्य स्वकीयस्य आत्मनः मनसः प्रियं तुष्टिकरम्। आत्मशब्देनात्र मनो लक्ष्यते। प्रियशब्देन तुष्टिः। तेन मनस्तुष्टिरत्र चिकीर्षोपरमो निर्दिश्यते। समीचीनः शास्त्रार्थविषयः 'अनेनेदं साधयामि' इति मनःकर्म संकल्पः। तज्जः कामः धर्मचिकीर्षा। एतत्सर्वं धर्मनिश्चये मूलं कारणमित्यर्थः। धर्मेण तन्निश्चयो लक्ष्यते। तत्राग्निहोत्रादेर्निश्चयमूलं श्रुतिः, वर्णाश्रमधर्मादेः स्मृतिः, होलाकादेः सदाचारः, यत्कर्म मनसस्तुष्टिपरिच्छिन्नतया विधीयते तस्य मनस्तुष्टिः। यथा— 'यस्मिन् कर्मण्यस्य कृते मनसः स्यादलाघवम्। तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत्॥' (मस्मृ. ११।२३३) इति। कालविशेषे संकल्पजः कामः। यथा— 'यदैवैनं श्रद्धयोपनयेत्तदैवाऽऽदधीत' इति। अथवा 'श्राद्धं प्रति रुचिश्चैव' इति। व्यासः— 'धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते। धर्मस्य कारणं शुद्धं मिश्रमन्यत्प्रकीर्तितम्॥'। शुद्धिः असंकीर्णता। धर्मस्य धर्मनिश्चयस्य इत्यर्थः। शुद्धम् अदुष्टम्। मिश्रं संभावितदोषम्। 'अतः स परमो धर्मो यो वेदादधिगम्यते। अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः॥ वेदार्थवित्तमैः कर्म

§ मुक्ता. मिताक्षरम्।

यत्स्मृतं मुनिभिः पुरा । तद्यत्नेन समातिष्ठेत्त्रिविधं तु वर्जयेत् ॥ ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया । प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचारयेत् ॥ वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि । ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्मनीषिणाम् ॥ एतेभ्योऽपि यदन्यत्स्यात्किंचिद्धर्माभिधायकम् । तद्दूरतरतो विद्धि मोहस्तस्याऽऽश्रयो मतः ॥ ' । न विचारयेत् नाप्रमाणतया शङ्केत । एतेभ्यः धर्मशास्त्रादिभ्यो यत् अन्यत् पौरुषेयं तद्धेयम् । ननु च शैवपाशुपतपाञ्चरात्रशास्त्राद्यपौरुषेयमेव, ततश्च तदनुष्ठानाचरणेऽभ्युदय एव, न दोषः कश्चित् , तस्य निःश्रेयसहेतुत्वात् । मैवम् , ' आचम्य च पुरा ब्राह्मीं भजेत्संध्यां द्विराश्रमी। इतरस्तु विरक्तात्मा लौकिकार्थपराङ्मुखः । ब्राह्मीं कुर्यान्न वा कुर्याच्छैवीमेव नियोगतः ॥ अन्तः शैवं बहिः कौलं लोकाचारे तु वैदिकम् । सारमादाय तिष्ठेत्तु नारिकेलफलं यथा ॥ ' इति स्वायंभुवादिवचनेनानवक्लृप्तलोकानुरञ्जनापादकत्वेन प्रतिपादितवैदिककर्मवैफल्यदोषत्वात्सर्वात्मना श्रुतिस्मृतिविहितधर्मानुष्ठानैकपरमार्थाञ्छिष्टवृद्धान् प्रति शैवाद्याम्नायस्यानुष्ठाने निःश्रेयसनिमित्तत्वासिद्धेः । नापि तेषां शैवादिशास्त्राननुष्ठाने काचित् क्षतिः । ' यावज्जीवमग्निहोत्रं जुहुयात् ', ' अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ' ( मस्मृ. ४।२५ ) इति श्रुतिस्मृत्युक्तैर्हि तेषामाश्रमकर्मभिः प्रयोजनम् , नान्यैः , श्रुतिस्मृत्यर्थातिक्रमे प्रत्यवायापत्तेः । तथा च श्रुतिः– 'वीरहा वा एष देवानां योऽग्निमुत्सादयते । ' । स्मृतिरपि– ' अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः । चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ॥ ' ( मस्मृ. ११।४१ ) इति । न चाननुष्ठानमात्रेणैवार्थसिद्धं दूषणमिति वाच्यम् , ' द्रुतेन त्रपुणा पूर्णवक्त्रास्तिष्ठन्ति दुःखिताः । द्वेष्टारः शिवशास्त्राणां ये च वेदविदूषकाः ॥ ' ' सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । अतिप्रमाणान्येतानि हेतुभिर्न विचारयेत् ॥ ' इति अदूष्यत्वेन हेत्वविचारणीयत्वेन च देवीपुराणयोगयाज्ञवल्क्ययोरदूष्यत्वेन तस्य स्मरणात् । न चैतावता तदनुष्ठाने न दोषः कश्चिदिति वाच्यम् , ' यावद्वचनं वाचनिकम् ' इति न्यायेन न्यूनस्याधिकस्य वा परिग्रहस्य स्वोत्प्रेक्षामात्रेण कर्तुमनर्हत्वात् , सकलादूष्यागमानुष्ठानस्य च कर्तुमशक्यत्वात् । ' दीक्षितस्य च वेदोक्तं श्राद्धकर्मातिगर्हितम् । इत्येवं वैदिकश्राद्धक्रिया नादीक्षितैरपि ॥ दीक्षिताम् प्रति कर्तव्या द्वयोर्निरयदायिनी ॥ ' इत्यादिना शैवशास्त्रप्रतिपन्नस्य वैदिककर्मकरणेन नरकदानादिदोषप्राप्तेः , 'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ' इत्यादिना भारतादौ विकल्पस्यापि स्वानुष्ठानस्योत्कर्षदर्शने सत्यपि सकलादूष्यागमानुष्ठानस्य च परस्परविरुद्धार्थत्वे ज्ञाननिष्ठाप्राप्त्यभावाच्च । तथा च शैवाः प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः , इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति भेदेश्वरवादिनः । सांख्याः निरीश्वरवादिनः । योगाः पातञ्जलास्तु जगतामकर्ता क्लेशकर्मविपाकाशयैरपरामृष्टः सर्वशास्त्रवेत्तृत्वात्सर्वज्ञः पुरुषविशेष ईश्वर इति सेश्वराः । पाञ्चरात्राः पुनः शान्तोदितविष्णुत्वाव्यपदेश्यभिन्नतया चातुरात्म्येनावस्थितः परमा प्रकृतिर्भगवान् वासुदेव इत्यद्वैतभावेनेश्वरं मन्यन्ते । पाशुपताः पुनः कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोचनार्थमुद्दिष्टा इति भेदेश्वरवादमङ्गीकुर्वन्ति । तदेवमनवस्थितत्वात्सर्वागमज्ञानस्य सर्वस्वीकारे संशयानिवृत्तेर्ज्ञानलाभो दुर्घट एव । वैकल्पिकाङ्गीकारे चोन्मत्ततुल्यता प्रसज्येत । ननु यथा शैवाद्याम्नायस्यैवादूष्यत्वमात्रेण प्रामाण्यम् , तथैवादूष्यत्वस्मरणाविशेषाद्वेदस्यापीति । सत्यम् , ' द्रुतेन त्रपुणा ' इत्यादिना वेदस्य शैवाद्यागमसदृशमेवादूष्यत्वमात्रेण प्रामाण्यम् , ' पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् । अतर्क्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ ' इत्यादिना मन्वादिभिरैहिकामुत्रिकार्थप्रकृष्टसाधकत्वं तु वेदस्योक्तम् , न शैवादिशास्त्रस्य; प्रत्युत– ' ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च । सिद्धान्तसंज्ञकं पूर्वं मया शास्त्रं प्रदर्शितम् ॥ पशुर्योऽपशुभावस्थः स यदा पतितो भवेत् । तदा पाशुपतं शास्त्रं ज्ञायते विश्वमोहकम् ॥ मयैव मोहितास्ते हि

भविष्यन्तो जना द्विज । लौल्यार्थिनस्तु शास्त्राणि करिष्यन्ति कलौ नराः ॥ निःश्वाससंहिता या हि लक्षमात्रं प्रमाणतः । सैव पाशुपतो योगो भेदाः पाशुपतास्ततः ॥ एतया वेदमार्गादेर्यदन्यदिह जायते । तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् ॥' इत्यादिनाऽगस्त्यं प्रति रुद्रवचनेन वराहपुराणे तस्य विमोहकत्वेन विप्रलम्भकत्वमेव प्रतिपादितम् । सर्वजनविमोहकत्वाद्विप्रलम्भकमेव शैवादीति । भूयश्च तत्रैव श्रीरुद्रं प्रति जनार्दनवाक्यम्– 'एष मोहं सृजाम्याशु यो जनं मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अल्पायासं दर्शयित्वा फलं दीर्घं प्रदर्शय । कुहकाश्चेन्द्रजालानि विरुद्धाचरणानि च । दर्शयित्वा जनं सर्वं मोहयाऽऽशु महेश्वर ॥' इति । अत एव च मनुः– 'उत्पद्यन्ते च्यवन्ते च यान्यतो यानि( ? ऽन्यानि ) कानिचित् । तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥' (मस्मृ. १२।९६) इति । अत एव च शैवादिशास्त्रोक्तस्याप्रामाण्यमाचारस्याऽऽहाऽऽपस्तम्बः– 'वेदाः प्रमाणमिति निष्ठा । तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपात्रीसंबन्धान्युच्चैर्नीचैः कार्याणीति । तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते' ( आध. २।२३।९ ) इति । ननु च 'अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि । आचारेण प्रवर्तन्ते ते मां प्राप्स्यन्ति मानवाः ॥ ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति ॥' इत्यादिना वराहपुराणे भगवद्वाक्येन पाञ्चरात्रस्य वेदप्रतिनिधित्वेन स्मरणाद्वेदेनाविशेषः पाञ्चरात्रस्य । सत्यमविशेषः, किंतु विषयविशेषाद्विशेषः । तथा हि– अस्य वाक्यस्य कुतश्चिद्दैवयोगादकृतप्रायश्चित्तव्रात्यविषयत्वादविप्लुतब्राह्मणाद्यनाश्रयत्वम् । एवं हि सत्यब्रालाभपदमुपपत्तिमत्स्यात्, तादृशानां व्रात्यानां वेदपरिप्राप्तेरभावात् । तथा च मानवम्– 'नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् । ब्राह्मान्यौनांश्च संबन्धानाचरेद्ब्राह्मणः सह ॥' (मस्मृ. २।४०) इति । एवं च पाञ्चरात्रे द्विजात्यधिकारोऽपि विचालित एव स्यात् । तस्माद्विधिवशादकृतप्रायश्चित्तव्रात्यविषयत्वादस्य वाक्यस्यास्ति विशेषो वेदपञ्चरात्रयोः । अत एव च योगयाज्ञवल्क्ये पञ्चरात्रस्य पाशुपतादिसमानं सिद्धान्तत्वेनाभिधानं वेदबाह्यत्वप्रतीतिकृदेव– 'एकमेव तु विज्ञेयं प्रणवं योगसाधनम् । गृहीतसततसिद्धान्तैरन्यैर्ब्रह्मविदैस्तथा ॥ हैरण्यगर्भैः कपिलैरपान्तरतमैस्तथा । सानत्कुमारैर्ब्रह्मिष्ठैस्तथा पाशुपतैरपि । पाञ्चरात्रैरपीत्येतैः सिद्धान्तैश्चैव सत्तमैः ॥'। एवं हि पञ्चरात्रस्यादूष्यत्वेनैव प्रामाण्यम्, नानुष्ठेयत्वेनेति । ननु च यथैव नियतान् कांश्चिदधिकृत्य वेदादिशास्त्रं प्रवृत्तं तथैव जातिमतः शैवादीन् प्रति शैवादिशास्त्रमस्तु । न । 'निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित् ॥' इत्यादिना मन्वादिभिः स्वशास्त्रेष्वधिकारस्य द्विजानामेव प्रदर्शितत्वान्न शैवादिशास्त्रे शैवब्राह्मणादीनाम् । अस्तु तर्हि शैवादिशास्त्रे शूद्रोऽधिकृतः । न, स्मृत्यादिशास्त्रेषु तथाऽनभ्युपगमात् । अपि च शैवो नाम जात्या न कश्चिदप्यस्ति, यं प्रति शैवादिशास्त्रं स्यात्; .अपि तु 'तेन प्रोक्तम्' ( पासू. ४।३।१०१) इत्यणि कृते शिवेन प्रोक्तं शास्त्रं शैवम्, पुनश्च शैवशब्दात् 'तदधीते तद्वेद' ( पासू. ४।२।५९ ) इत्युत्पन्नस्याणः 'प्रोक्ताल्लुक्' ( पासू. ४।२।६४ ) इति लुकि कृते शैवं वेत्त्यधीते वा शैवः । एवं पाशुपतादिः । यस्मादेवं स्वभावतो नियतान् कांश्चिदनाश्रित्यैव शैवादिशास्त्रं प्रवृत्तं तस्मात्तदाकाशचित्रमिव प्राप्तम् । तथा च सत्यनुष्ठाने तद्धेयमेव । न चादूष्यागमप्रसिद्धेरेवाऽऽश्रमिणां तदनुष्ठानं स्यादिति वाच्यम् । न ह्यदूष्यत्वमात्रेण तेषां श्रुतिवत्स्वार्थानुष्ठापकत्वसामर्थ्यम्, 'या वेदबाह्याः श्रुतयो याश्च काश्चित्कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्तास्तमोभूता हि ताः स्मृताः ॥' इत्यादिना मन्वादिभिस्तदनुष्ठानस्यामुत्र वैफल्यापादकत्वादिना निषिद्धत्वात् । ततश्च देवपूजादौ नरसिंहपुराणादिप्रसिद्धैवेतिकर्तव्यता ग्राह्या, नान्या । एवं दीक्षायामप्यवगन्तव्यम् । न हि पुराणप्रसिद्धायां दीक्षायां जातिशोधनमस्ति । शैवाद्यागमेषु तु 'प्रथमं स्थावरा जातिस्ततः सारीसृपी मता । पक्षिजाति-

स्तृतीया तु चतुर्थी मृगजातिका ॥ पञ्चमी पशुजातिस्तु षष्ठी चैवान्त्यजा स्मृता । सप्तमी शूद्रजातिस्तु वैश्यजातिस्तथाऽष्टमी ॥ नवमी क्षत्रजातिस्तु दशमी विप्रदर्शिता । एतास्तु जातयः शोध्या जातीशेन शिवेन वा ॥' इत्यादिना तच्छोधनदर्शनाच्छ्रौतकर्मानधिकारित्वप्रसक्तिः । 'ब्राह्मणोऽग्नीनादधीत' 'राजा राजसूयेन यजेत' 'वैश्यो वैश्यस्तोमेन यजेत' इत्यादिना जातिमन्तमेव प्रकृत्य वैदिकं कर्म प्रवृत्तम्, तत्कथं जातिनिवृत्तौ स्यात्? एवं प्रतिष्ठायामपि पुराणाद्युक्तैवेतिकर्तव्यता ग्राह्या, नान्या, तेषामेव व्यामिश्रधर्मप्रमाणत्वेन भविष्यत्पुराणे परिज्ञातत्वात्। तथा च भविष्यत्पुराणम्— 'अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ कार्ष्णश्च पञ्चमो वेदो यन्महाभारतं स्मृतम् । सौराश्च धर्मरा(? र्मा रा)जेन्द्र मानवोक्ता महीपते ॥ जयेति नाम चैतेषां प्रवदन्ति मनीषिणः ॥' (भविष्य. १।४। ८७–८९) इति । तत्रापि 'मद्यवर्जं सुरां भूप निनयेत्' इत्यादि स्मृतं कलियुगादन्यत्र मन्तव्यम्, 'दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः। सगोत्राद्वा सपिण्डाद्वा विवाहो गोवधस्तथा । नराश्वमेधो(? धौ) मद्यं च कलौ वर्ज्या द्विजातिभिः ॥' इत्यादिना मद्यादेर्ब्रह्मपुराणादौ सामान्यतो वर्ज्यत्वेनाभिहितत्वात् । एतेन चण्डिकाद्युपहारा व्याख्याताः । यदप्यञ्जनविधौ कालिकापुराणे— 'कपालसंपुटे कृत्वा महातैलघृते तथा । चन्द्रसूर्योपरागे च कज्जलं गृह्य बुद्धिमान् । अञ्जयेदक्षिणी तेन वशीकुर्यात् पुरन्दरम् ॥' इत्यादि, तत् 'अथ शत्रुं मारयितुकामः श्मशानकाष्ठैरग्निं प्रज्वाल्य विषरुधिरमिश्रमाहुतिसहस्रं जुहुयात्सद्यः शत्रुं मारयति' इतिवत्, 'श्येनेनाभिचरन् यजेत' इतिवद्वाऽधर्म एव, हिंसादिवद्वशीकरणादेरपि तत्र तत्र निषिद्धत्वात् । तथा च 'हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च । ' (मनुस्मृ. ११।६३) इति मनुना वशीकरणमुपपातकमध्ये परिगणितम् । यदपि देवीपुराणे— 'वामदक्षिणवेत्ता यो मातृवेदार्थपारगः । स भवेत्स्थापकः श्रेष्ठो देवीनां मातरा(? तृका)सु च ॥ पाञ्चरात्रार्थकुशलो मातृतन्त्रविशारदः । विष्णोर्गृही सदा शस्तो ब्रह्मचारी च शान्तिदः ॥ शिवशासनवेत्ता यो ब्रह्ममातृगणार्थवित् । गृहस्थो ब्रह्मचारी वा स्थापकः कीर्तितः शिवे । सौरार्थवेदकः सूर्ये स्थापकः पूजकः शुभः ॥' इति, एतदपि न बाह्यागमानुष्ठानलिङ्गम्, तदनुष्ठानस्य च मत्स्यपुराणे निषिद्धत्वात् । तथा च मत्स्यपुराणम्— 'स्थापकस्य समासेन लक्षणं शृणुत द्विजाः । सर्वावयवसंपन्नो वेदमन्त्रविशारदः ॥ पुराणवेत्ता धर्मज्ञो दम्भलोभविवर्जितः । कृष्णसारचरे देशे य उत्पन्नः शुभाकृतिः ॥ शौचाचारपरो नित्यं पाषा( ? ष )ण्डकुलनिःस्पृहः । समः शत्रौ च मित्रे च ब्रह्मोपेन्द्रहरप्रियः ॥ ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य पारगः । आचार्यस्तु भवेन्नित्यं सर्वदोषविवर्जितः ॥ मूर्तिपास्तद्विधाश्चैव कुलीना ऋजवस्तथा ॥' इति । यथा च पाञ्चरात्रसंहितायाम्— 'चतुर्दश विद्यास्थानानि वेदितव्यानि भवन्ति । तद्यथा— ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इतिहासपुराणं न्यायो मीमांसा शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषामयनं छन्दोविचितिरिति । अत्राप्यनधिकारः किंतु भवत्येवाधिकारः' इति त्रय्यादिज्ञानमेवोपादेयम्, तथाऽत्रापि वामदक्षिणाम्नायादिज्ञानमात्रमेवोपादेयम् । तथा च योगयाज्ञवल्क्यः— 'आत्मज्ञाननिमित्तं हि सिद्धान्तानि विचिन्तयेत् । केवलानि यदाऽधीते वेदबाह्यो भवेद्द्विजः ॥' इति । केवलाध्ययनं स्वधर्मपरित्यागेन परधर्मसेवनम्, तादृशस्यानुष्ठानस्य 'स्वधर्मं यः समुत्सृज्य परधर्मरुचिर्भवेत् । चकोरनयने चौरः स शूद्रश्चन्द्रसंनिभे ॥' इत्यादिना स्कन्दपुराणादौ निन्दितत्वात् । वामदक्षिणादिज्ञानं च स्वशास्त्रापेक्षितस्य तच्छास्त्रोक्तस्याविरुद्धस्याङ्गस्य कस्यचित्स्वीकारार्थम् । तत्त्वाऽऽह मनुः— 'सापेक्षत्वेऽप्यपेक्षैव मानं यावदपेक्षते । तावदेवान्यतः कार्यमन्यत्नैवानवस्थितेः ॥' इति । विरुद्धस्य तु त्याग एवेति । अत एव च धर्मसंकरपरिहाराभिप्रायेण राजधर्मेषु महाभारतम्— 'चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता । धर्मसंकररक्षा हि राज्ञां धर्मः सनातनः ॥' इति । न च वाच्यम्—

स्वधर्मप्रतिष्ठादितन्त्रोपस्कारकर्तुः स्थापकादेर्वामदक्षिणाम्नायज्ञानं तदुक्तदीक्षाग्रहणपूर्वकमेव, स्मृत्यादिशास्त्रे तयाऽनङ्गीकारात्, वामदक्षिणादिशास्त्रं( ? स्त्रस्य ) च यथोक्तं स्थापकत्वादिप्रतिनियामकत्वासिद्धेः, वामदक्षिणादिशास्त्रस्य तद्विवरणदर्शनादिपूर्वं स्वात्मना निरीक्षणेनानेकविद्यास्थानोपस्कारोपस्कृतमतित्वादस्य निःशेषावबोधेन हेलामात्रेण स्वप्रतिष्ठातन्त्राद्युपस्कारमात्रनिर्वहणाच्च । यदपि भारतादौ दक्षं प्रतीश्वरवाक्यम्– ‘ भूयश्च ते वरं दद्मि ख्यातं गृह्णीष्व सुव्रत । प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥ वेदात्षडङ्गादुद्धृत्य सांख्याद्योगाच्च शक्तितः । तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ॥ अपूर्वं सर्वतोभद्रं विश्वतोमुखमव्ययम् । अर्थैर्दशार्धैः संयुक्तं गूढमप्राज्ञनिन्दितम् ॥ वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् । शतान्तैरध्यवसितमत्याश्रममिदं स्मृतम् ॥ मया पाशुपतं पूर्वं योगमुत्पादितं पुरा । अस्य चीर्णस्य सम्यग्यत्फलं भवति पुष्कलम् ॥ तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ॥’ इति, तत्राऽऽश्रमिणां पाशुपतशास्त्रानुष्ठापकत्वे लिङ्गम्, तत्फलसाम्यमात्रस्यात्र विवक्षितत्वात् । सन्ति हि पाशुपताद्यागमेषु ‘ अग्निष्टोमफलं लभेत् ’ इत्येवमादीनि वाक्यानि । न चैतावता तेषां तदधिकारः सिध्यति । नापि ‘ तदेतद्व्रतम्– भस्मनाऽऽङ्गानि संस्पृशेत् । तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षणाय ’ इति अथर्वशिरउपनिषत् पाशुपतशास्त्रार्थानुष्ठापकत्वे लिङ्गम्, भस्मनाऽङ्गसंस्पर्शमात्रस्य नियमस्यात्र श्रवणात् । न च स्मृतौ पाशुपतादिस्पर्शे सचैलस्नानश्रवणात्तच्छास्त्रस्य दूष्यत्वमाश्रमिणामभिप्रेतमित्याशङ्कनीयम्, कृते सोमयागादावनेकमन्त्रसंस्कृतेष्टकाचित्यसंस्पर्शनेऽपि स्नानदर्शनात् । न च चित्यस्य किं दुष्टत्वादुत रुद्रनिर्माल्यवदभ्यर्हितत्वादस्पृश्यत्वमित्येतावतीं विचारपदवीमवगाहितुं शास्त्रैकगोचरेऽर्थेऽस्मादृशां मतिः क्रमत इति केचित् । वस्तुतस्तु– यथा ‘ चातुर्वेदोऽपि यो विप्रो दीक्षितो न शिवाध्वरे । स तु शूद्रः प्रमन्तव्यो न देयं तस्य शासनम् ॥’ इत्यादिना शैवादयो दीक्षाविहीनानां त्रैविद्यवृद्धानामवरवर्णवद्विजुगुप्सां कुर्वन्ति । तथा ‘ कापालिकाः पाशुपताः शैवाश्च सह कारुकैः । दृष्टाश्चेद्रविमीक्षेत स्पृष्टाश्चेत्स्नानमाचरेत् ॥’ इति स्मृत्यन्तरदर्शनादन्त्यावसायिवद्दर्शनस्पर्शनयोर्दुष्टाः शैवादिशास्त्रप्रतिपन्नाः शैवादयस्त्रैविद्यवृद्धैर्मन्यन्ते । एतदेवोपपन्नम् । शास्त्रं हि तथा । तस्मात्पुराणादियुक्तिपर्यालोचनेनैवानुष्ठानमादर्तव्यम्, न च क्वचित्क्वचिद्बाह्यागमानुष्ठेयसामान्येन बाह्यागमैरेकार्थत्वमाशङ्कनीयम् । यत्रापि बाह्यागमानुष्ठेयसादृश्यमिव– ‘ अरूपामनुरूपां वा सुभगां दुर्भगां तथा । सतीं वा असतीं वाऽपि अङ्गनां न जुगुप्सयेत् ॥ ’ इत्यादि, तत्रापि देवीपुराणाद्युक्तदृशा दीक्षितस्यैवैते नियमा इत्यनुसंधेयम् । तस्माददूष्यत्वेनैव शैवादि प्रमाणम्, अनुष्ठेयत्वे त्वङ्गत्वेन केनचित् क्वचिदंशेनाऽऽदेयम्, साकल्येन नानुष्ठेयमिति स्थितम् । तत्रापि यत्पौरुषेयम्, न केवलमननुष्ठेयं तत्, यावदप्रमाणमपीति हेयमपीति सिद्धम् । अत एवाऽऽहुराचार्याः– ‘अनुष्ठेयं न भवति यच्छास्त्रं पुरुषैः कृतम् । तदप्रमाणं विज्ञेयं पुंबुद्धिप्रभवं हि तत् ॥ ’ । अलमतिप्रसङ्गेन ।

सदाचारः शिष्टाचार इत्युक्तम् । तत्र हि शिष्टस्वरूपमाह बौधायनः– ‘ शिष्टाः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्याः । अलोलुपा दम्भलोभमोहकोपविवर्जिताः । धर्मेणाधिगतो यैश्च वेदः सपरिबृंहणः । शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥ ’ इति । कुम्भीधान्या इति वृत्तिसंकोचोपलक्षणपरम् । ‘इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।’ इति मनुवचनादितिहासपुराणादि वेदस्य परिबृंहणानि, अविनाभावाच्च व्याकरणादीनि । तदनुमानज्ञाः स्मृतिज्ञाः । स्मृतिर्हि तस्य वेदस्यानुमानं लिङ्गम् । श्रुतिप्रत्यक्षहेतवः श्रुतिः प्रत्यक्षहेतुर्येषां संमतस्ते तथोक्ताः । स्मृतिवचनमाचारश्च प्रत्यक्षगम्यत्वात्प्रत्यक्षम् । ब्रह्मावर्तादिषु बाहुल्येन वेदमूल आचार इति मत्वा मनुराह– ‘ यस्मिन् ($ ? तस्मिन् ) देशे य आचारः पारंपर्यात्समागतः । वर्णानां

$ अयमेव पाठोऽपरार्कसंमतः । ‘ यस्मिन् ’ इत्यादर्शपुस्तकपाठे वचनेऽस्मिन्ब्रह्मावर्तादीनां सदाचाराधिकरणत्वस्याप्रतीत्या ग्रन्थविसंगत्यापत्तेस्तत्पाठमुद्रणं प्रामादिकमेव

सान्तरालानां स सदाचार उच्यते ॥ ' इति, न तु ब्रह्मावर्त एव सदाचार इति मत्वा। तथा सति लोभादिमूलोऽपि ब्रह्मावर्ताचारो धर्मे प्रमाणं स्यात्, वेदमूलकोऽपि च देशान्तरवर्ती न स्यात्। वसिष्ठोऽपि– ' आर्यावर्ते प्रागादर्शात्पर्वतात्प्रत्यक्कालकाद्वनादुदक्पारियात्राद्दक्षिणेन हिमवन्तमुत्तरेण विन्ध्यं ये धर्मा य आचारास्ते सर्वे प्रत्येतव्याः। न त्वन्ये प्रतिलोमधर्माणः' इत्याह। अत्रापि सर्वशब्दो बाहुल्याभिप्रायेण। न त्वन्ये प्रतिलोमेति। अत्रापि देशान्तरीयाः सर्वे धर्मा आचाराश्च न प्रत्येतव्याः, यतस्तेषु बाहुल्येन लोभादिपूर्वका आचाराः, केचिदेव श्रुतिपूर्वका इति तस्यार्थोऽनुसंधेयः। अन्यथा देशान्तरवर्त्यसंभवल्लोभादिमूल आचारो निर्मूलः स्यात्। मनुः– 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी। अविरोधे तु कर्तव्यं स्मार्तं वैदिकवत्सदा ॥ '। वसिष्ठः– ' श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम् ' इति। अप.

(४) स्वस्य आत्मनः धर्ममूलम्, न सर्वस्येति। सम्यक्संकल्पजः इति। सम्यक्संकल्पाज्जातः कामः शास्त्राविरुद्धे अर्थे, यथा– मया भोजनव्यतिरेकेण उदकं न पातव्यमिति विश्वरूपः (? विज्ञानेश्वरः)। अथवा सम्यक्संकल्पात् रागादिरहितसंकल्पात् ज्ञानात् उपजातं ब्राह्मणोपचिकीर्षादि यदेव मनुना शीलत्वेनोक्तं तदेव सम्यक्संकल्पज इत्यनेनैवोच्यते। ¶ ब्रक. २१

(५) सम्यक्संकल्पज इति। .... अथवा शास्त्रेण वैकल्पिके विषये प्रतिबोधिते आत्मतुष्टिः इच्छैव नियामिकेति। $ कुर. २७

(६) ... स्वस्य च प्रीतिः प्राङ्मुखत्वोदङ्मुखत्वाद्याचमने धर्मकारणम्। सम्यक्संकल्पजः इति। शास्त्राविरुद्धसंकल्पजः कामस्तु ' दानादिर्मया कर्तव्यः ' इति जनितेच्छा। तथा च ' धर्माय पुनरारम्भः संकल्पोऽपि न निष्फलः '। इति। एतस्याऽऽचारभेदत्वान्न मनुना पृथग्विहितम्। यथा मनुः– ' वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ' (मस्मृ. २।६)। शीलं चाऽऽचारभेदत्वान्न याज्ञवल्क्येन पृथगुक्तम्। ... श्रुत्यादेः साक्षाद्धर्मलक्षकत्वमतो न ' पुराणन्याय ' इत्यनेन पौनरुक्त्यम्। ... पुराणस्य न्यायादीनां च लक्षणादिकथाप्रधानत्वपरम्पराधर्मवृत्तित्वाभ्यां न साक्षाद्धर्मलक्षकत्वम्। दीक.

(७) संकल्पः निवृत्तिसंकल्पः। तज्जन्यः कामः निवृत्तीच्छा। ‡ निप्र. १।१७

(८) सदाचारः श्रुतिस्मृत्यविरुद्धोऽदृष्टार्थो वसन्तोत्सवादिः। ¶ संम. २

(९) संप्रति पुराणादिभ्यः पूर्वोक्तेभ्यो निष्कृष्य प्रधानीभूतं धर्मं प्रमाणं दर्शयन्नेव 'प्रदीयते' (यास्मृ. १।६) इत्यनेन कर्ममात्रोपलक्षणे लौकिकभोजनादेरपि धर्मरूपताप्रसक्तिं व्युदसितुमुपलक्ष्यतावच्छेदकं धर्मलक्षणमप्याह– श्रुतिरिति। श्रुतिः वेदः। स्मृतिः धर्मशास्त्रम्। यदाह मनुः– ' श्रुतिश्च वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। ' (मस्मृ. २।१०)। सदाचारः ' साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः। तेषामाचरणं यत्तु सदाचारः स उच्यते ॥ ' इति विष्णुपुराणे दर्शितः। आचरणमलौकिकम्, तेन लौकिकभोजनादिव्युदासः। स्वस्य प्रियं प्रीतिः, कारणेन कार्यलक्षणात्। धर्मसंदेहे वैदिकसंस्कारवासितात्मनामेकत्र पक्षे मनःपरितोष इति यावत्। यदाहुर्भट्टपादाः– ' एतेन वैदिकानेकधर्मश्रीसंस्कृतात्मनाम्। आत्मतुष्टेः प्रमाणत्वं सिद्धं धर्मप्रसिद्धये ॥ ' इति। आत्मन इति न तु सर्वस्य। $ एतच्चैकदेशभूतेऽपि धर्मे-

¶ शेषं मितागतं अपगतं च।

$ शेषं संगृहीतमात्रब्रकवत्।

‡ गप. निप्रवत्।

¶ शेषं मितागतम्।

$ ' आत्मनः ' इत्यस्य न ' प्रियम् ' इत्यत्रान्वयः, किंतु ' धर्ममूलम् ' इतिसमासैकदेशे धर्मेऽन्वय इत्यर्थः। तेन स्वस्य स्वानुष्ठेयस्य धर्मस्य मूलम्, न परानुष्ठेयस्येत्यर्थः।

ऽन्वितम्, योग्यताबलात्। सम्यक् संकल्पात् रागद्वेषादिरहितात् ज्ञानात् जातः कामः ब्राह्मणोपचिकीर्षादिः 'अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः॥' इति महाभारतादौ शीलपरिगणनेऽनुग्रहादिशब्देनोक्तः। इदम् एते। मूलमिति विधेयलिङ्गसंख्याग्रहणात्। तच्च पञ्चस्वन्यापेक्षया प्रधानीभूतेष्वपि श्रुत्यादिषु एकस्य श्रुतिरूपस्य प्रमाणस्यातिप्राधान्यसूचनाय। धर्ममूलं धर्मे प्राधान्येन प्रमाणम्। प्राधान्यं च साक्षाद्बोधकतया। तथा च मनुः— 'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥' (मस्मृ. २।१२)। साक्षात् श्रुत्यननुग्राहकतया लक्षणं प्रमाणम्। यद्यपि 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥' इति मनुनैव शीलमप्यधिकमुक्तम्, तथाऽपि तस्याद्रोहादिरूपस्य भारतोक्तस्य, 'ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मित्रता प्रियवादिता कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम्' इति ब्रह्मण्यतादेः हारीतोक्तस्य च शीलस्याऽऽचार एवान्तर्भावान्नात्र पृथगुक्तम्। देवभक्तता पितृभक्तता चेति द्वे। प्रायः परोपकारपर्यवसायितयाऽऽचारान्तरादभ्यर्हितत्वेन वचनान्तरे गोबलीवर्दन्यायाद्भेदेनोपन्यस्तम्। एवं सम्यक्संकल्पजः काम इति प्रकृतवाक्येऽपि बोद्धव्यम्। तत्र च श्रुतिरग्निहोत्रादौ। स्मृतिरन्वे( ? न्व )ष्टकादौ। आचारो होलकादौ। आत्मतुष्टिरभ्यासादिसंदेहविषयप्रायश्चित्तव्रतादौ। तथा च प्रायश्चित्तप्रकरणे बृहस्पतिः— 'यस्मिन् कर्मण्यस्य कृते मनसः स्यादलाघवम्। तस्मिंस्तावत्पुनः कुर्याद्यावत्तुष्टिकरं भवेत्॥' इति। अलाघवं पापशून्यताप्रतिसंधानविरहः, तन्निबन्धनोऽपरितोष इति यावत्। अव्यवस्थितविकल्पविषयप्राङ्मुखोदङ्मुखाचमनादावेव मनस्तुष्टिः स्वविषयेऽन्यतरस्मिन् धर्मे प्रमाणमिति बहवः। तुष्टिस्तु यस्य तस्यैव धर्मे प्रमाणमित्युक्तम्। कामस्तु प्रत्यक्षश्रुत्याद्यबोधिते ब्राह्मणोपकारविशेषादौ। 'भोजनव्यतिरेकेण मया जलपानं न कर्तव्यम्' इत्याद्याकारस्तदकरणादाविति तु विश्वरूपः( ? विज्ञानेश्वरः )। अत्र पुराणादीनां स्वर्गादिकथाप्राधान्यादितिहासबहुलत्वेनार्थवादादिरूपतया न्यायमीमांसयोस्तर्कद्वारा शिक्षादीनामङ्गानां तत्तदुपकारसंपादनेन वेदानुग्राहकतया धर्मे प्रामाण्यम्, न साक्षादिति न तान्यत्र गणितानि। स्मृत्यादयस्तु श्रुतिमनुमापयन्तोऽपि तामननुगृह्णन्त एव धर्मे प्रमाणमिति तेषामत्र ग्रहणमिति विवेक्तव्यम्। एवं श्रुतिप्रमाणकधर्मस्य लक्षणमपि दर्शितम्, स्मृत्यादिमूलकस्यापि धर्मस्यावश्यापेक्षितवेदप्रमाणकत्वात्, सर्वेषां वेदानां मुख्यतो धर्म एव तात्पर्यपर्यवसानेन तत्रैव प्रामाण्यात्। 'चोदनालक्षणोऽर्थो धर्मः' (जैसू. १।१।२) इति सूत्रे तु कलञ्जभक्षणादेरधर्मस्यापि चोदनालक्षणत्वमङ्गीकृत्यार्थपदेन वारणं कृतमित्यवधेयम्। वीमि.

(१०) अत्रापि धर्मग्रहणमधर्मोपलक्षणम्। अत्र श्रुतिः षड्भागा, विधिनिषेधार्थवादमन्त्रनामधेयोपनिषद्भेदात्। तत्र विधेस्तावत्तत्तद्विषयप्रवर्तनाबोधकत्वेन धर्मे प्रामाण्यम्, यथा 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादेर्द्रव्यदेवतासंयोगानुमितवायुदेवत्ययागप्रवर्तनाबोधकत्वेन। निषेधस्य तु निवर्तनाबोधकत्वेन, यथा 'न कलञ्जं भक्षयेत्' इत्यादेः। अर्थवादो द्विविधः— प्रशंसार्थवादो निन्दार्थवादश्च। तत्राऽऽद्यो विध्यपेक्षितप्राशस्त्यसमर्पणेन, यथा 'वायुर्वै क्षेपिष्ठः' इत्यादिर्वायव्ययागादिप्रशंसार्थतया। द्वितीयस्तु निषेधापेक्षितनिन्दासमर्पणेन, यथा 'यदश्रु अशीर्यत तद्रजतमभवत्' इत्यादिः 'तस्माद्बर्हिषि रजतं न देयम्' इत्यादिनिषिद्धरजतदाननिन्दार्थतया। कश्चिदर्थवादः प्रशंसार्थोऽपि संदिग्धार्थनिर्णायकत्वेन प्रमाणम्, यथा 'अक्ताः शर्करा उपदधाति', 'तेजो वै घृतम्' इत्यादिः। 'देवस्य त्वा' इत्यादिमन्त्राणां तु अनुष्ठेयार्थस्मारकत्वेन। ज्योतिष्टोमादिनामधेयानां तु भावनाकरणीभूतधात्वर्थपरिच्छेदकत्वेन। अनर्थकस्तोभानां तु गीतिकालपरिच्छेदकत्वेन। उपनिषदां तु अनर्थ-

निबर्हणसिद्धरूपब्रह्मज्ञानार्थत्वेनेत्येवमादि सर्वमाकरे स्फुटम् ।　　¶ पप्र. १०

(११) स्मृतिः मनुपराशराद्युक्तिः ।　　§ इन्दु. ३

विभिन्नस्मृतिविरोधे मीमांसया निर्णयः,
अर्थशास्त्रात् धर्मशास्त्रं बलीयः

**[१]स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।**
**अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥**

(१) यदा धर्मशास्त्रमेव बलवत् तदा तदविरुद्ध एवार्थसंचयो ज्यायान् । नन्वेवं सति यत्रासत्येऽपि वस्तुनि सत्यताप्रतिभानं तत्रापि राज्ञो दोषप्रसङ्गः, यथा माण्डव्यवधादौ, स्मृत्या हि सम्यगपराधिनामेव दण्डविधानात् । तत्र च न्यायतोऽपराधापादनेऽपि परमार्थतस्तदभावादपराधी नैव । न चान्यो व्यवहारनिर्णीतिहेतुः । अतः संकटमेतत् । नात्र संकटम् । स्मृतेर्विरोधे न्यायस्तु बलवान् । कस्मात् ? व्यवहारतः । अन्यथा व्यवहारप्रवृत्त्यभावप्रसङ्ग इत्यर्थः । अथवा स्मृतिन्यायविरोधे स्मृतिरेव ज्यायसी, न तु न्यायः, व्यवहारतो हि न्यायप्रवृत्तेः । विविधमवहरणं व्यवहारः न्यायभूयिष्ठ इत्यर्थः । न चासौ शास्त्रविरोध्यप्यङ्गीकर्तव्यः । यस्मादर्थशास्त्रात् धर्मशास्त्रस्यैव बलीयस्त्वमिति स्थितिः । अन्यस्त्वपरमार्थ इत्यर्थः । इयमेव च व्याख्या ज्यायसी । यथावस्तु प्रमाणप्रवृत्तिः, न प्रमाणप्रवृत्त्यनुरोधिता वस्तुनः । स्थिते वस्तुनि तदनुसारिणी प्रमाणावगतिरित्यनवद्यम् । अन्ये त्वन्यथेमं श्लोकं वर्णयन्ति– स्मृतिद्वयविरोधे न्यायो बलवान्, व्यवहारतस्तु प्रवृत्त्यानुगुण्यात् । यत्र त्वर्थशास्त्रधर्मशास्त्रयोर्विरोधः तत्र धर्मशास्त्रं बलीयः । यथा अर्थशास्त्रे व्यवहारप्रकरण उक्तम्– 'नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन' (मस्मृ. ८।३५१) इति । पुनर्धर्मशास्त्रे प्रायश्चित्तप्रकरणे 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' (मस्मृ. ११।८९) इति । तत्र धर्मशास्त्रबलीयस्त्वादाततायिवधे दोषप्रसङ्ग इति । तत् पुनः प्रकृतानुपयोगान्निष्प्रमाणकत्वाच्च नातीव सम्यक् ।　　विश्व.

(२) यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवान् समर्थः । स च न्यायः कुतः प्रत्येतव्य इत्यत आह– व्यवहारत इति । व्यवहारात् वृद्धव्यवहारात् अन्वयव्यतिरेकलक्षणात् अवगम्यते । अतश्च प्रकृतोदाहरणेऽपि विषयव्यवस्थैव युक्ता । एवमन्यत्रापि विषयव्यवस्थाविकल्पादि यथासंभवं योज्यम् । एवं सर्वत्र प्रसक्तेऽपवादमाह– 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' । 'धर्मशास्त्रानुसारेण' इत्यनेनैवौशनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवदिति स्थितिः मर्यादा । यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति, तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः । धर्मस्य च प्राधान्यं शास्त्रादौ दर्शितम् । तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधेऽर्थशास्त्रस्य बाध एव, न विषयव्यवस्था, नापि विकल्पः । किमत्रोदाहरणम् ? न तावत् 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन । प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति ॥' (मस्मृ. ८।३५०–३५१), तथा– 'आततायिनमायान्तमपि वेदान्तगं रणे । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥' (बाध. ३।२०) इत्याद्यर्थशास्त्रम्, 'इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥' (मस्मृ. ११।८९) इत्यादि धर्मशास्त्रम्, तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम् । अनयोरेकविषयत्वासंभवेन विरोधाभावान्न बलाबलचिन्ताऽवतरति ।

---

¶ शेषं मितागतं व्रकगतं च ।

§ शेषं मितावत् ।

(१) यास्मृ. २।२१ ; विश्व. स्मृत्योर्वि (स्मृतेर्वि) ; मिता. ; अप. ; वीमि. ; स्मृतिको. ४७५ उत्त.

तथाहि– 'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।' (मस्मृ. ८।३४८) इत्युपक्रम्य 'आत्मनश्च परित्राणे दक्षिणानां च संगरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दण्डभाक् ॥' (मस्मृ. ८।३४९) इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायां च आततायिनमकूटशस्त्रेण घ्नन् न दण्डभाक् इत्युक्त्वा तस्यार्थवादार्थमिदमुच्यते 'गुरुं वा बालवृद्धौ वा' इत्यादि, गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्, किमुतान्यान् ? इति । वाशब्दश्रवणात् 'अपि वेदान्तगम्' इत्यत्रापिशब्दश्रवणाच्च गुर्वादीनां वध्यत्वप्रतीतिः । 'नाऽऽततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्' इति सुमन्तुवचनाच्च, 'आचार्यं च प्रवक्तारं मातरं पितरं गुरुम् । न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः ॥' (मस्मृ. ४।१६२) इति मनुवचनाच्च । आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवत्, नान्यथा, हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् । 'नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन' इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव । यतः– 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥' (वाध. ३।१९), तथा– 'उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाऽऽततायिनः ॥' (विस्मृ. ५।१९२–१९३) इति सामान्येनाऽऽततायिनो दर्शिताः । अतश्च ब्राह्मणादय आततायिनश्च आत्मादित्राणार्थं हिंसानभिसंधिना निवार्यमाणाः प्रमादाद्यदि विपद्येरंस्तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः । तस्मादन्यदिहोदाहरणं वक्तव्यम् । उच्यते– 'हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः । अतो यतेत तत्प्राप्तौ' (यास्मृ. १।३५२) इत्यर्थशास्त्रम्, 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' (यास्मृ. २।१) इति धर्मशास्त्रम्, तयोः क्वचिद्विषये विरोधो भवति । यथा– चतुष्पाद्व्यवहारे प्रवर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति, न धर्मशास्त्रमनुसृतं भवति, अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति, मित्रलब्धिर्विपरीता; तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत् । अत एव 'धर्मार्थसंनिपातेऽर्थग्राहिण एतदेव' (आध. १।२४।२३) इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन । एतदेवेति द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते । † मिता.

[वाशब्देति । ... अपि वेदान्तगमिति । अयं भावः– यथा लोके 'अत्र पिशाचोऽस्ति' इत्युक्ते 'पिशाचो वा भवतु राक्षसो वा भवतु' 'भूतमपि भवतु प्रेतोऽपि भवतु' इत्युत्तरे प्रौढिप्रतिपादने तात्पर्यम्, तथाऽत्रापि वाशब्दापिशब्दयोः प्रौढिप्रकर्षे तात्पर्यमिति तद्विशिष्टवाक्यजातस्य गुर्वादिहनने न तात्पर्यम् । तथा वेदेऽपि 'वायुर्वै क्षेपिष्ठा देवता' इति, 'प्रतितिष्ठन्ति ह वा य एताः', 'तस्मादपि वध्यं प्रपन्नं न' इत्यादौ वैशब्दवाशब्दापिशब्दादीनां विधिशक्तिप्रतिबन्धकत्वस्य दर्शनात्प्रकृतेऽपि वापिशब्दाभ्यां तद्विधिशक्तेः प्रतिबद्ध(क?)त्वान्न गुर्वादिहननविधिः । वस्तुतस्तु 'अपि वेदान्तगम्' इत्यादौ संभावनाविषयतया क्रियागतमौचित्यमपि द्योत्यम् । संभावितौचित्यस्य चानुष्ठानमयुक्तमिति स्वार्थे तात्पर्याभावः । स्पष्टं चेदं मञ्जूषायामिति बोध्यम् । बाल.]

(३) धर्मशास्त्रयोर्विरोधो न्यायबलेन परिहार्यः, धर्मशास्त्रार्थशास्त्रयोस्तु विरोधोऽर्थशास्त्रं बाधत इत्याह– स्मृत्योरिति । स्मृत्योर्वेदमूलयोर्विरोधे तत्प्रामाण्यनिर्वाहाय भिन्नविषयव्यवस्थापकोऽनुमानार्थापत्त्यात्मको न्यायोऽपेक्षणीयत्वाद्बलवान्, तस्मिन् सति स्मृतेः प्रामाण्यात् । धर्मशास्त्रार्थशास्त्रयोस्तु विरोधे धर्मशास्त्रं बलवत्, अर्थशास्त्रं दुर्बलम्, अतस्तद्बाध्यम् । तद्वशेन तु धर्मशास्त्रं बाधमानस्य ब्रह्महत्याप्रायश्चित्तम् । तदुक्तमापस्तम्बेन– 'धर्मार्थसंनिपातेऽर्थग्राहिण्येतदेव' इति । पञ्चलक्षणकाल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानम् । पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वमिति पञ्चलक्षणानि । तदभावे

† स्मृतिकौ. मितानुवादः ।

तु असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमा हेत्वाभासाः । दृष्टः श्रुतोवाक्यो( ? तो वा यो )ऽन्यथा-( ऽनुपपन्नोऽर्थस्तेनोपपादकार्थ– ) कल्पनमर्थापत्तिः । प्रमाणान्तरदृष्टार्थविषया स्मृतिरर्थशास्त्रम् । वैदि( ? वेदै)-कसंमधिगम्यार्थविषया तु धर्मशास्त्रम् । तथा च भविष्य-त्पुराणम्– 'दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथा परा । दृष्टादृष्टार्थरूपाऽन्या न्यायमूला तथा परा ॥ अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी । सर्वा एता वेदमूला दृष्टार्थे परिहृत्य तु ॥' इति । आसामुदा-हरणान्यपि तत्रैव । त( ? य )था– 'षाड्गुण्यस्य यथायोगं प्रयोगात्कार्यगौरवात् । सामादीनामुपायानां योगो व्याससमासतः ॥ अध्यक्षाणां च निक्षेपः कण्ट-कानां निरूपणम् । दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभि-र्गरुडाग्रज ॥ संध्योपास्तिः सदा कार्या शुनो मांसं न भक्षयेत् । अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभि-र्ज्ञानकोविदैः ॥ पालाशं धारयेद्दण्डमुभयार्थे विदुर्बुधाः । $विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा ॥ श्रुतौ दृष्टं यथा कार्यं स्मृतौ न ( ? तत्– ) सदृशं यदि । अनूक्तवादिनी सा तु पारिव्राज्यं यथा गृहात् ॥' । जपहोमश्रुतौ यथेति । सूर्योदयावधिसावित्रीजपानुदित-होमविषया स्मृतिः । अनु( ? नू )क्तवादिनी अनूद्य-( ? नूदित )वादिनी । यथा– 'पुत्रैषणायाश्च वित्तैष-णायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्यनयोदितं 'ब्राह्मणः प्रव्रजेत् गृहात्' ( मस्मृ. ६।३८ ) इति मनुस्मृतिर्वदति । तथा सति– 'श्रुत्या सह विरोधे तु बाध्यते विषयं विना । व्यवस्थाया वि(?स्थयाऽवि)रोधोऽतः कार्योऽन्यत्र परीक्षकैः ॥ स्मृत्यर्थेन विरोधे तु अर्थशास्त्रस्य बाधनम् । परस्परविरोधे तु न्याययुक्तं प्रमाणवत् ॥ अदृ-ष्टार्थे विकल्पस्तु व्यवस्था( ऽ )संभवे सति । स्मृतिशास्त्र-विकल्पस्तु आकाङ्क्षापूरणे सति ॥' अदृष्टार्थयोः स्मृत्यो-रन्योन्यनिरपेक्षत्वे सति विषयव्यवस्थापकन्यायाभावे च सत्यर्थयोर्विकल्पः, सापेक्षत्वे तु समुच्चयः । नैरपेक्ष्ये व्यवस्थापकन्यायसद्भावे व्यवस्थितविकल्पः, तस्मिन्नसति त्वव्यवस्थितविकल्पो ग्राह्यः । तत्र च विषयव्यवस्थापक-स्तावत्सामान्यविशेषन्यायो वृद्धव्यवहारे प्रसिद्धः । यथा– 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इति । तेन न्यायेन स्मृतिविरोधः परिह्रियते । यथा– 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ।' इति साधारणो ब्राह्मणवधनिषेधः, तस्य क्वचिद्विशेषोऽपवादः । यदाह मनुरेव– 'गुरुं वा बालवृद्धौ वा श्रोत्रियं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥' ( मस्मृ. ८।३५० ) इति । एवं च सामान्यविशेषन्यायेन कासां-चित्स्मृतीनां विरोधः परिहरणीयः, कासांचित्तु कल्पना-नर्थक्यप्रसङ्गादिना न्यायान्तरेणेति । मनुस्मृतितदन्य-स्मृत्योर्विरोधे तु मनुस्मृतिः प्रशस्ता । अत एव बृह-स्पतिः– 'वेदार्थोपनिबन्धत्वात्प्राधान्यं तु मनुस्मृतौ । मन्वर्थविपरीता या स्मृतिः सा न प्रशस्यते ॥' इति ।

अप.

( ४ ) धर्मशास्त्रयोर्विरोधे उत्सर्गापवादादिन्यायेन निर्णेतव्यम् । तथा– 'अनागमं तु यद्भुङ्क्ते पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्तुं क्रमात् त्रिपुरुषा-गतम् ॥', 'अनागमं तु यद्भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥' इत्यनयो-र्धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ अनागमत्रैपुरुषिक-

$ 'विरोधे तु' इति यथाक्रमं न्यायमूलायाः स्मृते-रुदाहरणम् । तत्र सूर्योदयावधिसावित्रीजपानुदितहोमयोरेक-कालावच्छेदेनानुष्ठातुमशक्यत्वेन विरोधात् तादृशविरुद्धा-र्थकस्मृत्योः सुन्दोपसुन्दन्यायेन परस्परबाधितत्वेनाप्रामाण्य-प्रसक्तौ स्मृतीनां वेदमूलकत्वेनाप्रामाण्यायोगात्, प्रामाण्यस्य च एककालावच्छिन्नजपहोमोभयानुष्ठानविरोधप्रतिबद्धस्या-विरुद्धान्यतरानुष्ठानपर्यवसायिनं विकल्पं विनाऽनुपपत्तेरनु-पपन्नेन प्रामाण्येनोपपादकविकल्पकल्पनं न्यायः । स च प्रमाणत्वविशिष्टजपहोमस्मृत्योर्विशेषणद्वारा मूलमिति ते स्मृती न्यायमूले इति बोध्यम् । 'जपहोमश्रुतौ' इत्यत्र श्रुतिशब्दो न वेदवाचकः, न्यायमूलायाः स्मृतेरुदाहार्य-त्वात्, अपि तु स्मृतिवाक्यजन्यबोधवाचकः । अग्रे 'अनू-क्तवादिनी' इत्यत्र अनुपदार्थस्य वदनेऽन्वयः, न उक्त-पदार्थैकदेशे वचने, स्मृतीनामुदितानुवादित्वात् अनूदित-वादित्वायोगाच्च ।

भोगेन स्वामित्वप्रतिपादकधर्मशास्त्रं बलवत् अनागतशतवर्षभोगे दण्डप्रतिपादकमर्थशास्त्रं बाधते । तथा नारदः– 'यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः । अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥' । दीक.

(५) व्यवहारतः व्यवहारे विषये स्मृत्योः धर्मशास्त्रयोः परस्परं विरोधे तु न्यायः तत्तद्विषयव्यवस्थापकस्तर्को बलवान् निर्णायकः । न्यायेन यस्मिन्नर्थे या स्मृतिर्व्यवस्थाप्यते तस्मिन्नर्थे सा स्मृतिः प्रमाणमिति यावत् । तुशब्देन श्रुतिविरोधे स्मृतेर्बलवत्त्वं व्यवच्छिद्यते । यदुक्तम्– 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । परस्परविरोधे तु योगयुक्तं प्रमाणवत् ॥' । स्मृत्योरिति समानजातीयमात्रोपलक्षणकम् । तेन श्रुत्योरेवार्थशास्त्रयोरेव वा परस्परं विरोधे न्यायो विनिगमक इति मन्तव्यम् । द्वितीयतुशब्देन पुराणव्यवच्छेदः । तेन पुराणाद्धर्मशास्त्रं स्मृत्यात्मकं न बलवत्, किंतु स्मृत्योरिव स्मृतिपुराणयोः परस्परविरोधे न्यायाद्बलाबलम् । इति प्रतिज्ञातार्थसाधकमित्युक्तम् । वीमि.

धर्मसंशये धर्मज्ञपरिषदः प्रामाण्यम्, परिषदः लक्षणम्

**'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।**
**सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥**

(१) ननु च श्रुतिस्मृत्योरबोधकत्वेऽपि पुरुषसामर्थ्यापेक्षया प्रतिभानतोऽर्थनियमः । तथा खल्वेकस्मादेव वाक्यादन्यथा चान्यथा च प्रतिपन्ना दृश्यन्ते । कथं चैवं सति धर्मनिर्णयः ? तदुक्तम्– 'धर्मस्य तत्त्वं निहितं गुहायाम्' इति । सत्यमेवम्, यदि निर्णयोपायो न स्यात् । अस्ति ह्युपायः– चत्वार इति । चत्वार इति नियमः पञ्चादिव्यावृत्त्यर्थः, महासमवाये निश्चयक्लेशात् । वेदविदो धर्मशास्त्रविदश्च वेदधर्मज्ञाः । पाराशर्याच्च ज्ञानस्य न तन्मात्रावसायिनः, किं तर्हि ? ज्ञानिनोऽनुष्ठातारश्च ते सविवेकाः परिषत् । त्रैविद्यं वा । त्रयी विद्या ऋग्यजुःसामलक्षणा यस्मिन् तत् त्रैविद्यम् । त्रय ऋग्यजुःसामपारगा इत्यर्थः । पुरुषसंख्यानियमाच्चाथर्ववेदाध्ययनमविरुद्धम् । अस्मिंश्च पक्षे ये प्रतिवाक्यं श्रुतिस्मृत्योर्मूलमूलिभावं जानन्ति ते गृह्यन्ते । एवकारस्त्वप्यर्थः । स च संभावनायाम् । वाशब्दोऽप्यर्हितत्वेन विकल्पद्योतनार्थः । त्रयोऽपि यदि भवन्ति, द्वौ वा यदि स्याताम् । एकोऽपि वाऽध्यात्मवित्तमः । स हि सम्यक् वेत्ताऽनन्यथावक्ता च । तथा चोक्तम्– 'एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।' (मस्मृ. १२। ११३) इति । आत्मयाजि( ? ज्ञानि )नोऽपि गृहस्था ब्रह्मविदो नैष्ठिकाश्च ब्रह्मचारिणः वनस्थाश्च । तदर्थमध्यात्मवित्तम इत्युक्तं पराश्रमाभिप्रायम् । नन्वेतदयुक्तम्, स खलु हिंसानुग्रहयोरनारम्भीति । को वा तमारम्भिणमाह ? अभिगम्य तु संशये पृष्टः सोऽपि ब्रूयादित्युक्तमस्माभिः । तथा च व्यासः– 'सर्वभूतगणाद्रोही चरेद्व्याहरन्नपि । पृष्टोऽन्यैः साधुभिर्ब्रूयात्पृच्छेदन्यांश्च संशये ॥' इति । यत्तु 'प्रागुत्तमात्त्रय आश्रमिणः' (गौध. २८।५०) इति वैखानसाभिप्रायं तत् भिक्षोः (?) समवायप्रतिषेधात् दशावरादिविषयं द्रष्टव्यम् । तत्रापि तु यदि कश्चित् स्वनियमातिलङ्घनेन समवेयात् ततः परिषत् सगुणैव । तथा चाङ्गिराः– 'ब्रह्मचार्याश्रमादूर्ध्वं त्रय आश्रमिणः स्मृताः ।' इत्याह । वाशब्दद्वयाच्च द्वौ वेत्युक्तम् । पूर्वापेक्षया च तौ प्रकृष्टगुणौ द्रष्टव्यौ । तथा चाऽऽहुः– 'चत्वारस्तु त्रयो द्वौ वा यद्वैकः स्यादनिन्दितः । यतिनामग्न्यविद्यानामेकोऽपि परिषद्भवेत् ॥' इति । सा परिषदन्योन्यं विमृश्य सम्यगवधार्य यद् ब्रूते स धर्मः स्यात् । स निर्विचिकित्स्यो धर्म इत्यवगन्तव्यम् । तथा च गौतमः– 'यच्चाऽऽत्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभमोहवियुक्ता वेदविद आचक्षते तत्समाचरेत्' (गौध. ९।६२) इति । शङ्खोऽप्याह– 'श्रुतिविरोधे त्रैविद्यसमवायेषु निर्णयः' इति,

(१) यास्मृ. १।९ ; विश्व. ; मिता. ; अप. ; व्यक. ३७ ; उ. १।२०।७ ; स्मृच. १।८ पर्ष (परिष) ; पमा. २।१६० (चत्वारो वेदधर्मज्ञाः परिषत्) एतावदेव ; निप्र. १।२३ ध्यात्म (ध्यात्म्य) ; मुक्ता. ३ ; वीमि.

'यथावलेपं शास्त्रतस्तेऽनुब्रूयुः' इति च। यत्तु पञ्चावरा दशावरा वा परिषत् धर्मप्रवक्तृभिरुक्ता सा महापातकादिप्रायश्चित्तविषया द्रष्टव्या, शुद्ध्यशुद्ध्योस्तत्र प्रकाश्यत्वात् । या त्वेकविंशत्या शतेनाङ्गिरसाऽभिहिता सा किल भूयांसो ब्राह्मणाः, ते यत् ब्रूयुस्तत् तथैव भवतीति श्रद्धामात्रेणेति मन्तव्या, गायत्रीमात्रसारैश्चीर्णव्रतैरपि धर्मस्य निर्णेतुमशक्यत्वात् । पूर्वोक्तपरिषत्प्रशंसार्थं वा अविदुषां निन्दार्थम् । तथा चोक्तम्– 'नेतरे तु सहस्रशः' इति गुणवद्विषयत्वे वा कार्यगौरवज्ञापनार्थम् । यत्तु–'राज्ञां (तु) सैव द्विगुणा वैश्यानां त्रिगुणा स्मृता।' इति, तत् क्षत्रियवैश्ययोः प्रायश्चित्तदाने यत्नातिरेकार्थम् आपद्विषयं वा, प्रायश्चित्तस्य वाऽवश्यकार्यताज्ञापनार्थम्, परिषदि वाचावेदननियमार्थं वा । यत्तु क्षत्रियादिप्रायश्चित्तदाने पुरोहिताद्यधिकारः अन्येषां च प्रायश्चित्तमिति, तत्प्रायश्चित्तप्रकरणे वक्ष्यामः। सर्वथा परिषदि धर्मनिर्णयः। अल्पाऽपि च प्रकृष्टगुणा परिषत् प्रशस्तेत्याचार्याभिप्रायः । न्यायमूलत्वात् परिषन्निर्णयार्थस्मृतेरनेकार्थत्वमविरुद्धम्। अनयैव दिशा विवेकः कार्यः । विश्व.

(२) कारकहेतुषु ज्ञापकहेतुषु वा संदेहे निर्णयहेतूनाह– चत्वार इति। चत्वारो ब्राह्मणाः वेदधर्मशास्त्रज्ञाः पर्षत्। तिस्रो विद्या अधीयत इति त्रैविद्याः, तेषां समूहस्त्रैविद्यम्। धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते। तद्वा पर्षत्। सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः । अध्यात्मज्ञानेषु निपुणतमो धर्मशास्त्रज्ञश्च एकोऽपि वा यं ब्रूते सोऽपि धर्म एव। ‡ मिता.

(३) कर्माधिकारिणो विदुषोऽपि कुतश्चित्कारणाद्धर्मसंशये पर्षदधीनो निर्णय इति तां तावदाह– चत्वार इति। वेदः प्रसिद्धः। धर्मो धर्मशास्त्रम्। तदर्थज्ञाश्चत्वारो धर्मनिर्णयरूपकार्यकराः पर्षदित्युच्यते। ऋग्यजुःसामवेदास्त्रैविद्यम्। तेन चात्र तदध्येतारस्त्रयो ब्राह्मणा लक्ष्यन्ते। सैषा त्र्यवरा पर्षदित्याह मनुः– 'ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च। अवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥' (मस्मृ. १२।११२) इति। अथ वाऽध्यात्मविदां श्रेष्ठ एकोऽपि यमर्थं धर्मतया ब्रूते स एव धर्मः। आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम्। बहूनां तद्विदां मध्ये सातिशयज्ञानोऽध्यात्मवित्तमः। परिषत्त्वं ब्राह्मणानामेव प्राथमकल्पिकम्। यदाह मनुः– 'अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥' (मस्मृ. १२।१०८) इति। अनाम्नातेषु वाक्यपाठादेवानिर्णीयमानेष्वित्यर्थः। अप.

(४) (अध्यात्मवित्तमः) साक्षात्कृतब्रह्मतत्त्वः । ब्रक. १७

(५) $ तिस्रो विद्या येषां ते त्रैविद्याः । † स्मृच. ८

(६) ‡त्रैविद्यम्, 'भिक्षादिभ्योऽण्' (पासू. ४।२।३८)। ¶ दीक. १

(७) ननु 'श्रुतिः स्मृतिः सदाचारः' इत्यादिधर्मप्रमाणगणनं न्यूनम्, धर्माधर्मसंदेहस्थले तन्निर्णायकत्वेन बहुशः शास्त्रबोधितस्य पर्षदादिवचनस्यानभिधानादित्याशङ्क्य शिष्टविशेषसमुदायादिरूपं पर्षदादिस्वरूपं प्रदर्शयन्नेव, न केवलं सदाचारशब्देन शिष्टानां कायक्रियैवात्राभिप्रेता, किंतु नाम ? वचनमपीति न न्यूनत्वमित्यभिप्रय-

‡ मुक्ता. मितागतम्।

$ अनेन विद्यात्रयसमाहाररूपं त्रैविद्यम् अस्ति एषामित्यर्थे अर्शआद्यजन्तस्त्रैविद्यशब्दः इति, बहुव्रीहिरूपत्रिविद्यशब्दप्रकृतिकस्वार्थिकष्यञन्तो वेति द्वयोर्व्युत्पत्त्योरन्यतरा व्याख्यातुरभिप्रेतेति प्रतीयते।

† शेषं मितागतं अपगतं च।

‡ तिसृणां विद्यानां समाहारः त्रिविद्यम्, त्रिविद्यमेव त्रैविद्यम्, त्रैविद्यं विदन्ति इति त्रैविद्याः। अस्य त्रैविद्यशब्दस्य भिक्षादिगणे पाठाभावात् तस्याऽऽकृतिगणत्वाभावाच्च 'भिक्षादिभ्योऽण्' इत्यनेन समूहार्थेऽण् दुर्वचः। "'अनुदात्तादेरञ्' (पासू. ४।२।४४) इत्यञ्" इति व्याख्यातुं युक्तम्।

¶ शेषं मितागतम् अपगतं ब्रकवच्च।

नाह— चत्वार इति । ... तिस्रो विद्याः वेदाः येषां ते त्रिविद्याः, तेषां समूहस्त्रैविद्यम् । भिक्षादित्वादण्( ? ) । तद्वा पर्षत् । ... एकोऽपि यं ब्रूते इत्याद्यनुषञ्जनीयम् । ¶ वीमि.

प्रवृत्तिलक्षणधर्मप्रवर्तका मुनयः

**¹तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः ।**
**पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥**

( १ ) यश्च †अनेन मार्गेण द्युलोकः, तत्र— अष्टाशीतीति । तिष्ठन्तीति शेषः । तस्यां हि जनस्थानसंज्ञायां दिवि गृहमेधिनः गृहस्थाः कर्मणाऽग्निहोत्रादिना लोकजितः संसारबीजभूताः प्रलीयमानधर्मोद्धारप्रवर्तकाः अष्टाशीतिसहस्राः( ? स्राणि ) तत्परिमाणाः अग्निहोत्रादिना तत्र यान्ति । पुनर्धर्मप्रवर्तनायेहाऽऽभिमुख्येन वर्तन्त इत्येवं तत्प्रवर्तकाः पुनरावर्तिन इति व्याख्येयम् । विश्व.

( २ ) ननु नैमित्तिकादिप्रतिसंचरेऽखिलाध्यापकप्रलयादविदितवेदास्तस्योपरितना जनाः कथमग्निहोत्रादिकं कर्म करिष्यन्ति ? कथंतरां चाकृतकर्माणः स्वर्गमार्गमधिरोक्ष्यन्ति ? इत्यत आह— तत्रेति । तत्र पितृयानेऽष्टाशीतिसहस्रसंख्या मुनयो गृहस्थाश्रमिणः पुनरावृत्तिधर्माणः सर्गादौ वेदस्योपदेशकतया धर्मतरुप्रादुर्भावे बीजभूताः सन्तोऽग्निहोत्रादिधर्मप्रवर्तकाः, अतो न प्रागुदितदोषसमासङ्गः । मिता.

[प्रतिसंचरे लये । तस्येति शेषे षष्ठी । मुख्यप्रकृतोपयोगिशङ्कामाह— कथंतरामिति । बाल.]

(३) अष्टाशीतिसहस्रसंख्या मुनयः तापसाः । इष्टापूर्तधर्मकारिण इति यावत् । गृहमेधिनः गृहस्थाः । अनेन चाकाम्यकर्मकारित्वं सूचयति । पुनरावर्तिनः पुनर्जन्मभाजः । जगत्सृष्टेर्धर्मप्रभा(?भ)वायास्ते प्रागनुष्ठितधर्मत्वाद्बीजभूताः । प्रवृत्त्याख्यस्य धर्मस्य च प्रवर्तकाः । अप.

( ४ ) तत्र संसारे अष्टाशीतिसहस्राणि ऋषयो गृहस्थाः पुनः पुनरावर्तन्ते सृष्ट्यादौ संसारजन्मनि । त एव बीजभूता वैदिककर्मप्रवर्तकाः । दीक.

( ५ ) ...मुनयः आत्ममननशीलाः सर्वज्ञा इति यावत् । तत्र पितृयाने । † वीमि.

निवृत्तिलक्षणधर्मप्रवर्तकाः मुनयः

**¹सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः ।**
**तावन्त एव मुनयः सर्वारम्भविवर्जिताः ॥**

**²तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया ।**
**तत्र गत्वाऽवतिष्ठन्ते यावदाभूतसंप्लवम् ॥**

( १ ) ‡ देवयानेनाप्येवमेव मार्गेण सप्तर्षिनागवीथ्योरन्तरालेन च योऽयं लोकः— सप्तर्षीति । अयमपि पूर्ववत् (?) । विश्व.

( २ ) किंच, सप्तर्षयः प्रसिद्धाः, नागवीथी ऐरावतपन्थाः, तदन्तराले तावन्त एव अष्टाशीतिसहस्रसंख्या मुनयः सर्वारम्भविवर्जिताः केवलज्ञाननिष्ठाः तपोब्रह्मचर्ययुक्ताः तथा सङ्गत्यागिनो देवलोकं समाश्रिताः आभूतसंप्लवं प्राकृतप्रलयपर्यन्तमवतिष्ठन्ते । तत्र च स्थिताः सृष्ट्यादावाध्यात्मिकधर्माणां प्रवर्तकाः । मिता.

( ३ ) नागवीथीमाह गर्गः— 'कृत्तिका भरणी स्वातिर्नागवीथी प्रकीर्तिताः ।' इति । देवलस्तु— 'अश्विन्यादि-

---

¶ शेषम् अपगतम् मितागतं ब्रकवच्च ।

† पितृयाणेनेत्यर्थः ।

(१) यास्मृ. ३।१८६ ; विश्व. ३।१७७ प्रथमचरणे ( अष्टाशीतिसहस्राणि ) ; मिता. ; अप. विश्ववत् ; वीमि.

† शेषं मितागतं अपगतं च ।

‡ 'देवयानेन' इत्यादिः प्रथमश्लोकस्यावतरणिका, 'सप्तर्षिनाग' इत्यादिर्द्वितीयश्लोकस्यावतरणिका, 'अयमपि पूर्ववत्' इति प्रथमश्लोकव्याख्यानमित्यादर्शपुस्तके व्यवस्था । सा तु श्लोकद्वयैकवाक्यताद्यनुसृत्यानुपपन्नेत्यस्माभिरेवं परिवर्तिता ।

(१) यास्मृ. ३।१८७ ; विश्व. ३।१७८ थ्यन्तर्दे ( थ्योस्तु दे ) ; मिता. ; अप. थ्यन्तर्दे ( थ्यन्ते दे ) ; वीमि.

(२) यास्मृ. ३।१८८ ; विश्व. ३।१७९ तृतीयचरणे ( यातास्तत्रावतिष्ठन्ति ) ; मिता. ; अप. ; वीमि.

त्रिभाः सर्वा नागाद्या दहनान्तिकाः ।' । अयमर्थः— प्रत्येकमश्विन्यादित्रिनक्षत्रा नागाद्या नव वीथयः— नागाः, गजाः, ऐरावती, ऋषभाः, गौः, जरद्गवी, मृगी, अजा, दहनेति । तस्या नागवीथ्याः सप्तर्षीणां च यदन्तरालं तेन मार्गेण गत्वाऽष्टाशीतिसहस्राण्येव मुनयः सकलनिषिद्धकाम्यकर्मारम्भनिवृत्तास्तपसाऽऽवश्यकेन वर्णधर्मेण तथा ब्रह्मचर्येण सङ्गत्यागेन धर्मानुष्ठाननिमित्तख्यातिलाभपूजापरित्यागेन मेधया मेधाकार्येण वेदधारणेन युक्ता देवलोकं समाश्रित्य तत्र यावदाभूतसंप्लवं महाप्रलयं यावत् अवतिष्ठन्ते । तेऽपि पूर्ववत् पुनरावर्तिनो बीजभूता निवृत्त( १ त्ति )धर्मप्रवर्तकाश्च ।
अप.

(४) ( सर्वारम्भविवर्जिताः ) संसारारम्भरहिताः । नागवीथी देवमार्गः । अयं लोकः सप्तर्षीणामुत्तरभागे ।
$ दीक.

(५) स्वर्गमार्गे तदुपदेष्टृसहितमुक्त्वा मोक्षमार्गे तदुपदेष्टृसहितमभिधत्ते— सप्तर्षीति । सप्तर्षीणामुत्तरतो नागवीथ्याः ऐरावतमार्गस्य दक्षिणे । ¶ वीमि.

धर्मप्रवर्तकेभ्यो मुनिभ्यः वेदादिवाङ्मयम्

**'यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।**
**श्लोकाः सूत्राणि भाष्याणि यच्च किंचन वाङ्मयम् ॥**

(१) ननु च कार्यार्थत्वाद्वेदस्य प्रमाणान्तरस्य चाभावान्निर्मूलकमिवेदं मार्गादिनिरूपणं लक्ष्यते । सत्यम्, यदि कार्यार्थतयैव वेदस्य प्रामाण्यं स्यात् । स्वरूपे तु प्रामाण्यमित्यत एव— यत इति । यदि हि कर्मानुष्ठानमात्रनिमित्ततया क्रियैव वेदार्थः स्यात्, ततः स्वरूपपरता न स्यात् । यदा तु नियोगसिद्धिरेव वाक्यार्थः, तदा नियोज्यतत्त्वावगमत एव तत्सिद्धिः । प्रतिपन्नात्मस्वरूपस्यैवं निर्वर्तितनियोगता स्यात् । ततश्चाऽऽत्मस्वरूपावगतिरेव वेदार्थ इति स्वरूप एवावसितं वेदस्य प्रामाण्यम् । किंच, कार्यतया व्युत्पत्तेः कार्ये प्रामाण्यमुक्तम् । न च परार्थस्य कार्यत्वोपपत्तिः । को हि परार्थे बुद्धिपूर्वकारी कुर्यात् ? अतः स्वार्थ एव कार्यम् । न चान्योऽतः कश्चिदात्मनोऽर्थोऽन्यत्र स्वरूपज्ञानादिति तदेव कार्यमवशिष्यते । अतश्च पारमार्थिकं तत्रैव भगवतो वेदस्य प्रामाण्यम् । तथा चोक्तम्— 'चोदना हि भूतं भवन्तं भविष्यन्तमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्' ( शाबरभाष्यम् १।१।२ ) इति । एवंजातीयकं आत्मस्वरूपमित्यर्थः । तथा चेन्द्रियान्तरप्रतिषेधस्तद्विषयतयैवोपपद्यते 'नान्यत्किंचनेन्द्रियम्' इति । अन्यथा हि विध्यर्थे तत्प्राप्त्यभावादाकस्मिक एव प्रतिषेधः स्यात् । अतो ब्रह्मस्वरूप एवाऽऽम्नायस्य प्रामाण्यं स्यात् । तदेव पारमार्थिकं विध्यर्थस्तत्त्वम् । यत्तु अग्निहोत्रादिकार्यावबोधनम्, तत् अवान्तरवाक्यार्थतया तदपेक्षिताविद्याव्युदासपरत्वेन तदुपायतयैव प्रमाणान्तराविषयतया कार्यव्यपदेशभागित्यवसेयम् । एवं चेन्मार्गादिस्वरूपप्रतिपादनेऽप्यविरुद्धं कार्यव्यपदेशित्वमित्येषा दिक् । तद्दर्शयति— यतो वेदाः पुराणं चेत्येवमादयः सर्व एवाऽऽत्मनो ज्ञानहेतवः, शब्दप्रवृत्तेस्तत्परतयैव व्युत्पत्त्यवधारणात् । ततः स्वरूपेऽप्यव्याहतं प्रामाण्यं वेदस्य । अतश्च मार्गादिस्मृतेरप्यनवद्यं वेदमूलत्वमित्यभिप्रायः । पुराणं चेतीतिहासार्थश्चशब्दः । विद्या मीमांसादिका । उपनिषदां पृथग्वचनं वेदभागान्तरस्य तादर्थ्यप्रदर्शनार्थम् । तथा श्लोकाः उपनिषत्सूत्रस्थानीया मन्त्रा एव 'तदप्येते श्लोकाः— अणुः पन्था विततः पुराणः' ( बृउ. ४।४।८ ) इत्यादिकाः । उपनिषत्सूत्रताप्रतिपत्त्यर्थमेव च तेषां पृथग्वचनम् । तद्विवरणार्थान्येव चार्थवादादिवाक्यानि भाष्याणि । प्राधान्याच्चायमुपनिषदामतिप्रपञ्चः । किंच, यत्किंचिद्वाङ्मयं क्वचिदिति । लोके अध्यात्मपरतयैव शब्दव्युत्पत्तिरित्यर्थः । विश्व.

$ शेषं मितागतम् ।

¶ शेषम् अपगतम् ।

(१) याज्ञ. ३।१८९ ; विश्व. ३।१८० पुराणानि ( पुराणं च ) चतुर्थचरणे ( यत्किंचिद्वाङ्मयं क्वचित् ) ; मिता. ; अप. चतुर्थचरणे (यच्चान्यद्वाङ्मयं क्वचित् ) ; वीमि.

(२) कथंभूतास्ते मुनय इत्यत आह— यत इति। यतो द्विविधादपि मुनिसमूहाच्चत्वारो वेदाः पुराणाङ्गविद्योपनिषदश्च नित्यभूता एवाध्येतृपरम्परायाताः प्रवृत्ताः; तथा श्लोकाः इतिहासात्मकाः, सूत्राणि च शब्दानुशासनमीमांसागोचराणि, भाष्याणि च सूत्रव्याख्यारूपाणि, यदन्यदायुर्विद्यादिकं वाङ्मयं तदपि यत्सकाशात्प्रवृत्तम्; तथाविधास्ते मुनयो धर्मप्रवर्तकाः। एवं सति वेदस्यापि नानित्यतादोषप्रसङ्गः। मिता.

(३) एवं श्लोकद्वयेनाऽऽत्मज्ञानरहितं काम्यं कर्माऽऽवश्यकं वा कुर्वतां पुनरावृत्तिरुक्ता। 'स ह्याश्रमैर्विजिज्ञास्यः' इत्यादौ स्वात्मज्ञानसहितस्य कर्मणोऽनावृत्तिफलत्वं वक्ष्यति। तत्राधुना तावज्ज्ञातव्यमात्मानं तज्ज्ञानोपायं च श्लोकद्वयेनाऽऽह— यत इति। द्विधा ह्यात्मा व्यवस्थितो बन्धवर्तितया तद्रहिततया च। तस्य यन्मुक्तस्वभावं रूपं तत्सर्वेश्वरत्वसर्वज्ञत्वादिगुणयोगित्वेन वेदान्तैरुपास्यतयोच्यते, न पुनर्यद्बद्धस्वभावम्। प्रकाशते हि स्वत एव तत् सर्वेषां हृदयेषु। तत्प्रकाशाधीनो विश्वप्रकाशः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति। तत्र शास्त्रेण यदुपास्यतयोक्तं तदुपलक्षयितुमिदमुच्यते— यतो वेदा इत्यादि। यतो जगत्कारणाद्वेदाः श्रुतयः। पुराणानि प्रसिद्धानि। अन्याश्च धर्मशास्त्राद्या उपनिषदो ब्रह्मावबोधका वेदभागाः। तासाममृतीभावहेतुविज्ञानविधायकत्वात्प्राधान्येन वेदत्वे सत्यपि पृथग्ग्रहणम्। ये च (? तथा) केचन श्लोकाः 'यदक्षरं पञ्चविधं समेति' इत्येवमादयः। सूत्राणि विवक्षितार्थवाचकानि वाक्यानि। भाष्याणि सूत्रादीनां विवरणानि। अन्यदपि वाङ्मयं यत उद्भूतं तस्य परमात्मनो वेदानुवचनादयो ज्ञानहेतवः। अप.

(४) सूत्राणि गोतमादिप्रणीतानि। ... येभ्यो मुनिभ्य एते वेदादयो मेधावित्वेन स्मृत्यारूढाः सृष्ट्यादौ, ते पुनः प्रणीयन्ते, तत्रैव तिष्ठन्ति। यद्यपि वेदवत्पुराणादयोऽपि नित्याः, तथाप्यानुपूर्वीसंक्षेपविस्तारद्वारेणान्या(? नानित्या) एव। यथा मन्वादेर्भृग्वादिप्रोक्तता। वेदे त्वानुपूर्वीस्वरनिगदश्च स एव, न तैरन्यथा क्रियते। ‡ दीक.

(५) यतः देवलोकस्य मुनिवर्गात्। विद्या वेदान्तशास्त्राणि। उपनिषदः बृहदारण्यकादयः। ‡ वीमि.

आश्रमधर्मा वेदाध्ययनयज्ञतपोदमश्रद्धोपवासा आत्मज्ञानहेतवः

**[1]वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः।**
**श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः॥**

(१) एवं च वेदानुवचनादिस्तादर्थ्येनैव चातुराश्रम्यप्रयासः। तथाऽऽम्नायः— 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिः। गुरूक्तस्यानुपाठो वेदानुवचनम् आद्यं ब्रह्मचर्यम्। यज्ञ इति गार्हस्थ्योपलक्षणम्। ब्रह्मचर्यं नैष्ठिकत्वम्। तपो दम इति वानप्रस्थत्वम्। श्रद्धोपवाससातत्यमिति पारिव्राज्यम्। 'अष्टौ ग्रासा मुनेर्भक्तम्' इति वचनात् लघ्वशनार्थो वाऽयमुपवासशब्दः। व्याख्यातमन्यत्। विश्व.

(२) ततः किमित्यत आह— वेदानुवचनमिति। वेदस्य नित्यत्वे सति तत्प्रामाण्यबलाद्वेदानुवचनादयः सत्त्वशुद्ध्यापादनद्वारेणाऽऽत्मज्ञानस्य हेतव इत्युपपन्नं भवति। मिता.

(३) वेदानुवचनं वेदाध्ययनं गुरुवचनमनु पश्चाद्वचनमनुवचनम्। अनेन च सर्वस्य वेदाध्ययनस्य गुर्वध्ययनपूर्वकत्वं वदन्वेदस्यापौरुषेयत्वं गमयति। यत्तु परमात्मसकाशाद्वेदानामुदय इत्युक्तं न तेन वेदानां पौरुषेयतापत्तिः। प्रमाणान्तरेण हि वाक्यार्थं निश्चित्य तत्प्रतिपादनायेदंप्रथमतया वाक्यस्योत्पादितत्वं पौरुषेयत्वम्। अत एव बृहदारण्यके निःश्वसिततुल्यत्वमुक्तम्— 'स यथाऽऽर्द्रैन्धाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या

---

‡ शेषं मितागतम्।

(१) यास्मृ. ३।१९०; विश्व. ३।१८१ सः स्वातन्त्र्य (ससातत्य); मिता.; अप.; वीमि.

उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि '( बृउ. २।४।१० ) इति । ब्रह्मचर्यं ब्रह्मचारिकर्म । श्रद्धा भक्तिरास्तिक्यं वा । उपवासो गुरूपास्तिः । स्वातन्त्र्यं वश्येन्द्रियता । प्रसिद्धमन्यत् । अप.

( ४ ) वेदानुवचनं वेदाभ्यासः । एषां पापक्षयद्वारा ज्ञानहेत्वर्थम्( ? हेतुत्वम् ), न ज्ञानस्यैव साक्षात् । यथा मनुः— 'तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥' ( मस्मृ. १२।१०४ )। दीक.

(५) तथा च सति वेदस्य अनुवचनम् अध्ययनम् , ततो यज्ञब्रह्मचर्यतपोदमश्रद्धोपवासाः प्रवर्तन्ते, स्वातन्त्र्यं विषयाणां सङ्कलक्षणं च प्रवर्तते । एते चाऽऽत्मनो मोक्षहेतुतत्त्वज्ञानहेतवः । वीमि.

**वृद्धयाज्ञवल्क्यः**

वेदः धर्मप्रमाणम् , धर्मप्रवक्तारो नारदादयः

**[१]भूयांसो धर्मवक्तार उत्पन्ना भाविनस्तथा ।**
**निधानं सर्वधर्माणां वेद एव हि शाश्वतः ॥**

**नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः ।**
**बौधायनो जातुकर्णो विश्वामित्रः पितामहः ॥**

**बृहद्योगियाज्ञवल्क्यः**

धर्मे धर्मज्ञपरिषदः प्रामाण्यम्

**[२]चत्वारो वेदधर्मज्ञा यत्र त्रैविद्यमेव वा ।**
**स ब्रूते यः स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥**

वेदमूलकं शास्त्रमेव प्रमाणम् ; पाञ्चरात्राद्यागमप्रामाण्याप्रामाण्यविचारः

**[३]न वेदशास्त्रादन्यत्तु किंचिच्छास्त्रं हि विद्यते ।**
**सर्वं विनिःसृतं शास्त्रं वेदशास्त्रात्सनातनात् ॥**

(१) विश्व. १।४-५.
(२) बृयास्मृ. ११।३५.
(३) बृयास्मृ. १२।१ ; पप्र. २० तृतीयचरणे ( निःसृतं सर्वशास्त्रं तु ).

**[१]दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते ।**
**तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ॥**

**[२]पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥**

**[३]§सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।**
**अतिप्रमाणान्येतानि हेतुभिर्न विचालयेत् ॥**

( १ ) यच्च भट्टाचार्यैः 'सांख्ययोगपञ्चरात्रशाक्यनिर्ग्रन्थ' इत्याद्युदाहृत्याप्रमाणमध्ये गणितम् , (तत्) वेदविरोधोपक्रमाद्वेदविरुद्धवामाचारादिपरपञ्चरात्रपरमेव । सांख्ययोगस्य तु वैधहिंसानिषेधप्रतिपादनांशेन वेदविरोधादेव तदंशेऽप्रामाण्यपरम् । अत एव स्मृतिप्रामाण्यप्रसङ्गे 'एतेन सामुद्रिकवास्तुविद्यादि व्याख्यातम्' इति वास्तुविद्यारूपघटनाङ्गमप्रामाण्यं( ? ) भट्टाचार्यैरेव कथितम् । न ह्येतन्मत्स्यपुराणादिविषयम् , पुराणप्रामाण्येन( ? ण्यस्य ) साधितत्वात् । यच्च कल्पतरौ पाञ्चरात्रिकपूजाघटनादिकं न लिखितम् , तत्प्रस्थानान्तरत्वेन । कथमन्यथा 'मुक्त्वा तु मम शास्त्राणि शास्त्रमन्यत्प्रभाषते', तथा— 'मम शास्त्रं बहिष्कृत्य अस्माकं यः प्रपद्यते' इति वराहपुराणीयं 'भागवतापराधे मम शास्त्रं मदुक्तं पञ्चरात्रम्' इति कल्पतरावेव व्याख्यातम् ? तेन हयशीर्षमयसंग्रहादिघटनाशास्त्राणि प्रपञ्च-

§ अस्य वचनस्य अपव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'श्रुतिस्मृति०' इति वचने ( वका. पृ. १४४ ) द्रष्टव्यम् ।

(१) बृयास्मृ. १२।२ ; पप्र. २० दुर्बोधं (दुर्बोध्यं).
(२) बृयास्मृ. १२।३ ; पप्र. २० तर्क ( न्याय ).
(३) बृयास्मृ. १२।४ ; अप. १।७ पृ. ११ योगं पञ्च (योगः पाञ्च) चाल ( चार ) (=) ; नृप. १२७ वेदाः ( शैवं ) चतुर्थचरणे ( न हन्तव्यानि हेतुभिः ) : ५०९ सांख्यं योगं (सांख्ययोगः) चाल ( रोध ) ; निप्र. ११२० योगं (योगः) चाल (रोध) ; गप. १४ निप्रवत् : ४३८ निप्रवत् , याज्ञवल्क्यः ; पप्र. २१ निप्रवत् ; सस्मृ. २४ सांख्यं योगः प (सांख्ययोगः पा) चतुर्थचरणे ( न हन्तव्यानि हेतुभिः) भारतवचनम्.

सारता( १ शा)रदादिमन्त्रागमाश्च पञ्चरात्रत्वेन महाजनपरिगृहीताः सर्वदेशीयाविगीताचारविषयाः प्रमाणमेव ।

‡ निप्र. १।२१–२२

(२) अत्र 'सांख्यं योगः पञ्चरात्रम्' इत्युपक्रम्य 'हेतुभिर्न विरोधयेत्' इत्युक्तेस्तेषामदूष्यत्वमात्रे तात्पर्यम्, न तु प्रामाण्यमित्यपरार्कोक्तमनादरणीयम्, 'अतिप्रमाणानि' इत्यभिधानात्। तथा महाभारते– 'पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः। प्रापणं भगवत्प्रोक्तं भुञ्जते चात्र भोजनम्॥ तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः। नाऽऽनृता वाक्समभवन्मनो दुष्टं न चाभवत्॥' इति उपरिचरराजप्रशंसामुखेन पञ्चरात्रस्य प्राशस्त्यमुक्तम्। प्रापणं नैवेद्यम्। पप्र. २१

'सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥
'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते ॥
'प्राचीनगर्भं तमृषिं प्रवदन्ति हि केचन ।
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः ॥
प्रोक्तवानिदमत्युग्रं ज्ञानं पाशुपतं हरः ।
अत ऊर्ध्वं तु ये केचिद्वेदशास्त्राण्यनेकशः ॥
बौद्धः कापिलकुहकौ लोकायतिकभिक्षकाः ।
वेदबाह्यास्तथाऽन्ये तु तामसा अशिवास्तु ते ॥
नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
वेदशास्त्रं तु बाधन्ते पौरुषेयास्तु ते स्मृताः ॥
आसुरेयाः पाशुपता बृहस्पतिकृतास्तु ये ।
शुक्रं रूपं समास्थाय देवानां हितकाम्यया ॥
प्रजापतिकृताश्चान्ये असुराणां प्रमोहनाः ।
येनेदं वाङ्मयं दुग्धमधर्मे विफलीकृतम् ॥

‡ गप. निप्रवत्।

(१) बुयास्मृ. १२।५ वक्ता (कर्ता) मर्षिः ( मार्थः ); निप्र. १।२० ; गप. १४.

(२) बुयास्मृ. १२।६ कृत्स्नस्य ( सर्वस्य ); निप्र. १।२० पू. ; गप. १४ पू.

(३) बुयास्मृ. १२।७–२०.

आत्मानं भूषयेन्नित्यं भोजनाच्छादनादिभिः ।
स्वदेहमेव दैवत्यमन्यच्चैवात्र विद्यते ॥
असत्यमप्रतिष्ठं च जगदाहुरनीश्वरम् ।
अयं लोकोऽस्ति न परः पुनः संभवनं कुतः ॥
जलबुद्बुदवच्चायं संभवेच्च पुनः पुनः ।
स्वेच्छयोत्पद्यते चैव स्वेच्छया च प्रलीयते ॥
जातिप्राधान्यकं नास्ति एकजातिसमुद्भवः ।
न वेदा नैव यज्ञाश्च न दानं न तपांसि च ॥
न कार्यं नैव चाकार्यं सर्वं कुर्यादशङ्कया ।
एतदासुरकं भावं समाश्रित्य विनश्यति ॥
नैयायिकार्थमालोक्य तथा हीश्वरकारणम् ।
प्रतिष्ठानानि वेदस्य एते तर्का उदाहृताः ॥
प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥
यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥
'या वेदबाह्याः स्मृतयो याः काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
उत्पद्यन्ते च्यवन्ते च यानि तानि तु कानिचित् ।
एतान्यर्वाक्कालिकानि निष्फलान्यनृतानि च ॥
'मूलस्तम्भो भवेद्वेदः शाखाश्चान्यानि यानि तु ।
मूले ह्युपासिते सम्यक् फलं भवति नान्यथा ॥
उच्छिन्नशाखा याः कश्चित्तथा वेदान्तराणि च ।
अन्तर्धानगतानीह स्मृत्वा तु स्मृतयः कृताः ॥
एकमेव हि विज्ञेयं श्रुतिस्मृतिविचक्षणैः ।
तस्मात्तुल्यबलत्वात्तु विकल्पश्च क्वचित्स्मृतः ॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥
योऽवमन्येत ते तूभे हेतुशास्त्राश्रयो द्विजः ।
स विद्वद्भिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥

(१) बुयास्मृ. १२।२२–२३.

(२) बुयास्मृ. १२।२५–३३.

**हेतुशास्त्राणि योऽधीते वेदबाह्यो भवेद्द्विजः।**
**तेन नास्तिक्यभावेन सर्वं मन्येत सोऽन्यथा॥**
**तीर्थं दानं व्रतं यज्ञा वेदा विप्राश्च देवताः।**
**स्वर्गापवर्गहेतूनि कुदृष्ट्या पश्यतेऽनृतम्॥**
**नास्तिक्यभावान्मूढात्मा पापेषु कुरुते मतिम्।**
**श्रुतिस्मृत्युदितं त्यक्त्वा ततो नरकमृच्छति॥**
**अज्ञानतमसाऽन्धानां भ्रामितानां कुदृष्टिभिः।**
**न प्रत्यक्षं भवेत्तेषां वेदविद्यान्तरं तु यत्॥**
**[1]विद्याविद्याविचारं च त्रयीविद्याभिशंसनम्।**
**तत्सर्वं मुनिना प्रोक्तं विप्राणां हितकाम्यया॥**

## नारदः

अर्थशास्त्रात् दृष्टार्थात् अदृष्टार्थं धर्मशास्त्रं बलवत्तरम्

**[2]यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः।**
**अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्॥**

यत्र धर्मशास्त्रार्थशास्त्रयोर्विरोधः, अन्यथा धर्मशास्त्रप्रवृत्तिरन्यथाऽर्थशास्त्रप्रवृत्तिः, तत्रार्थशास्त्रोक्तमुत्सृज्य तस्य दृष्टार्थत्वात्, धर्मशास्त्रोक्तमाचरेत् धर्मशास्त्रोक्तं कुर्यात्, तस्यागृह्यमाणप्रकारत्वात्। नाभा.

## बृहस्पतिः

न्यायः श्रुतिस्मृत्युभयमूलकः

**[3]श्रुतिस्मृती हि विप्राणां चक्षुषी परमे मते।**
**काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः॥**
**[4]अधीत्य चतुरो वेदान्सषडङ्गपदक्रमान्।**
**स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी॥**
**[5]श्रुतिस्मृती चक्षुषी द्वे द्विजानां न्यायवर्त्मनि।**
**मार्गमुज्झन्ति तद्धीनाः प्रपतन्ति पथश्च्युताः॥**

(१) न्यायवर्त्मनि न्याया(?य्या)र्थे, धर्मे इति यावत्। ब्रक. १७

(२) न्यायः न्याय्यो धर्म इत्यर्थः। स एव वर्त्म, स्वर्गनरकप्राप्तिहेतुत्वात्। कृर. २४

मनोः प्रामाण्यं वेदानुवादकत्वेन

**[1]वेदार्थोपनिबद्धत्वात्प्राधान्यं तु मनोः स्मृतम्।**
**मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥**

(१) वेदार्थः उपनिबन्धो यस्य स वेदार्थोपनिबन्धः। उपनिबध्यतेऽनेनेत्युपनिबन्धो ग्रन्थः। वेदश्च– 'यद्वै किंचन मनुरवदत्तद्भेषजं भेषजतायै' इति। ब्रक. ४२

(२) अथात्र केचिदाहुः– ...... मनुस्मृतिर्हि स्वाध्यायात् प्रसिद्धत्वात् बहुभिः संप्रदायेन पठ्यमानत्वात् अपभ्रष्टपाठासंभवात् मूलान्तरा वेति(?) क्षुद्रतरेभ्यो नाममात्रेण प्रसिद्धेभ्यः केनचिदप्यपठ्यमानेभ्योऽनवस्थितपाठेभ्यः संभावितभ्रान्त्यादिमूलेभ्यः स्वविरोधिप्रत्यक्षश्रुतिवद्बलीयसीति। अत एव बृहस्पतिः– वेदार्थोपेति। मनुरप्याह– 'यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः। स सर्वो विहितो वेदे सर्वज्ञानमयो हि सः॥'

---

(१) बृयास्मृ. १२।४७.

(२) नासं. १।३३ ; नास्मृ. १।३९.

(३) स्मृच. १।१० ; चप्र. २३ पूर्वार्धे ( श्रुतिः स्मृतिस्तु विप्राणां चक्षुषी द्वे प्रकीर्तिते। ) कया हीनो ( कहीनस्तु ) शातातपः ; प्रपा. २.

(४) स्मृच. १।१० ; पमा. १।१४३ सषडङ्ग ( साङ्गोपाङ्ग ) ; प्रपा. २ सषडङ्ग (सहाङ्गान्स ).

(५) ब्रक. १७ र्गमुज्झ (र्गे मुह्य) पतन्ति (यतन्ति) ; कृर. २३ ; प्रपा. २ वर्त्मनि ( वर्त्मनाम् ) तृतीयचरणे ( मार्गमुत्क्रान्तमाक्रम्य ) ( = ) ; मुक्ता. ६ पतन्ति ( यतन्ति ) मनुः .

(१) अप. २।२१ निबद्ध ( निबन्ध ) मनोः स्मृतम् ( मनुस्मृतौ ) तु या स्मृतिः सा न श ( या स्मृतिः सा न प्रश ) ; ब्रक. ४२ निबद्ध (निबन्ध) प्राधान्यं (प्रामाण्यं) ; स्मृच. १।१७ दार्थोप ( दादुप ) ; ममु. १।१ तु मनोः ( हि मनोः ) ; चभा. २०७ ब्रकवत् ; आद. ४ ता तु ( ता या ) या स्मृतिः सा न ( स्मृतिः सा न प्र) उत्त. ; प्रपा. ३ दार्थोप ( दादुप ) नोः स्मृतम् ( नुस्मृतेः ) न शस्यते ( विनश्यति ) अङ्गिराः ; निप्र. १।१०५ उत्त. ; संत. ९०३ निबद्ध ( निबन्धृ ) तु म ( हि म ) उत्तरार्धे ( मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥ ) ; मुक्ता. ६ स्मृचवत्, अङ्गिराः : १२८ (=) उत्त. ; संम. २ न शस्यते ( विनश्यति ) उत्त., अङ्गिराः ; पप्र. २७ निबद्ध ( निबन्ध ) शेषं ममुवत् ; आन. १२–१३ स्मृचवत्, अङ्गिराः ; कृम. १२९३ चतुर्थचरणे (स्मृतिः साऽपि विनश्यति) उत्त., अङ्गिराः ; इन्दु. ४ सर्वं संमवत् .

(मस्मृ. २।७) इति। उच्यते— यत्तावदुक्तं मनुस्मृतेः श्रुतितुल्यत्वेन विधेः(? विरोधे) स्मृत्यन्तरेभ्यो बलीयस्त्वमिति तत् कल्पनामात्रम्। बृहस्पतिवचनं मन्वर्थविपरीतानां बुधा(? द्धा)दिस्मृतीनामप्रामाण्यमाह, न तु शिष्टत्रैवर्णिकस्वीकृतानां कात्यायनादिस्मृतीनाम्, वेदार्थप्रतिबद्धत्वादित्यप्रामाण्यहेत्वविद्यमानत्वात्। अतो मनुशब्देनात्र सर्वे वेदार्थस्मर्तारः कात्यायनादयोऽभ्युपलक्ष्यन्ते। अथवा 'मन ज्ञाने' इति धातुपाठात् वेदार्थज्ञानवान् मुनिर्मनुरुच्यते। बभा. २०७–२०८

(३) स्मृतिष्वपि मनुस्मृतिः प्रबलेति। तथा चाङ्गिराः— मन्वर्थविपरीतेति। अनादरणीयेत्यर्थः। संम. २

[1]**तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च।**
**धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते॥**

दक्षिणदेशमध्यदेशादिषु सापिण्ड्यसंकोचगवाशनादयः अनाचाराः

[2]**उदू(? दु)ह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।**
**सापिण्ड्यमपि संकोच्य प्रत्यक्षश्रुतिदर्शनात्॥**

'आयाहीन्द्र' इत्यादिका श्रुतिः पूर्वमुक्तैव। विपा. ३।१।६९५

[3]**उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।**
**मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः॥**

बृहस्पतिरपि 'उदूह्यते०' इत्यनाचारत्वमाह। अत एव हेमाद्रौ मात्स्ये कर्नाटकादीनां तत्कारिणां श्राद्धे निषेधः। बोपदेवेनापि लिखितं ब्राह्मम्— 'यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः। श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषम्॥'। § सिन्धु. १०१२

[1]**मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः।**
**उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः॥**

[2]**सहजाताः प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम्।**
**सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम्॥**

इति श्लोकेनानाचारत्वं प्रतिपाद्यते। तच्चेदृशकर्मणि परलोकभयमात्रम्, न त्वैहिकभयमिति तात्पर्यम्। कृभ. १०१२–१०१३

राज्ञा बलात्, अनादृत्य प्रजामतम्, न निवर्तनीया दक्षिणोदीच्यादिदेशेषु प्रवृत्ता अनाचाराः

[3]**$अब्रह्मचारिदाराद्यैः सार्धभोजनकर्म च।**
**मातुलादिसुतायां च विवाहः शिष्टसंमतः॥**
**इत्येते दाक्षिणात्यानामपि( ? वि )गीता उदाहृताः॥**

[4]**समुद्रयानं मांसस्य भक्षणं शस्त्रजीविका।**
**शीधुपानमुदीच्यानामविगीतानि धर्मतः॥**

---

(१) ममु. १।१.

(२) विपा. ३।१।६९५; संग. १७२.

(३) स्मृच. १।२५ उदु (उद्वा) शिल्पिन (शिबिन); सावी. २९ स्मृचवत्, पू.; चमव्या. ९४, ९६ उदु (उदू) पू.; मुक्ता. १३० उदु (उद्वा); सिन्धु. १०१२ उदु (उदू) पू.; संम. ५३ सिन्धुवत्, पू.; संप्र. ७२५ पू.; आन. ५०७ मुक्तावत्; साप्र. ८ सिन्धुवत्, पू.; संर. ४१२ सिन्धुवत्, पू.

§ संप्र. सिन्धुगतम्।

$ मुक्ताग्रन्थे एतदादिसार्धश्लोकद्वयात्मकं प्रघट्टकम्। तत्रत्यस्य 'समुद्रयानम्' इति श्लोकस्य आचारनवनीते बार्हस्पत्यत्वोक्तेरयं सार्धश्लोकोऽपि बृहस्पतौ संगृहीतः।

(१) स्मृच. १।२५; चमव्या. ९६ पा नार्यः (पाश्चैव); मुक्ता. १३० पूर्वे (सर्वे); सिन्धु. १०१२ चमव्यावत्; संम. ५३ चमव्यावत्; आन. ५०७ मुक्तावत्; साप्र. ८ पूर्वे (सर्वे) पा नार्यः (पाश्चैव); संर. ४१२ चमव्यावत्.

(२) स्मृच. १।२५ पू.; चमव्या. ९६ प्रथमचरणे (सजाताश्चापि गृह्णन्ति) भार्यामभ (भार्या स); मुक्ता. १३० सहजाताः प्र (अप्रजातां प्र) पू.; संम. ५३ प्रथमचरणे (सजाताश्चापि गृह्णन्ति); आन. ५०७ सर्वे मुक्तावत्; साप्र. ८ संमवत्; संर. ४१२ संमवत्; कृभ. १०१२ संमवत्.

(३) मुक्ता. १३० स्मृतिरत्ने.

(४) मुक्ता. १३० स्मृतिरत्ने; आन. ५०७.

[1]देशजातिकुलानां च ये धर्मास्तत्प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥

एतेषां च देशव्यवस्थया प्रामाण्यमाह स एव— देशेति । स्मृच. १।२५

[2]विरुद्धाः प्रतिदृश्यन्ते दाक्षिणात्येषु संप्रति ।
स्वमातुलसुतोद्वाहो मातृबन्धुत्वदूषितः ॥
[3]अभर्तृकभ्रातृभार्याग्रहणं चातिदूषितम् ।
कुले कन्याप्रदानं च देशेष्वन्येषु दृश्यते ॥
[4]तथा भ्रात्रीविवाहोऽपि पारसीकेषु दृश्यते ॥
[5]तथैकादशरात्रादौ श्राद्धे भुक्तं तु यैर्द्विजैः ।
तेभ्यः श्राद्धे पुनर्दानं केचिन्नेच्छन्ति देशिनः ॥
[6]दत्त्वा धान्यं वसन्तेऽन्ये शरदि द्विगुणं पुनः ।
गृह्णन्ति बन्धकक्षेत्रं प्रविष्टे द्विगुणे धने ॥
[7]भुज्यतेऽन्यैरप्रविष्टे मूले तच्च विकथ्यते ।
इत्थं विरुद्धानाचारान् प्रभूतान्विनिवर्तयेत् ॥
[8]देशजात्यादिधर्मस्य प्रामाण्यमविरोधिनः ।
शास्त्रेणातो नृपः सर्वं शास्त्रं दृष्ट्वा प्रवर्तयेत् ॥

(१) स्मृच. १।२५ ; मुक्ता. १३० पूर्वार्धे ( देशजातिकुलाचारधर्माः सत्त्वप्रवर्तिताः । ) ; आन. ५०७ पूर्वार्धे ( देशजातिकुलाचारधर्माः सद्भिः प्रवर्तिताः । ).

(२) स्मृच. १।२६ द्धाः प्रति ( द्धास्तु प्र ) (=) ; मुक्ता. १३० ; आन. ५०७ त्वदूषितः ( ष्वदूषितः ).

(३) स्मृच. १।२६ (=) ; मुक्ता. १३० षितम् ( षिते ).

(४) स्मृच. १।२६ भ्रात्री (भ्रातृ) (=) ; मुक्ता. १३०.

(५) स्मृच. १।२६ (=) ; मुक्ता. १३० तु यैर्द्वि ( तयोर्द्वि ) देशिनः ( देहिनः ).

(६) स्मृच. १।२६ बन्धकक्षेत्रं ( बन्धुक्षेत्रं च) (=) ; मुक्ता. १३० ऽन्ये ( ऽन्यैः ) गृह्णन्ति ( भुज्यते ).

(७) स्मृच. १।२६ (=) ; मुक्ता. १३० पूर्वार्धे ( भज्यतेऽन्यैरप्रविष्टमूल्यं तच्च विरुध्यते । ) न्विनिव (न्न निव ).

(८) स्मृच. १।२६ (=) ; मुक्ता. १३१ ण्यमवि ( ण्यादवि ).

अतो ब्राह्मादिविवाहेषु निवृत्तसपिण्डभावाया मातुरसपिण्डत्वान्मातुलसुता परिणेया । एवं पैतृष्वस्री(?से)-य्यपि च । न च तथाविधा मातृष्वसा तद्दुहिता च किमिति न परिणेयेति वाच्यम् । शास्त्राविरोधेऽपि लोकविरुद्धत्वात् धर्म्यमपि लोकविद्विष्टं तन्नानुष्ठेयम् । तदुक्तं मनुना(?)– 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।' ( यास्मृ. १।१५६ ) इति । ... दाक्षिणात्यानां मध्ये आन्ध्रेषु त्रैविद्यवृद्धा वेदार्थानुष्ठातारः शिष्टा अपि मातुलादिदुहितृपरिणयनमाचरन्ति । द्रविडेषु तथाविधाः शिष्टाः चतुर्थ्यादिविवाहमाचरन्ति । मातृष्वसृदुहित्रादिविवाहं सर्वत्र वर्जयन्ति । उक्तं च तथाऽऽचारस्य प्रामाण्यं मनुना– 'शिष्टाचारस्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।' इति । मुक्ता. १३१

[1]यद्यपि स्यात्त्रिलोकस्त्रैलोक्याकर्षणक्षमः ।
तथापि लौकिकाचारं मनसाऽपि न लङ्घयेत् ॥

## कात्यायनः

स्मृतिविरुद्धो लोकाचारस्त्याज्यः

[2]स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् ।
तथैव लौकिकाचारं स्मृतिबाधात्परित्यजेत् ॥

## व्यासः

प्रधानं धर्मप्रमाणं वेद एव, वेदविदामृषीणां स्मृतिशीले शिष्टाचारः पुराणानि च वेदमूलकत्वात् प्रमाणम्

[3]धर्ममूलं वेदमाहुर्ग्रन्थराशिमकृत्रिमम् ।
तद्विदां स्मृतिशीले च साध्वाचारं मनःप्रियम् ॥

साधवः शिष्टाः । तथा च मनुः– 'शिष्टाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम्' इति । स्मृच. १।६

[4]नान्यतो ज्ञायते धर्मो वेदादेवैष निर्बभौ ।
तस्मात्सर्वप्रयत्नेन धर्मार्थी वेदमाश्रयेत् ॥

(१) मुक्ता. ४६५ ; आन. ६५३.

(२) मुक्ता. १२८.

(३) स्मृच. १।६ ; प्रपा. २–३ ग्रन्थराशि ( धर्मशास्त्र ) शीले ( शीलं ) ; मुक्ता. १.

(४) स्मृच. १।१२८ माश्रयेत् ( मभ्यसेत् ) ; संप्र. ५०८ धर्मार्थी ( यज्ञार्थे ).

धर्मार्थी धर्मज्ञानार्थम् । स्मृच. १।१२८

[1]धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते ।
धर्मस्य कारणं शुद्धं मिश्रमन्यत्प्रकीर्तितम् ॥

शुद्धिः असंकीर्णता । धर्मस्य धर्मनिश्चयस्येत्यर्थः । शुद्धम् अदुष्टम् । मिश्रं संभावितदोषम् ।
अप. १।७ पृ. ९

[2]अतः स परमो धर्मो यो वेदादवगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्थितः ॥

इति व्यासवचनात् वेदस्मृत्यवबोधितयोर्धर्मयोरुत्कर्षापकर्षावेवगम्येते । तथा च वैदिको धर्मो मुख्यः, उत्कृष्टत्वात्, स्मार्तोऽनुकल्पः, अपकृष्टत्वात् । मुख्यासंभवे चानुकल्पानुष्ठानात्फलं भवति, न तत्संभवे, 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥' (मस्मृ. ११।३०) इति मनूक्तेः । पप्र. २९

[3]वेदार्थवित्तमैः कर्म यत्स्मृतं मुनिभिः पुरा ।
तद्यत्नेनानुतिष्ठेत तन्निषिद्धं तु वर्जयेत् ॥

[4]ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।
प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचारयेत् ॥

न विचारयेत् नाप्रमाणतया शङ्केत ।
अप. १।७ पृ. १०

[1]वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम् ॥

[2]श्रुतिस्मृती च विप्राणां चक्षुषी द्वे विनिर्मिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥

[3]तेन स्मार्तमनुष्ठानमन्तरेण §न वैदिकम् ।
प्रवर्तते द्विजातीनां धर्मशुद्धिमभीप्सताम् ॥

---

(१) अप. १।७ पृ. ९ ; ब्रक. ३२–३३ धर्म (द्रव्य) ; चव. २२ ब्रकवत् ; कुर. ३८ प्सद्भि (प्सुभि).

(२) अप. १।७ पृ. ९ दवग (दभिग) स्थितः (स्मृतः) ; ब्रक. ३३ ; चव. २२ स्थितः (संस्थितः) ; कुर. ३९ अवरः (अपरः) ; पप्र. २९ स्थितः (स्मृतः) : ७१ पू. ; बाल. १।३ पृ. ८.

(३) अप. १।७ पृ. ९ नानुतिष्ठेत (न समातिष्ठेत्) ; ब्रक. ३३ कर्म यत्स्मृतं मुनि (कार्यं यत्स्मृतमृषि) तिष्ठेत (तिष्ठेत्तु) ; स्मृच. १।११ ; कुर. ३९ तं मुनि (तमृषि) तु (च) ; बाल. १।३ पृ. ८ पूर्वार्धे (वेदार्थवित्तमैः कार्यमृषिभिर्यत्स्मृतं पुरा ।) तिष्ठेत (तिष्ठेत्तु).

(४) अप. १।७ पृ. ९ ; ब्रक. ३३ यं धर्म (यद्धर्म) चार (चाल) ; स्मृच. १।११ प्रदि (आदि) चार (चाल) ; कुर. ३९ काम्यया (कारिणः).

§ अत्र 'न' इत्यस्य स्थाने 'तु' इति चन्द्रिकापाठः । द्वयोरप्यनयोः पाठयोः परस्परविरुद्धतात्पर्यकयोरपि विवक्षाभेदेन सूपपादत्वादस्य पाठस्य स्वीकारे नोपपत्त्यनुग्रहो हेतुः, अपि तु अन्यतरस्यावश्यग्राह्यत्वादन्यतरत्वमात्रं हेतुः । तत्र 'न' इति पाठे 'तेन वेदस्यैव धर्मे मुख्यप्रमाणत्वेन वैदिकं मूलभूतवेदवचनं विना, स्मृतिविषयकं वेदमूलकत्वनिश्चयं विनेत्यर्थः, द्विजातीनां स्मार्तकर्मानुष्ठानं न प्रवर्तते । वेदमूलकत्वेनैव स्मृतीनां प्रामाण्यम्, न स्वातन्त्र्येणेति यावत्' इति विवक्षितोऽर्थः संभवति । 'तु' इति पाठे तु तुकारमप्यर्थकमादाय 'तेन स्मृतीनां वेदमूलकत्वेनैव प्रामाण्येन, अथवा स्मृतीनामुच्छिन्नवेदमूलकत्वेन प्रत्यक्षवेदवचनं विनाऽपि द्विजातीनां स्मार्तकर्मानुष्ठानं प्रवर्तते' इति विवक्षितार्थसंभवः । वस्तुतस्तु चन्द्रिकायामस्य वचनस्य 'श्रौतस्मार्तकर्मानुष्ठाने शूद्रानधिकारः' इति पूर्वप्रकृतार्थे तात्पर्यस्य 'व्यासोऽपि' इत्यपिना बोधनात् उत्तरार्धे 'अद्विजातीनाम्' इति पाठश्चन्द्रिकाकाराभिमतः स्यादिति भाति । तदा 'शूद्रस्य श्रौतस्मार्तकर्मानुष्ठानाधिकाराभावेन स्मार्तं वैदिकं च विना अनुष्ठानम्, पौराणकर्मानुष्ठानमित्यर्थः, अद्विजातीनां प्रवर्तते' इति वाक्यार्थः । 'अभीप्सुभिः' इति चन्द्रिकापाठोपपत्तिस्तु न ज्ञायते ।

(१) अप. १।७ पृ. १० तत्र का (तस्मिन्का) ; ब्रक. ३३ ; कुर. ३९ दपि (यदि) ; निप्र. १।६७ ; बाल. १।३ पृ. ८.

(२) मुक्ता. ६ व्यासहारीतौ.

(३) स्मृच. १।११ न वै (तु वै) प्सताम् (प्सुभिः) ; मुक्ता. ६ धर्म (कर्म).

[1]श्रुतिस्मृती द्विजातीनां पुरुषार्थप्रसाधिके ।
इतिहासपुराणं च प्रमाणं धर्मनिश्चयः ॥

[2]एतेभ्योऽपि यदन्यत्स्यात्किंचिद्धर्माभिधायकम् ।
तदद्भुतवचो विद्धि मोहस्तस्याऽऽश्रयो मतः ॥

एतेभ्यः धर्मशास्त्रादिभ्यः यत् अन्यत् पौरुषेयं तद्धेयम् । अप. १।७ पृ. १०

श्रुत्यादीनां विरोधे प्रधानगुणभावं निश्चित्य प्रधानानुसारेण निर्णयः

[3]श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा ॥

[4]धर्मं यो बाधते धर्मो न स धर्मः कथंचन ।
अविरोधी तु यो धर्मः स धर्मः सद्भिरुच्यते ॥

यत्र पुनर्धर्मद्वयविरोधः तत्र लघीयस एव बाध इत्याह व्यासः– 'धर्मं यो बाधते ...' इति । स्मृच. १।१७

[5]तस्माद्विरोधे धर्मस्य निश्चित्य गुरुलाघवम् ।
तयोर्भूयस्तमं विद्वान् कुर्याद्धर्मविनिर्णयम् ॥

[6]प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठोऽतिप्रमाणं बाधयन् यात्यधोगतिम् ॥

(१) गुणनिष्ठः स्मृत्याचारनिष्ठः । अतिप्रमाणं वेदम् । गृक. २७४

(१) चत्र. २४.

(२) अप. १।७ पृ. १० तदद्भुतवचो (तद्दूरतरतो); ब्रक. ३३; स्मृच. १।११ अपवत्; चत्र. २२ न्यत्स्या (न्यस्मा) तदद्भुतवचो (तच्च दूरतरं); कुर. ३९ न्यत्स्यात् (न्यस्य); बाल. १।३ पृ. ८ तृतीयचरणे (तद्दूरतो बुधैस्त्याज्यं).

(३) व्यास्मृ. १।४.

(४) स्मृच. १।१७; प्रपा. ३ कथं (कदा); मुक्ता. ७ न स (स न) शेषं प्रपावत्.

(५) स्मृच. १।१७ तयोर्भूयस्तमं (यतो भूयस्ततो); प्रपा. ३; मुक्ता. ७ स्तमं (स्तनं) निर्णयम् (निर्णयः).

(६) गृक. २७४; गृर. ४८२ प्रधानं (प्रमाणं) भूतं (निष्ठं) निष्ठो (भूतो); निप्र. २।३३६ भूतं तथे (भूतमथे).

(२) इतरत् स्मार्तादि गुणनिष्ठं स्मृत्याचारनिष्ठम् ।
¶ गृर. ४८२

(३) गुणनिष्ठः सत्याचारनिष्ठः ।
‡ निप्र. २।३३६

विकल्पे आत्मतुष्टिः प्रमाणम्

[1]वैकल्पिके आत्मतुष्टिः प्रमाणम् ॥

शास्त्रद्वैधे सति साधूनां मनस्तुष्टीवेष्टो यः स धर्मः । तथा च व्यासः– वैकल्पिक इति । मच. २।१

## लघुव्यासः

इतिहासपुराणानुसारेण वेदार्थनिर्णयः कार्यः

[2]इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ॥

## देवलः

धर्मप्रमाणानि वेदाः, वेदाङ्गानि, इतिहासाः, धर्मशास्त्रप्रयोक्तारः, गृह्यकाराश्च

[3]ऋग्यजुःसामाथर्वाणो वेदाः ॥

§[4]शिक्षाव्याकरणनिरुक्तच्छन्दःकल्पज्योतिषाणीति वेदाङ्गानि ॥

तत्र शिक्षा 'अथ शिक्षां प्रवक्ष्यामि' इत्यादिपञ्चखण्डात्मिका पाणिनिप्रोक्ता, प्रतिशाखं चान्याऽन्या

¶ शेषं गृकवत् । उत्तरार्धे 'गुणभूतोऽतिप्रमाणम्' इति स्वामिमतपाठे गुणभूतपदार्थस्यात्रानुक्तत्वेऽपि पूर्वश्लोकीयस्य 'वेदकर्माश्रितः' इति पदस्य 'वैदिककर्मणि गुणभूतः' इति व्याख्यानात् तदनुरोधेनात्रापि 'कर्तृत्वेन कर्मणि गुणभूतः स्मृतिशिष्टाचारप्राप्तकर्मकर्ता' इति रत्नाकरकर्तुरभिप्रेतो गुणभूतपदार्थो निर्णीयते ।

‡ शेषं गृकवत् ।

§ अस्य वचनस्य वीमिव्याख्यानमस्मिन्नेव प्रकरणे 'पुराणन्यायमीमांसा०' इति याज्ञवल्क्यवचने (वका. पृ. १३०) द्रष्टव्यम् ।

(१) मनु. २।६ गर्भः; मच. २।१.

(२) लव्यासं. २।८५.

(३) ब्रक. २३; कुर. २८; वीमि. १।३; पप्र. २०.

(४) ब्रक. ३० षाणीति (षाणि); चत्र. १७ ज्योतिषाणीति (ज्योतींषीति); कुर. ३५; वीमि. १।३ ब्रकवत्; पप्र. २० (वेदाङ्गानि०).

तत्तन्मुनिप्रणीता प्रातिशाख्याभिधा च । व्याकरणम् ‘वृद्धिरादैच्’ इत्यादि पाणिनिप्रोक्तं कात्यायनोक्तं वार्तिकं पतञ्जल्युक्तं महाभाष्यं चेति त्रिमुनि । इदमेव वेदाङ्गम्, कौमारादीनि तु लौकिकशब्दमात्रसाधुत्वान्वाख्यानपराणीति सांप्रदायिकाः । निरुक्तं ‘समाम्नायः समाम्नातः स व्याख्यातव्यः’ इत्यादि यास्कप्रणीतम् । निघण्टुः तु ‘गौः ग्मा’ इत्यादिः तदन्तर्गत एव । छन्दः ‘धी श्री स्त्रीम्’ इत्यादिः छन्दोविचितिपर्यायो ग्रन्थः पिङ्गलप्रोक्तः । कल्पः बौधायनादिसूत्राणि । ज्योतिषम् आदित्यगर्गादिप्रोक्तं ‘पञ्चसंवत्सरमयम्’ इत्यादि ।

पप्र. २०

[1]तथा आर्षाः पूर्ववृत्तान्ताश्रयाः प्रवृत्तिफला इतिहासाः ॥

आर्षाः ऋषिप्रणीताः । $ व्रक. ३०

[2]मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः ।
तत्प्रयुक्तप्रयोक्तारो गृह्यकाराः समूचिरे ॥

एवं च गृह्यकाराणामपि प्रामाण्यम् अविरुद्धम्, तेषामपि मन्वादिप्रणीतस्यैव संस्कारकलापस्य स्वशाखावगतमन्त्रविनियोगद्वारेण प्रयोजकत्वात् । तथा च देवलः– मन्वादय इति । स्मृच. १।४

देशधर्मप्रामाण्यम्

[3]यस्मिन् देशे पुरे ग्रामे त्रैविद्यनगरेऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥

---

$ कृर. व्रकवत् ।

(१) व्रक. ३० प्रवृत्ति (प्रतिपत्ति) ; चव्र. २२ (तथा०) हासाः (हासः) ; कृर. ३५ ; प्रकाश. २।२२ चव्रवत् .

(२) स्मृच. १।५ ; मुक्ता. २ समूचिरे (तु मन्त्रतः).

(३) स्मृच. १।२५, १९७ ; पमा. १।४७३ विद्यन (विद्ये न) ; मुक्ता. १३१ स्तं धर्मं (स्तद्धर्मे) शेषं पमावत् ; सिन्धु. १४७३ विद्यन (विद्यैर्न) चाल (चार) भृगुः ; संर. ४१२ चाल (चार) शेषं पमावत् ; संदी. २।७ पमावत्, भृगुः .

[1]यस्मिन् देशे य आचारो न्यायदृष्टस्तु कल्पितः ।
तस्मिन्नेव स कर्तव्यो न तु देशान्तरे स्मृतः ॥

[2]येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका ॥

[3]येषु देशेषु यच्छौचं धर्माचारश्च यादृशः ।
तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः ॥

## उशना

वेदः प्रमाणम्

[4]सर्वेषामेव भूतानां वेदश्चक्षुः सनातनः ॥

## यमः

मन्वादिप्रणीतानि धर्मशास्त्राणि प्रमाणानि

[5]मनुर्यमो वसिष्ठोऽत्रिर्दक्षो विष्णुस्तथाऽङ्गिराः ।
उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः ॥
कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः ।
संवर्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ॥

---

(१) स्मृच. १।१९८ चतुर्थचरणे (देशाचारः स्मृतो भृगोः) ; पमा. १।४७३ तस्मिन्नेव स (स तस्मिन्नेव) ; मुक्ता. १३१ स्मृचवत् पमावत् च ; विपा. ३।२।३४५ (यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः । श्रुतिस्मृत्यविरुद्धश्च तमनुष्ठातुमर्हति ॥) ; संर. ४१२ य आ (त्वना) ष्टस्तु क (ष्टः सुक) चतुर्थचरणे (नान्यदेशे स ईरितः) शेषं पमावत् .

(२) स्मृच. १।२५, १९७, २।२५४ ; आत. ३३६ देशेषु (स्थानेषु) मरीचिः ; मुक्ता. १३१ ; आर. ७ उत्त. ; वीमि. १।१०० देशेषु यत्तोयं (स्थानेषु यत्तोयं) मरीचिः .

(३) स्मृच. १।२५, १९७, २।२५४ देशेषु (स्थानेषु) तन्ना (तान्ना) ; आत. ३३६ देशेषु (स्थानेषु) मरीचिः ; मुक्ता. १३१ तन्ना (तान्ना) ; वीमि. १।१०० चतुर्थचरणे (धर्माचारश्च तादृशः) शेषं सर्वं आतवत् .

(४) औसं. ३।४१.

(५) व्रक. २३ ; चव्र. १९ ; कृर. २९ ; बाल. १।४–५ देवलः .

[१]एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येतानि प्रमाणानि न हन्तव्यानि हेतुभिः ॥

धर्मशास्त्रग्रहणं पुराणादेरपि प्रदर्शनार्थम् ।
स्मृच. १।४

[२]यस्तानि हेतुभिर्हन्यात्सोऽन्धे तमसि मज्जति ॥

§ [३]देवलसुमन्तुजैमिनिजमदग्निप्रजापतिविश्वामित्रपैठीनसिपितामहबौधायनच्छागलेयजाबालच्यवनमरीचिकश्यपनारददक्षाः ॥

[४]स्मृतयो धर्ममूलं हि धर्मः सर्वार्थसाधनम् ॥

[५]यथा हि मृन्मयं भाण्डं दुष्टं वर्षशतैरपि ।
पुनः पाकेन शुध्येत धर्मशास्त्रैस्तथा द्विजाः ॥

शिष्टलक्षणं परिषल्लक्षणं च, वेदस्मृतिवचनानां प्रामाण्यम्

‡ [६]लोके शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः ॥

§ नेदं स्मार्तं वचनम्, अपि तु निबन्धकर्तृकृतेयं परिगणनेत्यस्माकं प्रत्ययः । तथापि केषांचित् विप्रतिपत्तिसंभवात् संगृहीतम् ।

‡ एतदादिवचनद्वयस्य व्याख्यानानि अनयोरेव बौधायनवचनयोर्द्रष्टव्यानि ( वका. पृ. ५२-५३ ) ।

(१) व्रक. २४ तानि प्रमाणानि ( वातिप्रणीतानि ) ; स्मृच. १।४ ; चव्र. १९ तानि प्र ( वातिप्र ) ; कृर. २९ चव्रवत् ; प्रपा. १-२ प्रमाणानि ( प्रवीणैस्तु ) (=) ; मुक्ता. ८ संग्रहे ; विपा. ४।३०० चव्रवत् ; वीमि. १।४-५ एतै ( एभि ) (=) ; पप्र. १८ पू., प्रयोगपारिजाते ; सस्मृ. ५ अङ्गिराः .

(२) स्मृच. १।४ ; प्रपा. २ (=) ; मुक्ता. ९ संग्रहे. (३) निप्र. १।२० ; गप. ११.

(४) विपा. ४।३००.

(५) व्रक. ३३ पुनः पाकेन ( पुनर्दाहेन ) द्विजाः ( द्विजः ) ; कृर. ३९.

(६) व्रक. २६ ( शिष्टाः खलु विगतमत्सरा निर ) एतावदेव, बौधायनो यमश्च ; कृर. ३२ (खलु०) बौधायनो यमश्च.

[१]धर्मेणाधिगतो येषां वेदः सपरिबृंहणः ।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥

[२]छन्दोगो बह्वृचोऽध्वर्युरथर्वा धर्मपाठकः ।
तथैवाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ॥
वेदपूता व्रते म्लाना ब्राह्मणाः पङ्क्तिपावनाः ।
यद्ब्रूयुस्ते महात्मानस्तत्प्रमाणं न संशयः ॥

[३]एको द्वौ वा त्रयो वाऽपि यद्ब्रूयुर्धर्मपाठकाः ।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥

[४]अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥

[५]यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा तान् वक्तॄननुगच्छति ॥

[६]वेदाः प्रमाणं स्मृतयः प्रमाणं
धर्मार्थयुक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत्प्रमाणं
कस्तस्य कुर्याद्वचनं प्रमाणम् ॥

(१) (वेदाः प्रमाणम्) इति समुदायस्य प्रमाकरत्वविवक्षया एकवचनम् । धर्मार्थयुक्तं वचनम् इति च सद्वचनाभिप्रायम् । यस्य प्रमाणं न भवेत्प्रमाणम् इति । अनन्तरोक्तं वेदादिप्रमाणं यो न मन्यत इत्यर्थः ।
† व्रक. ३४

(२) यस्य श्रुत्यादिकं प्रमाणं न भवति तस्य वाक्यं न प्रमाणम् । अतः परित्याज्यमित्यभिप्रायः । स्मृच. १।८

† कृर. व्रकवत् ।

(१) व्रक. २६ बौधायनो यमश्च ; कृर. ३३ बौधायनो यमश्च.

(२) व्रक. ३६.

(३) विद्व. १।९ ( नेतरे तु सहस्रशः ) एतावदेव (=) ; ममु. १२।११३ ; वीमि. १।९.

(४) व्रक. ४० मनुवसिष्ठयमबौधायनपैठीनसयः .

(५) व्रक. ४० मनुवसिष्ठयमबौधायनाः .

(६) व्रक. ३४ ; स्मृच. १।८ कस्तस्य (न तस्य) ; चव्र. २४ ; कृर. ४० ; मुक्ता. २ हारीतः ; बाल. १।५३ पृ. १९७ धर्मार्थयुक्तं वचनं ( धर्मे पुराणानि तथा ) शेषं स्मृचवत्, धर्मप्रदीपे.

[1]न यस्य वेदा न च धर्मशास्त्रं
न वृद्धवाक्यं हि भवेत्प्रमाणम् ।
सोऽधर्मकृद्दृष्टिहतो दुरात्मा
नाऽऽत्माऽपि तस्येह भवेत्प्रमाणम् ॥

## बृहद्यमः

प्रायश्चित्तं धर्मशास्त्रोक्तमेव

[2]अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।
प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदं व्रजेत् ॥

## मरीचिः

वेदार्थसंशये स्मृतिप्रामाण्यम्

[3]दुर्बोधा वैदिकाः शब्दाः प्रकीर्णत्वाच्च
येऽखि( ? ये खि )लाः ।
तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः ॥

ननु यदि स्मृतिशास्त्रस्य वेदप्रतिपादितार्थपरत्वेन वेदमूलत्वं तर्हि तेनैवालम्, किं धर्मशास्त्रेण ? इत्याशङ्क्याऽऽह मरीचिः— दुर्बोधा इति । स्मृच. १।३–४

## शातातपः

परिषदुक्तं प्रायश्चित्तम् अनुष्ठेयम्

[4]दश पञ्चाष्ट चतुर उपवेश्य द्विजाञ् शुभान् ।
तेषामनुज्ञया सर्वं प्रायश्चित्तमुपक्रमेत् ॥

## लघुशातातपः

धर्मे वेदशास्त्रज्ञः प्रमाणम्

[5]धर्मशास्त्रं समारूढो वेदखड्गधरो द्विजः ।
विद्वान् स्वयं तु यद्ब्रूयात्स धर्मः परमः स्मृतः ॥

(१) बक. ३४ ; बव. २५ वाक्यं हि ( वाक्य च ) सोऽधर्मकृद्दृष्टिहतो ( स धर्मकार्यान्निहतो ) नाऽऽत्माऽपि ( न सोऽपि ) ; कुर. ४० सोऽधर्मकृद्दृष्टिहतो ( स धर्मकार्यान्निहतो) ; मुक्ता. २ हारीतः .

(२) बृयस्मृ. ४।२९.

(३) स्मृच. १।४ ; मुक्ता. २ तृतीयचरणे ( तत्रैत एव दृष्टार्थाः ).

(४) शास्मृ. १।२५. (५) लशास्मृ. १७१.

## पराशरः

मन्वादिप्रणीतस्मृतीनां प्रामाण्यम् , ( टीकायां )
न शाक्यादिप्रणीतस्मृतीनाम्

[1]धर्मं कथय मे तात अनुग्राह्यो ह्यहं तव ।
श्रुता मे मानवा धर्मा वासिष्ठाः
काश्यपास्तथा ॥
[2]गार्गीया गौतमीयाश्च तथैवौशनसाः स्मृताः ।
अत्रेर्विष्णोश्च संवर्ताद्दक्षादङ्गिरसस्तथा ॥
[3]शातातपाच्च हारीताद्याज्ञवल्क्यात्तथैव च ।
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य
च ॥
[4]धर्मराजकृताश्चैव बृहस्पतिकृताश्च ये ।
कात्यायनकृताश्चैव तथा प्राचेतसान्मुनेः ॥

'पराशरस्मृतिः पूर्वैर्न व्याख्याता निबन्धृभिः । मयाऽतो माधवार्येण तद्व्याख्यायां प्रयत्यते ॥ ' । ननु नेयं स्मृतिर्व्याख्यानमर्हति, तत्प्रामाण्यस्य दुर्निरूपत्वात् । यत्तु वेदप्रामाण्यकारणं जैमिनिना सूत्रितम्— ' तत् प्रमाणं बादरायणस्यान्यानपेक्षत्वात् ' ( जैसू. १।१।५ ) इति, न तत् पौरुषेयेषु मूलप्रमाणसापेक्षेषु ग्रन्थेषु योजयितुं शक्यते । तर्ह्यस्तु मूलप्रमाणमुपजीव्य प्रामाण्यम् । तन्न, मूलस्य दुर्लभत्वात् । न तावत् प्रत्यक्षं मूलम् , धर्मस्यातीन्द्रियत्वात् । नाप्यनुमानम् , तस्य प्रत्यक्षसापेक्षत्वात् । नापि पुरुषान्तरवाक्यम् ,' विप्रलम्भकस्य पुंसो यथादृष्टार्थवादित्वाभावात् , अविप्रलम्भकस्यापि संशयविपर्ययसंभवात् । नापि चोदना, तस्या अनुपलब्धेः । नो खलु स्मर्यमाणानां शौचाद्याचाराणां मूलभूतां कांचिच्चोदनां प्रत्यक्षत उपलभामहे । नाप्यनुमातुं शक्यते, शाक्यादिप्रणीतचैत्यवन्दनादिस्मृतिष्वतिप्रसङ्गात् । अथोच्येत— मन्वादिस्मृतीनां शाक्यादिस्मृतीनां चास्ति

(१) पस्मृ. १।१२ अनु (ह्यनु) ; पमा. १।७०.

(२) पस्मृ. १।१३ ; पमा. १।७१ गार्गी ( गार्गे ) तथैवौ ( तथा चौ ) स्मृताः ( श्रुताः ).

(३) पस्मृ. १।१४.

(४) पस्मृ. १।१५ ; पमा. १।७२.

महद्वैषम्यम्, प्रत्यक्षवेदेनैव साक्षान्मन्वादिस्मृतीनां प्रामाण्याङ्गीकारात्। 'यद्वै किं च मनुरवदत्त-द्भेषजम्' इति ह्याम्नायते। न त्वेवं शाक्यादि-स्मृत्यनुग्राहकं किंचिद्वैदिकं वचोऽस्ति। अतो न उक्तातिप्रसङ्गः इति। तन्न, 'यद्वै किं च' इत्यस्यार्थ-वादत्वेन स्वार्थे तात्पर्याभावात्, 'मानवी ऋचौ धाय्ये कुर्यात्' इति विधानात् तद्विधिस्तावकत्वेन 'यद्वै किं च' इत्यादेः पठितत्वात्। तस्य विवेरयमर्थः– इष्टि-विकृतिरूपे सोमारौद्रे चरावतिदेशतः प्राप्तासु सामिधेनीषु मध्ये प्रक्षेप्तव्यौ धाय्यासंज्ञकौ यौ द्वौ मन्त्रौ तौ मानवौ कर्तव्यौ इति। तत्र मानववचनमुक्तार्थवादेन शस्यते। अतो न स्मृतिप्रामाण्यं वेदेनोक्तम् इति शाक्यादिस्मृति-वदप्रमाणभूता एव मन्वादिस्मृतयः। तथा चोक्तम्– 'प्रायेणानृतवादित्वात् पुंसां भ्रान्त्यादिसंभवात्। चोदना-नुपलब्धेश्च श्रद्धामात्रात् प्रमाणता ॥' इति। अस्तु वा कथंचित् मनुस्मृतेः प्रामाण्यम्, तथाऽपि प्रकृतायाः पराशरस्मृतेः किमायातम्? न हि मनोरिव पराशरस्य महिमानं क्वचिद्वेदः प्रख्यापयति। तस्मात् तदीयस्मृते-र्दुर्निरूपं प्रामाण्यम्। अत्रोच्यते– प्रामाण्यस्य स्वत-स्त्वात् अप्रामाण्ये कारणाभावाच्च स्मृतयः प्रमाणम्। यत्तु अप्रामाण्यसाधकमनृतवादित्वादि हेतुत्रयमुपन्यस्तं तदसिद्धम्, आजन्मसिद्धेषु मनुपराशरादिषु अनृत-वदनभ्रान्त्योरत्यन्तानाशङ्कित्वेन हेत्वोः स्वरूपासिद्धेः। न वा आजन्मसिद्धौ विप्रदितव्यम्, पराशरादिसद्भाव-बोधिनामेव मन्त्रार्थवादेतिहासपुराणानां तदीयसिद्धिबोध-कत्वात्। मन्त्राद्यप्रामाण्ये च पराशराद्यसद्भावेनाऽऽ-श्रयासिद्धिः केन वार्यते? मानान्तराविरुद्धानामननुवा-दिनां मन्त्रादीनां स्वार्थे प्रामाण्यमुत्तरमीमांसायां देवता-धिकरणे व्यवस्थापितम्। अर्थवादाधिकरणे तु स्वार्थे प्रामाण्यनिराकरणं विरुद्धानुवादयोः सावकाशम्। अतः 'यद्वै किं च' इत्यर्थवादस्य विधिस्तावकस्य स्वार्थेऽपि तात्पर्यमस्ति इति न शाक्यादिस्मृतिवत् इति युक्तम्। एतदेवाभिप्रेत्य चतुर्विंशतिमते शाक्यादिवाक्यानामनाद-रणीयत्वमुक्तम्– 'अर्हच्चार्वाकवाक्यानि बौद्धादि-पठितानि तु। विप्रलम्भकवाक्यानि तानि सर्वाणि वर्जयेत् ॥' इति। न च पराशरमहिम्नोऽश्रौतत्वम्, 'स होवाच व्यासः पाराशर्यः' इति श्रुतौ पराशरपुत्रत्व-मुपजीव्य व्यासस्य स्तुतत्वात्। यदा सर्वसंप्रतिपन्नमहिम्नो वेदव्यासस्यापि स्तुतये पराशरपुत्रत्वमुपजीव्यते, तदा किमु वक्तव्यमचिन्त्यमहिमा पराशरः? इति। किंच, वाजसनेयिशाखायां वंशब्राह्मणे वेदसंप्रदायप्रवर्तकगुरु-शिष्यपरम्परायां पराशरस्य पुत्रपौत्रौ श्रूयेते– 'घृतकौशिकः पाराशर्यायणात्, पाराशर्यायणः पाराशर्यात्, पाराशर्यो जातुकर्ण्यात्' (बृउ. ४।६।३) इति। तस्मात् पराशरोऽपि मनुसमान एव। एष न्यायो वसिष्ठात्रियाज्ञवल्क्यादिषु योजनीयः, तत्तद्विषयश्रुतीनामुपलम्भात्। 'ऋषयो वा इन्द्रं प्रत्यक्षम(? क्षं ना)पश्यन्तं (? श्यन्)... वसिष्ठः प्रत्यक्षमपश्यत्' (तैसं. ३।५।२।१), 'अत्रिरददा-दौर्वाय प्रजां पुत्रकामाय' (तैसं. ७।१।८।१), 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः' (बृउ. ४।५।१) इत्याद्याः श्रुतयः। न चैवं सति मन्वादिस्मृतौ कुतोऽनादरः? इति शङ्कनीयम्, मन्वादिस्मृतेर्मेधा-तिथ्यादिभिर्व्याख्यातत्वात्। या च मूलभूतचोदनानुप-लब्धिरुपन्यस्ता, साऽप्यसिद्धा, 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः' (तैआ. २।१०।१) इत्या-दीनां स्मार्तधर्ममूलभूतचोदनानामुपलम्भात्। सतति सतत-मित्यर्थः। यत्रापि शौचादौ चोदना नोपलभ्यते तत्रापि सा संभाव्यते। तथा चोक्तं भट्टाचार्यैः– 'वैदिकैः स्मर्यमाणत्वात् परिग्रहसमत्वतः। संभाव्यवेदमूलत्वात् स्मृतीनां मानतोचिता ॥' इति। मनुनाऽप्येतदेवोक्तम्– 'श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम्। तस्मात् प्रमाणमुभयं प्रमाणैः प्रापितं भुवि ॥ योऽव-मन्येत ते तूभे हेतुशास्त्राश्रयाद्द्विजः। स साधुभिर्बहिः कार्यो नास्तिको वेदनिन्दकः ॥' (मस्मृ. २।११) इति। आनुशासनिकेऽपि– 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः। द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः ॥'

इति। तस्मात् व्याख्यातुं योग्या पराशरस्मृतिरिति सिद्धम्। १।३–१३

पुत्रस्नेहादनुग्राह्योऽहम्। सर्वथाऽप्युपदेष्टव्य एव धर्मः। ननु— सन्ति बहवो धर्माः मन्वादिभिः प्रोक्ताः, तत्र को धर्मो भवता बुभुत्सितः? इत्याशङ्क्य बुभुत्सितं परिशेषयितुं बुद्धान् धर्मानुपन्यस्यति— श्रुता म इति।

मे श्रुताः मया श्रुताः इत्यर्थः, संबन्धसामान्यवाचिन्याः षष्ठ्याः कर्तृकृतिलक्षणे विशेषे पर्यवसानात्। अत्रेः इत्यादीनां पञ्चम्यन्तानां श्रुताः इत्यनेनानुषक्तेन संबन्धः। आपस्तम्बेन कृताः प्रोक्ताः इति यावत्। शङ्खस्य लिखितस्य च संबन्धिनो धर्माः। ताभ्यां प्रोक्तत्वं तत्संबन्धित्वम्। प्रचेता एव प्राचेतसः। वायसराक्षसादाविव स्वार्थे तद्धितः। अस्तु वा प्रचेतसः पुत्रः कश्चित् धर्मशास्त्रकारः। § पमा. १।७१–७२

ब्रह्मविष्णुमहेश्वरादयः अनादिपरम्पराप्राप्तधर्मोपदेशकाः प्रतिकल्पम्

**'कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः।**
**श्रुतिस्मृतिसदाचारनिर्णेतारश्च सर्वदा ॥**

(१) धर्मे श्रद्धातिशयाय धर्मस्य प्रवाहरूपेण अनादितां वक्तुं स्मृतिशास्त्रस्य कर्तॄणां च सृष्टिसंहारौ संक्षिप्याऽऽह— कल्प इति। कल्प्यते जगदस्मिन् काले इति सृष्ट्यादिमारभ्य प्रलयोपक्रमपर्यन्तो जगदवच्छिन्नः कालः कल्पः। स च द्विविधः— महाकल्पोऽवान्तरश्च। मूलप्रकृतेर्यः सर्गः तमारभ्य चतुर्मुखायुःपरिमितो महाकल्पः, चतुर्मुखस्य दिनमात्रमवान्तरकल्पः। तदुक्तं कूर्मपुराणे— 'ब्राह्ममेकमहः कल्पस्तावती रात्रिरुच्यते। चतुर्युगसहस्रं तत्कल्पमाहुर्मनीषिणः ॥' इति। सोऽयमवान्तरः कल्पः। महाकल्पस्तु ब्राह्मेण मानेन शतसंवत्सरपरिमितः इति पुराणादिषु प्रसिद्धम्। कल्पे कल्पे इति वीप्सया द्विविधानामपि कल्पानामसंख्यत्वं विवक्षितम्। तथा च लिङ्गपुराणे— 'एवं कल्पास्तु संख्याता ब्रह्मणोऽव्यक्तजन्मनः। कोटिकोटिसहस्राणि कल्पानां मुनिसत्तमाः ॥' इति। तत्र द्वयोर्द्वयोः कल्पयोर्मध्ये क्षयो भवति। ....

अथ श्रुत्यनुसारेणोत्पत्तिरभिधीयते। ...... श्रुतिश्चैवमाह— 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः' (तैउ. २।१) इति। तत्र पुरुषशब्देन शिरःपाण्यादियुक्तो देहोऽभिधीयते। स च देहो ब्रह्मादिः स्तम्बान्तो बहुप्रकारः। तत्र ब्रह्मदेहस्य निरतिशयपुण्यपुञ्जफलरूपत्वात् इतरसकलदेहकारणत्वेनाऽऽदित्वम्। तथा च श्रुतिस्मृती— 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इति श्रुतिः, 'ब्रह्मा देवानां प्रथमः संबभूव। विश्वस्य कर्ता भुवनस्य गोप्ता' इति च, 'स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥' इति स्मृतिः। एतेन विष्णुमहेश्वरदेहयोरप्यादित्वं व्याख्यातम्, एकेनैव चेतनेन गुणत्रयव्यवस्थायै देहत्रयस्य स्वीकृतत्वात्। तथा च मैत्रेयशाखायां श्रूयते— 'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति। अथ ह यो वै खलु वावास्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा। यथा (? अथ) ह (? ह यो वै) खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रः। यथा(? अथ) ह (? ह यो वै) खलु वावास्य सात्त्विकोंऽशोऽसौ स योऽयं विष्णुः। स वा एष एकस्त्रिधा भूतः' (मैत्रायण्युपनिषत् ४।५) इति। तथोत्तरतापनीये मायां प्रकृत्य श्रूयते— 'सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाऽङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र' (नृसिंहोत्तरतापिन्युपनिषत् ९) इति। स्कन्दपुराणेऽपि— 'एक एव शिवः साक्षात्सृष्टिस्थित्यन्तसिद्धये। ब्रह्मविष्णुशिवाख्याभिः कलनाभिर्विजृम्भते ॥' इति। तदेवं ब्रह्मविष्णुमहेश्वराः तस्मिन् महाकल्पावसाने क्षीयन्ते पुनस्तत्कल्पादावुत्पद्यन्ते इति सिद्धम्। अक्षरार्थस्तु क्षयसहिता उत्पत्तिः, तयोपलक्षिता भवन्ति इति। एवं तत्त-

§ विम. पमागतम्।

(१) पस्मृ. १।२० ; मुक्ता. ८ सदा (समा); आन. १३ मुक्तावत्; सस्मृ. १ मुक्तावत्,

दवान्तरकल्पानामवसाने प्रारम्भे च श्रुत्यादीनां निर्णेतारः क्षयोत्पत्तिभ्यामुपलक्ष्यन्ते । तत्र श्रुतिनिर्णेतारः– वेदविभागकारी व्यासः, तद्वेदशाखासंप्रदायप्रवर्तकाः कठकौथुमादयः, कल्पसूत्रकाराः बौधायनाश्वलायनापस्तम्बादयः, मीमांसासूत्रकृतो जैमिन्यादयश्च । स्मृतिनिर्णेतारः मन्वादयः प्रसिद्धाः । ...... सदाचारः होलाकोद्वृषभयज्ञाह्नीनेबुकादिः । तस्य निर्णेतारः तत्तत्कुलवृद्धाः । चकारः उक्तानुक्तसमुच्चयार्थः । उक्ता मन्वादयो ब्रह्मादयश्च स्मृतिशास्त्रकर्तारः । अनुक्तस्तु धर्मः । तस्यापि पूर्वकल्पान्ते क्षीणस्योत्तरकल्पादौ सृष्टिर्भवति । तथा च वाजसनेयब्राह्मणे सृष्टिप्रकरणे प्रजापतिमनुष्यादिपिपीलिकान्तप्राणिनां चतुर्वर्णाभिमानिदेवतानां च सृष्टिमाम्नाय, अत्युग्रमपि क्षत्रियादिकं नियन्तुं समर्थस्य धर्मस्य सृष्टिराम्नायते– 'स नैव व्यभवत् । तत् श्रेयोरूपमत्यसृजत धर्मम् । तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः । तस्मात् परं नास्ति' ( बृउ. १।४।१४ ) इति । अस्यायमर्थः– स प्रजापतिमन्वादिरूपधारी जगत्स्रष्टा परमेश्वरः प्रजाः सृष्ट्वाऽपि तन्नियामकाभावात् कृतकृत्यतारूपं विभवं नैव प्राप्तवान्, ततो विचार्य नियामकत्वेन श्रेष्ठं धर्मम् अतियत्नेन असृजत् इति । अहो, महदिदं धर्मस्य सामर्थ्यम्, यत् क्षत्रियादिरुग्रो मारणे समर्थोऽपि धर्माद्भीतः करप्रदानाद्यनुपयोगिनं विप्रादिकं न मारयति, प्रत्युत तस्मै धनं ददाति, भटाश्चातिशूराः धनुःखड्गादिधारिणो लक्षसंख्याकाः एकेन निरायुधेन रुग्णेन स्वामिना अधिक्षिप्यमाणास्ताड्यमानाः सन्तोऽपि स्वामिद्रोहाद्बिभ्यति । ततो धर्मादप्युत्कृष्टं न किंचिन्नियामकमस्तीति । प्रलयकाले धर्मस्यापि संहारे भाविसृष्टेर्धर्माधर्मकार्याया असंभवः इति चेत्, न, पूर्वकल्पानुष्ठानसंचितस्य फलबीजस्यापूर्वस्य संहारानङ्गीकारात् । द्रव्यगुणक्रियारूप एव धर्मः संह्रियते पुनरुत्पद्यते च सर्वदा इति । अनेन सृष्टिसंहारप्रवाहस्यानादितामनन्ततां च दर्शयति ।

$ पमा. १।८४–१०१

( २ ) कल्पे कल्पे प्रतिकल्पं क्षयोत्पत्त्या पूर्वकल्पान्ते क्षय उत्तरकल्पादौ उत्पत्तिरिति क्षयपूर्विका उत्पत्तिः क्षयोत्पत्तिः । क्षयस्य पूर्वनिर्देशश्च संसारानादित्वसूचनाय, प्रेत्यभावत्वादुत्पत्तेः । नित्यनैमित्तिकप्राकृतिकात्यन्तिकचतुर्विधेषु क्षयेषु नैमित्तिकप्राकृतिकाभ्यां क्षयाभ्यामुत्पत्त्या पुनः प्रादुर्भावेन च ब्रह्मविष्णुमहेश्वराः श्रुतिस्मृतिसदाचारास्तन्निर्णेतारः, चकाराद्धर्मोऽपि सर्वदा अनाद्यन्ते संसारे उपलक्ष्यते( ? न्ते ) । तत्र नैमित्तिकः क्षयोऽवान्तरकल्पान्ते ब्रह्मदिवसान्तरूपे ब्रह्मणि सुप्ते चतुर्विधभूतग्रामस्य ध्रुवलोकपर्यन्तस्य नाश उच्यते । श्रुतिर्नाम वेदः, स्मृतिर्धर्मशास्त्रम् । ... स्मृतिनिर्णेतारो मन्वाद्या अष्टादश मूलस्मृतिकर्तारो जाबाल्यादयोऽष्टादशोपस्मृतिकर्तारो वसिष्ठादयश्चैकविंशतिरिति । तदुक्तम्– 'मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः । योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥ संवर्तोशनसौ शङ्खलिखितावत्रिरेव वा । विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥ एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः । जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ॥ व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा । व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः । बौधायनश्च काणादो विश्वामित्रस्तथैव च । पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ॥ वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः । ¶ विष्णुः

---

$ मुक्ता. पमागतम् ।

¶ मन्वाद्यादिगणत्रित्वनान्तरीयकतया गणभेदेन पूर्वोक्तमूलस्मृतिकर्तृत्वाद्युपाधिभेदस्यासंकीर्णस्यावश्यकल्पनीयत्वात् प्रतिगणमृषीणां संख्यातत्वेनाऽऽहत्य सप्तपञ्चाशत्त्वसंख्यायाः संपादनीयत्वाच्च उपाधिसंकरसंख्याबाधरूपदोषद्वयापादकं मन्वादिगणपरिगणितस्य विष्णोर्वसिष्ठादिगणे पुनरिदं परिगणनं प्रामादिकम् । ग्रन्थान्तरेऽत्र विष्णुस्थाने बभ्रुः पठ्यते । बभ्रुं पठितवतः प्रयोगपारिजातादेतानि वचनानि संगृह्णानेऽपि परिभाषाप्रकाशेऽप्यत्र विष्णुरेव पठितः । वीरमित्रोदयायामपि सर्वसंमतौ वसिष्ठगणीयौ सुमन्तुपितामहौ जाबाल्यादिगणेऽपि शंतनुजनकस्थाने पठितौ । तत्राप्युक्तं दोषद्वयमापतति । अत्र गणत्रयश्लोका एकेनैव प्रघट्टकेन गृहीता अपि अस्मदृषिनिर्णयपद्धतिमनुसृत्य मन्वादिगणश्लोका

कार्ष्ण्यां( १ र्ष्णा )जिनिः सत्यव्रतो गार्ग्यश्च देवलः ॥ जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः । आत्रेयश्च गवेयश्च मरीचिर्वत्स एव वा ॥ पारस्करश्च शृङ्गो वै वैजवापस्तथैव च । इत्येते स्मृतिकर्तारो( १ र ) एकविंशतिरीरिताः ॥ ' इति ।... † चकारात्पुराणोपपुराणप्रणेतारो व्यासादयोऽपि ।... तदेवं प्रतिकल्पं मन्वादीनां धर्मस्य च जायमानत्वान्नेदमपूर्वं ममैव प्रवचनमिति तात्पर्यम् । ¶ विम.

( ३ ) ब्रह्मविष्णुमहेश्वराः सृष्टिस्थितिसंहारोपाधिकाः । ...तस्माद्यथा मन्वादीनां शास्त्रं तदेव प्रमाणमिति दर्शितम् । तथा च मनुः– ' श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् । तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि ॥ ' इति । ¶ आन. १३

वेदः अपौरुषेयः , ब्रह्ममन्वादयः वेदस्मर्तारः

**'न कश्चिद्वेदकर्ताऽस्ति वेदं स्मृत्वा चतुर्मुखः ।**
**तथैव धर्मान् स्मरति मनुः कल्पान्तरेऽन्तरे ॥**

यदर्थं सृष्टिसंहारौ संक्षिप्योक्तौ तत् प्रवाहनित्यत्वमिदानीमाह– न कश्चिदिति । स्मृतिनिर्णेतॄणां मन्वादीनां स्मृतिकर्तृत्वदर्शनात् तथैव श्रुतिनिर्णेतॄणामपि वेदकर्तृत्वमाशङ्क्य निराचष्टे– न कश्चिदिति । न तावत् व्यासो वेदकर्ता, तस्य विभागमात्रकारित्वात् । नापि चतुर्मुखः, ईश्वरेण चतुर्मुखाय वेदप्रदानात् । नापि जगदीश्वरः, तस्य सिद्धवेदाभिव्यञ्जकत्वात् । तदुक्तं मत्स्यपुराणे– ' अस्य वेदस्य सर्वशः कल्पादौ परमेश्वरः । व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः ॥ ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः । दत्तवानखिलान् वेदान् विप्रा आत्मनि संस्थितान् ॥ ब्रह्मणा चोदितो विष्णुर्व्यासरूपी द्विजोत्तमाः । हिताय सर्वभूतानां वेदभेदान् करोति सः ॥ ' इति । कठादीनां तु तत्कर्तृत्वं दूरापास्तम् । उपपत्तयस्तु वेदापौरुषेयत्वाधिकरणे द्रष्टव्याः । ननु– शास्त्रयोनित्वाधिकरणे ब्रह्मणः सर्वज्ञत्व–सर्वशक्तित्वदार्ढ्याय वेदकर्तृत्वं व्यासेन सूत्रितम् । ननु– तेनैव देवताधिकरणे वेदनित्यत्वमपि ' अत एव च नित्यत्वम्' ( ब्रसू. १।३।२९ ) इति सूत्रेण प्रदर्शितम् । एवं तर्हि विरोधः परिहर्तव्यः । उच्यते– वर्णानां पदार्थतत्संबन्धानां वाक्यानां चानित्यत्वं वैशेषिककाणादादयो वर्णयन्ति, तान् प्रति मीमांसकाः प्रथमपादे कालाकाशादीनामिव वर्णानां नित्यत्वं वर्णयामासुः । ' व्यवहारे भट्टनयः ' इत्यभ्युपगमं सूचयितुं देवताधिकरणे तदेव व्यावहारिकं नित्यत्वं सूचितम् । अतः कालिदासादिग्रन्थेष्विव वेदेष्वर्थावबोधपूर्विकायाः पदविशेषावापोद्वापाभ्यां प्रवृत्तायाः वाक्यरचनायाः अभावादपौरुषेयत्वं युक्तम् । ब्रह्मविवर्तत्वं वियदादेरिव वेदस्याप्यस्ति इति मत्वा शास्त्रयोनित्वाधिकरणे वेदकर्तृत्वं ब्रह्मणो दर्शितम् । अत एव भट्टपादाः सत्यपि पुरुषसंबन्धे स्वातन्त्र्यं निवारयामासुः– ' यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता । ' इति । तस्मात् ' स्वतन्त्रः कर्ता ' ( पासू. १।४।५४ ) इत्यनेन लक्षणेन लक्षितः कर्ता न कोऽपि वेदस्यास्ति । चकारः तुशब्दार्थे वर्तमानो वैलक्षण्यमाह । सन्ति हि बहवश्चतुर्मुखमनुप्रभृतयः स्मृतिकर्तारः, वेदकर्ता न कोऽपीति वैलक्षण्यम् । ' वेदं स्मृत्वा ' इत्यत्र वाक्ये अनुषङ्गन्यायेन द्वितीयार्धगतं †पदत्रयमन्वेतव्यम् । अनुषङ्गन्यायश्च द्वितीयाध्यायप्रथम-

---

अनिर्दिष्टकर्तृकत्वेन, जाबाल्यादिगण-वसिष्ठादिगणश्लोकाश्चाऽऽङ्गिरसत्वेनास्माभिः संगृहीताः ।

† चकारान्तराभावात् येन चकारेण पूर्वं धर्मः संगृहीतस्तेनैव पुराणादिप्रणेतॄणामपि संग्राह्यत्वेन पूर्वं धर्मस्य संग्रहे उच्यमाने तत्रैव चकारसंग्राह्यत्वेन धर्मेण सह पुराणादिप्रणेतॄणां समुच्चयो वक्तुमुचितः, एकं संग्राह्यमुक्त्वा महता ग्रन्थव्यवधानेन संग्राह्यान्तरोक्तौ सकलसंग्राह्यबोधे क्लिष्टतापातात् ।

¶ शेषं पमागतम् ।

(१) पस्मृ. १।२१; पमा. १।१०२ कर्ताऽस्ति ( कर्ता च ) ; मुक्ता. ८ कर्ताऽस्ति ( कर्ता च ) स्मृत्वा ( श्रुत्वा ) रेऽन्तरे ( रे तथा ) ; आन. ११ रेऽन्तरे ( रे प्रभुः ) शेषं मुक्तावत् ; सस्मृ. १ रेऽन्तरे ( रान्तरे ) शेषं मुक्तावत् .

† ' अन्वेतव्यम् ' इति पदमन्तर्भावितण्यर्थं प्राह्यम् ,

पादे वर्णितः । तथाहि— ज्योतिष्टोमप्रक्रियायामुपसदामुपहोमेषु त्रयो मन्त्राः श्रूयन्ते— 'या तेऽग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत् त्वेषं वचो अपावधीत् स्वाहा ' इति । तत्र 'अयाशया' 'रजाशया ' 'हराशया ' इति पदभेदान्मन्त्रभेदः । तत्र प्रथममन्त्रस्य 'तनूः ' इत्यादिवाक्यशेषापेक्षाऽस्ति, चरममन्त्रः 'या तेऽग्ने ' इत्यमुं वाक्यादिमपेक्षते, मध्यमन्त्रस्त्वाद्यन्तावपेक्षते । तत्रैवं संशयः— किमपेक्षितार्थपरिपूरणाय लौकिकः कियानपि पदसंदर्भोऽध्याहरणीयः , किं वा श्रूयमाणं पदजातमनुषञ्जनीयम् इति । वाक्यादेः प्रथममन्त्रेणैव संबन्धात् वाक्यशेषस्य चरममन्त्रेणैव संबन्धात् लौकिकाध्याहारः इति पूर्वः पक्षः । वैदिकाकाङ्क्षायाः सति संभवे वैदिकशब्दैरेव पूरणीयत्वात् अन्यमन्त्रसंबन्धानामपि पदानां बुद्धिस्थत्वेनाध्याहार्येभ्यः पदेभ्यः प्रत्यासन्नत्वाच्च अनुषङ्ग एव कर्तव्यः , नाध्याहारः इति सिद्धान्तः । एवं च सति प्रकृतेऽपि 'कल्पान्तरे धर्मान् स्मरति ' इति पदत्रयं पूर्वार्धेऽनुषञ्जनीयम् । चतुर्मुखस्तस्मिंस्तस्मिन् महाकल्पे परमेश्वरेण दत्तं वेदं स्मृत्वा तत्र विप्रकीर्णान् वर्णाश्रमधर्मान् संकलय्य स्मृतिग्रन्थरूपेण उपनिबध्नाति । तथा च पितामहवचनानि तत्र तत्र निबन्धनकारैरुदाह्रियन्ते । चतुर्मुखस्य स्मृतिशास्त्रकर्तृत्वं मनुनाऽप्युक्तम्— 'इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः । विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन् ॥' ( मस्मृ. १।५८ ) इति । यथा चतुर्मुखः तथैव च स्वायंभुवो मनुः तस्मिन् तस्मिन्नवान्तरकल्पे वेदोक्तधर्मान् प्रशास्ति । मनुग्रहणेन अत्रियाज्ञवल्क्यविष्ण्वादयः उपलक्ष्यन्ते । तदेवं प्रतिमहाकल्पं येन येन ( ? तेन तेन) चतुर्मुखेन प्रत्यवान्तरकल्पं च तैस्तैर्मन्वादिभिः स्मृतिप्रणयनात् धर्मादेः प्रवाहनित्यत्वं सिद्धम् । एतदेवाभिप्रेत्याऽऽश्वमेधिके पर्वणि( ? ) पठ्यते— 'युगेष्वावर्तमानेषु धर्मोऽप्यावर्तते पुनः । धर्मेष्वावर्तमानेषु लोकोऽप्यावर्तते पुनः ॥ ' ( भा. ३। १४८।३५ ) इति । युगभेदेन धर्मवैलक्षण्यमभ्युपेत्य 'धर्मान् ' इति बहुवचननिर्देशः ।

† पमा. १।१०२–१०७

पराशरस्मृतिप्रशंसा

**'पराशरमतं पुण्यं पवित्रं पापनाशनम् ।**
**चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥**

वक्ष्यमाणधर्मजातस्य परमपुरुषार्थहेतुतां कैमुतिकन्यायेन अभिधातुं ग्रन्थपाठतदर्थज्ञाने प्रशंसति— पराशरमतमिति । पराशरेण प्रोक्तं ग्रन्थजातं पराशरमतम् , तच्च पाठमात्रेण पुण्यप्रदम् । पुण्यं च द्विविधम्— इष्टप्रापकमनिष्टनिवर्तकं च । तदुभयं पवित्रपापनाशनशब्दाभ्यां विवक्ष्यते । तदेव ग्रन्थजातं चिन्तितम् अर्थतो विचारितं सत् पूर्ववत् पुण्यप्रदं भवति । अर्थविचारस्य प्रयोजनं द्वेधा— स्वानुष्ठानं परोपदेशश्च । तदुभयं ब्राह्मणेत्यादिपदद्वयेनोच्यते । ब्राह्मणस्यार्थः ब्राह्मण्यनिमित्तं स्वधर्मानुष्ठानमिति यावत् । धर्मसंस्थापनं परेषां धर्मोपदेशेनानुष्ठापनम् । यदा ग्रन्थपाठतदर्थज्ञानयोरपीदृशो महिमा तदा किमु वक्तव्यम् अनुष्ठानं पुरुषार्थहेतुः इति ? युक्तं चैतत् , पराशरस्य पुलस्त्यवसिष्ठप्रसादलब्धवरेण सर्वशास्त्रहृदयाभिज्ञत्वात् । तथा च विष्णुपुराणम्— 'वैरे महति मद्वाक्याद्गुरोरस्याऽऽश्रिता क्षमा । त्वया तस्मात्समस्तानि भवान् शास्त्राणि वेत्स्यति ॥ संततेर्न समुच्छेदः क्रोधेनापि यतः कृतः । त्वया तस्मान्महाभाग ददाम्यन्यमहं वरम् ॥ पुराणसंहिताकर्ता भवान् वत्स भविष्यति । देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान् ॥ प्रवृत्ते च निवृत्ते च कर्मण्यस्तमला मतिः । मत्प्रसादादसंदिग्धा तव वत्स भविष्यति ॥' इति । ¶ पमा. १।१३१–१३२

---

अन्यथा अनुपूर्वकस्येणोऽकर्मकत्वेन तव्यस्य भावार्थकत्वात् 'पदत्रयेण ' इति कर्तरि तृतीयाया भवितुं युक्तत्वात् ।

† मुक्ता. , विम. , आन. पमागतम् ।

¶ विम. पमागतम् ।

(१) पस्मृ. १।३६.

पापनिवेदनं धर्मशास्त्रज्ञपरिषदि

**'वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम् ।**
**स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत् ॥**

( १ ) 'प्रायश्चित्तं कथं भवेत्' इति सेतिकर्तव्यताकस्य प्रायश्चित्तस्य पृष्टत्वात् परिषदुपसत्तिरूपामाद्यामितिकर्तव्यतामाह– 'वेदवेदाङ्गविदुषां... ॥' इति । नामधारकविप्राणां परिषत्त्वं नास्तीति वक्ष्यमाणमर्थं हृदि निधाय तद्व्यावृत्तिसमर्थैर्विशेषणैः परिषद्योग्या ब्राह्मणा विशेष्यन्ते । यद्यपि मन्वादिधर्मशास्त्रज्ञानमात्रेण ब्राह्मणाः प्रायश्चित्तं विधातुं समर्थाः, तथाऽपि 'शुनाऽऽलीढं हविर्यथा' इति न्यायेन अनधीतवेदैः स्वकर्मानुष्ठानरहितैर्निर्दिष्टं प्रायश्चित्तं न पापापनोदनक्षमम् । तस्मात्, स्वकर्मनिष्ठान् वेदपारंगतानुपेत्य तेषामग्रे विकीर्षितप्रायश्चित्तनिमित्तं पापमशेषेण निवेदयेत् । सेयं परिषदुपसत्तिः । पमा. २।१५७

( २ ) बहुवचनं तु तत्तन्न्यायोपदिष्टसंख्यासंग्रहाय । तथा च स्मृत्यन्तरम्– 'पातके तु शतं पर्षत्सहस्रं महदादिषु । उपपापेषु पञ्चाशत् स्वल्पे स्वल्पा तथा भवेत् ॥' इति । ‡ विम.

अधार्मिकजातिमात्रोपजीविब्राह्मणस्य धर्मनिर्णयपरिषत्सदस्यता न

**सावित्र्याश्चापि गायत्र्याः संध्योपास्त्यग्निकार्ययोः ।**
**अज्ञानात्कृषिकर्तारो ब्राह्मणा नामधारकाः ॥**

( १ ) यथोक्तविशेषणरहितानां परिषत्त्वं निषेद्धुं तेषां स्वरूपमाह– सावित्र्या इति । 'तत्सवितुर्वरेण्यम्' इति सवितृप्रतिपादकत्वात् सावित्री । णिकारयकारयोर्विश्लेषेण चतुर्विंशत्यक्षरत्वाद्गायत्री, 'चतुर्विंशत्यक्षरा गायत्री' इति श्रुतेः । सावित्र्यादीनामज्ञानात् न मुख्या ब्राह्मणाः । ब्रह्म वेदः । तमधीत्यार्थं चावगत्य येऽनुतिष्ठन्ति मुख्यास्ते ब्राह्मणाः । तदाहाङ्गिराः– 'जन्मशारीरविद्याभिराचारेण श्रुतेन च । धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥' इति । ये तु सावित्रीं सम्यक् न जानन्ति, दूरे तदनुष्ठानम्, ते विशिष्टमातापितृजन्या अपि ब्राह्मणनाममात्रं धारयन्ति, न तु यथोक्तब्राह्मणशब्दार्थत्वं तेषु विद्यते । अत एव याजनाध्यापनादिजीवनहेत्वसंभवाज्जीवनाय कृषिं कुर्वन्ति । तेषु ब्राह्मणशब्दार्थत्वाभावं व्यास आह– 'ब्रह्मबीजसमुत्पन्नो ब्रह्मसंस्कारवर्जितः । जातिमात्रोपजीवी यः सोऽब्राह्मण इति स्मृतः ॥' ( व्यास्मृ. ४।४३ ) इति । नामधारकवत् ब्राह्मणब्रुवस्यापि न मुख्यं ब्राह्मण्यम् । ब्राह्मणब्रुवश्च चतुर्विंशतिमते दर्शितः– 'गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः । नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥' इति । पमा. २।१५८–१५९

( २ ) 'तत्सवितुर्वृणीमहे' इति सावित्री, 'तत्सवितुर्वरेण्यम्' इति गायत्री । यद्यपि सवितृप्रतिपादकत्वाद्गायत्र्या एव सावित्रीत्वं प्रसिद्धम्, तथाऽप्यत्र भेदेनोपन्यासात्पुनरुपनयने उद्देश्यत्वाच्चोदाहृतैव सावित्रीति । संध्योपास्तिः संध्यावन्दनम् । अग्निकार्ये समिदाधानम् । $ विम.

**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥**

( १ ) अमुख्यब्राह्मणानां वृद्धव्यवहारदर्शनेन प्रायश्चित्तविशेषपरिज्ञानेऽपि परिषत्त्वयोग्यत्वं नास्तीत्याह– अव्रतानामिति । सौम्यप्राजापत्यादिव्रतहीना अव्रताः । अनधीतवेदा अमन्त्राः । ननु– अध्यात्मविद्यायुक्तस्यैकस्यैव परिषत्त्वमस्ति, 'एको वाऽध्यात्मवित्तमः' (यास्मृ. १।९) इति स्मरणात् । अध्यात्मविद्यारहितस्य त्वेकस्य परिषत्त्वाभावेऽपि चतुर्णां परिषत्त्वं स्मर्यते– 'चत्वारो वेदधर्मज्ञाः परिषत्' ( यास्मृ. १।९ ) इति । अनयैव दिशाऽध्ययनादिरहितानां पञ्चषाणां परिषत्त्वाभावेऽपि शतसहस्रादिसंख्यायुक्तानां परिषत्त्वं भविष्यतीत्याशङ्क्य तन्निवारणाय 'सहस्रशः समेतानाम्' इत्युक्तम् । अध्ययनादिहीनवन्नास्तिकादीनामपि परिषत्त्वं नास्ति ।

‡ शेषं पमागतम् ।

(१) पस्मृ. ८।२–५.

$ शेषं पमागतम् ।

यदुक्तं चतुर्विंशतिमते– ' वेदपारमनीता ये धर्मशास्त्रविवर्जिताः । परिषत्त्वं न तेषां स्यान्नास्तिकानां विशेषतः ॥ अनाहिताग्नयोऽज्ञानाः केवला वेदपारगाः । पिशुनाः क्रूरकर्माणः परिषत्त्वं न विद्यते ॥ शास्त्रज्ञा दुष्टकर्माणः प्रतिकूलास्त्वसूयकाः । हैतुका भिन्नमर्यादास्तेऽपि पर्षद्विवर्जिताः ॥ ' इति ।

पमा. २।१५९–१६०

( २ ) अनधीतमन्त्रा अमन्त्राः । एतेन ब्राह्मणानध्ययनेऽपि मन्त्रभागमात्राध्ययनेऽपि पर्षत्त्वं भवतीत्युक्तम् । $ विम.

धर्मशास्त्रानभिज्ञः धर्मनिर्णयकारी पापभाक्

**यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः ।**
**तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति ॥**
**'अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।**
**प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदि व्रजेत् ॥**

( १ ) पूर्वत्र 'धर्मशास्त्रं विजानताम्' इति विशेषणेन तद्विज्ञानरहितस्य प्रायश्चित्तवक्तृत्वं नास्तीति यदर्थात् सूचितं तदेवात्र श्लोकद्वयेन प्रपञ्चयति– यद्वदन्तीति । अज्ञानं द्विविधम्– सत्यपि धर्मशास्त्रपाठे न्यायनिर्णयकौशलाभावेन प्रकृतस्य सूक्ष्मस्य प्रायश्चित्तविशेषस्यापरिज्ञानमेकम्, वृद्धव्यवहारेण सत्यपि परिज्ञाने धर्मशास्त्रापरिशीलनमपरम् । तदुभयमभिलक्ष्य श्लोकद्वयम् । तमोमूढाः प्रज्ञामान्द्येन तमसा सूक्ष्मन्यायेषु विभ्रान्ताः । मूर्खाः पण्डितंमन्याः । अतद्विदः प्रायश्चित्तविशेषमजानन्तः । तादृशाः पुरुषा यत् पापमुद्दिश्य धर्मं प्रायश्चित्तमन्यथा वदन्ति तत्पापं शतगुणं भूत्वा तान् मूर्खान् वक्तॄन् प्राप्नोति । अङ्गिराश्चैतदेवाऽऽह– ' यत्तु दत्तमजानद्भिः प्रायश्चित्तं सभां गतैः । तत्पापं शतधा भूत्वा दातॄनेवोपतिष्ठति ॥ ' इति । प्रायश्चित्ती चान्यथाकारित्वान्न शुध्यति । यस्तु धर्मशास्त्रपाठहीनः प्रायश्चित्तविशेषं लोकतोऽवगत्य निर्दिशति तत्र यथाशास्त्रानुष्ठायित्वात् ¶ प्रायश्चित्ती पूतो भवति । स तु वक्ता किल्बिषं व्रजेत्, धर्मशास्त्राणामपठितत्वात्, तत्पाठाभावे च विधायकवचनस्योदाहर्तुमशक्यत्वात् । उदाहृत्यैव वचनं प्रायश्चित्तं निर्देष्टव्यमिति हि पूर्वमुक्तम् –' ऋषिवक्त्रोद्गतान् धर्मान् गायन्तो वेदवित्तमाः ॥ ' इति । अङ्गिरा अपि–' वचः पूर्वमुदाहार्यं यथोक्तं धर्मवक्तृभिः । पश्चात्कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥ न हि तेषामतिक्रम्य वचनानि महात्मनाम् । प्रज्ञानैरपि विद्वद्भिः शक्यमन्यत्प्रभाषितुम् ॥ ' इति ।

पमा. २।१६०–१६२

( २ ) तमसा वचनानां विषयव्यवस्थाज्ञानाभावेन । ...... यत्तु ' प्रायश्चित्ती निमित्ती तादृशेनापि प्रायश्चित्तेन पूतो भवति ' इति व्याख्यातम्, तन्न, ' यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते । नैव शुद्धिमवाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥ ' इति वृद्धशातातपस्मरणविरोधात् । $ विम.

**'चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्वेदपारगाः ।**
**स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः ॥**

( १ ) धर्मशास्त्रपरिज्ञानस्य न्यायनिर्णयकौशलस्य च सद्भावेऽप्यनवधानादिचित्तदोषशङ्काव्युदासाय स्वसमानैस्त्रिचतुरैः सह संवादोऽपेक्षित इत्यभिप्रेत्याऽऽह– चत्वारो वेति । बहूनामन्योन्यसंवादेन यो निश्चितः स एव धर्म इति विज्ञेयः । इतरैरन्योन्यसंवादमनाद्रियमाणैः सहस्रसंख्याकवचनपाठपुरःसरमभिहितोऽपि विसंवादशङ्काया अनिराकृतत्वान्नासौ धर्मत्वेन स्वीकार्यः ।

पमा. २।१६२

$ शेषं पमागतम् ।

(१) पस्मृ. ८।६ ; पमा. २।१६१ पर्षदि ( परिषद् ).

¶ इदं स्मृत्यन्तरविरोधेन हेतुना विमव्याख्याने खण्डितमेव । किंच स्वोक्तिविरोधोऽप्यत्र प्रतीयते । तथाहि– पूर्वं ' वेदवेदाङ्गविदुषाम् ' इतिश्लोकव्याख्याने ' यद्यपि मन्वादिधर्मशास्त्रज्ञानमात्रेण ' इत्यादिना ग्रन्थेन ' शुनाऽऽलीढं हविर्यथा ' इतिन्यायोपष्टम्भेनानधीतवेदादिनिर्दिष्टस्य प्रायश्चित्तस्य पापापनोदनाक्षमत्वं स्वयमेव यदुक्तं तदत्रापि तुल्यन्यायात्प्राप्तमेवेति ।

$ शेषं पमागतम् ।

(१) पस्मृ. ८।७ ; मुक्ता. ३.

(२) इदानीं पर्षन्निर्णीतस्याप्यर्थस्य विधायकैस्त्रिचतुरैः सह संवादः कार्य इत्यत आह– चत्वार इति। पर्षन्निर्णीतमप्यर्थं त्रयश्चत्वारो वा वेदशास्त्रपारगा विप्रा ब्रूयुर्यदा तदाऽसौ धर्मो भवति, न केवलं सहस्रादिसंख्यकैः सत्यैरेवोक्त( ? सत्येवोक्त ) इति, 'विचारस्तादृशः कार्यो यथा सर्वे सभासदः। एकवाक्यतया ब्रूयुस्तथा श्रेयोऽधिगच्छति ॥' इति स्मरणात्। अनेन पर्षदतिरिक्तास्त्रयश्चत्वारो वा विधायकाः कार्या इत्युक्तं भवति। अत एव भारते– 'अर्धं पापं भवेन्मुख्ये पादो भवति कर्तृषु। पादो भवति सभ्येषु ये न निन्दन्ति निन्दितम् ॥' इति त्रयाणामपि पृथगुपादानं विहितम्। मुख्यः प्राड्विवाकः, कर्तारः विधायकाः, सभ्याः पर्षन्नियुक्तारः इति। विम.

धर्मज्ञपरिषदादेशः पापनाशकः

'प्रमाणमार्गं मार्गन्तो ये धर्मं प्रवदन्ति वै।
तेषामुद्विजते पापं सद्भूतगुणवादिनाम् ॥

(१) सत्यपि त्रिचतुराणां परस्परसंवादे विप्रकीर्णेष्वनेकेषु धर्मशास्त्रेषु क्वापि कस्यचिद्विशेषस्य संभवात् प्रायश्चित्तनिर्देशवेलायां पुनः शास्त्राणि पर्यालोच्यैव निर्देष्टव्यमित्याह– प्रमाणमार्गमिति। प्रमाणमार्गः धर्मशास्त्रतात्पर्यम्। तस्य मार्गः न्यायेन निष्कर्षः। तं कुर्वन्त एव ये धर्मं प्रवदन्ति तेभ्यः पापमुद्विजते नाशयोग्यतामापद्यते इति यावत्। तत्र हेतुः– सद्भूतेति। सद्भूतः सत्यभूतः अन्यथाभावमप्राप्तः, परस्परसंवादेनानवधानादिदोषाभावात् पुनः शास्त्रपर्यालोचनेन निगूढरहस्यावगमाच्च। गुणः धर्मः, श्रेयोहेतुत्वात्। तादृशधर्मवादित्वात्तेभ्यः पापस्योद्वेगो युक्तः। परस्परसंवादः पुनर्धर्मशास्त्रपाठश्चाङ्गिरसा दर्शितः– 'तस्मिन्नुत्सारिते पापे यथावद्धर्मपाठकाः। ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम् ॥' ( उत्तराङ्गिरस्मृ. ३।६ ) इति। पापे पापकारिणि पुरुषे। पमा. २।१६२–१६३

(२) विधायकैरपि पर्षन्निर्णीतेऽर्थे संवादः कथं कार्य इत्यत आह– प्रमाणमार्गमिति। प्रमाणं धर्मशास्त्रम्, मार्गः शिष्टानुगृहीतः पन्थाः, तयोः समाहारः। यद्वा प्रमाणानां स्मृतिवचनानां मार्गः व्यवस्था, तां मार्गन्तः न्यायेनानुसंदधानाः ये धर्मं प्रवदन्ति संवदन्ति तेषां सद्भूतगुणवादेन यथावस्थितार्थप्रतिपादनेन पापमुद्विजते नाशयोग्यतामापद्यते इति। अनेन विधायकैरपि प्रमाणानुसंधानेन संवादः कार्य इत्युक्तं भवति। विम.

'यथाऽश्मनि स्थितं तोयं मारुतार्केण शुष्यति।
एवं परिषदादेशान्नाशयेत्तस्य दुष्कृतम् ॥

'नैव गच्छति कर्तारं नैव गच्छति पर्षदम्।
मारुतार्कादिसंयोगात्पापं नश्यति तोयवत् ॥

(१) ननु परिषदुद्विग्नं पापं यदि कर्तर्येवावतिष्ठते तदा प्रायश्चित्तमनर्थकम्। अथ परिषदं प्राप्नुयात्, तर्हि कथमुद्वेगः ? इत्यत आह– यदश्मनीति। निम्ने महति वा पाषाणे वर्षधाराभिः स्थितमुदकं मारुतार्कादिसंयोगो विनाशं प्रापयति, एवमियं परिषत् शास्त्रीयस्य प्रायश्चित्तस्याऽऽदेशात्तस्य दुष्कृतिं नाशयति। न हि शिलास्थमुदकमुत्तरकाले यथापूर्वं शिलायामवतिष्ठते, नापि मारुतादावासज्जते, किंतु शुष्यत्येव केवलम्। एवमिदमपि पापं न कर्तर्यवतिष्ठते, नापि परिषदं प्राप्नोति, किंतु स्वरूपनाशमेव प्राप्नोति। पमा. २।१६३–१६४

(२) ननु– प्रमाणमार्गणस्यैव पापोद्वेजकत्वे स्वयमेव तथाऽनुष्ठाने पापोद्वेगः किं न स्यात् ? इत्यत आह– यथेति। महति शिलातले निम्नभागे स्थितमुदकं यथा वायुसूर्यादिसंपर्केणैव शुष्यति, न स्वयमेव, तथेयं परिषत् शास्त्रीयप्रायश्चित्तोपदेशादेव निमित्तिनः पापं नाशयति, नान्यथा। अनेन पर्षदादेश एव पापनाशः( ? शकः), न स्वयमेव ज्ञात्वाऽनुष्ठानमिति दर्शितम्। अत एव वक्ष्यति नवमान्ते 'तस्मात्प्रकाशयेत्पापम्' इति।

(१) पस्मृ. ८।८.

(१) पस्मृ. ८।९ ; पमा. २।१६३ यथाऽश्म (यदश्म).
(२) पस्मृ. ८।१०.

...... ननु प्रायश्चित्तेन कर्तुः पापनाशात् 'नैव गच्छति कर्तारम्' इत्युच्यतां नाम, 'नैव गच्छति पर्षदम्' इति त्वनुपपन्नम्। तेषां पापासंक्रमे 'अति-(१ आत्म)कृच्छ्रं ततः कुर्याज्जपेद्वै वेदमातरम्।' (पस्मृ. ८।३०) इति वक्ष्यमाणं प्रायश्चित्तविधानमनुपपन्नं स्यादिति चेत्, मैवम्। न हि कर्तुः पापं पर्षदि संक्रामति, तस्याक्रियत्वात्, किंतु पर्षदः प्रायश्चित्तोपदेश-निमित्तं पापान्तरमुत्पद्यते, तद्विनाशाय कृच्छ्रादिविधानमिति न विरोधः। ‡ विम.

धर्मपरिषल्लक्षणम्

**'चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः।**
**ब्राह्मणानां समर्था ये परिषत्साऽभिधीयते ॥**

(१) अथ मुख्यानुकल्पभेदेन परिषद्भेदानाह— चत्वार इति। ग्राममध्ये विद्यमानानां वेदविद्यादिगुणयुक्तानां ब्राह्मणानां मध्ये येऽत्यन्तं समर्थास्ते चत्वारो मुख्या परिषत्। तदसंभवे त्रयो वा परिषत्त्वेन ग्राह्याः। एतत् पक्षद्वयमाहिताग्निष्वभिहितम्। पमा. २।१६५

(२) समर्थाः सम्यक् अर्थः धर्मस्य प्रतिपादकं शास्त्रं येषां ते, धर्मशास्त्रज्ञाः। ‡ विम.

**'अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः।**
**पञ्च त्रयो वा धर्मज्ञाः परिषत्सा प्रकीर्तिता ॥**

(१) तदसंभवे वाऽनाहिताग्नयः। तत्रापि पञ्चेति मुख्यः कल्पः, त्रय इत्यनुकल्पः। पमा. २।१६५

(२) उक्तलक्षणपर्षदसंभवेऽनुकल्पमाह— अनाहितेति। ये पञ्च ब्राह्मणा अनाहिताग्नयः स्मार्ताग्निपरिशीलनेनापरिगृहीतत्रेताग्नयः, न तु निरग्निकाः, वेदवेदाङ्गपारगाः, धर्मज्ञाः धर्मशास्त्रज्ञाः, तेऽपि परिषद्भवन्ति। तदभावे तादृशास्त्रयो वाऽपि पर्षद्भवन्ति। सेयमाहिताग्नित्वादिगुणाभावेऽप्याम्नातत्वाद्गुणानुकल्पः। विम.

**'मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम्।**
**वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥**

(१) तस्यापि पक्षद्वयस्यासंभवे सत्येक एव परिषद्भवेत्। तमेकं विशेष्टुं 'मुनीनाम्' इत्याद्युक्तम्। आत्मनि ब्रह्मणि विद्या अनुभवः येषां ते आत्मविद्याः। तथाविधाः कृतकृत्याः सन्तोऽपि लोकानुग्रहाय यज्ञैरिष्टवन्तः यज्ञयाजिनः। वेदानामृगादीनां चतुर्णामध्ययनावानुष्ठितानि तत्तद्वेदोक्तानि व्रतानि वेदव्रतानि। तत्तद्व्रतसहितेषु वेदेषु समाप्तेषु यथाविधि स्नाताः। 'शिरोव्रतेन स्नातानाम्' इति वा पाठः। आथर्वणिकानां वेदव्रतेषु मुख्यं व्रतं शिरोव्रतम्। तथा चाऽऽथर्वणिका आमनन्ति— 'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेच्छिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥' (मुउ. ३।२।१०) इति। तस्मिन् शिरोव्रते सत्यनन्तरमध्ययनं परिसमाप्य यथाविधि स्नाताः। तेषामेतेषां यथोक्तसर्वगुणसंपन्नानां मध्ये यः कोऽप्येकः परिषद्भवेत्। पमा. २।१६५–१६६

(२) इदानीं संख्यानुकल्पमाह— मुनीनामिति। मुनीनाम् आत्ममननशालिनाम् आत्मनः ब्रह्मणः विद्या अनुभवः येषां ते आत्मविद्याः, तेषां चेति विशेषणद्वयस्य सिद्धसाधकाख्याभेदेन विकल्पमाश्रित्योपादानम्। द्विजानां विप्राणाम्, आत्मसाक्षात्कारेण कृतार्थानामपि लोकानुग्रहाय यज्ञानुष्ठानशीलानाम्, वेदेषु ऋगादिषु व्रतेषु महानाम्न्यादिषु सौम्यप्राजापत्यादिषु वाऽन्यतरेषु उभयेषु वा समाप्तेषु स्नातानां कृतसमावर्तनानां मध्ये एकोऽपि यः कश्चित्परिषद्भवेत्। शिरोव्रतेन स्नातानामिति वा यावत्(१ पाठः)। तच्च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्याद्याथर्वणिकानां प्रसिद्धम्। विम.

**'पञ्च पूर्वं मया प्रोक्तास्तेषां चासंभवे त्रयः।**
**स्ववृत्तिपरितुष्टा ये परिषत्सा प्रकीर्तिता ॥**

‡ शेषं पमागतम्।

(१) पस्मृ. ८।११ त्साऽभि (त्सा वि); पमा. २।१६५.

(२) पस्मृ. ८।१२; पमा. २।१६५ येऽन्ये (ये च).

(१) पस्मृ. ८।१३; पमा. २।१६५ वेदव्रतेषु (शिरोव्रतेन) इत्यपि पाठः; विम. पमावत्.

(२) पस्मृ. ८।१४ चासं (वाऽसं); पमा. २।१६५.

(१) अत्र साग्निकानामनग्निकानां द्वौ द्वौ पक्षौ, अध्यात्मविदस्त्वेकः पक्षः इति पञ्च पक्षा मया प्रोक्ताः। तेषां सर्वेषामसंभवे केचन विद्यमानाः श्रेष्ठास्त्रयः, ते च यद्यायुधजीवनाद्यधर्मवृत्तिमनुपजीव्य यथासंभववृत्तिमात्रेण परितुष्टाः, तेषामपि परिषत्त्वमविरुद्धम्। पमा. २।१६६

(२) तेषु प्रायश्चित्तविधानप्रयोजकस्य धर्मशास्त्रादिज्ञानस्यापेक्षितत्वे तु 'धर्मशास्त्ररथारूढाः' इत्यनेन वक्ष्यमाणवाक्येनास्यैकवाक्यत्वं द्रष्टव्यम्। एतेन क्षत्रियादिवृत्त्युपजीविनां यथोक्तगुणवतामपि पर्षत्त्वं नास्तीत्युक्तं भवति। एतेषां पर्षत्पक्षाणां दोषतारतम्येनापि व्यवस्था कार्या। तथाऽऽहाङ्गिराः— 'एषा लाघवकार्येषु मध्यमेषु तु मध्यमा। महापातकचिन्तासु शतशो भूरिशश्च वा॥' इति। † विम.

नामधारकब्राह्मणाः परिषत्सदस्यत्वानर्हाः, वेदज्ञानामेव परिषत्

**'अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः।**
**परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि॥**

(१) नामधारकविप्राणां परिषत्त्वं नास्तीति यत्पूर्वमुदाहृतं तदेव दृष्टान्तेन दृढीकर्तुं सिंहावलोकनन्यायेन पुनः परामृशति— अत ऊर्ध्वमिति। अत ऊर्ध्वं वर्णितेषु परिषत्पक्षेषु अवगम्यमानेभ्यो गुणवद्भ्यो ब्राह्मणेभ्य ऊर्ध्वं तद्व्यतिरिक्ता गुणरहिता इति यावत्। पमा. २।१६७

(२) इदानीं नामधारकविप्राणां पर्षत्त्वनिषेधमाह— अत इति। अतः स्ववृत्तिपरितुष्टानां पर्षत्त्वमिति पक्षात् ऊर्ध्वम् अनन्तरं ये केवलं नामधारकाः ब्राह्मणत्वजातिमात्रसमवायेन ब्राह्मणशब्दाभिधेयाः विप्राः तेषु सहस्रसंख्येष्वपि पर्षत्त्वं नास्ति, तेषामुक्तलक्षणे सावित्र्याद्यज्ञानोपन्यासेन धर्मशास्त्रज्ञानाभावस्य कृषिकरणोपन्यासेन स्ववृत्तिभ्रंशस्य च समर्थितत्वात्। विम.

† शेषं पमागतम्।

(१) पस्मृ. ८।१५ परिषत्त्वं न (पर्षत्त्वं न तु); पमा. २।१६७.

**'यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः।**
**ब्राह्मणस्त्वनधीयानस्त्रयस्ते नामधारकाः॥**

(१) गुणरहितेषु ब्राह्मणेषु ब्राह्मण इति नाममात्रं केवलं वर्तते, न तु ब्राह्मणशब्दप्रवृत्तिनिमित्तं मुख्योऽर्थोऽस्तीत्येवमर्थं दृष्टान्ताभ्यां विशदयति— यथेति। हस्तित्वं मृगत्वं जातिद्वयं तत्तच्छब्दप्रवृत्तिनिमित्तम्। न चैतत्काष्ठमयचर्ममययोर्विद्यते। तथाऽपि हस्तिमृगनामनी सादृश्यमात्रेण प्रयुज्येते। तद्वद्वेदाध्ययनहीने ब्राह्मणशब्दप्रयोगः। पमा. २।१६७

(२) ननु गुणाभावेऽपि ब्राह्मण्यपुरस्कारेणैव नामधारकाणां पर्षत्त्वं भवत्वित्यत आह— यथेति।...... तेन न पर्षत्त्वयोग्या भवन्तीति। ननु नामधारकेषु ब्राह्मण्याभावे 'ब्रह्मबीजसमुत्पन्नो ब्रह्मसंस्कारवर्जितः। जातिमात्रोपजीवी यः स भवेन्नामधारकः॥' इति व्यासवचनविरोधः स्यादिति चेत्, मैवम्, अस्यावान्तरजातिमात्रसद्भावप्रतिपादकत्वात्, मुख्यब्राह्मण्यस्य गुणविशिष्टजातेरेव ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वस्य वक्ष्यमाणत्वात्। $ विम.

**ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः।**
**यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा॥**

(१) ननु— ब्राह्मणशब्दस्यावयवार्थस्तस्मिन् मा भूत्, जातिस्तु विद्यते। विशिष्टमातापितृजन्यत्वं ब्राह्मणत्वजातिः। तथा च ब्राह्मणशब्दस्य तस्मिन् यौगिकत्वाभावेऽपि रूढेः सद्भावात् विषमौ दृष्टान्तौ इत्याशङ्क्याऽऽह— ग्रामस्थानमिति। ग्रामशब्दो हि जननिवासस्थाने भूभागविशेषे मुख्यया वृत्त्या वर्तते। कूपशब्दश्च जलाधारे खाते। होमशब्दश्च शास्त्रसंस्कृतवह्नौ हविःप्रक्षेपमाह। तत्र जनविशिष्टस्थानं मुख्यो ग्रामः। जनशून्यग्रामस्तु ग्रामाभासः। कूपहोमयोरप्याभासत्वमेवं योजनीयम्। तैरेतैर्दृष्टान्तैरयं नामधारको जातिमात्रसद्भावेऽपि योगहीनत्वात् ब्राह्मणाभासः, न तु मुख्यः।

$ शेषं पमावत्।

(१) पस्मृ. ८।१६-२०.

पङ्कजशब्दस्य च यद्यपि जातिः प्रवृत्तिनिमित्तं तथाऽप्यवयवार्थस्तस्मिन्निमित्तेऽन्तर्भवत्येव। ततो योगरूढ इति व्यवह्रियते। एवं ब्राह्मणशब्दस्यापि योगरूढत्वात् जातिसद्भावेऽपि योगहीनत्वादाभासत्वं द्रष्टव्यम्।

पमा. २।१६८–१६९

(२) नन्वेवं नामधारकेषु ब्राह्मणशब्दप्रयोगो न स्यात्, प्रवृत्तिनिमित्ताभावादित्यत आह– ग्रामेति।... संस्कारविशेषविशिष्टं मातापितृजन्यं मुख्यवृत्याऽभिदधानो ब्राह्मणशब्दो वेदाध्ययनादिसंस्कारहीनं लक्षणयैवाभिदध्यात्, न शक्त्या, विशेषणाभावात्। तस्मान्नामधारकेषु न मुख्यो ब्राह्मणशब्दप्रयोग इति। § विम.

**यथा षण्ढोऽफलः स्त्रीषु यथा गौरूषराऽफला।**
**यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः॥**

ननु– मुख्यसंभवे सत्यमुख्यं न ग्राह्यम्, तदसंभवे त्वमुख्यमपि ग्राह्यम् इति लोकवेदस्थितिः। तथा चाध्ययनादिसंपन्नमुख्यब्राह्मणानामसंभवे सति ब्राह्मणाभासानामपि क्वचित् परिग्रहत्वं स्यात् इत्याशङ्क्याऽऽह– यथा षण्ढोऽफल इति। अमुख्यमपि यत्र कार्यक्षमं भवति तत्र मुख्यासंभवे तदुपादेयम्। यथा वैदिके कर्मणि सोमाभावे पूतीकाभिषवः, यथा वा लोके शाल्यभावे कोद्रवादिः। तद्वद्ब्राह्मणाभासस्यापि कार्यक्षमत्वे स्यात् क्वचिदुपादेयत्वम्। न त्वध्ययनहीनस्य प्रायश्चित्तविधानक्षमताऽस्ति। न हि पुंस्त्वोपेतस्य वरस्यासंभवेऽपि षण्ढः प्रजामुत्पादयन्नुपलभ्यते। नापि भूमिरूषरा क्वचित्फलति। नाप्यज्ञः प्रतिगृह्णन् दात्रे फलहेतुः। एवमसावपि ऋगादिमन्त्रहीनो न पापनिवृत्तिफलहेतुः।

† पमा. २।१६९–१७०

**चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः।**
**ब्राह्मण्यमपि तद्वद्धि संस्कारैर्मन्त्रपूर्वकैः॥**

(१) ननु– नामधारकः षण्ढादिवत् अफलः चेत्तर्हि संस्कारैरपि तस्य कोऽतिशयः स्यात्? न हि शृङ्गारसहस्रेणापि षण्ढः प्रजनयितुं प्रभवति इत्याशङ्क्य दृष्टान्तेन संस्कारकृतोत्कर्षं संभावयति– चित्रकर्मेति। चित्रकारः प्रथमं पटादौ मषीरेखाभिः सर्वावयवसंपूर्णानि मनुष्यादिरूपाणि लिखति। न च तानि तावता दर्शनीयत्वमापद्यन्ते। पुनस्तान्येव रूपाणि नानाविधवर्णप्रक्षेपेणोन्मीलितानि दर्शनीयतामापद्यन्ते। एवं जातिब्राह्मण्यं शास्त्रीयसंस्कारैरुत्कृष्यते। मन्त्रसंस्कारेण विद्यादयोऽप्युपलक्ष्यन्ते। पमा. २।१७०

(२) अयमभिसंधिः– न ब्राह्मण्यादिजातिर्गोत्वादिवल्लौकिकप्रमाणगम्या, व्यक्तिप्रत्यक्षेण संशयानुपपत्तेः, किंतु शास्त्रैकगम्या यथाशास्त्रमङ्गीकर्तव्या। शास्त्रं तु संस्कारविशेषविशिष्टत्वे सति विशिष्टमातापितृजन्यत्वं ब्राह्मण्यमाह। यथाऽऽहाङ्गिराः– 'जन्मशारीरविद्याभिराचारेण श्रुतेन च। धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते॥' इति। जन्म ऊढायां वोढुः सकाशात्। शारीरं शरीरसंस्कारो जातकर्मादिः। विद्या वेदः। आचारः संध्यास्नानादिः। श्रुतं मीमांसादिः। धर्मः श्रौतस्मार्तानुष्ठानम्। एभिर्मिलितैर्ब्राह्मण्यं भवति। एवंलक्षणं ब्राह्मण्यं न केवलं जन्मविशेषेण, नापि संस्कारविशेषैरेव सिध्यति, किं तूभाभ्याम्। यत्तु विशिष्टजन्मनैव ब्राह्मण्यमिति स्मृत्यन्तरम्, तत्स्त्रीषण्ढादिसाधारणब्राह्मण्यावान्तरजात्यभिप्रायेणेति मन्तव्यम्। इदं तु मुख्यं ब्राह्मण्यं बहुश्रुतत्वापरपर्यायं पूर्वलक्षणोपयोगि निरूप्यत इति न विरोधः। बहुश्रुतलक्षणं चाऽऽह गौतमः– 'स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिरष्टाचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीतः' (गौध. ८।४–११) इति। $ विम.

**प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः।**
**ते द्विजाः पापकर्माणः समेता नरकं ययुः॥**

ननु यत्र संस्कृता बहवो न सन्ति तत्रैकेन संस्कृतेन सहेतरे नामधारकाः प्रायश्चित्तविधायिनः स्युरित्या-

§ शेषं पमागतम्।

† विम. पमागतम्।

$ शेषं पमागतम्।

शङ्कयाऽऽह– प्रायश्चित्तमिति । समेताः एकेन संस्कृतेन संगताः । ययुः यान्तीत्यर्थः । यद्यपि संस्कृतः स्वयं नरकं नार्हति तथाऽप्यनर्हैः सहैकस्यां परिषद्युपवेशनाचस्य नरकप्राप्तिः । एतच्च चतुर्विंशतिमते स्पष्टीकृतम्– ' प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः । ते सर्वे पापकर्माणः समेतो नरकं व्रजेत् ॥ ' इति । समेतः नामधारकैः संगतः । तावतैवापराधेन मन्त्रसंस्कृतोऽपि नरकं प्राप्नोति । ‡ पमा. २।१७१

'ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये ।
त्रैलोक्यं तारयन्त्येते पञ्चेन्द्रियरता अपि ॥

(१) ननु संस्कृतानां बहूनामपि गृहिणां कथं परिषत्त्वं स्यात् ? नामधारकवत्तेषामिन्द्रियरतत्वादित्याशङ्कयाऽऽह– ये पठन्तीति । वेदो हि निखिलपापापनयने समर्थः । तथा च तैत्तिरीयब्राह्मणे वन्ध्यादिपरम्परया प्राप्तं पापं स्वाध्यायोऽपहन्तीति श्रूयते– ' अग्निं वै जातं पाप्मा जग्राह । तं देवा आहुतीभिः पाप्मानमपाघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छन्दसां स्वाध्यायेनापहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत् ' (तैआ. २।१५।१) इति । मनुरपि– 'वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा । नाशयन्त्याशु पापानि महापातकजान्यपि ॥ यथैधांस्तेजसा वह्निः प्राप्य निर्दहति क्षणात् । तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित् ॥ ' (मस्मृ. ११।२४५–२४६), ' यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ ' (मस्मृ. १२।१०१) इति । ये तु श्रद्धालव एव सन्तः प्रज्ञामान्द्यादिदोषेण पठितं वेदं धारयितुमसमर्थाः तेऽपि पञ्चयज्ञानुष्ठानात् क्षीणपापा एव । पञ्चयज्ञानां पापक्षयहेतुत्वं च प्रथमाध्याये प्रपञ्चितम् । अतश्च पञ्चेन्द्रियप्रसक्तानामपि क्षीणपापत्वेन परिषत्त्वमविरुद्धम् । पमा. २।१७१–१७२

‡ विम. पमागतम् ।

(१) पस्मृ. ८।२१ ; मुक्ता. १९.

(२) ये द्विजाः अधीतं वेदमविस्मरणार्थमन्वहं पठन्ति । ... शास्त्राविरोधेनेन्द्रियार्थप्रसक्ता अपि ।
‡ विम.

'संप्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः ।
तथा च वेदविद्विप्रः सर्वभक्षोऽपि दैवतम् ॥

ननु– एवमपि पञ्चयज्ञादिभिः परिशुद्धेषु गृहिषु परकीयं पापमनुप्रविशति, परान्नभोजनादेस्तत्प्रापकत्वात्, ' दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ', ' अन्नादे भ्रूणहा मार्ष्टि ' (मस्मृ. ८।३१७) इत्यादिस्मरणात् इत्यत आह– संप्रणीतः श्मशानेष्विति । न ह्यग्निः श्मशाने नीतः शवादिभक्षक इत्येतावता देवत्वं परित्यजति । एवं वेदविदो भूदेवस्य अभक्ष्याभोज्यादिदोषमात्रेण भूदेवत्वं नापैति, एकैकस्य मन्त्रस्याभक्ष्यभक्षणाद्यशेषदोषनिवर्तकत्वात् । तथा च मन्त्रलिङ्गम्– ' यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन् । यद्देवानां चक्षुष्यागोऽस्ति( ? गो अस्ति ) यदेव किंच प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु । यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम्' (तैआ. २।६।२) इत्यादि । अनृतेन परकीयादौ स्वकीयत्वादिवचनेन, दास्यन् अनर्हेभ्यो नष्टशौचाचारादिभ्यः स्नेहानुबन्धेन हव्यकव्ययोः प्रयच्छन्, अदास्यन् अतिथ्यादिभ्यो योग्येभ्योऽप्रयच्छन्, करिष्यन् अन्नभक्षणव्यतिरिक्तमविहितं प्रतिषिद्धं वा कुर्वन्, चक्षुषि आगः नग्नपरयोषिदवलोकनादि, तथा देवानामागः त्रिष्वाद्यं देवं दृष्ट्वाऽप्यनमस्कारादि, यत् एव किंच अदत्तमहिषकालपुरुषाद्यप्रतिग्राह्यं यत् किंचित् प्रतिजग्राहं प्रतिगृहीतवानस्मि, बहुधा गणान्नगणिकान्नादिरूपेणानेकदोषयुक्तं यत् अन्नम् अद्मि भक्षितवानस्मि, यथोक्तात् सर्वस्मात् दोषजातात् माम् अनृणं पूतम् अग्निः करोत्विति मन्त्रार्थः । तथा पवमानसूक्तादिमहिमानमधीयते– ' क्रयविक्रयायोनि-

‡ शेषं पमागतम् ।

(१) पस्मृ. ८।२२ ; पमा. २।१७२ तथा (एवं).

दोषाद्भक्ष्यान्द्भोज्यात्प्रतिग्रहात् । असंभोजनाच्चापि नृशंसं तत्पावमानीभिरहं पुनामि ॥ ' ( ऋसं. खिलम् १८। १२ ) इति । तथा सामविधाने सामगाः पठन्ति– " $अभोज्यभोजने 'ये ते पन्था अधो दिवः" ( साव्रा. १।५।१२, १३ ) इति । साम गायेदिति शेषः । मनुरपि– ' प्रतिगृह्याऽप्रतिग्राह्यं भुक्त्वा चाऽन्नं विगर्हितम् । जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात् । हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः । ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किंचन ॥ ' ( मस्मृ. ११।२५३, २६१ ) इति । ¶ पमा. २।१७२–१७४

'अमेध्यानि तु सर्वाणि प्रक्षिप्यन्ते यथोदके ।
तथैव किल्बिषं सर्वं प्रक्षिपेच्च द्विजानले ॥

ननु–उक्तरीत्या वेदविदः स्वकीयपापमपनयन्तु नाम, तथापि ' त्रैलोक्यं तारयन्त्येते ' इति यदुक्तं तत् कथम्? इत्याशङ्क्य दृष्टान्तेन तदुपपादयति– अमेध्यानीति । गङ्गादिजले स्नातुं प्रविष्टाः शरीरात् स्वेदादीनि अमेध्यानि प्रक्षिपन्ति । नैतावता तज्जलमपूतं भवति, प्रत्युत मलोपेतान् पुरुषान् मलापनयनेन पुनाति । एवं प्रायश्चित्ती स्वकीयमशेषं पापं वेदवित्सु प्रक्षिपति । तत्र प्रक्षेपणं नाम तदपनयनाय तेषामग्रे निवेदनम् । ते च

$ सामविधानब्राह्मणवाक्योद्धरणमिदं व्याकुलम् । तथाहि –अत्र यदभोज्यभोजनरूपं निमित्तमुद्दिष्टम् , न तत्र ' ये ते पन्थाः ' इतिमन्त्राश्रितसामगानं प्रायश्चित्तं ब्राह्मणे विहितम्, अपि तु प्रायश्चित्तान्तरम् ; यच्चात्र प्रायश्चित्तं विहितम्, न तत्राभोज्यभोजनं निमित्तमुद्दिष्टं ब्राह्मणे, अपि तु निमित्तान्तरम् । तथा च सामविधानब्राह्मणम्– " अमेध्यदर्शने ' ये ते पन्था अधो दिवः ' इति । तथाऽमेध्यप्राणे ॥ अभोज्यभोजनेऽमेध्यप्राशने वा निष्पुरीषीभावस्त्रिरात्रावरं तूपवसन् ' एतो न्विन्द्रं स्तवाम शुद्धम् ' इति पूर्वं सदा सहस्रकृत्व आवर्तयन् ॥ " इति । अत एवास्माभिः स्थलनिर्देशे '१२, १३' इति वाक्यद्वयस्याङ्कौ निर्दिष्टौ ।

¶ विम. पमागतम् ।

(१) पस्मृ. ८।२३ ; पमा. २।१७४ द्विजानले ( द्विजोत्तमः ).

तदपनयाङ्गीकारमात्रेण न दुष्यन्ति, प्रत्युत तदपनयनसमर्थं शास्त्रीयमुपायमुपदिश्य पापिनमुद्धरन्ति । तस्मात्तारयन्तीत्युपपन्नम् । $ पमा. २।१७४

'गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ।
गायत्रीब्रह्मतत्त्वज्ञाः संपूज्यन्ते जनैर्द्विजाः ॥

( १ ) ननु विद्यायाश्चेदीदृशो महिमा तर्हि वेदविदां दैनंदिनगायत्र्युपास्त्यादिष्वलसानामपि परिषत्त्वं प्रसज्येतेत्यत आह– गायत्रीति । गायत्री च ब्रह्म च गायत्रीब्रह्मणी । तयोस्तत्त्वं गायत्रीब्रह्मतत्त्वम् । तत्र गायत्र्याः तत्त्वम् अङ्गन्यासकालवर्णविशेषध्यानादि । ब्रह्मणः तत्त्वं वेदोक्तो निःशेषानुष्ठेयोऽर्थः । तदुभयं यथावदवगत्यानुतिष्ठन्तः तत्त्वज्ञाः इह विवक्षिताः । यद्वा ब्रह्म परमात्मा । तस्य तत्त्वं वेदान्तप्रतिपाद्यं स्वरूपम् । तद्गायत्र्यन्तर्गततच्छब्दवाच्यत्वेनावगत्य उपासते ये ते गायत्रीब्रह्मतत्त्वज्ञाः । पमा. २।१७५

(२) नन्वमन्त्रोऽनृत इत्यादौ को मन्त्रो विवक्षितः? यं विना न ब्राह्मण्यमित्यत आह– गायत्रीति । ब्रह्मणः वेदस्य तत्त्वं सारः, वेदत्रयप्रसूतत्वात् । तथा च मनुः– 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ' (मस्मृ. २।७७) इति । गायत्र्येव ब्रह्मतत्त्वं गायत्रीब्रह्मतत्त्वम् , तज्जानाती– ( ? जानन्ती )ति गायत्रीब्रह्मतत्त्वज्ञाः द्विजाः जनैरिहामुत्र च संपूज्यन्ते । गायत्र्याः ब्रह्मतत्त्व( त्व )प्रतिपादनं गायत्र्युपासनामात्रस्य सर्वोपासनाफलकत्वप्रतिपादनार्थम् । अत एव बृहत्पराशरः– ' गायत्र्युपासिता येन तेनोपास्तं जगत्त्रयम् । ', ' गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः । इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥ ' ( बृपसं. ४।१५ ) इति । अन्यथा गायत्रीज्ञानरहितो विप्रो जातिमात्रेण ब्राह्मणोऽपि शूद्रादप्यशुचिः कर्मानधिकारी भवति । अनेनान्वयव्यतिरेकाभ्यां गायत्रीमात्रस्यैव ब्राह्मण्यप्रयोजकत्वं तदभावाच्च नामधारकत्वमित्युपक्रमोपसंहारयोरेकार्थत्वमुक्तं भवति । विम.

$ विम. पमावत् ।

(१) पस्मृ. ८।२४-२५.

**दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः ।**
**कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥**

( १ ) ननु यस्मिन् ग्रामे जितेन्द्रियः शास्त्रोक्तस्वधर्मवर्ती शूद्रो विद्यते तत्र पञ्चेन्द्रियरतादुदुःशीलाद्वरं तस्यैव शूद्रस्य परिषत्त्वमित्यत आह– दुःशीलोऽपीति । 'कः परित्यज्य' इत्यादिर्दृष्टान्तः । जातिशीलयोर्मध्ये जात्युत्कर्ष एव प्राधान्येनोपादेयः । शीलं तु यथासंभवम् । अत एव चतुर्विंशतिमते शूद्रोपदेशस्यानुपादेयत्वं प्रपञ्चयति– 'श्वचर्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः । तद्वच्छूद्रमुखाद्वाक्यं न श्रोतव्यं कथंचन ॥ पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च । वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ॥ शूद्रो ज्ञानावलेपेन ब्राह्मणान् भाषते यदि । स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ कृष्णसर्पं द्विजं दुष्टं शूद्रं च प्रतिपादकम् । गर्दभं जारजातं च दूरतः परिवर्जयेत् ॥' इति ।
पमा. २।१७५–१७६

( २ ) ननु यथोक्तलक्षणविप्राभावे तादृशः क्षत्रियादिर्गृह्यताम्, किं निर्गुणविप्रोपादानेन ? इत्यत आह– दुःशील इति । शीलात् वृत्तात् संध्यास्नानादेर्दुर्गतः दुःशीलः, न तु निषिद्धकारी । द्विजः द्वितीयजन्मवान्, गायत्रीसंस्कृत इति यावत् । स एव पूज्यः पूजार्हः, न तु जितेन्द्रियोऽपि यथोक्ताचरणशीलोऽपि शूद्रः । तत्र दृष्टान्तः- कः परित्यज्येत्यादिः । शूद्रान्तानां ब्राह्मणव्यतिरिक्तानां त्रयाणामपि वर्णानां पर्षत्त्वनिषेधार्थम् । तथा च स्मृत्यन्तरम्– 'क्षत्रियो वाऽथ वैश्यो वा शूद्रो वा न कथंचन । प्रायश्चित्तविधानं हि कुर्वीतेति विदुर्बुधाः ॥' इति ।
विम.

**'धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।**
**क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ॥**

(१) पस्मृ. ८।२६ यद्ब्रूयुः ( यत्कुर्युः ) ; पमा. २।१७६.

( १ ) ननु दुःशीलानां परिषत्त्वाभ्युपगमे तन्निर्दिष्टप्रायश्चित्तस्यान्यथाभावः शक्यते इत्यत आह–धर्मशास्त्रेति । यथा युद्धार्थे रथमारुह्य खड्गं धृत्वा समागतस्य योद्धुम्, मुहूर्तमात्रं विलम्बितेऽपि युद्धे खड्गचालनादिरूपा युद्धोचितैव लीला प्रवर्तते, न त्वप्रस्तुताक्षद्यूतादिरूपा, तद्वत् धर्मशास्त्रवासनावासितत्वात् क्रीडन् अपि यथाशास्त्रमेव ब्रूते, किमु वक्तव्यं बुद्धिपूर्वं परिषद्युपविश्य 'अब्रुवन्विब्रुवन् वाऽपि नरो भवति किल्बिषी ।' (मस्मृ. ८।१३) इत्यादिशास्त्रं चावगत्यान्यथा न ब्रूते इति ? पमा. २।१७६

( २ ) यदुक्तं स्ववृत्तिपरितुष्टास्त्रयोऽपि पर्षदिति, तत्रापेक्षितं विशेषणमाह– धर्मेति । धर्मशास्त्रं मन्वादि, तदेव रथः, प्रायश्चित्ताभिधाननिर्वाहकत्वात्, तत्राऽऽरूढाः तदेकाधिष्ठानाः । वेद एव खड्गः, परान्नभोजनादिजन्यपापनोदकत्वात् । यथाऽऽह मनुः– 'हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः । ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किंचन ॥' ( मस्मृ. ११।२६१ ) इति । तं धारयन्तीति वेदखड्गधराः द्विजाः विप्राः यत्क्रीडार्थं हास्यार्थमपि कुर्युः सोऽपि परमो धर्मः, किं पुनः पर्षदि नियुक्ताः पर्षद्धर्मं जानाना धर्मशास्त्रमवलोक्य यमर्थं ब्रूयुः स धर्म इत्यत्र वक्तव्यमिति ? ।
विम.

**'चातुर्वेद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।**
**त्रयश्चाऽऽश्रमिणो मुख्याः पर्षदेषा दशावरा ॥**

( १ ) हेतुकः अत्र वेदाविरुद्धानुमानव्यवहारी । तर्कः वक्ष्यमाणो विकल्पः । ब्रक. ३६

( २ ) इत्थं योग्यायोग्यपरिषदौ विविच्य तत्र योग्यायाः परिषदोऽपेक्षितं विशेषणजातं दर्शयति– चातुर्वेद्य इति । तत्र चातुर्वेद्यादिशब्दार्थानङ्गिरा विवृणोति – 'चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः । स्वैः

(१) पस्मृ. ८।२७ तुर्वेद्यो (तुर्वैद्यो) ; ब्रक. ३५–३६ (त्रैविद्यो हेतुकस्तर्को( ? स्तर्की ) नैरुक्तो धर्मपाठकः । त्रयश्चाऽऽश्रमिणः पूर्वे पर्षत्स्यात्सा दशावरा ॥ ) मनुपराशरौ ; पमा. २।१७७.

स्वैरङ्गैर्विनाऽप्येते चातुर्विद्या इति स्मृताः ॥ धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च । त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद्द्विजः ॥ शब्दे छन्दसि कल्पे च शिक्षायां च सुनिश्चितः । ज्योतिषामयने चैव सनिरुक्तेऽङ्गविद्भवेत् ॥ वेदविद्याव्रतस्नातः कुलशीलसमन्वितः । अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः । ब्रह्मचर्याश्रमादूर्ध्वं विप्रोऽयं वृद्ध उच्यते ॥' इति । चातुर्वैद्यत्वाद्युक्तविशेषणविशिष्टा गार्हस्थ्याद्यन्यतमाश्रमवर्तिनो दशसंख्याकाः परिषच्छब्दवाच्याः । दशसंख्या अवरा यस्यां परिषदि सा दशावरा । दशत्वमवरः पक्षः । ततोऽप्यर्वाचीनः पक्षो नास्तीत्यर्थः । ये तु 'चत्वारो वा त्रयो वाऽपि' (पस्मृ. ८।७) इत्यादिपक्षाः पूर्वमुपन्यस्ताः ते सर्वेऽपि गोवधादर्वाचीनविषये द्रष्टव्याः । सेयं दशसंख्योपेता परिषद् ब्राह्मणस्य प्रायश्चित्तिरेवे सत्यवगन्तव्या । यदा क्षत्रियवैश्यौ प्रायश्चित्तिनौ भवतः तदा विशेषमङ्गिरा आह— 'परिषद्या ब्राह्मणानां सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा चैव परिषच्च व्रतं स्मृतम् ॥' इति ।

पमा. २।१७७–१७८

(१) एवं पर्षदो मुख्यानुकल्पभेदा अभिहिताः, तेषु कल्पान्तरमप्याह— चातुर्वैद्य इति । चतस्रः विद्याः अधीते इति चातुर्वैद्यः वेदचतुष्टयाभिज्ञः । विकल्पः धर्मपर्षत्प्रायश्चित्तानां प्रमाणम्, सोऽस्यास्तीति विकल्पी । अङ्गवित् शिक्षादिषडङ्गाभिज्ञः । धर्मपाठकः अनेकधर्मशास्त्राभिज्ञः । एतद्गुणविशिष्टाः मुख्याः आद्याः ब्रह्मचारिप्रभृतयः त्रय आश्रमिणः आश्रमत्रयस्थाः, न चतुर्थाश्रमाः, 'त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ।' (मस्मृ. १२।१११) इति मनुस्मरणात् । एषा दशावरा दश अवरे यस्यां पर्षदि सा दशावरा पर्षज्ज्ञेया । तदाहाङ्गिराः— †'चातुर्वैद्यो विकल्पी च ... ये मया परिकीर्तिताः ॥' इति । अत्र ब्रह्मचारिव्यतिरिक्तानां त्रयाणामाश्रमाणां वृद्धत्वपरिभाषणात्संन्यासिनामपि पर्षत्त्वमस्तीति गम्यते, तदपि 'वेदव्रतेषु स्नातानाम्' इत्यनेन मूलाम्यनुज्ञातत्वाद्विकल्पनीयम् । मनुस्तु प्रकारान्तरेणाऽऽह— 'त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ॥' (मस्मृ. १२।१११) इति । हैतुकः अनुमानज्ञः । तर्की प्रमाणस्याप्रयोजकत्वोद्भावनेऽनिष्टप्रसञ्जकः । नैरुक्तः निरुक्तिज्ञः । एषामपि पर्षत्पक्षाणां व्यवस्था पूर्वोक्तैव द्रष्टव्या । यत्तु पूर्वोक्तेषु पर्षल्लक्षणेष्वनेन चातुर्वैद्यत्वादिगुणो विधीयत इति, तन्न, उत्पत्तिशिष्टगुणावरुद्धेष्वेतेषु गुणान्तरनिवेशासंभवात् आमिक्षावरुद्धे वैश्वदेवयागे वाजिनवत्, निवेशे वा वेदवेदाङ्गविदुषामित्यादिविशेषणैः पौनरुक्त्यादित्यलम् । विम.

गुरुप्रायश्चित्तनिर्णयः राज्ञानुमत्यैव कार्यः

**'राज्ञश्चानुमते स्थित्वा प्रायश्चित्तं विनिर्दिशेत् ।**
**स्वयमेव न कर्तव्यं कर्तव्या स्वल्पनिष्कृतिः ॥**

तदेतद्व्रतादेशनं राजानुमत्या कर्तव्यमित्याह— राज्ञश्चेति । अत्र गोवधस्य प्रकृतत्वात् तमारभ्याधिकेषु पापेषु राजानुज्ञयैव व्रतं निर्दिशेत्, न तु राजानं वञ्चयित्वा स्वयं तत् कर्तव्यम् । गोवधादल्पेषु तु पापेषु विनाऽपि राजानुज्ञां निष्कृतिर्दातुं शक्यते । एतच्च देवलोऽप्याह— 'याचितस्तेन चेत्पापे ब्राह्मणः पापभीरुणा । निष्कृतिं व्यवहारार्थं कुर्यात्तस्मै नृपाज्ञया ॥ स्वयं च ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते । राजा च ब्राह्मणश्चैव महत्सु सुपरीक्ष्य च ॥' इति । हारीतोऽपि— 'राज्ञोऽनुमतिमाश्रित्य प्रायश्चित्तानि दापयेत् । स्वयमेव न कुर्वीत कर्तव्यं स्वल्पमेव च ॥' इति ।

‡ पमा. २।१७९–१८०

राजा धर्मनिर्णये स्वातन्त्र्येण नाधिकारी

**'ब्राह्मणांस्ताननतिक्रम्य राजा कर्तुं यदीच्छति ।**
**तत्पापं शतधा भूत्वा राजानमनुगच्छति ॥**

† एतानि वचनान्यस्मिन्नेव प्रकरणे 'अङ्गिराः' इति शीर्षके द्रष्टव्यानि ।

‡ विम. पमावत् ।

(१) पस्मृ. ८।२८.

(२) पस्मृ. ८।२९ ; पमा. २।१८० यदीच्छ (यदिच्छ).

(१) यथा परिषत् राजानं नातिक्रमेत्, तथा राजाऽपि परिषदं नातिक्रमेदित्याह— ब्राह्मणानिति। कर्तुं प्रायश्चित्तं कारयितुम्, अन्तर्भावितण्यर्थस्य विवक्षितत्वात्। पमा. २।१८०

(२) तान् पर्षदुपविष्टान् ब्राह्मणान् अतिक्रम्य अवमत्य स्वयमेव राजा यदि प्रायश्चित्तोपदेशं कर्तुं वाञ्छति तदा तत्प्रायश्चित्तनिमित्तीभूतं पापं शतगुणीभूय राजानमनुगच्छतीति। विम.

## बृहत्पराशरः

कलियुगानुरूपो धर्मः पराशरप्रोक्तः

[1]धर्मं कथय मे तात अनुग्राह्योऽस्म्यहं यदि ॥
श्रुतास्ते मानवा धर्मा गार्गेया गौतमास्तथा।
वासिष्ठाः काश्यपाश्चैव तथा गोपालकस्य च ॥
अत्रेर्विष्णोश्च सांवर्ता दाक्षाश्चाऽऽङ्गिरसास्तथा।
शातातपाश्च हारीता याज्ञवल्क्यकृतास्तथा ॥
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च।
कात्यायनकृताश्चैव प्रचेतोगदितास्तथा ॥
श्रुतिरात्मोद्भवा तात श्रुत्यर्था मानवाः स्मृताः।
मन्वर्थः सर्वधर्माणां कृतादित्रियुगेषु च ॥
धर्मं तु त्रियुगाचारं न शक्यं हि कलौ युगे।
वर्णानामाश्रमाणां च किंचित्साधारणं वद ॥
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः।
सुखासीनो महातेजा इदं वचनमब्रवीत् ॥

वेदाः अपौरुषेयाः, ब्रह्ममन्वादयः वेदस्मर्तारः

क्रियन्ते नैव वेदाश्च न चापि प्रभवन्ति ते।
न कश्चिद्वेदकर्ताऽस्ति वेदस्मर्ता चतुर्मुखः ॥
तथा स धर्मं स्मरति मनुः कल्पान्तरान्तरे ॥

पुराणपाञ्चरात्रादीनां वेदतुल्यत्वम्

[2]वैदिकं तु जपं कुर्यात्पौराणं पाञ्चरात्रिकम्।
यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः ॥

(१) बृपसं. १।१३–२१.
(२) बृपसं. ४।११० ; पप्र. २१.

लोकरूढेः प्रामाण्यम्

[1]दार्ढ्यार्थं दृश्यते रूढिर्मानवं लिङ्गमेव च।
दृढीकृता च विद्वद्भिर्लोकरूढिर्गरीयसी ॥

धर्मपरिषल्लक्षणम्

[2]पर्षद्दशावरा प्रोक्ता ब्राह्मणैर्वेदपारगैः।
सा यद्रूपा(? यद्ब्रूते) स धर्मः स्यात्स्वयंभूरित्यकल्पयत् ॥
वेदशास्त्रविदो विप्रा यं ब्रूयुः सप्त पञ्च वा।
त्रयो वाऽपि स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥
संयमं नियमं वाऽपि उपवासादिकं च यत्।
तद्गिरा परिपूर्णं स्यान्निष्कृतिर्व्यावहारिकी ॥
न लक्षेणापि मूर्खाणां न चैवाधर्मवादिनाम्।
विदुषां नापि लुब्धानां न चापि पक्षपातिनाम् ॥
श्रुताध्ययनसंपन्नः सत्यवादी जितेन्द्रियः।
सदा धर्मरतः शान्त एकः पर्षत्त्वमर्हति ॥
न सा वृद्धैर्न तरुणैर्न सुरूपैर्धनान्वितैः।
त्रिभिरेकेन पर्षत्स्याद्विद्वद्भिर्विदुषाऽपि च ॥
वयसा लघवोऽपि स्युर्वृद्धा धर्मविदो द्विजाः।
शिशवोऽपि हि मध्यस्थाः सर्वत्र समदर्शनाः ॥
न सा वृद्धैर्भवेद्विप्रैर्वृद्धाः स्युर्धर्मवादिनः।
यत्र सत्यं स धर्मः स्याच्छलं यत्र न गृह्यते ॥
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मो वृथा यत्र न सत्यमस्ति
सत्यं न तद्यन्न हृदाऽनुविद्धम् ॥
निष्कृतौ व्यवहारे च व्रतस्याऽऽशंसने तथा।
धर्मं वा यदि वाऽधर्मं परिषत्प्राह तद्भवेत् ॥

देशकालशक्त्याद्यनुरुद्ध्य प्रायश्चित्तनिर्णयः कार्यः

स्त्रीणां च बालवृद्धानां क्षीणानां कुशरीरिणाम्।
उपवासाद्यशक्तानां कर्तव्योऽनुग्रहश्च तैः ॥

(१) बृपसं. ७।३५२.
(२) बृपसं. ८।६४–७६.

ज्ञात्वा देशं च कालं च व्ययं सामर्थ्यमेव च ।
कर्तव्योऽनुग्रहः सद्भिर्मुनिभिः परिकीर्तितः ॥
लोभान्मोहाद्भयान्मैत्र्याद्यदि कुर्युरनुग्रहम् ।
नरकं यान्ति ते मूढाः शतधा वाऽऽप्त-
वाचिनः ॥

## अत्रिः

श्रुतिस्मृत्योः प्रामाण्यम्

'श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ।
काणः स्यादेकहीनोऽपि द्वाभ्यामन्धः प्रकीर्तितः ॥

वेदशास्त्रज्ञः शास्त्रानुष्ठाता च धर्मनिर्णयाधिकारी

वेदशास्त्राण्यधीते यः शास्त्रार्थं च निषेवते ।
तदाऽसौ वेदवित्प्रोक्तो वचनं तस्य पावनम् ॥
'एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।
स ज्ञेयः परमो धर्मो नाज्ञानामयुतायुतैः ॥
'ह्यस्येऽपि बहवो यत्र विना धर्मं वदन्ति हि ।
विनाऽपि धर्मशास्त्रेण स धर्मः पावनः स्मृतः ॥

## लघ्वत्रिः

इतिहासपुराणयोः धर्मे प्रामाण्यम्

' §इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति ॥

उपबृंहणं गुरूकरणमित्यर्थः । प्रतरेत् इति वञ्चयेदित्यर्थः । अन्यथार्थकल्पनादित्यर्थः । यथा धर्मशास्त्रे युगान्तरविषये ' शशः कूर्मश्च पञ्चमः ' इति पञ्चनखभक्षणं विहितम् । अल्पश्रुतः कश्चित् 'न कूर्मस्याश्नीयात्' इति श्रुत्या कूर्मभक्षणे निषिद्धे स्मृतिवाक्यात् कथं कूर्मभक्षणं भवति ? स्मृत्यपेक्षया श्रुतेर्बलीयस्त्वादिति ब्रूते । एवंवादिनं प्रति वेदः बिभेति इत्यर्थः , अस्य कृतकूर्मोपधानपुरुषविशेषे व्यवस्थितत्वात् । तथा ऋग्वेदे कांचिदृचमुदाहरन्तः केचन मातुलसुतादिविवाहमाचरन्ति । यदि तस्याः श्रुतेर्मातुलसुताविवाहविधानमर्थः तदा ' पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तां च गत्वा चान्द्रायणं चरेत् ॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् । ज्ञातित्वे( ? ज्ञातेये )नानुपेयास्ताः पतति ह्युपयन्नरः ॥ '( मस्मृ. ११।१७१-१७२ ) इति मनुर्न ब्रूयात् । भगिनीं भगिनीतुल्यामित्यर्थः , मातुर्भ्राता मातुलः , तस्य आप्तां दुहितरमित्यर्थः इति तद्व्याख्याने । ज्ञातित्वेन( ? ज्ञातेयेन ) ज्ञातित्वेनेत्यर्थः । गौतमोऽपि ' मातृयोनिसंबन्धागो महापातकितुल्यः ' ( गौध. २१।१ ) इति नोपदिशेत् । तथा प्रत्यक्षश्रुत्या शूद्रेण दोहे निषिद्धेऽपि 'दुह्याद्वा' इति आपस्तम्बसूत्रमेव प्रमाणयन्ति शिष्टाः । अतः सर्वैर्गभीरार्थस्य वेदस्य दुर्ज्ञेयार्थत्वेन वेदतत्त्वार्थवेदिभिर्मन्वादिभिः प्रणीतं धर्मशास्त्रमेव मुख्यं प्रमाणमित्यङ्गीकर्तव्यमिति भावः , तेषामेव वेदार्थवित्तमत्वात् । अतो धर्मशास्त्रसिद्ध एवाऽऽचारोऽङ्गीकर्तव्य इति स्थितम् । आन. १५-१६

§ अस्य वचनस्य व्याख्यानान्तराणि एतत्सदृशे वसिष्ठवचने (वका. पृ. ६७) द्रष्टव्यानि ।

(१) अत्रिसं. ३५१-३५२, १४२-१४३.

(२) अत्रिसं. १४३-१४४ ; विश्व. १।९ पृ. (=).

(३) अत्रिसं. ३१४.

(४) लघ्वत्रिसं. ३।७ वेदो मा (वेदान्मा) प्रतरेदिति (प्रतरिष्यति) ; आन. १४ पृ. (=) : १५ उत्त.

## सुमन्तुः

गणदेशजातिवर्णाश्रमादिधर्मे वेदादीनां प्रामाण्यम्

'वेदवेदाङ्गेतिहासपुराणतर्कमीमांसाधर्मशास्त्राणि कुलगणदेशजातिवर्णधर्मपाखण्डाश्रमश्रोत्रियधर्मव्यवस्थाप्रवर्तकानि ॥

(१) आद्यो धर्मशब्दो वर्णपर्यन्तैः प्रत्येकमभिसंबध्यते । कुलधर्मः चूडाकरणकालादिः । गणधर्माः च वक्ष्यन्ते । देशधर्माः स्त्रीणां वासोविन्यासविशेषादयः । जातिधर्माः उपनयनादयः । पाखण्डादयः वेदबाह्याः । आश्रमधर्माः भिक्षादण्डादयः । श्रोत्रियः छन्दोध्यायी, तद्धर्माः कारीर्याद्यध्ययनभूमौ भोजनादयः । पुनः धर्मग्रहणं पाखण्डसंबन्धव्यवच्छेदार्थम् ।

ब्रक. २२-२३

(१) ब्रक. २२ ; कृर. २८.

(२) जातिधर्माः सूतादीनामश्वसारथ्यादयः, वर्णधर्माः उपनयनादयः। ¶ कृर. २८

[1]यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत।
उदितेऽनुदिते चैव होमभेदो यथा भवेत्॥
[2]तस्मिन् कुलक्रमायातमाचारं त्वाचरेद्बुधः।
स गरीयान् महाबाहो सर्वशास्त्रोदितादपि॥

स्वकुलपरंपरायातः आचारः संप्रदायः। सोऽपि शास्त्रविप्रतिपत्तौ द्रष्टव्यः। तथा च सुमन्तुः— यत्रेति। स्मृच. १।९

## जाबालिः

श्रुतिर्बलीयसी स्मृतेः, श्रुतिद्वैधे स्मृतिद्वैधे च विकल्पः, धर्मपरिषत्

[3]श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा॥

(१) श्रुतिस्मृतिविरोधे स्मृत्यर्थो नाऽऽदरणीयः, अतुल्यबलत्वात्। अत एव जाबालिराह— श्रुतिस्मृतीति। ‡ गौमि. १।५

(२) विरोधाधिकरणन्यायोऽत्रानुग्राहको द्रष्टव्यः। तथा हि— अध्वरे महावेद्यां सदोनामकस्य मण्डपस्य मध्ये काचिदुदुम्बरशाखा स्तम्भत्वेन निखाता भवति। तामुद्दिश्य वस्त्रवेष्टनं स्मर्यते— 'औदुम्बरी सर्वा वेष्टयितव्या' इति। तत्र संशयः— एषा स्मृतिः प्रमाणं न वेति। तत्र 'अष्टका कर्तव्या' इत्यादिस्मृतेर्मूलवेदानुमापकत्वेन यथा प्रामाण्यं तथैव सर्ववेष्टनस्मृतिः प्रमाणमिति पूर्वपक्षः। 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतौ स्पर्शो विधीयते। न चासौ सर्ववेष्टने सत्युपपद्यते। तथा च सर्ववेष्टनस्मृतिमूलभूतवेदानुमानस्य प्रत्यक्षश्रुतिविरुद्धस्य कालात्ययापदिष्टत्वेन निर्मूला सर्ववेष्टनस्मृतिरप्रमाणमिति सिद्धान्त इति। मुक्ता. ७

[1]श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक्॥
[2]दश द्वादश विप्रान् वा वेदशास्त्रपरां गतान्।
स्वधर्मनिरतान् दान्तान् परिषा(? पर्षद)र्थे नियोजयेत्॥

## पैठीनसिः

मन्वादयः षट्त्रिंशत्स्मृतयः

[3]तेषां मन्वङ्गिरोव्यासगौतमात्र्युशनोयमाः।
वसिष्ठदक्षसंवर्तशातातपपराशराः॥
[4]विष्णवापस्तम्बहारीताः शङ्खः कात्यायनो गुरुः।
प्रचेता नारदो योगी बौधायनपितामहौ॥
[5]सुमन्तुः कश्यपो बभ्रुः पैठीनो व्याघ्र एव च।
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा॥

---

¶ शेषं व्रक्रवत्।

‡ ममु. गौमिवत्।

(१) स्मृच. १।९; मुक्ता. ७ यत्र शा (धर्मशा) भेदो (भेदौ).

(२) स्मृच. १।९; मुक्ता. ७.

(३) अप. १।७ पृ. २० धे सदा कार्यं (धं तु कर्तव्यं) मनुः; व्रक. ४२ जाबालः; गौमि. १।५; स्मृच. १।१६ लौगाक्षिः; ममु. २।१३ जाबालः; कृर. ३७ जाबालः; मपा. ३६७ पृ. (=); प्रपा. ३ धे तु (धेऽपि) त्सदा (त्तथा) लौगाक्षिः; आपा. १५७ गरी (बली) पृ. स्मर्यते; निप. ९८ पृ. (=); गप. १३ धे तु (धे च) गरी (बली); मुक्ता. ७ त्सदा (त्तदा) लौगाक्षिः; बाल. १।१४ पृ. ६२ गरी (बली) पृ. (=): ३।५६–५७ पृ. ९६ गरी (बली) उत्तरार्धे (अतः श्रुत्यनुसारेण व्यवस्था च विधीयते॥) (=).

(१) स्मृच. ४।४३० जाबालः; वधा. १६७७ जाबालः; विपा. ३।२।५११ (=); बाल. १।१४ पृ. ६२ (=): १।५३ पृ. १९६ धर्मप्रदीपे; हनु. ४ मनुः.

(२) समु. १००–१०१.

(३) स्मृच. १।१; वबा. ५२७–५२८ मात्र्युशनोयमाः (मो लिखितो यमः); पमा. १।९८ वसिष्ठ (वशिष्ठ); संम. २; पप्र. १५.

(४) स्मृच. १।१; वबा. ५२८; पमा. १।९८ गुरुः (भृगुः) योगी बौ (योगिबो) महौ (महाः); संम. २; पप्र. १५ गुरुः (भृगुः).

(५) स्मृच. १।२; वबा. ५२८ कश्यपो (काश्यपो); पमा. १।९८; संम. २ तुः कश्यपो (तुकाश्यपौ) कार्ष्णाजिनि (कात्यायन); पप्र. १५.

[1]आवालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः ।
इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः ॥

(१) मन्वादिप्रणीतानामेव धर्मशास्त्राणां वेदमूलत्वादेव तान्येव धर्मे प्रमाणानीति तदधिगमोपयोगितया तच्छास्त्रप्रणेतारः प्रथमं प्रदर्श्यन्ते । तत्र पैठीनसिः- तेषां मन्वङ्गिर इति ।

ननु किमियं परिसंख्या ? नैवम्, तथा सति वत्समरीचिदेवलपारस्करपुलस्त्यपुलहक्रतुऋष्यशृङ्गलिखितच्छागलेयादीनां धर्मशास्त्रप्रणेतृत्वं न स्यात् । न च तथाऽस्त्विति वाच्यम्, तेषामपि वेदमूलस्मृतिशास्त्रप्रणेतृत्वेन मन्वादिभ्योऽविशेषात् । अत एव शङ्खः 'मनुयमदक्षविष्ण्वङ्गिरोबृहस्पत्युशनआपस्तम्बगौतमसंवर्तात्रेयहारीतकात्यायनशङ्खलिखितपराशरव्यासशातातपप्रचेतोयाज्ञवल्क्यादयः' इति आदिग्रहणं कृतवान् । अतः प्रदर्शनार्थमेव परिगणनं न्याय्यम् । ¶ स्मृच. १।१-२

(२) षट्त्रिंशदिति न परिसंख्या । तेन विश्वामित्रादीनामपि धर्मप्रणेतृत्वं सिद्धम् । एवमायुर्वेदादीनामपि स्मृतित्वम् । तत्र केचन दृष्टमूला अर्थाः । एवं पुराणादीनामपि । संम. २

(३) ब्रह्मसंभवः ब्रह्मगर्भः । पप्र. १६

धर्मपरिषत्

[2]अलोलुपा ब्रह्मात्मिका धर्मशास्त्रप्रणेतारोऽमत्सरिणो दशैव तद्धर्मं व्यवस्यन्तीति वेदपारगाः ॥

प्रणेतारः प्रवर्तयितारः । अत्र इतिकरणो हेतौ । इति अतः वेदपारगाः धर्मं व्यवस्यन्ति । दश इति पुरुषाभिप्रायम्, न गुणभेदेन गुणवत्परम्, गुणानामल्पभूयसां तत्र तत्राभिधानात् । व्रक. ३७

चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्धर्मपाठकाः ।
वेदपारग एकश्च तत्प्रमाणमसंशयम् ॥

[1]अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥

## अङ्गिराः

चोदनालक्षणो धर्मः, चोदना लिङादिरूपा

[2]धर्मः स्याच्चोदनाप्रोक्तस्तदन्यस्तूपचारतः ।
लिङ्गा( ? लिङा )दिरूपा सा ज्ञेया मुक्तिदा श्रुतिचोदिता ॥

श्रुत्युक्तलिङ्लोट्तव्यप्रत्ययलक्षणलक्षिता ।
चोदना सैव नान्या सा पुराणस्मृतिचोदिता ॥

धर्मपरिषत्प्रायश्चित्तप्रमाणानि, चतुर्विंशतिः स्मृतिकर्तारः

[3]अथ त्रयाणां वक्ष्यामि प्रमाणं विधिमादितः ।
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ॥
प्रायश्चित्तं चतुष्पादं विहितं धर्मकर्तृभिः ।
परिषद्दशधा प्रोक्ता त्रिविधा वा समासतः ॥

[4]प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः ।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः ॥

[5]प्रमाणसहितं यत्स्यात्तत्सर्वं गम्यते सुखम् ।
अप्रमाणप्रमेयस्य दुःखेनाधिगमो भवेत् ॥

[6]तस्मादङ्गिरसा पुण्यं धर्मशास्त्रमिदं कृतम् ।
उपस्थानव्रतादेशचर्याशुद्धिप्रकाशनम् ॥
स धर्मस्तु कृतो ज्ञेयः स्वाधिष्ठानक एव वै ।
चतुर्भिः साधनैश्चैव धर्मः प्रोक्तः सनातनः ॥

---

¶ पमा. स्मृचगतम् ।

(१) स्मृच. १।२ ; वदा. ५२८ ; पमा. १।९८ लौगा (लोका) यः स्मृताः (यस्तथा) ; संम. २ ; पप्र. १६ यः स्मृताः (यस्तथा).

(२) व्रक. ३७.

(१) व्रक. ४० मनुवसिष्ठयमबौधायनपैठीनसयः .

(२) पूर्वाङ्गिस्मृ. ३-४.

(३) उत्तराङ्गिस्मृ. १।२, ३.

(४) व्रक. ४४ ; प्रपा. ३ ; मुक्ता. २.

(५) उत्तराङ्गिस्मृ. १।४ पूर्वार्धे ( प्रमाणाभिहितं यत्तु सर्वमङ्गिरसा तदा । ) तृतीयचरणे ( अप्रमेयप्रमाणस्य) ; व्रक. ४४ ; प्रपा. ३ सुखम् ( सुखात् ).

(६) उत्तराङ्गिस्मृ. १।५-६.

[1]वचः पूर्वमुदाहार्यं यथोक्तं धर्मकर्तृभिः ।
पश्चात्कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥
[2]यत्पूर्वमृषिभिः प्रोक्तं धर्मशास्त्रमनुत्तमम् ।
तत्प्रमाणं तु सर्वेषां लोकधर्मानुवर्णनम् ॥
न हि तेषामतिक्रम्य वचनानि महात्मनाम् ।
प्रज्ञानैरपि विद्वद्भिः शक्यमन्यत्प्रभाषितुम् ॥
[3]स्वाभिप्रायकृतं कर्म विधिविज्ञानवर्जितम् ।
क्रीडाकर्मेव बालानां तत्सर्वं स्यान्निरर्थकम् ॥
ज्ञानवर्जितं शास्त्रीयज्ञानवर्जितम् ।

§ व्रक. १८

एकविंशतिः स्मृतिकर्तारः

$[4]जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षि-
काश्यपौ ।
व्यासः सनत्कुमारश्च शंतनुर्जनकस्तथा ॥

[1]व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ।
बौधायनः कणादश्च विश्वामित्रस्तथैव च ॥
[2]पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ॥
[3]उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः ॥
[4]वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।
बभ्रुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ॥
[5]जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।
आत्रेयश्छागलेयश्च मरीचिर्वत्स एव च ॥
[6]पारस्करश्चर्ष्यशृङ्गो बैजवापस्तथैव च ।
इत्यन्ये स्मृतिकर्तार एकविंशतिरीरिताः ॥

---

§ कुर., पप्र. व्रकवत् ।

$ एतदादिवचनानां वीमिव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'मन्वत्रि०' इति श्लोके ( वक्रा. पृ. १६५ ) द्रष्टव्यम् । तथा 'कल्पे कल्पे क्षयोत्पत्त्या' इतिपराशरीयश्लोकस्य विमन्व्याख्यानं तदाश्रिता टिप्पणी च ( वक्रा. पृ. १७०–१७१ ) द्रष्टव्या ।

(१) उत्तराङ्गिरस्मृ. ११७ वचः (कृत्वा) ; पमा. २।१६२.

(२) उत्तराङ्गिरस्मृ. ११८–९.

(३) उत्तराङ्गिरस्मृ. ११९० ; विश्व. ११५० विधिविज्ञान (यत्तु धर्मवि) स्यान्निरर्थकम् ( निष्प्रयोजनम् ) ; व्रक. १८ विधिवि ( यत्किंचित् ) कर्मेव (कर्म च) स्यान्निरर्थकम् ( निष्प्रयोजनम् ) ; स्मृच. २१४३२ विधिवि ( यत्किंचित् ) स्यान्निरर्थकम् ( निष्प्रयोजनम् ) ; कुर. २४ स्मृचवत् ; पमा. ११२९१ स्मृचवत् ; व्यमव्याआ. ३६ स्मृचवत् ; मुक्ता. ३६४ स्मृचवत् ; पप्र. ११ स्मृचवत् ; बान. १७९ स्मृचवत् .

(४) स्मृच. ११२ लौगा (लोगा) ; प्रपा. १ (=) ; मुक्ता. ८ लौगा (लोका) ; विपा. ४१३०० शंतनु (शतद्रु) ; वीमि. ११४–५ चतुर्थचरणे (सुमन्तुश्च पितामहः) (=) ; पप्र. १८ प्रयोगपारिजाते ; बाल. ११४–५ पृ. १० काश्यपौ (कश्यपौ) शेषं विपावत् ; सस्मृ. ४.

(१) स्मृच. ११२ कर्ण्यः ( कर्णः ) बौधा ( बोधा ) ; प्रपा. १ तृतीयचरणे ( बौधायनश्च काणादो ) (=) ; मुक्ता. ८ कर्ण्यः ( कर्णिः ) बौधा ( बोधा ) ; विपा. ४१३०० कर्ण्यः ( कर्णः ) ; वीमि. ११४–५ कात्यायन (काष्र्ण्याजिनि) शेषं विपावत् प्रपावत् च (=) ; पप्र. १८ प्रपावत्, प्रयोगपारिजाते ; बाल. ११४–५ पृ. १० ; सस्मृ. ४ द्वितीयचरणे ( बोधायनश्च काणादो ) शेषं विपावत् .

(२) प्रपा. १ (=) ; मुक्ता. ८ ; वीमि. ११४–५ श्चेत्युप ( श्च उप ) ; पप्र. १८ ; सस्मृ. ४.

(३) स्मृच. ११२ ; विपा. ४१३०० ; बाल. ११४–५ पृ. १०.

(४) प्रपा. १ (=) ; मुक्ता. ८ (=) ; वीमि. ११४–५ (=) ; पप्र. १८ बभ्रुः ( विष्णुः ) प्रयोगपारिजाते ; सस्मृ. ४ बभ्रुः ( प्रतः ) कार्ष्णाजिनिः ( कृष्णाजिनः ) सत्यव्रतो ( सत्यः वृतो ) गार्ग्यश्च ( गर्गश्च ).

(५) प्रपा. १ (=) ; मुक्ता. ८ वत्स ( मत्स्य ) (=) ; वीमि. ११४–५ (=) ; पप्र. १८ यश्छागलेय ( यश्च गवेय ) प्रयोगपारिजाते ; सस्मृ. ५.

(६) प्रपा. १ प्रथमचरणे ( पारस्करो ऋष्यशृङ्गो ) (=) ; मुक्ता. ८ बैजवा ( वैजावा ) इत्यन्ये ( इत्येते ) शेषं सर्वं प्रपावत् ; वीमि. ११४–५ (=) ; पप्र. १८ प्रथमचरणे ( पारस्करश्चर्ष्यशृङ्गो ) बैजवा ( वैजावा ) इत्यन्ये ( इत्येते ) प्रयोगपारिजाते ; सस्मृ. ५ पूर्वार्धे ( पारस्करो ऋष्यशृङ्गः पैजावापस्तथैव च । ).

[1]यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम् ।
न हि तत्समतिक्रम्य वचनं हितमात्मनः ॥

यत्र पुनर्मानवस्य स्मृत्यन्तरेण विरोधः तत्र मनूक्त एव श्रेयान् । तदाहाङ्गिराः— यत्पूर्वमिति । मनूक्तमतिक्रम्य अन्यदीयं वचनम् आत्मनः ज्ञानाय न भवति ।

स्मृच. १।१६–१७

[2]... ... .... यथावद्धर्मपाठकाः ।
ते तथा तत्र कल्पेयुर्विमृशन्तः परस्परम् ॥
[3]आपद्धर्मेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ।
परिषत्संपदश्चैव कार्याणां च बलाबलम् ॥
[4]प्राप्य देशं च कालं च यच्च कार्यान्तरं भवेत् ।
पर्षत्संचिन्त्य तत्सर्वं प्रायश्चित्तं विनिर्दिशेत् ॥
[5]सर्वेषां निश्चितं यत्स्याद्यच्च प्राणान्न पातयेत् ।
आहूय श्रावयेदेकः पर्षदा यो नियोजितः ॥
[6]चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणाः समवायस्थाः पर्षदित्यभिधीयते ॥

समवायस्थाः मिलिताः । ब्रक. ३८

[7]अनाहिताग्नयो ये तु केवलं वेदपारगाः ।
पञ्चैते वेदशास्त्रज्ञाः पर्षत्संज्ञा ह्युदाहृताः ॥
[8]ये तु धर्मविदो विप्राः कार्याकार्यविचक्षणाः ।
प्रायश्चित्तप्रणेतारः सप्तैते परिकीर्तिताः ॥

(१) स्मृच. १।१६ ; प्रपा. ३ ; मुक्ता. ६ मात्मनः ( मात्मकम् ) ; आन. १२.

(२) उत्तराङ्गिरस्मृ. ३।६ ; पमा. २।१८२ कल्पेयु ( जल्पेयु ).

(३) उत्तराङ्गिरस्मृ. ३।७ आपद्ध (आसध) ; पमा. २।१८३.

(४) उत्तराङ्गिरस्मृ. ३।८ पर्षत्संचिन्त्य ( परिषच्चिन्त्य ) ; पमा. २।१८३.

(५) उत्तराङ्गिरस्मृ. ३।९ चतुर्थचरणे ( यः परिषन्नियोजितः ) ; पमा. २।१८३ पात ( घात ).

(६) उत्तराङ्गिरस्मृ. ४।३ वन्तोऽग्नि (वेदाग्नि) पू. ; अप. १।९ ; ब्रक. ३८ ; पमा. २।१६६ पू.

(७) अप. १।९ तु (च) ; ब्रक. ३८.

(८) उत्तराङ्गिरस्मृ. ४।३–४ पूर्वार्धे ( ये तु सम्यक्स्थिता विप्राः कार्याकार्यविनिश्चिताः । ) ; अप. १।९ ; ब्रक. ३८ ; पमा. २।१६६ पूर्वार्धे (ये सम्यङ्नियता विप्राः कार्याकार्यविनिश्चिताः । ) सप्तैते परि ( सप्त तेऽपि प्र ).

[1]एकविंशतिसंख्याकैः श्रुतिसन्न्यायपारगैः ।
सावित्रीमात्रसारैस्तु चीर्णवेदव्रतैर्द्विजैः ।
वेदाङ्गकुशलैश्चैव पर्षत्त्वं तु प्रकल्पयेत् ॥

वेदशास्त्रज्ञाः वेदस्य उपकरणं शास्त्रं मीमांसा तज्ज्ञाः विहितनिषिद्धतत्त्वज्ञाः । गुणापकर्षादेकविंशतिसंख्यत्वम् ।

ब्रक. ३८–३९

[2]यतीनां सत्यतपसां ज्ञानविज्ञानवेदिनाम् ।
शिरोव्रतेन स्नातानामेकोऽपि परिषद्भवेत् ॥
[3]ये तु पूर्वं मया प्रोक्ताः स्थिता यायावरे पथि ।
त्रयोऽपि परिषज्ज्ञेयाः सर्वपापापहारिणः ॥

(१) यतिशास्त्रप्रसिद्धं शिरोव्रतम् । एकः अपि परिषत्कार्यकर इत्यर्थः । यायावरः गृहस्थविशेषः ।

अप. १।९

( २ ) ज्ञानं तत्त्वार्थबोधः । विज्ञानं लौकिकवैदिकविद्याधारणम् । शिरोव्रतं वेदाध्ययनसमाप्तौ सर्वविद्याव्रतम् । परिषत् भवेत् परिषद्वत् भवेत् । यद्यपि 'हिंसानुग्रहयोरनारम्भी' ( गौध. ३।२५ ) इति तैरनुग्रहो निषिद्धः, तथापि 'आर्तानां मार्गमाणानाम्' (उत्तराङ्गिस्मृ. ७।१)इत्यादिवचनादुपस्थितस्य प्रायश्चित्ता-

(१) उत्तराङ्गिरस्मृ. ४।४–५ प्रथमार्धे (एकविंशतिमिश्रान्यैः पार्षदत्वं समागतैः । ) तृतीयार्धं नास्ति ; अप. १।९ द्वितीयार्धं नास्ति ; ब्रक. ३८ कैः श्रुतिसन्न्याय (तैर्मीमांसावेद) द्वितीयार्धं नास्ति ; पमा. २।१६६ प्रथमार्धे (एकविंशतिमिश्रान्यैः परिषत्त्वं समागतैः । ) तृतीयार्धं नास्ति ; वीमि. १।९ कैः श्रुतिसन्न्याय (तैर्मीमांसान्याय) वेदाङ्ग (वेदार्थ) पर्षत्त्वं तु (परिषत्त्वं) द्वितीयार्धं नास्ति.

(२) उत्तराङ्गिरस्मृ. ४।५ पूर्वार्धे ( यतीनामात्मविद्यानां ध्यायिनामात्मवेदिनाम् । ) व्रतेन (व्रतैश्च) ; अप. १।९ वेदिनाम् ( चेतसाम् ) ; ब्रक. ३८ ; पमा. २।१६६ पूर्वार्धे ( यतीनामात्मविद्यानां ध्यायिनामात्मयाजिनाम् । ) व्रतेन ( व्रतैश्च ).

(३) अप. १।९ हारिणः ( हारकाः ) ; ब्रक. ३८.

दाने दोषश्रुतेः शास्त्राननुमतानुग्रहनिषेधपरता (अपि ?) अस्येति गम्यते । पूर्वे ' वेदवन्तोऽग्निहोत्रिणः ' इत्यत्र श्लोके । यायावराः शिलोञ्छादिवृत्तयो व्रतशीलाग्निहोत्रिणः । ब्रक. ३९

[1]एवं पूर्वं मयाऽप्युक्तं तेषां ये ये परे परे ।
स्ववृत्त्या परितुष्टानां परिषत्त्वमुदाहृतम् ॥
[2]एषा तु लघुकार्येषु मध्यमेषु च मध्यमा ।
महापातकशोध्येषु शतशो भूय एव च ॥

(१) महापातकिनश्च ते शोध्याश्च महापातकिशोध्याः । अप. १।९

(२) लघुषु स्वल्पपातकेषु । महापातकसाध्येषु, महापातकशोधने अन्यत् । ब्रक. ३९

[3]अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः ।
परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि ॥
[4]जन्मशारीरविद्याभिराचारेण श्रुतेन च ।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥
[5]चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥
[6]चातुर्वैद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
त्रयश्चाऽऽश्रमिणो मुख्याः पर्षदेषा दशावरा ॥

---

(१) **उत्तराङ्गिरस्मृ.** ४।६.

(२) **उत्तराङ्गिरस्मृ.** ४।७ प्रथमचरणे ( एषां लघुषु कार्येषु) शोध्येषु (चिन्तासु) एव च ( एव वा ) ; **अप.** १।९ मेषु च ( मेषु तु ) पातक ( पातकि ) ; **ब्रक.** ३८ शोध्येषु (साध्येषु) ; **पमा.** २।१६७ पूर्वार्धे (एषां लाघवकार्येषु मध्यमेषु तु मध्यमाः । ) शोध्येषु ( चिन्तासु ).

(३) **उत्तराङ्गिरस्मृ.** ४।८ ; **ब्रक.** ३८ धारकाः ( बोधकाः ).

(४) **उत्तराङ्गिरस्मृ.** ४।९ ; **पमा.** २।१७१.

(५) **उत्तराङ्गिरस्मृ.** ४।१० विंधि ( मंन्त्र ) ; **अप.** १।१३ पृ. २६ देवलः ; **ब्रक.** ७४ ; **हमा.** १८८ रङ्गै (रागै) ; **पमा.** २।१७१ ; **प्रपा.** ३ ; **संत.** ८५७ चित्रक ( चित्रं क ) ; **मुक्ता.** ७२ ; **संप्र.** १३६ : ३३८ (=).

(६) **उत्तराङ्गिरस्मृ.** ५।१ ; **अप.** १।९ वैंद्यो (विंद्यो) कल्पी (तर्की) मुख्याः (वृद्धाः) ; **भमा.** ३।२

[1]चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।
स्वैः स्वैरङ्गैर्विनाऽप्येते चातुर्वैद्या इति स्मृताः ॥
[2]धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद्द्विजः ॥
[3]शब्दे छन्दसि कल्पे च शिक्षायां च सुनिश्चितः ।
ज्योतिषामयने चैव सनिरुक्तेऽङ्गविद्भवेत् ॥

ज्योतिषामयने ज्योतिःशास्त्रे । सनिरुक्ते निरुक्तसहिते । ब्रक. ४१

[4]वेदविद्याव्रतस्नातः कुलशीलसमन्वितः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥
[5]ब्रह्मचर्याश्रमादूर्ध्वं वृद्धा आश्रमिणस्त्रयः ।
वदेयुस्तस्य ते धर्मं ये मया परिकीर्तिताः ॥

---

(चातुर्वैद्यो विकल्पी च नैरुक्तो धर्मपाठकः । ब्रह्मचारी गृही भिक्षुः पर्षदेषा दशावरा ॥ ) स्मृत्यन्तरम् .

(१) **उत्तराङ्गिरस्मृ.** ५।२ ; **अप.** १।९ वेदानां (वर्णानां) उत्तरार्धे ( यथाक्रमं विनोपाङ्गैश्चातुर्विद्यमिति स्मृतम् ॥ ) ; **ब्रक.** ४० वेदानां ( वर्णानां ) उत्तरार्धे ( यथा वेदे विनाऽप्यङ्गैश्चातुर्विद्यमिति स्मृतम् ॥ ) ; **पमा.** २।१७७.

(२) **उत्तराङ्गिरस्मृ.** ५।३ ; **अप.** १।९ विकल्पी (वितर्की) ; **ब्रक.** ४० दश्चैव (दस्यैव) यः (च); **पमा.** २।१७७.

(३) **उत्तराङ्गिरस्मृ.** ५।४ च सुनिश्चितः (चैव निश्चयः); **अप.** १।९ निश्चितः (निष्ठितः) तृतीयचरणे ( ज्योतिःशास्त्रे च कुशलः ) ; **ब्रक.** ४० पूर्वार्धः पतितः ; **पमा.** २।१७७.

(४) **उत्तराङ्गिरस्मृ.** ५।५ प्रोच्यते (पठ्यते ); **अप.** १।९ द्वितीयचरणे (सत्यसंधो जितेन्द्रियः); **ब्रक.** ४०–४१ अपवत् ; **पमा.** २।१७७–१७८ ; **निप्र.** १।६९ अनेक (अनेन) उत्त. ; **वीमि.** १।९ अपवत् .

(५) **उत्तराङ्गिरस्मृ.** ५।६ ( ब्रह्मचर्याश्रमादूर्ध्वमाश्रमाद्वृद्ध उच्यते । एषामेव तु वृद्धानां य एते संप्रकीर्तिताः ॥ ) ; **विश्व.** १।९ (ब्रह्मचार्याश्रमादूर्ध्वं त्रय आश्रमिणः स्मृताः ।) पू. ; **अप.** १।९ ये (ते); **ब्रक.** ४१ ; **पमा.** २।१७८ द्वितीयचरणे (विप्रोऽयं वृद्ध उच्यते । ) पू. ; **निप्र.** १।६९ प्रथमचरणमात्रम् .

'परिषद्या ब्राह्मणानां सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा चैव पर्षद्वच्च व्रतं स्थितम् ॥

इदं द्वैगुण्यादि क्षत्रियादीनां शोध्यानाम् । यच्च व्रते द्वैगुण्यं तत् प्रतिलोमोत्कृष्टवर्णवधतत्स्त्रीगमनादिविषये चोक्तम् । ब्रक. ४१

'आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।
जानन्तो न प्रयच्छन्ति ते च यान्ति समं तु तैः ॥
तस्मादार्तं समासाद्य ब्राह्मणं तु विशेषतः ।
जानद्भिः पर्षदः पन्था न हातव्यः पराङ्मुखैः ॥
अनर्थितैरनाहूतैरपृष्टैश्च यथाविधि ।
प्रायश्चित्तं न दातव्यं जानद्भिरपि च द्विजैः ॥
तस्माज्ज्ञैः प्रदातव्यमनुज्ञाप्य च पर्षदम् ।
न चान्येषु प्रजल्पत्सु चैवं धर्मो न हीयते ॥
पातकेषु शतं पर्षत् सहस्रं महदादिषु ।
उपपापेषु पञ्चाशत् स्वल्पं स्वल्पेषु निश्चयः ॥

## प्रचेताः

वेदशास्त्रज्ञा एव धर्मे प्रमाणम्

'अमीमांसा बहिःशाखा ये चान्ये वेदवर्जिताः ।
यत्ते ब्रूयुर्न तत्कुर्याद्वेदाद्धर्मो विधीयते ॥

## गर्गः

वैदिकस्मार्तसदाचाराणां पूर्वं बलवत्तरम्

'यो वैदिकमनादृत्य कर्म स्मार्तैतिहासिकम् ।
मोहात्समाचरेद्विप्रो न स पुण्येन युज्यते ॥

'प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठः प्रधानं तु हित्वा गच्छत्यधोगतिम् ॥

(१) एतद्विद्यमानवैदिकसामर्थ्यविषयम् । स्मृच. २।४१२

(२) सत्यामपि वैदिकानुष्ठानशक्तौ न स्मार्तमात्रेण परितुष्येत् । तदाह स एव–यो वैदिकमिति । ¶ पमा. १।२९२

(३) इति साक्षाद्वेदोक्तकर्मविरोध(? धि)स्मृत्युक्तकर्मवर्जनस्य स्नातकव्रतत्वेन गणनाद्दर्शाग्निहोत्रकर्मलोपनिमित्तभूतं त्रेताग्निमुत्सृज्य तीर्थगमनं निषिध्यते । निप्र. २।५३१

(४) श्रौतस्मार्तयोरुभयोः समावेशे श्रौतं कृत्वा स्मार्तं कर्तव्यम्, श्रौतस्य प्रधानत्वात् । संप्र. ८९०

(५) गुणश्रेष्ठः अर्थित्वादिगुणविशिष्ट इत्यर्थः । ‡ आन. ५५९

'श्रौतं कर्म न चेच्छक्तः कर्तुं स्मार्तं समाचरेत् ।
अप्राप्यशक्तः करणे कुर्यादाचारमन्ततः ॥

---

(१) उत्तराङ्गिरस्मृ. ५।७ पूर्वार्धे (परिषद्ब्राह्मणानां च राज्ञां सा द्विगुणा स्मृता ।) स्थितम् (स्मृतम्) ; ब्रक. ४१ पूर्वार्धे (पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा स्मृता ।) स्थितं (स्मृतम्) ; पमा. २।१७८ पर्षद्वच्च (परिषच्च).

(२) उत्तराङ्गिरस्मृ. ७।१–२, ५–७.

(३) स्मृच. १।९ ; मुक्ता. ७.

(४) स्मृच. २।४१२ ; पमा. १।२९२–२९३ ; मर. १६४–१६५ मनादृत्य (मतादन्यत्) स्मार्तैति (स्मार्तेति) ; मुक्ता. १९ स्मार्तैति (स्मार्तेति), ३५५; संप्र. ८९० स्मार्तैतिहासि (स्मार्तेतिहास) युज्यते (लिप्यते) ; आन. १५७ स्मार्तैतिहासि (स्मार्तेतिहास) : ५५९ चरेद्वि (चरन्वि) शेषं पृ. १५७ वत्.

¶ मुक्ता. पमावत् ।

‡ शेषं पमावत् ।

(१) स्मृच. २।४१२ ; पमा. १।२९३ ; मर. १६५ तरत् (तरम्) ; निप्र. २।५३१ तं तथे (तमथे) उत्तरार्धे (गुणनिष्ठोऽतिप्रमाणं बाधयन् यात्यधोगतिम् ॥) (=) ; मुक्ता. १९ ; संप्र. ८९० तु (हि) ; आन. ५५९ निष्ठः (श्रेष्ठः).

(२) मुक्ता. १९ : ३५५ चतुर्थचरणे (समाचारं लभेद्बुधः) ; आन. १५७ चतुर्थचरणे (सदाचारं लभेद्बुधः) : ५५९ श्रौतं (श्रौत) शक्तः (शक्तौ).

## आश्वलायनः

चतुर्दश विद्यास्थानानि, तेषां धर्मे प्रामाण्यं च

(१)ते तु वेदान् समालोक्य ऋगादीनृषयः पुरा ।
ब्राह्मादीनि पुराणानि धर्मशास्त्रान्(?) प्रचक्रिरे ॥
मर्यादा स्थापिता पूर्वं धर्मशास्त्रच्छलेन तैः ।
तामतीत्य न वर्तन्ते सन्तोऽद्यापि द्विजोत्तमाः ॥
श्रुत्यर्थमपि गम्भीरं सुनिर्णीतमपि द्विजैः ।
सम्यग्वेत्तुमशक्यत्वाद्धर्मशास्त्रं कृतं पुरा ॥
अस्पष्टार्थान् पुराणांश्च(?) क्वचिदार्षत्वकारणात् ।
स्पष्टार्थायातिविस्तारां(?) क्वचिदाख्यानमाश्रिताः ॥
तस्मात्सारान् समुद्धृत्य पुराणांश्च(?) श्रुतेरपि ।
कृतानि धर्मशास्त्राणि मुनिभिस्तत्त्वदर्शिभिः ॥
(२)एवंभूतस्य धर्मस्य लक्षणानि शृणुष्व मे ।
साधनानि च शाखाश्च स्वरूपं च समासतः ॥
अङ्गानि चतुरो वेदा मीमांसान्यायविस्तराः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
चतुःषष्टिः कला विद्याश्चतुर्दशविभेदिताः ।
धर्मस्य शाखा उद्दिष्टाः प्रमाणांश्च(?) प्रयोजनाः(?) ॥
(३)श्रुतयः स्मृतयः सन्तः पुराणाश्चातिविस्तराः- (?) ।
प्रमाणाश्चतुरः(?) पुण्याः सदाचारस्य हि स्मृताः ॥
सद्भिराचरितत्वाच्च सदाचार इति स्मृतः ।
श्रुतिप्रत्ययधर्माणः सन्तो विप्रा मनीषिणः ॥
न हन्याद्धेतुभिर्वेदान् स्वानुमानेन पण्डितः ।

(१) आश्वस्मृ. १।२५-२७, २८-३१.

(२) आश्वस्मृ. २।६-८.

(३) आश्वस्मृ. १०।६-७, १६९-१७०.

मन्वादीन् धर्मशास्त्रांश्च (?) महाभारतमेव च ।
महात्मनां च चरितमकृत्यमपि मानवः ॥
(१)योगशास्त्रप्रणेतारः पिशङ्गा नाम योगिनः ।
तेषां कथितवानादौ वायुर्वायव्यमुत्तमम् ।
पुराणं शिवदं साक्षाच्छिवमाहात्म्यसूचकम् ॥
(२)अग्निमीळादिकां शाखामृचामाद्यामनुत्तमाम् ।
मदीयां प्रातवानादौ शाकलोऽयं द्विजोत्तमः ॥
अनेन मत्तो या प्राप्ता शाकलेन तपस्विना ।
सा शाकलकसंज्ञाऽऽसीन्मदीया चोत्तमोत्तमा ॥
चतुर्विंशतिधा भेद ऋचामार्षो निगद्यते ।
तेषामाद्योऽहमग्रश्च प्रसादादभवं मुनेः ॥
चतुर्विंशतिशाखानां गृह्यमेकं मयोदितम् ।
सविकल्पं भवेत्सिद्ध्यै विप्राणां गार्ह्यकर्मणाम् ॥
सूत्रं पञ्चविधं प्रोक्तं श्रौतस्येह प्रवृत्तये ।
आद्यं मदीयमुदितं द्वितीयं बाष्कलं स्मृतम् ॥
कौषीतकं तृतीयं स्याद्ब्राह्मण्यं स्याच्चतुर्थकम् ।
भारद्वाजं पञ्चमं तु पञ्चधैव मयोदितम् ॥
चतुर्णामपि सूत्राणां मत्तो योऽन्यं विचक्षणाः ।
असामान्यत्वमालोक्य नाऽऽद्रियन्त्यृषयस्तु तान् ॥
चतुर्विंशतिशिष्याणामस्माकं भगवान्मुनिः ।
गुरुरेकोऽभवद्धीमाञ्छौनकस्तपसां निधिः ॥
तस्यापि भगवान् पैलो व्यासशिष्यो महातपाः ।
व्यासस्यापि शिवः साक्षाद्गुरुर्विश्वगुरुर्वरः ॥
वासिष्ठशक्तितो जातः पिता व्यासस्य धीमतः ।
पराशराह्वयः श्रीमान् बाल एवर्षितां गतः ॥
शिवमभ्यर्च्य शाक्तेयो भक्त्या तीव्रतपा मुनिः ।
पुत्रं नारायणं लेभे व्यासरूपिणमीश्वरम् ।
पुराणमुख्यकर्ता च सोऽभवन्मुनिपुङ्गवः ॥
व्यासश्च तपसा लेभे पुत्रमीशात्तदा शुकम् ।
महाभारतकृत्साक्षादभवच्छिवतृप्तये ॥

(१) आश्वस्मृ. ११।२२४-२२५.

(२) आश्वस्मृ. ११।३५३-३७४.

पाराशर्यो विशुद्धात्मा शिवमाहात्म्यगोचरम् ।
योगमार्गरतं शुद्धं शिवात्मा भगवाञ्छुकः ।
शिवाज्ञया कलौ नृणां हितकृच्चरति क्षमाम् ॥
नृणां कर्मणि मूढानां कलौ कल्मषचेतसाम् ।
हिताय चोदितः पित्रा पुराणं प्रोक्तवाञ्छुकः ॥
प्रागात्मनोऽस्थितं शम्भुर्विष्णुना प्रभविष्णुना ।
गुणानुकथने तस्माच्छिव एव शुकोऽभवत् ॥
वरदानप्रसिद्ध्यर्थमात्मनो जगतामिह ।
हिताय चोक्तवान् दिव्यं पुराणं वैष्णवं महत् ॥
अहं च शिवमाराध्य ज्ञानमेतदलब्धवान् (?) ।
सूत्रं गृह्यं च मत्प्रोक्तं तस्मान्मुख्यत्वमृच्छति ॥
मत्सूत्रस्यातिमुख्यत्वाद्गृह्यस्य च महर्षिभिः ।
वृत्त्यादीनि कृतान्येव संत्यजस्व कृतान्यपि ॥
तेषां तु मान्त्रवैषम्यं ज्ञात्वा प्राग्दीर्घचक्षुषा ।
शास्त्रमेतत्तु कृतवान् वृत्तिं सूत्रस्य चाप्यहम् ॥

## विश्वामित्रः

वेदधर्मशास्त्रशिष्टाचाराणां प्रामाण्यम्

[1]वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचारस्तृतीयस्तु त्रिविधं धर्मलक्षणम् ॥

## कश्यपः

स्मृतिकर्तारः अष्टादश

[2]सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥
रोमशः पौलशिश्चैव च्यवनो यवनो भृगुः ।
शौनकोऽष्टादशैवैते ज्योतिःशास्त्रप्रवर्तकाः ॥

## पुलस्त्यः

स्मृत्यपेक्षया कल्पसूत्रस्य प्रामाण्यम्

[3]तुल्यार्थानां विकल्पः स्यान्न्यायमूलः प्रकीर्तितः ।
वेदे तु विदितो धर्मः स्मृतौ तादृश एव तु ॥

(१) प्रपा. २.
(२) संम. २.
(३) पुलस्त्यस्मृ. २५

‡श्रौतानां कर्मणां क्लृप्तिः कल्पसूत्रं तदुच्यते ।
तथैव गृह्यकल्पानां स्मार्तानामुपसंग्रहः ॥
शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न लक्ष्यते ॥

कल्पसूत्रस्मृत्योर्विरोधे प्रत्यक्षश्रुतिमूलत्वेन कल्पसूत्रं प्रबलमित्याह हेमाद्रौ संग्रहे पुलस्त्यः— श्रौताना-मित्यादि । ‡ प्रपा. ३

## अग्निवेश्यः

अष्टादशसूत्राणां कालक्रमेण पूर्वोत्तरभावः

[1]बोधायनमापस्तम्बं सत्याषाढं द्राह्यायणमागस्त्यं शाकल्यमाश्वलायनं शांभवीयं कात्यायनमिति नवानि पूर्वसूत्राणि । वैखानसं शौनकीयं भारद्वाजमाग्निवेश्यं जैमिनीयं माधुर्यं माध्यंदिनं कौण्डिन्यं कौषीतकमिति नवान्यपरसूत्राणि ॥

## चतुर्विंशतिमतम्

चतुर्विंशतिः धर्मशास्त्रप्रणेतारः

[2]मनुना याज्ञवल्क्येन विश्वामित्रेण चात्रिणा ।
विष्णुना च वसिष्ठेन व्यासेनोशनसा तथा ॥
[3]आपस्तम्बेन वत्सेन हारीतगुरुनारदैः ।
पराशरेण गर्गेण गौतमेन यमेन च ॥
[4]शातातपेन शङ्खेन संवर्तेन तथैव च ।
बौधायनेन सांख्येन दक्षेणाङ्गिरसा तथा ॥

‡ इन्दु. प्रपावत् ।

(१) प्रपा. ३ ; इन्दु. ४ पौलस्त्यः .
(२) प्रपा. ३ ; बौवि. १।१।१३ चतुर्थचरणे (सूक्ष्मा दुरनुगा गतिः) (=) ; इन्दु. ४ पौलस्त्यः .
(३) मुक्ता. ९.
(४) चम. १ ; समु. ६ तृतीयचरणे (..वसिष्ठाभ्यां) ग्रन्थस्त्रुटितः (=) ; चमव्या. २.
(५) चम. २ गुरु (मनु) परा (पारा) ; समु. ७ न वत्सेन (नागस्त्येन) गर्गेण (गार्ग्येण) श्लोकक्रमो नाऽऽदर्शग्रन्थानुसारी (=) ; चमव्या. २.
(६) चम. ३ शङ्खेन (सांख्येन) सांख्येन दक्षेणा (दक्षेण शङ्खेना) ; समु. ७ (शातातपेनाङ्गिरसा संवर्तेन्

'चतुर्विंशतिभिः शास्त्रं दृष्टं लोकहिते रतैः ।
धर्मसंरक्षणार्थाय संक्षेपेण महात्मभिः ॥

एतैः चतुर्विंशतिभिः शास्त्रं वक्ष्यमाणं दृष्टम् इत्यन्वयः। किमर्थम्? तत्राऽऽह– संक्षेपेण अल्पायासेनैव धर्मस्य सम्यक् रक्षणमेव अर्थः प्रयोजनम् , तस्मै । रक्षणं चेह शाब्दोऽनुभवः । चमव्या. २

'एतज्ज्ञात्वा द्विजः शीघ्रं धर्मं स्मरति तत्त्वतः ।
तस्मात्सर्वप्रयत्नेन शास्त्रमेतदुदीरयेत् ॥

नन्वसौ आशुविनाशित्वात्कथं कालान्तरभाविकर्मानुष्ठाने उपयुज्यतामित्याशङ्कयाऽऽह– एतज्ज्ञात्वेति । द्विजः त्रैवर्णिकः । तथा च स्मरणद्वारा उपयुज्यत इति भावः । उदीरयेत् अध्यापयेत् इत्यर्थः । चमव्या. २

शास्त्रविरोधि लौकिकवाक्यमप्रमाणम्

'स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत् ॥

( १ ) अथ कन्यानिरीक्षणादिषु कारिकागृह्यपरिशिष्टयोः क्रमव्यत्यये सति सविशेषं गृह्यपरिशिष्टोक्तमेवानुसंधेयम्, आचार्येणोक्तत्वात् , 'तथैव लौकिकं...' इति वचनाच्च । ... गृह्यपरिशिष्टकारशौनकोक्तवाक्ययोर्विरोधे परिशिष्टोक्तमेवानुसंधेयम् , आचार्येणोक्तत्वात् । प्रपा. ३५५

( २ ) एवं च हेमाद्र्यादिनिबन्धोदाहृतस्मृतिविरोधे गृह्यपरिशिष्टोक्तमेव सुतरामुचितमाश्वलायनशाखिनाम् ,

'बहल्पं वा स्वगृह्योक्तम्' इति शास्त्रात्स्मृतीनां शाखान्तरविषयत्वसंभवाच्च । † संको. २१९–२२०

शूद्रो धर्मनिर्णये नाधिकारी

'श्वचर्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः ।
तद्वच्छूद्रमुखाद्वाक्यं न श्रोतव्यं कदाचन ॥

'पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च ।
वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ॥

'शूद्रो ज्ञानावलेपेन ब्राह्मणान् भाषते यदि ।
स याति नरकं घोरं यावदाभूतसंप्लवम् ॥

'कृष्णसर्पं द्विजं दुष्टं शूद्रं च प्रतिपादकम् ।
गर्दभं जारजातं च दूरतः परिवर्जयेत् ॥

सदाचारलक्षणम्

'यस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानामन्तरालानां स सदाचार उच्यते ॥

'येषु देशेषु ये विप्रा देवास्तीर्थानि मृत्तिकाः ।
तत्र तन्नावमन्येत धर्माचारांश्च तत्र ये ॥

---

च विष्णुना । बौधायनेन दक्षेण शङ्खेन लिखितेन च । गोभिलेन सुमन्तुना मनुस्वायंभुवेन च ॥ ) श्लोकक्रमोऽपि नाऽऽदर्शानुसारी (=) ; चमव्या. २.

(१) चम. ४ ; समु. ७ पूर्वार्धे ( अष्टाविंशतिकैः स्पृष्टं शास्त्रं लोकहिते रतैः । ) (=) ; चमव्या. २.

(२) चम. ५ द्विजः (द्विजाः) स्मरति (स्मरन्ति) ; चमव्या .२.

(३) चम. १९२ स्मृतेर्वेदवि ( स्मृत्यर्थादव ) बाधात्प (बाधं प) ; स्मृच. १।१६ ; प्रपा. ३ प्रथमचरणे (स्मृतेः श्रुतिविरोधे तु) बाधात्प (बाधे प) : ३५५ उत्त. (=) ; मुक्ता. ७ स्मृति (श्रुति) ; संको. २२० बाधात्प ( बाधे प ) उत्त. (=) ; इन्दु. ५ सर्वं संकोवत् .

† शेषं प्रपानुवादः । इन्दु. संकोगतम् ।

(१) चम. २२८ ब्राह्मणा ( ब्रह्मवा ) ; समु. ४८ चमवत् , मनुः ; पमा. २।१७५ कदाचन ( कथंचन ) ; शूशि. ६१ पमावत् .

(२) चम. २२९ ; समु. ४८ चतुर्थचरणे (शुचौ देशे समाददत् ) मनुः ; पमा. २।१७५–१७६ ; शूशि. ६१ हविर्यथा ( यथा हविः ).

(३) चम. २३० पूर्वार्धे (शूद्रो ज्ञानबलोपेतो ब्राह्मणान् द्विषते यदि । ) ; पमा. २।१७६ लेपेन (लेपात्तु) दाभूत (दाहूत) ; शूशि. ६१.

(४) चम. २३३ पूर्वार्धे (कृष्णसर्पं द्विजं नष्टं शूद्रं चैवातिवादिनम् । ) ; पमा. २।१७६.

(५) चम. ३१४–३१५ ; मुक्ता ५ उत्तरार्धे (श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते ॥ ) संस्कारमञ्जर्याम्; संवी. २।७ तृतीयचरणे (वर्णानां चैव सर्वेषां).

(६) चम. ३१६ मृत्तिकाः ( मृत्तिका ) रांश्च तत्र ये (रांश्च तत्र यान् ) ; आर. ३५ तन्ना (तान्ना).

[1]येन स्वपितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं न गच्छन्नपि ( ? तेन गच्छन्न ) दुष्यति ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

धर्मनिर्णेतृपरिषत्

वेदवेदाङ्गविद्विप्रा धर्मशास्त्रबहुश्रुताः ।
स्वकर्मनिरता दान्तास्तेषां पापं न विद्यते ॥

गायत्रीसारमात्रा ये संध्यामात्राभ्युपासकाः ।
अज्ञानात्कृषिकुर्वाणा ब्राह्मणा नामधारकाः ॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
आसहस्रमितानां च पर्षत्त्वं नैव विद्यते ॥

ये वदन्ति तमोमूढा मूर्खा धर्ममजानता( ? तः ) ।
तत्पापं शतधा भूत्वा तेनैव( ? तानेव ) प्रतिगच्छति ॥

अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं करोति यः ।
प्रायश्चित्ती भवेत्पूतः पापं परिषदं व्रजेत् ॥

चत्वारोऽपि त्रयो वाऽपि यद्ब्रूयुर्वेदपारगाः ।
स धर्म इति विज्ञेयो नेतरेषां कदाचन ॥

एकोऽपि वेदविद्धर्मं यं वै पश्येद्द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामयुतेन तु ॥

प्रमाणमात्रं तं कृत्वा ये धर्मं प्रवदन्ति वै ।
तेषां प्रणश्यते पापं सद्रूपगुणवाचकम् ॥

[2]यथा भूमिगतं तोयं मारुतार्के वि( ? कैर्वि )शुष्यति ।
एवं तु पर्षदा दृष्टं नश्यत्येनः सुदुःखकृत् ॥

[1]नैव गच्छति कर्तारं नैव गच्छति पर्षदम् ।
मारुतार्काग्नि(?ग्नि)संयोगात् पापं नश्यति तोयवत् ॥

[2]चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणास्तु समर्था ये तेषां पर्षद्विधीयते ॥

त्रेताग्निधारका विप्राः श्रुताध्ययनशीलिनः ।
पञ्चयज्ञानपेतास्तु तेषार्षत्परिकीर्तिताः- ( ? तेषां पर्षत्प्रकीर्तिता ) ॥

स्वजने परजने वा तु समाः सर्वेषु जन्तुषु ।
मित्रामित्रौ च येषां ते तेषां पर्षत्प्रशस्यते ॥

[3]वेदपाठकमात्रा ये धर्मशास्त्रविवर्जिताः ।
पर्षत्त्वं नैव तेषां स्यान्नास्तिकानां विशेषतः ॥

[4]वेदपूर्णमुखा विप्रा धर्मशास्त्रसमन्विताः ।
ज्ञानिनः कृतकर्माणस्तेषां पर्षत्प्रशस्यते ॥

[5]अनाहिताग्नयोऽज्ञानात्केवला वेदपाठकाः ।
पिशुनाः क्रूरकर्माणस्तेषां पर्षन्न विद्यते ॥

[6]शास्त्रज्ञा दुष्टकर्माणः प्रतिकूलास्त्वसूयकाः ।
हैतुका भिन्नमर्यादाः परिषत्त्वे विवर्जिताः ॥

[7]गायत्रीसारमात्रा ये धर्मशास्त्रसमन्विताः ।
मुनिमार्गानुगन्तारो ज्ञानिनां यज्ञयाजिनाम् ॥

(१) चम. ३२०–३२१, ३२४–३३१.

(२) चम. ३३२; पमा. २।१६४ ( यथा भूमिगतं तोयमर्कपादैर्विनश्यति । एवं परिषदादिष्टं नश्यते तस्य दुष्कृतम् ॥ ).

(१) चम. ३३३ ; पमा. २।१६४ उत्तरार्धे (मारुतार्कसमायोगात्पापं नश्यति तोयवत् ॥ ).

(२) चम. ३३४–३३६.

(३) चम. ३३७ ; पमा. २।१६० प्रथमचरणे ( वेदपाठाद्यनियता ) पर्षत्त्वं नैव (परिषत्त्वं न ).

(४) चम. ३३८.

(५) चम. ३३९ ; पमा. २।१६० द्वितीयचरणे ( केवलं वेदपारगाः) चतुर्थचरणे ( परिषत्त्वं न विद्यते ).

(६) चम. ३४० (शत्रवो दुष्टकर्माणः प्रतिकूलास्तु मूर्खकाः । हैतुका भिन्नमर्यादास्तेषां पर्षद्विवर्जिता ॥ ); पमा. २।१६०.

(७) चम. ३४१–३४६.

वेदव्रतेषु स्मार्ता ये धर्मशास्त्रानुयायिनः ।
गोब्राह्मणशरण्या ये तेषां पर्षत्प्रकीर्तिता ॥
पूर्वे ये ये मया प्रोक्ता ये चान्ये अपरे परे ।
स्ववृत्तपर( ? परि )पुष्टा ये पूर्णभूतात्( ? ताः ) पु( ? प )राहताः ॥
अत ऊर्ध्वं तु ये केचिद्ब्राह्मणा नामधारकाः ।
पर्षत्त्वं नैव मन्यन्ते सहस्रगुणितैरपि ॥
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥
चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वद्धि शुद्धिसंस्कारविस्तरैः ॥
[1]प्रायश्चित्तं प्रयच्छन्ति ब्राह्मणा नामधारकाः ।
ते सर्वे पापकर्माणः समेता नरकं ययुः ॥

समेतः नामधारकैः संगतः । तावतैवापराधेन मन्त्रसंस्कृतोऽपि नरकं प्राप्नोति । पमा. २।१७१

[2]वेदाः प्रमाणं स्मृतयः प्रमाणं
धर्मेण युक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत्प्रमाणं
न तस्य वाक्यं भवति प्रमाणम् ॥

साङ्गवेदमानवस्मृतिपुराणादीनां स्वतः प्रामाण्यम्

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥
यन्नास्ति वेदे न च यत्पुराणे
रामायणे भारतसागरे वा ।
मन्वादिशास्त्रेषु च यन्न चोक्तं
तन्नास्ति नास्तीति न तेन कार्यम् ॥

वेदविरुद्धस्मृतीनामप्रामाण्यम्, वेदज्ञानसाधनानि च

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
मन्त्रब्राह्मणयोर्वेदस्ततः कल्पस्तु पठ्यते ।
एतैश्च यज्ञकर्माणि 'त्रिधा बद्ध' इति श्रुतेः ॥
ततो व्याकरणादीनि अङ्गानि स्मृतिभिः सह ।
इतिहासपुराणानि धर्मशास्त्राणि चैव हि ॥
एतैस्तु वेदो विज्ञेयस्तस्माद्वेदः स उच्यते ।
अन्यान्यपि च वाक्यानि तद्गुणानि स एव हि ॥
[1]अर्हच्चार्वाकवाक्यानि बौद्धादिपठितानि च ।
विप्रलम्भकवाक्यानि तानि सर्वाणि वर्जयेत् ॥
[2]पृथिव्यां व्यवहारा यैर(? ये अ)र्पिता न्यायवर्तिभिः ।
ते सर्वे चामृतं चिन्त्या नरैर्लोकहिते रतैः ॥
यदुच्छिष्टं भवेल्लोके मुनिभिः परिभाषितम् ।
तत्सर्वं चिन्तयेद्धर्मं गौतमो मुनिरब्रवीत् ॥

## वायुपुराणं ब्रह्माण्डपुराणं च

प्रथमं ब्रह्मप्रोक्तं पुराणम्, तदुत्तरं वेदवेदाङ्गधर्मशास्त्रादयः

[3]प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
अङ्गानि धर्मशास्त्रं च व्रतानि नियमास्तथा ॥
[4]यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥
[5]इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥

(१) चम. ३४७ ; पमा. २।१७१ ब्राह्मणा ( ये द्विजा ) चतुर्थचरणे ( समेतो नरकं व्रजेत् ).

(२) चम. ४११–४१७.

(१) चम. ४१८ ; स्मृच. १।११ तानि च ( तान्यपि ) ; पमा. १।१० च ( तु ) ; मुक्ता. ७.

(२) चम. ५२१–५२३.

(३) वायु. १।१।५४–५५ ; ब्रह्माण्ड. १।१।४०–४१ स्मृतम् (श्रुतम्) निर्गताः (निःसृताः).

(४) वायु. १।१।१८० ; ब्रह्माण्ड. १।१।१७० दो द्विजः (दान् द्विजाः) पू.

(५) वायु. १।१।१८१ ; ब्रह्माण्ड. १।१।१७१ प्रतरि (प्रहरि).

[1]यस्मात्पुरा ह्यनितीदं पुराणं तेन तत्स्मृतम् ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

श्रौतस्मार्तधर्मशिष्टाचाराः तेषां प्रवक्तारश्च

[2]तत्र त्रेतायुगस्याऽऽदौ मनुः सप्तर्षयश्च ते ।
श्रौतं स्मार्तं च धर्मं च ब्रह्मणा च प्रचोदितम् ॥

[3]दाराग्निहोत्रसंयोगमृग्यजुःसामसंश्रितम् ।
इत्यादिलक्षणं श्रौतं धर्मं सप्तर्षयोऽब्रुवन् ॥

[4]परम्परागतं धर्मं स्मार्तं चाऽऽचारलक्षणम् ।
वर्णाश्रमाचारयुतं मनुः स्वायम्भुवोऽब्रवीत् ॥

[5]सत्येन ब्रह्मचर्येण श्रुतेन तपसा च वै ।
तेषां सुतप्ततपसामार्षेयेण क्रमेण तु ॥

[6]सप्तर्षीणां मनोश्चैव आद्ये त्रेतायुगस्य तु ।
अबुद्धिपूर्वकं तेषामक्रियापूर्वमेव च ॥

[7]अभिव्यक्तास्तु ते मन्त्रास्तारकाद्यैर्निदर्शनैः ।
आदिकल्पे तु देवानां प्रादुर्भूतास्तु ते स्वयम् ॥

[8]प्रणाशे त्वथ सिद्धीनामप्यासां च प्रवर्तनम् ।
आसन् मन्त्रा व्यतीतेषु ये कल्पेषु सहस्रशः ।
ते मन्त्रा वै पुनस्तेषां प्रतिभासससमुत्थिताः ॥

(१) वायु. १।१।१८३ ; ब्रह्माण्ड. १।१।१७३ ह्यनितीदं (ह्यभूच्चैतत् ).

(२) वायु. १।५७।३९ ; ब्रह्माण्ड. २।२४।४३–४४ तत्र ( अत्र ) धर्मं च ( ते धर्मे ) णा च प्र (णाऽनुप्र).

(३) वायु. १।५७।४० ; ब्रह्माण्ड. २।२४।४४–४५ संयोग ( संबन्ध ) संश्रि ( संहि ) योऽब्रुवन् ( यश्च ये ).

(४) वायु. १।५७।४१ ; ब्रह्माण्ड. २।२४।४५–४६.

(५) वायु. १।५७।४२ ; ब्रह्माण्ड. २।२४।४६–४७ उत्तरार्धे ( तेषां तु तप्ततपसा आर्षेणोपक्रमेण तु ॥ ).

(६) वायु. १।५७।४३ ; ब्रह्माण्ड. २।२४।४७–४८ द्वितीयचरणे ( ह्याद्ये त्रेतायुगे तथा ).

(७) वायु. १।५७।४४ ; ब्रह्माण्ड. २।२४।४८–४९ ते स्वयम् ( याः स्वयम् ).

(८) वायु. १।५७।४५ ; ब्रह्माण्ड. २।२४।४९–५० शे त्वथ (शेष्वथ) प्यासां (न्यासां) ससमुत्थिताः (यामुपस्थिताः ).

[1]ऋचो यजूंषि सामानि मन्त्राश्चाऽऽथर्वणानि च ।
सप्तर्षिभिस्तु ते प्रोक्ताः स्मार्तं धर्मं मनुर्जगौ ॥

[2]अतः शिष्टान् प्रवक्ष्यामि सतः साधूंस्तथैव च ।
सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत ।
सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रचक्षते ॥

[3]दशात्मके ये विषये कारणे चाष्टलक्षणे ।
न क्रुध्यन्ति न हृष्यन्ति जितात्मानस्तु ते स्मृताः ॥

[4]सामान्येषु च धर्मेषु तथा वैशेषिकेषु च ।
ब्रह्मक्षत्रविशो युक्ता यस्मात्तस्माद्द्विजातयः ॥

[5]वर्णाश्रमेषु युक्तस्य स्वर्गगोमुखचारिणः ।
श्रौतस्मार्तस्य धर्मस्य ज्ञानाद्धर्मश्च उच्यते ॥

[6]विद्यायाः साधनात्साधुर्ब्रह्मचारी गुरोर्हितः ।
क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते ॥

[7]साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः ।
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥

[8]एवमाश्रमधर्माणां साधनात्साधवः स्मृताः ।
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ॥

(१) वायु. १।५७।४६ ; ब्रह्माण्ड. २।२४।५१ च (तु).

(२) वायु. १।५९।१९ ; ब्रह्माण्ड. २।२७।१९–२० सायुज्यं ब्रह्मणोऽत्यन्तं ( साजात्याद्ब्रह्मणस्त्वेते ).

(३) वायु. १।५९।२० ; ब्रह्माण्ड. २।२७।२१.

(४) वायु. १।५९।२१ ; ब्रह्माण्ड. २।२७।२२ च ध (तु ध) युक्ता यस्मात्त (यस्माद्युक्तास्त).

(५) वायु. १।५९।२२ र्मश्च ( र्मः स ) ; ब्रह्माण्ड. २।२७।२३ गोमु ( तौ सु ).

(६) वायु. १।५९।२३ ; ब्रह्माण्ड. २।२७।२४ क्रियाणां (गृहाणां).

(७) वायु. १।५९।२४ ; ब्रह्माण्ड. २।२७।२५.

(८) वायु. १।५९।२५ ; ब्रह्माण्ड. २।२७।२६ ऽथ भिक्षुकः (यतिस्तथा).

[1]न च देवा न पितरो मुनयो न च मानवाः ।
अयं धर्मो ह्ययं नेति ब्रुवते भिन्नदर्शनाः ॥

[2]धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ ।
कुशलाकुशलं कर्म धर्माधर्माविति स्मृतौ ॥

[3]धारणा धृतिरित्यर्थाद्धातोर्धर्मः प्रकीर्तितः ।
अधारणेऽमहत्त्वे च अधर्म इति चोच्यते ॥

[4]अत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
अधर्मश्चानिष्टफलो ह्याचार्यैरुपदिश्यते ॥

[5]वृद्धा ह्यलोलुपाश्चैव आत्मवन्तो ह्यदम्भकाः ।
सम्यग्विनीता ऋजवस्तानाचार्यान् प्रचक्षते ॥

[6]स्वयमाचरते यस्मादाचारं स्थापयत्यपि ।
आचिनोति च शास्त्रार्थान् यमैः सं( ? स )-नियमैर्युतः ॥

[7]पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ।
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि च श्रुतिः ॥

[8]मन्वन्तरस्यातीतस्य स्मृत्वाऽऽचारं पुनर्जगौ ।
तस्मात्स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागजः ॥

(१) वायु. १।५९।२६ ; ब्रह्माण्ड. २।२७।२७ न च देवा (अथ देवा) मानवाः (मानुषाः) ब्रुवते (विन्दते).

(२) वायु. १।५९।२७ ; ब्रह्माण्ड. २।२७।२८ विति स्मृतौ (विह स्मृतम् ).

(३) वायु. १।५९।२८ ; ब्रह्माण्ड. २।२७।२९ पूर्वार्धे ( धारणार्थो धृतिश्चैष धातुः शब्दे प्रकीर्तितः । ) णेऽम ( णाम ).

(४) वायु. १।५९।२९ उत्तरार्धं नास्ति ; ब्रह्माण्ड. २।२७।३० अत्रेष्ट ( अयेष्ट ).

(५) वायु. १।५९।२९ ; ब्रह्माण्ड. २।२७।३१ द्धा ह्यलो (द्धाश्चालो) द्वितीयचरणे (त्वात्मवन्तो ह्यदाम्भिकाः).

(६) वायु. १।५९।३० ; ब्रह्माण्ड २।२७।३२ उत्तरार्धे (आचिनोति च शास्त्राणि आचार्यस्तेन चोच्यते ॥).

(७) वायु. १।५९।३१ ; ब्रह्माण्ड. २।२७।३४-३५.

(८) वायु. १।५९।३२ ; ब्रह्माण्ड. २।२७।३५-३६ रं पुन (रान् मनु) भागजः (भाजकः).

[1]स एष द्विविधो धर्मः शिष्टाचार इहोच्यते ।
शेषशब्दाच्छिष्ट इति शिष्टाचारः प्रचक्ष्यते- ( ? रं प्रचक्षते ) ॥

[2]मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ।
मनुः सप्तर्षयश्चैव लोकसंतानकारणात् ।
धर्मार्थं ये च शिष्टा वै याथातथ्यं प्रचक्षते ॥

[3]मन्वादयश्च ये शिष्टा ये मया प्रागुदीरिताः ।
तैः शिष्टैश्चरितो धर्मः सम्यगेव युगे युगे ॥

[4]त्रयी वार्ता दण्डनीतिरिज्या वर्णाश्रमास्तथा ।
शिष्टैराचर्यते यस्मान्मनुना च पुनः पुनः ।
पूर्वैः पूर्वगतत्वाच्च शिष्टाचारः स शाश्वतः ॥

[5]दानं सत्यं तपोऽलोभो विद्येज्याप्रजनौ( ? नं ) दया ।
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ॥

[6]शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च वै ।
मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ॥

[7]श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ।
शिष्टाचाराविरुद्धश्च धर्मः सत्साधुसंमतः ॥

(१) वायु. १।५९।३३ ; ब्रह्माण्ड. २।२७।३६-३७ द्विवि (विवि) उत्तरार्धे (शेषशब्दः शिष्ट इति शेषं शिष्टं प्रचक्षते ॥ ).

(२) वायु. १।५९।३४ ; ब्रह्माण्ड. २।२७।३७-३८ तृतीयार्धे (धर्मार्थं ये च तिष्ठन्ति ताञ्छिष्टान् वै प्रचक्षते ॥ ).

(३) वायु. १।५९।३५ ; ब्रह्माण्ड. २।२७।३९.

(४) वायु. १।५९।३६ ; ब्रह्माण्ड. २।२७।४०-४१ शाश्वतः (सात्वतः).

(५) वायु. १।५९।३७ ; ब्रह्माण्ड. २।२७।४१-४२ ऽलोभो (ज्ञानं) प्रजनौ (यजनं).

(६) वायु. १।५९।३८ ; ब्रह्माण्ड. २।२७।४२-४३ श्च वै (स्तु वै).

(७) वायु. १।५९।५१ संमतः ( संगतः ) ; ब्रह्माण्ड. २।२७।५६-५७.

[1]अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश ॥
[2]आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्यास्त्वष्टादशैव तु ॥
[3]यस्य चाऽऽर्षं न प्रमाणं शिष्टाचारं तथैव च ।
वर्णाश्रमविरोधी यः शिष्टशास्त्रविरोधकः ।
एष मार्गो हि निरधितिर्यग्योनौ च कारणम् ॥
[4]वर्णाश्रमाचारयुताः शिष्टाः शास्त्राविरोधिनः ॥
[5]नारायणप्रणीतं यत्तन्त्रं वेदोपबृंहितम् ।
तदेव वैदिकैर्ग्राह्यं नान्यद्गौतमशापतः ॥

मात्स्यादीनि पुराणानि, तेषां श्लोकसंख्या

शौनकादिऋषय ऊचुः—

[6]सूत सूत महाभाग त्वया भगवता सता ।
व्यासप्रसादाधिगतशास्त्रसंबोधनेन च ॥
अष्टादश पुराणानि सेतिहासानि चानघ ।
उपक्रमोपसंहारविधिनोक्तानि कृत्स्नशः ॥
चतुर्दशसहस्रं च मात्स्यं प्रोक्तमतिस्फुटम् ।
तत्संख्याकं भविष्यं च प्रोक्तं पञ्चशताधिकम् ॥
मार्कण्डेयं महारम्यं प्रोक्तं नवसहस्रकम् ।
कथितं ब्रह्मवैवर्तमष्टादशसहस्रकम् ॥
शतोत्तरं च ब्रह्माण्डं सूर्यसंख्यासहस्रकम् ।
अथ भागवतं दिव्यमष्टादशसहस्रकम् ॥
सहस्राणि दशैवोक्तं पुराणं ब्रह्मनामकम् ।
अयुतश्लोकघटितं पुराणं वामनाभिधम् ॥
तथैवायुतसंख्यातं षट्शताधिकमादिकम् ।
त्रयोविंशतिसाहस्रमनिलं तद्गतं शुभम् ॥
त्रयोविंशतिसाहस्रं नारदीयमुदाहृतम् ।
एकोनविंशसाहस्रं वैनतेयमुदाहृतम् ॥
सहस्रपञ्चपञ्चाशत्प्रोक्तं पाद्मं सुविस्तरम् ।
सप्तदशसहस्रं तु कूर्मं प्रोक्तं मनोहरम् ॥
चतुर्विंशतिसाहस्रं सौकरं परमाद्भुतम् ।
एकाशीतिसहस्राणि स्कान्दमुक्तं सुविस्तृतम् ॥
‡एवमष्टादशोक्तानि पुराणानि बृहन्ति च ।
पुराणेष्वेषु बहवो धर्मास्ते विनिरूपिताः ॥
रागिणां च विरागाणां यतीनां ब्रह्मचारिणाम् ।
गृहस्थानां वनस्थानां स्त्रीशूद्राणां विशेषतः ।
ब्राह्मणक्षत्रियविशां ये च संकरजातयः ॥
ब्राह्मं शैवं वैष्णवं च सौरं शाक्तं तथाऽऽर्हतम् ।
षड्दर्शनानि चोक्तानि स्वभावनियतानि च ॥
एतदन्यच्च विविधं पुराणेषु निरूपितम् ॥

## मार्कण्डेयपुराणम्

अष्टादश पुराणानि धर्मशास्त्रप्रमाणम्

[1]उत्पन्नमात्रस्य पुरा ब्रह्मणोऽव्यक्तजन्मनः ।
पुराणमेतद्वेदाश्च मुखेभ्योऽनुविनिःसृताः ।
पुराणसंहिताश्चक्रुर्बहुलाः परमर्षयः ॥
[2]अष्टादश पुराणानि यानि प्राह पितामहः ।
तेषां तु सप्तमं ज्ञेयं मार्कण्डेयं सुविश्रुतम् ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥
वाराहं द्वादशं प्रोक्तं स्कान्दमत्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥

(१) वायु. १।६१।७८; ब्रह्माण्ड. २।३०।८७–८८ स्त्वेताश्च (श्चेमाश्च).
(२) वायु. १।६१।७९; ब्रह्माण्ड. २।३०।८८–८९ श्चैव (श्चेति) द्यास्त्वष्टा (द्या ह्यष्टा).
(३) वायु. २।४०।७०–७१; ब्रह्माण्ड. ४।३।४९–५० चाऽऽर्षं (चाऽऽर्षे) विरोधी (विरुद्धो) निरधिति (निरये ति).
(४) वायु. २।४०।९६; ब्रह्माण्ड. ४।३।७४ युताः शिष्टाः (युक्तः शिष्टः) रोधिनः (रोधनः).
(५) विपा. ३।२।५२१ (ब्रह्माण्डे षोडशाध्याये).
(६) वायु. २।४२।१–१३, १६–१७.

‡ एवंपदपरामृष्टानां षोडशत्वात्पुराणद्वयविषयकः श्लोकः प्रभ्रष्ट इत्यवगम्यते ।
(१) मार्क. ४२।२०–२१.
(२) मार्क. १३४।७–१३, १८.

एतत्पुराणमखिलं वेदार्थैरुपबृंहितम् ।
धर्मशास्त्रैकनिलयं श्रुत्वा सर्वार्थमाप्नुयात् ॥

## मत्स्यपुराणम्

प्रथमं ब्रह्मप्रोक्तं पुराणम्, तदुत्तरं वेदादयः प्रोक्ताः, वेदोक्तधर्मेषु वेदविदामाचारेषु च अष्टानामात्मगुणानां प्राधान्यम्

**मत्स्य उवाच–**

[1]तपश्चचार प्रथममसराणां पितामहः ।
आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः ॥
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।
मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः ॥
[2]वेदोऽखिलो धर्ममूलमाचारश्चैव तद्विदाम् ॥
[3]अष्टावात्मगुणास्तस्मिन् प्रधानत्वेन संस्थिताः ।
दया सर्वेषु भूतेषु क्षान्ती रक्षाऽऽतुरस्य तु ॥
[4]अनसूया तथा लोके शौचमन्तर्बहिर्द्विजाः ।
अनायासेषु कार्येषु माङ्गल्याचारसेवनम् ॥
[5]न च द्रव्येषु कार्पण्यमार्तेषूपार्जितेषु च ।
तथाऽस्पृहा परद्रव्ये परस्त्रीषु च सर्वदा ॥
[6]अष्टावात्मगुणाः प्रोक्ताः पुराणस्य तु कोविदैः ॥

वेदानामपौरुषेयत्वम्

[7]अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः ॥

(१) मत्स्य. ३।२–४.

(२) मत्स्य. ५२।७ ; मपा. १३.

(३) मत्स्य. ५२।८ ; मपा. १३ तु (च).

(४) मत्स्य. ५२।९ ; मपा १३ लेषु ( सत्सु ) माङ्गल्या (मङ्गला).

(५) मत्स्य. ५२।१० ; मपा. १३ मार्तेषूपा (मात्मपाण्य) द्रव्ये परस्त्रीषु (स्त्रीषु परार्थेषु).

(६) मत्स्य. ५२।११ ; मपा. १३ णस्य तु (णे चैव).

(७) पमा. १।१०२–१०३.

ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदान्विप्रा आत्मनि संस्थितान् ॥
ब्रह्मणा चोदितो विष्णुर्व्यासरूपी द्विजोत्तमाः ।
हिताय सर्वभूतानां वेदभेदान् करोति सः ॥

अष्टादशपुराणश्लोकसंख्या

**मुनय ऊचुः–**

[1]पुराणसंख्यामाचक्ष्व सूत विस्तरशः क्रमात् ॥

**सूत उवाच–**

[2]इदमेव पुराणेषु पुराणपुरुषस्तदा ।
यदुक्तवान् स विश्वात्मा मनवे तन्निबोधत ॥

**मत्स्य उवाच-**

[3]पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
[4]पुराणमेकमेवाऽऽसीत्तदा कल्पान्तरेऽनघ ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥
[5]निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया ।
अङ्गानि चतुरो वेदान् पुराणं न्यायविस्तरम् ॥
[6]मीमांसां धर्मशास्त्रं च परिगृह्याऽऽत्मसात्कृतम् ।
मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ॥
[7]अशेषमेतत्कथितमुदकान्तर्गतेन च ।
श्रुत्वा जगाद च मुनीन् प्रति देवांश्चतुर्मुखः ॥

(१) मत्स्य. ५३।१ ; चवा. ५३४.

(२) मत्स्य. ५३।२ ; चवा. ५३४ (इममेव पुरा प्रश्नं नोदितः पुरुषोत्तमः । यदुवाच स विश्वात्मा मुनयस्तन्निबोधत ॥ ).

(३) मत्स्य. ५३।३ ; चवा. ५३० ; सस्मृ. ६ च (तु) निर्गताः (निःसृताः).

(४) मत्स्य. ५३।४ ; चवा. ५३० सीत्तदा (सीदस्मिन्); सस्मृ. ६ रेऽनघ (रे नृप).

(५) मत्स्य. ५३।५; चवा. ५३० वेदान् ( वेदाः ) चतुर्थचरणे ( पुराणन्यायविस्तराः ).

(६) मत्स्य. ५३।६ ह्याऽऽत्मसात्कृ ( ह्य मया कृ ); चवा. ५३० प्रथमचरणे ( मीमांसा–धर्मशास्त्राणि ).

(७) मत्स्य. ५३।७ ; चवा. ५३० प्रति देवांश्च ( प्रतिवेदश्च ).

**[1]प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।**
**कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥**
**[2]व्यासरूपमहं कृत्वा संहरामि युगे युगे ।**
**चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥**
**[3]तथाऽष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रकाश्यते ।**
**अद्यापि देवलोकेऽस्मिञ्छतकोटिप्रविस्तरम् ॥**
**[4]तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेशितः ।**
**पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते ॥**
**[5]नामतस्तानि वक्ष्यामि शृणुध्वं मुनिसत्तमाः ।**
**ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ॥**
**[6]ब्राह्मं त्रिदशसाहस्रं पुराणं परिकीर्त्यते ॥**
**[7]एतदेव यदा पद्ममभूद्धैरण्मयं जगत् ।**
**तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः ।**
**पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह कथ्यते ॥**
**[8]वाराहकल्पवृत्तान्तमधिकृत्य पराशरः ।**
**यत्प्राह धर्मानखिलांस्तद्युक्तं वैष्णवं विदुः ॥**

(१) मत्स्य. ५३।८ ; चवा. ५३० नाग्र ( न ग्र ) नृप ( नृपम् ).

(२) मत्स्य. ५३।९ ; चवा. ५३०.

(३) मत्स्य. ५३।१० ; चवा. ५३० तथाऽष्टा ( तदष्टा ) काश्यते ( भाष्यते ) ऽस्मिञ्छ ( तच्छ ).

(४) मत्स्य. ५३।११ ; चवा. ५३० वेशि ( वेदि ) : ५३५ उत्त. ; विपा. ४।३०४ उत्त.

(५) मत्स्य. ५३।१२ ; चवा. ५३५ ध्वं मुनि ( ध्वमृषि ) ; विपा. ४।३०४ चदावत् ; बाल. १।३ पृ. ५ उत्त.

(६) मत्स्य. ५३।१३ ; चवा. ५३५ त्रिदश ( तद्दश ) ; विपा. ४।३०४ चदावत् ; बाल. १।३ पृ. ५ चदावत् .

(७) मत्स्य. ५३।१४ ; चवा. ५३५ शत्सह ( शत्साह ) कथ्यते ( पठ्यते ) ; विपा. ४।३०४ रण्मयं ( रन्मयं ) त्सहस्राणीह कथ्यते ( त्साहस्रमिह पठ्यते ) ; बाल. १।३ पृ. ५ पद्ममभूद्धै (पाद्मं स्रष्टुं है) णीह कथ्यते ( णीति पठ्यते ).

(८) मत्स्य. ५३।१६ ; चवा. ५३५ यत्प्राह ( यत्राऽऽह ) ; विपा. ४।३०४ चदावत् ; बाल. १।३ पृ. ५ वाराह ( वराह ) शेषं चदावत् .

**[1]त्रयोविंशतिसाहस्रं तत्प्रमाणं विदुर्बुधाः ॥**
**[2]श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।**
**यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ।**
**चतुर्विंशत्सहस्राणि पुराणं तदिहोच्यते ॥**
**[3]यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।**
**वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥**
**[4]सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरोत्तमाः ।**
**तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥**
**[5]अष्टादश सहस्राणि पुराणं तत्प्रचक्षते ॥**
**[6]यत्राऽऽह नारदो धर्मान् बृहत्कल्पाश्रितांस्त्विह ।**
**पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ॥**

(१) मत्स्य. ५३।१७ ; चवा. ५३५ त्प्रमाणं (त्पुराणं); विपा. ४।३०५ चदावत् ; बाल. १।३ पृ. ५ चदावत्.

(२) मत्स्य. ५३।१८ ; चवा. ५३५; विपा. ४।३०५ शत्सह (शसह) ; बाल. १।३ पृ. ५ (श्वेतकल्पप्रसङ्गेन रुद्रमाहात्म्यसंयुतान् । यत्राब्रवीत्स धर्मात्मा वायुर्धर्मानशेषतः । चतुर्विंशतिसाहस्रं वायवीयं तदुच्यते ॥ ).

(३) मत्स्य. ५३।२० ; चवा. ५३५–५३६ ; विपा. ४।३०५ ; वीमि. १।३ त्राधिकृत्य (त्रोपक्रम्य) त्रीं वर्ण्य (त्रीमुच्य) (=); बाल. १।३ पृ. ५.

(४) मत्स्य. ५३।२१ ; चवा. ५३६ रोत्तमाः (रामराः); विपा. ४।३०५ चदावत् ; बाल. १।३ पृ. ५ रोत्तमाः (राधमाः).

(५) मत्स्य. ५३।२२ ; चवा. ५३६ त्प्रचक्षते (त्प्रकीर्तितम्) ; विपा. ४।३०६ द्वितीयचरणे ( तत्पुराणं प्रकीर्तितम् ) ; बाल. १।३ पृ. ५ (तदष्टादशसाहस्रं पुराणं परिकीर्तितम् । ).

(६) मत्स्य. ५३।२३ श्रितांस्त्विह (श्रयाणि च) ; चवा. ५३६; विपा. ४।३०६ विंशत्स (विंशस); बाल. १।३ पृ. ६ श्रितांस्त्विह (श्रितान्पुनः) विंशत्स (त्रिंशत्स).

[1]यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणा ।
व्याख्याता वै मुनिप्रश्ने मुनिभिर्धर्मचारिभिः ॥
[2]मार्कण्डेयेन कथितं तत्सर्वं विस्तरेण तु ।
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ॥
[3]यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ।
वसिष्ठायाग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते ॥
[4]तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम् ॥
[5]यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्स्थितिम् ।
मनवे कथयामास भूतग्रामस्य लक्षणम् ॥
[6]चतुर्दश सहस्राणि तथा पञ्च शतानि च ।
भविष्यचरितप्रायं भविष्यं तदिहोच्यते ॥
[7]पर्वाणि चात्र पञ्चैव कीर्तितानि स्वयंभुवा ।
प्रथमं कथ्यते ब्राह्मं द्वितीयं वैष्णवं स्मृतम् ॥
तृतीयं वज्रमाख्यातं चतुर्थं त्वाष्ट्रमेव च ।
पञ्चमं प्रातिभाष्यं च सर्वलोकेषु पूजितम् ॥
[8]रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यमुत्तमम् ॥

[1]यत्र ब्रह्मवराहस्य चोदन्तं वर्णितं मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते ॥
[2]यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ।
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ॥
[3]कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ।
तदेकादशसाहस्रं .................. ॥
[4]महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तमाः ।
चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥
[5]यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः ।
कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ॥

---

(१) मत्स्य. ५३।२५ ; चवा. ५३६ चारणा (चारणम्) पू. ; विपा. ४।३०६ सर्वे चदावत् ; बाल. १।३ पृ. ६ सर्वे चदावत्.

(२) मत्स्य. ५३।२६ ; चवा. ५३६ उत्त. ; विपा. ४।३०६ उत्त. ; बाल. १।३ पृ. ६ उत्त.

(३) मत्स्य. ५३।२८ कल्पस्य (कं कल्पं) ; चवा. ५३६ ; विपा. ४।३०७ ; बाल. १।३ पृ. ६ यत्तदी (यत्र चे).

(४) मत्स्य. ५३।३० ; चवा. ५३६ तच्च (एतत्) ; विपा. ४।३०७ चदावत् ; बाल. १।३ पृ. ६ चदावत्.

(५) मत्स्य. ५३।३१ ; चवा. ५३६–५३७ त्स्थितिम् (त्पतिः) मनवे (नवमे) ; विपा. ४।३०७ मुखः (मुख) शेषं चदावत् ; बाल. १।३ पृ. ६ त्स्थितिम् (त्पतिः).

(६) मत्स्य. ५३।३२ ; चवा. ५३७ ष्यचरि (ष्यच्चरि) ष्यं तदि (ष्यत्तदि) ; विपा. ४।३०७ चदावत् ; बाल. १।३ पृ. ६. (७) बाल. १।३ पृ. ६.

(८) मत्स्य. ५३।३४ ; चवा. ५३७ मुत्तमम् (संयुतम्) ; विपा. ४।३०७ चदावत् ; बाल. १।३ पृ. ६ पू.

(१) मत्स्य. ५३।३५ ; चवा. ५३७ चोदन्तं वर्णितं (चरितं वर्ण्यते) ; विपा. ४।३०७ चदावत् ; बाल. १।३ पृ. ६ पूर्वार्धे (यत्र ब्रह्मा वराहस्य चरितानि जगाद ह । ).

(२) मत्स्य. ५३।३७ ; चवा. ५३७ ; विपा. ४।३०७ ; बाल १।३ पृ. ६.

(३) मत्स्य. ५३।३८ कल्पं तल्लै (कल्पान्ते लै) ; चवा. ५३७ ; विपा. ४।३०७ ; बाल. १।३ पृ. ६.

(४) मत्स्य. ५३।३९–४० ; चवा. ५३७ (महावराहस्य पुनर्माहात्म्यमधिकृत्य च । मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तम ॥ चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते । विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥ ) ; विपा. ४।३०७–३०८ (महावराहस्य पूर्णं माहात्म्यमधिकृत्य च । मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तम ॥ चतुर्विंशसहस्राणि तत्पुराणमिहोच्यते । विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥ ) ; बाल. १।३ पृ. ६ (महावराहमाहात्म्यमधिकृत्य च विष्णुना । क्षोण्यै प्रोक्तं मानवस्य कल्पस्यापि प्रसङ्गतः । चतुर्विंशतिसाहस्रं तद्वाराहमिहोच्यते ॥ ).

(५) मत्स्य. ५३।४२ षे वृत्ते (षं वृत्तं) ; चवा. ५३८ ; विपा. ४।३०८ षण्मुखः (षण्मुखम्) ; बाल. १।३ पृ. ६ तत्पुरुषे (किंपुरुषे).

[1]स्कान्दं नाम पुराणं च ह्येकाशीतिर्निगद्यते ।
सहस्राणि शतं चैकमिति मर्त्येषु गद्यते ॥
[2]त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधात्तच्च वामनं परिकीर्तितम् ॥
[3]पुराणं दशसाहस्रं कूर्मकल्पानुगं शिवम् ॥
[4]यत्र धर्मार्थकामानां मोक्षस्य च रसातले ।
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्यः शक्रसंनिधौ ।
अष्टादश सहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥
[5]श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ।
मत्स्यरूपेण मनवे नरसिंहोपवर्णनम् ॥
[6]अधिकृत्याब्रवीत् ¶सप्तकल्पवृत्तं मुनीश्वराः ।
तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥

[1]यदा च गारुडे कल्पे विश्वाण्डाद्गरुडोद्भवम् ।
अधिकृत्याब्रवीत्कृष्णो गारुडं तदिहोच्यते ॥
[2]तदष्टादशकं चैकं सहस्राणीह पठ्यते ॥
[3]ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥
[4]भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ।
तद्ब्रह्माण्डपुराणं च ब्रह्मणा समुदाहृतम् ॥
[5]चतुर्लक्षमिदं प्रोक्तं व्यासेनाद्भुतकर्मणा ।
मत्पितुर्मम पित्रा च मया तुभ्यं निवेदितम् ॥
इह लोकहितार्थाय संक्षिप्तं परमर्षिणा ।
इदमद्यापि देवेषु शतकोटिप्रविस्तरम् ॥

नारसिंहादीनि उपपुराणानि

[6]उपभेदान् प्रवक्ष्यामि लोके ये संप्रतिष्ठिताः ॥
[7]पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् ।
तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते ॥

---

¶ अत्र सप्तशब्दस्य सप्तमार्थकत्वे एकमेव बृहत्कल्पमधिकृत्य नारदीयमात्स्ययोः प्रवृत्तिरापद्यते, मात्स्ये कल्पानुकीर्तनाध्याये (२९०) बृहत्कल्पस्य सप्तमत्वेनानुक्रान्तत्वात् । नास्मिन् प्रकरणे समानकल्पमधिकृत्यानेकपुराणप्रवृत्तिर्दृश्यते, नापि कल्पानुकीर्तनानुक्रमसंख्यया कल्पपरिचयो दृश्यते । अतोऽत्र सद्यशब्दस्थाने सप्तशब्दस्य प्रामादिकत्वं संभाव्यते । कल्पानुकीर्तनाध्याये सद्यो नाम कल्पो नवमत्वेन परिगणितः ।

(१) मत्स्य. ५३।४३ ; चवा. ५३८ च ह्येका (तदेका) षु गद्यते (षु पठ्यते) ; विपा. ४।३०८ मर्त्येषु ( मर्तेषु ) शेषं चदावत् ; बाल. १।३ पृ. ६ च ह्येका ( तदेका ) षु गद्यते ( षु गीयते ).

(२) मत्स्य. ५३।४५ ; चवा. ५३८ त्तच्च (त्तत्र) ; विपा. ४।३०८ चदावत् ; बाल. १।३ पृ. ६ त्तच्च ( त्कृत्स्नं ) परिकी ( तत्प्रकी ).

(३) मत्स्य. ५३।४६ ; चवा. ५३८ ; विपा. ४।३०८ ; बाल. १।३ पृ. ६ गं शिवम् (षड्गि वै).

(४) मत्स्य. ५३।४७–४८ ; चवा. ५३८ ऋषिभ्यः ( ऋषीणां ) अष्टादश स ( सप्तदशस ) षङ्गिकम् (सङ्गिकम्) ; विपा. ४।३०८ शक्र (शत्रु) शेषं चदावत् ; बाल. १।३ पृ. ६ प्रथमपङ्क्तिर्न विद्यते, द्वितीयतृतीयचतुर्थपङ्क्तिषु (इन्द्रद्युम्नप्रसङ्गेन कूर्मरूपी जनार्दनः । ऋषीणामाह माहात्म्यं तच्च कौर्मं विदुर्बुधाः । सप्तदशसहस्रं च लक्ष्मीकल्पानुषङ्गिकम् ॥ ).

(५) मत्स्य. ५३।५० ; चवा. ५३८ रूपेण (रूपी च) ; विपा. ४।३०८ चदावत् ; बाल. १।३ पृ. ६ चदावत्.

(६) मत्स्य. ५३।५१ ; चवा. ५३८ मुनीश्वराः (मुनिव्रताः) तन्मात्स्य (तन्माहात्म्य) ; विपा. ४।३०८ चदावत् ; बाल. १।३ पृ. ६ मुनीश्वराः (मुनिव्रताः) मितिजा (मनुजा).

(१) मत्स्य. ५३।५३ ; चवा. ५३९ ; विपा. ४।३०९ ; बाल. १।३ पृ. ६.

(२) मत्स्य. ५३।५४ ; चवा. ५३९ दशकं चैकं (दश चैकं च) ; विपा. ४।३०९ चदावत् ; बाल. १।३ पृ. ६ चदावत्.

(३) मत्स्य. ५३।५५ ; चवा. ५३९ ; बाल. १।३ पृ. ३ ब्रह्मा (यत्र).

(४) मत्स्य. ५३।५६ ; चवा. ५३९ णं च ( णं तु ) ; बाल. १।३ पृ. ६ पू.

(५) मत्स्य. ५३।५८–५९. (६) मत्स्य. ५३।६०.

(७) मत्स्य. ५३।६० यत्प्रोक्तं (यत्रोक्तं) ; ब्रक. ३० तच्चाष्टा (तदष्टा) ; चव्र. २१ तच्चाष्टा (तत्राष्टा) ; चवा. ५३३ यत्प्रोक्तं (या प्रोक्ता) वर्णनम् ( वर्णना ) तच्चाष्टा (तत्राष्टा) ; कूर. ३१ ब्रकवत् ; निप्र. १।१८ ब्रकवत् ;

प्रसिद्धनारसिंहस्याष्टादशसाहस्रसंख्या यद्यपि नोपलभ्यते, (तथापि) किंचित्कालक्रमाल्लुप्तमिति प्रतिभाति। निप्र. १।१८

**[1]नन्दाया यत्र माहात्म्यं कार्तिकेयेन वर्ण्यते।**
**नन्दीपुराणं तल्लोकैराख्यातमिति कीर्त्यते॥**

तच्च स्कान्दैकदेशः। § निप्र. १।१८

**[2]यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम्।**
**प्रोच्यते तत्पुनर्लोके साम्बमेतन्मुनिव्रताः॥**

कथानकं कथा। पप्र. १५

**[3]पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः।**
**धन्यं यशस्यमायुष्यं पुराणानामनुक्रमम्॥**
**[4]एवमादित्यसंज्ञा च तत्रैव परिगद्यते॥**

§ गप. निप्रवत्।

**वीमि.** १।३ पृ. ९ पाद्मे (पद्मे) शेषं ब्रकवत्, कूर्मपुराणम्; **पप्र.** १४ ब्रकवत्; **बाल.** १।३ पृ. ५ ब्रकवत्.

(१) **मत्स्य.** ५३।६१; **ब्रक.** ३० कैराख्यात (कैर्नन्दाख्य); **चव्र.** २२ कैराख्यात (के नन्दाख्य); **चवा.** ५३३ कैरा (कैर्या); **कुर.** ३२ नन्दी (नन्दि) कैराख्यात (के नन्द्याख्य); **निप्र.** १।१८ कीर्त्यते (चोच्यते) शेषं चव्रवत्; **गप.** १६ नन्दी (नान्दी) शेषं निप्रवत् (=); **वीमि.** १।३ पृ. ९ नन्दी (नन्दा) शेषं चव्रवत्, कूर्मपुराणम्; **पप्र.** १५ वर्ण्यते (वर्णितम्) शेषं वीमिवत्; **बाल.** १।३ पृ. ५ कीर्त्यते (कीर्तितम्) शेषं वीमिवत्.

(२) **मत्स्य.** ५३।६२; **ब्रक.** ३० यत्र (यत्तु); **चव्र.** २२ मेतन्मुनि (मेव शुचि); **चवा.** ५३३ मेतन्मु (मेव मु); **कुर.** ३२ यत्र (यत्तु) ष्यति (ष्येऽपि) प्रोच्यते तत्पुन (तत्प्रोच्यते पुन) मेतन्मु (मेव मु); **निप्र.** १।१८ ष्यति (ष्येऽपि) मेतन्मुनिव्रताः (मेव मुनिव्रतैः); **गप.** १६ निप्रवत् (=); **वीमि.** १।३ पृ. ९ कुरवत्, कूर्मपुराणम्; **पप्र.** १५ ष्यति (ष्येऽपि) मेतन्मु (मेव मु) शेषं ब्रकवत्; **बाल.** १।३ पृ. ५ पप्रवत्.

(३) **मत्स्य.** ५३।६३.

(४) **मत्स्य.** ५३।६३; **चव्र.** २२ संज्ञा (संज्ञं); **चवा.** ५३३ गद्यते (पठ्यते) शेषं चव्रवत्; **कुर.** ३२; **निप्र.** १।१८ गद्यते (पाठ्यते); **गप.** १६ परिगद्यते (पठ्यते तथा) (=); **वीमि.** १।३ पृ. ९ गद्यते

**[1]अष्टादशभ्यस्तु पृथक्पुराणं यत्प्रदिश्यते।**
**विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम्॥**

(१) विनिर्गतम् उद्भूतम्। यथा कालिकापुराणादि। † ब्रक. ३०

(२) विनिर्गतम् समुद्भूतम्। यथा कालिकापुराणादीनीति लक्ष्मीधरः। एवं च सति भगवत्या इदं भागवतमिति कालिकापुराणं भागवतपदेनोक्तमिति ये वदन्ति ते निरस्ताः। यदि परं प्रसिद्धभिन्नं पुराणान्तरं भागवतं शङ्क्येत, यद्वा वायुपुराणदेवीपुराणादि तदप्येतेष्वन्तर्गतम्। भविष्योत्तरं भविष्यपुराणस्यैकदेशः। निप्र. १।१८–१९

(३) विनिर्गतम् उद्धृतम्। वीमि. १।३

(४) विनिर्गतं समुद्भूतम्। यथा महाजनपरिगृहीतनन्दिकेश्वरपुराणादिपुराणदेवीपुराणादीति संक्षेपः। ¶ पप्र. १५

पुराणविषयाः सर्गादयः पञ्च, पुरुषार्थाश्च

**[2]पञ्चाङ्गवत्पुराणं स्यादाख्यानमितरत्स्मृतम्॥**
**[3]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥**

† कुर. ब्रकवत्।

¶ बाल. उदाहरणवर्जं पप्रवत्।

(गण्यते) कूर्मपुराणम्; **पप्र.** १५; **बाल.** १।३ पृ. ५ चव्रवत्.

(१) **मत्स्य.** ५३।६४; **ब्रक.** ३० उत्त.; **चव्र.** २२ णं यत्प्रदि (णे यत्तु द); **चवा.** ५३३ त्प्रदि (त्प्रद) निर्गतम् (निर्मितम्); **कुर.** ३२ यत्प्रदि (यत्तु द); **निप्र.** १।१८ दशभ्य (दशेभ्य) द्विज (मुनि) शेषं कुरवत्; **गप.** १६ पृथक् (तथा) शेषं निप्रवत् (=); **वीमि.** १।३ पृ. ९ द्विज (मुनि) शेषं कुरवत्, कूर्मपुराणम्; **पप्र.** १५ कुरवत्; **बाल.** १।३ पृ. ५ त्प्रदि (त्प्रद).

(२) **मत्स्य.** ५३।६५ (पञ्चाङ्गानि पुराणेषु आख्यानकमिति स्मृतम्।); **चवा.** ५३३.

(३) **मत्स्य.** ५३।६५; **ब्रक.** २९ वंश्या (वंशा); **उ.** १।१९।१३ वंशो म (वंशम) शेषं ब्रकवत्, पुराणे; **चव्र.** २० ब्रकवत्; **चवा.** ५३३ चैव (चेति) शेषं उवत्; **कुर.** ३१ ब्रकवत्; **विपा.** ४।३०३ ब्रकवत्, सौरपुराणे; **वीमि.** १।३ चैव (चेति) शेषं ब्रकवत् (=);

प्रतिसर्गः संहारः § ब्रक. २९

[1]ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च ।
ससंहारं प्रदृश्येत पुराणे पञ्चवर्णके ॥
[2]धर्मश्चार्थश्च कामश्च मोक्षश्चैवात्र कीर्त्यते ।
सर्वेष्वपि पुराणेषु तद्विरुद्धे च यत्फलम् ॥

पुराणानां सात्त्विकराजसतामसभेदाः

[3]संकीर्णाः सात्त्विकाश्चैव राजसाश्चैव तामसाः ।
यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥
[4]सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेः ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।
संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥
[5]तेष्वेव योगसंसिद्धिं गमिष्यन्ति परां गतिम् ॥

पुराणवेदवेदाङ्गादीनां स्वतः प्रामाण्यम्

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

[1]अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ।
लक्षेणैकेन यत्प्रोक्तं वेदार्थपरिबृंहितम् ॥
[2]भारतं लक्षसंख्याकं लोके वेदोपबृंहितम् ।
धर्मार्थकाममोक्षाणां सारं भारतमुत्तमम् ॥
[3]वाल्मीकिना तु यत्प्रोक्तं रामोपाख्यानमुत्तमम् ।
ब्रह्मणाऽभिहितं यच्च शतकोटिप्रविस्तरम् ॥
[4]आहृत्य नारदायैव तेन वाल्मीकये पुनः ।
वाल्मीकिना च लोकेषु धर्मकामार्थसाधनम् ॥
[5]प्रवर्तितं चतुर्विंशत्सहस्रपरिसंमितम् ॥
[6]एवं सपादाः पञ्चैते लक्षा मर्त्ये प्रकीर्तिताः ॥
[7]पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः ॥
[8]अथ त्रेतायुगस्याऽऽदौ मनुः सप्तर्षयश्च ये ।
श्रौतस्मार्तं ब्रुवन् धर्मं ब्रह्मणा तु प्रचोदिताः ॥
दाराग्निहोत्रसंबन्धमृग्यजुःसामसंश्रिताः ।
इत्यादिबहुलं श्रौतं धर्मं सप्तर्षयोऽब्रुवन् ॥
परम्परागतं धर्मं स्मार्तं त्वाचारलक्षणम् ।
वर्णाश्रमाचारयुतं मनुः स्वायंभुवोऽब्रवीत् ॥

---

§ कूर. , पप्र. , बाल. ब्रकवत् ।
**पप्र.** ११ ब्रकवत् ; **बाल.** १।३ पृ. ५ ब्रकवत् ; **सस्मृ.** ८ वंशो म ( वंशम ) शेषं वीमिवत् , वायुसंहितायाम् .

(१) **मत्स्य.** ५३।६६ ससंहारं (संहारं च) ; **चदा.** ५३३–५३४ चतुर्थचरणे (पुराणं पञ्चवर्णता ).

(२) **मत्स्य.** ५३।६७ द्धे च (द्धं च) ; **चदा.** ५३४ श्चैवात्र की (श्च परिकी) ; **विपा.** ४।३०९ (सर्वेष्वपि पुराणेषु सात्त्विकादि फलं स्मृतम् ॥ ) उत्त.

(३) **सस्मृ.** १५–१६.

(४) **मत्स्य.** ५३।६८–६९ ; **चदा.** ५३४ पुराणेषु (च कल्पेषु); **विपा.** ४।३०९–३१० ; **बाल.** १।३ पृ. ८ चदावत् ; **सस्मृ.** १६ (अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ॥ संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते । सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः ॥ ).

(५) **सस्मृ.** १६.

(१) **मत्स्य.** ५३।७० ; **चदा.** ५३४ यत्प्रो (तत्प्रो); **विपा.** ४।३१० चदावत् ; **बाल.** १।३ पृ. ७ तृतीयार्धं न विद्यते : १।३ पृ. ८ चदावत् , तृतीयार्धमात्रम् .

(२) **विपा.** ४।३१०.

(३) **मत्स्य.** ५३।७१ ; **चदा.** ५३४ ना तु (नाऽपि) मोपाख्यान (मायणाख्य) विस्तरम् (विस्तरात्) ; **विपा.** ४।३१० ना तु (नाऽपि) मोपाख्यान (मायणाख्य) ; **बाल.** १।३ पृ. ८ तु यत्प्रो (च तत्प्रो) मुत्तमम् (मेव च) पू.

(४) **मत्स्य.** ५३।७२ ; **चदा.** ५३४ द्वितीयचरणे (वाल्मीकाय पुनः पुनः); **विपा.** ४।३१० पूर्वार्धे (उद्धृत्य नारदेनैव वाल्मीकाय समर्पितम् । ).

(५) **विपा.** ४।३१०.

(६) **मत्स्य.** ५३।७२ ; **चदा.** ५३४ लक्षा मर्त्ये (लक्ष्यास्तेषु) ; **बाल.** १।३ पृ. ८ क्षा मर्त्ये (क्षास्तेषु).

(७) **मत्स्य.** ५३।७३.

(८) **मत्स्य.** १४२।४०–४७.

सत्येन ब्रह्मचर्येण श्रुतेन तपसा तथा ।
तेषां सुतततपसामार्षेणानुक्रमेण ह ॥
सप्तर्षीणां मनोश्चैव आदौ त्रेतायुगे ततः ।
अबुद्धिपूर्वकं तेन सकृत्पूर्वकमेव च ॥
अभिवृत्तास्तु ते मन्त्रा दर्शनैस्तारकादिभिः ।
आदिकल्पे तु देवानां प्रादुर्भूतास्तु ते स्वयम् ॥
प्रमाणेष्वथ सिद्धानामन्येषां च प्रवर्तते ।
मन्त्रयोगो व्यतीतेषु कल्पेष्वथ सहस्रशः ।
ते मन्त्रा वै पुनस्तेषां प्रतिमायामुपस्थिताः ॥
ऋचो यजूंषि सामानि मन्त्राश्चाऽऽथर्व-
णास्तु ये ।
सप्तर्षिभिश्च ये प्रोक्ताः स्मार्तं तु मनुरब्रवीत् ॥

श्रौतस्मार्तशिष्टाचारधर्मस्वरूपम्

[1]अथ शिष्टान् प्रवक्ष्यामि साधूनथ ततश्च वै ।
ब्राह्मणाः श्रुतिशब्दाश्च देवानां पशुमूर्तयः ।
सायुज्यं ब्रह्मणा ह्यन्तस्तेन सन्तः प्रचक्षते ॥
सामान्येषु च धर्मेषु तथा वैशेषिकेषु च ।
ब्रह्मक्षत्रविशो युक्ताः श्रौतस्मार्तेन कर्मणा ॥
वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतौ ।
श्रौतस्मार्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ॥
विद्यानां साधनात्साधुर्ब्रह्मचारी गुरोर्हितः ।
कारणात्साधनाच्चैव गृहस्थः साधुरुच्यते ॥
तपसश्च तथाऽरण्ये साधुर्वैखानसः स्मृतः ।
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥
धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः ।
कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत् प्रभुः ॥
अथ देवाश्च पितर ऋषयश्चैव मानुषाः ।
अयं धर्मो ह्ययं नेति ब्रुवते मौनमूर्तिना ॥
धर्मेति धारणे धातुर्महत्त्वे चैव उच्यते ।
आधारणे महत्त्वे वा धर्मः स तु निरुच्यते ॥
तत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
अधर्मश्चानिष्टफल आचार्यैर्नोपदिश्यते ॥

(१) मत्स्य. १४५।२०–३९.

वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः ।
सम्यग्विनीता मृदवस्तानाचार्यान् प्रचक्षते ॥
धर्मज्ञैर्विहितो धर्मः श्रौतस्मार्तो द्विजातिभिः ।
दाराग्निहोत्रसंबन्धमिज्या श्रौतस्य लक्षणम् ॥
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।
पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ॥
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि वै श्रुतिः ।
मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ॥
तस्मात्स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागशः ।
एवं वै द्विविधो धर्मः शिष्टाचारः स उच्यते ॥
शिषेर्धातोश्च निष्ठान्ताच्छिष्टशब्दं प्रचक्षते ।
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥
मनुः सप्तर्षयश्चैव लोकसंतानकारिणः ।
तिष्ठन्तीह च धर्मार्थं ताञ्छिष्टान् संप्रचक्षते ॥
तैः शिष्टैश्चलि( ? रि )तो धर्मः स्थाप्यते वै
युगे युगे ।
त्रयी वार्ता दण्डनीतिः प्रजावर्णाश्रमेप्सया ॥
शिष्टैराचर्यते यस्मात्पुनश्चैव मनुक्षये ।
पूर्वैः पूर्वैर्मतत्वाच्च शिष्टाचारः स शाश्वतः ॥
दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः ।
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ॥
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ह ।
मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ॥

## विष्णुपुराणम्

युगादौ वेदप्रवर्तकाः सप्तर्षयः, स्मृतिकर्ता मनुः, पुराण-
कर्ता व्यासः, पुराणविस्तारकर्तारः व्यासशिष्यः
सूतः रोमहर्षणः तच्छिष्याश्च

[1]चतुर्युगान्ते वेदानां जायते किल विप्लवः ।
प्रवर्तयन्ति तानेत्य भुवि सप्तर्षयो दिवः ॥
कृते कृते स्मृतेर्विप्र प्रणेता जायते मनुः ॥

कलौ वेदानां विप्लवे उच्छेदे जाते दिविष्ठा महर्षयो भुवमेत्य कृतयुगादौ तानेव संप्रदायेन प्रवर्तयन्ति । वेद-

(१) विष्णु. ३।२।४४–४५.

प्रवर्तनमुक्त्वा स्मृतिप्रवर्तनमाह– कृते कृत इति । स्मृतेः धर्मशास्त्रस्य मनुसंज्ञस्य । तत्तदधिप्रवर्तितानां स्मृतीनामुपलक्षणमेतत् । वैच.

[1]**आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।**
**पुराणसंहितां चक्रे पुराणार्थविशारदः ॥**

आख्यानादिभिः सह पुराणसंहितां चक्रे । व्यास इति शेषः । तत्र दृष्टोपलब्धकथनमुपाख्यानं प्रचक्षते । गाथा पितृपृथ्व्यादिगीता । कल्पशुद्धिः वाराहादिकल्पनिर्णयः । वैच.

**प्रख्यातो व्यासशिष्योऽभूत्सूतो वै रोमहर्षणः ।**
**पुराणसंहितां तस्मै ददौ व्यासो महामुनिः ॥**

**सुमतिश्चाग्निवर्चाश्च मित्रयुः शान्तपायनः ।**
**अकृतव्रणोऽथ सावर्णिः षट् शिष्यास्तस्य चाभवन् ॥**

सुमत्यादयः तस्य रोमहर्षणस्य षट् शिष्याः तत्कृताः षट् संहिता जगृहुः । वैच.

**काश्यपः संहिताकर्ता सावर्णिः शान्तपायनः ।**
**रौमहर्षणिका चान्या तिसृणां मूलसंहिता ।**
**चतुष्टयेनाप्येतेन संहितानामिदं मुने ॥**

काश्यपादिभिस्तिसृभिः कृतास्तिस्रः । अकृतव्रण एव काश्यपः, 'काश्यपो ह्यकृतव्रणः' इति वायूक्तेः । रौमहर्षणिका चान्या रोमहर्षणेन पुनः संक्षेपेण कृता । एतासां संहितानां चतुष्टयेन सारोद्धाररूपमिदं विष्णुपुराणं मुने मैत्रेय मया कृतमिति शेषः । वैच.

अष्टादश पुराणानि

[2]**आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते ।**
**अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ॥**

व्यासकृतान्यष्टादश पुराणान्याह– आद्यमिति सार्धैश्चतुर्भिः । केचित्तु संहितानां चतुष्टयेन इदमाद्यं ब्राह्ममुच्यते इति वदन्ति । वैच.

[1]†**ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।**
**तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥**
[2]**आग्नेयमष्टमं चैव भविष्यं नवमं तथा ।**
**दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥**
[3]**वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।**
**चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥**
[4]**मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥**

---

(१) **विष्णु.** ३।६।१५–१८.

(२) **विष्णु.** ३।६।१९ ; **ब्रक.** २९ उत्त. ; **चत्र.** २० उत्त. ; **कुर.** ३१ उत्त. ; **वीक.** १।३ निर्देशमात्रम् ; **संम.** ३ पुराणज्ञाः प्रचक्षते ( कीर्तितानि मया तव ) उत्त. ; **पप्र.** १२ उत्त. ; **सस्मृ.** ६.

† अस्य वीमिव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'पुराणन्याय०' इति वचने ( यास्मृ. १।३ वका. पृ. १२८ ) द्रष्टव्यम् ।

(१) **विष्णु.** ३।६।२० तथा ( अथा ) ; **ब्रक.** २९ ; **स्मृच.** १।३ (=) ; **चत्र.** २० ; **चवा.** ५३१ वाराहपुराणे ; **कुर.** ३१ ; **वीक.** १।३ निर्देशमात्रम् ; **निप्र.** १।१७ ; **गप.** १५ (=) ; **संम.** ३ ; **वीमि.** १।३ ; **पप्र.** १२ ; **बाल.** १।३ पृ. ५ ब्राह्मं पाद्मं (पाद्मं ब्राह्मं) मात्स्ये.

(२) **विष्णु.** ३।६।२१ ; **ब्रक.** २९ तथा ( स्मृतम् ) लैङ्ग (लिङ्ग) ; **स्मृच.** १।३ स्मृतम् ( तथा ) (=) ; **चत्र.** २० ष्यं न ( ष्यन्न ) तथा ( स्मृतम् ) ; **चवा.** ५३१ चैव ( प्रोक्तं ) ष्यं न ( ष्यन्न ) लैङ्ग ( लिङ्ग ) स्मृतम् (तथा) वाराहपुराणे ; **कुर.** ३१ स्मृतम् ( तथा ) शेषं ब्रकवत् ; **वीक.** १।३ निर्देशमात्रम् ; **निप्र.** १।१८ तथा ( स्मृतम् ) ; **गप.** १५ निप्रवत् (=) ; **संम.** ३ ; **वीमि.** १।३ ; **पप्र.** १२ निप्रवत् ; **बाल.** १।३ पृ. ५ तथा ( स्मृतम् ) स्मृतम् ( तथा ) मात्स्ये.

(३) **विष्णु.** ३।६।२२ ; **ब्रक.** ३० ; **स्मृच.** १।३ चात्र ( चैव ) (=) ; **चत्र.** २०–२१ स्मृचवत् ; **चवा.** ५३१ चैव (प्रोक्तं) स्मृतम् ( तथा ) वाराहपुराणे ; **कुर.** ३१ स्मृचवत् ; **वीक.** १।३ निर्देशमात्रम् ; **निप्र.** १।१८ स्मृचवत् ; **गप.** १६ स्मृचवत् (=) ; **संम.** ३ ; **वीमि.** १।३ वामनं च ( वामनकं ) ; **पप्र.** १२ ; **बाल.** १।३ पृ. ५ वीमिवत् , मात्स्ये.

(४) **विष्णु.** ३।६।२३ ; **ब्रक.** ३० ; **स्मृच.** १।३ ततः प ( तथाऽप ) (=) ; **चत्र.** २१ ; **चवा.** ५३१

[1]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ॥

चतुर्दश अष्टादश च विद्याः

[1]अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

[2]आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ॥

( १ ) यत्तु विष्णुपुराणम् 'अङ्गानि' इति, तत् केवलं विद्यास्थानत्वाभिप्रायम्, न धर्मस्थानत्वाभिप्रायम् । आयुर्वेदादीनां च धर्मस्थानत्वाभावात् । अप. १।३

( २ ) चतुर्दश धर्मप्रमितिं प्रति प्रधानानि । चतस्रः पुनर्दृष्टप्रधानाः क्वचिदलौकिकमर्थं प्रमाणयन्त्यो धर्मेऽपि प्रमाणम् । † ब्रक. २२

( ३ ) आयुर्वेदादिचतुष्टयमुपवेदत्वेन वेदान्तर्भूतम् । दीक. १।३

( ४ ) इति चतुर्दशविद्यानामपि धर्मनिश्चये प्रमाणत्वेन विधानात्पुराणमपि प्रमाणमेव, वेदाङ्गतुल्ययोगक्षेमत्वाद्वेदोपबृंहकत्वाच्च । आन. १४

(५) पुराणानां वेदोपबृंहणत्वेन धर्मवेदनहेतुत्वाद्धर्मविद्यास्थानेषु चतुर्दशस्वन्तर्भावमाह– अङ्गानीति । अङ्गानि शिक्षाकल्पज्योतिश्छन्दोनिरुक्तव्याकरणानि षट् । चतुरः चत्वारः । धर्मशास्त्रं मन्वादिप्रोक्तं स्मृतिशास्त्रम् ।

केवलं दृष्टार्थं विद्यास्थानमायुर्वेदादिचतुष्कं ब्रुवन् धर्मविद्यास्थानैः सहाष्टादश विद्यास्थानान्याह– आयुरिति । आयुर्वेदः अष्टाङ्गं चिकित्साशास्त्रं धन्वन्तरिप्रोक्तम् । धनुर्वेदं भृगुप्रोक्तं चतुर्विधमायुधसंधानमोक्षादिविषयम् । गान्धर्ववेदो भरतमुनिप्रणीतो नृत्यगीतादिविषयः । अर्थशास्त्रं बार्हस्पत्यादिनीतिशास्त्रम् । पूर्वोक्ताश्चतुर्दशेत्यष्टादश विधाः इति । वैच.

सदाचारलक्षणम्

[1]साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

( १ ) दोषाः रागद्वेषमोहाः । दीक. १।७

( २ ) आचरणमलौकिकम्, तेन लौकिकभोजनादिव्युदासः । वीमि. १।७

[2]सप्तर्षयोऽथ मनवः प्रजानां पतयस्तथा ।
सदाचारस्य वक्तारः कर्तारश्च महीपते ॥

---

† चव्र., कुर., पप्र. ब्रकवत् ।

द्वितीयचरणे (ब्रह्माण्डमष्टादशं तथा) वाराहपुराणे; कुर. ३१; दीक. १।३ निर्देशमात्रम्; निप्र. १।१८; गप. १६ (=); संम. ३; वीमि. १।३; पप्र. १२; बाल. १।३ पृ. ५ मात्स्यं (मत्स्यं) मात्स्ये.

(१) विष्णु. ३।६।२३–२४.

(२) विष्णु. ३।६।२६ वेदाश्चत्वारो (चतुरो वेदा); गोरा. ३।१ प्रथमचरणमात्रम् (=): अप. १।३ ह्येता (एता); ब्रक. २२ तृतीयचरणे (धर्मशास्त्रं पुराणं च); मभा. ७।१ विद्या ह्येत (विद्यास्त्वे) स्मृत्यन्तरम्; गौमि. ७।१ (=); उ. १।११।२६ (=); मनु. ३।१; चव्र. १८ ब्रकवत्; कुर. २७ ब्रकवत्; दीक. १।३ ब्रकवत्; वीमि. १।३ पृ. १५ ब्रकवत्; पप्र. ११ ब्रकवत्; आन. १४ (=); बाल. १।४–५ शैवपुराणे वायवीयसंहितायाम्; सस्मृ. ११ वायुसंहितायाम्.

(३) विष्णु. ३।६।२७ श्चेति (श्चैव) र्थं च (र्थं तु) चतुर्थचरणे (विद्याद्यष्टादशैव तु); अप. १।३ ह्यष्टा (अष्टा); ब्रक. २२ विद्या ह्य (विद्यास्त्व); चव्र. १८; कुर. २७; दीक. १।३ च (तु); निप्र. १।१७ द्वितीयचरणे (गान्धर्वो दण्डनीतयः) पू.; गप. १३ च (तु) शैव ताः (श स्मृताः) मनुः; वीमि. १।३ पृ. १५ शैव ताः (श स्मृताः); पप्र. ११ च (तु); बाल. १।४–५ उत्तरार्धे (अर्थशास्त्रं तुरीयं तु विद्यास्त्वष्टादश स्मृताः ॥); सस्मृ. ११ श्चेति ते त्रयः (श्चेत्यनुक्रमात्) उत्तरार्धे (अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः ।) वायुसंहितायाम्.

(१) विष्णु. ३।११।३; ब्रक. २६; कुर. ३२; दीक. १।७ षास्तु (षाः स्युः) यत्तु (यत्स्यात्); मुक्ता. ५; वीमि. १।७ षास्तु (षाः स्युः).

(२) विष्णु. ३।११।४.

## विष्णुधर्मोत्तरपुराणम्

धर्मादिपुरुषार्थबोधका भारतरामायणसांख्ययोगादयः

[1]द्वापरेऽस्मिन् नृपातीते वसिष्ठकुलवर्धनः ।
पराशरसुतः श्रीमान् विष्णुर्द्वैपायनः स्मृतः ॥
प्रकाशो जनितो येन लोके भारतचन्द्रमाः ।
परीक्षित्पुत्रं राज्यस्थं राजानं जनमेजयम् ॥
वैशम्पायन इत्येव शिष्यो व्यासस्य विश्रुतः ।
आख्यास्यति महाख्यानं सर्वपापभयापहम् ॥
धर्मे चार्थे च कामे च मोक्षे च यदुनन्दन ।
प्रदीपभूतं सर्वत्र बुधबुद्धिविवर्धनम् ॥
यत्र विष्णुकथा देव्याः श्रुतयश्च सनातनाः ॥
[2]अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश ॥
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिम् ।
छन्दोविशेषः षष्ठश्च षडङ्गो वेद उच्यते ॥
[3]सांख्यं योगं पञ्चरात्रं शैवं पाशुपतं तथा ।
कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥
[4]संसारक्षयहेत्वर्थे भावोपकरणेषु च ।
सोत्तरा वैष्णवा धर्माः सारमेतत्प्रकीर्तितम् ॥
[5]एतावानेव सकलो विद्याग्रामस्त्वेरितः ।
विद्याः प्रशस्ताश्चैताभ्यः शतशोऽथ सहस्रशः ॥

(१) विध. १।७४।२२–२६.

(२) विध. १।७४।३२–३३.

(३) विध. १।७४।३४ ; चव्र. २५ शैवं ( वेदाः ) न्तपञ्चकं ( न्तं पञ्चमं ) ; पप्र. २२, २३ योगं ( योगः ) शैवं ( वेदाः ).

(४) विध. १।७४।३५ ; चव्र. २५ प्रथमचरणे (संसारक्षयदः स्वर्ग) तृतीयचरणे (सेतुरावैष्णवाद्धर्माः) ; पप्र. २३ क्षयहेत्वर्थे भा ( क्षपणे स्वर्गभा ) तृतीयचरणे ( सेतुरावैष्णवाद्धर्मात् ).

(५) विध. १।७४।३६ ; चव्र. २५ द्वितीयचरणे ( वेदमार्ग उदीरितः ) तृतीयचरणे ( आभ्यः प्रशस्ताश्चैतान्याः) ; पप्र. २३ द्वितीयचरणे (वेदमार्गस्त्वदीरितः) पू. कृतान्तः सिद्धान्तः, 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मणि ।' इति त्रिकाण्डीस्मरणात् । पृ. २२

उक्तं च पञ्चरात्रादेर्वैदिकत्वं हेमाद्रौ विष्णुधर्मोत्तरे– 'साङ्ख्यं योगः .. .. ..' इति । भावः ऐश्वर्यम् । सेतुः मार्गः । पप्र. २३

[1]त्रेतायुगे चतुर्विंशे भृगुवंशोद्भवेन तु ।
वाल्मीकिना तु रचितं स्वमेव चरितं शुभम् ॥
रामाख्यानं महापुण्यं श्रोतॄणां विष्णुलोकदम् ॥
[2]धर्मान्कथय तान्देव यद्यहं भवतः प्रियः ।
श्रुत्वा मे मानवान्धर्मान्वासिष्ठान्वा महाफलान् ॥
पराशरकृतांश्चैव तथाऽऽत्रेयस्य धीमतः ।
श्रुत्वा शङ्खस्य गार्ग्यस्य लिखितस्य यमस्य च ॥
जाबालेश्च महाबाहोर्मुनेर्द्वैपायनस्य च ।
उ(? औ)मामहेश्वराश्चैव जातिधर्माश्च पावनाः ॥
गुणस्य गुणबाहोश्च काश्यपेयास्तथैव च ।
बह्वायनकृताश्चैव शाकुनेयास्तथैव च ॥
अगस्त्यगीता मौद्गल्याः शाण्डिल्याः सौरभास्तथा ।
भृगोरङ्गिरसश्चैव कश्यपोद्दालकोदिताः ॥
सु(? सौ)मन्ता जैमिनीयाश्च पैलस्य च महात्मनः ।
वैशम्पायनगीताश्च पिप्पलादकृताश्च ये ॥
ऐन्द्राश्च वारुणाश्चैव कौबेरा वात्स्यपौणकाः ।
आपस्तम्बकृता धर्मास्तथा गोपालकस्य च ॥
भृग्वङ्गिरःकृताश्चैव सौरा हारीतकास्तथा ॥
[3]यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
[4]देशे देशे य आचारः पारंपर्यक्रमागतः ।
स एव परिपाल्यः स्यात्प्राप्य देशं महीक्षिता ॥

(१) विध. १।७४।३८–३९.

(२) विध. १।१४६।३३–४०.

(३) विध. १।१७२।२०.

(४) विध. २।१७७।८८–८९.

[1]वेदविद्याविरुद्धं यत्स्या स्मृतिः शिष्टसंमता ।
अप्रत्यक्षफलं विद्यात्साधनं शास्त्रसंज्ञितम् ॥
[2]कृतानि शास्त्राणि नरेन्द्र पूर्वैः
स्मृतिस्तथोक्ता श्रुतिरेव वेदः ।
सम्यग्य(? ग्स)दाचारमि(? र इ)ति प्रदिष्टं
वृत्तं हि यच्छास्त्रविदां नरेन्द्र ॥
[3]धर्मार्थकाममोक्षाणां शास्त्रं स्यादुपदेशकम् ।
पूर्वैराचरितं सद्भिर्धर्मकामार्थसाधकम् ॥
मोक्षस्य यत्रोपन्यास इतिहासः स उच्यते ॥
[4]मन्त्राः सब्राह्मणाः प्रोक्तास्तदर्थे ब्राह्मणं स्मृतम् ।
कल्पना च तथा कल्पः कल्पश्च ब्राह्मणस्तथा ॥
कथितानि तथाऽर्थानि पुराणं च तथा द्विज ।
प्रक्रिया प्रथमः पादः कथावस्तुपरिग्रहः ॥
उपोद्घातानुषङ्गौ च तथा संहार एव च ।
चतुष्पादं हि कथितं पुराणं भृगुनन्दन ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
[5]श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तथा स्मृतिः ।
ते सर्वार्थेषु मी(? ष्वमी )मांस्ये ताभ्यां धर्मो
हि निर्बभौ ॥
योऽवमन्येत भूतेभ्यो(? ते मूले ) हेतु-
शास्त्राश्रयाद्द्विजाः ।
साधुभिः स बहिष्कार्यो नरकाग्नेस्तु भाजनम् ॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साधूनां धर्मलक्षणम् ॥
यस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥
[6]आचारस्त्रिविधो लोके सेवितव्यो विचक्षणैः ।
श्रुतिस्मृत्युदितश्चैव सदाचारस्तथा परः ।
आचारप्रभवं सौख्यं धनं च द्विजसत्तमाः ॥

(१) विध. ३।५।२७. (२) विध. ३।८।२७.
(३) विध. ३।१५।१-२. (४) विध. ३।१७।१-४.
(५) विध. ३।२३३।६१-६३, ६६.
(६) विध. ३।२७१।३.

## हरिवंशः

महाभारतं वेदोपबृंहकम्

जनमेजय उवाच—
[1]महाभारतमाख्यानं बह्वर्थं श्रुतिविस्तरम् ॥

श्रुतिविस्तरं वेदोपबृंहकम् । नीटी.

[2]ब्रह्मणा सह पुत्रेण सपौत्रेण महात्मना ।
नियमाः सर्वकृत्यानां स्थापिता जगतो ध्रुवाः ॥
[3]इदं पुराणं परमं पुण्यं वेदैश्च संमितम् ॥
पुराणमेतदखिलं सांख्यं योगं तथैव च ।
कार्त्स्न्येन विधिना प्रोक्तं ... ... ... ॥

अत्रैव उक्तवक्ष्यमाणरीत्या सांख्ययोगयोरन्तर्भावोऽखि कार्त्स्न्येन । तच्च विद्वत्तमैकोज्ञेयम् । इतरे तु कथापलाप-मात्रोपजीविनः पण्डिताः पशव इति भावः । नीटी.

## श्रीमद्भागवतपुराणम्

यज्ञविधानं वेदचतुष्टये, इतिहासपुराणं पञ्चमो वेदः

[4]चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद्यज्ञसंतत्यै वेदमेकं चतुर्विधम् ॥

ततश्च होत्रोपलक्षिताश्चत्वार ऋत्विजश्चतुर्होतारः, तैरनुष्ठेयं कर्म चातुर्होत्रम् । शुद्धं शुद्धिकरम् । यज्ञसंतत्यै यज्ञानामविच्छेदाय । श्रीटी.

ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणं च पञ्चमो वेद उच्यते ॥

चातुर्विध्यमेवाऽऽह— ऋगिति । उद्धृताः पृथक्कृताः । श्रीटी.

वेदानधिकारिणां स्त्रीशूद्राणां धर्मे भारतं प्रमाणम्

[5]स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥

(१) हरि. १।१।१२ : ३।२।११ (जनमेजय उवाच॰).
(२) हरि. २।६९।४७. (३) हरि. ३।३३।८, ९.
(४) भाग. १।४।१९-२०.
(५) भाग. १।४।२५, २९.

द्विजबन्धवः त्रैवर्णिकेष्वधमाः, तेषाम् । कर्मरूपे श्रेयसि श्रेयः साधनम् एवं भवेत् अनेनैव प्रकारेण भवतु इति अत एव तेषां कृपया भारताख्यानं मुनिना कृतम् । श्रीटी.

**भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।**
**दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥**

ब्रह्मप्रोक्तानि वेदाः उपवेदाः इतिहासपुराणानि च

**'ऋग्यजुःसामाथर्वाख्यान्वेदान् पूर्वादिभिर्मुखैः ।**
**शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥**

चातुर्होत्रसृष्टिक्रममाह– ऋगिति । शस्त्रम् अप्रगीतमन्त्रस्तोत्रं होतुः कर्म । इज्याम् अध्वर्योः कर्म । स्तुतिस्तोमं स्तुतिः संगीतम्, स्तोमं तदर्थमृक्समुदायं 'त्रिवृस्तोमो भवति' इत्यादिविहितमुद्गातृप्रयोज्यम् । प्रायश्चित्तं ‡ ब्राह्मम् । श्रीटी.

**आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ।**
**स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥**

उपवेदक्रममाह– आयुर्वेदमिति । आत्मनो मुखैः । स्थापत्यं विश्वकर्मशास्त्रम् । श्रीटी.

**इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।**
**सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥**

वेदाः धर्मप्रमाणम्

**यमदूता ऊचुः–**

**'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।**
**वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥**

‡ यद्यपि ब्रह्मशब्दस्यात्र ऋत्विक्परत्वेन 'ब्रह्मणस्त्वः' (पासू. ५।१।१३६) इति सूत्रानुरोधेन 'ब्रह्मत्वम्' इति व्याख्यातुमुचितम्, तथापि प्रायश्चित्तं ब्रह्मकर्मत्वेनाविवक्षित्वा ब्रह्मसंबन्धित्वेन विवक्षितमिति कल्पयित्वा ब्राह्मशब्दसाधुत्वं निर्वहणीयम् ।

(१) भाग. ३।१२।३७–३९.
(२) भाग. ६।१।४०.

वेदेन प्रणिहितः विहितः धर्मः वेदप्रमाणक इत्यर्थः । अनेन यो वेदप्रमाणकः स धर्मः, यो धर्मः स वेदप्रमाणक इति स्वरूपं प्रमाणं चोक्तम् । यथाऽऽह जैमिनिः– 'चोदनालक्षणोऽर्थो धर्मः' (जैसू. १।१।२) इति । व्याख्यातं च भट्टैः– 'द्वयमेकेन सूत्रेण भृत्यर्थाभ्यां निरूप्यते ।' इति । अपृष्टस्याप्यधर्मस्य स्वरूपं लक्षणं च दण्डस्थानकथनायाऽऽहुः– तद्विपर्ययः । यो वेदनिषिद्धः सोऽधर्मः, निषेधश्च तस्मिन् प्रमाणमित्यर्थः । वेदस्य प्रामाण्ये हेतुः– वेदः नारायणादुद्भूतः स एव साक्षादित्युपचारः । स्वयंभूरिति च निःश्वासमात्रेण स्वयमेव भवतीति । तथा च श्रुतिः– 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इति । श्रीटी.

**'यद्यदाचरति श्रेयानितरस्तत्तदीहते ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥**

एतत्प्रवर्तितमधर्ममन्योऽपि करिष्यतीति महत्कष्टमभूदित्याहुः– यद्यदिति । श्रेयान् श्रेष्ठः । श्रीटी.

**'धर्ममूलं हि भगवान्सर्व§वेदमयो हरिः ।**
**स्मृतं च तद्विदां राजन्येन चाऽऽत्मा प्रसीदति ॥**

§ अत्र पाठविषये महान् प्रमादः समुपलब्धः । तस्य प्रमादत्वमनुपपत्त्या, महत्त्वं च बहुभिरनुसृतत्वेन । स यथा– श्रीमद्भागवतस्य पञ्च प्रकाशनान्यस्माभिरुपलब्धानि । तत्र चतुर्षु पुस्तकेषु वेदशब्दस्थाने देवशब्दो मुद्रितोऽस्ति । श्रीमन्महाराजैः पटवर्धनोपनामकैश्चिन्तामणिशर्मभिः सांगलीसंस्थानाधिपतिभिर्यान्यष्टोत्तरशतं शिलामुद्रितानि श्रीमद्भागवतपुस्तकानि पुरातनकाले ब्राह्मणेभ्यः प्रदत्तानि, तदन्यतमेऽस्मदुपलब्धे पुस्तके एव केवलं 'वेद' इति पाठो मुद्रितोऽस्ति । द्वयोः पुस्तकयोर्महाराष्ट्रभाषायां भाषान्तरे विभिन्नकर्तृके स्तः । तत्रैकस्मिन् देवतामयत्वं हरेरुक्तम्, एकस्मिंस्तु वेदमयत्वमुक्तम् । श्रीधर्यां 'तद्विदाम्' इति पदं 'वेदविदाम्' इति व्याख्यातम् । एवं क्वचित् 'वेद' इति पाठ उपलभ्यते । युक्तिश्च तस्यैवानुग्राहिका । सा चेत्थम्– अस्मिन् श्लोके स्मरणस्याऽऽत्मप्रसादस्य च धर्ममूलत्वोक्तेर्मूलशब्दस्य प्रमाणपरतैव, न कर्तृपरतेति निर्विवादम् । एवं च अस्मदादिधर्मप्रमितौ प्रमाणभावो हरेर्वेद-

(१) भाग. ६।२।४. (२) भाग. ७।११।७.

प्रथमं तावद्धर्मे प्रमाणमाह– धर्मेति। धर्मस्य मूलं प्रमाणम्। स्मृतं च स्मृतिः। तद्विदां वेदविदाम्। येन च आत्मा मनः प्रसीदति तुष्यति च। तथा च याज्ञवल्क्यः– 'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्॥' (यास्मृ. १।७) इति। मनुश्च– 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥' (मस्मृ. २।६) इति। श्रीटी.

सात्त्वततन्त्रं स्त्रीशूद्रदासधर्मे प्रमाणम्

**[१]तेनोक्तं सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत्।**
**यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः॥**

महापुरुषेण धर्मव्यतिक्रमे कृतेऽपि अन्यैर्धर्मव्यतिक्रमः कृतः दोषाय

**राजोवाच–**

**[२]संस्थापनाय धर्मस्य प्रशमायेतरस्य च।**
**अवतीर्णो हि भगवानंशेन जगदीश्वरः॥**
**स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता।**
**प्रतीपमाचरद्ब्रह्मन् परदाराभिमर्शनम्॥**

प्रतीपं प्रतिकूलम् अधर्ममित्यर्थः। आचरत् कृतवान्। न चेदमधर्ममात्रं कलञ्जभक्षणादिवत्, किंतु महासाहसमित्याह– परदाराभिमर्शनमिति। श्रीटी.

**आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितम्।**
**किमभिप्राय एतं नः संशयं छिन्धि सुव्रत॥**

आप्तकामस्य नायमधर्म इति चेद्यदि, एवं कामाभावान्निन्दितं केनाभिप्रायेण कृतवानिति पृच्छति– आप्तकाम इति। श्रीटी.

**श्रीशुक उवाच–**

**धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्।**
**तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा॥**

परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह– धर्मव्यतिक्रम इति। साहसं च दृष्टं प्रजापतीन्द्रसोमविश्वामित्रादीनाम्, तच्च तेषां तेजस्विनां दोषाय न भवतीति। श्रीटी.

**नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः।**
**विनश्यत्याचरन् मौढ्याद्यथाऽरुद्रोऽब्धिजं विषम्॥**

तर्हि 'यद्यदाचरति श्रेष्ठः' (भगी. ३।२१) इति न्यायेनान्योऽपि कुर्यादित्याशङ्क्याऽऽह– नैतदिति। अनीश्वरः देहादिपरतन्त्रः। यथा रुद्रव्यतिरिक्तो विषमाचरन् भक्षयन्। श्रीटी.

**ईश्वराणां वचः सत्यं तथैवाऽऽचरितं क्वचित्।**
**तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत्॥**

कथं तर्हि सदाचारस्य प्रामाण्यमत आह– ईश्वराणामिति। तेषां वचः सत्यम्, अतस्तदुक्तमाचरेदेव। आचरितं तु क्वचित्सत्यम्, अतः स्ववचोयुक्तं तेषां वचसा यद्यत् युक्तम् अविरुद्धं तत्तदेवाऽऽचरेत्। श्रीटी.

**कुशलाचरितेनैषामिह स्वार्थो न विद्यते।**
**विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो॥**

ननु तर्हि तेऽपि किमेवं साहसमाचरन्ति? तत्राऽऽह– कुशलेति। प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यम्, नान्यदित्यर्थः। श्रीटी.

---

वेदव्यावृत्तस्वरूपेणेव देवमयत्वरूपेणापि न संभवति, धर्मप्रमाणभावे तादृशस्वरूपस्येव देवमयत्वस्याप्यप्रयोजकत्वात्। अत एव 'सर्वदेवमयत्वं परिचायकमात्रम्, न हरेर्धर्मप्रमाणभावे हेतुत्वगर्भं विशेषणम्' इत्यपि निरस्तम्, स्वरूपेण प्रमाणभावायोगस्योक्तत्वात्। किंच तथा सति 'तद्विदाम्' इति तच्छब्देन स्वरूपेण देवमयत्वरूपेण वा हरिः परामृष्टव्यः। तथा च तत्रापि स्मरणस्य धर्ममूलत्वे तद्वित्त्वस्याप्रयोजकतापत्तिः। 'वेद' इति पाठे तु वेदमयत्वरूपेण हरेर्वेदविदां स्मरणस्य च धर्ममूलत्वोपपत्तेर्न काचिदनुपपत्तिः।

(१) मुक्ता. २९७ मुक्तिभाग् (भक्तिमान्); पप्र. २४; सस्मृ. २८.

(२) भाग. १०।३३।२७–३३.

वेदाः प्रमाणम्

[१]**पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ।**
**श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥**

ननु पितरो देवाश्च सर्वज्ञाः प्रत्यक्षतो दृष्ट्वा मनुष्येभ्यः कथयिष्यन्ति, नेत्याह– पित्रादीनां सर्वेषां तव त्वद्वाक्यरूपो वेद एव तु श्रेयः श्रेष्ठं चक्षुः प्रमापकम्। क्व ? अनुपलब्धेऽर्थे मोक्षे स्वर्गादौ च । तथा साध्यसाधनयोः 'इदमस्य साध्यम्, इदमस्य साधनम्' इत्यत्रापि । तदेवं गुणदोषदृष्ट्यभावे निःश्रेयसं न घटेत् । श्रीटी.

**गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः ॥**

किंच, शास्त्रेणैव विहितां भेददृष्टिं तस्मिन्नेव विषये शास्त्रं कथं निवर्तयेत् ? इत्याह– ते निगमात् त्वदाज्ञारूपाद्वेदादेव, न हि स्वतः । श्रीटी.

[२]**स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।**
**स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥**

किंच, स्वधाम्नः स्वस्याऽऽश्रयः कारणं यद्ब्रह्म तस्य, किंच, परमात्मांशभूतसमस्तदेवतावाचकोऽपीत्याशयेनाऽऽह– स इति । सर्वमन्त्राणाम् उपनिषद् रहस्यं सूक्ष्मरूपमित्यर्थः । तत्र हेतुः– वेदानां बीजं कारणम् । बीजत्वेऽप्यविकारितामाह– सनातनं सदैकरूपम्, तस्य ब्रह्मरूपत्वात् । श्रीटी.

**तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ।**
**धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥**

इदानीं ततः सर्वप्रपञ्चोत्पत्तिप्रकारमाह– तस्य हीति। त्रयः त्रिसंख्यायुक्ताः भावाः यैः अकारोकारमकारैः धार्यन्ते, तत्कारणत्वात् । तानेवाऽऽह– गुणाः सत्त्वादयः, नामानि ऋग्यजुःसामानि, अर्थाः भूर्भुवःस्वर्लोकाः, वृत्तयः जाग्रदाद्याः । श्रीटी.

**ततोऽक्षरसमाम्नायमसृजद्भगवानजः ।**
**अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥**

ततः तेभ्यो वर्णेभ्यः अक्षराणां समाम्नायं समाहारम्। तमेवाऽऽह– अन्तःस्थाः यरलवाः, ऊष्माणः शषसहाः, स्वरा अकाराद्याः, स्पर्शाः कादयः, ह्रस्वदीर्घाश्च, आदिशब्दाज्जिह्वामूलीयादयः, त एव लक्षणं स्वरूपं यस्य तम् । श्रीटी.

**तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।**
**सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥**

विभुः चतुर्मुखस्वरूपो भगवान् असृजदिति पूर्वस्य वाऽनुषङ्गः । चातुर्होत्रविवक्षया, चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारः, तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रम्, तद्विवक्षया । श्रीटी.

**पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान् ।**
**ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥**

पुत्रान् मरीच्यादीन् । तान् वेदान् । ब्रह्मकोविदान् वेदोच्चारणादिनिपुणान् । श्रीटी.

अष्टादश पुराणानि तेषां श्लोकसंख्या च

[१]**एवंलक्षणलक्ष्याणि पुराणानि पुराविदः ।**
**मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥**

पुराणविभागप्रस्तावेन तल्लक्षणादिप्रासङ्गिकमुक्त्वा प्रस्तुतमाह– एवंविधैर्लक्षणैर्लक्ष्याणि । श्रीटी.

**ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ।**
**नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥**
**भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।**
**वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥**

त्रिषट् अष्टादश । श्रीटी.

[२]**ब्राह्मं दश सहस्राणि पाद्मं पञ्चोनषष्टि च ।**
**श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥**

त्रयोविंशत् त्रयोविंशतिर्वैष्णवं चतुर्विंशतिसहस्राणि शैवकं पुराणम् । श्रीटी.

(१) भाग. ११।२०।४–५.
(२) भाग. १२।६।४१–४५.

(१) भाग. १२।७।२२–२४.
(२) भाग. १२।१३।४; पद्म. १२.

[1]दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः ।
मार्कण्डं नव वाह्नं तु दशपञ्चचतुःशतम् ॥

वाह्नं तु अग्निपुराणं तु दशपञ्च सहस्राणि चत्वारि शतानि । श्रीटी.

[2]चतुर्दश भविष्यं स्यात्तथा पञ्च शतानि च ।
दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ॥
[3]चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ।
स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् ॥

स्कान्दं शताधिकैकाशीतिसहस्रम् । श्रीटी.

[4]कौर्मं सप्तदशाऽऽख्यातं मात्स्यं तत्तु चतुर्दश ।
एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥

सौपर्णं गरुडपुराणम् एकोनविंशत् एकोनविंशतिः । श्रीटी.

[5]एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ।
तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥

( १ ) महाभारतं तु इतिहासः, रामायणं चर्षिप्रोक्तं काव्यम्, अतः पुराणानां संदोहः समूहश्चतुर्लक्षसंख्याक एव । श्रीटी.

( २ ) श्रीमद्भागवते– ब्राह्मं दशेति । मत्स्यपुराणे तु भागवतीयगणनातः षट्शत्याऽग्निपुराणं द्विशत्या च ब्रह्माण्डपुराणमधिकमुक्त्वाऽन्ते चतुर्लक्षमित्युपसंहृतं तदद्दूरविप्रकर्षेण । भवन्ति हीदृशा अपि वादा यत्किंचिन्न्यूनाधिकं शतं लब्ध्वा 'शतं मया लब्धम्' इति । एवं भागवतीयमपि चतुर्लक्षवचनं व्याख्येयम् । याऽपि विष्णुपुराणे ब्रह्माण्डमादाय वायवीयत्यागेन या च ब्रह्मवैवर्ते वायवीयमुपादाय ब्रह्माण्डपुराणपरित्यागेनाष्टादश संख्योक्ता सा कल्पभेदेन व्यवस्थापनीया । काशीखण्डादयस्तु स्कान्दान्तर्गता एव । तथा च प्रभासखण्डम्– ' स्कान्दं तु सप्तधा भिन्नं वेदव्यासेन धीमता । एकाशीतिसहस्राणि शतं चैकं च संख्यया ॥ तस्याऽऽद्यो यो विभागस्तु स्कन्दमाहात्म्यसंयुतः । माहेश्वरः समाख्यातो द्वितीयो वैष्णवः स्मृतः ॥ तृतीयो ब्राह्मणः प्रोक्तः सृष्टिसंक्षेपसूचकः ।· काशीमाहात्म्यसंयुक्तः चतुर्थः परिपठ्यते ॥ रेवायाः पञ्चमो भागः सोज्जयिन्याः प्रकीर्तितः । षष्ठस्तस्य विभागस्तु तयोर्माहात्म्यसूचकः । सप्तमो यो विभागोऽयं स्मृतः प्राभासिको द्विजाः ॥ ' इति । एतद्भिन्नान्युपपुरानि । तथा च महापुराणान्युक्त्वोक्तं कौर्मे महापुराणे– ' अन्यान्युपपुराणानि मुनिभिः कथितानि तु । अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः ॥ ' । श्रुत्वा कथितानीत्यन्वयः । पप्र. १२–१३

(१) भाग. १२।१३।५ ; पप्र. १२ तु ( च ).
(२) भाग. १२।१३।६ ; पप्र. १२ लिङ्गा (लैङ्ग).
(३) भाग. १२।१३।७ ; पप्र. १२.
(४) भाग. १२।१३।८ ; पप्र. १२ तत्तु ( तच्च ) विंशत्सौ ( विंशं सौ ).
(५) भाग. १२।१३।९ ; पप्र. १२ पू.

## लिङ्गपुराणम्

पाशुपतं कापिलं च योगशास्त्रं प्रमाणम्, तत्र पाशुपतं प्रधानम्

[1]देवादयः पिशाचान्ताः पशवः परिकीर्तिताः ।
तेषां पतित्वात्सर्वेशो भवः पशुपतिः स्मृतः ॥
तेन प्रणीतो रुद्रेण पशूनां पतिना द्विजाः ।
योगः पाशुपतो ज्ञेयः परावरविभूतये ॥
[2]व्रतं पाशुपतं योगं कापिलं चैव निर्मितम् ।
पूर्वं पाशुपतं ह्येतन्निर्मितं तदनुत्तमम् ॥

पाशुपतं व्रतं योगं योगशास्त्रं कापिलं सांख्यशास्त्रं च मयेति शेषः । निर्मितं तयोरिति शेषः, एतद्योगरूपं पाशुपतम् अनुत्तमं तत् तस्मात्कारणात् पूर्वनिर्मितमुत्पादितमित्यर्थः । शितो.

अष्टादश पुराणानि तेषामृषयश्च

[3]इतिहासपुराणानि भिद्यन्ते कालगौरवात् ॥

इतिहासपुराणान्यपि कालगौरवात् अनेककल्पभेदात् भिद्यन्ते भेदविशिष्टानि भवन्तीत्यर्थः । शितो.

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
भविष्यं नारदीयं च मार्कण्डेयमतः परम् ॥

(१) लिङ्ग. १।७।५४–५५.
(२) लिङ्ग. १।३४।११.
(३) लिङ्ग. १।३९।६०–६५.

आग्नेयं ब्रह्मवैवर्तं लैङ्गं वाराहमेव च ।
वामनाख्यं ततः कूर्मं मात्स्यं गारुडमेव च ॥

स्कान्दं तथा च ब्रह्माण्डं तेषां भेदः प्रकथ्यते ।
लैङ्गमेकादशविधं प्रभिन्नं द्वापरे शुभम् ॥

पुराणानुक्रमं कथयति– ब्राह्ममित्यादिसार्धद्वाभ्याम् । तथा च पूर्वोक्तप्रकारः तेषां भेदः प्रकथ्यते वर्ण्यते इत्यर्थः । शुभं कल्याणकरम् । लैङ्गम् एकादशविधम् एकादशात्मकं द्वापरे प्रभिन्नं विभक्तम् इत्यर्थः । शितो.

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥

‡ वेदपुराणविभाजकऋषिमुख्यान् कथयति– मन्वत्रीत्यादिना । शितो.

पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च एवमाद्यैः सहस्रशः ॥

एवमाद्यैः एतन्मुख्यैः सहस्रशः सहस्रावधिऋषिभिः भिद्यन्ते इति शेषः । शितो.

[1]अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः ।
प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः ।
षट्प्रकारं समस्तार्थसाधकं ज्ञानसंचयम् ॥

षट्प्रकारं षडंशरूपम् । शितो.

षट्साहस्रमितं सर्वं वेदार्थेन च संयुतम् ।
चतुर्थं हि पुराणानां संहितासु सुशोभनम् ॥

‡ अत्रानुक्रान्तमन्वाद्यृषीणां वेदमहापुराणविभाजकत्वस्याप्रसिद्धत्वात् अनेकेषामुपपुराणकर्तृत्वस्याप्यप्रसिद्धत्वात् व्याख्यानमिदं न मनोहरं प्रतिभाति । मन्वादीनां स्मृतिकर्तृत्वप्रसिद्धेः स्कन्दपुराणेऽनयैवाक्षरानुपूर्व्या कृताद्यनुक्रमात्पूर्वं दृश्यमानः 'धर्मशास्त्राणि लोकार्थं भिद्यन्ते चापि द्वापरे।' इत्यर्धश्लोकोऽत्रापि भूतपूर्वोऽपि लेखकादिप्रमादादभावमापन्न इति भाति ।

(१) लिङ्ग. १।६४।१२०–१२२.

## स्कन्दपुराणम्

पाशुपतो धर्मः प्रधानः , अष्टादशपुराणानि, धर्मशास्त्रप्रयोजकाः

[1]धर्मः पाशुपतः श्रेष्ठः स्कन्देन प्रतिपालितः ॥
शुद्धा पञ्चाक्षरी विद्या प्रासादी तदनन्तरम् ।
षडक्षरी तथा विद्या प्रासादस्य च दीपिका ॥
स्कन्दात्तत्समनुप्राप्तमगस्त्येन महात्मना ।
पश्चादाचार्यभेदेन ह्यागमा बहवोऽभवन् ॥

[2]यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
तस्मात्सदा महद्भिश्च आत्मार्थं च परार्थतः ।
सतां धर्मो न संत्याज्यो न्याय्यं तच्छिक्षणं तव ॥

[3]इतिहासपुराणानि भिद्यन्ते लोकगौरवात् ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं तथा ॥
वाराहं द्वादशं चैव स्कान्दं चैव त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यं षोडशकं प्रोक्तं गारुडं च ततः परम् ।
अतः परं तु ब्रह्माण्डमेवं चाष्टादशानि हि ॥
धर्मशास्त्राणि लोकार्थं भिद्यन्ते चापि द्वापरे ॥
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

वेदस्य स्वतः प्रामाण्यम्

[4]न हि प्रवृत्तिर्विष्णोस्तु विना वेदं प्रवर्तते ॥

(१) स्कन्द. १।१।७।४३–४५.
(२) स्कन्द. १।२।१३।९६–९७.
(३) स्कन्द. १।२।४०।१९८–२०२, २०८–२१०.
(४) स्कन्द. २।२।२१।५–६.

परेषां स्वस्य वा सृष्टौ श्रुतिप्रामाण्यवान्प्रभुः ।
विना श्रुतिं प्रवर्तेच्चेत्कस्तत्प्रामाण्यमृच्छति ॥
[1]अत्र चेष्टा भगवतो वेदार्थ इति धार्यताम् ॥
समतिक्रान्तवेदो हि न कदाचित्प्रवर्तते ।
वेदरक्षार्थमेवास्य संभवो हि युगे युगे ॥
प्रमाणभूतो भगवान् विरुद्धं कथमाचरेत् ।
तस्मिन् विरुद्धं चरति जगदेव तथा भवेत् ॥
आचारेण हि वेदार्थो नियतो धामतां गतः ॥
चतुर्दशापि या विद्या धर्मनिर्णयहेतवः ।
ताः सर्वास्तव वाक्यानि मुखपद्मविनिर्गताः ॥
ताभिरेवाऽऽचरेद्धर्ममिति शास्त्रार्थनिश्चयः ॥
[2]साधारणो धर्मपन्था नृपाणां नृपसत्तम ।
प्रवर्तितश्च पूर्वेण पाल्यतेऽनन्तरेण सः ॥
[3]वेदैश्चतुर्भिस्तन्त्रैश्च सहितान्स्मृतिभिस्तथा ॥
पुराणैरितिहासैश्च स्वाज्ञारूपैर्महेश्वरः ।
ऋषीन्प्रवर्तकांश्चक्रे धर्मगुप्त्यै महाप्रभुः ॥
[4]पञ्चरात्रं महातन्त्रं भगवद्भक्तिपुष्टये ॥
[5]ऋग्वेदं वदनात्पूर्वाद्यजुर्वेदं च दक्षिणात् ।
ससर्ज पश्चिमात्साम सौम्याच्चाथर्वसंज्ञितम् ॥
इतिहासपुराणानि यज्ञान् विप्रशतं तथा ।
वस्वादित्यमरुद्विश्वान् साध्यांश्च
मुखतोऽसृजत् ॥

सदाचारलक्षणम्

[6]विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने ।
सद्भिस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥
[7]तस्मात्सर्वः कुलाचारः स्थानाचारस्तथैव च ।
गोत्राचारः पालनीयो यथावित्तानुसारतः ॥

(१) स्कन्द. २।२।३८।५१–५४, ६५–६६.
(२) स्कन्द. २।२।४८।१९.
(३) स्कन्द. २।७।५।८–९.
(४) स्कन्द. २।९।५।२५.
(५) स्कन्द. २।९।२४।४०-४१.
(६) स्कन्द. ३।२।५।१२–१३.
(७) स्कन्द ३।२।४०।६५–६६.

[1]रागद्वेषविनिर्मुक्तैर्विद्वद्भिर्यदनुष्ठितः ।
सदाचारः स विज्ञेयो धर्ममूलो(? लं)
मनीषिभिः ॥

अत्र रागद्वेषराहित्यविशेषणात् पराशरादिकृतकैवर्तकन्यागमनादेः अनाचरणीयत्वमुक्तम् । इदमेवाभिप्रेत्याऽऽह हारीतः– ' अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तत्तदुक्तं कर्म आचरेत् ॥ ' इति ।
इन्दु. ४

श्रुतिस्मृतिपुराणानां सदाचारस्य च धर्मे प्रामाण्यम्

[2]श्रुतिस्मृती तु नेत्रे द्वे पुराणं हृदयं स्मृतम् ।
श्रुतिस्मृतिभ्यां हीनोऽन्धः काणः स्यादेकया
विना ॥
पुराणहीनाद्धृच्छून्यात्काणान्धावपि तौ वरौ ।
श्रुतिस्मृत्युदितो धर्मः पुराणे परिगीयते ॥
चतुर्दशसु विद्यासु पुराणं दीप उत्तमः ।
अन्धोऽपि न तदालोकात्संसाराब्धौ
क्वचित्पतेत् ॥
[3]वेदाः प्रमाणं सर्वत्र प्रतिष्ठां परमामिताः ॥

किं प्रत्यक्षादीनामिव प्रामाण्यम्, नेत्याह– परमेति । परमां प्रतिष्ठाम् इताः प्राप्ताः इति । अपौरुषेयत्वात् ' तर्काप्रतिष्ठानात् ' इति न्यायेनोपबृंहितव्याससूत्राच्चेति भावः । रामा.

[4]विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने ।
विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥

सदाचारस्य लक्षणमाह– विद्वेषेति । यं क्रियाकलापम् । ‡ धर्ममूलं पुण्यस्य हेतुम् । रामा.

‡ व्याख्यानमिदं न रुचिरम् । तथाहि– यद्यस्य व्याख्यानस्य ' द्वेषादिरहितविद्वदनुष्ठितस्य सदाचारस्य तज्जन्यविद्वन्निष्ठफलजनकपुण्यरूपव्यापारं प्रति हेतुत्वम् ' इति यथाश्रुतार्थे तात्पर्यम्, तदा मन्वाद्युक्तस्य धर्मप्रमितौ

(१) इन्दु. ३.
(२) स्कन्द. ४।१।२।९६–९७, १००.
(३) स्कन्द. ४।१।३१।२१.
(४) स्कन्द. ४।१।३५।२५.

[1]धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ॥
[2]ब्रह्मणा ध्यायमानश्च ज्ञानार्थं भगवान् भवः ।
ब्रह्मणस्तपसा हृष्टः प्रादाद्वेदं षडङ्गकम् ॥
[3]अमार्गे मा वदन्त्वत्र न निन्द्याः श्रुतयोऽव्ययाः ।
पुराणं नान्यथा प्रोक्तं ब्रह्मणा लोककर्तृणा ॥
ये निन्दन्ति पुराणानि धर्मशास्त्राणि नास्तिकाः ।
ते यान्ति नरकं घोरं यावदाभूतसंप्लवम् ॥
[4]प्राप्नुवन्ति पिशाचत्वं तथा ये वेदनिन्दकाः ॥
निन्दन्ति ये पुराणानि धर्मशास्त्राणि सर्वदा ।
ते भवन्ति पिशाचाश्च ये सदा पिशुना नराः ॥
[5]वेदाद्यज्ञाः प्रवर्तन्ते वेदादिष्टिश्च कामिका ।
प्रवर्तन्ते क्रिया वेदाद्वेदमूलमिदं जगत् ॥
[6]वेदोपवेदवेदाङ्गादीन्यभिव्यस्य पूरितः ।
अष्टादशपुराणानां वक्ता सत्यवतीसुतः ॥
तं नमस्कृत्य वक्ष्यामि पुराणानि यथाक्रमम् ।
येषामभिव्याहरणादभिवृद्धिर्वृषायुषोः ॥
श्रुतिः स्मृतिश्च विप्राणां चक्षुषी परिकीर्तिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥
श्रुतिस्मृतिपुराणानि विदुषां लोचनत्रयम् ।
यस्त्रिभिर्नयनैः पश्येत्सोंऽशो माहेश्वरो मतः ॥

आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता ।
शौनकीया च पौराणी धर्मशास्त्रात्मिका च या ॥
तिस्रो विद्या इमा मुख्याः सर्वशास्त्रविनिर्णये ॥

पुराणमहिमा, अष्टादश पुराणानि, तेषां श्लोकसंख्या च

पुराणं पञ्चमो वेद इति ब्रह्मानुशासनम् ॥
यो न वेद पुराणं हि न स वेदात्र किंचन ।
कतमः स हि धर्मोऽस्ति किं वा ज्ञानं तथाविधम् ॥
अन्यद्वा तत्किमत्राऽऽह पुराणे यन्न दृश्यते ।
वेदाः प्रतिष्ठिताः पूर्वं पुराणे नात्र संशयः ॥
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
इतिहासपुराणैश्च कृतोऽयं निश्चयः पुरा ॥
आत्मा पुराणं वेदानां पृथगङ्गानि तानि षट् ।
यच्च दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ॥
उभाभ्यां यत्तु दृष्टं हि तत्पुराणेषु गीयते ॥
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणः(? णा) स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवाऽऽसीदस्मिन् कल्पान्तरे मुने ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥
स्मृत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः ।
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुनिः ॥
व्यासरूपं विभुः कृत्वा संहरेत्स युगे युगे ।
अष्टलक्षप्रमाणे तु द्वापरे द्वापरे सदा ॥
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ।
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥
तदथात्र चतुर्लक्षं संक्षेपेण निवेशितम् ।
पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणु त्वमृषिसत्तम ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
ब्राह्मं पुराणं तत्राऽऽद्यं संहितायां विभूषितम् ।
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥

---

सदाचारप्रामाण्यस्य मूलवचने प्रत्यभिज्ञायमानस्याप्यव्याख्यातत्वादयुक्तमिदं व्याख्यानम् । यदि तु सदाचारस्य धर्मप्रामाण्याभावे पुण्यहेतुत्वानुपपत्तेरर्थसिद्धे प्रामाण्ये तात्पर्यम्, तदैवं व्यवधानेन प्रामाण्यपरत्वापेक्षया वरं 'धर्मस्य लक्षणया धर्मप्रमितेः मूलं करणम्' इति साक्षादेव प्रामाण्यं व्याख्यातुम् ।

(१) स्कन्द. ४।१।४०।१३८ : ५।२।२८।१० रथा ( समा ).
(२) स्कन्द. ५।१।२।१०–११.
(३) स्कन्द. ५।२।६७।३०–३१.
(४) स्कन्द. ५।२।६८।२८–२९.
(५) स्कन्द. ५।२।८३।१७.
(६) स्कन्द. ५।३।१।१३–५२.

पाद्मं च पञ्चपञ्चाशत्सहस्राणि निगद्यते ।
तृतीयं वैष्णवं नाम त्रयोविंशतिसंख्यया ॥
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ।
शिवभक्तिसमायोगाच्छैवं तच्चापराख्यया ॥
चतुर्विंशतिसंख्यातं सहस्राणि तु शौनक ।
चतुर्भिः पर्वभिः प्रोक्तं भविष्यं पञ्चमं तथा ॥
चतुर्दशसहस्राणि तथा पञ्चशतानि तत् ।
मार्कण्डं नवसाहस्रं षष्ठं तत्परिकीर्तितम् ॥
आग्नेयं सप्तमं प्रोक्तं सहस्राणि तु षोडश ।
अष्टमं नारदीयं तु प्रोक्तं वै पञ्चविंशतिः ॥
नवमं भगवन्नाम भागद्वयविभूषितम् ।
तदष्टादशसाहस्रं प्रोच्यते ग्रन्थसंख्यया ॥
दशमं ब्रह्मवैवर्तं तावत्संख्यमिहोच्यते ।
लैङ्गमेकादशं ज्ञेयं तथैकादशसंख्यया ॥
भागद्वयं विरचितं तल्लिङ्गमृषिपुंगव ।
चतुर्विंशतिसाहस्रं वाराहं द्वादशं विदुः ॥
विभक्तं सप्तभिः खण्डैः स्कान्दं भाग्यवतां वर ।
तदेकाशीतिसाहस्रं संख्यया वै निरूपितम् ॥
ततस्तु वामनं नाम चतुर्दशतमं स्मृतम् ।
संख्यया दशसाहस्रं प्रोक्तं कुलपते पुरा ॥
कौर्मं पञ्चदशं प्राहुर्भागद्वयविभूषितम् ।
दशसप्तसहस्राणि पुरा सांख्यपते कलौ ॥
मात्स्यं मत्स्येन यत्प्रोक्तं मनवे षोडशं क्रमात् ।
तच्चतुर्दशसाहस्रं संख्यया वदतां वर ॥
गारुडं सप्तदशमं स्मृतं चैकोनविंशतिः ।
अष्टादशं तु ब्रह्माण्डं भागद्वयविभूषितम् ॥
तच्च द्वादशसाहस्रं शतमष्टसमन्वितम् ॥

अष्टादश उपपुराणानि

तथैवोपपुराणानि यानि चोक्तानि वेधसा ॥
इदं ब्रह्मपुराणस्य सुलभं सौरमुत्तमम् ।
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ॥
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ।
सनत्कुमारनाम्ना हि तद्विख्यातं महामुने ॥
द्वितीयं नारसिंहं च पुराणे पाद्मसंज्ञिते ।
शौकेयं हि तृतीयं तु पुराणे वैष्णवे मतम् ॥
बार्हस्पत्यं चतुर्थं च वायव्यं संमतं सदा ।
दौर्वाससं पञ्चमं च स्मृतं भागवते सदा ॥
भविष्ये नारदोक्तं च सूरिभिः कथितं पुरा ।
कापिलं मानवं चैव तथैवोशनसेरितम् ॥
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् ॥
पाराशरं भागवतं कौर्मं चाष्टादशं क्रमात् ।
एतान्युपपुराणानि मयोक्तानि यथाक्रमम् ॥

पुराणोत्पत्तिः

श्रीमार्कण्डेय उवाच–

'शृण्वन्तु ऋषयः सर्वे त्वं च तात युधिष्ठिर ।
पुराणं नर्मदायां तु कथितं च त्रिशूलिना ॥
वायोः सकाशाच्च मया तेनापि च महेश्वरात् ।
अशक्यत्वान्मनुष्याणां संक्षिप्तमृषिभिः पुरा ॥
मायूरं प्रथमं तात कौर्म्यं च तदनन्तरम् ।
पुरं तथा कौशिकं च मात्स्यं द्विरदमेव च ॥
वाराहं यन्मया दृष्टं वैष्णवं चाष्टमं परम् ।
न्यग्रोधाख्यमतश्चाऽऽसीदाकाङ्क्षं पुनरुत्तमम् ॥
पद्मं च तामसं चैव संवर्तोद्वर्तमेव च ।
महाप्रलयमित्याहुः पुराणे वेदचिन्तकाः ॥
एतत्संक्षेपतः सर्वं संक्षिप्तं तैर्महात्मभिः ।
विभक्तं च चतुर्भागैर्ब्रह्माद्यैश्च महर्षिभिः ॥

विष्णोः सकाशाद्ब्रह्मणो वेदोपलब्धिः

'ततस्त्वेकार्णवीभूते सर्वतः सलिलावृते ।
जगत्कृत्वोदरे सर्वं सुष्वाप भगवान् हरः ॥
इतैर्वेदैश्चतुर्भिश्च ब्रह्माऽप्येवं महेश्वरः ।
भृग्वाद्यैर्मानसैः पुत्रैः स्तौति शंकरमव्ययम् ॥
भक्त्या परमया राजंस्तत्र शंभुमनामयम् ।
स्तुवन्तस्तत्र देवेशं मन्त्रैरीश्वरसंभवैः ॥

(१) स्कन्द. ५।३।५।१५–२०.
(२) स्कन्द. ५।३।९।४, १२–४०.

अकस्मात्संप्रलीनास्ते चत्वारः श्रुतयोऽर्णवे ।
वेदैः प्रलीनैर्भगवानज्ञानतमसा वृतः ॥
प्रसुप्तं देवमीशानं बोधयन्समुपस्थितः ।
उत्तिष्ठ हर पिङ्गाक्ष महादेव महेश्वर ॥
मम वेदा हृताः सर्वे अतोऽहं स्तोतुमुद्यतः ।
वेदैर्व्याप्तं जगत्सर्वं दिव्यादिव्यं चराचरम् ॥
अतीतं वर्तमानं च स्मरामि च सृजाम्यहम् ।
तैर्विना चाऽहमेकस्तु मूकोऽन्धो जडवत्सदा ॥
गतिर्वीर्यं बलोत्साहौ तैर्विना न प्रजायते ।
तैर्विना देवदेवेश नाहं किंचित्स्मरामि वै ॥
तान् वेदान् देवदेवेश शीघ्रं मे दातुमर्हसि ।
जडान्धबधिरं सर्वं जगत् स्थावरजङ्गमम् ॥
स्थानादि दश चत्वारि न शोभन्ते सुरेश्वर ।
प्रणमाम्यल्पवीर्यत्वाद्वेदहीनः सुरेश्वर ॥
वेदेभ्यः सकलं जातं यत्किंचित्सचराचरम् ।
तावच्छोभन्ति शास्त्राणि समस्तानि जगद्गुरो ॥
यावद्वेदनिधिरयं नोपतिष्ठेत्सनातनः ।
यथोदितेन सूर्येण तमो याति विनाशताम् ॥
एवं समस्तपापानि यान्ति वेदस्य धारणात् ।
वेदे रहसि यत्सूक्ष्मं यत्तद्ब्रह्म सनातनम् ॥
हृदिस्थं देव जानामि गतं तद्वेदगर्जनात् ।
वेदानुच्चरतो मेऽद्य तव शंकर चाग्रतः ॥
अकस्मात्ते गता वेदा न सृजेयं विभो भुवम् ।
तेऽपि सर्वे महादेव प्रविष्टाः संमुखार्णवम् ॥
ते याच्यमाना देवेश तिष्ठन्तु स्मरणे मम ।
दुहितेयं विशालाक्षी सर्वैः सर्वं विजानते ॥
जायती युगसाहस्रं नान्या काचिद्भवेदृशी ।
ऋषिश्चायं महाभागो मार्कण्डो धीमतां वरः ॥
कल्पे कल्पे महादेव त्वामयं पर्युपासते ।
जगत्त्रयहितार्थाय चरते व्रतमुत्तमम् ॥
एवमुक्तस्तु देवेशो ब्रह्मणा परमेष्ठिना ।
उवाच श्लक्ष्णया वाचा नर्मदां सरितां वराम् ॥
कथयस्व महाभागे ब्रह्मणस्त्वं तु पृच्छतः ।
केन वेदा हृताः सर्वे वेधसो जगतीगुरोः ॥
एवमुक्ता तु रुद्रेण उवाच मृगलोचना ।
ब्रह्मणो जपतो वेदांस्त्वयि सुप्ते महेश्वर ॥
भवतश्छिद्रमासाद्य घोरेऽस्मिन्सलिलावृते ।
पूर्वकल्पसमुद्भूतावसुरौ सुरदुर्जयौ ॥
श्रिया वृत्तौ महादेव तया चोत्पादितौ पुरा ।
सुरासुरसुदुर्जेयौ दानवौ मधुकैटभौ ॥
तौ वायुभूतौ सूक्ष्मौ च पठतोऽस्मात्पिता-
महात् ।
तावाशु हृत्वा वेदांश्च प्रविष्टौ च महार्णवम् ॥
एतच्छ्रुत्वा महातेजा ह्यमृतायास्ततो वचः ।
सस्मार स च देवेशं शङ्खचक्रगदाधरम् ॥
स विवेश महाराज भूतलं ससुरोत्तमः ।
दानवान्तकरो देवः सर्वदैवतपूजितः ॥
मीनरूपधरो देवो लोडयामास चार्णवम् ।
वेदांश्च ददृशे तत्र पाताले निहितान् प्रभुः ॥
तौ च दैत्यौ महावीर्यौ दृष्टवान् मधुसूदनः ।
महावेगौ महाबाहू सूदयामास तेजसा ॥
वेदांस्तत्रापि तोयस्थानानिनाय जगद्गुरुः ।
चतुर्वक्त्राय देवायाददाच्चक्रविभूषितः ॥
ततः प्रहृष्टो भगवान्वेदांल्लब्ध्वा पितामहः ।
जनयामास निखिलं जगद्भूयश्चराचरम् ॥

शिष्टाचारः धर्मे प्रमाणम्

'यदाचरन्ति विद्वांसः सदा धर्मपरायणाः ।
तदेव विदुषा कार्यमात्मनो हितमिच्छता ॥

श्लोकसंख्यायुतानि अष्टादशपुराणानि उपपुराणानि च

रोमहर्षण उवाच—

'स्कान्दं पुराणं कथितं पार्वत्यग्रे पिनाकिना ॥
पार्वत्या षण्मुखस्याग्रे तेन नन्दिगणाय वै ।
नन्दिना तु कुमाराय तेन व्यासाय धीमते ॥
व्यासेन मे समाख्यातं भवद्भ्योऽहं प्रकीर्तये ॥

(१) स्कन्द. ६।३२।६०.
(२) स्कन्द. ७।१।२७–२९.

[1]अथ संक्षेपतो वक्ष्ये पुराणानामनुक्रमम् ।
लक्षणं चैव संख्यां च उक्तभेदांस्तथैव च ॥
पुरा तपश्चचारोग्रममराणां पितामहः ।
आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः ॥
ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम् ।
नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥
निर्गतं ब्रह्मणो वक्त्राद्ब्राह्मं वैष्णवमेव च ।
शैवं भागवतं चैव भविष्यं नारदीयकम् ॥
मार्कण्डेयमथाऽऽग्नेयं ब्रह्मवैवर्तमेव च ।
लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च ॥
कौर्म्यं मात्स्यं गारुडं च वायवीयमनन्तरम् ।
अष्टादशं समुद्दिष्टं सर्वपातकनाशनम् ॥
एकमेव पुरा ह्यासीद्ब्रह्माण्डं शतकोटिधा ॥
ततोऽष्टादशधा कृत्वा वेदव्यासो युगे युगे ।
प्रख्यापयति लोकेऽस्मिन्साक्षान्नारायणांशजः ॥
अन्यान्युपपुराणानि मुनिना कथितानि तु ।
तानि वः कथयिष्यामि संक्षेपादवधार्यताम् ॥
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेणानुभाषितम् ॥
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चार्यं(?) नारदोक्तमतः परम् ॥
कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चान्यत्कालिकाह्वयमेव च ॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् ।
पराशरोक्तं परमं मारीचं भार्गवाह्वयम् ॥
एतान्युपपुराणानि कथितानि द्विजोत्तमाः ॥
[2]पुराणं सर्वशास्त्राणां ब्रह्माण्डं प्रथमं स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवाऽऽसीत्तस्मिन्कल्पान्तरे तथा ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥

(१) स्कन्द. ७।१।२।२-१५.

(२) स्कन्द. ७।१।२।१८-२८, ३०-३३, ३५-३६, ३९-४०, ४२-४३, ४५, ४७-५०, ५२-५८, ६०-६१, ६३-६४, ६६-६७, ६९-७०, ७२-७५, ७७-१०१.

विनिर्दग्धेषु लोकेषु कृष्णेनानन्तरूपिणा ।
साङ्गांश्च चतुरो वेदान्पुराणन्यायविस्तरम् ॥
मीमांसां धर्मशास्त्रं च परिगृह्याऽऽत्मसात्कृतम् ।
मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ॥
अशेषमेव कथितं ब्रह्मणे दिव्यचक्षुषे ।
ब्रह्मा जगाद च मुनींस्त्रिकालज्ञानदर्शनः ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥
ततः कालक्रमेणासौ व्यासरूपधरो हरिः ।
अष्टादशपुराणानि संक्षेप्स्यति युगे युगे ॥
चतुर्लक्षप्रमाणानि द्वापरे द्वापरे सदा ।
तदाऽष्टादशधा कृष्णो भूर्लोकेऽस्मिन्प्रभाषते ॥
अद्यापि देवलोके तु शतकोटिप्रविस्तरम् ।
तदर्थोऽत्र चतुर्लक्षः संक्षेपेण निवेशितः ॥
पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि संख्यां च मुनिसत्तमाः ॥
ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं तद्दशसाहस्रं पुराणं तदिहोच्यते ॥
एतदेव यदा पद्ममभूद्धैरण्मयं जगत् ।
तद्वृत्तान्ताश्रयान्तं तत्पाद्ममित्युच्यते बुधैः ॥
पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह पठ्यते ॥
वाराहकल्पवृत्तान्तमधिकृत्य परात्परः ।
यत्राऽऽह धर्मानखिलांस्तदुक्तं वैष्णवं विदुः ॥
चरितैरङ्कितं विष्णोस्तल्लोके वैष्णवं विदुः ।
त्रयोविंशतिसाहस्रं पुराणं तत्प्रकीर्तितम् ॥
श्रुतकल्पप्रसङ्गेन धर्मान्वायुरथाब्रवीत् ।
यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ॥
चतुर्विंशतिसाहस्रं नानावृत्तान्तसंयुतम् ।
धर्मार्थकाममोक्षैश्च साधुवृत्तसमन्वितम् ॥
यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं पुण्यं पुण्योद्वाहसमन्वितम् ॥
अष्टादश सहस्राणि पुराणं तत्प्रकीर्तितम् ॥

यत्राऽऽह नारदो धर्मान्बृहत्कल्पाश्रयांस्त्विह ।
पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ॥
यत्राधिकृत्य शकुनीन्धर्माधर्मविचारणम् ।
पुराणं नवसाहस्रं मार्कण्डेयं तदुच्यते ॥
यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ।
वशिष्ठायाग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते ॥
तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम् ॥
यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्पतिः ।
मनवे कथयामास भूतग्रामस्य लक्षणम् ॥
चतुर्दश सहस्राणि तथा पञ्च शतानि च ।
भविष्यचरितप्रायं भविष्यं तदिहोच्यते ॥
रथंतरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ।
प्रोक्तं ब्रह्मवराहस्य चरितं वर्ण्यतेऽत्र च ॥
तदष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते ॥
यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ।
धर्मार्थकाममोक्षार्थानाग्नेयमधिकृत्य च ॥
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥
तदेकादशसाहस्रं ... ... ... ... ।
महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥
मानव( ? वामन )स्य प्रसङ्गेन धन्यस्य मुनिसत्तमाः ।
चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥
यत्र माहेश्वरान्धर्मानधिकृत्य च षण्मुखम् ॥
कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ॥
स्कान्दं नाम पुराणं तदेकाशीतिर्निगद्यते ।
सहस्राणि शतं चैकमिति मर्त्येषु पठ्यते ॥
त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधात्तत्तु वामनं परिकीर्तितम् ॥
पुराणं दशसाहस्रं कौर्मकल्पानुगं शिवम् ॥
यत्र धर्मार्थकामानां मोक्षस्य च रसातले ।
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसंनिधौ ।
सप्तदशसहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ।
मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ॥
अधिकृत्याब्रवीत्सप्तकल्पवृत्तं मुनिव्रताः ।
तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥
यदा वा गरुडे कल्पे विश्वाण्डाद्गरुडोऽभवत् ।
अधिकृत्याब्रवीत्कृष्णो गारुडं तदिहोच्यते ॥
तदष्टादश चैकं च सहस्राणीह पठ्यते ॥
ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ।
तद्ब्रह्माण्डं पुराणं तु ब्रह्मणा समुदाहृतम् ॥
चतुर्लक्षमिदं प्रोक्तं व्यासेनाद्भुतकर्मणा ॥
इदं लोकहितार्थाय संक्षिप्तं द्वापरे द्विजाः ॥
इदमद्यापि देवेषु शतकोटिप्रविस्तरम् ।
उपभेदान्प्रवक्ष्यामि लोके ये संप्रतिष्ठिताः ॥
पाद्मे पुराणे यत्प्रोक्तं नारसिंहोपवर्णनम् ।
तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते ॥
नन्दिने यत्र माहात्म्यं कार्तिकेयेन वर्णितम् ।
लोके नन्दिपुराणं वै ख्यातमेतद्द्विजोत्तमाः ॥
यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम् ।
प्रोच्यते तत्पुनर्लोके साम्बमेव मुनिव्रताः ॥
एवमादित्यसंज्ञं तु तत्रैव परिपठ्यते ।
अष्टादशभ्यस्तु पृथक्पुराणं यत्तु दृश्यते ।
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥
पञ्चाङ्गानि पुराणस्य चाऽऽख्यानमितरत्स्मृतम् ।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुवंशचरितं पुराणं पञ्चलक्षणम् ॥
ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च ।
संहारश्च प्रदृश्येत पुराणं पञ्चलक्षणम् ॥
धर्मश्चार्थश्च कामश्च मोक्षश्च परिकीर्त्यते ।
सर्वेष्वपि पुराणेषु तद्विरुद्धे च यत्फलम् ॥

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥
तद्वदग्ने च माहात्म्यं तामसेषु शिवस्य हि ।
संकीर्णे च सरस्वत्याः पितृणां च निगद्यते ॥
चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः ।
अष्टादशपुराणेषु शेषेषु भगवाञ्छिवः ॥
वेदवन्निश्चलं मन्ये पुराणं वै द्विजोत्तमाः ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥
बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति ।
इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा ॥
यन्न दृष्टं हि वेदेषु न दृष्टं स्मृतिषु द्विजाः ।
उभयोर्यन्न दृष्टं च तत्पुराणेषु गीयते ॥
यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
पुराणं नैव जानाति न च स स्याद्विचक्षणः ॥
अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमकरोद्वेदार्थैरुपबृंहितम् ॥
लक्षेणैकेन तत्प्रोक्तं द्वापरान्ते महात्मना ।
वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् ॥
ब्रह्मणा विहितं यच्च शतकोटिप्रविस्तरम् ।
आह तन्नारदायैव तेन वाल्मीकये पुनः ॥
वाल्मीकिना च लोके तु धर्मकामार्थसाधनम् ॥‡
एवं सपादाः पञ्चैते लक्षाः पुण्याः प्रकीर्तिताः ।
पुरातनस्य कल्पस्य पुराणे तु विदुर्बुधाः ॥
इतिहासपुराणानि भिद्यन्ते कालगौरवात् ।
स्कान्दं तथा च ब्रह्माण्डं पुराणं लैङ्गमेव च ॥
वाराहकल्पे विप्रेन्द्रास्तेषां भेदः प्रवर्तते ।
अष्टादशप्रकारेण ब्रह्माण्डं भिन्नमेव हि ॥
अष्टादशपुराणानि तेन जातानि भूतले ।
लैङ्गमेकादशविधं प्रभिन्नं द्वापरे शुभम् ॥

‡ अतः परं वाल्मीकिप्रोक्तलौकिकरामायणस्य संख्यायाः प्रतिपादकः 'प्रवर्तितं चतुर्विंशत्सहस्रपरिसंमितम्' इति-विधानपारिजातपठितमत्स्यपुराणीयार्धश्लोकसमानार्थकोऽर्धश्लोको भ्रष्ट इति वक्ष्यमाणसपादपञ्चलक्षसंख्यानुरोधेनानुमीयते ।

[1]स्कान्दं तु सप्तधा भिन्नं वेदव्यासेन धीमता ।
एकाशीतिसहस्राणि शतं चैकं तु संख्यया ॥
[2]तस्याऽऽद्यो यो विभागस्तु स्कन्दमाहात्म्यसंयुतः ।
माहेश्वरः समाख्यातो द्वितीयो वैष्णवः स्मृतः ॥
[3]तृतीयो ब्रह्मणः प्रोक्तः सृष्टिसंक्षेपसूचकः ।
काशीमाहात्म्यसंयुक्तश्चतुर्थः परिपठ्यते ॥
[4]रेवायाः पञ्चमो भागः सोज्जयिन्याः प्रकीर्तितः ।
षष्ठः कल्पो नागरश्च तीर्थमाहात्म्यसूचकः ॥
[5]सप्तमो यो विभागोऽयं स्मृतः प्राभासिको द्विजाः ।
सर्वे द्वादशसाहस्रा विभागाः संप्रकीर्तिताः ॥
[6]अस्मिन् प्राभासिकः सर्वो वर्ण्यते क्षेत्रविस्तरः ।
तीर्थानां चैव माहात्म्यं माहात्म्यं शङ्करस्य च ॥
अन्येषां चैव देवानां माहात्म्यं च प्रकीर्त्यते ।
इति भेदः पुराणानां संक्षेपात्कथितो द्विजाः ॥

## ¶ सह्याद्रिखण्डः

देशभेदेन रूढा निषिद्धाचाराः

[7]चर्माम्बु गुर्जरे चैव देशदोषः प्रकल्प्यते ।
दक्षिणे दासीगमनं दोषश्चैव महाद्भुतः ॥
न दन्तधौतं कर्नाटे काश्मीरे पटमार्जकः ।
तैलङ्गे गोवाहनं च प्रातरन्नं तु द्राविडे ॥

¶ सह्याद्रिखण्डः, सूतसंहिता, शंकरसंहितेत्यादिग्रन्थानां तेष्वेव ग्रन्थेषु स्कन्दपुराणीयत्वस्योक्तत्वेऽपीदानींतने स्कन्दपुराणेऽनुपलम्भात् तेषां स्कन्दपुराणोत्तरं स्वातन्त्र्येण संग्रहः कृतः ।

(१) स्कन्द. ७।१।२।१०२ ; पप्र. १३ कं तु (कं च).
(२) स्कन्द. ७।१।२।१०३ ; पप्र. १३.
(३) स्कन्द. ७।१।२।१०४ ; पप्र. १३ ब्रह्म (ब्राह्म).
(४) स्कन्द. ७।१।२।१०५ ; पप्र. १३ उत्तरार्धे ( षष्ठस्तस्य विभागस्तु तयोर्माहात्म्यसूचकः ॥ ).
(५) स्कन्द. ७।१।२।१०६ ; पप्र. १३ पू.
(६) स्कन्द. ७।१।२।१०७–१०८.
(७) सह्यं. २।१।८–१३.

एवं देशे च दोषाश्च स्वदेशे च प्रकल्प्यते ।
गुर्जरी कच्छहीना तु विधवा च सकञ्चुकी ॥

त्रिहोत्राश्च कनोजाश्च मत्स्यभुङ्मांसभुञ्जकाः ॥

कान्यकुब्जो भ्रातृगामी देशदोषाः प्रकीर्तिताः ।
यथा देशस्तथा दोषः स्वस्वदेशे प्रकल्प्यते ।
परदेशे कृतं कर्म बाध्यते चैव पातकम् ॥

एवमृषिकुलं श्रेष्ठं ब्राह्मण्यं चैव विस्तरम् ।
सर्वकर्मेषु(? र्मसु) शुद्धं च देशदोषश्च कल्प्यते ॥

'अधिकारमनावृ( ? ह )त्य कृतं कर्म विगर्हितम् ।
महद्भिर्नैव दोषाय लोकोपकृतिहेतुना ॥

अगस्त्यो भक्षयामास वातापिं जनकण्टकम् ।
द्वादशाब्दमनावृष्टौ तथा सारस्वता द्विज ॥

ब्राह्मणा वारयामासुर्मत्स्यान् वेदानुभक्षकान् ।
वराहे च तथा प्रोक्तो गजभक्षो द्विजोत्तमः ॥

द्रोहितानुकृतो लोके मांसभक्षणकारणात् ।
उक्तवान् परमं धर्मं भूयसां भक्षणं कथम् ॥

धर्मो वो नियतः सत्यो हिंसा तु बहुला यतः ।
आकर्ण्य तद्वचो लोकादचिरादर्थवद्वचः ॥

यथाचारं यथाकालं स्वस्वधर्मानुवर्तिनः ।
जनास्ते नावमन्तव्या दोषाः सर्वानुवर्तिनः ॥

कालग्राम्या जनपदा वैदिका लौकिकाश्च ये ॥

धर्मा निन्द्या अनिन्द्याश्च कुलग्रामावभेदकाः ।
जगन्नाथे मत्स्यभुञ्जी मद्यपीति सपूर्वगः ॥

उत्तरे मांसभागी च पश्चिमे जलजाहृतिः ।
मातुले च परीणाय( ? यो ) नर्मदादक्षवासिनः-
( ? नाम् ) ॥

यद्वा जनगृहीतत्वाद्धर्म एषो( ? वो )च्यते बुधैः ।
इतरेषामधर्मोऽसौ पातित्यात्पात( ? त्यापाद )-
को मतः ॥

(१) सह्यं. २१५।२७–३२, ६६–६९.

## सूतसंहिता

अष्टादश पुराणानि, अष्टादश उपपुराणानि च

सूत उवाच–

'ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते ।
तृतीयं वैष्णवं प्रोक्तं चतुर्थं शैवमुच्यते ॥

( १ ) विवक्षिताया अस्याः संहिताया व्यासमुखा-दागतत्वेन प्रामाण्यं स्थापयितुं नानामुनिप्रणीतसकलो-पपुराणमूलभूतानामष्टादशानां पुराणानां वेदशाखा-विभागस्य च प्रणयनेन व्यासस्य सर्वज्ञत्वमत एव तस्य माहेश्वरावतारत्वं च प्रतिपादयितुमष्टादशपुराणान्यनुक्राम-यति– ब्राह्ममित्यादि । ब्रह्मसंबन्धि ब्राह्मम् । 'तस्येदम्' (पासू. ४।३।१२०) इत्यणि 'नस्तद्धिते' ( पासू. ६।४।१४४ ) इति टिलोपस्य 'अन्' ( पासू. ६।४।१६७ ) इति प्रकृतिभावेन निरासेऽपि 'ब्राह्मोऽजातौ' ( पासू. ६।४।१७४ ) इति निपातनाट्टिलोपः । तादी.

ततो भागवतं प्रोक्तं भविष्याख्यं ततः परम् ।
सप्तमं नारदीयं च मार्कण्डेयं तथाऽष्टमम् ॥
आग्नेयं नवमं पश्चाद्ब्रह्मवैवर्तमेव च ।
ततो लैङ्गं वराहं च ततः स्कान्दमनुत्तमम् ॥
वामनाख्यं ततः कौर्मं मात्स्यं तत्परमुच्यते ।
गरुडाख्यं ततः प्रोक्तं ब्रह्माण्डं तत्परं विदुः ॥
ग्रन्थतश्च चतुर्लक्षं पुराणं मुनिपुङ्गवाः ॥

'ग्रन्थतश्च चतुर्लक्षम्' इति संख्याभिधानं प्रक्षेप-विप्लवपरिहाराय । तादी.

अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।
कामिकादिप्रभेदानां यथा देवो महेश्वरः ॥

कामिककारणादीनामागमसंहितानां शिवेनैव प्रणयना-त्प्रामाण्ये यथा विश्रम्भ एवं नारायणावतारेण व्यासेन प्रणयनात्पुराणेष्वप्यसंत्रविशिष्ट इत्याह– अष्टादशपुराणा-नामिति । तादी.

अष्टादश पुराणानि श्रुत्वा सत्यवतीसुतात् ।
अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु ॥

(१) सूसं. १।१।७–१९.

नानामुनिप्रणीतानामुपपुराणानामप्येतन्मूलत्वादेतेषां प्रणेतुर्व्यासस्य सार्वज्ञ्यं किं वक्तव्यमित्याह– अष्टादश पुराणानि श्रुत्वेति । तादी.

**आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ॥**
**द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ।**
**चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ॥**
**षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ।**
**अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ॥**
**ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ।**
**ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः ॥**
**ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ।**
**ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ॥**
**पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ।**
**भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम् ॥**

उपपुराणान्यष्टादशानुक्रामति– आद्यं सनत्कुमारेण प्रोक्तमित्यादिना । तादी.

स्कन्दपुराणस्य षट् संहिताः, तासां द्वितीया सूतसंहिता, संहितानां श्लोकसंख्याश्च

**लक्षं तु ग्रन्थसंख्याभिः सर्वविज्ञानसागरम्- (? सारजम्) ।**
**स्कान्दमद्याभिवक्ष्यामि पुराणं श्रुतिसंमितम् ॥**
**[1]षड्विधं संहिताभेदैः पञ्चाशत्खण्डमण्डितम् ।**
**आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता ॥**

अथेदानीं विवक्षितां सूतसंहितामवतारयितुमनुक्रान्तानां पुराणानां मध्ये त्रयोदशस्य स्कान्दपुराणस्य संहितापदविभागमाह– स्कान्दमद्याभिवक्ष्यामीति । तादी.

**[2]तृतीया शांकरी विप्राश्चतुर्थी वैष्णवी मता ।**
**तत्परा संहिता ब्राह्मी सौराऽन्या संहिता मता ॥**

सूरसंबन्धि सौरम् । तदस्यामस्तीति सौरा । 'अर्श-आदिभ्योऽच्' (पासू. ५।२।१२७) इत्यजन्तम् । मत्वर्थीयान्ताट्टाप् । सूरस्येयं संहितेति व्युत्पत्तौ 'तस्येदम्' (पासू. ४।३।१२०) इत्यणन्तान्ङीपा भवितव्यमिति । तादी.

**[1]ग्रन्थतः पञ्चपञ्चाशत्सहस्रेणोपलक्षिता ।**
**आद्या तु संहिता विप्रा द्वितीया षट्सहस्रिका ॥**
**तृतीया ग्रन्थतस्त्रिंशत्सहस्रेणोपलक्षिता ।**
**तुरीया संहिता पञ्चसहस्रेणाभिनिर्मिता ॥**
**ततोऽन्या त्रिसहस्रेण ग्रन्थेनैव विनिर्मिता ।**
**अन्या सहस्रतः सृष्टा ग्रन्थतः पण्डितोत्तमाः ॥**

सूतसंहितायाः चत्वारः खण्डाः तेषां श्लोकसंख्या च

**द्वितीयां संहितां वक्ष्ये सर्वपापप्रणाशिनीम् ।**
**मुनिभिर्देवगन्धर्वैः पूजितामतिशोभनाम् ॥**

इत्थं विभागमभिधाय विवक्षितां संहितां सूतः प्रतिजानीते– द्वितीयां संहितां वक्ष्य इति । तादी.

**चतुर्धा खण्डिता साऽपि पवित्रा वेदसंमिता ।**
**शिवमाहात्म्यखण्डाख्यः प्रथमः परिकीर्तितः ॥**

यद्यपि खण्डान्तरेष्वपि शिवमाहात्म्यमुच्यते तथाऽपि प्रथमस्य तत्प्राधान्यात्तेन व्यपदेशः । तादी.

**द्वितीयो ज्ञानयोगाख्यः सर्ववेदान्तसंग्रहः ।**
**तृतीयो मुक्तिखण्डाख्यश्चतुर्थो यज्ञवैभवः ॥**

द्वितीयो ज्ञानयोगाख्य इति । ज्ञानस्य योगाः उपायाः यमनियमादयः ज्ञानयोगाः । आख्यायन्तेऽस्मिन्नित्याख्यः । 'आतश्चोपसर्गे' (पासू. ३।१।१३६) इति कप्रत्ययः । ज्ञानयोगानामाख्य इति संबन्धसामान्यषष्ठ्या समासस्य (? सः । स) तु प्रकृते संबन्धविशेषे कर्मत्वे योग्यताबलात्पर्यवस्यति । न च कर्मणि षष्ठ्यैव समासः, स किं न स्यादिति वक्तव्यम् । $ 'कर्मण्यण्' (पासू. ३।२।१) इत्यनेन परेण बाधापातादिति । यज्ञवैभवखण्डे तु यज्ञाः

(१) सूसं. १।१।२० ; संम. २ उत्त.

(२) सूसं. १।१।२१ ; संम. २ चतुर्थचरणे (सौर्यन्त्या संहिता तथा).

$ सोपसर्गत्वात् 'आतोऽनुपसर्गे कः' (पासू. ३।२।३) इत्यणपवादस्य कस्याप्राप्तेरुत्सर्गस्याण एव प्राप्तिरित्यर्थः । तस्मिंस्तु सति आल्लोपाभावात् 'आतो युक् चिण्कृतोः' (पासू. ७।३।३३) इति युकि 'ज्ञानयोगाख्यायः' इति रूपमापद्येतेति भावः ।

(१) सूसं. १।१।२२–३५.

यज्ञविशेषाः वक्ष्यन्ते, ते सर्वे ज्ञानात्मका एव यज्ञाः । इह तु तदुपाया यमनियमादय इत्यर्थकरः । यज्ञवैभव इति । यज्ञानां वैभवः प्रभावः अस्मिन्निति यज्ञवैभवः । तादी.

**आद्यः सप्तशतं प्रोक्तो ग्रन्थतः पण्डितोत्तमाः ।**
**द्वितीयो ग्रन्थतः सप्तशतं त्रिंशत्ततोऽधिकम् ॥**

**ततोऽधिकं च सप्तैव मुनयः परिकीर्तितः ।**
**तृतीयः षट्शतं विप्राः सप्तत्रिंशद्विवर्जितः ॥**

आद्यः सप्तशतमिति । सप्तानां शतानां समाहारः सप्तशतमिति समाहारे द्विगुः । ¶ अकारान्तत्वेन प्राप्तं स्त्रीलिङ्गत्वं 'पात्रादिभ्यः प्रतिषेधः' (वार्तिकम्) इत्यनेन निषिध्यते । नन्वेकोऽयं खण्डः कथं सप्तशतसमाहारात्मकः? अत उक्तम्– ग्रन्थत इति । ग्रन्थद्वारा । स्वावयवभूतानां ग्रन्थानां सप्तशतसमाहारात्मकत्वात्तदभेदेन स्वयमपि सप्तशतमित्यर्थः । ततोऽधिकमिति । अधिकं च किंचिदस्तीति सामान्येनोपक्रम्य कियत्तदिति जिज्ञासायां त्रिंशदिति 'शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः' इतिवत् । तादी.

**चतुर्थस्तु मुनिश्रेष्ठाः सहस्राणां चतुष्टयम् ।**
**उपर्यधोभागभेदाद्द्विधाभूतः स उच्यते ॥**

चतुर्थ इति । चतुर्थखण्ड उपरिभागोऽधोभाग इति भेदेन द्विप्रकारः । तादी.

**आद्यस्त्रयोदशाध्यायो( ? यैर् ) द्वितीयो विंशतिस्तथा ।**
**तृतीयो नव विप्रेन्द्राश्चतुर्थस्तु तथैव च ॥**

प्रकृतसंहितागतखण्डचतुष्टयस्याध्यायविभागमाह– आद्यस्त्रयोदशाध्याय इति( ? यैरिति ) । आद्यः खण्डोऽध्यायैस्त्रयोदश ग्रन्थतः सप्तशतमितिवत् । न तु त्रयोदशभिरध्यायैरिति 'दिक्संख्ये संज्ञायाम्' (पासू. २।१।५०) इत्युक्तत्वात् । इह च द्विगुसमासनिमित्तानां संज्ञादीनामभावात् । आद्यस्त्रयोदशाध्याय:( † ? याः ) इति तु पाठः श्रेयान् । तत्र हि त्रयोदशेति पृथक्पदम् । तादी.

**सप्तषष्टिः समस्तानां वेदानामर्थ आस्तिकाः ।**
**अस्यामेव स्थितः साक्षात्संहितायां न संशयः ॥**

सकलश्रुत्यर्थसंग्रहात्मकत्वादस्यां संहितायामवश्यमादरो विधेय इत्याह– समस्तानामिति श्लोकशेषेण । तादी.

वेदः स्वतः प्रमाणम्, स्मृतीनां पुराणानां च प्रामाण्यं वेदमूलकत्वात्, पुराणानां प्रामाण्यं वेदोपबृंहणकरत्वाच्च

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**
**वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥**

नानाविधोपाख्यानप्रतिपादनपर्यवसिते पुराणे कः प्रसङ्गो वेदार्थस्य? तत्राऽऽह– सर्गश्चेत्येकेन । ब्रह्मणस्तटस्थलक्षणत्वेन सृष्टिस्थितिप्रलया एव वेदे प्रधानं प्रमेयम् । 'आत्मैवेदमग्र आसीत्' (बृउ. १।४।१), 'स ऐ( ? ई )क्षत' (ऐउ. ४।१।१) इति महासर्गः । 'नेह नानाऽस्ति' (बृउ. ४।४।१९) इति महाप्रलयः ।

---

¶ चिन्त्यमिदम्, शतशब्दस्य पात्रादित्वकल्पने 'जपेत्सप्तशतीं चण्डीम्' आर्यात्रिशतीत्यादीनां भूयसां प्रयोगाणामसाधुत्वापत्तेः । अत एव 'यदि त्रिलोकी गणनापरा स्यात्' इत्यादिप्रयोगदर्शनात् 'त्रिलोकनाथः पितृसद्मगोचरः' इति कालिदासकृतप्रयोगं साधुयितुं लोकशब्दस्य लोकसमुदायपरत्वं त्र्यवयवशब्दोत्तरपदावयवशब्दलोपार्थं त्रिलोकशब्दस्य शाकपार्थिवादित्वं चेति प्रक्रियागौरवमाश्रितमभियुक्तैः । तस्मादार्षत्वकल्पनैव साधीयसी ।

† 'त्रयोदशाध्यायैः' इति पाठः पूर्वं व्याख्यातः । पाठान्तरेऽस्मिन् त्रयोदशेत्यस्य पृथक्पदत्वेऽध्यायशब्द एकवचनान्तो नोपपद्यते इति बहुवचनान्त एवाध्यायशब्दष्टीकाकृदभिप्रेत इति निश्चीयते । संपादकैस्त्वविचारेण तदादर्शपुस्तकस्थमशुद्धमेकवचनान्तमध्यायशब्दं शुद्धं मत्वा सर्वत्रैकवचनान्त एवाध्यायशब्दोऽङ्गीकृत इति मन्यामहे । अत्रेदं ध्येयम्– त्रयोदश अध्यायाः यस्मिन् इत्येकवचनान्तबहुव्रीहिपाठस्याऽऽपाततः श्रेयस्त्वप्रत्ययेऽपि स पाठो न सूपपादः, समासघटकस्याप्रधानार्थस्याध्यायशब्दस्य द्वितीयचरणादिरूपवाक्येष्वनुवृत्तेरसंभवात् संख्येयसापेक्षविंशत्यादिशब्दघटितानां तेषां साकाङ्क्षत्वापत्तेरिति ।

अन्यत्सर्वं स्थित्यवस्थाविलासः । इत्थमेव पुराणेऽपि वंशमन्वन्तरवंशानुचरितानि स्थित्यवस्थात( ? वस्था ) एवेति । तादी.

**यश्चतुर्वेदविद्विप्रः पुराणं वेत्ति नार्थतः ।**
**तं दृष्ट्वा भयमाप्नोति वेदो मां प्रतरिष्यति ।**
**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥**

वेदार्थ एव चेत्पुराणे, स वेदेनैव सिद्धः, किं पुराणेनेति ? तत्राऽऽह– यश्चतुर्वेदविद्विप्र इति । तत्र स्थितस्याप्यर्थस्य तावतैव दुरधिगमत्वात्तदुपबृंहणाय पुराणमित्यर्थः । अनुपबृंहणे बाधमाह– तं दृष्ट्वेति । विप्लवस्य दुष्परिहरत्वं दर्शयितुं वेदे भयारोपः । प्रतरिष्यति विप्लावयिष्यति इति बिभेति । अतस्तं समुपबृंहयेदित्यन्वयः । तादी.

[१]**पुराणैरेव विस्पष्टो वेदार्थो ज्ञायते खलु ।**
**बिभेति मानवाद्वेदः पुराणाभ्यां सजीवितात्-**
**( ? भ्यासवर्जितात् ) ॥**

[२]**अनन्तशाखासापेक्षे वैदिकार्थविनिर्णये ।**
**स्वबुद्धिकल्पितान्न्यायाद्गरीयो ह्युपबृंहणम् ॥**

[३]**वेदाः प्रमाणं प्रथमं स्वत एव ततः परम् ॥**
**स्मृतयश्च पुराणानि भारतं मुनिपुङ्गवाः ।**
**अन्यान्यपि मुनिश्रेष्ठाः शास्त्राणि सुबहूनि च ॥**

सर्वथा पुराणादिकमपेक्षितं चेत्तेनैव पर्याप्तम्, किं वेदैः ? न, वेदानां स्वतःप्रामाण्यात्तन्मूलतयैव पुराणादेः स्वरूपलाभादित्याह– वेदाः प्रमाणं प्रथममिति । अन्यान्यपि आर्षस्मृतिपुराणमूलानि तदर्थ( ? र्थं- )संग्रहशास्त्राणीत्यर्थः । तादी.

वेदस्य प्रथमो गुरुः शिवः, व्यासः विष्णुः शिवाज्ञया वेदचतुष्टयकर्ता

**सर्वं वेदाविरोधेन प्रमाणं नान्यवर्त्मना ।**
**एक एव द्विजा वेदो वेदार्थश्चैक एव तु ॥**

वेदाविरोधेन । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' ( जैसू. १।३।३ ) इति हि जैमिनीयं सूत्रम् । मूलभूतवेदानुमानेन स्मृत्यादेः प्रामाण्यं तद्विरोधे त्वनुमानमेव नोदेतीति मूलाभावादुपेक्षणीयम् । अथवा यावन्मूलोपलम्भं प्रत्यक्षश्रुतिविरुद्धस्मृत्याद्यर्थो नानुष्ठेय इति सूत्रार्थः । वेदाविरोधेन चेत्प्रामाण्यं तर्हि ऋग्वेदेऽनुदितहोमं निन्दित्वोदितहोमो विधीयते– 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् ॥' ( ऐब्रा. २५।६ ) इति, यजुर्वेदे तूदितहोमनिन्दयाऽनुदितहोमो विधीयते– 'यथाऽतिथये प्रद्रुताय शून्यायाऽऽवसथायाऽऽहार्यं हरन्ति तादृक्तद्यदुदिते जुहोति' ( तैब्रा. २।१।२।१२ ) इति, अतः परस्परविरोधाद्वेदद्वयमप्रमाणं स्यादित्यत्राऽऽह– एक एव द्विजा वेद इति । सर्वोऽयमेक एव वेदः, तत्कुतः परस्परविरोधः ? न चैवं स्ववचनव्याघातः, षोडशिग्रहणाग्रहणवचनवद्विकल्पाभिप्रायत्वादित्यर्थः । तादी.

**तथाऽपि मुनिशार्दूलाः शाखाभेदेन भेदितः ।**
**अनन्ता वै द्विजा वेदा वेदार्थोऽपि द्विजोत्तमाः ॥**

कथं तर्हि भेदव्यवहारः ? 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।' इति स्मृतिः, 'वेदा वा एते, अनन्ता वै वेदाः' इति च श्रुतिः, इत्यत आह– तथाऽपीति । एकस्याप्यपरिमितस्य वेदस्य केनचिदप्येकेन पुरुषेणाध्येतुं तदर्थस्य चानुष्ठातुमशक्यत्वादेकं वेदमृग्यजुःसामाथर्वभेदेन चतुर्धा विभज्य तत्रैकैकः पुनरैतरेयादिशाखाभेदेन भेदित इत्यर्थः । तादी.

**अनन्तो वेदवेद्यस्य शंकरस्य शिवस्य तु ।**
**मायया न स्वरूपेण द्विजा ह्य देववैभवम् ॥**

ननु वेदशाखा एव वे( ? चे )दसंख्याताः, कथं तर्हि 'एक एव रुद्रो न द्वितीयाय तस्थे' इति तैत्तिरीयकश्रुतिः, 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्यथर्वशिरसि वचनम् ? इत्यत आह– वेदवेद्यस्येति । मायया न स्वरूपेणेति । परमार्थतो ह्यद्वितीयो रुद्र इत्युक्तम् । अतस्तेनैव लीलया

(१) मुक्ता. २९२ स्कान्दे.
(२) मुक्ता. २९२.
(३) सूसं. १।१।३५– ४१.

निर्मितस्य मायामयस्य न वास्तवेन तदद्वैतेन विरोध इत्यर्थः। नन्वेतादृशी लीला क्वचिदपि लोके न दृष्टचरीत्यत आह– द्दिष्ट्या हा देववैभवमिति। ‘अह हेत्यद्भुते खेदे’ इत्यभिधानम्। अन्यथादृष्टत्वमद्भुतस्यालंकारः, न दूषणमित्यर्थः। तादी.

**ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः।**
**दत्तवानखिलान्वेदानात्मन्येव स्थितानिमान्॥**

नन्वपौरुषेया वेदाः, ‘वाचा विरूपनित्यया’ ‘अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा’ इति श्रुतिस्मृती, इति ते कथं निर्मिताः? कश्चैता एतावतीर्ग्र-(? कश्चैतानेतावतो ग्र)हीष्यति? यस्य कृते निर्मीयेरन्नित्यत आह– ब्रह्माणं मुनयः पूर्वमिति। स्वयमेव लीलया सकलवेदग्रहणसमर्थं ब्रह्माणं निर्माय स्वात्मनि नित्यमवस्थिता एव वेदास्तस्मै दत्ता इत्यर्थः। न च नित्यसिद्धवेदसमर्पणे शिवस्योपाध्यायतुल्यता। उपाध्यायो हि स्वयमन्यतो लब्ध्वा शिष्यानध्यापयति। शिवस्तु नैवमन्यतोऽधीते, स्वात्मनि नित्यमवस्थितानामेव तेषां ब्रह्मद्वारा संप्रदायं प्रवर्तयति, ‘यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै’ इति स्थितानामेव वेदानां प्रापणश्रुतेः। तादी.

**ब्रह्मा सर्वजगत्कर्ता शिवस्य परमात्मनः।**
**प्रसादादेव रुद्रस्य स्मृतीः सस्मार सुव्रताः॥**

स्मृतिपुराणादीनामपि तर्हि शिवेनैव प्रापणं चेद्वेदसाम्यम्, न चेदप्रामाण्यम्, तत्राऽऽह– ब्रह्मा सर्वजगत्कर्तेति। वेदे हि द्वौ भागौ–कर्मभागो ज्ञानभागश्चेति। आद्यस्यार्थः स्मृतिमुखेन ब्रह्मणा शिवाज्ञयैव व्याख्यातः, द्वितीयस्य तु विष्णुना व्यासरूपेणावतीर्य पुराणमुखेनेति स्मृतिपुराणानां वेदमूलता, न स्वातन्त्र्यमित्यर्थः। यद्यपि स्मृतिष्वपि विद्यानिरूपणमस्ति, तथाऽपि तत्प्रासङ्गिकम्, द्रव्यशुद्धिप्रसङ्गेन हि कथितम्– ‘क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता’ इति, चतुर्थाश्रमधर्मप्रसङ्गेन चौपनिषदतत्त्वनिरूपणं कृतमिति। पुराणानां तु विद्याप्राधान्यम्, प्रासङ्गिकं कर्मनिरूपणम्, पुराणेषु हि जगदुत्पत्तिस्थितिलयकारणत्वं शिवस्याभिप्रेत्योत्पत्तिकारणत्वं सर्गेणोक्तम्, लयकारणत्वं च प्रतिसर्गेण, स्थितिकारणत्वं च वंशमन्वन्तरवंशानुचरितनिरूपणेन, तत्प्रसङ्गाद्वर्णाश्रमधर्मा आगता इति। अत एव धर्मविषये स्मृतिपुराणविप्रतिपत्तौ स्मृतीनां प्राबल्यम्, तत्र तासां तात्पर्यत इति, तत्त्वज्ञानविषये पुराणप्राबल्यमिति विवेकः। तादी.

**[1]स्मृतयो धर्ममूलं हि धर्मः सर्वार्थसाधनम्।**
**किमतः स हि धर्मोऽस्ति किं वा ज्ञानं तथाविधम्।**
**अन्यद्वा तत्किमस्तीह यद्वा स्मृतिषु दृश्यते॥**
**[2]विष्णुर्विश्वजगन्नाथो विश्वेशस्य शिवस्य तु।**
**आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम॥**

व्यासेन पुराणानां प्रणयनं प्रागुक्तम्, तस्य तु विष्णोरवतारत्वमिदानीमाह– विष्णुर्विश्वजगन्नाथ इति। तादी.

**ऋग्वेदः प्रथम प्रोक्तो यजुर्वेदस्ततः परः।**
**तृतीयः सामवेदाख्यश्चतुर्थोऽथर्व उच्यते॥**

महाभारतकर्ता व्यासः पुराणकर्तुः सूतस्य गुरुः

**[3]अयं साक्षान्महायोगी व्यासः सर्वज्ञ ईश्वरः।**
**महाभारतमाश्चर्यं निर्ममे भगवान्मुनिः॥**

सर्वज्ञत्वं द्रढयितुं साकल्येन चतुर्विधपुरुषार्थप्रकाशकस्य महाभारतस्य तेनैव प्रणयनमाह– अयं साक्षान्महायोगीति। उक्तं हि– ‘धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्॥’। इदमेव हि महाभारतप्रणयनं स साक्षाद्विष्णोरवतार इत्यत्र गमकम्। यदाहुः– ‘कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्॥’ इति। तादी.

**[4]पुराणानां प्रवक्तारं स मुनिर्मां न्ययोजयत्।**
**तस्मादेव मुनिश्रेष्ठाः पुराणं प्रवदाम्यहम्॥**

---

(१) चबा. ५२९.
(२) सूसं. १।१।४२-४३.
(३) सूसं. १।१।४७.
(४) सूसं. १।१।५०.

पुराणानि मह्यं दत्वाऽहं नियुक्त इति तदाशयैवेयं मया व्याक्रियत इत्यर्थः । तादी.

अष्टादशपुराणानां दश शिवपराणि, चत्वारि विष्णुपराणि, द्वे ब्रह्मपरे, एकमग्नेः, एकं सूर्यस्य प्रतिपादकम्

[1]पुराणैर्दशभिर्विप्राः प्रोक्तः शम्भुस्तथैव च ।
चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः ॥
अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः ।
एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः ॥
प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु ।
स एव मोचकः साक्षाच्छिवः सत्यादिलक्षणः ॥

तथाऽपि शिवमूर्तिष्वेव भूयसां पुराणानामादर इत्याह— पुराणैरिति । यान्यपि दशभ्योऽवशिष्टानि पुराणानि तेषामपि तत्तन्मूर्तयो द्वारमात्रम्, पर्यवसानं तु परशिव एवेत्याह— चतुर्भिरित्यादि । सर्वेषां पुराणानां साक्षात्परम्परया वा परशिवे पर्यवसाने कारणमाह— स एव मोचक इति । मोचकः मोक्षप्रदः । स एव साक्षान्मोक्षप्रदः, अन्ये तद्द्वारा । तादी.

वेदविरोधी मार्गः त्याज्यः, वेदाविरोधी पाञ्चरात्राद्यागमांशः ग्राह्यः

[2]या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥

§ वेदविरुद्धतन्त्रसंबन्धत्यागे कारणमाह— या वेदबाह्या इति । तादी.

[3]श्रेयान् वेदोदितो धर्मः परधर्मो भयावहः ।
वेदं वेदेतरं मार्गं समं पश्यन् भवोदधौ ।
निमग्नः सर्वदा मर्त्यो भवेन्नात्र विचारणा ॥

ईश्वर उवाच—

[4]मयि संस्काररूपेण स्थिता वेदाः सनातनाः ।
कल्पादौ पूर्ववन्मत्तः प्रवृत्ता विमलाः पुनः ॥

मत्तः मत्सकाशात् । तादी.

[1]श्रुतिर्बलीयसी प्रोक्ता प्रमाणानां सुलोचने ।
स्वतश्च परतो दोषो न हि तस्याः कदाचन ॥

आप्तवचनादिभ्यः श्रुतेः प्राबल्ये विशेषमाह— श्रुतिर्बलीयसीति । ज्ञानस्य स्वतःप्रामाण्यान्न स्वतः, श्रुतेरनादित्वेन कारणाभावान्न कारणदोषादप्यप्रामाण्यमित्यर्थः । तादी.

अन्येषामक्षजादीनां प्रमाणानामविद्यया ।
दोषसंभावनाऽस्त्येव ततस्तेषां सुलोचने ।
विरोधे वेदवाक्येन प्रामाण्यं नैव सिध्यति ॥

श्रुतिव्यतिरिक्तेषु प्रत्यक्षादिषु कारणदोषसंभवश्चेत्कथं तर्हि तत्र प्रामाण्यव्यवहारः ? इत्यत आह— अन्येषामिति । अविद्याकार्यत्वेनावस्त्वेव विषयीकुर्वतामेषां व्यावहारिकमेव प्रामाण्यम्, उपनिषदस्तु वस्तुविषयत्वात्तत्त्वावेदनलक्षणं प्रामाण्यम् । यदाहुः— 'प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् । आश्रित्यायं प्रपञ्चः स्यादलीकोऽपि प्रमाणवान् ॥ अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् । प्रमाणभावं भजतां बाधवैधुर्यहेतुतः ॥' इति । तथा सुन्दरपाण्ड्यवार्तिकमपि— 'देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन संमतः । लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥' इति । तादी.

[2]स्मृतयश्च पुराणानि भारतादीनि सुन्दरि ।
वेदमूलान्यतस्तेन विरोधे मूलिनामपि ॥
न सिध्यत्येव सुश्रोणि प्रामाण्यं सूक्ष्मदर्शने ॥

स्मृतिपुराणादीनां तु वेदाविरोधेनैव प्रामाण्यमिति प्रथमखण्डस्य प्रथमाध्याये वर्णितम् । (अत्र) अनुमितवेदमूलानां स्मृतिपुराणादीनां यावन्मूलोपलम्भनं प्रत्यक्षश्रुतिविरोधेनाननुष्ठानलक्षणमप्रामाण्यमुक्तम् । तादी.

---

§ जपे पूर्वश्लोकोक्ततन्त्रसंबन्धत्यागे इत्यर्थः ।

(१) सूसं. १।८।४६–४८.

(२) सूसं. २।१४।१८.

(३) मुक्ता. २९७.

(४) सूसं. ३।३।७१.

(१) सूसं. ३।४।११–१३.

(२) सूसं. ३।४।१४–१५ ; सस्मृ. ११ द्वितीयार्धे (वेदमूलानि वेदार्थसंप्रकाशकराणि वै ॥), १७ स्तेन (स्तेषां) मूलिना (मूलिता) सूक्ष्म (तत्त्व) स्कान्दे.

[1]पाञ्चरात्रादिमार्गाणां वेदमूलत्वमास्तिके ।
न हि स्वतन्त्रास्ते तेन भ्रान्तिमूला निरूपणे ॥
तथाऽपि योंऽशो मार्गाणां वेदेन न विरुध्यते ।
सोंऽशः प्रमाणमित्युक्तं केषांचिदधिकारिणाम् ॥

पञ्चरात्रादीनां तैः स्वयमेव वेदमूलतानङ्गीकाराद्वेदविरुद्धानेकार्थोपदेशाच्च स्मृतिपुराणादिवन्न यावन्मूलोपलम्भम्, किंतु सर्वथैवाप्रामाण्यमित्याह— पाञ्चरात्रेति । वेदमूलत्वं न हि, किंतु स्वतन्त्राः । हिशब्दो वेदमूलत्वविरहे तदीयशास्त्रप्रसिद्धिमाह । आपाततः प्रमाणवदाभासेऽपि निरूपणे भ्रान्तिमूला एवेत्यर्थः । वेदाविरुद्धांशे प्रामाण्यं किं न स्यात्? इत्याशङ्क्य तद्भवत्येवाधिकारिविशेषं प्रतीत्याह— तथाऽपि य इति । तादी.

[2]अत्यन्तगलितानां तु प्राणिनां वेदमार्गतः ।
पञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ॥

तानेवाधिकारिण आह— अत्यन्तेति । तादी.

[3]तान्त्रिकाणामहं देवि न लभ्योऽव्यवधानतः ॥
कालेन देवताप्राप्तिद्वारेणैवाहमास्तिके ।
लभ्यो वेदैकनिष्ठानामहमव्यवधानतः ॥

तेषामप्युपकारकत्वे श्रुतिसाम्यमेव तर्हीत्यत आह— तान्त्रिकाणामिति । अव्यवधानेन न लभ्यः, किंतु व्यवधानेनैव । तदेव व्यवधानमाह— कालेनेति । तादी.

[4]देवदेवोऽपि संतुष्टः शौनकाय द्विजोत्तमाः ।
प्राह गम्भीरया वाचा शौनकं त्वं महामुने ॥
वेदानामादिभूतस्य ऋग्वेदस्य ममाऽऽज्ञया ।
भव निर्वाहकस्तत्र शाकल्यस्य विशेषतः ॥
एवमाज्ञापितस्तेन शिवेन मुनिसत्तमः ।
शौनको भगवान्विप्रास्तथा निर्वाहकोऽभवत् ॥

---

(१) सूसं. ३।४।१५–१७.

(२) सूसं. ३।४।१७–१८; मुक्ता. २९८ गलितानां (स्खलितानां) पञ्च (पाञ्च) स्कान्दे; विपा. ३।२।५१९ तु प्राणिनां (हि द्विजानां) शेषं मुक्तावत्.

(३) सूसं. ३।४।१८–१९.

(४) सूसं. ३।९।२४–२६, २८.

भव निर्वाहक इति । अत एव महाव्रते होतृप्रयोगस्य निर्वाहः शौनकेन कृतः । शाकलस्येति । शाकल्यकृतपदविभागानुसारेण हि शौनक ऋग्विधानबृहद्देवतामहाव्रतप्रयोगादिग्रन्थानकार्षीदित्यर्थः । तादी.

तस्य शिष्यस्तु विप्रेन्द्रास्तद्वाक्यादाश्वलायनः ।
अभवत्सूत्रकृद्विप्राः शाकल्यस्य महामुनिः ॥

न केवलं स्वयमकार्षीत् । किंतु स्वशिष्यमाश्वलायनमपि तथाकरणे नियुक्तवान् । स आश्वलायनोऽपि तथा कृतवानित्याह— तद्वाक्यादाश्वलायन इत्यादि । तादी.

[1]श्रुत्या यदुक्तं परमार्थमेत-
न्न संशयोऽन्यच्च ततः समस्तम् ।
श्रुत्याऽविरोधे च भवेत्प्रमाणं
नो चेदनर्थाय न च प्रमाणम् ॥

अत्र निःश्रेयसस्वरूपे बहवो विप्रतिपद्यन्ते । प्रमाणप्रमेयादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति नैयायिकाः । द्रव्यगुणादिषट्पदार्थानां साधर्म्यवैधर्म्यज्ञानं निःश्रेयस(? साय) इति वैशेषिकाः । प्रकृतिपुरुषविवेकख्यातेः संसारविलय इति सांख्याः । एवमन्येऽपि स्वमतानुसारेणान्यथैव प्रतिपद्यन्ते । तत्कुतो ब्रह्मात्मैकत्वलक्षणो मोक्षः? इत्याशङ्क्याऽऽह— श्रुत्येति । श्रुत्या वेदान्तवाक्येन यद्ब्रह्मात्मैकत्वमुपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गसद्भावात्तात्पर्येण प्रतिपादितं तत्परमार्थमेव । तस्यान्यथाभावो न शङ्कनीयः । नाप्यस्मिन्नर्थे संशयः । यत एवं ततः सर्वशास्त्रं श्रुत्या सहाविरुद्धं चेत्प्रमाणम्, नो चेत्तच्छास्त्रमप्रमाणमत एवानर्थहेतुश्च भवतीत्यर्थः । तादी.

[2]श्रुत्यनुग्राहकस्तर्को न स्वतन्त्र इति स्थितिः ॥

श्रुत्यर्थानुसार्येव तर्कः प्रमाणम् । तादी.

दृष्टसाम्येन वेदज्ञाः खलु तर्कोऽर्थसाधकः ।
श्रुतिरन्यानपेक्षा हि द्विजेन्द्रा अर्थसाधिका ॥

---

(१) सूसं. ४।१।७।४३.

(२) सूसं. ४।१।१८।७–२४, ५६–५७, ६१–६२.

ननु तर्कस्यापि श्रुतिवत्स्वातन्त्र्येण प्रमेयव्यवस्थापकत्वं किं न स्यात् ? इत्यत आह– दृष्टसाम्येनेति । आपाद्यापादकयोर्बहुशोऽनुभूतत्वात्तत्साम्येन तर्को विप्रतिपन्नविषयेऽप्यापादको न(? दकब)लादापाद्यमर्थमुपस्थापयति । श्रुतिस्तु दृष्टसाम्यं विनाऽपि मानान्तरानधिगतमर्थं स्वातन्त्र्येण प्रतिपादयति । अतोऽन्यसापेक्षात्तर्कादन्यानपेक्षा श्रुतिरेवार्थव्यवस्थापिका । तादी.

**प्रत्यक्षादिप्रमाणानां पञ्चानां पण्डितोत्तमाः ।**
**अगम्यं ब्रह्म धर्मश्चाधर्मः श्रुत्यैव गम्यते ॥**

ननु श्रुतेरपि संगतिग्रहणादौ प्रत्यक्षादिप्रमाणान्तरसापेक्षत्वादन्यानपेक्षत्वमसिद्धमित्याशङ्कयाऽऽह– प्रत्यक्षादीति । श्रुतिर्यद्यपि संगतिग्रहणादौ प्रत्यक्षादिकं प्रमाणान्तरमपेक्षते, 'शब्दो वृद्धान् विधेयांश्च प्रत्यक्षेणानुपश्यति । श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टयेत् ॥' इत्यादिना संगतिग्रहणसमये शब्दस्य तत्सापेक्षत्वस्य भट्टाचार्यैरुक्तत्वात्; तथाऽपि पदानामेव पदार्थैः संगतिग्रहणम्, न तु वाक्यानां वाक्यार्थे, तेषामानन्त्याद्व्यभिचाराच्च । अतः श्रुतिवाक्यं प्रत्यक्षादिप्रमाणैरनधिगतं ब्रह्म धर्माधर्मादिकं च स्वातन्त्र्येणैव वाक्यार्थत्वेन प्रतिपादयति । न हि तादृशोऽर्थस्तर्कशतेनापि प्रतिपादयितुं शक्यः । तादी.

**अन्तरेण श्रुतिं बोद्धुं यतन्तेऽतीन्द्रियं पदम् ।**
**ते करेणापि माधुर्यं जानन्त्येव सुनिश्चितम् ॥**

ईदृग्विधे विषयेऽपि श्रुतिं विहाय प्रमाणान्तरैर्जिज्ञासन्ते तानुपहसति– अन्तरेणेति । तादी.

**पुरा कश्चिन्महामूर्खः संगिरो नाम वाडवः ।**
**पूर्वजन्मकृतात्पापाद्वेदश्रद्धाविवर्जितः ॥**

इत्थं श्रुत्यत्यर्थविरोधिस्वतन्त्रतर्कस्य पुरुषार्थव्यवस्थापकत्वाभावमभिधायाथ तस्य प्रस्तुतानर्थहेतुत्वज्ञापकमितिहासमुपपादयति– पुरा कश्चिदित्यादिना । तादी.

**तर्कशास्त्ररतः साक्षाद्ब्रह्मातीन्द्रियमव्ययम् ।**
**धर्माधर्मौ च तर्केण केवलेन मुनीश्वराः ॥**

**अक्लेशेन परिज्ञातुमकरोद्यत्नमुत्तमम् ।**
**तर्को नानाविधस्तस्य प्रतिभातो मुनीश्वराः ॥**

**तेन मोहावृतः सद्यः संगिरो मुनिपुङ्गवाः ।**
**चकार दीक्षां पाषण्डमार्गे श्रद्धापुरःसरम् ॥**

**पुनस्तर्काप्रतिष्ठानात्संगिरोऽतीव मोहितः ।**
**चकार दीक्षां पाषण्डविशेषेषु यथारुचि ॥**

पुनस्तर्काप्रतिष्ठानादिति । आगमनिरपेक्षस्य शुष्कतर्कस्य पुरुषोत्प्रेक्षामूलत्वात्तस्याश्चानवस्थितत्वात्तन्मूलस्तर्कोऽनवस्थित इत्यर्थः । उक्तं हि– 'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥' इति । तादी.

**पुनस्तर्काप्रतिष्ठानान्मायया परिमोहितः ।**
**त्यक्त्वा पाषण्डमार्गं च चचार च यथारुचि ॥**

**पुनर्मोहावृतः साक्षात्स्वसारं मातरं तथा ।**
**गत्वा ममार कालेन संगिरः साहसी द्विजः ॥**

**अत्युग्रा अतिसंनद्धा यमदूता भयंकराः ।**
**संगिरं तु समादाय शीघ्रं विप्रा यमं ययुः ॥**

**यमस्तं संगिरं क्रुद्धो विलोक्याऽऽह भयंकरम् ।**
**यथाशक्ति भटा एष पीड्यतां मम संनिधौ ॥**

**इति प्राह यमः सोऽपि संगिरो यमकिङ्करैः ।**
**अतीव पीडितो विप्रा अभवच्च विचेष्टितः ॥**

**पुनश्च तीक्ष्णया वाचा यमः प्राह सुदारुणम् ।**
**भिद्यतां संगिरो दुष्टश्छिद्यतां दह्यतामयम् ॥**

**इक्षुयन्त्रादिषु ह्येष पीड्यतामनिशं भटाः ।**
**अन्यैर्नानाविधैः क्रूरैरुपायैः पीड्यतामिति ॥**

**संगिरो यमदूतैश्च क्रमेण नरकार्णवे ।**
**यन्त्रैर्नानाविधैरन्यैरुपायैरतिदारुणैः ।**
**अतीव पीडितो विप्रा अभवत्कोटिवत्सरम् ॥**

**यमोऽपि संगिरं विप्राः समाहूयाऽऽदरेण च ।**
**विनैव वेदं तर्कस्य केवलस्य परिग्रहात् ।**
**त्वया भुक्तं महादुःखमप्रसह्यमनेकशः ॥**

**अतो वेदोदितो ह्यर्थः सम्यगर्थः सुनिश्चितः ।**
**तर्कसिद्धोऽतिदुःस्थोऽर्थः प्रत्यवायस्य कारणम् ॥**

**बहवः केवलं तर्कं समाश्रित्य विना श्रुतिम् ।**
**रौरवादिषु संतप्ता अभवन् वेदवित्तमाः ॥**

'ज्ञानस्य कारणेभ्यस्तु श्रुतिरेव महत्तरा ॥

महत्तरा ज्ञानसाधने सर्वाधिका इत्यर्थः । तादी.

चोदनालक्षणो धर्मो धर्मः साक्षान्निरूपणे ।
इतरो व्यवहारे तु धर्म इत्यभिशब्द्यते ॥

चोदनालक्षण इति । चोदना वेदवाक्यं तत्प्रतिपादितो धर्मः । तथा च जैमिनिसूत्रम्— 'चोदनालक्षणोऽर्थो धर्मः' (जैसू. १।१।२) इति । यद्येवं तदतिरिक्तेष्वागमादिसिद्धेषु पूर्वोक्तेष्वर्थेषु धर्मशब्दप्रयोगः कथम्? इत्यत आह— इतरो व्यवहार इत्यादि । तादी.

आस्तिक्यान्वयमात्रेण धर्माभासेऽपि सुव्रताः ।
प्रयुक्तो धर्मशब्दस्तु मुख्यो धर्मस्तु वेदजः ॥

आस्तिक्यान्वयमात्रेणेति । यथा श्रौतधर्मेष्वास्तिक्यं तथैव तदितरधर्माभासेऽपि तद्दर्शनात्तत्र धर्मशब्दप्रयोगो गौण इत्यर्थः । तादी.

यथा शम्भुसमो देवो नास्ति पुण्यवतां वराः ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥

अथ बहुभिर्निदर्शनैः श्रुतिप्रमाणस्योत्कर्षं प्रतिपादयति— यथा शम्भुसम इत्यादिना । तादी.

यथा विप्रसमो मर्त्यो नास्ति वेदविदां वराः ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥
यथैवान्नसमं भोज्यं नास्ति लोके विचक्षणाः ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥
यथा गङ्गासमा पुण्या नदी लोके न विद्यते ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥
यथा वाराणसीतुल्या पुरी लोके न विद्यते ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥
यथा दभ्र(? देव)सभातुल्यं स्थानं लोके न विद्यते ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥
षडक्षरसमो मन्त्रो यथा लोके न विद्यते ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥

(१) सूसं. ४।१।२०।३०, ३२–४२.

यथा गुरुसमस्त्राता नास्ति संसारसागरात् ।
तथा वेदसमं मानं नास्ति तत्र न संशयः ॥

अतश्च संक्षेपमिमं वदामि वः
श्रुतिः प्रमाणं शिव एव केवलः ।
वरिष्ठ उक्तः सितभस्मगुण्ठनं
विशुद्धविद्या च न चेतरत्परम् ॥

'मुक्तिसाधनविज्ञानं वेदादेव न चान्यतः ॥

वेदमार्गजनितं तु वेदनं
दोषहीनमतिशोभनं सदा ।
अन्यमार्गजनितं विचारतो
वेदमार्गरुचिकारणं क्रमात् ॥

अधिकारिभेदानुसारेण साक्षान्मुक्तिक्रममुक्तिप्राप्तये
वेदस्मृतिपुराणशैववैष्णवबौद्धार्हतलोकायतादि-
शास्त्राणां प्रणेता साक्षात् शिव एव, वेदमार्गः
साक्षात् मुक्तिप्रदः, वेदविरोध्यागम-
मार्गाः क्रममुक्तिप्रदाः

सूत उवाच—

'अथातः संप्रवक्ष्यामि मार्गप्रामाण्यनिर्णयम् ।
श्रद्धया सहिता यूयं शृणुध्वं मुनिपुङ्गवाः ॥

ननु बौद्धार्हताद्यागमानां वेदविरुद्धार्थप्रतिपादकानां वेदैकसमधिगम्ये ब्रह्मात्मैकत्वविज्ञाने रुचिजनकत्वं नोपपद्यते, अतो वैदिकमार्गव्यतिरिक्तानां सर्वेषामप्रामाण्यमेवेत्याशङ्क्य तत्प्रामाण्यं समर्थयितुमारभते— अथात इति । श्रुतिस्मृत्यादिभिः शैवपाशुपतबुद्धाद्यागमैः समये नानाविधा मार्गाः प्रतिपादिताः, तेषामधिकारिभेदेन प्रामाण्यनिर्णयः क्रियत इत्यर्थः । तादी.

वेदांश्च धर्मशास्त्राणि पुराणं भारतं तथा ।
वेदाङ्गान्युपवेदांश्च कामिकाद्यागमानपि ॥

उपवेदांश्चेति । आयुर्वेदधनुर्वेदादय उपवेदाः । तादी.

(१) सूसं. ४।१।२१।४०–४१.
(२) सूसं. ४।१।२२।१–२ ; सस्मृ. १४–१५.

[1]कापालं लाकुलं चैव तयोर्भेदान् द्विजर्षभाः ।
तथा पाशुपतं सोमं भैरवप्रमुखागमान् ॥
[2]तेषामेवोपभेदांश्च शतशोऽथ सहस्रशः ।
विष्णवागमांस्तथा ब्राह्मान् बुद्धार्हाद्यागमानपि ॥
[3]लोकायतं तर्कशास्त्रं बहुविस्तरसंयुतम् ।
मीमांसामतिगम्भीरां सांख्ययोगौ तथैव च ॥
[4]अनेकभेदभिन्नानि तथा शास्त्रान्तराणि च ।
निर्ममे शंकरः साक्षात्सर्वज्ञः संग्रहेण तु ॥

निर्ममे शंकर इति । श्रुतिस्मृतीतिहासपुराणादीनि वैदिकानि शास्त्राणि तदर्थानुसारिशैवपाशुपताद्यागमान् बुद्धार्हतादिबहुभेदभिन्नान् वेदविरुद्धांश्च सर्वशः शिव एव स्वशक्त्या निर्मितवानित्यर्थः । अतः सर्वज्ञेन शिवेनैव प्रणीतत्वादेषां मध्ये कस्यचिदप्यप्रामाण्यं न युक्तमिति भावः । तादी.

[5]प्रसादादेव रुद्रस्य ब्रह्मविष्ण्वादयः सुराः ।
सिद्धविद्याधरा यक्षा राक्षसाद्यास्तथैव च ॥
[6]मुनयश्च मनुष्याश्च यथाभाग्यं द्विजोत्तमाः ।
तान्येव विस्तरेणैव संग्रहेणैव वा पुनः ॥
[7]कुर्वन्ति तानि नामानि कथितानि मनीषिभिः ।
अधिकारिविभेदेन नैकस्यैव सदा द्विजाः ।
तर्कैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः ॥

ननु ब्राह्मवैष्णवबुद्धाद्यागमेषु ब्रह्मविष्ण्वादितत्तदागमप्रणेतारः पुरुषविशेषाः स्मर्यन्ते, तथा साङ्ख्यतर्कादिशास्त्रेषु कपिलकणादजैमिनिप्रभृतयो निर्मातारः प्रसिद्धाः, अतः शिवस्यैव निर्माणमनुपपन्नमित्यत आह– प्रसादादेवेति । परमेश्वरानुग्रहादेव ब्रह्मविष्ण्वादयस्तन्निर्मितानागमान् स्वस्वव्यवहारसिद्धये पुनः संग्रहविस्तराभ्यां कुर्वन्ति । कपिलकणभुग्जैमिनिप्रभृतयो मुनयश्च स्वशिष्यबुद्धिगुणानुसारेण परमेश्वरनिर्मितान्येव शास्त्राणि तत्प्रसादादेव पुनः संग्रहविस्तराभ्यां कुर्वन्तीत्यविरोधः । यद्यप्येवमीश्वरनिर्मितत्वात्सर्वेषां प्रामाण्यं तथाऽपि परस्परविरुद्धार्थप्रतिपादकत्वादप्रामाण्यमपि स्यादित्यत आह– अधिकारीति । यथा– 'उदिते जुहोति, अनुदिते जुहोति' इत्यादिविरुद्धार्थप्रतिपादकानां वाक्यानामधिकारिभेदाद्विरोधाभावेन प्रामाण्यमेवमत्रापीत्यर्थः । एवमेते मार्गाः शुष्कतर्कबलान्न बाध्या इत्यर्थः । तादी.

[1]यथा तोयप्रवाहाणां समुद्रः परमावधिः ।
तथैव सर्वमार्गाणां साक्षान्निष्ठा महेश्वरः ॥

साक्षान्निष्ठेति । सर्वेष्वपि मार्गेष्वस्ति कश्चिदेव इति संमतत्वात्तस्य च परमेश्वरव्यतिरिक्तस्याभावात्तत्तदागमोक्तगुणवैशिष्ट्येन शिवः प्रतिपाद्यत इति भवति तस्मिन् सर्वेषां मार्गाणां पर्यवसानमित्यर्थः । तादी.

येन येन प्रकारेण जनैरेभिरुपासितः ।
तत्तन्मार्गानुगुण्येन साधकत्वं ह्युपैति सः ॥
तत्प्रसादात्क्रमान्मार्गान् विशिष्टानेति मानवः ।
तत्र तत्र स्थितो देवः प्रसादं कुरुतेऽस्य तु ॥

येन येनेति । नानाविधागमोक्तेन येन येनोपाधिना परमेश्वर उपास्यते, तत्तदागमानुसारेण तत्तदुपाधियुक्तः परमेश्वरो भवतीत्यर्थः । तत्प्रसादादिति । तत्तदागमप्रतिपाद्यतयाऽवस्थितस्य शिवस्य प्रसादादेवोत्तरोत्तरमुत्कृष्टान् मार्गान् साधको लभत इत्यर्थः । तादी.

सोपानक्रमतो देवा वेदमार्गस्य हेतवः ।
वेदमार्गस्थितो देवः साक्षान्मुक्तेस्तु कारणम् ॥

सोपानक्रमत इति । तत्र तत्राऽऽगमेषु तत्तद्देवतारूपो देवः सोपानक्रमेण वेदमार्गप्राप्तौ कारणम् । स एव वेदमार्गप्रतिपादितः सन्मुक्तिहेतुर्भवतीत्यर्थः । तादी.

---

(१) सूसं. ४।१।२२।३ ; सस्मृ. १५ पूर्वार्धे ( कापालं म्लाकुलं चैव ततो भेदाजं ऋषभ [ ? ] । ).

(२) सूसं. ४।१।२२।४ ; सस्मृ. १५ विष्णवा (विश्वा).

(३) सूसं. ४।१।२२।५ ; सस्मृ. १५ तर्क ( तथा ) विस्तर ( विस्तार ).

(४) सूसं. ४।१।२२।६ ; सस्मृ. १५ दभिन्नानि ( दान्यन्यानि ) णि च ( ण्यपि ).

(५) सूसं. ४।१।२२।७ ; सस्मृ. १५.

(६) सूसं. ४।१।२२।८ ; सस्मृ. १५ भाग्यं ( भागं ) णैव सं ( णैवं सं ).

(७) सूसं. ४।१।२२।९ ; सस्मृ. १५ रिविभेदेन नै ( नि विनिदनं ? ) तृतीयार्धं नास्ति.

(१) सूसं. ४।१।२२।१०-२९.

**तत्रापि कर्मभागस्थो ज्ञानश्रद्धाप्रदो हरः ।**
**ज्ञानभागस्थितः शम्भुर्ज्ञानद्वारेण मोक्षदः ॥**

कर्ममार्गस्थ इति । कर्मकाण्डे स्थितो विविदिषाप्रदः इत्यर्थः । उपनिषत्सु प्रतिपाद्यतया स्थितः शिवः स्वयाथात्म्यज्ञानजननेन मुक्तिप्रद इत्यर्थः । तादी.

**एकरूपा परा मुक्तिस्ततस्तद्विषया मतिः ।**
**एकरूपा भवेन्नैव नानारूपा भविष्यति ॥**
**वेदान्तः शंकरं साक्षान्निर्विशेषाद्वयात्मना ।**
**वक्ति मार्गान्तराण्येवं ततो विद्या तु वेदजा ॥**
**अतो मार्गान्तराज्जाता मतयो मुनिसत्तमाः ।**
**अविद्या नैव विद्याः स्युरिति सम्यङ्निरूपणम् ॥**

ननु मार्गान्तरज्ञानैरपि साक्षान्मुक्तिः किं न स्यात्? इत्याशङ्क्य तेषामवस्तुविषयत्वेनाविद्यात्वं प्रतिपादयन्नौपनिषदज्ञानस्य विद्यारूपतामाह– एकरूपेत्यादिना । मुक्तिस्वरूपस्य सर्वेष्वपि मार्गेषु परमपुरुषार्थत्वेन संमतत्वात्तस्य नित्यत्वमेष्टव्यम् । तच्च निर्विशेषस्यैव घटते, सविशेषस्य भेदसव्यपेक्षत्वाद्भेदस्य च निर्वक्तुमशक्यत्वात्तस्य प्रागुपपादितत्वात् । कल्पितत्वेन ज्ञाननिवर्त्यत्वे सति भेदसापेक्षं सविशेषं मुक्तिस्वरूपमपि निवर्तेत । तथा च तन्मुक्तिस्वरूपं सविशेषकं स्वर्गादिवदनित्यमेव स्यात् । अतो निर्विशेषमेव तदिति तद्गोचरं ज्ञानमपि तथाविधम् । तदिदमुक्तम्– निर्विशेषाद्वयात्मनेति । 'एकमेवाद्वितीयं ब्रह्म' (पैङ्गलोपनिषत् १।१), 'अशब्दमस्पर्शमरूपमव्ययम्' (काउ. ३।१५), 'ब्रह्म वेद ब्रह्मैव भवति' (मुउ. ३।२।१) इत्यादिश्रुतिरेव निर्विशेषं मुक्तिस्वरूपं प्रतिपादयति । ततश्चाबाधितविषयत्वादुपनिषद्वाक्यजनितं ज्ञानमेव विद्या । मार्गान्तरात्तु नैवं निर्विशेषमुक्तिस्वरूपमवगम्यते, जीवेश्वरादिभेदादिविशेषमेव भवति । तज्जनितज्ञानानां बाधितविषयत्वादविद्यात्वम् । अतो न तेषां मुक्तिसाधनत्वमित्यर्थः । तादी.

**तस्मान्मार्गान्तराणां तु प्रामाण्यं वेदवित्तमाः ।**
**मुक्तेरन्यत्र नात्रैव क्रमेणैवात्र मानता ॥**
**अतो वेदान्तभागस्थो महादेवोऽचिरेण तु ।**
**मुक्तिं ददाति नान्यत्र स्थितः सोऽपि क्रमेण तु ।**
**ददाति परमां मुक्तिमित्येषा शाश्वती श्रुतिः ॥**

यदि मार्गान्तरजनिता मतयोऽविद्यास्तर्हि तेषामप्रामाण्यमेवेत्याशङ्क्याऽऽह– तस्मादिति । मुक्तेरन्यत्रेति । मुक्तिव्यतिरिक्त एव विषये मार्गान्तरस्य प्रामाण्यम्, न तु मुक्तौ । तत्रापि पूर्वोक्तसोपानक्रमेण वेदमार्गप्राप्तिद्वारा प्रामाण्यम् । नान्यत्रेति । वेदान्तवाक्यप्रतिपाद्यतया शिवः साक्षान्मुक्तिप्रदः, आगमान्तरे तु अवस्थितो न साक्षान्मुक्तिं ददाति, किंतूत्तरोत्तरविशिष्टमार्गप्राप्त्येति, 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृउ. ३।९।२६) इत्यादावुपनिषत्स्वेवाधिगत औपनिषद इत्युपनिषदेकवेद्यस्य परशिवस्य परमपुरुषार्थप्रदत्वेन श्रुतत्वादित्यर्थः । तादी.

**अतो वेदस्थितो मर्त्यो नान्यमार्गं समाश्रयेत् ।**
**वेदमार्गैकनिष्ठानां न किंचिदपि दुर्लभम् ॥**

नान्यमार्गं समाश्रयेदिति । वेदमार्गस्य साक्षान्मुक्तिप्रदत्वादित्यर्थः । तादी.

**अत्रैव परमा मुक्तिर्भुक्तयश्चात्र पुष्कलाः ।**
**अतोऽधिकारिभेदेन मार्गा मानं न संशयः ॥**

अतोऽधिकारीति । वेदमार्गानधिकृतान् बौद्धार्हताद्यधिकारिविशेषान् प्रति तत्तन्मार्गप्रामाण्यमस्त्येवेत्यर्थः । तादी.

**ईश्वरस्य स्वरूपं(? पे) च बन्धहेतौ तथैव च ।**
**जगतः कारणे मुक्तौ ज्ञानादौ च तथैव च ॥**
**मार्गाणां ये विरुद्धांशा वेदान्तेन विचक्षणाः ।**
**तेऽपि मन्दमतीनां च महामोहावृतात्मनाम् ।**
**वाञ्छामात्रानुगुण्येन प्रवृत्ता न यथार्थतः ॥**

नन्वेषां मार्गाणां परस्परविरुद्धार्थप्रतिपादकानां प्रामाण्यं नोपपद्यते, प्रबलतरश्रुतिप्रमाणविरुद्धार्थप्रतिपादकत्वादित्यत आह– ईश्वरस्येत्यादिना । तत्रेश्वररूपादौ मार्गाणां विप्रतिपत्तिरस्ति । तथा हि– तत्र 'ईश्वर एव नास्ति' इति साङ्ख्या मीमांसकाश्च । 'अस्ति पुण्यपापाशयैरपरामृष्टः पुरुषविशेषः' इति पातञ्जलाः । 'नित्य-

ज्ञानाधारः ' इति तार्किकाः । तथा ' प्रकृतिपुरुषयोरविवेकात्क्षेत्रज्ञस्य संसारः ' इति साङ्ख्यादयः । तस्य स्वार्जितपुण्यपापवशाद्बन्ध इति तत्कारणं प्रकृतिरिति । ' प्रकृतिपुरुषयोर्विवेकज्ञानेन भ्रमापगमे स्वरूपेणावस्थानं मुक्तिः ' इति साङ्ख्यादयः । ' बुद्धिसुखदुःखादिनवगुणानामनात्मपदार्थेभ्यः पुरुषान्यथाख्यातिविरहादत्यन्तोच्छेदो मुक्तिः' इति तार्किकादयः । एवमन्येषामपि वादिनां मतेषु विषयेषु भूयस्यो विप्रतिपत्तयः । एवमाद्या वेदान्तविरुद्धा अन्यमार्गेषु दृश्यन्ते । तत्सर्वमर्थजातमनादिमायया मोहितानामत एवाल्पबुद्धीनां वेदानधिकृतानां बौद्धादीनां प्रथमत एवात्यन्तसूक्ष्मपरशिवस्वरूपग्रहणसामर्थ्याभावाद्वेदविरुद्धमपि प्रतिबन्धकपापक्षयार्थं तत्तल्लोकप्राप्तिरूपफलप्रदानेन वशीकरणार्थं च प्रथममीश्वरेणोपदिष्टम्, न परमार्थत इत्यर्थः । तादी.

**दर्शयित्वा तृणं मर्त्यो धावन्तीं गां यथाऽग्रहीत् ।**
**दर्शयित्वा तथा क्षुद्रमिष्टं पूर्वं महेश्वरः ।**
**पश्चात्पाकानुगुण्येन ददाति ज्ञानमुत्तमम् ॥**

तत्र दृष्टान्तः– दर्शयित्वेति । यथा गां जिघृक्षन् पुरुषः प्रथमं तृणादिकं दर्शयित्वा तां गृह्णात्येवं परमेश्वरोऽपि तत्तन्मार्गानुरूपमिष्टं प्रापयित्वा( ? य ) वशीकृत्य तत्तन्मार्गोक्तज्ञानेन प्रतिबन्धकपापक्षये सति तेषां चित्तपरिपाकानुसारेण निःश्रेयससाधनं परमपुरुषार्थभूतं ज्ञानमपि क्रमेण प्रयच्छतीत्यर्थः । तादी.

**तस्मादुक्तेन मार्गेण शिवेन कथिता अमी ।**
**मार्गा मानं न चामानं मृषावादी कथं शिवः ॥**
**महाकारुणिको देवः सर्वज्ञो निर्मलः खलु ।**
**तथापि वेदो मार्गाणामुत्तमः सर्वसाधकः ॥**
**सर्वमुक्तं समासेन मार्गप्रामाण्यनिर्णयम् ।**
**एवं बुद्ध्वा श्रुतौ श्रद्धां कुरुध्वं यत्नतो द्विजाः ॥**

मार्गान्तराणामपि प्रतिपादितं प्रामाण्यमुपसंहरति –तस्मादिति । यस्मादुक्तप्रकारेण शिवेनैवोपदिष्टाः सर्वे मार्गास्तस्मात्तत्सर्वं प्रमाणमेव, अन्यथा मृषावादित्वप्रसङ्गादित्यर्थः । तादी.

**(1)यथा माता स्वपुत्रस्य सत्यमेवाभिभाषते ।**
**तथा सर्वजनस्यापि सत्यं वदति हि श्रुतिः ॥**
**श्रुतौ चापि महादेवे त्रिपुण्ड्रे भस्मगुण्ठने ।**
**श्रद्धां न कुरुते मर्त्यः पुण्यलेशविवर्जितः ॥**
**पापिष्ठानां मनुष्याणां त्रिपुण्ड्रोद्धूलने श्रुतौ ।**
**महादेवे च विद्वेषः स्वत एव विजायते ॥**
**वेदोत्कर्षे शिवोत्कर्षे विद्योत्कर्षे तथैव च ।**
**त्रिपुण्ड्रोद्धूलनोत्कर्षे श्रद्धा पुण्यवतां भवेत् ॥**
**अविरोधे तु वेदानां पुरोक्तेनैव वर्त्मना ।**
**वेदानुसारिस्मृत्यादौ पापिष्ठस्य न हि स्पृहा ॥**
**विष्ण्वादेः शिवसाम्यत्वे वेदसाम्ये परस्य च ।**
**कुर्वन्तीच्छामविद्वांसः पापमेवात्र कारणम् ॥**
**वेदानामपकर्षे तु त्रिपुण्ड्रादेस्तथैव च ।**
**तथा शिवापकर्षे च यतन्ते पापयोनयः ॥**
**महादेवश्च वेदश्च तथा तिर्यक्त्रिपुण्ड्रकम् ।**
**व्यर्थमित्याहुरत्यर्थं पाषण्डाः पापयोनयः ॥**
**महादेवस्य माहात्म्यं वेदानामपि वैभवम् ।**
**त्रिपुण्ड्रस्य च माहात्म्यं न शक्यं वर्णितुं मया ॥**
**(2)परमेश्वरविज्ञानं वेदादेव न चान्यतः ।**
**आगमान्तरजन्यं तु ज्ञानं न ज्ञानमास्तिकाः ॥**

परमेश्वरविज्ञानमिति । प्रत्यगात्मनः परशिवस्वरूपत्वगोचरं विशिष्टं ज्ञानं साक्षात्कारात्मकं वेदान्तवाक्यादेव, नान्यस्मादित्यर्थः । आगमान्तरेति । वेदविरुद्धागमवाक्याद्यत्पारमेश्वरं ज्ञानं तद्विकल्पज्ञानमेव, स्वतःप्रमाणेन वेदवाक्येन बाधितविषयत्वादित्यर्थः । तादी.

**अष्टादशानां विद्यानां वेदादन्याश्च सत्तमाः ।**
**विद्या वेदानुसारेण प्रवृत्ताः सर्वशोभनाः ॥**

अष्टादशानामिति । ' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ' (यास्मृ. १।३) इति चतुर्दश विद्याः, आयुर्वेदो धनुर्वेदो गान्धर्वं नीतिशास्त्रं चेति चतस्रः, तासा-

(१) सूसं. ४।१।३९।६२–७०.
(२) सूसं. ४।१।४५।५२–५८.

मष्टादशानां मध्ये वेदव्यतिरिक्ता या विद्यास्ताः सर्वा वेदप्रतिपादितार्थानुसारेण प्रवृत्ताः प्रमाणत्वेन ज्ञातव्या इत्यर्थः । तादी.

**तथापि तासु सर्वासु कश्चिदंशः क्वचित्क्वचित् ।**
**शिवागमानुसारेण तत्प्रभेदानुसारतः ॥**

तास्विति । वेदव्यतिरिक्तास्वित्यर्थः । तादी.

**विष्णवागमानुसारेण तत्प्रभेदानुसारतः ।**
**ब्रह्मागमानुसारेण तत्प्रभेदानुसारतः ॥**
**अधिकारिविशेषेण क्रमेणैव विमुक्तये ।**
**प्रवर्तन्ते मुनिश्रेष्ठाः सत्यमेव मयोदितम् ॥**
**तत्तत्तन्त्रेषु ये मर्त्या दीक्षिता मुनिसत्तमाः ।**
**सोंऽशस्तैरेव संग्राह्यः सर्वथा नैव वैदिकैः ॥**
**मदुक्ता संहिता साध्वी वेदमानानुसारिणी ।**
**वेदेतरागमाधीनः कश्चिदंशो न विद्यते ॥**
**'पापिष्ठानां तु जन्तूनां तत्र तत्र सुरर्षभाः ।**
**प्राक्संसारवशादेव जायते रुचिरास्तिकाः ॥**
**तेऽपि कालविपाकेन श्रद्धया पूतयाऽपि च ।**
**पुरातनेन पुण्येन देवतानां प्रसादतः ॥**
**कालेन महता देवाः सोपानक्रमतः पुनः ।**
**वेदमार्गमिमं मुख्यं प्राप्नुवन्ति चिरंतनम् ॥**

नन्वेवं, श्रुतिस्मृतिविरोधात्साङ्ख्यादिशास्त्राणामप्रामाण्ये कथं तत्र तीर्थकराणां प्रवृत्तिरित्याशङ्क्य तत्र प्रवृत्तौ पापमेव कारणमित्याह– पापिष्ठानामित्यादिना । सोपानक्रमत इति । स्वस्वशास्त्रादात्मानात्मविवेकं सामान्येन जानानाः सांख्यादयस्तद्विशेषप्रतिपादकमुपनिषन्मार्गं परम्परया समाश्रयन्त इत्यर्थः । तादी.

**प्राक्संसा( ? स्का )रवशादेव ये विचिन्त्य बलाबले ।**
**विवशा वेदमापन्नास्तेऽपि कैवल्यभागिनः ॥**
**वेदमार्गमिमं मुक्त्वा मार्गमन्यं समाश्रितः ।**
**हस्तस्थं पायसं त्यक्त्वा लिहेत्कूर्परमात्मनः ॥**

(१) सूतं. ४।२।१।२।१०–१६, २८–३५.

**विना वेदेन जन्तूनां मुक्तिर्मार्गान्तरेण चेत् ।**
**तमसाऽपि विनाऽऽलोकं ते पश्यन्ति घटादिकम् ॥**

विचिन्त्य बलाबले इति । वेदमार्गमाश्रितास्ते स्वशास्त्रस्य वेदस्य च बलाबले विचार्य पुरुषबुद्धिप्रभवत्वेन स्वशास्त्रस्य दौर्बल्यमपौरुषेयत्वेन वेदस्य च निर्दुष्टं प्रामाण्यं निश्चिन्वानास्तत्परतन्त्राः स्वमार्गं परित्यज्य वेदमार्गमेव केवलमाश्रयन्ते । अतः सोपानक्रमेण तेषामपि वेदोदिता मुक्तिर्भूयसा कालेन सिध्यतीत्यर्थः । तादी.

**तस्माद्वेदोदितो ह्यर्थः सत्यं सत्यं मयोदितम् ।**
**अन्येन वेदितो ह्यर्थो न सत्यः परमार्थतः ॥**

तस्मादिति । यस्मादेवं मार्गान्तराणामपि वेदे पर्यवसानं तस्मादपौरुषेयत्वेन निर्दुष्टवेदवाक्यप्रतिपादित एव सत्यः, न तु वेदव्यतिरिक्तेनेत्यर्थः । तादी.

**तथाऽपि स्वप्नदृष्टं तु वस्तु स्वर्गनिवासिनः ।**
**सूचकं हि भवत्येव जाग्रत्सत्यार्थसिद्धये ॥**

यद्येवं परमार्थदृष्ट्याऽसत्यस्यैव सत्यतयाऽध्यवसायान्मार्गा भ्रान्तास्तर्हि मिथ्याभूतानां तेषां परम्परयाऽपि कथं वेदमार्गावाप्तिद्वारा परमार्थसत्यचिद्घनपरशिवस्वरूपावाप्तिहेतुत्वमित्याशङ्क्य सदृष्टान्तमुपपादयति – तथाऽपीति । यद्यपि स्वप्नावस्था मिथ्याभूता तथाऽपि स्वप्नदृष्टं वस्तु भाविनः सत्यस्य फलस्य सूचकं भवति । सूचकत्वं भगवता व्यासेनापि सूचितम्– 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' (ब्रसू. ३।२।४) इति । सा च श्रुतिरेवमाम्नाता– 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने ॥ (छाउ. ५।२।८) इति । तादी.

**तथैव मार्गाः सुभ्रान्ता अपि वेदोदितस्य तु ।**
**अर्थस्य प्राप्तिसिद्ध्यर्था भवन्त्येव न संशयः ॥**

यथा चैवं तथैव मिथ्याभूता अपि मार्गा वेदप्रतिपादितस्य सच्चिदानन्दाखण्डैकरसस्य परमार्थसत्यवस्तुनः सोपानक्रमेण प्राप्तिहेतवो भवन्तीत्यर्थः । तादी.

तस्माद्वेदेतरा मार्गा नैव त्याज्या निरूपणे ।
वेदनिष्ठस्तु तान्मार्गान्कदाचिदपि न स्पृशेत् ॥
वेदनिष्ठस्तु मार्गांस्तान्मोहेनापि स्पृशेद्यदि ।
प्रायश्चित्ती भवत्येव नात्र कार्या विचारणा ॥
एकस्यामपि तैः सार्धं पङ्क्तौ वेदैकसंस्थितः ।
मोहेनापि न भुञ्जीत भुक्त्वा चान्द्रायणं चरेत् ॥
इज्यादानविवाहादिकार्यमध्ययनं श्रुतेः ।
यदि तैर्मोहतः कुर्यात्कुर्याच्चान्द्रायणत्रयम् ॥
धर्माधर्मादिविज्ञानं नाऽऽददीत श्रुतौ स्थितः ।
तेभ्यो मोहादपि प्राज्ञाः श्रेयस्कामी कदाचन ॥
वेदबाह्येषु मार्गेषु संस्कृता ये नराः सुराः ।
ते हि पाषण्डिनः साक्षात्तथा तैः सहवासिनः ॥
[1]वेद एव सकलार्थबोधकः
शेष एव वचनं च तस्य मे ॥
[2]श्रुतिः सनातनी साध्वी सर्वमानोत्तमोत्तमा ।
प्राह चाद्वैतनैर्मल्यं निर्विकारत्वमात्मनः ॥
सर्गस्थित्यन्तमप्याह चेतनाचेतनस्य च ।
अतीन्द्रियार्थविज्ञाने मानं नः श्रुतिरेव हि ॥
श्रुत्येकगम्ये सूक्ष्मार्थे स तर्कः किं करिष्यति ।
मानानुग्राहकस्तर्को न स्वतन्त्रः कदाचन ॥

ननु विरुद्धमिदमुच्यते– निर्मलो निर्विकारश्चाथापि स्रष्टेति, तत्राऽऽह– श्रुतिरिति । तस्या अप्रामाण्यशङ्कां वारयति– सनातनीति । सा हि परशिवस्य नैर्मल्यादिकं प्रतिपादयति । तथा तस्मात्परशिवात्कारणाच्चेतनाचेतनात्मकस्य सर्वस्य जगतः सर्गस्थित्यन्तं सृष्टिस्थितिसंहृतिरिति- ( ? हृतीति ) प्रतिपादयति । अत एवाऽऽम्नातम्– 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति ।' (तैउ. ३।१) इति । वैयासिकं सूत्रमपि– 'जन्माद्यस्य यतः' (ब्रसू. १।१।२) इति । ननु दृष्टविरोधान्निर्विकारस्य स्रष्टृत्वप्रतिपादिका श्रुतिरप्रमाणमित्याशङ्क्याऽऽह– अतीन्द्रियेति । देशकालस्वरूपविप्रकृष्टा अर्था अतीन्द्रियार्थाः, तादृगर्थप्रतिपत्तौ श्रुतिरेव हि प्रमाणम् । तस्मिञ्छ्रुत्येकसमधिगम्ये सूक्ष्मेऽर्थे प्रत्यक्षप्रमाणगृहीतव्याप्त्युपजीवी तर्कः किं करिष्यति ? श्रुतिगतार्थस्य प्रत्यक्षादिप्रमाणान्तराननुभूतचरत्वेन तर्कविषयत्वायोगात् । ननु तर्कोऽपि प्रमाणान्तरवत्स्वयमपि स्वातन्त्र्येणार्थव्यवस्थापक इत्यत आह– मानेति । उक्तं ह्यभियुक्तैः– 'प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेत् । पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्रहः ॥' इति । तादी.

श्रुतिः सनातनी शम्भोरभिव्यक्ता न संशयः ।
शंकरेण प्रणीतेति प्रवदन्त्यपरे जनाः ॥
यदा साऽनादिभूतैव तदा मानमतीव सा ।
स्वतश्च परतो दोषो नास्ति यस्माद्द्विजर्षभाः ॥

अप्रामाण्यं ह्यर्थान्यथात्वकारणदोषज्ञानाभ्यां भवति । न च तदुभयमप्रामाण्यकारणं श्रुतौ विद्यत इति प्रतिपादयितुं वेदापौरुषेयत्ववादिमीमांसकमतं सर्वज्ञप्रणीतत्ववादिनैयायिकमतं च क्रमेणोपन्यस्यति– श्रुतिः सनातनीति । नित्या श्रुतिः शम्भोः परमेश्वरसकाशादभिव्यक्ता, न तु तेनार्थं बुद्ध्वा विरचितेत्यर्थः । अत एव श्रुतिस्मृती भवतः– 'वाचा नि( ? वि )रूपनित्यया' 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' ( भा. १२।२२४।५५ ) इति च । नैयायिकास्तु – 'आप्तवाक्यमागमः' इति तल्लक्षणं ब्रुवाणा वेदानां सर्वज्ञेश्वरप्रणीतत्वेन प्रामाण्यं मन्यन्ते । तत्र तावद्वेदापौरुषेयत्ववादिनां मीमांसकानां मते श्रुतिप्रमाणस्य दोषासंभवमाह– यदेति । श्रुतेस्तावत्स्वरूपतो दोषो नास्ति, विशिष्टार्थप्रत्यायकत्वात् । नापि परतः, अपौरुषेयत्वेन पुरुषदोषाणां शब्देऽननुप्रवेशात् । तादी.

स्वतो दोषो न वेदस्य विद्यते सूक्ष्मदर्शने ।
अस्ति चेद्व्यवहारस्य लोप एव प्रसज्जते ।
परतश्च न दोषोऽस्ति परस्याभावतो द्विजाः ॥

तत्र स्वतो निर्दोषतामुपपादयति– स्वत इति । ननूदितानुदितहोमादिविरुद्धार्थप्रतिपादकत्वात्स्वाभाविको दोषो विद्यत इति चेत्तत्राऽऽह– सूक्ष्मदर्शन इति । आपातत

(१) सूसं. ४।२।१।९।५७.
(२) सूसं. ४।२।२।३।४–३४, ३८–४१.

एव स विरोधः, निरूपणे त्वधिकारिभेदेन व्यवस्थितत्वान्न विरोध इत्यर्थः । अस्ति चेदिति । शब्दप्रमाणस्य यदि दोषसद्भावः स्वाभाविकः स्यात्तदा तदधीनसकलव्यवहारलोपप्रसङ्गः । परतश्चेति । परतोऽपि दोषो नास्ति, परस्य विरचयितुः पुरुषस्यानङ्गीकारादित्यर्थः । तादी.

**स्वतो दुष्टोऽपि शब्दस्तु मानमेवाऽऽप्तसंगमात् ।**
**इति वार्ताऽपि वार्तैव मुनीन्द्राः सूक्ष्मदर्शने ।**
**स्वतो दुष्टः कथं मानं भवत्यन्यस्य संगमात् ॥**
**यत्संबन्धेन यो भावो यस्य प्राज्ञाः प्रसिध्यति ।**
**स तस्य भ्रान्तिरेव स्यान्न स्वभावः कथंचन ॥**
**जपाकुसुमलौहित्यं विभाति स्फटिके भृशम् ।**
**तथापि तस्य लौहित्यं भ्रान्तिरेव न वास्तवम् ॥**

परतःप्रामाण्यवादिमतमनूद्य निरस्यति— स्वतो दुष्टोऽपीति । स्वतो दुष्टस्यापि शब्दस्य यत्प्रामाण्यं तदपि तदाप्तप्रणीतत्वकृतमिति यत् परतःप्रामाण्यवादिवाक्यं वार्तामात्रमेव । तदेतदुपपादयति— स्वतो दुष्ट इति । यदि हि शब्दः स्वतो दुष्टः स्यात् कथं तर्हि तस्यान्यसंगमात्प्रामाण्यं भवेत् ? अन्याधीनं च तत्प्रामाण्यं शब्दे प्रतिभासमानं स्फटिके जपाकुसुमलौहित्यवदारोपितं स्यात् । तथा च भ्रान्तिरवश्यंभाविनीत्यर्थः । तादी.

**वह्निपाकजलौहित्यमिष्टकायां न वास्तवम् ।**
**लौहित्यं तैजसांशस्तु नेष्टकाया निरूपणे ॥**

ननु तत्र जपाकुसुमस्योपाधेः संनिधानादारुण्यप्रतीतिः स्फटिके औपाधिकीत्याशङ्क्य निदर्शनान्तरेण परतःप्रामाण्यवादिनां शब्दप्रामाण्यस्य भ्रान्तित्वमुपपादयति— वह्निपाकजेति । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्' इति श्रुतेर्लौहित्यस्य तेजोधर्मत्वात्पाकनिमित्तमिष्टकासु तत्प्रतीतिर्भ्रान्तिरिति न तु स्वाभाविकी । तादी.

**अन्यत्रान्यस्य धर्मस्तु प्रतीतो विभ्रमो मतः ।**
**आप्तापेक्षी तु शब्दस्तु प्रामाण्याय न सर्वथा ॥**

ईदृग्विधस्य ज्ञानस्य विभ्रमरूपतां वक्तुं तल्लक्षणमाह— अन्यत्रेति । वस्त्वन्तरे शङ्खादौ पीतादिवस्त्वन्तरगतपीतिमादिधर्मसंसर्गप्रतिभासो विभ्रमोऽभिमतः, 'अतस्मिंस्तद्बुद्धिर्विपर्ययः' इति तल्लक्षणयोगात् । किंच, परतःप्रामाण्यं क्वचिदपि नाऽऽत्मानं लभत इत्याह— आप्तापेक्षीति । आप्तप्रणीतत्वेन शब्दप्रामाण्याङ्गीकारे केनचिज्ज्ञानेन तदाप्तिर्ज्ञातव्या, तच्च स्वप्रामाण्याय संवादकमन्यज्ज्ञानमपेक्षते, तदप्येवमित्यनवस्था स्यात् । अतः सर्वप्रकारेणाप्याप्तप्रणीतत्वापेक्षः शब्दो न प्रमाणं भवितुमर्हतीति । तादी.

**अनाप्तयोगाच्छब्दस्य प्रामाण्यं मुनिपुंगवाः ।**
**स्वतःसिद्धं तिरोभूतं स्वनाशाय हि केवलम् ॥**

ननु शब्दस्वरूपमात्रानुबन्धि चेत्प्रामाण्यं तर्हि विप्रलम्भादिवाक्यानामपि तत्स्यादित्यत आह— अनाप्तेति । अनाप्तपुरुषबुद्धिप्रभवतया कारणदोषसद्भावात्स्वतःसिद्धं प्रामाण्यं तत्रापोद्यत इत्यर्थः । तादी.

**यदा सा शंकरेणोक्ता तदाऽपि श्रुतिरास्तिकाः ।**
**प्रमाणं सुतरामाप्ततम एव महेश्वरः ॥**

एवं नित्यत्वपक्षे स्वतःप्रामाण्यं प्रतिपाद्य सर्वेश्वरप्रणीतत्वपक्षेऽपि प्रामाण्यं समर्थयते— यदेत्यादिना । तादी.

**सर्वदोषविहीनस्य महाकारुणिकस्य च ।**
**सर्वज्ञस्यैव शुद्धस्य कथं दोषः प्रकल्प्यते ॥**

तस्याऽऽप्ततमत्वमुपपादयितुं निर्दोषतामाह— सर्वदोषेति । रागद्वेषादयो दोषाः, तैः सर्वैर्विहीनस्य अत एव महाकारुणिकस्य लोकानुग्रहैकशीलस्य शुद्धस्याऽऽवरणमलापेतस्य अत एवानावृतज्ञानतया सर्वज्ञस्य शिवस्य कथं दोषः प्रकल्पयितुं शक्यते ? अतो वेदस्य तत्प्रणीतत्वेऽपि तदीयदोषाभावेन तत्प्रयुक्तमप्रामाण्यं न भवतीत्यर्थः । तादी.

**सर्वदोषविशिष्टस्य निर्घृणस्य दुरात्मनः ।**
**अल्पज्ञस्य च जीवस्य दृष्टाऽनाप्तिर्हि सत्तमाः ॥**

सर्वदोषविरहादीनामाप्ततमत्वहेतुत्वं विशदयितुं तत्सद्भावस्यानाप्तिहेतुत्वमाह— सर्वदोषेति । तादी.

**यस्य स्मरणमात्रेण समलो निर्मलो भवेत् ।**
**ब्रूत सत्यतपोनिष्ठाः कथं स मलिनो भवेत् ॥**

यस्य स्मरणेति । उक्तहेतुभिर्मलिनो जीवो यद्रूपस्मरणेन निर्मलो भवति, तस्य नैर्मल्यापादकस्य कथं मालिन्यं संभवति ? इत्यर्थः । तस्मादाप्तप्रामाण्यादपि तत्प्रणीतानां वेदानां प्रामाण्यं स्वध्यवसानमित्यर्थः । तादी.

**अतः पक्षद्वयेनापि वेदो मानं न संशयः ।**
**वेदोऽनादिः शिवस्तस्य व्यञ्जकः परमार्थतः ॥**

एवं वादिविप्रतिपत्तिमुदाहृत्योभयथाऽपि प्रामाण्यं प्रतिपाद्य तत्र स्वाभिमतं पक्षमाह– वेदोऽनादिरिति । परमार्थतस्तु वेदोऽनादिः आदिरहितः नित्यः । शिवस्तु तस्याभिव्यञ्जकः, न तु स्वबुद्धया विरचयिता । यथावस्थिताभिव्यञ्जकत्वमपेक्ष्यैव 'वेदस्य प्रणेता' इत्यपि व्यवहारः । अत एवोक्तम्– 'कर्त्रपि ब्रह्म वेदस्य न पूर्वक्रमतोऽन्यतः । क्रमं करोति वाग्वज्रपातो मा भून्नृणामिति ॥' इति । तादी.

**अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते शिवः ।**
**तस्माद्वेदोपदिष्टार्थो यथार्थो नात्र संशयः ॥**

एवं श्रुतेः स्वतःसिद्धस्य प्रामाण्यस्यापवादासंभवाद्यथावस्थितार्थप्रतिपादकत्वं सिद्धमिति निगमयति– तस्मादिति । तादी.

**इह तावन्मया प्रोक्तमद्वितीयः परः शिवः ।**
**तथापि तेन सकलं निर्मितं तत्स एव हि ॥**
**चित्स्वरूपः शिवश्चेत्यं जगत्सर्गे चराचरम् ।**
**तथा सति विरुद्धं तज्जगच्छम्भुः कथं भवेत् ॥**
**इत्येवमादिचोद्यस्य द्विजेन्द्रा नास्ति संभवः ।**
**यत्र वेदविरोधः स्यात्तत्र चोद्यस्य संभवः ॥**

श्रुतिप्रतिपाद्यत्वेन प्रागुक्तमर्थमुपपादयितुमनुवदति– इह तावदिति । 'प्राह चाद्वैतनैर्मल्यम्' इत्यादिना परशिवस्याद्वितीयनिर्विकारत्वादिकं चेतनाचेतनात्मकस्य कृत्स्नस्य जगतस्तत्सकाशात्सृष्टिश्चेत्येतावत्प्रतिज्ञातम् । तत्स एवेति । तत् चराचरात्मकं सर्वं जगन्मायानिर्मितं विश्वरूपं परशिव एव । यतश्चेत्यं चिद्रूपेऽध्यस्तम्, तस्य हि तद्भोग्यत्वाच्चेत्यत्वम्, अध्यस्तं चाधिष्ठानादव्यतिरिक्तमिति रज्जुसर्पादौ दृष्टमिति भावः । तथा सतीति । एवमविरोधे सति नामरूपात्मना विकृतं जगदविकृतपरशिवस्वरूपं कथं भवेदित्येवमादिचोद्यस्यानवसरः, निर्विकाररूपजगद्रूपत्वयोरुभयोरपि श्रुतिसिद्धत्वादित्यर्थः । तादी.

**चोदनालक्षणे धर्मे न यथा चोद्यसंभवः ।**
**तथा न चोदनागम्ये शिवे चोद्यस्य संभवः ॥**

श्रुतिसिद्धे चार्थे चोद्यासंभवं सदृष्टान्तमाह– चोदनालक्षण इति । 'अथातो धर्मजिज्ञासा' इति जिज्ञासां प्रतिज्ञाय धर्मस्वरूपमेवं लक्षितम्– 'चोदनालक्षणोऽर्थो धर्मः' इति । लक्ष्यतेऽनेनेति लक्षणं प्रमाणम् । चोदनेति क्रियायाः प्रवर्तकं वचनम् । यथा चोदनाप्रमाणके धर्मे स्वर्गादिसाधनत्वेन प्रतिपादिते यागादौ विप्रतिपत्तिर्नास्ति, एवमुत्पत्तिविधिरूपवेदान्तवाक्यप्रतिपाद्ये परशिवस्वरूपेऽपि परिचोदना न युक्तेत्यर्थः । तादी.

**बाध्यबाधकभावस्तु व्याधिभेषजयोर्यथा ।**
**शास्त्रेण गम्यते तद्वदयमर्थोऽपि नान्यतः ॥**

बाध्यबाधकेति । यथा व्याधिभेषजयोर्बाध्यबाधकभावः शास्त्रेण बोध्यते तद्वदेवेश्वरस्य रूपं प्रपञ्चलक्षणार्थश्च बाध्यबाधकतया वेदेन प्रतिपाद्यते । नान्यस्मान्मानान्तरात्तत्सिद्धिरित्यर्थः । तादी.

**ईश्वरस्य स्वरूपे च जगत्सर्गादिषु द्विजाः ।**
**अतीन्द्रियार्थेष्वन्येषु मानं नः श्रुतिरेव हि ॥**

अतः श्रुतिगम्य एतादृग्विधोऽर्थ इति निगमयति– ईश्वरस्येति । अन्येष्विति । स्वर्गापूर्वदेवतादिष्वित्यर्थः । तादी.

**अथवा देवदेवस्य सर्वदुर्घटकारिणी ।**
**शक्तिरस्ति तथा सर्वं घटते माययाऽनघाः ॥**

एवं मायामनुपजीव्यैव श्रुतिप्रामाण्यबलात्परशिवस्य निर्विकाररूपत्वं जगद्रूपत्वं चोभयं प्रतिपादितम् । इदानीं तु किं विवादेन ? माययैव स विरोधः परिहियत इत्याह– अथवेत्यादिना । सर्वदुर्घटकारिणीति । विरुद्धार्थघटनमेव तस्याः शीलमित्यर्थः । निर्विकारस्य परमेश्वरस्येदृग्विधशक्तिसद्भावं श्वेताश्वतरा आमनन्ति– 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य

शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥'
( श्वेउ. ६।८ ) इति । तादी.

**प्रतीतिसिद्धा सा माया तत्त्वतोऽत्र न संशयः।**
**तया दुर्घटकारिण्या सर्वं तस्योपपद्यते ॥**

प्रतीतिसिद्धा सा मायेति । तत्त्वतः तत्त्वभूतात्परमेश्वरात् सा च माया सिद्धा तस्मिन्नाश्रिता तत्परतन्त्रेति यावत् । यद्वा शैवागमप्रसिद्धशिवशक्त्यादितत्त्वमध्ये या परिगणिता सा मायेत्यर्थः । तथा चोक्तम्– 'माया च वस्तुस्वरूपा मूलं विश्वस्य नित्या सा ' इति । तादी.

**सा तिष्ठतु महामाया सर्वदुर्घटकारिणी ।**
**वेदमानेन संसिद्धं सर्वं तद्ग्राह्यमेव हि ॥**

वेदमानेनेति । ईदृग्विधमायासद्भावश्च श्रुतिप्रमाणबलादिति वक्तव्यम् । तथा च तेन प्रमाणेन विरुद्धमविरुद्धं वा यद्यत्प्रतिपाद्यते तत्सर्वं तथैवाभ्युपेतव्यम् । तादी.

**चोद्यानर्हे तु वेदार्थे चोद्यं कुर्वन् पतत्यधः ।**
**अतः सर्वं परित्यज्य वेदमेकं समाश्रयेत् ॥**

विपक्षे बाधकमाह– चोद्यानर्ह इति । तादी.

**रूपावलोकने चक्षुर्यथाऽसाधारणं भवेत् ।**
**तथा धर्मादिविज्ञाने वेदोऽसाधारणः परः ॥**

तत्तद्विषये व्यतिरिक्तप्रमाणपरित्यागेन वेदस्यैकस्यैव समाश्रयणे कारणमाह– रूपावलोकन इति । रूपोपलब्धौ यथा चक्षुरिन्द्रियमसाधारणं कारणम्, एवं धर्मब्रह्मादिविज्ञाने वेदस्यैवासाधारणं प्रामाण्यमित्यर्थः । तादी.

**रूपावलोकनस्येदं यथा घ्राणं न कारणम् ।**
**तथा धर्मादिबुद्धेस्तु द्विजास्तर्को न कारणम् ॥**

तदसाधारण्यं सदृष्टान्तमितरनिषेधेनोपपादयति– रूपावलोकनस्येति । तादी.

**यथाऽयः पावकेनेद्धं भातीव दहतीव च ।**
**तथा वेदः शिवेनेद्धः सर्वं वक्तीव भासते ॥**

न केवलं पुरुष एव, वेदोऽपि परशिवस्वरूपानुविद्ध एव शब्दब्रह्मातीन्द्रियार्थस्य भासक इति सदृष्टान्तं प्रतिपादयति– यथाय इति । अग्निना तप्तमयो यथा तदीयाभ्यां दाहप्रकाशाभ्यां युज्यते, तद्वद्वेदोऽपि सर्वावभासकेन सर्वज्ञेन शिवेनेद्धः सन् सर्वमतीन्द्रियमप्यर्थजातं वक्तीव प्रतिपादयतीव भासत इव च । इवशब्दः अपरमार्थे । सर्ववस्तुप्रतिपादनसामर्थ्यं भानं चोभयमपि स्वप्रकाशस्य ब्रह्मण एव । तदेव तत्कार्यगतं सत्तदीयत्वेनावभासत इत्यर्थः । तादी.

**अयोवयसंक्रान्तो यथा दहति पावकः ।**
**तथा वेदेषु संक्रान्तः शिवः सर्वार्थसाधकः ॥**

स्वयं विवृणोति– अयोवयेत्यादिना । तादी.

**तथाऽपि वेदरहितः स्वयं धर्मादिवस्तुनि ।**
**न प्रमाणं विना तेन वेदोऽपि द्विजपुंगवाः ॥**

तथापि वेदरहित इति । यद्यपि स्वयं शिवः सर्वावभासकस्तथापि वेदोपाध्यनवच्छिन्नोऽसौ साधारणप्रकाशकत्वान्न धर्मादिवस्तुन्यसाधारणं प्रमाणम्, वेदोऽपि सर्वावभासकेन परशिवेन विना स्वयमपि जडत्वान्न प्रमाणमित्यर्थः । तादी.

**तस्माद्वेदो महेशेद्धः प्रमाणं सर्ववस्तुनि ।**
**अन्यथा न जडः शब्दोऽतीन्द्रियार्थस्य साधकः ॥**

उक्तमर्थं निगमयति– तस्मादिति । सर्वावभासकेन शिवस्वरूपेणेद्धः प्राप्तप्रकाशनसामर्थ्यः सन् धर्मब्रह्मादिविषये वेद एव प्रमाणं भवतीत्यर्थः । तादी.

**[1]यथा साक्षात्परं ब्रह्म प्रतिष्ठा सकलस्य च ।**
**तथैवाऽऽथर्वणो वेदः प्रतिष्ठैवाखिलश्रुतेः ॥**

आथर्वणश्रुतेः प्राधान्यं सदृष्टान्तमुपपादयति– यथेति । यथा परं ब्रह्म स्वात्मन्यध्यस्तस्य सकलस्य जगतः प्रतिष्ठा आश्रयः एवमाथर्वणी श्रुतिरपि रहस्यार्थप्रतिपादकत्वादखिलश्रुतेराश्रयभूतेत्यर्थः । तादी.

**कन्दस्तारस्तथा बिन्दुः शक्तिस्तारो महाद्रुमः ।**
**स्कन्धशाखा अकाराद्या वर्णा यद्वत्तथैव तु ॥**
**तारस्कन्दः श्रुतेर्जातिः शक्तिराथर्वणो द्रुमः ।**
**स्कन्धशाखात्रयो वेदाः पर्णाः स्मृतिपुराणकाः ॥**
**अङ्गानि शाखावरणं तर्कास्तस्यैव रक्षकाः ।**
**पुष्पं शिवपरिज्ञानं फलं मुक्तिः परा मता ॥**

---

(१) सूसं. ४।२।२।६।३२–३५.

एतदेव सदृष्टान्तमुपपादयति— कन्दस्तारं इति । दुःखात्तारयतीति तारः प्रणवः । तथैवाथर्वशिखाया-माम्नातम् 'सर्वेभ्यो दुःखेभ्य एभ्यः संतारयतीति तारणा-त्तारः' इति । स चाकारोकारमकारबिन्दुनादशक्ति-शान्ताख्यावयवैः सप्तावयवः । स च मूलाधारे परावाग्रू-पेण वर्तमानो वक्ष्यमाणस्य वृक्षस्य कन्दो मूलम् । तत्र च बिन्द्वाख्यो योऽवयवः सैव तस्य कन्दस्य शक्तिः सामर्थ्यम् । यश्च वैखरीरूपोऽभिव्यक्तस्तारः प्रणवः स एव महावृक्षः । अकाराद्या ये पञ्चाशद्वर्णास्ते प्रणवावय-वेभ्यो जातत्वात्तस्य द्रुमस्य स्कन्धशाखात्मकाः । यद्व-दयं दृष्टान्तस्तद्वदेवाखिलश्रुतेः प्रणव एव कन्दः । श्रुति-जातिः शक्तिः प्रणवात्मकस्य तज्जननसामर्थ्यम् । अथर्वणा दृष्टो यो वेदः स एव द्रुमः । ऋग्यजुःसामाख्यास्त्रयो वेदाः स्कन्धशाखाः । तस्य वृक्षस्य स्मृतिपुराणादीनि पर्णानि । कल्पसूत्रादीनि षडङ्गानि शाखावरणं रक्षणाय बहिरावरणम् । तर्कास्तस्यैवाऽऽवरणस्य संरक्षकाः । पर-शिवस्वरूपं यज्ज्ञानं तदेव तस्य वृक्षस्य पुष्पम् । तत्प्राप्या मुक्तिरेव फलम् । तादी.

[1]मार्गान्तरोदिताचारात्स्मार्तो धर्मः सुशोभनः ।
स्मार्ताच्छ्रौतः परो धर्मः श्रौताच्छ्रेष्ठो न विद्यते ॥
अतीन्द्रियार्थे धर्मादौ शिवे परमकारणे ।
श्रुतिरेव सदा मानं स्मृतिस्तदनुसारिणी ॥

श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
गुरुगुरुरखिलेशः सर्ववित्प्राह शम्भुः ।
श्रुतिपथनिरतानां तत्र नैवास्ति किंचि-
द्धितकरमिह सर्वं पुष्कलं सत्यमुक्तम् ॥

एवमुपनिषदामागमानां चाद्वितीयब्रह्मपरत्वं प्रतिपाद्य तत्राधिकारिभेदेन व्यवस्थामाह— श्रुतिपथेति । यद्यपि कामिकादिप्रभेदानामागमानां श्रुतीनां चाक्तरीत्याऽद्वितीय-परशिवस्वरूपात्मप्रतिपादने विप्रतिपत्तिर्नास्ति, तथाऽपि य उपनीतास्त्रैवर्णिकाः श्रुतावधिकृतास्तेषां तन्मुखादेव परतत्त्वमधिगन्तव्यम् । येषां श्रुतावनधिकारस्तेषामागम-मुखादिति विवेकः । तादी.

(१) सूसं, ४।२।२।८।१८–१९, २५.

[1]श्रुतिरपि मनुजानां वर्णधर्मं बभाषे
परगुरुरखिलेशः प्राह तन्त्रेषु तद्वत् ।
श्रुतिपथगलितानां वर्णधर्मं घृणाब्धिः
श्रुतिपथनिरतानां नैव तत्सेवनीयम् ॥

वर्णाश्रमधर्मा अपि तान्त्रिकाणां वैदिकानां च तत्त-द्व्यवस्थयैव प्रयोक्तव्या इत्याह— श्रुतिरपीति । तादी.

[2]श्रुतिपथनिरतानामाश्रमा यद्वदुक्ताः
परगुरुरखिलेशस्तद्वदाहाऽऽश्रमांश्च ।
श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
हरिरपि मुनिमुख्याः प्राह तन्त्रे स्वकीये ॥

न केवलं शैवागमानामेवं व्यवस्था, विष्णुब्रह्मागमाना-मपि श्रुत्यनधिकृतविषयत्वं दर्शयति— श्रुतिपथेति । तादी.

[3]विधिरपि मनुजानामाह वर्णाश्रमांश्च
श्रुतिपथगलितानामेव तन्त्रे स्वकीये ।
श्रुतिपथनिरतानां ते न संसेवनीयाः
श्रुतिपथसममार्गो नैव सत्यं मयोक्तम् ॥

हरहरिविधिपूजा कीर्तिता सर्वतन्त्रे
श्रुतिपथनिरतानां यद्वदुक्ता तु पूजा ।
श्रुतिपथगलितानामेव तन्त्रोक्तपूजा
श्रुतिपथनिरतानां सर्ववेदोदितैव ॥

श्रुतिपथगलितानां सर्वतन्त्रेषु लिङ्गं
कथितमखिलदुःखध्वंसकं तत्र तत्र ।
श्रुतिपथनिरतानां तत्सदा नैव धार्यं
श्रुतिरपि मनुजानामाह लिङ्गं विशुद्धम् ॥

[4]वेदोक्तं तान्त्रिकाः सर्वे स्वीकुर्वन्ति द्विजर्षभाः ।
नोपजीवन्ति तन्त्रोक्तं वेदः साक्षात्सनातनः ॥

(१) सूसं. ४।२।२।८।२६ ; सस्मृ. ११९ पर (गुरु) तन्त्रेषु तद्वत् ( तद्वत्स्वकीया ) पू.

(२) सूसं. ४।२।२।८।२७ ; सस्मृ. ११९ माश्रमा यद्वदुक्ताः ( माशूद्रावदुक्ता ) पू.

(३) सूसं. ४।२।२।८।२८–३०.

(४) सूसं. ४।२।२।८।६१, ६८–७०.

आगमिकैरुपजीव्यत्वादपि वेदमार्गः श्रेयानित्याह— वेदोक्तमिति । तादी.

श्रूयतां मुनयः सर्वे भाग्यवन्तः समाहिताः ।
प्रसादादेव रुद्रस्य प्रभोः कारुणिकस्य च ॥
पुराणानां समस्तानामहं कर्ता पुराऽभवम् ।
मत्प्रसादादयं सूतस्त्वभवद्रुद्रवल्लभः ॥

रुद्रस्याऽऽज्ञाबलादेव प्रभोः कारुणिकस्य च ।
पुराणसंहिताकर्ता देशिकश्चाभवद्भृशम् ॥

## शंकरसंहिता

शैवानि दश पुराणानि सात्त्विकानि, वैष्णवानि चत्वारि तामसानि, ब्राह्मे द्वे राजसे, आग्नेयं सौरं च त्रिगुणम्

(१)दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः ।
श्रद्धेयानि द्विजवरैस्तेषां धर्मास्तु तत्र यत् ।
सत्त्वं शुद्धं समादिष्टं सुखज्ञानास्पदं तु यत् ॥
विद्योपदेष्टा योगिभ्यः शुद्धस्फटिकसंनिभः ।
न निद्राति शिवः क्वापि ब्राह्मणाति (? धि)-
पति(?) श्रुतिः ॥

ब्रुवन्त्येव पुराणानि ब्राह्मणानां कथाः शुभाः ।
दश शैवानि पुण्यानि हिंसादोषपराङ्मुखाः ॥
वैष्णवानि च चत्वारि तामसानि मुनीश्वराः ।
क्षत्रियाणां श्रौतधर्मास्तेषु तद्देवता हरिः ॥

तमः कृष्णमुदासीनं को(? कू)टकृत्य-
विशारदम् ।
निद्रालस्यप्रमादाद्यास्तद्गुणाः परिकीर्तिताः ।
कृष्णो विष्णुः स्मृतः शेषशायी भक्तविमोहकः ॥

तेषु च क्षत्रियाणां च धर्मा विप्रैरुदाहृताः ।
ब्राह्मे तु राजसे वैश्यः(? श्यैः) सेव्ये सर्वत्र
संमते ॥

दुःखास्पदं रक्तवर्णं चञ्चलं च रजो मतम् ।
गुणत्रयसमायुक्तमाग्नेयं सौरमेव च ।
तस्माच्छैवानि विप्राणां पुराणानि हितानि हि ॥

(१) सम्म्. १६–२०.

शिवाज्ञया वेदशास्त्रसंक्षेपः, शिवोक्ताः शैवागमाः श्रौता अश्रौताश्च

तमु(? ताबु)वाच महादेवः प्रभुर्गम्भीरया गिरा ।
विष्णो विधे युवां भूमौ द्वापरे द्वापरे युगे ॥
व्यासो(? सश्च) जैमिनिर्भूय(? भूत्वा) वेदशास्त्रे
उमे युवाम् ।

संक्षिप्ते कुरुतं सम्यगनन्ते ते यथा नृणाम् ॥
अदधिकं तु(? अधिगन्तुं)श्चमेद्बुद्धिर्विहीनानां
कलौ युगे ।

कर्मब्रह्मविहीनानां शास्त्राणां सूत्रवर्त्मनाम् ॥
ऋषिभिः सहितावद्धि शीघ्रं कुरुत मा चिरम् ।
देवाश्च मुनयश्चान्ये तिष्यजानां हिताय वै ।
शास्त्राणि च पुराणानि संक्षिप्यन्तु ममाऽऽज्ञया ॥
परमोऽपरमश्चोभौ धर्मौ हि श्रुतिचोदितौ ।
धर्ममष्टाविधेः ये(?) प्रमाणं श्रुतिरेव नः ॥
परमो योगपर्यन्तो धर्मः श्रुतिशिरोगतः ।
धर्मस्तु(? स्त्व)परमस्तद्वद्धर्मः(? त्कर्म)श्रुति-
मुखे स्थितः ॥

आपं(? )वाधिकात्मार(? धिकारात्मा) यो धर्मः
परमो मतः ।

साधारणस्ततोऽन्यस्तु सर्वेषामधिकारतः ।
स चायमपरो धर्मः परधर्मस्य साधनम् ॥
धर्मशास्त्रादिभिः सम्यक्साङ्ग एवोपबृंहितः ।
तत्साध्यो यः परो धर्मः श्रेष्ठानुष्ठानशब्दितः ॥
इतिहासपुराणाभ्यां कथंचिदुपबृंहितः ।
शैवागमैः स च पुनः सहसोपाङ्गविस्तरः ॥
सुसंस्काराधिकारश्च सम्यगेवोपबृंहितः ।
शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च संस्मृतः ॥
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः ।
स्वतन्त्रो दशधा पूर्वं तथाऽष्टादशधा पुनः ॥
कामिकादिसमाख्याभिः सिद्धसिद्धान्तसंज्ञितः ।
श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः ॥
परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ।
युगावर्तेषु तिष्येषु योगाचार्यस्वरूपिणाम् ।
तत्र तत्रावतीर्णेन शिवेनैव प्रवर्तते ॥

## सौरसंहिता

शिवोपदिष्टा पुराणोक्ता धर्मा वेदाविरुद्धा वेदविरुद्धाश्च अधिकारभेदेन

[1]यस्तु वेदविरुद्धार्थः पुराणेष्वखिलेषु च ।
तदंशस्तु परित्याज्यः सर्वथा वैदिकैरपि ॥
तान्त्रिकाश्च क्रमेणैव श्रुत्युक्तेनैव वर्त्मना ।
श्रद्धाभक्तिसमायुक्तास्तत्र गच्छन्ति सत्तमाः ॥
सर्वज्ञोऽपीश्वरश्चापि विरुद्धार्थे कदाचन ।
न वदेद्भक्ति च भ्रान्तिं हृदि कृत्वाऽब्रवीत्परम् ॥
वेदाधिकारहीनस्य भ्रान्तस्य मनुजस्य तु ।
वक्ति श्रुतिविरुद्धार्थे सर्वज्ञः करुणाकरः ॥
पारम्पर्यक्रमेणैव वेदमार्गे च गच्छति ॥

## गरुडपुराणम्

धर्मप्रमाणानि चतुर्दश विद्यास्थानानि, धर्मोपदेशकाः मन्वादयः

[2]पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती ।
गौतमः शङ्खलिखितौ हारीतोऽत्रिरहं‡ तथा ॥
एते विष्णुं समाराध्य जाता धर्मोपदेशकाः ॥

धर्मपरिषल्लक्षणम् , श्रुतिस्मृतिसदाचाराणां प्रामाण्यम्

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यत्स्वध( ? त्स ध )र्मः स्यादेको वाऽध्यात्मवित्तमः ॥
[3]यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥
[4]श्रुतिः स्मृतिः सदाचारो यः कश्चिद्वेदकर्तृकः ।
वेदाः स्मृता ब्रह्मणाऽऽदौ धर्मा मन्वादिभिः सदा ॥

‡ अहं याज्ञवल्क्य इत्यर्थः, तस्य वक्तृत्वेन प्रकृतत्वात् ।

(१) सस्मृ. ३९. (२) गरुड. १।९३।३–६, ९.

(३) गरुड. १।९४।२५–२६.

(४) गरुड. १।१०७।२.



[1]श्रुतिस्मृती तु विज्ञाय श्रौतं कर्म समाचरेत् ।
श्रौतं कर्म न चेदुक्तं तदा स्मार्तं समाचरेत् ॥
तत्राप्यशक्तः करणे सदाचारं चरेद्बुधः ।
श्रुतिस्मृती हि विप्राणां लोचने कर्मदर्शने ॥
श्रुत्युक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
शिष्टाचारेण संप्राप्तस्त्रयो धर्माः सनातनाः ॥
सत्यं दानं दयाऽलोभो विद्येज्या पूजनं दमः ।
अष्टौ तानि पवित्राणि शिष्टाचारस्य लक्षणम् ॥
तेजोमयानि पूर्वेषां शरीराणीन्द्रियाणि च ।
न लिप्यते पातकेन पद्मपत्रमिवाम्भसा ॥
[2]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

अष्टादश पुराणानि अष्टादश उपपुराणानि च

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
भविष्यन्नारदीयं च स्कान्दं लिङ्गं वराहकम् ॥
मार्कण्डेयं तथाऽऽग्नेयं ब्रह्मवैवर्तमेव च ।
कौर्मं मात्स्यं गारुडं च वायवीयमनन्तरम् ॥
अष्टादशस( ? शं स )मुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ॥
अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ॥
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं स्यान्नन्दीश्वरभाषितम् ॥
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कापिलं वामनं चैव तथैवोशनसेरितम् ॥
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा साम्बमेवं सर्वार्थसंचयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥

अष्टादश विद्याः

पुराणं धर्मशास्त्रं च वेदास्त्वङ्गानि यन्मुने ।
न्यायः शौनक मीमांसा आयुर्वेदार्थशास्त्रकम् ।
गान्धर्वश्च धनुर्वेदो विद्या ह्यष्टादश स्मृताः ॥

(१) गरुड. १।२१३।२–६.

(२) गरुड. १।२२३।१४–२१.

[1]श्रुतेः प्रत्यक्षतस्ताक्ष्यं प्रामाण्यं बलवत्तरम् ।
श्रुत्या तु बोधितार्थस्य पीयूषत्वादिरूपता ॥

वैष्णवपुराणानि भागवतविष्णुगारुडाणि एव सात्विकानि श्राव्याणि

[2]उपक्रमैरुपसंहारस्य लिङ्गै-
हँरिं गुरुं ह्यन्तरेणैव यान्ति ।
तानेवाऽऽहुः सत्पुराणानि विप्राः
कलौ युगे नाभ्यसूयन्ति सर्वे ॥
अन्यानि विष्णोः प्रतिपादकानि
सर्वाणि ते सात्त्विकानीति चाऽऽहुः ।
श्राव्याणि तान्येव मनुष्यलोके
श्राव्याणि नान्यानि च दुःखदानि ॥
कलौ युगे सर्वपुराणमध्ये
त्रीण्येव मुख्यानि हरिप्रियाणि ।
मुख्यं पुराणं हि कलौ नृणां च
श्रेयस्करं भागवतं पुराणम् ॥
पूर्वं हि सृष्टिः प्रतिपाद्यतेऽत्र
यतो ह्यतो भागवतं परं स्मृतम् ।
यस्मिन् पुराणे कथयन्ति सृष्टिं
ह्यादौ विष्णोर्ब्रह्मरुद्रादिकानाम् ॥
नानार्थमेवं कथयन्ति विप्र
नीचोच्चरूपं ह्यानमाहुर्महान्तः ।
तेनैव सिद्धं प्रवदन्ति सर्वे
ह्यतः परं भागवतं पुराणम् ॥
ततः परं विष्णुपुराणमाहु-
स्ततः परं गारुडसंज्ञकं च ।
त्रीण्येव मुख्यानि कलौ नृणां तु
तथा विशेषो गारुडे किंचिदस्ति ॥
शृणुध्वं वै तं विशेषं च विप्रा-
स्त्र्यंशैर्युक्तं गारुडाख्यं पुराणम् ।
आद्यांशं वै कर्मकाण्डं वदन्ति
द्वितीयांशं धर्मकाण्डं तमाहुः ॥
तृतीयांशं ब्रह्मकाण्डं वदन्ति
तेषां मध्ये त्वन्तिमोऽयं वरिष्ठः ।
तृतीयांशश्रवणात्पुण्यमाहु-
स्तुल्यं पुण्यं भागवतस्य विप्राः ॥
तृतीयांशे पठिते वेदतुल्यं
फलं भवेन्नात्र विचार्यमस्ति ।
तृतीयांशश्रवणादेव विप्राः
फलं प्रोक्तं पठतोऽप्यर्धमेवम् ॥
तृतीयांशश्रवणादर्धतश्च
पुण्यं चाऽऽहुः पठतो वै दशांशम् ।

मत्स्यकूर्मवायुपुराणानि अपि सात्त्विकानि

ततो वरं मत्स्यपुराणमाहु-
स्ततो वरं कूर्मपुराणमाहुः ॥
तथैव वै वायुपुराणमाहु-
स्त्रीण्येव चाऽऽहुः सात्त्विकानीति लोके ।
तत्रापि किंचिद्वेदितव्यं भवेच्च
पुराणषट्के सत्त्वरूपे मुनीन्द्राः ॥

मत्स्यकूर्मपुराणे अत्यन्तन्यूनसत्त्वे, वायुपुराणं मध्यमसत्त्वम्, भागवतगारुडे सत्त्वोत्तमे

सत्त्वाधमे मात्स्यकौर्मे तथाऽऽहु-
र्वायुं चाऽऽहुः सात्त्विकं मध्यमं च ।
विष्णोः पुराणं भागवतं पुराणं
सत्त्वोत्तमं गारुडं चाऽऽहुरार्याः ॥

अश्राव्याणि स्कान्दादीनि षट्पुराणानि राजसानि

स्कान्दं पाद्मं वामनं वै वराहं
तथाऽऽग्नेयं भविष्यं पूर्वसृष्टौ ।
एतान्याहू राजसानीति विप्रा-
स्तत्रैकदेशः सात्त्विकस्तामसश्च ॥
रजःप्राचुर्याद्राजसानीति चाऽऽहुः
श्राव्याणि नैतानि मुमुक्षुभिः सदा ।
तेषां मध्ये सात्त्विकांशाश्च सन्ति
तेषां श्रुतेर्गारुडीयं फलं च ॥

(१) गरुड. २।१०।११.
(२) गरुड. ३।१।३९, ४२–७३.

अश्राव्याणि ब्रह्माण्डादीनि तामसानि

ब्रह्माण्डलैङ्गये ब्रह्मवैवर्तकं वै
मार्कण्डेयं ब्राह्ममादित्यकं च ।
एतान्याहुस्तामसानीति विप्रा-
स्तत्रैकदेशः सात्त्विको राजसश्च ॥
श्राव्याणि नैतानि मनुष्यलोके
तत्त्वेच्छुभिस्तामसानीत्यतो हि ।
तेषु स्थिताः सात्त्विकांशा मुनीन्द्रा-
स्तेषां श्रुतिर्गारुडैकाङ्घ्रितुल्या ॥

अष्टादश उपपुराणानि सात्त्विकराजसतामसभेदेन भिन्नानि

अल्पा(? न्या)न्युपपुराणानि वदन्त्यष्टादशानि च ।
विष्णुधर्मोत्तरं चैव तन्त्रं भागवतं तथा ॥
तत्त्वसारं नारसिंहं वायुप्रोक्तं तथैव च ।
तथा हंसपुराणं च षडेतानि मुनीश्वराः ॥
सात्त्विकान्येव जानीध्वं प्रायशो नात्र संशयः ।
एतेषां श्रवणादेव गारुडार्धफलं श्रुतम् ॥
भविष्योत्तरनामानं बृहन्नारदमेव च ।
यमनारदसंवादं लघुनारदमेव च ॥
विनायकपुराणं च बृहद्ब्रह्माण्डमेव च ।
एतानि राजसान्याहुः श्रवणाद्भुक्तिरुत्तमा ॥
गारुडात्पादतुल्यं च फलं चाऽऽहुर्मनीषिणः ।
पुराणं भागवतं शैवं नन्दिप्रोक्तं तथैव च ॥
पाशुपत्यं रैणुकं च भैरवं च तथैव च ।
एतानि तामसान्याहुर्हरितत्त्वार्थवेदिनः ॥

भागवतस्य महाभारतस्य विष्णुसहस्रनामाध्यायस्य च माहात्म्यम्

एतेषां श्रवणाद्विप्रा गारुडाङ्घ्र्यर्धमेव च ।
सर्वेष्वपि पुराणेषु श्रेष्ठं भागवतं स्मृतम् ॥
वेदैस्तुल्यं समं( ? फलं )पाठे श्रवणे च
तदर्धकम् ।
अर्थतः श्रवणे चास्य पुण्यं दशगुणं स्मृतम् ।
वक्तुः स्याद्द्विगुणं पुण्यं व्याख्यातुश्च
तथाऽधिकम् ॥

अनन्तवेदैः साम्यमाहुर्महान्तो
भारान्महत्त्वाद्भारतस्यापि विप्राः ।
वेदेभ्योऽस्य त्वर्थतश्चाधिकत्वं
वदन्ति वै विष्णुरहस्यवेदिनः ॥
तत्र श्रेष्ठां गीतिकामाहुरार्या-
स्तथैव विष्णोर्नामसहस्रकं च ।
तयोस्तत्र श्रवणाद्भारतस्य
दशाधिकं फलमाहुर्महान्तः ॥

गारुडपुराणमहिमा

दैत्याः सर्वे विप्रकुलेषु भूत्वा
कृते युगे भारते षट्सहस्र्याम् ।
निष्कास्य कांश्चिन्नवनिर्मितानां
निवेशनं तत्र कुर्वन्ति नित्यम् ॥
मत्वा हरिं भगवान् व्यासरूपी
चक्रे तदा भागवतं पुराणम् ।
तथा समाख्याय च वैष्णवं त-
स्ततः परं गारुडाख्यं स चक्रे ॥
अतो हि गारुडं मुख्यं पुराणं शास्त्रसंमतम् ।
गारुडेन समं नास्ति विष्णुधर्मप्रदर्शने ॥
यथा सुराणां प्रवरो जनार्दनो
यथाऽऽयुधानां प्रवरः(? रं) सुद-
र्शनम् ।
यथाऽश्वमेधः प्रवरः क्रतूनां
छिन्नेषु भक्तेषु त(? य)थैव रुद्रः ॥
नदीषु गङ्गा जलजेषु पद्म-
मच्छिन्नभक्तेषु त(? य)थैव वायुः ।
तथा पुराणेषु च गारुडं च
मुख्यं तदाहुर्हरितत्त्वदर्शने ॥

## पद्मपुराणम्

श्रुतिस्मृतिपुराणसदाचाराः धर्मे प्रमाणानि

[1]श्रुतिस्मृत्युदितं( ? तः ) सम्यक्साधुभिर्यश्च
सेवितः ।
तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥

(१) पद्म. १।५४।१८–१९.

येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥
[1]यस्मिन्( ? स्माद् ) वेदार्थमाहृत्य हरिणा व्यासरूपिणा।
पुराणं निर्मितं विप्र तस्मात्तत्परमो भवेत् ॥
पुराणे निश्चितो धर्मः ... ... ... ॥
[2]वेदा मूलं तु धर्माणां वर्णाश्रमविवेकिनाम् ॥

अष्टादश पुराणानि अष्टादश उपपुराणानि च

[3]ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते।
तृतीयं वैष्णवं चैव चतुर्थं शैवमुच्यते ॥
अथ भागवतं प्रोक्तं पञ्चमं षष्ठमुच्यते।
भविष्यं नारदीयं च सप्तमं परिकीर्तितम् ॥
मार्कण्डेयमिति प्रोक्तमष्टमं नवमं तथा।
आग्नेयं ब्रह्मवैवर्तं दशमं परिकीर्तितम् ॥
लैङ्गं च वामनं चैव स्कान्दं मात्स्यमथैव च।
कौर्मं वाराहमुदितं गारुडं चाथ कीर्तितम् ॥
ब्रह्माण्डमित्यष्टादश पुराणानि विदुर्बुधाः।
तथा चोपपुराणानि कथयिष्याम्यतः परम् ॥
आद्यं सनत्कुमाराख्यं नारसिंहमतः परम्।
तृतीयमाण्ड( ? यं नान्द )मुद्दिष्टं दु(? दौ)र्वाससमथैव च ॥
नारदीयमथान्यच्च कापिलं मानवं तथा।
तद्वदौशनसनप्रोक्तं ब्रह्माण्डं च तथाऽपरम् ॥
वारुणं कालिकाह्वानं माहेशं साम्बमेव च।
सौरं पाराशरं चैव मारीचं भार्गवाह्वयम् ॥
कौमारं च पुराणानि कीर्तितान्यष्ट वै दश।
अष्टादशपुराणानां व्याकर्ता तु भवेन्मनुः ॥

महाभारतपुराणमहिमा

[4]मतिमन्थानमाविध्य येनास्माच्छ्रुतिसागरात्।
प्रकाशो जनितो लोके महाभारतचन्द्रमाः ॥

(१) पद्म. १।६१।६४-६५.
(२) पद्म. ४।८।१४. (३) पद्म. ४।१११।९०-९८.
(४) पद्म. ५।१।४१-४३, ४५-५४.

भारतं भानुमानिन्दुर्यदि न स्युरमी त्रयः।
ततोऽज्ञानतमोन्धस्य काऽवस्था जगतो भवेत् ॥
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥
निःशेषेषु च लोकेषु वाजिरूपेण केशवः।
ब्रह्मणस्तु समादेशाद्वेदानाहृतवानसौ ॥
अङ्गानि चतुरो वेदान् पुराणानि च सर्वशः।
मत्स्यरूपेणाऽऽजहार कल्पादावुदकार्णवे ॥
अशेषमेतत्कथितमुदकान्तर्गतो विभुः।
श्रुत्वा जगाद च मुनिं प्रति वेदांश्चतुर्मुखः ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्तदा।
कालेनाग्रहणं दृष्ट्वा पुराणस्य तदा विभुः ॥
व्यासरूपस्तदा ब्रह्मा संग्रहार्थं युगे युगे।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे विभुः ॥
तदाऽष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रकाशते।
अद्यापि देवलोकेषु शतकोटिप्रविस्तरम् ॥
चतुर्लक्षप्रमाणेन भूर्लोकेऽत्र निवेशितम्।
ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ॥
एतदेव च वै ब्रह्मा पाद्मं लोके जगाद वै।
सर्वभूताश्रयं तच्च पाद्ममित्युच्यते बुधैः ॥
पाद्मं तत्पञ्च पञ्चाशत्सहस्राणीह पठ्यते।
पञ्चभिः पर्वभिः प्रोक्तं संक्षेपाद्व्यासकारणात् ॥
[1]यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ॥
पुराणं च विजानाति यः स तस्माद्विचक्षणः।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥
पुरा परंपरां वक्ति पुराणं तेन वै स्मृतम् ॥

(१) पद्म. ५।२।५०-५२, ५३.

धर्मपरिषत्

[1]न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ हि धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनोपपन्नम् ॥
ये तु सभ्याः सभां गत्वा तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः ॥

अष्टादश पुराणानि, पद्मपुराणश्लोकसंख्या

[2]ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च ।
शैवं भागवतं चैव भविष्यं नारदीयकम् ॥
[3]मार्कण्डेयं तथाऽऽग्नेयं ब्रह्मवैवर्तमेव च ।
लैङ्गं तथैव वाराहं स्कान्दं वामनमेव च ॥
[4]कौर्मं मात्स्यं गारुडं च ब्रह्माण्डं च ततः परम् ।
आद्येष्वष्टादशस्वेषु पुराणेषु महत्सु च ॥
[5]द्वितीयं पाद्ममित्युक्तं पुराणं रौमहर्षणे ।
पञ्चपञ्चाशदित्युक्तं सहस्रं ग्रन्थसंख्यया ॥

महादेवेन कृतानि असुरमोहनार्थं तामसानि पुराणानि कणादादीनां ऋषीणां विप्राणां शास्त्राणि च

देवा ऊचुः—
[6]अजेयान्सर्वदेवानां तपोनिर्धूतकल्मषान् ।
त्वमेवैतान् महादैत्यान् जेतुमर्हसि केशव ॥
महादेव उवाच—
इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् ।
तानवध्यान्विदित्वाऽथ मामाह पुरुषोत्तमः ॥
श्रीभगवानुवाच—
त्वं हि रुद्र महाबाहो मोहनार्थं सुरद्विषाम् ।
पाखण्डाचरणं धर्मं कुरुष्व सुरसत्तम ॥
तामसानि पुराणानि कथयस्व च साम्प्रति ।
मोहनानि च शास्त्राणि कुरुष्व च महामते ॥
मयि भक्ताश्च ये विप्रा भविष्यन्ति महर्षयः ।
स्वच्छक्त्या तान्समाविश्य कथयस्व च तामसान् ॥
कणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् ।
कपिलं चैव दुर्वासं मृकण्डुं च बृहस्पतिम् ॥
भार्गवं जमदग्निं च दशैतांस्तामसानृषीन् ।
भावशक्त्या समाविश्य कुरुते( ? ष्व ) जगतो हितम् ॥
स्वच्छक्त्या संनिविष्टास्ते तमसोद्रिक्तया भृशम् ।
तामसास्ते भविष्यन्ति क्षणादेव न संशयः ॥
कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये ।
पुराणानि च शास्त्राणि त्वया सत्येन वेदिताः ॥
कपालचर्मभस्मास्थिचिह्नान्यपि हि सर्वशः ।
त्वमेव धृतवाँल्लोकान्मोहयस्व जगत्त्रये ॥
तथा पाशुपतं शास्त्रं त्वमेव कुरु सुव्रत ।
कङ्कालशैवपाषण्डमहाशैवादिभेदतः ॥
अवलक्ष्य मतं सम्यग्वेदबाह्यं द्विजाधमाः ।
भस्मास्थिधारिणः सर्वे भविष्यन्ति न संशयः ॥
त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः ।
तेषां मतमधिष्ठाय सर्वे दैत्याः सनातनाः ॥
भवेयुस्ते मद्विमुखाः क्षणादेव न संशयः ।
अहमप्यवतारेषु त्वां च रुद्र महाबल ॥
तामसानां मोहनार्थं पूजयामि युगे युगे ।
मतमेतदवष्टभ्य पतन्त्येव न संशयः ॥
महादेव उवाच—
[7]देवतानां हितार्थाय वृत्तिः पाषण्डिनां शुभे ।
कपालचर्मभस्मास्थिधारणं तत्कृतं मया ॥
तामसानि पुराणानि यथोक्तं विष्णुना मम ।
पाषण्डशैवशास्त्राणि यथोक्तं कृतवानहम् ॥

(१) पद्म. ५।३४।९७–९८.
(२) पद्म. ६।२१९।२५ ; सस्मृ. ६–७.
(३) पद्म. ६।२१९।२६ ; सस्मृ. ७ वैवर्त ( कैवर्त ) लैङ्गं ( लैङ्ग्यं ).
(४) पद्म. ६।२१९।२७ ; सस्मृ. ७ कौर्मं ( कूर्मं ) शस्वेषु ( श्रेष्ठेषु ).
(५) पद्म. ६।२१९।२८.
(६) पद्म. ६।२६३।२२–३६.
(७) पद्म. ६।२६३।५३–६०.

मच्छक्त्या वै समाविश्य गौतमादिद्विजानपि ।
वेदबाह्यानि शास्त्राणि सम्यगुक्तं मयाऽनघे ॥
इदं मतमवष्टभ्य मां दृष्ट्वा सर्वराक्षसाः ।
भगवद्विमुखाः सर्वे बभूवुस्तमसाऽऽवृताः ।
भस्मादिधारणं कृत्वा महोग्रतमसाऽऽवृताः ।
मामेव पूजयांचक्रुर्मांसासृक्चन्दनादिभिः ॥
मत्तो वरप्रदानानि लब्ध्वा मद्बलोद्धताः ।
अत्यन्तविषयासक्ताः कामक्रोधसमन्विताः ॥
सत्त्वहीनास्तु निर्वीर्या जिता देवगणैस्तदा ।
सर्वधर्मपरिभ्रष्टाः काले यान्त्यधमां गतिम् ॥
ये मे मतमवष्टभ्य चरन्ति पृथिवीतले ।
सर्वधर्मैश्च रहिताः पश्यन्ति निरयं सदा ॥

पार्वत्युवाच—

'तामसानि च शास्त्राणि समाचक्ष्व ममानघ ।
संप्रोक्तानि च यैर्विप्रैर्भगवद्भक्तिवर्जितैः ॥
तेषां नामानि क्रमशः समाचक्ष्व सुरेश्वर ॥

रुद्र उवाच—

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां स्मरणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हि मया चोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानि च ततः शृणु ॥
कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥

बुद्धरूपेण विष्णुना रचितं बौद्धशास्त्रं शिवेन प्रच्छन्न-
बौद्धं मायावादरूपमसच्छास्त्रं निरीश्वरमतं
जैमिनीयं च

धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥
बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ॥
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ।
अपार्थं श्रुतिवाक्यानां दर्शयंल्लोकगर्हितम् ॥
कर्मस्वरूपत्याज्यत्वमत्र वै प्रतिपाद्यते ।
सर्वकर्मपरिभ्रष्टं वैधर्म्यत्वं तदुच्यते ॥

परेशजीवयोरैक्यं मया तु प्रतिपाद्यते ।
ब्रह्मणोऽस्य स्वयं रूपं निर्गुणं वक्ष्यते मया ॥
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ।
वेदार्थवन्महाशास्त्रं मायया यदवैदिकम् ॥
मयैव र(? व)क्ष्यते देवि जगतां नाशकारणात् ॥
द्विजन्मना जैमिनिना पूर्वं वे (? वे)दमपार्थकम् ॥
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ।
शास्त्राणि चैव गिरिजे तामसानि निबोध मे ॥

सात्त्विकराजसतामसभेदेन भिन्नानि पुराणानि
स्मृतिशास्त्राणि च

पुराणानि च वक्ष्यामि तामसानि यथाक्रमम् ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
तथैव नारदीयं च मार्कण्डेयं तु सप्तमम् ।
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ॥
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ।
द्वादशं च वराहं च वामनं च त्रयोदशम् ॥
कौर्मं चतुर्दशं प्रोक्तं मात्स्यं पञ्चदशं स्मृतम् ।
षोडशं गारुडं प्रोक्तं स्कान्दं सप्तदशं स्मृतम् ।
अष्टादशं तु ब्रह्माण्डं पुराणानि यथाक्रमम् ॥
मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।
आग्नेयं च षडेतानि तामसानि निबोध मे ।
वैष्णवं नारदीयं च तथा भागवतं शुभम् ॥
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ॥
सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ॥
तथैव स्मृतयः प्रोक्ता ऋषिभिस्त्रिगुणान्विताः ।
सात्त्विका राजसाश्चैव तामसाः शुभदर्शने ॥
वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपं च सात्त्विका मुक्तिदाः शुभाः ॥

(१) पद्म. ६।२६३।६५-९०.

वासवस्कं तथाऽऽत्रेयं तैत्तिरं दाक्षमेव च ।
कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः ॥
गौतमं बार्हस्पत्यं च सांवर्तं च यमं स्मृतम् ।
शाङ्खं चौशनसं देवि तामसा निरयप्रदाः ॥
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि ।
तामसा नरकायैव वर्जयेत्तान्विचक्षणः ॥

श्रुतिस्मृतिपुराणानि धर्मे प्रमाणानि, तत्र श्रुतिः श्रेष्ठा

(१)वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥
(२)बहुत्वादिह शास्त्राणां धर्ममूलं श्रुतिः स्मृतिः ।
इतिहासपुराणानि तस्मात्तेषु मनः कुथाः ॥
(३)श्रुतिस्मृतिपुराणानां विरोधो यदि दृश्यते ।
श्रौतं तत्र प्रमाणं स्याद्द्वयोर्द्वैधे श्रुतिर्वरा ॥
श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥

नारदपाञ्चरात्रतन्त्रं प्रमाणम्

(४)एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अल्पायासं दर्शयित्वा फलं दीर्घं प्रदर्शय ॥
(५)गौतमेनाभिशप्तास्तु द्विजा उद्विग्नमानसाः ।
कंचित्कालमतिक्रम्य तेषु केचित्समन्वयुः ॥
भूयसा प्रणिपातेन गौतमं तेऽभ्यपूजयन् ।
शुश्रूषायां स्थिता विप्रा मनोवाक्कायकर्मभिः ॥
गौतमं प्रीणयामासुः शापस्यान्तमभीप्सवः ।
अथ प्रीतमनास्तेषां गौतमो मुनिसत्तमः ॥
उवाच मुनयः किं वो ददामि मुनिपुङ्गवाः ।
मत्तो वरमभीप्सध्वं युष्माकं यदभीप्सितम् ॥

मुनय ऊचुः–
नास्माकमभिवाञ्छाऽस्ति वरेषु मुनिसत्तम ।
शापदग्धाः श्रुतिभ्रष्टास्तस्माच्छापं निवर्तय ॥
गौतम उवाच–
अनृतं नोक्तपूर्वं मे यूयं मद्भक्तिभाविताः ।
तन्त्रमार्गप्रवेशेऽपि वेदमार्गप्रवर्तकाः ॥
भविष्यथ यथापूर्वं मत्तः संशृणुत द्विजाः ।
वेदानां सारमुद्धृत्य यत्तन्त्रं हरिरुक्तवान् ॥
श्वेतद्वीपे नारदाय मोक्षकामाय धीमते ।
वेदाविरुद्धं तत्तन्त्रं सर्ववेदार्थबृंहितम् ॥
तत्तन्त्रदीक्षां प्राप्तानां शङ्खचक्राङ्कधारिणाम् ।
युष्माकं वेदमार्गोऽपि न नश्यति ममाऽऽज्ञया ॥
वेदशास्त्रार्थवेत्ताऽपि यो ह्यनेन न संस्कृतः ।
न स वेदफलं धत्ते यथा गौर्भारवाहकः ॥
सर्ववेदमयं तन्त्रं नारदे पाञ्चरात्रकम् ॥
अन्यानि यानि तन्त्राणि हरिणा च हरेण च ।
कृतानि ऋषिभिश्चापि मोहनानि न संशयः ॥
तत्र ये विहिता धर्मा विरुद्धा वेदवादिनाम् ।
अतस्तत्र न निष्ठाऽस्तु युष्माकं मत्प्रसादतः ॥
(१)श्रौतं वैखानसं प्रोक्तं स्मार्तं वासिष्ठमुच्यते ।
पाञ्चरात्राद्यगमोक्तमागमोक्तं तदिष्यते ॥

## ब्रह्मपुराणम्

चत्वारो वेदाः स्मृतयः पुराणानि च धर्मे प्रमाणानि,
तत्र वेदशब्दः परमं प्रमाणम्

(२)धर्मं व्यवस्थापयितुं व्यवस्य
ऋक्सामशास्त्राणि यजुश्च शाखाः ।
लोके च गाथाः स्मृतयः पुराण-
मित्यादिशब्दात्मकतामुपैति ॥
(३)एवं चतुर्दशैतानि विद्यास्थानानि सन्त्यथ ।
वेदान्तः पञ्चदशकं विद्या षोडशिका भवेत् ॥

---

(१) आर्क. १.
(२) चत्र. २४ तिः स्मृतिः (तिस्मृती) ; आर्क. १ पू.
(३) आर्क. १.
(४) अप. १।७ पृ. १२ वराहपुराणे ; मुक्ता. २९७ तृतीयपङ्क्तौ (अतथ्यानि च तथ्यानि दर्शयित्वा फलानि तु ॥). (५) विपा. ३।२।५२०–५२१.

(१) मुक्ता. २९५ पाञ्चोत्तरे : ३०० प्रथमचरणमात्रम्.
(२) ब्रह्म. ७५।१०.
(३) अप. १।३ पृ. ६ ; वीमि. १।३ पृ. १५ कं विद्या षोडशिका (मं विद्या षोडशकं) उत्त.

इति ब्रह्मपुराणे यद्वेदान्तविद्ययोर्ग्रहणं तन्मोक्षसाधनविद्याभिप्रायम् । ... ... वेदान्तः शारीरकम् । विद्या बृहदारण्यकादिरहस्यम् । अप. ११३

अगस्त्य उवाच–

[1]धर्मार्थकाममोक्षाणां प्रमाणं शब्द उच्यते ।
तत्रापि वैदिकः शब्दः प्रमाणं परमं मतः ॥
वेदाः प्रमाणं सर्वत्र ... ... ॥

[2]मार्कण्डेयो भरद्वाजो वसिष्ठोऽत्रिश्च गौतमः ।
याज्ञवल्क्यश्च जाबालिर्मुनयोऽन्येऽपि नारद ।
एते शास्त्रप्रणेतारो वेदवेदान्तपारगाः ॥

[3]वसिष्ठजाबालिसयाज्ञवल्क्य-
क्रत्वङ्गिरोदक्षमरीचिविष्णवः ।
शातातपः शौनकदेवरात-
भृग्वग्निवेश्यात्रिमरीचिमुख्याः ॥
सुधूतपापा मनुगौतमाद्यः
सकौशिकास्तुम्बरुपर्वताद्याः ।
अगस्त्यमार्कण्डसपिप्पलाद्याः
सगालवा योगपरायणाश्च ॥
सवामदेवाङ्गिरसोऽथ भार्गवाः
स्मृतिप्रवीणाः श्रुतिभिर्मनोज्ञाः ॥

[4]धर्मार्थकाममोक्षाणां साधनं यन्नराचरे ।
तदत्र विद्यते सर्वमितिहासे सविस्तरे ॥
वेदोदितं श्रुतिसकलरहस्यमुक्तं
सत्कारणं समभिधानमिदं सदैव ।
सम्यक्च दृष्टं जगतां हिताय
प्रोक्तं पुराणं बहुधर्मयुक्तम् ॥

महेश्वर उवाच–

[5]आगमालोकधर्माणां मर्यादाः पूर्वनिर्मिताः ।
प्रमाणेनानुवर्तन्ते दृश्यन्ते ह दृढव्रताः ॥

(१) ब्रह्म. १३०।७, १४.
(२) ब्रह्म. १४५।२–३.
(३) ब्रह्म. १७४।२–४.
(४) ब्रह्म. १७५।७७–७८.
(५) ब्रह्म. २२५।६०.

[1]प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।
वेदशास्त्रप्रमाणं च प्रमाणं तत्सनातनम् ॥

## ब्रह्मवैवर्तपुराणम्

ब्रह्मवैवर्तपदव्युत्पत्तिः, ब्रह्मवैवर्तपुराणं कृष्णप्रणीतं ब्रह्मादिपरंपरया प्राप्तम्

[2]सारभूतं पुराणेषु केवलं वेदसंमतम् ।
विवृतं ब्रह्म कार्त्स्न्येन च कृष्णेन यत्र शौनक ।
ब्रह्मवैवर्तकं तेन प्रवदन्ति पुराविदः ॥
[3]इदं पुराणसूत्रं च पुरा दत्तं च ब्रह्मणे ।
निरामये च गोलोके कृष्णेन परमात्मना ॥
महातीर्थे पुष्करे च दत्तं धर्माय ब्रह्मणा ।
धर्मेण दत्तं पुत्राय प्रीत्या नारायणाय च ॥
नारायणर्षिर्भगवान्प्रददौ नारदाय च ।
नारदो व्यासदेवाय प्रददौ जाह्नवीतटे ॥
व्यासः पुराणसूत्रं तत्संव्यस्य विपुलं महत् ।
†मह्यं ददौ सिद्धक्षेत्रे पुण्यदेशे मनोहरम् ॥
मयेदं कथितं ब्रह्मंस्तत्समग्रं निशामय ।
अष्टादशसहस्रं तु व्यासेनेदं पुराणकम् ॥

वेद एव धर्मप्रमाणम्

[4]संबन्धो देशभेदे च सर्वदेशे विगर्हितः ।
अवैदिको निन्दितस्तु विश्वामित्रेण निर्मितः ॥
तुल्यजश्च महद्भिस्तु देशभेदे विधीयते ।
अकीर्तिजनकः पुंसां योषितां च विशेषतः ॥
तेजीयसां न दोषाय विद्यमाने युगे युगे ॥
[5]धर्मार्थकाममोक्षांश्च सर्वे वाञ्छन्ति पण्डिताः ।
वेदप्रणिहितानेतान्समासु मुनिसंशितान् ॥
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥

† मह्यं सौतय इत्यर्थः ।

(१) ब्रह्म. २४२।७.
(२) ब्रह्मवै. १।१।६१–६६.
(३) ब्रह्मवै. १।१०।१६८–१७०.
(४) ब्रह्मवै. १।१२४।७.
(५) ब्रह्मवै. १।२४।८, ४।७९।१७, २२, ४।८७।५९.

धर्म उवाच–

[1]वत्सै चतुर्षु वेदेषु धर्मो वै संहितासु च ।
पुराणेष्वितिहासेषु पाञ्चरात्रादिकेषु च ।
अन्येषु सर्वशास्त्रेषु वेदाङ्गेषु च सुव्रते ॥
[2]नास्ति वेदात्परं शास्त्रम् ...... ॥

श्रीभगवानुवाच–

[3]अन्येषां च भवेज्ज्ञानं श्रुत्वा शास्त्रं सतां मुखात् ।
स्वमूर्तिमन्ति शास्त्राणि भवे सन्तश्चरन्ति हि॥

ब्रह्मोवाच–

[4]वेदे जुगुप्सितं कर्म तदेव कर्तुमक्षमः ।
वेदकर्ता स्वयमहं व्यवस्थाकारको भवे ॥
अकीर्तिर्वेदवक्तुश्च निन्द्यं च किमतः परम् ॥
[5]परं पुराणसूत्रेषु चाहं भागवतं वरम् ।
भारतं चेतिहासेषु पञ्चरात्रेषु कापिलम् ॥
[6]वेदो नारायणः साक्षाद्द्वयं पूज्या व्यवस्थया ।
तस्माच्छास्त्राणि सर्वाणि पुराणानि च सन्ति वै ॥
यस्मान्निरूपितो धर्मश्चेतिहासश्च संहिताः ।
तस्माद्धन्याश्च ते वेदा वदन्त्यत्र मनीषिणः ॥

श्रीकृष्ण उवाच–

[7]अहं नारायणर्षिश्च नरो धर्मः सनातनः ।
धर्मवक्ता च धर्मिष्ठो धर्मवर्त्मप्रवर्तकः ॥

पुराणविषयाः, अष्टादशपुराणानां श्लोकसंख्या

शौनक उवाच–

[8]अधुना श्रोतुमिच्छामि पुराणानां च लक्षणम् ।
संख्यानमपि तेषां च फलमस्यैव पुत्रक ॥

सूत उवाच–

विस्तराणि पुराणानि चेतिहासश्च( ? सं च ) शौनक ।
संहितां( ? ताः ) पञ्चरात्राणि कथयामि यथागतम् ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं विप्र पुराणं पञ्चलक्षणम् ॥
एतदुपपुराणानां लक्षणं च विदुर्बुधाः ।
महतां च पुराणानां लक्षणं कथयामि ते ॥
सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् ।
कर्मणां वासना वार्ता मनूनां च क्रमेण च ॥
वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् ।
उत्कीर्तनं हरेरेव वेदानां च पृथक्पृथक् ॥
दशाधिकं लक्षणं च महतां परिकीर्तितम् ।
संख्यानं च पुराणानां निबोध कथयामि ते ॥
परं ब्रह्मपुराणं च सहस्राणां दशैव तु ।
पञ्चोनषष्टिसाहस्रं पाद्ममेव प्रकीर्तितम् ॥
त्रयोविंशतिसाहस्रं वैष्णवं च विदुर्बुधाः ।
चतुर्विंशतिसाहस्रं शैवं चैव निरूपितम् ॥
ग्रन्थोऽष्टादशसाहस्रं श्रीमद्भागवतं विदुः ।
पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्तितम् ॥
मार्कण्डं नवसाहस्रं पुराणं पण्डिता विदुः ।
चतुःशताधिकं पञ्चदशसाहस्रमेव च ॥
परमग्निपुराणं च रुचिरं परिकीर्तितम् ।
चतुर्दशसहस्राणि परं पञ्चशताधिकम् ॥
पुराणप्रवरं चैव भविष्यं परिकीर्तितम् ।
अष्टादशसहस्रं च ब्रह्मवैवर्तमीप्सितम् ॥
सर्वेषां च पुराणानां सारमेव विदुर्बुधाः ।
एकादशसहस्रं तु परं लिङ्गपुराणकम् ॥
चतुर्विंशतिसाहस्रं वाराहं परिकीर्तितम् ।
एकाशीतिसहस्रं च परमेव शताधिकम् ॥
वरं स्कन्दपुराणं च सद्भिरेवं निरूपितम् ।
वामनं दशसाहस्रं कौर्मं सप्तदशैव तु ॥

---

(१) ब्रह्मवै. २।३२।९–१०.
(२) ब्रह्मवै. ३।४४।७२.
(३) ब्रह्मवै. ४।२५।११०.
(४) ब्रह्मवै. ४।३२।९, १०.
(५) ब्रह्मवै. ४।७३।७९.
(६) ब्रह्मवै. ४।८७।६०–६१.
(७) ब्रह्मवै. ४।१२६।९०.
(८) ब्रह्मवै. ४।१३३।४–२६.

मात्स्यं चतुर्दश प्रोक्तं पुराणं पण्डितैस्तथा ।
ऊनविंशतिसाहस्रं गारुडं परिकीर्तितम् ॥
परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्तितम् ।
एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ॥
अष्टादशपुराणानामेवमेव विदुर्बुधाः ।
एवं चोपपुराणानामष्टादश §प्रकीर्तिता ॥

पञ्चरात्रादयः संहिताः

इतिहासो भारतं च वाल्मीकं काव्यमेव च ।
पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्वकम् ॥
वासिष्ठं नारदीयं च कापिलं गौतमीयकम् ।
परं सनत्कुमारीयं पञ्चरात्रं च पञ्चकम् ॥
पञ्चकं संहितानां च कृष्णभक्तिसमन्वितम् ।
ब्रह्मणश्च शिवस्यापि प्रह्लादस्य तथैव च ॥
गौतमस्य कुमारस्य संहिताः परिकीर्तिताः ॥

अष्टादशपुराणानि अष्टादशोपपुराणानि च

[1]ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते ।
तृतीयं वैष्णवं प्रोक्तं चतुर्थं शैवमुच्यते ॥
ततो भागवतं प्रोक्तं भविष्याख्यं ततः परम् ।
सप्तमं नारदीयं वै मार्कण्डेयं तथाऽष्टमम् ॥
आग्नेयं नवमं प्रोक्तं ब्रह्मकैवर्तसंज्ञितम् ।
दशमं च ततो लैङ्गं वाराहं तु ततः परम् ॥
ततः स्कान्दं ततः पश्चाद्वामनं परिकीर्तितम् ।
अथ गारुडमुक्तं वै मात्स्यं तत्परमुच्यते ॥
ब्रह्माण्डं तत्परं प्रोक्तं पुराणानामनुक्रमः ॥
ग्रन्थतस्तु चतुर्लक्षं पुराणं मुनिपुङ्गवः( ? वाः) ।
अष्टादशपुराणानां कर्ता सत्यवतीसुतः ॥
अष्टादश पुराणानि श्रुत्वा सत्यवतीसुतात् ।
अन्यानि च पुराणानि चक्रुरन्ये मुनीश्वराः ॥

§ अत्राष्टादशत्वमतिन्यूनत्वाधिकत्वाभ्यां श्लोकसहस्रगतं श्लोकलक्षगतं च न संभवतीत्युपपुराणगतं ग्राह्यम् । अष्टादशेत्यत्र छान्दसः सुपो लुक्, प्रकीर्तितेत्यत्राध्याहृतसंख्याशब्दानुरोधेन स्त्रीत्वं चेत्युपगन्तव्यम् ।

(१) सस्मृ. ९–१०.

[1]आद्यं सनत्कुमारं च नारदीयं द्वितीयकम् ।
तृतीयं नारसिंहाख्यं शैवधर्मं चतुर्थकम् ॥
[2]दौर्वासं पञ्चमं षष्ठं कापिलेयमतः परम् ।
सप्तमं मानवं प्रोक्तं शौक्रमष्टममेव च ॥
[3]वारुणं नवमं प्राहुर्ब्रह्माण्डं दशमं स्मृतम् ।
कालीपुराणं च तत एकादशमथुच्यते ॥
[4]वासिष्ठलैङ्गं द्वादशमं माहेशं तु त्रयोदशम् ।
साम्बं चतुर्दशं प्रोक्तं सौरं पञ्चदशं स्मृतम् ॥
[5]पाराशर्यं षोडशमं मारीचं तु ततः परम् ।
अष्टादशं भार्गवाख्यं सर्वधर्मप्रवर्तकम् ॥
[6]एतान्युपपुराणानि सर्ववेदमयानि च ॥

उपपुराणान्तर्गते नारदीयब्रह्माण्डपुराणे भिन्ने ।
पप्र. १४

[7]लक्षं तु ग्रन्थसंख्यादि कीर्तितं मुनिभिर्द्विजाः ॥
पुराणेष्वेषु वै विप्राः सर्वे वेदार्थवादिनः ।
अप्रामाण्यमकरोद्यस्तं(?) ब्रह्महा स प्रकीर्तितः ॥

(१) पप्र. १४ ; सस्मृ. १० रं च ( रोक्तं ) नारदीयं ( नारसिंहं ) द्वितीयकम् ( ततः परम् ) उत्तरार्धे ( तृतीयं छान्दसं संज्ञं चतुर्थं शिवधर्मकम् ॥ ).

(२) पप्र. १४ ; सस्मृ. १० ( दौर्वासं पञ्चमं प्रोक्तं षष्ठं वै नारदीयकम् । ततः पश्चान्मुनिश्रेष्ठाः कापिलं सप्तमं विदुः ॥ ).

(३) पप्र. १४ ; सस्मृ. १० ( अष्टमं नवमं प्रोक्तं शक्यमौशनसं स्मृतम् । ततो ब्रह्माण्डसंज्ञं च वारुणाख्यं ततः परम् ॥ ).

(४) पप्र. १४ ; सस्मृ. १० ( ततः कालिपुराणाख्यं ततो वासिष्ठलैङ्ग्यकम् । ततो माहेश्वरं प्रोक्तं तत्साम्बं प्रकीर्तितम् ॥ ).

(५) पप्र. १४ ; सस्मृ. १० ( ततः सौरपुराणं च पाराशर्यं प्रकीर्तितम् । कैवर्ताख्यं ततः प्रोक्तं ततो भार्गवमुच्यते ॥ ).

(६) पप्र. १४.

(७) सस्मृ. १०–११.

प्रमाणेषु श्रेष्ठमागमप्रमाणम्

विश्वामित्र उवाच—

[1]धर्मस्य मूलं प्रथमं श्रुतिं वेदविदो जगुः।
श्रुतिर्मूलं स्मृतीनां च पुराणं सेतिहासकम्।
श्रुतिमूलं समाख्यातं तदुक्तं नैव चालयेत्॥
शास्त्रं प्रमाणं परमं प्रमाणानामिति स्थितिः।
आगमादेव लोकस्य प्रतीतिर्नान्यतः कुतः॥
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

## वराहपुराणम्

ब्रह्मणो वेदावाप्तिः

धरण्युवाच—

[2]कल्पे कल्पे भवानेवं मां समुद्धरति प्रभो।
न चाहं वेद ते मूर्तिमादिसर्गं च केशव॥
वेदेषु चैव नष्टेषु मत्स्यो भूत्वा रसातलात्।
प्रविश्य तानथोत्कृष्य ब्रह्मणे दत्तवानसि॥

पुराणलक्षणम्

[3]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम्॥

वेदोपलब्धिः

नारद उवाच—

[4]दृष्ट्वाऽहं विस्मयापन्नस्तां कन्यामायतेक्षणाम्।
पृष्टवानस्मि राजेन्द्र तदा मधुरभाषिणीम्॥
काऽसि भद्रे कथं वाऽसि किं वा कार्यमिह त्वया।
कर्तव्यं चारुसर्वाङ्गि तन्ममाऽऽचक्ष्व शोभने॥
एवमुक्ता मया सा हि मां दृष्ट्वाऽनिमिषेक्षणा।
स्मृत्वा तूष्णीं स्थिता यावत्तावन्मे ज्ञानमुत्तमम्॥
विस्मृतं सर्ववेदाश्च सर्वशास्त्राणि चैव हि।
योगशास्त्राणि शिक्षाश्च वेदानां स्मृतयस्तथा॥
सर्वं दृष्टै( ? दृष्ट्वै )व मे राजन्कुमार्याऽपहृतं क्षणात्।
ततोऽहं विस्मयाविष्टश्चिन्ताशोकसमन्वितः॥

(१) बाल. १।२१६ पृ. ४८७.
(२) वराह. १।४–५. (३) वराह. २।४.
(४) वराह. २।६५–८०.

तामेव शरणं गत्वा यावत्पश्यामि पार्थिव।
तावद्दिव्यः पुमांस्तस्याः शरीरे समदृश्यत॥
तस्यापि पुंसो हृदये त्वपरस्तस्य चोरसि।
अन्यो रक्तेक्षणः श्रीमान्द्वादशादित्यसंनिभः॥
एवं दृष्टाः पुमांसोऽत्र त्रयः कन्याशरीरगाः।
क्षणेन तत्र कन्यैका न तान्पश्यामि सुव्रत॥
ततः पृष्टा मया देवी सा कुमारी कथं मम।
वेदा नष्टा ममाऽऽचक्ष्व भद्रे तन्नाशकारणम्॥

कन्योवाच—

माताऽहं सर्ववेदानां सावित्री नाम नामतः।
मां न जानासि येन त्वं ततो वेदा हृतास्तव॥
एवमुक्ते तया राजन्विस्मयेन तपोधन।
पृष्टा त( ? क) एते पुरुषा एतत्कथय शोभने॥

कन्योवाच—

य एष मच्छरीरस्थः सर्वाङ्गश्चारुशोभनः।
एष ऋग्वेदनामा तु वेदो नारायणः स्वयम्॥
वह्निभूतो दहत्याशु पापान्युच्चारणादनु॥
एतस्य हृदये योऽयं दृष्ट आसीत्त्वयाऽऽत्मजः।
स यजुर्वेदरूपेण स्थितो ब्रह्मा महाबलः॥
तस्याप्युरसि संविष्टो य एष शुचिरुज्ज्वलः।
स सामवेदनामा तु रुद्ररूपी व्यवस्थितः॥
एष आदित्यवत्पापान्याशु नाशयते स्मृतः।
एते त्रयो महावेदा ब्रह्मन्देवास्त्रयः स्मृताः॥
[1]ततो रात्र्यां व्यतीतायामुत्थितः कमलेक्षणः।
चिन्तयामास तान्वेदान्मातरं च चतुर्ष्वपि॥
चिन्तयानः स देवेशस्तान्वेदान्नाध्यगच्छत।
लोकमार्गस्थितिं कर्तुं निद्राज्ञानेन मोहितः॥
चिन्तयामास देवेशो नात्र देवो व्यवस्थितः॥
ततः स्वमूर्तौ तोयाख्ये लीनान्दृष्ट्वा महेश्वरः।
जिघृक्षुश्चिन्तयामास मत्स्यो भूत्वाऽऽविश-ज्जलम्॥

(१) वराह. ९।२३–२७, ३४.

एवं ध्यात्वा महामत्स्यस्तत्क्षणात्समजायत ।
विवेश च जलं देवः समन्तात्क्षोभयन्निव ॥
तस्मिन् प्रविष्टे सहसा जलं तु
महामहीधृग्वपुषि प्रकाशम् ।
मात्स्यं गते देववरे महोदधिं
हरिं स्तवैस्तुष्टुवुरुद्धृतक्षितिम् ॥
एवं स्तुतस्तदा देवो जलस्थाञ्जगृहे च सः ।
वेदान्सोपनिषच्छास्त्राण्यतः स्वं रूपमास्थितः ॥
[1]हयग्रीवः कदाचित्तु सुरद्वेषी महाबलः ।
सुराणामपकाराय वेदानाहृत्य चौर्यतः ॥
[2]भक्षयित्वा बहून् वेदान्स पातालं समाविशत् ।
दैत्यं विदार्य तान्वेदान्ब्रह्मणे स ददौ हरिः ॥

विष्णुपदप्रापकः पञ्चरात्रागमोक्तो विधिः सर्ववर्णसाधारणः

§[3]अलाभे वेदशास्त्राणां पञ्चरात्रोदितेन हि ।
मार्गेण मां यजन्ते ये ते मां प्राप्स्यन्ति मानवाः ॥
[4]अभावे वेदमन्त्राणां पञ्चरात्रोदितो विधिः ॥
[5]ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां तु मे क्षेत्रपदवीगमनं द्विज ॥
तत् पञ्चरात्राभिधानम् । ¶ स्मृको. ६४

[1]मन्नाम विहितं तेषां नान्यत्पूजादिकं चरेत् ।
एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् ॥
पञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहीष्यति ॥
कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति ।
तस्य चेदं पञ्चरात्रं नित्यं हृदि वसिष्यति ॥
इतरे राजसैर्भावैस्तामसैश्च समावृताः ।
भविष्यन्ति द्विजश्रेष्ठ मय्यासनपराङ्मुखाः ॥
कृतं त्रेतां द्वापरं च युगानि त्रीणि नारद ॥
सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोधिकाः ॥
[2]अन्यच्च ते वरं दद्मि शृणु नारद सांप्रतम् ।
यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् ।
तद्भवान्वेत्स्यते सर्वं मत्प्रसादान्न संशयः ॥
[3]वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योऽहं नान्यथा वत्स वर्षकोट्ययुतैरपि ॥
[4]मम शास्त्रं बहिष्कृत्य अस्माकं यः प्रपद्यते ।
पितरस्तस्य सुश्रोणि तथैव च पितामहाः ।
स्मशाने जम्बुकीभूत्वा भक्षयन्ति शवं तथा ॥

( १ ) 'मम शास्त्रं बहिष्कृत्य... ॥' इति वाराहे भगवतोक्तम् । अत्र अस्माकम् इत्यस्मदीयो भागवतः । मम शास्त्रं भगवत्प्रणीतं पञ्चरात्रशास्त्रम् । तथा चोक्तं महाभारते– 'पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम्' इति । तथा च योगियाज्ञवल्क्यः– 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । प्राचीनगर्भे

§ अस्य वचनस्य अपव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'श्रुतिस्मृति०' इति वचने ( वका. पृ. १४५ ) द्रष्टव्यम् ।

¶ शूशि. स्मृकोवत् ।

(१) **संग.** २२. (२) **संग.** १३ उत्त., २२.

(३) **वराह.** ६६।११ ; **अप.** १।७ पृ. १३ शास्त्राणां ( मन्त्राणां ) तृतीयचरणे (आचारेण प्रवर्तन्ते ) ; **स्मृको.** ६४ तृतीयचरणे (अचिरेण प्रपद्यन्ते) शेषं अपवत् ; **निप.** ५०७ वेदशास्त्राणां (वैदिकानां च) हि ( ये ) तृतीयचरणे ( आचारेण प्रपद्यन्ते ) मां प्रा ( मामा ) (=) ; **शूशि.** ७२–७३ शास्त्राणां ( मन्त्राणां ) उत्तरार्धे ( अविचारेण प्रपद्यन्ते तेषां प्राप्स्यन्ति मानवाः ? ) ; **वीमि.** १।३ पृ. १० शास्त्राणां ( मन्त्राणां ) तेन हि ( ते नये ) तृतीयचरणं (आचारेण प्रपद्यन्ते) ते मां प्राप्स्य ( मामायास्य ).

(४) **वीमि.** १।३ पृ. १०.

(५) **वराह.** ६६।१२ ; **अप.** १।७ पृ. १३ तु मे क्षेत्र ( न तच्छ्रोत्र) गमनं द्विज ( मुपयास्यति ) ; **स्मृको.** ६४ रात्रं (रात्री) उत्तरार्धे ( शूद्रादीनां च तच्छ्रोत्रपदवीमुपयास्यति ॥ ) ; **शूशि.** ७३ तु मे क्षेत्र ( च तच्छ्रोत्र ) शेषं अपवत् ; **शूक.** ३१ उत्तरार्धे (शूद्रादीनां च तच्छ्रोत्रे पदवीमुपयास्यति ॥ ) ; **संम.** ८१ उत्तरार्धं स्मृकोवत् ; **सस्मृ.** १२६ उत्तरार्धे (शूद्रादीनां च तच्छ्रोत्रपदवीमेव यास्यति ॥ ).

(१) **वराह.** ६६।१३–१७.

(२) **वराह.** ६६।१७–१८ ; **निप.** ५०७.

(३) **वराह.** ६६।१९.

(४) **निप.** ५०६ : ५११ निर्देशमात्रम् ; **निप्र.** १।२१ प्रथमार्धमात्रम् ; **गप.** १५ निप्रवत् .

तमृषिं प्रवदन्ति हि केचन ॥ '। एतेन गृहीतभगवद्दीक्षेण पञ्चरात्रोक्तविधिना अवश्यं पूजा कार्येत्युक्तम् । ' मुक्त्वा तु मम शास्त्राणि वाक्यमन्यत् प्रभाषते । कूर्मो भवति सुश्रोणि स जातीः सप्त सप्त च ॥ ' इत्यस्याप्ययमेवार्थः । अत एव– ' अलाभे वैदिकानां च पञ्चरात्रोदितेन ये । आचारेण प्रपद्यन्ते ते मामाप्स्यन्ति मानवाः ॥ ' इति यत् तत्रैवोक्तम्, तत्र वैदिकविध्यसंभवेऽपि पञ्चरात्रोक्तविधिमात्रेण भगवत्प्राप्तिः, किमुच्यते तत्संभवे ? इति पञ्चरात्रप्रशंसे( ? सै )वार्थः, न तु वैदिकानधिकारिण एव तत्राधिकार इति । अस्माकमिति वैष्णवमात्रं प्रति तदनादरे दोषोक्तेः( ? क्तिः ) । न च वाराहोक्त एव कश्चित् पञ्चरात्रविधिः, तावन्मात्रे शास्त्रशब्दप्रयोगानुपपत्तेः । ' अन्यच्च ते वरं दद्मि शृणु नारद सांप्रतम् । यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् । तद् भवान् वेत्स्यते सर्वं मत्प्रसादान्न संशयः ॥ ' इति तत्रैवोक्तम् । इदमपि प्रसिद्धं( ? द्ध )पञ्चरात्रशास्त्रपरत्व एव घटते । यच्च भट्टपादैर्विरोधाधिकरणे ' यान्येतानि ' ( इति ) उपक्रम्य ' सांख्ययोगपञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्मनिबन्धनानि ' इत्युक्त्वा ' तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षत्वमुच्यते ' इत्युक्तम्, न तत्र सांख्यादिशास्त्राप्रामाण्यं प्रतिज्ञातम्, किंतु ' त्रयीमार्गस्य सिद्धस्य ये द्विषन्ति विरोधिनः । अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न जायते ॥ ' इत्याद्युत्तरग्रन्थपर्यालोचनया वेदविद्वेषिपाषण्डग्रन्थाप्रामाण्यमेवोच्यते । न हि पञ्चरात्रे वेदविद्वेषसंभावनाऽप्यस्ति, सर्वत्र वैदिकमन्त्रादिपरिग्रहात् । अत एव तत्रैवोपरि ' शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् । हेतुकालविनिर्मुक्तां न कदाचन कुर्वते ॥ ' इति शाक्यादिप्रणीतग्रन्था एवाभिप्रेत्य दर्शिताः, न सांख्यादिग्रन्थाः । एवमुत्तरत्राधिकरणेऽपि । यत् वा ' शाक्यादिशास्त्राणां स्मृतिशास्त्रत्ववारणात् ' इत्येवमनूदितम्, न क्वचित् सांख्यादिग्रहणं कृतम्, तेनात्र सांख्यादिपदानि सांख्यं वेत्तीत्यर्थे तद्धितान्तयो( ? न्तार्थो )पचारात् पुरुषपराणि, परिग्रहस्य पुरुषधर्मत्वात्, शास्त्रपरत्वे परिगृहीतधर्मनिबन्धनानीत्यसंगतेः । तेन वैदिकसांख्याद्यवैदिकशाक्यादिसर्वशास्त्रतत्त्वविद्भिः शंकराचार्यप्रभृतिभिः परिगृहीता ये धर्माः श्रौतस्मार्तकर्माणि शिखायज्ञोपवीतत्यागमुण्डत्वैकदण्डकाषायवसनधारणादयः तन्निबन्धनानि शाक्यबौद्धादिशास्त्राणीत्यर्थः । तत्रैकदेशमहाजनपरिग्रहात् प्रामाण्यशङ्कया सर्वैरुपादीयेते( ? येरन्नि )त्यवश्यनिराकर्तव्यत्वप्रदर्शनार्थमेतदुक्तमिति नेष्टमत्यर्थे ' न शास्त्रपरिमाणत्वात् ' ( जैसू. १।३।६) इति नियमितविद्यास्थानबहिर्भूतानामप्रामाण्यमुक्तम् ( इति ) । न तेनापि पञ्चरात्रशास्त्राप्रामाण्यम्, तस्यापि 'तथा स्मृत्यन्तरेषु च' इति, 'विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत । ' इत्यादिवचनात् धर्मशास्त्रत्वेन तदन्तर्भावात् । तत्र हि ' तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् । संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥ ' इत्युक्तम्, न तथा पञ्चरात्रशास्त्रम् । न ह्येतत्कर्ता भगवान् धर्मसंस्थापनावतारस्तथा शङ्कितुमपि शक्यः । यत्तूपसंहृतम्,– ' यानि यान्येव शास्त्राणि वेदमुद्रानतिक्रमात् । अवस्थितानि तान्येव( ? तैरेव ) ज्ञातो धर्मः फलप्रदः ॥ ' इति, तदत्रापि वर्तत एव । तथा योगियाज्ञवल्क्ये– ' सांख्ययोगः पञ्चरात्रं वेदाः पाशुपतं तथा । अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत् ॥ ' इति, आदित्यपुराणे– ' पञ्चरात्रप्रसक्ता ये न ते दुर्गतिमाप्नुयुः ' इति, वराहपुराणे– ' वेदेन पञ्चरात्रेण भिक्षायज्ञेन च द्विजः । प्राप्योऽहं नान्यथा वत्स वर्षकोट्ययुतैरपि ॥ ', अत्रिणा दानपात्रप्रसङ्गे– ' आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत् । ' इति, देवीपुराणे– ' पञ्चरात्रार्थकुशलो मातृतर्कविशारदः । स भवेत् स्नातकश्रेष्ठः ... ॥ ' इत्युक्तम् । सर्वमेतन्न तदप्रामाण्ये युज्यते । एवं शिष्टपरिग्रहादविगीतमेवेदम् । कथंचिद् विगीतत्वेऽपि बलाबलाधिकरणे यदविगीतस्मृत्या विगीतस्मृतिबाधनमुक्तं तेन श्रुत्या स्मृतिबाधनवत् तद्विरुद्धांशस्यैव बाधः स्यात्, न सर्वस्य । तच्चेष्यत एव । यच्च कल्पतरुकारादिभिर्देवताकाण्डादौ तानि न लिखितानि, तत् यथाऽग्निहोत्रादीतिकर्तव्यतार्थानि कल्पवाक्यानि जातकर्मादीतिकर्तव्यतार्थानि गृह्यवाक्यानि च

इतरानपेक्षैस्तैरेव तत्स्वरूपावगमसिद्धेस्तल्लिखने च ग्रन्थगौरवापत्तेर्न लिखितानि, एवं पञ्चरात्रवाक्यान्यपि । न च तथापि पुरुषसूक्तपूजादौ तदितिकर्तव्यतोपसंहारार्थमपि किंचिल्लिखितव्यमिति वाच्यम् , तत्राप्युक्तावाहनादिकर्मभिरेवान्याकाङ्क्षाविरहात् , ' स्मृतिशास्त्रविकल्पस्तु आकाङ्क्षापूरणे सति ' इति न्यायाच्च तत्र पञ्चरात्रविधेरावश्यकत्वाभावात् । अत एवोक्तम्– ' वैदिकस्तान्त्रिको मिश्रो विष्णोर्वै त्रिविधो मखः । त्रयाणामीप्सितेनैकविधिना हरिमर्चयेत् ॥ ' इति । किंच, ' पापक्षयेप्सुर्यः कश्चिद्यदि भक्तो भविष्यति । तस्य वै पञ्चरात्रं तु नित्यं हृदि भविष्यति ॥ ' । ' मम शास्त्रं बहिष्कृत्य अस्माकं यः ' इत्यादिवाक्यैर्गृहीतविष्णुदीक्षस्य वैष्णवस्यैवाऽऽवश्यकः पञ्चरात्रविधिर्नान्येषाम् ।

निप. ५०६–५११

( २ ) मम शास्त्रं मदुक्तं पञ्चरात्रमिति कल्पतरावेव व्याख्यातम् । तेन हयशीर्षमयसंग्रहादिघटनाशास्त्राणि प्रपञ्चसारशारदादिमन्त्रागमाश्च पञ्चरात्रत्वेन महाजनपरिगृहीताः सर्वदेशीयाविगीताचारविषयाः प्रमाणमेव ।

निप्र. १।२१–२२

( ३ ) मम शास्त्रं मदुक्तं पञ्चरात्रं शास्त्रमिति व्याख्यातं स्मृतिप्रामाण्यप्रसङ्गे भट्टाचार्यैः । एतेन सामुद्रिकवास्तुविद्यादि व्याख्यातमिति वास्तुविद्याप्रामाण्यम् । वराहपुराणे वास्तुविद्यारूपघटनागमप्रामाण्यमुक्तम् ।

§ गप. १५

[1]मुक्त्वा तु मम शास्त्राणि शास्त्रमन्यत्प्रभाषते ।
कूर्मो भवति सुश्रोणि स जातीः सप्त सप्त च ॥
[2]यद्वेदबाह्यं कर्म स्याच्छास्त्रमुद्दिश्य सेव्यते ।
तद्रौद्रमिति विख्यातं तन्नेष्टं गदितं नृणाम् ॥
एवं मुक्तिपदे व्याप्ते सर्वलोकैस्तथैव च ।
मुक्तिभाजस्ततो देवास्तं दध्युः प्रयता हरिम् ॥
सोऽपि सर्वगतत्वाच्च प्रादुर्भूतः सनातनः ।
उवाच ब्रूत किं कार्यं सर्वे योगिवराः सुराः ॥
ते तं प्रणम्य देवेशमूचुश्च परमेश्वरम् ।
देवदेव जनः सर्वो मुक्तिमार्गे व्यवस्थितः ॥
कथं सृष्टिश्च भविता नरकेषु च को वसेत् ।
एवमुक्तस्ततो देवैस्तानुवाच जनार्दनः ॥
युगानि त्रीणि बहवो मामुपैष्यन्ति मानवाः ।
अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः ॥
[1]एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अल्पायासं दर्शयित्वा मोहयाऽऽशु महेश्वर ॥
[2]कुहकाश्चेन्द्रजालानि विरुद्धाचरणानि च ।
दर्शयित्वा जनं सर्वं मोहयाऽऽशु महेश्वर ॥
[3]एवमुक्त्वा तदा तेन देवेन परमेष्ठिना ॥
आत्मा तु गोपितः सद्यः प्रकाशोऽहं कृतस्तदा ।
तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तम ॥
शास्त्रेष्वभिरतो लोको बाहुल्येन भवेदतः ।
वेदानुवर्तिनं मार्गं देवं नारायणं तथा ॥
एकीभावं च पश्यन्तो मुक्ताश्चैव भवन्ति ते ।
मां विष्णोर्व्यतिरिक्तं ये ब्रह्मणश्च द्विजोत्तम ॥
भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ॥

मुक्तिविरोधिपाशुपतं शास्त्रं सर्वजनविमोहकम्

[4]ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च ।
नयसिद्धान्तसंज्ञाभिर्मया शास्त्रं तु दर्शितम् ॥
[5]पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् ।
तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम् ॥

---

§ शेषं निप्रवत् ।

(१) निप. ५०७ शास्त्र ( वाक्य ) (=) ; निप्र. १।२१ पू. ; गप. १५ शास्त्राणि ( शास्त्रं वै ) पू.

(२) वराह. ७०।२१, ३१–३५.

(१) वराह. ७०।३६–३७ ; अप. १।७ पृ. १२ मोहयाऽऽशु महेश्वर ( फलं दीर्घं प्रदर्शय ).

(२) अप. १।७ पृ. १२.

(३) वराह. ७०।३७–४१.

(४) वराह. ७०।४१–४२ ; अप. १।७ पृ. १२ तृतीयचरणे ( सिद्धान्तसंज्ञकं पूर्वं ) तु दर्शि ( प्रदर्शि ).

(५) वराह. ७०।४२–४३ ; अप. १।७ पृ. १२ प्रथमचरणे ( पशुर्योऽपशुभावस्थः ) चतुर्थचरणे ( शायते विश्वमोहकम् ).

[1]वेदमूर्तिरहं विप्र नान्यशास्त्रार्थवादिभिः ॥
ज्ञायते मत्स्वरूपं तु मुक्त्वा वेदमनादिवत् ।
वेदवेद्योऽस्मि विप्रर्षे ब्राह्मणैश्च विशेषतः ॥

इत्यादिनाऽगस्त्यं प्रति रुद्रवचनेन वराहपुराणे तस्य विमोहकत्वेन विप्रलम्भकत्वमेव प्रतिपादितम् । सर्वजनविमोहकत्वाद्विप्रलम्भकमेव शैवादीति ।

अप. १।७ पृ. १२

ऋषय ऊचुः–

[2]मोहनार्थं तु लोकानां त्वया शास्त्रं पृथक्कृतम् ।
तत्त्वया हेतुना केन कृतं देव वदस्व नः ॥

रुद्र उवाच–

अस्त्येकं भारते वर्षे वनं दण्डकसंज्ञितम् ।
तत्र तीव्रं तपो घोरं गौतमो नाम वै द्विजः ॥
चकार तस्य ब्रह्मा तु परितोषं गतः प्रभुः ।
उवाच तं मुनिं ब्रह्मा वरं ब्रूहि तपोधन ॥
एवमुक्तस्तदा तेन ब्रह्मणा लोककर्तृणा ।
उवाच सस्यपङ्क्तिं मे धान्यानां देहि संगता ॥
एवमुक्तो ददौ तस्य तमेवार्थं पितामहः ।
लब्ध्वा तु तं वरं विप्रः शतशृङ्गे महाश्रमम् ॥
चकार तस्योषसि च पाकान्ते शालयो द्विजैः ।
लूयन्ते तेन मुनिना मध्याह्ने पच्यते तथा ॥
सर्वातिथ्यमसौ विप्रो ब्राह्मणेभ्यो ददात्यलम् ।
कस्यचित्त्वथ कालस्य महती द्वादशाब्दिका ॥
अनावृष्टिर्द्विजवर ह्यभवल्लोमहर्षिणी ।
तां दृष्ट्वा मुनयः सर्वे अनावृष्टिं वनेचराः ॥
क्षुधया पीड्यमानाश्च प्रययुर्गौतमं तदा ।
अथ तानागतान्दृष्ट्वा गौतमः शिरसा नतः ॥
उवाच स्थीयतां मह्यं गृहे मुनिवरात्मजाः ।
एवमुक्तास्तु ते तेन तस्थुर्विविधभोजनम् ॥
भुञ्जमाना अनावृष्टिर्यावत्सा निवृत्ताऽभवत् ।
निवृत्तायां च ते तस्यामनावृष्ट्यां तु ते द्विजाः ॥

(१) वराह. ७०।४३–४४.
(२) वराह. ७१।९–४५, ४९–५४.

तीर्थयात्रानिमित्तं तु प्रयातुमनसोऽभवन् ।
तत्र शाण्डिल्यनामानं तापसं मुनिसत्तमम् ॥
प्रत्युवाचेति संचिन्त्य मारीचः परमो मुनिः ॥

मारीच उवाच–

शाण्डिल्य शोभनं वक्ष्ये पिता ते गौतमो मुनिः ॥
तमनुक्त्वा न गच्छामस्तपश्चर्तुं तपोवनम् ।
एवमुक्तेऽथ जहसुः सर्वे ते मुनयस्तथा ॥
किमस्माभिः स्वको देहो विक्रीतोऽस्यान्नभक्षणात् ।
एवमुक्त्वा पुनश्चोचुः सोपाधिं गमनं प्रति ॥
कृत्वा मायामयीं गां तु तच्छालायां व्यसर्जयन् ॥
तां चरन्तीं ततो दृष्ट्वा शालायां गौतमो मुनिः ।
गृहीत्वा सलिलं पाणौ प्राणिरुद्रे (?) त्यभाषत ॥
ततो मायामयी सा गौः पपात जलबिन्दुवत् ॥
निहतां तां ततो दृष्ट्वा मुनीन् जिगमिषूंस्तथा ।
उवाच गौतमो धीमांस्तान्मुनीन्प्रणतः स्थितः ॥
किमर्थं गम्यते विप्राः साधु शंसत मा चिरम् ।
मां विहाय सदा भक्तं प्रणतं च विशेषतः ॥

ऋषय ऊचुः–

गोवध्येयमिह ब्रह्मन्यावत्तव शरीरगा ।
तावदन्न न भुञ्जामो भवतोऽन्नं महामुने ॥
एवमुक्तो गौतमस्तु तान्मुनीन्प्राह धर्मवित् ।
प्रायश्चित्तं गोवधस्य दीयतां मे तपोधनाः ॥

ऋषय ऊचुः–

इयं गौरमृता ब्रह्मन्मूर्च्छितेव व्यवस्थिता ।
गङ्गाजलप्लुता चेयमुत्थास्यति न संशयः ॥
प्रायश्चित्तं मृतायाः स्यादमृतायाः कृतं त्विदम् ।
व्रतं वा मा कृथाः कोपमित्युक्त्वा प्रययुस्तु ते ॥
गतैस्तैर्गौतमो धीमान् हिमवन्तं महागिरिम् ।
आरिराधयिषुः प्रायात्तप्तुं चाऽऽशु महातपः ॥
शतमेकं तु वर्षाणामहमाराधितोऽभवम् ।
तुष्टेन च मया प्रोक्तो वरं वरय सुव्रत ॥
सोऽब्रवीन्मां जटासंस्थां देहि गङ्गां तपस्विनीम् ।
मया सार्धं प्रयात्वेषा पुण्या भागीरथी नदी ॥

एवमुक्ते जटाखण्डमेकं स प्रददौ शिवः ।
तां गृह्य गतवान्सोऽपि यत्राऽऽस्ते सा तु गौर्मृता ॥
तज्जलप्लाविता सा गौर्गता चोत्थाय भामिनी ।
नदी च महती जाता पुण्यतोया शुचिह्रदा ॥
तं( ? तद् ) दृष्ट्वा महदाश्चर्यं तत्र सप्तर्षयोऽमलाः ।
आजग्मुश्च विमानस्थाः साधु साध्विति वादिनः ॥
साधु गौतम साधूनां कोऽस्ति वा सदृशं तव- ( ? शस्तव ) ।
यदेवं जाह्नवी देवी दण्डके चावतारिता ॥
एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति ।
गोवध्याकारणं मह्यं तावत्पश्यति गौतमः ॥
ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै ।
शशाप तान् जटाभस्ममिथ्याव्रतधरांस्तथा ॥
भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः ।
तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः ॥
ऊचुः सप्तर्षयो मैवं सर्वकालं द्विजोत्तम ।
एवं तु किंतु ते वाक्यं मोघं नास्त्यत्र संशयः ॥
यदि नाम कलौ सर्वे भविष्यन्ति द्विजोत्तमाः ।
उपकारिणि एते हि अपकर्तार एव तु ॥
इत्थंभूता अपि कलौ भक्तिभाजो भवन्तु ते ।
त्वद्वाक्यवह्निनिर्दग्धाः सदा कलियुगे द्विजाः ॥
भविष्यन्ति क्रियाहीना वेदकर्मबहिष्कृताः ।
एवमुक्त्वाऽथ मुनयो ययुः कैलासपर्वतम् ॥
यत्राहमुमया सार्धं सदा तिष्ठामि सत्तमाः ।
ऊचुर्मां ते च मुनयो भवितारो द्विजोत्तमाः ॥
कलौ त्वद्रूपिणः सर्वे जटामुकुटधारिणः ।
स्वेच्छया प्रेतवेषाश्च मिथ्यालिङ्गधराः प्रभो ॥
तेषामनुग्रहार्थाय किंचिच्छास्त्रं प्रदीयताम् ।
ये चास्मद्वंशजाः सर्वे वर्तेयुः कलिपीडिताः ॥
एवमभ्यर्थितस्तैस्तु पुराऽहं द्विजसत्तम ।
वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् ॥
निःश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः ।
अल्पापराधं श्रुत्वैव गतास्ते दाम्भिका भवम् ॥
[1]मयैव मोहितास्ते तु भविष्यज्ज्ञानता द्विजाः ।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ॥
[2]निःश्वाससंहिता या हि लक्षमात्रं प्रमाणतः ।
सैव पाशुपती दीक्षा योगः पशुपतेस्तथा ॥
[3]एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते ।
तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् ॥
[4]ये रुद्रमुपजीवन्ति कलौ वेदान्तिका नराः ।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ।
उच्छुष्मरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थितः ॥
भैरवेण स्वरूपेण देवकार्ये यदा पुरा ।
नर्तितं तु मया सोऽयं संबन्धः क्रूरकर्मणाम् ।
क्षयं निनीषता दैत्यान्सोऽट्टहासो मया कृतः ॥
यः पुरा तत्र ये मह्यां पतिता अश्रुबिन्दवः ।
असंख्यातास्तु ते रौद्रा भवितारो महीतले ॥
उच्छुष्मनिरता रौद्राः सुरामांसप्रियाः सदा ।
स्त्रीलोलाः पापकर्माणः संभूता भूतलेषु ते ॥
तेषां गौतमशापाद्धि भविष्यन्त्यन्वये द्विजाः ।
तेषां मच्छासनरताः सदाचाराश्च ये द्विजाः ॥
स्वर्गं चैवापवर्गं च इत्युक्त्वा संशयात्पुरा ।
वैदान्तिकाऽधो यास्यन्ति मम संततिदूषकाः ॥
प्राग्गौतमाग्निना दग्धाः पुनर्मद्वचनाद्द्विजाः ।
नरकं तु गमिष्यन्ति नात्र कार्या विचारणा ॥

---

(१) वराह. ७१।५५ ; अप. १।७ पृ. १२ तु (हि) द्वितीयचरणे ( भविष्यन्तो जना द्विज ) नः स्व ( नस्तु ).

(२) वराह. ७१।५६ ; अप. १।७ पृ. १२ ती दीक्षा ( तो योगो ) चतुर्थचरणे ( भेदाः पाशुपतास्ततः ).

(३) वराह. ७१।५७ ; अप. १।७ पृ. १२ प्रथमचरणे ( एतया वेदमार्गादेः ).

(४) वराह. ७१।५८-६५, ६७.

रुद्र उवाच–

एतद्वः कथितं विप्रा मया धर्मस्य लक्षणम् ।
एतस्माद्विपरीतो यः स पाषण्डरतो भवेत् ॥

ब्रह्मोवाच–

[1]भव रुद्र विशालाक्ष लोकमार्गव्यवस्थित ।
कपालं गृह्य यद्भ्रान्तं कपालव्यग्रपाणिना ।
तद्व्रतं नग्नकापालं भविष्यति नृणां भुवि ॥
यत्र ते बभ्रुता जाता हिमवत्यचलोत्तमे ।
भ्रमतस्तद्व्रतं देव बाभ्रव्यं तद्भविष्यति ॥
यच्चेदानीं विशुद्धस्य तीर्थेऽस्मिन्देहशुद्धता ।
तच्छुद्धशैवं भवतु व्रतं ते पापनाशनम् ॥
ये पुरस्कृत्य देवास्त्वां पूज्यं यद्विधिना-
ऽन्विताः ।
शास्त्राणि तानि सर्वेषां कथयिष्यामि नान्यथा ॥
व्रतानि कुरुते देव त्वत्कृतानि हि पुत्रक ।
स त्वत्प्रसादाद्देवेश ब्रह्महाऽपि विशुध्यति ॥
यद्व्रतं नग्नकापालं यद्बाभ्रव्यं त्वया कृतम् ।
यत्कृतं शुद्धशैवं च तत्तन्नाम्ना भविष्यति ॥
मां पुरस्कृत्य देवस्त्वं पूज्यसे यैर्विधानतः ।
तेषां शास्त्राणि सर्वाणि शास्त्रं पाशुपतं तथा ।
कथयस्व महादेव सविधानं समासतः ॥

वराहपुराणपरंपरा अष्टादश पुराणानि च

श्रीवराह उवाच–

[2]इयं ते कथिता देवि संहिता सर्वकामिका ॥
वराहाख्या वरारोहे सर्वपातकनाशिनी ।
सर्वज्ञादुत्थिता चेयं ततो ब्रह्मा बुबोध ह ॥
ब्रह्मा स्वसूनवे प्रादात्पुलस्त्याय महात्मने ।
सोऽपि रामाय च प्रादाद्भार्गवाय महात्मने ॥
असावपि स्वशिष्याय प्रादादुग्राय धारिणि ।
उग्रोऽपि मनवे प्रादादेष वः कीर्तितो मया ॥
संबन्धः पूर्वकल्पीयो द्वितीयं शृणु सांप्रतम् ।
सर्वज्ञाल्लब्धवानसि त्वं च मत्तो धराधरे ॥

(१) वराह. ९७।३७–४५.
(२) वराह. ११२।६७–७७.



त्वत्तश्च तपसा सिद्धा वेत्स्यन्ते कपिलादयः ।
क्रमेण यावद्व्यासेन ज्ञातमेतद्भविष्यति ॥
तस्यापि शिष्यो भविता नाम्ना वै रो( ? रौ )-
महर्षणिः ।
असौ शुनकपुत्राय कथयिष्यति नान्यथा ॥
अष्टादश पुराणानि वेद द्वैपायनो गुरुः ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ॥
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशं प्रोक्तं स्कान्दं चापि त्रयोदशम् ॥
चतुर्दशं वामनकं कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥

धर्मद्रष्टारः

[1]पुरुषाणां प्रसन्नानां यश्च धर्मः सनातनः ।
मनुनाऽप्यन्यथा दृष्टो ह्यन्यथाऽऽङ्गिरसेन च ॥
शुक्रेण चान्यथा दृष्टो गौतमेनापि चान्यथा ।
सोमेन चान्यथा दृष्टो रुद्रेणाप्यन्यथा पुनः ॥
शङ्खेन चान्यथा दृष्टो लिखितेनापि चान्यथा ।
कश्यपेनान्यथा दृष्टो धर्मेणाप्यन्यथा धरे ॥
अग्निना वायुना चैव दृष्टो धर्मोऽन्यथा धरे ।
यमेन चान्यथा दृष्ट इन्द्रेण वरुणेन च ॥
कुबेरेणान्यथा दृष्टः शाण्डिल्येनापि चान्यथा ।
पुलस्त्येनान्यथा दृष्ट आदित्येनापि चान्यथा ॥
पितृभिश्चान्यथा दृष्टो ह्यन्यथाऽपि स्वयंभुवा ॥

वराहपुराणमहिमा

श्रीवराह उवाच–

[2]पुत्रोऽहं वसुदेवस्य देवक्या गर्भसंभवः ।
वासुदेव इति ख्यातः सर्वदानवसूदनः ॥
पञ्च तस्य सुशिष्याश्च भविष्यन्ति विचक्षणाः ।
ऋषयो धर्मसंयुक्ता मत्प्रसादाद्बलाश्रिताः ॥

(१) वराह. १२१।१४–१९.
(२) वराह. १४८।१०–२३.

ते मां संस्थापयिष्यन्ति धर्ममूर्तिं महीं गतम् ।
शाण्डिल्यो जाजलिश्चैव कपिलश्चोपसाधकः ॥
भृगुश्चैव महाभागे मम मार्गानुसारिणः ।
ते च प्रसन्नमनस आत्मदृष्टान्तदर्शिनः ॥
स्वबं ज्ञानप्रभावेण भासयिष्यन्ति मां सदा ।
संकर्षणो वासुदेवः प्रद्युम्नो ह्यनिरुद्धकः ॥
गच्छता बहुकालेन मम कर्मपरायणः ।
ततो दीर्घेण कालेन इज्यापूर्वेस्थितेन च ॥
वरं तेषां प्रदास्यामि यो यस्य हृदि संस्थितः ।
ते प्रवक्ष्यन्ति मां देवि आत्मशास्त्रव्यवस्थिताः ॥
आत्मशास्त्रं प्रतिष्ठेत यत्र धर्मः सुनिश्चितः ।
भवत्वेतन्निश्चयेन न तु मिथ्या कदाचन ॥
तव देव प्रसादेन इह लोकः प्रवर्तताम् ।
तानप्येवं वदिष्यामि शिष्याय भवतां प्रियम् ॥
भविष्यति न संदेहो यतो यूयं मम प्रियाः ।
सुशिष्या बाढमित्येवं भविष्यन्ति न संशयः ॥
तदेते प्रवदिष्यन्ति सर्वभागवतप्रियम् ।
यथा च मथ्यमानाद्धि दध्नश्चोद्ध्रियते घृतम् ॥
एवं सर्वेषु शास्त्रेषु वाराहं घृतसंमितम् ।
वाराहं ज्ञानमुत्सृज्य महाभागं महौजसम् ॥
एवं समं मया चैव ह्यात्मना परिभाषितम् ।
ते प्रमाणं करिष्यन्ति सिद्धिं प्राप्स्यन्ति वै पराम् ॥
महाज्ञानमिदं सूक्ष्मं भूमे भक्तेषु दृश्यते ।
शास्त्राणां परमं शास्त्रं सर्वसंसारमोक्षणम् ॥
[1]एवमेतन्महाशास्त्रं देवि संसारमोक्षणम् ।
मम भक्तव्यवस्थायै प्रयुक्तं परमं प्रियम् ॥
ते तथा च प्रवक्ष्यन्ति यच्च यस्याभिरोचते ।
अन्यथाऽन्यस्य दृष्टानामृषिभिर्यत्प्रयोजितम् ॥
तद्युगस्य प्रभावेण भूमे कुर्वन्ति मानवाः ।
तैः स्वशिष्यैः समं देवि ये शास्त्रविनियोजिताः ।
मत्प्रसादेन ते सर्वे सिद्धिं यास्यन्ति मत्पराम् ॥

(१) वराह. १४८।२८–३१.

[1]त्रयीमार्गस्य सिद्धस्य ये द्विषन्ति विरोधिनः ।
अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न जायते ॥
शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।
हेतुकालविनिर्मुक्तां न कदाचन कुर्वते ॥

## कूर्मपुराणम्

अष्टादश पुराणानि अष्टादश उपपुराणानि च

[2]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च ।
शैवं भागवतं चैव भविष्यं नारदीयकम् ॥
मार्कण्डेयमथाऽऽग्नेयं ब्रह्मवैवर्तमेव च ।
लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च ॥
कौर्मं मात्स्यं गारुडं च ¶ वायवीयमनन्तरम् ।
अष्टादशं समुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ॥
[3]अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः ॥

श्रुत्वा कथितानीत्यन्वयः । पप्र. १३

[4]आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥

¶ वायवीयमिति वायुप्रोक्तत्वाद्ब्रह्माण्डविशेषणम् । तेन नाष्टादशसंख्याहानिः ।

(१) निप. ५०८.

(२) कूर्म. १।१।१२–१५.

(३) कूर्म. १।१।१६ ; चप्र. २१ पू. ; चदा. ५३२ पू. ; निप्र. १।१९ तु (वै) द्विजाः ( द्विज ) ; गप. १६ कथि ( कलि ) शेषं निप्रवत् ; संम. ३ अन्यान्युप (अन्यान्यपि) पू. ; विपा. ४।३०९ अन्या ( अखिला ) द्वितीयचरणे ( यानि प्रोक्तानि सूरिभिः ) पू. वामने ; वीमि. १।३ पृ. ९ सर्वं संमवत् ; पप्र. १३ ; बाल. १।३ पृ. ८ पू.

(४) कूर्म. १।१।१७ नान्द ( स्कान्द ) ; चप्र. २१ ; चदा. ५३२ नान्द ( नारद ) ; संम. ३ नार ( नर ) ; विपा. ४।३०९ नान्दमुद्दिष्टं (नारदं प्रोक्तं) वामने ; वीमि. १।३ पृ. ९ नान्द ( पाद्म ) तु भा ( सुभा ) ; पप्र. १३ हमतः ( हं ततः ) ; बाल. १।३ पृ. ८ पू.

'चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥
'कापिलं वामनं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चैव कालिकाह्वयमेव च ॥
'माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् ।
पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् ॥

(१) 'अन्यान्युपपुराणानि ... संक्षेपतो द्विज ॥' इत्युक्त्वा गणितं सनत्कुमारीयं नारसिंहं नन्दीपुराणं शिवधर्माख्यं दुर्वासःपुराणं नारदीयं कापिलं वामनमौशनसं ब्रह्माण्डं वारुणं कालिका माहेश्वरं साम्बं सौरं पराशरोक्तं मारीचं भार्गवाख्यम् । ब्रह्मपुराणं च कल्पतरौ यद्वाक्यान्यादृतानि तद्व्यतिरिक्तब्रह्मपुराणं पुरुषोत्तममाहात्म्योपबृंहितं हेमाद्र्यादिनिबन्धपरिगृहीतं शिष्टपरिग्रहादेव प्रमाणं तदप्युपपुराणान्तर्गतमेव । ‡निप्र. १।१९

‡ गप. निप्रगतम् ।

(१) कूर्म. १।१।१८ ; चव्र. २१ दीय ( दोक्त ) ; चवा. ५३२–५३३ चव्रवत् ; संम. ३ चव्रवत् , उत्त. ; विपा. ४।३०९ सर्वं संमवत् , वामने ; वीमि. १।३ पृ. ९ न्नन्दीशभाषितम् ( न्नन्दिप्रवर्तितम् ) शेषं चव्रवत् ; पप्र. १४ ; बाल. १।३ पृ. ८ ( नादाख्यं शिवधर्माख्यं दौर्वासं नारदीयकम् । ).

(२) कूर्म. १।१।१९ ; चव्र. २१ वामनं (मानवं) ; चवा. ५३३ नं चैव ( नं चाथ ) शेषं चव्रवत् ; संम. ३ चव्रवत् ; विपा. ४।३०९ चवावत् , वामने ; वीमि. १।३ पृ. ९ सेरितम् ( सोदितम् ) तृतीयचरणे ( ब्रह्माण्डसंज्ञकं चैव) काह्वय (कासंज्ञ) ; पप्र. १४ चव्रवत् ; बाल. १।३ पृ. ८ चवावत् .

(३) कूर्म. १।१।२० ; चव्र. २१ साम्बं ( शाम्बं ) ; मारीचं ( प्रथमं ) चतुर्थचरणे ( तथा भागवतद्वयम् ) ; चवा. ५३३ साम्बं (शाम्बं) मारीचं (प्रवरं) चतुर्थचरणे ( तथा भागवतं द्वयम् ) ; संम. ३ मारीचं ( प्रथमं ) चतुर्थचरणे ( तथा भागवताह्वयम् ) ; विपा. ४।३०९ मारीचं ( प्रवरं ) शेषं चव्रवत् , वामने ; वीमि. १।३ पृ. ९ द्वितीयचरणे ( सौरधर्मानुसंश्रयम् ) रोक्तं मारीचं (रोक्तमपरं) तथैव (मारीचं) ; पप्र. १४ उत्तरार्धे वीमिवत् ; बाल. १।३ पृ. ८ मारीचं ( प्रवरं ) शेषं संमवत् .

( २ ) ¶महापुराणमध्ये गणितानामपि उपपुराणेषु गणनाया न कोऽपि विरोधः । एकस्यैवोभयसंज्ञाकरणे विरोधाभावात् । संम. ३

कूर्मपुराणस्य चतस्रः संहिताः

'इदं तु पञ्चदशकं पुराणं कौर्ममुत्तमम् ।
चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः ॥
'ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्तिताः ।
चतस्रः संहिताः पुण्या धर्मकामार्थमोक्षदाः ॥
इयं तु संहिता ब्राह्मी चतुर्वेदैस्तु संमिता ।
भवन्ति षट्सहस्राणि श्लोकानामत्र संख्यया ॥

वेदचतुष्टयोक्तो धर्मः परमः नान्यः , तामसानि
श्रुतिस्मृतिविरुद्धशास्त्राणि द्विजैर्न श्रद्धेयानि
तानि

'ऋचो यजूंषि सामानि तथैवाऽऽथर्वणानि च ।
ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यया ।
अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा ॥

¶ इदमत्र विचार्यम्- महदुपशब्दयोर्मुख्यामुख्यपरत्वेन विरुद्धार्थत्वात् महापुराणोपपुराणसंज्ञयोरेकस्मिन् संज्ञिनि समावेशस्यासंभवः । किंचोभयपुराणयोरभेदस्य 'अन्यान्युपपुराणानि मुनिभिः कथितानि तु । अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः ॥' इतिपूर्ववचनोक्तेन महापुराणेभ्यः उपपुराणानामन्यत्वेन, क्त्वाप्रत्ययबोधितेन महापुराणश्रवणस्योपपुराणकथनपूर्वकालत्वेन, 'मुनिभिः' इति कर्तृभेदोक्त्या च विरोधः । तस्मात् नारदीयवामनब्रह्माण्डेति विशेषसंज्ञानां साम्येऽपि महापुराणोपपुराणरूपसंज्ञिनोः प्रतिसंज्ञं भेद एवोपगन्तुं युक्त इति भाति ।

(१) कूर्म. १।१।२१ ; चव्र. २१ प्रथमचरणे ( इदमष्टादशं प्रोक्तं ) पू. ; चवा. ५३३ प्रथमचरणः चव्रवत् , मुत्तमम् ( संज्ञितम् ) ; संम. ३ सर्वं चव्रवत् ; विपा. ४।३०९ चवावत् , वामने ; वीमि. १।३ पृ. ९ तु (च) दशकं ( दशमं ) मुत्तमं ( मुच्यते ) पू .

(२) कूर्म. १।१।२२, २३.

(३) कूर्म. १।२।२७–३०.

आदौ वेदमयी भूता यतः सर्वाः प्रवृत्तयः ।
अतोऽन्यानि हि शास्त्राणि पृथिव्यां यानि कानिचित् ।
न तेषु रमते धीरः पाखण्डी रमते बुधः ॥

[1]वेदार्थवित्तमैः कार्यं यत्स्मृतं मुनिभिः पुरा ।
स ज्ञेयः परमो धर्मो नान्यशास्त्रेषु संस्थितः ॥

[2]या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥

[3]स्वायंभुवो मनुः पूर्वं धर्मान्प्रोवाच सर्वदृक् ।
साक्षात्प्रजापतेर्मूर्तिर्निसृष्टा ब्रह्मणो द्विजाः ॥
भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्मानथोचिरे ॥

[4]श्रुतिस्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ॥
नान्यतो जायते धर्मो वेदाद्धर्मो हि निर्बभौ ।
तस्मान्मुमुक्षुर्धर्मार्थी मद्रूपं वेदमाश्रयेत् ॥

ममैवैषा परा शक्तिर्वेदसंज्ञा पुरातनी ।
ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ॥

न च वेदादृते किंचिच्छास्त्रं धर्माभिधायकम् ।
योऽन्यत्र रमते सोऽसौ न संभाष्यो द्विजातिभिः ॥

[5]यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥

[6]कापालं भैरवं चैवं यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥

---

(१) कूर्म. १।२।३०–३१ ; चव. २१ यत् ( यः ).

(२) कूर्म. १।२।३१–३२ ; चव. २१.

(३) कूर्म. १।२।३७–३८.

(४) कूर्म. १।१२।२५५–२५७, २६०.

(५) कूर्म. १।१२।२६१ ; मुक्ता. २९९ स्मृत्यन्तरे ; पप्र. २३.

(६) कूर्म. १।१२।२६२ ; पप्र. २३ भैरवं चैव ( पञ्चरात्रं च ).

इति पञ्चरात्रस्य यन्मोहकत्वाभिधानं तदवैदिकपञ्चरात्रपरम् , 'यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु । श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥' इति तत्रैव वेदविरुद्धानामेवोपक्रमे श्रवणात् । 'विरोधे त्वनपेक्षं स्यात्' इति मीमांसाधिकरणं च 'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि' इत्यादिग्रन्थदर्शनादवैदिकागमविषयत्वेनाप्युपपत्तेर्नावश्यमागममात्रस्याप्रामाण्यमापादयति । पप्र. २३

[1]ये कुशास्त्राभियोगेन मोहयन्तीह मानवान् ।
मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ॥

वेदार्थवित्तमैः कार्यं यत्स्मृतं कर्म वैदिकम् ।
तत्प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः ॥

वर्णानामनुकम्पार्थं मन्नियोगाद्विराट् स्वयम् ।
स्वायंभुवो मनुर्धर्मान्मुनीनां पूर्वमुक्तवान् ॥

§श्रुत्वा चान्येऽपि मुनयस्तन्मुखाद्धर्ममुत्तमम् ।
चक्रुर्धर्मप्रतिष्ठार्थं धर्मशास्त्राणि चैव हि ॥

तेषु चान्तर्हितेष्वेवं युगान्तेषु महर्षयः ।
ब्रह्मणो वचनात्तानि करिष्यन्ति युगे युगे ॥

---

§ अनेन मानवीतरस्मृतीनां मानवस्मृतिमूलकत्वमुक्तं भवति । तेन च तासां विलम्बेन श्रुत्यनुमापकत्वात् मानवस्मृत्यपेक्षया दौर्बल्यमर्थसिद्धम् । अतोऽनेन 'यद्वै किंच मनुरवदत् तद्भेषजम्' इति श्रुतिः , 'वेदार्थोपनिबन्धत्वात् प्रामाण्यं तु मनोः स्मृतम् । मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥' इति बृहस्पतिस्मृतिश्चानुगृहीता भवति । सर्वासां स्मृतीनां साक्षाच्छ्रुत्यनुमापकत्वे तु मानवीतरस्मृतीनामशस्तत्वं नोपपद्येत । एवं च मीमांसाशास्त्रे निबन्धेषु च कुत्रापि स्मृतीनां स्मृतिमूलकत्वस्यानुक्तेस्तत्र प्रतीयमानात् 'सर्वासां स्मृतीनां साक्षाच्छ्रुत्यनुमापकत्वम्' इति पक्षात् 'स्मृतीनां मानवस्मृतिव्यवधानेन श्रुत्यनुमापकत्वम्' इति पक्षान्तरमत्र प्रतिपादितमिति भाति । तत्तु मानवीतरसर्वस्मृतिविषयम् , अथवा यथाकथंचित् कतिपयस्मृतिविषयमस्तु ।

(१) कूर्म. १।१२।२६३–२७४.

अष्टादश पुराणानि उपपुराणानि च धर्मे प्रमाणम्

**अष्टादश पुराणानि व्यासेन कथितानि तु ।**
**नियोगाद्ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ॥**

**अन्यान्युपपुराणानि तच्छिष्यैः कथितानि तु ।**
**युगे युगेऽत्र सर्वेषां कर्ता वै धर्मशास्त्रवित् ॥**

**शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।**
**ज्योतिःशास्त्रं न्यायविद्या मीमांसा चोपबृंहणम् ॥**

**‡एवं चतुर्दशैतानि विद्यास्थानानि सत्तम ।**
**चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥**

**एवं पैतामहं धर्मं मनुव्यासादयः परम् ।**
**स्थापयन्ति ममाऽऽदेशाद्यावदाभूतसंप्लवम्† ॥**

‡ पूर्वोक्तानि धर्मशास्त्राणि पुराणानि चेति द्वे, शिक्षादिवेदपर्यन्ताश्च द्वादशेति मिलित्वा चतुर्दशेत्यर्थः ।

† अत्राऽऽदर्शपुस्तके 'अत्र यावत्पदं व्यर्थम्, आ इति उपसर्गेण गतार्थत्वात्' इति संपादकीया टिप्पणी वर्तते । सा तु अविचारितरमणीया । 'आभूतसंप्लवम्' इत्यत्र 'भूतेभ्य आ इति आभूतम्, आभूतं संप्लवः आभूतसंप्लवः, तम्' इति 'भूतानां संप्लवः भूतसंप्लवः, भूतसंप्लवात् आ इति आभूतसंप्लवम्' इति चेति द्वे व्युत्पत्ती संभवतः । संप्लवः प्रलयः । अत्र 'ब्रह्मणा सह' इत्यग्रिमश्लोकानुरोधेन महाप्रलयो विवक्षितः । अत एवोभयत्र भूतशब्देन भूतत्वावच्छेदेन सर्वाणि भूतानि ग्राह्याणि, अवान्तरप्रलये ब्रह्मादिस्तम्बपर्यन्तानां सर्वेषां भूतानां प्रलयस्याभावात् । तत्र द्वितीयायां व्युत्पत्तौ आङैव धर्मस्थापनमर्यादाया उक्तत्वेन यावदिति पदं व्यर्थम् । आद्यायां व्युत्पत्तौ आङा संप्लवाभिव्याप्तेरुक्तत्वेन धर्मस्थापनमर्यादां वक्तुं यावदिति पदमावश्यकम् । एवं स्थिते अन्यतरव्युत्पत्तिस्वीकारस्य स्वतन्त्रेच्छस्य मुनेरिच्छाया अधीनत्वेन बोद्ध्रा यावत्पदवैयर्थ्यफलाया द्वितीयव्युत्पत्त्या आश्रयणमविचारः । किंचोक्तटिप्पण्यामाङ उपसर्गत्वोक्तिरप्यविचार एव, आद्यायां व्युत्पत्तौ भूतपदार्थद्रव्येण योगात् क्रियायोगाभावात्, द्वितीयव्युत्पत्तावपि भूतशब्देन व्यवधानात् संप्लवेतिनामनिष्पत्त्यनन्तरं प्रत्ययार्थत्वावच्छेदेन क्रियायोगेऽपि धात्वर्थत्वावच्छेदेन तदभावाच्च ।

**ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।**
**परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥**
**तस्मात्सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ।**
**धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत् ॥**
**[1]वेनपुत्रस्य वितते पुरा पैतामहे मखे ।**
**सूतः पौराणिको जज्ञे मायारूपः स्वयं हरिः ॥**
**प्रवक्ता सर्वशास्त्राणां धर्मज्ञो गुरुवत्सलः ।**
**तं मां वित्त मुनिश्रेष्ठाः पूर्वोद्भूतं सनातनम् ॥**
**अस्मिन्मन्वन्तरे व्यासः कृष्णद्वैपायनः स्वयम् ।**
**श्रावयामास मां प्रीत्या पुराणं पुरुषो हरिः ॥**
**मदन्वये तु ये सूताः संभूता वेदवर्जिताः ।**
**तेषां पुराणवक्तृत्वं वृत्तिरासीदजाज्ञया ॥**

अवैदिकजनार्थं शैववैष्णवागमाः पञ्चरात्रपाशुपतादयः शिवविष्णुप्रणीताः

**[2]पुरा दारुवने पुण्ये मुनयो गृहमेधिनः ।**
**ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ॥**
**ततः कदाचिन्महती कालयोगेन दुस्तरा ।**
**अनावृष्टिरतीवोग्रा ह्यासीद्भूतविनाशिनी ॥**
**समेत्य सर्वे मुनयो गौतमं तपसां निधिम् ।**
**अयाचन्त क्षुधाविष्टा आहारं प्राणधारणम् ॥**
**स तेभ्यः प्रददावन्नं मृष्टं बहुतरं बुधः ।**
**सर्वे बुभुजिरे विप्रा निर्विशङ्केन चेतसा ॥**
**गते च द्वादशे वर्षे कल्पान्त इव शंकरी ।**
**बभूव वृष्टिर्महती यथापूर्वमभूज्जगत् ॥**
**ततः सर्वे मुनिवराः समामन्त्र्य परस्परम् ।**
**महर्षिं गौतमं प्रोचुर्गच्छाम इति वेगतः ॥**
**निवारयामास च तान् कंचित्कालं यथासुखम् ।**
**उषित्वा मद्गृहेऽवश्यं गच्छध्वमिति पण्डिताः ॥**
**ततो मायामयीं सृष्ट्वा कृष्णां गां सर्व एव ते ।**
**समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥**
**सोऽनुवीक्ष्य कृपाविष्टस्तस्याः संरक्षणोत्सुकः ।**
**गोष्ठे तां बन्धयामास स्पृष्टमात्रा ममार सा ॥**

(१) कूर्म. १।१४।१२–१६.
(२) कूर्म. १।१६।९७–१०८.

स शोकेनाभिसंतप्तः कार्याकार्यं महामुनिः ।
न पश्यति स सहसा तमृषिं मुनयोऽब्रुवन् ॥
गोवध्येयं द्विजश्रेष्ठ यावत्तव शरीरगा ।
तावत्तेऽन्नं न भोक्तव्यं गच्छामो वयमेव हि ॥
तेनातोऽनुमताः सन्तो देवदारुवनं शुभम् ।
जग्मुः पापवशं नीत्वा तपश्चर्तुं यथा पुरा ॥
[1]स तेषां मायया जातां गोवध्यां गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीव कोपतः ॥
[2]भविष्यन्ति त्रयीबाह्या महापातकिभिः समाः ।
बहुशस्ते तथा शापाज्जायमानाः पुनः पुनः ॥
[3]सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् ।
अस्तुवन् लौकिकैः स्तोत्रैरुच्छिष्टा इव सर्वगौ ॥
[4]देवदेवौ महादेवौ भक्तानामार्तिनाशनौ ।
कामवृत्त्या महायोगी पापान्नस्त्रातुमर्हतः ॥
तदा पार्श्वस्थितं विष्णुं संप्रेक्ष्य वृषभध्वजः ।
किमेतेषां भवेत्कार्यं प्राह पुण्यैषिणामिति ॥
ततः स भगवान्विष्णुः शरण्यो भक्तवत्सलः ।
गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान् हरिः ॥
न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर ।
संगच्छते महादेव धर्मो वेदाद्विनिर्बभौ ॥
तथापि भक्तवात्सल्याद्रक्षितव्या महेश्वर ।
अस्माभिः सर्व एवैते गन्तारो नरकानपि ॥
[5]तस्माद्धि वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ॥

पापा( ? पि)नां विमोहनायेति मोहशास्त्रोत्पत्तिर्दृष्टा ।
सस्मृ. २७

[1]एवं संबोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
[2]कापालं नाकुलं वामं भैरवं पूर्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ॥
[3]सृष्ट्वा तानाह निर्वेदाः कुर्वाणाः शास्त्रचोदितम् ।
पतन्तो नरके घोरे बहून् कल्पान् पुनः पुनः ॥
[4]जायन्तो मानुषे लोके क्षीणपापचयास्ततः ।
ईश्वराराधनबलाद्गच्छध्वं सुकृतां गतिम् ॥
[5]वर्तध्वं मत्प्रसादेन नान्यथा निष्कृतिर्हि वः ।
एवमीश्वरविष्णुभ्यां चोदितास्ते महर्षयः ॥
आदेशं प्रत्यपद्यन्त शिवस्यासुरविद्विषः ।
चक्रुस्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः ॥
शिष्यानध्यापयामासुर्दर्शयित्वा फलानि च ।
मोहयन्त इमं लोकमवतीर्य महीतले ॥

श्रौतस्मार्ता धर्माः शिष्टाचाराश्च प्रमाणम्

[6]भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः ।
सोऽयमेकश्चतुष्पादो वेदः पूर्वं पुरातनः ॥

(१) कूर्म. १।१६।१०९ ; सस्मृ २६. जातां (जातं) वध्यां ( वधं ) कोपतः ( कोपनः ).

(२) कूर्म. १।१६।११० ; सस्मृ. २६ भविष्यन्ति ( भविष्यथ ) पू.

(३) कूर्म. १।१६।१११ ; सस्मृ. २६–२७ सर्वगौ ( सेवकाः ).

(४) कूर्म. १।१६।११२–११६.

(५) कूर्म. १।१६।११७ ; मुक्ता. २९७ तस्माद्धि (तस्मात्तु) हनाय (हनानि) ष्यामो ( ष्यावो ) ; सस्मृ. २७ तस्माद्धि वे ( तस्माद्वे ) णार्थाय ( णार्थं च ).

(१) कूर्म. १।१६।११८ ; मुक्ता. २९७ बोधितो ( चोदितो ) ; सस्मृ. २१ मोहशा ( मोहाच्छा ) शेषं मुक्तावत् : २७ मुक्तावत्.

(२) कूर्म. १।१६।११९ ; मुक्ता. २९७ नाकुलं ( काकुलं ) पञ्च ( पाञ्च ) पाशुपतं ( च कौलं च ) तथा ( अथा ) ; सस्मृ. २१ नाकुलं वामं ( लाङ्गुलं शाक्तं ) पञ्च ( पाञ्च ).

(३) कूर्म. १।१६।१२० ; मुक्ता. २९८ पूर्वार्धे ( सृष्ट्वा तानूचतुर्देवौ कुर्वाणांस्तन्त्रचोदितम् । ) नरके ( निरये ) कल्पान् ( कालान् ).

(४) कूर्म. १।१६।१२१ ; मुक्ता. २९८ जायन्तो ( जायन्ते ) गच्छध्वं ( गमिष्यथ ) सुकृतां ( सतां ).

(५) कूर्म. १।१६।१२२–१२४.

(६) कूर्म. १।५२।२१.

[1]सर्वेषामेव भूतानां वेदश्चक्षुः सनातनम् ॥
[2]श्रुतिस्मृत्युदितः सम्यक्साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥
येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छंस्तरिष्यति ॥
[3]धर्मो विमुक्तये साक्षाच्छ्रौतः स्मार्तो भवेत्पुनः ॥
श्रौतस्त्रेताग्निसंबन्धात्स्मार्तः पूर्वं मयोदितः ।
श्रेयस्करतमः श्रौतस्तस्माच्छ्रौतं समाचरेत् ॥
उभावपि हि तौ धर्मौ †वेदवेदविनिःसृतौ ।
शिष्टाचारस्तृतीयः स्याच्छ्रुतिस्मृत्योरलाभतः ॥
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणान्विताः ॥
तेषामभिमतो यः स्याच्चेतसा नित्यमेव हि ।
स धर्मः कथितः सद्भिर्नान्येषामिति धारणा ॥

पुराणधर्मशास्त्राणि वेदोपबृंहणकराणि प्रमाणम्

पुराणं धर्मशास्त्राणि वेदानामुपबृंहणम् ।
एकस्माद्ब्रह्मविज्ञानं धर्मज्ञानं तथैकतः ॥
धर्मं जिज्ञासमानानां तत्प्रमाणतरं स्मृतम् ।
धर्मशास्त्रं पुराणानि ब्रह्मज्ञानेत( ? ने त )राश्रमम् ( ? )।
नान्यतो जायते धर्मो ब्राह्मी विद्या च वैदिकी ।
तस्माद्धर्मं पुराणं च श्रद्धातव्यं मनीषिभिः ॥

धर्मनिर्णेतारः

[4]वेदार्थवित्तमः शान्तो धर्मकामोऽग्निमान्द्विजः ।
स एव स्यात्परो धर्मो यमेकोऽपि व्यवस्यति ॥

† वेदात् वेदात् इति वीप्सार्थे द्विरुक्तिरिति भाति ।

(१) कूर्म. २।१४।४६.

(२) कूर्म. २।१५।१९-२०.

(३) कूर्म. २।२४।१३-२०.

(४) कूर्म. २।३०।४-६ ; बाल. १।९ पृ. १२.

अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः ।
यद्ब्रूयुर्धर्मकामास्ते तज्ज्ञेयं धर्मसाधनम् ॥
अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः ।
वेदाध्ययनसंपन्नाः सप्तैते परिकीर्तिताः ॥
[1]मीमांसाज्ञानतत्त्वज्ञा वेदान्तकुशला द्विजाः ।
एकविंशति‡ विख्याताः प्रायश्चित्तं वदन्ति वै ॥

वेदसारं पाशुपतव्रतं सेव्यम्

श्रीशिव उवाच–

[2]निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् ।
गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥
[3]प्रशान्तः संयतमना भस्मोद्धूलितविग्रहः ।
ब्रह्मचर्यरतो नग्नो व्रतं पाशुपतं चरेत् ॥
यद्वा कौपीनवसनः स्याद्वा दिग्वसनो मुनिः ।
वेदाभ्यासरतो विद्वान् ध्यायेत्पशुपतिं शिवम् ॥
[4]एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः ।
भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतिः ॥

शिवोक्तान्यपि त्याज्यानि वेदविरुद्धानि शास्त्राणि

[5]अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि तु ।
वेदवादविरुद्धानि मयैव कथितानि तु ॥

‡ अत्र छान्दसः सुपो लुक् ।

(१) कूर्म. २।३०।७ ; बाल. १।९ पृ. १२ ज्ञान ( न्याय ) विख्याताः ( संख्याताः ).

(२) कूर्म. २।३९।५६ ; पप्र. २२ ; सस्मृ. २२.

(३) कूर्म. २।३९।५७-५८.

(४) कूर्म. २।३९।५९ उत्तरार्धे ( तस्मिन्स्थितैस्तु पठितं निष्कामैरिति हि श्रुतम् ॥ ) ; पप्र. २२ ; सस्मृ. २२ उत्तरार्धे ( भस्मच्छन्नैः सततं निष्कामति श्रुतिः ).

(५) कूर्म. २।३९।६१ ; निप. १२७ केऽस्मिन्मो ( कसंमो ) तानि तु (तानि वै) ; निप्र. १।३३२ केऽस्मिन्मो (के संमो) तु (च); गप. २४० निप्रवत् ; मुक्ता. २९७ नानि तु ( नाय वै ) ; वीमि. १।३ पृ. ११ पू. ; पप्र. २२ नानि तु (नानि वै) ; सस्मृ. २२ चैव (शैव) तानि तु (तानि) शेषं मुक्तावत् .

[1]वामं पाशुपतं सोमं लाकुरं चैव भैरवम् ।
असेव्यमेतत्कथितं वेदबाह्यं तथेतरत् ॥

पाशुपतागमानां तावद्वैदिकावैदिकभेदेन द्वैविध्यमवश्यं वाच्यम्, 'निर्मितं हि मया पूर्वे ...' इत्यारम्भे 'एष पाशुपतो योगः... ॥' इति वेदसारमयत्वमेकस्याभिधाय 'अन्यानि चैव शास्त्राणि... वेदबाह्यं तथेतरत् ॥' इति वेदविरुद्धस्यान्यस्य कौर्मेऽभिधानात् । पप्र. २२

कुण्डगोल्कादीनां हितं सात्वततन्त्रं प्रमाणम्

[2]अथांशुः सात्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
[3]स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥
[4]तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥

## भविष्यपुराणम्

भारतं रामायणं अष्टादशपुराणानि उपपुराणानि च धर्मे प्रमाणं शूद्रसहितानां चतुर्णां वर्णानाम्, विशेषतः शूद्रानुग्रहार्थं प्रणीतानि, धर्मचोषानुग्रहार्थमष्टादश विद्याः

[5]चतुर्णामपि वर्णानां पावनाय महात्मनाम् ।
धर्मशास्त्रमनेनोक्तं § धर्माद्यैः सुसमन्वितम् ॥

§ अनेन व्यासेनेत्यर्थः ।

(१) **कूर्म**. २।३९।६२ ; **निप**. १२८ सोमं (सौरं) (लाकुरं०) ; **निप्र**. १।३३२ सोमं लाकुरं (शैवं दक्षिणं) पू. ; **गप**. २४१ सोमं लाकुरं (शैवं दक्षिणे) पू. ; **मुक्ता**. २९७ सोमं (घोरं) लाकुरं (लाङ्गुलं) असे (न से) ; **वीमि**. १।३ पृ. ११ लाकुरं (लक्ष्णं) भैर (रौर) सेव्य (सत्य) तथेतरत् (तथैव तत्) ; **पप्र**. २२ लाकुरं (लाङ्गलं) असे (न से) ; **सस्मृ**. २२ लाकुरं (लाकुलं) तृतीयचरणे अशुद्धः पाठः.

(२) **मुक्ता**. २९७ अथांशुः (अथैव) ; **पप्र**. २४ ; **सस्मृ**. २८ अशुद्धिबहुलः पाठः.

(३) **मुक्ता**. २९७ श्रितम् (श्रुतम्) ; **पप्र**. २४ ; **सस्मृ**. २८ कुण्डगोलादि (गण्डगोभारि).

(४) **मुक्ता**. २९७ ; **पप्र**. २४ ; **सस्मृ**. २८ सात्वतं (सत्त्वं). (५) **भविष्य**. १।१।१७, २३.

धर्मार्थकाममोक्षाणां भारतास्सिद्धिरेव हि ।
अजिह्मो भारतः पन्था निर्वाणपदगामिनाम् ॥

शतानीक उवाच—

[1]मतानि कानि विप्रेन्द्र धर्मशास्त्राणि सुव्रत ॥

सुमन्तुरुवाच—

[2]श्रूयतां धर्मशास्त्राणि मनुर्विष्णुर्यमोऽङ्गिराः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
[3]आपस्तम्बोऽथ उशना कात्यायनबृहस्पती ।
गौतमः शङ्खलिखितौ हारीतोऽत्रिरथापि वा ॥
[4]एतानि धर्मशास्त्राणि ... ... ... ॥

शतानीक उवाच—

[5]यान्येतानि त्वयोक्तानि धर्मशास्त्राणि सुव्रत ।
नेच्छामि श्रोतुं विप्रेन्द्र श्रुतान्येतानि हि द्विज( ‡ ? जैः ) ॥
[6]त्रयाणामेव वर्णानां प्रोक्तान्येतानि पण्डितैः ।
श्रेयसे न तु शूद्राणामत्र मे वचनं शृणु ॥

‡ अत्र जिज्ञासायाः शूद्रोपकारिधर्मशास्त्रविषयकत्वस्य वक्ष्यमाणत्वात् स्वेन श्रुतत्वं न शुश्रूषाभावे हेतुः, अपि तु द्विजैः श्रुतत्वमेवेति तृतीयान्तः पाठ एव वक्तृसंमतः स्यादिति संभाव्यते ।

(१) **भविष्य**. १।१।४२.

(२) **भविष्य**. १।१।४३ ; **शूशि**. ४४ पू ; **बाल**. १।१२१ पृ. ३८० पू.

(३) **भविष्य**. १।१।४४.

(४) **भविष्य**. १।१।४५ ; **शूशि**. ४४ ; **बाल**. १।१२१ पृ. ३८०.

(५) **भविष्य**. १।१।४६ द्विज (द्विजाः) ; **शूशि**. ४५ श्रुता (गुह्या) ; **शूक**. १५ शूशिवत् ; **बाल**. १।१२१ पृ. ३८० शूशिवत्.

(६) **भविष्य**. १।१।४७ ; मेव (मपि) न्येतानि (नामपि) णामत्र (णां तत्र) ; **शूशि**. ४५ ; **शूक**. १५ ; **बाल**. १।१२१ पृ. ३८०.

[1]चतुर्णामिह वर्णानां श्रेयसे यानि सुव्रत ।
भवन्ति द्विजशार्दूल श्रुतानि भुवनत्रये ॥
विशेषतश्चतुर्थस्य वर्णस्य द्विजसत्तम ॥
[2]ब्राह्मणादिषु वर्णेषु त्रिषु वेदाः प्रकल्पिताः ।
मन्वादीनि च शास्त्राणि तथाऽङ्गानि समन्ततः ॥
[3]शूद्राश्चैव भृशं दीनाः प्रतिभान्ति मम द्विज ॥
धर्मार्थकाममोक्षस्य शक्ताः स्युरवने कथम् ।
आगमेन विहीना हि अहो कष्टं मतं मम ॥
कश्चैषामागमः प्रोक्तः पुरा द्विज मनीषिभिः ।
त्रिवर्गप्राप्तये ब्रह्मञ्छ्रेयसे च तथोभयोः ॥
सुमन्तुरुवाच–
[4]साधु साधु महाबाहो शृणु मे परमं वचः ।
चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ॥
[5]धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ।
विशेषतश्च शूद्राणां पावनानि मनीषिभिः ॥
[6]अष्टादश पुराणानि चरितं राघवस्य च ।
रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥
[7]तथोक्तं भारतं वीर पाराशर्येण धीमता ।
वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो ॥

(१) भविष्य. १।१।४८–४९.

(२) भविष्य. १।१।४९–५० ; शूशि. ४५ त्रिषु ( सर्वे ) कल्पिताः ( तिष्ठिताः ) ; शूक. १५ कल्पिताः ( तिष्ठिताः ) समन्ततः ( च सर्वशः ) ; बाल. १।१२१ पृ. ३८० वेदाः ( चेन्द्राः ) कल्पिताः ( तिष्ठिताः ) तथाऽङ्गानि ( न योग्यानि ).

(३) भविष्य. १।१।५०–५२.

(४) भविष्य. १।१।५३ ; शूक. १६ उत्त. ; पप्र. १७ उत्त. ; बाल. १।७७ पृ. २०९ उत्त., नृसिंहपुराणम्.

(५) भविष्य. १।१।५४ ; शूक. १६ ; पप्र. १७ पू. ; बाल. १।७७ पृ. २०९–२१० नृसिंहपुराणम्.

(६) भविष्य. १।१।५५ ; शूक. १६ पू. ; पप्र. १७ ; बाल. १।७७ पृ. २१० पू. नृसिंहपुराणम्.

(७) भविष्य. १।१।५६ योज्य ( योज्यं ) ; पप्र. १७ ; बाल. १।७७ पृ. २१० वीर ( चैव ) प्रथमचरणमात्रम्, नृसिंहपुराणम्.

[1]कृपालुना कृतं शास्त्रं चतुर्णामिह श्रेयसे ।
वर्णानां भवमग्नानां कृतं पोतमनुत्तमम् ॥
अष्टादश पुराणानि अष्टौ व्याकरणानि च ।
ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम् ॥
यां श्रुत्वा पुरुषो राजन्मुच्यते ब्रह्महत्यया ।
प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते ॥
याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा ।
सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा ॥
एतानि व्याकरणानीह पुराणानि निबोध मे ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।
आग्नेयमष्टमं वीर भविष्यं नवमं स्मृतम् ॥
दशमं ब्रह्मवैवर्तं लैङ्ग्यमेकादशं स्मृतम् ।
वाराहं द्वादशं प्रोक्तं स्कान्दं चैव त्रयोदशम् ॥
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥
एतानि कुरुशार्दूल धर्मशास्त्राणि पण्डितैः ।
साधारणानि प्रोक्तानि वर्णानां श्रेयसे सदा ।
चतुर्णामिह राजेन्द्र श्रोतुमर्हाणि सुव्रत ॥
ब्रह्मा कुरुकुलश्रेष्ठ शंकराय महात्मने ।
शंकरेण तथा विष्णोः कथितं कुरुनन्दन ॥
विष्णुनाऽपि पुनः प्रोक्तं नारदाय महीपते ।
नारदात्प्राप्तवाञ्शक्रः शक्रादपि पराशरः ॥
पराशरात्ततो व्यासो व्यासादपि मया विभो ।
एवं परंपराप्राप्तं पुराणमिदमुत्तमम् ॥
शृणु त्वमपि राजेन्द्र मत्सकाशात्परं हितम् ।
सर्वाण्येव पुराणानि संज्ञेयानि नरर्षभ ॥
द्वादशैव सहस्राणि प्रोक्तानीह मनीषिभिः ।
पुनर्वृद्धिं गतानीह आख्यानैर्विविधैर्नृप ॥
यथा स्कान्दं तथा चेदं भविष्यं कुरुनन्दन ।
स्कान्दं शतसहस्रं तु लोकानां ज्ञातमेव हि ।
भविष्यमेतदृषिणा लक्षार्धं संख्यया कृतम् ॥

(१) भविष्य. १।१।५७–६६, १००–१०६.

[1]शृणुष्वेदं महाबाहो पुराणं पञ्चलक्षणम् ।
यच्छ्रुत्वा मुच्यते राजन्पुरुषो ब्रह्महत्यया ॥
‡[2]पर्वाणि चात्र वै पञ्च कीर्तितानि स्वयंभुवा ।
प्रथमं कथ्यते ब्राह्मं द्वितीयं वैष्णवं स्मृतम् ॥
[3]तृतीयं शैवमाख्यातं चतुर्थं त्वाष्ट्रमुच्यते ।
पञ्चमं प्रतिसर्गाख्यं सर्वलोकैः सुपूजितम् ॥
[4]एतानि तात पर्वाणि लक्षणानि निबोध मे ।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥
[5]वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ।
चतुर्दशभिर्विद्याभिर्भूषितं कुरुनन्दन ॥
[6]अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥
§मुखानि यानि चत्वारि तेभ्यो वेदा विनिःसृताः ॥
ऋग्वेदसंहिता तात वसिष्ठेन महात्मना ।
पूर्वान्मुखान्महाबाहो दक्षिणाच्चापि वै शृणु ॥
यजुर्वेदो महाराज याज्ञवल्क्येन वै सह ।
सामानि पश्चिमात्तात गौतमश्च महानृषिः ॥
अथर्ववेदो राजेन्द्र मुखाच्चाप्युत्तरान्नृप ।
ऋषिश्चापि तथा राजञ्छौनको लोकपूजितः ॥
ब्रह्ममुखं महाबाहो पञ्चमं लोकविश्रुतम् ।
अष्टादशपुराणानि सेतिहासानि भारत ॥
निर्गतानि ततस्तस्मान्मुखात्कुरुकुलोद्वह ।
तथाऽन्याः स्मृतयश्चापि यमाद्या लोकपूजिताः ॥
[1]भार्गवा( ? वी ) नारदीया च बार्हस्पत्याऽऽङ्गिरस्यपि ।
स्वायंभुवस्य शास्त्रस्य चतस्रः संहिता मताः ॥
[2]मैत्रायणेयच्छन्दोगकठापस्तम्बबह्वृचाम् ।
परिशिष्टानि यान्यत्र ये चान्ये खिलसंज्ञकाः ॥
[3]अष्टादशपुराणेषु यानि वाक्यानि पुत्रक ।
तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ॥
[4]मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः ।
तासां वाक्यानि क्रमशः समालोच्य ब्रवीमि ते ॥

(१) मन्वादिस्मृतयः, ‡ ताश्चानन्तरोक्ताभिरेव सर्वपरिगृहीताभिः पूर्यन्ते । वृद्धशातातपयोगियाज्ञवल्क्यवृद्ध-

‡ अस्मदुपलब्धभविष्यत्पुराणादर्शपुस्तकयोश्चत्वार्येव पर्वाणि सन्ति । चतुर्थपर्वान्ते पुराणसमाप्तिरप्युक्ता । द्वितीयं 'मध्यमपर्व' चतुर्थम् 'उत्तरपर्व' इति पर्वसंज्ञाभेदोऽप्यस्ति । एवं वैलक्षण्यं पश्यद्भिरपि भाषान्तरकर्तृभिरेतेषां श्लोकानां भाषान्तरस्य प्रसङ्गेन वैलक्षण्यविषये न किंचित् टिप्पणं दत्तमित्याश्चर्यम् ।

§ ब्रह्मण इति संबन्धः ।

(१) भविष्य. १।२।१ ; चव. २३ पुराणं ( भविष्यत् ).

(२) भविष्य. १।२।२ ; चव. २३ पर्वाणि चात्र ( यान्यनेकत्र ).

(३) भविष्य. १।२।३ ; चव. २३ शैवमा ( त्वाष्ट्रं व्या ) त्वाष्ट्र ( भाष्य ) सर्गाख्यं ( भाष्यं च ) कैः सुपू ( केषु पू ).

(४) भविष्य. १।२।४–५ : ४।२।११ उत्त.

(५) भविष्य. १।२।५ : ४।२।१२ पू.

(६) भविष्य. १।२।६–७, ५२–५७.

‡ अनन्तरोक्ताः 'स्मृतिर्धर्मशास्त्राणि' इतिशङ्खलिखितवचनव्याख्याने ( व. का. पृ. ७० ) द्रष्टव्याः ।

(१) संस. २.

(२) बाल. १।४–५ पृ. १०.

(३) ब्रक. २४ ; चव. १९ ; चदा. ५२८ ; कृर. २९ चतुर्थचरणमात्रम् (=) ; निप. ५०९; निप्र. १।२०, २२ चतुर्थचरणमात्रम् ; गप. १२, १४ निप्रवत् ; वीमि. १।४–५ निप्रवत् ; पप्र. १६–१७ पुत्रक ( भारत ) ; बाल. १।४–५ पृ. १०.

(४) अप. १।४–५ समालोच्य ( समासेन ) ; ब्रक. २४ ; चव. १९ यास्तु ( याश्च ) षट्त्रिंश ( षड्विंश ) लोच्य ( लोकय ) ; चदा. ५२८ यास्तु ( याश्च ) ; कृर. २९ ; निप्र. १।२० पू. ; गप. १२ पू. ; वीमि. १।४–५ चदावत् , पू. ; पप्र. १७ चदावत् ; बाल. १।४–५ पृ. १० तासां वाक्यानि ( वाक्यानि तासां ).

वसिष्ठवृद्धमनुलघुहारीतादीनि तु प्रसिद्धषट्त्रिंशदन्तर्गतकर्तृकान्येव, अवस्थाभेदेन तैरेव करणात् । तथा च याज्ञवल्क्येनोक्तम्– ' योगशास्त्रं च मत्प्रोक्तम् ' इति । तथा– 'स्नानमब्दैवतैर्मन्त्रैर्यस्त्वयोक्तं पुराऽनघ । ' इति । यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत् , ' तथा स्मृत्यन्तरेषु च ' इति भेदेनाभिधानात् । यानि तु विष्णुधर्मशिवधर्ममहाभारतरामायणादीनि तान्यपि ' तथा स्मृत्यन्तरेषु च ' इत्यनेनैवोपात्तानि । तथा चोक्तं भविष्यपुराणे– ' अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ कार्ष्णं च पञ्चमो वेदो यन्महाभारतं स्मृतम् । सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते । जयेति नाम चैतेषां प्रवदन्ति मनीषिणः ॥ ' । यत् 'अत्र श्लोकः , स्मृतिः ' इति कृत्वा प्रामाणिकानां वचनम् , तदपि महाजनपरिगृहीतत्वेन प्रमाणत्वात् ' तथा स्मृत्यन्तरेषु च ' इत्यनेनैव संगृहीतं वेदितव्यम् । यत्तु षट्त्रिंशन्मतादि तत् कैश्चिदेव परिगृहीताद्विगानाच्च- ( † १ परिगृहीतत्वाद्विगानाच्च न ) प्रमाणम् ।

‡ ब्रक. २४–२६

( २ ) ' ताश्चानन्तरोक्ताभिरेव सर्वपरिगृहीताभिः पूर्यन्ते ' इति कल्पतरुः । तत्र , ' तथा स्मृत्यन्तरेषु च ' इत्यनेन भविष्यपुराण एव षट्त्रिंशत्स्मृतेर्व्यतिरिक्तस्मृतेर्दर्शितत्वात् , गोभिलऋष्यशृङ्गादीनामपरस्मृतिकाराणां तत्र तत्र स्वयमेवाऽऽदरात् , राजतुल्ययोगक्षेमेण कामधेनुकृता अन्यैरपि व्याघ्रादिमुनीनामादरात् । तस्मात् महाजनपरिगृहीतत्वमेव तन्त्रम् , न तु षट्त्रिंशदन्यतमत्वमिति ध्येयम् । § कृर. २९–३०

( ३ ) यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत्प्रमाणानि, तथा विष्णुधर्मोत्तरमहाभारतरामायणादीन्यपि, 'अष्टादश पुराणेषु... समालोच्य ब्रवीमि ते ॥ ' इति भविष्यत्पुराणे षट्त्रिंशत्स्मृतिभिन्नस्मृत्यन्तराभिधानात्, 'अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ कार्ष्णं च पञ्चमं वेदं यन्महाभारतं स्मृतम् । सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते । जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥ ' इति विशिष्य रामचरितादेस्तत्रैवाभिधानाच्च । कार्ष्णं कृष्णेन व्यासेन प्रणीतम् । अत्र जयति सर्वोत्कर्षेण वर्तते इति व्युत्पत्त्या धर्मप्रमाणत्वं लभ्यते, शब्दे प्रमाणत्वरूपोत्कर्षस्यैवौचित्यात् । स्पष्टं चेदं श्राद्धशूलपाणौ भविष्यत्पुराणे– ' चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे । धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥ अष्टादश पुराणानि चरितं राघवस्य च । रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥ तथोक्तं भारतं वीर पाराशर्येण धीमता । वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो ॥ ' इति । यदपि स्मर्तृनाम अनिर्दिश्य ' अत्र स्मृतिः ', ' अत्र श्लोकः ' इत्यादि प्रामाणिकलिखनं तदप्यविगीतमहाजनपरिगृहीतत्वेन प्रमाणं ' स्मृत्यन्तरेषु च ' इत्यनेनैव संगृहीतं वेदितव्यम् । षट्त्रिंशन्मतादिकं तु कैश्चिदेव परिगृहीतत्वाद्विगीतत्वादप्रमाणमित्युक्तं कल्पतरुणा । विज्ञानेश्वरापरार्कशूलपाणिप्रभृतिभिस्तु प्रमाणत्वेन परिगृहीतम् । युक्तं चैतत् । यतः अन्येऽपि स्मृतिकर्तारः प्रयोगपारिजातादौ गण्यन्ते ।

पप्र. १६–१८

( ४ ) यानि च वृद्धशातातपयोगियाज्ञवल्क्यवृद्धवसिष्ठवृद्धमनुलघुहारीतादीनि तानि प्रसिद्धषट्त्रिंशदन्तर्गतकर्तृकाण्येव । तथा च याज्ञवल्क्येनोक्तम्– ' योगशास्त्रं च मत्प्रोक्तम् ' इति । रत्नाकरस्तु गोभिलऋष्यशृङ्गादीनां षट्त्रिंशदधिकानामपि भविष्ये एव दर्शितत्वान्नायं नियमः , किंतु शिष्टपरिग्रह एवेत्याह । यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत् , 'तथा स्मृत्यन्तरेषु च' इति भविष्योक्तेः , ' मैत्रायणेय-

† यद्यपि कृत्यरत्नाकरेऽप्यत्रत्ययथाश्रुतग्रन्थवदेव ग्रन्थ उपलभ्यते, तथापि ' कैश्चिदेव ' इत्यत्रैवकारबोध्यायाः सर्वेषां बहूनां वा व्यावृत्तेः प्रामाण्यप्रतिकूलत्वेन, विज्ञानपदार्थस्य प्रकृते विसंगतत्वेन चानुगृहीतं पूर्ववचनव्याख्याने परिभाषाप्रकाशकृतं कल्पतरोरर्थानुवादमनुरुध्येयं शुद्धिः कल्पिता । अत एव कृत्यरत्नाकरोऽप्यशुद्ध एव ।

‡ चप्र. , ब्रकगतम् ।

§ शेषं ब्रकवत् ।

च्छन्दोगकठापस्तम्बबह्वृचाम् । परिशिष्टानि यान्यत्र ये चान्येऽखिलसंज्ञकाः ॥ ' इति भविष्योक्तेश्च । यानि च विष्णुधर्मशिवधर्ममहाभारतरामायणादीनि तान्यपि स्मृत्यन्तरत्वेनैवोपात्तानि । बाल. १।४–५ पृ. १०

**सुमन्तुरुवाच–**

**[1]जयोपजीवी यो विप्रः स महागुरुरुच्यते ॥**

**[2]अष्टादशपुराणानि रामस्य चरितं तथा ।**
**विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥**

**[3]कार्ष्णं वेदं पञ्चमं तु यन्महाभारतं स्मृतम् ।**
**श्रौता धर्माश्च राजेन्द्र नारदोक्ता महीपते ॥**

**[4]जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥**

---

(१) **भविष्य.** १।४।८७.

(२) **भविष्य.** १।४।८७–८८ दिशास्त्राणि ( दयो धर्माः ) ; **अप.** १।७ पृ. १५ ; **ब्रक.** २५, २०८ ; **चव्र.** १९ दिशास्त्राणि ( णि शास्त्राणि ) ; **कुर.** ३० ; **निप.** ५०९ उत्त. ; **दीक.** १।४–५ (=) ; **निप्र.** १।२२ ; **गप.** १३ चव्रवत् ; **वीमि.** १।३ पृ. ९ ; **पप्र.** १७ ; **संप्र.** ४७८ ; **बाल.** १।४–५ पृ. १०.

(३) **भविष्य.** १।४।८८–८९ ; **अप.** १।७ पृ. १५ प्रथमचरणे (कार्ष्णश्च पञ्चमो वेदो) तृतीयचरणे ( सौराश्च धर्मराजेन्द्र ) नारदो ( मानवो ) ; **ब्रक.** २५ वेदं पञ्चमं तु ( च पञ्चमो वेदो ) तृतीयचरणे ( सौराश्च धर्मा राजेन्द्र ) नारदो ( मानवो ) : २०८ प्रथमचरणे ( कार्ष्णं च पञ्चमं ज्ञेयं ) शेषं ब्रक. २५ वत् ; **चव्र.** २० कार्ष्णं ( कार्ष्ण्यं ) शेषं ब्रक. २५ वत् ; **कुर.** ३० ब्रक. २५ वत् ; **दीक.** १।४–५ कार्ष्णं ( कात्स्न्यं ) तु ( च) उत्तरार्धे ब्रक. २५ वत् (=) ; **निप्र** १।२२ ब्रक. २५ वत् ; **गप.** १३ प्रथमचरणे ( कार्ष्णिश्च पञ्चमो वेदो ) शेषं ब्रक. २५ वत् ; **वीमि.** १।३ पृ. ९ वेदं पञ्चमं तु ( च पञ्चमं वेदं ) उत्तरार्धे ( सौराश्च धर्मा राजेन्द्र मानवोक्ता महीतले ॥ ) ; **पप्र.** १७ प्रथमचरणे ( कार्ष्णं च पञ्चमं वेदं ) शेषं ब्रक. २५ वत् ; **संप्र.** ४७८ पप्रवत् ; **बाल.** १।४–५ पृ. १० पप्रवत् .

(४) **भविष्य.** १।४।८९ ; **अप.** १।७ पृ. १५ एतेषां (चैतेषां) ; **ब्रक.** २५ अपवत् : २०८ ; **चव्र.** २० अपवत् ; **कुर.** ३० अपवत् ; **दीक.** १।४–५ (=) ; **गप.** १३ ; **वीमि.** १।३ पृ. ९ ; **पप्र.** १७ ; **संप्र.** ७८ ; **बाल.** १।४–५ पृ. १० जयेति ( तयेति ) एतेषां ( येषां च ).

( १ ) ¶ विष्णुधर्मोत्तरं विष्णुधर्मस्य भेद इति न पृथङ्निर्दिष्टम् । $ निप्र. १।२२

( २ ) कार्ष्णं कृष्णेन व्यासेन प्रणीतम् । अत्र जयति सर्वोत्कर्षेण वर्तते इति व्युत्पत्त्या धर्मप्रमाणत्वं लभ्यते, शब्दे प्रमाणत्वरूपोत्कर्षस्यैवौचित्यात् । स्पष्टं चेदं श्राद्धशूलपाणौ भविष्यपुराणे– ' चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे । धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥ अष्टादशपुराणानि चरितं राघवस्य च । रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥ तथोक्तं भारतं वीर पाराशर्येण धीमता । वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो ॥ ' इति । पप्र. १७

( ३ ) तयेत्यस्य तद्वदविगीतमहाजनपरिगृहीतत्वेन प्रमाणं यत्तदपि तथा स्मृतित्वेन ग्राह्यमित्यर्थः । यत्तु षट्त्रिंशन्मतचतुर्विंशतिमतादि, तत्कैश्चिदेव परिगृहीतत्वाद्विगानाच्च न प्रमाणम् । बाल. १।४–५ पृ. १०

धर्मे परिषत् प्रमाणम्

**[1]चत्वारो वा त्रयो वाऽपि यद्ब्रूयुर्वेदपारगाः ।**
**स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥**

---

¶ प्रकृतपुराणवचनेषु विष्णुधर्म–शिवधर्मशब्दौ यदि योगरूढ्या पञ्चरात्रपरौ, यदि वा योगेन विष्णुधर्मपर–शिवधर्मपरपञ्चरात्रपुराणादिसाधारणौ, उभयथाऽपि व्याख्यानमिदं न युक्तिसहम् । तथाहि– उक्तवचनेषु कस्याप्युपपुराणस्य स्वनाम्ना निर्देशो नास्ति । एवं स्थिते केवलविष्णुधर्मोत्तरपुराणविषयिणी ' कुतो न पृथङ्निर्देशः ? ' इति जिज्ञासैव नोत्तिष्ठति । जिज्ञासा यद्युत्तिष्ठेत् सर्वोपपुराणनिर्देशाभावकारणविषयिण्येवोत्तिष्ठेत्, यदि नोत्तिष्ठेत् केवलविष्णुधर्मोत्तरपुराणविषयिण्यपि नोत्तिष्ठेत् । तस्मादनाकाङ्क्षितविषयमिदं व्याख्यानं न युज्यते । एवमपि गदाधरपद्धत्याऽप्यस्य व्याख्यानस्यानामनिर्देशमनुवादादनिराकरणाच्च स्वाभिमतत्वं प्रदर्शितमिति चित्रम् ।

$ गप. निप्रवत् ।

(१) **भविष्य.** १।४।११२–११४.

यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः ।
तत्पापं शतधा भूत्वा वक्तारमनुगच्छति ॥

[1]तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥

[2]पर्षद्विधानमत्रैव प्रोक्तमाङ्गिरसेन तु ।
द्विगुणा क्षत्रियाणां तु वैश्यानां त्रिगुणा स्मृता ॥

चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मनाम् ।
पर्षद्वच्च व्रतं प्रोक्तं शुद्धये पापकर्मणाम् ॥

यस्मिन्विषये ब्राह्मणस्य यत्प्रायश्चित्तमुक्तं तत्र तस्मिन्नेव विषये क्षत्रियो द्विगुणं वैश्यस्त्रिगुणं शूद्रश्चतुर्गुणं कुर्यादित्यर्थः । शुशि. ५८

धर्मे प्रमाणानि श्रुतिस्मृतिसदाचारात्मतुष्टयः

[3]निगमो धर्ममूलं स्यात्स्मृतिशीले तथैव च ।
तथाऽऽचारश्च साधूनामात्मनस्तुष्टिरेव च ॥

सर्वं तु समवेक्षेत निश्चितं ज्ञानचक्षुषा ।
श्रुतिप्राधान्यतो विद्वान्स्वधर्मे निवसेत वै ॥

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्सदा नरः ।
प्राप्य चेह परां कीर्तिं याति शक्रसलोकताम् ॥

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥

योऽवमन्येत ते चोभे हेतुशास्त्राश्रयो द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं विप्राः साक्षाद्धर्मस्य लक्षणम् ॥

धर्मज्ञानं भवेद्विप्रा अर्थकामेष्वसज्जताम् ।
धर्मं जिज्ञासमानानां प्रमाणं नैगमं परम् ॥

(१) निप. ५०९.

(२) ब्रक. ४१ ; शुशि. ५८ ( पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता शूद्राणां तु चतुर्गुणा । पार्षदं च व्रतं ज्ञेयं शुद्धये पापकर्मणाम् ॥ ).

(३) भविष्य. १।७।५२–५९, ६०–६२.

विधिः धर्मे प्रमाणम्, स्त्रीणां शास्त्राधिकारमीमांसा, शास्त्रं शूद्राणामपि प्रमाणम्

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥

तस्मिन्देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥

[1]कर्तव्यं नाम यत्किंचित्सर्वं विधिमपेक्षते ।
व्यक्तमायाति वैफल्यं तदेवाऽऽरब्धमन्यथा ॥

विध्यपेक्षीणि सर्वाणि कार्याण्यविफलान्यपि ।
हेतुभूतास्त्रिवर्गस्य महारम्भा विशेषतः ॥

सर्वसाध्यविधिज्ञानमागमैकनिबन्धनम् ।
साध्यं दृष्टमदृष्टं च द्वयं विधिनिषेधयोः ॥

शास्त्राधिकारो न स्त्रीणां न ग्रन्थानां च धारणे ।
तस्मादिहान्ये मन्यन्ते तच्छासनमनर्थकम् ॥

आगमैकक्रियायोगे स्त्रीणामप्यधिकारिता ।
मृते भर्तरि साध्वी स्यादित्यादौ स्मृतिभाषितम् ॥

तस्मात्कार्यमकार्यं वा विज्ञाय प्रभुरागमात् ।
गुणदोषेषु ताः सम्यक्छास्ति राजा प्रजा इव ॥

सन्त्येव प्रमदाः काश्चिद्विशेषाधिगतागमाः ।
यत्तु शास्त्राधिकारित्वं वचनं स्यान्निरर्थकम् ॥

केचिद्वेदविदो विप्राः कुल्यैर्वैषक्रियापराः ।
तथापि जातिमात्रेण त एवात्राधिकारिणः ॥

क्रियन्ते वेदशास्त्रज्ञैः प्रयोगाः शास्त्रलौकिकाः ।
स्थितमेषामदूरेऽपि शास्त्रमेव निबन्धनम् ॥

व्याधधीवरगोपालप्रभृतीनां च दृश्यते ।
विष्टयङ्गारकसौर्यादिदिनानां परिवर्जनम् ॥

गम्यागम्यादिकार्येयं नियताचारसंस्थितिः ।
लोकानां शास्त्रवाक्यानि प्राणाः स्वेष्टनिबन्धनाः ॥

तस्माच्चतुर्णां वर्णानामाश्रमाणां च सर्वशः ।
मुख्यगौणादिभेदानां ज्ञेया शास्त्राधिकारिता ॥

(१) भविष्य. १।९।३–१६.

पौर्वापर्यं तु विज्ञातुमशक्यं लोकशास्त्रयोः ।
तच्छास्त्रमेव मन्तव्यं यथा कर्मशरीरवत् ॥
आगमे च पुराणे च विहाय नास्तिकग्रहम् ।
मार्गे महद्भिराचीर्णे प्रपद्येताविकल्पधीः ॥

भास्कर उवाच–

'स्मृतिधर्मं वेदमूलं शृणु त्वं गरुडाग्रज ।
पूर्वानुभूतं यद्ध्यानमथ तत्स्मरणं स्मृतिः ॥
धर्मः क्रियात्मा निर्दिष्टः श्रेयोभ्युदयलक्षणः ।
स एव च विधिः प्रोक्तो वेदमूलः सनातनः ॥

श्रुतिस्मृत्योः धर्मशास्त्रार्थशास्त्रयोश्च विरोधाविरोधमीमांसा

'§श्रुत्या सह विरोधे तु बाध्यते विषयं विना ।
व्यवस्थया विरोधे न( ? ऽविरोधेन ) कार्यो यत्नः परीक्षकैः ॥

( १ ) अविरोधे व्यवस्थाया अन्यत्र विषयः कार्य इत्यर्थः । ब्रक. ४३

( २ ) विषयं विना कुत्रापि विषये अवकाशमन्तरेण । कृर. ३७

'स्मृत्यर्थेन विरोधे तु अर्थशास्त्रस्य बाधनम् ।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत् ॥

( १ ) स्मृत्यर्थेन धर्मशास्त्रार्थेन । अर्थशास्त्रस्य मन्वादिप्रणीतस्यैव राजनीत्यादेः । ब्रक. ४३–४४

( २ ) परस्परम् अर्थशास्त्रयोरेव ( विरोधे ) न्याययुक्तं प्रामाणिकम् । ‡कृर. ३७

'अदृष्टार्थे विकल्पस्तु व्यवस्थासंभवेऽसति ।
स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति ॥

( १ ) व्यवस्थासंभवे व्यवस्थायाम् असति अदृष्टार्थयोः विकल्पः । आकाङ्क्षापूरणे । एतेन साकाङ्क्षत्वेन स्मृत्यादीनां समुच्चयः सूचितः । ब्रक. ४४

( २ ) अदृष्टार्थे धर्मशास्त्रार्थे विकल्पः व्यवस्थासंभवे विशेषव्यवस्थितिसंभवेऽसति, सति तु व्यवस्थैव । स्मृतिशास्त्रविकल्पः धर्मशास्त्रयोर्विरोधे विकल्प आकाङ्क्षापूरणे । आकाङ्क्षायां सत्यां तदुपबृंहणे समुच्चय एव । तेन साकाङ्क्षत्वात् स्मृत्यादीनां समुच्चयः सूचितः । † कृर. ३७–३८

( ३ ) न चानेन स्मृतीनामन्योन्यविकल्प एवोच्यत इति वाच्यम्, आकाङ्क्षितार्थानां निषेधानां वाऽन्यत्र स्थितानामपि साकाङ्क्षत्वेन ग्राह्यतया विकल्पायोगात्, विरुद्धार्थानामशक्त्या विकल्पस्यानुक्तावप्यर्थसिद्धत्वात् । निप. १७६–१७७

(४) स्मृतीनां तु सर्वासां सर्वं प्रति प्रामाण्यं होलाकाधिकरणे प्रतिपादितम् । तत्र सर्वशाखास्वेकाग्निहोत्रवत् किं सर्वस्मृतिष्वेकमेव संध्याकर्म, किं वा भिन्नमिति संदेहे सर्वस्मृतीनां तुल्याध्येतृकत्वेन क्वचित् संध्याकर्मोत्पत्तिविधौ स्मृत्यन्तरे तद्विधिवैयर्थ्यात्, न च शाखान्तरन्यायः, तुल्याध्येतृकतावशात्, 'सर्वशाखाविधित्वं हि स्थितमध्येतृभेदतः ।' इत्युक्तदिशा प्रतिस्मृति भिन्नमेव कर्मेति प्राप्ते, अभेदहेतोः प्रत्यभिज्ञानस्य सत्त्वेन क्वचित्कर्मानुवादेन गुणविधिरिति । यथा त्रिष्वपि वेदेषु तुल्याध्येतृकेष्वेकमेव ज्योतिष्टोमकर्म, 'भूयस्त्वेनोभय-

§ अस्य पद्यव्याख्यानं 'देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्' इति गौतमधर्मसूत्रे ( वका. पृ. ४८ ) द्रष्टव्यम् ।

‡ शेषं ब्रकवत् ।

(१) भविष्य. १।१८१।६–७.

(२) भविष्य १।१८१।१७ ; ब्रक. २३ तृतीयचरणे ( व्यवस्थयाऽविरोधेन ) कार्यो यत्नः ( कार्योऽन्यत्र ) ; ममु. २।१३ पू. ; कृर. ३७ बाध्यते ( साध्यते ) विरोधे न ( विरोधेन ) कार्यो यत्नः ( कार्योऽन्यत्र ) ; पप्र. २८ ब्रकवत् .

(३) भविष्य. १।१८१।१८ ( स्मृत्या सह विरोधेन चार्थशास्त्रस्य बाधनम् । परस्पराविरोधे तु अर्थशास्त्रस्य साधनम् ॥ ) ; ब्रक. ४३ ; कृर. ३७.

† शेषं ब्रकवत् ।

(१) भविष्य. १।१८१।१९ द्वितीयचरणे ( व्यवस्था संभवे सति ) ; ब्रक. ४३ शास्त्रे वि ( शास्त्रवि ) ; कृर. ३७ ब्रकवत् ; निप. १७६, ३८८, ४३२, ५१० ब्रकवत्, उत्त. (=) ; मिप्र. १।१६९ दृष्टार्थे वि ( दृष्टार्थवि ) कल्पस्तु आ (कल्पः स्यादा) : २१० कल्पस्तु आ (कल्पः स्यादा ) उत्त. ; वीमि. १।६ पृ. १८ ब्रकवत्, उत्त. (=).

श्रुति ' (जैसू. ३।३।१० ) इति न्यायात् ; तथा सर्वस्मृतिष्वेकमेव संध्याकर्म । तदङ्गानि सर्वेभ्यो ज्ञात्वा कार्याणि । न चैवं सति सर्वस्मृत्यनुसरणं विना संध्याकर्माद्यकरणप्रसङ्गः , श्रुत्यर्थोपसंहारे कल्पसूत्रवत् स्मृत्यर्थस्याप्यनुष्ठानाय पूर्वपूर्वशिष्टनिबन्धानामेवोपसंहारफलानामादरणीयत्वात् । तथा च मनुः—' दशावरा वा परिषद् यं धर्मं परिकल्पयेत् । त्र्यवरा वाऽपि वृत्तस्थास्तं धर्मं न विचालयेत् ॥ ' ( मस्मृ. १२।११० ) परिकल्पयेदिति । अनुष्ठानक्षमनिर्णयविषयं कुर्यात् । पर्षल्लक्षणं तत्रैव—' त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ॥ ' ( मस्मृ. १२। १११) । त्रयश्चाऽऽश्रमिणः पूर्वे वृद्धा ब्रह्मचारिणं विना, ' ब्रह्मचर्याश्रमादूर्ध्वम् ' इत्यङ्गिरोवचनात् । धर्मपाठकः । 'अनेन धर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः । ' इत्यङ्गिराः । एवं सति पूर्वपूर्वधर्मशास्त्रनिपुणमहानुभावपर्षन्निर्णीयविदङ्गोपेतं नानास्मृतिपर्यालोचनया निर्णीतं तदधिकमङ्गं चेत् प्रामाणिके स्मृत्यन्तरे संप्रति दृश्यते, तदकरणेऽपि न वैगुण्यम् , शाखान्तरन्यायाङ्गत्वादङ्गाधिक्यात् । करणे फलातिशयः । एतदेवाभिप्रेत्य भविष्यपुराणे स्मर्यते—' अदृष्टार्थविकल्पस्तु व्यवस्थासंभवेऽसति । स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति ॥ ' । व्यवस्थायाः संभवः संभावना । तस्यामसत्यामदृष्टार्थस्य स्मृत्यर्थस्य विकल्पः । तद्यथा— 'कुर्यात् कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा । ' इति सूर्योपस्थाने विकल्पश्रुतावपि ' सायं प्रातः प्राञ्जलिर्मध्याह्ने ऊर्ध्वबाहुः ' इति वाक्यान्तरात् व्यवस्था । यत्र तु न व्यवस्थासंभवः ' अघमर्षणसूक्तं त्रिः सकृद् वा जपेत् ' इत्यादौ तत्र यथेच्छविकल्पः । तथा स्मृतिशास्त्रस्याधिकबोधकस्य विकल्पः स्यात् पूर्वस्मृत्या क्रियमाणस्य कर्मण आकाङ्क्षापूरणे सति । यथा योगियाज्ञवल्क्यस्यानुसारेण संध्याकर्मणि क्रियमाणे शङ्खस्मृतेमार्जनानन्तरम् ' व्याहृतीः कीर्तयेदेवं तथैवाक्षरमव्ययम् । ' इति व्याहृतित्रयप्रणवजपविधानम् । न हि प्रणवव्याहृतिजपं प्रत्याकाङ्क्षाऽस्ति, मानाभावात् । आकाङ्क्षायां त्वपूर्णायां स्मृत्यन्तरोक्तं नित्यवदनुष्ठेयम् । तद्यथा योगियाज्ञवल्क्यीये— ' प्राणस्याऽऽयमनं कृत्वा आचामेत् प्रयतोऽपि सन् । ' इति याज्ञवल्क्येन संध्याप्राणायामानन्तरमाचमनमात्रमुक्तम् , न तत्र मन्त्रः । अस्ति चाऽऽचमनस्य जलसाध्यस्य स्मारकमन्त्राकाङ्क्षा । तेन शङ्खस्मृतौ ' उपस्पृशेत् ततः पश्चान्मन्त्रेणानेन मन्त्रवित् । ' इति ' अन्तश्चरसि ' इत्यादिमन्त्रविधानं साकाङ्क्षत्वान्नित्यवदेव ग्राह्यम् । एवमन्यत्र कल्पनीयम् ।

निप्र. १।६८–७०

[1]वेदमूले स्थितं त्वेतदनुष्ठानं क्रिया सती ।
एवं शक्यविधानं तु न्यायो ह्येवं व्यवस्थितः ॥
निषेधविधिरूपं तु द्विधा शास्त्रं खगाधिप ।
एकरूपं वदन्त्यन्ये बहुरूपमथापरे ॥
पञ्चप्रकाराः स्मृतय एवं शिष्य व्यवस्थिताः ।
त्रिधा चतुर्धा द्वेधा वा एकधा बहुधा खग ॥

पञ्चप्रकाराः दृष्टार्था अदृष्टार्था अनुवादरूपा न्यायमूलाः शिष्टदृष्टाश्च स्मृतयः

[2]दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथाऽपरा ।
दृष्टादृष्टार्थरूपाऽन्या न्यायमूला तथा परा ॥
[3]अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु ॥

अरुण उवाच—

[4]या एता भवता प्रोक्ताः स्मृतयः पञ्च गोपते ।
एतासां लक्षणं ब्रूहि समासादेव सत्तम ॥

---

(१) भविष्य. १।१८१।२०–२२.

(२) भविष्य. १।१८१।२३ उत्तरार्धं नास्ति ; अप. २।२१ तथाऽपरा (तथा परा) ; ब्रक. ३०–३१ ; कुर. ३५ ; वीमि. १।३ पृ. १० अरवत् ; पप्र. १९ तथा परा ( तथाऽपरा ).

(३) भविष्य. १।१८१।२३–२४ (अनुवादन्यायमूला दृष्टादृष्टा तु पञ्चमी । सर्वा एता वेदमूलाः स्मृता वै ऋषिभिः स्वयम् ॥) ; अप. २।२१ र्थाः (र्थे); ब्रक. ३१ र्थाः प (र्था प) ; स्मृच. १।३ उत्त. , पुराणम् ; मभु. ३।७ उत्त. ; कुर. ३६ र्थाः प (र्थो प) ; वीमि. १।३ पृ. १० अनुवा ( अर्थवा ) पू. ; पप्र. १९.

(४) भविष्य. १।१८१।२४–२७.

दृष्टार्था का मता देव अदृष्टार्था च का भवेत् ।
दृष्टादृष्टस्वरूपा का न्यायमूला कथं भवेत् ।
अनुवादस्मृतिः का स्यात्कथयेदं निगद्यताम् ॥
एवमुक्तो महातेजा भास्करो वारितस्करः ।
उवाच तं खगं वीरं प्रणतं विनयान्वितम् ॥

आदित्य उवाच–

'षाड्गुण्यस्य प्रयोज्यस्य प्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ॥

षड्गुणाः संधिविग्रहादयो वक्ष्यन्ते । प्रयोगः कार्यगौरवात् षाड्गुण्यस्यैव व्याससमासाभ्यां कर्तव्य इत्यर्थः । सामादीनामपि कार्यगौरवात् व्याससमासाभ्यां प्रयोगः कर्तव्य इत्यर्थः । ‡ ब्रक. ३१

'अध्यक्षाणां च निक्षेपः करणानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज ॥
'संध्योपास्तिस्तथा कार्या शुनो मांसं न भक्षयेत् ।
अदृष्टार्था स्मृतिः प्रोक्ता मनुना विनतात्मज ॥
'पालाशं धारयेद्दण्डमुभयार्थां विदुर्बुधाः ।
विरोधे तु विकल्पः स्याद्यवहोमे मतो यथा ॥

जपहोमश्रुताविति । सूर्योदयावधिसावित्रीजपोऽनु(१ जपानु)दितहोमविषयो यथा । ‡ ब्रक. ३१

'श्रुतौ दृष्टं यथा कार्यं स्मृतौ तत्तादृशं यदि ।
उक्तानुवादिनी सा तु पारिव्राज्यं तथा गृहात् ॥

(१) §अनु(१नू)क्तवादिनी अनु(१नू)दितवादिनी । यथा 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्यनयाऽनूदितं 'ब्राह्मणः प्रव्रजेद्गृहात्' इति मनुर्वदति विधत्ते इत्यर्थः । ¶ ब्रक. ३१–३२

'ब्रह्मादीनां च देवानां ब्राह्मणादेस्तथैव च ।
भूतग्रामस्य कृत्स्नस्य त्रयं कृत्स्नस्य खेचर ॥
साधनत्वं मनुः प्राह वेदमूलं सनातनम् ।
प्रकाशयज्ञसंसिद्ध्यै यज्ञशब्दस्य एव तु ॥
उपलभ्य यथातत्त्वं स च दर्शितवानृषिः ।
सम्यक्संसाधनं धर्मं कर्तव्यमधिकारिणा ॥
'विमुक्ताशेषदोषेण सर्वज्ञेन भगेन यत् ।
प्रणीतममलं वाक्यं तत्प्रमाणं न संशयः ।
यस्मान्मार्तण्डनामादः कथ्यते च मनीषिभिः ॥
स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत्तु शोभनम् ।
वाक्यं ते देवदेवेन तद्विज्ञेयं सुभाषितम् ॥
रागद्वेषाक्षमाक्रोधकामतृष्णानुसारिणाम् ।
वाक्यं निरयहेतुत्वात्तद्दुर्भाषितमुच्यते ॥

---

‡ कुर., पप्र. ब्रकवत् ।

(१) भविष्य. १।१८१।२८ प्रथमचरणे (षड्गुणस्य स्वरूपं तु) सामादीना (समयाना); अप. २।२१ प्रयोज्यस्य प्रयोगः (यथायोगं प्रयोगात्); ब्रक. ३१ योज्यस्य (योगस्य); कुर. ३६ प्रयोज्यस्य (प्रयोगे तु); पप्र. १९ षाड्गुण्यस्य (षड्गुणस्य).

(२) भविष्य. १।१८१।२९; अप. २।२१ करणानां (कण्टकानां); ब्रक. ३१ अपवत्; कुर. ३६ अपवत्; पप्र. १९ डाग्रज (डात्मज) शेषं अपवत्.

(३) भविष्य. १।१८१।३०; अप. २।२१ पास्तिस्तथा (पास्तिः सदा) चतुर्थचरणे (ऋषिभिर्ज्ञानकोविदैः); ब्रक. ३१ अपवत्; कुर. ३६ शुनो (गुणो) शेषं अपवत्; पप्र. १९ अपवत्.

(४) भविष्य. १।१८१।३१; अप. २।२१ यार्थां (यार्थं) चतुर्थचरणे (ज्जपहोमश्रुतौ यथा); ब्रक.

§ 'स्मृत्योर्विरोधे' इतियाज्ञवल्क्यवचनीयापरार्कव्याख्याने 'विरोधे तु' इति वचनमाश्रिता (वका. पृ. १५२) टिप्पण्यत्रानुसंधेया ।

¶ कुर., पप्र. ब्रकवत् ।

३१ विरोधे (विबोधे) शेषं अपवत्; कुर. ३६ चतुर्थचरणः अपवत्; वीमि. १।६ पृ. १८ तृतीयचरणमात्रम् (=); पप्र. १९ कुरवत्.

(१) भविष्य. १।१८१।३२; अप. २।२१ तत्ता (न स) उक्तानु (अनूक्त) तथा (यथा); ब्रक. ३१ यथा (तथा) तत्ता (न ता) उक्तानु (अनुक्त) पारि (परि); कुर. ३६ यथा (तथा) तत्ता (न ता) उक्तानु (अनुक्त); पप्र. १९ उक्तानु (अनूक्त) तथा (यथा).

(२) भविष्य. १।१८१।३६–३८.

(३) भविष्य. १।१८७।२८–२९, ३४–३७.

संस्कृतेनापि किं तेन मृदुलालापसङ्गिना ।
अविद्यारामवाक्येन संसारक्लेशहेतुना ॥

यच्छ्रुत्वा जायते पुण्यं रागादीनां च संक्षयः ।
विरूपमपि तद्वाक्यं विज्ञेयमतिशोभनम् ॥

सात्त्विकराजसतामसानि त्रिविधानि पुराणानि,
पुराणकर्तारः

[1]अष्टादश पुराणानि केन प्रोक्तानि किं फलम् ।
ब्रूत मे विदुषां श्रेष्ठा वेदशास्त्रपरायणाः ॥

पराशरेण रचितं पुराणं विष्णुदैवतम् ।
शिवेन रचितं स्कान्दं पाद्मं ब्रह्ममुखोद्भवम् ॥

शुकप्रोक्तं भागवतं ब्राह्मं वै ब्रह्मणा कृतम् ।
गारुडं हरिणा प्रोक्तं षड्वै सात्त्विकसंभवाः ॥

मत्स्यः कूर्मो नृसिंहश्च वामनः शिव एव च ।
वायुरेषां पुराणानि व्यासेन रचितानि वै ॥

राजसाः षट् स्मृता विप्र कर्मकाण्डमया भुवि ।
मार्कण्डेयं च वाराहं मार्कण्डेयेन निर्मितम् ॥

आग्नेयमङ्गिराश्चैव जनयामास चोत्तमम् ।
लिङ्गब्रह्माण्डके वाऽपि तण्डिना रचिते शुभे ॥

महादेवेन लोकार्थे भविष्यं रचितं शुभम् ।
तामसाः षट् स्मृताः प्राज्ञैः शक्तिधर्मपरायणाः ॥

सर्वेषां च पुराणानां श्रेष्ठं भागवतं स्मृतम् ।
घोरे भुवि कलौ प्राप्ते विक्रमो नाम भूपतिः ॥

कैलासाद्भुवमागत्य मुनीन्सर्वान्समाह्वयत् ।
तदा ते ‡ मुनयः सर्वे नैमिषारण्यवासिनः ।
प्रोक्तान्युपपुराणानि सूतेनाष्टादशैव च ॥

[2]पुनरुक्तानि यान्येव पुराणाष्टादशानि वै ।
तानि चोपपुराणानि भविष्यन्ति कलौ युगे ॥

‡ सविशेषणस्य प्रथमान्तमुनिपदस्य पूर्वापरवाक्ययोरन्वयायोगात् अध्याहारादिनाऽन्वयो योजनीयः ।

(१) भविष्य. ३।३।२८।८, १०–१८.

(२) भविष्य. ३।४।१।४–५.



[1]वेदो नारायणः साक्षात्पूजनीयो नरैः सदा ।
ततः कालस्ततः कर्म ततो धर्मः प्रवर्तते ॥

हेतुसृष्ट्यै समुद्भूतो वेदो नारायणः स्वयम् ।
वेदात्कालस्ततः कर्म ततो धर्मादयः स्मृताः ॥

[2]भाविष्याख्ये महाकल्पे कथा भाविष्यकैर्जनैः ।
कथिता ब्रह्मणश्चाग्रे शतकोटिप्रविस्तरैः ॥

दशलक्षणसंयुक्तं शतकोटिप्रविस्तरम् ।
महापुराणं कथितं पुराणं पञ्चलक्षणम् ॥

पञ्चत्रिंशत्सहस्रं च कल्पे कल्पे प्रकीर्तितम् ।
कल्पनाम्ना पुराणं च महादेवेन निर्मितम् ॥

अष्टादशपुराणानि निर्मितानि शिवात्मना ।
द्वापरान्ते च भगवान् व्यासः सत्यवतीसुतः ।
तान्येव जनयामास लोकमङ्गलहेतवे ॥

धर्माधर्मयोः श्रुतिरेव प्रमाणम्, आचारप्रभवो धर्मः

[3]प्रमाणं श्रुतिरेवात्र धर्माधर्मविनिश्चये ।
पापं पापेन भवति पुण्यं पुण्येन कर्मणा ॥

[4]आचारप्रभवो धर्मः सन्तश्चाऽऽचारलक्षणाः ।
साधूनां च यथा वृत्तं स सदाचार उच्यते ॥

एष ते लक्षणोद्देश आचारस्य प्रकीर्तितः ।
शेषाश्च वेद्या वृद्धेभ्यः प्रत्याहार्या नराधिप ॥

[5]लोकवेदविरुद्धं यत्कथ्यते मनुजोत्तम ।
न तत्राऽऽस्था प्रकर्तव्या विप्रलापो हि स स्मृतः ॥

## नारदपुराणम्

प्रमाणं वेदव्यासशिष्यसूतोक्तानि पुराणानि, यतः
वेदवेदाङ्गशास्त्रसाररूपाणि; न तेषामर्थवादत्वम्

[6]पुराणसंहितावक्ता शान्तो वै रोम( ? रौ )महर्षणिः ॥

(१) भविष्य. ३।४।२०।५२–५३, ६३.

(२) भविष्य. ३।४।२५।२१८–२२२.

(३) भविष्य. ४।४।७.

(४) भविष्य. ४।२०५।२५, १४९.

(५) भविष्य. ४।२०७।६.

(६) नारद. १।१।१६, १८–२१, ३५–३६.

वेदव्यासमुनिः साक्षान्नारायण इति द्विजाः ।
शुश्रुमः सर्वशास्त्रेषु सूतस्तु व्यासशासितः ॥
तेन संशासितः सूतो वेदव्यासेन धीमता ।
पुराणानि स वेत्त्येव नान्यो लोके ततः परः ॥
स पुराणार्थविल्लोके स सर्वज्ञः स बुद्धिमान् ।
स शान्तो मोक्षधर्मज्ञः कर्मभक्तिकलापवित् ॥
वेदवेदाङ्गशास्त्राणां सारभूतं मुनीश्वराः ।
जगद्धितार्थं तत्सर्वं पुराणेषूक्तवान्मुनिः ॥
गीतं सनकमुख्यैस्तु नारदाय महात्मने ।
पुराणं नारदोपाख्यमेतद्वेदार्थसंमितम् ॥
[1]निन्दायां कलहे वाऽपि ह्यसन्तः पापतत्पराः ।
पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः ।
तैरर्जितानि पुण्यानि क्षयं यान्ति द्विजोत्तमाः ॥
[2]समस्तकर्मनिर्मूलसाधनानि नराधमः ।
पुराणान्यर्थवादेन ब्रुवन्नरकमश्नुते ॥
[3]याव( द् )ब्रह्मा सृजते तज्जगत्स्थावरजङ्गमम् ।
तावत्स पच्यते पापी नरकाग्निषु संततम् ॥
पुराणेषु द्विजश्रेष्ठाः सर्वधर्मप्रवक्तृषु ।
प्रवदन्त्यर्थवादत्वं ये ते नरकभाजनाः ॥
[4]वेदप्रणिहितो धर्मो वेदो नारायणः परः ॥
[5]सर्ववेदार्थसाराणि पुराणानीति भूपते ।
वदन्ति मुनयश्चैव तद्वक्ता परमो गुरुः ॥
यः( च ? ) संसारार्णवं तर्तुमुद्योगं कुरुते नरः ।
शृणुयात्स पुराणानि इति शास्त्रविभागकृत् ।
प्रोक्तवान्सर्वधर्मांश्च पुराणेषु महीपते ॥
तर्कस्तु वादहेतुः स्यान्नीतिस्त्वैहिकसाधनम् ।
पुराणानि महाबुद्धे इहामुत्र सुखाय हि ॥

(१) नारद. १।१।५७–५८; आपा. २३४ क्षयं यान्ति द्विजोत्तमाः ( तद्वदेव भवन्ति वै ) प्रथमार्धं नास्ति.
(२) नारद. १।१।५८–५९ णान्यर्थ ( णाल्यर्थ ); आपा. २३४.
(३) आपा. २३४.
(४) नारद. १।४।१७.
(५) नारद. १।९।९७–१००.

धर्मशास्त्रानुसारेण कर्तव्यो धर्मनिर्णयः

[1]धर्माणां धर्मशास्त्रैस्तु सदा कुर्वन्ति निश्चयम् ।
ग्रावश्चित्तं चिकित्सां च ज्योतिषे( ? षं )
धर्मनिर्णयम् ।
विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥
[2]अश्रौतस्मार्तविहितं प्रायश्चित्तं वदन्ति ये ।
तान्धर्मविघ्नकर्तॄंश्च राजा दण्डेन पीडयेत् ॥
[3]श्रुतिप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
धर्माधर्मविवेकोऽयं ... ... ... ॥
श्रुतिप्रणिहितो धर्मः सत्यं सत्यं न संशयः ॥
युगधर्मः परिग्राह्यो वर्णैरेतैर्यथोचितम् ॥

देशाचाराः प्रमाणम्

[4]देशाचारास्तथा ग्राह्याः स्मृतिधर्माविरोधतः ॥
[5]देशाचाराः परिग्राह्यास्तत्तद्देशगतैर्नरैः ।
अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृतः ॥

इदं वचनं तत्तद्देशसदाचाराणामेव व्यवस्थापकम्, न दुराचारस्य, 'यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः । श्रुतिस्मृत्यविरुद्धश्च तमनुष्ठातुमर्हति ॥' इति देवलोक्तेः । विपा. ३।२।३४४

साङ्गवेदपुराणधर्मशास्त्राणां विष्णुरूपत्वम्

[6]पुराणन्यायमीमांसा धर्मशास्त्राणि च द्विज ।
साङ्गा वेदास्तथा सर्वे विष्णो रूपं प्रकीर्तितम् ॥
[7]ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।
वेदाश्चत्वार एवैते प्रोक्ता धर्मनिरूपणे ॥

(१) नारद. १।१२।६३–६४.
(२) नारद. १।१४।५५–५६.
(३) नारद. १।२०।६२, ६८, १।२४।११.
(४) नारद. १।२४।११.
(५) नारद. १।२४।१७; सिन्धु. १४७३ शगतै ( शीयजै ); विपा. ३।२।३४४ शगतै ( शीयजै ): ५।४०३ शगतै ( शीयजै ) पू.
(६) नारद. १।३९।६८–६९.
(७) नारद. १।५०।११.

चतुर्लक्षपरिमितानि अष्टादशपुराणानि व्यासोक्तानि, पुराणानां श्लोकसंख्या विषयाश्च

ब्रह्मोवाच-

[1]पुराणमेकमेवाऽऽसीत्सर्वकल्पेषु मानद ।
चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ॥
हरिर्व्यासस्वरूपेण जायते च युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ।
अद्यापि देवलोके तु शतकोटिप्रविस्तरम् ॥
अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ।
ब्राह्मं पाद्मं वैष्णवं च वायवीयं तथैव च ॥
भागवतं नारदीयं मार्कण्डेयं च कीर्तितम् ।
आग्नेयं च भविष्यं च ब्रह्मवैवर्तलिङ्गके ॥
वाराहं च तथा स्कान्दं वामनं कूर्मसंज्ञिकम् ।
मात्स्यं च गारुडं तद्वद्ब्रह्माण्डाख्यमिति त्रिषट् ॥
ब्राह्मं पुराणं तत्राऽऽदौ सर्वलोकहिताय वै ।
व्यासेन वेदविदुषा समाख्यातं महात्मना ॥
तद्वै सर्वपुराणाग्र्यं धर्मकामार्थमोक्षदम् ।
नानाख्यानेतिहासाढ्यं दशसाहस्रमुच्यते ॥
[2]एतद्वै पञ्चपञ्चाशत्सहस्रं पद्मसंज्ञकम् ॥
[3]शृणु वत्स प्रवक्ष्यामि पुराणं वैष्णवं महत् ।
त्रयोविंशतिसाहस्रं सर्वपातकनाशनम् ॥
एतद्विष्णुपुराणं वै सर्वशास्त्रार्थसंग्रहम् ।
वाराहकल्पवृत्तान्तं व्यासेन कथितं त्विह ॥
[4]शृणु विप्र प्रवक्ष्यामि पुराणं वायवीयकम् ।
चतुर्विंशतिसाहस्रं तत्पुराणं प्रकीर्तितम् ।
श्वेतकल्पप्रसङ्गेन धर्मानत्राऽऽह मारुतः ॥

(१) नारद. १।९२।२२–२८, ३०–३१.
(२) नारद. १।९३।३७.
(३) नारद. १।९४।१, २०–२१.
(४) नारद. १।९५।१–२.

[1]मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम् ।
श्रीमद्भागवतं नाम पुराणं ब्रह्मसंमितम् ।
तदष्टादशसाहस्रं कीर्तितं पापनाशनम् ॥
[2]शृणु विप्र प्रवक्ष्यामि पुराणं नारदीयकम् ।
पञ्चविंशतिसाहस्रं बृहत्कल्पकथाश्रयम् ॥
[3]अथ ते संप्रवक्ष्यामि मार्कण्डेयाभिधं मुने ।
पुराणं सुमहत्पुण्यं पठतां शृण्वतां सदा ॥
यत्राधिकृत्य शकुनीन्सर्वधर्मनिरूपणम् ।
मार्कण्डेयपुराणं तन्नवसाहस्रमीरितम् ॥
[4]अथातः संप्रवक्ष्यामि तवाऽऽग्नेयपुराणकम् ।
ईशानकल्पवृत्तान्तं वसिष्ठायानलोऽब्रवीत् ॥
तत्पञ्चदशसाहस्रं नानाचरितमद्भुतम् ॥
[5]अथ ते संप्रवक्ष्यामि पुराणं सर्वसिद्धिदम् ।
भविष्यं भवतः सर्वलोकाभीष्टप्रदायकम् ॥
चतुर्दशसहस्रं तु पुराणं परिकीर्तितम् ।
भविष्यं सर्वदेवानां साम्यं यत्र प्रकीर्तितम् ॥
[6]शृणु वत्स प्रवक्ष्यामि पुराणं दशमं तव ।
ब्रह्मवैवर्तकं नाम वेदमार्गानुदर्शकम् ॥
रथंतरस्य कल्पस्य वृत्तान्तं यन्मयोदितम् ।
शतकोटिपुराणे तत्संक्षिप्य प्राह वेदवित् ॥
व्यासश्चतुर्धा संव्यस्य ब्रह्मवैवर्तसंज्ञिते ।
अष्टादशसहस्रं तत्पुराणं परिकीर्तितम् ॥
[7]शृणु पुत्र प्रवक्ष्यामि पुराणं लिङ्गसंज्ञितम् ॥
पुराणं लिङ्गमुदितं बह्वाख्यानविचित्रितम् ॥
तदेकादशसाहस्रं हरमाहात्म्यसूचकम् ।
परं सर्वपुराणानां सारभूतं जगत्त्रये ॥

(१) नारद. १।९६।१–२.
(२) नारद. १।९७।१.
(३) नारद. १।९८।१–२.
(४) नारद. १।९९।१–२.
(५) नारद. १।१००।१, १३–१४.
(६) नारद. १।१०१।१, ४–५.
(७) नारद. १।१०२।२, ३–४.

[1]शृणु वत्स प्रवक्ष्यामि वाराहं वै पुराणकम् ।
भागद्वययुतं शश्वद्विष्णुमाहात्म्यसूचकम् ॥
मानवस्य तु कल्पस्य प्रसङ्गं मत्कृतं पुरा ।
निबबन्ध पुराणेऽस्मिंश्चतुर्विंशसहस्रके ।
व्यासो हि विदुषां श्रेष्ठः साक्षान्नारायणो भुवि ॥
[2]शृणु वत्स प्रवक्ष्यामि पुराणं स्कन्दसंज्ञकम् ।
यस्मिन्प्रतिपदं साक्षान्महादेवो व्यवस्थितः ।
एकाशीतिसहस्रं तु स्कान्दं सर्वाघकृन्तनम् ॥
[3]शृणु वत्स प्रवक्ष्यामि पुराणं वामनाभिधम् ।
त्रिविक्रमचरित्राढयं दशसाहस्रसंख्यकम् ॥
[4]शृणु वत्स मरीचे त्वं पुराणं कूर्मसंज्ञिकम् ॥
तत्सप्तदशसाहस्रं सचतुःसंहितं शुभम् ।
यत्र ब्राह्माः पुरा प्रोक्ता धर्मा नानाविधा मुने ॥
[5]अथ मात्स्यं पुराणं ते प्रवक्ष्ये द्विजसत्तम ॥
व्यासेन वेदविदुषा नरसिंहोपवर्णनम् ।
उपक्रम्य तदुद्दिष्टं चतुर्दशसहस्रकम् ॥
[6]मरीचे शृणु वक्ष्यामि पुराणं गारुडं शुभम् ।
गरुडायाब्रवीत्पृष्टो भगवान्गरुडासनः ।
एकोनविंशसाहस्रं तार्क्ष्यकल्पकथान्वितम् ॥
[7]शृणु वत्स प्रवक्ष्यामि ब्रह्माण्डाख्यं पुरातनम् ।
यच्च द्वादशसाहस्रमादिकल्पकथायुतम् ॥
... ... यश्चतुर्लक्षं पुराणं येन पठ्यते ।
तदेतदस्य गदितमत्राष्टादशधा पृथक् ॥
पाराशर्येण मुनिना सर्वेषामपि मानद ।
वस्तुतस्तूपदेष्ट्राऽथ मुनीनां भावितात्मनाम् ॥

(१) नारद. १।१०३।१–३.
(२) नारद. १।१०४।१, ३.
(३) नारद· १।१०५।१.
(४) नारद. १।१०६।१, ३.
(५) नारद. १।१०७।१–२.
(६) नारद. १।१०८।१–२.
(७) नारद. १।१०९।१, ३०–३३.

मत्तः श्रुत्वा पुराणानि लोकेभ्यः प्रचकाशिरे ।
मुनयो धर्मशीलास्ते दीनानुग्रहकारिणः ॥

अधिष्ठानं वेदानां पुराणानि

[1]शृणु मोहिनि मद्वाक्यं वेदोऽयं बहुधा स्थितः ।
यज्ञकर्मक्रिया वेदः स्मृतिर्वेदो गृहाश्रमे ॥
स्मृतिर्वेदः क्रिया वेदः पुराणेषु प्रतिष्ठितः ।
पुराणपुरुषाज्जातं यथेदं जगदद्भुतम् ॥
तथेदं वाङ्मयं जातं पुराणेभ्यो न संशयः ।
वेदार्थादधिकं मन्ये पुराणार्थं वरानने ॥
वेदाः प्रतिष्ठिताः सर्वे पुराणेष्वेव सर्वदा ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥
न वेदे ग्रहसंचारो न शुद्धिः कालबोधिनी ।
तिथिवृद्धिक्षयो वाऽपि पर्वग्रहविनिर्णयः ॥
इतिहासपुराणैस्तु निश्चयोऽयं कृतः पुरा ।
यन्न दृष्टं हि वेदेषु तत्सर्वं लक्ष्यते स्मृतौ ।
उभयोर्यन्न दृष्टं हि तत्पुराणैः प्रगीयते ॥
यद्वेदैर्गीयते सुभ्रु उपाङ्गैर्यत्प्रगीयते ।
पुराणैः स्मृतिभिश्चैव वेद एव निगद्यते ॥
पुराणमन्यथा मत्वा तिर्यग्योनिमवाप्नुयात् ।
संस्नातोऽपि स दान्तोऽपि न गतिं प्राप्नुयादिति ॥
[2]न मन्यते वेदपुराणशास्त्रा-
न(? ण्य )न्ते पुरीं याति दिनेशसूनोः ॥
[3]शास्त्रं नियामकं भद्रे सर्वेषां कर्मणां भवेत् ॥

नारदपुराणं हंसरूपभगवता उपदिष्टम्

[4]हित्वा स्वशिष्यान्पैलादीन्मह्यं नारदसंहिताम् ।
यो व्याचक्रे नमस्तस्मै वेदव्यासाय विष्णवे ॥
पुराणसंहितामेतां नारदाय विपश्चिते ।
सनकाद्या महाभागा मुनयः प्रचकाशिरे ॥

(१) नारद. २।२४।१५–२१, २२–२३, २४–२५.
(२) नारद. २।२५।३२.
(३) नारद. २।५९।३९.
(४) नारद. २।८२।३४–३८.

हंसस्वरूपी भगवान्यदा तं ब्रह्म शाश्वतम् ।
तदुपादिशदेतेभ्यो विज्ञानेन विजृम्भितम् ॥
तदिदं भगवान्साक्षान्नारदोऽध्यात्मदर्शनः ।
वेदव्यासाय मुनये रहस्यं निर्दिदेश ह ।
मया प्रकाशितं ह्येतद्रहस्यं भुवि दुर्लभम् ॥

## अग्निपुराणम्

अग्निपुराणं परा विद्या

[1]द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
द्वे विद्ये विदितव्ये हि इति चाऽऽथर्वणी श्रुतिः ॥
[2]पुराणं परमाग्नेयं ब्रह्मविद्याक्षरं परम् ।
ऋग्वेदाद्यपरं ब्रह्म सर्वदेवसुखावहम् ॥
अग्निनोक्तं पुराणं यदाग्नेयं वेदसंमितम् ।
भुक्तिमुक्तिप्रदं पुण्यं पठतां शृण्वतां नृणाम् ॥
ब्रह्माऽऽग्नेयं पुराणं यत्सर्वं सर्वस्य कारणम् ।
सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च ।
वंशानुचरितादेश्च मत्स्यकूर्मादिरूपधृक् ॥
द्वे विद्ये भगवान्विष्णुः परा चैवापरा द्विज ।
ऋग्यजुःसामाथर्वाख्या वेदा अङ्गानि षड् द्विज ॥
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दोभिधानं मीमांसा धर्मशास्त्रं पुराणकम् ॥
न्यायो वैद्यकगान्धर्वं धनुर्वेदोऽर्थशास्त्रकम् ।
अपरेयं परा विद्या यया ब्रह्माधिगम्यते ॥

पञ्चविंशतिः तन्त्राणि

[3]प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया ।
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसंख्यया ॥
[4]हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम् ।
वैभवं पौष्करं तन्त्रं प्रह्लादं गार्ग्यगालवम् ॥

(१) अग्नि. १।५.

(२) अग्नि. १।९–१०, १३–१७.

(३) अग्नि. ३९।१–२ ; वीमि. १।३ पृ. ११ व्यस्तानि ( व्यक्तानि ).

(४) अग्नि. ३९।२–३ ; वीमि. १।३ पृ. ११ प्रह्लादं ( प्राह्लादं ) गालवम् ( मालवम् ).

[1]नारदीयं च श्रीप्रश्नं शाण्डिल्यं चैश्वरं तथा ।
सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरम् ॥
[2]स्वायंभुवं कापिलं च तार्क्ष्यं नारायणीयकम् ।
आत्रेयं नारसिंहाख्यमानन्दाख्यं तथाऽऽरुणम् ।
बौधायनं तथाऽष्टाङ्गं विश्वोक्तं तस्य सारतः ॥

पुराणसंहिता सूतोक्ता

[3]पुराणसंहितां चक्रे सूतो व्यासप्रसादतः ॥

मन्वादयः विंशतिः स्मृतिकर्तारः , तुल्यबल-विरोधे विकल्पः , स्मृतिः वेदानुवादिनी, विशेषविधिः अनुवादः

पुष्कर उवाच–

[4]मनुर्विष्णुर्याज्ञवल्क्यो हारीतोऽत्रिर्यमोऽङ्गिराः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
आपस्तम्बोशनोव्यासा कात्यायनबृहस्पती ।
गोतमः शङ्खलिखितौ धर्ममेते यथाऽब्रुवन् ।
तथा वक्ष्ये समासेन भुक्तिमुक्तिप्रदं शृणु ॥
[5]तुल्यार्थानां विकल्पः स्याद्यागमूलः प्रकीर्तितः ।
वेदे तु विहितो धर्मः स्मृतौ तादृश एव च ॥
अनुवादं स्मृतिः सूते कार्यार्थमिति मानवाः ।
गुणार्थः परिसंख्यार्थो वाऽनुवादो विशेषतः ।
विशेषदृष्ट एवासौ फलार्थं इति मानवाः ॥

षट् सूतशिष्याः पुराणसंहिताकर्तारः , पुराणानां श्लोकसंख्या विषयाश्च

[6]प्राप्य व्यासात्पुराणादि सूतो वै लोमहर्षणः ।
सुमतिश्चाग्निवर्चाश्च मित्रयुः शिंशपायनः ॥

(१) अग्नि. ३९।३–४ ; वीमि. १।३ पृ. ११ श्रीप्रश्नं ( माण्डव्यं ) चैश्वरं ( वैश्वकं ).

(२) अग्नि. ३९।४–५ ; वीमि. १।३ पृ. ११–१२ मानन्दा ( मानदा ) तथाऽष्टाङ्गं ( तथावार्णम् ) विश्वोक्तं तस्य सारतः ( इत्युक्तस्तस्य विस्तरः ).

(३) अग्नि. १५०।३१.

(४) अग्नि. १६२।१–३.

(५) अग्नि. १६६।७–९.

(६) अग्नि. २७१।११–१२.

कृतव्रतोऽथ सावर्णिः षट् शिष्यास्तस्य चाभवन् ।
शांशपायनादयश्चक्रुः पुराणानां तु संहिताः ॥
पुष्कर उवाच–
[1]ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ।
लक्षार्धार्धं तु तद्ब्राह्मं ... ... ... ॥
पाद्मं द्वादशसाहस्रं ... ... ... ॥
वाराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
त्रयोविंशतिसाहस्रं वैष्णवं प्राह ... ॥
चतुर्दश सहस्राणि वायवीयं हरिप्रियम् ।
श्वेतकल्पप्रसङ्गेन धर्मान्वायुरिहाब्रवीत् ॥
यत्राधिकृत्य गायत्रीं कीर्त्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ।
अष्टादश सहस्राणि ... ... ... ॥
यत्राऽऽह नारदो धर्मान् बृहत्कल्पाश्रितानिह ।
पञ्चविंशसहस्राणि नारदीयं तदुच्यते ॥
... ... नवसाहस्रं मार्कण्डेयम् ... ... ॥
अग्निना वसिष्ठाय प्रोक्तं चाऽऽग्नेयमेव तत् ।
द्वादशैव सहस्राणि सर्वविद्यावबोधनम् ॥
चतुर्दश सहस्राणि भविष्यं सूर्यसंभवम् ।
भवस्तु मनवे प्राह ... ... ... ... ॥
सावर्णिना नारदाय ब्रह्मवैवर्तमीरितम् ।
रथंतरस्य वृत्तान्तमष्टादशसहस्रकम् ॥
यत्राग्निलिङ्गमध्यस्थो धर्मान्प्राह महेश्वरः ।
आग्नेयकल्पे तल्लिङ्गमेकादशसहस्रकम् ॥
चतुर्विंशसहस्राणि वाराहं विष्णुनेरितम् ।
भूमै(? भूम्यै) वराहचरितं मानवस्य प्रवृत्तितः ॥
चतुरशीतिसाहस्रं स्कान्दं स्कन्देरितं महत् ॥
वामनं दशसाहस्रं ... ... ... ॥
कूर्मं चाष्टसहस्रं च कूर्मोक्तं च रसातले ॥
त्रयोदश सहस्राणि मात्स्यं कल्पादितोऽब्रवीत् ।
मत्स्यो हि मनवे ... ... .... ... ॥
गारुडं चाष्टसाहस्रं विष्णूक्तं तार्क्ष्यकल्पके ॥

(१) अग्नि. २७२।१–८, १०–२३.

ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्तु यत् ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं ... ... ... ॥

वेदादिवाङ्मयस्य परः पुरुषः कारणम्

[2]अनादिरादिमान्यश्च स एव पुरुषः परः ।
लिङ्गेन्द्रियैरुपग्राह्यः स विकार उदाहृतः ॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं भवेत् ॥

अग्निहोत्रिणां स्वर्गमार्गः, धर्मप्रवर्तका मुनयः

पितृयानोपवीथ्याश्च यदगस्त्यस्य चान्तरम् ।
तेनाग्निहोत्रिणो यान्ति प्रजाकामा दिवं प्रति ।
ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः ॥
अष्टाशीतिसहस्राणि मुनयो गृहमेधिनः ।
पुनरावर्तने बीजभूता धर्मप्रवर्तकाः ॥
‡सप्तर्षिनागवीथ्याश्च देवलोकं समाश्रिताः ।
तावन्त एव मुनयः सर्वारम्भविवर्जिताः ॥
तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया ।
यत्र यत्रा(? तत्र गत्वाऽ)वतिष्ठन्ते यावदा-भूतसंप्लवम् ॥

## शिवपुराणम्

वेदवेदाङ्गधर्मशास्त्रपुराणादीनामष्टादशविद्यानां कर्तारः क्रमेण शिवतत्पुत्रप्रजापतिव्यासाः

[3]रोमहर्षण सर्वज्ञ भवान्वै भाग्यगौरवात् ।
पुराणविद्यामखिलां व्यासात्प्रत्यक्षमीयिवान् ॥
[3]अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

‡ एते आध्यात्मिकधर्मप्रवर्तका इति एतादृशयाज्ञवल्क्यवचनव्याख्याने मिताक्षरायामुक्तम् ।

(१) अग्नि. ३७६।२९–३५.

(२) वाल. १।४–५ पृ. ११ शैवपुराणे वायवीयसंहितायाम्.

(३) वाल. १।४–५ पृ. ११ शैवपुराणे वायवीयसंहितायाम्; सस्मृ. ११ विद्यानामेतासां (एतासां विद्यानां) वायुसंहितायाम्.

**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् ।**
**अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः ॥**

**अष्टादशानां विद्यानामेतासां भिन्नवर्त्मनाम् ।**
**आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः॥**

शिवार्कमणिदीपिकायाम्— ¶अष्टादशानामिति । चत्वारो वेदाः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि, पुराणन्यायमीमांसाधर्मशास्त्राणि, आयुर्वेदधनुर्वेदगान्धर्वार्थशास्त्ररूपाश्चत्वारः ऋग्वेदाद्युपवेदाश्चेति अष्टादश विद्यास्थानानि (। तानि ) विद्योत्पत्तिस्थानत्वात् इह विद्याशब्देन लक्ष्यन्ते । तानि प्रधानोपसर्जनभावेन एकफलपर्यवसायित्वेऽपि द्वारभेदेन भिन्नवर्त्मानि । तत्र ब्रह्माराधनभूतकर्मोपासनाद्वारेण साक्षाच्च §ब्रह्मप्रतिपादकाः चत्वारो वेदाः प्रधानभूताः । तदीयस्वरवर्णपदतदर्थविचारणोपायभूतानि शिक्षाव्याकरणनिरुक्तानि । तदुक्ताग्निहोत्रादिकर्मानुष्ठानप्रकारप्रतिपादकः कल्पः । ( कर्माङ्ग )मन्त्रेषु ज्ञातव्यानां गायत्र्यादिच्छन्दसां निर्णायकं छन्दः । कर्माङ्गकालविशेषनिर्णायकं ज्योतिषम् । सृष्टिवाक्याद्यर्थप्रपञ्चनेन पारमेश्वरमहाविभूत्युपबृंहणार्थानि पुराणानि । वेदान्ततात्पर्यनिर्णयानुकूलषड्विधलिङ्गान्तर्गतोपपत्तिरूपानुमानतत्परिकरशोधनार्थं न्यायशास्त्रम् । वेदार्थनिर्णयानुकूल(न्याय)विचारात्मिका मीमांसा । वर्णाश्रमगुणनिमित्तसाधारणधर्मप्रतिपादकं धर्मशास्त्रम् । सकलानुष्ठानसाधनदेहपाटवार्थं आयुर्वेदः । ‡ राज्यपालनोपयोग्यस्त्रजातज्ञानार्थो धनुर्वेदः । सकलदेवताप्रीणनगीतिज्ञानार्थं गान्धर्वम् । दृष्टादृष्टोपयोगिधनार्जनोपायज्ञानार्थम् अर्थशास्त्रम् । वैदिकहरिश्चन्द्राद्युपाख्यानार्थप्रपञ्चनपराणामितिहासानां वैदिकदेवतातदाराधनविशेषप्रतिपादकानामागमानां च पुराणशब्देनैव संग्रहः । सर्वेषामेषां विद्यास्थानानामादिकर्ता सर्गाद्यकालेषु प्राथमिकः कर्ता शूलपाणिः । अत्र श्रुतिः ( — ‘छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्’ ) इति । ( न चायमध्यापकरीत्या तत्तद्विद्यास्थानगतवर्णावलीमात्ररचयिता, किंतु साक्षात् कविः । अर्थविशेषानुपलभ्य श्लोकादिनिर्मातारो हि कवयः । ते च परमेश्वरादन्ये पूर्वपूर्वकविच्छायापत्त्या कवयः, अयं तु साक्षात् कविः स्वयमेव तत्तदर्थमुपलभ्य सर्वेषां विद्यास्थानानां निर्माता । अत्रापि श्रुतिः— ‘तदेव ब्रह्म परमं कवीनाम्’ इति । ) । सस्मृ. ११–१३

**‘ब्रह्माणं विदधे साक्षात्पुत्रमग्रे सनातनम् ।**
**तस्मै प्रथमपुत्राय ब्रह्मणे विश्वयोनये ।**
**विद्याश्चेमा ददौ पूर्वं विश्वसृष्ट्यर्थमीश्वरः ॥**
**लब्धविद्येन तेनापि प्रजासृष्टिं वितन्वता ।**
**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ॥**
**अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।**
**प्रवृत्तिः सर्वशास्त्राणां तन्मुखादभवत्तदा ॥**
**यदाऽस्य विस्तरं शक्ता नाधिगन्तुं प्रजा भुवि ।**
**तदा विद्यासमासार्थं शंकराज्ञाप्रचोदितः ॥**
**द्वापरान्तेषु विश्वात्मा विष्णुर्विश्वजगन्मयः ।**
**अवतीर्य चरत्यस्मिन् व्यासनामा महीतले ॥**

---

¶ अनुवादोऽयमशुद्धत्वात् शिवार्कमणिदीपिकामनुसृत्य शोधितः । अन्ते ‘अतः(? अत्र) श्रुतिरिति’ इतिग्रन्थदर्शनात् साक्षात्कविपदयोर्व्याख्यानादर्शनाच्च साकाङ्क्षत्वन्यूनत्वहेतुभ्याम् ‘अत्र श्रुतिः’ इत्यादिः शिवार्कमणिदीपिकायां स्थितो ग्रन्थोऽपि ग्रन्थकर्त्रा समुद्धृतोऽपि लेखकादिप्रमादात् परिभ्रष्टः स्यादिति संभाव्य तत एवात्र समुद्धृतः ।

§ अत्र ब्रह्मप्रतिपादकपदार्थैकदेशो ब्रह्मप्रतिपादनं शब्दकरणकब्रह्मपरोक्षज्ञानजननरूपं रूढं न युज्यते, तत्र कर्मोपासनयोर्द्वारत्वायोगात् तद्द्वारकब्रह्मप्रतिपादनसमुच्चयानुपपत्तेः । अतोऽत्र ‘अहं ब्रह्मास्मि’ इतिसाक्षात्कारजननरूपं ब्रह्मप्रतिपादनं ग्राह्यम् । तथा सति चित्तशुद्धिचित्तैकाग्र्यद्वारा साक्षात्कारौपयिकयोः कर्मोपासनयोर्वेदैर्ब्रह्मप्रतिपादने द्वारत्वं युज्यते, उक्तसाक्षात्कारस्य ‘तत्त्वमसि’ इतिवेदवाक्यजन्यत्वस्य शास्त्रसिद्धान्तत्वात् साक्षात्त्वमपि युज्यते ।

‡ राज्यस्य वेदोक्तलोकमर्यादारक्षणार्थत्वेन तद्द्वारा धनुर्वेदस्य वेदोत्सर्जनत्वम् । एवमन्यत्रापि वेदसंबन्धो योज्यः ।

(१) सस्मृ. ७–९ वायुसंहितायाम् .

स पुनर्द्वापरे चास्मिन् कृष्णद्वैपायनाख्यया ।
अरण्यामिव व्यासः स सत्यवत्यामजायत ॥
मतिमान् धनवान् विद्वानेवं वेदमहार्ण-
वान्(? त्) ।
प्रकाशो जनितो लोके महाभारतचन्द्रमाः ॥
संक्षिप्य च पुनर्वेदांश्चतुर्धा कृतवान् प्रभुः ।
व्यस्तवेदतया लोके वेदव्यास इतीरितः ॥

वेदसमुपबृंहणमितिहासपुराणाभ्याम्,
पुराणं पञ्चलक्षणम्

पुराणमपि संक्षिप्तं चतुर्लक्षप्रमाणतः ।
अद्यापि देवलोके तु शतकोटिप्रविस्तरम् ॥
यो विद्याच्चतुरो वेदान् साङ्गोपनिषदोऽपि च ।
न चेत्पुराणं संवेद्यं नैव स स्याद्विचक्षणः ॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

अष्टादश पुराणानि, तेषां दश शैवानि, चत्वारि
वैष्णवानि, द्वे ब्राह्मे, एकम् आग्नेयम्, एकं सौर्यम्

दशधा चाष्टधा चैतत्पुराणमुपदिश्यते ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
भविष्यं नारदीयं च मार्कण्डेयमतः परम् ॥
आग्नेयं ब्रह्मकैवर्तं लैङ्गं वाराहमेव च ।
स्कान्दं च वामनं चैव कौर्मं मात्स्यं च
गारुडम् ॥
ब्रह्माण्डं चैव पुण्योऽयं पुराणानामनुक्रमः ।
अष्टादशपुराणेषु दशभिः कथ्यते शिवः ॥
चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः ।
एकेनाग्निरथाऽऽदित्य एकेनेत्येवमर्थतः ॥

शैवागमः श्रौतः स्वतन्त्रश्च

[1]शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च संस्मृतः ।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः ॥

(१) पप्र. २२ वायुसंहितायाम्; सस्मृ. २२ अशुद्धिबहुलो ग्रन्थः, वायुसंहितायाम्.

अत्र शैवागमोऽपि द्विविध इत्यपिना स्वसमानयोगक्षेमवैष्णवपञ्चरात्राद्यागमानामपि श्रौताश्रौतभेदेन द्वैविध्यमुक्तं भवति । उक्तं च पञ्चरात्रादेर्वैदिकत्वं हेमाद्रौ विष्णुधर्मोत्तरे– ‘ सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥ संसारक्षपणे स्वर्गभावोपकरणेषु च । सेतुरा वैष्णवाद्धर्मात्सारमेतत्प्रकीर्तितम् । एतावानेव सकलो वेदमार्गस्त्वुदीरितः ॥ ’ इति । पप्र. २३

[1]स्वतन्त्रो दशधा पूर्वं तथाऽष्टादशधा पुनः ।
कामिकादिसमाख्याभिः सिद्धः सिद्धान्त-
संज्ञितः ॥
श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः ।
परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥
[2]इतिहासपुराणं च पञ्चमो वेद उच्यते ॥

जैमिनिव्यासाभ्यां पूर्वोत्तरमीमांसाप्रणयनं
वेदार्थनिर्णयाय

[3]वेदा(न्ता)र्थास्तु सर्वेषां नाना भान्ति न
चैकधा ।
अतस्तेन कथं ब्रह्म (ज्ञा)नात्यल्पमतिः पुमान् ॥
इति संचिन्त्य मतिमान् पुनः कारुणिकोत्तमः ।
सूत्रयामास वेदान्तवाक्यार्थं शंकराज्ञया ॥
कर्मकाण्डस्य ( सर्वेषां ) वाक्यानामर्थनिर्णये ।
नियुक्तो जैमिनिस्तेन मुनिना करुणात्मना ॥
सोऽपि तस्य प्रसादेन महादेवप्रसादतः ।
सूत्रमायास वेदार्थमध्यायैर्द्वादशैर्मुनिः ॥
दृष्ट्वा तु भगवान् ( व्यासो ) वाचा चैन-
मपूजयत् ।
सूत्राण्यध्यापयामास स्वकीयानि गुरुः स्वयम् ॥
जैमिनिप्रमुखान् शिष्यान् पुनश्चैतानु(वाच सः) ।
निःश्रेयसानु(? य) लोकानामवतारो मया कृतः ।
सोऽहं वेदांस्तु...... व्यस्तवानिह पुत्रकाः ॥

(१) पप्र. २२–२३; सस्मृ. २२.
(२) सस्मृ. १२१ शैवे रुद्रसंहितायाम्.
(३) सस्मृ. १२२–१२३ शैवे एकादशे रुद्रसंहितायाम्.

स्त्रीशूद्रद्विजबन्धूनामहं निःश्रेयसाय हि ।
इतिहासपुराणानि कृतवान् संग्रहेण वा ॥
काण्डद्वयस्य वेदस्य सम्यगर्थस्तु दर्शितः ।
मत्कृतेन च सूत्रेण जैमिमीयेन चानघ ॥
ममावतारः सफलो जात एव न संशयः ।
इतः परं समाधौ तु स्थातव्यमिति मे मतिः ॥
यूयं मच्छासनात्सर्वे वेदमार्गमिमं शुभम् ।
स्थापयध्वं प्रयत्नेनेत्युक्त्वा कृष्णं( ? तूष्णीं )
बभूव ह ॥

## नन्दिपुराणम्

### श्रुतिः स्मृतिश्च धर्मे प्रमाणम्

[1]श्रुतिः स्मृतिश्च विप्राणां चक्षुषी द्वे प्रकीर्तिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥

स्मृतयः धर्मशास्त्राणि । तासां प्रणेतार ऊनविंशतिमहर्षयो याज्ञवल्क्येनोक्ताः— 'मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनाङ्गिराः । यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती । पराशरव्यासशङ्खलिखिता दक्षगोतमौ । शातातपो वशिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥' ।

विपा. ४।२९९

## मानवपुराणम्

### अवैदिकस्वतन्त्रागमाः प्रमाणं शापभ्रष्टब्राह्मणानां कठोरप्रायश्चित्तभीतानां च

[2]स्वतन्त्रागमाः( ? न्त्रा आगमाः ) सर्वे निर्मूलाः
परिकीर्तिताः ।
अधिकारविशेषेण प्रवृत्ता न हि संशयः ॥
ब्रह्मविष्णुमहादेवप्रमुखैः परिकीर्तिताः ।
आगमाश्चानया नेया दिशा नैवान्यथा बुधाः ।
अन्यथा ते तु नेयाश्चेद्विरुद्धा( ? द्धं ) स्यान्न
संशयः ॥

[3]अतश्च वेदा वेदान्तास्तन्मूलान्यखिलानि च ।
धारणीयानि संशुद्धयै त्याज्यान्येवापराणि च ॥

इतोऽन्यानि तु शास्त्राणि लोकेऽस्मिन्यानि
कानि च ।
न तेषु रमते धीरः पाषण्डो रमते यदि ॥
ब्राह्मणैश्च पुरा सर्वैर्गौतमेन सुरक्षितैः ।
विचार्य कार्यं संभूय स्वदेशगमनोद्यतैः ॥
गौर्हता गौतमेनेति निर्घृणैः पुरुषाधमैः ।
कृतो मिथ्याभिशापस्तु महामोहवशेन तु ॥
तच्छ्रुत्वा स मुनिः श्रीमान् गौतमो मुनिसत्तमः ।
महाक्रोधेन संयुक्तः शशाप ब्राह्मणाधमान् ॥
यद्यत्तु रुद्रसंबधि तत्र तत्रापि दुर्जनाः ।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः ॥
स्वाध्याये च जपे चैव तथा प्रवचनेऽपि च ।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः ॥
श्रुतिस्मृतिपुराणोक्तेष्वर्थेषु सकलेषु च ।
शङ्खचक्रगदापद्मदण्डपाशाङ्कुशादिभिः ।
अङ्किताः श्रद्धया यूयं भवतो( ? त ) ब्राह्मणाधमाः ॥

[1]बौद्धे चाप्यार्हते चैव तथा पाशुपतेऽपि च ।
शांभवे दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥
[2]पाषण्डेषु तथाऽन्येषु मार्गेष्वश्रौतकेषु च ।
श्रद्धया दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥
वर्तुलाश्वत्थपत्रार्धचन्द्रचूलादिलिङ्गिनः ।
भवत श्रद्धया सार्धं ललाटे ब्राह्मणाधमाः ॥

अश्वत्थपत्रलिङ्गी बौद्धः । मुक्ता. २९८

[3]पाञ्चरात्रे च कापाले तथा कालामुखेऽपि च ।
शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥
[4]वेदप्रस्खलितो मर्त्यो वेदोक्तेनैव वर्त्मना ।
प्रायश्चित्तोऽबुधो( ? त्ताम्बुधेर् ) भीतो विरुद्धं
मार्गमाश्रयेत् ॥

(१) विपा. ४।२९९. (२) सस्मृ. २५.
(३) मुक्ता. २९७–२९८.

(१) मुक्ता. २९८ : ३०६ वाराहे.
(२) मुक्ता. २९८.
(३) मुक्ता. २९८ पाञ्च ( पञ्च ) : ३०१ (=).
(४) मुक्ता. २९८.

**मार्गो वेदविरुद्धो यः सोऽपि कालेन देहिनाम्।**
**तत्तन्मार्गाभिमानिन्या देवतायाः प्रसादतः।**
**हेतुः स्याद्वेदमार्गस्य प्राप्तये न निरर्थकः॥**

## कालिकापुराणम्

अष्टादशपुराणेषु मूलभागवतं कालिकापुराणम्, नेति टीकाकारः

**'शैवं यद्वायुना प्रोक्तं वैरञ्चं सौरमेव च।**
**यदिदं कालिकाख्यं तन्मूलभागवतं स्मृतम्॥**

वायवीयमेव शैवमिति कालिकापुराणे 'शैवं यद्वायुना प्रोक्तं वैरञ्चं सौरमेव च।' इत्यादिना व्यक्तम्। वायुपुराणादभिव्यक्तं शैवमुपपुराणमित्यर्थ इत्यन्ये। अग्निपुराणं वह्निपुराणत्वेन गणितं पुराणगणनायाम्। कालिकापुराणे एव 'यदिदं कालिकाख्यं तन्मूलभागवतं स्मृतम्।' इत्युक्तम्। इदमुपपुराणमित्यग्रे वक्ष्यते। केचित्त्विदमेव (भागवत )पुराणम्, न प्रसिद्धम्, प्रसिद्धभागवते सारस्वतकल्पाद्यदर्शनात्; मात्स्ये 'अष्टादश पुराणानि कृत्वा सत्यवतीसुतः। भारताख्यानमखिलं चक्रे तदुपबृंहितम्॥' इत्युक्तेः प्रसिद्धभागवते भारतोत्तरं निर्विण्णो व्यासश्चकारेत्युक्तेर्विरोधदर्शनात्; भारते शान्तिपर्वणि भीष्मेण युधिष्ठिरं प्रति धर्मोपदेशप्रस्तावे मुक्तिरुक्तेति कुत एव परीक्षित्पर्यन्तं शुकानुवृत्तिरिति विरोधाच्च; विष्णुपुराणे च बौद्धावतारोक्तौ 'मायामोहं ददौ हरिः' इत्युक्तम्, प्रथमस्कन्धे तु इक्ष्वाकुवंशस्य जिनस्यैव बौद्धत्वमिति विरोधाच्च। इत्यादिभिर्हेतुभिरेव श्रीधरेणापि संदिग्धमित्याहुः। वस्तुतस्तु तत्र सारस्वतकल्पाद्यदर्शनेऽपि तन्मध्यस्थनराधमवृत्तान्तोद्भवत्वमत्राक्षतं 'यत्राधिकृत्य' इत्युक्तलक्षणान्तरवत्। भारतोत्तरमेतन्निर्माणेऽपि 'अष्टादश पुराणानि कृत्वा सत्यवतीसुतः। भारताख्यानमखिलं चक्रे तदुपबृंहितम्॥' इति मात्स्यविरोधो न, सप्तदशानां बाह्यत्वेनापि तस्य च बौद्धत्वेन करणात्, वैष्णवस्य बाह्यत्वेन कृतत्वेन स्मृत्युक्तधर्मांशे तथा कथनापेक्षाया अभावात् (?)। अत एव निर्विण्ण इति तत्र विशेषणं संगतम्। शान्तिपर्वणि मुक्तिकथनमपि शुकस्य वैकुण्ठगमनपरमिति परीक्षित्पर्यन्तं शुकानुवृत्तिसत्त्वात्तद्विरोधोऽपि न। बौद्धावतारविषये विष्णुपुराणविरोधोऽपि न, अजिनसुत इति पाठवज्जिनसुत इति पाठे नामतौल्येऽपि व्यक्तिभेदेन इक्ष्वाकुवंशस्य जिनस्याबौद्धत्वात्। श्रीधरसंदेहाशयस्यान्यस्यान्यत्र प्रतिपादितत्वेन तदपि नात्र साधकम्। युक्तं चैतत्। अन्यथा कालिकापुराणभागवतयोरुपपुराणत्वप्रतिपादकवक्ष्यमाणकौर्मविरोधो दुर्निवार एवेति बोध्यम्। सौरपुराणं च ब्रह्मपुराणादभिनिर्गतमुपपुराणम्। बाल. १।३ पृ. ७

**'सौरं च नारदीयं च मार्कण्डीयं च वह्निजम्।**
**वामनं कौर्मं मात्स्यं च सप्तदशं च गारुडम्।**
**ब्रह्माण्डमष्टादशं ज्ञेयं पुराणं च न संशयः॥**

## साम्बपुराणम्

श्रौतकठोरप्रायश्चित्तभीतानां कृते तन्त्रागमाः प्रमाणम्

**‡'श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः।**
**क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत्॥**

तन्त्राधिकारी निरूपितः पाराशर्ये– श्रुतिभ्रष्ट इति। मुक्ता. २९८

**'धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम्।**
**प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम्॥**
**भयं दुर्बलचित्तानां मरणे जायते ध्रुवम्।**
**तेषामेवाभिरक्षार्थं तन्त्रं कल्पितवान्प्रभुः॥**

---

(१) चव. २२ वैरञ्चं (वैरिञ्चिं) तन्मूलभा (यन्मूलं भा); चवा. ५३१ वैरञ्चं (वैरिञ्चिं) सौरमेव च (वैष्णवं तथा) तन्मूलभा (च मूलं भा); बाल. १।३ पृ. ७ उत्तरार्धे व्याख्यानेन व्यवहितम्.

‡ अस्य वचनस्य पप्रव्याख्यानमस्मिन्नेव प्रकरणे याज्ञवल्क्यस्य 'पुराणन्याय०' इति श्लोके (वका. पृ. १३२–१३३) द्रष्टव्यम्।

(१) चवा. ५३१.

(२) मुक्ता. २९ श्रुतिप्रो (स्मृतिप्रो) ते भयं (तेऽभयं) पाराशर्ये; पप्र. २४; सस्मृ. २७ क्रमेण (क्रमणे) घ्यस्तन्त्र (घ्यं तु स).

(३) सस्मृ. २७–२८.

[1]पञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥

## सौरपुराणम्

पुराणं पञ्चलक्षणम्, उपपुराणं मनवे सूर्यप्रोक्तं सौरम्, अष्टादशपुराणानां श्लोकसंख्या वक्तारश्च

[2]यदुक्तं भानुना पूर्वं पुत्राय मनवे द्विजाः ।
तदहं संप्रवक्ष्यामि शृणुध्वं गदतो मम ॥
[3]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
[4]अत्र नोपपुराणानां खिलत्वाल्लक्षणं स्मृतम् ॥
[5]ब्राह्मं पुराणं तत्राऽऽद्यं संहिताभ्यां विभूषितम् ।
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥
पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् ।
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ॥
[6]ततो भागवतं प्रोक्तं भागद्वयविभूषितम् ॥
चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनन्तरम् ।
मार्कण्डेयमथाऽऽग्नेयं नारदीयमतः परम् ॥
[7]दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ।
भागद्वयेन संयुक्तं ततो वाराहमुत्तमम् ॥
[8]संयुक्तमष्टभिः खण्डैः स्कान्दं चैव सविस्तरम् ।
ततस्तु वामनं कौर्मं भागद्वयविराजितम् ॥

(१) विपा. ३।२।५।१९.
(२) चबा. ५३१.
(३) चबा. ५३१ वंशो म ( वंशम ); विपा. ४।३०३.
(४) चबा. ५३१ अत्र नो ( यत्नतो ) खिलत्वाल्ल ( लिखित्वा ल ); विपा. ४।३०३.
(५) चबा. ५३२; विपा. ४।३०४.
(६) चबा. ५३२; विपा. ४।३०४ भागवतं ( भागद्वयं ) द्वय ( त्रय ) विष्यं त ( विष्यत्त ).
(७) चबा. ५३२ लैङ्ग ( लिङ्ग ) संयुक्तं ( लिङ्गं च ); विपा. ४।३०४.
(८) चबा. ५३२ चैव सवि ( चैवात्र वि ); विपा. ४।३०४ कौर्मं ( नाम ).

[1]मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम् ।
भागद्वयेन कथितं ब्रह्माण्डमिति संज्ञितम् ॥
[2]खिलान्युपपुराणानि यानि चोक्तानि सूरिभिः ।
इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ॥
[3]संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ।
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ॥

सौरपुराणं च ब्रह्मपुराणादभिनिर्गतमुपपुराणम् । तदुक्तं सौरपुराणे— इदमिति ।

बाल. १।३ पृ. ७–८

[4]इयं पुण्यतमा ख्याता संहिता पापनाशिनी ॥
वैवस्वताय मनवे कथिता रविणा पुरा ॥

## पराशरपुराणम्

शास्त्रलक्षणम्, अष्टादश उपपुराणानि, बौद्धादितन्त्राणि न प्रमाणानि वैदिकजनानाम्

[5]शासनाच्छन्दसां चैव शास्त्रमित्युच्यते बुधैः ।
शासनाद्वि( ? नं द्वि )विधं प्रोक्तं शास्त्रलक्षणवादिभिः ॥
तत्रैवं विधिरूपेण तदन्यत्प्रतिषेधतः ।
भूतवस्त्वेकविषयं शासनं क्रियया परम् ॥
[6]आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।
नन्द्याख्यं शिवधर्माख्यं दौर्वासं नारदीयकम् ॥
[7]कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं कालीपुराणाख्यं तथैव च ॥

(१) चबा. ५३२ मिति सं ( मभिसं ); विपा. ४।३०४.
(२) चबा. ५३२; बाल. १।३ पृ. ८ स्य खिलं ( स्याखिलं ) उत्त.
(३) चबा. ५३२; बाल. १।३ पृ. ८.
(४) चबा. ५३९.
(५) सस्मृ. ३–४.
(६) बाल. १।३ पृ. ८ हं ततः ( हमतः ) नन्द्या ( नादा ); आभू. ३१८.
(७) बाल. १।३ पृ. ८; आभू. ३१८.

'वासिष्ठं लैङ्गसंज्ञं च साम्बं सौरं तथैव च ।
पाराशरसमाख्यं च मारीचं भार्गवाह्वयम् ॥
† द्वितीयानि पाराशरपुराणे– आद्यमित्यादिभिः ।
आभू. ३१८

'पराशरसमाख्यं तु पुराणमिदमुत्तमम् ॥
'यत्तु तन्त्रानुरोधेन कथितं तत्परित्यजेत् ।
धर्मशास्त्रे पुराणे च यत्ततो वैदिको जनः ॥
वेदमूलतयाऽन्यानि प्रवृत्तान्यपि सत्तम ।
ब्रुवन्ति वेदबाह्यार्थं कदाचिच्च क्वचित्क्वचित् ॥
भाति प्रत्यक्षवेदेन यद्विरुद्धतया शुक ।
वैदिकैस्तत्परित्याज्यं न च बा(?ग्रा)ह्यं कदाचन ॥
बौद्धार्हतादिशास्त्रमवैदिकजनानां प्रमाणम् ,
न वैदिकानाम्

बौद्धो(क्त)मार्हतं शास्त्रं लोकायतिकसंज्ञितम् ।
पाषण्डं परमं शास्त्रं वैदिकस्तत्परित्यजेत् ॥
वर्णाश्रमधर्मा अपि तान्त्रिकाणां वैदिकानां च मतव्यवस्थयैव प्रयोक्तव्या इत्याह पराशरपुराणे– यदिति ।
सस्मृ. ३८

वेदबाह्यागमान् ब्राह्मान् वेदबाह्यांश्च वैष्णवान् ।
वेदबाह्यांस्तथा चान्यान् गृह्णीयान्नैव वैदिकः ॥
'अनुकूलस्तु वेदानामाचारस्तेषु यः स्मृतः ।
सोऽयं वैदिकनिष्ठानामिति वाञ्छन्ति केचन ॥
'तन्त्राणि तन्त्रनिष्ठानां रक्षकाण्यपि च क्रमात् ।
बाधकानि विशेषेण वेदमार्गैकवर्तिनाम् ॥

## देवीपुराणम्

शैवं वैदिकं च शास्त्रं प्रमाणम्

'द्रुतेन वपुषा पूर्णवक्त्रास्तिष्ठन्ति दुःखिताः ।
द्वेष्टारः शिवशास्त्राणां ये च वेदविदूषकाः ॥

## आदित्यपुराणम्

पञ्चरात्रागमः प्रमाणम्

'पञ्चरात्रप्रसक्ता ये न ते दुर्गतिमाप्नुयुः ॥
'समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥
समयः संवित् , सा च प्रतिज्ञा, 'समयाः शपथाचारकालसिद्धान्तसंविदः ।' इत्यमरोक्तेः । 'संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।' इति तेनैवोक्तेः ।
उत. ११३

## वासिष्ठलिङ्गपुराणम्

पूर्वोत्तरमीमांसे वैदिकमार्गसंस्थापके , अवैदिकमार्गगामिनां कृते वैष्णवबौद्धादितन्त्राणि

'विष्णुश्च लोकरक्षार्थं मूर्तिमाविश्य कामपि ।
राक्षसान्निखिलान् हत्वा स स्वापं च गमिष्यति ॥
मन्नियोगाद्धरिः साक्षादतीव श्रद्धया सह ।
कृष्णद्वैपायनो भूत्वा ब्रह्मचारी जितेन्द्रियः ।
वेदान्तानां प्रतिष्ठार्थं मुनेः(?निः) सूत्रं करिष्यति ॥
जैमिनिर्व्यासशिष्यस्तु ममाऽऽज्ञां तु समागतः ।
कर्मकाण्डप्रतिष्ठार्थं गृहस्थो नियतव्रतः ।
यज्ञदानतपोयुक्तः स्वयं सूत्रं करिष्यति ॥
उभाभ्यां संस्थिते(? तो) लोके वेदमार्गे(? र्गो) भविष्यति ।
वैदिके संस्थिते मार्गे स्थितं सर्वं भविष्यति ॥
'ततो विष्णोः प्रसादेन वेदमार्गातिवर्तिनाम् ।
शाण्डिल्यः संहितां चक्रे वैष्णवीं महतीं मुने ।
तस्यां चक्रुर्मुने दीक्षां पाषण्डाः पापयोनयः ॥

---

† उपपुराणानीत्यर्थः ।

(१) बाल. १।३ पृ. ८ ; आभू. ३१८ वासिष्ठं लै (वासिष्ठलै).

(२) बाल. १।३ पृ. ८.

(३) सस्मृ. ३८–३९.

(४) सस्मृ. १९०.

(५) मुक्ता. २९८.

(६) अप. १।७ पृ. १०.

(१) निप. ५०९.

(२) स्मृच. १।३१ (=) ; पमा. १।१२७ (=) ; उत. ११३ ; चमव्या. ५२ (=) ; मुक्ता. १४ धर्मशास्त्रसुधानिधौ ; सम. १०९ (=) ; स्मृतिको. ४७७ (=) ; सस्मृ. ९६ साधूनां (जन्तूनां) धर्मशास्त्रसुधानिधौ.

(३) सस्मृ. १७–१८.

(४) मुक्ता. २९७.

[1]केचित्कापालमिच्छन्ति केचित् पाशुपतं मुने ।
केचिद्बौद्धं प्रशंसन्ति केचिद्दैगम्बरं मुने ॥
केचिल्लोकायतं ब्रह्मन्केचिद्वामं महामुने ।
केचिद्भैरवमिच्छन्ति केचिच्छाक्तं तथैव च ॥
शांभवं केचिदिच्छन्ति यामलं भुवि केचन ॥
अन्यानि यानि शास्त्राणि विरुद्धानि महामुने ।
स्वतःप्रमाणभूतेन वेदेन मुनिसत्तम ॥
तान्येव श्रद्धया युक्ताः परिगृह्य द्विजातयः ।
आचरन्ति महामूढा युगान्ते समुपस्थिते ॥

## अचिन्त्यविश्वसादाख्यतन्त्रम्

शैवागमसारभूतः विश्वसादाख्यः आगमः

ईश्वर उवाच–

[2]साधु साधु महानन्दिन् शृणु वक्ष्ये समासतः ।
शिवागमसमुद्रे तु सारमादाय सर्वतः ॥
कण्ठात्कण्ठगतं ज्ञानं युक्तं देवैः सुदुर्लभम् ।
अप्रकाश्यमिदं ज्ञानं गुह्याद्गुह्यतरं परम् ॥
प्रकाशितं मया नन्दिन् तव स्नेहाद्विशेषतः ।
अचिन्त्यं विश्वसादाख्यं ग्रन्थमष्टसहस्रकम् ॥
ज्ञानयुक्तं क्रियाचर्यासंयुक्तं चोत्तरोत्तरम् ॥

## मोहकूर्मोत्तरतन्त्रम्

शैवागमः अबाध्यः वेदेन आगमेन च

[3]पुराणं बाध्यते वेदैरागमैश्च तदुक्तयः ।
सामान्यं च विशेषं च शैवं वैशेषिकं वचः ॥

## सुप्रभेदतन्त्रम्

वेदसंमतः सिद्धान्तः

[4]श्रुत्युक्ताचारसंबन्धात्सिद्धान्तं वेदसंमतम् ।
श्रुत्युक्ताचारबाह्यत्वादन्यद्वेदबहिष्कृतम् ॥

(१) मुक्ता. ३०६–३०७.
(२) सस्मृ. ४४.
(३) सस्मृ. ४०.
(४) सस्मृ. ४०.

## संग्रहकारः

धर्मप्रवर्तकमुनीनां धर्मशास्त्राणि प्रमाणानि

[1]अष्टाशीतिसहस्राणि मुनयो गृहमेधिनः ।
पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥
एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येतानि प्रमाणानि न हन्तव्यानि हेतुभिः ॥
यस्तानि हेतुभिर्हन्यात्सोऽन्धे तमसि मज्जति ॥

उपस्मृतिकर्तारोऽपि बहवः । तथा च संग्रहे– अष्टाशीति ... । एते मुनयो गृहस्थाश्रमनिष्ठाः आचारशिक्षणार्थं कल्पे कल्पे पुनरावर्तिनोऽधिकारिपुरुषाः । तादृशानां निबन्धानां कलादुत्सन्नत्वात्कलेरादौ विद्यमानैर्निबन्धनकारैस्तत्रत्यानि वचनानि लिखितानि । तानि परम्परयाऽद्यतनैर्निबन्धनकारैरपि लिख्यन्ते । न ह्यद्य लोकाक्षिच्छागलेयादीनां ग्रन्थाः क्वचिद्दृश्यन्ते, क्वचिद्देशे केचन ग्रन्थाः प्रवर्तन्ते, केचिदुत्सन्नाश्च । अतः प्रसिद्धाष्टादशस्मृत्यविरुद्धान्युपस्मृत्यविरुद्धानि च स्मृत्यन्तरवचनानि निबन्धनकारैः संवादार्थं लिखितानि । तत्र यानि पुनर्मनुविरुद्धानि तानि त्याज्यानि । तदाह श्रुतिः– 'यद्वै किंच मनुरवदत्तद्भेषजम्' इति । अङ्गिराश्च– 'यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम् । न हि तत्समतिक्रम्य वचनं हितमात्मनः ॥ वेदादुपनिबद्धत्वात्प्राधान्यं तु मनोः स्मृतम् । मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥' इति । आन. ११–१३

[2]बौधायनादिभिः प्रोक्तं विधानं धर्मनिर्णये ।
तदन्यथा हेतुवादैः कुर्वन् गच्छत्यधोगतिम् ।
आयुषा च प्रहीयेत गुर्वधिक्षेपदोषतः ॥

श्रुतिस्मृतिपुराणानां पूर्वं पूर्वं बलीयः

[3]श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ।
पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः ॥

(१) मुक्ता. ८–९ ; आन. ११–१२.
(२) संर. ६०३.
(३) प्रपा. ३ ; मुक्ता. ७ ; संम. २ ; इस्मु. ३.

## स्मृत्यर्थसारः

समयाचाराः ग्रामाचाराः युगधर्माश्च प्रमाणम्

[1]समयाचरिता धर्मा जातिदेशकुलोद्भवाः ।
ग्रामाचाराः परिग्राह्या ये च विध्यविरोधिनः ।
युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम् ॥

## अनिर्दिष्टकर्तृकवचनानि

श्रुतिस्मृतिरूपम् आर्षवाक्यं प्रमाणं प्रत्यक्षवत्

[2]आविर्भूतप्रकाशानामनुपप्लवचेतसाम् ।
अतीतानागतज्ञानां प्रत्यक्षं न विशिष्यते ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥
[3]श्रुतिस्मृती ममैवाऽऽज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी न स भक्तो न वैष्णवः ॥
[4]स्मृतिं विना न हि ज्ञानं धर्मस्य भवति क्वचित् ।
न जातु ज्ञायते रूपमालोकेन विना यथा ॥
[5]स्मार्तं च मनुरब्रवीत् ॥

यदि च वेदस्मृत्याचाराणां मन्वाद्युपदेशसमधिगम्यं प्रामाण्यम् , मन्वादीनां कथम् ? तत्राप्युपदेशान्तरात् 'स्मार्तं च मनुरब्रवीत्' इत्यादेः , तत्र कथम् ? तस्मादिदं प्रमाणमिदमप्रमाणमिति युक्तित एतदवसेयम्, नोपदेशतः । मेधा. २।६

[6]वेदाद्विज्ञायते धर्मस्तस्मिन्नेव व्यवस्थितः ।
प्राप्यते च तदभ्यासाच्छ्रुतिशीलाच्च तद्विदाम् ॥

(१) स्मृसार. २ ; आर्क. १ ( समयाचारिको धर्मो जातिदेशकुलोद्भवः । ग्रामाचाराः परिग्राह्याः सर्वत्रैव यथोदितम् ॥ ) ( = ) ; मपा. १५ प्रथमार्धे नास्ति, सारसंग्रहे ; इन्दु. २ ( सामयाचारिको धर्मो देशजातिकुलोद्भवः । ग्रामाचाराः परिग्राह्याः सर्वत्रैव यथोदितम् ॥ ) (=). (२) प्रपा. ३ धर्मोद्योते.

(३) पमा. २१८.

(४) प्रपा. २ स्मृतिरत्नावल्याम्; मुक्ता. ६ प्रपावत्.

(५) मेधा. २।६.

(६) प्रपा. २ च्छ्रुति ( त्स्मृति ) स्मृत्यर्णवे ; सस्मृ. ३ स्मृत्यर्णवे.

अष्टादश धर्मशास्त्रप्रवर्तकाः

[1]वेदविदो हि मन्वादयः ॥
‡[2]मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
[3]संवर्तोशनसौ शङ्खलिखितावत्रिरेव च ।
विष्णवापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ।
एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ॥

ब्राह्मं पुराणमाद्यम् , तस्मादष्टादश पुराणानि

[4]ब्राह्ममेव कृते चाऽऽद्यं पुराणं श्रुतिसंमितम् ।
अष्टादशविधं तच्च कृतकोटिप्रभेदतः ॥
पुराणसंहिताकर्ता द्वापरे व्यास एव च ॥

याज्ञवल्क्यस्मृतेः प्रामाण्यम्

[5]एकतः सर्वमुनयो याज्ञवल्क्यस्तथैकतः ।
यदुक्तवान् धर्मशास्त्रं तत्प्रमाणं प्रमीयताम् ॥

शङ्खलिखितयोः प्रामाण्यम्

§[6]आम्नायात्सम्यगुद्धृत्य शङ्खश्च लिखितस्तथा ॥

पुराणपाशुपतागमयोः प्रामाण्यम्

[7]पुराणं पञ्चमो वेदः पुराणं वेदसंमितम् ॥
[8]उमापतिः स्वयं चक्रे शास्त्रं पाशुपतं महत् ॥

‡ एतदादिश्लोकसंबन्धि विमव्याख्यानं तदाश्रिता टिप्पणी च 'कल्पे कल्पे क्षयोत्पत्त्या' इति पराशरीयश्लोके (वका. पृ. १७०) द्रष्टव्यम् ।

§ अस्य संदर्भः 'मन्वत्रिविष्णुहारीत' इति याज्ञवल्क्यवचनविश्वरूपव्याख्याने ( वका. पृ. १३३ ) द्रष्टव्यः ।

(१) विश्व. १।७ पृ. २२.

(२) प्रपा. १ ; मुक्ता. ८ स्मृतिरत्ने ; वीमि. १।४-५ ; पप्र. १८ प्रयोगपारिजाते ; सस्मृ. ४ स्मृतिरत्ने.

(३) प्रपा. १ ; मुक्ता. ८ स्मृतिरत्ने; वीमि. १।४-५ (=) ; पप्र. १८ प्रयोगपारिजाते ; सस्मृ. ४ तावत्रि ( तौ चात्रि ) स्मृतिरत्ने.

(४) सस्मृ. ६ धर्मसंहितायाम्.

(५) मुक्ता. १२८.

(६) विश्व. १।४-५.

(७) शूक. १४ स्मृतिः .

(८) निप. १२७ मोक्षधर्मे.

प्रमाणं श्रुतिसंमतः लोकसंमतः शिष्टसंमतश्च धर्मः

[1]सोऽनुष्ठेयो भवेद्धर्मो यो लोकश्रुतिसंमतः ।
शास्त्रशिष्टविरुद्धस्तु धर्मस्त्याज्यो बुधैः सदा ॥

लोकशास्त्रयोर्विरोधे लोकः बलीयः प्रमाणम्

कुलस्य देशस्य च चित्तवृत्ति-
र्न खण्डनीया विदुषा कदाचित् ।
यो लोकशास्त्रानुमतः स धर्मो
लोको बलीयाननयोर्विरोधे ॥

[2]यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।
तथापि लौकिकाचारं मनसाऽपि न लङ्घयेत् ॥

[3]न शास्त्रदृष्ट्या विदुषा कदाचि-
दुल्लङ्घनीयाः कुलदेशधर्माः ।
मूलं हि तेषु च्युतवेदशाखा
भूयानधर्मः स्थितिभङ्गदोषात् ॥

न च स्मृत्यनुरोधादुपेक्षणीया देशकुलाचाराः, तेषामुत्सन्नशाखामूलकतया श्रुतिसिद्धत्वात् । तथा च रत्नमालायाम्— न शास्त्रेति । विलो. १८

[4]न देवचरितं चरेत् ॥

स्मृतौ पुराणे च वेदविरुद्धोऽर्थस्तन्त्रार्थ एव, स वैदिकैर्न ग्राह्यः

[5]वेदमूलतया नित्यं प्रवृत्ता अपि सत्तमाः ।
क्वचित्कदाचित्स्मर्तारस्तन्त्रार्थं च ब्रुवन्ति वै ॥
क्वचित्तन्त्रानुसारेण धर्मं पौराणिका अपि ।
वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिना ॥
पुराणे धर्मशास्त्रे वा योंऽशः श्रुत्या विरुध्यते ।
स तन्त्रार्थ इति ज्ञेयः समासेन महर्षिभिः ॥
यश्च वेदविरुद्धोऽर्थः पुराणेष्वखिलेषु च ।
तदंशस्तु परित्याज्यः सर्वथा सकलैरपि ॥

(१) ज्योनि. १०५ स्मृत्यन्तरे.
(२) आर्क. १ ; इन्दु. २ स्मृत्यन्तरे.
(३) विलो. १८ रत्नमाला.
(४) पमा. १।४७३ ; संर. ४१२.
(५) मुक्ता. ३०० पुराणान्तरे.

[1]कश्चिच्च लोकायतिकान्ब्राह्मणान् †स्मार्तः सेवते ।
अनर्थकुशला ह्येते मूर्खाः पण्डितमानिनः ॥

§[2]नैकत्र कार्त्स्न्यं धर्मस्य ॥

धर्मनिर्णये परिषत् प्रमाणम्, एकोऽपि यतिः परिषत्

[3]केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥

[4]चत्वारस्तु त्रयो द्वौ वा यद्वैकः स्यादनिन्दितः ।
यतीनामग्र्यविधानामेकोऽपि परिषद्भवेत् ॥

अनुष्ठात्रा आदितः स्वीकृतः बहूनां विकल्पानामेक एव सर्वदा अनुसर्तव्यः, नान्यः

[5]विकल्पेषु च सर्वेषु स्वयमेवैकमादितः ।
अङ्गीकरोति यं कर्ता स विधिस्तस्य नेतरः ॥

पुराणस्य वेदत्वम्

[6]पुराणं पञ्चमो वेदः पुराणं वेदसंमितम् ॥

अष्टादश महापुराणानि

[7]ब्रह्माम्भोरुहविष्णुवायुभगव-
त्संज्ञं ततो नारदं
मार्कण्डेयमथाग्निदैवतमिति
प्रोक्तं भविष्योत्तरम् ।
तस्माद्ब्रह्मविवर्तसंज्ञमपरं
स्कान्दं वराहं तथा
लैङ्गं वामनमत्स्यकूर्मगरुड-
ब्रह्माण्डमष्टादश ॥

† एतच्छब्दाश्रिता टिप्पणी 'आर्षं धर्मोपदेशं च' इति मनुवचने मेधाव्याख्याने ( वका. पृ. १२१ ) द्रष्टव्या ।

§ अस्य विश्वव्याख्यानं याज्ञवल्क्यस्य 'मन्वत्रिविष्णुहारीत' इत्यादिवचने ( वका. पृ. १३४ ) द्रष्टव्यम् ।

(१) मेधा. १२।१०६. (२) विश्व. १।४-५.
(३) मभा. १२।११३. (४) विश्व. १।९.
(५) संग. ८८३. (६) शूशि. ४५.
(७) बाल. १।३ पृ. ७.

# वेदानां शाखाः शाखादिपरिग्रहविचारश्च

## [‡संस्कारगणपतिग्रन्थस्थः शाखाभेदादिविचारः]

### वेदपुराणहर्तुः शङ्खासुरस्य कथा

अथ चतुर्णां वेदानां पृथक् पृथक् किंचिच्छाखाभेद उच्यते । यथा अत्र किलाविच्छिन्नपारंपर्येणेयं कथा स्मर्यते— मेरुपृष्ठे सकलेषु मुनिगणेषु निविष्टेषु श्रेष्ठः कश्चिन्मुनिस्तान् प्रत्यगमत् । ततस्तं मुनिशार्दूलमालोक्याऽऽसनपाद्यादिपूजाविधिं विधायेदमूचुः— तदुक्तम्— 'मेरुपृष्ठे सुखासीनाः सकला ऋषयः पुरा । तदन्तरे समायातो मुनिः कश्चिद्द्विजोत्तमः ॥ कुतो ह्यागमनं स्वामिंस्तमूचुः श्रूयतां द्विजाः । रुद्रलोकात्समायातं का कथा तत्र वर्तते ॥ श्रीरुद्रेणैव महता स्कन्दाय प्रतिबोधितम् । शाखाभेदं मया तस्मात्तद्विज्ञातं महर्षयः ॥ स्वामिन्नः कथयस्वेति शृणुध्वं स्वस्थमानसाः ॥ ' इति । ततस्तेन श्रीरुद्र-स्कन्दसंवादो मुनीन् प्रति आह ( ? उक्तः ) — ' शिव उवाच— कदाचिद्विश्वकर्ताऽसौ तपसि स्कन्द संस्थितः । ध्यानस्थितं निरीक्ष्यैनं शङ्खो दुष्टमनाः खलः ॥ जहार वेदशास्त्राणि पुराणानि च षण्मुख । प्रविवेश समुद्रं स ब्रह्मणा नेक्षितस्तदा ॥ गतेषु वेदशास्त्रेषु पुराणेषु गतेष्वपि । श्रौतस्मार्तक्रियाः सर्वा आसंल्लुप्ता जगत्त्रये ॥ त्यक्त्वा ध्यानं पुरो नैक्षत्पुस्तकानि प्रजापतिः । शङ्खस्य चरितं बुद्ध्वा ययौ विष्णुं निवेदितुम् ॥ क्षीराब्धौ शयितं ज्ञात्वा विष्णुं ब्रह्मा शिवं ययौ । सुखासीनं शिवं दृष्ट्वा प्रणम्य कमलासनः ॥ उवाच दीनवचनं लोकानां हितकाम्यया ॥ ब्रह्मोवाच— शङ्खेन वेदशास्त्राणि पुराणानि च शंकर । नीतानि ध्यायतो मोहात्सायं मम जगत्पते ॥ मम चैवाथ देवानामृषीणां कर्मलोपनम् । श्रौतस्मार्तक्रियागुप्तिः कृता दुःखस्य कारणम् ॥ उपायं वद मे किंचिच्छ्रौतस्मार्तक्रियावहम् ॥ शिव उवाच— ब्रह्माणमवदच्छम्भुः श्रुत्वा तद्वचनं पुरा । ब्रह्मन् शङ्खं स निद्रान्ते विष्वक्सेनो हनिष्यति ॥ ' । तदनन्तरं कतिपयदिनैः श्रीकृष्णः शङ्खासुरं हत्वा वेदानानीय ब्रह्मणे ददौ । वराहपुराणे— ' दैत्यं विदार्य तान्वेदान् ब्रह्मणे स ददौ हरिः ॥ ' इति ।

### वेदचतुष्टयकर्ता व्यासावतारः

ब्रह्मणः सकाशात्परंपरया पृथिव्यां प्राप्तः स तु केनापि ज्ञातुमशक्यः, गाथारूपत्वात् । तत्पृथक्करणार्थं भगवान्परमकृपाविष्टः सन् व्यासावतारं गृहीतवान् । उक्तं च— ' मत्स्यः कूर्मो वराहो नृहरि—लघुतनू भार्गवो रामचन्द्रः कृष्णो बौद्धोऽथ कल्की कपिलहयमुखो नारदो हंसयज्ञौ ॥ दत्तात्रेयो विराण्नऋषभमुनिचयौ व्यासवैन्यौ ध्रुवश्च स्वायंभूः पापशान्त्यै युगपतिगदिता विष्णुतस्त्वावताराः ॥ ' । उक्तं च द्वादशस्कन्धे— ' अस्मिन्मन्वन्तरे ब्रह्मन् भगवांल्लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः । अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ऋगथर्वयजुःसाम्नां राशिमुद्धृत्य सर्वशः । चतस्रः संहिताश्चक्रे सूत्रैर्मणिगणा इव ॥ तासां स चतुरः शिष्यानुपहूय महामतिः । एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह । वैशम्पायनशिष्याय निगदाख्यं यजुर्गणम् ॥ साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् । अथर्वाङ्गिरसे प्राह स्वशिष्याय सुमन्तवे ॥ तैश्च शिष्यप्रशिष्यादिद्वारा शाखाः प्रवर्तिताः ॥ ' इति ।

### ऋग्वेदस्य पञ्च शाखाः, यजुर्वेदस्य कृष्णः शुक्लश्चेति भेदौ, कृष्णयजुषः शाखाभेदाः शुक्लयजुषः शाखाभेदाश्च, यजुर्वेदीयशाखासु मुख्यामुख्यत्वविचारः

तत्र ऋग्वेदस्य पञ्च शाखा भवन्ति— आश्वलायनाः, सांख्यायनाः, शाकलाः, बाष्कलाः, माण्डूकाश्चेति ॥

‡ अत्र संस्कारगणपतिगतः शाखाभेदविषयक एकप्रघट्टकरूपः सर्वः शास्त्रार्थो बोधसौकर्यार्थमादौ संगृहीतः ।

तेषामध्ययनम्- 'अध्यायाश्च चतुःषष्टिर्मण्डलानि दशैव तु । वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे । सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् ॥' इति । अथ यजुर्वेदस्य शाखाभेदो विधीयते । स द्विविधः- कृष्णः शुक्लश्च । तत्र तैत्तिरीयादिभिः पठ्यमानो यजुर्वेदः कृष्णः । तदुक्तं वेदभाष्ये सायनाचार्यैः श्रीपादैः- 'कृपालुः सायनाचार्यो वेदार्थं व्याकरोत् खलु । ऋग्यजुःसामवेदा ये ख्यातास्तेषु च यद्यजुः । कृष्णं शुक्लमिति द्वेधा तत्कृष्णं तैत्तिरीयकम् ॥' इति ।

प्रसङ्गतोऽत्र तैत्तिरीयशाखोत्पत्तिप्रकारमाह विष्णुपुराणे तृतीयेंऽशे ( विष्णु. ३।५।१-१३ ) - 'पराशर उवाच- ‡ यजुर्वेदतरोः शाखा आसन्नेकोत्तरं शतम् । ......व्यवस्थितप्रकरणं यजुः कृष्णमितीर्यते ॥' इति ।

अथास्य षडशीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादशभेदा भवन्ति- १ चरकाः २ आह्वरकाः ३ कठाः ४ प्राच्यकठाः ५ कपिष्ठकठाः ६ चारायणीयाः ७ वार्तान्तवेयाः ८ श्वेताः ९ श्वेततराः १० औपमन्यवः ११ पान्ताजिनीयाः १२ मैत्रायणीयाश्चेति । तत्र मैत्रायणीया नाम सप्तभेदा भवन्ति- १ मानवाः २ दुन्दुभाः ३ चैकेयाः ४ वाराहाः ५ हारिद्रवेयाः ६ श्यामाः ७ श्यामायणीयाश्चेति । तैत्तिरीया नाम( पि ? ) द्विभेदा भवन्ति- १ औख्या( ? खे )याः २ खाण्डिकेयाश्चेति । खाण्डिकेया नाम पञ्चभेदा भवन्ति- १ आपस्तम्बी २ बौधायनी ३ सत्याषाढी ४ हिरण्यकेशी ५ औधेयाश्चेति । तेषामध्ययनम्- अष्टशतं ( ? अष्टादश ) यजुःसहस्राण्यधीत्य शाखापारो भवति । तान्येव द्विगुणान्यधीत्य पदपारो भवति । तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति । तेषां मध्ये कतिपयभेदा उच्छिन्ना जाताः । वमनानन्तरं याज्ञवल्क्यः किं कृतवानित्याह विष्णुपुराणे तृतीयेंऽशे पञ्चमाध्याये- 'याज्ञवल्क्योऽथ मैत्रेय प्राणायामपरायणः ।...... यजुषामुत्तमा स्मृता ॥' इति विष्णुपुराणे तृतीयेंऽशे पञ्चमोऽध्यायः । श्रीभागवतेऽपि- 'याज्ञवल्क्यस्ततः सूर्यमाराध्यास्मादधीतवान् । व्यवस्थितप्रकरणं यजुः कृष्णमितीर्यते ॥ पौराणिकीं कथामेतां वेदव्याख्यान आदरात् । आदिशन्मह्यमाचार्याः श्रुतावपि मया श्रुतम् ॥ काण्ववेदगता विद्या वंशब्राह्मण ईर्यते । यजूंषि शुक्लादादित्यान्मुनिः प्रापेत्यपि स्फुटम् ॥' इति । तथा च श्रुतिः- 'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते'। आदित्येनाध्यापितत्वादादित्यान्युच्यन्ते । वाज इत्यन्नस्य नामधेयम्, 'अन्नं वै वाजः' इति श्रुतेः । वाजस्य सनिः दानं यस्य महर्षेरस्ति सोऽयं वाजसनिः, तस्य पुत्रो वाजसनेयः, तस्य याज्ञवल्क्य इति नामधेयम् । तेन याज्ञवल्क्येन तानि शुक्लयजूंषि महर्षिभ्यः पञ्चदशभ्य आख्यायन्ते समन्तादुपदिश्यन्ते । एवं सति याज्ञवल्क्येन प्रवर्तिताः शुक्लयजुर्विषयाः शाखाः पञ्चदश संपद्यन्ते । तच्छाखाध्यायिनश्चरणव्यूहादिग्रन्थे जाबालादिभिः पञ्चदशभिर्नामभिः ( इत्थं ? ) व्यवह्रियन्ते- १ जाबालाः २ गौधेयाः ३ काण्वाः ४ माध्यंदिनीयाः ५ श्यापीयाः ६ स्थापीयाः ७ कपोलाः ८ पौण्ड्रवत्साः ९ आवटिकाः १० परमावटिकाः ११ पाराशर्याः १२ वैणेयाः १३ बौधेयाः १४ वैजपाः १५ कात्यायनीयाश्च इति पञ्चदश नामानि । तत्र काण्वाभिधेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषः काण्वः । तल्लाभश्च स्मर्यते- 'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥' इति । यद्यप्ययं वेदः परमेष्ठ्यादिभिः परंपरया प्राप्त आदित्यशिष्येण याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टस्तथापि महता तपसा तुष्टस्येश्वरस्यानुग्रहात्काण्वसंबन्धितयैव लोके प्रख्यायते । तमेतं काण्ववेदमधीयते विदन्ति वा इति व्युत्पत्त्या काण्वशिष्यप्रशिष्यादिपरंपरया वर्तमानाः सर्वेऽपि काण्वा इत्युच्यन्ते । एवं शात्वा जाबालादिषु द्रष्टव्यम् । यद्यप्यनयोः शाखयोरुभयोराध्वर्यव एव प्रयोगः प्रतिपाद्यते, तथापि मन्त्रपाठविशेषैः प्रयोगविशेषैर्वाऽस्ति महान् भेदः, स चानुष्ठातृभेदेन व्यवस्थितविषयत्वान्न विकल्पते । अत

‡ अस्मिन् संगशास्त्रार्थे यानि वचनानि प्रत्याहाररूपेण संगृहीतानि तेषां कृत्स्नपाठोऽस्मिन्नेव प्रकरणे तत्तद्ग्रन्थेषु द्रष्टव्यः ।

एव 'स्वाध्यायोऽध्येतव्यः' इति स्वकीयशाखाध्ययनमनुष्ठानविशेषाय विहितम्। ननु किं काण्वमाध्यंदिनादिभिः पठ्यमानो मुख्यो यजुर्वेद उत शाखामात्रमिति? उभयथा वचनदर्शनात्संदेहः। तथाहि— तैत्तिरीयब्राह्मणे 'भा(? भ)रद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं ह जीर्णं(? जीर्णिं) स्थविरं शयानमिन्द्र उपव्रज्योवाच— भा(? भ)रद्वाज, यत्ते चतुर्थमायुर्दद्याम्, किमनेन कुर्या-दि(र्या इति)। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषां हैकैकस्मान्मुष्टिमाददे। स होवाच भरद्वाजेत्यामन्त्र्य— वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं$ विद्धि। अयं वै सर्वविद्येति॥' (तैब्रा. ३।१०।११।३) (इति) सर्वासां शाखानां वेदशब्दाभिधानात्, स्कन्दपुराणे तु 'अवतीर्णो महायोगी सत्यवत्यां पराशरात्। उत्सन्नान् भगवान्वेदानुज्जहार हरिः स्वयम्॥ चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः। शतधा चैकधा चैव तथैव च सहस्रधा। अथर्वणं द्वादशधा भित्त्वा शाखा अवाक्लृपत्॥' इति सामान्यतः शाखाशब्दश्रवणात्। तत्र पूर्वः पक्षः— द्वापरादौ वेदव्यासेन स्वशिष्येभ्यश्चतुर्भ्यो य उपदिष्टास्त एव मुख्या वेदाः। तैर्यांसशिष्यैर्विभज्य स्वशिष्येभ्यो दत्ताः शाखा इति। तथा चाऽऽपस्तम्बादिवेदानामेवोपदेशात् त एव मुख्या वेदाः। काण्वादयस्तु तदनन्तरभावित्वादमुख्या इति, द्वादशस्कन्धोक्तत्वात्। 'भाविवृत्तान्तमाज्ञाय व्यासः सत्यवतीसुतः। दश पञ्चाथ याः शाखाः सूर्यायोपदिदेश ह॥' इति विष्णुपुराणोक्तत्वात् काण्वादीनामपि पूर्वभावित्वम्। एवमुभयत्रापि मुख्यत्वे प्राप्ते पुनरपि संदेहः। तन्निर्णयश्चरणव्यूहे शौनकेन दर्शितः 'मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते। यजुर्वेदः स विज्ञेयो ह्यन्ये शाखान्तराः स्मृताः॥' इति कात्यायनपरिशिष्टप्रमाणेन शुक्लयजुष्ट्वेनायातयामत्वेन च काण्वादयो मुख्याः, इतरे त्वमुख्या इति। परिशिष्टवचनमितरत्रापि समानमिति चेत्, न, इतरत्र वचनार्थासंभवात्। तथाहि— मन्त्रब्राह्मणयोर्वेदनामधेयमित्युक्त्वा यजुर्वेदे विशेषमाह— त्रिगुणं पठ्यते यत्र स यजुर्वेद इति। तत्र त्रिगुणमिति पदं क्रियाविशेषणं वा, मन्त्रब्राह्मणयोरिति ¶समस्तस्यापि पदस्य बुद्ध्या विविक्तस्य ब्राह्मणपदस्य नपुंसकलिङ्गस्य विशेषणं वा, अन्यद्वा? अत्र प्रथमे पक्षे मन्त्रब्राह्मणात्मको यो वेदः स यत्र शाखायां त्रिगुणं यथा स्यात्तथा पठ्यते स मुख्यो यजुर्वेद इत्यर्थः संभवति। तत्र त्रैगुण्यं किं विध्यर्थवाद(मन्त्र)रूपेण वा, आहोस्वित्संहितापदक्रमरूपेण वा? नाऽऽद्यः। शाखामात्रस्य ब्राह्मणस्य विध्यर्थवादमन्त्ररूपत्वेनातिव्याप्तेः। द्वितीयस्तु काण्वादेरेव संभवति, तेषां मन्त्रब्राह्मणात्मकस्य वेदस्य संहितादित्रिगुणपाठसत्त्वात्। ननु शतपथब्राह्मणस्य पदक्रमपाठाभावान्मन्त्रब्राह्मणात्मकवेदस्य त्रिगुणः पाठः काण्वमाध्यंदिनानां न संभवति, संभवति चाऽऽपस्तम्बादीनां तादृशः पाठः। तथाहि— तैत्तिरीयप्रथमाष्टके, 'संपश्यामि प्रजा अहमिडप्रजसो मानवीः' (तैसं. १।५।६।१) इत्युपक्रम्य, 'संपश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवावरुन्धेऽम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येताः सहः स्थ सहो वो भक्षीयेत्याह सहो ह्येताः' (तैसं. १।५।८।१) इत्यादौ मन्त्रभागे ब्राह्मणस्य दर्शनात्। हन्त तर्हि काण्वमाध्यंदिनादीनां संहितायाम् 'वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कान्' (शुसं. २४।२०) इत्यादौ तथा 'ब्रह्मणे ब्राह्मणम्, क्षत्राय राजन्यम्' (शुसं. ३०।५) इत्यादेश्च ब्राह्मणभागस्य सत्त्वमेव हि। अथ तर्हि उभयेषामपि लक्षणसत्त्वान्मुख्यवेदत्वम्, अन्येषां शाखान्तरत्वमस्तीति चेन्न, वैलक्षण्यात्। तथा हि काण्वादीनां संहितान्तःपाति

$ इममिति परस्तादयमिति च प्रकृतः सावित्राग्निरुच्यते।

¶ 'समस्तस्यापि संबन्धिनः ब्राह्मणपदस्य बुद्ध्या विविक्तस्य सतः' इति ग्रन्थो योजनीयः।

ब्राह्मणमित्यत्र महर्षिणा कात्यायनेन अनुक्रमणिकाध्यायेषु 'अश्वस्तूपरो ब्राह्मणोऽध्यायो ब्रह्मणे ब्राह्मणमिति ब्राह्मणोऽध्यायः' इत्युक्तत्वाद्भवति ब्राह्मणभागत्वम्। आपस्तम्बादीनामनुक्रमणिकादिप्रमाणाभावात् संहितान्तःपातिमन्त्रव्याख्यानरूपस्य ब्राह्मणत्वे प्रमाणाभावात्। अन्यथा ब्राह्मणान्तःपातिनो मन्त्रभागस्यापि संहितात्वापत्तेः। किंच, व्याख्यानमात्रत्वेन ब्राह्मणत्वे 'केशीन्द्रं ज्योतिरुच्यते' (?) इत्यादेः 'सूर्य एकाकी चरति' (तैसं. ७।४।१८।४) इत्यादेश्च संहिताभागस्यापि व्याख्यानत्वेन ब्राह्मणत्वं स्यात्। अपिच मीमांसायां द्वितीयाध्याये 'तच्चोदकेषु मन्त्राख्या' इत्यधिकरणे वेदो द्वेधा– मन्त्रो ब्राह्मणमिति। तत्र 'मन्त्रानधीते', 'मन्त्रानध्यापयामः' इति यत्र वैदिकानां मन्त्रे( ति) प्रसिद्धिः स इन्द्र(? न्द्रादि)देवताप्रकाशनसमर्थः संहिताभागो मन्त्र इत्युक्त्वा 'शेषे ब्राह्मणशब्दः' इति अवशिष्टभागस्यैव ब्राह्मणत्वमिति जैमिनिरप्यवोचत्। तस्मात् 'यावद्वचनं वाचनिकम्' इतिन्यायेन वाजसनेयिनां काण्वादीनामेवेदं लक्षणम्, नान्येषामिति सिद्धम्। न द्वितीयः। त्रिगुणशब्दस्य संनिहितवेदशब्देनान्वये संभवति समस्तं ब्राह्मणपदं विविच्य तेनान्वयकथने व्यवहितान्वयत्वदोषप्रसङ्गात् क्लिष्टकल्पनाच्च। भवतु वा व्यवहितान्वयः, ब्राह्मणस्य किं त्रिगुणत्वं संहितापेक्षया, ग्रन्थतो वा, किंवा आदौ मन्त्रप्रतीकतो गृहीत्वा तस्य व्याख्यानं कृत्वा पश्चान्मन्त्रप्रतीकस्योपसंहार इति, तथा च ब्राह्मणे 'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह। ब्राह्मण एव ब्रह्मवर्चसं दधाति। तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत' (तैब्रा. ३।८।१३।१) इत्यादौ तथात्वदर्शनादिति? अत्रापि प्रथमपक्षस्तु काण्वादीनामेव संभवति, नाऽऽपस्तम्बादीनाम्, शतपथब्राह्मणस्य संहितापेक्षया ग्रन्थतस्त्रिगुणत्वोपलब्धेः, आपस्तम्बादीनां संहिताया ब्राह्मणस्य च ग्रन्थतः साम्यात्। अत्रापि किं मन्त्रव्याख्यानत्वेन त्रिगुणः पाठः, किंवा मन्त्रैकदेशव्याख्यानत्वेन? एवमपि प्रथमः पक्षः काण्वादीनामेव संभवति, तेषां शतपथब्राह्मणे मन्त्रभागस्य व्याख्यानात्, आपस्तम्बादिब्राह्मणस्य ग्रन्थतो मन्त्रसमानत्वेन मन्त्रमात्रव्याख्यानासंभवात्। नान्त्यः, शाखान्तरेष्वपि ब्राह्मणस्य मन्त्रैकदेशव्याख्यानत्वेनातिव्याप्तेः। मन्त्रैकदेशव्याख्यानं तु मैत्रायणीयादिशाखासु प्रसिद्धम्। अन्यद्वेति तृतीयोऽपि न, तस्यानिर्वचने नवत्वेन विकल्पासहत्वात्। किंच, 'शुक्लानीमानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते' (बृउ. ६।५।३) इति बृहदारण्यकश्रुतेः 'इमानि काण्वादीनि शुद्धानि यजूंषि वाजसनेयेन याज्ञवल्क्येन व्याख्यायन्ते स्वशिष्येभ्यः उपदिश्यन्ते' इति विद्यारण्यश्रीपादैर्व्याख्यातत्वेन, 'आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थया। बुद्धिमालिन्यहेतुत्वाद्यजुः कृष्णमितीर्यते॥ व्यवस्थितप्रकरणं यजुः शुक्लमितीर्यते॥' इति स्मृत्या च शुक्लयजुष्ट्वविधानेनापि मुख्यत्वात्। अपिच, 'अयातयामान्येव रवेरेव ये भविष्यन्ति' इत्यथर्ववचनेन 'यजूंष्ययातयामानि' इति भागवतादिवचनेन च काण्वादिशाखानां वीर्यवत्त्वाभिमानाच्च मुख्यवेदत्वमिति सिद्धम्। यदुक्तम्– वेदव्यासेन द्वापरादौ अनुपदिष्टत्वात्काण्वादीनाममुख्यत्वम् इति, तदपि न, सर्वज्ञेन वेदव्यासेन भाविवृत्तान्तं ज्ञात्वा सारभूतं यजुर्गणं सूर्यायोपदिश्य निधित्वेन स्थापितत्वात्। तदुक्तं वाराहपुराणे– 'हयग्रीवः कदाचित्तु ... ... कण्वाद्याश्च महामुनिः॥' इति। पञ्चदशस्वपि शाखासु काण्वशाखा मुख्या वेदितव्या। तदुक्तं बृहन्नारदीये– 'यजुर्वेदमहाकल्पतरोरेकशतं स्मृताः। शाखास्तत्र शिवाकारा दश पञ्चाथ शुक्लगाः॥ तत्रापि मुख्या प्रथमा शाखा वै काण्वसंज्ञिका॥' इति। तस्मात्सिद्धं यजुःषु प्रथमा शाखा मुख्येति।

### सामवेदस्याथर्ववेदस्य च शाखाः, ऋग्वेदादीनाम् उपवेदाः

सामवेदस्याखिल(? लाः) सहस्रभेदा भवन्ति। अनध्यायेष्वधीयमानास्ते शतक्रतोर्वज्रेणाभिहताः प्रनष्टाः। शेषान्प्रवक्ष्यामि– १ आसुरायणीयाः २ वासुरायणीयाः ३ वातान्तवीयाः ४ प्राञ्जलिः ५ ऋग्वैर्णभिदाः ६ प्राचीन-

योगाः ( ७ राणायनीया )श्चेति । तत्र राणायनीया नाम नव भेदा भवन्ति– १ राणायनीयाः २ शाक्यायनीयाः ३ सत्यमौद्गलाः ४ खल्वलाः ५ महाखल्वलाः ६ लाङ्गलाः ७ कौथुमाः ८ गौतमाः ९ जैमिनीयाश्चेति । तेषामध्ययनमष्टौ सहस्राणि सामानि ।

अथर्ववेदस्य नव भेदा भवन्ति– १ पैप्पलाः २ दान्ताः ३ प्रदान्ताः ४ तौन्ताः ५ औन्ताः ६ ब्रह्मदावलाः ७ शौनकी ८ देवदर्शी ९ चरणविद्याश्चेति । तेषामध्ययनं पञ्च कल्पानि भवन्ति– १ नक्षत्रकल्पः २ विधानकल्पः ३ वि(धि)विधानकल्पः ४ संहिताकल्पः ५ शान्तिकल्पश्चेति । ऋग्वेदस्याऽऽयुर्वेद उपवेदः, यजुर्वेदस्य धनुर्वेद उपवेदः, सामवेदस्य गान्धर्ववेद उपवेदः, अथर्ववेदस्यार्थशास्त्राणि ।

कर्मान्ते आशीर्ग्रहणे यजमानशाखायाः प्राथम्यम्

एवं सति यच्छाखोक्तं कर्म संप्रा(?मा)प्तं तत्र तच्छाखोक्ताशीर्ग्रहणमादौ भवति । संग्रहे– 'सर्वत्र कर्मणामन्ते मन्त्राशिषमनुत्तमाम् । दद्युर्विप्राः स्वशाखोक्तामादौ तत्कर्मशाखिनः ॥' इति । तत्र ऋग्वेदस्य ततः काण्वादेः तत आपस्तम्बादेः ततः सामगादेः, इति क्रमो भवति, मुख्यक्रमानुग्रहादिति । वेदेषु यजुर्वेदः प्रधानभूतः, अन्ये उपसर्जनभूताः, 'सर्वा गतिर्याजुषां(? षी) हैव शश्वत्' (तैब्रा. ३।१२।९।१), 'तस्य यजुरेव शिरः, ऋग्दक्षिणः पक्षः, सामोत्तरः पक्षः' इति (तैउ. २।३), 'ऋग्भ्यो जातं वैश्य(? श्यं) वर्ण(? र्णमाहुः), यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिम् । सामवेदं(? दो) ब्राह्मणानां प्रसूतिम् (?तिः)' (तैब्रा. ३।१२।९।२) तथा 'असृक्षि वा इमम्' (तैब्रा. २।२।४।२) इत्युपक्रम्य यजुर्वेदसामवेदर्ग्वेदोत्पत्तिक्रमस्योक्तत्वात् आपस्तम्बशाखायाम् । प्राधान्यं कर्मोत्पादकत्वेन । कर्म त्वग्निहोत्रचातुर्मास्यज्योतिष्टोमादि । तेन च प्राधान्य(? प्रधान)कर्मणि विहिते तदुपकारित्वेन हौत्रौद्गात्रपूरकत्वेन तयोः प्रवेशः, सति राज्ञि सचिवादेरिव । संग. १२–२४

## भारद्वाजसूत्रम्

विहितेष्वध्ययनादिकर्मसु पित्रादिपरिगृहीता वेदशाखा ग्राह्या, पूर्वपरिग्रहाज्ञाने स्वेच्छया वेदशाखा ग्राह्या

**[1]यजनीयकल्पपरिग्रहे पूर्वपरिग्रहः प्रमाणं तत्त्यागे दोषस्तदज्ञाने स्वेच्छया परिग्रहः ॥**

(१) वेदान्तरीयाऽपि पूर्वपरिगृहीतैव शाखाऽध्येतव्या, पूर्वपरिग्रहसामर्थ्यात् । न या काचित् । तथा च भारद्वाजसूत्रम्– यजनीयेति । संप्र. ५०५–५०६

(२) स्वकल्पत्यागेऽपि भारद्वाजसूत्रे विस्पष्टमेव दोषः श्रूयते । यथा– यजनीयेति भारद्वाजसूत्रम् । व्याख्यातं चैतत् ब्रह्मविद्यातीर्थयैः– 'पूर्वपरिग्रह इति । पूर्वस्य पितुः, पूर्वयोः पितृपितामहयोः, पूर्वेषां वा त्रयाणां पित्रादीनां परिग्रहः पुत्रादेः प्रथमपरिग्रहे प्रमाणम् । एवं पूर्वस्य भ्रातुः, पूर्वयोर्भ्रात्रोः, पूर्वेषां वा भ्रातॄणामिति कनीयसः प्राथमिकस्वपरिग्रहविषयम् । पूर्वो वा परिग्रहः स्वस्यैवेति । इदं च द्वितीयादिस्वपरिग्रहविषयम्'। एतेषां च विग्रहवाक्यक्रमेणानुक्रान्तानामविरोधे सर्वेषां संभूय प्रामाण्यम्, विरोधे तु पूर्वपूर्वबलीयस्त्वं श्रुत्यादिवत्, पूर्वपूर्वाविरुद्धस्यैवोत्तरोत्तरस्य प्रामाण्याल्लिङ्गादिवत् । तथा च प्रपितामहपरिग्रहमारभ्य ज्येष्ठपरिग्रहपर्यन्तानां मध्ये प्रपितामहपरिग्रहस्य निरपवादं प्रामाण्यं पूर्वाविरुद्धस्य; अन्येषां तु तद्विरुद्धानामप्रामाण्यम्, तदविरुद्धानां प्रामाण्यमिति सापवादम् । तथा चायं निष्कर्षः– ज्ञायमानपरिग्रहीतृपुरुषपरिग्रहाणां मध्ये प्रथमपुरुषपरिग्रहो नियामकः, न पित्रादित्रिपरिग्रहत्वम्, चतुर्थादेरपि नियामकत्वसंभवात् । एतच्च 'येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥' (मस्मृ. ४।१७८) इत्यत्र मनुवाक्ये भारद्वाजीयसमानार्थे पितरः, पितामहा इति बहुवचनाल्लभ्यते । न हि पितुः पितामहस्य वा बहुत्वं संभवति । स्मरन्ति च– 'बहुवचनादाद्यर्थावगतिः' इति । ततश्च पित्रादयः पितामहादयो वेत्यर्थः, समुच्चये तूत्तरवैयर्थ्या-

(१) संप्र. ५०६ ; बाल. १।८९ पृ. २५७ ; कुम. ११७०.

पत्तेः । अत एव शायमानपरःशतसर्वपुरुषसाधारणः पूर्वशब्द एव प्रयुक्तः । तथा च ब्रह्मविद्यातीर्थीये त्रयाणामित्युपलक्षणं द्रष्टव्यम् । अत एव द्वितीयसूत्रव्याख्यावसरे तत्संमतित्वेन छन्दोगयज्ञपरिशिष्टवाक्यं सर्वपुरुषसाधारणं पित्रादिपदोपेतमेवेत्यादि ।

बाल. १।८९ पृ. २५७–२५८

(३) प्रपितामहपरिग्रहोऽपि पूर्वाविरुद्धो ग्राह्यः । एवं क्रमेण स्वपरिग्रहपर्यन्तम् । 'कल्पमेकं समाश्रित्य प्रवृत्तेऽपि च कर्मणि । न मिश्रयेत्प्रयोगांस्तान् कल्पयोरव्यवस्थयोः ॥' इति विष्णुस्वामिकारिकादर्शनात्, 'स्वेन पित्रादिभिर्वाऽपि कल्पादिः पूर्वमाहृतः । स तु नैव परित्याज्य इति वेदानुशासनम् ॥' इति छन्दोगपरिशिष्टात् । स्वेनेति पित्रादिभिरिति च पूर्वविरुद्धपित्रादिपरिग्रहाज्ञानविषयम् । तथा च पूर्वविरुद्धः पित्रादिपरिग्रहस्त्याज्यः । एवं तद्विरुद्धो ज्येष्ठपरिग्रहस्तदुभयविरुद्धश्च स्वपरिग्रहोऽप्येवम् । तत्त्यागे दोष इति । तयोस्तस्य वा त्यागे त्यागपूर्वकान्यपरिग्रहे दोष इत्यर्थः । ‡ कृभ. ११७१

## शौनकीयानुवाकानुक्रमणी

ऋग्वेदसंहिताया अनुवाकादिसंख्या

'आद्ये चतुर्विंशतिर्ह्यनुवाका
अतः परं मण्डलं यच्चतुष्कम् ।
द्वे पञ्चके त्रीणि षट्कानि चैव
दशाष्टमं सप्तनवमं द्वादशान्त्यम् ॥
एकाधिका स्यान्नवतिः शतं (१९१) च
वदन्ति वै मण्डलमादितो यत् ।
चत्वारिंशत्त्रीणि (४३) चाऽऽहुर्द्वितीयं
सूक्ते च षष्टिं च (६२) तृतीयमाहुः ॥
अष्टापञ्चाशदपि (५८) यच्चतुर्थं सप्ता-
धिकाशीति(८७)रतः परं स्यात् ।
पञ्चाधिका सप्तति(७५)रुत्तरं तु चत्वारि
वासिष्ठमथो शतं (१०४) च ॥
द्वे चैव सूक्ते नवतिं (९२) च विद्या-
दथाष्टमं नवमं वै शतं स्यात् ।
चतुर्दश (११४) त्वाहुरथाधिकान्य-
न्याद्ये यदुक्तं दशमे (१९१) तथैव ॥
एतत्स(?एकं स)हस्रं दश सप्त (१०१७)
चैव अष्टावतो बाष्कलकेऽधिकानि
(१०२५) ।
तान्(? तां) पारणे शाकले शैशिरीये
वदन्ति शिष्टा न खिलेषु विप्राः ॥
पञ्चाशीति(८५)र्दाशतयेऽनुवाका
दृष्टाः पुराणैर्ऋषिभिर्महात्मभिः ।
यस्तानृग्विद्वेद चैवाप्यधीते
स नाकपृष्ठं भजते ह शश्वत् ॥
अध्यायानां चतुःषष्टिः (६४)
मण्डलानि दशैव (१०) तु ।
वर्गाणां तु सहस्रे द्वे
संख्याते च षळुत्तरे (२००६) ॥
सहस्रमेतत्सूक्तानां
निश्चितं खैलिकैर्विना ।
दश सप्त च पठ्यन्ते
संख्यातं वै पदक्रमम् ॥
एकर्च एकवर्गः (१) स्या-
देकश्च (१) नवकस्तथा ।
द्वौ (२) वर्गौ तु द्वृचौ ज्ञेयौ
त्र्यूनं तृचशतं (९७) स्मृतम् ॥
चतुष्कं शतमेकं च
चत्वारः सप्तति(१७४)स्तथा ।
पञ्चकानां सहस्रं तु
द्वे च सप्तोत्तरे शते (१२०७) ॥
त्रीणि शतानि षट्कानां
चत्वारिंशत् षट् च वर्गाः (३४६) ।
शतमूनविंशतिः (११९) सप्तकानां
न्यूना षष्टि(५९)रष्टकानाम् ॥

‡ शेषं बालगतम् ।

(१) शौक्र. २६–४०.

ऋचां दश सहस्राणि
ऋचां पञ्चशतानि च ।
ऋचामशीतिः पादश्च ( १०५८०¼ )
पारणं संप्रकीर्तितम् ॥
अर्धर्चानां सहस्राणा-
मेकविंशतिकं तथा ।
शतद्वयं तु द्वात्रिंश-
त्सपादं (२१२३२¼) मुनिभिः पुरा ॥
शाकल्यदृष्टे पदलक्षमेकं
सार्धं च वेदे त्रिसहस्रयुक्तम् ।
शतानि चाष्टौ दशकद्वयं च
पदानि षट् चेति (१५३८२६ )
हि चर्चितानि ॥
एकं च शतसहस्रं
दश च सहस्राणि सप्त शतानि ।
चर्चापदानि ज्ञेयानि
पदानि चान्यानि चत्वारि
( ११०७०४ )॥
चत्वारि वाव शतसहस्राणि
द्वात्रिंशच्चाक्षरसहस्राणि
( ४३२००० )॥

## § शौनकीयचरणव्यूहः

चत्वारो वेदाः

[1]अथातश्चरणव्यूहं व्याख्यास्यामः । तत्र यदुक्तं चातुर्विध्यं चत्वारो वेदा विज्ञाता भवन्ति । तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति ॥

ऋग्वेदस्य शाखाः अक्षरपदऋग्वर्गसूक्ताध्यायमण्डलानां संख्याश्च

तत्र ऋग्वेदस्याष्टौ स्थानानि भवन्ति । चर्चा श्रावकः चर्चकः श्रवणीयपारः । क्रमपारः क्रमपदः क्रमजटः क्रमदण्डश्चेति चतुष्पारायणम् । एतेषां शाखाः पञ्चविधा भवन्ति– आश्वलायनाः शाङ्खायनाः शाकला बाष्कला माण्डूकायनाश्चेति ।

तेषामध्ययनम् –
अध्यायाश्च चतुःषष्टिर्मण्डलानि दशैव तु ।
वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे ॥
सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् ।
दश सप्तसु ( ? प्त तु ) पठ्यन्ते
संख्यातं वै पदक्रमम् ॥

एकशतसहस्रं वा द्वि( त्रि ?) पञ्चाशत्सहस्रार्धमे(? मि)तानि चतुर्दशवासिष्ठानाम् । इतरेषां पञ्चाशीतिः । क्रमकाले तु वेष्टव्यं चतुस्त्रिंशत्सहस्राणि (तु ?) द्विखण्डानां सहस्राणां द्वात्रिंशत् षोडशोत्तरा चत्वारिंशत्स(? चत्वारि शतस)हस्राणि §द्वात्रिंशतश्चा(? शच्चा)क्षरसहस्राणि । ऋचां दश सहस्राणि ऋचां पञ्च शतानि च । ऋचामशीतिः पादश्चैतत्पारायणमुच्यते ॥
एकर्च एकवर्गश्च एकश्च नवकस्तथा ।
द्वौ वर्गौ तु द्वृचौ ज्ञेयौ
न्यूनं(? ऽयूनं) तृचशतं स्मृतम् ॥
चतुर्ऋचां पञ्चसप्तत्यधिकं च शतं तथा ।
पञ्चर्चे तु द्विशतकं सहस्रं रुद्रसंयुतम् ॥
पञ्चचत्वार्यधिकं तु षडृचां च शतत्रयम् ।
सप्तर्चस्य शतं ज्ञेयं विंशतिश्चाधिका स्मृता ।
अष्टऋचां तु पञ्चाशत्पञ्चाधिकास्तथैव च ॥
दशाधिकद्विसहस्रं पञ्चशाखासु निश्चिताः ।
वर्गाः संज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः ।
एवं पारायणे प्रोक्ता ऋचां संख्येन न्यूनतः ॥

यजुर्वेदस्य कृष्णशुक्लद्वययुतस्य शाखादिविवरणम्

[1]यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादशभेदा भवन्ति– चरका आह्वरकाः

§ उपलब्धमप्यस्य महिदासभाष्यमत्यन्ताशुद्धत्वात् न संगृहीतम् । भाष्यतः प्रतीताः काश्चिच्छुद्धयोऽत्र विहिताः । तथाप्यनेका अशुद्धयः सन्तीति प्रतिभाति ।

(१) शौच. १।१–११.

§ एतदादिपदसमूहो न कस्मिन्नप्यादर्शे पुनरुक्तः भाष्यात्तु पुनरुक्तिः प्रतीयते ।

(१) शौच. २.

कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वारायणीया वार्तान्तवेयाः श्वेताश्वतरा औपमन्यवः पाताण्डनीया मैत्रायणीयाश्चेति। तत्र मैत्रायणीया नाम षड्भेदा भवन्ति— मानवा वाराहा दुन्दुभाश्छागलेया हारिद्रवेयाः श्यामायनीयाश्चेति। तेषामध्ययनम्—

द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके।
ऋग्गणः परिसंख्यातं (? तः)
ततोऽन्यानि यजूंषि च॥

अष्टौ शतानि सहस्राणि चाष्टाविंशतिरन्याभ्यधिकश्च पादमेतत्प्रमाणं यजुषां हि केवलं सवालखिल्यं सशुक्रियम्। ब्राह्मणं च चतुर्गुणम्। तत्र तैत्तिरीयका नाम द्विभेदा भवन्ति— औखेयाः खाण्डिकेयाश्चेति। तत्र खाण्डिकेया नाम पञ्चभेदा भवन्ति— कालेता शाटयायनी हैरण्यकेशी भारद्वाज्यापस्तम्बी चेति। तेषामध्ययनम्— अष्टादशयजुःसहस्राण्यधीत्य शाखापारो भवति, तान्येव द्विगुणान्यधीत्य पदपारो भवति, तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति, षडङ्गान्यधीत्य षडङ्गविद्भवति।

त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह।
यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः॥

षडङ्गानि उपाङ्गानि अष्टादश परिशिष्टानि च

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

तथा प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि। तत्र परिशिष्टानि भवन्ति। यूपलक्षणं छागलक्षणं प्रतिज्ञाऽनुवाकसंख्या चरणव्यूह(? हः) श्राद्धकल्प(? ल्पः) शुल्बकानि पार्षदमृग्यजूंषीष्टकापूरणं प्रवराध्यायो(? य उ) ‡कथशास्त्र(? स्त्रं) क्रतुसंख्या निगमा यज्ञपार्श्वेहौ(? श्वें हौ)त्रकं प्रसवोत्थानं कूर्मलक्षणमित्यष्टादश परिशिष्टानि भवन्ति॥

कठशाखानां पञ्चदश भेदाः

तत्र कठानां योगा येन विशेषस्तत्र प्राच्योदीच्यनैर्ऋत्यवाजसनेया नाम पञ्चदशभेदा भवन्ति— जाबाला बौद्धायनाः काण्वा माध्यन्दिनेयाः शाफेयास्तापनीयाः कपोलाः पौण्डरवत्सा आवटिकाः परमावटिकाः पाराशरा वैणेया वैधेया अद्धा बौधेयाश्चेति। तेषामध्ययनम्— सौक्तिकं प्रवचनीयाश्चेति।

मन्त्रब्राह्मणकल्पानामङ्गानां यजुषामृचाम्।
षण्णां यः प्रविभागज्ञः सोऽध्वर्युः
कृत्स्नमुच्यते॥

सामवेदस्य शाखाः, अथर्ववेदस्य शाखाः
पञ्च कल्पाश्च

(१)सामवेदस्य किल सहस्रभेदा भवन्ति। एष्वनध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः प्रणष्टाः। शेषान् व्याख्यास्यामः— आसुरायणीया वासुरायणीया वार्तान्तरेयाः प्राञ्जलऋग्वैनविधाः प्राचीनयोग्या राणायनीयाश्चेति। तत्र राणायनीया नाम नव भेदा भवन्ति— राणायनीयाः शाट्यायनीयाः सात्यमुद्गलाः खल्वला महाखल्वला लाङ्गलाः कौथुमा गौतमा जैमिनीयाश्चेति। तेषामध्ययनम्—

अशीतिशतमाग्नेयं पावमानं चतुःशतम्।
ऐन्द्रं तु षड्विंशतिर्यानि गायन्ति सामगाः॥

तान्यधीत्य चण्डात्प्रचण्डतरो भवति शिष्टानधीत्य शिष्टाविंशतिको भवति। तत्र केचित्पुनर्ऋक्तन्त्रं सामतन्त्रं संज्ञाधातुलक्षणमिति विधीयन्ते।

---

‡ उक्थशास्त्रक्रतुसंख्ययोः स्थाने कातीयचरणव्यूहे उञ्छशास्त्रमूल्याध्यायौ पठितौ।

(१) शौन. ३.

'अष्टौ सामसहस्राणि सामानि च चतुर्दश ।
अष्टौ शतानि नवतिदशतिर्वालखिल्यकम् ॥

सरहस्यं ससुपर्णं प्रेक्ष्यस्तत्र वालखिल्याः ।
सारण्यकानि सौर्याणि ह्येतत्सामगणं स्मृतम् ॥' ॥

'अथर्ववेदस्य नव भेदा भवन्ति– पैप्पला शौनका दान्ता प्रदान्ता औता जाबाला ब्रह्मपलाशा कुनखीवेददर्शी चारणविद्याश्चेति । द्वादशैव सहस्राणि, पञ्चकल्पानि भवन्ति । कल्पे कल्पे पञ्च शतानि भवन्ति । नक्षत्रकल्पो विधानकल्पो विधिविधानकल्पः संहिताकल्पः शान्तिकल्पश्चेति ॥

वेदानामुपवेदाः , चतुर्णां वेदानां मूर्तयः गोत्राणि देवताश्च

तत्र वेदानामुपवेदाश्चत्वारो भवन्ति– ऋग्वेदस्याऽऽयुर्वेद उपवेदो यजुर्वेदस्य धनुर्वेद उपवेदः सामवेदस्य गान्धर्ववेदोऽथर्ववेदस्यार्थशास्त्रं चेत्याह भगवान्व्यासः स्कन्दो वा । य इमे वेदाश्चत्वारस्तेषामेकैकस्य कीदृशं रूपं वर्णविधोच्यते– ऋग्वेदः पद्मपत्राक्षः सुविभक्तग्रीवः कुञ्चितकेशश्मश्रुः श्वेतवर्णो वर्णेन कीर्तितं प्रमाणं तावत्तिष्ठन्वितस्तीः पञ्च, यजुर्वेदः पिङ्गाक्षः कृशमध्यः स्थूलगलकपोलस्ताम्रवर्णः कृष्णवर्णो वा प्रादेशमात्रः षड्दीर्घत्वेन, सामवेदो नित्यं स्रग्वी सुप्रयतः शुचिवासाः शमी दान्तो बृहच्छरीरः शमीदण्डी कातरनयन आदित्यवर्णो वर्णेन नवारत्निमात्रः , अथर्ववेदस्तीक्ष्णः प्रचण्डः कामरूपी विश्वकर्ता क्षुद्रकर्मा स्वशाखाध्यायी प्राज्ञश्च महानीलोत्पलवर्णो वर्णेन दशारत्निमात्रः । ऋग्वेदस्याऽऽत्रेयसगोत्रं सोमदैवत्यं गायत्रीछन्दो यजुर्वेदस्य काश्यपसगोत्रमिन्द्रदैवत्यं त्रिष्टुप्छन्दः सामवेदस्य भारद्वाजसगोत्रं रुद्रदैवत्यं जगतीछन्दोऽथर्ववेदस्य वैतानसगोत्रं ब्रह्मदैवत्यमनुष्टुप्छन्दः ॥

(१) शौच. ४.

## कौशिकीयचरणव्यूहः

चत्वारो वेदा उपवेदाश्च, वेदानां गोत्राणि देवताश्च

'ओम् अथातश्चरणव्यूहं व्याख्यास्यामः ॥ तत्र चत्वारो वेदा भवन्ति– ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेदश्चेति ॥

तत्र ऋग्वेदस्यार्थशास्त्रमुपवेदः । यजुर्वेदस्य धनुर्वेदोपवेदः । सामवेदस्य गान्धर्ववेदोपवेदः । ब्रह्मवेदस्याऽऽयुर्वेदोपवेदः । अभिचारकार्थशास्त्रमित्युच्यते ॥

ऋग्वेद आत्रेयसगोत्रोऽग्निर्देवता । यजुर्वेदः काश्यपसगोत्रो वायुर्देवता । सामवेदो भारद्वाजसगोत्रो विष्णुर्देवता । ब्रह्मवेदो वैतायनसगोत्रो ब्रह्मा देवता ॥

ऋग्वेदस्य मूर्तिः परिमाणं च, तस्य सप्त शाखाः ऋक्संख्या च

अथातः ऋग्वेदः पीतवर्णः पद्मपत्राक्षः सुविभक्तग्रीवः कुञ्चितकेशश्मश्रुः सुप्रतिष्ठितजानुजङ्घः । प्रमाणेन स वितस्तयः पञ्च ॥

तत्र ऋग्वेदस्य सप्त शाखा भवन्ति । तद्यथा– आश्वलायनाः शाङ्खायनाः साध्यायनाः शाकला बाष्कला औदुम्बरा माण्डूकाश्चेति ॥

तेषामध्ययनम्–

ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
ऋचामशीतिः पादश्च एतत्पारणमुच्यते ॥

षडङ्गस्य यजुर्वेदस्य शाखाः , वाजसनेयकम् , यजुर्वेदस्य मूर्तिः

'तत्र यजुर्वेदस्य चतुर्विंशतिर्भेदा भवन्ति । तद्यथा– काण्वा माध्यंदिना जाबालाः शापेयाः श्वेताः श्वेततरास्ताम्रायणीयाः पौर्णवत्सा

(१) कौच. १।१–७.
(१) कौच. २।१–६.

आवटिकाः परमावटिका हौष्या धौष्याः खाण्डिका आह्वरकाश्चरका मैत्रा मैत्रायणीया हारितकर्णाः शालायनीया मर्चकठाः प्राच्यकठाः कपिष्ठलकठा उपलास्तैत्तिरीयाश्चेति ॥

तेषामध्ययनम्–

द्वे सहस्रे शते न्यूने वेदे वाजसनेयके।
सकलं परिसंख्यातं ब्राह्मणं तु चतुर्गुणम् ॥

अष्टादश शतानि भवन्ति। तान्येव त्रिगुणमधीत्य क्रमपारो भवति, सतस्तु चीराश्चेति ॥

शाखास्तिस्रो भवन्ति। तद्यथा– वार्षिकमर्धाध्ययनीयाः। पारश्चर्याः। पारश्रमणीयाः। पारक्रमवतः। क्रमपारश्चेति ॥ (१)

षडङ्गान्यधीत्य षडङ्गविद्भवति। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि ॥

अथ यजुर्वेदः प्रांशुः प्रलम्बजठरः स्थूलगलकपालो रक्तो वर्णेन प्रादेशाः षड् दीर्घत्वेन। यजुर्वेदस्यैतद्रूपं भवति ॥

सामवेदस्य शाखाः मूर्तिः परिमाणं देवताश्च

'तत्र सामवेदस्य शाखासहस्रमासीत्। अनध्यायेष्वधीयानाः सर्वे ते शक्रेण विनिहताः ॥

तत्र केचिदवशिष्टाः प्रचरन्ति। तद्यथा– राणायनीयाः साद्यमुग्राः कालपा महाकालपाः कौथुमा लाङ्गलिकाश्चेति ॥

कौथुमानां षड् भेदा भवन्ति। तद्यथा– सारायणीया वातरायणीया वैतधृताः प्राचीनास्तेजसा अनिष्टकाश्चेति ॥

तेषामध्ययनम्–

अष्टौ सामसहस्राणि सामानि च चतुर्दश।
सोह्यानि सरहस्यानि एतत्सामगणं स्मृतम् ॥

(१) कौच. ३।१–६.

अथ सामवेदः सुवर्चाः सुगन्धिस्तेजस्वी मृदुवक्ता ब्रह्मण्यः प्रलम्बबाहुर्दुश्चर्मी कृष्णो वर्णेन कातरः स्वरेणेति ॥

षडरत्निः प्रमाणेन च स्मृतः। स्तुवन्त्यृषयो ब्रह्मा सामानि, तिष्ठति संनिधौ स भगवान्सामवेदो महेश्वरभक्तः ॥

षडङ्गस्य अथर्ववेदस्य शाखाः उपनिषदः कल्पाः परिशिष्टानि व्रतानि च

'तत्र ब्रह्मवेदस्य नव भेदा भवन्ति। तद्यथा –पैप्पलादाः स्तौदा मौदाः शौनकीया जाजला जलदा ब्रह्मवदा देवदर्शाश्चारणवैद्याश्चेति ॥

तेषामध्ययनम्–

ऋचां द्वादश सहस्राण्यशीतिस्त्रिशतानि च।
पर्यायिकं द्विसहस्राण्यन्यांश्चैवार्चिकान्बहून् ॥ इति ॥

एतद्ग्राम्यारण्यकानि षट् सहस्राणि भवन्ति ॥

तत्र ब्रह्मवेदस्याष्टाविंशतिरुपनिषदो भवन्ति – मुण्डका प्रश्नका ब्रह्मविद्या क्षुरिका चूलिकाऽथर्वशिरोऽथर्वशिखा गर्भोपनिषन्महोपनिषद्ब्रह्मोपनिषत्प्राणाग्निहोत्रं माण्डूक्यं नादबिन्दु ब्रह्मबिन्दुरमृतबिन्दु ध्यानबिन्दु तेजोबिन्दु योगशिखा योगतत्त्वं नीलरुद्रः पञ्चतापिन्येकदण्डी संन्यासविधिररुणिर्हंसः परमहंसो नारायणोपनिषद्वैतथ्यं चेति ॥

तत्र गोपथः शतप्रपाठकं ब्राह्मणमासीत्। तस्यावशिष्टे द्वे ब्राह्मणे पूर्वमुत्तरं चेति ॥

तत्र षडङ्गान्यधीत्य षडङ्गविद्भवति। षडङ्गानि भवन्ति– शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ॥

पञ्च कल्पा भवन्ति–

नक्षत्रकल्पो वैतानकल्पस्तृतीयः संहिताविधिः।
चतुर्थ आङ्गिरसः कल्पः शान्तिकल्पस्तु पञ्चमः ॥

(१) कौच. ४।१–१२.

लक्षणग्रन्था भवन्ति– चतुरा( ? र )ध्यायिका प्रातिशाख्यं पञ्चपटलिका दन्त्योष्ठ( ? ष्ठ्य )विधिर्बृहत्सर्वानुक्रमणी चेति ॥

तत्र द्वासप्ततिः परिशिष्टानि भवन्ति कौशिकोक्तानि– ¶ कृत्तिकारोहिणी, राष्ट्रसंवर्गः, राजप्रथमाभिषेकः, पुरोहितकर्माणि, पुण्याभिषेकः, पिष्टराज्याः कल्पः, आरात्रिकम्, घृतावेक्षणम्, तिलधेनुः, भूमिदानम्, तुलापुरुषः, आदित्यमण्डकः, हिरण्यगर्भः, हस्तिरथः, अश्वरथः, गोसहस्रदानम्, हस्तिदीक्षा, अश्वदीक्षा, वृषोत्सर्गः, इन्द्रोत्सवः, ब्रह्मयागः, स्कन्दयागः, संभारलक्षणम्, अरणिलक्षणम्, यज्ञपात्रलक्षणम्, वेदिलक्षणम्, कुण्डलक्षणम्, समिल्लक्षणम्, स्रुवलक्षणम्, हस्तलक्षणम्, ज्वालालक्षणम्, लक्षहोमः, काङ्कायनोक्तबृहल्लक्षहोमः, कोटिहोमः, गणमाला, घृतकम्बलम्, अनुलोमकल्पः, आसुरीकल्पः, उच्छुष्मकल्पः, समुच्चयप्रायश्चित्तानि, ब्रह्मकूर्चविधिः, पैठीनसितडागविधिः, पाशुपतव्रतविधिः, संध्योपासनविधिः, स्नानविधिः, तर्पणविधिः, श्राद्धविधिः, अग्निहोत्रविधिः, उत्तमपटलम्, वर्णपटलम्, निघण्टुः, चरणव्यूहः, चन्द्रप्रातिपदिकम्, ग्रहयुद्धम्, ग्रहसंग्रहः, राहुचारः, केतुचारः, ऋतुकेतुलक्षणम्, कूर्मविभागः, मण्डलानि, दिग्दाहलक्षणम्, उल्कालक्षणम्, विद्युल्लक्षणम्, निर्घातलक्षणम्, परिवेषलक्षणम्, भूमिकम्पलक्षणम्, नक्षत्रग्रहोत्पातलक्षणम्, उत्पातलक्षणम्, सद्योवृष्टिलक्षणम्, गोशान्तिः, अद्भुतशान्तिः, स्वप्नाध्यायः, अथर्वहृदयम्, भार्गवीयगार्ग्यबार्हस्पत्यौशनसाद्भुतानि, महाद्भुतानि, बृहत्सर्वानुक्रमणी चेति ॥

तत्र पञ्चदशोपनिषदो भवन्ति– मुण्डका, प्रश्नका, ब्रह्मविद्या, क्षुरिका, चूलिका, अथर्वशिरः, अथर्वशिखा, गर्भोपनिषत्, महोपनिषत्, ब्रह्मोपनिषत्, प्राणाग्निहोत्रम्, माण्डूक्यम्, वैतथ्यम्, अद्वैतम्, अलातशान्तिश्चेति ॥

तत्र ब्रह्मवेदेऽष्टादश व्रतानि चरिष्यन्सावित्रीव्रतम्, वेदव्रतम्, वेदोत्तरव्रतम्, मैलव्रतम्, मैलोत्तरव्रतम्, मृगारव्रतम्, रेहितव्रतम्, विषासहिव्रतम्, यमव्रतम्, शान्तिव्रतम्,

¶ अत्राऽऽदर्शपुस्तके कृत्तिकारोहिण्यादिबृहत्सर्वानुक्रमण्यन्तानि परिशिष्टानि ऊर्ध्वरेखाभिर्विभज्यानुक्रान्तानि । तानि च षट्सप्ततिर्भवन्ति । तथा च प्रतिज्ञातद्वासप्ततित्वेन विरोध आपतितः । तत्र बृहत्सर्वानुक्रमण्याः पूर्वं लक्षणग्रन्थेषु संग्रहात् पुनः परिशिष्टेषु निवेशः प्रामादिकः संभवति । अत एवाऽऽदर्शपुस्तके अत्रानुक्रान्ताऽपि सा न संगृहीता । तथापि पञ्चसप्ततित्वस्य विरोधस्तदवस्थ एव । आदर्शसंपादकैरौशनसाद्भुतानां पृथक्परिशिष्टविषयत्वकल्पनात् तन्मते षट्सप्ततित्वमपि तदवस्थमेव । एवं च तन्मते चत्वार्यधिकान्यनुक्रान्तानि प्रतीयन्ते । तमेतं विरोधमत्रानुक्रमे पृथक्त्वेन प्रतीयमानयोः कयोश्चिद्द्वयोर्द्वयोः परिशिष्टयोरेकैकपरिशिष्टत्वकल्पनेन परिहृत्य द्वासप्ततिमेव परिगणय्य च परिशिष्टानि संगृहीतान्यादर्शपुस्तके । तद्यथा– 'हस्तिदीक्षा, अश्वदीक्षा, वृषोत्सर्गः' इति त्रयाणां स्थाने परिशिष्टद्वयं कल्पितम् । तत्र विषयसांकर्यादसंकीर्णो विषयभेदो न वक्तुं शक्यते । हस्त्यश्वदीक्षाविषयकः कियांश्चिद्भागः सप्तदशपरिशिष्टत्वेन परिगणितः, हस्त्यश्वदीक्षाविषयक एव कियांश्चिद्भागो वृषोत्सर्गश्चाष्टादशत्वेन परिगणितः । इन्द्रमहोत्सवब्रह्मयागयोर्मिलित्वैकं परिशिष्टम्, लक्षहोमबृहल्लक्षहोमयोर्मिलित्वैकं परिशिष्टम्, दिग्दाहलक्षणोल्कालक्षणयोश्च मिलित्वैकं परिशिष्टं कल्पितमिति । तत्र प्रमाणं मृग्यम् । अस्माभिस्तु संकीर्णहस्त्यश्वदीक्षारूपविषयैक्येऽपि परिशिष्टभेदकल्पने, वृषोत्सर्गरूपविषयभेदेऽपि परिशिष्टभेदाकल्पने, इन्द्रमहोत्सवब्रह्मयागयोः एकपरिशिष्टकल्पने, औशनसाद्भुतानामद्भुतत्वेन भार्गवीयादिसमानविषयत्वेऽपि भार्गवीयादिभिः समस्तत्वेऽपि च पृथक्परिशिष्टत्वकल्पने चापरितुष्यद्भिः निर्णायकप्रमाणमनुपेयिवद्भिश्च विरोधपरिहारार्थमादर्शपुस्तकसंपादककल्पनानुरोधेन परिशिष्टविभागप्रदर्शनमकृत्वा यथादर्शमेव विभागः स्थापितः ।

**शिखिव्रतम् , गणव्रतम् , शिरोव्रतम् , शिखाव्रतम् , मरुद्व्रतम् , अधिव्रतम् , अङ्गिरोव्रतम् , पाशुपतव्रतं चरेत् ॥**

**कृच्छ्रम् , तप्तकृच्छ्रम् , अतिकृच्छ्रम् , सर्वकृच्छ्रम् , मौन्दभायः , तुलापुरुषः , सांतपनम् , महासांतपनं चेति ॥**

उपनीतेनापि अन्यवेदाध्ययनानन्तरमथर्ववेदाध्ययनार्थमुपनयनं पुनः कर्तव्यम् , अथर्ववेदस्य मूर्तिः गोत्रं च

**[1]यो वै ब्रह्मवेदेषूपनीतः स सर्ववेदेषूपनीतः ॥**
**यो वै ब्रह्मवेदेष्वनुपनीतः स सर्ववेदेष्वनुपनीतः ॥**

**अन्यवेदे द्विजो यो ब्रह्मवेदमधीतुकामः स पुनरुपनेयः ॥**

**देवाश्च ऋषयश्च ब्रह्माणमूचुः– को नो स्मो ज्येष्ठः , क उपनेता, क आचार्यः , को ब्रह्मत्वं चेति ॥**

**तान्ब्रह्माऽब्रवीत्–**

**अथर्वा वो ज्येष्ठोऽथर्वोपनेताऽथर्वाऽऽचार्योऽथर्वा ब्रह्मत्वं चेति ॥**

**तदप्येतदृचोक्तम् ' ब्रह्मज्येष्ठा ' इत्येतया ॥**

**इति तस्याहं ब्रह्मवेदश्चतुर्णां वेदानां साङ्गोपाङ्गानां तं सवाकोवाक्यानां सेतिहासपुराणानाम् ॥**

**अथातो ब्रह्मवेदः कपिलो वर्णेन तीक्ष्णः प्रचण्डः कामरूपी विश्वात्मा जितेन्द्रियः । स तस्मिन्भगवति दुर्वारज्वालः ॥**

**क्षुद्रकर्मा स च भगवान्ब्रह्मवेदश्चतुर्मुखो द्विपक्षो दान्तो धर्मी बलवान्प्राज्ञः कृतोत्थापनीयः क्रूरः षडङ्गानि विमृशी षडङ्गानि षड्वैतायनो गोत्रेण ॥**

(१) कौच. ५।१-११.

## कातीयचरणव्यूहः

वेदचतुष्टयम् , अष्टौ स्थानानि ऋग्वेदस्य प्रकृतयो विकृतयश्च

**[1]अथातश्चरणव्यूहं व्याख्यास्यामः । तत्र यदुपगतं चातुर्वेद्यं चत्वारो वेदा विज्ञाता भवन्ति तत्र– ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति । तत्र ऋग्वेदस्याष्टौ स्थानानि भवन्ति– चर्चा श्रावकश्चर्चकः श्रवणीयपारः क्रमपारः क्रमपदः क्रमजटः क्रमदण्डश्चेति । चतुष्पारायणम् । एतेषां शाखाः पञ्चविधा भवन्ति– शाकला बाष्कला आश्वलायनाः शाङ्खायना माण्डूकायनाश्चेति ॥**

अथेति । अथेत्ययं निपातः प्रारम्भार्थकः । अतः-शब्दो हेत्वर्थकः । यतो वेदास्तदङ्गानि समधीतानि अतस्तत्संबन्धि यदावश्यकं ज्ञानं तन्निरूपणायेदं परिशिष्टं प्रारम्यत इत्यर्थः । चरणेति । सकलवेदराशेश्चतुर्थोऽशश्चरणशब्देनोच्यते । तस्य व्यूहः समुदायः । तत्र चरणव्यूहे यत् उपगतं प्राप्तम् । उक्तमिति पाठे निरूपितमित्यर्थः । तदेव चातुर्वेद्यं चतुर्णां वेदानां समाहारश्चातुर्वेद्यमिति । तत्र चातुर्वेद्ये । ऋग्वेद इति । 'नियतपादाक्षरावसाना ऋचः ' इत्युक्तलक्षणाभिः ऋग्भिर्बहुल ऋग्वेदः । ' अनियतपादाक्षरावसानानि यजूंषि ' इत्युक्तलक्षणैर्यजुर्भिर्बहुलो यजुर्वेदः । ' गीतिविशिष्टा ऋच एव सामानि ' इत्युक्तलक्षणैः सामभिर्बहुलः सामवेदः । निरुक्तैतदवयवत्रितयानतिरिक्तैरथर्वदृष्टैः शान्तिकपौष्टिकाभिचारिकैर्मन्त्रैर्बहुलोऽथर्ववेदः । स्थानानीति । संहिता ‡ब्राह्मणं पदपाठः क्रमपाठः इतीमानि चत्वारि प्रकृतिभूतानि । जटा शिखा रेखा माला ध्वजो दण्डो रथो घनश्चेतीमानि अष्टौ विकृतिभूतानीति । एवमष्टौ स्थानानि कैश्चिदुच्यन्ते । वस्तुतस्तु– चर्चेत्यादीनि मूले

‡ ब्राह्मणस्य प्रकृतित्वं चिन्त्यम् ।

(१) काच. १ ; संग. १४ ( तेषामध्ययनम् ) एतावदेव (=).

एवानुपदमुक्तान्येवाष्टौ स्थानानि अध्ययनालम्बनानीति सुवचानि । चर्चेति । चर्चा अध्ययनम् '‡चर्च अध्ययने चुरादयः' इति उणादिसूत्रपाठात् । गुरुमुखाच्छन्दात्मकस्य वेदस्य यदपूर्वं श्रवणं कृत्वा स्वयं ताल्वोष्ठव्यापारेणापूर्वमुच्चारणम् †अध्ययनम् । अस्याध्ययनस्य श्रावकः अध्यापयिता गुरुः । अर्थात्तत्कृतमध्यापनम् । चर्चकोऽध्येता शिष्यः । अर्थात्तत्कृतो मुहुर्मुहुः पठनरूपोऽभ्यास इत्यर्थः । श्रोतुमर्हः श्रवणीयः वेदः तस्य पारः अन्तिमो देशः । अर्थात्समाप्तिरिति यावत् । ब्रह्मयज्ञपारायणादावादितोऽन्तपर्यन्तं क्रमशो नियतः पाठो नित्यो नैमित्तिकश्च स्वाध्याय इत्यर्थः । क्रमपार इति । क्रमः संहिता, 'पदप्रकृतिः संहिता' (नि. १।१७) इति निरुक्ताशयात् तस्याः पारो नामाऽऽदितोऽन्तपठनेन प्राप्तोऽन्तिमः प्रदेश इति । सा च द्विविधा— 'परः संनिकर्षः संहिता' (पासू. १।४।१०९, नि. १।१७) इत्युक्तलक्षणा प्रथमा केवलसंहिता वा प्रकृतिसंहितेति व्यवह्रियमाणा, 'अनुलोमविलोमाभ्यां त्रिवारं हि पठेत्क्रमम् ॥' इत्युक्तलक्षणा द्वितीया आर्षी संहिता वा योगारूढा संहितेत्युच्यमाना । इत्येवमुभयविधः संहितापाठ इति यावत् । क्रमपद इति । क्रमः संहिता, तस्याः पदानि, तेषां समाहारो यत्र स क्रमपदः पदपाठ इत्यर्थः । इतीमे प्रकृतिपारायणे द्वे भवतः । क्रमजटः क्रमदण्ड इति । अयमाशयः— यज्जटाद्यष्टविकृतिषु जटादण्डयोरेव प्राधान्यम् । यतश्च शिखा घनश्चेति द्वे विकृत्यौ जटामनुसरतः, माला रेखा ध्वजो रथश्चेति चतस्रो विकृतयो दण्डमनुसरन्ति । सर्वा अपि विकृतयः क्रमपूर्वं पठनीयाश्च । 'सर्वे व्यवहाराः प्रधानव्यपदेश्या भवन्ति' इति न्यायेन प्रधानव्यपदेशोऽयमिति । इतीमे द्विप्रकारके विकृतिपारायणे द्वे भवतः । एवं चतुष्पारायणं चतुःप्रकारकं पारायणं भवतीति ।

‡ विसंगतोऽयं ग्रन्थः, एतादृशोणादिसूत्राभावात्, 'चुरादयः' इति बहुत्वस्यानन्वितत्वाच्च ।

† पूर्वं यच्छब्दप्रयोगादत्र 'तत्' इत्यध्याहार्यम् ।

एतेषामिति । चतुर्विधानां वेदपारायणानामित्यर्थः ।

विप.

ऋग्वेदस्य ऋगध्यायमण्डलसूक्तवर्गादीनां संख्या

[1]तेषामध्ययनम्—

[2]अध्यायाश्च चतुःषष्टिर्मण्डलानि दशैव तु ।
एकर्च एकवर्गश्च एकश्च नवर्चस्तथा ॥

[3]द्वौ वर्गौ तु द्वृचौ ज्ञेयौ त्र्यूनं तृचशतं स्मृतम् ।
चतुर्ऋचं समाख्यातं षट्सप्तत्युत्तरं शतम् ॥

पञ्चर्चे द्वादश शतान्यष्टाविंशोत्तराणि च ।
शतत्रयं षडृचं च सप्तपञ्चाशदुत्तरम् ॥

सप्तर्चमेकोनत्रिंशदुत्तरं शतमेककम् ।
अष्टर्चे पञ्चपञ्चाशद्वर्गाः स्युर्नाधिकोत्तराः ॥

तेषामिति । तेषां शाखाप्रवर्तकानां शाकलादीनां पञ्चानामपि श्रुतर्षीणाम् अध्ययनं समानमिति ज्ञापयतीत्यग्रे संबन्धः । अध्यायाश्चेति । अधीयते इत्यध्यायो वेदः । तस्य येऽवान्तरभूताः स्वल्पकालेन समधीयमाना वेदविभागास्तेऽप्यध्यायशब्देन व्यवह्रियन्ते । ते च चतुःषष्टिसंख्याकाः । अनेकेषां सूक्तानामनुवाकानां (वा) समुदायो (वा ?) यत्र तानि मण्डलानि । तानि दशसंख्याकान्येव । एकर्च इति । 'एकर्चः' इत्यारभ्य 'वर्गाः स्युर्नाधिकोत्तराः' इत्यन्तम् ऋक्परिगणनं वर्गपरिगणनं च स्पष्टार्थम् । संकलनया ऋचां संख्या १०६३० (? ३४) वर्गसंख्या २०४४ (? ४६) । एतच्च कात्यायनीयपरिगणनं शाङ्खायनपाठाभिप्रायेणेति प्रतिभाति । शौनकीयचरणव्यूहधृतपाठानुसारेण परिगणनं तु शाकलपाठाभिप्रायेण संवाद्यते । तत्परिगणनं तु— सूक्तानि १०२८, वर्गाः १०२४, ऋचः १०५५२ । वालखिल्यसूक्तसहितमेतत् । विप.

(१) काच. १ ; संग. १४ (=).

(२) काच. १ ; संग. १४ पू. (=).

(३) काच. १ .

[1]वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे ।
सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् ॥

[2]ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
ऋचामशीतिपादश्चैतत्पारायणमुच्यते ॥

वर्गाणामिति । एतच्च वर्गाणामृचां च परिसंख्यानं वालखिल्यैर्विना विज्ञेयम् । एवमृग्वेदे पारायणं पारायणेऽध्ययनमुच्यत इति । विप.

साङ्गस्य यजुर्वेदस्य कृष्णस्य शुक्लस्य च शाखाः
स्थानानि परिशिष्टानि च

[3]यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरकानां द्वादश भेदा भवन्ति— चरका आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वारायणीया वार्तान्तवीयाः श्वेताश्वतरा औपमन्यवाः वाताण्डनीया मैत्रायणीयाश्चेति । तत्र मैत्रायणीयानां सप्त भेदा भवन्ति— मानवा वाराहा दुन्दुभाश्छागलेयाः श्यामाः शामायनीया हारिद्रवीयाश्चेति । तत्र हारिद्रवीयानां पञ्च भेदा भवन्ति । तत्र हारिद्रवीयाऽऽसुरी गार्गी शार्कराक्ष्याश्चावासवी चेति पञ्चेति हारिद्रवीयसंग्रहः । तेषामध्ययनम्— अष्टादश यजुःसहस्राण्यधीत्य शाखापारो भवति, तान्येव द्विगुणान्यधीत्य पदपारो भवति, तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति, षडङ्गान्यधीत्य षडङ्गविद्भवति । तत्र षडङ्गानि भवन्ति— शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ॥

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

(१) काव. १ ; संग. १४.
(२) काव. १.
(३) काव. २.

तथा प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि ॥

यजुर्वेदस्येति । शुक्लकृष्णोभयात्मकयजुर्वेदस्य मध्ये उत्तरस्य कृष्णस्य यजुर्वेदस्येत्यर्थः, शुक्लयजुर्भेदानां वक्ष्यमाणत्वादत्रानुपदं 'षडशीतिर्भेदाः' इत्यवान्तरभेदकथनोपक्रमात्तथाप्रतिपत्तेः । षडशीतिर्भेदाः तावत्संख्याकाः शाखाभेदा इति यावत् । तत्रेति । उक्तषडशीतिशाखानां मध्ये । चरकानामित्यादि हारिद्रवीयसंग्रह इत्यन्तो भागः स्पष्टार्थः । अत्र शौनकीयचरणव्यूहस्य महीदासकृतव्याख्याने 'मैत्रायणीयस्तु वाजसनेयवेदाध्यायी' इतीदं व्याख्यानं प्रामादिकम्, इतिहासपरंपराविरुद्धत्वात् । सर्वे मैत्रायणीयाः कृष्णयजुर्वेदाध्यायिन एवेति सर्वविदितम् । तेषामिति । तेषां द्वादशानां चरकानां सप्तानां मैत्रायणीयानां पञ्चानां हारिद्रवीयाणां चेति । अध्ययनम् अष्टादशसहस्रसंख्याकानि यजूंषि । इयं च संख्या मन्त्रब्राह्मणे †संकलीकृत्य विज्ञेया । अत एवोपदेशस्तावन्तं यजुर्गणमधीयानः शाखापारः समग्रशाखाध्यायी भवतीति । द्विगुणानीति । तान्येव ‡उक्तसंख्याकानि यजूंष्येव । द्वितीयो गुणः

† अत्र च्विप्रत्ययोपपत्त्यै संकलशब्दः कर्मव्युत्पन्नो बोद्धव्यः ।

‡ व्याख्यानमिदं प्रामादिकम् । तथाहि— 'अष्टादशयजुःसहस्राणि' इत्यत्र यजुःशब्दः ऋङ्मन्त्राणामप्युपलक्षक इति, 'मन्त्रब्राह्मणे संकलीकृत्य' इत्यत्र मन्त्रब्राह्मणशब्दः संहितासंज्ञकब्राह्मणसंज्ञकोभयग्रन्थपर इति च व्याख्यातुरभिमतमिति 'अत एवोपदेशः' इत्यादिहेतुवाक्यात् प्रतीयते। पण्डितवर्येण दैवरातगजानन्दशर्मणाऽपि तैत्तिरीयसंहिताभूमिकायां वेदवेदिकाभिधायाम् "अष्टादशयजुःसहस्राणि' इति परिमाणं तु समग्रयजुर्वेदस्यैव भवितुमर्हति। तत्र ऋचां परिमाणं पृथङ्नोक्तम्, नापि तत् केवलानां यजुषाम्। ऋग्यजुःसामान्येन अष्टादशसहस्राणि यजूंषि यजुर्वेदमन्त्राणि भवन्तीत्यर्थः" इत्युक्तम्। तथा च उक्तसंख्यासंख्येयेषु संहिताभिन्नब्राह्मणसंज्ञकग्रन्थस्थयजूंष्यप्यन्तर्भूतानीति स्पष्टम्। न च तादृशब्राह्मणग्रन्थस्य पदपाठक्रमपाठौ वैदिकसंप्रदाये स्तः। तस्मात् 'उक्तसंख्याकानि' इति व्याख्यानं न

पदविभागलक्षणो येषां तादृशानि संपादितानि कृत्वाऽधीयानः पदपारः पदकः भवति । तान्येव पुनस्तृतीयो गुणः क्रमपाठलक्षणो येषां तादृशानि संपादितानि कृत्वाऽधीयानः क्रमपारः क्रमको भवति । संहितापदक्रमेतित्रिविधमध्ययनं मन्त्रब्राह्मणयोरुभयोरपि वेदभागयोर्भवतीति कृष्णयजुर्वेदस्य मन्त्रब्राह्मणाभ्यां व्यामिश्रितत्वदर्शनात् । साङ्गमिति । अङ्गमित्युपाङ्गानामुपलक्षणम् । तेनाङ्गानामनन्तरक्षणमुपाङ्गानां निरूपणं संगच्छते । साङ्गोपाङ्गवेदाध्ययनप्रशंसार्थमादौ 'षडङ्गान्यधीत्य' इत्युपक्रमः, मध्ये षडङ्गानामनुक्रमेण परिगणनम्, अन्ते च, कान्यङ्गशास्त्राणि वेदपुरुषस्याङ्गिनः किंरूपाण्यङ्गानीति प्रदर्शनार्थं तत्तदवयवत्वकल्पनाद्वारा फलनिरूपणं चेति संपिण्डितोऽर्थः । प्रतिपदमिति । प्रतिपदं प्रतिचरणं प्रतिशाखमित्यर्थः । अनुपदम् अङ्गानामनन्तरमित्यर्थः । छन्द इति । छन्दः सर्वानुक्रमः । भाषा प्रातिशाख्यम्, अन्यथा पुनरुक्तिदोषापत्तेः । मीमांसा पूर्वोत्तरकर्मब्रह्ममीमांसाद्वयम्, न्यायः गौतमीया षोडशपदार्थी, तर्कः वैशेषिकी सप्तपदार्थी चेति षडुपाङ्गानि । भवन्तीति शेषः । विप.

[1]तथाऽत्र तैत्तिरीयकाणां द्विभेदा भवन्ति– औखेयाः खाण्डिकेयाश्चेति । तत्र खाण्डिकेयानां पञ्च भेदा भवन्ति– भारद्वाजी आपस्तम्बी बौधायनी सत्याषाढी शाट्यायनी चेति ।

तेषामध्ययनम्–

काण्डास्तु सप्त विज्ञेयाः प्रश्नाश्चाधिक्यकाश्चतुः ।
चत्वारिंशत्तु विज्ञेया अनुवाकाः शतानि षट् ॥
एकपञ्चाशदधिकाः संख्याः पञ्चाशदुच्यते ।
द्विसहस्रं चैकशतमष्टानवति चाधिका ॥
लक्षैकं तु द्विनवतिसहस्राणि प्रकीर्तितम् ।
पदानि नवतिश्चैव तथैवाक्षरमुच्यते ॥
लक्षद्वयं त्रिपञ्चाशत्सहस्राणि शताष्टकम् ।
अष्टषष्ट्यधिकं चैव यजुर्वेदप्रमाणकम् ॥
शाखावाक्यान्ययुतानि सहस्राणि नवानि च ।
चतुःशतान्यशीतिश्च अष्टौ वाक्यानि गण्यते ॥

इति ब्राह्मणम् । एवमेषामध्ययनं प्रवचनीयं सौत्रिकं चेति । तत्र कठानां तूपगाश्चतुश्चत्वारिंशत् ॥

‡[1]मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।
यजुर्वेदः स विज्ञेय अन्ये शाखान्तराः स्मृताः ॥ इति ॥

तथेति । तद्वच्चात्र कृष्णयजुर्वेदस्य षडशीतिशाखानां मध्ये । तत्रेति । तत्र खाण्डिकेयानां मध्ये । तेषामिति । तेषां सकलानां तैत्तिरीयाणामिति । काण्डाः सप्त । प्रश्नाः चतुश्चत्वारिंशत् । अनुवाकानां एकपञ्चाशदधिकं षट्शतम् । पञ्चाश्यो द्विसहस्रैकशताष्टानवतिपरिमिताः । पदानि लक्षैकद्विनवतिसहस्रनवतिसंख्याकानि । अक्षराणि लक्षद्वयत्रिपञ्चाशत्सहस्राष्टशतान्यष्टषष्ट्यधिकानि च । ब्राह्मणवाक्यानि तु– एकोनविंशतिसहस्रचतुःशताष्टाशीतिसंख्यापरिमितानि चेति । एवम् उक्तप्रकारेण एषां तैत्तिरीयाणां प्रवचनीयं वेदसंबन्ध्यध्ययनं च पुनः सौत्रिकं गृह्यश्रौतधर्मप्रतिपादकानि सूत्राणि क्वचित्क्वचित्तत्परिशिष्टानि च । तत्र कठानाम् उपगाः उपग्रन्थाः चतुश्चत्वारिंशत्संख्याकाः । भवन्तीति शेषः ।

---

संगच्छते । अतोऽत्र "शाखापार इत्यत्र शाखाशब्दो मन्त्राणां ब्राह्मणोपजीव्यत्वेन प्राधान्यात् प्रवृत्तिसंकोचेन मन्त्रमात्रपरः, यथा परस्तात् 'शाखावाक्यान्ययुतानि' इत्यत्र शाखाशब्दो ब्राह्मणपरः । यद्यपि तान्येवेति तच्छब्देन पूर्वप्रकृतोक्तसंख्याविशिष्टयजुषां परामर्श औत्सर्गिकः, तथापि ब्राह्मणग्रन्थस्थयजुषां पदक्रमपाठस्यासिद्धत्वात् उक्तसंख्यासंख्येयैकदेशभूतानि संहिताग्रन्थस्थितयजूंष्येव तच्छब्देन परामृश्यन्ते । स च तच्छब्दः संहिताग्रन्थस्थब्राह्मणस्याप्युपलक्षकः, तस्यापि पदक्रमपाठयोः संप्रदायसिद्धत्वात्" इति व्याख्यातुमुचितमिति भाति ।

(१) काच. २.

‡ अस्य श्लोकस्य संगव्याख्यानमस्मिन्नेव प्रकरणे आदौ संगृहीते संगशास्त्रार्थे ( वका. पृ. २९० ) द्रष्टव्यम् ।

(१) काच. २ ; संग. २० ज्ञेय अन्ये (ज्ञेयो ह्यन्ये).

मन्त्रेति । मन्त्रब्राह्मणाभ्यामिश्रोऽयं तैत्तिरीयः कृष्णयजुर्वेदः त्रिगुणं संहितापदक्रमेति त्रिविधं यथा स्यात्तथा यस्यां यस्यां शाखायां पठ्यते स स यजुर्वेदः अर्थात्कृष्णयजुर्वेदः ज्ञेयः । अन्ये शाखान्तराः कृष्णमिश्राः शुक्लाः शाखाः स्मृताः । ऋषिभिरिति शेषः । 'विज्ञेय अन्ये' इत्यत्रासंधिरार्षः । विप.

[1]तत्र वाजसनेयिनां पञ्चदश भेदा भवन्ति–जाबाला बौधेयाः काण्वा माध्यंदिनाः शापेयास्तापायनीयाः कपोलाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशरा वैनधेया गालवाः कात्यायना बैजवापाश्चेति । तेषामध्ययनम्–

द्विसहस्रः शतन्यूनो मन्त्रे वाजसनेयके ।
ऋग्गणः परिसंख्यातः शेषमन्यद्यजुः स्मृतम् ॥

अष्टौ सहस्राणि शतानि चाष्टावशीतिरष्टाक्षराण्यृग्भिर्विभक्तं केवलं सखिलं सशुक्रियं च यत् ।

सकलं परिसंख्यातं ब्राह्मणं च चतुर्गुणम् ॥

तत्र माध्यंदिनीयपरिमाणं तु–

कण्डिकास्तु परिज्ञेयाः शतान्येकोनविंशतिः ।
पञ्चसप्तत्यधिकानि वेदे माध्यंदिनीयके ।
ब्राह्मणं तु शतपथं काण्डानि च चतुर्दश ॥
मन्त्रः पदः क्रमश्चैव चतुर्थं स्याज्जटा तथा ।
क्रममाला शिखा रेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः ॥
पारस्करं गृह्यसूत्रं कल्पः कात्यायनीयकः ।
षडङ्गोपाङ्गयुग्वेदो यथोक्तफलदो भवेत् ॥

तत्रेति । तत्र यजुर्वेदस्य शुक्ले भेदे । शुक्लत्वं च वेदोपक्रमणे प्रतिपद्विद्धपूर्णिमाग्रहणात्कृष्णत्वम्, चतुर्दशीविद्धपूर्णिमाग्रहणाच्छुक्लत्वमिति बोध्यम् । वाजसनेयिनामिति । वाजः अन्नम्, 'अन्नं वै वाजः' इति श्रुतेः । वाजस्य अन्नस्य सनिः दानं यस्य महर्षेरस्ति सोऽयं वाजसनिः देवरातनामा महर्षिः, तस्यापत्यं पुमान् वाजसनेयः याज्ञवल्क्यः । तेन प्रविभक्ताः प्रवर्तिताश्च शुक्लयजुर्वेदशाखा येऽधीयते ते सर्वे वाजसनेयिनः, तेषाम् । आत्मपुराणे षष्ठेऽध्याये काकारामपण्डितास्तु–"कीदृशं याज्ञवल्क्यं वाजसनेयसंज्ञकम्? तद्व्युत्पत्तिस्तु– वाजैः केसरैः सनिः दानं यजुषां यस्य स वाजसनिः अश्वरूपधरः सूर्यः, तच्छिष्यो वाजसनेयः । 'वाजिनस्ते समाख्याताः सूर्यस्त्वश्वोऽभवद्यतः । शाखाभेदास्तु तेषां (वै) दश पञ्च च वाजिनाम् ॥' इत्यादित्यपुराणे" इति व्याख्यातवन्तः । तेषां पञ्चदश शाखाभेदाः सन्तीति । ते च जाबालादिबैजवापान्तास्तत्तन्नामधेयाः । एषां ‡प्रत्येकेषां विशेषपरिचयस्तु श्रीतातचरणानां तृतीयप्रतिज्ञापरिशिष्टसूत्रस्य प्रदीपव्याख्याने द्रष्टव्यः । तेषामिति । तेषां पञ्चदशानां वाजसनेयिनामिति । अध्ययनम्, आहेति शेषः । द्वीति । वाजसनेयके शुक्लयजुःपञ्चदशशाखाकदम्बके मन्त्रे मन्त्रगणे । ऋचः नियतपादाक्षरावसानाश्छन्दोयुक्ताः मन्त्राः, तासामृचां गणः शतेन न्यूनो द्विसहस्रसंख्यः परिसंख्यातः । अन्यद्यच्छेषभूतं ऋग्गणव्यतिरिक्तं तत् 'अनियतपादाक्षरावसानानि यजूंषि गद्यरूपाणि' इत्युक्तलक्षणं यजुर्जातं स्मृतम् । तानि यजूंषि तावदष्टौ सहस्राण्यष्टौ शतान्यशीतिसंख्याकान्य( ण्य? )ष्टाक्षराणीति परिसंख्यातानि । ऋग्भिर्विभक्तं ऋग्भ्यो विभक्तं यजुर्जातमित्यर्थः । निरुक्तलक्षणा ऋचोऽपि यजुर्धर्माक्रान्तत्वाद्यजूरूपा एवेति । एवं च परिगणितं सकलं मन्त्रजातम् । 'इषे त्वा' इत्यादि 'शादं दद्भिः' इत्यन्तं पञ्चत्रिंशद( ? पञ्चविंशत्य )ध्यायसमाम्नातं केवलं केवलसंज्ञकम् । सखिलम्, खिलम् उक्तावशिष्टम्, 'अग्निश्च' इत्यादि 'अपेतः' इत्यन्ता पञ्चत्रिंशदनुवाकात्मिका पञ्चा( ? दशा )ध्यायी खिलसंज्ञिका, तया सहितम् । सशुक्रियम्, 'ऋचं वाचम्' इत्यादि 'ईशाऽऽवास्यम्' इत्यन्ता एकादशानुवाकात्मिका पञ्चाध्यायी शुक्रियसंज्ञिका, तया सहितम् । एवं पञ्चदशशुक्लयजुर्जातं

(१) काच. २.

‡ इदमसाधु । अव्ययत्वात् 'प्रत्येकम्' इति साधु ।

परिसंख्यातमित्यर्थः। ब्राह्मणमिति। ब्राह्मणम् अर्थाच्छतपथब्राह्मणम् उक्तयजुर्गणसंख्यापेक्षया चतुर्गुणमस्ति। तत्रेति। तत्र पञ्चदशशाखासु मध्ये। माध्यंदिनीयमन्त्रपरिमाणमाह— कण्डिकामन्त्राः पञ्चसप्तत्यधिकैकोनविंशतिशतपरिमिताः। शतपथब्राह्मणं काण्डचतुर्दशकात्मकम्। इति विशेषमुक्त्वा पुनः सर्वसाधारणमध्ययनमाह— मन्त्र इति। मन्त्रः संहितापाठः। पदः पदपाठः। ¶अत्र पुंस्त्वं पाठविशेषणतयेति। क्रमः क्रमपाठः। इत्येवं त्रिप्रकारकमध्ययनं प्रकृतिभूतम्। जटादिघनान्ताष्टविकृतीनामध्ययनं विकृतिरूपं चतुर्थम्। ताश्च सर्वा विकृतयः क्रमपूर्वं पठनीया भवन्तीति मनीषिभिर्व्याडिप्रभृतिभिरुक्तम्। पारस्कर इति कात्यायनस्यैवापरं नाम, परशाखायां सूत्रप्रणयनेन 'पारक्यं सूत्रजातं करोति' इति तद्व्युत्पत्त्या च तथा प्रसिद्धेः। एतदुपज्ञं सूत्रं गृह्यं गृह्याग्निसाध्यकर्मप्रतिपादकम्। कात्यायनीयकः कात्यायनस्य नाम्ना प्रसिद्धः कल्पः त्रेताग्निसाध्यकर्मप्रतिपादकं सूत्रम्। षडङ्गानि तथोपाङ्गानि च कृष्णयजुर्वेदाध्ययननिरूपणावसरे निरूपितान्येव, तेषां चतुर्वेदीयसर्वशाखासाधारण्येन श्रुतत्वात्। तैर्युक्तो वेदः यथोक्तफलदाने समर्थो भवेदिति। विप.

**[1]तत्र परिशिष्टानि भवन्ति— यूपलक्षणं छागलक्षणं प्रतिज्ञाऽनुवाकसंख्या चरणव्यूहः श्राद्धकल्पः शुल्बमृग्यजुषं पार्षदमिष्टकापूरणं प्रवराध्यायो मूल्याध्याय उञ्छशास्त्रं निगमा यज्ञपार्श्वे हौत्रिकं प्रसवोत्थानं कूर्मलक्षणमित्यष्टादश परिशिष्टानि भवन्ति।**

**अनुक्रमः पदज्योतिर्यजुषां च विधानकम्।**
**कर्मप्रदीपिका चैव स्वराणां व्यञ्जनं तथा॥**

---

¶ इदं न विचारसहम्। 'पदपाठः' इत्यत्र 'पदः पाठः' इति समानाधिकरणविशेषणत्वे असंहितपदरूपोऽत्र विवक्षितः पदशब्दार्थो न बुध्यते। 'पदानां पाठः' इति व्यधिकरणविशेषणत्वे तु विशेषणत्वं न विशेष्यलिङ्गतायां प्रयोजकम्।

(१) काच. २.

**मन्त्रभ्रान्तिहरश्चैव शिक्षाणां पञ्चकं तथा।**
**शेषमध्ययनमुच्छिन्नं कल्पसूत्रेषु पठ्यते॥**

**अङ्गब्राह्मणकल्पानां साम्नां च यजुषामृचाम्।**
**षण्णां यः प्रविभागज्ञः सोऽध्वर्युः कृत्स्न उच्यते॥**

तत्रेति— तत्र गृह्यश्रौतसूत्रयोः उपबृंहणार्थं परिशिष्टानि मुख्यगृह्यश्रौतकल्पयोर्यद्यदुक्तं ततो यद्यदवशिष्टान्युपबृंहणानि तानि परिशिष्टशब्दवाच्यानि ज्ञेयानि। तानि यूपलक्षणादीनि कूर्मलक्षणान्तान्यष्टादशसंख्याकानि मुख्यानि परिशिष्टानि भवन्ति। 'अथ प्रतिज्ञा मन्त्रब्राह्मणयोर्नामधेयम्' इत्येतत्प्रतिज्ञासूत्रमस्माभिर्दृष्टं प्रातिशाख्यशेषभूतम्। पार्षदं प्रातिशाख्यम्। निगमा इतिबहुवचनं तद्गतपदार्थबाहुल्याभिप्रायेण। यज्ञपार्श्वे इति द्विवचनं पूर्वोत्तरभागद्वयविवक्षया। प्रसवोत्थानं संन्यासविधिलक्षणम्। अनुक्रम इति। अनुक्रमः सर्वानुक्रमः। सप्ताध्यायं यजुर्विधानसूत्रम्। कर्मप्रदीपिका छन्दोगपरिशिष्टम्। स्वराणां व्यञ्जनं स्वराङ्कुशादि। मन्त्रभ्रान्तिहरः सूत्रमन्त्रप्रकाशिका। याज्ञवल्क्यीया, अमोघनन्दिनी, कात्यायनी, माध्यंदिनी, मनःस्वारशिक्षेत्यादि पञ्चकम्। इमानि परिशिष्टान्यपि उपबृंहणार्थान्येवेति। शेषमिति। शिष्टमध्ययनं प्राय उच्छिन्नम्। तथा कल्पसूत्रेषु विनियुक्तमन्त्राणां रूपेण पठ्यमानं दृश्यत एवेति। अङ्गेति। अङ्गब्राह्मणादीनां सूत्राणां ऋग्यजुःसाममन्त्राणां च परस्परं प्रकृष्टं विभागं यो जानाति स कृत्स्नः संपूर्णोऽध्वर्युः समग्रमध्वरं युनक्तीत्यन्वर्थसंज्ञो भवतीत्यर्थः। विप.

सामवेदस्य शाखास्त्रयोदश अष्टौ ब्राह्मणानि च

**[1]सामवेदः किल सहस्रभेद आसीत्। तेष्वनध्यायेष्वधीयानाः शक्रेणाभिहताः। शेषान्प्रवक्ष्यामि। तत्र राणायणीयानां सप्त भेदा भवन्ति— राणायणीयाः शाट्यमुग्र्याः कालोपा महाकालोपा लाङ्गलायनाः शार्दूलाः कौथुमाश्चेति। तत्र कौथुमानां षड्भेदा भवन्ति— आसुरायणा**

---

(१) काच. ३.

**वातायनाः पतञ्जलयो बैदभृतः प्राचीनयोग्या जैमिनेयाश्चेति । तेषामध्ययनम्– चतुर्दशोत्तरशतमाग्नेयं द्विपञ्चाशदधिकत्रिशतमैन्द्रं शतमेकोनविंशतिकं च पावमानं पञ्चपञ्चाशदारण्यकं दश महानाम्न्यः पञ्चविंशत्यधिकं द्वादशशतमुत्तरार्चिकमित्येषा छन्दोगानामार्चिकसंहिता । द्विसहस्रं द्वाविंशतिकं च चतुर्धा सामानि यानि गायन्ति सामगाः । तानि सवालखिल्यानि सारण्यकानि ससुपर्णप्रेङ्खानि । पुनरष्टौ ब्राह्मणानि । तान्यधीत्य चण्डात्प्रचण्डतरो भवति । केचित्पुनर्ऋक्तन्त्रं सामतन्त्रं संज्ञाधातुलक्षणमिति विधीयन्ते । एतानि परिशिष्टान्यधीत्य शिष्टविशिष्टो भवति । इत्येतत्सामगानामध्ययनं स्मृतम् ॥**

सामवेद इति । सामवेदः सहस्रं भेदाः शाखाः यस्य तादृगासीत् , ' सहस्रवर्त्मा सामवेदः ' इति महाभाष्योक्तेः , ' सहस्रं शाखा अर्थतो वेद शबरः ' इति तत्प्रसिद्धेश्च । यत्तु कैश्चिद्वर्त्मशब्देन पद्धतिं विवक्षित्वा सामगाने पद्धतयः सहस्रसंख्या इति प्रतिपाद्यते ; तत्रोपष्टम्भकं च सामसहस्रशाखानां नामोल्लेखादर्शनं सामतर्पणे राणायनादिजैमिन्यन्तानां त्रयोदशानामेव सामश्रुतर्षीणां परिगणितत्वं चेत्युपन्यस्यते; पुराणाख्यानं तु त्यक्तव्यम् , न तत्राऽऽदर इत्याद्युच्यते; तत्तु न विचारसहं प्रतिभाति, ऋग्यजुःखण्डयोः शाखानां भेदपदेनोपदर्शितत्वादत्रापि भेदपदं तदर्थकमेव मन्तव्यं भवेत्ततः, शबरप्रसिद्धिगतशाखापदव्यवहारानर्थक्यात् , अत्राप्यनुपदं ' तेषु अनध्यायेष्वधीयानाः शक्रेणाभिहताः , शेषान् प्रवक्ष्यामि ' इत्युच्यमानैतिह्यविरोधात् , पुराणानि विश्वासनर्हाणीति मतस्यैकदेशत्वाच्चेति । तेषु सहस्रसामशाखासु मध्ये । यैरनध्यायेषु स्वाध्यायः कृतस्तदपराधदण्डार्थं ते शक्रेण विनाशं प्रापिताः । ये चावशिष्टास्तान्प्रवक्ष्यामीति । तत्रेति । तत्र अवशिष्टेषु । राणायणीयानां सप्त शाखाः , कौथुमानां च षट् शाखाः मिलित्वा त्रयोदश शाखाः समुपलभ्यन्ते । अत एव सामतर्पणे राणायन–शाट्यमुग्र्य–व्यास–भागुरि–औलुण्डि–गौल्गुलवि–भानुमानौपमन्यव–काराटि–मशकगार्ग्य–वार्षगण्य–कुथुम–शालिहोत्र–जैमिनयः इति त्रयोदश सामगाचार्याः स्मृता इति । एतास्वपि शाखास्विदानीं तु राणायणीया, कौथुमीया, जैमिनीयेति शाखात्रयमेवोपलब्धं भवति । तेषामिति । एतेषां त्रयोदशानामध्ययनमध्ययनसंख्यां च निर्दिशति– चतुर्दशेत्यादिना । आग्नेये पर्वणि चतुर्दशोत्तरशतं मन्त्राः । ऐन्द्रे पर्वणि द्विपञ्चाशदधिकत्रिशतं मन्त्राः । पावमाने पर्वणि एकोनविंशत्यधिकशतं मन्त्राः । आरण्यके पञ्चपञ्चाशन्मन्त्राः । महानाम्नीसंज्ञका मन्त्रा दश । इति पूर्वार्चिकम् । उत्तरार्चिके पञ्चविंशत्यधिकद्वादशशतं खण्डाः । इत्येषा छन्दोगानामार्चिकसंहिता । चतुर्धेति । चतुर्धा ग्रामगेयारण्यगेयोहोह्येत्याख्यानि चतुःप्रकारकाणि सामानि द्वाविंशतियुतद्विसहस्रसंख्यानि । तानि च वालखिल्यारण्यकसुपर्णप्रेङ्खसहितानीति । पुनश्च ब्राह्मणान्यपि ताण्ड्यषड्विंशाद्भुतसामविधानार्षेयदेवताध्यायोपनिषदादिभेदेन अष्टसंख्यानि । तानि सर्वाण्यार्चिकानि मन्त्रजातानि सर्वाणि सामानि सर्वाणि ब्राह्मणानि चाधीत्य चण्डात्प्रचण्डतर उत्कृष्टादुत्कृष्टतरो भवतीत्यर्थः । केचिदिति । ऋक्तन्त्रादिलक्षणानि गोभिलगृह्यलाट्यायनश्रौतपुष्पसूत्राद्युपग्रन्थानामुपलक्षणानि । ऋक्तन्त्रादीनि सामसंबन्धिलक्षणनिरूपकाणि परिशिष्टान्यधीत्य शिष्टेषु सामवित्सु विद्वत्सु विशिष्टः महामान्यः भवति । इत्येवंप्रकारेणैतत्सामगानामध्ययनं स्मृतम् । श्रुतर्षिभिरिति शेषः ।

विप.

अथर्ववेदस्य नव शाखाः पञ्च कल्पाश्च
सपरिशिष्टाः

**'अथर्ववेदस्य नव भेदा भवन्ति– पिप्पलादाः शौनका मोदाः शौक्रायना जाजला ब्रह्मबलाः कुमुदादिनो वेदस्पर्शाश्चारणविद्याश्चेति । तेषामध्ययनम्–**

**द्वादशैव सहस्राणि मन्त्राणामाभिचारिकम् ।
ब्रह्मत्वं सरहस्यं स्याद्थर्ववेदविस्तरम् ॥**

(१) काव. ४.

**तेषां पञ्च कल्पा भवन्ति— नक्षत्रकल्पः शान्तिकल्पो वितानकल्पः संहिताकल्पः आङ्गिरसकल्पश्चेति । कल्पे कल्पे परिशिष्टानि भवन्ति ॥**

अथर्वेति । अथर्वमुनिना दृष्टस्य वेदस्य पिप्पलादाद्या नव शाखाः सन्तीत्यर्थः । तेषामिति । तेषां नवानामाथर्वणिकानां पिप्पलादादीनाम् । अध्ययनं द्विप्रकारकं ब्रह्मत्वरूपमभिचाररूपं च । तत्र सरहस्यं सोपनिषत्कम् । अथर्ववेदस्य द्विपञ्चाशदुपनिषद इति त्रय्यन्तविदो वदन्ति । अध्ययने मन्त्रसंख्या च द्वादशसहस्रात्मिका । ब्रह्मत्वं शान्तिकपौष्टिकयोरुपलक्षणम् । अदृष्टोपायेन परपीडनं परकृतपीडानिवारणं चाभिचारस्तत्र जारणमारणस्तम्भनमोहनोच्चाटनविद्वेषणादीनि षट् कर्माणि भवन्ति । तेषामिति । उभयविधकर्मणामुपबृंहणार्थं पञ्च कल्पा भवन्ति । ते च नक्षत्रकल्पादयः । संहिताविधिः कौशिकगृह्यसूत्रमिति । प्रतिकल्पं परिशिष्टानि भवन्ति । तानि राजाभिषेककर्मपुरोहितकर्मेत्यादीनि द्वासप्ततिसंख्यकानीत्याथर्वणा आमनन्ति । विप.

वेदानामुपवेदाः

**सर्वेषामेव वेदानामुपवेदा भवन्ति— ऋग्वेदस्याऽऽयुर्वेद उपवेदो यजुर्वेदस्य धनुर्वेद उपवेदः सामवेदस्य गान्धर्ववेद उपवेदोऽथर्ववेदस्य स्थापत्यवेद उपवेद इत्याह भगवान् कात्यायनः ॥**

सर्वेषामिति । सर्वेषां चतुर्णामपि वेदानां प्रत्येकस्यैकैक उपवेदोऽस्ति, तान्निर्दिशति— ऋग्वेदस्येत्यादि । स्थापत्यवेदः शिल्पसंहिताः । इत्येवं चतुर्णां चरणानां वेदशाखानां व्यूहं विस्तारं भगवान् कात्यायनो महर्षिराहेति । विप.

वेदानां मूर्तयः परिमाणानि गोत्राणि देवताश्च

**य इमे चत्वारो वेदास्तेषामेकैकस्य कीदृक् रूपं वर्णः प्रमा विधेत्युच्यते— ऋग्वेदः पद्मपत्राक्षः प्रबलजठरः सुविभक्तग्रीवः कुञ्चितकेशश्मश्रुः श्लक्ष्णो गोक्षीरवर्णः श्वेतकीर्तिः प्रमाणे वितस्तिपञ्चकः ॥**

य इम इति । उक्ता इति शेषः । तेषां मध्ये एकैकस्य ऋग्वेदादेः रूपम् आकृतिः, वर्णः शुक्लादिः, प्रमा परिमाणम्, एतेषां विधा प्रकारः इति वक्ष्यमाणरीत्या उच्यत इति । ऋग्वेद इति । पद्मपित्यनेन नीलं कमलं ग्राह्यम्, तस्यैव नेत्रोपमानत्वस्यौचित्यात् । केशाः शिरोरुहाः । श्मश्रूणि मुखजरोमाणि । श्लक्ष्णः मृदुशरीरः । वितस्तिः द्वादशाङ्गुलात्मकः, तेन सार्धद्वयहस्तपरिमित इत्यर्थः । विप.

**[1]यजुर्वेदः पिङ्गाक्षः कृशमध्यः स्थूलगलकपोलस्ताम्रवर्णः कृष्णवर्णो वा प्रादेशषट्कमात्रो दीर्घत्वेन । सामवेदो नित्यं स्रग्वी सुप्रीतः शुचिवासाः क्षमी दान्तो बृहच्छरीरः कातरनयनः काञ्चननयनो वाऽऽदित्यवर्णो वर्णेन षडरत्निमात्रः । अथर्ववेदस्तीक्ष्णतरः प्रचण्डः कामरूपी विशालाक्षो विश्वात्मा विश्वसृट् क्षुद्रकर्मा विश्वसाक्षी महाप्राज्ञो नीलोत्पलवर्णो वर्णेन पञ्चारत्निमात्रः । ऋग्वेदस्याऽऽत्रेयगोत्रं सोमो दैवतं गायत्री छन्दः । यजुर्वेदस्य काश्यपगोत्रमिन्द्रो दैवतं त्रिष्टुप् छन्दः । सामवेदस्य भारद्वाजगोत्रं रुद्रो दैवतं जगती छन्दः । अथर्ववेदस्य वैखानसगोत्रं ब्रह्म दैवतमनुष्टुप्छन्दः ॥**

यजुर्वेद इति । मध्यः कटिप्रदेशः । स्थूलम्, गलकपोलयोर्द्वन्द्वैकवद्भावः, तद्यस्य तादृशः । प्रादेशो दशाङ्गुलात्मकः, तेन सार्धद्वयहस्तपरिमित इत्यर्थः । सामवेद इति । स्रग्वी मालाधारी । क्षमी क्षमाशीलः । दान्तः जितेन्द्रियः । कातरे तरले नयने यस्य तादृशः । अरत्निः सार्धद्वाविंशाङ्गुलात्मकः, तेन पञ्चहस्तपञ्चदशाङ्गुलपरिमित इत्यर्थः । अथर्ववेद इति । तीक्ष्णतरः अत्युग्रः । प्रचण्डः क्रोधशीलः । कामरूपी इच्छारूपधारी । विश्वात्मत्वमुपनिषदां बहुत्वात् । क्षुद्रकर्मत्वं चाभिचारप्रयोजनवन्मन्त्रबहुलत्वात् । सार्धसप्ताङ्गुलोनपञ्चहस्तपरिमित

(१) काच. ४.

इत्यर्थः । वेदचतुष्टयस्यापि गोत्रदैवतछन्दसामभिधानं सुस्पष्टमेव । ...... अत्र चतुर्णां वेदानां पत्न्यः काः ? तद्विज्ञानार्थमन्यत्रोक्तास्ता अत्रोच्यन्ते– 'ईतिर्धृतिः शिवा श्यामा चतस्रो वेदपत्नयः । ज्ञातव्या यज्ञकालेषु ईशानादिव्यवस्थिताः ॥ ' इति । विप.

## यज्ञपार्श्वपरिशिष्टम्

यज्ञः स्वशाखोक्त एव कर्तव्यः

[1]'न्यूनो वाऽप्यतिरिक्तो वा यः
स्वशाखोच्छ्रितो विधिः ।
तेन संतनुयाद्यज्ञं न कुर्यात्पारशाखिकम् ॥
[2]'पारशाखोऽपि कर्तव्यः स्वशाखायां न नोदितः ।
सर्वशाखासु यत्कर्म एकप्रत्ययमिष्यते ॥

यत् यतः प्रत्यवशिष्यते प्रतीयते । पप्र. ७२

[3]'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

(१) यप. १।८० ; पप्र. ७२ न्यूनो ( ऊनो ) खोच्छ्रितो ( खास्थितो ).

(२) यप. १।८१ ; पप्र. ७२ पार (पर) चतुर्थचरणे ( एकं प्रत्यवशिष्यते ).

(३) यप. १।८२ यावत्प्रकीर्ति (कर्म प्रचोदि) ; अप. १।६ यावत् ( कर्म ) कात्यायनः ; ब्रक. ५२ गृह्यपरिशिष्टकारः ; स्मृच. १।१३ सर्वः कृतो ( सर्वं कृतं ) शेषं अपवत् , कात्यायनः ; चव. ३३ अपवत् , गृह्यपरिशिष्टे ; चदा. १०५ अपवत् , गृह्यपरिशिष्टकारः ; हमा. ४१७ स्मृतिः ; आद. ८५ यावत्प्र ( यत्कर्म ) सर्वः कृतो ( सर्वं कृतं ) गृह्यपरिशिष्टे ; मपा. १५ यावत्प्रकीर्ति ( यत्कर्म चोदि ) सर्वः कृतो ( सर्वं कृतं ) सारसंग्रहे ; प्रपा. १६ यावत्प्रकीर्ति ( कर्म प्रचोदि ) (=) ; निप. २७४ (=) ; निप्र. १।७१ गृह्यपरिशिष्टम् ; प्रर. ५१ प्रपावत् , संग्रहे ; प्रकाश. १।५१ अपवत् , गृह्यपरिशिष्टम् ; चमव्या. ७ प्रपावत् (=) ; मुक्ता. १५ यावत्प्रकीर्ति ( कर्म प्रचोदि ) सर्वः कृतो (सर्वं कृतं) शातातपः : ३९७ पूर्वार्धे ( यस्य यावत्स्वगृह्योक्तं स्वल्पं वा यदि वा बहु ।) सर्वः कृतो (सर्वं कृतं) व्यासः ; आर. ६ प्रपावत् , छन्दोगपरिशिष्टे ; सिन्धु. १७३४ ( बह्वल्पं वा स्वगृह्योक्तम् ) एतावदेव (=) ;

(१) यत्तु कात्यायनवाक्यम्– ' बह्वल्पं वा...... कृतो भवेत् ॥ ' इति, तत् निरपेक्षार्थाभिधायकस्वशास्त्रविषयम् । सापेक्षे तु स्वशास्त्रे शास्त्रान्तरोक्तं ग्राह्यमिति स एवाऽऽह– ' यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ ' इति । † अप. १।६

(२) शाखान्तराधिकरणन्यायेन सर्वस्मृतिषु यथाप्रत्ययत्वे गृह्येष्वपि प्रसक्तेऽपवादमाह गृह्यपरिशिष्टकारः– ' बह्वल्पं वा ...... ' । ब्रक. ५२

(३) गृह्योक्तानामपि स्थालीपाकादीनां शाखान्तरन्यायेन सर्वोपसंहारः । ' कपालं भगालम् ' इति ब्रूयादित्यादिस्नातकव्रतानां होलाकाधिकरणन्यायेन सर्वसाधारणत्वान्नैतद्वाक्यविषयत्वम् , परिशेषात् । ' यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् । तच्छाखाध्ययनं कुर्यात् ॥ ' इति स्मृतेः संस्काराणां स्वशाखाध्ययनाङ्गत्वादितरशाखासंस्कारं परि( ? प्रति )गृह्यान्तरगताङ्गस्या-

† स्मृच. अपवत् ।

विपा. १।१७ स्वगृह्योक्तं (स्वशाखोक्तं) कीर्तितम् (चोदितम् ) तस्य (तेन) छन्दोगपरिशिष्टे कात्यायनः ; पप्र. ७२ गृह्यपरिशिष्टकारः ; संप्र. ८८६ कात्यायनः ; आप्र. १२२, ३०२ छन्दोगपरिशिष्टवचनम् ; संको. २३ यावत्प्रकीर्तितम् ( यत्कर्म नोदितम् ) सर्वः कृतो ( सर्वं कृतं ) परिशिष्टम् : २९ प्रथमपादमात्रम् , स्मृतिः : १७०, २२० प्रथमपादमात्रम् , शास्त्रम् ; आर्क. ४९ अपवत् , आश्वलायनः ; बाल. १।१२ पृ. १४ निर्देशमात्रम् (=) : १।२४–२५ पृ. १०० प्रपावत् , छन्दोगपरिशिष्टम् : १।८९ पृ. २४६ अपवत् , छन्दोगपरिशिष्टम् : १।८९ पृ. २५३ प्रपावत्, गृह्यपरिशिष्टम् : १।९८ पृ. ३२० प्रथमचरणमात्रम् , परिशिष्टम् ; संग. १० कात्यायनः ; सस्मृ. ९२ मुक्ता. १५वत् , शातातपः ; कुभ. ११७२ प्रपावत् , बैजवापः : १७३४ प्रपावत् (=) ; आमू. १ कीर्तितम् ( चोदितम् ) गृह्यपरिशिष्टम् ; इन्दु. ५ सर्वः कृतो ( सर्वं कृतं) शेषं प्रपावत् , बैजवापायनः : ३१५ निर्देशमात्रम् (=) ; प्रभा. १।५२ सर्वं प्रकाशवत् : २।११ सर्वं प्रकाशवत् , पू. : २।१२ निर्देशमात्रम् (=) ; संदी. १।२२ अपवत् , गृह्यपरिशिष्टम् .

नङ्गत्वादेव नापेक्षा । तेन न्यायमूलकमेवेदं वचनम् ।
निप्र. १।७१

( ४ ) यच्च गृह्यपरिशिष्टोक्तं 'बह्वल्पं वा ......' इति, तत्साधारणानां परोक्तानां च नावश्यमनुष्ठानमित्येवंपरम्, न तु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति तस्यार्थः, गृह्यानुक्तानां साधारणानामुपदेशानर्थक्यापत्तेः शाखान्तराधिकरणविरोधाच्च । §प्रकाश. १।५१

(५) $तच्च येषां शाखायां कल्पसूत्रादौ विस्तृतं संक्षिप्तं वाऽभिहितमस्ति तैस्तदेवानुष्ठातव्यम्, 'बह्वल्पं वा ......' इति छन्दोगपरिशिष्टे कात्यायनस्मरणात् । येषां वाजसनेयिप्रभृतिशाखिनां गृह्यादौ नोक्तं तैस्तु बह्वृचपरिशिष्टोक्तं शौनकाद्युक्तं वा ग्राह्यम्, 'सर्वशाखाप्रत्ययमेकं कर्म' इति जैमिनिस्मरणात्, 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति संग्रहवचनाच्च, स्मृतिप्रणेतॄणां मन्वादीनां सर्वसाधारण्येन प्रवृत्तेश्च ।
विपा. १।१७

( ६ ) पारस्करसूत्रानुसारिणां स्थालीपाकात् पूर्वदिने उक्तोपवासादिकं न भवति, पारस्करसूत्रेऽनुक्तत्वात् । न च पारस्करसूत्राविरोधेन आश्वलायनादिगृह्योक्तत्वात्तद्भवतीति वाच्यम्, तथा सति इध्माबर्हिषोः संनहनादिकरणस्याप्यापत्तेः । न चेष्टापत्तिः, अनेकगृह्योक्ततत्तदविरुद्धयावत्पदार्थस्य करणेऽसामर्थ्यात् । न च यथासामर्थ्यमेव उपसंहर्तव्यम्, 'बह्वल्पं वा स्वगृह्योक्तं ...... कृतो भवेत् ॥' इति कात्यायनेन स्वगृह्योक्तमात्रकरणेऽपि साङ्गोपाङ्गकर्मसिद्धेः प्रदर्शितत्वात् । को हि मन्दमतिः (अपि) स्वल्पायाससाध्यादपि तावत्फलसिद्धौ बह्वायाससाध्ये प्रवर्तते ? इति । न च 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति कात्यायनेनैवाविरोधिपरकीयस्यापि अनुष्ठेयत्वोक्तेः 'बह्वल्पं वा स्वगृह्योक्तम्' इति वाक्यस्य गृह्यान्तराद्युक्तोपसंहारासमर्थपरत्वमिति वाच्यम्, उक्तातिप्रसङ्गापत्तिबलेन 'यन्नाऽऽम्नातम्' इति वाक्यस्य परकीयाकाङ्क्षितमात्रग्रहणपरत्वात् । भवति हि परोक्तमप्याकाङ्क्षितम्, गृह्यते च । यथा— 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' इति मेखलादिग्रहणे मनुना सामान्यतो मन्त्रवत्त्वोक्तौ मन्त्रविशेषानुक्तौ च विशेषतो मन्त्राकाङ्क्षायां गृह्यविशेषपरिपठिता मन्त्रविशेषा गृह्यन्ते । न चेह स्थालीपाकपूर्वदिनकर्तव्योपवासादेः कथंचिदाकाङ्क्षा समस्ति, सामान्यशब्देनार्थतो वा स्वसूत्राद्युसूत्रितत्वादिति । न चैवं शाखान्तराधिकरणविरोधः, 'बह्वल्पं वा स्वगृह्योक्तम्' इति वाक्येन गृह्यान्तरोक्ताङ्गस्य व्यवस्थितविकल्पस्वीकारादिति बहवः । संप्र. ८८६–८८७

( ७ ) अत्रायं निर्णयः । स्वस्वगृह्यानुसारेण संध्याप्रयोगेऽनुष्ठित एव प्रत्यवायपरिहारः, अधिकानुष्ठानं त्वानुषङ्गिकफलभूयस्त्वार्थमेव । 'बह्वल्पं वा ...' इति छन्दोगपरिशिष्टवचनात् 'यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः । भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥' इति तद्वचनाच्च । ऋग्वेदिनां तु यथायथं प्रागुक्ते सांख्यायनोक्ते आश्वलायनोक्ते वा प्रयोगेऽनुष्ठित एव प्रत्यवायपरिहारः । वक्ष्यमाणशौनकोक्तप्रयोगस्त्वानुषङ्गिकफलभूमार्थः । येषां तु स्वगृह्ये संध्याप्रयोगो नोक्तस्तैः, 'यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयम्' इति छन्दोगपरिशिष्टवचनानुसारेण योगियाज्ञवल्क्याद्युक्तः पौराणिको वा प्रयोगो ग्राह्यः । ‡आप्र. ३०२

( ८ ) येषां तु गृह्ये स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधः, तत्र तन्निषेधद्वारा तत्स्मृत्युक्तान्याङ्गस्याभिमतत्वबोधनात्तदनुष्ठेयम्, 'आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥' इति वचनात् । यस्य शाखेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः ।

§ संदी. प्रकाशवत् ।
$ पुण्याहवाचनं चेत्यर्थः ।
‡ बाल. आप्रगतम् ।

... 'ऋक्शाखी नैव कुर्वीत स्वकीयं परशाखया । प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति ॥ यत्र नास्ति स्वशाखा चेदन्यशाखोक्तं समाचरेत् । पुनर्नार्हति संस्कार-मन्यथाऽर्हति चेत्पुनः ॥ यजुःशाखाविधानेन यदि बह्वृचकर्म च । कृतं चापि हि तत्कर्म पुनः कुर्याद्यथा-विधि ॥ ऋक्शाखाविधिना कर्म यदि स्यादन्यशाखि-नाम् । न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतम् ॥' इति । कृभ. १७३४–१७३५

[1]स्वशाखां यः परित्यज्य परशाखासु वर्तते ।
आच्छेदस्तस्य वंशस्य पतते रौरवं महत् ॥

[2]गुरुणाऽनुष्ठितं तन्त्रं तत्पुत्रोऽपि समाचरेत् ।
अन्यथा कर्महानिः स्यात्प्रायश्चित्ती भवेत्तु सः ॥

[3]आधानं येन सूत्रेण तेनैवेज्यादिकाः क्रियाः ।
अन्यथा यत्कृतं कर्म तत्फलं न प्रयच्छति ॥

[4]यजुषो बहुशाखत्वात्संदेहे समुपस्थिते ।
कां शाखामवलम्बेरंस्तादृशीं बह्वृचादयः ॥

[5]आध्वर्यवं याजमानं प्राह्यं बौधायनीयकम् ।
अन्यथा पतितो ज्ञेय इति बौधायनाशयः ॥

[6]यस्याऽऽपस्तम्बशाखीयो भवेन्मातामहो यदि ।
तस्य बौधायनाभावे तत्सूत्राधानमिष्यते ।
अन्यथा सूत्रदूष्यः स्यात्सर्वकर्मबहिष्कृतः ॥

(१) यप. १।८३; कृभ. ११७१ आच्छेदस्त (आच्छेत्ता त).

(२) बाल. १।८९ पृ. २५४ भवेत्तु (भवेच्च) श्रौत-सर्वस्वे; कृभ. ११७१ तत्पुत्रोऽपि (तत्सूत्रेण).

(३) आर. ६ पृ.; कृभ. ११७१.

(४) बाल. १।८९ पृ. २५४ शौनकश्चापि; कृभ. ११६९ यजुषो (यजुषां) शाख (शाखा) यज्ञकाण्डे.

(५) बाल. १।८९ पृ. २५४ शौनकश्च; कृभ. ११६९ नाशयः (नोऽब्रवीत्) यज्ञकाण्डे.

(६) बाल. १।८९ पृ. २५४.

## बौधायनः

स्वशाखां परित्यज्य परशाखोक्तकरणे दोषः

[1]यः स्वशाखां परित्यज्य परशाखेण वर्तते ।
भ्रूणहत्याकृतो दोषस्तस्य स्यान्नात्र संशयः ॥

## वसिष्ठः

पित्रादिपरंपरया स्वीकृतशाखया कर्म कर्तव्यम्, सा शाखा प्रथममध्येया, अन्यथाकरणे दोषः, स्वशाखाध्ययनोत्तरमन्यशाखाऽध्येया

[2]पारंपर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥

(१) स्वकुलपरंपरागता शाखा अध्येतव्येति यावत् । अत एव वसिष्ठः– पारंपर्यागत इति । शाखान्तराध्ययने शाखारण्डो भवतीत्यभिप्रायः । यदाह स एव– 'एक-देशेऽपि शाखानां मध्ये योऽन्यतमं व्रजेत् । स्वशाखां संपरित्यज्य शाखारण्डः स उच्यते ॥' ।

स्मृच. १।१३३

(२) सपरिबृंहणः साङ्गोपाङ्गः । † चमव्या. ३०

† बाल. चमव्यावत् ।

(१) बाल. १।८९ पृ. २४७, २६६ (स्वशाखे विद्य-माने यः परशाखेण वर्तते । भ्रूणहत्यासमं तस्य स्व-शाखमवमन्यते ॥); कृभ. ११७१ बालम्भट्टयां २६६ तमे पृष्ठे 'बौधायनेन तृतीयप्रश्नेऽष्टमखण्डे' इति, कृष्णम्भट्टयां च 'बौधायनेन तृतीयप्रश्ने' इति निर्देशेऽपि श्रौत–गृह्यधर्मसूत्रेषु निर्दिष्टस्थले नोपलभ्यते .

(२) स्मृच. १।१३३; पमा. १।१४२; मपा. ९८ ध्ययनं (ध्ययने); प्रपा. २५७ बृंहणः (बृंहिणः); मर. ३६ बृंहणः (बृंहितः) तच्छाखं (तच्छाख्यं); गभा. २३८; चमव्या. ३०; मुक्ता. २९ खं कर्म (खाकर्म) याज्ञवल्क्यः; आर. ६; विपा. २।५।१९; संप्र. ५०५ पारंपर्या (परंपरा); बाल. १।२६ पृ. १४९ : १।८९ पृ. २५३ ध्ययनं तथा (ध्ययने कृते) आदर्श-पाठमपि पाठान्तरत्वेन निर्दिशति; संर. ३०४ उत्तरार्धे (प्रथमं तमधीयीत तच्छाखं कर्म चाऽऽचरेत् ॥); संवी. २।३०७.

(३) परिबृंहणान्यङ्गानि । अत्र येषां यो वेदः पारंपर्यागत इति यच्छब्दाध्याहारेण व्याख्येयम्, अन्यथा तच्छब्दानुपपत्तेः । वेदोऽत्रैका शाखा, न शाखासमूहः । यत्तु– 'तपोविशेषैर्विविधैर्व्रतैश्च विधिनोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥' इति मनुना कृत्स्न इति वेदविशेषणमुपात्तं तदपि वेदशब्दस्य शाखापरत्वेन तस्या एव कृत्स्नत्वमभिधत्ते, नैकवेदीयानेकशाखासमूहमिति न विरोधः । ततश्च यस्य या पित्रादिक्रमागता शाखा तच्छाखीयेन कर्मणा संस्कृतः प्रथमं तां शाखामधीयीतेत्यर्थः । तथा च वसिष्ठः– 'यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् । अधीत्यशाखामात्मीयां परशाखां ततः पठेत् ॥' । † संप्र. ५०५

(४) परिबृंहणानि छन्दआदीन्यङ्गानि मीमांसादीन्युपाङ्गानि च । तैः सहितः पारंपर्यागतो वेदो यः, तं प्रथममधीयीतेत्यर्थः । संर. ३०५

**[1]एकवेदेऽपि शाखानां मध्ये योऽन्यतमां श्रयेत् ।**
**स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते ।**

अन्यां स्वशाखाभिन्नाम् । यत्र हि एकवेदशाखानां मध्ये स्वीयां शाखां परित्यज्य योऽन्यामधीते स शाखारण्डः इति वदता तामधीत्यान्यशाखाध्ययनमनुज्ञातं भवति । स एव 'अधीत्य शाखामात्मीयां परशाखां ततः पठेत्' इति । संम. ३३

**[2]यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।**
**स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥**

**[1]आत्मशाखां परित्यज्य परशाखासु वर्तते ।**
**उच्छेत्ता तस्य वंशस्य रौरवं नरकं व्रजेत् ॥**
**[2]स्वीया शाखोज्झिता येन**
**ब्रह्म तेनोज्झितं परम् ।**
**ब्रह्महैव स विज्ञेयः**
**सद्भिर्नित्यं विगर्हितः ॥**
**[3]अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ॥**

(१) स्वशाखाध्ययनानन्तरं तु शाखान्तराध्ययनेऽभ्युदयः । तथा च वसिष्ठः– अधीत्येति । § चमव्या. ३१

(२) परेषां स्ववेदातिरिक्तानां वेदानां शाखा परशाखा, तां पठेत् । ततश्च स्वशाखाध्ययनानन्तरं वेदत्रयेऽप्येकैकामेव शाखां पठेदित्यर्थः सिध्यति । तथा च

---

† संदी. संप्रगतम् ।

(१) स्मृच. १।१३३ वेदे (देशे) तमां श्रयेत् (तमं व्रजेत्) तु परि (संपरि) ; संम. ३३ वेदेऽपि (वेदस्य) न्यतमां श्र (न्यां समाश्र) तु परि (संपरि) (=) ; संप्र. ५०६ ; कुम. ९७१ संमवत्.

(२) गौमि. ९।५३ (यः स्वसूत्रं परित्यज्य परसूत्रं निषेवते । शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥) स्मृत्यन्तरम् ; स्मृच. १।१३३ यः स्वशाखां (स्वशाखां यः) पारक्या (पारक्य) ; पमा. १।१४२ पारक्या (पारक्य) हिष्कार्यः (हिः कार्यः) ; प्रपा. २५७ ; आपा. १०५ द्वितीयचरणे (परशाखां समाश्रयेत्) उत्तरार्धे (स शाखारण्ड इत्युक्तः पठितोऽयमिति स्मृतः ॥) क्रियासारे ; गमा. २३८ (स्वशाखां यः परित्यज्य अन्यशाखामुपासते । शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥) ; मुक्ता. २९ पारक्या (पारक्य) याज्ञवल्क्यः ; विपा. २।५।१९ पारक्याम (परां सम) ; संप्र. ५०६ ; आम. ५७९ सर्वं मुक्तावत् ; बाल. १।८९ पृ. २५३ मुक्तावत् ; संर. ३०५ द्वितीयचरणे (परशाखां समाश्रयेत्) हिष्कार्यः (हिः कार्यः).

§ बाल. चमव्यावत् ।

(१) स्मृच. १।१३३ ; संप्र. ५०६.

(२) स्मृच. १।१३३ स्वीया शा (स्वीयशा) ; पमा. १।१४३ ; प्रपा. २५७ स्मृचवत् ; चमव्या. ३० स्मृचवत् ; संप्र. ५०६ ब्रह्म तनोज्झितं (ब्रह्मतेजोर्थिना) सद्भिर्नित्यं विग (सर्वकर्मसु ग) ; बाल. १।२६ पृ. १४९ ब्रह्म तेनो (तेन ब्रह्मो) ; १।८९ पृ. २५३.

(३) स्मृच. १।१३४ ; पमा. १।१४३ ; मपा. ९८ यां परशा (यामन्यां शा) ; प्रपा. २५७ ; मर. ३६ ; गमा. २३८ यां पर (यामन्य) ; चमव्या. ३१ ; मुक्ता. २९ याज्ञवल्क्यः ; संम. ३३ (=) ; विपा. २।५।१९ ; संप्र. ५०५ ; आम. ५७९ ; बाल. १।२६ पृ. १४९ ; संर. ३०५ ; कुम. ९७१ ; संदी. २।३०७.

मनुः— 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।' (मस्मृ. ३।२) इति। संप्र. ५०५

**'यच्छाखीयैस्तु संस्कारैः**
**संस्कृतो ब्राह्मणो भवेत्।**
**तच्छाखाध्ययनं कुर्या-**
**न्न तेन पतितो भवेत्॥**

(१) अत्र शाखाध्ययनं धर्मशास्त्रादीनामुपलक्षणार्थम्। § प्रपा. २५७

(२) तच्छाखीयैः स्वशाखाप्रोक्तैः। संर. ३०५

**'न जातु परशाखोक्तं बुधः कर्म समाचरेत्।**
**आचरन् परशाखोक्तं शाखारण्डः प्रकीर्तितः॥**

(१) यस्तु स्वशाखीयं कर्म परित्यज्य शाखान्तरोक्तमाचरति, सोऽपि शाखारण्ड इत्याह वसिष्ठः— न जात्विति। स्मृच. १।१३४

(२) जातु कदाचिदपीत्यर्थः। संर. ३०५

**'स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः।**
**अज्ञानादथवा लोभात्स तेन पतितो भवेत्॥**

---

§ विपा. प्रपावत्।

(१) स्मृच. १।१३४ न तेन (त्यागेन); प्रपा. २५७; निप्र. १।७१ चतुर्थचरणो नास्ति, स्मृतिः; मुक्ता. ११६ न तेन प (त्यक्त्वा तत्प); विपा. २।५१९ यच्छाखी (तच्छाखी); संप्र. ३३८ कुर्यान्न तेन (कार्यमेवं न): ५०५ पू.; संग. ९, ६३६ कुर्यान्न तेन (कार्यमन्यथा); संर. ३०५ यच्छाखी (तच्छाखी) पू.; संवी. २।३०७ संगवत्.

(२) स्मृच. १।१३४: २।५८२ बुधः (द्विजः) चरेत् (रमेत्) पू.; प्रपा. २५७; मुक्ता. ११६; विपा. २।५१९ प्रकीर्तितः (स उच्यते); संप्र. ५०६; बाल. १।८९ पृ. २५४ जातु प (जातिप) बुधः (क्बुधः) श्रौतसर्वस्वे; संग. १० विपावत्; संर. ३०५ विपावत्.

(३) धप्र. ४१; बाल. १।२४–२५ पृ. १०० गृह्यान्तरम्, १।८९ पृ. २५३ गृह्यपरिशिष्टे; संग. १० प्रथमचरणे (स्वकर्मपारमुत्सृज्य) तेन (हृतः) स्मृत्यन्तरे; कूम. १७३४, १७३५ (=).

**'ऋक्शाखी नैव कुर्वीत स्वकीयं परशाखया।**
**प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति॥**
**'यत्र नास्ति स्वशाखोक्तमृक्शाखोक्तं समाचरेत्।**
**पुनर्नार्हति संस्कारमन्यथाऽर्हति चेत्पुनः॥**
**'यजुःशाखाविधानेन यदि बह्वृचकर्म च।**
**कृतं चापि हि तत्कर्म पुनः कुर्याद्यथाविधि॥**

**'ऋक्शाखाविधिना कर्म**
**यदि स्यादन्यशाखिनाम्।**
**न तत्कर्म पुनः कुर्या-**
**दिति यज्ञविदां मतम्॥**

## महाभारतम्

वेदविभागकर्ता महाभारतसहितवेदचतुष्टयाध्यापकश्च व्यासः

**'एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात्।**
**द्वीपे न्यस्तः स यद्बालस्तस्माद्द्वैपायनोऽभवत्॥**

द्वीपमेव अयनं न्यासस्थानं यस्य द्वीपायनः, स्वार्थे तद्धितः— द्वीपायन एव द्वैपायनः, इति नाम निर्वक्ति न्यस्त इति। नीटी.

**'पादापसारिणं धर्मं विद्वान्स तु युगे युगे।**
**आयुः शक्तिं च मर्त्यानां युगानुगमवेक्ष्य च॥**

---

(१) धप्र. ४१ ऋक्शाखी नैव (स्वशाखेनैव) दि कुर्वीत (दि कुर्वन्ति ?); कूम. ४४३, १७३५ (=).

(२) धप्र. ४१ स्वशाखोक्तमृ (स्वशाखीये ऋ); कूम. ४४३ मन्यथा (मन्यदा) (=): १७३५ स्वशाखोक्तमृ (स्वशाखा चेद) (=).

(३) धप्र. ४१; कूम. ४४३ द्वितीयचरणे (बह्वृचैर्यदि कर्म तत्) कृतं चापि हि (कृतं चेत्तर्हि): १७३५ (=).

(४) धप्र. ४१; कूम. ४४४, १७३५ (=).

(५) भा. १।५७।७१; भाम्. १।६३।८६ द्वीपे न्यस्तः (न्यस्तो द्वीपे) नोऽभवत् (नः स्मृतः).

(६) भा. १।५७।७२; भाम्. १।६३।८७ विद्वान्स तु (स तु विद्वान्) युगानुग (युगावस्था).

पादापसारिणं युगे युगे पादशः क्षीयमाणम्। कलेरादौ पादमात्रमवशिष्टमित्यर्थः। एवम् आयुरादिह्रासं चावेक्ष्य। नीटी.

'ब्रह्मणो ब्राह्मणानां च तथाऽनुग्रहकाम्यया।
विव्यास वेदान्यस्माच्च तस्माद्व्यास इति स्मृतः॥

ब्रह्मणः वेदस्य। अनुग्रहः रक्षणम्। विव्यास शाखाभेदेन विस्तारितवान्। अतो व्यास इत्यपि तस्य नामेत्यर्थः। नीटी.

'वेदानध्यापयामास महाभारतपञ्चमान्।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम्॥
प्रभुर्वरिष्ठो वरदो वैशम्पायनमेव च।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः॥

महाभारतपञ्चमानिति। 'भारतं पञ्चमो वेदः' 'सर्वश्रुतिसमूहोऽयम्' इत्यसकृदुक्तेः। इतरपुराणवदिदं न मन्तव्यमित्यर्थः। भारतस्य मूलभूताः संहिताः मन्त्रब्राह्मणरूपा वेदाः तैः सुमन्तुप्रभृतिभिः प्रकाशिताः इदमस्य मूलमिदमस्य मूलमिति स्पष्टीकृताः। तेन प्रत्यक्षवेदमूलमेतदिति भावः। नीटी.

सूर्याच्छुक्लयजुर्वेदो याज्ञवल्क्येन प्राप्तः शतपथब्राह्मणं च प्रणीतम्, महाभारतसहितस्य वेदचतुष्टयस्य प्रथमोऽध्यापको व्यासः

**याज्ञवल्क्य उवाच—**

'अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप।
परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप॥

अचलत्वेन प्रकृतेरन्यत्वं ब्रह्मणः प्रतिपादयितुमारभते— अव्यक्तस्थमिति। अत्र अव्यक्तम् अव्याकृतं मायाशबलं हार्दाकाश इति पर्यायास्त्रिगुणात्मकस्य कारणस्य ब्रह्मणो वाचकाः। 'चक्रे नाभिरिव श्रिता' (ऋसं. ८।४१।६) इतिप्रयोगदर्शनात्तत्र विशिष्टे निकृष्टचक्रनाभिन्यायेन श्रितं वस्तु अव्यक्तस्थम्। 'किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम्' इति पृष्टः ते त्वया अहम्। नीटी.

'यथाऽऽर्षेणेह विधिना चरताऽवमतेन हि।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप॥

निष्कलब्रह्मविद्याया दौर्लभ्यं गोप्यत्वं देवताप्रसादप्राप्यत्वं च दर्शयितुमाख्यायिकामाह— यथाऽऽर्षेणेत्यादिना। 'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते' इति श्रुतेरादित्यप्रसादात् पञ्चदशशाखाद्रष्टुर्मम वचनमत्यन्तं पथ्यं ममापि गहनं च निष्कलब्रह्मकथनमभूदित्याख्यायिकातात्पर्यम्। नीटी.

'महता तपसा देवस्तपिष्ठः सेवितो मया।
प्रीतेन चाहं विभुना सूर्येणोक्तस्तदाऽनघ॥
'वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभम्।
तत्ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः॥
ततः प्रणम्य शिरसा मयोक्तस्तपतां वरः।
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम्॥
ततो मां भगवानाह वितरिष्यामि ते द्विज।
सरस्वतीह वाग्भूता शरीरं ते प्रवेक्ष्यति॥
ततो मामाह भगवानास्यं स्वं विवृतं कुरु।
विवृतं च ततो मेऽऽस्यं प्रविष्टा च सरस्वती॥

मेऽऽस्यं मम आस्यम्। संधिरार्षः। नीटी.

ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदाऽनघ।
अविज्ञानादमर्षाच्च भास्करस्य महात्मनः॥
'ततो विदह्यमानं मामुवाच भगवान्रविः।
मुहूर्तं सह्यतां दाहस्ततः शीतीभविष्यसि॥

शीतीभविष्यति, त्वद्देह इति शेषः। नीटी.

---

(१) भा. १।५७।७३; भामु. १।६३।८८ काम्यया (काङ्क्षया) यस्माच्च (यस्मात्स).

(२) भा. १।५७।७४-७५; भामु. १।६३।८९-९०.

(३) भा. १२।३०६।१; भामु. १२।३१८।१.

(१) भा. १२।३०६।२; भामु. १२।३१८।२ मतेन हि (नतेन ह).

(२) भा. १२।३०६।३; भामु. १२।३१८।३ स्तपिष्ठः (स्तपिष्णुः).

(३) भा. १२।३०६।४-८; भामु. १२।३१८।४-८.

(४) भा. १२।३०६।९; भामु. १२।३१८।९ भविष्यसि (भविष्यति).

[1]शीतीभूतं च मां दृष्ट्वा भगवानाह भास्करः।
प्रतिष्ठास्यति ते वेदः सोत्तरः सखिलो द्विज ॥

खिलम्। परशाखीयं स्वशाखायामपेक्षावशात् पठ्यते तत् खिलमित्युच्यते। यथा बह्वृचानां 'हिरण्यवर्णां हरिणीम्' इति श्रीसूक्तम्। सखिलं तत्सहितम्। सोत्तरं सोपनिषत्कम्। नीटी.

[2]कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ।
तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति ॥

अपुनर्भावे मोक्षे। नीटी.

प्राप्स्यसे च यदिष्टं तत्सांख्ययोगेप्सितं पदम्।
एतावदुक्त्वा भगवानस्तमेवाभ्यवर्तत ॥
ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ।
गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीम् ॥
ततः प्रवृत्ताऽतिशुभा स्वरव्यञ्जनभूषिता।
ओंकारमादितः कृत्वा मम देवी सरस्वती ॥
[3]ततोऽहमर्घ्यं विधिवत्सरस्वत्यै न्यवेदयम्।
तपतां च वरिष्ठाय निषण्णस्तत्परायणः ॥
[4]ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम्।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥

चक्रे, कर्मकर्तरि प्रयोगः। स्वयमेवाऽऽविरभूदित्यर्थः। नीटी.

कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम्।
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥

मातुलस्य वैशम्पायनस्य। नीटी.

(१) भा. १२।३०६।१० ; भामु. १२।३१८।१० सोत्तरः सखिलो ( सखिलः सोत्तरो ).

(२) भा. १२।३०६।११–१४ ; भामु. १२।३१८।११–१४.

(३) भा. १२।३०६।१५ ; भामु. १२।३१८।१५ मर्घ्यं ( मर्घ्यं ).

(४) भा. १२।३०६।१६–१७ ; भामु. १२।३१८।१६–१७.

[1]ततः सशिष्येण मया सूर्येणेव गभस्तिभिः।
व्याप्तो यज्ञो महाराज पितुस्तव महात्मनः ॥
[2]मिषतो देवलस्यापि ततोऽर्धं हृतवानहम्।
स्ववेददक्षिणायाथ विमर्दे मातुलेन ह ॥

देवलस्य मातुलपक्षीयस्य मिषतः पश्यतः पुरस्तात्। अर्धे अर्धनिमित्तं मातुलादिभिः सह विमर्दे सति समं विभज्य ग्राह्यमिति निर्बन्धे सति देवलसंमत्याऽहं दक्षिणाया अर्धं कृतवान् स्वीकृतवानित्यर्थः। दक्षिणायार्थे इति संधिरार्षः। नीटी.

[3]सुमन्तुनाऽथ पैलेन तथा जैमिनिना च वै।
पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः ॥
[4]दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयाऽनघ।
तथैव लोमहर्षाच्च पुराणमवधारितम् ॥
[5]बीजमेतत्पुरस्कृत्य देवीं चैव सरस्वतीम्।
सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ॥
[6]कर्तुं शतपथं वेदमपूर्वं कारितं च मे।
यथाऽभिलषितं मार्गं तथा तच्चोपपादितम् ॥

कर्तुं प्रकटीकर्तुम्। नीटी.

[7]शिष्याणामखिलं कृत्स्नमनुज्ञातं ससंग्रहम्।
सर्वे च शिष्याः शुचयो गताः परमहर्षिताः ॥
[8]शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिताः।
प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचिन्तयम् ॥

(१) भा. १२।३०६।१८ ; भामु. १२।३१८।१८ व्याप्तो ( व्यस्तो ).

(२) भा. १२।३०६।१९ ; भामु. १२।३१८।१९ हृत (कृत) याथ ( यार्थे ).

(३) भा. १२।३०६।२० ; भामु. १२।३१८।२०.

(४) भा. १२।३०६।२१ ; भामु. १२।३१८।२१ लोमहर्षाच्च ( रोमहर्षेण ).

(५) भा. १२।३०६।२२ ; भामु. १२।३१८।२२.

(६) भा. १२।३०६।२३ ; भामु. १२।३१८।२३ वेद ( चेद ) कारितं च मे ( च कृतं मया ).

(७) भा. १२।३०६।२४ ; भामु. १२।३१८।२४.

(८) भा. १२।३०६।२५ ; भामु. १२।३१८।२५ दर्शिताः ( देशिताः ).

वैशम्पायन उवाच–

¹कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः ।
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः ॥

एतान्समागतान्सर्वान्पञ्च शिष्यान्दमान्वितान् ।
शौचाचारसमायुक्ताञ्जितक्रोधाञ्जितेन्द्रियान् ॥

वेदानध्यापयामास महाभारतपञ्चमान् ।
मेरौ गिरिवरे रम्ये सिद्धचारणसेविते ॥

## मनुः

स्वशाखा आश्रयितव्या, अगत्याऽन्यशाखा ग्राह्या

²सापेक्षत्वेऽप्यपेक्षैव मानं यावदपेक्षते ।
तावदेवान्यतः कार्यमन्यथैवानवस्थितेः ॥

## वृद्धमनुः

परसूत्रं स्वसूत्राभावे, परसूत्रं विशेषतो बोधायनम्

³स्वसूत्रेऽविद्यमाने तु परसूत्रेण वर्तते ।
बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् ॥

## कात्यायनः

त्रिविधा अक्रिया, परशाखीयकर्मानुष्ठाननिषेधः, अविरोधिपरशाखीयानुष्ठानमान्यता

⁴अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥

(१) भा. १२।३२७।१५–१८ ; भामु. १२।३४०।१९–२२.

(२) अप. १।७ पृ. १७.

(३) मुक्ता. १५.

(४) कास्मृ. १।३३ ; ब्रक. ५१ चायथा ( वाऽयथा ) ; चव्र. १।३२ कर्मकारि ( कामचारि ) क्ता च ( क्ता या ) ; चवा. १०५ कर्म ( काम ) शेषं ब्रकवत् ; निप्र. १।६५ चायथा ( चान्यथा ) ; आर. ६ आशार्के इत्युक्तम् ; वीमि. ३।२१९–२२० चायथा ( वा यथा ) ; पप्र. ७१ ; बाल. १।८९ पृ. २५३ ; संदी. १।२२.

¹स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥

²यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

( १ ) सापेक्षं तु स्वशाखे शाखान्तरोक्तं ग्राह्यमिति स एवाऽऽह– यन्नाऽऽम्नातमिति । अप. १।६

(१) कास्मृ. १।३४ तु (च) ; ब्रक. ५१ तु (च) चेष्टितम् ( यत्कृतम् ) ; स्मृच. १।१३४ तत्तस्य चे ( तस्य विचे ) ; चव्र. १।३२ खाश्रयं ( खाशेष ) तु यः ( च यः ) तत्तस्य चेष्टितम् ( तस्य तु यत्फलम् ); चवा. १०५ पूर्वार्धं चव्रवत्, चेष्टितम् ( यत्फलम् ) ; आद. ८४ ब्रकवत् ; निप्र. १।६५ तत्तस्य ( तस्य तु ) : २।६२८ ( = ) ; आर. ६ शाखाश्रयमु ( शाखां यः समु ) तु यः ( द्विजः ) चेष्टितम् ( यत्कृतम् ) वर्धमानपरिभाषायाम् ; संम. ३३ स्मृचवत् ; पप्र. ७१ चेष्टितम् ( यत्कृतम् ) ; संप्र. ५०६–५०७ ; आप्र. ४११–४१२; बाल. १।८९ पृ. २४६, २५३ ; संग. १० तत्तस्य चेष्टितम् ( तस्य च यत्कृतम् ) ; संदी. १।२२.

(२) कास्मृ. १।३५ ; अप. १।६ परोक्त (पारक्य) च (यत्) ; ब्रक. ५१ च ( यत् ) ; स्मृच. १।१३ परोक्त (पारक्य) , १।१३४ ; चव्र. ३२ अपवत् ; चवा. १०५ अपवत् ; चका. १०३ अपवत् ; आद. ८४–८५ अपवत् ; निप्र. १।६५ कर्मवत् ( कर्मसु ) शेषं अपवत् ; संत. ९२१ ; मुक्ता. १५ परोक्तमवि ( पारक्यं न वि ) ; आर. ६ स्मृचवत् ; सिन्धु. १७३५ निर्देशमात्रम् ( = ) ; संम. ३३ दिकर्मवत् ( दिकं यथा ) शेषं अपवत् ; विपा. १।१७ अपवत् , संग्रहवचनम् ; पप्र. ७१ अपवत् ; संप्र. ५०७ : ८८७ अपवत् ; आप्र. ३०२ ब्रकवत् , चतुर्थचरणवर्जम् ; बाल. १।१४ पृ. ५० ब्रकवत् ( = ) : १।२४–२५ पृ. १०० चतुर्थचरणे ( मत्यावश्यकमेव च ) शेषं अपवत् : १।८९ पृ. २४६ , २५३ अपवत् ; संग. १० : ६८ अपवत् , पृ. ; कृभ. ११६८ स्मृचवत् : ११७२ (यन्नाऽऽम्नातं स्वशाखायाम्) एतावदेव ; आमू. १ स्मृचवत् ; संदी. १।२२ ब्रकवत् .

( २ ) परोक्ता परशाखोक्ता । अयथाक्रिया विहितेतरप्रकारेणानुष्ठानम् । यथा अग्निहोत्रं यजुर्वेदशाखासु विहितं छन्दोगादिभिरनुष्ठीयते । ‡ ब्रक. ५१–५२

( ३ ) ननु किमत्र सकलस्मार्ताङ्गोपसंहारेणानुष्ठानम्, उत न ? यदि नोपसंहारः, तदा 'सर्वशाखोपसंहाराद्युक्तः श्रौतो यथा विधिः ।- सर्वस्मृत्युपसंहारात्स्मार्तोऽप्युक्तस्तथा विधिः ॥' इत्यादिविरोधः स्यात् । अथोपसंहारः, तदा नानुष्ठातुं शक्यम्, विरुद्धोपसंहारसंभवात् । उच्यते– सत्यम्, यदि सर्वोपसंहारः स्यात् । किंतु यत्राऽऽम्नातं स्वतन्त्रेण तावन्मात्रपरिपूरणमेवान्यतः क्रियते इत्यविरोधः । अत एव कात्यायनः– 'यत्राऽऽम्नातं ......' इति । अनेनैवाभिप्रायेणोक्तं 'सर्वस्मृत्युपसंहारात्' इति । १।१२–१३

'स्वशाखाश्रय ......' । अनेनापि स्वशाखीयकर्मापरित्यागेन शाखान्तराश्रयणमविरुद्धमिति शायते । तदपि तेनैवोक्तम्– 'यत्राऽऽम्नातम् ......' इति । स्मृच. १।१३४

( ४ ) शाखोक्तो( ? क्ते )ऽयं विशेषः, ( न ) गृह्योक्तो( ? क्ते )ऽयमिति चेन्न, 'स्वशाखाश्रयम्' इति स्वशाखानुगतमात्रत्व( ? त्रस्य ) विवक्षितत्वात्, 'बह्वल्पं वा स्वगृह्योक्तं यस्य यत्कर्म कीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥' इति गृह्यपरिशिष्टे तत्रापि विशेषविधानाच्च । आद. ८५

( ५ ) परोक्ता परशाखोक्ता । अन्यथाक्रिया विहितेतरप्रकारेणानुष्ठानम् । परशाखोक्ताकरणे शाखान्तराधिकरणविरोधमाशङ्क्योक्तम्– स्वशाखाश्रयमुत्सृज्येति । तेन स्वशाखोक्तसंभवे तद्विरोधि परशाखोक्तं न ग्राह्यम् । तस्यैव व्याख्या– यत्राऽऽम्नातमित्यादिना । यद्यपि शाखान्तराधिकरणे स्वशाखाविहितमङ्गं परशाखाविहितं च तुल्यबलमेवोक्तम् । तथा च उदितहोमे प्रायश्चित्तविधाने विरोधमाशङ्क्य 'प्रायश्चित्तं विधानेन' 'प्रक्रमाङ्गाद्विनियोगेन' ( जैसू. २।४।२१–२२ ) इति सूत्राभ्यां येन 'अनुदिते होष्यामि' इति प्रक्रान्तं तेनोदये सति प्रायश्चित्तं कर्तव्यम्, न त्वनुदितहोमिनामुदयकालो नाङ्गमित्युक्तम् । तथा 'न चैकं प्रति शिष्यते' ( जैसू. २।४।१९ ) इत्यत्र न च यत्काठके अग्निहोत्राङ्गं तत्काठकीयमग्नि( ? येऽग्नि )होत्रे प्रतिशिष्यते, किंतु तैत्तिरीयस्यापी( ? येऽपी )त्युक्तम् । तथापि न्यायतस्तावदेवमेव । केवलं परशाखागतकर्मनिषेधवचनस्य निरवकाशत्वात्स्वशाखानुष्ठानसंभवे परशाखाश्रितं नानुष्ठेयम् । अनुदितहोमानुष्ठानसंभवे उदितहोमो नानुष्ठेयः । तदसंभवमालोच्योदिते होष्यामीति प्रक्रम्योदितहोमेऽपि वाजसनेयिनां न च कर्मवैगुण्यम् । अत एव बलाबलाधिकरणे स्वशाखाश्रयेण परशाखाश्रयं बाध्यते इति यदुक्तम्, तदपि मुख्यानुकल्पपरमेव । स्वशाखाश्रयसंभवे परशाखाश्रयं न कर्तव्यमित्यर्थः । यथा अग्नीषोमीयस्य पशोरतिदेशेनान्वाहार्यदक्षिणा यद्यप्यङ्गं तथापि सोमदक्षिणया प्रसङ्गसिद्धेरननुष्ठानम्, एवं परशाखाश्रितस्याङ्गत्वेऽपि स्वशाखाश्रितसंभवे नानुष्ठानम् । यद्यपि 'एकशतमध्वर्युशाखानाम्, सहस्रं सामशाखानाम्' इति तावतां ज्ञानाभावे कथं कर्मानुष्ठानमिति भाति, तथापि कल्पाध्ययनस्यापि विहितत्वात् तस्य दृष्टद्वारकल्पने परशाखागताङ्गोपसंहार$स्वशाखागतसंदेहनिवृत्तिपरत्वात् कल्पसूत्रेषु यावदङ्गमुपनिबद्धं तावताऽपि कर्मसाद्गुण्यम् । तथा( ? यथा ) वाजसनेयिपञ्चदशशाखोपसंहारेण कात्यायनसूत्रम्, तदुक्ताङ्गानुष्ठानेन काण्वमाध्यंदिनादिवाजसनेयिनां कर्मसाद्गुण्यम् । यजुःशाखान्तरे तैत्तिरीयादौ श्रुतमप्यङ्गं त्याज्यम् । शाखान्तरन्यायः पञ्चदशशाखाविषयः । यद्वा तैत्तिरीया( दि )गतमप्यङ्गं सति संभवे क्रियमाणं फलातिशयार्थं शाखान्तरन्यायप्रयोजनम् । अत एव कात्यायनेन 'भक्षेहि मेति वा यथालिङ्गम्' ( काश्रौ. ९।२४४ ) इति तैत्तिरीयभक्षमन्त्रो वैकल्पिकत्वेन सोमभक्षणे दर्शितः । यत्तु काण्वश्रुतौ वैकङ्कती-

‡ चत्र., चदा. ब्रकगतम् ।

$ स्वशाखागतपदं तन्मात्रानुष्ठाने लाक्षणिकम् । 'परशाखागताङ्गान्युपसंहार्याणि वा स्वशाखागतमात्रमनुष्ठेयं वा' इति संदेहाकारः ।

सुत्राः कथिताः, कात्यायनेन शाखान्तरानुसारात् 'वारुणान्यहोमसंयुक्तानि' ( काश्रौ. १।८० ) इति वारुणी कथिता; तथा दीक्षायाम् 'अदीक्षिष्टायं ब्राह्मणः' इति काण्वश्रुतौ, कात्यायनेन 'दीक्षितोऽयं ब्राह्मण इत्युच्चैस्त्रिर्जपेत्' ( काश्रौ. ७।१०४ ) इति मन्त्रान्तरमुक्तम्, तथाविधेषु मुख्यत्वात् स्वशाखाश्रयं कर्तुमुचितम्, कल्पसूत्रस्य वाजसनेयिशाखान्तरे सावकाशत्वादिति प्रतिभाति। तदुत्सृज्य सूत्रोक्तकरणे च शाखान्तरीयस्यानुकल्परूपत्वान्मुख्यासंभवे चानुकल्पस्यापि कार्यत्वात्स्यादेव फलम्। कथं मुख्यासंभवः? इति चेत्, इत्थम्– किं स्वशाखागतत्वात् कल्पोक्तत्यागेन श्रुत्युक्तं कार्यम्? किंवा 'वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि। ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम्॥' इत्यादिव्यासवचनरीत्या स्वशाखागतस्य कल्पानुपसंहृतत्वेन निर्विचिकित्स्यम( ? निर्विचिकित्सकर्तव्यताऽ )ज्ञानान्न कार्यं वा? इति संदेहेन स्वशाखोक्ते मुख्ये करणासामर्थ्यमस्त्येवेति स्यादेव फलम्। यस्य तु निर्विचिकित्स्यः ( ? त्सः ) श्रुत्युक्ते कर्तव्यतानिश्चयः, व्यासवचनस्य स्मृतिप्रशंसार्थवचनत्वात्, न च परंपरानुष्ठानाभिज्ञयाज्ञिकनिवारणप्रतिबन्धोऽस्ति, स कुर्यादेव वैकङ्कतीं स्रुवाम्, दीक्षायां च 'अदीक्षिष्टायं ब्राह्मणः' इति मन्त्रजपम्, मुख्यानुष्ठानाच्च प्राप्नुयादेव फलम्। यत्तु 'येनास्य पितरो याता येन याताः पितामहाः। तेन गच्छेत्सतां मार्गं तेन गच्छन्न रिष्यति॥' ( मस्मृ. ४।१७८ ) इति मनुवचनम्, तद्वैकल्पिकेषु समेषु पूर्वपरिगृहीतग्रहणविषयम्; न तु मुख्यानुकल्पविषयम्, श्रुत्यर्थव्याख्यासंदेहेऽन्यतरपक्षपरिग्रहविषयं चेति मेधातिथिना व्याख्यातम्। एवं च सति 'बहुवेदगतन्यायविवेकज्ञो यदब्रवीत्। कात्यायनो न तद्वाच्यमन्यथ्यमिति मादृशैः। वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः॥' इत्यादिवार्तिकमप्यनुकल्पाभिप्रायं व्याख्येयम्। स्मृतीनां तु सर्वासां सर्वं प्रति प्रामाण्यं होलाकाधिकरणे प्रतिपादितम्। तत्र सर्वशाखास्वेकाग्निहोत्रवत् किं सर्वस्मृतिष्वेकमेव संध्याकर्म? किंवा भिन्नम्? इति संदेहे सर्वस्मृतीनां तुल्याध्येतृकत्वेन क्वचित् संध्याकर्मोत्पत्तिविधौ स्मृत्यन्तरे तद्विधिवैयर्थ्यात् 'न च शाखान्तरन्यायस्तुल्याध्येतृकतावशात्। सर्वशाखाविधित्वं हि स्थितमध्येतृभेदतः॥' इत्युक्तदिशा प्रतिस्मृति भिन्नमेव कर्मेति प्राप्ते, अभेदहेतोः प्रत्यभिज्ञानस्य सत्त्वेन क्वचित् कर्मानुवादेन गुणविधिरिति। यथा त्रिष्वपि वेदेषु तुल्याध्येतृकेष्वेकमेव ज्योतिष्टोमकर्म, 'भूयस्त्वेनोभयश्रुति' ( जैसू. ३।३।१० ) इति न्यायात्; तथा सर्वस्मृतिष्वेकमेव संध्याकर्म, तदङ्गानि सर्वेभ्यो ज्ञात्वा कार्याणि। न चैवं सति सर्वस्मृत्यनुसरणं विना संध्याकर्माद्यकरणप्रसङ्गः, श्रुत्यर्थोपसंहारे कल्पसूत्रवत् स्मृत्यर्थस्याप्यनुष्ठानाय पूर्वपूर्वशिष्टनिबन्धानामेवोपसंहारफलानामादरणीयत्वात्। तथा च मनुः– 'दशावरा वा परिषद्यं धर्मं परिकल्पयेत्। त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत्॥' ( मस्मृ. १२।११० )। परिकल्पयेदिति। अनुष्ठानक्षमनिर्णयविषयं कुर्यात्। पर्षल्लक्षणं तत्रैव 'त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा॥' ( मस्मृ. १२।१११ )। त्रयश्चाऽऽश्रमिणः पूर्वे वृद्धा ब्रह्मचारिणं विना, 'ब्रह्मचर्याश्रमादूर्ध्वम्' इत्यङ्गिरोवचनात्। धर्मपाठकः। 'अनेन धर्मशास्त्रशः प्रोच्यते धर्मपाठकः' इत्यङ्गिराः। एवं सति पूर्वपूर्वधर्मशास्त्रनिपुणमहानुभावपर्षद्भिर्यावदङ्गोपेतं नानास्मृतिपर्यालोचनया निर्णीतम्, तदधिकमङ्गं चेत्प्रामाणिके स्मृत्यन्तरे संप्रति दृश्यते, तदकरणेऽपि न वैगुण्यम्। शाखान्तरन्याया( ? येना )-ङ्गत्वादङ्गाधिक्यात्करणे फलातिशयः। एतदेवाभिप्रेत्य भविष्यपुराणे स्मर्यते– 'अदृष्टार्थविकल्पस्तु व्यवस्थासंभवेऽसति। स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति॥'। व्यवस्थायाः संभवः संभावना, तस्यामसत्यामदृष्टार्थस्य स्मृत्यर्थस्य विकल्पः। तद्यथा– 'कुर्यात्कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा।' इति सूर्योपस्थाने विकल्पश्रुतावपि 'सायंप्रातः प्राञ्जलिर्मध्याह्ने ऊर्ध्वबाहुः' इति वाक्यान्तरात् व्यवस्था। यत्र तु न व्यवस्थासंभवः 'अघमर्षणसूक्तं त्रिः सकृद्वा जपेत्'

इत्यादौ, तत्र यथेच्छविकल्पः । तथा स्मृतिशास्त्रस्याधिकबोधकस्य विकल्पः स्यात्पूर्वस्मृत्या क्रियमाणस्य कर्मण आकाङ्क्षापूरणे सति । यथा योगियाज्ञवल्क्यस्यानुसारेण संध्याकर्मणि क्रियमाणे शङ्खस्मृतेर्मार्जनानन्तरं 'व्याहृतीः कीर्तयेदेवं तथैवाक्षरमव्ययम् ।' इति व्याहृतित्रयप्रणवजपविधानम् । न हि प्रणवव्याहृतिजपं प्रत्याकाङ्क्षाऽस्ति, मानाभावात् । आकाङ्क्षायां त्वपूर्णायां स्मृत्यन्तरोक्तं नित्यवदनुष्ठेयम् । तद्यथा— योगियाज्ञवल्क्यीये 'प्राणस्याऽऽयमनं कृत्वा आचामेत्प्रयतोऽपि सन् ।' इति याज्ञवल्क्येन संध्याप्राणायामानन्तरमाचमनमात्रमुक्तम्, न तत्र मन्त्रः । अस्ति चाऽऽचमनस्य जलसाध्यस्य स्मारकमन्त्राकाङ्क्षा । तेन शङ्खस्मृतौ 'उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन मन्त्रवित् ।' इति 'अन्तश्चरसि' इत्यादिमन्त्रविधानं साकाङ्क्षत्वान्नित्यवदेव ग्राह्यम् । एवमन्यत्र कल्पनीयम् । उपनयनादिगृह्योक्तकर्मविषये तु गृह्यपरिशिष्टम्— 'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' । गृह्योक्तानामपि स्थालीपाकादीनां शाखान्तरन्यायेन सर्वोपसंहारः । 'कपालं भगालमिति ब्रूयात्' इत्यादिस्नातकव्रतानां होलाकाधिकरणन्यायेन सर्वसाधारणत्वान्नैतद्वाक्यविषयत्वम् । परिशेषात् 'यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् । तच्छाखाध्ययनं कुर्यात्' इति स्मृतेः संस्काराणां स्वशाखाध्ययनाङ्गत्वादितरशाखासंस्कारं प्रति गृह्यान्तरगताङ्गस्यानङ्गत्वादेव नापेक्षा । तेन न्यायमूलमेवेदं वचनम् । १।६५–७१

शाखान्तराधिकरणे— 'स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते । एकार्थानां विकल्पस्तु कर्मैकत्वे भविष्यति ॥' इति शाखानां विकल्पेनाध्ययनमुक्त्वा, तर्हि शाखाध्ययने न नियमः, पित्रादिक्रमागतशाखां त्यक्त्वा शाखान्तरमपि कथं नाधीयते ? इति शङ्कायां वार्तिककारः— 'संप्रदायागतां मुक्त्वा स्वां समाख्यानुवर्तिनीम् । शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे भ्रमे ॥' इति पूर्वपरिगृहीतस्य ग्रहणमावश्यकमित्याह । यत्तु होलाकाधिकरणे स्मृतीनां सर्वधर्मत्वमुक्तं तदपि स्वशाखाश्रयाविरुद्धपरशाखाश्रयस्मृतिबोधिताधिककर्मण्यधिकारसिद्धिपरम्, स्वशाखाश्रयासंभवे वाऽनुकल्परूपेण परशाखागतस्यापि पक्षस्यानुष्ठानेऽपि नाधिकारहानिरित्येवंपरं च, अन्यथा 'स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः । कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥' इत्यादिवचनानां निरालम्बनत्वापातात् । तथा बलाबलाधिकरणे स्वशाखाश्रयेण परशाखाश्रयं बाध्यत इत्युक्तम् । यत्तु विकल्पस्याष्टदोषेषु 'अङ्गीकृत्यापि तौ दोषौ पूर्वं केनापि हेतुना । प्रयोगान्तरकाले तु पुनर्दोषद्वयं भवेत् ॥' इति एकस्यैव विकल्पे पक्षद्वयाश्रयणमुक्तम्, तत् पक्षान्तरस्य पूर्वपरिगृहीतत्वेन व्यवस्थितप्रायविकल्पव्यतिरिक्तविकल्पविषयमेव । एवं च कुरुवाजपेये 'सप्तदश वैव गावस्तं कुरुवाजपेयमित्याचक्षते' (लाट्या. श्रौ. ८।११।१८) इति परशाखागतहीनकल्पदक्षिणाश्रयणं वाजसनेयिनामनुकल्पमेव । यद्वा वेदान्तर्ग( ? न्तरग )तशाखात्वात्सामशाखाऽपि स्वशाखा, 'त्रय्या विद्यया' इति वेदत्रयाच्छाखात्रयस्य सर्वेषां पूर्वपरिगृहीतत्वादिति । निप्र. २।६२७–६२८

(६) अकरणम्, परशाखोक्तकरणम्, विहितेतरप्रकारेण क्रमान्तरादिना करणम् (इति) त्रिविधैव कर्मणामक्रिया, निष्फलत्वात् । परोक्तेत्यत्र विशेषमाह— स्वशाखेति । स्वशाखोक्तश्राद्धादिकमुत्सृज्य पारशाखिकं स्वशाखोक्तविपरीतं यः कर्तुमिच्छति शास्त्रीयज्ञानविपरीतज्ञानवान्, तस्य यत्कृतं तन्निष्फलम् । स्वशाखायां यत् नोक्तं परशाखोक्तम्, यथा— छन्दोगानां याजुर्वेदिकमग्निहोत्रम्; यद्वा स्वशाखोक्तस्याऽऽकाङ्क्षापूरकत्वेन स्वरूपतो वा अविरोधि, $ यथा मनुनोक्तस्य 'मेखला-

$ इदमत्र चिन्त्यम्— स्वशाखोक्तस्य साकाङ्क्षत्वे अविरोधि परशाखोक्तमप्यनुष्ठेयमिति सामान्यरूपेण दार्ष्टान्तिकं प्रकृतम् । अत एव 'पौराणिकादि तु साधारणत्वान्न पारक्यम्' इत्यग्रे वक्ष्यति । तत्रायं दृष्टान्तो नोपपद्यते, मन्वादिस्मृतीनां सर्वैः साधारणत्वस्याभ्युपगमात् मनुस्मृतिर्न कस्यापि स्वशाखा, नापि किमपि गृह्यसूत्रं मनुस्मृत्यपेक्षया परशाखेति दृष्टान्तवैषम्यादिति ।

मजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्राश्य विनष्टानि गृहीतान्यानि मन्त्रवत्॥' (मस्मृ. २।६४) इत्यस्य मन्त्राकाङ्क्षापूरकं गृह्यान्तरे मन्त्राभिधानम्, तत् धर्मज्ञैः कर्तव्यमेव। पौराणिकादि तु साधारणत्वान्न पारक्यमिति तदपि स्वशाखोक्तादधिकमनुष्ठेयमेव। यथा 'देवताभ्यः' इतिमन्त्रजपादि। यत्तु गृह्यपरिशिष्टोक्तम्— 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥', तत् साधारणानां परोक्तानां च नावश्यमनुष्ठानमित्येवंपरम्, न तु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति तस्यार्थः, गृह्यानुक्तानां साधारणानामुपदेशानर्थक्यापत्तेः, शाखान्तराधिकरणविरोधाच्च। † प्रकाश.

(७) परोक्ता परशाखोक्ता, तत् स्वगृह्यविरुद्धपरशाखोक्तनिषेधकम्। शक्तस्य सर्वस्मृत्युपसंहारः, अशक्तस्य स्वगृह्योक्तमिति निष्कर्षः। आपस्तम्बादीनां स्वसूत्रेऽनुक्तौ विशेषो यज्ञकाण्डे— 'आपस्तम्बादिभिरपि स्वसूत्राभावतस्तथा। बौधायनोक्तं कर्तव्यमन्यथा पतितो भवेत्॥'। अग्निहोत्रादिकं च यच्छाखोक्तमाध्वर्यवं तदीयमेवाङ्गीकार्यम्, 'आधानं येन सूत्रेण तेनैवेज्यादिकाः क्रियाः।' इति यज्ञपार्श्वोक्तेः। ‡ आर. ६

(८) स्वशाखाश्रयमिति। इदं स्वशाखोक्तविरुद्धं न कार्यमित्येवंपरम्। यथोक्तं तेनैव— यन्नाऽऽम्नातमिति। संम. ३३

(९) शूलपाणिना तु श्राद्धविवेके 'अविरोधि च' इति पठित्वा चकारादाकाङ्क्षितमिति व्याख्यातम्। एवं च स्वशाखायामनुक्तं परशाखोक्तं प्रधानं न ग्राह्यम्। अङ्गं तु स्वशाखायामनुक्तं परशाखायामुक्तमविरोधि आकाङ्क्षितं च ग्राह्यमिति पर्यवसितोऽर्थः। शाखान्तराधिकरणन्यायेन प्रसक्तं सर्वोपसंहारमपवदति गृह्यपरिशिष्टकारः— 'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥'। यज्ञपार्श्वपरिशिष्टे कात्यायनः— 'ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखाश्रितो विधिः। तेन संतनुयाद्यज्ञं न कुर्यात्पारशाखिकम्॥ परशाखोऽपि कर्तव्यः स्वशाखायां न नोदितः। सर्वशाखासु यत्कर्म एकं प्रत्यवशिष्यते॥'। यत् यतः प्रत्यवशिष्यते प्रतीयते। † पप्र. ७२

(१०) बह्वृचच्छन्दोगादीनां स्वशाखायामाध्वर्यवादेरनुक्तत्वात् किं कर्मलोप एव? उतान्यशाखीयग्रहणम्? तत्र तावल्लोप एवेति प्राप्तम्। तथा च... छन्दोगपरिशिष्टे कात्यायनश्च— 'अक्रिया ... चेष्टितम्॥' इति।... तस्मात् स्वशाखोक्तं बह्वल्पं वा यादृशमुक्तं तत्तथैवानुष्ठेयम्, न तु शाखान्तरापेक्षया अन्यथयितव्यम्। स्वीयं सर्वानुष्ठानं विना परकीयं लोभादिना नानुष्ठेयमिति। अत्रोच्यते— यत्रान्यशाखोक्तस्य कस्यचिदङ्गस्य निषेधस्तत्र किंचिन्निषेधद्वारा तदुक्तस्यान्यस्याभिमतत्वबोधनात् तदनुष्ठेयम्, ... 'यन्नाऽऽम्नातम्...' इति छन्दोगपरिशिष्टे कात्यायनोक्तेश्च। अत एव शाखान्तराधिकरणन्याय अनुगृहीतो भवति। अत एव नित्यादिकर्मकरणप्रयुक्तप्रायश्चित्तीयत्वाभावः। तस्मात् ए( ? ये )षां सूत्रे यावदितिकर्तव्यताकं कर्मोक्तं तेषां तावदेव। एतदाशयान्येव पूर्वपक्षोक्तवचनानि। प्रधानस्य स्वसूत्रोक्ताङ्गकलापेनैवाऽऽकाङ्क्षाशान्तेरन्यदीयाकाङ्क्षाभाव इति तद्भावः। येषां तु प्रधानमात्रं सूत्रे उक्तम्, तत्र तदाकाङ्क्षायामविरोधिनोऽन्यस्यान्वयो भवतीति सिद्धान्तवचनानामाशय इति न विरोधः। बाल. १।८९ पृ. २५३–२५४

(११) स्वशाखानुक्तमप्यविरुद्धं परशाखोक्तं ग्राह्यम्। सूत्रान्तरानुक्तमपि स्मृत्युक्तं ग्राह्यम्। संग. १०

(१२) कर्मकरणशीलानां कर्मण्यधिकुर्वाणानां त्रिविधाऽक्रिया मुनिभिः कथिता— अकरणम्, परोक्तकरणम्, अयथाकरणं चेति। अयथाकरणं च पौर्वापर्यविपर्यासेनानुष्ठानम्। स्वशाखाश्रयमिति। यस्तावत्

† संदी. प्रकाशगतम्।

‡ आभू. आरगतम्।

† शेषं प्रकाशवत्।

स्वशाखोक्तस्य प्रयोगस्यान्तरान्तरा परोक्तमनुतिष्ठति, तस्य तावदशावक्रियेत्युक्तम् । यस्तु पुनर्दुर्बुद्धिः स्वशाखाश्रयं प्रयोगमुत्सृज्य श्रद्धाजाड्यादिना परशाखाश्रयं प्रयोगं चिकीर्षति, तस्य यत्कृतं तन्निष्फलम् । तस्येति शैषिकी षष्ठी । तुशब्देन पूर्वस्मादस्य भेदं प्रज्ञापयति । यन्नाऽऽम्नातमिति । यत्स्वशाखायां नाऽऽम्नातं तत्परोक्तमपि विद्वद्भिरनुष्ठेयम्, यदि स्वशाखया न विरुध्यते । तत्र दृष्टान्तः– अग्निहोत्रादिकर्मवदिति । अग्निहोत्रं किल छन्दोगशाखायां नाऽऽम्नायते, किंतु छन्दोगैरप्यध्वर्युशाखापरिपठितं तदनुष्ठीयते ।

अत्र किंचिद्वक्तव्यमस्ति । प्रथमश्लोके तावत्परोक्तंकरणमक्रियेत्युक्तम् । द्वितीयश्लोकेन स्वशाखोक्तं प्रयोगमुपेक्ष्य परशाखोक्तप्रयोगस्यानुष्ठानं निषिद्धम् । तृतीयेन तु यत्स्वशाखायां नोच्यते, अविरुद्धं तत्परोक्तमप्यनुष्ठेयमित्युपदिष्टम् । तत्र स्वशाखाश्रयमित्यनेन स्वशाखोक्तप्रयोगपरित्यागेन परशाखोक्तप्रयोगानुष्ठानस्य निन्दितत्वात्परोक्ता चेत्यनेन स्वशाखोक्तप्रयोगानुष्ठानकाले परोक्तस्यानुष्ठानमक्रियेत्युच्यते । एवं च स्वशाखोक्तस्य प्रयोगस्यान्तराऽन्तरा परोक्तानुष्ठानं न कर्तव्यमिति तस्यार्थः, अन्यथाऽनर्थकत्वापत्तेः । तच्चेदं स्वशाखोक्तप्रयोगस्यान्तराऽन्तरा परशाखोक्तस्यानुष्ठानं श्रौतेषु न शक्यते निषेद्धुम्, होत्रादितत्तच्छाखासु तेषां तेषामेकैकेषामेव कर्मोपदेशात्, होत्रुद्गात्रध्वर्युप्रभृतिभिश्च विभिन्नशाखिभिः ऋत्विग्भिर्यज्ञनिष्पत्तेः । तथा च 'होता वषट् करोति, अध्वर्युर्जुहोति, उद्गाता चोद्गायति' इत्यादिकं तत्र तत्र विहितम् । तस्मात्पारिशेष्यात् स्वगृह्योक्तप्रयोगस्यान्तराऽन्तरा परोक्तस्यानुष्ठानमक्रियोक्तमिति वक्तव्यम् । तथा च श्राद्धभाष्ये नीलाम्बरधृतं गृह्यपरिशिष्टम्– 'प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः । प्रयोगशास्त्रताहानेरनारम्भविधानतः ॥ बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् । स्मार्ते साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु ॥' इति । अपि चाऽऽह– 'प्रयोगः सूत्रकारोक्तो न समुच्चयमर्हति । समुच्चये यतस्तस्य न निष्पत्तिर्न च क्रमः ॥' इति । न च परोक्तगुणानुपसंहारे शाखान्तराधिकरणन्यायविरोध इति वाच्यम्, तन्न्यायस्य श्रौतविषयत्वात् वाचनिकेऽर्थे न्यायानवताराच्च । किंच, नाम्नोऽभेदेऽपि यथासंभवं रूपभेदादिभ्यः तस्य तस्य कर्मान्तरत्वमेवेति कुत्र कस्य गुणोपसंहारः ? न हि कर्मान्तरे कर्मान्तरगुणानामुपसंहारः शास्त्रानुमतः । अत एव 'नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः' इत्यनेन वैश्वदेवबलिकर्मणोः सामान्ययोः विशेषोक्ताभ्यां ताभ्यां कर्मान्तरत्वं स्वयमेव वक्ष्यति । यच्च पुराणोक्तं साधारणम्, तद्यपि न पारक्यम्, तथापि स्वशास्त्रोक्तप्रयोगे न तस्य गुणोपसंहारः, तस्य कर्मान्तरत्वात् कर्मान्तरे च कर्मान्तरगुणानामुपसंहारायोगात्, पूर्वोक्तगृह्यपरिशिष्टे अनारम्भविधानादन्यैर्गृह्यादेः समुच्चयनिषेधाच्च । किंतु स्वशास्त्रोक्तप्रयोगानुष्ठानानन्तरं फलभूयस्त्वार्थमिच्छया तस्याप्यनुष्ठानं भवेदित्यपि वैश्वदेवबलिकर्मणोः स्वयमेव वक्ष्यति । अनारम्भविधानैः समुच्चयेऽप्येषैव गतिः । तेषामनुष्ठाने फलभूयस्त्वम्, अननुष्ठानेऽपि गृह्योक्तमात्रस्यानुष्ठानात्फलसिद्धिः । तथा चोक्तम्– 'बह्वल्पं वा स्वगृह्योक्तम्' इत्यादि । मदनपारिजातेऽप्युक्तम्– 'असमर्थश्चेत्स्वगृह्योक्तमात्रमेव करोति, तावतैव तस्य शास्त्रार्थसिद्धेरुक्तत्वात्' इति । तस्माच्छ्रौतेषु पारशाखिकं कर्तव्यम्, गृह्योक्तेषु तन्न कर्तव्यम्, अनारभ्य विहितं तु गृह्योक्तेऽपि प्रयोगे कर्तव्यम् । परमेषामकरणेऽपि गृह्योक्तमात्रकरणात्फलसिद्धिः, अनारभ्य विहितानां करणे तु फलातिशयः । सामान्यस्तु प्रयोगः स्वशास्त्रोक्तप्रयोगात्परत इच्छया कर्तव्यः । तत्रापि फलभूमा बोद्धव्यः । प्रभा.

**[1]स्वेन पित्रादिभिर्वा यः कल्पादिः पूर्वमादृतः ।**
**स तु नैव परित्याज्य इति वेदानुशासनम् ॥**

( १ ) तथा च पूर्वविरुद्धः पित्रादिपरिग्रहस्तदुभयविरुद्धः स्वपरिग्रहश्च त्याज्यः । बाल. १।८९ पृ. २५५

(१) बाल. १।८९ पृ. २५५ ; कुभ. ११७१ र्वा यः ( र्वाऽपि ).

(२) स्वेनेति पित्रादिभिरिति च पूर्वविरुद्धपित्रादिपरिग्रहाशानविषयम् । † कृम. ११७१

## दक्षः

स्वसूत्रीयं परित्यज्य परसूत्रीयकर्माचरणे दोषः

**[1]स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः ।**
**अज्ञानादथवा लोभात्स तेन पतितो भवेत् ॥**

(१) स्वसूत्रोक्तं कर्म परित्यज्य पारक्यं कर्म कुर्वतो दोषमाह दक्षः— ' स्वकं कर्म ...... ' इति । स्वसूत्रालाभे वृद्धमनुः— ' स्वसूत्रेऽविद्यमाने तु परसूत्रेण वर्तते । बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् ॥ ' । मुक्ता. १५

(२) ' स्वकं कर्म ...... ' इति वचनात्स्वगृह्योक्तं बहुल्पं वा यादृशं तत्तादृशमेवानुष्ठेयम्, न तु शास्त्रान्तरमपेक्ष्यान्यथाऽपि कर्तव्यम् । येषां तु गृह्ये स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधः, तत्र तन्निषेधद्वारा तत्स्मृत्युक्तान्याङ्गस्याभिमतत्वबोधनात्तदनुष्ठेयम्, ' आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥ ' इति वचनात् । यस्य शाखेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः । कृम. १७३४–१७३५

## शातातपः

श्रौतस्मार्तेषु सर्वशाखोपसंहारः

**[2]श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् ।**
**स्मार्तं साधारणं तेषु गार्ह्येष्वपि च कर्मसु ॥**

§[1]सर्वशाखोपसंहारादुक्तः श्रौतो यथा विधिः ।
सर्वस्मृत्युपसंहारात्स्मार्तोऽप्युक्तस्तथा विधिः ॥

## बृहत्पराशरः

स्वोपनयनशाखयोपाकर्मादि कर्तव्यम्

**[2]यच्छाखयोपनीतः स्याद्ब्रह्मचारी द्विजोत्तमः ।**
**तच्छाखाविहितं तस्य उपाकर्मादि कीर्त्यते ॥**

## अङ्गिराः

स्वसूत्रस्ववेदविहितं कर्म कार्यम्

**[3]तस्माद्विद्वान् सूत्रवेदविहितं यावदेव वै ।**
**तावदेव प्रकुर्वीत सर्वसौख्याय केवलम् ॥**

**[4]स्वे स्वे गृह्ये यथा प्रोक्ता-**
**स्तथा संस्कृतयोऽखिलाः ।**
**कर्तव्या भूतिकामेन**
**नान्यथा सिद्धिमृच्छति ॥**

(१) भूतिः ऐहिकमामुष्मिकं च फलम् । संप्र. १३६

(२) यद्यपि सर्वशाखाप्रतिपादितमेकं कर्म तथापि स्वशाखाविहितं कुर्यात् । तथा चाङ्गिराः— ' स्वे स्वे गृह्ये ... ' इति । संग. ९

## कार्ष्णाजिनिः

स्वसूत्राद्यभावे परसूत्रीयं कर्तव्यम्

**[5]आत्मतन्त्रे तु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम् ।**
**विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥**

---

† शेषं बालवत् ।

(१) वस्मृ. २।३ ; निप्र. १।२२९ दथवा (द्यदि वा) ; मुक्ता. १५ लोभात्स तेन (ज्ञानात्स्यक्तेन) ; बाल. १।८९ पृ. २५३ द्विजः ( नरः ) गृह्यपरिशिष्टे ; संग. १० स्वकं कर्म परित्यज्य ( स्वकर्मपारमुत्सृज्य ) द्विजः ( नरः ) तेन ( हतः ) स्मृत्यन्तरम् ; कृम. १७३४, १७३५ द्विजः ( नरः ) (=).

(२) मपा. १५ शाखोक्तं (शास्त्रोक्तं) व यथोचितम् ( वं यथोदितम् ) गार्ह्येष्वपि च ( ग्राह्यं श्रौतेषु ) सारसंग्रहे ; मुक्ता. १५ ; प्रभा. १।५२ गार्ह्येष्वपि च ( ग्राह्यं श्रौतेषु ) गृह्यपरिशिष्टम् .

§ स्मृच.व्याख्यानं ' यन्नाऽऽम्नातं स्वशाखायां ' इति कात्यायनवचने अस्मिन्नेव प्रकरणे ( वका. पृ. ३१५ ) द्रष्टव्यम् ।

(१) स्मृच. १।१२ (=) : १।१३ ( सर्वस्मृत्युपसंहारात् ) एतावदेव (=) ; मुक्ता. १५ ; आर. ६ शाखोप ( श्रुत्युप ) ; सस्मृ. ९२.

(२) बृपसं. ६।३४९.

(३) पूर्वाङ्गिस्मृ. ८४८.

(४) प्रपा. ३ ; संप्र. १३५ ; संग. ९ सिद्धि ( भूति ) ; संर. ४ स्मृतिः .

(५) स्मृच. १।१३ पू. , कात्यायनः ; मुक्ता. १५

(१) ये स्वशाखे विशेषा अनुक्तास्ते खलु निश्चितं सामान्या इत्यर्थः। स च प्रकारस्तैः स्मृत्युक्तः पौराणिको वा ग्राह्यः। बाल. १।२४–२५ पृ. १०१

(२) ननु बह्वृचादीनां याजुषमाधानमेव न स्यात्, 'ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः। तेन संतनुयाद्यज्ञं न कुर्यात्पारतान्त्रिकम्॥' इति पारतान्त्रिकनिषेधादिति चेत्, मैवम्, 'अनुक्तमन्यतो ग्राह्यम्' इति वचनात्, 'आत्मतन्त्रेषु यन्नोक्तं ......' इति कार्ष्णाजिनिना, यतो वेदोक्ता विशेषाः सामान्याः सर्वानुष्ठातृपुरुषसाधारणा इत्यभिधानेन बह्वृचादीनां याजुषाधानादेः छान्दोगौद्गात्रादेराथर्वणशान्त्यादेश्चाधिकारबोधनाच्च, 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥' इति हेमाद्रौ छन्दोगपरिशिष्टे दृष्टान्तप्रदर्शनाच्च। कृम. ११६८

(३) 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायेन सर्वशाखागृह्यसूत्रपरिशिष्टस्मृतिपुराणेतिहासाचारावगतसकलपदार्थोपसंहारेणैव स्नानसंध्यादिधर्मानुष्ठानं सर्वसंमतम्। तत्र— 'यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते। अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते॥ तस्मात्सर्वप्रयत्नेन स्वसूत्रं न च लङ्घयेत्॥' इति विष्णुधर्मोत्तरादिवचनैः स्वसूत्राविरोधिशाखान्तरपरिग्रहः कर्तव्यः। अत एव भविष्यत्पुराणे उक्तम्— 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा॥' इति। कार्ष्णाजिनिरप्याह— 'आत्मतन्त्रे तु . . . वेदवादिभिः॥' इति। ननु कृत्स्नसूत्रस्मृत्याद्युपसंहारस्य मानुषेण कर्तुमशक्यत्वात् कर्मण्यनधिकार एव सर्वेषामिति चेत्, माधव आह— 'विशेषादर्शनं यावत्तावत्सामान्यदर्शनम्। मान्यमेवान्यथा ते स्यात्सर्वशस्त्वेऽधिकारिता॥ गुणोपसंहृतिश्चैव यथादर्शनमिष्यताम्। अदृष्टानुपसंहारे नाकिंचित्करता व्रते॥ यथावद्दृश्यते वाक्यं शक्तिश्चात्रास्य यावती। तावत्कर्तुं न तूपेक्षा युक्ता वैगुण्यशङ्कया॥' इति। यद्वा स्वसूत्रेतिकर्तव्यतामात्रमेव कर्म कर्तव्यम्। तदुक्तं बैजवापायनेन— 'बह्वल्पं वा स्वशाखोक्तं यस्य कर्म प्रचोदितम्। तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्॥'। लौगाक्षिणाऽपि— 'ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः। तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम्॥' इति।

गृह्यपरिशिष्टमपि स्वस्वसूत्रसमम्, गृह्यपरिशिष्टमितिसमाख्याबलात्। तथाहि— 'अथास्मिन्नाश्वलायनगृह्ये यानि कानिचिदन्यत्रोक्तानि तानीहेच्छताऽऽचार्येणानुमिता(? मता)नि ज्ञापितानि, यानि चोक्तप्रदर्शितक्रियाणि तानि सर्वावबोधाय यथावदभिधास्यामः' इति आश्वलायनगृह्यपरिशिष्टम्। अत एव जगद्गुरुभट्टैरपि ग्रहमखप्रकरणे उक्तम्— 'आश्वलायनानां स्वगृह्यपरिशिष्टोक्तग्रहमखः, तस्य सूत्रसमत्वात्' इति। अथ गृह्यपरिशिष्टशौनकगृह्यकारिकाणां विरोधे किमुचितमित्यपेक्षायां पारिजाते उक्तम्— "कारिकागृह्यपरिशिष्टविरोधे परिशिष्टोक्तमेवानुसंधेयम्, आचार्येणोक्त(वचन?)त्वात्, 'तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत्' इति वचनाच्च" इति, 'गृह्यपरिशिष्टशौनकयोर्विरोधे परिशिष्टोक्तमेवानुसंधेयम्, आचार्येणोक्त(वचन?) त्वात्' इति। इन्दु. ४–५

## व्याघ्रपादः

स्वशाखोक्तं विहाय परशाखोक्तस्याकर्तव्यता

'[1]स्वशाखोक्तं परित्यज्य
परशाखोक्तं समाचरेत्।
अप्रामाण्यमृषिं(? षेः) कृत्वा
अन्धे तमसि मज्जति॥

पू., कात्यायनः; बाल. १।२४–२५ पृ. १००, १।८९ पृ. २५३ तन्त्रे तु (तन्त्रेषु) तत्कुर्यात् (तद्ग्राह्यं) (=); कृम. ११६८ तन्त्रे तु (तन्त्रेषु) तन्त्रिकम् (तान्त्रिकम्): १७३५ बालवत् (=); इन्दु. ४.

(१) व्याघ्रस्मृ. १७४.

## आश्वलायनः

स्वशाखीयपरशाखीयकर्मानुष्ठानव्यवस्था

[1]तस्माद्धर्मो यथाशक्त्या
यत्नात्सेव्यो नृभिर्बुधैः ।
स्वं स्वं शास्त्रं समालम्ब्य
भक्त्या नित्यमतन्द्रितैः ॥
स्वशाखेषु विकल्पानामन्यशास्त्रबलादपि ।
मुख्यः कार्यः प्रयत्नेन चाविरुद्धश्च यो द्विजैः ॥
यो वि( ? यद्वि )रोधः स्वशाखेषु
तन्न कार्यं कथंचन ।
अनुरूपाणि कार्याणि
चानुक्तान्यपि सत्तमैः ॥
[2]स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥

पञ्चसु श्रौतसूत्रेष्वाश्वलायनसूत्रस्य श्रेष्ठत्वम्

[3]अग्निमीळादिकां शाखामृचामाद्यामनुत्तमाम् ।
मदीयां प्राप्तवानादौ शाकलोऽयं द्विजोत्तमः ॥
अनेन मत्तो या प्राप्ता शाकलेन तपस्विना ।
सा शाकलकसंज्ञाऽऽसीन्मदीया चोत्तमोत्तमा ॥
[4]चतुर्विंशतिधा भेद ऋचामार्षो निगद्यते ।
तेषामाद्योऽहमप्रश्च प्रसादादभवं मुनेः ॥
चतुर्विंशतिशाखानां गृह्यमेकं मयोदितम् ।
सविकल्पं भवेत्सिद्धयै विप्राणां गार्ह्यकर्मणाम् ॥
सूत्रं पञ्चविधं प्रोक्तं श्रौतस्येह प्रवृत्तये ।
आद्यं मदीयमुदितं द्वितीयं बाष्कलं स्मृतम् ॥
कौषीतकं तृतीयं स्याद्ब्राभ्रव्यं स्याच्चतुर्थकम् ।
भारद्वाजं पञ्चमं तु पञ्चधैव मयोदितम् ॥
चतुर्णामपि सूत्राणां मत्तोऽन्योन्यं विचक्षणाः ।
असामान्यत्वमालोक्य नाऽऽद्रिय-
न्त्युपयस्तु तान् ॥

(१) आश्वस्मृ. २।१७–१९.
(२) आश्वस्मृ. ११।२.
(३) आश्वस्मृ. ११।३५३–३५५.
(४) आश्वस्मृ. ११।३५६–३६३.

चतुर्विंशतिशिष्याणामस्माकं भगवान्मुनिः ।
गुरुरेकोऽभवद्धीमाञ्छौनकस्तपसां निधिः ॥
तस्यापि भगवान् पैलो व्यासशिष्यो महातपाः ।
व्यासस्यापि शिवः साक्षाद्गुरुर्विश्वगुरुर्वरः ॥

## लघ्वाश्वलायनः

ऋक्शाखिनां स्वशाखया कर्मनियमः , अन्येषां स्वीयाभावे ऋक्शाखयाऽपि , शाखारण्डलक्षणम्

[1]मन्त्रैश्चैव स्वशाखोक्तैः कर्म कुर्याद्यथाविधि ।
अन्यथा कर्महानिः स्याद्बह्वृचानामयं विधिः ॥
कर्मणां याजुषादीनां स्वस्वशाखा न विद्यते ।
ऋक्शाखाविहितं कर्म समानं सर्वशाखिनाम् ॥
बह्वृचानां तु यत्कर्म यदि स्यादन्यशाखया ।
पुनश्चैवापि तत्कर्म कुर्याद्बह्वृचशाखया ॥
हित्वा स्वस्य द्विजो वेदं यस्त्वधीते परस्य तु ।
शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

## शौनकः

ऋग्वेदादीनां याजुषशाखापरिग्रहनियमः

[2]यजुषो बहुशाखत्वात्संदेहे समुपस्थिते ।
कां शाखामवलम्बेरंस्तादृशीं बह्वृचादयः ॥
[3]आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् ।
अन्यथा पतितो ज्ञेय इति बौधायनाशयः ॥

## लौगाक्षिः

स्वशाखोक्तमेव कर्म कार्यम् , परशाखोक्तस्याकर्तव्यता

[4]बह्वल्पं वा स्वसूत्रोक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥

(१) लघ्वाश्वस्मृ. २४।१६–१९.
(२) बाल. १।८९ पृ. २५४ यज्ञपार्श्वेऽपि : १।८९ पृ. २५६ यजुषो व (याजुषीव) उत्तरार्धे ( कासु शाखासु लम्बेरंस्तादृशीषु च सामगाः ॥ ) (=) ; कृम. ११६९ षो बहुशाख ( षां बहुशाखा ) यज्ञकाण्डे.
(३) बाल. १।८९ पृ. २५४ यज्ञपार्श्वेऽपि : १।८९ पृ. २५६ पू., (=) ; कृम. ११६९ नाशयः (नोऽब्रवीत् ) यज्ञकाण्डे.
(४) लौस्मृ. २७५.

¹ऊनो वाऽप्यतिरिक्तो वा
यः स्वशाखोदितो विधिः ।
तेन संतनुयाद्यज्ञं
न कुर्यात्पारतन्त्रिकम् ॥

यज्ञपदमुपलक्षणम् । अधिकानुष्ठानं तु फलभूयस्त्वाय । एवं च ऋग्वेदिनामपि केषांचिदाश्वलायनोक्तप्रयोगानुष्ठानेनैव ‡तत्परिहारादि । शौनकोक्तं तु फलभूयस्त्वाय । येषां तु गृह्ये प्रधानमात्रमुक्तम् , नाङ्गकलापः , तत्रेतिकर्तव्यताकाङ्क्षायां स्मृत्याद्युक्ततदन्वयः । येषां तु गृह्ये स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधस्तत्र किंचिन्निषेधद्वारा तत्स्मृत्युक्तस्यान्यस्याभिमतत्वबोधनात्तदनुष्ठेयमेव । एवं येषां गृह्ये किमपि नोक्तं तैः– 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमत्यावश्यकमेव च ॥' इति छन्दोगपरिशिष्टात्तदनुष्ठेयम् । अत एवोक्तमन्यत्र– 'आरमतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥' इति । † बाल.१।२४–२५ पृ.१००

परशाखोक्तस्य निषेधः

²यः स्वशाखां परित्यज्य पारक्यमधिगच्छति ।
स शूद्रवद्बहिष्कार्यो हव्यकव्येषु दातृभिः ॥

अनेन स्वशाखाया अपरित्यागेन शाखान्तराध्ययनमविरुद्धमित्याह । अत एव वसिष्ठः– 'अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।' ।
स्मृच. १।१३४

‡ तत्पदेन प्रत्यवायपरामर्शः । फलावाप्तिरादिपदार्थः ।

† कृभ. बालगतम् ।

(१) बाल. १।२४–२५ पृ. १००, १।८९ पृ. २५३ ; कृभ. ११६८ तन्त्रि ( तान्त्रि ) (=) : १७३५ तन्त्रिकम् ( तन्त्रकम् ) ; इन्दु. ५.

(२) स्मृच. १।१३३ ; संप्र. ५०७ पारक्य ( पारक्या ).

वायुपुराणं ब्रह्माण्डपुराणं च

प्रतिदैवतं प्रतिमन्वन्तरं चान्या श्रुतिर्यथावद्विहिता, तथा चतुर्विधानि स्तोत्राणि च

¹प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते ॥
²ऋचो यजूंषि सामानि यथावत्प्रतिदैवतम् ।
आभूतसंप्लवस्यापि वर्ज्यैकं शतरुद्रियम् ॥
³विधिर्होत्रं तथा स्तोत्रं पूर्ववत्संप्रवर्तते ।
द्रव्यस्तोत्रं गुणस्तोत्रं कर्मस्तोत्रं तथैव च ।
चतुर्थमाभिजनिकं स्तोत्रमेतच्चतुर्विधम् ॥
⁴मन्वन्तरेषु सर्वेषु यथा देवा भवन्ति ये ।
प्रवर्तयति तेषां वै ब्रह्म( ? ह्मा )
स्तोत्रं चतुर्विधम् ॥
⁵एवं मन्त्रगुणानां च समुत्पत्तिश्चतुर्विधा ।
अथर्वय( ? र्ग्य )जुषां साम्नां
वेदेष्विह पृथक् पृथक् ॥
⁶ऋषीणां तप्यतामुग्रं तपः परमदुश्चरम् ।
मन्त्राः प्रादुर्बभूवुर्हि पूर्वमन्वन्तरेष्विह ॥

चतुष्पादो वेदः वेदव्यासेन द्वैपायनेन चतुर्धा कृत्वा चतुर्भ्यः शिष्यभ्यः उपदिष्टः , इतिहासपुराणे सूताय

ऋषय ऊचुः–
⁷ऋषयस्तद्वचः श्रुत्वा सूतमाहुः सुदुस्तरम् ।
कथं वेदाः पुरा व्यस्तास्तन्नो ब्रूहि महामते ॥

(१) वायु. १।५९।५६ ; ब्रह्माण्ड. २।२७।६२ न्तरं ( न्तरे ).

(२) वायु. १।५९।५७ ; ब्रह्माण्ड. २।२७।६३ यथावत् ( यथा च ).

(३) वायु. १।५९।५८ ; ब्रह्माण्ड. २।२७।६४–६५ होत्रं त ( होत्रस्त ) कर्म ( फल ) जनिकं ( जनकं ).

(४) वायु. १।५९।५९ ; ब्रह्माण्ड. २।२७।६५–६६ ब्रह्मस्तोत्रं ( ब्रह्मा स्तोत्रं ).

(५) वायु. १।५९।५९–६० ; ब्रह्माण्ड. २।२७।६६–६७ गुणानां च ( गणानां तु ) र्वयजु ( र्वर्ग्यजु ).

(६) वायु. १।५९।६०–६१ ; ब्रह्माण्ड. २।२७।६७–६८ दुश्चरम् ( दुष्करम् ).

(७) वायु. १।६०।१ ; ब्रह्माण्ड. २।२९।१ सुदुस्तरम्

सूत उवाच—
¹द्वापरे तु परावृत्ते मनोः स्वायंभुवेऽन्तरे ।
ब्रह्मा मनुमुवाचेदं तद्वदिष्ये महामते ॥
²परिवृत्ते युगे तात स्वल्पवीर्या द्विजातयः ।
संवृत्तां (?ता) युगदोषेण सर्वे चैव यथाक्रमम् ॥
³भ्रश्यमानं युगवशादल्पशिष्टं हि दृश्यते ।
दशसाहस्रभागेन ह्यवशिष्टं कृतादिदम् ॥
⁴वीर्यं तेजो बलं वाक्यं सर्वं चैव प्रणश्यति ।
वेदवेदा( ? दक्रिया ) हि कार्याः
स्युर्मा भूद्वेदविनाशनम् ॥
⁵वेदे नाशमनुप्राप्ते यज्ञो नाशं गमिष्यति ।
यज्ञे नष्टे देवनाशस्ततः सर्वं प्रणश्यति ॥
⁶आद्यो वेदश्चतुष्पादः शतसाहस्रसंश्रि(? मि)तः।
पुनर्दशगुणः कृत्स्नो यज्ञो वै सर्वकामधुक् ॥
⁷एवमुक्तस्तथेत्युक्त्वा मनुर्लोकहिते रतः ।
वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः ॥
⁸ब्रह्मणो वचनात्तात लोकानां हितकाम्यया ।
तदिदं वर्तमानेन युष्माकं वेदकल्पनम् ॥
⁹मन्वन्तरेण वक्ष्यामि व्यतीतानां प्रकल्पनम् ।
प्रत्यक्षेण परोक्षं वै तन्निबोधत सत्तमाः ॥

¹अस्मिन् युगे कृतो व्यासः पाराशर्यः परंतपः ।
द्वैपायन इति ख्यातो विष्णोरंशः प्रकीर्तितः ॥
²ब्रह्मणा चोदितः सोऽस्मिन्वेदं व्यस्तुं प्रचक्रमे ।
अथ शिष्यान्स जग्राह चतुरो वेदकारणात् ॥
³जैमिनिं च सुमन्तुं च वैशम्पायनमेव च ।
पैलं तेषां चतुर्थं तु पञ्चमं लोमहर्षणम् ॥
⁴ऋग्वेदश्रावकं पैलं जग्राह विधिवद्द्विजम् ।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥
⁵जैमिनिं सामवेदार्थश्रावकं सोऽन्वपद्यत ।
तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम् ॥
⁶इतिहासपुराणस्य वक्तारं सम्यगेव हि ।
मां चैव प्रतिजग्राह भगवानीश्वरः प्रभुः ॥
⁷एक आसीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत् ।
चतुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥
⁸आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च ।
उ(?औ)द्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः।
ब्रह्मत्वमकरोद्यज्ञे वेदेनाथर्वणेन तु ॥
⁹ततः स ऋचमुद्धृत्य ऋग्वेदं समकल्पयत् ।
होतृ(? त्र)कं कल्प्यते तेन
यज्ञवाहं जगद्धितम् ॥

( तदुत्तरम् ) पुरा व्य ( पुनर्व्य ) 'ऋषय ऊचुः' इत्यत्र 'वायुरुवाच' इति पाठः .
(१) वायु. १।६०।२ ; ब्रह्माण्ड. २।२९।२ परा (पुरा) वेऽन्तरे ( वान्तरे ) तद्वदिष्ये ( रक्ष वेदं ).
(२) वायु. १।६०।३ ; ब्रह्माण्ड. २।२९।३ वृत्ते युगे ( वृत्तं युगं ) संवृत्तां ( संवृता ).
(३) वायु. १।६०।४ ; ब्रह्माण्ड. २।२९।४ भ्रश्यमानं (तस्य मानं) दल्पशिष्टं (दल्पं चैव ) तादिद ( तोदित ).
(४) वायु. १।६०।५ ; ब्रह्माण्ड. २।२९।५ वाक्यं ( चाल्पं ) वेदवेदा ( वेदक्रिया ).
(५) वायु. १।६०।६ ; ब्रह्माण्ड. २।२९।६ देव (वेद).
(६) वायु. १।६०।७ ; ब्रह्माण्ड. २।२९।७ संश्रितः ( संमितः ) कृत्स्नो ( कृष्णो ).
(७) वायु. १।६०।८ ; ब्रह्माण्ड. २।२९।८.
(८) वायु. १।६०।९ ; ब्रह्माण्ड. २।२९।९ तदिदं ( तदहं ).
(९) वायु. १।६०।१० ; ब्रह्माण्ड. २।२९।१०.

(१) वायु. १।६०।११ ; ब्रह्माण्ड. २।२९।११ कृतो ( तदा ) प्रकीर्तितः ( सनातनः ).
(२) वायु. १।६०।१२ ; ब्रह्माण्ड. २।२९।१२ व्यस्तुं ( वक्तुं ).
(३) वायु. १।६०।१३ ; ब्रह्माण्ड. २।२९।१३ तृतीयचरणे ( चतुर्थं पैलमेतेषां ).
(४) वायु. १।६०।१४ ; ब्रह्माण्ड. २।२९।१४ द्वितीयचरणे ( अग्रहीद्विधिवद्द्विजाः ).
(५) वायु. १।६०।१५ ; ब्रह्माण्ड. २।२९।१५.
(६) वायु. १।६०।१६ ; ब्रह्माण्ड. २।२९।१६ द्वितीयचरणे ( कल्पवाक्यस्य चैव हि ).
(७) वायु. १।६०।१७ ; ब्रह्माण्ड. २।२९।१७ चतुर्हो ( चातुर्हो ).
(८) वायु. १।६०।१८ ; ब्रह्माण्ड. २।२९।१८ उद्गात्रं ( औद्गात्रं ) तृतीयार्धं नास्ति.
(९) वायु. १।६०।१९ ; ब्रह्माण्ड. २।२९।१९ ऋचमु

[1]सामभिः सामवेदं च तेनो(? नौ)द्गात्र-
मरोचयत् ।
राज्ञस्त्वथर्ववेदेन सर्वकर्माण्यकारयत् ॥
[2]आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कुलकर्मभिः ।
पुराणसंहिताश्चक्रे पुराणार्थविशारदः ॥
[3]यच्छिष्टं तु यजुर्वेदे तेन यज्ञमथायुञ्जत् ।
युञ्जानः स यजुर्वेद इति शास्त्रविनिश्चयः ॥
[4]पदानामुद्धृतत्वाच्च यजूंषि विषमाणि वै ।
स तेनोद्धृतवीर्यस्तु ऋत्विग्भिर्वेदपारगैः ।
प्रयुज्यते ह्यश्वमेधस्तेन वा युज्यते तु सः ॥

वेदशाखाप्रवर्तकाः

[5]ऋचो गृहीत्वा पैलस्तु व्यभजत्तद्द्विधा पुनः ।
द्विष्कृत्वा संयुगे चैव शिष्याभ्यामददत्प्रभुः ॥
[6]इन्द्रप्रमतये चैकां द्वितीयां बाष्कलाय च ।
चतस्रः संहिताः कृत्वा बाष्कलिर्द्विजसत्तमः ।
शिष्यानध्यापयामास शुश्रूषाभिरतान् हितान् ॥
[7]बोधं तु प्रथमां शाखां द्वितीयामग्निमाठरम् ।
पाराशरं तृतीयां तु याज्ञवल्क्यमथापराम् ॥

[1]इन्द्रप्रमतिरेकां तु संहितां द्विजसत्तमः ।
अध्यापयन्महाभागं मार्कण्डेयं यशस्विनम् ॥
[2]सत्यश्रवसमग्र्यं तु पुत्रं स तु महायशाः ।
सत्यश्रवाः सत्यहितं पुनरध्यापयद्द्विजः ॥
[3]सोऽपि सत्यतरं पुत्रं पुनरध्यापयद्विभुः ।
सत्यश्रियं महात्मानं सत्यधर्मपरायणम् ॥
[4]अभवंस्तस्य शिष्या वै त्रयस्तु सुमहौजसः ।
सत्यश्रिय(? सात्यश्रिया)स्तु विद्वांसः
शास्त्रग्रहणतत्पराः ॥
[5]शाकल्यः प्रथमस्तेषां तस्मादन्यो
रथान्त(? थीत)रः ।
बाष्कलिश्च भरद्वाज इति शाखाप्रवर्तकाः ॥
[6]देवमित्रस्तु शाकल्यो महात्मा द्विजसत्तमः ।
चकार संहिताः पञ्च बुद्धिमान् पदवित्तमः ॥
[7]तच्छिष्या अभवन्पञ्च मुद्गलो गोलकस्तथा ।
खालीयश्च तथा मत्स्यः शैशिरेयस्तु पञ्चमः ॥
[8]प्रोवाच संहितास्तिस्रः शाकपूर्णरथीतरः ।
निरुक्तं च पुनश्चक्रे चतुर्थे द्विजसत्तमः ॥

---

(ऋच उ) उत्तरार्धे (होतृकं कल्पयत्तेन यजुर्वेदं जगत्पतिः ॥).

(१) वायु. १।६०।२० ; ब्रह्माण्ड. २।२९।२० नोद्गा (नौद्गा) मरोच (मकल्प).

(२) वायु. १।६०।२१ ; ब्रह्माण्ड. २।२९।२१ कुलकर्मभिः (कल्पजोक्तिभिः) ताश्चक्रे (तां चक्रे).

(३) वायु. १।६०।२२ ; ब्रह्माण्ड. २।२९।२२ मथायुञ्जत् (मयुञ्जत) तृतीयचरणे (यजनात्स यजुर्वेदः).

(४) वायु. १।६०।२३ ; ब्रह्माण्ड. २।२९।२३–२४ प्रथमचरणे (पादानामुद्धतत्वाच्च) वै (च) स तेनोद्धृत (शतेनोद्धत) युज्यते तु (पुष्यते तु).

(५) वायु. १।६०।२४ ; ब्रह्माण्ड. २।२९।२४–२५ त्तद्द्विधा (त्तु द्विधा) उत्तरार्धे (द्वे कृत्वा संहिते चैव शिष्याभ्यामददाद्विभुः ॥).

(६) वायु. १।६०।२५ ; ब्रह्माण्ड. २।२९।२५–२६ लिर्द्विज (लो द्विज).

(७) वायु. १।६०।२६ ; ब्रह्माण्ड. २।२९।२७ बोधं (बोध्यां) माठरम् (मातरम्) पाराशरं (पाराशरीं).

(१) वायु. १।६०।२७ ; ब्रह्माण्ड. २।२९।२८ तां द्विज (तामृषि) मार्कण्डेयं (माण्डूकेयं).

(२) वायु. १।६०।२८ ; ब्रह्माण्ड. २।२९।२९ श्रवस (स्रवस) श्रवाः (स्रवाः) चतुर्थचरणे (पुत्रमध्यापयद्विभुः).

(३) वायु. १।६०।२९ ; ब्रह्माण्ड. २।२९।३० सत्यतरं (सत्यहितः) द्विभुः (द्द्विजाः).

(४) वायु. १।६०।३० ; ब्रह्माण्ड. २।२९।३१ श्रियस्तु (श्रियाश्च).

(५) वायु. १।६०।३१ ; ब्रह्माण्ड. २।२९।३२ रथान्तरः (रथीतरः).

(६) वायु. १।६०।६३ ; ब्रह्माण्ड. २।३०।१ मित्रस्तु (मित्रश्च) सत्तमः (पुंगवः) पद (वेद).

(७) वायु. १।६०।६४ ; ब्रह्माण्ड. २।३०।२ (पञ्च तस्याभवञ्छिष्या मुद्गलो गोखलस्तथा । खलीयान्सुतपा वत्सः शैशिरेयश्च पञ्चमः ॥).

(८) वायु. १।६०।६५ ; ब्रह्माण्ड. २।३०।३ शाकपूर्ण (शाकवैणो).

[1]तस्य शिष्यास्तु चत्वारः केतवो दालकिस्तथा ।
धर्मशर्मा देवशर्मा सर्वे व्रतधरा द्विजाः ॥

ऋषय ऊचुः–

भारद्वाजो याज्ञवल्क्यो गालकिः सालकिस्तथा ।
धीमाञ्छतबलाकश्च नैगमश्च द्विजोत्तमः ॥

[2]बाष्कलिश्च भरद्वाजस्तिस्रः प्रोवाच संहिताः ।
रथीतरो निरुक्तं च पुनश्चक्रे चतुर्थकम् ॥

[3]त्रयस्तस्याभवञ्छिष्या महात्मानो गुणान्विताः ।
धीमाञ्नन्दायनीयश्च पन्नगारिश्च बुद्धिमान् ।
तृतीयश्चाऽऽर्जवस्ते च तपसा संशितव्रताः ॥

[4]वीतरागा महातेजाः संहिताज्ञानपारगाः ।
इत्येते बह्वृचाः प्रोक्ताः संहिता यैः प्रवर्तिताः ॥

[5]वैशम्पायनगोत्रोऽसौ यजुर्वेदं व्यकल्पयत् ।
षडशीतिस्तु येनोक्ताः संहिता यजुषां शुभाः ॥

[6]शिष्येभ्यः प्रददौ ताश्च जगृहुस्ते विधानतः ।
एकस्तत्र परित्यक्तो याज्ञवल्क्यो महातपाः ।
षडशीतिश्च तस्यापि संहितानां विकल्पकाः ॥

[7]सर्वेषामेव तेषां वै त्रिधा भेदाः प्रकीर्तिताः ।
त्रिधा भेदास्तु ते प्रोक्ता भेदेऽस्मिन्नवमे शुभे ॥

(१) वायु. १।६०।६६, १।६१।१ ; ब्रह्माण्ड. २।३०।४ ( तस्य शिष्यास्तु चत्वारः पैलश्चेक्षलकस्तथा । धीमाञ्छतबलाकश्च गजश्चैव द्विजोत्तमाः ॥ ).

(२) वायु. १।६१।२ ; ब्रह्माण्ड. २।३०।५ लिश्च ( लिस्तु ) पूर्वार्धमात्रम्.

(३) वायु. १।६१।३ ; ब्रह्माण्ड. २।३०।५–६ द्वितीयार्धे ( धीमांश्च त्वापनापश्च पान्नगारिश्च बुद्धिमान् । ) संशित ( शंशित ).

(४) वायु. १।६१।४ ; ब्रह्माण्ड. २।३०।७.

(५) वायु. १।६१।५ ; ब्रह्माण्ड. २।३०।८ गोत्रो ( शिष्यो ) दं व्यक ( दमक ) येनो ( तेनो ).

(६) वायु. १।६१।६ ; ब्रह्माण्ड. २।३०।९–१० श्च तस्यापि ( स्तथा शिष्याः ).

(७) वायु. १।६१।७ ; ब्रह्माण्ड. २।३०।१०–११ प्रोक्ता भेदे ( वेदभेदे ).

[1]उदीच्या मध्यदेशाश्च प्राच्याश्चैव पृथग्विधाः ।
श्यामायनिरुदीच्यानां प्रधानः संबभूव ह ॥

[2]मध्यदेशप्रतिष्ठानामारुणिः प्रथमः स्तुतः ।
आलम्बिरादिः प्राच्यानां त्रयोदश्यादयस्तु ते ॥

[3]इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः ।
ऋषयस्तद्वचः श्रुत्वा सूतं जिज्ञासवोऽब्रुवन् ॥

ऋषय ऊचुः–

[4]चरकाध्वर्यवः केन कारणं ब्रूहि तत्त्वतः ।
किं चीर्णं कस्य हेतोश्च चरकत्वं च भेजिरे ।
इत्युक्तः प्राह तेषां स चरकत्वमभूद्यथा ॥

### कृष्णयजुर्वेदस्य शुक्लयजुर्वेदस्य चोत्पत्तिः तथा सामशाखाभेदोत्पत्तिश्च

सूत उवाच–

[5]कार्यमासीदृषीणां च किंचिद्ब्राह्मणसत्तमाः ।
मेरुपृष्ठं समासाद्य तैस्तदा त्विति मन्त्रितम् ॥

[6]यो नोऽत्र सप्तरात्रेण नाऽऽगच्छेद्द्विजसत्तमः ।
स कुर्याद्ब्रह्मवध्यां वै समयो नः प्रकीर्तितः ॥

[7]ततस्ते सगणाः सर्वे वैशम्पायनवर्जिताः ।
प्रययुः सप्तरात्रेण यत्र संधिः कृतोऽभवत् ॥

[8]ब्राह्मणानां तु वचनाद्ब्रह्मवध्यां चकार सः ।
शिष्यानथ समानीय स वैशम्पायनोऽब्रवीत् ॥

(१) वायु. १।६१।८ ; ब्रह्माण्ड. २।३०।११–१२.

(२) वायु. १।६१।९ ; ब्रह्माण्ड. २।३०।१२–१३ पूर्वार्धे ( मध्यदेशप्रतिष्ठाता चाऽऽसुरिः प्रथमः स्मृतः । ).

(३) वायु. १।६१।१० ; ब्रह्माण्ड. २।३०।१३ पूर्वार्धमात्रम्.

(४) वायु. १।६१।११ ; ब्रह्माण्ड. २।३०।१४ हेतोश्च ( वा हेतोः ) तृतीयार्धे नास्ति.

(५) वायु. १।६१।१२ ; ब्रह्माण्ड. २।३०।१५.

(६) वायु. १।६१।१३ ; ब्रह्माण्ड. २।३०।१६ नोऽत्र ( वाऽत्र ) वध्यां ( हत्यां ).

(७) वायु. १।६१।१४ ; ब्रह्माण्ड. २।३०।१७.

(८) वायु. १।६१।१५ ; ब्रह्माण्ड. २।३०।१८ वध्यां ( हत्यां ).

[1]ब्रह्मवध्यां चरध्वं वै मत्कृते द्विजसत्तमाः ।
सर्वे यूयं समागम्य ब्रूत मे तद्धितं वचः ॥

याज्ञवल्क्य उवाच–

[2]अहमेव चरिष्यामि तिष्ठन्तु मुनयस्त्विमे ।
बलं चोत्थापयिष्यामि तपसा स्वेन भावितः ॥

[3]एवमुक्तस्ततः क्रुद्धो याज्ञवल्क्यमथाब्रवीत् ।
उवाच यत्त्वयाऽधीतं सर्वं प्रत्यर्पयस्व मे ॥

[4]एवमुक्तः सरूपाणि यजूंषि प्रददौ गुरोः ।
रुधिरेण तथाऽक्तानि छर्दित्वा ब्रह्मवित्तमः ॥

[5]ततः स ध्यानमास्थाय सूर्यमाराधयद्द्विजाः ।
सूर्यब्रह्म यदुच्छिन्नं खं गत्वा प्रतितिष्ठति ॥

[6]ततो यानि गतान्यूर्ध्वं यजूंष्यादित्यमण्डलम् ।
तानि तस्मै ददौ तुष्टः सूर्यो वै ब्रह्मरातये ।
अश्वरूपाय मार्तण्डो याज्ञवल्क्याय धीमते ॥

[7]यजूंष्यधीयते यानि ब्राह्मणा येन केन च ।
अश्वरूपाय दत्तानि ततस्ते वाजिनोऽभवन् ॥

[8]ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः ।
वैशम्पायनशिष्यास्ते चरकाः समुदाहृताः ॥

(१) वायु. १।६१।१६ ; ब्रह्माण्ड. २।३०।१९ वध्यां ( हत्यां ) मे तद्धितं ( कामं हितं ).

(२) वायु. १।६१।१७ ; ब्रह्माण्ड. २।३०।२० मेव च ( मेकश्च ) बलं चो ( बल्नो ).

(३) वायु. १।६१।१८ ; ब्रह्माण्ड. २।३०।२१ थाब्रवीत् ( थात्यजत् ).

(४) वायु. १।६१।१९ ; ब्रह्माण्ड. २।३०।२२ प्रददौ गुरोः ( गुरवे ददौ ) वित्तमः ( वित्तमाः ).

(५) वायु. १।६१।२० ; ब्रह्माण्ड. २।३०।२३ द्द्विजाः ( द्द्विजः ) उत्तरार्धे ( सूर्ये ब्रह्म यदुत्पन्नं तं गत्वा प्रतितिष्ठति ॥ ).

(६) वायु. १।६१।२१ ; ब्रह्माण्ड. २।३०।२४–२५.

(७) वायु. १।६१।२२ ; ब्रह्माण्ड. २।३०।२५–२६ यानि ( तानि ) केन च ( केनचित् ).

(८) वायु. १।६१।२३ ; ब्रह्माण्ड. २।३०।२६–२७.

[1]इत्येते चरकाः प्रोक्ता वाजिनस्तान्निबोधत ।
याज्ञवल्क्यस्य शिष्यास्ते कण्ववैधेयशालिनः ॥

[2]मध्यन्दिनश्च शापेयी विदिग्धश्चाथ उद्दलः ।
ताम्रायणश्च वात्स्यश्च तथा गालवशैषिरी ।
आटवी च तथा पर्णी वीरणी सपरायणः ॥

[3]इत्येते वाजिनः प्रोक्ता दश पञ्च च संस्मृताः ।
शतमेकाधिकं कृत्स्नं यजुषां वै विकल्पकाः ॥

[4]पुत्रमध्यापयामास सुमन्तुमथ जैमिनिः ।
सुमन्तुश्चापि सुत्वानं पुत्रमध्यापयत्प्रभुः ।
सुकर्माणं सुतं सुत्वा पुत्रमध्यापयत्प्रभुः ॥

[5]स सहस्रमधीत्याऽऽशु सुकर्माऽप्यथ संहिताः ।
प्रोवाचाथ सहस्रस्य सुकर्मा सूर्यवर्चसः ॥

[6]अनध्यायेष्वधीयानांस्ताञ्जघान शतक्रतुः ।
प्रायोपवेशमकरोत्ततोऽसौ शिष्यकारणात् ॥

[7]क्रुद्धं दृष्ट्वा ततः शक्रो वरमस्मै ददौ पुनः ।
भाविनौ ते महावीर्यौ शिष्यावनलवर्चसौ ॥

[8]अधीयानौ महाप्राज्ञौ सहस्रं संहितावुभौ ।
एतौ सुरौ महाभागौ मा क्रुध्य द्विजसत्तम ॥

(१) वायु. १।६१।२४ ; ब्रह्माण्ड. २।३०।२७–२८ वाजिनस्तान्नि ( वाजिनस्तु नि ) चतुर्थचरणे ( कण्वो बौधेय एव च ).

(२) वायु. १।६१।२५ ; ब्रह्माण्ड. २।३०।२८–२९ ( मध्यन्दिनस्तु सापत्यो वैधेयश्चाद्धबौद्धकौ । तापनीयाश्च वत्साश्च तथा जाबालकेवलौ । आवटी च तथा पुण्ड्रो वैणोयः सपराशरः ॥ ).

(३) वायु. १।६१।२६ ; ब्रह्माण्ड. २।३०।३० संस्मृताः ( सत्तमाः ) कृत्स्नं ( ज्ञेयं ) वै ( ये ).

(४) वायु. १।६१।२७ ; ब्रह्माण्ड. २।३०।३१–३२ यत्प्रभुः ( यत्पुनः ) सुतं सुत्वा ( ततः सुन्वान् ).

(५) वायु. १।६१।२८ ; ब्रह्माण्ड. २।३०।३२–३३.

(६) वायु. १।६१।२९ ; ब्रह्माण्ड. २।३०।३३–३४.

(७) वायु. १।६१।३० ; ब्रह्माण्ड. २।३०।३४–३५ द्वितीयचरणे ( वरं सोऽथ पुनर्ददौ ) भाविनौ ते ( भविष्यतो) शिष्यावनल ( शिष्यौ तेऽतुल ).

(८) वायु. १।६१।३१ ; ब्रह्माण्ड. २।३०।३५–३६

¹इत्युक्त्वा वासवः श्रीमान्सुकर्माणं यशस्विनम्।
शान्तक्रोधं द्विजं दृष्ट्वा तत्रैवान्तरधीयत ॥

²तस्य शिष्यो भवेद्धीमान्पौष्यञ्जी द्विजसत्तमः।
हिरण्यनाभः कौशिक्यो द्वितीयोऽभूज्नराधिपः ॥

³अध्यापयत्तु पौष्यञ्जी सहस्रार्धं तु संहिताः।
ते नाम्नोदीच्यसामान्याः शिष्याः पौष्यञ्जिनः शुभाः ॥

⁴शतानि पञ्च कौशिक्यः
संहितानां च वीर्यवान्।
शिष्या हिरण्यनाभस्य
स्मृतास्ते प्राच्यसामगाः ॥

⁵लोकाक्षी कुथुमिश्चैव कुशीती लाङ्गलिस्तथा।
पौष्यञ्जिशिष्याश्चत्वारस्तेषां भेदान्निबोधत ॥

⁶राणायनीयः सहितण्डिपुत्र-
स्तस्मादन्यो मूलचारी सुविद्वान्।
सकैतिपुत्रः सहसात्यपुत्र
एतान् भेदान् वित्त लोकाक्षिणस्तु ॥

¹त्रयस्तु कुथुमेः पुत्रा औरसो रसपासरः।
भागवित्तिश्च तेजस्वी त्रिविधाः कौथुमाः स्मृताः ॥

²शौरिद्युः शृङ्गिपुत्रश्च द्वावेतौ चरितव्रतौ।
राणायनीयः सौमित्रिः सामवेदविशारदौ ॥

³प्रोवाच संहितास्तिस्रः शृङ्गिपुत्रो महातपाः।
चैलः प्राचीनयोगश्च सुरालश्च द्विजोत्तमाः ॥

⁴प्रोवाच संहिताः षट् तु पाराशर्यस्तु कौथुमः।
आसुरायणवैशाख्यौ वेदवृद्धपरायणौ ॥
प्राचीनयोगपुत्रश्च बुद्धिमांश्च पतञ्जलिः।
कौथुमस्य तु भेदास्ते पाराशर्यस्य षट् स्मृताः ॥

⁵लाङ्गलिः शालिहोत्रश्च षट् षट् प्रोवाच संहिताः ॥

⁶भालुकिः कामहानिश्च जैमिनिर्लोमगायिनिः।
कण्डुश्च कोहलश्चैव षडेते लाङ्गलाः स्मृताः।
एते लाङ्गलिनः शिष्याः संहिता यैः प्रसाधिताः ॥

⁷ततो हिरण्यनाभस्य कृतशिष्यो नृपात्मजः।
सोऽकरोच्च चतुर्विंशत्संहिता द्विपदां वरः।
प्रोवाच चैव शिष्येभ्यो येभ्यस्तांश्च निबोधत ॥

---

यानौ ( यातां ) तावुभौ ( ता उभौ ) उत्तरार्धे ( एते सुरा महाभागाः संक्रुद्धा द्विजसत्तम ॥ ).

(१) वायु. १।६१।३२ ; ब्रह्माण्ड. २।३०।३६–३७ चतुर्थचरणे ( क्षिप्रमन्तरधात्प्रभुः ).

(२) वायु. १।६१।३३ ; ब्रह्माण्ड. २।३०।३७–३८ भवे (ऽभव) ञ्जी द्विज (ञ्जिर्द्विज) कौशिक्यो (कौशल्यो).

(३) वायु. १।६१।३४ ; ब्रह्माण्ड. २।३०।३८–३९ यत्तु पौष्यञ्जी ( यत पौष्यञ्जिः ) सामान्याः (सामानः).

(४) वायु. १।६१।३५ ; ब्रह्माण्ड. २।३०।३९–४० पूर्वार्धे ( सत्त्वानि पञ्च कौशल्यः संहितानामधीतवान्। ) स्मृतास्ते ( स्मृतास्तु ).

(५) वायु. १।६१।३६ ; ब्रह्माण्ड. २।३०।४० पूर्वार्धे ( लौगाक्षिः कुशुमिश्चैव कुशीदिर्लाङ्गलिस्तथा। ).

(६) वायु. १।६१।३७ ; ब्रह्माण्ड. २।३०।४१ ( नाडायनीयः सहतण्डिपुत्रस्तस्मादनोवैननामा सुविद्वान्। सकोतिपुत्रः सुसहाः सुनामा चैतान्भेदान्वित्त लौगाक्षिणस्तु ॥ ).

(१) वायु. १।६१।३८ ; ब्रह्माण्ड. २।३०।४२–४३ ( त्रयस्तु कुशुमेः शिष्या औरसः स पराशरः। नाभिर्वित्तस्तु तेजस्वी त्रिविधाः कौशुमाः स्मृताः ॥ ).

(२) वायु. १।६१।३९ ; ब्रह्माण्ड. २।३०।४३–४४ शौरिद्युः (शौरिघुः) चरित (तु चिर) यनीयः (यनीयिः).

(३) वायु. १।६१।४० ; ब्रह्माण्ड. २।३०।४४–४५ चैलः ( वैनः ) त्तमाः ( त्तमः ).

(४) वायु. १।६१।४१ ; ब्रह्माण्ड. २।३०।४५–४६.

(५) वायु. १।६१।४२ ; ब्रह्माण्ड. २।३०।४६–४७ भेदास्ते (भेदाश्च) लाङ्गलिः (लाङ्गलः) षट् षट् प्रोवाच ( षड्वाचाथ ).

(६) वायु. १।६१।४३ ; ब्रह्माण्ड. २।३०।४८–४९ प्रथमार्धे ( हालिनिर्ज्यामहानिश्च जैमिनिर्लोमगायनिः। ) प्रसाधिताः ( प्रवर्तिताः ).

(७) वायु. १।६१।४४ ; ब्रह्माण्ड. २।३०।४९–५० ततो (एको) कृतशिष्यो (कृतः शिष्यो) रोच्च (रोत्तु)

[1]राडश्च महवीर्यश्च पञ्चमो वाहनस्तथा।
तालकः पाण्डकश्चैव कालिको राजिकस्तथा।
गौतमश्चाजबस्तश्च सोमराजाऽपतत्ततः॥
[2]पृष्ठघ्नः परिकृष्टश्च उलूखलक एव च।
यवीयसश्च वैशालो अङ्गुलीयश्च कौशिकः॥
[3]सालिमञ्जरिसत्यश्च कापीयः कानिकश्च यः।
पराशरश्च धर्मात्मा इति क्रान्तास्तु सामगाः॥
[4]सामगानां तु सर्वेषां श्रेष्ठौ द्वौ तु प्रकीर्तितौ।
पौष्यञ्जिश्च कृतिश्चैव संहितानां विकल्पकौ॥

अथर्वशाखाविस्तारः

[5]अथर्वाणं द्विधा कृत्वा सुमन्तुरददद्द्विजाः।
कबन्धाय पुनः कृत्स्नं स च विद्याद्यथाक्रमम्॥
[6]कबन्धस्तु द्विधा कृत्वा पथ्यायैकं पुनर्ददौ।
द्वितीयं वेदस्पर्शाय स चतुर्धाऽकरोत्पुनः॥
[7]मोदो ब्रह्मबलश्चैव पिप्पलादस्तथैव च।
शौक्वायनिश्च धर्मज्ञश्चतुर्थस्तपनः स्मृतः।
वेदस्पर्शस्य चत्वारः शिष्यास्त्वेते दृढव्रताः॥

(१) वायु. १।६१।४५; ब्रह्माण्ड. २।३०।५१–५२ प्रथमचरणे (राडिश्च राडवीयश्च) तृतीयचरणे (तलकौ माण्डुकश्चैव) जाऽपतत्ततः (जायनस्ततः).

(२) वायु. १।६१।४६; ब्रह्माण्ड. २।३०।५२–५३ पृष्ठघ्नः (पुष्टिश्च) श्च वैशालो अङ्गु (स्तु वै शालीरङ्गु).

(३) वायु. १।६१।४७; ब्रह्माण्ड. २।३०।५३–५४ पूर्वार्धे (शालिमञ्जरिपाकश्च शधीयः कानिनिश्च यः।) पराशरश्च (पाराशर्यस्तु).

(४) वायु. १।६१।४८; ब्रह्माण्ड. २।३०।५४–५५ तु प्रकी (परिकी) कृति (कृत).

(५) वायु. १।६१।४९; ब्रह्माण्ड. २।३०।५५–५६ ददद (रददा) कृत्स्नं (कृष्णं) विद्याद्यथाक्रमम् (विद्वान्यथाश्रुतम्).

(६) वायु. १।६१।५०; ब्रह्माण्ड. २।३०।५६–५७ वेदस्पर्शाय (देवदर्शाय) त्पुनः (त्प्रभुः).

(७) वायु. १।६१।५१; ब्रह्माण्ड. २।३०।५७–५८ शौक्वा (शौल्का) स्तपनः स्मृतः (स्तपसि स्थितः) वेदस्पर्शस्य (देवदर्शस्य) ष्यास्त्वेते (ष्या ह्येते).

[1]पुनश्च त्रिविधं विद्धि पथ्यानां भेदमुत्तमम्।
जाजलिः कुमुदादिश्च तृतीयः शौनकः स्मृतः॥
[2]शौनकस्तु द्विधा कृत्वा ददावेकं तु बभ्रवे।
द्वितीयां संहितां धीमान्सैन्धवायनसंज्ञिते॥
[3]सैन्धवो मुञ्जकेशाय भिन्ना सा च द्विधा पुनः।
नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः।
चतुर्थोऽङ्गिरसः कल्पः शान्तिकल्पश्च पञ्चमः॥
[4]श्रेष्ठास्त्वथर्वणो ह्येते संहितानां विकल्पनाः(? काः)॥

वेदचतुष्टयशाखाविस्तारः

[5]सहस्राणि ऋचामष्टौ षट्शतानि तथैव च॥
एताः पञ्चदशान्याश्च दशान्या दशभिस्तथा।
बालखिल्याः सहप्रैषाः ससावर्णाः प्रकीर्तिताः॥
[6]अष्टौ सामसहस्राणि सामानि च चतुर्दश।
आरण्यकं सहोमं च एतद्गायन्ति सामगाः॥
[7]द्वादशैव सहस्राणि छन्द आध्वर्यवं स्मृतम्।
यजुषां ब्राह्मणानां च यथा व्यासो व्यकल्पयत्॥
[8]सग्राम्यारण्यकं तत्स्यात्समन्त्रकरणं तथा।
अतः परं कथानां तु पूर्वा इति विशेषणम्॥

(१) वायु. १।६१।५२; ब्रह्माण्ड. २।३०।५९.

(२) वायु. १।६१।५३; ब्रह्माण्ड. २।३०।६० वेकं (वेकां).

(३) वायु. १।६१।५४; ब्रह्माण्ड. २।३०।६१–६२ प्रथमार्धे (सैन्धवो मुञ्जकेश्यश्च भिन्नामाघाद्द्विधा पुनः।).

(४) वायु. १।६१।५५; ब्रह्माण्ड. २।३०।६२ णो ह्येते (णामेते).

(५) वायु. १।६१।६१–६२; ब्रह्माण्ड. २।३०।७०–७१ चामष्टौ (चां चाष्टौ) तृतीयार्धे (सबालखिल्याः सप्रैताः ससुवर्णाः प्रकीर्तिताः॥).

(६) वायु. १।६१।६३; ब्रह्माण्ड. २।३०।७१–७२ तृतीयचरणे (सारण्यकं सहोहं च).

(७) वायु. १।६१।६४; ब्रह्माण्ड. २।३०।७२–७३ यथा (तथा).

(८) वायु. १।६१।६५; ब्रह्माण्ड. २।३०।७३–७४ तत्स्यात् (तस्मात्).

[1]ग्राम्यारण्यं समन्त्रं च ऋग्ब्राह्मणयजुः स्मृतम्।
तथा हारिद्रवीयाणां खिलान्युपखिलानि च ।
तथैव तैत्तिरीयाणां परक्षुद्रा इति स्मृतम् ॥

[2]द्वे सहस्रे शतन्यूने वेदे वाजसनेयके ।
ऋग्गणः परिसंख्यातो ब्राह्मणं तु चतुर्गुणम् ॥

[3]अष्टौ सहस्राणि शतानि चाष्टा-
शीतिरन्यान्यधिकश्च पादः ।
एतत्प्रमाणं यजुषामृचां च
सशुक्रियं साखिलयाज्ञवल्क्यम् ॥

[4]तथा चरणविद्यानां प्रमाणं संहितां शृणु ।
षट्साहस्रमृचामुक्तमृचः षड्विंशतिः पुनः ।
एतावदधिकं तेषां यजुः कामं विवक्षति ॥

[5]एकादश सहस्राणि दश चान्या दशोत्तराः ।
ऋचां दश सहस्राणि अशीतित्रिशतानि च ॥

[6]सहस्रमेकं मन्त्राणामृचामुक्तं प्रमाणतः ।
एतावद्भृगुविस्तारमन्यच्चाथर्विकं बहु ॥

[7]ऋचामथर्वणां पञ्च सहस्राणि विनिश्चयः ।
सहस्रमन्यद्विज्ञेयमृषिभिर्विंशतिं विना ॥

[1]एतदङ्गिरसा प्रोक्तं तेषामारण्यकं पुनः ।
इति संख्या प्रसंख्याता शाखाभेदास्तथैव च ॥
[2]कर्तारश्चैव शाखानां भेदे हेतुस्तथैव च ।
सर्वमन्वन्तरेष्वेवं शाखाभेदाः समाः स्मृताः ॥
[3]प्राजापत्या श्रुतिर्नित्या तद्विकल्पा-
स्त्विमे स्मृताः ।
अनित्यभावाद्देवानां मन्त्रोत्पत्तिः पुनः पुनः ॥
[4]मन्वन्तराणां क्रियते सुराणां नामनिश्चयः ।
द्वापरेषु पुनर्भेदाः श्रुतीनां परिकीर्तिताः ॥
[5]एवं वेदं तदा न्य(? व्य)स्य भगवानृषिसत्तमः ।
शिष्येभ्यश्च पुनर्दत्त्वा तपस्तप्तुं गतो वनम् ।
तस्य शिष्यप्रशिष्यैस्तु शाखाभेदास्त्विमे
कृताः ॥

युगे युगे शाखाविस्तारः

[6]व्यस्यते ह्येकविद्यं तद्द्वापरेषु पुनः पुनः ।
ब्रह्मा चैतदुवाचाऽऽदौ तस्मिन्वैवस्वतेऽन्तरे ॥
[7]आवर्तमाना ऋषयो युगाख्यासु पुनः पुनः ।
कुर्वन्ति संहिता ह्येते जायमानाः परस्परम् ॥
[8]अष्टाशीतिसहस्राणि श्रुतर्षीणां स्मृतानि वै ।
ता एव संहिता ह्येते आवर्तन्ते पुनः पुनः ॥

---

(१) वायु. १।६१।६६ ; ब्रह्माण्ड. २।३०।७४–७५ च ऋग्ब्रा ( तदृग्ब्रा ) नि च ( नि तु ).

(२) वायु. १।६१।६७ ; ब्रह्माण्ड. २।३०।७६.

(३) वायु. १।६१।६८ ; ब्रह्माण्ड. २।३०।७७ चाष्टा (वाष्टा) कश्च पादः ( कानि वा च ) साखिल ( सखिलं ).

(४) वायु. १।६१।६९ ; ब्रह्माण्ड. २।३०।७८–७९ चरण ( चारण ) संहितां ( संहितं ) साहस्र ( सहस्र ) तिः पुनः ( तिं पुनः ) कामं विवक्षति (किमपि वक्ष्यते ).

(५) वायु. १।६१।७० ; ब्रह्माण्ड. २।३०।७९–८० दश चान्या ( ऋचश्चान्या ) चतुर्थचरणे ( ह्यशीतिस्त्रिशदेव तु ).

(६) वायु. १।६१।७१ ; ब्रह्माण्ड. २।३०।८०–८१ वद्भृगुविस्तारमन्य ( वानृचि विस्तारो ह्यन्य ).

(७) वायु. १।६१।७२ ; ब्रह्माण्ड. २।३०।८१–८२ णि विनि ( णीति नि ).

(१) वायु. १।६१।७३ ; ब्रह्माण्ड. २।३०।८२–८३ रसा ( रसां ) च ( तु ).

(२) वायु. १।६१।७४ ; ब्रह्माण्ड. २।३०।८३–८४ भेदे हेतुस्त ( भेदहेतूंस्त ) समाः स्मृताः ( समाश्रिताः ).

(३) वायु. १।६१।७५ ; ब्रह्माण्ड. २।३०।८४–८५.

(४) वायु. १।६१।७६ ; ब्रह्माण्ड. २।३०।८५ पूर्वार्धं नास्ति.

(५) वायु. १।६१।७७ ; ब्रह्माण्ड. २।३०।८६–८७ तदा न्यस्य ( तदाप्यस्य ) पुनर्दत्त्वा ( प्रदत्त्वा तु ) गतो वनम् ( वनं गतः ).

(६) वायु. १।६१।१२० ; ब्रह्माण्ड. २।३०।१४४ विद्यं तद् ( वेद्यं तु ) चैतदु ( चैतानु ).

(७) वायु. १।६१।१२१ ; ब्रह्माण्ड. २।३०।१४५.

(८) वायु. १।६१।१२२ ; ब्रह्माण्ड. २।३०।१४६ तृतीयचरणे ( तावत्यः संहिता ह्येता ).

[1]श्रिता दक्षिणपन्थानं ये श्मशानानि भेजिरे ।
युगे युगे तु ताः शाखा व्यस्यन्ते तैः पुनः पुनः ॥
[2]द्वापरेष्विव सर्वेषु संहिताश्च श्रुतर्षिभिः ।
तेषां गोत्रेष्विमाः शाखा भवन्तीह पुनः पुनः ।
ताः शाखास्तत्र कर्तारो भवन्तीह युगक्षयात् ॥
[3]एवमेव तु विज्ञेयं व्यतीतानागतेष्विह ।
मन्वन्तरेषु सर्वेषु शाखाप्रणयनानि वै ॥
[4]अतीतेषु अतीतानि वर्तन्ते सांप्रतेषु च ।
भविष्याणि च यानि स्युर्वर्ण्यन्तेऽनागतेष्वपि ॥

## विष्णुपुराणम्

युगे युगे वेदभेदोपदेष्टारः अष्टाविंशतिर्व्यासास्तेषां च नामानि

**पराशर उवाच–**

[5]वेदद्रुमस्य मैत्रेय शाखाभेदैः सहस्रशः ।
न शक्यो विस्तरो वक्तुं संक्षेपेण शृणुष्व तम् ॥

तत्र तावत् शाखाभेदानां संख्यातो नामतश्च विस्तारो वक्तुमशक्य इत्याह– वेदद्रुमस्येति । वैच.

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं स बहुधा कुरुते जगतो हितः ॥
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य वै ।
हिताय सर्वभूतानां वेदभेदान्करोति सः ॥

वीर्यम् उत्साहम् , तेजः प्रागल्भ्यम् , बलं च ग्रहणसामर्थ्यमल्पमवेक्ष्य । वैच.

यया स कुरुते तन्वा वेदमेकं पृथक्प्रभुः ।
वेदव्यासाभिधाना तु सा मूर्तिर्मधुविद्विषः ॥

ननु अपर( ? रा ) एव वेदव्यासः( ? साः ), तत्कथं भगवान् वेदभेदान् करोति ? इत्याशङ्क्य, ते सर्वे भगवत्तनव इत्याह– ययेति । वैच.

यस्मिन्मन्वन्तरे ये ये व्यासास्तांस्तान्निबोध मे ।
यथा च भेदः शाखानां व्यासेन क्रियते मुने ॥

अत्र तावदतीतानागतमन्वन्तराणां व्यासानतिविस्तरत्वेनोपेक्ष्य वैवस्वते मन्वन्तरे व्यतीतान् व्यासान् भाविनं चैकम् , तथा शाखाभेदांश्च वक्तुमाह– यस्मिन्निति । वैच.

अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः ।
वैवस्वतेऽन्तरे तस्मिन्द्वापरेषु पुनः पुनः ॥
वेदव्यासा व्यतीता ये अष्टाविंशति सत्तमाः ।
चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः ॥

अष्टाविंशतिर्व्यासाः व्यतीताः निवृत्ताधिकारा जाता इत्यर्थः । विसर्गलोपश्छान्दसः । वैच.

द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयंभुवा ।
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥

प्रजापतिः मनुः , ' द्वापरे तु पुरावृत्ते मनोः स्वायंभुवोऽन्तरे । ब्रह्मा मनुमुवाचेदं वेदान् व्यस्य प्रजापते ॥ ' इति वायूक्तेः । इत एव वचनात् ' §द्वापरादिषु '

(१) वायु. १।६१।१२३ ; ब्रह्माण्ड. २।३०।१४७.
(२) वायु. १।६१।१२४ ; ब्रह्माण्ड. २।३०।१४८–१४९ रेष्विव ( रेष्विह ) संहिताश्च ( संहितास्तु ) न्तीह पुनः (न्ति हि पुनः) तृतीयार्धे (ताः शाखास्ते च कर्तारो भवन्तीहायुगक्षयात् ॥ ).
(३) वायु. १।६१।१२५ ; ब्रह्माण्ड. २।३०।१४९–१५० विज्ञेयं (विज्ञेया) व्यती (अती) ष्विह ( ष्वपि ).
(४) वायु. १।६१।१२६ ; ब्रह्माण्ड. २।३०।१५०–१५१ अतीतानि ( व्यतीतानि ) तेषु च ( तेऽन्तरे ) ष्याणि ( ष्यन्ति ) वर्ण्यन्ते ( वर्त्स्यन्ते ).
(५) विष्णु. ३।३।४–२१.

§ ' द्वापरादिषु ' इति पदम् अग्रे विंशतितमे श्लोके प्रयुक्तम् । अत्र ' द्वापरान्तेषु ' इत्यर्थकल्पने ' इत एव वचनात् ' इति पूर्वोक्तो हेतुश्चिन्त्यः , उक्तवायुवचने तदर्थस्याप्रतीतेः । ' शान्तनुसमकालम् ' इत्यादिर्हेतुः ' द्वापरान्तेष्वित्यर्थः ' इत्युक्तं साध्यं चेत्युभयमपि वक्ष्यमाणविष्णुपुराणोक्तविषयानुसंधानेन ' कस्मिन् द्वापरे कृष्णद्वैपायनोत्पत्तिः ? पराशरादयः कत्यायुर्मानाः ? ' इति निर्णीय तदनुरोधेन संशोधनीयम् । अत एव श्रीमदप्पाशास्त्रिराशिवडेकरैः कृतं ' द्वापरादिषु ' इत्यस्य ' द्वापरयुगाच्या आरंभी ' इति भाषान्तरमपि संदिग्धप्रामाण्यम् । इमे ते विष्णुपुराणोक्ता विषयाः– प्रस्तुते वेदव्यासानुक्रमणे पराशरः षड्विंशे चतुर्युगपर्याये वेदव्यासः , सप्तविंशे जातूकर्णो वेदव्यासः , अष्टाविंशे कृष्णद्वैपायनो वेदव्यासो बभूवेत्युक्तम् ।

इत्यत्र द्वापरम् आदिर्येषां तेषु द्वापरान्तेष्वित्यर्थः कल्प्यते, शान्तनुसमकालं सत्यवत्यां कृष्णद्वैपायनोत्पत्तिप्रसिद्धेः । वैच.

**तृतीये चोशना व्यासश्चतुर्थे च बृहस्पतिः ।**
**सविता पञ्चमे व्यासो मृत्युः षष्ठे स्मृतः प्रभुः ॥**
**सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे स्मृतः ।**
**सारस्वतश्च नवमे त्रिधामा दशमे स्मृतः ॥**
**एकादशे तु त्रिवृषा भरद्वाजस्ततः परम् ।**
**त्रयोदशे त्वान्तरिक्षो वप्री चापि चतुर्दशे ॥**
**त्र्यय्यारुणः पञ्चदशे षोडशे तु धनंजयः ।**
**कृतंजयः सप्तदशे ऋणज्योऽष्टादशे स्मृतः ॥**
**ततो व्यासो भरद्वाजो भरद्वाजात्तु गौतमः ।**
**§गौतमादुत्तमो व्यासो हर्यात्मा योऽभिधीयते ॥**
**अथ हर्यात्मनो वेनः स्मृतो राजश्रवास्तु यः ।**
**सोमः शुष्मायणस्तस्मात्तृणबिन्दुरिति स्मृतः ॥**
**ऋक्षोऽभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते ।**
**तस्मादस्मत्पिता शक्तिर्व्यासस्तस्मादहं मुने ॥**
**जातूकर्णोऽभवन्मत्तः कृष्णद्वैपायनस्ततः ।**
**अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ॥**
**एको वेदश्चतुर्धा तु यैः कृतो द्वापरादिषु ।**
**भविष्ये द्वापरे चापि द्रौणिर्व्यासो भविष्यति ।**
**व्यतीते मम पुत्रेऽस्मिन्कृष्णद्वैपायने मुनौ ॥**
**ध्रुवमेकाक्षरं ब्रह्म ओमित्येवं व्यवस्थितम् ।**
**बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते ॥**

इदानीं वेदविभागं विवक्षमाणः प्रथमं तावत् प्रणवावच्छिन्नब्रह्मणो वेदाविर्भावं दर्शयितुमाह– ध्रुवमिति । ध्रुवं वेदादीनां प्रकृतिभूतमोमित्येवंरूपं व्यवस्थितमेकमक्षरं ब्रह्मेत्यभिधीयते । अत्र हेतुमाह– बृहत्वात् अपरिच्छिन्नरूपब्रह्मात्मकत्वात्, बृंहणत्वात् कारणत्वात् आविर्भावकत्वात् इति यावत्, 'यस्मादुच्चार्यमाण एव बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म' इति श्रुतेः, 'ओमित्येकाक्षरं ब्रह्म' इति गीतोक्तेश्च । वैच.

पराशर उवाच–

**[1]आद्यो वेदश्चतुष्पादः शतसाहस्रसंमितः ।**
**ततो दशगुणः कृत्स्नो यज्ञोऽयं सर्वकामधुक् ॥**

आद्यः ईश्वरात् उद्भूतः चतुष्पादः ऋगादिचतुर्भेदसमूहरूपः यद्वा शतसाहस्रसंमित इत्यर्थः । ततः प्रवृत्तोऽयं कृत्स्नो यज्ञो दशविधः अग्निहोत्रदर्शपौर्णमासचातुर्मास्यपशुसोमेतिपञ्चविधः, स एव प्रकृतिविकृतिभेदेन दशविध इति । यद्वा गृह्योक्तैः पञ्चयज्ञैः सह दशविधत्वम् । वैच.

**[2]ततोऽत्र मत्सुतो व्यासोऽष्टाविंशतितमेऽन्तरे ।**
**वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः ॥**

अत्र मन्वन्तरे अष्टाविंशतितमे द्वापरे चतुष्पादम् एकं सन्तं वेदं चतुर्धा ऋग्यजुःसामाथर्वरूपेण पृथग्व्यभजत् । प्रभुः ईश्वरः अवताररूपः । वैच.

**यथा तु तेन वै व्यस्ता वेदव्यासेन धीमता ।**
**वेदास्तथा समस्तैस्तैर्व्यस्ता व्यासैस्तथा मया ॥**

तैः पूर्वैः समस्तैः मया च षड्विंशे वेदा व्यस्ताः । वैच.

कृष्णद्वैपायनेन वेदाश्चतुर्विधा उपदिष्टाः चतुर्भ्यः शिष्येभ्यः, इतिहासपुराणे च सूताय

**तदनेनैव वेदानां शाखाभेदान्द्विजोत्तम ।**
**चतुर्युगेष्वारचितान्समस्तेष्ववधारय ॥**

तत् तस्मात् †अनेन कृष्णद्वैपायनेन कृतवेदविभागेन

---

यस्यां सत्यवत्यां कौमार्यावस्थायां पराशरात् कृष्णद्वैपायनः समजनि, सैव शान्तनोः पत्नी बभूव, तस्या एवाऽऽदेशात् कृष्णद्वैपायनो विचित्रवीर्यक्षेत्रे धृतराष्ट्रादीन् जनयामासेति । एकस्य चतुर्युगपर्यायस्य ४३२०००० वर्षाणि मानं भवति, द्वापरयुगस्य ८६४००० वर्षाणि मानं भवतीत्येतदप्यत्रानुसंधेयम् ।

§ इत आरभ्य चतुर्षु अर्धश्लोकेषु एकैक एव व्यासः सविशेषण उक्तः ।

† अस्मिन् वाक्ये 'दृष्टान्तेन' इत्युक्तेर्व्याख्याता 'तदनेनैव' इति मूलपाठमभिप्रैतीति प्रतीयते । अत्र 'कृतवेदविभागेन' इत्यत्र कर्मधारयम्, तदेकदेशभूते कृत-

(१) विष्णु. ३।४।१ ; सम्म्. ३ पृ.

(२) विष्णु. ३।४।२–१२.

दृष्टान्तेन चतुर्युगेषु सर्वेष्वपि वेदविभागात्( ? न्) पूर्वैः कृतान् अवधारय जानीहि । वैच.

**कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।**
**कोऽन्यो हि भुवि मैत्रेय महाभारतकृद्भवेत् ॥**

---

पदार्थे 'कृष्णद्वैपायनेन' इत्यस्य कर्तृत्वेनान्वयं च स्वीकृत्य 'कृष्णद्वैपायनकृतेन वेदविभागेन' इति अनेनपदस्यार्थोऽभिप्रेतश्चेत् 'दृष्टान्तेन' इति नोपपद्यते, इवशब्दप्रयोगे दृष्टान्तदार्ष्टान्तिकयोः समानविभक्तिकत्वस्य व्युत्पत्तिसिद्धस्यात्राभावात् पूर्वश्लोकार्थेन पौनरुक्त्याच्च । अथ 'कृतवेदविभागेन' इत्यस्य बहुव्रीहिणा कृष्णद्वैपायनविशेषणत्वं 'पूर्वैः' इत्यस्य दार्ष्टान्तिकत्वं चाऽऽश्रित्य 'अनेन' इत्यस्य 'कृष्णद्वैपायनेन' इत्यर्थेऽभिप्रेतेऽपि पौनरुक्त्यं तदवस्थमेव। श्रीमदप्पाशास्त्रिराशिवडेकरैः 'अनेन' इत्यस्य ज्ञापकहेतुपरत्वमाश्रित्य 'यास्तव हे द्विजवर्या, त्या कृष्णद्वैपायनव्यासाने जे वेदविभाग केले आहेत त्यावरूनच युगांच्या सर्व चौकड्यांमध्ये इतर व्यासांनी केलेले विभागहि समज' इति भाषान्तरं कृतम्। तत्रापि 'कृष्णद्वैपायनेतरैः' इत्यारचनकर्तृपदस्याध्याहारः समस्तपदप्रवृत्तेः सप्तविंशतिचतुर्युगपरत्वेन संकोचश्चाऽऽपद्यते । तस्मादस्य श्लोकस्य स्वरसतस्तात्पर्यमेवं प्रतिभाति– 'यस्मात् वेदव्यसने कृष्णद्वैपायनानुकरणमितरैर्व्यासैः कृतम्, न तत्र तेषां स्वातन्त्र्यम्, तस्मात् समस्तेषु अष्टाविंशतौ चतुर्युगेषु अनेन कृष्णद्वैपायनेनैव शाखाभेदान् आरचितान् अवधारय' इति। अस्मिन् पक्षे न कश्चित् दोषः, प्रत्युत उत्तरश्लोकोऽधिकतरं स्वारस्यं लभते। प्रसङ्गतोऽत्रैतदपि प्रत्येतव्यम्– पूर्वं 'द्वापरे द्वापरे...' (३।३।५) इत्यत्र सर्वेषां व्यासानां यत् विष्णुरूपत्वमुक्तम्, तन्न वास्तविकम्, अपि तु कृष्णद्वैपायनकृतवेदव्यसनस्यानुकरणादारोपितम्। अन्यथा उत्तरश्लोके विष्णुत्वस्य कृष्णद्वैपायनमात्रनिष्ठमहाभारतकर्तृत्वान्यथानुपपत्तिद्वारा कृष्णद्वैपायनेतरव्यासेभ्यो व्यावृत्तिबोधनमनुपपन्नं स्यात्। एवम् 'यथा तु तेन वै...' इत्यत्र वेदव्यसनविषयकपारतन्त्र्यान्यथानुपपत्तिः, 'तदनेन...' इत्यत्र कृष्णद्वैपायननिष्ठ–सर्वचतुर्युगगतवेदव्यसनकर्तृत्वान्यथानुपपत्तिश्च इतरव्यासेषु विष्णुत्वमारोपितमित्यत्र प्रमाणभावं भजत इति।

तदेवं कृष्णद्वैपायनव्यासस्य मुख्यत्वमुक्त्वा हेतुमाह– कृष्णेति । अतो ह्यस्मिन् मन्वन्तरेऽष्टाविंश एव द्वापरे भारताविर्भाव इति गम्यते । वैच.

**तेन व्यस्ता यथा वेदा मत्पुत्रेण महात्मना ।**
**द्वापरे ह्यत्र मैत्रेय तन्मे शृणु यथार्थतः ॥**
**ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे ।**
**अथ शिष्यान्स जग्राह चतुरो वेदपारगान् ॥**

वेदपारगान् वेदस्य पारं गन्तुं समर्थान् । वैच.

**ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः ।**
**वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत् ॥**

ऋग्वेदश्रावकमिति समासस्थमपि श्रावकपदमग्रेऽनुकृष्य योज्यम् । पारगमिति क्वचित् पाठः । वैच.

**जैमिनिं सामवेदस्य तथैवाथर्ववेदवित् ।**
**सुमन्तुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः ॥**
**रोमहर्षणनामानं महाबुद्धिं महामुनिम् ।**
**सूतं जग्राह शिष्यं स इतिहासपुराणयोः ॥**

इतिहासपुराणयोरिति । 'आर्षादिबहुधाख्यानं देवर्षिचरिताश्रयम् । इतिहासमिति प्रोक्तं भविष्यद्भूतधर्मयुक् ॥'। सर्गादिपञ्चलक्षणं पुराणं सर्गाद्यवान्तरभेदविवक्षया दशलक्षणं च । वैच.

**एक आसीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत् ।**
**चातुर्होत्रमभूद्यस्मिंस्तेन यज्ञमथाकरोत् ॥**

एक आसीदिति याजुर्वेदिकाध्वर्यवक्रियाबाहुल्यात् प्रधानकर्मणश्च याजनस्य तद्विहितत्वात् यजुःप्राधान्यादेवमुक्तम्, 'यच्छिष्टं च यजुर्वेदे तेन यज्ञमयुञ्जत । याजनाद्धि यजुर्वेद इति शास्त्रस्य निश्चयः ॥' इति वायूक्तेः । होत्रोपलक्षिताश्चत्वार ऋत्विजश्चतुर्होतारः, तैरनुष्ठेयं कर्म चातुर्होत्रम्, तद्यस्मिन् अभूत् जातं तेन चतुर्धा विभक्तेन यज्ञमकरोत् । वैच.

**आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथा मुने ।**
**आग्नीध्रं( ? औद्गात्रं ) सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ॥**

चातुर्होत्रमेवाऽऽह– आध्वर्यवमिति । वैच.

[1]ततः स ऋच उद्धृत्य ऋग्वेदं कृतवान्मुनिः ।
यजूंषि च यजुर्वेदं सामवेदं च सामभिः ॥

चतुर्धा भेदमाह— तत इति । ततः वेदराशेः । यजूंषि, उद्धृत्येत्यनुषङ्गः । सामभिः गीतात्मकैरुद्धृतैरित्यर्थः । वैच.

[2]राज्ञस्त्वथर्ववेदेन सर्वकर्माणि स प्रभुः ।
कारयामास मैत्रेय ब्रह्मत्वं च यथास्थिति ॥

राज्ञः सर्वकर्माणि शान्त्यादीनि । वैच.

सोऽयमेको महावेदतरुस्तेन पृथक्कृतः ।
चतुर्धाऽथ ततो जातं वेदपादपकाननम् ॥

वेदा एव पादपाः, तेभ्यः काननं शाखाप्रशाखासंततिः । तस्य काननमिति वा । वैच.

प्रतिवेदं शाखाभेदविस्तारः

बिभेद प्रथमं विप्र पैल ऋग्वेदपादपम् ।
इन्द्रप्रमतये प्रादाद्बाष्कलाय च संहिते ॥

प्रथमम् ऋग्वेदं पादपं द्विधा बिभेद । वैच.

चतुर्धा स बिभेदाथ बाष्कलिर्द्विज संहिताम् ।
बौध्यादिभ्यो ददौ तास्तु शिष्येभ्यः स महामुनिः ॥

बाष्कल एव बाष्कलिः । स्वार्थे इञ् । वैच.

बौध्याग्निमाठरौ तद्वद्याज्ञवल्क्यपराशरौ ।
प्रतिशाखास्तु शाखायास्तस्या या जगृहुर्मुने ॥

बाष्कलये दत्तायाः शाखाया याः प्रतिशाखाः अवान्तरशाखाः ता बौध्यादयो जगृहुः । वैच.

इन्द्रप्रमतिरेकां तु संहितां स्वसुतं ततः ।
माण्डुकेयं महात्मानं मैत्रेयाध्यापयत्तदा ॥
तस्य शिष्यप्रशिष्येभ्यः पुत्रशिष्यान्क्रमाद्ययौ ।
वेदमित्रस्तु शाकल्यः संहितां तामधीतवान् ॥

तस्य पैलशिष्यस्य इन्द्रप्रमतेः शिष्यप्रशिष्येभ्यः शिष्यप्रशिष्याणां पुत्रान् शिष्यांश्च क्रमाद्ययौ । वेदमित्राख्यः शाकल्यः इन्द्रप्रमतिसंहिताम् अधीतवान् । वैच.

चकार संहिताः पञ्च शिष्येभ्यः प्रददौ च ताः ।
तस्य शिष्यास्तु ये पञ्च तेषां नामानि मे शृणु ॥
मुद्गलो गोखलश्चैव वात्स्यः शालीय एव च ।
शिशिरः पञ्चमश्चाऽऽसीन्मैत्रेय स महामुनिः ॥

ततश्च स एव तस्याः पञ्च संहिताश्चकार । ताश्च शिष्येभ्यो मुद्गलादिभ्यो ददौ । वैच.

संहितात्रितयं चक्रे शाकपूणिरथेतरः ।
निरुक्तमकरोत्तत्तु चतुर्थं मुनिसत्तम ॥

शाकपूणिस्तु इन्द्रप्रमतिशिष्यः तत्संहितायाः संहितात्रितयं निरुक्तं च वेदशब्दनिर्वचनरूपम् अकरोत् । वैच.

क्रौञ्चो वैतालकिस्तद्वद्बलाकश्च महामतिः ।
निरुक्तकृच्चतुर्थोऽभूद्वेदवेदाङ्गपारगः ॥

तच्च संहितात्रितयं क्रौञ्चादिभ्योऽदात् । चतुर्थो निरुक्तकृन्नामेति केचिदिच्छन्ति । वैच.

इत्येताः प्रतिशाखाभ्योऽप्यनुशाखा द्विजोत्तम ।
बाष्कलिश्चापरास्तिस्रः संहिताः कृतवान्द्विज ॥

अनुशाखाः अवान्तरशाखाः । बाष्कलिः पैलशिष्यः चतस्रः संहिताश्चक्रे इत्युक्तम्, स एवान्यास्तिस्रः संहिताः कृतवान् । अपर एव वा शाकल्यसतीर्थ्यो बाष्कलिः । वैच.

शिष्याः कालायनिर्गार्ग्यस्तृतीयश्च कथाजवः ।
इत्येते बह्वृचाः प्रोक्ताः संहिता यैः प्रवर्तिताः ॥

तच्छिष्याः कालायनिप्रमुखास्त्रयः । वैच.

कृष्णयजुर्वेदस्य शुक्लयजुर्वेदस्य चोत्पत्तिः

**पराशर उवाच—**

[1]यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः ।
वैशम्पायननामाऽसौ व्यासशिष्यश्चकार वै ।
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ॥

---

(१) विष्णु. ३।४।१३ ; सस्मृ. ३ सामभिः ( सामतः ).

(२) विष्णु. ३।४।१४–२६.

(१) विष्णु. ३।५।१–२ ; संग. १४–१५ प्रथमार्धे ( यजुर्वेदतरोः शाखा आसन्नेकोत्तरं शतम् । एकोनषष्टिशाखाश्च कठादय उदीरिताः । सप्तविंशतिशाखाश्च ततः कृष्णाह्वयाः स्मृताः ॥ ) वै ( सः ) नुक्रमात् + ( भावि-

सप्तविंशत् सप्तविंशतिः यजुषः प्रधानशाखाः । ब्रह्माण्डे तु एकाधिकशतमध्वर्युशाखा आपस्तम्बोक्ता उक्ताः । वैच.

[1]**याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विज ।**
**शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा ॥**

यजुःशाखान्तराणामुत्पत्तिं वक्तुं शिष्यान्तरमाह— याज्ञवल्क्यस्त्विति । वैच.

[2]**ऋषिर्योऽद्य महामेरौ समाजे नाऽऽगमिष्यति ।**
**तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ।**
**पूर्वमेवं मुनिगणैः समयोऽभूत्कृतो द्विज ॥**

तस्मादेव शाखाद्वयप्रवृत्तिं वक्तुमितिहासमाह— ऋषिरिति । अद्यास्मत्समाजे य ऋषिर्नाऽऽगमिष्यति । वैच.

[3]**वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा ।**
**स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत् ॥**

स्वस्रीयं स्वसुः सुतं पदा स्पृष्टं सन्तमघातयत् ऋषिशापवशात् । पदा स्पृष्टमात्रोऽसौ ममारेत्यर्थः । वैच.

[4]**शिष्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम् ।**
**चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥**

समर्थेनान्येन महापातके कृतेऽन्येन कथं तत्प्रायश्चित्तं कर्तव्यमितीदं न विचार्यम्, किंतु तथा साक्षाद्वेदशास्त्रोक्तमुख्यप्रकारेण मदर्थे व्रतं चरतेत्यर्थः । वैच.

[5]**अथाऽऽह याज्ञवल्क्यस्तं किमेभिर्भगवन्द्विजैः ।**
**क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिह व्रतम् ॥**

वृत्तान्तमाज्ञाय व्यासः सत्यवतीसुतः । दश पञ्चाथ याः शाखाः सूर्यायोपदिदेश ह ॥ ).

(१) **विष्णु.** ३।५।२–३ ; **संग.** १५ ( वैशम्पायनशिष्यस्तु याज्ञवल्क्यः प्रकृष्टधीः । ब्रह्मरातसुतो ब्रह्मन् गुरुवृत्तिरतोऽभवत् ॥ ).

(२) **विष्णु.** ३।५।३–४ ; **संग.** १५ ऋषिर्योऽद्य ( ऋषीणां यो ) द्विज ( द्विजैः ).

(३) **विष्णु.** ३।५।५ ; **संग.** १५ पदा स्पृष्ट ( पदाऽत्यर्थ ).

(४) **विष्णु.** ३।५।६ ; **संग.** १५.

(५) **विष्णु.** ३।५।७ ; **संग.** १५ वल्क्यस्तं ( वल्क्यस्तु ) मिह ( मिदं ).

[1]**ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिः ।**
**मुच्यतां यत्त्वयाऽधीतं मत्तो विप्रावमन्यक ॥**

विप्रावमन्यक विप्रावमन्तः । वैच.

[2]**निस्तेजसो वदस्येतान्यस्त्वं ब्राह्मणपुङ्गवान् ।**
**तेन शिष्येण नार्थोऽस्ति ममाऽऽज्ञाभङ्गकारिणा ॥**

सर्वान् शिष्यान् प्रत्युक्तं तन्निषिध्य मयैव कार्यमित्युक्तत्वात् आज्ञाभङ्गकारिणेत्युक्तम् । वैच.

[3]**याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ।**
**ममाप्यलं त्वयाऽधीतं यन्मया तदिदं द्विज ॥**

ममापि त्वया गुरुणा अलम्, त्वत्तो मया यदधीतं तदिदम् इति छर्दनमनुचकार । वैच.

**पराशर उवाच—**

[4]**इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः ।**
**छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥**

[5]**यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।**
**जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥**

छर्दितानां साक्षाद्ग्रहणमनुचितमिति तित्तिराः पक्षिणो भूत्वा जगृहुः । ततः हेतोः तैत्तिरीयाः प्रसिद्धाः । वैच.

[6]**ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः ।**
**चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम ॥**

ततोऽन्येषां चरकाध्वर्युसंज्ञां निर्वक्ति— ब्रह्महत्याव्रतमिति । वैच.

(१) **विष्णु.** ३।५।८ ; **संग.** १५ मतिः ( मतिम् ).

(२) **विष्णु.** ३।५।९ ; **संग.** १५.

(३) **विष्णु.** ३।५।१० ; **संग.** १५ यन्मया तदिदं ( जन्म यातमिदं ).

(४) **विष्णु.** ३।५।११ ; **संग.** १५ ययौ च ( प्रययौ ).

(५) **विष्णु.** ३।५।१२ ; **संग.** १५ द्विज ( द्विजाः ) रा भूत्वा ( रीभूत्वा ).

(६) **विष्णु.** ३।५।१३ चरणा (वरणा) ; **संग.** १५ णा चोदि ( णाऽऽदेशि ).

§[1]व्यवस्थितप्रकरणं यजुः कृष्णमितीर्यते ॥
[2]याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः ॥

(१) वमनानन्तरं याज्ञवल्क्यः किं कृतवानित्याह– याज्ञवल्क्य इति । संग. १६

(२) ततोऽसौ सूर्यं स्तुत्वा तत्प्रसादाल्लब्धैर्यजुर्भिः काण्वाद्याः पञ्चदश शाखाः कृतवानिति दर्शयन्नाह– याज्ञवल्क्योऽपीत्यादिना यावदध्यायसमाप्ति । वैच.

याज्ञवल्क्य उवाच–
[3]नमः सवित्रे द्वाराय विमुक्तेः सिततेजसे ।
ऋग्यजुःसामभूताय त्रयीधामवते नमः ॥

विमुक्तेर्द्वाराय । त्रयीधामवते त्रयीरूपतेजःशालिने । वैच.

[4]नमोऽग्नीषोमभूताय जगतः कारणात्मने ।
भास्कराय परं तेजः सौषुम्नमुरु बिभ्रते ॥

अग्नीषोमभूताय अतो जगतः कारणात्मने । तदेवाऽऽह– भास्कराय । आतपवृष्टिद्वारा जगत्कारणत्वमिति भावः । तदुपपादयति– तेजो बिभ्रते इत्यग्निरूपत्वम् , सौषुम्नं बिभ्रते इति सोमरूपत्वम् । उक्तं च– 'सूर्यरश्मिः सुषुम्नो यस्तर्पितस्तेन चन्द्रमाः । ' इति । वैच.

[5]कलाकाष्ठानिमेषादिकालज्ञानात्मने नमः ।
ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ॥

कलाकाष्ठादिकालो ज्ञायते येन तथाभूत आत्मा यस्य तस्मै । ध्येयाय सर्वेषां ध्यानार्हाय, 'धीमहि' इति गायत्रीलिङ्गात् । परमाक्षरं ब्रह्म, 'अक्षरात् परतः परः' इति श्रुतेः, तद्रूपिणे । ओंकाररूपिणे इति वा । वैच.

[1]बिभर्ति यः सुरगणानाप्याय्येन्दुं स्वरश्मिभिः ।
सुधामृतेन च पितॄंस्तस्मै तृप्त्यात्मने नमः ॥

सुधामृतेन, सुधा एव अमृतम् अमरणसाधनत्वात् , तेन । तृप्त्यात्मने तर्पकाय । 'धृत्यात्मने' इति पाठे धारयित्रे । वैच.

[2]हिमाम्बुघर्मवृष्टीनां कर्ता हर्ता च यः प्रभुः ।
तस्मै त्रिकालरूपाय नमः सूर्याय वेधसे ॥

हिमादीनां या वृष्टिः तत्कर्ता । हेमन्तवर्षाग्रीष्माख्यत्रिकालरूपाय । वेधसे स्रष्ट्रे । वैच.

[3]यो हन्ति तिमिराण्येको जगतोऽस्य जगत्पतिः ।
सत्त्वधामधरो देवो नमस्तस्मै विवस्वते ॥

सत्त्वधामधरः सत्त्वमूर्तिधरः । सत्यधामधर इति पाठे सत्यम् अबाधितं धाम तेजः धरति इति, पचाद्यच् । वैच.

[4]सत्कर्मयोग्यो न जनो नैवाऽऽपः शौचकारणम् ।
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥

सत्कर्म रात्रिसंध्येतरकालविहितं यत् कर्म तद्योग्यः । वैच.

[5]स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते ।
पवित्रताकारणाय तस्मै शुद्धात्मने नमः ॥

पूर्वोक्तमेवार्थं विधिमुखेनाऽऽह– स्पृष्ट इति । वैच.

---

§ श्रीमद्भागवतेऽप्यनुपलभ्यमानमिदमर्धं संस्कारगणपतावेव श्रीमद्भागवतीयत्वेन परस्तात्संग्रहीष्यते ।

(१) संग. १५ .

(२) विष्णु. ३।५।१४ ; संग. १६ पि मैत्रेय ( थ मैत्रेयः ) स्ततः ( स्तथा ).

(३) विष्णु. ३।५।१५ ; संग. १६ क्तेः सित ( क्तेस्तिग्म ) धामवते ( धाम्ने च ते ).

(४) विष्णु. ३।५।१६ ; संग. १६ ग्नीषोम (ग्निसोम) सौषुम्न ( सौषुम्ण ).

(५) विष्णु. ३।५।१७ ; संग. १६.

(१) विष्णु. ३।५।१८ ; संग. १६ प्याय्येन्दुं ( प्यायेन्दुः ) सुधा ( स्वधा ) तृप्त्या ( तृष्णा ).

(२) विष्णु. ३।५।१९ ; संग. १६.

(३) विष्णु. ३।५।२० ; संग. १६–१७ प्रथमचरणे ( अवहन्ति तमो यस्य ).

(४) विष्णु. ३।५।२१ ; संग. १७.

(५) विष्णु. ३।५।२२ ; संग. १७ ताकारणाय तस्मै ( कारिणे तुभ्यं नमः ).

¹नमः सवित्रे सूर्याय भास्कराय विवस्वते ।
आदित्यायाऽऽदिभूताय देवादीनां नमो नमः ॥

भक्त्यतिशयेन पूर्वोक्तैः पर्यायैः सर्वैः प्रणमति– सवित्र इति । वैच.

²हिरण्मयं रथं यस्य केतवोऽमृतधायिनः ।
वहन्ति भुवनालोके चक्षुषस्तं नमाम्यहम् ॥

हिरण्मयं तेजोमयम् । केतवः वेदमया अश्वाः । अमृतधायिनः अमृताहाराः । एतेन 'उदु त्यं जातवेदसम्' इत्यादिऋगर्थ उक्तः । 'हिरण्मये रथे' इति पाठे केतवः रश्मयः, अमृतं बलम्, तत्पातारः । वहन्ति गच्छन्ति इत्यर्थः । वैच.

पराशर उवाच–

³इत्येवमादिभिस्तेन स्तूयमानः स्तवै रविः ।
वाजिरूपधरः प्राह व्रियतामिति वाञ्छितम् ॥

⁴याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम् ।
यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥

पराशर उवाच–

⁵एवमुक्तो ददौ तस्मै यजूंषि भगवान्रविः ।
अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥

अयातयामसंज्ञानि अन्यैरनभ्यस्तानि । वैच.

⁶यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम ।
वाजिनस्ते समाख्याताः सूर्योऽश्वः सोऽभवद्यतः ॥

वाजिनः समाख्याताः, वाजिरूपसूर्यप्रोक्तसंहिताध्यायित्वादित्यर्थः । वैच.

(१) विष्णु. ३।५।२३ ; संग. १७.

(२) विष्णु. ३।५।२४ ; संग. १७ धायिनः (वाजिनः) भुवनालोके चक्षुषस्तं (भुवनं लोकचक्षुषं त्वां).

(३) विष्णु. ३।५।२५ मानः ( मानैः ) ; संग. १७.

(४) विष्णु. ३।५।२६ ; संग. १७ स्तदा ( स्ततः ).

(५) विष्णु. ३।५।२७ ; संग. १७ संज्ञानि ( च्छन्दांसि ) तद्गुरुः ॥ + ( याज्ञवल्क्यस्ततो ब्रह्मन् स्वशिष्येभ्य उवाच ह । ).

(६) विष्णु. ३।५।२८ ; संग. १७ यैरधी (परिधी) सूर्योऽश्वः सो ( सूर्यस्त्वश्वो ).



¹शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् ।
कण्वाद्यास्तु महाभाग याज्ञवल्क्यप्रवर्तिताः ॥

²तासां मध्ये काण्वशाखा विशिष्टा प्रथमा यतः ।
अतः प्रथमशाखेति यजुषामुत्तमा स्मृता ॥

सामवेदस्य शाखाविस्तरः

पराशर उवाच–

³सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः ।
क्रमेण येन मैत्रेय बिभेद शृणु तन्मम ॥
सुमन्तुस्तस्य पुत्रोऽभूत्सुकर्माऽस्याप्यभूत्सुतः ।
अधीतवन्तावेकैकां संहितां तौ महामुनी ॥

तस्य जैमिनेः । अस्य जैमिनिपुत्रस्य । तौ जैमिनिपुत्रपौत्रौ जैमिनिना विभक्तामेकैकां संहितां स्वस्वकालेऽधीतवन्तौ । वैच.

सहस्रं संहिताभेदं सुकर्मा तत्सुतस्ततः ।
चकार तं च तच्छिष्यौ जगृहाते महामती ॥

तत्सुतः सुमन्तुसुतः । तं संहिताभेदम् । वैच.

⁴हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च द्विजोत्तम ।
उदीच्यसामगाः शिष्यास्तेभ्यः पञ्चदश स्मृताः ॥

सुकर्मणः शिष्यावाह– हिरण्यनाभ इति । कौशल्य इति हिरण्यनाभविशेषणम् । ये पञ्चदश शिष्यास्तेभ्यः पञ्चदश संहिता हिरण्यनाभेन दत्ताः, त एवोदीच्यसामगाः स्मृताः । वैच.

⁵हिरण्यनाभात्तावन्त्यः संहिता यैर्द्विजोत्तमैः ।
गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः ॥

(१) विष्णु. ३।५।२९ ; संग. १७ भेदा ( भेद ) वर्तिताः ( कीर्तिताः ).

(२) संग. १७. (३) विष्णु. ३।६।१–३.

(४) विष्णु. ३।६।४ ; बाल. १।८९ पृ. २५४, २५७ ( उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः ॥ ) उत्त.

(५) विष्णु. ३।६।५ ; बाल. १।८९ पृ. २५४, २५७.

यैरपरैर्द्विजोत्तमैः तावन्त्यः तेषां ग्रहीतॄणां संख्यया संख्याताः संहिता हिरण्यनाभाद्गृहीतास्ते प्राच्यसामगा उच्यन्त इत्यन्वयः । वैच.

**[1]लोकाक्षिः कुथुमिश्चैव कुसीदिर्लाङ्गलिस्तथा ।**
**पौष्यञ्जिशिष्यास्तद्भेदैः संहिता बहुलीकृताः ॥**

पौष्यञ्जिशिष्यानाह— लोकाक्षिरिति । तद्भेदैः तच्छिष्यप्रशिष्यादिभिः । वैच.

**हिरण्यनाभशिष्यश्च चतुर्विंशतिसंहिताः ।**
**प्रोवाच कृतिनामाऽसौ शिष्येभ्यः सुमहामतिः ।**
**तैश्चापि सामवेदोऽसौ शाखाभिर्बहुलीकृतः ॥**

हिरण्यनाभस्य उदीच्यसामगशिष्यमध्ये कृतिनामा शिष्यः । तैः कृतिनाम्नः शिष्यैः । वैच.

अथर्वशाखाविस्तरः

**अथर्वणामथो वक्ष्ये संहितानां समुच्चयम् ॥**
**अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः ।**
**शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा ।**
**कृत्वा तु देवदर्शाय तथा पथ्याय दत्तवान् ॥**
**देवदर्शस्य शिष्यास्तु मौद्गो ब्रह्मबलिस्तथा ।**
**शौल्कायनिः पिप्पलादस्तथाऽन्ये मुनिसत्तम ॥**

देवदर्शः स्वसंहितां चतुर्धा चक्रे । तास्तु मौद्गादयश्चत्वारो जगृहुरित्यर्थः । वैच.

**पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विज संहिताः ।**
**जाजलिः कुमुदादिश्च तृतीयः शौनको द्विज ॥**

पथ्यकृतास्तिस्रः संहिता जाजल्यादयो जगृहुः , यैः स्वसंहिता भिन्नाः कृताः । वैच.

**शौनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे ।**
**द्वितीयां संहितां प्रादात्सैन्धवायनसंज्ञिने ।**
**सैन्धवा मुञ्जकेशाश्च भिन्नवेदा द्विधा पुनः ॥**

सैन्धवाः सैन्धवायनशिष्याः । मुञ्जकेश इति बभ्रोरेव नामान्तरम् । तच्छिष्या मुञ्जकेशाः । द्विधा द्विःप्रकारो( ? द्विप्रकारं ) भिन्नो वेदः स्वस्वसंहिता यैस्ते तथा । वैच.

**नक्षत्रकल्पो वेदानां संहितानां तथैव च ।**
**चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः ॥**

संहितामेदानाह— नक्षत्रकल्प इति । वेदानां संहितानां च कल्प इत्यन्वयः । तत्र नक्षत्रकल्पः नक्षत्रादिपूजाविधिः । वेदकल्पः वैतानिकब्रह्मत्वादिविधिः । संहिताकल्पः संहिताविधिः । अंगिरसः कल्पः अभिचारादिविधिः । शान्तिकल्पश्च गजाद्यष्टादशमहाशान्त्यादिविधिः । वैच.

**श्रेष्ठास्त्वथर्वणामेते संहितानां विकल्पकाः ॥**
**[2]ज्ञेया ब्रह्मर्षयः पूर्वं तेभ्यो देवर्षयः पुनः ।**
**राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्त्रयः ॥**

वेदशाखाप्रसङ्गात् तद्द्रष्टॄणामप्यृषीणां भेदानाह— ज्ञेया इति । वैच.

**इति शाखाः प्रसंख्याताः शाखाभेदास्तथैव च ।**
**कर्तारश्चैव शाखानां भेदे हेतुस्तथोदितः ॥**

उपसंहरति— इतीति । प्रसंख्याताः संख्यया प्रोक्ताः । शाखाभेदाश्च नामत उक्ताः । भेदे हेतुः पुरुषाणामल्पप्रज्ञत्वादिः । वैच.

**[2]सर्वमन्वन्तरेष्वेव शाखाभेदाः समाः स्मृताः ।**
**प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे द्विज ॥**

शाखानां पुरुषप्रणीतत्वेन वेदस्य पौरुषेयत्वं स्यादित्यत आह— प्राजापत्येति । कल्पादौ प्रजापतिना दृष्टा श्रुतिर्नित्यैव । इमे तु शाखाभेदास्तस्य एव विकल्पाः तद्ग्रहणसौकर्यार्थम् अवान्तरभेदाः , न त्वपूर्वाः पुरुषैः कृता इत्यर्थः । वैच.

## विष्णुधर्मोत्तरपुराणम्

स्वशाखोक्तमेव कर्म कर्तव्यं न परशाखोक्तम्

**[3]यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते ।**
**अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ।**

---

(१) **विष्णु.** ३।६–१५.

(१) **विष्णु.** ३।६।२८–२९.

(२) **विष्णु.** ३।६।३० ; **स्मृ.** ३ ष्वेव ( ष्वेवं ) द्विज ( द्विजाः ).

(३) **विध.** २।१२७।४८–४९ ; **इन्दु.** ४ न विल ( न च ल ).

**तस्मात्सर्वप्रयत्नेन स्वसूत्रं न विलङ्घयेत् ॥**

**[1]प्राक्तन्त्रोत्तरतन्त्रे द्वे स्वशाखाप्रत्ययाद्द्विज ।**
**सर्वकर्मसु कर्तव्ये मध्ये कर्म विधीयते ॥**

## श्रीमद्भागवतपुराणम्

चतुर्णां वेदानाम् उपवेदानाम् इतिहासपुराणानां चोत्पत्तिः

**विदुर उवाच–**

**[2]स वै विश्वसृजामीशो वेदादीन् मुखतोऽसृजत् ।**
**यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन ॥**

मुखतः मुखेभ्यः । श्रीटी.

**मैत्रेय उवाच–**

**ऋग्यजुःसामाथर्वाख्यान् वेदान्पूर्वादिभिर्मुखैः ।**
**शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥**

चातुर्होत्रसृष्टिक्रममाह– शस्त्रम् अप्रगीतमन्त्रस्तोत्रं होतुः कर्म । इज्याम् अध्वर्योः कर्म । स्तुतिस्तोमम्, स्तुतिः संगीतम्, स्तोमं तदर्थमृक्समुदायं 'त्रिवृत्स्तोमो भवति' इत्यादिविहितमुद्गातृप्रयोज्यम् । प्रायश्चित्तं ‡ ब्राह्मम् । श्रीटी.

**आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ।**
**स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥**

उपवेदक्रममाह– आयुर्वेदमिति । आत्मनो मुखैः । स्थापत्यं विश्वकर्मशास्त्रम् । श्रीटी.

**इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।**
**सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥**

‡ यद्यपि ब्रह्मशब्दस्यात्र ऋत्विक्परत्वेन 'ब्रह्मणस्त्वः' ( पासू. ५।१।१३६ ) इतिसूत्रानुरोधेन 'ब्रह्मत्वम्' इति व्याख्यातुमुचितम्, तथापि प्रायश्चित्तं ब्रह्मकर्मत्वेनाविवक्षित्वा ब्रह्मसंबन्धित्वेन विवक्षितमिति कल्पयित्वा ब्राह्मशब्दसाधुत्वं निर्वहणीयम् ।

(१) विध. २।१२७।५०.

(२) भाग. ३।१२।३६–३९.

**[1]ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ।**
**चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥**

एवं चतुर्युगेषु प्राप्ताः । द्वापरादौ द्वापरमादिर्यस्य तदन्त्यांशलक्षणस्य कालस्य तस्मिन् । द्वापरान्ते वेदविभागप्रसिद्धेः । शंतनुसमकालं व्यासावतारप्रसिद्धेश्च । व्यस्ताः विभक्ताः । श्रीटी.

**क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः ।**
**वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतनोदिताः ॥**

तत्र हेतुः । क्षीणायुषो जनान् । तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशङ्क्याह– हृदिस्थेति । श्रीटी.

**[2]अस्मिन्नप्यन्तरे ब्रह्मन् भगवाँल्लोकभावनः ।**
**ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥**

एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वन्तरे विशेषतो निरूपयितुमाह– अस्मिन्नपीति । श्रीटी.

विष्णोरंशावतारः पाराशर्यो व्यासः चतुर्भ्यः शिष्येभ्यश्चतुर्वेदोपदेष्टा

**[3]पराशरात् सत्यवत्यामंशांशकलया विभुः ।**
**अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥**

अंशो माया, तस्या अंशः सत्त्वम्, तस्य कलया अंशेन अवतीर्णः सन् । श्रीटी.

**[4]ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ।**
**चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥**

चातुर्विध्यमेवाऽऽह– ऋगिति । ऋगादिमन्त्राणां राशीन् वर्गशस्तत्तत्प्रकरणभेदैरुद्धृत्य यथाऽनेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियन्ते तद्वदुद्धृत्य तैर्मन्त्रैश्चतस्र ऋगादिसंहिताश्चक्रे । श्रीटी.

(१) भाग. १२।६।४६–४७.

(२) भाग. १२।६।४८; संग. १३ अस्मिन्नप्य ( अस्मिन्मन्व ).

(३) भाग. १२।६।४९ ; संग. १३.

(४) भाग. १२।६।५० ; संग. १३ राशीनु ( राशिमु ) वर्गशः ( सर्वशः ) मन्त्रै ( सूत्रै ).

[1]तासां स चतुरः शिष्यानुपाहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥

तासां संहितानां मध्ये एकैकाम् । श्रीटी.

[2]पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥

ऋक्समुदायरूपत्वाद्बह्वृचाख्याम् । नितरां प्रश्लेषेण गद्यमानत्वान्निगदाख्यम् । श्रीटी.

[3]साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ।
अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥

छन्दःसु गीयमानत्वाच्छन्दोगाख्यां संहिताम् । श्रीटी.

शिष्यप्रशिष्यद्वारा प्रतिवेदं विविधशाखाविस्तरः

[4]तैश्च शिष्यप्रशिष्यादिद्वारा शाखाः प्रवर्तिताः ॥

[5]पैलः स्वां संहितामूच इन्द्रप्रमितये मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥

चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥

अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम् ।
तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥

तत्र ऋग्वेदशाखाविभागमाह– पैल इति । स्वसंहितां द्विधा विभज्य इन्द्रप्रमितये बाष्कलाय च ऊचे । स बाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः शिष्येभ्य आह । हे भार्गव, इन्द्रप्रमितिरपि स्वां संहितां स्वसुतं माण्डूकेयमध्यापयामास । तस्य माण्डूकेयस्य शिष्यो देवमित्रः । श्रीटी.

शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् ।
वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥

तत्सुतः माण्डूकेयसुतः शाकल्यो वात्स्यादिषु पञ्चस्वधात् । तानध्यापयामासेत्यर्थः । श्रीटी.

जातुकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥

तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ । श्रीटी.

बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ।
चक्रे बालायनिर्भज्यः कासारश्चैव तां दधुः ॥

बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः । प्रतिशाखाभ्यः उक्तसर्वशाखाभ्यः । बालायन्यादयः ताम् आदधुः अधीतवन्तः । श्रीटी.

बह्वृचाः संहिताः ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥

ऋक्शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह– बह्वृचा इति । एतच्छन्दसाम् एतेषां छन्दसाम् । श्रीटी.

कृष्णयजुर्वेदस्य शुक्लयजुर्वेदस्य चोत्पत्तिः

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥

यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह– वैशम्पायनशिष्या इत्यादिना । चरकनामनिरुक्तिमाह– यच्चेरुरिति । यत् यस्मात् ब्रह्महत्यारूपमंहः क्षपयतीति तथा तत् स्वगुरोरनुष्ठेयं व्रतम्, तच्चरणाच्चरका इत्यर्थः । श्रीटी.

याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥

तच्छिष्यः वैशम्पायनशिष्यः । अल्पसाराणामेतेषां चरितेन कियत् ? सुदुश्चरमहं चरिष्यामीति । श्रीटी.

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥

---

(१) भाग. १२।६।५१ ; संग. १४ नुपा ( नुप ).

(२) भाग. १२।६।५२ ; संग. १४ संज्ञाय ( शिष्याय ).

(३) भाग. १२।६।५३ ; संग. १४ सीं नाम ( से प्राह ).

(४) संग. १४.

(५) भाग. १२।६।५४-६६.

विप्राणामवमन्त्रा अवज्ञाकर्त्रा । मत्तोऽधीतमाशु त्यजेति । श्रीटी.

**देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ।**
**ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥**

देवरातसुतः याज्ञवल्क्यः । श्रीटी.

**यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ।**
**तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥**

छर्दितस्याऽऽदानं विप्ररूपेणानुचितमिति तित्तिराः पक्षिविशेषा भूत्वाऽऽददुः , ततश्च तैत्तिरीया इति प्रसिद्धाः । सुपेशलाः अतिरम्याः । बहुवचनमवान्तरभेदविवक्षया । श्रीटी.

**याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दांस्यधिगवेषयन् ।**
**गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥**

काण्वमाध्यंदिनादिशाखाप्रसङ्गमाह– याज्ञवल्क्य इत्यादिना । गुरोः वैशम्पायनस्य व्यासेन विभज्यानुक्तत्वादविद्यमानानि अधिकानि गवेषयन् मृगयन् सूपतस्थे सम्यक् तुष्टाव । ईश्वरम् ऋगादिवेदानाम् । तथा च श्रुतिः ' ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ ' ( तैब्रा. ३।१२।९।१ ) इति । श्रीटी.

**याज्ञवल्क्य उवाच–**

**'ओं नमो भगवते आदित्याय, अखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तामन्तर्हृदयेषु बहिरपि चाऽऽकाश इवोपाधिनाऽव्यवधीयमानो भगवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥**

नमो भगवते तुभ्यमादित्याय, यो भगवानेक एवेमां लोकयात्रामनुवहतीत्यन्वयः । तदेव दर्शयति– अखिलजगतामात्मस्वरूपेणान्तर्हृदयेषु कालस्वरूपेण च बहिरपि वर्तमान इति । अखिलजगतामित्यस्य प्रपञ्चः– चतुर्विधेति । हृदयान्तर्वर्तित्वेऽपि जीववत्तेनोपाधिना अव्यवधीयमानः अनाच्छाद्यमानः । कालस्वरूपेण चेत्यस्य प्रपञ्चः– क्षणेति । क्षणलवादयो येऽवयवास्तैरुपचिताः संवत्सराः , तेषां गणेन प्रत्यब्दम् अपाम् आदानं शोषणम् , विसर्गः वृष्टिः , ताभ्याम् । अनेन गायत्रीप्रथमपादोक्तवरेण्यताऽनुवर्णिता । श्रीटी.

**यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपन मण्डलम् ॥**

द्वितीयपादार्थानुवर्णनेन स्तौति– यदुहेति । हे विबुधर्षभ, हे सवितः , यदप्यदो भगवतः तव मण्डलं तपति तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम । पुनस्तस्यैव संबोधनम् । प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजम् अज्ञानं च तेषामवभर्जन विनाशक हे तपनेति । श्रीटी.

**य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणाननात्मनः स्वयमात्माऽन्तर्यामी प्रचोदयति ॥**

तृतीयपादेन स्तौति– य इहेति । भवान्स्थावरजङ्गमसमूहानां स्वाश्रयाणां जीवानां मनइन्द्रियप्राणगणान् अनात्मनः जडान् स्वयमात्मैवान्तर्यामी सन् प्रचोदयति प्रवर्तयति । श्रीटी.

**य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥**

तृतीयपादमेव मण्डलस्थपरतया व्याचक्षाणः स्तौति– य एवेति । य एक एव भगवान् अतिकरालवदनो योऽन्धकारसंज्ञोऽजगरग्रहस्तेन गिलितम् अत एव मृतक-

(१) भाग. १२।६।६७–७२.

मिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयः तस्मिन्प्रवर्तयति । श्रीटी.

**परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥**

आशापालैः इन्द्रादिभिः कमलकोशयुक्तैस्तत्तुल्यैर्वाऽञ्जलिभिः उपहृतार्हणः दत्तार्घः । श्रीटी.

**अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥**

यत एवंभूतस्त्वम् अथ अतः ह स्फुटम् अयातयामानि अन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहमुपसरामि भजामि । श्रीटी.

**सूत उवाच–**

**[1]एवं स्तुतः स भगवान् वाजिरूपधरो हरिः ।**
**यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥**

एवं स्तुतः प्रसादितश्च । श्रीटी.

शुक्लस्य कृष्णस्य च यजुर्वेदस्य शाखाविस्तारः

**यजुर्भिरकरोच्छाखा दश पञ्च शतैर्विभुः ।**
**जगृहुर्वाजसंन्यस्ताः काण्वमाध्यंदिनादयः ॥**

पञ्चदश शाखाः याः शतैः अपरिमितैर्यजुर्भिरकरोत् । 'स तैः' इति पाठे सः एष याज्ञवल्क्यः तैः यजुर्भिः अकरोदिति । जगृहुः अधीतवन्तः । रविणाऽश्वरूपेण वाजेभ्यः केसरेभ्यः वाजेन वेगेन वा संन्यस्ताः त्यक्ताः शाखाः वाजसनीसंज्ञाताः शाखा इति वा । श्रीटी.

**[2]याज्ञवल्क्यस्ततः सूर्यमाराध्यासादधीतवान् ।**
**†व्यवस्थितप्रकरणं यजुः कृष्णमितीर्यते ॥**
**पौराणिकीं कथामेतां वेदव्याख्यान आदरात् ।**
**आदिशन्मह्यमाचार्याः श्रुतावपि मया श्रुतम् ॥**
**काण्ववेदगता विद्या वंशब्राह्मण ईर्यते ।**
**यजूंषि शुक्लान्यादित्यान्मुनिः प्रापेत्यपि स्फुटम् ॥**

सामशाखाभेदाः

**[1]जैमिनेः सामगस्याऽऽसीत्सुमन्तुस्तनयो मुनिः ।**
**सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥**

सामशाखाविभागमाह– जैमिनेरिति । तत्सुतः सुमन्तुसुतः । ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह । श्रीटी.

**[2]सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ।**
**सहस्रसंहितामेदं चक्रे साम्नां ततो द्विजाः ॥**
**[3]हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च सुकर्मणः ।**
**शिष्यो जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥**

तच्छिष्यः जैमिनेः शिष्यः । महान् अतिमेधावी । सहस्रसंहितारूपं भेदं चक्रे । साम्नां तं संहिताभेदं ततः तदनन्तरं सुकर्मणः शिष्य एकः कौशल्यो हिरण्यनाभः, पौष्यञ्जिर्नाम एकः, तौ जगृहतुः । आवन्त्यश्चान्यस्तस्यैव शिष्यः, सोऽपि जग्राह । श्रीटी.

**[4]उदीच्याः सामगाः शिष्या आसन् पञ्चशतानि वै ।**
**पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते ॥**

पौष्यञ्ज्यावन्त्ययोरपि चकाराद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन् । ते तावतीः शाखा यथायथं जगृहुः । तानुदीच्यान् सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः । यथैवोक्तं वैष्णवे– 'उदीच्यसामगाः शिष्यास्तस्य पञ्चशतं स्मृताः । हिरण्यनाभात्तावन्त्यः संहिता यैर्द्विजोत्तमैः । गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः ॥' इति । ‡ श्रीटी.

† विष्णुपुराणेऽप्यनुपलभ्यमानमिदमर्धं संस्कारगणपतावेव विष्णुपुराणीयत्वेन पूर्वं समगृह्यत ।

(१) भाग. १२।६।७३–७४.

(२) संग. १७–१८.

‡ बाल. श्रीटीगतम् ।

(१) भाग. १२।६।७५ ; बाल. ११८९ पृ. २५६ सुन्वांस्तु ( सुत्वांस्तु ).

(२) भाग. १२।६।७६ ; बाल. ११८९ पृ. २५६ सहस्रसंहिता ( सहस्रं संहिता ) द्विजाः ( द्विजः ).

(३) भाग. १२।६।७७ ; बाल. ११८९ पृ. २५६ शिष्यो ( शिष्यौ ).

(४) भाग. १२।६।७८ ; बाल. ११८९ पृ. २५६–२५७.

**'लौगाक्षिर्माङ्गलिः कुल्यः कुशीदः कुक्षिरेव च।**
**पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम्॥**

पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति– लौगाक्षिरिति द्वाभ्याम् । श्रीटी.

**कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ।**
**शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥**

कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे । शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्य ऊच इति । श्रीटी.

अथर्ववेदविभागाः

**सूत उवाच–**
**'अथर्ववित्सुमन्तुश्च शिष्यमध्यापयत्स्वकान् ।**
**संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥**

क्रमप्राप्तमथर्ववेदविभागमाह– अथर्वविदिति । शिष्यं कबन्धनामानम् । स्वकां स्वकीयां संहिताम् । सोऽपि शिष्योऽपि तां द्विधा विभज्य । तदुक्तं वैष्णवे– 'अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः । शिष्यमध्यापयामास कबन्धं सोऽपि च द्विधा । कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान् ॥' इति । श्रीटी.

**शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ।**
**वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ।**
**कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् ॥**

तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास, पथ्यश्च त्रिधा विभज्य त्रीनित्याह सार्धेन– शौक्लायनिरिति । श्रीटी.

**बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च ।**
**अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥**

अङ्गिरसः शुनकस्य शिष्यो बभ्रुः सैन्धवायनश्च । तदुक्तम्– 'शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे । द्वितीयां संहितां प्रादात्सैन्धवायनसंज्ञिने ॥' इति । सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः । श्रीटी.

**नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः ।**
**एते आथर्वणाचार्याः ... ... .... ... ॥**

नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ । तदुक्तं 'नक्षत्रकल्पो वेदानां संहितानां तथैव च । चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः ॥' इति । नक्षत्रकल्पादीनां कर्तारस्तत्तन्नामभिरुच्यन्ते । श्रीटी.

(१) भाग. १२।६।७९–८०.
(२) भाग. १२।७।१–४.

## लिङ्गपुराणम्

वेदचतुष्टयविस्तारः

**'एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ।**
**संक्षयादायुषश्चैव व्यस्यते द्वापरेषु सः ॥**

चतुष्पादः ऋगादिपादयुक्तः एकः समग्रः इह भूलोके त्रेतासु त्रेतासंज्ञकान्तकालेषु विधीयते अधीयते इत्यर्थः । शितो.

**ऋषिपुत्रैः पुनर्भेदा भिद्यन्ते दृष्टिविभ्रमैः ।**
**मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥**

**संहिता ऋग्यजुःसाम्नां संहन्यन्ते मनीषिभिः ।**
**सामान्या वैकृताश्चैव दृष्टिभिस्तैः पृथक् पृथक्॥**

ऋग्यजुःसाम्नां संहिताः सामान्याः समानाः वैकृताः विभक्ताः दृष्टिविभ्रमैः मतिभेदैः मनीषिभिः ऋषिपुत्रैः पुनरन्यप्रकारेण मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः पृथक् पृथक् संहन्यन्ते विभज्यन्ते इत्यग्रिमश्लोकैरन्वयः । शितो.

**ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च ।**
**अन्ये तु प्रस्थितास्तान्वै केचित्तान्प्रत्यवस्थिताः॥**

ब्राह्मणं विधिप्रशंसनमन्त्रविनियोजकम्, कल्पसूत्राणि क्रियाप्रतिपादकसूत्राणि, मन्त्रप्रवचनानि मीमांसान्यायसूत्राणि । चक्रुरिति शेषः । शितो.

(१) लिङ्ग. १।३९।५७–६०.

## स्कन्दपुराणम्

वेदविभागकर्तारो व्यासाः तेषां नामानि च

[1]वर्णाश्रमपरिध्वंसाः प्रवर्तन्ते च द्वापरे ।
तदा व्यासैश्चतुर्धा च व्यस्यते द्वापरादितः ॥
एको वेदश्चतुष्पादैः क्रियते द्विजहेतवे ॥
[2]अस्मिन् वाराहकल्पे च व्यासानाकर्णयस्व च ।
ऋतुः सत्यो भार्गवश्च अङ्गिराः सविता तथा॥
मृत्युः शतक्रतुर्धीमान् वसिष्ठो भविताऽधुना।
सारस्वतस्त्रिधामा च वेदवित्त्रिवृतो मुनिः ॥
शततेजाः स्वयं विष्णुर्नारायण इति स्मृतः ।
करकश्चारुणिर्धीमान् तथा देव ऋतंजयः ॥
कृतंजयो भरद्वाजो गौतमः कविसत्तमः ।
वाजश्रवा मुनिश्चैव तथा शुष्मायणो मुनिः ॥
तृणबिन्दुस्तथा ऋक्षः शक्तिः पाराशरस्तथा ।
जातूकर्ण्योऽथ विष्णुश्च स्वयं द्वैपायनो मुनिः॥
अश्वत्थाममुखाश्चैते भविष्याः सूचितास्तव ॥

चतुर्णां वेदानामुत्पत्तिः

[3]शब्दब्रह्म परं ब्रह्म नानयोर्भेद इष्यते ।
लये तु एकमेवेदं सृष्टौ भेदः प्रवर्तते ॥
अन्योन्यापेक्षिणौ भूप शब्दार्थौ हि परस्परम्।
अर्थाभावे न शब्दोऽस्ति शब्दाभावे न बुध्यते॥
अर्थस्तस्माच्चतुर्वेदाः शब्दा ह्यर्थाश्च तादृशाः।
ऋग्वेदरूपी हलधृक्सामवेदो नृकेसरी ॥
यजुर्मूर्तिस्त्वियं भद्रा चक्रमाथर्वणं स्मृतम् ।
वेदश्चतुर्धाभेदोऽयमेकराशिरभेदतः ॥
[4]ऋग्वेदं वदनात्पूर्वाद्यजुर्वेदं च दक्षिणात् ।
ससर्ज पश्चिमात्साम सौम्याच्चाथर्वसंज्ञितम् ॥

(१) स्कन्द. १।२।४०।१९७–१९८.
(२) स्कन्द. १।२।४०।२०३–२०८.
(३) स्कन्द. २।२।२८।४२–४५.
(४) स्कन्द. २।९।२४।४०.

[1]स आत्मभूः सृजद्विश्वं चतुर्भिर्वदनैर्विराट् ।
ससर्ज वेदांश्चतुरो लोकानां स्थितिहेतवे ॥

व्यासः पाराशर्यो विष्णोरवतारः वेद-
विभागोपदेष्टा शिष्येभ्यः

[2]अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ।
अथर्वाणं द्वादशधा भित्त्वा शाखा अवाक्लृपत् ॥

शाकल्येन गुरुणा याज्ञवल्क्यस्य कलहः ,
आदित्यात् गुरोः वेदोपदेशश्च

[3]आसीद्ब्राह्मणशार्दूलः शाकल्य इति विश्रुतः ।
भार्गवान्वयसंभूतो वेदवेदाङ्गपारगः ॥
बृहत्कल्पे पुरा विप्रा वर्धमाने पुरोत्तमे ।
बहुशिष्यसमायुक्तो वेदाध्ययनतत्परः ॥
स सदा प्रातरुत्थाय विद्यादानं प्रयच्छति ।
शिष्येभ्यश्चानुरूपेभ्यः प्रसादाद्द्विजसत्तमाः ॥
चकार स तदा विप्राः पौरोहित्यं महीपतेः ।
सूर्यवंशप्रसूतस्य सुप्रियस्य महात्मनः ॥
स तस्य धर्मकृत्यानि सर्वाण्येव दिने दिने ।
कृत्वा स्वगृहमभ्येति पूजितस्तेन भूभुजा ॥
एकं शिष्यं समारोप्य शान्त्यर्थं तस्य भूपतेः ।
कथयित्वा प्रमाणं च विधानं होमसंभवम् ॥
शिष्योऽपि सकलं कृत्वा तत्कर्म सुसमाहितः ।
आशीर्वादं प्रदत्त्वा च भूपतेर्गृहमेति च ॥
एवं प्रकुर्वतस्तस्य शाकल्यस्य महात्मनः ।
पौरोहित्यं गतः कालः कियन्मात्रो द्विजोत्तमाः॥
तदा वैवाहिके काले शप्तो यः शम्भुना स्वयम्।
सुनिन्द्यां विकृतिं दृष्ट्वा तस्य वेद्यां गतस्य च॥
अथ तं योजयामास शान्त्यर्थं नृपमन्दिरे ।
याज्ञवल्क्यं स शाकल्यः प्रतिपद्यागतं तदा ॥

(१) स्कन्द. ३।३।२१।१६.
(२) संग. १९.
(३) स्कन्द. ६।१२९।५–७०.

सोऽपि तारुण्यगर्वेण वेश्याकरजविक्षतः ।
सर्वाङ्गेषु मुनिर्लज्जः प्रकटाङ्गो जगाम वै ॥
ततश्च शान्तिकं कृत्वा जपान्ते भूपतिं च तम् ।
शान्तोदकप्रदानाय हस्यमानो जनैर्ययौ ॥
पार्थिवोऽपि च तं दृष्ट्वा तादृग्रूपं विटं द्विजम् ।
माऽऽशीर्जग्राह तेनोक्तां वाक्यमेतदुवाच ह ॥
उच्छिष्टोऽहं द्विजश्रेष्ठ शय्यारूढो व्यवस्थितः ।
अत्र शालोद्भवे स्तम्भे तस्मादेतज्जलं क्षिप ॥
सोऽपि सावज्ञमाज्ञाय तं भूपं कुपिताननः ।
तं च स्तम्भं समुद्दिश्य ध्यात्वा तद्ब्रह्म शाश्वतम् ॥
यां त्वमालिखय इत्येव प्रोक्त्वा मन्त्रं च याजुषम् ।
प्राक्षिपच्छान्तिकं तोयं तस्य मूर्धनि सत्वरम् ॥
ततः स पतिते तोये स्तम्भः पल्लवशोभितः ।
तत्क्षणादेव संजज्ञे फलपुष्पैर्विराजितः ॥
तं दृष्ट्वा पार्थिवः सोऽथ विस्मयोत्फुल्ललोचनः ।
पश्चात्तापं विधायाथ वाक्यमेतदुवाच ह ॥
अभिषेकं द्विजश्रेष्ठ ममापि त्वं प्रयच्छ भोः ।
अनेनैव तु मन्त्रेण शुचित्वं मे व्यवस्थितम् ॥

याज्ञवल्क्य उवाच–

ममाभिषेकदानस्य त्वमनर्होऽसि पार्थिव ।
तस्माद्यास्याम्यहं सद्यो यत्रस्थः स गुरुर्मम ॥

राजोवाच–

तव दास्यामि वस्त्राणि वाहनानि वसूनि च ।
तस्माद्यच्छाभिषेकं मे मन्त्रेणानेन सांप्रतम् ॥

याज्ञवल्क्य उवाच–

न होमान्तं विना मन्त्रः स्फुरते पार्थिवोत्तम ।
अभिषेकविधौ प्रोक्तो यः पूर्वं पद्मयोनिना ।
तस्मान्नाहं करिष्यामि तव यद्वै हृदि स्थितम् ॥
इत्युक्त्वा वचनं भूपं याज्ञवल्क्यः स वै द्विजः ।
जगाम स्वगृहं तूर्णं निःस्पृहत्वं समाश्रितः ॥

अपरेऽह्नि समायातं शाकल्यमथ भूपतिः ।
प्रोवाच प्राञ्जलिर्भूत्वा विनयावनतः स्थितः ॥
यस्त्वया प्रेषितः कल्ये शिष्यो ब्राह्मणसत्तमः ।
शान्त्यर्थं प्रेषणीयश्च भूयोऽप्येवं गृहे मम ॥
बाढमित्येव स प्रोक्त्वा ततो गत्वा निजालयम् ।
याज्ञवल्क्यं समाहूय ततः प्रोवाच सादरम् ॥
अद्यापि त्वं नरेन्द्रस्य शान्त्यर्थं भवने व्रज ।
विशेषात्पार्थिवेन्द्रेण समाहूतोऽसि पुत्रक ॥

याज्ञवल्क्य उवाच–

नाहं तात गमिष्यामि शान्त्यर्थं तस्य मन्दिरे ।
अवलेपेन युक्तस्य श्रुद्धया विरहितस्य च ॥
मया तस्याभिषेकार्थं सलिलं चोद्यतं च यत् ।
सलिलं तेन तत्काष्ठे समादिष्टं कुबुद्धिना ॥
ततो मयाऽपि तत्रैव तत्क्षणात्सलिलं च यत् ।
तस्मिन्काष्ठे परिक्षिप्तं नीतं वृद्धिं च तत्क्षणात् ॥

शाकल्य उवाच–

अत एव विशेषेण समाहूतोऽसि पुत्रक ।
तस्मात्तत्र द्रुतं गच्छ नावज्ञेया महीभुजः ॥
अपमानाद्भवेन्मानं पार्थिवानामसंशयम् ।
यः करोति पुनस्तत्र मानं न स भवेत्प्रियः ॥
कोपप्रसादवस्तूनि विचिन्वन्तीह ये सदा ।
आरोहन्ति शनैर्भृत्या धुन्वन्तमपि पार्थिवम् ॥
समौ मानापमानौ च चित्तज्ञः कालवित्तथा ।
सर्वसहः क्षमी विज्ञः स भवेद्राजवल्लभः ॥
अपमानमनादृत्य तस्माद्गच्छ नृपालयम् ।
ममाऽऽज्ञाऽपि न लङ्घ्या त एष धर्मः सनातनः ॥

याज्ञवल्क्य उवाच–

आज्ञाभङ्गो ध्रुवं भावी परिपाटीव्यतिक्रमात् ।
करोषि यदि शिष्याणां ये त्वया तत्र योजिताः ॥
तस्माद्यदि बलान्मां त्वं योजयिष्यसि तं प्रति ।
त्वां त्यक्त्वाऽन्यत्र यास्यामि यतः प्रोक्तं महर्षिभिः ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथे वर्तमानस्य परित्यागो विधीयते ॥
सूत उवाच–
तस्य तद्वचनं श्रुत्वा शाकल्यः क्रोधमूर्छितः ।
ततः प्रोवाच तं भूयो भर्त्सयमानो मुहुर्मुहुः ॥
एकमप्यक्षरं यत्र गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा ह्यनृणी भवेत् ॥
तस्माद्गच्छ द्रुतं दत्त्वा मदध्ययनमालयम् ।
त्यक्त्वा विद्यां मया दत्तां नो चेच्छप्स्याम्यहं तव ॥
एवमुक्त्वाऽभिमन्त्र्याथ नादबिन्दुसमुद्भवैः ।
मन्त्रैराथर्वणैस्तोयं पानार्थं चार्पयत्ततः ॥
सोऽपिबत्तत्क्षणात्तोयं तत्पीत्वा व्याकुलेन्द्रियः ।
उद्गिरद्भ्रान्तिधर्मेण तत्त्वविद्याविमिश्रितम् ॥
ततः प्रोवाच तं भूयः शाकल्यं कुपिताननः ।
एकमप्यक्षरं नास्ति तावकीयं ममोदरे ॥
तस्माच्छिष्योऽस्मि ते नाहं न च मे त्वं गुरुः स्थितः ।
सांप्रतं स्वेच्छयाऽन्यत्र प्रयास्यामि करोषि किम् ॥
एवमुक्त्वाऽथ निर्गत्य तस्मात्स्थानाच्चिरन्तनात् ।
पप्रच्छ मानवान्भूयः सिद्धिक्षेत्राणि चासकृत् ॥
ततस्तस्य समादिष्टं क्षेत्रमेतन्मनीषिभिः ।
सिद्धिदं सर्वजन्तूनां न वृथा स्यात्कथंचन ॥
आस्तां तावत्तपस्तप्त्वा व्रतं नियममेव वा ।
हाटकेश्वरजे क्षेत्रे सिद्धिः संवसतोऽपि च ॥
येन येन च भावेन तत्र क्षेत्रे वसेज्जनः ।
तस्यानुरूपिणी सिद्धिः शुभा स्याद्यदि वाऽशुभा ॥
तच्छ्रुत्वा च द्रुतं प्राप्य क्षेत्रमेतद्द्विजोत्तमाः ।
भानुमाराधयामास स्थापयित्वा ततः परम् ॥
नियतो नियताहारो ब्रह्मचर्यपरायणः ।
गायत्रं न्यासमासाद्य निर्विकल्पेन चेतसा ॥
ततश्च भगवांस्तुष्टो वर्षान्ते तमुवाच सः ।
दर्शने तस्य संस्थित्वा तेजः संयम्य दारुणम् ॥
याज्ञवल्क्य वरं ब्रूहि यत्ते मनसि रोचते ।
सर्वमेव प्रदास्यामि नादेयं विद्यते त्वयि ॥
याज्ञवल्क्य उवाच–
यदि तुष्टः सुरश्रेष्ठ वेदाध्ययनसंभवे ।
गुरुर्भव ममाद्यैव ममैतद्वाञ्छितं हृदि ॥
भास्कर उवाच–
अहं तव कृपाविष्टस्तेजः संहृत्य तत्परम् ।
ततश्चात्र समायातस्तेन नो दह्यसे द्विज ॥
तस्मादत्रैव कुण्डे च मन्त्रान्सारस्वताञ्छुभान् ।
वेदोक्तान्क्षेपयिष्यामि स्वयमेव द्विजोत्तम ॥
तत्र स्नात्वा शुचिर्भूत्वा यत्किंचिद्वेदसंभवम् ।
पठिष्यसि सकृत्तत्ते कण्ठस्थं संभविष्यति ॥
तत्त्वार्थं प्रकटं कृत्स्नं विदितं ते भविष्यति ।
मत्प्रसादान्न संदेहः सत्यमेतन्मयोदितम् ॥
अद्यादि मानवः प्रातः स्नात्वा त्वत्र ह्रदे च यः ।
सावित्रेण च सूक्तेन मां दृष्ट्वा प्रपठिष्यति ।
तस्मै तत्स्यादसंदिग्धं यत्तवोक्तं मया द्विज ॥
याज्ञवल्क्य उवाच–
एवं भवतु देवेश यत्त्वयोक्तं वचोऽखिलम् ।
परं मम वचोऽन्यच्च तच्छृणुष्व ब्रवीमि ते ॥
नाहं मनुष्यधर्माणमुपाध्यायं कथंचन ।
करिष्यामि जगन्नाथ कृपां कुरु ममोपरि ॥
ततस्तस्य ददौ सूर्यो लघिमां नाम शोभनाम् ।
विद्यां हि तत्प्रभावाय सुतुष्टेनान्तरात्मना ॥
ततस्तं प्राह कर्णान्ते ममाश्वानां प्रविश्य वै ।
अभ्यासं कुरु विद्यानां वेदाध्ययनमाचर ॥
मन्मुखाद्ब्राह्मणश्रेष्ठ यद्येतत्तव वाञ्छितम् ।
न ते स्याद्येन दोषोऽयं मम रश्मिसमुद्भवः ॥
एवमुक्तः स तेनाथ वाजिकर्णं समाश्रितः ।
लघुर्भूत्वाऽपठद्वेदान्भास्करस्य मुखात्ततः ॥
एवं सिद्धिं समापन्नो याज्ञवल्क्यो द्विजोत्तमाः ॥

अनेकधाभूतो वेद एकः

'आकाशसंभवो वेद एक एव पुराऽभवत् ।
ततो यजुःसामसंज्ञामृग्वेदः ‡प्राप भूतये ॥

सूतसंहिता

वेदः एक एव शाखाभेदैरनन्तश्च महेश्वराश्रितः

'एक एव द्विजा वेदो वेदार्थश्चैक एव तु ॥

सर्वोऽयमेक एव वेदस्तत्कुतः परस्परविरोधः ? न चैवं स्ववचनव्याघातः, षोडशिग्रहणाग्रहणवचनवद्विकल्पाभिप्रायत्वादित्यर्थः । तादी.

तथापि मुनिशार्दूलाः शाखाभेदेन भेदितः ।
अनन्ता वै द्विजा वेदा वेदार्थोऽपि द्विजोत्तमाः ॥

कथं तर्हि भेदव्यवहारः ? – 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।' इति स्मृतिः, 'वेदा वा एते । अनन्ता वै वेदाः' इति च श्रुतिः, इत्यत आह – तथापीति । एकस्याप्यपरिमितस्य वेदस्य केनचिदप्येकेन पुरुषेणाध्येतुं तदर्थस्य चानुष्ठातुमशक्यत्वादेकं वेदमृग्यजुःसामाथर्वभेदेन चतुर्धा विभज्य तत्रैकैकः पुनरैतरेयादिशाखाभेदेन भेदित इत्यर्थः । तादी.

अनन्तो वेदवेद्यस्य शंकरस्य शिवस्य तु ।
मायया न स्वरूपेण द्विजा हा देववैभवम् ॥

ननु वेदशाखा एव वेदसं(?समा)ख्याताः, कथं तर्हि 'एक एव रुद्रो न द्वितीयाय तस्थे' इति तैत्तिरीयकश्रुतिः ? 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्यथर्वशिरसि वचनम्, इत्यत आह– वेदवेद्यस्येति । मायया न स्वरूपेणेति । परमार्थतो ऽद्वितीयो रुद्र इत्युक्तम् । अतस्तेनैव लीलया निर्मितस्य मायामयस्य न वास्तवेन तदद्वैतेन विरोध इत्यर्थः । नन्वेतादृशी लीला क्वचिदपि लोके न दृष्टचरीत्यत आह– द्विजा हा देववैभवमिति । 'अह हेत्यद्भुते खेदे' इत्यभिधानम् । अन्यत्रादृष्टत्वमद्भुतस्यालंकारः, न दूषणमित्यर्थः । तादी.

व्यासजन्म, व्यासेन चतुर्धा कृतो वेदः चतुर्भ्यः शिष्येभ्य उपदिष्टः

ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदानात्मन्येव स्थितानिमान् ॥

नन्वपौरुषेया वेदाः, 'वाचा विरूपनित्यया', 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।' इति श्रुतिस्मृती, इति ते कथं निर्मिताः ? कश्चैता एतावतीर्ग्रहीष्यति ? यस्य कृते निर्मीयेरन्नित्यत आह– ब्रह्माणं मुनयः पूर्वमिति । स्वयमेव लीलया सकलवेदग्रहणसमर्थं ब्रह्माणं निर्माय स्वात्मनि नित्यमवस्थिता एव वेदास्तस्मै दत्ता इत्यर्थः । न च नित्यसिद्धवेदसमर्पणे शिवस्योपाध्यायतुल्यता । उपाध्यायो हि स्वयमन्यतो लब्ध्वा शिष्यानध्यापयति, शिवस्तु नैवमन्यतोऽधीते, स्वात्मनि नित्यमवस्थितानामेव तेषां ब्रह्मद्वारा संप्रदायं प्रवर्तयति, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।' इति स्थितानामेव वेदानां प्रापणश्रुतेः । तादी.

---

‡ अत्र ऋग्वेदशब्दस्य प्रथमान्तत्वेन प्रासिकर्तृत्वात् मूलभूतैकवेदस्य ऋगभिधानत्वं प्रतीयते । तच्च 'एक आसीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत्' । (विष्णु. ३।४।११) इति विष्णुपुराणेन विरुद्धम् । तत्र यदि ऋग्वेदशब्दस्य प्रथमान्तत्वे लेखकादिप्रमादसंभवात् द्वितीयान्तत्वं परिकल्प्य ऋग्वेदशब्दस्य ऋग्वेदेतिसंज्ञापरत्वं किंचित्क्लेशेनाङ्गीक्रियते, तदा विरोधः परिहृतो भवति । यदा तु प्रथमान्त एव पाठः प्रामाणिकस्तदा पारंपारिकसमन्वयसिद्धान्तपक्षे मूलैकवेदस्य ऋगादिनामभ्यो व्यतिरिक्तस्यासाधारणनाम्नः कुत्राप्यदर्शनात्, 'ऋचो अक्षरे परमे व्योमन्' इति मन्त्रे मूलैकवेदस्य ऋगभिधानत्वदर्शनाच्च तस्य ऋगादिनामविषये मुनेः स्वतन्त्रेच्छत्वं परिकल्प्य एकस्मिन् कल्पे ऐच्छिकविकल्पस्य कल्पभेदेन व्यवस्थितविकल्पस्य वा कल्पनेन विरोधः परिहरणीयः । व्यस्तरूपाणां वेदविशेषाणामृगादिसंज्ञकत्वेऽपि मूलैकवेदस्य ऋगादिसंज्ञकत्वं न विरुध्यते, तत्तद्गुणविशेषप्रयुक्तानामृगादिसंज्ञानां व्यस्तवेदेषु प्रवृत्तेस्तत्तद्गुणविशेषनिमित्तकत्वात्, सर्वगुणविशेषवति मूलैकवेदे तु ऋगादिसंज्ञाप्रवृत्तेस्तत्तद्गुणविशेषविषये तत्तद्वेदस्य प्राधान्यं विवक्षाधीनमनुरुध्य प्राधान्यनिमित्तकत्वात् ।

(१) स्कन्द. ६।२३९।८–९.

(२) सूसं. १।१।३७–४०, ४२–४६, ४८–४९.

**विष्णुर्विश्वजगन्नाथो विश्वेशस्य शिवस्य तु ।**
**आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम ॥**

व्यासेन पुराणानां प्रणयनं प्रागुक्तम् । तस्य तु विष्णोरवतारत्वमिदानीमाह— विष्णुर्विश्वजगन्नाथ इति । तादी.

**स पुनर्देवदेवस्य प्रसादादम्बिकापतेः ।**
**संक्षिप्य सकलान्वेदांश्चतुर्धा कृतवान्द्विजाः ॥**

न केवलं वेदोपबृंहणाय पुराणप्रणयनम्, महतो वेदस्याल्पबुद्धिभिर्दुरवगाह्यत्वात्तत्तच्छाखाविभागं कृत्वा संप्रदायप्रवर्तनमपि तेनैव कृतमित्याह— स पुनर्देवदेवस्येति । तादी.

**ऋग्वेदः प्रथमः प्रोक्तो यजुर्वेदस्ततः परः ।**
**तृतीयः सामवेदाख्यश्चतुर्थोऽथर्व उच्यते ॥**

अथर्वशब्दोऽकारान्तोऽप्यस्ति, 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति प्रयोगात् । तेन लोके प्राचुर्येण प्रोक्तत्वाद्वेदोऽप्यथर्वः । § प्रोक्तार्थे वाऽणि कृते 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिप्रकृतिभावयोरभावः । तादी.

प्रतिवेदं शाखाभेदाः

**एकविंशतिभेदेन ऋग्वेदो भेदितोऽमुना ।**
**यजुर्वेदो द्विजा एकशतभेदेन भेदितः ॥**
**नवधा भेदितोऽथर्ववेदः साम सहस्रधा ।**
**व्यस्तवेदतया व्यास इति लोके श्रुतो मुनिः ॥**

गीतिविशेषः साम । 'गीतिषु सामाख्या' इति हि जैमिनिः । तदाश्रयमन्त्रयोगाद्वेदोऽपि साम । उक्ते वेदविभागे व्यासनामनिर्वचनमेव प्रमाणमाह— व्यस्तवेदतयेति । वेदान्विभज्याऽऽसमन्ताच्छिष्येभ्यो व्यस्यतीति व्यासः । व्याङावुपसर्गौ, पचाद्यच् । व्यस्ता वेदाः शिवेनैव कर्त्रा महर्षिरूपेण निजेनैवावतारान्तरेण करणेनेति करणे वा घञ् । तादी.

**तस्य शिष्या महाभागाश्चत्वारो मुनिसत्तमाः ।**
**अभवन्स मुनिस्तेभ्यः पैलादिभ्योऽददाच्छ्रुतीः ॥**
**तेभ्योऽधीता श्रुतिः सर्वैः साध्वी विप्राः सनातनी ।**
**तया वर्णाश्रमाचारः प्रवृत्तो वेदवित्तमाः ॥**

पैलादिभ्यः पैलवैशम्पायनजैमिनिसुमन्तुभ्यः चतुरो वेदान् दत्त्वा ते तत्प्रवर्तने नियुक्ताः । तादी.

## वराहपुराणम्

शुक्लयजुर्वेदः आदित्यात् याज्ञवल्क्यः प्राप्तवान्

**[1]द्वापरादौ ततो योगी पाराशर्यो महातपाः ।**
**अवतीर्याथ तान्वेदान्स्वशिष्येभ्य उवाच ह ॥**
**भाविवृत्तान्तमाज्ञाय त्रिकालज्ञो मुनिस्तदा ।**
**यजूंष्ययातयामानि सूर्यमभ्याप्य निक्षिपत् ॥**
**छर्दित्वा याज्ञवल्क्योऽथ च्छन्दांस्यथ गवेषयन् ।**
**गुरोरविद्यमानानि उपतस्थे दिवाकरम् ॥**
**सूर्यं प्रसाद्य कालेन प्राप तस्माद्यजुर्गणम् ।**
**शुक्लान्ययातयामानि यजूंषि प्राप्य भास्वतः ॥**
**शाखाः शुक्ले पञ्चदश कण्वाद्याश्च महामुनिः ॥**

## कूर्मपुराणम्

चतुरो वेदान् ब्रह्मा स्वमुखचतुष्टयात् सृष्टवान्

**[2]ततः स भगवान् ब्रह्मा .... .... ॥**
**गायत्रं च ऋचश्चैव त्रिवृत्स्तोमं रथन्तरम् ।**
**अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥**

§ अकारान्ताथर्वशब्दस्य लक्षणया वेदपरत्वमिति पक्षमुक्त्वा, अथेदानीमनेन ग्रन्थेन 'अथर्वन्' इतिनान्तशब्दप्रकृतिकस्य प्रोक्तार्थाण्प्रत्ययान्तस्य 'अथर्वः' इति शब्दस्य शक्त्यैव वेदपरत्वमिति पक्षोऽथर्वशब्दे वृद्धिप्रकृतिभावाभावप्रसाधनेनोच्यते । अत्रेदं बोध्यम्— 'अन्' इति सूत्रेण कृतः 'अणि अन् प्रकृत्या स्यात्' इति विधिः प्रकृतिशब्दस्य स्वरूपशब्दपर्यायत्वे न संज्ञापूर्वक इत्युक्तपरिभाषाश्रयणेन प्रकृतिभावाभावो न सिध्यति । अतः प्रकृतिशब्दोऽत्र प्रकृतिव्यापकविकृत्यभावे लाक्षणिकः । विकृतिश्चात्र टिलोपः । तेन 'प्रकृत्या स्यात्' इत्यस्य 'टिलोपाभावेनोपलक्षितः स्यात्' इत्यर्थः । तथा च प्रकृतिभावविधेष्टिसंज्ञापूर्वकत्वादुक्तपरिभाषाविषयत्वमस्ति । एवमयं व्याख्यातुरभिप्रायोऽत्र प्रतिभाति ।

(१) संग. २२–२३.
(२) कूर्म. १।७।५१, ५७–६०.

यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा ।
बृहत्साम तथोक्थं च दक्षिणादसृजन्मुखात् ॥
सामानि जागतं छन्दः स्तोमं सप्तदशं तथा ।
वैरूपमतिरात्रं च पश्चिमादसृजन्मुखात् ॥
एकविंशमथर्वाणमाप्तोर्यामानमेव च ।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥

प्रतियुगपर्यायं वेदभेदोपदेष्टारोऽष्टाविंशतिर्व्यासास्तेषां नामानि च, कृष्णद्वैपायनेन पञ्चभ्यः शिष्येभ्यो वेदोपदेशः

[1]एको वेदश्चतुष्पादस्त्रेतास्विह विभाव्यते ॥
वेदव्यासैश्चतुर्धा च न्यस्यते द्वापरादिषु ।
ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ॥
मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ।
संहिता ऋग्यजुःसाम्नां प्रोच्यन्ते परमर्षिभिः ॥
सामान्योद्भावना चैव दृष्टिभेदैः क्वचित्क्वचित् ।
ब्राह्मणं कल्पसूत्राणि ब्रह्मप्रवचनानि च ॥
इतिहासपुराणानि धर्मशास्त्राणि सुव्रत ॥

सूत उवाच–

[2]अस्मिन्मन्वन्तरे पूर्वं वर्तमाने महान् प्रभुः ।
द्वापरे प्रथमे व्यासो मनुः स्वायंभुवो मतः ॥
बिभेद बहुधा वेदं नियोगाद्ब्रह्मणः प्रभोः ।
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥
तृतीये चोशना व्यासश्चतुर्थे स्याद्बृहस्पतिः ।
सविता पञ्चमे व्यासः षष्ठे मृत्युः प्रकीर्तितः ॥
सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे मतः ।
सारस्वतश्च नवमे त्रिधामा दशमे मतः ॥
एकादशे तु ऋषभः सुतेजा द्वादशे स्मृतः ।
त्रयोदशे तथा धर्मः सुचक्षुस्तु चतुर्दशे ॥
त्र्यारुणिः पञ्चदशे षोडशे तु धनंजयः ।
कृतंजयः सप्तदशे ह्यष्टादशे ऋतंजयः ॥

ततो व्यासो भरद्वाजस्तस्मादूर्ध्वं तु गौतमः ।
वाचश्रवाश्चैकविंशे तस्मान्नारायणः परः ॥
तृणबिन्दुस्त्रयोविंशे वाल्मीकिस्तत्परः स्मृतः ।
पञ्चविंशे तथा प्राप्ते यस्मिन्वै(? शक्तिर्वै) द्वापरे द्विजाः ॥
$सप्तविंशे तथा व्यासो जातूकर्णो महामुनिः ।
पराशरसुतो व्यासः कृष्णद्वैपायनोऽभवत् ।
स एव सर्ववेदानां पुराणानां प्रदर्शकः ॥
पाराशर्यो महायोगी कृष्णद्वैपायनो हरिः ।
आराध्य देवमीशानं दृष्ट्वा स्तुत्वा त्रिलोचनम् ।
तत्प्रसादादसौ व्यासं वेदानामकरोत्प्रभुः ॥
अथ शिष्यान् स जग्राह चतुरो वेदपारगान् ।
जैमिनिं च सुमन्तुं च वैशम्पायनमेव च ॥
पैलं तेषां चतुर्थं च पञ्चमं मां महामुनिः ।
ऋग्वेदपाठकं पैलं जग्राह स महामुनिः ।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥
जैमिनिं सामवेदस्य पाठकं सोऽन्वपद्यत ।
तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम् ।
इतिहासपुराणानि प्रवक्तुं मामयोजयत् ॥
एक आसीद्यजुर्वेदस्तं चतुर्धा प्रकल्पयत् ।
चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमथाकरोत् ॥
आध्वर्यवं यजुर्भिः स्यादृग्भिर्होत्रं (? स्यादृग्भिर्होत्रं) द्विजोत्तमाः ॥
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ॥

(१) कूर्म. १।२९।४३–४७.
(२) कूर्म. १।५२।१–२१.

$ इदमर्धमादर्शपुस्तके कंसचिह्नमध्ये मुद्रितम्, तत्र हेतुस्तु संपादकेन नोक्तः। इतः पूर्वं षड्विंशद्वापरीयव्यासप्रतिपादकमर्धमुच्छिन्नमिति प्रतीयते। विष्णुपुराणे पराशरः षड्विंशो व्यासः उक्तः। उत्तरश्लोकेऽष्टाविंशद्वापरबोधकपदाभावात् संदर्भो विच्छिन्न इव प्रतिभाति। अतस्तत्र व्यासपदस्थाने 'तस्मात्' इति पाठः संभाव्यते। अत्र संगृहीतपूर्वं (बका. पृ. ३३१–३३२) विष्णुपुराणोक्तं व्यासानुक्रमणमनुसंधेयम्।

वेदशाखाविस्तारः

ततः सत्रे च (? ऋचश्च) उद्धृत्य ऋग्वेदं कृतवान् प्रभुः।
यजूंषि तु यजुर्वेदं सामवेदं तु सामभिः॥
एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा।
शाखानां तु शतेनैव यजुर्वेदमथाकरोत्॥
सामवेदं सहस्रेण शाखानां प्रबिभेद सः।
अथर्वाणमथो वेदं बिभेद नवकेन तु॥
भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः।
सोऽयमेकश्चतुष्पादो वेदः पूर्वं पुरातनः॥

## भविष्यपुराणम्

ब्रह्मणश्चतुर्भ्यो मुखेभ्यो चत्वारो वेदा ऋषिभिर्गृहीताः

[1]मुखानि यानि चत्वारि तेभ्यो वेदा विनिःसृताः।
ऋग्वेदसंहिता तात वसिष्ठेन महात्मना॥
पूर्वान्मुखान्महाबाहो दक्षिणाच्चापि वै शृणु।
यजुर्वेदो महाराज याज्ञवल्क्येन वै सह॥
सामानि पश्चिमात्तात गौतमश्च महानृषिः।
अथर्ववेदो राजेन्द्र मुखाच्चाप्युत्तरान्नृप।
ऋषिश्चापि तथा राजञ्छौनको लोकपूजितः॥

स्वशाखानुक्तम् अन्यशाखोक्तं ग्राह्यम्

[2]यच्चाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा॥

## नारदपुराणम्

विष्णोरवतारः वेदव्यासः वेदविभागकर्ता

[3]युगे युगेऽल्पकान्धर्मान्निरीक्ष्य मधूसूदनः।
वेदव्यासस्वरूपेण वेदभागं करोति वै॥

(१) भविष्य. १।२।४१-४२, ५२-५५.
(२) स्मृ. ४.
(३) नारद. १।१।१७.

स्वगृह्योक्तमेव ग्राह्यम्

[1]स्वगृह्यप्रोदितं कर्म द्विजः कुर्वन् कृती भवेत्।
अन्यथा पतितो भूयात्सर्वधर्मबहिष्कृतः॥

वेदशाखाविस्तरः

[2]यजुर्वेदमहाकल्पतरोरेकशतं स्मृताः।
शाखास्तत्र शिवाकारा दश पञ्चाथ शुक्लगाः।
तत्रापि मुख्या प्रथमा शाखा वै काण्वसंज्ञिका॥

## अग्निपुराणम्

वेदशाखाविस्तरः

[3]... ... ... ... ... वेदो वाजसनेयकः।
दश पञ्च च शाखा वै प्रमाणेन भविष्यति॥
[4].... ... हरिर्वेदं द्वापरान्ते बिभेद सः।
आद्यो वेदश्चतुष्पादः शतसाहस्रसंमितः॥
एकश्चाऽऽसीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत्।
आध्वर्यवं यजुर्भिस्तु ऋग्भिर्हौत्रं तथा मुनिः।
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः॥
प्रथमं व्यासशिष्यस्तु पैलो ह्यृग्वेदपारगः।
इन्द्रप्रमतये प्रादाद्बाष्कलाय च संहिताम्।
बौध्यादिभ्यो ददौ सोऽपि चतुर्धा निजसंहिताम्॥
यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः।
वैशम्पायननामाऽसौ व्यासशिष्यश्चकार वै।
काण्वा वाजसनेयाद्या याज्ञवल्क्यादिभिः स्मृताः॥
सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः।
सुमन्तुश्च सुकर्मा च एकैकां संहितां ततः।
गृह्णते च सुकर्माख्यः सहस्रं संहितां गुरुः॥
सुमन्तुश्चाथर्वतरुं व्यासशिष्यो बिभेद तम्।
शिष्यानध्यापयामास पैप्पलादीन्सहस्रशः॥

(१) नारद. १।२४।१०.
(२) संग. २३.
(३) अग्नि. १६।६.
(४) अग्नि. १५०।२३-३०.

पुष्कर उवाच—

[1]सर्वानुग्राहका मन्त्राश्चतुर्वर्गप्रसाधकाः ।
ऋगथर्वं तथा साम यजुः संख्या तु लक्षकम् ॥
भेदः सांख्यायनश्चैक आश्वलायनो द्वितीयकः ।
शतानि दश मन्त्राणां ब्राह्मणा द्विसहस्रकम् ॥
ऋग्वेदो हि प्रमाणेन स्मृतो द्वैपायनादिभिः ।
एकोनद्विसहस्रं तु मन्त्राणां यजुषस्तथा ॥
शतानि दश विप्राणां षडशीतिश्च शाखिकाः ।
काण्वमाध्यंदिनी संज्ञा कठी माध्यकठी तथा ॥
मैत्रायणी च संज्ञा च तैत्तिरीयाभिधानिका ।
वैशम्पायनिकेत्याद्याः शाखा यजुषि संस्थिताः ॥
साम्नः कौथुमसंज्ञैका द्वितीयाऽथर्वणायनी ।
गानान्यपि च चत्वारि वेद आरण्यकं तथा ॥
उक्था ऊहश्चतुर्थश्च मन्त्रा नवसहस्रकाः ।
सचतुःशतकाश्चैव ब्रह्मसंघटकाः स्मृताः ॥
पञ्चविंशतिरेवात्र साममानं प्रकीर्तितम् ।
सुमन्तुर्जाजलिश्चैव श्लोकायनिरथर्वके ॥
शौनकः पिप्पलादश्च मुञ्जकेशादयोऽपरे ।
मन्त्राणामयुतं षष्टिशतं चोपनिषच्छतम् ॥
व्यासरूपी स भगवाञ्शाखाभेदाद्यकारयत् ।
शाखाभेदादयो( ? भेदमयो ) विष्णुरितिहासः पुराणकम् ॥

## शिवपुराणम्

बादरायणः वेदव्यासः वेदविभागकर्ता पञ्च-शिष्याणामुपदेष्टा

[2]स च नारायणस्यांशो भगवान् बादरायणः ।
दृष्ट्वा मन्दमतीन् मर्त्यान् कृपया परयाऽन्वितः ॥
व्यस्तवान् वेदराशींस्तु शम्भोरेव प्रसादतः ।
व्यस्ता वेदा अनेनेति वेदव्यासश्च तं विदुः ॥
बदरीषण्डवासित्वाद्बादरायण इत्यपि ।
चतुर्धा वेदराशिस्तु कृतस्तेन महात्मना ॥
ऋग्वेदः प्रथमस्तत्र द्वितीयो यजुरुच्यते ।
तृतीयः सामवेदस्तु चतुर्थोऽथर्वणः स्मृतः ॥
इतिहासपुराणं च पञ्चमो वेद उच्यते ।
इमानभ्यास( ? ध्याप )यामास पैलादीन्भगवान्मुनिः ॥
ऋग्वेदस्य प्रवक्तारं मुनिं पैलमकल्पयत् ।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥
जैमिनिं सामवेदस्य सुमन्तुं सा व्य( ? चाप्य )-थर्वणे ।
इतिहासपुराणानां वक्तृत्वे वां( ? मां ) नियुक्तवान् ॥

## संग्रहकारः ( स्मृतिसंग्रहः )

परशाखीयकर्मानुष्ठानानुमतिः

[3]यन्नाऽऽम्नातं स्वशाखायां गृह्ये वा गृह्यशेषतः ।
तद्ग्राह्यं मनवः प्राहुः पारक्यमविरोधि यत् ॥
[4]यान्यत्र कालभेदेन कर्माणि मुनयो जगुः ।
स्वस्वगृह्यानुसारेण विकल्पस्तेषु युज्यते ॥
[4]न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते ।
कर्तुमर्हन्ति ते कृत्स्नं यस्य कस्य मुनेरिति ॥

वैकल्पिकेषु स्वगृह्याद्युक्तपक्षाभावे यस्य कस्यचिदेकस्य मुनेः पक्षं स्वेच्छानुगुणं कुर्यादित्यर्थः । स्मृच. ४।३९८

[2]सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥

माध्यंदिनशाखायामनुक्तत्वात् किं छन्दोगोक्तं कार्यम्, उतान्यस्मृत्युक्तम् ? इति संदेहः । तत्रैक आहुः— परोक्तत्वाद्यत्किंचिदिच्छयेति । तथा च संग्रहकारः—

(१) अग्नि. २७१।१-१०.
(२) शिव. १२१.

(१) बाल. १।८९ पृ. २५३.
(२) स्मृच. ४।३९८.
(३) स्मृच. ४।३९८; श्राका. ५१२ कृत्स्नं यस्य कस्य मुनेरिति ( सर्वे पारस्करमुनीरितम् ).; संग. ७४ गृह्यादि ( गृह्याणि ) शेषं श्राकावत्.
(४) श्राका. ५१२; संग. ७४.

‘ सर्वेषामपि... स्वेच्छया भवेत् ॥ ’ इति । तदयुक्तम्, सूत्रपरिशिष्टयोरेककर्तृकत्वात्, तस्यान्यशाखिविषयत्वात्, पारस्करमतस्याऽऽश्रयणीयत्वाच्च । तथा च स्मृतिसंग्रहः— ‘ न गृह्यादि स्मृतिर्येषां श्राद्धादावुपलभ्यते । कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितम् ॥ ’ इति । परेषां करोतीति हि व्युत्पत्तेः । भाका. ५१२–५१३

परशाखीयानुष्ठाननिषेधः

‘[1]यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥

## स्मृत्यर्थसारः

स्मार्ते कर्मणि स्वगृह्योक्तमेव ग्राह्यम्, श्रौते कर्मणि सर्वशाखोपसंहारः

‘[2]बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥
‘[3]श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् ।
स्मार्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु ॥

## त्रिकाण्डमण्डनम्

स्वशाखास्वसूत्रपरित्यागान्यशाखान्यसूत्रपरिग्रहादिविचारः

‘[4]स्वशाखायाः परित्यागात्तथा शाखान्तरग्रहात् ।
यो दोषः कथितस्तद्वत्कल्पान्तरपरिग्रहे ॥
‘[5]श्रौतं स्मार्तं तु यत्कर्म स्वशाखायां न विद्यते ।
बौधायनोदितं ग्राह्यं बह्वृचादिभिरादरात् ॥
‘[6]एतस्यासंभवे ग्राह्यमन्यस्माद्या(? द्य)जुषोऽपि वा ॥

कर्मणां केषांचित् त्र्यध्यधीनत्वादाध्वर्यवस्य च यजुर्वेदविहितत्वात्तस्य च बहुशाखत्वात्तेषां कुत्राधिकार इति चेत्, अत्र त्रिकाण्डमण्डनम्— ‘ श्रौतं स्मार्तं तु... द्यजुषोऽपि वा ॥ ’ इति । शौनकश्च— ‘ यजुषो बहुशाखत्वात्संदेहे समुपस्थिते । कां शाखामवलम्बेरंस्तादृशीं बह्वृचादयः ॥ आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् । अन्यथा पतितो ज्ञेय इति बौधायनाशयः ॥ ’ इति । यज्ञपार्श्वे त्विदमेव पठित्वा, ‘ यस्याऽऽपस्तम्बशाखीयो भवेन्मातामही यदि । तस्य बौधायनाभावे तत्सूत्राधानमिष्यते ॥ अन्यथा सूत्रदूष्यः स्यात्सर्वकर्मबहिष्कृतः ॥ ’ इत्युक्तम् । अत एव श्रौतसर्वस्वाख्ये ग्रन्थे रण्डत्रयमुक्तम् । तत्राऽऽदौ शाखारण्डः— ‘ गुरुणाऽनुष्ठितं तन्त्रं तत्पुत्रोऽपि समाचरेत् । अन्यथा कर्महानिः स्यात्प्रायश्चित्ती भवेच्च सः ॥ पितृशाखां परित्यज्य पारक्यमधिगच्छति । स शूद्रवत् ॥ † न जातु परशाखोक्तं बन्धुः कर्म समाचरेत् । आचरन् परशाखोक्तं शाखारण्डः प्रकीर्तितः ॥ येषां केषां च मर्त्यानां नान्यदध्वर्युरादिशेत् । तेषां पुत्राश्च पौत्राश्च ( नत्रेऽभ्यादिश्यते पतिः ? ) ॥ विवाहे सोमश्राद्धे च अग्न्याधाने तथैव च । एतैः स्वजातिभिः कुर्यादन्यथा पतितो भवेत् ॥ अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः । यत्रास्ति योनिसंबन्धः सूत्रशातिकुलोचितः ॥ ’ इति । बौधायनीयधर्मरहस्ये— ‘ अनुक्तविषये ब्रह्मन् कां शाखां तु समाश्रयेत् । बौधायनी बह्वृचानां यद्वा भवति तैत्तिरी ॥ सामगानां तु सर्वेषां शाखा माध्यंदिनी भवेत् । तथैवाऽऽथर्वणानां च तथा क्षत्रियवैश्ययोः ॥ प्राप्ते काले युगे घोरे शूद्रा वाजसनेयिनः ॥ ’ इति । ‘ बौधायनेन मुनिना प्रायश्चित्ततृतीयके । स्वशास्त्रविधिमुत्सृज्य परशास्त्रप्रवर्तिनः । भ्रूणहत्याकृतो दोष इत्यादि स्पष्टमीरितम् ॥ स्वशास्त्रविध्यलाभश्चेच्छतशोऽन्विष्यतः क्वचित् । अत्यन्तापदि पारक्यं कर्मलोपान्न दोषकृत् । भिन्नशाखोपनीत्याद्यं जाबालादिनिदर्शनात् ॥ ’ । अथ कल्परण्डः— ‘ शाखारण्डवदेवायं कल्परण्डः प्रकीर्तितः । ’।

(१) स्मृच. १।१३४.

(२) स्मृसार. २ ; मपा. १५ कर्म प्रचो ( यत्कर्म चो ) सारसंग्रहे.

(३) स्मृसार. २ ; मपा. १५ पूर्वार्धे ( श्रौतेषु सर्वशास्त्रोक्तं सर्वस्यैवं यथोदितम् । ) सारसंग्रहे.

(४) बाल. १।८९ पृ. २५५ तद्वत्कल्पान्तरपरिग्रहे ( सोऽपि तद्वत्कल्पान्तरग्रहः ) ; कृम. ११७१.

(५) बाल. १।८९ पृ. २५४ ; कृम. ११६९ तु ( च ) दितं ग्राह्यं ( क्तं तद्ग्राह्यं ).

(६) बाल. १।८९ पृ. २५४.

† श्लोकशेष उच्छिन्नः ।

तथा च कात्यायनः– ‘ स्वेन पित्रादिभिर्वा यः कल्पादिः पूर्वमादृतः। स तु नैव परित्याज्य इति वेदानुशासनम् ॥’। तथा च पूर्वविरुद्धः पित्रादिपरिग्रहस्तद्विरुद्धो ज्येष्ठपरिग्रहस्तदुभयविरुद्धः स्वपरिग्रहश्च त्याज्यः । तत्र दोषं त्रिकाण्डमण्डनः– ‘ स्वशाखायाः परित्यागात्तथा शाखान्तरग्रहात् । यो दोषः कथितः सोऽपि तद्वत्कल्पान्तरग्रहः(? ग्रहात् ) ॥ ’ इति । स च दोषो वसिष्ठोक्तो बौधायनोक्तश्च प्रागुक्त एव । अथ बौधायनरण्डः– ‘ कल्परण्डवदेवायं रण्डो बौधायनेन यः । तुल्यदोषमिमं रण्डत्रयमुक्तं महर्षिभिः ॥ ’ । यद्यपि ‘ यन्नाऽऽम्नातम् ’ इति कात्यायनेन सामान्यतः पारक्यग्रहणमुक्तं तथाप्याध्वर्यवाद्यर्थे बौधायनपरिग्रहावश्यकत्वम् , बहुषु ग्रन्थेषु तथोपलम्भात् । तथा च स्मृतिचन्द्रिकायाम्– ‘ आध्वर्यवं याजमानमाग्नीध्रं यस्य नोदितम् । तेन बौधायनं ग्राह्यमिति शातातपोऽब्रवीत् ॥ ’ इति । तथा श्राद्धकल्पलतायां नवश्राद्धसंख्याविप्रतिपत्तौ बौधायनवचनात्पञ्चैवेत्युक्त्वा ‘ यत्राऽऽश्वलायनेनोक्तो विशेषः कोऽपि न स्वयम् । तत्र बौधायनं ग्राह्यं बहूवृचादिभिरादरात् ॥ ’ इत्यादिवाक्येनाऽऽश्वलायना(?यनानाम )प्यर्हिततरेण बौधायनेनोक्तत्वात्पञ्चैवेत्युपसंहृतम् । तथा कालनिर्णये पर्वविचारे । वस्तुतस्तु ‘ स्वशाखीयो विशेषो हि यत्र नैवोपलभ्यते । तत्र बौधायनं ग्राह्यं बहूवृचादिभिरादरात् ॥ ’ इति वाक्येनाऽऽश्वलायनानामपि बौधायनीयविशेषस्याभ्यर्हितत्वेनाऽऽश्वलायनपदोपात्तविशेषस्य बौधायनीयविशेषैकवाक्यत्वसंभवेन सामान्यविषयताकल्पनेन बौधायनीयविशेषविरोधस्यायुक्तत्वात् , तथा बौधायनपरिग्रहाधिकारिणां स्वशाखानाम्नाताध्वर्यवयाजमानाग्नीध्रादिकर्मणां ‘ यन्नाऽऽम्नातम् ’ इति कात्यायनपर्यालोचनयैकशताध्वर्युशाखानां शाखान्तराधिकरणन्यायेन तुल्यवद्विकल्पं ‘ वैकल्पिकेष्वात्मतुष्टिः ’ इत्यन्यतमाध्वर्युशाखां तत्कल्पं वा स्वेच्छया परिजिघृक्षतां बहूवृचानां सामगानामाथर्वणानां च स्वच्छन्दपरिग्रहपरिजिहीर्षया स्मृतिचन्द्रिकाकारादिभिर्बौधायननियमार्थमुदाहृतवचननिचयेन तत्परिग्रहनियमास्तदधिकारिणस्तन्नियमातिक्रमे पूर्वोक्तरण्डद्वयवत्कथं न बौधायनरण्डत्वमिति किंचिन्न्यूनब्रह्मवधप्रायश्चित्तं तस्येति सिद्धम् । एतेन “ स्मृतिसंग्रहे– ‘ वैतानिकाग्निकार्ये यत्स्वशाखायां न विद्यते । आपस्तम्बोदितं ग्राह्यं छन्दोगादिभिरादरात् ॥ बहूवृचः सामगश्चापि कुर्यादाध्वर्यवादिकम् । आपस्तम्बेन वा प्रोक्तं तथा बौधायनेन वा ॥’, यज्ञकाण्डे– ‘बहूवृचः सामगश्चापि स्वसूत्राभावतस्तथा । आपस्तम्बेन कर्तव्यमन्यथा पतितो भवेत् ॥ ’ , तथा– ‘ यजुषो बहुशाखत्वात्संदेहे समुपस्थिते । कासु शाखासु लम्बेरंस्तादृशीषु च सामगाः ॥ आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् । आपस्तम्बेन वा प्रोक्तमिति शातातपोऽब्रवीत् ॥ प्रायशः सामगानां तु सूत्रं बौधायनीकम् ॥ ” इति कस्यचिदुक्तिः परास्ता, पूर्वोक्तसकलनिबन्धविरोधेन निर्मूलत्वात् , समूलत्वे बौधायनरण्डवदापस्तम्बरण्डस्याप्युक्तत्वा(?प्युक्त्या)पत्तेश्च, ‘ बहूवृचादिभिः ’ इति वक्तव्ये ‘ छन्दोगादिभिः ’ इत्यस्य निर्बीजत्वाच्च, स्मार्तत्यागस्यापि तथात्वाच्च । तथाशब्दासंगतेश्च, ‘यज्ञकाण्डे ’ इत्यग्रिमश्लोकद्वयानन्वितत्वस्य स्पष्टत्वाच्च । ननु क्वचिद्ग्रन्थे किंचिद्वचनमुपलभ्यत इति चेत् , कि ततः ? ‘ स्मृतिसंग्रहे ’ इत्युक्तेरेव ग्रन्थकृता तस्य निर्मूलत्वसूचनात् । विसंवादिस्मृतिसंग्रहस्य निर्मूलत्वात् तस्य मानुषत्वात् भ्रान्तेश्च तद्धर्मत्वादिति यत्किंचिदेतत् । किंच, बहूवृचानां बौधायनीयपरिग्रहेऽपि छन्दोगानां कात्यायन(? यनीय )मेव, बौधायनरहस्ये तथोक्तेः । तथा च बौधायनीयधर्मरहस्यम्– ‘ अनुक्तविषये ब्रह्मन् कां शाखां तु समाश्रयेत् । बौधायनी बहूवृचानां यद्वा भवति तैत्तिरी ॥ सामगानां तु सर्वेषां शाखा माध्यन्दिनी भवेत् । तथैवाऽऽथर्वणानां च तथा क्षत्रियवैश्ययोः ॥ प्राप्ते कलियुगे घोरे शूद्रा वाजसनेयिनः । माध्यन्दिन्यस्तु याः शाखाः सर्वसाधारणाः स्मृताः ॥ ता एव तु पुरस्कृत्वा वसिष्ठेन प्रकाशितम् । शान्तिकं पौष्टिकं चैव रामस्य गुरुणा स्वयम् ॥ ’ इति । न च पूर्ववचनविरोधः, तत्रैकत्राऽऽश्वलायनपदोक्त्या तदेकवाक्यतयाऽन्यैरपि तेषामेव तदावश्यकत्वबोधनात् ,

किंच, साङ्ख्यगोभिलानुक्तच्छन्दोगस्मार्तप्रयोगकर्तृत्वेन कात्यायनस्य प्रथमोपस्थितत्वेन विलम्बप्रतीतिकेतरापेक्षयाऽन्तरङ्गत्वात्। एवं चेदानीं बुन्देलखण्डे सामगत्वबुद्धया जाता-( ? जातमा )पस्तम्बानुष्ठान( म )प्रमाणम्। किंच, तस्य सामगत्वमेव न, द्विवेद्युपाख्यानां सामगत्वस्य कस्यामपि जातावदृष्टत्वात्, प्रत्यक्षस्य सर्वतो बलवत्त्वात्। किंच, कान्यकुब्जप्रदेशे सामगत्वा( ? सामगा )भावः। अत एव भागवते– 'जैमिनेः सामगस्याऽऽसीत्सुमन्तुस्तनयो मुनिः। सुत्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम्। सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान्॥ सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजः। हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च सुकर्मणः॥ शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः। उदीच्याः सामगाः शिष्या आसन्पञ्च शतानि वै॥ पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते॥' इति। "पौष्यञ्ज्यावन्त्ययोश्चापि। चकाराद्धिरण्यनाभस्यापि पञ्च शतानि शिष्या आसन्। एतावतीः शाखा यथायथं जगृहुः तानुदीच्यान् सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः। यथोक्तं वैष्णवे– 'उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभात्तावन्त्यः संहिता यैर्द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः॥" इति श्रीधरस्वामिनः। किंच, चरणव्यूहाख्यपरिशिष्टभाष्ये स्पष्टं वेदशाखयोर्विभाग उक्तः। तथाहि– "इतरदेशेषु वेदशाखयोर्विभाग उच्यते। तथा च महार्णवे– 'पृथिव्या मध्यरेखा या नर्मदा परिकीर्तिता। दक्षिणोत्तरयोर्भागे शाखा वेदश्च उच्यते॥ नर्मदादक्षिणे भागे आपस्तम्ब्याश्वलायनी। राणायनी पिप्पलादी यज्ञकन्याविभागिनः॥ माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा। नर्मदोत्तरभागे च यज्ञकन्याविभागिनः॥ तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि। आ आन्ध्रदेशपर्यन्तं बह्वृचस्याऽऽश्वलायनी॥ उत्तरे गुर्जरे देशे वेदो बह्वृचप्रकीर्तितः। कौषीतकिब्राह्मणं च शाखा शाङ्खायनी स्थिता॥ आन्ध्रादिदक्षिणाग्नेयी गोदा सागर आवधिः( ? )। यजुर्वेदस्तैत्तिरीया आपस्तम्बी प्रतिष्ठिता॥ सह्याद्रिपर्वतारम्भा दिशां नै( ? शाऽऽनै )ऋत्यसागरात्। हिरण्यकेशी शाखा च पर्शुरामस्य संनिधौ॥ मयूरपर्वताच्चैव यावद्गुर्जरदेशतः। व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता॥ अङ्गवङ्गकलिङ्गाश्च कानीनो गुर्जरस्तथा। वाजसनेयिशाखा च माध्यन्दिनी प्रतिष्ठिता॥ ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता। वाजसनेयिवेदस्य प्रथमा कण्वसंज्ञिका॥" इति। तथा च यद्देशवासित्वेन येषां यथानुष्ठानमुक्तं तेषां देशान्तरगमनेऽपि तथैवानुष्ठानम्, अन्यथा रण्डत्वप्रयुक्तप्रायश्चित्तापत्तिः। न चैषां निर्मूलत्वमिति वाच्यम्, महार्णवस्योपलभ्यमानत्वात्संवाद्याचारस्य तथैवोपलभ्यमानत्वाच्चेति दिक्। बाल. १।८९ पृ. २५४–२५७

## रेणुकारिकाः

पारंपारिकशास्त्रीयकर्मणः कर्तव्यता

'पारंपर्यागतो येषां वेदः सपरिबृंहणः।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा॥

परिबृंहणानि अङ्गानि। यस्य या पित्रादिक्रमागता शाखा तच्छाखीयेन कर्मणा संस्कृतः प्रथमं तां शाखामधीयीतेत्यर्थः। संग. ९

'अधीत्य शाखामात्मीयां परशाखां ततः पठेत्।
स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते॥

## गृह्यासंग्रहः

स्वशाखानुक्तस्य परशाखीयस्य सर्वसाधारणस्य च कर्मणोऽनुष्ठेयत्वम्

'आत्मतन्त्रेषु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम्।
विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः॥

तन्त्रं शास्त्रमित्यनर्थान्तरम्। आत्मनस्तन्त्रेषु यन्नोक्तम्, तत् परतन्त्रोक्तं कुर्यात्। ये च सामान्याः सर्वशाखिसाधारणाः विशेषाः 'नित्यं स्नात्वा शुचिः कुर्या-

(१) रेका. ३२।३२; संग. ९, ७२८ कुर्वीत (कर्तव्यं) गृह्यकारिकायाम्.

(२) रेका. ३२।३३; संग. ९.

(३) गृसं. २।९१; प्रभा. १।५२.

देवर्षिपितृतर्पणम् ।' इति, 'संतोषं परमास्थाय सुखार्थी संयतो भवेत् ।' इति चैवमादयः वेदवादिभिर्मन्वादिभिरुक्ताः, ते च कर्तव्याः । एवं वा— ये च साधारणा विशेषाः आचमनादयः मन्वादिभिरुक्तास्ते च कर्तव्याः । तदिदं श्रौताभिप्रायं वचनम् । कथं ज्ञायते ? 'स्मार्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु ।' इति गृह्यपरिशिष्टान्तरदर्शनात् । एवं वा— ये च सामान्याः साधारणाः परिभाषारूपा इत्येतत्, विशेषाः 'उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा' इत्येवमादयः वेदवादिभिरुक्ताः, ते च कर्तव्याः । वेदं वदितुं शीलं येषां ते इमे वेदवादिनो वेदप्रवक्तारः कठादयो भण्यन्ते । न खलु तत्रभवन्तो मन्वादयो वेदवादिनः, स्मर्तारो हि ते वेदार्थस्य । एवं वा— सामान्याः समानकर्माश्रयाः ये विशेषाः वेदवादिभिरुक्ताः, ते च करणीयाः । तदनेन शाखान्तरीयगुणानामपि शाखान्तरे उपसंहारः कर्तव्य इत्युक्तं भवति । तथा च गृह्यपरिशिष्टान्तरम्— 'श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् ।' इति । सेयं शाखान्तराधिकरणन्यायमूला स्मृतिरिति द्रष्टव्यम् । किं भवति तर्हि प्रयोजनं पूर्वार्धस्य ? ननु परार्धेनैव गुणोपसंहार उपदिष्टः । उच्यते— यदात्मतन्त्रे उपदिष्टं तत्र परतन्त्रोक्तगुणोपसंहारः परार्धस्यार्थः । यत् पुनर्नोपदिष्टमेवाऽऽत्मनस्तन्त्रे, तदपि परतन्त्रोक्तं करणीयमिति प्रयोजनं पूर्वार्धस्य । यथा खलु अग्निहोत्रमस्मच्छाखायां नोपदिष्टम्, तदपि याजुर्वैदिकमनुष्ठीयतेऽस्माभिः । तदेतत्परिशिष्टकृतः कात्यायनस्य वचनसंवादेनावधार्यते । तच्चोदाहरिष्यामः । गृसंभा.

स्वशास्त्रोक्तौ परशास्त्रीयानुष्ठाननिषेधः

**'ऊनो वाऽप्यतिरिक्तो वा यः स्वशास्त्रोक्तमाचरेत् ।**
**तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम् ॥**

(१) गृसं. २।९२; प्रभा. १।५२.

स्वशास्त्रे न्यूनो वा अधिको वा यो विधिरुक्तः, तं स्वशास्त्रोक्तं विधिमाचरेत् । तेनैव यज्ञं विस्तारयेत् । परतन्त्रोक्तं न कुर्यात् । गृसंभा.

**'यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।**
**अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥**

(१) 'ऊनो वाऽप्यतिरिक्तो वा' इति वचनं 'यः स्वशाखां परित्यज्य' इति वचनं च विरुद्धानुष्ठाननिषेधार्थम् । अथवाऽयं भावः— कस्यांचिच्छाखायां बहुवित्तव्ययायाससाध्यत्वेन निर्णीतं यत्कर्म तदेव चेदन्यस्यां शाखायामल्पवित्तव्ययायाससाध्यत्वेन प्रसिद्धम्, तत्र महाकर्मणः फलाधिक्यं मत्वा शाखान्तरदृष्टे तत्कर्मणि कश्चित्प्रवर्तेत, अलसस्तु पुनरल्पकर्मणि, तयोश्च स्वशाखोक्तकर्मपरित्यागः परोक्ताविहितकर्मनिष्पत्तिश्च स्यात्, तद्वारणाय 'ऊनो वा' इति, 'यः स्वशाखाम्' इति च । अत एव बैजवापः— 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' इति । अत एव वसुधारादिकं बह्वृचैर्न क्रियते । तर्हि 'यन्नाऽऽम्नातं स्वशाखायाम्' इत्यस्य को विषयः ? यत्र प्रधानादिमात्रं किंचिदुक्तं तत्राऽऽवश्यकोऽङ्गकलापश्चेदविरुद्धस्तदा ग्राह्य इति । एवम्— 'इष्टापूर्तादिकं कर्म स्वशाखोक्तं न विद्यते । तत्र बोधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥' इत्युक्तेः रुद्रानुष्ठानादि बौधायनोक्तं कार्यम्, न कात्यायनाद्युक्तमिति । कृभ. ११७२

(२) तदिदं तत्रभवतो गोभिलपुत्रस्य वचनत्रयं कात्यायनसमानार्थम् । तत्र प्रथमवचनं 'यन्नाऽऽम्नातम्' इत्यनेन, द्वितीयवचनं 'परोक्ता च' इत्यनेन, तृतीय-

(१) गृसं. २।९३; संप्र. ५०६ वसिष्ठः; बाल. १।८९ पृ. २५३ स्मृत्यन्तरम्; संग. १० वसिष्ठः; कृभ. ९८५, ११७२ पूर्वार्धे (यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।) (=) : १७३५ पूर्वार्धे (स्वशाखाविधिमुत्सृज्य त्वन्यस्य विधिमाचरेत् ।) सोऽन्धे (स्वन्धे) (=); प्रभा. १।५२.

वचनं 'स्वशाखाश्रयमुत्सृज्य' इत्यनेन समानार्थम्।
प्रभा. १।५२

( ३ ) यः पुनः स्वशाखोक्तं त्यक्त्वा परशाखोक्तमाचरति, स खल्वयमृषिं स्वशाखाचार्यमप्रमाणं करोति। स खल्वृषिमप्रमाणं कृत्वा अन्धे तमसि नरके पतति।

इदमिदानीं संदिह्यते– एवं तावत् 'आत्मतन्त्रेषु यन्नोक्तम्' इत्यनेन पारतन्त्रिकमपि कर्तव्यतयोपदिष्टम्, 'ऊनो वाऽप्यतिरिक्तो वा' इत्यनेन 'यः स्वशाखोक्तमुत्सृज्य' इत्यनेन च पुनरेतन्निषिद्धम्, किं पुनरत्र तत्त्वम्? उभयं तत्त्वमित्याह। कुतः? उभयोरेवोपदेशात्। विरुद्धं तर्हि? न, विषयभेदात्। कथम्? उच्यते– 'आत्मतन्त्रेषु यन्नोक्तम्' इति तावच्छ्रौताभिप्रायम्; 'ऊनो वा' इत्यादिकं तु गृह्यशास्त्राभिप्रायकमिति विषयभेदादुभयं तत्त्वमिति निश्चीयते। कथं पुनर्ज्ञायते गृह्यशास्त्राभिप्रायेणोत्तरः पक्ष इति? पारिशेष्यादिति ब्रूमः। श्रौताभिप्रायेण पूर्वः पक्ष इति खल्ववोचाम। तस्मादुत्तरः पक्षः पारिशेष्याद्गृह्यशास्त्राभिप्रायेण भविष्यति। इतश्चैतदेवं भविष्यति, 'अप्रमाणमृषिं कृत्वा' इत्यभिधानात्। नो खल्वपि श्रौतेषु पारशाखिकमाचरन् ऋषिमप्रमाणं करोति। न खल्वृषिः कर्ता वेदस्य। नित्यो हि वेदराशिर्मीमांसकानाम्, अपौरुषेयश्चान्येषाम्। प्रवक्तेति चेत्, इति चेद्भवान् पश्यति– मा भूत् कर्ता ऋषिर्वेदस्य, प्रवक्ता तु भवति। भवतु, किमतो भवति? एतदतो भवति– यद्येवं श्रौतेष्वपि पारशाखिकमाचरन् प्रवक्तारमृषिमप्रमाणं करोति। नैतत्साधु मन्यामहे। पूर्वसिद्धां हि वाचमृषिः प्रोवाच। पारशाखिकं चाऽऽचरन् तामेव वाचमप्रमाणं करोति, न ऋषिम्। न वा नित्यनिर्दोषस्य पूर्वसिद्धस्य वेदस्य अप्रामाण्यमनुपन्यस्य परसिद्धस्य प्रवक्तुर्ऋषेरप्रामाण्यं युक्तमुपन्यसितुम्, तदधीनसिद्धत्वात्तस्य। गृह्यशास्त्राभिप्रायत्वे तु वाक्यस्यैतत्स्यात्। वेदार्थमनुस्मरन् खल्वृषिः प्रयोगशास्त्रं रचयांचकार। तच्चातिक्रामन् नूनमृषिमप्रमाणं करोति। तदनुमितां श्रुतिमपि ऋषिमप्रमाणं कुर्वन्नेव अप्रमाणं करोति। शास्त्रान्तरदर्शनाच्चैवमवगच्छामः। तथा च नीलाम्बरादिधृतं गृह्यपरिशिष्टान्तरम्– 'प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परः। प्रयोगशास्त्रताहानेरनारम्भविधानतः॥ बह्वल्पं वा स्वगृह्योक्त यस्य कर्म प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥ श्रौतेषु सर्वशाखोक्त सर्वस्यैव यथोचितम्। स्मार्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु॥' इति। यथोचितमिति कुर्वन्नविरोधिन एव परोक्तस्य करणमनुजानीते। कात्यायनोऽपि कर्मप्रदीपे 'अक्रिया त्रिविधा प्रोक्ता मुनिभिः कर्मकारिणाम्। अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥' इति गृह्यशास्त्राभिप्रायेण परोक्तां क्रियां निन्दित्वा 'यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥' इति श्रौतमेवाग्निहोत्रादिकं पारशाखिकं कर्तव्यमुपदिशति। तदेवमादिभिर्वचनैरवगच्छामः– श्रौतेषु पारशाखिकं करणीयम्, न गृह्योक्तेषु इति। आह– यदि प्रयोगशास्त्रं गृह्यादि परैर्न समुच्चीयते, परं तर्हि सामान्यं विधानमनर्थकं भवति। यदि भवत्यनर्थकम्, किमिति वयमुपालभ्येमहि? न युष्मानुपालभामहे, किंतु मा भूदनर्थकमिति तदपि समुच्चिनुमः इति ब्रूमहे। सत्यमेवं ब्रवीषि, न तु प्रमाणोपेतं ब्रवीषि। प्रयोगशास्त्रविरोधाद्धि नायं समुच्चयः सेद्धुमर्हति। यो हि सामान्यस्य विधानस्याऽऽनर्थक्यं परिजिहीर्षुस्तदपि समुच्चिनोति, स खल्वयं स्वशास्त्राचार्यमृषिं प्रमाणं सन्तमप्रमाणं करोति। क्रममपि प्रयोगशास्त्रीयं विरुणद्धि। उत्सृजति च स्वशाखाश्रयं विधानम्। सेयं पितरमुपेक्ष्य श्वशुरे गाढा भक्तिः। कात्यायनोऽपि 'स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः। कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्॥' इत्यनेन एनं निन्दति। यो हि ऋषिभिर्निन्द्यते स कथं श्रद्धेयवचनस्तत्रभवतां शिष्टानां भवेत्? अथ यथोभयमपि न विरोत्स्यते तथा करिष्यामः। नैवं शक्यम्। कस्मात्? असंभवात्। स्वशाखाश्रयस्य खल्वन्तराऽन्तरा किमपि किमपि सामान्यं विधानं निवेशयन् सामान्यमपि विधानमाकुलयति, स्वशाखाश्रयमपि। सोऽयं समु-

क्रयो न प्रयोगशास्त्रं न खल्वपि सामान्यं विधानमुपकरोति, क्रममन्यथयन् प्रधानमपि विगुणयति । तथा च वृद्धिमिष्टवतो मूलमपि नष्टं स्यात् । अथ क्रमः पदार्थानामुपकारे वर्तते । पदार्थप्राप्तेरुत्तरकालं हि क्रम आपतति । यदा च पदार्थः प्राप्नोति, तदा क्रम एव नास्ति । न खलु पश्चिमसिद्धेन क्रमेण विरोधात् पूर्वसिद्धः पदार्थ एव न कर्तव्यो भवति । तस्मात् न्यायविरोधस्त्वत्पक्षे दोषः । भवेदेतदेवम्, यदि वचनमत्रार्थे प्रमाणं न स्यात् । अस्ति च वचनं 'प्रयोगशास्त्रम्' इत्यादि । किमिव हि वचनं न कुर्यात् ? न हि वचनस्य कश्चिदतिभारो नाम । भवदीयेऽपि पक्षे न्यायान्तरविरोधो जागर्ति । न च पदार्थोऽपि पूर्वसिद्धः । सिषाधयिषितः खल्वेष भवता । विषमश्चायमुपन्यासः— सर्वपदार्थानां शेषभूताः खल्वाचमनादयः पदार्थप्राबल्यादनुष्ठीयन्ते, न सर्वे । न चात्रानुतिष्ठासितानां शेषत्वं प्रामाणिकम् । भिन्नानि चेमानि कर्माणि प्रयोगशास्त्रीयाणि सामान्यानि च नामसाम्येऽपि, यथासंभवं रूपभेदादिभ्यो हेतुभ्यः । संयोगचोदनाभेदमप्येतेषु बहुलमुपलभामहे । तत्रैवं सति कुत्र कस्य गुणानुपसंहरसि, कर्मभेदे गुणोपसंहारन्यायस्याविषयत्वात् । श्राद्धोऽसि चेत्, प्रयोगशास्त्रीयं विधानमनुष्ठाय यथासंभवं सामान्यमपि विधानं कामं पृथगेवानुतिष्ठ । किमित्युभयमपि विधानमन्यथयित्वा नरसिंहाकारमभिनवं विधानान्तरं स्वरुच्यैव निर्मिणोषि ? यथा खल्वेकस्माद्वाक्यादाख्यातपदमन्यस्माच्च नामपदं गृहीत्वा यो वाक्यार्थः संपद्यते पुरुषकल्पनामूलः, तादृशो ह्ययं परिचिकल्पयिषितः प्रयोगो भवति । स खल्वनपेक्षणीयस्तत्रभवताम् । तथा चोक्तम्— 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्' इति । अत एव स्वशाखाश्रययोर्वैश्वदेवबलिकर्मणोरन्ते सामान्ययोरपि तयोः काममनुष्ठानं कात्यायनः स्मरति कर्मप्रदीपे— 'न स्यातां काम्यसामान्यजुहोतिबलिकर्मणी । पूर्वे नित्यविशेषोक्तजुहोतिबलिकर्मणोः ॥ काममन्ते भवेयातां न तु मध्ये कदाचन । नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः ॥' इति । यदि समुच्चयं कात्यायनोऽभिप्रैष्यत् नूनमवदिष्यत् । अवदनाच्चावगच्छामः नैष समुच्चयः कात्यायनस्याभिप्रेतः इति । तस्मादियमेवावधारणा— श्रौतेषु पारशाखिकं सामान्यं च विधानं कर्तव्यम्, गृह्योक्तेषु तु पारशाखिकं न कर्तव्यमेव, सामान्यं च विधानं गृह्योक्तविधानानुष्ठानादनन्तरमिच्छया प्रयोगान्तररूपेण करणीयमिति । तदेवं सति 'प्रयोगशास्त्रम्' इत्यादीनि वचनान्यनुगृहीतानि भवन्ति, नान्यथा । श्रौतेषु च तासु तासु शाखासु तत्तच्छाखिनामेवर्त्विजां कर्मोपदिष्टम्, न सर्वेषाम् । सर्वशाखिभिश्चर्त्विग्भिः प्रायो यज्ञो निर्वहति, न तावन्मात्रैः इति विशेषोऽप्यस्ति । अन्येऽपि विशेषाः शाखान्तराधिकरणे शारीरके च द्रष्टव्याः । रघुनन्दनस्त्वेतदनालोचयन् वचनं चापश्यन् 'सर्वत्रैवाविशेषेणाऽऽकाङ्क्षितं पारशाखिकं करणीयम्, न अनाकाङ्क्षितम्' इति कल्पयांचकार, तदश्रद्धेयम् । आकाङ्क्षाऽपि तदभिप्रेता न प्रामाणिकी । 'यत्र हि यावती इतिकर्तव्यता निर्दिष्टा, तत्र तत एव आकाङ्क्षा निवर्तते विशेषहेतुं विना' इति हि तान्त्रिकाणां निर्णयः । अवश्यं च तेनाप्येतद्वक्तव्यम् । अन्यथा पारशाखिकगुणोपसंहारेऽप्याकाङ्क्षा न निवर्तेत । इत्यस्तु, किं विस्तरेण ? ।

गृसंभा.

## विष्णुस्वामिकारिकाः

सूत्रपरिग्रहविचारः

**'कल्पमेकं समाश्रित्य प्रवृत्तेऽपि च कर्मणि ।**
**न मिश्रयेत्प्रयोगांस्तान्कल्पयोरुभयस्थयोः ॥**

## अनिर्दिष्टकर्तृकवचनानि

स्वशाखाभावे स्वसूत्राभावे वा अन्यसूत्रपरिग्रहविचारः

**'आध्वर्यवं याजमानमाग्नीध्रं यच्च नोदितम् ।**
**तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥**

(१) कृम. ११७१.

(२) बाल. १.८९ पृ. २५५ यच्च (यस्य) उत्तरार्धे (तेन बौधायनं ग्राह्यमिति शातातपोऽब्रवीत् ॥) स्मृतिचन्द्रिकायाम्; कृम. ११६९ यज्ञकाण्डे.

आग्नीध्रस्य ऋग्वेदभिन्नत्वात्तत्र याजुषभागत्यागशङ्कावारणाय तदुपादानम् । क्रम. ११६९

[1]बह्वृचः सामगश्चापि स्वसूत्राभावतस्तथा ।
आपस्तम्बेन वा प्रोक्तमिति शातातपोऽब्रवीत् ॥

[2]शाखिनामपि सर्वेषामभावे स्वप्रयोगिणाम् ।
आपस्तम्बोक्तमार्गेण कर्तव्यं पुनरब्रवीत् ॥
यद्यापस्तम्बशाखीयो भवेन्मातामहस्तदा ।
तत्र बौधायनाभावे तत्सूत्राधानमिष्यते ॥

तत्र 'शाखिनामपि ... ब्रवीत् ॥' इति वचनाद्बौधायनाभावे आपस्तम्बं ग्राह्यम्, अभावे सांनिध्याभावे इत्यर्थात् । अनिच्छायामित्यर्थाद्वा समविकल्पः । एतच्चोच्छिन्नपरम्परिकस्य नूतनपरिग्रहे एव । 'यद्यापस्तम्बशाखीयो...मिष्यते ।' इति च तादृशपरिग्रहे एव । क्रम. ११६९

[3]आपस्तम्बस्य चाभावे बौधायनमथापि वा ॥

[4]आपस्तम्बादिभिरपि स्वसूत्राभावतस्तथा ।
बौधायनेन कर्तव्यमन्यथा पतितो भवेत् ॥

[5]पितृशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥

[6]पारंपर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखाकर्म कुर्वीरन् तच्छाखाध्ययनं तथा ।
न जातु परशाखोक्तं शाखारण्डादिकारणम् ॥

[7]येषां केषां च मर्त्यानां नान्यदध्वर्युरादिशेत् ।
तेषां पुत्राश्च नप्तारः पतिताः स्युर्न संशयः ॥

(१) बाल. १।८९ पृ. २५६ उत्तरार्धे ( आपस्तम्बेन कर्तव्यमन्यथा पतितो भवेत् ॥ ) यज्ञकाण्डे ; क्रम. ११६९ यज्ञकाण्डे. (२) क्रम. ११६९. (३) क्रम. ११७०.
(४) आर. ६ यनेन ( यनोक्तं ) यज्ञकाण्डे ; क्रम. ११७० ; आमू. १ सर्वम् आरवत्.
(५) बाल. १।८९ पृ. २५४ ( पितृशाखां परित्यज्य पारक्यमधिगच्छति । स शूद्रवत् ) एतावदेव, श्रौतसर्वस्वे ; क्रम. ११७०. (६) क्रम. ११७०.
(७) बाल. १।८९ पृ. २५४ चतुर्थचरणे (नत्रेऽभ्यादिश्यते पतिः ) श्रौतसर्वस्वे ; क्रम. ११७०.

यस्य आपस्तम्बीयपरंपराऽस्ति, परंतु यदि तत्प्रयोक्ता न विद्यते, तदोक्तम्– आपस्तम्बस्य चेति । अन्यत्रापि 'आपस्तम्बादिभिरपि ... पतितो भवेत् ॥' इति । एतेन 'पितृशाखां परित्यज्य... स्युर्न संशयः ॥' इति व्याख्यातम्, एतस्य उक्तविषयत्वादनुक्तस्यान्यतो ग्रहे बाधकाभावात् । क्रम. ११६९–११७०

[1]इष्टापूर्तादिकं कर्म स्वशाखोक्तं न विद्यते ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

[2]सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥

[3]यत्राऽऽश्वलायनेनोक्तो विशेषः कोऽपि न स्वयम् ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥
स्वशाखीयो विशेषो हि यत्र नैवोपलभ्यते ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

[4]स्वशाखे विद्यमाने यः परशाखेण वर्तते ।
भ्रूणहत्यासमं तस्य स्वशाखमवमन्यतः ॥

[5]यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।
दुर्मेधाः स तु विज्ञेयो मोघं तत्तस्य चेष्टितम् ॥

स्वशाखापरशाखापरिग्रहतारतम्यविचारः

[6]बौधायनेन मुनिना प्रायश्चित्ततृतीयके ।
स्वशाखविधिमुत्सृज्य परशाखप्रवर्तिनः ।
भ्रूणहत्याकृतो दोष इत्यादि स्पष्टमीरितम् ॥
स्वशाखविध्यलाभश्चेच्छतशोऽन्विष्यतः क्वचित् ।
अत्यन्तापदि पारक्यं कर्मलोपान्न दोषकृत् ।
भिन्नशाखोपनीत्याद्यं जाबालादिनिदर्शनात् ॥

(१) क्रम. ११७२.
(२) संदी. १।५६.
(३) बाल. १।८९ पृ. २५५.
(४) बाल. १।८९ पृ. २६६.
(५) संदी. २।१०५.
(६) बाल. १।८९ पृ. २५४–२५५.

[1]मुख्यो विधिः स्वशाखोक्त इतरः स्यात्तु संकटे ॥
स्मृत्युक्तस्तु संकटे । संर. १७९
[2]पित्रादयस्त्रयः पूर्वे संस्कृताः शाखया यया ।
सा स्वशाखेति विज्ञेया तया कर्माणि कारयेत् ॥
[3]स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते ।
एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति ॥
[4]आर्षेयस्य स्वशाखस्य प्रदेशास्तद्गुणैः समाः ।
कर्मणां प्रविचारार्थमापत्सु च समाप्नुयात् ॥
[5]अनुक्तविषये ब्रह्मन् कां शाखां तु समाश्रयेत् ।
बौधायनी बह्वृचानां यद्वा भवति तैत्तिरी ॥
[6]प्रायशः सामगानां तु सूत्रं बौधायनीयकम् ॥
[7]सामगानां तु सर्वेषां शाखा माध्यन्दिनी भवेत् ।
तथैवाऽऽथर्वणानां च तथा क्षत्रियवैश्ययोः ॥
[8]प्राप्ते कलियुगे घोरे शूद्रा वाजसनेयिनः ।
माध्यन्दिन्यस्तु याः शाखाः सर्वसाधारणाः स्मृताः ॥
[9]ता एव तु पुरस्कृत्वा वसिष्ठेन प्रकाशितम् ।
शान्तिकं पौष्टिकं चैव रामस्य गुरुणा स्वयम् ॥
[10]न जातिपर( ? तु पर)शाखोक्तं बन्धुः( ? बुधः) कर्म समाचरेत् ।
आचरन् परशाखोक्तं शाखारण्डः प्रकीर्तितः॥

(१) संर. १७९.
(२) स्मृच. ४९ ( घारपुरे ).
(३) निप. ९६.
(४) बाल. १।८९ पृ. २६६.
(५) बाल. १।८९ पृ. २५४, १।८९ पृ. २५६ बौधायनीयधर्मरहस्ये.
(६) बाल. १।८९ पृ. २५६.
(७) बाल. १।८९ पृ. २५४, १।८९ पृ. २५६ बौधायनीयधर्मरहस्ये.
(८) बाल. १।८९ पृ. २५४ कलियुगे ( काले युगे ) पृ. , १।८९ पृ. २५६ बौधायनीयधर्मरहस्ये.
(९) बाल. १।८९ पृ. २५६ बौधायनीयधर्मरहस्ये.
(१०) बाल. १।८९ पृ. २५४ श्रौतसर्वस्वे.

विवाहे सोमश्राद्धे च अग्न्याधाने तथैव च ।
एतैः स्वजातिभिः(?) कुर्यादन्यथा पतितो भवेत् ॥
अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः ।
यत्रास्ति योनिसंबन्धः सूत्रज्ञातिकुलोचितः ॥
[1]शाखारण्डवदेवायं कल्परण्डः प्रकीर्तितः ।
कल्परण्डवदेवायं रण्डो बौधायनेन यः ।
तुल्यदोषमिमं रण्डत्रयमुक्तं महर्षिभिः ॥
[2]प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः ।
प्रयोगशास्त्रताहानेरनारम्भविधानतः ॥
[3]प्रयोगः सूत्रकारोक्तो न समुच्चयमर्हति ।
समुच्चये यतस्तस्य न निष्पत्तिर्न च क्रमः ॥
[4]सर्वशाखाविधिस्त्वं हि स्थितमध्येतृभेदतः ॥
[5]अनुक्तमन्यतो ग्राह्यम् ॥

वेदशास्त्रपुराणहर्तुः शङ्खासुरस्य कथा

[6]मेरुपृष्ठे सुखासीनाः सकला ऋषयः पुरा ।
तदन्तरे समायातो मुनिः कश्चिद्द्विजोत्तमः ॥
कुतो ह्यागमनं स्वामिंस्तमूचुः श्रूयतां द्विजाः ।
रुद्रलोकात्समायातं का कथा तत्र वर्तते ॥
श्रीरुद्रेणैव महता स्कन्दाय प्रतिबोधितम् ।
शाखाभेदं मया तस्मात्तद्विज्ञातं महर्षयः ।
स्वामिन्नः कथयस्वेति शृणुध्वं स्वस्थमानसाः ॥

अविच्छिन्नपारंपर्येणेयं कथा स्मर्यते । मेरुपृष्ठे सकलेषु मुनिगणेषु निविष्टेषु श्रेष्ठः कश्चिन्मुनिस्तान् प्रत्यागमत् । ततस्तं मुनिशार्दूलमालोक्याऽऽसनपाद्यादिपूजाविधिं विधायेदमूचुः । तदुक्तम्– मेरुपृष्ठ इति । संग. १२

शिव उवाच–

कदाचिद्विश्वकर्ताऽसौ तपसि स्कन्द संस्थितः।
ध्यानस्थितं निरीक्ष्यैनं शङ्खो दुष्टमनाः खलः ॥

(१) बाल. १।८९ पृ. २५५ श्रौतसर्वस्वे.
(२) प्रभा. १।५२ गृह्यपरिशिष्टम् .
(३) प्रभा. १।५२. (४) निप्र. १।६८.
(५) कृम. ११६८. (६) संग. १२–१३.

जहार वेदशास्त्राणि पुराणानि च षण्मुख ।
प्रविवेश समुद्रं स ब्रह्मणा नेक्षितस्तदा ॥
गतेषु वेदशास्त्रेषु पुराणेषु गतेष्वपि ।
श्रौतस्मार्तक्रियाः सर्वा आसँल्लुप्ता जगत्त्रये ॥
त्यक्त्वा ध्यानं पुरो नैक्षत्पुस्तकानि प्रजापतिः ।
शङ्खस्य चरितं बुद्ध्वा ययौ विष्णुं निवेदितुम् ॥
क्षीराब्धौ शयितं ज्ञात्वा विष्णुं ब्रह्मा शिवं ययौ ।
सुखासीनं शिवं दृष्ट्वा प्रणम्य कमलासनः ।
उवाच दीनवचनं लोकानां हितकाम्यया ॥

ब्रह्मोवाच–

शङ्खेन वेदशास्त्राणि पुराणानि च शंकर ।
नीतानि ध्यायतो मोहात्तत्रायं मम जगत्पते ॥
मम चैवाथ देवानामृषीणां कर्मलोपनम् ।
श्रौतस्मार्तक्रियागुप्तिः कृता दुःखस्य कारणम् ।
उपायं वद मे किंचिच्छ्रौतस्मार्तक्रियावहम् ॥

शिव उवाच–

ब्रह्माणमवदच्छम्भुः श्रुत्वा तद्वचनं पुरा ।
ब्रह्मन् शङ्खं स निद्रान्ते विष्वक्सेनो हनिष्यति ॥

ततस्तेन श्रीरुद्रस्कन्दसंवादो मुनीन् प्रत्याह– (१ प्रत्युक्तः) – शिव उवाच– कदाचिदिति । 'तदनन्तरं कतिपयदिनैः श्रीकृष्णः शङ्खासुरं हत्वा वेदानानीय ब्रह्मणे ददौ । (तदुक्तं) वराहपुराणे– 'दैत्यं निदार्य तान् वेदान् ब्रह्मणे स ददौ हरिः । ' इति ।
संग. १२–१३

शुक्लकृष्णभेदः यजुर्वेदस्य, भारते प्रदेशभेदेन शाखापठनम्

'आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थया ।
बुद्धिमालिन्यहेतुत्वाद्यजुः कृष्णमितीर्यते ।
व्यवस्थितप्रकरणं यजुः शुक्लमितीर्यते ॥

(१) संग. २२ स्मृतिः.

'पृथिव्या मध्यरेखा या नर्मदा परिकीर्तिता ।
दक्षिणोत्तरयोर्भागे शाखा वेदश्च उच्यते ॥
नर्मदादक्षिणे भागे आपस्तम्ब्याश्वलायनी ।
राणायनी पिप्पलादी यज्ञकन्याविभागिनः ॥
माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा ।
नर्मदोत्तरभागे च यज्ञकन्याविभागिनः ॥
तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि ।
आ आन्ध्रदेशपर्यन्तं बह्वृचस्याऽऽश्वलायनी ॥
उत्तरे गुर्जरे देशे वेदो बह्वृचप्रकीर्तितः ।
कौषीतकिब्राह्मणं च शाखा शाङ्खायनी स्थिता ॥
आन्ध्रादिदक्षिणाग्नेयी गोदा सागर आवधिः(१) ।
यजुर्वेदस्तैत्तिरीया आपस्तम्बी प्रतिष्ठिता ॥
सह्याद्रिपर्वतारम्भा दिशां नै( ? शाऽऽनै)र्ऋत्य-सागरात् ।
हिरण्यकेशी शाखा च पर्शुरामस्य संनिधौ ॥
मयूरपर्वताच्चैव यावद्गुर्जरदेशतः ।
व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता ॥
अङ्गवङ्गकलिङ्गाध्र कानीनो गुर्जरस्तथा ।
वाजसनेयिशाखा च माध्यंदिनी प्रतिष्ठिता ॥
ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता ।
वाजसनेयिवेदस्य प्रथमा कण्वसंज्ञिका ॥

तथा च यद्देशवासित्वेन येषां यथाऽनुष्ठानमुक्तं तेषां देशान्तरगमनेऽपि तथैवानुष्ठानम् । अन्यथा रण्डत्वप्रयुक्तप्रायश्चित्तापत्तिः । न चैषां निर्मूलत्वमिति वाच्यम्, महार्णवस्थोपलभ्यमानत्वात् देवाद्याचारस्य तथैवोपलभ्यमानत्वाच्चेति दिक् । बाल. १।८९ पृ. २५७

(१) बाल. १।८९ पृ. २५७ महार्णवे.

# धर्मतत्त्वविचारः

—०००—

## पराशरमाधवः

**[ भागः १ पृ. ४२–५७ ]**

धर्मे मनुष्याणामधिकारः, धर्मो नित्यनैमित्तिककाम्यभेदेन त्रिविधः इहामुत्रफलवांश्च

† 'मानुषाणां हितं धर्मं वर्तमाने कलौ युगे । शौचाचारं यथावच्च वद सत्यवतीसुत ॥' (पस्मृ. १।२)। ननु 'ब्राह्मणो बृहस्पतिसवेन यजेत', 'राजा राजसूयेन यजेत', 'वैश्यो वैश्यस्तोमेन यजेत' इत्यधिकारिविशेषो यथा श्रूयते, न तथा 'पराशरोक्तधर्माः ईदृशैरनुष्ठेयाः' इति किंचित् वचनमस्ति । तत् कथं ‡निर्णयः ? इत्यत आह– मानुषाणामिति । अर्वाचीनानां पश्वादीनामसामर्थ्यात्, उत्तमानां देवादीनां धर्मानुष्ठाने प्रयोजनाभावाच्च मनुष्या एव परिशिष्यन्ते । विशेषानिर्णये तु सर्वेषां मनुष्याणामधिकारोऽस्तु । ननु नक्षत्रेष्ट्यादौ देवानामधिकारः श्रूयते– 'अग्निर्वा अकामयत अन्नादो देवानां स्यामिति, स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' (तैब्रा. ३।१।४।१) इति । मैवम्, मनुष्यस्यैव कस्यचित् यजमानस्य भाविनीं संज्ञामाश्रित्य प्रथमान्तेनाग्निशब्देन व्यवहारात्, अन्यथा युगपदग्निद्वयसृष्टिप्रसङ्गात् । ननु यत्र द्वैगुण्यदोषो नास्ति तत्रास्तु देवताधिकारः । तथाहि श्रूयते– 'बृहस्पतिरकामयत श्रन्मे देवा दधीरन् गच्छेयं पुरोधामिति, स एतं चतुर्विंशतिरात्रमपश्यत्, तमाहरत्, तेनायजत, ततो वै तस्मै श्रद्देवा अदधत, अगच्छत् पुरोधाम्' (तैसं. ७।४।१।१) इति । श्रत् विश्वासम् । मे मयि । पुरोधाम् पौरोहित्यम् । चतुर्विंशतिरात्रम् एतन्नामकसत्रयागमित्यर्थः । इत्यादौ फलश्रवणात् कर्मानुष्ठाने कथं प्रयोजनाभावः ? इति चेत् । मैवम्, अत्रापि भाविसंज्ञाया एवाऽऽदरणीयत्वात्, अन्यथा बृहस्पतेः कंचित् कालं विश्वसनीयत्वपौरोहित्ययोरभावप्रसङ्गात् । तच्च श्रुत्यन्तरविरुद्धम् । 'बृहस्पतिर्वै देवानां पुरोहित आसीत्' इति श्रुत्या पौरोहित्यपुरःसर एव बृहस्पतिसद्भावः प्रकाश्यते । अथवा स्वोपयोगाभावेऽपि मनुष्यान् प्रवर्तयितुं देवाः कर्माण्यनुष्ठितवन्तः, 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।' (भगी. ३।२१) इति न्यायात् । अस्तु वा स्वोपयोगोऽपि, जगन्निर्वाहेऽधिकृतानां देवादीनां तद्धेतोः तपसश्चरणीयत्वात् । 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत' इति विहितस्याऽऽधानस्य देवेष्वत्रैवर्णिकेष्वसंभवः इति चेत् । न, रथकारवदुपपत्तेः । अथ मन्यसे–अस्ति रथकारस्य समन्त्रकाधानविधायकं वचनम्, 'ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्य' इति (तैब्रा. १।१।४।८) श्रुतेः, न त्वेवं देवानां विधिरस्ति इति । एवं तर्हि निषादस्थपतिन्यायोऽस्तु । यथा निषादस्य प्रभोराधानविध्यश्रवणेऽपि यागोऽभ्युपगतः, तथा देवानामभ्युपेयताम् । 'एतया निषादस्थपतिं याजयेत्' इत्यस्ति निषादविषयं वचनमिति चेत्, किं त्वया विस्मृतानि देवविषयाणि पूर्वोदाहृतवचनानि ? तेषामर्थवादत्वेऽपि मानान्तराविरोधात् अननुवादात् स्वार्थेऽपि तात्पर्यं किं न स्यात् ? अथोच्येत– स्मृतीनां धर्मशास्त्रत्वात् तासु धर्ममीमांसा अनुसर्तव्या, तस्यां च न कस्याप्यर्थवादस्य वाच्यार्थे प्रामाण्यमभ्युपगतम् इति । तदेतद्वचनं स्मृतिभक्तस्य मीमांसकंमन्यस्य चानर्थायैव स्यात्, 'मूषिकभिया स्वगृहं दग्धम्' इति न्यायावतारात्, कस्यचिदर्थवादस्य स्वार्थे प्रामाण्यं भविष्यति इति भयेन अर्थवादैकप्रसिद्धानां स्मर्तॄणां मन्वादीनां मीमांसामात्र( ? शास्त्र )कृतो जैमिनेश्च सद्भावस्यैव परित्यक्तव्यत्वात् अशेषेतिहासलोपप्रसङ्गात् ।

† एतदाद्यश्चत्वारः शास्त्रार्था नैतत्प्रकरणग्राह्यवचनविशेषव्याख्यानरूपा इति कृत्वा प्रकरणादौ संगृह्यन्ते ।

‡ प्रकृतस्मृत्यधिकारिनिर्णय इति प्रकरणाल्लभ्यते ।

तस्मात् प्रमाणमेव भूतार्थवादः । तथा च सति 'तं मनुराधत्त', तं पूषाऽऽधत्त,' 'तं त्वष्टाऽऽधत्त', 'तं धाताऽऽधत्त' (तैसं. १।५।१।२, ३) इत्यर्थवादवशादाधानमपि देवानां किं न स्यात्? ब्राह्मणा(? ण्या)द्यभावे तु कामं वसन्तादिकालविशेषनियमो मा भूत्, किमायातमाधानस्य? किंच, अन्तरेणापि आधानं लौकिकेऽग्नौ यागः क्वचिदुपलभ्यते, 'अवकीर्णिपशुश्च, तद्वदाधानस्याप्राप्तकालत्वात्' (जैसू. ६।८।२२) इति जैमिनिसूत्रात् । 'यो ब्रह्मचारी स्त्रियमुपेयात् स गर्दभं पशुमालभेत' इत्यवकीर्णिपशुः । यथा †उपनयनहोमो लौकिकाग्नौ, तथा असौ पशुः इति सूत्रार्थः । एतावता प्रयासेन देवानां कर्माधिकारे साधिते किं तव फलिष्यति? तथा मीमांसायां किं छिद्यते? अभिनिवेशः केवलं शिष्यते । ‡फलं तु जगन्निर्वाहः इति पूर्वमेवोक्तम् । अशेषाश्च पुराणादयः एवं सति अनुगृहीता भवन्ति । मनुष्यवद्देवानां स्वर्गाय कर्माणि मा भूवन्, जगन्निर्वाहाय तु भविष्यन्ति । तपसैव तन्निर्वाहः इति चेत् । न, दानयागहोममौनध्यानादिव्यतिरिक्तस्य तपसोऽनुपलम्भात् । अत एव सत्यसंकल्पोऽपि परमेश्वरः रामकृष्णाद्यवतारेषु लौकिकवैदिककर्मनटनेनैव जगन्निरवहत् । देवा अपि तथा नटन्तु इति चेत् । एवमपि नटनीयकर्माधिकारो भवताऽभ्युपगम्यताम् । एवं तर्हि 'मनुष्याणाम्' इति कथमुक्तम्? इति चेत् । पौरुषेयग्रन्थापेक्षया इति वदामः । न खलु स्वयंप्रभातनिखिलवेदानां देवानां धर्मज्ञानाय पौरुषेयग्रन्थापेक्षा अस्ति । मनुष्याणां तु अतथाविधत्वात् अस्त्यपेक्षा । ननु पशूनामपि धर्मे अधिकारः श्रूयते, 'गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन । तासां दश मासा निषण्णा आसन् । अथ शृङ्गाण्यजायन्त । ता उदतिष्ठन्नरात्स्मेति । अथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नरात्स्म(इति)' (तैसं. ७।५।१।१) इति श्रुत्या तिरश्चां गवां सत्रानुष्ठातृत्वाभिधानात् । अरात्स्म इति कामितार्थसिद्धिं प्राप्ता इत्यर्थः । नायं दोषः, अस्याः श्रुतेरर्थवादत्वात् । 'य एवं विद्वांसः संवत्सरमुपयन्ति' इति वृद्धिकामस्य सत्रं विधातुं प्रथमतः 'गोसत्रं वै संवत्सरः' इति प्रशंसा कृता । तां संभावयितुं 'गावो वै' इत्यादि पठितम् । न चैतस्यार्थवादस्य 'यद्वै किंच मनुरवदत् तद्भेषजम्' इत्यादिवत् स्वार्थेऽपि तात्पर्यं वर्णयितुं शक्यम्, प्रत्यक्षेण श्रुत्यन्तरेण च विरुद्धत्वात् । तिरश्चां हि मन्त्रोच्चारणे कर्मानुष्ठाने च सामर्थ्याभावः प्रत्यक्षसिद्धः । श्रुत्यन्तरे च– 'अथेतरेषां पशूनामशनायापिपासे एव अभिविज्ञानम् । न विज्ञातं वदति । न विज्ञातं पश्यति । न विदुः श्वस्तनम्' (ऐआ. २।३।२) इति पशूनां विवेकाभावं दर्शयति । अस्तु वा अस्यार्थवादस्य स्वार्थे तात्पर्यम्, गोशब्देन गवाभिमानिदेवतानां विवक्षितत्वात् । अत एव 'अभिमानिव्यपदेशस्तु' (ब्रसू. २।१।५) इति सूत्रे भगवान् बादरायणः सर्वेषां मृदादिवस्तूनां श्रुतिमूलत्वेनाभिमानिदेवताः प्रतिपादयामास । सर्वथा मनुष्यमात्राधिकारकं स्मृतिशास्त्रम् । 'हितम्' इत्यनेन शब्देन प्रयोजनं निर्दिश्यते । अभिमतफलसाधनत्वं हि धर्मस्य हितत्वम् । तच्च फलं द्वेधा– ऐहिकमामुष्मिकं चेति । ‡अष्टकादिसाध्यं पुष्ट्यादिकमैहिकम् । आमुष्मिकं द्वेधा– अभ्युदयो निश्रेयसं च । तत्राभ्युदयस्य साक्षात् साधनं धर्मः, निश्रेयसस्य तु तत्त्वज्ञानोत्पादनद्वारेण । तथा च स्मर्यते–'धर्मात् सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ।' इति । अत्र केचिदाहुः– नित्यकर्मणां फलमेव नास्ति,

---

† एकाधिकरणव्यवहितपूर्वाधिकरणविषयत्वेनोपनयनहोमः प्रकृतः । अतः सोऽत्र 'तद्वत्' इतिसूत्रगततच्छब्देन परामृष्टः । अपरे तु अनन्तरपूर्वाधिकरणविषयं निषादस्थपतीष्टिं परामृशन्ति ।

‡ पूर्वोक्ताक्षेपं समाधत्ते– फलं त्विति ।

‡ यद्यपि पाकसंस्थारूपा अष्टका नित्याः, तथाऽपि तासां पुष्टिफलमप्यानुषङ्गिकं भवति । तथा च 'अष्टका रात्रिदेवता पुष्टिकर्मा' (गोगृ. ३।१०।१) इति गोभिलगृह्यसूत्रभाष्ये भट्टनारायणः– 'तस्मादष्टका नित्या, पुष्टिफलमप्यानुषङ्गिकमिच्छतो भवति' इति ।

अकरणे प्रत्यवायाद्भीतेः केवलमनुष्ठीयन्ते । तत्र कुतोऽभ्युदयहेतुत्वं निःश्रेयसहेतुत्वं च ? इति । अपरे पुनराहुः— अभावाद्भावोत्पत्तेरदर्शनात् अकरणे प्रत्यवायो न युक्तिसहः, नापि तत्र प्रमाणमस्ति । ननु उपनयनाध्ययनादिविहितानामकरणे प्रत्यवायः स्मर्यते— 'अत ऊर्ध्वं पतन्त्येते यथाकालमसंस्कृताः । सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥', 'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥' (मस्मृ. २।३९,१६८), 'अकुर्वन् विहितं कर्म निन्दितं च समाचरन् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥' इति । मैवम् । एतानि वचनानि नित्यकर्माननुष्ठायिनः आलस्यनिमित्तं पूर्वसंचितं दुरितं यत् तत्सद्भावं सूचयन्ति । एतच्च तैत्तिरीयोपनिषद्व्याख्याने भाष्यकारवार्तिककाराभ्यां प्रतिपादितम् । यदि अकरणं प्रत्यवायस्योत्पादकं यदि वा सूचकम्, उभयथाऽपि नित्यकर्मानुष्ठानेन प्रत्यवायस्य प्रागभावपरिपालनं प्रध्वंसाभावोत्पादनं च संपद्यते । दुरितप्रध्वंसित्वं च त्रिसंध्यमनुष्ठीयमानेषु 'सूर्यश्च', 'आपः पुनन्तु', 'अग्निश्च' इति मन्त्रेषु विस्पष्टमवभासते । एवं च सति उपभोग्यफलरहितानां नित्यकर्मणामभ्युदयफलहेतुत्वं दूरापेतमिति । अत्रोच्यते— अस्तु प्रत्यवायविरोधित्वम्, नैतावता फलाभावः, मन्त्रलिङ्गेन श्रुतिस्मृतिवाक्याभ्यां च तत्तत्फलावगमात् । 'मयि वर्चो बलमोजो निधत्त' इति मन्त्रलिङ्गम् । छान्दोग्यवाक्यं च आश्रमत्रयस्य लोकहेतुतां चतुर्थाश्रमस्य मोक्षहेतुतां दर्शयति— 'त्रयो धर्मस्कन्धाः, यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति' (छाउ. २।२३।१) इति । एतस्य वाक्यस्य आश्रमपरत्वम् 'परामर्शं जैमिनिः०' (ब्रसू. ३।४।१८) इत्यादिभिर्व्याससूत्रैः प्रतिपादितम् । स्मृतिवाक्यं चैतत्— 'तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' (आध. १।२०।३) इति । इदं च वाक्यं नित्यकर्मविषयत्वेन वार्तिके विश्वरूपाचार्य उदाजहार— 'आम्रे फलार्थे इत्यादि ह्यापस्तम्बस्मृतेर्वचः । फलवत्त्वं समाचष्टे नित्यानामपि कर्मणाम् ॥' इति । तथा च मनुः— 'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥' (मस्मृ. ४।१४) इति । कूर्मपुराणेऽपि— 'यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् । विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् । गृहस्थो मुच्यते बन्धात्नात्र कार्या विचारणा ॥' इति । ननु अस्त्वेवमभ्युदयहेतुत्वम्, निःश्रेयसहेतुत्वं तु न संभवति, प्रमाणाभावात् । प्रत्युत श्रुतिस्मृतिभ्यां तन्निषिध्यते । 'न कर्मणा न प्रजया धनेन' इति श्रुतिः । 'ज्ञानादेव तु कैवल्यम्' इति स्मृतिः । मैवम्, परमात्मप्रकरणे निःश्रेयसहेतुवेदनेच्छासाधनत्वेन यज्ञादीनां विधानात्, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इति श्रुतेः । निषेधस्तु साक्षान्निःश्रेयससाधनत्वं गोचरयिष्यति । तस्मात् न मुक्तानां अग्न्याधानादिकर्मापेक्षा अस्ति । वेदनोत्पत्तौ सा विद्यते । एतच्च उभयम् 'अत एव चाग्नीन्धनाद्यनपेक्षा', 'सर्वापेक्षा च यज्ञादिश्रुतेः' (ब्रसू. ३।४।२५–२६) इत्याभ्यामधिकरणाभ्यां निर्णीतम् । तथा च कर्मणां परंपरया मोक्षहेतुत्वं वायवीयसंहितायामभिहितम्— 'कर्मातिशयमासाद्य पशोः पापपरिक्षयः । एवं प्रक्षीणपापस्य बहुभिर्जन्मभिः क्रमात् । भवेद्विषयवैराग्यं वैराग्याद्भावशोधनम् ॥ भावशुद्ध्युपपन्नस्य शिवज्ञानसमन्वयः । ज्ञानध्याननियुक्तस्य पुंसो योगः प्रवर्तते ॥ योगेन तु परा भक्तिः प्रसादस्तदनन्तरम् । प्रसादान्मुच्यते जन्तुर्मुक्तः शिवसमो भवेत् ॥' इति । ननु प्रत्यवायपरिहाराय पुण्यलोकप्राप्तये ब्रह्मवेदनाय च प्रतिदिनं नित्यकर्मणस्त्रिः प्रयोगः प्राप्तः । तन्न, खादिरवत् सकृत्प्रयुक्तस्यैव वचनसंयोगभेदेन फलभेदोपपत्तेः । 'खादिरो यूपो भवति' इति क्रत्वर्थे वचनम् । 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति वचनं पुरुषार्थम् । तदेतत् वचनद्वयमेकस्यैव खादिरस्य प्रयोजनद्वैविध्ये हेतुः, 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (जैसू. ४।३।५)

इति जैमिनिसूत्रात् । एवमत्रापि पूर्वोदाहृतवचनत्रयबलात् प्रयोजनत्रैविध्येऽपि सकृदेव प्रयोगः । तच्च ‘विहितत्वाच्चाऽऽश्रमकर्मापि’ (ब्रसू. ३।४।३२) इत्यस्मिन्नधिकरणे निर्णीतम् । न च नित्यस्यापि फलवत्त्वे नित्यकाम्ययोर्भेदाभावः इति शङ्कनीयम्, करणे फलसाम्येऽपि अकरणे प्रत्यवायतदभावाभ्यां तद्भेदात् । न खलु आयुष्कामेष्टिवृष्टिकामेष्ट्याद्यकरणे कश्चित् प्रत्यवायः श्रूयते । एष एव नित्यन्यायो नैमित्तिकेष्ववगन्तव्यः । ‘स्कन्ने जुहोति’, ‘भिन्ने जुहोति’ इत्यादि अनियतभेदनादिकार्यविशेषणोपेतं नैमित्तिकम् । नित्यवत् काम्यस्यापि विहितत्वेन शुद्धिहेतुत्वात् मोक्षसाधनत्वमिति चेत् । न, रागप्राधान्यात् । शुद्धिस्तु उपसर्जनत्वेन रागविषयभोगं संपाद्योपक्षीयते । अत एव गीतायां भगवता मुमुक्षोरर्जुनस्य फलासक्तिर्निषिद्धा– ‘योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय । सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुः–’ (भगी. २।४८,४७) इत्यादिना । नित्यकर्मणि तु बुद्धिशुद्धिरेव प्रधानम्, फलमुपसर्जनम् । अत एव भुज्यमानेनापि फलेन तदनित्यत्वसातिशयत्वदोषदर्शनरूपो विवेको न प्रतिबध्यते । तदुक्तं वार्तिककारेण– ‘नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः । भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ॥’ इति । नित्यं च कर्म द्विविधम्– संस्कारकं विविदिषाजनकं च । विहितत्वमात्रबुद्ध्या क्रियमाणं संस्कारकम् । तथा च स्मर्यते– ‘यस्यैते अष्टाचत्वारिंशत् संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छति’ (गौध. ८।२२–२३) इति । ईश्वरार्पणबुद्ध्या क्रियमाणं विविदिषाजनकम् । तच्च भगवतेरितम् – ‘यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥’ (भगी. ९।२७) इति गीतायामिति । तत्र संस्कारेण चित्तस्य वेदनयोग्यतामात्रं संपद्यते, विविदिषा तु प्रवृत्तिमुत्पाद्य अवश्यं वेदनं संपादयति । तस्मात् मुमुक्षोरीश्वरार्पणं प्रशस्तम् ।

तदेवं हितशब्देन धर्मस्याभिमतसाधनत्वाभिधानात् अभीष्टसिद्धिः प्रयोजनम् इत्युक्तं भवति । धर्मशब्देन विषयो निर्दिश्यते । अभ्युदयनिःश्रेयसे साधनत्वेन धारयति इति धर्मः । स च लक्षणप्रमाणाभ्यां चोदनासूत्रे व्यवस्थापितः । ननु चोदनावगम्यस्य न स्मृतिविषयत्वम्, सर्वत्रानन्यलभ्यस्यैव विषयत्वावगमात् । अथ मन्यसे–चोदनागम्योऽपि अर्थवादपरिहारेण शाखान्तरगतविशेषोपसंहारेण च अनुष्ठानक्रमसौकर्याय संगृह्यते इति । तन्न, कल्पसूत्रेषु तथा संगृहीतत्वात् । अतो न धर्मस्य विषयत्वम्, इत्याशङ्क्याऽऽह– शौचाचारमिति । अयं भावः– द्विविधो धर्मः, श्रौतः स्मार्तश्च । तत्र आधानादिपूर्वकोऽधीतप्रत्यक्षवेदमूलो दर्शपौर्णमासादिः श्रौतः, अनुमितपरोक्षशाखामूलः शौचाचमनादिः स्मार्तः । तत्र आधानादेः कल्पसूत्रेषु संग्रहेऽपि शौचादेरसंग्रहात् विषयत्वमिति । ननु स्मृत्यन्तरेष्वपि शौचादिरुक्तः, इत्यत आह– वर्तमाने कलौ युगे इति । कलौ युगे वर्तमाने सति याजनाध्यापनादीनां जीवनाय असंपूर्तेः मानुषाणां जीवनाय अभ्युदयाय निःश्रेयसाय च हितः सुकरो यो धर्मः ब्राह्मणकर्तृकः कृष्यादिः सोऽत्र प्राधान्येन प्रतिपाद्यते इति अनन्यलभ्यत्वात् विषयत्वमित्यर्थः । यथावदितिपदेन कार्त्स्न्याभिधायिना संकोचं निवारयति, न त्वन्यथाकथनं निवार्यते, स्मर्तॄणां भ्रान्तिविप्रलम्भाद्यप्रसक्तेः । अत एव सत्यवतीसुत इति संबोधनम् । यदा योषिदपि सती माता सत्यवादिनी, तदा किमु वक्तव्यं वेदाचार्यस्तत्पुत्रः सत्यवादीति ? चकारेण सुग्रहत्वं समुच्चिनोति ।

## नित्याचारपद्धतिः

### [ पृ. २–८ ]

नित्यानां कर्मणामुपात्तदुरितक्षयः प्रयोजनम्

तत्र येषामकरणे प्रत्यवायोत्पत्तिस्तानि नित्यानि । तथा हि– स्वर्गादिफलतया विहितेऽग्निहोत्रादौ यावज्जीवमित्यनेन जीवनकालविधाने जीव( न ? )पदे जीवनकाललक्षणा, घटिकाकालमात्रानुष्ठेये च सकलजीवन-

कालायोगात् जुहुयादित्यभ्यासलक्षणा च स्यादिति तत्परिहारार्थं यावज्जीवपदं निमित्तमिष्यते । तत्र सायंप्रातःकालावच्छिन्ने जीवने निमित्ते होमो विधीयते । तत्र वाक्यान्तरश्रुतस्य स्वर्गादेर्न भाव्यत्वम् , सर्वदा तस्येष्टत्वासंभवात् । अविवेकिनामेव तत्रेच्छा, विवेकिनां पुनर्बहुतरदुःखानुषक्ततया हेयबुद्धिः । ततः सर्वावस्थासाधारणेच्छागोचरतया उपात्तदुरितक्षय एव भाव्यः । एवं 'वसन्ते वसन्ते ज्योतिषा यजेत', 'अहरहः स्वाहाकुर्यात्' इत्यादेर्वीप्साबलादभ्यासपरिहाराय निमित्तपरत्वम् । तत्र निमित्तं नाम यस्मिन् सति यदवश्यं क्रियते । अवश्यकरणं च अकरणात् निवृत्तिः । 'तत एव च शास्त्रेण निवर्त्यते यतोऽनिष्टं भवति' इति न्यायात् 'विहितस्याननुष्ठानान्नरः पतनमृच्छति ।' इत्यादिवाक्यबलाच्चाकरणभाव्यानिष्टपरिहारार्थानि । तथा हि— तत्तद्विधिवाक्येषु भावनाया एव विहितत्वात् , तस्याश्च किं ?, केन ?, कथम् ? इत्यपेक्षिताङ्गत्रयवत्त्वात् भाव्यं विना विधिरूपासिद्धेः , प्रत्यवायपरिहारस्य चात्यन्ताभावरूपस्य नित्यतया भाव्यत्वायोगात् , विधिप्रत्ययेन चेष्टस्यैव भाव्यत्वप्राप्तेर्धात्वर्थभाव्यत्वायोगाच्च, अश्रुतफलेषु विश्वजिद्यागादिषु दुरितक्षयस्य दुरितानिष्टत्वोपाधिकेच्छाविषयत्वात् तद्योगेन निरुपाधिकेच्छाविषयस्वर्गस्यैव भाव्यत्वावधारणेऽप्यत्र कर्तॄणां कदाचिद्भगवदनुग्रहाद्वैराग्योत्पत्तौ स्वर्गेऽपीच्छानिवृत्तेः , अनिष्टस्य च विहिते भाव्यत्वायोगात् यावज्जीवानुष्ठेयकर्मसु स्वर्गभाव्यत्वानुपपत्त्या सर्वस्य सर्वदेच्छागोचरतया उपात्तदुरितक्षय एव भाव्यः कल्प्यते । धात्वर्थरूपाणि भावनायां केनेत्यपेक्षितकरणत्वेनान्वीयन्ते । करणस्वस्य कर्तृव्यापारविषयलक्षणस्येतिकर्तव्यताख्योपकारकव्यापारं विनाऽसंभवात् कथमित्यपेक्षितश्रुत्यादिसमर्पिताङ्गजातोपेतान्येव भाव्यं भावयन्तीति । तत्र जीवनादिनिमित्तबलप्राप्तत्वात्(?प्राप्त) तत्कालप्रधानावश्यकर्तव्यतान्यथानुपपत्तिकल्पितयथाशक्तीत्युपपदबलात् प्रत्येकं यावच्छक्यसंपादनाङ्गोपेतान्यशक्यसंपादनाङ्गहीनान्यपि कृतानि, तत्र अशक्तौ 'मनसाऽप्येनमाचारमनुपालयेत्' इति वचनान्मनसाऽपि कृतानि पूर्वजन्मार्जितानाम् , इहापि जन्मनि 'ऊनषोडशवर्षेण यद्बाल्ये किल्बिषं कृतम् । यच्चाधर्मप्रवृत्तेन तत् सर्वमुपशाम्यति ॥' इति वचनादूर्ध्वं कृतेषु मध्ये येषां प्रायश्चित्तविशेषाम्नानाभावः तेषां दुरितानां 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्' (जैसू. १।२।१७) इति न्यायेन कृष्यादिदृष्टसाधनवत् साधनकर्मानुरूपेण किंचित् किंचित् दुरितानि नाशयन्ति, अकरणभाविदुरितानुत्पादनाय च भवन्ति । शक्यसाधनमपि यदङ्गं विस्मृतं तस्याप्यशक्यान्तर्गतत्वात् तदभावेऽपि भवत्येव फलम् । यत्र पुनः— 'यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति' इति स्कन्दपुराणोक्तम् , 'यत्र च मन्त्रभ्रंशो यज्ञभ्रंशो वा तत्र पुरुषं चिन्तयन्नेतत् सूक्तं जपेत्' इति वा †मूलगृह्योक्तं प्रायश्चित्तं कुर्यात् , तत्र 'कर्मणामल्पमहतां फलानां च स्वगोचरे । विभागः स्थानसामान्यादविशेषेऽपि चोदितः ॥' इति न्यायेन अल्पे कर्मणि नामसंकीर्तनं युक्तम् , महति पुरुषसूक्तजपयुक्तं ध्यानमिति व्यवस्थोहनीया । शक्यसंपादनस्याविस्मृतस्याकरणे पुनर्न दुरितक्षयः । प्रत्यवायपरिहारः पुनर्विष्णुस्मरणाभावेऽपि प्रधानाकरणाभावे स्यादेव । 'स्वकाले यदकुर्वंस्तत् करोत्यन्यदचेतनः । प्रत्यवायोऽस्य तेनैव नाभावेन च जन्यते ॥' इति मतेऽपि यथाकथंचित् प्रधानमात्रानुष्ठानेऽपि तत्काले विपरीतकरणस्य प्रत्यवायहेतोरसंभवात् भवेदेवं( ? व ) प्रत्यवायपरिहारः । यत्तु 'अक्रिया त्रिविधा प्रोक्ता' ( कास्मृ. १।३३ ) इति अन्यथाकरणस्यापि अक्रियात्वमुपचरितं तत् 'कामकारिणाम्' इत्युक्तत्वात् काम्यपरमेव । यच्च कर्म यस्मिन् काले विहितं तत्कालाभावेऽपि नाङ्गान्तराभाव ‡इति (न) तत् कर्मानुष्ठेयम् , नित्यकर्मसु यथाशक्तीत्युपपदस्य उपादेयाङ्गमात्रविषयत्वात् , कालस्य त्वनुपादेयत्वात् । तदुक्तम्— 'अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत् कृतः ।

† एतत्पद्धतिकारस्य वाजसनेयित्वेन निर्विशेषणोऽयं मूलगृह्यशब्दः पारस्करगृह्यसूत्रपर इति प्रतीयते । तथापि न तस्मिन् गृह्यसूत्रे नाप्यन्यस्मिन् गृह्यसूत्रे वचनमिदमुपलभ्यते ।

‡ इत्यभिप्रायेण यदनुष्ठानं तन्न कर्तव्यमित्यर्थः ।

अनुपादेयरूपत्वात् काले कर्मविधिर्यतः ॥ ' इति । यदा पुनर्विहितकाले कथंचिदौदासीन्यप्रच्युत्या 'करोमि' इति संकल्प्याऽऽरम्भोऽपि कृतः, तदाऽऽरब्धस्यावश्यसमापनीयत्वात् कालान्तरेऽपि अङ्गवैगुण्यपरिहारार्थं प्रायश्चित्तपूर्वकं समापनीयमेव । यत्र प्रधानस्य विहितकालाभावे तत्कालसंबन्धिकर्मविध्यभावात् तदुक्तफलासंभवेऽपि यः 'यक्ष्ये' इत्युक्त्वा न यजते, तत्र त्रैधातवी प्रायश्चित्तिरिति । यस्तप उपेत्य न यथार्थं तपस्यति, असमाप्तौ वा विरमेत, तत्र 'आग्नेयो विधिश्चान्द्रायणं च' इत्यादिवाक्यकल्पितप्रायश्चित्तपूर्वकारब्धसमापनविधि-(? ने विधि)विहितभावनाभाव्यं कर्तुरिष्टं फलं स्यादेव । तदाऽऽरब्धस्याप्यकरणे 'एतेषामाचाराणामेकैकव्यभिचारे गायत्र्यष्टसहस्रजपं कृत्वा पूतो भवति' इत्युक्तं प्रायश्चित्तमेव कर्तव्यम् । एवं भ्रान्त्यादिना विहितकालात् प्राक् करणे विहितकाले पुनः कर्तव्यम् । तथा च स्मरन्ति– 'अकाले चेत् कृतं कर्म काले तस्य पुनः क्रिया । कालातीतं तु यत् कुर्यादकृतं तद्विनिर्दिशेत् ॥' इति । क्वचित् पुनः प्रातर्होमादौ विहितकालात् प्राक् कृतस्य पुनरकरणे कारणं वक्ष्यते । यत्तु नित्यकर्मणाम् 'आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः । आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥' इत्यायुरादीन्यपि फलानि स्मर्यन्ते, तत्र 'कर्मणामल्पमहताम्' इति न्यायात् विधिप्रत्ययेनेष्यमाणस्यैव भाव्यत्वनियमात्, सर्वाङ्गोपेतादेव प्रधानात् काम्यफलम्, न नित्यं तदङ्गहीनादपि (इति) षष्ठद्वितीयतृतीये(? तृतीयद्वितीये) चिन्तितत्वात्, 'सर्वेभ्यः कामेभ्यो दर्शपौर्णमासौ' इत्यत्र एकस्मात् प्रयोगादेकमेव फलम्, न युगपदनेकमिति च योगसिद्ध्यधिकरणे चिन्तितत्वात् यत्फलानुरूपं यत् कर्म तत्कामनया चेत् तत् कर्म सर्वाङ्गसंपूर्णं क्रियते तदैव तत एव तदेव भवति, नान्यथा । तत एव तत्रानुष्ठानाद्दुरितक्षयप्रत्यवायपरिहारसिद्धेर्न तदर्थं पृथगनुष्ठातव्यम् । तदुक्तं भट्टपादैः षष्ठतृतीयाद्ये नित्यकाम्याग्निहोत्राधिकारे– 'नापि प्रयोगान्तरमिदम्, अन्तर्गतत्वात् काम्ये नित्यप्रयोगस्य' इति । अत्र योगसिद्ध्यधिकरणे विरोधः परिहृतोऽस्माभिर्मोक्षपरीक्षायाम् । 'कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते । तदभ्यासो हरत्येनस्तस्मात् कल्याणमभ्यसेत् ॥' इति शुभकर्मणां जन्मान्तरे शुभकर्मप्रवृत्तीच्छाऽपि प्रयोजनम् । यत्तु 'अयमेव क्रियायोगो ज्ञानयोगस्य साधकः । कर्मयोगं विना ज्ञानं कस्यचिन्नेह दृश्यते ॥' इति आत्मज्ञानार्थत्वमुक्तम्, तत्र 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।' इति वचनात् उपात्तदुरितक्षयहेतुतयैव, न साक्षात् ।

## पदप्रकाशिका

[पृ. ४–७]

### तत्त्वज्ञानद्वारा विहितं कर्म मुक्तिसाधनम्

ननु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या सकलवैदिकधुरीणानामात्मज्ञानसाध्यपरमपुरुषार्थापवर्गमुख्योपायात्मानात्मविचार एव श्रेयस्कर इति किमुत(? किमिति) 'कर्मचितो लोकः क्षीयते' इत्यादिश्रुत्या धूमार्चिरादिमार्गप्रदर्शनेन च क्षुद्रफलकोऽयमारम्भः ? इति चेत् । उच्यते– ये तु नित्यसुखाभिव्यक्तिं येऽपि दुःखध्वंसं वा अविद्यानिवृत्तिं वा लिङ्गशरीरलयं वाऽपवर्गमाहुस्तेषामपि शरीरपरिग्रहाभावे अविवाद एव, एतद्विरुद्धायास्तु वात्स्यायनस्मृतेर्द्व्यष्टवर्षकामिनीनीविमोक्ष एवापवर्ग इति तस्याः(? इत्यस्याः) काममूलत्वेनाप्रामाण्यनिश्चयाद्वैसर्जनाधिकरणन्यायेन श्रुत्यकल्पनात् । अतः सर्ववादिसंमतमिदमेवापवर्गलक्षणं कर्काचार्यैरुदाहृतम्– 'शुभाशुभकर्मोपभोगनिमित्तैरनन्तर्येण प्राणिनां शरीरपरिग्रहाभावोऽपवर्गः' इति । अयं चापवर्गो निषेधकाम्यवर्जनान्नित्यानुष्ठानाच्च जायते, नेतरथा ।

नन्विदमयुक्तम्, कर्मणां तावत् 'कर्मणा पितृलोकः' इति फलान्तरविधानेन निराकाङ्क्षत्वात्, प्रत्युत 'एतदेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति, 'न कर्मणा न प्रजया,' 'नास्त्यकृतः कृतेन' इत्यादिश्रुतिसहस्रैर्मुमुक्षोः कर्मणां त्यागविधानात् । अतो न कर्मसाध्यत्वमिति चेत्, सत्यम्, तथापि कर्मणां

विविदिषावाक्येन मोक्षे उपादानात् । तथाहि— यथा 'अश्वेन जिगमिषन्ति' इत्यत्र गमनफले ग्रामसंयोगेऽश्वोपादानम्, तथा 'तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यनेनापवर्गोद्देशेन तृतीयाश्रुत्या कर्मणां संयोगपृथक्त्वाधिकरणन्यायेन तादर्थ्येन प्रयोगान्तरानुपादानात् (? तादर्थ्येनोपादानात्) मुक्तेः कर्मसाध्यत्वम् । न च पदश्रुत्या इच्छावेदनयोरन्यतरस्य भाव्यत्वं स्यात्, न मुक्तेरिति वाच्यम्, तयोरपुरुषार्थत्वात्, विधिश्रुत्या पुरुषार्थस्यैव भाव्यत्वात्, पदश्रुत्यपेक्षया तस्या बलीयस्त्वात् । तत्र 'कथं कर्मणा मोक्षः साध्यते ?' इत्यपेक्षायां पूर्वोक्तोपभोगाभावद्वारेणेति सर्वं समञ्जसम् । † अस्ति चाऽऽत्मज्ञानस्यापि परंपरयोपयोगः । अस्तु चाऽऽत्मज्ञानस्यापि मुक्ति( ? मुक्तौ )व्यापारत्वम् । व्यापारस्तु तज्जन्यत्वे सति तज्जन्यजनक इति । तच्च नित्यकर्मणैवेति संक्षेपः ।

## परिभाषाप्रकाशः

[ पृ. २९–४३ ]

धर्माधर्मस्वरूम्, धर्मप्रयोजनम्, साधारणोऽसाधारणश्चेति द्विविधः पञ्चविधश्च धर्मः, परमो धर्मः आत्मदर्शनम्

अथ स्वरूपतो धर्माधर्मनिरूपणम् । तत्राऽऽत्मगुणौ धर्माधर्माविति नैयायिकाः । तदुक्तम्— 'विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः । प्रतिषिद्धक्रियासाध्यः पुंगुणोऽधर्म उच्यते ॥' इति । विहितक्रिया ज्योतिष्टोमादिः । प्रतिषिद्धक्रिया सुरापानादिः । पुमान् आत्मा । भाट्टास्तु द्रव्यगुणक्रियादिकमेव श्रेयःसाधनत्वेन रूपेण धर्ममाहुः । तथा च तर्कपादे— 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते । ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥' इति । द्रव्यं गोदोहनादि, क्रिया यागादिः, गुणः आरुण्यादिः । आदिशब्दाज्जातिर्ब्राह्मणत्वादिः । तत्र परमेश्वरनामोच्चारणादावव्यहितोत्तरक्षणे पापक्षयजनकत्वादपूर्वाजनके, तादृशे एव च कर्मनाशाजलस्पर्शादौ पुण्यक्षयजनके आपामरं धर्माधर्मव्यवहारदर्शनाद्भट्टमतमेव साधीय इति प्रतीमः । अत एव 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' ( ऋसं. १०।९०।१६ ), तथा 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' ( बृउ. ३।२।१३ ) इति श्रुतौ, 'इष्टापूर्तौ स्मृतौ धर्मौ' इति स्मृतौ यज्ञादिषु †धर्मपदप्रयोगः साधु संगच्छते । यस्तु 'धर्मः क्षरति कीर्तनात्,' 'पुण्यदः पुण्यमाप्नोति, पापदः पापमाप्नोति' इत्यादौ अपूर्वे धर्मपदप्रयोगः स उदाहृतलौकिकवैदिकव्यवहारानुरोधेन क्रियादावेव शक्तौ निर्णीतायां लाक्षणिकः । अस्तु वोभयत्रापि शक्तिः, तथाऽपि विहितप्रतिषिद्धावेव धर्माधर्मावस्माभिर्निरूप्येते । तत्र को धर्म इति जिज्ञासायां तल्लक्षणमाह मनुः— 'विद्वद्भिः

---

† ग्रन्थस्यास्य 'आत्मज्ञानस्य यत् मुक्तिकारणत्वं तत् परंपरया कारणान्तरव्यवधानेन' इति यथाश्रुतोऽर्थो नोपपद्यते, ज्ञानमात्रकारणतावादे ज्ञानकर्मसमुच्चयकारणतावादे वा ज्ञानस्य साक्षान्मुक्तिसाधनत्वात् । तेनायमर्थः— आत्मज्ञानस्यापि परंपरया व्यवधानरूपेण मुक्तौ उपयोगः कारणत्वम् अस्तीति । अयमेवार्थोऽग्रिमग्रन्थेन स्पष्टं व्याख्यातः । विध्यपेक्षितकर्मभाव्यत्वं पुरुषार्थत्वेन यद्यपि मुक्तेरेव, तस्यां भाव्यमानायामात्मज्ञानस्यापि व्यापाररूपेण कर्मजन्यत्वमस्त्येवेति तात्पर्यार्थः । एतेन ग्रन्थकृताऽऽत्मनः समुच्चयवादित्वमाविष्कृतम्, कर्मज्ञानयोर्मुक्तेश्च कार्यकारणभावस्य स्वशब्देनोक्तत्वात्, आत्मज्ञाननिष्ठस्य व्यापारत्वस्यान्यथाऽनुपपत्तेश्च । कर्मज्ञानयोर्मुक्तौ कारणत्वं समुच्चयवादः । तच्चोभयोः कारणत्वं ज्ञानस्य व्यापारत्वाभ्युपगमानभ्युपगमाभ्यां द्विधा संभवति । ज्ञानमात्रकारणतावादे तु ज्ञानस्य कर्मजन्यत्वेऽपि न कर्मव्यापारत्वमभ्युपेयते ।

† 'धर्मस्य पदं धर्मपदम् इति विग्रहः, न तु धर्मः इति पदम्' इति । तेन धर्मपदपर्यायपुण्यादिपदमपि धर्मपदम् । अतः 'पुण्यो वै' इति पूर्वोक्तश्रुतौ धर्मेतिपदप्रयोगाभावेऽपि न क्षतिः । धर्माधर्मयोः प्रकृतत्वात् उक्तश्रुतौ पापशब्दस्याधर्मशब्दपर्यायस्य प्रयोगाच्च उक्तविधया अधर्मपदप्रयोगस्यापि साधुसंगतिरर्थसिद्धा बोध्या ।

सेवितः सद्भिर्नित्यमद्वेषरागिभिः । हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ ’ (मस्मृ. २।१) इति । अत्र ‘ यो धर्मः ’ इति धर्मसामान्यमुद्दिश्य ‘ विद्वद्भिः ’ इत्यादिना लक्षणं विधीयते । विद्वद्भिः वेदार्थविद्भिः । सद्भिः प्रमातृभिः । अनेन विशेषणद्वयेन वेदप्रमापितत्वं लक्ष्यते । अद्वेषरागिभिः निषिद्धफलकरागद्वेषशून्यैः । अनेन बलवदनिष्टाप्रयोजकत्वं लक्ष्यते । हृदयेनाभ्यनुज्ञात इत्यनेन श्रेयःसाधनत्वम् । तत्रैव हि मनोऽभिमुखं भवति । तदयमर्थः—बलवदनिष्टाप्रयोजकत्वे सति श्रेयःसाधनतया वेदप्रमापितत्वं तत्त्वमिति । श्येनस्वर्गभोजनव्यावृत्त्यर्थं विशेषणत्रयम् । कादाचित्कदुर्वृत्तपुत्रजनकपुत्रेष्ट्यादिसंग्रहार्थं च बलवदनिष्टं निर्धारणेन विशेषणीयम् । श्येनस्तु न धर्मः, अवधारितबलवदनिष्टप्रयोजकत्वात् । यदि तु पुत्रेष्ट्यादेः फलस्य पुत्रस्य कूटसाक्ष्यकारित्वं ज्योतिःशास्त्रादितोऽवधार्यते तदा पुत्रेष्टि( ? ष्ट्यादि )रप्यधर्म एव, निर्धारितगवादिपतनसंकीर्णमार्गस्थकूपखननमिव । अथवेष्टतावच्छेदकस्य बलवदनिष्टजनकतानवच्छेदकत्वं वाच्यम् । पुत्रत्वं तु तथा, अभिचारत्वं तु न तथेति तद्व्यावृत्तिः । तथा च जैमिनिः ‘ चोदनालक्षणोऽर्थो धर्मः ’ इति धर्मलक्षणमाह । अर्थग्रहणं श्येनव्यावृत्त्यर्थमिति शबरादयः । अनेनाधर्मलक्षणमपि सूचितम् । तच्च बलवदनिष्टानुबन्धित्वेन वेदप्रमापितत्वम् । तदप्युक्तं भाष्यकृता— ‘ कोऽर्थः ? योऽभ्युदयाय, कोऽनर्थः ? योऽनभ्युदयाय ’ इति । अथवा विधिविषयो धर्मः । रागतः प्राप्तत्वे सति प्रतिषेधविषयोऽधर्मः । श्येनस्तु विधिविषयत्वाद्धर्म एव । तत्फलं त्वभिचारः ‘ नाभिचरेत् ’ इति निषेधविषयत्वादधर्मः । अत एव च श्येने शिष्टानां विगानम् । तदेतदाह विश्वामित्रः— ‘ यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः । स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥ ’ । शंसन्ति विहितं मन्यन्ते । विगर्हन्ति प्रतिषिद्धं मन्यन्ते । आपस्तम्बोऽपि— ‘ न धर्माधर्मौ चरत आवां स्व इति, न देवा न गन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति । यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं विगर्हन्ति सोऽधर्मः’ (आध. १।२०।६,७ ) । आत्मकथनाय सर्वलोकप्रत्यक्षं धर्माधर्मौ ‘ आवां वर्तावहे ’ इति ब्रुवाणौ न भ्रमतः, नापि देवादयः ‘ अयं धर्मः, अयमधर्मः ’ इत्याचक्षते । शेषं सुगमम् । भविष्यपुराणेऽपि— ‘ धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम् । ’ । श्रेयः ( श्रेयः— )साधनम् । मुख्यं श्रेयस्त्वभ्युदयरूपम् । तथा च तत्साधनं धर्म इत्यर्थः । धर्मो द्विविधः—साधारणोऽसाधारणश्च । आद्यमाह बृहस्पतिः— ‘ दया क्षमाऽनसूया च शौचानायासमङ्गलम् । अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥ ’ । ...याज्ञवल्क्यः— ‘ इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥ ’ ( यास्मृ. १।८ ) । योगः बाह्यविषयकचित्तवृत्तिनिरोधः । परमः देशकालजात्याद्यनपेक्षः सन्परमपुरुषार्थसाधनम् ।

ननु ‘ नावेदविन्मनुते तं बृहन्तम् ’ ( तैब्रा. ३।१२।९।७ ) इति श्रुत्याऽवेदविदः आत्मसाक्षात्कारप्रतिषेधात् ‘ तं त्वौपनिषदं पुरुषं पृच्छामि ’ ( बृउ. ३।९।२६ ) इत्यादिश्रुतिभिश्च वेदैकजन्यत्वविधानाद्वेदानधिकारिणां शूद्रादीनां कथमात्मसाक्षात्कार इति चेत्, पुराणश्रवणादिनेति ब्रूमः, अन्यथा पुराणादावात्मनिरूपणवैयर्थ्यापत्तेः । तथा च भागवते— ‘ स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं मुनिना कृपया कृतम् ॥ ’ ( भाग. १।४।२५ ) इति । अत्र त्रयीं प्रतिषिध्य तत्स्थाने भारतं विधीयते । स्थानापत्त्या च ‘ न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम् ’ इत्यत्रैरापदस्य गिरापदकार्यकारित्ववत् वेदकार्यकारित्वावगमाद्भारतस्य वेदकार्यात्मज्ञानकारित्वसिद्धिः । किंच ‘ श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः । ’ इत्यत्र णिजर्थस्य रागतः प्राप्तत्वेनाविधेयत्वात् ‘एतया निषादस्थपतिं याजयेत् ’ इतिवत् प्रयोज्यव्यापार एव पुराणश्रवणं विधीयते । तस्य च प्रयोजनाकाङ्क्षायां ‘ श्रुतेन पुराणेन यच्छक्यते तत्कुर्यात् ’ इत्युपबन्धात् ‘ आत्मप्रतिपादकपुराणश्रवणेनाऽऽत्मज्ञानं भावयेत् ’ इति विधानात्सिध्यति शूद्रस्याप्यात्मज्ञानाधिकारः । ‘नावेदविन्मनुते’ इति श्रुतिस्तु वेदाधिकारिणो वेदातिरिक्तप्रमाणनिषेधपरा वेदविरुद्धतर्कादिनिषेधपरा वा व्याख्येया ।

'तं त्वौपनिषदम्' इत्येषाऽपि उपनिषदतिरिक्ततार्किकादिसंमतानुमानादिमूलप्रमाणनिवृत्त्यर्था । न चाननुगतकारणजन्यत्वान्मोक्षे वैजात्यापत्तिरिति वाच्यम्, उभयविधस्यापि साक्षात्कारस्य साक्षात्कारत्वेनैकेनैव रूपेण मोक्षजनकत्वाङ्गीकारात् । स्पष्टं च पुराणेन शूद्रस्य तत्त्वज्ञानं पुराणान्तरे– 'अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् । वदन्ति केचिन्मुनयः स्त्रीणां शूद्रसमानताम् ॥' इति । स च साक्षात्कारो योगाभ्यासादिव काशीमरणादितोऽपि भवतीत्यन्यदेतत् । विस्तरस्तु मोक्षप्रकाशे वक्ष्यते । इति साधारणो धर्मः ।

अथासाधारणः– धर्म इत्यनुवृत्तौ भविष्यपुराणे– 'स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः । वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् । वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥ वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते । वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ॥ यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्तते । स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ॥ वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते । स वर्णाश्रमधर्मस्तु मौञ्जयाद्या मेखला यथा ॥ यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते । यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥ निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥' ।

---

## वेदाः

यज्ञरूपाः प्रथमे धर्माः

**'[1]यज्ञेन यज्ञमयजन्त देवा-**
**स्तानि धर्माणि प्रथमान्यासन् ।**
**ते ह नाकं महिमानः सचन्त**
**यत्र पूर्वे साध्याः सन्ति देवाः ॥**

देवाः व्यवहर्तारो यजमानाः यज्ञेन निर्मथ्याग्निना यज्ञं होमसाधनमाहवनीयम् अयजन्त पूजितवन्तः अनुष्ठानाय संयोजितवन्तः इत्यर्थः । 'अग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते' ( तैसं. ६।२।१।७ ) इति हि तैत्तिरीयकम् । तानि धर्माणि अग्निसाधनानि कर्माणि प्रथमानि । प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि आसन्, फलप्रसवसमर्थान्यभवन्नित्यर्थः । ते ह ते च यजमानाः नाकम्, नास्मिन् अकम् अस्तीति नाकः स्वर्गः, तम्, महिमानः माहात्म्ययुक्ताः सचन्त संगताः । कीदृशं नाकम् ? यत्र यस्मिन्नाके पूर्वे पूर्वतनाः साध्याः साधनाः यज्ञादिसाधनवन्तः कर्मदेवा इत्यर्थः । ते सन्ति निवसन्ति तं सचन्त । तस्मादिदानीमपि मनुष्यैः एवं कर्तव्यमित्यर्थः । यद्वा, देवा इदानीं देवभागमापन्नाः पूर्वं यज्ञेन अग्निना पशुभूतेन यज्ञं यष्टव्यमग्निम् अयजन्त पूजितवन्तः । अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यम्, 'अग्निः पशुरासीत्तमालभन्त तेनायजन्त' ( तैसं. ५।७।२६।१ ) इति श्रुतेः । शिष्टं पूर्ववत् । यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्याः देवाः साधनाः छन्दोभिमानिनः । आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते । 'छन्दांसि वै साध्या देवास्तेऽग्नेऽग्निनाऽग्निमयजन्त ते स्वर्गं लोकमायन्नादित्याश्चैवेहाऽऽसन्नङ्गिरसश्च तेऽग्नेऽग्निनाऽग्निमयजन्त ते स्वर्गं लोकमायन्' ( ऐब्रा. १।१६ ) इति ब्राह्मणम् । एते देवाः स्वर्गे सन्ति भवन्ति, स्वर्गप्राप्ता इत्यर्थः । यद्वा, यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुम् अजयन्त पूजयन्ति । ते नाकं विष्णुलोकं महानुभावाः सचन्त संगच्छन्ते । यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम् । 'अग्निनाऽग्निमयजन्त देवाः' ( नि. १२।४१ ) इत्यादिनिरुक्तमनुसंधेयम् ।

ऋसा.

(१) ऋसं. १।१६४।५०, १०।९०।१६ ; असं. ७।५।१ ; तैसं. ३।५।११।५ सचन्त (सचन्ते) ; कासं. १५।१२ (६४) ; मैसं. ४।१०।३ (७१), ४।१४।२ (३२) ; शुसं. ३१।१६ ; ऐब्रा. ३।५।३५ ; शाब्रा. ८।२ ; शब्रा. १०।२।२।२ ; कब्रा. १८ (पृ. १०१) ; तैब्रा. ३।१२।७ तैसंवत् ; नि. १२।४१.

पापप्रवृत्तिकारणानि दैवगति-सुरा-मन्यु-द्यूत-अविवेकाः

'न स स्वो दक्षो वरुण ध्रुतिः सा
सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे
स्वप्नश्चनेदनृतस्य प्रयोता ॥

हे वरुण, सः स्वो दक्षः पुरुषस्य स्वभूतं तद्बलं पापप्रवृत्तौ कारणं न भवति । किं तर्हि ? ध्रुतिः स्थिरा उत्पत्तिसमये एव निर्मिता दैवगतिः कारणम् । सा च ध्रुतिर्वक्ष्यमाणरूपा– सुरा प्रमादकारिणी, मन्युः क्रोधश्च गुर्वादिविषयः सन्ननर्थहेतुः । विभीदकः द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन् अनर्थहेतुर्भवति । अचित्तिः अज्ञानम् अविवेककारणम् । अतः ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियन्तृत्वेन स्थितः ज्यायान् अधिकः ईश्वरः अस्ति । स एव तं पापे प्रवर्तयति । तथा चाऽऽम्नातम्– 'एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (कौउ. ३।८) इति । एवं च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इदिति पूरकः । स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते, किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्ते इति । अतो ममापराधो दैवागत इति हे वरुण, त्वया क्षन्तव्य इति भावः ।

ऋसा.

सप्त पातकानि

'सप्त मर्यादाः कवयस्ततक्षु-
स्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे
पथां विसर्गे धरुणेषु तस्थौ ॥

कवयः मेधाविनः ऋषयः सप्त मर्यादाः कामजेभ्यः क्रोधजेभ्यश्चोद्भूताः पानम्, अक्षाः, स्त्रियः, मृगया, दण्डः, पारुष्यम्, अन्यदूषणम् इति सप्त मर्यादाः; यद्वा, 'स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतकर्मणः पुनः पुनः सेवां पातकेऽनृतोद्यम्' (नि. ६।२७) इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः अवस्थिता( १ ताः ) ततक्षुः सुष्ठु लङ्घनीयाश्चक्रुः, त्यक्तवन्त इत्यर्थः । तासां मर्यादानाम् एकामित् एकामेव अंहुरः पापवान्पुरुषः अभिगात् अभिगच्छति । यस्त्वेवं करोति स पापवान् भवतीत्यर्थः । किंच, आयोः तस्य मनुष्यस्य स्कम्भः स्कम्भयिता निरोधकोऽग्निः उपमस्य समीपभूतस्य आयोः नीळे स्थाने पथाम् आदित्यरूपस्य स्वस्य रश्मीनां विसर्गे विसर्जनस्थाने अन्तरिक्षमध्ये वर्तमानेषु धरुणेषु उदकेषु तस्थौ विद्युदात्मना तिष्ठति । अनेन लोकत्रयवर्तित्वमिति ।

ऋसा.

सत्यप्रशंसा, यज्ञेन देवानां जीवनम्

'सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।
ऋतेनाऽऽदित्यास्तिष्ठन्ति दिवि सोमो
अधि श्रितः ॥

सत्येन ब्रह्मणा अनन्तात्मना । ब्रह्म खलु देवानां मध्ये सत्यभूतः, तेन अधःस्थितेन भूमिः उत्तभिता उपरि स्तम्भिता यथा अधो न पतेत्तथा कृता । यद्वा, सत्येन अनृतप्रतियोगिना धर्मेण भूमिः उत्तभिता उद्धृता, फलिता भवतीत्यर्थः । असति सत्ये भूम्यां सस्यादयो न फलन्ति । तथा सूर्येण देवेन द्यौः उत्तभिता, सूर्यो हि द्युस्थानत्वाद्दिवं दधार । ऋतेन यज्ञेन आदित्याः अदितेः पुत्राः देवाः तिष्ठन्ति यज्ञे यजमानदत्तेन खल्वाहुत्या देवा उपजीवन्ति । दिवि द्युलोके सोमः देवानामाप्यायनकारी वल्लीरूपो देवतारूपश्च अधि श्रितः अधितिष्ठति । इति स्वपतिं सोमं सूर्या स्तौति ।

ऋसा.

---

(१) ऋसं. ७।८६।६.

(२) ऋसं. १०।५।६; असं. ५।१।६; नि. ६।२७.

(१) ऋसं. १०।८५।१; असं. १४।१।१.

विराट्पुरुषावयवाः चातुर्वर्ण्यम्

[1]यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः, तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः ? अस्य पुरुषस्य मुखं किमासीत् ? कौ बाहू अभूताम् ? कौ ऊरू कौ च पादौ उच्येते ? प्रथमं सामान्यरूपः प्रश्नः, पश्चान्मुखं किमित्यादिना विशेषविषयाः प्रश्नाः ।
ऋसा.

[2]ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति । अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखम् आसीत्, मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः क्षत्रियत्वजातिमान्पुरुष सः बाहू कृतः बाहुत्वेन निष्पादितः, बाहुभ्यामुत्पादित इत्यर्थः । तत् तदानीम् अस्य प्रजापतेः यत् यौ ऊरू तद्रूपो वैश्यः संपन्नः, ऊरुभ्यामुत्पन्न इत्यर्थः । तथा अस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषः अजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तैसं. ७।१।१।४) इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये ।
ऋसा.

(१) ऋसं. १०।९०।११ ; असं. १९।६।५ कौ बाहू का ऊरू ( किं बाहू किमूरू) ; शुसं. ३१।१० उत्तरार्धे (मुखं किमस्याऽऽसीत्किं बाहू किमूरू पादा उच्येते ॥) ; कब्रा. ११ (पृ. १०१) ; तैआ. ३।१२।५ का ऊरू पादा उच्येते (कावूरू पादावुच्येते).

(२) ऋसं. १०।९०।१२ ; असं. १९।६।६ न्यः कृतः (न्योऽभवत्) ऊरू (मध्यं) ; शुसं. ३१।११ ; कब्रा. १२ (पृ. १०१) ; तैआ. ३।१२।५.

श्रद्धा यज्ञकर्मणि प्रवर्तयित्री, श्रद्धा देवता दानादिधर्मानुष्ठानस्य प्रियफलदात्री

[1]श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसाऽऽ वेदयामसि ॥

पुरुषगतोऽभिलाषविशेषः श्रद्धा । तया श्रद्धया अग्निः गार्हपत्यादिः समिध्यते संदीप्यते । यदा हि पुरुषे श्रद्धा अग्निगोचर आदरातिशयो जायते तदैव पुरुषोऽग्नीन् प्रज्वालयति, नान्यदा । श्रद्धयैव हविः पुरोडाशादिहविश्च हूयते आहवनीये प्रक्षिप्यते । यद्वा, अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्यया अग्निः समिध्यते । श्रद्धाम् उक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थितां वचसा वचनेन स्तोत्रेण आ वेदयामसि अभितः प्रख्यापयामः ।
ऋसा.

[2]प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥

हे श्रद्धे, ददतः चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियम् अभीष्टफलं कुरु । दिदासतः दातुमिच्छतश्च हे श्रद्धे, प्रियं कुरु । मे मम संबन्धिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु च इदम् उदितम् उक्तं प्रियं कृधि कुरु ।
ऋसा.

धनदात्री श्रद्धा देवासुरयजमानेषु स्थितिशीला

[3]यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥

देवाः इन्द्रादयः असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्तः, एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृषु अस्माकम् अस्मत्संबन्धिषु तेषु उदितं तैरुक्तं प्रार्थितं फलजातं कृधि कुरु ।
ऋसा.

(१) ऋसं. १०।१५१।१ ; तैब्रा. २।८।८।६ हूयते (विन्दते) ; नि. ९।३१.

(२) ऋसं. १०।१५१।२ ; तैब्रा. २।८।८।६.

(३) ऋसं. १०।१५१।३ ; तैब्रा. २।८।८।७.

**[१]श्रद्धां देवा यजमाना वायुगोपा उपासते ।**
**श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु ॥**

देवाः यजमानाः मनुष्याश्च वायुगोपाः वायुः गोपा रक्षिता येषां ते तादृशाः सन्तः श्रद्धां देवीम् उपासते प्रार्थयन्ते । हृदय्यया हृदये भवा हृदय्या, तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धामेव परिचरन्ति सर्वे जनाः । कुतः इत्यत आह– यतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावान् जनः, तत इत्यर्थः । ऋसा.

कालत्रये श्रद्धाया देव्या आवश्यकता

**[२]श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि ।**
**श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥**

श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे । तथा मध्यंदिनं परि मध्यंदिनं परिलक्ष्य, मध्यंदिने इत्यर्थः । मध्याह्नेऽपि तां श्रद्धाम् आह्वयामहे । सूर्यस्य सर्वस्य प्रेरकस्य आदित्यस्य निम्रुचि अस्तमयवेलायां सायंसमयेऽपि तां श्रद्धाम् आह्वयामहे । ईदृग्रूपे हे श्रद्धे, नः अस्मान् इह लोके कर्मणि वा श्रद्धापय श्रद्धावतः कुरु । ऋसा.

ब्राह्मणकर्तव्यं ब्रह्मचर्ययज्ञप्रजाभिः ऋषिदेवपितॄणामृणत्रयस्यापाकरणम्

**[३]जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते । तदवदानानामवदानत्वम् ॥**

ब्रह्मचर्येण वेदाभ्यासेन । ब्रह्मचारित्वेन गुरुगृहे वसतीति ब्रह्मचारिवासी । वेदाभ्यासादिभिरपाकर्तव्यं यदृणं तत् हृदयाद्यवदानैरेव अपाकरोति । ऋणमवदयते एभिः इत्यवदानत्वम् । तैसा.

(१) ऋसं. १०।१५१।४; तैब्रा. २।८।८।७ विन्दते (हूयते).

(२) ऋसं. १०।१५१।५; तैब्रा. २।८।८।७ ह नः (ह मा).

(३) तैसं. ६।३।१०।५.

प्रजापतिकृता सत्यानृतव्यवस्था

**[१]दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः ।**
**अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः ॥**

प्रजापतिः रूपे रूपवती मूर्तिमती सत्यानृते दृष्ट्वा व्याकरोत् व्याकरणं पृथक्त्वं कृतवान् इदं सत्यमिदमनृतमिति पृथगवास्थापयत् । तदेवाऽऽह– अनृते अश्रद्धां नास्तिक्यमदधात् अस्थापयत्, अनृतस्याश्रद्धानिमित्तत्वात् । सत्ये श्रद्धामदधात्, सत्यस्य श्रद्धानिमित्तत्वात् । श्रद्धा आस्तिक्यबुद्धिः । शुम.

अमृतत्वं पुरुषोत्तमज्ञानात्

**[२]वेदाहमेतं पुरुषं महान्त-**
**मादित्यवर्णं तमसः परस्तात् ।**
**तमेव विदित्वाऽतिमृत्युमेति**
**नान्यः पन्था विद्यतेऽयनाय ॥**

एतं महान्तं सर्वोत्कृष्टं पुरुषं सूर्यमण्डलस्थमहं वेद जानामि इति ऋषेर्वचनम् । कीदृशम् ? आदित्यवर्णम् आदित्यस्येव वर्णो यस्य तम् । उपमान्तराभावात्स्वोपमम् । तथा तमसः परस्तात् दूरतरं तमोरहितमित्यर्थः । तमःशब्देन अविद्या उच्यते । तमेवाऽऽदित्यं विदित्वा मृत्युम् अति एति अतिक्रामति परं ब्रह्म गच्छति । अयनाय आश्रयाय अन्यः पन्थाः मार्गः न विद्यते । सूर्यमण्डलान्तःपुरुषम् आत्मरूपं ज्ञात्वैव मुक्तिः । शुम.

श्रद्धा विश्वस्य जगतः आधारः देवत्वकर्त्री अमृतत्वफला च

**[३]श्रद्धा देवानधिवस्ते । श्रद्धा विश्वमिदं जगत् । श्रद्धां कामस्य मातरम् । हविषा वर्धयामसि ॥**

(१) कासं. ३८।१ (७); मैसं. ३।११।६ (४५); शुसं. १९।७७; तैब्रा. २।६।२।३.

(२) शुसं. ३१।१८; कब्रा. २ (पृ. १०३); तैआ. ३।१३।१ तमेव...मेति (तमेवं विद्वानमृत इह भवति); श्वेउ. ३।८.

(३) तैब्रा. २।८।८।८.

इयं श्रद्धा देवी देवानधिवस्ते देवेष्वधिवसति । विश्वं सर्वम् इदं जगत् श्रद्धामयम्, इच्छाविश्वासव्यतिरेकेण कस्यापि व्यवहारस्याभावात् । कामस्य मातरं काम्यमानफलस्य उत्पादिकां श्रद्धां देवीमनेन हविषा वर्धयामसि अभिवृद्धां संतुष्टां कुर्मः । तैब्राभा.

'श्रद्धया देवो देवत्वमश्नुते ।
श्रद्धा प्रतिष्ठा लोकस्य देवी ।
सा नो जुषाणोप यज्ञमागात् ।
कामवत्साऽमृतं दुहाना ॥

येयमास्तिक्यरूपा श्रद्धा, तयैव देवः सर्वोऽपीन्द्रादिदेवः देवत्वं प्राप्नोति, श्रद्धारहितस्य तपआदेर्निरर्थकत्वात् । तथा च स्मर्यते– ' अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥' ( भगी. १७।२८ ) इति । अतः श्रद्धा देवी लोकस्य सर्वस्य प्रतिष्ठा आश्रयः । सा देवी जुषाणा प्रीयमाणा नः अस्मदीयं यज्ञम् उपागात् प्राप्नोतु । कीदृशी श्रद्धा ? कामवत्सा फलकामनैव वत्सस्थानीया यस्याः सा कामवत्सा । अत एव अमृतं फलं दुहाना दोग्ध्री । श्रद्धालुर्हि यत्फलं कामयते तत्सिध्यत्येव । तैब्राभा.

श्रद्धा देवी प्रथमजा ऋतस्य ।
विश्वस्य भर्त्री जगतः प्रतिष्ठा ।
तां श्रद्धां हविषा यजामहे ।
सा नो लोकममृतं दधातु ।
ईशाना देवी भुवनस्याधिपत्नी ॥

श्रद्धाख्या देवी ऋतस्य सत्यस्य परमार्थस्य ब्रह्मणः सकाशात् प्रथमजा आदावेवोत्पन्ना । अत एव विश्वस्य भर्त्री सर्वस्य प्राणिजातस्य पोषयित्री जगतः प्रतिष्ठा आश्रयः, श्रद्धाहीनस्य वैदिकस्य लौकिकस्य वा व्यवहारस्य फलपर्यवसायित्वाभावात् । तामेतां श्रद्धां देवीं वयं हविषा यजामहे पूजयामः । सा श्रद्धा देवी नः अस्माकम् अमृतम् अविनाशं लोकं संपादयतु । सा हि देवी यस्मात् भुवनस्याधिपत्नी पालयित्री, तस्मात् ईशाना अस्माकं लोकं संपादयितुं समर्था । तैब्राभा.

अमृतत्वसाधनं पापनाशकं च पवित्राचरणम्

'चरणं पवित्रं विततं पुराणम् ।
येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूताः ।
अति पाप्मानमरातिं तरेम ॥

चरत्यनेनेति पादेन्द्रियं चरणम्, शास्त्रीयाचरणं वा तेनोच्यते । तच्च पवित्रं शुद्धिकारणम्, विततं सर्वप्राणिविषयत्वेन विस्तीर्णम्, पुराणं सृष्ट्यादिमारभ्य प्रवृत्तत्वाच्चिरन्तनम् । येन चरणेन देवेन पूतः शोधितः पुरुषो दुष्कृतानि तरति पापानि विनाशयति, पवित्रेण अन्यस्य शोधकेन स्वयमपि शुद्धेन तेन चरणदेवेन पूताः वयं पाप्मानमरातिं पापरूपं शत्रुम् अतितरेम अतिशयेन लङ्घयामः । तैब्राभा.

'लोकस्य द्वारमर्चिमत्पवित्रम् ।
ज्योतिष्मद्भ्राजमानं महस्वत् ।
अमृतस्य धारा बहुधा दोहमानम् ।
चरणं नो लोके सुधितां दधातु ॥

यदेतच्चरणाख्यं देवतास्वरूपं तदेतत् नः अस्माकं स्वर्गलोके सुधितां सुखयुक्तामवस्थितिं दधातु संपादयतु । कीदृशं चरणम् ? लोकस्य द्वारं स्वर्गस्य द्वारवत्प्रवेशसाधनम्, अर्चिमत् अर्चनायुक्तं सर्वैः पूज्यम्, पवित्रं शोधकम्, ज्योतिष्मत् त्विषा प्रकाशनसामर्थ्योपेतम्, भ्राजमानं स्वयमपि दीप्यमानम्, महस्वत् माहात्म्ययुक्तम्, अमृतस्य पीयूषस्य धारा बहुधा दोहमानम् अनेकप्रकारेण संपादनशीलम् । तैब्राभा.

देवर्षिपितृमनुष्याणाम् ऋणी मनुष्यो जन्मतः, तदृणापाकरणम् अध्ययनेन यज्ञेन प्रजया दानेन च कर्तव्यम्

'ऋणं ह वै जायते योऽस्ति । स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥

(१) तैब्रा. ३।१२।३।१–२.

(१) तैब्रा. ३।१२।३।४ ; नाउ. १।११.

(२) तैब्रा. ३।१२।३।४. (३) शब्रा. १।७।२।१–६.

यो द्विजातिः स जायमान एव देवादिभ्यश्चतुर्भ्योऽपि ऋणवान् अधमर्णिको जायते । ऋणित्वे जननमेव निमित्तमित्यर्थः । शब्रासा.

**स यदेव यजेत तेन देवेभ्य ऋणं जायते । तद्ध्येभ्य एतत्करोति यदेनान्यजते यदेभ्यो जुहोति ॥**

संग्रहोक्तं विवृणोति— स यदेवेति । यजेत इति यत् तेन कारणेन यागेन निमित्तेन देवेभ्यस्तदृणं जायते । हि यस्मात् यागकर्मभ्य एभ्यो देवेभ्यः एतदिदानीं करोति, अतस्तेभ्यस्तदृणमित्यर्थः । तच्छब्दार्थमाह— यदेनानिति । यागहोमावुभावपि नियमेन देवार्थमेव यतः क्रियेते अतस्तेषां तौ स्वम् , तस्यावश्यप्रदानत्वादृणी जायते इत्यर्थः । एवमुत्तरवाक्यान्यपि योज्यानि । शब्रासा.

**अथ यदेवानुब्रुवीत तेनर्षिभ्य ऋणं जायते । तद्ध्येभ्य एतत्करोति । ऋषीणां निधिगोप इति ह्यनूचानमाहुः ॥**

अनुब्रुवीत अनुवचनं कुर्यात् , अधीयीतेत्यर्थः । निधिगोप इतीति । उपभुज्यमानोऽपि यो न विनश्यति स निधिः । तादृशः ऋषीणां संबन्धी यो वेदाख्यो निधिः , तस्य गोपायिता इति वेदमनूचानमाहुर्बुधाः । अतस्तेषां प्रवचनं धनमिति गम्यते । शब्रासा.

**अथ यदेव प्रजामिच्छेत तेन पितृभ्य ऋणं जायते । तद्ध्येभ्य एतत्करोति यदेषां संतताऽव्यवच्छिन्ना प्रजा भवति ॥**

**अथ यदेव वासयेत तेन मनुष्येभ्य ऋणं जायते । तद्ध्येभ्य एतत्करोति यदेनान्वासयते यदेभ्योऽशनं ददाति । स य एतानि सर्वाणि करोति स कृतकर्मा । तस्य सर्वमाप्तं सर्वं जितम् ॥**

वासयेत गृहे अन्नादिप्रदानेन इदानीम् अवकाशं प्रयच्छेत । यो जायमानो ब्राह्मण एतानि यागानुवचनादीनि सर्वाण्यपि करोति स कृतकर्मा कृतकृत्यः । तस्मादाप्तव्यं सर्वमाप्तं भवति देवादिसर्वस्थानम् , सर्वं जेतव्यं जितं भवति । शब्रासा.

**स येन देवेभ्य ऋणं जायते तदेनांस्तदवदयते यद्यजते । अथ यदग्नौ जुहोति तदेनांस्तदवदयते । तस्माद्यत्किंचाग्नौ जुह्वति तदवदानं नाम ॥**

इत्थं तेषामृणत्वं प्रति तेन अवदयते । दयतिर्दानार्थः । अवप्रत्यर्पणं देवानां स्वभूतमृणं विभज्य दत्तवान्भवति । तच्छब्दार्थमाह— यद्यजत इति । यजते इति यदस्ति तत् तेन यागेनेत्यर्थः । एवं होमेनापि । यस्मादेवं तस्माद्यत्किंच चरुपुरोडाशादिकम् अग्नौ जुह्वति तदवत्तं हविः अवदानमिति प्रसिद्धं भवति । शब्रासा.

अन्योन्योपकृतिः यज्ञः देवैः कृतः प्रजापतिस्वरूपः ,
स्वार्थजन्यः अतिमानः पराभवकारणम्

**(१)देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा अतिमानेनैव ' कस्मिन्नु वयं जुहुयाम ' इति स्वेष्वेवाऽऽस्येषु जुह्वतश्चेरुः । तेऽतिमानेनैव पराबभूवुः । तस्मान्नातिमन्येत । पराभवस्य हैतन्मुखं यदतिमानः ॥**

तत्र वाजपेयं विधातुं प्रस्तौति— देवाश्च वा असुराश्चेति । प्राजापत्याः प्रजापतिना सृष्टाः उभये द्विविधाः देवाश्च असुराश्च पस्पृधिरे स्पर्धां चक्रुः । ततोऽसुराः स्वतोऽन्यः प्रबलो नास्तीति अतिमानेन अभिमानेन भूयिष्ठेन दर्पेण कस्मिन्नु खलु होमाधिकरणे वयं जुहुयाम होमं कुर्याम ? इति धिक्कृत्य स्वकीयेषु आस्येषु होमं चक्रुः । ते असुराः अत्यन्तगर्वेण पराजिताः । तस्मात् अद्यापि कश्चिदपि नातिमानं कुर्यात् । अतिमानः अभिमानः यत् तत् पराभवस्य प्रापकमिति । शब्रासा.

**अथ देवा अन्योन्यस्मिन्नेव जुह्वतश्चेरुः । तेभ्यः प्रजापतिरात्मानं प्रददौ । यज्ञो हैषामास । यज्ञो हि देवानामन्नम् ॥**

देवानां तद्विपर्ययं दर्शयति— अथ देवा इति । देवाः खलु अन्योन्यस्मिन् जुहुवुः , इन्द्रः अग्नौ, अग्निः इन्द्रे इत्यादिक्रमेणेत्यर्थः । तेभ्यः देवेभ्यः अन्योन्यस्मिन् देवतात्वेन होमकरणात् प्रीतः प्रजापतिः आत्मानं शरीरं

(१) शब्रा. ५।१।१।१–२.

दसवाम्। यशो हैषामिति। हि यस्मात् देवानामन्नं यशः, अतोऽन्योन्यस्मिन् हविःप्रदानेनान्नसंभवात् प्रजापतिशरीरं यश एव तेषामासीदित्यर्थः। यशशब्देन वाजपेय उच्यते, प्रकरणबलात्। तथा च तैत्तिरीयके– 'एष वाव यशो यद्वाजपेयः' (तैब्रा. १।३।२।५) इति।

शब्रासा.

देवेषु चातुर्वर्ण्यसृष्टिः, क्षत्रस्य क्षत्रं (शास्ता) धर्मः सत्यरूपः, सत्यं धर्मः

**'ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात्परं नास्ति। तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये। क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एनं हिनस्ति स्वां स योनिमृच्छति। स पापीयान्भवति यथा श्रेयांसं हिंसित्वा ॥**

सूचितः शास्त्रार्थः– 'आत्मेत्येवोपासीत' इति। तस्य च व्याचिख्यासितस्य सार्थकदेन 'तदाहुर्यद्ब्रह्मविद्या' इत्यादिना संबन्धप्रयोजने अभिहिते। अविद्यायाश्च संसाराधिकारकारणत्वमुक्तम्– 'अथ योऽन्यां देवतामुपास्ते' इत्यादिना। तत्र अविद्वान् ऋणी पशुवद्देवादिकर्मकर्तव्यतया परतन्त्र इत्युक्तम्। किं पुनर्देवादिकर्मकर्तव्यत्वे निमित्तम्? वर्णा आश्रमाश्च। तत्र के वर्णाः? इत्यत इदमारभ्यते– यन्निमित्तसंबद्धेषु कर्मसु अयं परतन्त्र एवाधिकृतः संसरति। एतस्यैवार्थस्य प्रदर्शनाय अग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्तः। अग्नेस्तु सर्गः प्रजापतेः सृष्टिपरिपूरणाय प्रदर्शितः। अयं च इन्द्रादिसर्गः तत्रैव द्रष्टव्यः, तच्छेषत्वात्। इह तु स एवाभिधीयते अविदुषः कर्माधिकारहेतुप्रदर्शनाय। ब्रह्म वा इदमग्र आसीत्। यदग्निं सृष्ट्वा अग्निरूपापन्नं ब्रह्म, ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते, वै इदं क्षत्रादिजातं ब्रह्मैव अभिन्नमासीत् एकमेव, न आसीत्क्षत्रादिभेदः। तत् ब्रह्मैकं क्षत्रादिपरिपालयित्रादिशून्यं सत् न व्यभवत् न विभूतवत्, कर्मणे नालमासीदित्यर्थः। ततस्तद्ब्रह्म 'ब्राह्मणोऽस्मि, ममेत्थं कर्तव्यम्' इति ब्राह्मणजातिनिमित्तं कर्म चिकीर्षु आत्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपम् अति असृजत अतिशयेन असृजत सृष्टवत्। किं पुनस्तत् यत्सृष्टम्? क्षत्रं क्षत्रियजातिः। तद्व्यक्तिभेदेन प्रदर्शयति–यान्येतानि प्रसिद्धानि लोके देवत्रा देवेषु क्षत्राणीति। जात्याख्यायां पक्षे बहुवचनस्मरणात् व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम्। कानि पुनस्तानीत्याह– तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते– इन्द्रो देवानां राजा, वरुणो यादसाम्, सोमो ब्राह्मणानाम्, रुद्रः पशूनाम्, पर्जन्यो विद्युदादीनाम्, यमः पितॄणाम्, मृत्युः रोगादीनाम्, ईशानो भासाम्, इत्येवमादीनि देवेषु क्षत्राणि। तदनु इन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि। तदर्थ एव हि देवक्षत्रसर्गः प्रस्तुतः। यस्मात् ब्रह्मणा अतिशयेन सृष्टं क्षत्रं तस्मात्क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियन्तृ। तस्मात् ब्राह्मणः कारणभूतोऽपि क्षत्रियस्य क्षत्रियम् अधस्तात् व्यवस्थितः सन् उपरि स्थितम् उपास्ते। क्व? राजसूये। क्षत्र एव तत् आत्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति। राजसूयाभिषिक्तेन आसन्द्यां स्थितेन राज्ञा आमन्त्रितो ब्रह्मन्निति ऋत्विक् पुनस्तं प्रत्याह– 'त्वं राजन्ब्रह्मासि' इति। तदेतदभिधीयते–क्षत्र एव तद्यशो दधातीति। सैषा प्रकृता क्षत्रस्य योनिरेव यद्ब्रह्म। तस्मात् यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छति आप्नोति, ब्रह्मैव ब्राह्मणजातिमेव अन्ततः अन्ते कर्मपरिसमाप्तौ उपनिश्रयति आश्रयति स्वां योनिम्। पुरोहितं पुरो निधत्ते इत्यर्थः। यस्तु पुनर्बलाभिमानात् स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति हिंसति न्यग्भावेन पश्यति, स्वाम् आत्मीयामेव स योनिम् ऋच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति। स

(१) बृउ. १।४।११–१७,

एतत्कृत्वा पापीयान् पापतरो भवति । पूर्वमपि क्षत्रियः पाप एव क्रूरत्वात्, आत्मप्रसवहिंसया सुतराम् । यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति, तद्वत् । शंकर.

**स नैव व्यभवत् । स विशमसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥**

क्षत्रे सृष्टेऽपि स नैव व्यभवत् कर्मणे ब्रह्म तथा न व्यभवत्, वित्तोपार्जयितुरभावात् । स विशमसृजत कर्मसाधनवित्तोपार्जनाय । कः पुनरसौ विट्? यान्येतानि देवजातानि, स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थः । गणशः गणं गणम्, आख्यायन्ते कथ्यन्ते । गणप्राया हि विशः । प्रायेण संहता हि वित्तोपार्जने समर्थाः, न एकैकशः । वसवः अष्टसंख्यो गणः । तथैकादश रुद्राः, द्वादश आदित्याः, विश्वेदेवाः त्रयोदश विश्वाया अपत्यानि, सर्वे वा देवाः, मरुतः सप्त सप्तगणाः । शंकर.

**स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणम् । इयं वै पूषा । इयं हीदं सर्वं पुष्यति यदिदं किंच ॥**

सः परिचारकाभावात्पुनरपि नैव व्यभवत् । स शौद्रं वर्णमसृजत । शूद्र एव शौद्रः, स्वार्थेऽणि वृद्धिः, कः पुनरसौ शौद्रो वर्णः, यः सृष्टः? पूषणम् । पुष्यतीति पूषा । कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति– इयं पृथिवी वै पूषा । स्वयमेव निर्वचनमाह– इयं हि इदं सर्वं पुष्यति यदिदं किंच । शंकर.

**स नैव व्यभवत् । तच्छ्रेयोरूपमत्यसृजत धर्मम् । तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः । तस्माद्धर्मात्परं नास्ति । अथो अबलीयान्बलीयांसमाशंसते धर्मेण । यथा राज्ञैवम् । यो वै स धर्मः सत्यं वै तत् । तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति । धर्मं वा वदन्तं सत्यं वदतीति । एतद्ध्येवैतदुभयं भवति ॥**

सः चतुरः सृष्ट्वाऽपि वर्णान् नैव व्यभवत् उग्रत्वात्क्षत्रस्यानियताशङ्कया । तत् श्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ उग्रादप्युग्रं यद्धर्मः यो धर्मः । तस्मात् क्षत्रस्यापि नियन्तृत्वात् धर्मात्परं नास्ति । तेन हि नियम्यन्ते सर्वे । तत्कथमित्युच्यते– अथो अपि अबलीयान् दुर्बलतरः बलीयांसमात्मनो बलवत्तरमपि आशंसते कामयते जेतुं धर्मेण बलेन, यथा लोके राज्ञा सर्वबलवत्तमत्वेनाल्पः कुटुम्बिकः, एवम् । तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम् । यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत् । सत्यमिति यथाशास्त्रार्थता । स एवानुष्ठीयमानो धर्मनामा भवति, शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति । यस्मादेवं तस्मात् सत्यं यथाशास्त्रं वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञाः– धर्मं वदतीति, प्रसिद्धं लौकिकं न्यायं वदतीति । तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः– सत्यं वदति, शास्त्रादनपेतं वदतीति । एतत् यदुक्तम् उभयं ज्ञायमानमनुष्ठीयमानं च एतत् धर्म एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति । तस्मात् स क्षत्रस्यापि क्षत्रम् । अतस्तदभिमानोऽविद्वान् तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते । तानि च निसर्गतः एव कर्माधिकारनिमित्तानि । शंकर.

देवानां चातुर्वर्ण्यात् मानवेषु चातुर्वर्ण्यम्

**तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रियः, वैश्येन वैश्यः, शूद्रेण शूद्रः । तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु । एताभ्यां हि रूपाभ्यां ब्रह्माभवत् ॥**

तदेतच्चातुर्वर्ण्यं सृष्टम्– ब्रह्म क्षत्रं विट् शूद्र इति । उत्तरार्थ उपसंहारः । यत्तत् स्रष्टृ ब्रह्म तदग्निनैव, नान्येन रूपेण, देवेषु ब्रह्म ब्राह्मणजातिः अभवत्, ब्राह्मणः ब्राह्मणस्वरूपेण मनुष्येषु ब्रह्माभवत् । इतरेषु वर्णेषु विकारान्तरं प्राप्य क्षत्रियेण क्षत्रियोऽभवत् इन्द्रादिदेवता-

ष्ठितः, वैश्येन वैश्यः, शूद्रेण शूद्रः। यस्मात्क्षत्रादिषु विकारापन्नम्, अग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म, तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलम् इच्छन्ति, अग्निसंबद्धं कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम्। तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्येतत् उपपन्नम्। ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा, किं तर्हि? जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु देवाधीना पुरुषार्थसिद्धिः तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा। स्मृतेश्च– ‘ जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ’ ( मस्मृ. २।८७ ) इति। पारिव्राज्यदर्शनाच्च। तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्मफलम् इच्छन्ति। यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत्। अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित्। तदसत्, अविद्याधिकारे कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्, परेण च विशेषणात्। यदि ह्यत्र लोकशब्देन पर एवाऽऽत्मोच्येत, परेण विशेषणमनर्थकं स्यात्– ‘ स्वं लोकमदृष्ट्वा ’ इति। स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकः, ततः स्वमिति युक्तं विशेषणम्, प्रकृतपरलोकनिवृत्त्यर्थत्वात्, स्वत्वेन च अव्यभिचारात्परमात्मलोकस्य, अविद्याकृतानां च स्वत्वव्यभिचारात्। ब्रवीति च कर्मकृतानां व्यभिचारम्– ‘ क्षीयत एव ’ इति। शंकर.

आत्मज्ञानाभावे महतोऽपि पुण्यस्य क्षयः,
आत्मज्ञानेन पुण्यस्य कर्मणः क्षयाभावः

**अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्। यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव। आत्मानमेव लोकमुपासीत। स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते। अस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजते ॥**

ब्रह्मणा सृष्टा वर्णाः कर्मार्थम्। तच्च कर्म धर्माख्यं सर्वानेव कर्तव्यतया नियन्तृ पुरुषार्थसाधनं च। तस्मात्तेनैव चेत् कर्मणा स्वो लोकः परमात्माख्यः अविदितोऽपि प्राप्यते, किं तस्यैव पदनीयत्वेन क्रियते? इत्यत आह– अथेति। पूर्वपक्षविनिवृत्त्यर्थः। यः कश्चित् ह वै अस्मात् सांसारिकात्पिण्डग्रहणलक्षणात् अविद्याकामकर्महेतुकात् अग्न्यधीनकर्माभिमानतया वा ब्राह्मणजातिमात्रकर्माभिमानतया वा आगन्तुकादस्वभूताल्लोकात् स्वं लोकमात्माख्यम् आत्मत्वेनाव्यभिचारित्वात्, अदृष्ट्वा ‘ अहं ब्रह्मास्मि ’ इति, प्रैति म्रियते, स यद्यपि स्वो लोकः अविदितः अविद्यया व्यवहितः अस्व इवाज्ञातः एनं संख्यापूरण इव लौकिकः आत्मानं न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन। यथा लोके च वेदः अननूक्तः अनधीतः कर्माद्यवबोधकत्वेन न भुनक्ति, अन्यद्वा लौकिकं कृष्यादि कर्म अकृतं स्वात्मना अनभिव्यञ्जितम् आत्मीयफलप्रदानेन न भुनक्ति, एवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितः अविद्यादिप्रहाणेन न भुनक्त्येव। ननु किं स्वलोकदर्शननिमित्तपरिपालनेन? कर्मणः फलप्राप्तिध्रौव्यात् इष्टफलनिमित्तस्य च कर्मणो बाहुल्यात् तन्निमित्तं पालनमक्षयं भविष्यति। तन्न, कृतस्य क्षयवत्त्वादित्येतदाह– यत् इह वै संसारे अद्भुतवत् कश्चिन्महात्माऽपि अनेवंवित् स्वं लोकं यथोक्तेन विधिना अविद्वान् महत् बहु अश्वमेधादि पुण्यं कर्म इष्टफलमेव नैरन्तर्येण करोति ‘ अनेनैवाऽऽनन्त्यं मम भविष्यति ’ इति, तत्कर्म ह अस्य अविद्यावतः अविद्याजनितकामहेतुत्वात् स्वप्नदर्शनविभ्रमोद्भूतविभूतिवत् अन्ततः अन्ते फलोपभोगस्य, क्षीयत एव। तत्कारणयोरविद्याकामयोश्चलत्वात् कृतक्षयध्रौव्योपपत्तिः। तस्मान्न पुण्यकर्मफलपालनानन्त्याशा अस्त्येव। अत आत्मानमेव स्वं लोकम्। आत्मानमिति स्वं लोकमित्यस्मिन्नर्थे, स्वं लोकमिति प्रकृतत्वात् इह च स्वशब्दस्याप्रयोगात्। उपासीत। स य आत्मानमेव लोकमुपास्ते।

तस्य किमित्युच्यते— न ह्यस्य कर्म क्षीयते कर्माभावादेव इति नित्यानुवादः। यथा अविदुषः कर्मक्षयलक्षणं संसारदुःखं संततमेव, न तथा तदस्य विद्यत इत्यर्थः, 'मिथिलायां प्रदीप्तायां न मे दह्यति किंचन।' इति यद्वत्। स्वात्मलोकोपासकस्य विदुषो विद्यासंयोगात् कर्मैव न क्षीयत इत्यपरे वर्णयन्ति। लोकशब्दार्थं च कर्मसमवायिनं द्विधा परिकल्पयन्ति किल—एको व्याकृतावस्थः कर्माश्रयो लोको हैरण्यगर्भाख्यः, तं कर्मसमवायिनं लोकं व्याकृतं परिच्छिन्नं य उपास्ते तस्य किल परिच्छिन्नकर्मात्मदर्शिनः कर्म क्षीयते। तमेव कर्मसमवायिनं लोकमव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते तस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य कर्म न क्षीयत इति। भवतीयं शोभना कल्पना, न तु श्रौती, स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात्, स्वं लोकमिति प्रस्तुत्य स्वशब्दं विहाय आत्मशब्दप्रक्षेपेण पुनस्तस्यैव प्रतिनिर्देशात्— आत्मानमेव लोकमुपासीतेति। तत्र कर्मसमवायिलोककल्पनाया अनवसर एव। परेण च केवलविद्याविषयेण विशेषणात्। 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इति पुत्रकर्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि, 'अयमात्मा नो लोकः' इति, 'न ह्यस्य केनचन कर्मणा लोको मीयत एषोऽस्य परमो लोकः' इति च। तैः सविशेषणैः अस्यैकवाक्यता युक्ता, इहापि स्वं लोकमिति विशेषणदर्शनात्। अस्मात्कामयत इत्युक्तमिति चेत्— इह स्वो लोकः परमात्मा, तदुपासनात् स एव भवतीति स्थिते यद्यत्कामयते तत्तदस्मादात्मनः सृजते इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेत्, न, स्वलोकोपासनस्तुतिपरत्वात्। स्वस्मादेव लोकात्सर्वमिष्टं संपद्यत इत्यर्थः, नान्यदतः प्रार्थनीयम्, आप्तकामत्वात्, 'आत्मतः प्राण आत्मत आशा' इत्यादि श्रुत्यन्तरे यथा। सर्वात्मभावप्रदर्शनार्थो वा पूर्ववत्। यदि हि पर एव आत्मा संपद्यते तदा युक्तः 'अस्माद्ध्येवाऽऽत्मनः' इत्यात्मशब्दप्रयोगः स्वस्मादेव प्रकृतादात्मनो लोकादित्येवमर्थः। अन्यथा अव्याकृतावस्थात्कर्मणो लोकादिति सविशेषणमवक्ष्यत् प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च। न ह्यस्मिन्प्रकृते विशेषिते अश्रुतान्तरालावस्था प्रतिपत्तुं शक्यते। शंकर.

गृही धर्माचरणशीलः सर्वेषां देवर्षिपितृमनुष्यपशुकीटकादीनाम् आत्मा भोग्यः

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः। स यज्जुहोति यद्यजते तेन देवानां लोकः। अथ यदनुब्रूते तेन ऋषीणाम्। अथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणाम्। अथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणाम्। अथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम्। यदस्य गृहेषु श्वापदा वयांस्या पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः। यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति। तद्वा एतद्विदितं मीमांसितम्॥**

अथो अयं वा आत्मा। अत्र अविद्वान्वर्णाश्रमाद्यभिमानो धर्मेण नियम्यमानो देवादिकर्मकर्तव्यतया पशुवत्परतन्त्र इत्युक्तम्। कानि पुनस्तानि कर्माणि? यत्कर्तव्यतया पशुवत्परतन्त्रो भवति, के वा ते देवादयः? येषां कर्मभिः पशुवदुपकरोति, इति तदुभयं प्रपञ्चयति। अथो इत्ययं वाक्योपन्यासार्थः। अयं यः प्रकृतो गृही कर्माधिकृतः अविद्वान् शरीरेन्द्रियसंघातादिविशिष्टः पिण्ड आत्मेत्युच्यते, सर्वेषां देवादीनां पिपीलिकान्तानां भूतानां लोकः भोग्य आत्मेत्यर्थः, सर्वेषां वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात्। कैः पुनः कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणां लोकः? इति, उच्यते— सः गृही यज्जुहोति यद्यजते। यागः देवतामुद्दिश्य स्वत्वपरित्यागः, स एव आसेचनाधिको होमः, तेन होमयागलक्षणेन कर्मणा अवश्यकर्तव्यत्वेन देवानां पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोकः। अथ यत् अनुब्रूते स्वाध्यायमधीते अहरहः तेन ऋषीणां लोकः। अथ यत्पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि, यच्च प्रजामिच्छते प्रजार्थमुद्यमं करोति। इच्छा च उत्पत्त्युपलक्षणार्था। प्रजां

चोत्पादयतीत्यर्थः । तेन कर्मणा अवश्यकर्तव्यत्वेन पितॄणां लोकः पितॄणां भोग्यत्वेन परतन्त्रो लोकः । अथ यन्मनुष्यान्वासयते भूम्युदकादिदानेन गृहे, यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो वा अर्थिभ्यः अशनं ददाति, तेन मनुष्याणाम् । अथ यत्पशुभ्यस्तृणोदकं विन्दति लम्भयति, तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयांसि च पिपीलिकाभिः सह कणबलिभाण्डक्षालनाद्युपजीवन्ति, तेन तेषां लोकः । यस्मादयमेतानि कर्माणि कुर्वन्नुपकरोति देवादिभ्यः, तस्मात् यथा ह वै लोके स्वाय लोकाय स्वस्मै देहाय अरिष्टिम् अविनाशं स्वत्वभावाप्रच्युतिम् इच्छेत् स्वत्वभावप्रच्युतिभयात्पोषणरक्षणादिभिः सर्वतः परिपालयेत्, एवं ह एवंविदे 'सर्वभूतभोग्योऽहम्, अनेन प्रकारेण मया अवश्यमृणिवत्प्रतिकर्तव्यम्' इत्येवमात्मानं परिकल्पितवते सर्वाणि भूतानि देवादीनि यथोक्तानि अरिष्टिम् अविनाशम् इच्छन्ति स्वत्वाप्रच्युत्यै सर्वतः संरक्षन्ति कुटुम्बिन इव पशून् । 'तस्मादेषां तन्न प्रियम्' इत्युक्तम् । तद्वा एतत् तदेतत् यथोक्तानां कर्मणामृणवदवश्यकर्तव्यत्वं पञ्चमहायज्ञप्रकरणे विदितं कर्तव्यतया, मीमांसितं विचारितं च अवदानप्रकरणे । शंकर.

धर्मः सामान्यविशेषरूपेण सर्वभूतोपकर्ता

**'अयं धर्मः सर्वेषां भूतानां मधु । अस्य धर्मस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदं सर्वम् ॥**

आकाशान्ताः पृथिव्यादयो भूतगणाः देवतागणाश्च कार्यकरणसंघातात्मानः उपकुर्वन्तो मधु भवन्ति प्रति शरीरिणमित्युक्तम् । येन ते प्रयुक्ताः शरीरिभिः संबध्यमाना मधुत्वेनोपकुर्वन्ति तत् वक्तव्यमिति इदमारभ्यते– अयं धर्मः । अयम् इति अप्रत्यक्षोऽपि धर्मः कार्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यते– अयं धर्मः इति प्रत्यक्षवत् । धर्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः, क्षत्रादीनामपि नियन्ता, जगतो वैचित्र्यकृत् पृथिव्यादीनां परिणामहेतुत्वात्, प्राणिभिरनुष्ठीयमानरूपश्च । तेन च 'अयं धर्मः' इति प्रत्यक्षेण व्यपदेशः । सत्यधर्मयोश्च अभेदेन निर्देशः कृतः शास्त्राचारलक्षणयोः । इह तु भेदेन व्यपदेश एकत्वे सत्यपि, दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात् । यस्तु अदृष्टः अपूर्वाख्यो धर्मः स सामान्यविशेषात्मना अदृष्टेन रूपेण कार्यमारभते– सामान्यरूपेण पृथिव्यादीनां प्रयोक्ता भवति, विशेषरूपेण च अध्यात्मं कार्यकरणसंघातस्य । तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्मे तेजोमयः । तथा अध्यात्मं कार्यकरणसंघातकर्तरि धर्मे भवो धार्मः । शंकर.

सत्यं सर्वभूतोपकर्तृ सामान्यविशेषरूपेण

**इदं सत्यं सर्वेषां भूतानां मधु । अस्य सत्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥**

तथा दृष्टेनानुष्ठीयमानेन आचाररूपेण सत्याख्यो भवति स एव धर्मः । सोऽपि द्विप्रकार एव सामान्यविशेषात्मरूपेण । सामान्यरूपः पृथिव्यादिसमवेतः, विशेषरूपः कार्यकरणसंघातसमवेतः । तत्र पृथिव्यादिसमवेते वर्तमानक्रियारूपे सत्ये, तथा अध्यात्मं कार्यकरणसंघातसमवेते सत्ये भवः सात्यः, 'सत्येन वायुरावाति' इति श्रुत्यन्तरात् । शंकर.

यज्ञस्य दक्षिणा श्रद्धाधीना, श्रद्धा च हृदये

**'किंदेवतोऽस्यां दक्षिणायां दिश्यसीति । यमदेवत इति । स यमः कस्मिन्प्रतिष्ठित इति । यज्ञ इति । कस्मिन्नु यज्ञः प्रतिष्ठित इति । दक्षिणायामिति । कस्मिन्नु दक्षिणा प्रतिष्ठितेति । श्रद्धायामिति । यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति । श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति । हृदय इति**

(१) बृउ. २।५।११.

(१) बृउ. ३।९।२१.

**होवाच। हृदयेन हि श्रद्धां जानाति। हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति। एवमेवैतद्याज्ञवल्क्य॥**

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति पूर्ववत्। दक्षिणायां दिशि का देवता तव? यमदेवत इति। यमो देवता मम दक्षिणादिग्भूतस्य। स यमः कस्मिन्प्रतिष्ठित इति? यज्ञ इति। यज्ञे कारणे प्रतिष्ठितो यमः सह दिशा। कथं पुनर्यज्ञस्य कार्ये यम इत्युच्यते? ऋत्विग्भिर्निष्पादितो यज्ञः। दक्षिणया यजमानस्तेभ्यो यज्ञं निष्क्रीय तेन यज्ञेन दक्षिणां दिशं सह यमेनाभिजयति। तेन यज्ञे यमः कार्यत्वात्प्रतिष्ठितः सह दक्षिणया दिशा। कस्मिन्नु यज्ञः प्रतिष्ठित इति? दक्षिणायामिति। दक्षिणया स निष्क्रीयते। तेन दक्षिणाकार्यं यज्ञः। कस्मिन्नु दक्षिणा प्रतिष्ठितेति? श्रद्धायामिति। श्रद्धा नाम दित्सुत्वम् आस्तिक्यबुद्धिर्भक्तिसहिता। कथं तस्यां प्रतिष्ठिता दक्षिणा? यस्मात् यदा ह्येव श्रद्धत्ते अथ दक्षिणां ददाति, न अश्रद्दधत् दक्षिणां ददाति। तस्मात् श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति। कस्मिन्नु श्रद्धा प्रतिष्ठितेति? हृदय इति होवाच। हृदयस्य हि वृत्तिः श्रद्धा यस्मात्। हृदयेन हि श्रद्धां जानाति। वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति। तस्मात् हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति। एवमेवैतद्याज्ञवल्क्य। शंकर.

पुण्येन पुण्यः पापेन च पापः संसारी आत्मा
ब्रह्मैव, संसारी काममयः, कामात् क्रतुः,
क्रतोः क्रिया (कर्म)

**[1]स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः। तद्यदेतदिदंमयोऽदोमय इति। यथाकारी यथाचारी तथा भवति। साधुकारी साधुर्भवति। पापकारी पापो भवति। पुण्यः पुण्येन कर्मणा भवति पापः पापेन। अथो खल्वाहुः— काममय एवायं पुरुष इति। स यथाकामो भवति तत्क्रतुर्भवति। यत्क्रतुर्भवति तत्कर्म कुरुते। यत्कर्म कुरुते तदभिसंपद्यते॥**

ये अस्य बन्धनसंज्ञकाः उपाधिभूताः, यैः संयुक्तः तन्मयोऽयमिति विभाव्यते, ते पदार्थाः पुञ्जीकृत्य इह एकत्र प्रतिनिर्दिश्यन्ते— स वै अयं यः एवं संसरति आत्मा ब्रह्मैव पर एव, यः अशनायाद्यतीतः। विज्ञानमयः— विज्ञानं बुद्धिः, तेन उपलक्ष्यमाणः तन्मयः। 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु' इति हि उक्तम्। विज्ञानमयः विज्ञानप्रायः, यस्मात् तद्धर्मत्वमस्य विभाव्यते— 'ध्यायतीव लेलायतीव' इति। तथा मनोमयः मनःसंनिकर्षान्मनोमयः। तथा प्राणमयः। प्राणः पञ्चवृत्तिः, तन्मयः। येन चेतनः चलतीव लक्ष्यते। तथा चक्षुर्मयः रूपदर्शनकाले। एवं श्रोत्रमयः शब्दश्रवणकाले। एवं तस्य तस्य इन्द्रियस्य व्यापारोद्भवे तत्तन्मयो भवति। एवं बुद्धिप्राणद्वारेण चक्षुरादिकरणमयः सन् शरीरारम्भकपृथिव्यादिभूतमयो भवति। तत्र पार्थिवशरीरारम्भे पृथिवीमयो भवति। तथा वरुणादिलोकेषु आप्यशरीरारम्भे आपोमयो भवति। तथा वायव्यशरीरारम्भे वायुमयो भवति। तथा आकाशशरीरारम्भे आकाशमयो भवति। एवमेतानि तैजसानि देवशरीराणि। तेष्वारम्यमाणेषु तन्मयः तेजोमयो भवति। अतो व्यतिरिक्तानि पश्वादिशरीराणि नरकप्रेतादिशरीराणि च अतेजोमयानि। तान्यपेक्ष्य आह— अतेजोमय इति। एवं कार्यकरणसंघातमयः सन् आत्मा प्राप्तव्यं वस्त्वन्तरं पश्यन् 'इदं मया प्राप्तम्, अदो मया प्राप्तव्यम्' इत्येवं विपरीतप्रत्ययः तदभिलाषः काममयो भवति। तस्मिन्कामे दोषं पश्यतः तद्विषयाभिलाषप्रशमे चित्तं प्रसन्नम् अकलुषं शान्तं भवति, तन्मयः अकाममयः। एवं तस्मिन्विहते कामे केनचित् स कामः क्रोधत्वेन परिणमते, तेन तन्मयो भवन् क्रोधमयः। स क्रोधः केनचिदुपायेन निवर्तितो यदा भवति तदा प्रसन्नमनाकुलं चित्तं सत् अक्रोध उच्यते, तेन तन्मयः। एवं कामक्रोधाभ्यां अकामाक्रोधाभ्यां च तन्मयो भूत्वा धर्ममयः अधर्ममयश्च

(१) बृउ. ४।४।५.

भवति । न हि कामक्रोधादिभिर्विना धर्मादिप्रवृत्ति-रुपपद्यते, 'यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम् ।' (मस्मृ. २।४) । इति स्मरणात् । धर्ममयः अधर्ममयश्च भूत्वा सर्वमयो भवति । समस्तं धर्माधर्मयोः कार्यम् । यावत्किंचिद्व्याकृतं तत्सर्वं धर्माधर्मयोः फलम् । तत् प्रतिपद्यमानः तन्मयो भवति । किं बहुना ? तदेतत् सिद्धमस्य यत् अयम् इदंमयः गृह्यमाणविषयादिमयः, तस्मात् अयम् अदोमयः । अद इति परोक्षं कार्येण गृह्यमाणेन निर्दिश्यते । अनन्ता हि अन्तःकरणे भावनाविशेषाः । नैव ते विशेषतो निर्देष्टुं शक्यन्ते । तस्मिंस्तस्मिन् क्षणे कार्यतोऽवगम्यन्ते– 'इदमस्य हृदि वर्तते, अदः अस्य' इति । तेन गृह्यमाणकार्येण इदंमयतया निर्दिश्यते, परोक्षः अन्तःस्थो व्यवहारः अयमिदानीमदोमय इति । संक्षेपतस्तु यथा कर्तुं यथा वा चरितुं शीलमस्य सोऽयं यथाकारी यथाचारी, स तथा भवति । करणं नाम नियता क्रिया विधिप्रतिषेधादिगम्या, चरणं नाम अनियतमिति विशेषः । साधुकारी साधुर्भवतीति यथाकारीत्यस्य विशेषणम् । पापकारी पापो भवतीति च यथाचारीत्यस्य । ताच्छील्यप्रत्ययोपादानात् अत्यन्ततात्पर्यतैव तन्मयत्वम्, न तु तत्कर्ममात्रेण इत्याशङ्क्याऽऽह —पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति । पुण्यपापकर्ममात्रेणैव तन्मयता स्यात्, न तु ताच्छील्यमपेक्षते । ताच्छील्ये तु तन्मयत्वातिशय इत्ययं विशेषः । तत्र कामक्रोधादिपूर्वकपुण्यापुण्यकारिता सर्वमयत्वे हेतुः, संसारस्य कारणम्, देहात् देहान्तरसंचारस्य च । एतत्प्रयुक्तो हि अन्यदन्यद्देहान्तरमुपादत्ते । तस्मात् पुण्यापुण्ये संसारस्य कारणम् । एतद्विषयौ हि विधिप्रतिषेधौ । अत्र शास्त्रस्य साफल्यमिति । अथो अपि अन्ये बन्धमोक्षकुशलाः खलु आहुः– सत्यं कामादिपूर्वके पुण्यापुण्ये शरीरग्रहणकारणम्, तथापि कामप्रयुक्तो हि पुरुषः पुण्यापुण्ये कर्मणी उपचिनोति । कामप्रहाणे तु कर्म विद्यमानमपि पुण्यापुण्योपचयकरं न भवति । उपचिते अपि पुण्यापुण्ये कर्मणी कामशून्ये फलारम्भके न भवतः । तस्मात् काम एव संसारस्य मूलम् । तथा चोक्तमाथर्वणे– 'कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र' इति । तस्मात् काममय एवायं पुरुषः, यत् अन्यमयत्वं तत् अकारणं विद्यमानमपि इत्यतः अवधारयति काममय एव इति । यस्मात् स च काममयः सन् यादृशेन कामेन यथाकामो भवति, तत्क्रतुर्भवति । स काम ईषदभिलाषमात्रेणाभिव्यक्तो यस्मिन्विषये भवति, स अविहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते । क्रतुर्नाम अध्यवसायः निश्चयः, यदनन्तरा क्रिया प्रवर्तते । यत्क्रतुर्भवति यादृक्कामकार्येण क्रतुना यथारूपः क्रतुः अस्य सोऽयं यत्क्रतुः भवति तत्कर्म कुरुते यद्विषयः क्रतुः तत्फलनिर्वृत्तये यत् योग्यं कर्म तत् कुरुते निर्वर्तयति । यत् कर्म कुरुते तत् अभिसंपद्यते तदीयं फलमभिसंपद्यते । तस्मात् सर्वमयत्वे अस्य संसारित्वे च काम एव हेतुरिति । शंकर.

सत्यतपोदमशमदानधर्मप्रजनाग्न्यग्निहोत्रयज्ञ-
मानसानि ज्ञानसाधनानि, तेभ्यः उत्कृष्टं
ज्ञानसाधनं न्यासः ( संन्यासः )

**'सत्यं परम् । परं सत्यम् । सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन । सतां हि सत्यम् । तस्मात्सत्ये रमन्ते ॥**

समाप्तं भोजनप्रकरणं कर्मप्रकरणं च । अथेदानीं सर्वकर्ममयसंसारबीजदाहार्थं संन्यासप्रकरणमारभ्यते । तत्र ज्ञानप्रतिबन्धकमहापातकपरिहारेण ज्ञानयोग्यतालक्षणां शुद्धिमुक्त्वा योग्यस्य पुरुषस्यापेक्षितेषु ज्ञानसाधनेषु संन्यासस्य निरतिशयोत्कर्षार्थं( १ त्कर्षं ) वक्तुं सत्यादीन्येकादशोत्कृष्टसाधनानि प्रतियोगित्वेन वक्तव्यानि । तत्र प्रथमं साधनमुपन्यस्यति– सत्यमिति । यद्वस्तु प्रमाणेन दृष्टं तस्य तथैवाभिवदनं सत्यम्, तच्च परं पुरुषार्थसाधनेषूत्कृष्टम् । तत्र विधाना( दरा )र्थं परं सत्यमिति पुनर्वचनम् । यद्वा परं ( ब्रह्म ) सत्यम् अबाध्यम्, तद्वद्यथार्थवचनमपि बाधरहितमिति व्यावहारिकबाधराहित्येनोत्कर्षं विवक्षित्वा दृष्टान्तेन परं सत्यमित्युक्तम् । सत्येन यावज्जीवनं यथार्थकथनेन स्वर्गलोकात्कदाचन

(१) नाउ. ७८–७९.

कदाचिदपि न प्रच्यवन्ते, अनृतवादिनस्तु केनचित्पुण्येन स्वर्गं प्राप्यानृतवदनदोषेण कर्मफलापूर्व( ? र्ण )तायामपि तदैव स्वर्गात्प्रच्यवन्ते । किंच, हि यस्मात्कारणात्सतां सन्मार्गवर्तिनामृष्यादीनां संबन्धि ( सत्यं ) यथार्थवादित्वं तस्मात्कारणात्सतामिदमिति व्युत्पत्तिमाश्रित्य सत्यवादित्वमेव परमं मोक्षसाधनमिति केचिन्महान्तो वदन्तस्तस्मिन्नेव सत्ये रमन्ते क्रीडन्ति । नाउभा.

**तप इति । तपो नानशनात्परम् । यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षम् । तस्मात्तपसि रमन्ते ॥**

एकं मतमुक्त्वा द्वितीयं मतमाह— तप इति । तपः परं मोक्षसाधनमिति केषांचिन्मतम् । तीर्थयात्राजपहोमादीनि यद्यपि बहूनि तपांसि सन्ति तथाऽपि तेषु सर्वेष्वनशनमु( ? नादु )पवासैकभक्ताद्युपदेश( ? शन )वर्जनात् परम् उत्कृष्टं तपो नास्ति । यदनशनरूपं कृच्छ्रचान्द्रायणादिकं परं तपोऽस्ति तद्दुर्धर्षं धर्षयितुं सोढुम् अशक्यम् अत एव आ समन्तात् सर्वेषां प्राणिनां तत् तपः दुर्धर्षं दुःशकम् इत्यनुभूयते । तस्मात्कारणात्केचन श्रद्धालवः कृच्छ्रचान्द्रायणादिके तपसि रमन्ते क्रीडन्ति । नाउभा.

**दम इति नियतं ब्रह्मचारिणः । तस्माद्दमे रमन्ते ॥**

तृतीयं मतमाह— दम इति । वाक्चक्षुरादीन्द्रियाणां बाह्यानां निषिद्धेभ्यो विषयेभ्यो निवृत्तिर्दमः, स एवोत्तमो मोक्षहेतुरिति मन्यमाना नैष्ठिकब्रह्मचारिणो नियतं सर्वदा वदन्ति । तस्माद्दमे रमन्ते । नाउभा.

**शम इत्यरण्ये मुनयः । तस्माच्छमे रमन्ते ॥**

चतुर्थं मतमाह—शम इति । अन्तःकरणस्य क्रोधादिदोषराहित्यं शमः, स एवोत्तमो मोक्षहेतुरित्यरण्ये वर्तमानाः मुनयः वानप्रस्थाः मन्यन्ते । तस्मात्ते शमे रमन्ते । नाउभा.

**दानमिति सर्वाणि भूतानि प्रशंसन्ति । दानान्नातिदुश्चरम् । तस्माद्दाने रमन्ते ॥**

पञ्चमं मतमाह— दानमिति । गोभूहिरण्यादीनां स्वकीयानां शास्त्रोक्तवर्त्मना स्व( स्व )परित्यागपूर्वकं परस्वत्वापादनं दानम्, तदेवोत्तमं मोक्षसाधनमिति सर्वे प्राणिनः प्रशंसन्ति । दानादतिशयितं दुष्क( ? श्च )रं नास्ति, धनरक्षार्थे प्राणानपि परित्यजतां पुरुषाणामुपलम्भात् । तस्मात् गोभूहिरण्यादिदाने रमन्ते । नाउभा.

**धर्म इति । धर्मेण सर्वमिदं परिगृहीतम् । धर्मान्नातिदुष्करम् । तस्माद्धर्मे रमन्ते ॥**

( षष्ठं मतमाह— धर्म इति । ) स्मृतिपुराणादिप्रतिपाद्यो वापीकूपतडागादिनिर्माणरूपो धर्मोऽत्र विवक्षितः । स चोत्तमो मोक्षहेतुरिति स(?म)हामात्यादयः प्रभवो मन्यन्ते । तडागादिरूपेण धर्मेण सर्वमिदं जगत् परिगृहीतम् । सर्वेऽपि मनुष्यपश्वादयः स्नानपानादिना तुष्यन्ति । तादृशधर्मादन्यदतिदुश्च( ?ष्क )रं नास्ति । तस्मात्कारणाद्धर्मे रमन्ते प्रभवः । नाउभा.

**प्रजन इति भूयांसः । तस्माद्भूयिष्ठाः प्रजायन्ते । तस्माद्भूयिष्ठाः प्रजनने रमन्ते ॥**

सप्तमं मतमाह—प्रजन इति । प्रजनः अपत्योत्पादनम्, तस्यैवोत्तमसाधनत्वं भूयांसः बहवः प्राणिनो मन्यन्ते । धनिकैर्दरिद्रैः शिष्टैश्च सर्वैरपि पुत्रोत्पादनायातिशयेन †प्रयतमानत्वात् । तस्मादेकैकस्य पुरुषस्य भूयिष्ठाः द्वित्राः पञ्च षडित्येवं बहवोऽपत्यविशेषा उत्पद्यन्ते । तस्माद्भूयिष्ठाः अतिबहवः प्राणिनः प्रजोत्पादने रमन्ते । नाउभा.

---

† प्रयोगोऽयं न साधुः, प्रयतमानशब्दस्य कर्तृसाधितत्वेन धनिकादीनां च प्रयतनकर्तृत्वेन त्वप्रत्ययान्तान्वयिधनिकादिशब्देभ्यः षष्ठ्या एव साधुत्वेन तृतीयाया असाधुत्वात् । अत्र 'प्रयत्यमानात्' इति प्रयोगश्चेत् स सूपपादः, प्रपूर्वकयतेरकर्मकत्वेन भावप्रत्ययान्तस्य 'प्रयत्यते' इत्यस्य 'प्रयतनं क्रियते' इतिविवरणानुरोधेन 'प्रयत्यमानम्' इत्यस्य 'प्रयतनस्य करणम्' इत्यर्थपरत्वात् । स चार्थः स्वत एव भावरूपः सन् भावार्थकत्वप्रत्ययं नापेक्षते । उक्तरीत्या प्रयत्यमान-

**अग्नय इत्याह । तस्मादग्नय आधातव्याः ॥**

अष्टमं मतमाह– अग्नय इति । अग्नयः गार्हपत्यादयः उत्तमा मुक्तिहेतव इति कश्चिद्वेदार्थपर आह । तस्मात्कारणाद्गृहस्थैरग्नय आधातव्या भवन्ति । नाउभा.

**अग्निहोत्रमित्याह । तस्मादग्निहोत्रे रमन्ते ॥**

नवमं मतमाह– अग्निहोत्रमिति । आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो होमोऽग्निहोत्रम्, तदुत्तमं मोक्षसाधनमित्यपरः कश्चिद्वेदार्थपर आह । तस्मात्केचिदग्निहोत्रे रमन्ते । नाउभा.

**यज्ञ इति । यज्ञो हि देवाः । तस्माद्यज्ञे रमन्ते ॥**

दशमं मतमाह– यज्ञ इति । दर्शपूर्णमासज्योतिष्टोमादिको यज्ञ उत्तमो मोक्षहेतुरित्यपरे वेदार्थपरा मन्यन्ते । तत्र हेतुरुच्यते– हि यस्मात्कारणाद्यज्ञः, व्यत्ययेन तृतीया, यज्ञेन पूर्वोक्ता देवाः इन्द्रादयः । दिवं गता इति वाक्यशेषः । तस्मादेव कारणादद्यापि केचन वैदिका यज्ञे पूर्वोक्ते रमन्ते आसक्तचित्ताः सन्तः क्रीडन्ति । नाउभा.

**मानसमिति विद्वांसः । तस्माद्विद्वांस एव मानसे रमन्ते ॥**

एकादशं मतमाह– मानसमिति । मनसैव निष्पाद्यमुपासनं मानसम्, तदेवोत्तमं मोक्षसाधनमिति विद्वांसः सगुणब्रह्मविदः मन्यन्ते । तस्मात्कारणात्केचन विद्वांसो वेदोपासिताात्पर्यविदो मानसे एवोपासने रमन्ते । नाउभा.

**न्यास इति ब्रह्मा । ब्रह्मा हि परः । परो हि ब्रह्मा । तानि वा एतान्यवराणि परांसि । न्यास एवात्यरेचयत् ॥**

द्वादशं मतमाह– न्यास इति । पूर्वोक्तकारणानामग्निहोत्रादिकर्मणाम् आरुणिजाबालाद्युपनिषदुक्तप्रकारेण परित्यागो न्यासः, स एवोत्तमो मोक्षहेतुरिति ब्रह्मा हिरण्यगर्भो मन्यते । स च ब्रह्मा परो हि परमात्मरूपो हि, न तु पूर्वोक्तमतानुसारिण इव जीवः । यद्यप्यसौ हिरण्यगर्भो देहधारी, तथापि परो हि परमात्मैव ब्रह्मा हिरण्यगर्भ इति वक्तुं शक्यते, तच्छिष्यत्वेन तत्समानज्ञानत्वात् । अत एव श्वेताश्वत(रा आमनन्ति)– 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।' (श्वेउ. ६।१८) इति । यानि पूर्वोक्तसत्यादीनि मानसान्ता(नि ता-)न्येतानि (परांसि) तपांसि भवन्त्येव, तथापि संन्यासमपेक्ष्यावराणि निकृष्टानि । संन्यास एक एव सर्वाण्यत्यरेचयत् अतिक्रान्तवान् । उत्तमत्वेन तारतम्यं तत्र विश्रान्तमित्यर्थः । नाउभा.

**य एवं वेद । इत्युपनिषत् ॥**

उक्तमुत्तमसाधनमुपसंहरति– य इति । यः पुमानेवंप्रकारेण न्यासस्यान्येभ्यः साधनेभ्यः उत्तमत्वं वेद तस्य विदुष इति उक्ता विद्या उपनिषत् रहस्यभूता भवति । नाउभा.

परमं श्रेयःसाधनं किमिति जिज्ञासा

**प्राजापत्यो हाऽऽरुणिः सुपर्णेयः प्रजापतिं पितरमुपससार– किं भगवन्तः परमं वदन्तीति । तस्मै प्रोवाच ॥**

पूर्वोक्तमोक्षसाधनसमूहमुपपादयितुमाख्यायिकामाह– प्राजापत्य इति । प्रजापतेः पुत्रः प्राजापत्यः, स चाऽऽरुणिनामकः । स एव सुपर्णाख्यायाः स्त्रिया अपत्यत्वात्सुपर्णेय इत्युच्यते । तादृशः पुरुषः स्वकीयं पितरं प्रजापतिम् उपससार उत्तमसाधनजिज्ञासयोपसन्नवान् । उपा(? प)सद्य चैवं पप्रच्छ– हे प्रजापते, भगवन्तः पूज्या महर्षयो मोक्षसाधनेषु किं साधनं परमम् उत्कृष्टं वदन्ति । एवं पृष्टः प्रजापतिस्तस्मै आरुणये प्रोवाच । नाउभा.

सत्यं वाचः प्रतिष्ठा, सत्ये सर्वं प्रतिष्ठितम्

**सत्येन वायुरावाति । सत्येनाऽऽदित्यो रोचते दिवि । सत्यं वाचः प्रतिष्ठा । सत्ये सर्वं प्रतिष्ठितम् । तस्मात्सत्यं परमं वदन्ति ॥**

---

शब्दप्रयोगो भाष्याभिमतश्चेत् तर्हि ल्यप्रत्ययो लेखकस्य संपादकस्य वा प्रामादिकी सृष्टिरिति कल्पनमापद्यते । प्रयत्यमानशब्दस्य कृदन्तत्वेऽपि शानचो लडादेशत्वेन 'न लोकाव्यय०'(पासू. २।३।६९) इति निषेधात् धनिकादिशब्देभ्यो न षष्ठ्यापत्तिः ।

पूर्वमुक्तेषु साधनेषु प्रथमं दर्शयति– सत्येनेति । योऽयं वायुरन्तरिक्षे वाति सोऽयं पूर्वजन्मनि मनुष्यः सन्सत्यवादित्वं परिपाल्य तेन सत्येन वायुदेवतात्वं प्राप्येदानीं लोकानुग्रहार्थमन्तरिक्षे वाति । तथैवाऽऽदित्योऽपि पूर्वजन्मानुष्ठितेन (सत्येन) दिवि रोचते द्युलोके प्रकाशते । एतत्सत्यं वाचः वागिन्द्रियस्य प्रतिष्ठा स्थिरं स्थानम्, अनृतं तु वाचोक्तमपि परैर्निराक्रियत इति न वाचः प्रतिष्ठा । (तस्य स्वर्ग ?) लोकेऽस्मिन्सत्ये भाषणे (सर्वे) प्रामाणिकव्यवहारजातं प्रतिष्ठितम् । तस्मात्कारणात्सत्यमेव परमं साधनमित्येवं केचिदनुष्ठातारो वदन्ति ।

नाउभा.

देवत्वस्वर्गसपत्ननाशसाधनं तपः

**तपसा देवा देवतामग्र आयन् । तपसर्षयः सुवरन्वविन्दन् । तपसा सपत्नान्प्रणुदामारातीः । तपसि सर्वं प्रतिष्ठितम् । तस्मात्तपः परमं वदन्ति ॥**

तत्राऽऽरुणेर्मुखविकाशराहित्यलक्षणापरितोषं दृष्ट्वा द्वितीयं साधनमाह– तपसेति । इदानीं स्वर्गे वर्तमाना अग्नीन्द्रादयो देवाः अग्रे पूर्वजन्मन्यनुष्ठितेनान्नपरित्यागरूपेण कृच्छ्रचान्द्रायणादितपसा देवतामायन् इदानींतनं देवतात्वं प्राप्ताः । तथा वसिष्ठादयो महर्षयः पूर्वानुष्ठितेन तपसा सुवरन्वविन्दन् स्वर्गलोकमनुक्रमेण लब्धवन्तः । तथा वयमपीदानीमभिचाररूपेण तपसा सपत्नान् शत्रून् अरातीः अस्मदीयद्रव्यलाभविरोधिनः पुरुषानपि प्रणुदाम निराकुर्मः । अन्यदपि सर्वं फलजातं तपसि प्रतिष्ठितम् । तस्मादनशनरूपं तपः परमं मोक्षसाधनमिति वदन्ति ।

नाउभा.

पापनाशस्वर्गसाधनं सामर्थ्यकरश्च दमः

**दमेन दान्ताः किल्बिषमवधून्वन्ति । दमेन ब्रह्मचारिणः सुवरगच्छन् । दमो भूतानां दुराधर्षम् । दमे सर्वं प्रतिष्ठितम् । तस्माद्दमः परमं वदन्ति ॥**

अत्रापि पूर्ववदपरितोषं दृष्ट्वा तृतीयं साधनमाह– दमेनेति । दान्ताः बाह्येन्द्रियदमनयुक्ताः पुरुषाः तेन दमेन स्वकीयपापमवधून्वन्ति नाशयन्ति । तथा नैष्ठिकब्रह्मचारिणो दमेन स्वर्गमगच्छन् । स च दमो भूतानां प्राणिनां दुराधर्षं धर्षयितुं सर्वदा सोढुं दुःसहः । तस्मिंश्च दमे सर्वमपेक्षितं फलं प्रतिष्ठितम् । तस्मात्कारणाद्दमः परमं मुक्तिसाधनमिति केचिद्वदन्ति । अत्र सर्वत्र पूर्वसाधने परितोषराहित्यादुत्तरसाधनोक्तिर्द्रष्टव्या ।

नाउभा.

शान्तिशिवाचरणसामर्थ्यसाधनं शमः

**शमेन शान्ताः शिवमाचरन्ति । शमेन नाकं मुनयोऽन्वविन्दन् । शमो भूतानां दुराधर्षम् । शमे सर्वं प्रतिष्ठितम् । तस्माच्छमः परमं वदन्ति ॥**

चतुर्थं साधनमाह– शमेनेति । शान्ताः अन्तःकरणगतक्रोधादिरहिताः तेन शमेन शिवं मङ्गलं पुरुषार्थमाचरन्ति । नारदाद्या मुनयः शमेन स्वर्गमलभन्त । अन्यत्पूर्ववत् ।

नाउभा.

यज्ञे श्रेष्ठा दक्षिणा एव दानम्, सर्वभूतोपजीवनं मैत्रीकरं च दानम्

**दानं यज्ञानां वरूथं दक्षिणा । लोके दातारं सर्वभूतान्युपजीवन्ति । दानेनारातीरपानुदन्त । दानेन द्विषन्तो मित्रा भवन्ति । दाने सर्वं प्रतिष्ठितम् । तस्माद्दानं परमं वदन्ति ॥**

पञ्चमं साधनमाह– दानमिति । गोहिरण्यादिदानं यज्ञानां संबन्धिनी दक्षिणा भवति, तस्माद्वरूथं श्रेष्ठम् । लोकेऽपि दातारं पुरुषं वेदशास्त्रसंविदो मूढाश्च सर्वेऽपि पुरुषाः उपजीवन्ति । तथा योद्धुकामानां भटानां धनदानेनारातीः शत्रून् अपानुदन्त राजानो निराकृतवन्तः । येऽपि प्रबला द्विषन्तस्तेऽपि धनदानेन तुष्टा मित्राणि भवन्ति । अन्यत्पूर्ववत् ।

नाउभा.

पापनाशप्रजावशीकरणसाधनं विश्वप्रतिष्ठाकरो धर्मः

**धर्मो विश्वस्य जगतः प्रतिष्ठा । लोके धर्मिष्ठं प्रजा उपसर्पन्ति । धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्ति ॥**

षष्ठं साधनमाह— धर्म इति । श्रुतिस्मृतिप्रतिपादितवापीकूपतटाकादिनिर्माणरूपो धर्मो विश्वस्य जगतः सर्वस्य प्राणिजातस्य प्रतिष्ठा आश्रयः इत्येतत्प्रसिद्धम् । तथा लोके धर्मिष्ठम् अतिशयेन धर्मे वर्तमानं पुरुषं प्रजाः सर्वाः उपसर्पन्ति धर्माधर्मनिर्णयार्थमुपगच्छन्ति । किंच, प्रायश्चित्तरूपेण ( धर्मेण ) पापं विनाशयन्ति । अन्यत्पूर्ववत् । नाउभा.

पितृणामानृण्यकरं प्रतिष्ठा च प्रजननम्

**प्रजननं वै प्रतिष्ठा । लोके साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति । तदेव तस्या अनृणम् । तस्मात्प्रजननं परमं वदन्ति ॥**

सप्तमं साधनमाह— प्रजननमिति । प्रजननं पुत्रोत्पादनं यदस्ति तद्गृहस्थानां प्रतिष्ठा, पुत्रस्य गृहकृत्यनिर्वाहकत्वात्, 'सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा' इति श्रुतेः । किंच, प्रजायाः पुत्रपौत्रादिरूपायाः तन्तुं परंपरां साधु तन्वानः शास्त्रीयमार्गो यथा भवति ( तथा विस्तारयन्पितॄणां मृतानां पितृपितामहादीनामनृणो भवति ) तदीयमृणं पुत्रिणा प्रत्यर्पितं भवति । यत्प्रजननं तदेव तस्य पुत्रिणः ऋणापाकरणहेतुः । अन्यत् पूर्ववत् । नाउभा.

अग्नित्रयमेव त्रयी विद्या पृथिव्यन्तरिक्षस्वर्गरूपं च

**अग्नयो वै त्रयी विद्या देवयानः पन्थाः । गार्हपत्य ऋक्पृथिवी रथन्तरम् । अन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यम् । आहवनीयः साम सुवर्गो लोको बृहत् । तस्मादग्नीन् परमं वदन्ति ॥**

अष्टमं साधनमाह— अग्नय इति । गार्हपत्यो दक्षिणाग्निराहवनीय इति येऽग्नयः सन्ति त एव त्रयी विद्या वेदत्रयात्मकाः, वेदत्रयोक्तकर्मसाधनत्वाद्वेदविहितत्वाच्च । देवयानः यागद्वारेण देवत्वप्रापको मार्गश्च । किंच, तेषामग्नीनां मध्ये गार्हपत्योऽग्निर्ऋग्वेदात्मकः पृथिवीलोकरूपो रथंतरसामात्मकश्चेति प्रशस्यते । अन्वाहार्यपचनः दक्षिणाग्निः यजुर्वेदान्तरिक्षलोकवामदेव्यसामात्मकः । ( आहवनीयस्तु सामवेदस्वर्गलोकबृहद्रथंतरसामात्मकः । ) अन्यत्पूर्ववत् । नाउभा.

अग्निहोत्रं सर्वयज्ञक्रतूनां प्रारम्भकं स्वर्गस्य ज्योतिश्च

**अग्निहोत्रं सायं प्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं सुवर्गस्य लोकस्य ज्योतिः । तस्मादग्निहोत्रं परमं वदन्ति ॥**

नवमं साधनमाह— अग्निहोत्रमिति । सायं प्रातश्चानुष्ठितमग्निहोत्रं गृहाणां निष्कृतिः क्रयसाधनं मूल्यम्, अग्निहोत्राभावे क्षुधितोऽग्निर्गृहान्दहेत् । किंच, अग्निहोत्रं स्विष्टं शोभनयागरूपं सुहुतं शोभनहोमरूपम् । देवतामुद्दिश्य द्रव्यत्यागो यागः । तस्य द्रव्यस्याग्नौ प्रक्षेपो होमः । किंच, एतद्यज्ञक्रतूनां प्रायणं प्रारम्भः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः । क्रतुशब्दो यूपवत्सु सोमयागेषु रूढः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामश्चेति सप्त सोमसंस्थाः क्रतवः । तेषां सर्वेषां यज्ञक्रतूनां प्रारम्भकमग्निहोत्रम् । अत एव स्वर्गस्य लोकस्य ज्योतिः प्रकाशकम् । अन्यत्पूर्ववत् । नाउभा.

देवानां स्वर्गसाधनमसुरनाशकः मैत्रीकरश्च यज्ञः

**यज्ञ इति । यज्ञेन हि देवा दिवं गताः । यज्ञेनासुरानपानुदन्त । यज्ञेन द्विषन्तो मित्रा भवन्ति । यज्ञे सर्वं प्रतिष्ठितम् । तस्माद्यज्ञं परमं वदन्ति ॥**

दशमं साधनमाह— यज्ञ इति । यज्ञः उत्तमं साधनमिति केचिदाहुः । किंच, देवाः पूर्वानुष्ठितेन यज्ञेन स्वर्गं प्राप्ताः । किंच, यज्ञेनैव ( तदा ? ) देवा असुरान्विनाशितवन्तः । किंच, सर्वकामप्राप्तिसाधनेन ज्योतिष्टोमेन द्वेष्टृशान्तिकामस्य पूर्वं द्वेषं कुर्वन्तोऽपि शत्रवो मित्रा(णि) भवन्ति । पूर्ववदन्यत् । नाउभा.

साधुदर्शनसाधनं पवित्रं मानसम् ( उपासनम् )

**मानसं वै प्राजापत्यं पवित्रम् । मानसेन मनसा साधु पश्यति । मानसा ऋषयः प्रजा**

**असृजन्त । मानसे सर्वं प्रतिष्ठितम् । तस्मान्मानसं परमं वदन्ति ॥**

एकादशं साधनमाह— मानसमिति । मनसा निष्पाद्यं मानसमुपासनं यदस्ति तदेव (प्राजापत्यं) प्रजापति-(पद)प्राप्तिसाधनम्, अत एव पवित्रं चित्तशुद्धिकारणम्। मानसेनैवोपासनेन युक्तं मनः अन्तःकरणं यदस्ति तेनैकाग्रेण मनसा साधु पश्यति अतीतानागतव्यवहितादिवस्तुजातं योगी सम्यक्साक्षात्करोति । एतच्च योगशास्त्रे बहुधा प्रपञ्चितम् । मानसाः एकाग्रमनोयुक्ताः विश्वामित्रादय ऋषयः स्वसंकल्पमात्रेण बह्वीः प्रजा असृजन्त । पूर्ववदन्यत् । नाउभा.

संन्यासः ब्रह्मरूपः

**न्यास इत्याहुर्मनीषिणो ब्रह्माणम् ॥**

द्वादशं साधनमाह— न्यास इति । न्यास इत्युक्तो (यो) मोक्षहेतुस्तं ब्रह्माणं हिरण्यगर्भरूपं मनीषिणः बुद्धिमन्तः महर्षयः स्मृतिकर्तार आहुः । तथा च ‘संन्यासाद्ब्रह्मणः स्थानम्’ इति स्मर्यते । हिरण्यगर्भप्राप्त्यन्तरङ्गसाधनत्वात्तद्रूपत्वम् । नाउभा.

विश्वरूपो ब्रह्मा संवत्सरः (कालः)

**ब्रह्मा विश्वः कतमः स्वयंभुप्रजापतिः संवत्सर इति ॥**

तमेव संन्यासं स्तोतुं तत्प्राप्यहिरण्यगर्भस्य रूपं प्रपञ्चयति— ब्रह्मेति । यो (ब्रह्मा) हिरण्यगर्भः सोऽयं विश्वः सर्वजगदात्मकः, कतमः अतिशयेन सुखस्वरूपः, पुनः स्वयंभुप्रजापतिः उत्पादकाभ्यां मातापितृभ्यां विना स्वयमेवोत्पन्नः स चासौ प्रजानां पालकश्चेति समासः । संवत्सरः कालात्मकः । इतिशब्दः प्रदर्शनार्थः । इति सर्वस्वरूपत्वमुन्नेयमित्यर्थः । नाउभा.

आदित्यरूपः संवत्सरः विज्ञानानन्दपर्यवसायी

**संवत्सरोऽसावादित्यः । य एष आदित्ये पुरुषः । स परमेष्ठी ब्रह्माऽऽत्मा ॥**

पुनरपि संन्यासस्तुतये हिरण्यगर्भावयवस्य संवत्सरस्य माहात्म्यं दर्शयति— संवत्सर इति । योऽयं संवत्सरः काल उक्तोऽसावादित्यस्वरूप एव, आदित्यगत्यभा(? भ्या)-सेन निष्पादितत्वात् । य एष तस्मिन्नादित्यमण्डले पुरुषः स एव परमेष्ठी हिरण्यगर्भरूपः, आदित्यमण्डलद्वारेण हिरण्यगर्भस्य प्राप्यत्वात् । स च परमेष्ठी ब्रह्म जगत्कारणवस्तु । तथैवाऽऽत्मा सर्वेषां प्रत्यगात्मभूतः । नाउभा.

**याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति । पर्जन्येनौषधिवनस्पतयः प्रजायन्ते । ओषधिवनस्पतिभिरन्नं भवति । अन्नेन प्राणाः । प्राणैर्बलम् । बलेन तपः । तपसा श्रद्धा । श्रद्धया मेधा । मेधया मनीषा । मनीषया मनः । मनसा शान्तिः । शान्त्या चित्तम् । चित्तेन स्मृतिम् । स्मृत्या स्मारम् । स्मारेण विज्ञानम् । विज्ञानेनाऽऽत्मानं वेदयति । तस्मादन्नं ददन्त्सर्वाण्येतानि ददाति । अन्नात्प्राणा भवन्ति भूतानाम् । प्राणैर्मनः । मनसश्च विज्ञानम् । विज्ञानादानन्दो ब्रह्म योनिः ॥**

एवमादित्यादिद्वारा संवत्सरं प्रशस्य तमादित्यमण्डलद्वारेण सर्वव्यवहारहेतुतया प्रशंसति— याभिरिति । अयमादित्यो याभिरुष्णस्वरूपाभी रश्मिभिः तपति प्रभूतं संतापं करोति ताभिस्तीव्ररश्मिभिर्भूमिगतं जलमादाय पर्जन्यो भूत्वा वर्षति । तेन च पर्जन्येन वृष्टिजलेन व्रीह्याद्या ओषधयः अश्वत्थपनसाद्याः वनस्पतयश्च प्रकर्षेणोत्पद्यन्ते । ओषधिभिर्वनस्पतिभिश्च भोज्यमन्नं संपद्यते । तेन चान्नेन प्राणाः पुषिता(?पुष्टा) भवन्ति । तैश्च पुष्टैः प्राणैः शरीरे बलं संपाद्यते । तेन बलेन कृच्छ्रचान्द्रायणादिरूपं तपः संपद्यते । तेन च तपसा शुद्धचित्तस्य तत्त्वज्ञानविषया श्रद्धा जायते । तया श्रद्धया पुरुषस्यैकाग्रचित्तस्य मेधा गुरूपदिष्टग्रन्थतदर्थधारणशक्तिरूपा जायते । तया च मेधया मनीषा बुद्धिः उत्पद्यते । तया च मनीषया मनः निरन्तरं तत्त्वविषयं मननमुपजायते । तेन च मनसा मननेन क्रोधादिदोषस्यावसराभावाच्छान्तिरुपजायते । तया च शान्त्या विक्षेपरहितस्य चित्तं चेतनं तत्त्वविषयप्रमाणजनितज्ञानम् उपजायते । तेन चित्तेन ज्ञानेन निद्रा(दि)व्यवधानेऽपि तत्त्वविषयां

( स्मृतिं ) प्राप्नोति । तया निद्राद्यनन्तरभाविन्या स्मृत्या ( स्मारं ) निरन्तरं स्मरणं प्राप्नोति । तेन च स्मारेण विज्ञानं विजातीय(प्रत्यय)व्यवधानराहित्येन विशिष्टं संततं ज्ञानं प्राप्नोति । तेन च विज्ञानेनाऽऽत्मानं वेदयति परमात्मानं सर्वदाऽनुभवति । यस्मादन्नस्योक्तप्राणबलादिपरम्परया परमात्मानुभवे हेतुत्वं तस्मादीदृशमन्नं ददत्पुरुषः सर्वाण्येतानि प्राणादीन्यात्मानुभवान्तानि वस्तूनि ददाति । अन्नदानस्य सर्वदानरूपत्वं विस्पष्टयितुमुक्तमेवार्थं पुनरपि 'अन्नात्प्राणा भवन्ति' इत्यादिवाक्येन संक्षिप्योपन्यस्यते । प्राणादिपरम्परोत्पन्नाद्विज्ञानादानन्दः परमानन्दरूपो भूत्वा ब्रह्म वेदान्तप्रतिपाद्यं योनिः जगत्कारणम् , यद्वा ब्रह्मणः वेदस्य योनिः कारणं तादृग्रूपः स्वयं भवति । नाउभा.

संन्यासी पुरुषः सर्वात्मकः

**स वा एष पुरुषः पञ्चधा पञ्चात्मा । येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च । स वै सर्वमिदं जगत् $स स भूतं स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान् †तपसो वरिष्ठात् ॥**

यथोक्तं संन्यासमेव स्तोतुं तेन संन्यासेन प्राप्ततत्त्वज्ञानं पुरुषं प्रशंसति— स इति । यः पुरुषः संन्यासपुरःसरं तत्त्वज्ञानं संपादयति स एवैष पुरुषः सर्वात्मकः पञ्चधा पञ्चभिः प्रकारैः पञ्चात्मा पञ्चविंशतिवस्तुस्वरूपो भवति । शब्दस्पर्शादिकं गुणपञ्चकम् , पृथिव्यादिकं भूतपञ्चकम् , चक्षुःश्रोत्रादिकं ज्ञानेन्द्रियपञ्चकम् , वाक्पाण्यादिकं कर्मेन्द्रियपञ्चकम् , प्राणापानादिकं वायुपञ्चकम् , एतावतां वस्तूनां स्वरूपभूत इत्यर्थः । यद्वा, पञ्चभिरात्मभिर्युक्तः पञ्चधा वर्तते । तथा च पुराणेऽभिहितम्—

'भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥' इति । येन ब्रह्मरूपेण सर्वमिदं जगत् सूत्रे मणिगणा इव प्रोतं प्रकर्षेणोतं व्याप्तमित्यर्थः । तदेव सर्वं पृथिवी चेत्यादिना प्रपञ्च्यते । स एव पृथिव्यादिवस्तुव्यापी पुरुषः सर्वमिदं वर्तमानं जगत् , तत्त्वदृष्ट्या तद्व्यतिरेकेणाभावात् । तथा भूतमतीतं जगत् स एव । भव्यं भविष्यदपि जगत् स एव । ननु तत्त्ववित्पुरुषो मूढवद्धस्तपादादियुक्तदेहरूप एव दृश्यते, न तु सर्वजगत्स्वरूप इति चेत् , मैवम् , यतोऽयं जिज्ञासक्लृप्तः जिज्ञासया वेदान्तविचारेण सर्वात्मकतया निश्चितो भवति, ऋतजा ऋतेन सत्येन प्रामाणिकेन ज्ञानेन सर्वात्मा जातः जिज्ञासाकाले भ्रान्तिज्ञानरूपेषु स( ? पू )र्वपक्षेषु ( निराकृतेषु ) प्रामाणिकेन सिद्धान्तज्ञानेन तादृशो जातो भवति । स च रयिष्ठा, रयिर्धनं गुरूपदेशः , तत्रैव तिष्ठति, न तूपदेशरहितानां प्रतीयत इत्यर्थः । ईदृशस्वरूपविज्ञानस्य श्रद्धया लभ्यत्वादसौ श्रद्धारूपः, 'श्रद्धावाँल्लभते ज्ञानम्' इति स्मृतेः । सत्यम् अबाध्यं यद्ब्रह्म तत्स्वरूपत्वादयं सत्यः । महस्वान् तेजस्वान् स्वयंप्रकाश इत्यर्थः । अत एव तमसा संसारकारणाज्ञानेन वियुक्तत्वादुपरिष्टाद्वर्तते । नाउभा.

**ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान् ॥**

इत्थं संन्यासपूर्वकज्ञानयुक्तपुरुषं प्रशस्य ज्ञानयुक्तफलं दर्शयति— ज्ञात्वेति । हे आरुणे, त्वं ( तं ) परमात्मानं हृदा हृत्पुण्डरीकनिवासित्वाद्धृदयरूपेण मनसा एवं पूर्वोक्तसंन्यासरूपसाधनप्रकारेण ज्ञात्वा ज्ञानेन युक्तः सन् भूयः पुनः मृत्युं नोपयाहि ( मा प्राप्नुहि ) । ज्ञानिनो वर्तमानदेहपाते सति जन्माभावात्पुनर्मृत्युर्नास्तीत्यर्थः । नाउभा.

**तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ॥**

( बहुधा प्रशस्तं संन्यासमुपसंहरति— ) तस्मादिति । यस्मात्पुरुषार्थस्यान्तरङ्गसाधनं तस्मात्ते( ? दे )षां सत्या-

---

$ अत्र सशब्दद्वित्वं वैदिकसंप्रदायानुसार्यादर्शपुस्तक एव, न त्वस्मत्प्रमादः ।

† वैदिकसंप्रदाये आदर्शपुस्तके चैवमेव पाठः । 'तमसोपरिष्टात्' इत्यत्र मकारपकारटकाराणां यथाक्रमं पकारवकारठकाराश्छान्दसा आदेशा इत्यादर्शपुस्तकटिप्पण्यामुक्तम् ।

दीनां तपसां मध्ये संन्यासम् अतिरिक्तम् अत्युत्कृष्टं साधनं मनीषिण आहुः। नाउभा.

## बौधायनगृह्यपरिभाषासूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

मन्त्रहविर्दक्षिणायुक्तः एकविंशतिसंस्थारूपः यज्ञश्चतुर्विधः चतुर्भिः आश्रमिभिः अनुष्ठेयः

[1]एकविंशतिसंस्थो यज्ञ ऋग्यजुःसामात्मकश्छन्दोभिश्चितो ग्राम्यारण्यपश्वोषधीभिर्हविष्मान् दक्षिणाभिरायुष्मान् ॥

स चतुर्धा ज्ञेय उपास्यश्च– स्वाध्याययज्ञो जपयज्ञः कर्मयज्ञो मानसश्चेति ॥

तेषां परस्पराद्दशगुणोत्तरो वीर्येण ॥

ब्रह्मचारिगृहस्थवानप्रस्थयतीनामविशेषेण प्रत्येकशः ॥

यज्ञाधिकृतः गृहस्थः श्रोत्रियः, यज्ञस्य आचारः प्रमाणम्

सर्व एवैते गृहस्थस्याप्रतिषिद्धाः क्रियात्मकत्वात् ॥

नाक्रियो ब्राह्मणो नासंस्कारो द्विजो नाविद्वान् विप्रो नैतैर्हीनः श्रोत्रियो नाश्रोत्रियस्य यज्ञ इति ॥

तस्मादाचारः प्रमाणं संस्था आचारः क्रियासंततिरिति नित्या( ? त्यं )भावात् ॥

## हिरण्यकेशिगृह्यशेषसूत्रम्

आचारः चतुर्विधपुरुषार्थसाधनम्

[2]आचाराल्लभते धर्ममाचाराल्लभते धनमाचाराल्लभते सुखमाचारादेव मोक्षं प्राप्नुयात् ॥

[3]एवं क्रियाकाण्डमाचरतो धर्मार्थकाममोक्षाणां सिद्धिर्भवति ॥

(१) बौगृप. १।१।१९–२५ ; हिगृशे. ४।८.

(२) हिगृशे. १।१.

(३) हिगृशे. १।१८.

## आश्वलायनगृह्यपरिशिष्टम्

कर्माणि श्रेयस्कराणि

[1]एवमेतानि कर्माणि यथोक्तं कुर्यात्सर्वाणि श्रेयांस्याप्नोति ॥

## आथर्वणपरिशिष्टम्

वेदोक्तकर्माधिकारः श्रेयस्कामस्य द्विजस्य, कर्माधिकारी द्विविधः सकामो निष्कामश्च, सकामः सफलः निष्कामश्च मुक्तिभाक्

[2]वेदोक्तं सर्वमन्त्रोक्तं शौनकेन महात्मना ।
अवश्यं तद्द्विजैः कार्यं श्रेयस्कामैस्तु नित्यशः ॥
[3]निष्कामो वा सकामो वा वेदोक्तं यः समाचरेत् ।
निष्कामस्य तु मुक्तिः स्यात्सकामः फलमश्नुते ॥
निष्कामेण तु यत्किंचित्कर्तव्यमिति वैदिकम् ।
तत्सर्वं मुक्तिदं ज्ञेयं परापरपरं सुखम् ॥
न शोकस्तस्य नो व्याधिर्न मृत्युर्न जरा तथा ।
न क्षुधा न पिपासा च अमृतात्मा स तिष्ठति ॥

## वैशेषिकसूत्राणि

अनुष्ठातुः अभ्युदयनिःश्रेयसान्यतरेष्टसाधनं धर्मः

[4]यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥

अथ प्रतिज्ञातार्थमाह– यत इति । अभ्युदयः तत्त्वज्ञानम्, निःश्रेयसम् आत्यन्तिकी दुःखनिवृत्तिः, तदुभयं यतः स धर्मः । अभ्युदयद्वारकं निःश्रेयसमिति मध्यपदलोपी समासः, पञ्चमीतत्पुरुषो वा । स च धर्मो निवृत्तिलक्षणो वक्ष्यते । यदि तु निदिध्यासनादियोगसाध्यो धर्मोऽदृष्टमेव तदा विधिरूपः । वृत्तिकृतस्तु– अभ्युदयः सुखम्, निःश्रेयसम् एककालीनसकलात्मविशेषगुणध्वंसः; प्रमाणं च धर्मे 'देवदत्तशरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकम्, कार्यत्वे सति तद्भोगसाधनत्वात्, तन्निर्मितस्रग्वत्' इत्याहुः । तदेत-

(१) आगृप. ३।१८.

(२) आप. २३।१३।४.

(३) आप. २३।१४।४–६.

(४) वैसू. १।१।२.

ह्याख्यानं प्रत्येकसमुदायाभ्यां न व्यापकमित्यर्वाचीनैरुपेक्षितम् । वस्तुतस्तु 'को धर्मः ?, किंलक्षणश्च ?' इति सामान्यतः शिष्यजिज्ञासायां यतोऽभ्युदयनिःश्रेयससिद्धिरित्युपतिष्ठते । तथा च यतोऽभ्युदयसिद्धिर्यतश्च निःश्रेयससिद्धिस्तदुभयं धर्मः । एवं पुरुषार्थासाधारणकारणं धर्म इति वक्तव्ये परमपुरुषार्थयोः सुखदुःखाभावयोर्विशेषतः परिचयार्थमभ्युदयनिःश्रेयससिद्धिरित्युक्तम्, स्वर्गापवर्गयोरेवान्येच्छानधीनेच्छाविषयत्वेन परमपुरुषार्थत्वात् । साधयिष्यते च दुःखाभावस्यापि पुरुषार्थत्वम् ।

उप.

'आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥

इदानीं '†शास्त्रदेशितं फलमनुष्ठातरि' इति जैमिनीयं सूत्रं संवादयन्नाह– आत्मेति । आत्मान्तरगुणानां यागहिंसादिजन्यपुण्यपापानाम् आत्मान्तरे यौ सुखदुःखात्मकौ गुणौ तयोरकारणत्वात् । एवं च प्रत्यात्मनिष्ठाभ्यामेव धर्माधर्माभ्यां सुखदुःखे, न व्यधिकरणाभ्याम् । अन्यथा येन यागहिंसादिकं न कृतं तस्य तत्फलं स्यादिति कृतहानिरकृताभ्यागमश्च प्रसज्येत । ननु नायं नियमः, पुत्रेष्टिपितृयज्ञादौ व्यभिचारात् । तथाहि– पुत्रेण कृतस्य श्राद्धादेः पितरि फलश्रवणात्, पित्रा च कृतायाः पुत्रेष्टेः पुत्रे फलश्रवणात् । न च स्वर्गभागिपितृकत्वस्य तेजस्विपुत्रकत्वस्य च फलस्य पुत्रपितृगामितया सामानाधिकरण्यमेवेति वाच्यम्, श्रुतिविरोधात्, पितृतृप्त्यादेः पुत्रतेजस्वितादेरेव फलस्य श्रवणात्, फलान्तरस्य च गौरवपराहतत्वात् । अस्तु तर्ह्यपूर्वं फलं कर्तरि, स्वर्गस्तु पितरीति चेत्, न, व्यापारस्य फलसामानाधिकरण्यनियमात् । अन्यथा श्राद्धानन्तरं मुक्ते पुत्रे पितुः स्वर्गो न स्यात् । न स्यादिति चेत्, न, मुक्ते पितरि साङ्गादपि श्राद्धात्फलं न स्यादिति तुल्यत्वात् । मैवम्, 'शास्त्रदेशितं फलमनुष्ठातरि' इत्यस्योत्सर्गत्वात्क्वचिद्बलवता बाधकेनापोद्यत्वात्, प्रकृते च पितृपुत्रगतफलश्रवणस्यैव बाधकत्वात् । तथा सत्यतिप्रसङ्ग इति चेन्न, तादृशश्रुतेरेवातिप्रसङ्गनिवारकत्वात् । यत्तु महादानादौ स्वर्गमात्रमेव फलम्, ‡तच्च यदुद्देशेन क्रियते तद्गतमपि फलं जनयतीति; तत्तुच्छम्, तत्रोत्सर्गे बाधकाभावात्, बाधकाभावसहितोत्सर्गस्य नियमत्वात्, राजादीनामुपवासाद्यनुष्ठानानापत्तेः, परद्वारैव तत्तत्कर्मणां स्वगतफलमुद्दिश्यानुष्ठानसंभवात् । सम्यग्गृहस्थाश्रमपरिपालनस्य ब्रह्मलोकावासिरूपे च फले नियम एव, प्रातिस्विकफलाभिप्रायेण तूत्सर्गा( ? त्सर्गत्वा )भिधानात् । वृत्तिकारास्तु– 'शास्त्रदेशितम्' इत्यादिर्नियम एव । पित्रादीनां तु यत्फलं तच्छ्राद्धादौ भोजितानां ब्राह्मणानामाशीर्मन्त्रानुभावात् 'कृतार्थास्ते पितरो भूयासुः' इति पितृयज्ञे, पुत्रेष्टौ तु संतुष्टानामृत्विजामाशीर्दानात् 'तेजस्वी वर्चस्व्यन्नादस्ते पुत्रो भूयात्' इत्यादेः, जाङ्गलिकमन्त्रपाठादिव सर्पदष्टस्य विषापहरणमित्याहुः ।

उप.

शास्त्रोक्तः अदृष्टप्रयोजनः धर्मः अभ्युदयाय

'दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥

एवं पूर्वाह्निके वैदिकी प्रमा गुणजन्येति तदुत्पत्तौ गुणाभिधानम्, 'शास्त्रदेशितं फलमनुष्ठातरि' इति

---

† नैतादृशानुपूर्वीकं जैमिनीयं सूत्रमस्ति । तथा वैशेषिकसूत्रमपि हेतुमात्रविषयकं हेतुमत्सापेक्षम् । अतोऽत्र "जैमिनीयं सूत्रं संवादयन् 'शास्त्रदेशितं फलमनुष्ठातरि' इत्याह" इति वाक्ययोजना कल्पनीया । तथा च 'आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् शास्त्रदेशितं फलमनुष्ठातरि' इति साध्याहारा निराकाङ्क्षा सूत्राकृतिः संपद्यते । 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात्स्वयं प्रयोगे स्यात्' ( जैसू. ३।७।१८ ) इतिशास्त्रफलाधिकरणपूर्वपक्षसूत्रैकदेशोऽर्थतोऽनूदितोऽत्र सूत्रपदेन ग्राह्यः । यद्यपीदं पूर्वपक्षसूत्रम्, यद्यपि चानेन सूत्रेण शास्त्रफलाधिकरणेन वा 'शास्त्रफलं प्रयोक्तरि' इत्ययमर्थो न प्राधान्येन साध्यते, तथापि तत्र वादिप्रतिवादिनोः संप्रतिपत्तेर्जैमिनिसंवादोक्तिर्न विरुध्यते ।

‡ महादानादीत्यर्थः ।

(१) वैसू. ६।१।५.

(१) वैसू. ६।२।१–१५.

विवेचनम् , निषिद्धाचरणेऽपि प्रत्यवायानुत्पत्तिः कस्यांचिद्दशायामित्यस्य विवेचनं च वृत्तम् । अधुना 'यतोऽभ्युदयनिःश्रेयससिद्धिः' इति द्वितीयं सूत्रं व्याचिख्यासुर्विशेषतो धर्मोत्पत्तिपरीक्षायां वर्तिष्यमाणायामाह— दृष्टादृष्टेति । दृष्टप्रयोजनानि कृषिवाणिज्यराजसेवादीनि, अदृष्टप्रयोजनानि यागदानब्रह्मचर्यादीनि, एतेषां कर्मणां मध्ये यत्र दृष्टं प्रयोजनं नोपलभ्यते तत्रादृष्टं प्रयोजनं कल्पनीयम् , तच्चाभ्युदयाय तत्त्वज्ञानाय स्वर्गाय वा । यद्वा अभ्युदयायेति चतुर्थी प्रथमार्थे, तेन फलमभ्युदय इत्यर्थः । अदृष्टं फलमपूर्वमेव । तद्यदि योगजं तदाऽभ्युदयः आत्मसाक्षात्कारः , यदि च यागदानादिजं तदाऽभ्युदयः स्वर्गः । तत्रापि यथा दोग्धि, पचतीत्यादि क्रिया सद्यः फलिका ; वपति, कर्षतीत्यादिक्रिया च चिरभाविफला; तथा यजति, ददाति, ब्रह्मचर्यं चरतीत्यादिक्रिया तावत्सद्यःफलिका न भवति, तादृशस्य फलस्यानुपलब्धेः । न च धार्मिकतया ज्ञानाल्लाभादिकमेव फलम् , प्रच्छन्नं ब्रह्मचर्यादि चरतां तत्फलानुदेशात् । तस्माच्चिरभावि स्वर्गादिकमेव फलम् । तच्चाऽऽशुतरविनाशिन्याः क्रियाया न साक्षादित्यान्तरालिकं क्रियाफलयोः समानाधिकरणमपूर्वमेव पर्यवस्यति । उप.

अदृष्टफलानि कर्माणि

**अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥**

अदृष्टफलानि कर्माणि परिसंचष्टे— अभिषेचनेति । अदृष्टाय इत्यदृष्टलक्षणाय फलाय अदृष्टद्वारा स्वर्गापवर्गलक्षणाय फलाय वा । एतेनादृष्टफलकश्रौतस्मार्तसकलकर्मोपसंग्रहः । तत्राभिषेचनं स्नानम् 'गङ्गायां स्नायात्' इत्यादिविधिविधेयम्, उपवासः 'एकादशीमुपवसेत्' इत्यादिविधिविधेयः, ब्रह्मचर्यं सामान्यत एव धर्मसाधनम् , गुरुकुलवासः ब्रह्मचारिणां वेदाध्ययनमहानाम्न्यादिव्रतार्थः , वानप्रस्थं वयःपरिणामे वनं प्रस्थितानां यत्कर्म, यज्ञः राजसूयवाजपेयादिः , दानं 'गां दद्यात्' इत्यादिविधिविधेयम् , प्रोक्षणं 'व्रीहीन् प्रोक्षति' इत्यादिविधिविधेयम् , दिक् 'प्राचीनप्रवणे यजेत', 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यादिविधिविधेया, नक्षत्रं श्राद्धादौ मघादि, मन्त्रः 'आपो हि ष्ठा' इत्यादिः , कालः 'मासि मासि वोऽशनम्', 'अमावास्यायामपराह्णे दद्यात्', 'ग्रीष्मे पञ्चतपाः', 'वसन्तेऽग्नीनादधीत' इत्यादिविधिविधेयः । नियमः वर्णाश्रमिणां यथाशास्त्रमनुष्ठानम् । तदेवं धर्मस्य आत्मा समवायिकारणम् , आत्ममनःसंयोगोऽसमवायिकारणम् , श्रद्धा स्वर्गादिलक्षणप्रयोजनज्ञानं च निमित्तकारणमनुसंधेयम् । उप.

भावदुष्टं भावदोषरहितं च चातुराश्रम्यम्

**चातुराश्रम्यमुपधा अनुपधाश्च ॥**

एवं धर्मसाधनमभिधाय अधर्मसाधनमपि समुच्चिन्वान आह— चातुराश्रम्यमिति । चतुर्णामाश्रमाणां समानं यद्धर्मसाधनं तत्तावत् पूर्वसूत्रेणैवोक्तमिति शेषः । उपधाः भावस्य श्रद्धाया दोषाः । अनुपधाः श्रद्धाया भावस्याऽदोषाः । तेऽपि धर्माधर्मयोः साधनानि यथास्वमूहनीयानि । उपधापदेनाधर्मसाधनानि सर्वाण्युपसंगृहीतानि । उप.

**भावदोष उपधाऽदोषोऽनुपधा ॥**

उपधानुपधे लक्षणतो विवेचयन्नाह— भावदोष इति । †भावः इच्छा रागः प्रमादोऽश्रद्धामदमानासूयाप्रभृतयो भावदोषा उपधापदेनोच्यन्ते । श्रद्धा मनःप्रसादो देशितकर्मानुष्ठानाध्यवसाय इतिकर्तव्यतापरिच्छेदश्चानुपधा । तदेतयोर्धर्माधर्मनिमित्तकारणत्वमुक्तम् । उप.

संयतस्य अभ्युदयाय शुचिद्रव्यभोगः

**यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥**

---

† यद्यत्र इच्छा भावपदार्थस्तदा प्रमादादीनां तद्दोषत्वं न युज्यते । यदि तु 'सुखाद्रागः' इतिवक्ष्यमाणसूत्रव्याख्याने इच्छाया अपि दोषत्वोक्त्या इच्छादयो भावदोषास्तर्हि भावपदार्थानुक्तेः 'भावः' इति पदमनन्वितं स्यात् । भावदोषपदयोः सामानाधिकरण्यविवक्षायां तु भावपदपौनरुक्त्यं पूर्वसूत्रव्याख्यानोक्तवैयधिकरण्यविरोधश्च । अपरस्तु 'भावस्य आत्मनः यो दोषः स भवत्युपधा, विपर्ययादनुपधेति' इति सूत्रमिदं व्याचख्यौ ।

शुच्यशुचिनी चोपधानुपधे। तत्र शुच्यशुचिनी विवेचयति– यदिति। इष्टं श्रुत्या स्मृत्या च यद्रूपादिकं विहितं यस्य द्रव्यस्य तत्तथा। तत्र रूपम्– 'अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति', 'श्वेतं छागमालभेत' इत्यादौ, प्रोक्षितं मन्त्रेणोदकसिक्तम्, अभ्युक्षितं विनामन्त्रमुदकसिक्तम्। चकारान्न्यायतो लब्धम्। तच्च 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्' इत्यादिनियमविधिबोधितम्। उप.

**अशुचीति शुचिप्रतिषेधः ॥**

अशुचिलक्षणमाह– अशुचीति। यद्द्रव्यं शुचि तद्विपरीतम् अशुचि इत्यर्थः। अप्रशस्तरूपरसगन्धस्पर्शम्, अमन्त्रप्रोक्षितम्, अनभ्युक्षितं निषिद्धजलाभ्युक्षितं वा, अन्यायागतं कृषिवाणिज्यागतं ब्राह्मणस्य, द्रव्यमशुचीत्यर्थः। उप.

**अर्थान्तरं च ॥**

अशुच्यन्तरमाह– अर्थान्तरमिति। प्रशस्तरूपरसगन्धस्पर्शमपि प्रोक्षितमभ्युक्षितं न्यायार्जितं च यत्तत्रापि वाग्दुष्टं भावदुष्टं च यत्तदप्यशुचीत्यर्थः। उप.

**अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद्विद्यते वाऽर्थान्तरत्वाद्यमस्य ॥**

इदानीं धर्माधर्मौ प्रति सहकार्यन्तरमाह– अयतस्येति। अयतस्य यमरहितस्य असंयतस्येति यावत्। 'हस्तौ पादौ प्रक्षाल्याऽऽचम्य वाग्यतो भुञ्जीत' 'भोक्ष्यमाणः प्रयतोऽपि द्विराचामेत्' इत्यादिबोधितयमरहितस्य भोजनं नाभ्युदयाय, किंतु पापाय। कुत एवमित्यत आह– नियमाभावात् नियमस्य सहकारिणोऽभावात्। नियमे सति यत्तदाह– विद्यते वा यथोक्तयमसाहित्येन भोजने भवत्येवाभ्युदयः। कुत इत्यत आह– अर्थान्तरत्वाद्यमस्य भोजनादर्थान्तरं यतो यमः। तथाच सहकारिकारणं विना न फलसिद्धिः, तस्मिन् सति फलसिद्धिरित्यर्थः। उप.

**असति चाभावात् ॥**

ननु यममात्रमेव तन्त्रं तर्हि भोजनमतन्त्रमेवेत्यत आह– असतीति। यमे सत्यपि शुचिभोजने असति अभावात्, अभ्युदयस्येति शेषः। तथा च यमो भोजनं च द्वयमेव पुण्यकारणमित्यर्थः। भोजनमित्युपलक्षणम्, यागदानस्नानहोमादीनामपि श्रौतस्मार्तकर्मणां यमनियमौ सहकारिणौ। उप.

रागद्वेषोपपत्तिः

**सुखाद्रागः ॥**

एवं धर्माधर्मप्रादुर्भावं प्रति यमं सहकारिणमभिधाय दोषं सहकारिणमभिधातुं दोषनिदानमाह– सुखादिति। स्रक्चन्दनवनितादिविषयसेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा रागः इच्छा संजायते अहिकण्टकादिजन्मनो दुःखात्तत्र तत्साधने वा द्वेष इत्यपि द्रष्टव्यम्। रागद्वेषमोहाश्च प्रवर्तकत्वेन दोषा इत्यभिधीयन्ते। तथा च गौतमीयं सूत्रम्– 'प्रवर्तनालक्षणा दोषाः' (न्यासू. १।१।१८) इति। उप.

**तन्मयत्वाच्च ॥**

अत्र सुखदुःखे एव यदि रागद्वेषौ जनयतः तदा तयोर्नाशे कथं तौ स्यातामत आह– तन्मयत्वाच्चेति। रागद्वेषौ भवत इति शेषः। विषयाभ्यासजनितो दृढतरः संस्कारविशेषः तन्मयत्वम्, यद्वशात्कामातुरस्य कामिनीमलभमानस्य सर्वत्र कामिनीदर्शनम्, एकदा भुजङ्गदष्टस्य तत्र दृढतरसंस्कारवतः सर्वत्र भुजङ्गदर्शनम्। तदुक्तम्– 'तन्मयत्वं तत्प्रकाशो बाह्याभ्यन्तरतस्तथा।' इति। उप.

**अदृष्टाच्च ॥**

हेत्वन्तरं समुच्चिनोति– अदृष्टाच्चेति। रागद्वेषाविति शेषः। यद्यप्यदृष्टं साधारणकारणं तथापि क्वचित्तौ प्रति असाधारणतामप्यनुभवति। यथा तज्जन्माननुभूतकामिनीसुखस्यापि यौवनोद्भेदे कामिनीरागः, अननुभूतभुजङ्गदंशदुःखानामपि भुजङ्गेषु द्वेष इत्याद्यूह्यम्। न च प्राग्भवीयः संस्कार एवात्र निबन्धनम्, तत्कल्पने तदुद्बोधकल्पने च प्रमाणाभावाददृष्टस्यावश्यकल्पनीयत्वात्। उप.

**जातिविशेषाच्च ॥**

सहकार्यन्तरमाह– जातिविशेषादिति। तथाहि– मनुष्यजातीयानामन्नादौ रागः, मृगजातीयानां तृणादौ,

करभजातीयानां कण्टकादौ । तत्रापि तत्तज्जातिनिष्पादकमदृष्टमेव तन्त्रम्, द्वारमात्रं तु जातिः जन्मविशेषः । एवं पारावतादीनामुत्कटो रागः । तथा महिषजातीयानां तुरङ्गमे द्वेषः, सारमेयाणां शृगाले, नकुलानां भुजङ्गमे इत्याद्यूह्नेयम् । उप.

रागद्वेषौ धर्माधर्माचरणकारणे

**इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः ॥**

एवं धर्माधर्मनिमित्ततया रागद्वेषनिमित्तानि परिसंख्याय संप्रति दोषाणां धर्माधर्मकारणत्वं प्रवृत्तिद्वारेत्याह— इच्छेति । विहिते कर्मणि रागनिबन्धना, निषिद्धे कर्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः । रागनिबन्धना यागादौ प्रवृत्तिर्धर्मं प्रसूते, द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्मम् । तावेतौ रागद्वेषौ संसारमनुवर्तयतः । तथा च गौतमीयं सूत्रम्— 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' (न्यासू. १।१।१७) इति । वागारम्भः वाचिकी प्रवृत्तिः सत्यं प्रियं हितमिति पुण्या, असत्यमप्रियमहितमिति पापा । बुद्धिः बुध्यते ज्ञायतेऽनेनेति मन उच्यते । तेन मानसी प्रवृत्तिर्भूतदयादिः, शारीरी प्रवृत्तिर्दानं परिचरणमित्यादिका दशविधा पापा दशविधा पुण्या चेति । उप.

धर्माधर्माभ्यां जन्म च मरणं च

**तत्संयोगो विभागः ॥**

इदानीं धर्माधर्मयोः प्रयोजनं प्रेत्यभावमाह— तत्संयोग इति । ताभ्यां धर्माधर्माभ्यां संयोगो जन्म । अपूर्वाभिः शरीरेन्द्रियवेदनाभिः संबन्धः संयोग इहोच्यते । विभागस्तु शरीरमनोविभागो मरणलक्षणः । तथा चायं जन्ममरणप्रबन्धः संसारः प्रेत्यभावापरनामा धर्माधर्माभ्यामित्यर्थः । अस्यैव च प्रेत्यभावस्य ‡अजरशरीभाव इति वैदिकी संज्ञा । उप.

‡ विश्वबन्धुशास्त्रिकृतवैदिकपदानुक्रमकोशस्य संहिताब्राह्मणोपनिषद्भागेषु नायं शब्द उपलभ्यते ।

## जैमिनिसूत्राणि

अपूर्वकल्पना स्वर्गयागयोः साध्यसाधनभावान्यथाऽनुपपत्त्या

**[1]चोदना पुनरारम्भः ॥**

एकापूर्वकल्पना अनेकापूर्वकल्पना वेत्यादिवचनान्यपूर्वसिद्धावुत्तिष्ठेरन् । तत्रैव मानं न पश्याम इत्याक्षेपे समाधानमाह— चोदनेति । चोदना अपूर्वम् । अस्तीति शेषः । पुनरिति शब्दालंकारे । यत आरम्भः स्वर्गस्य यागः साधनमित्युपदेशारम्भः, अत आशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वोपदेशानुपपत्तिरेवापूर्वे मानमिति भावः । सुबोधिनी.

कर्मणां द्रव्यस्य गुणस्य संस्कारस्य फलस्य पुरुषस्य च गुणप्रधानभावनिर्णयः

**तानि द्वैधं गुणप्रधानभूतानि ॥**

'व्रीहीनवहन्ति' इत्यादौ सर्वत्र आख्यातान्तादेवापूर्वे भावाख्याताधिकरणन्यायादिति बहिःपूर्वपक्षे सिद्धान्तमाह— तानीति । तानि आख्यातानि(१ §तान्तानि) द्वैधं द्विप्रकाराणि । क्वचिद्द्रव्यं प्रति †गुणभूतानि क्वचिद्द्रव्यं प्रति प्रधानानि च । सुबोधिनी.

§ यद्यप्याख्यातशब्दस्य तिङ्परस्य तिङन्तपरस्य चेत्युभयथा प्रयोग उपलभ्यते, तथापि पूर्वत्रोत्तरत्र चाऽऽख्यातान्तशब्दप्रयोगात् तात्पर्यभ्रमनिरासार्थमत्रापि तथैव प्रयोगः साधुः ।

† आख्यातान्तपदार्थानां गुणभूतत्वमाख्यातान्तपदेषूपचरितमिति बोध्यम् । एवं प्रधानत्वमपि । न ह्यत्र मुख्यं गुणत्वं प्रधानत्वं च आख्यातान्तपदानां विवक्षितम् । अत एव गुणत्वप्रधानत्वाभ्यां विभक्तानां प्रकृतानामाख्यातान्तपदानां लक्षणीयत्वेऽपि वस्तुतो गुणप्रधानभूतानामाख्यातान्तपदवाच्यानां यागावहननादिकरणकभावनारूपाणामर्थानां लक्षणे उत्तरसूत्रयोरुक्ते संगच्छेते, एकस्मिन् धर्मिणि वस्तुभूतस्य धर्मस्यैव संबन्धिनि धर्म्यन्तरे उपचरितव्यत्वेन उपचारस्य वस्तुभूतधर्मसापेक्षत्वात् ।

(१) जैसू. २।१।५–८.

**यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् ॥**

द्वैविध्यं व्युत्पादयति– यैरिति । यैः आख्यातान्तैः (? तान्तवाच्यैः ) द्रव्यं संस्कार्यत्वेन न चिकीर्ष्यते तानि आख्यातान्तवाच्यानि कर्माणि यागदानादीनि द्रव्यं प्रति प्रधानानि । यथा 'स्वर्गकामो यजेत', 'हिरण्यं ददाति' इति । तत्र द्रव्यस्य गुणभूतत्वात् लोकतः गुणत्वेन कॢप्तत्वात् । सुबोधिनी.

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ॥**

यैः कर्मभिः द्रव्यं संस्कार्यत्वेन चिकीर्ष्यते तत्र ‡धात्वर्थः गुणः प्रतीयेत, तस्य धात्वर्थस्य द्रव्यप्रधानत्वात् द्रव्यं प्रधानं यस्य तत्त्वात् । यथा 'व्रीहीनवहन्ति', 'तण्डुलान्पिनष्टि' इत्यादौ । वितुषीभावरूपदृष्टफलसंभवान्नादृष्टकल्पनेति भावः । सुबोधिनी.

[१]**शेषः परार्थत्वात् ॥**

तत्र कः शेषः ? केन हेतुना शेषः ? इति प्रश्नेऽर्थश्रुतिभ्यामुभयोरुत्तरमाह– शेष इति । परार्थत्वात् व्रीह्यादीनां स्वभिन्नयागार्थत्वात्, व्रीह्यादयः यागं प्रति शेषभूताः । यो यदर्थं प्रवृत्तिविषयीक्रियते स तदङ्गमिति व्याप्तिः । सूत्रे परार्थत्वादिति पञ्चमीश्रुत्या हेतुत्वं स्पष्टम् । यः परार्थः स शेष इति स्वरूपकथनमार्थिकम् । सुबोधिनी.

**द्रव्यगुणसंस्कारेषु बादरिः ॥**

निरुक्ताङ्गत्वं द्रव्यगुणसंस्कारेष्वेव, उत यागफलयोरपि ? इति संशये पूर्वपक्षमाह– द्रव्येति । द्रव्यं व्रीह्यादि, गुणः अरुणादिः, संस्कारः प्रोक्षणादिः । एष्वेव पारार्थ्य(?अङ्गत्व)मिति बादरिराचार्यो मनुते । एवकारेण प्रधानयागफलव्यवच्छेदः । ननु फलार्थत्वाद्यागस्य कथं नाङ्गत्वमिति चेत्, उच्यते– यथा फलार्थत्वं यागस्य नास्ति तथा षष्ठाद्याधिकरणपूर्वपक्षसूत्रे वक्ष्यते । तथा फलस्य पुरुषं प्रति शेषत्वं नास्ति, तदपि तत्रैव स्पष्टम् । सुबोधिनी.

**कर्माण्यपि जैमिनिः फलार्थत्वात् ॥**

सिद्धान्तमाह– कर्माण्यपीति । पारार्थ्यमिति( ? शेषाणीति ) योज्यम् । $फलरूपपारार्थ्यलक्षणस्य तत्र सत्त्वात् । यथा लक्षणसत्त्वोपपत्तिस्तथा षष्ठे व्यक्तीभविष्यति । अपिना द्रव्यगुणसंस्कारपरिग्रहः । सुबोधिनी.

**फलं च पुरुषार्थत्वात् ॥**

पुरुषरूपो यः परः तदर्थत्वरूपलक्षणं फलेऽप्यस्ति, अतः फलं पुरुषस्याङ्गमित्याह– फलमिति । सूत्रार्थः स्पष्टः । सुबोधिनी.

¶**पुरुषश्च कर्मार्थत्वात् ॥**

कर्मवत् फलवच्च पुरुषोऽपि शेषभूतः, कर्मार्थत्वात् औदुम्बरीसंमानादिकर्मार्थः सन् । इति जैमिनिराचार्यो मन्यते । न केवलं द्रव्यगुणसंस्काराणामेव शेषत्वम्, किंतु पुरुषस्यापीति । केवलानन्दी.

[१]**प्रतिनिधिश्च तद्वत् ॥**

व्रीह्यभावे नित्यं प्रतिनिधिनाऽनुष्ठेयमिति षष्ठे वक्ष्यति । तथा च मुख्यप्रतिनिध्युभयसाधारणाः प्रोक्षणादयः, उत मुख्यार्था एवेति संशये पूर्वपक्षमाह– प्रतीति । तद्वत् †सोमधर्मवत्, प्रतिनिधेरनित्यत्वादिति भावः । सुबोधिनी.

**न तद्वत्प्रयोजनैकत्वात् ॥**

सिद्धान्तमाह– नेति । न तद्वत् सोमधर्मवन्न, प्रयोजनैकत्वात् पुरोडाशनिष्पत्तिरूपप्रयोजनैकत्वात् । अयं भावः– 'व्रीहिभिर्यजेत' इत्यत्र शक्यार्थस्य व्रीहित्वजातेः

---

‡ वस्तुतः 'आख्यातान्तार्थः' इति व्याख्यातुं युक्तम् । एवमुत्तरत्रापि ।

(१) जैसू. ३।१।२–६.

$ फलेन रूप्यते निरूप्यते इति फलरूपं पारार्थ्यमित्यर्थः ।

¶ एतत्सूत्रं नास्ति सुबोधिन्याम् ।

† असमानविधान इत्यर्थः । प्रोक्षणाद्यनपेक्ष इति यावत् ।

(१) जैसू. ३।६।३७–३९.

होमकरणत्वं न संभवति, अमूर्तत्वात् । नापि व्रीहीणाम्, अवहननपेषणादिना तन्नाशात् । किंतु व्रीह्यवयवे लक्षणा वाच्या । मुख्याभावे क्रियमाणः प्रतिनिधिः सदृशतम इत्यपि षष्ठे वक्ष्यति । व्रीहीणामुत्पादका ‡नीवाराणां च परमाणव एकजातयः । तैरेव परमाणुभिः संयोगविशेषेण कदाचित् व्रीहयः कदाचिन्नीवाराः । यदा व्रीहिसंबन्धिनस्तदा मुख्याः, व्रीह्यसंबन्धिनस्तदा अमुख्याः प्रतिनिधिरूपा इति व्रीहिपदतात्पर्यविषयत्वमुभयोरित्युभयार्था धर्माः । सुबोधिनी.

अशास्त्रलक्षणत्वात् ॥

व्रीहिनीवारयोः प्रकृतिविकृतिभावो नास्तीत्यत्र हेत्वन्तरमाह— अशास्त्रेति । व्रीहिभिरिति श्रवणात् व्रीहिरूपफलोपधायकाः परमाणवो हि परम्परया व्रीहित्वसंबद्धाः शास्त्रीयाः यागाङ्गभूताः । ये स्वरूपयोग्याः त अशास्त्रीयाः । अतो न तयोः प्रकृतिविकृतिभाव इति भावः । सुबोधिनी.

[१]कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥

कर्त्रादीनां विधिरस्ति न वेति संशये पूर्वपक्षमाह— कर्त्रिति । कर्तॄणाम् ऋत्विजाम्, देशस्य 'समे यजेत' इति, कालस्य 'वसन्ते यजेत' इति, एषाम् अचोदनं न विधिः । प्रयोगे अनुष्ठाने नित्यसमवायात् तैर्विनाऽसंभवेन नित्यक्लृप्तत्वात् । सुबोधिनी.

नियमार्था वा श्रुतिः ॥

सिद्धान्तमाह— नियमेति । विशेषतः नियमार्थे पुनर्विधौ श्रुतिः श्रवणम् । सुबोधिनी.

यजतिधात्वर्थः देवतोद्देश्यकद्रव्यत्यागक्रिया

[२]यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥

प्रसङ्गाद्यजत्यादीनां लक्षणान्याह— यजतीति । यजतिचोदना यजतिधात्वर्थः द्रव्यदेवतयोः क्रियायाश्च संबन्धः, समुदाये उक्तसमुदाये कृतार्थत्वात् क्लृप्तशक्तिकत्वात् । देवतोद्देश्यकद्रव्यत्यागरूपा क्रिया तदर्थ इति फलितम् । सुबोधिनी.

तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥

जुहोतिः तदुक्ते यजतिधातूक्ते आसेचनं द्रवद्रव्यप्रतियोगिकाग्निसंयोगः अधिकं पूर्वस्मादधिकं शक्यतावच्छेदककोटावित्यर्थः । श्रवणात् तत्र व्यवहारात् । देवताद्रव्यसंबन्धविशिष्टद्रव्यप्रतियोगिकसंयोगरूपो व्यापारो जुहोत्यर्थ इति फलितम् । सुबोधिनी.

कर्मफलविचारः

[१]काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥

कर्ममात्रे स्वर्गः फलम्, पशुब्रह्मवर्चसादीन्यानुषङ्गिकाणि, उत श्रूयमाणमेव फलमिति संशये पूर्वपक्षमाह— काम्य इति । नित्यः मुख्यः । पश्वादिरानुषङ्गिकम् । यथा यज्ञाङ्गे प्रस्तरप्रहरणे 'आयुराशास्ते' इतिमन्त्रगम्यं फलम्, यज्ञाङ्गे यज्ञोपकारके गोदोहनादौ अनुष्ठिते अङ्गफलं पश्वादिः क्रत्वर्थः, स्वर्गादिश्च तथा । सुबोधिनी.

वीते च कारणे नियमात् ॥

साधकान्तरमाह— वीत इति । वीते गते कारणे पश्वादीच्छायां गतायामपि नियमादारब्धस्य समाप्तिनियमात् । अन्यथा समाप्तिर्व्यर्थेति भावः । सुबोधिनी.

कामो वा तत्संयोगेन चोद्यते ॥

सिद्धान्तमाह— काम इति । कामः कामपदसमभिव्याहृतोऽर्थः पश्वादिरेव, यतस्तत्संयोगेन पश्वादिसाधनत्वेन चोद्यते विधीयतेऽतः । सुबोधिनी.

अङ्गे गुणत्वात् ॥

अङ्गे गोदोहनादौ गुणत्वात् पश्वादीन्प्रति । 'गोदोहनेन पशुकामः' इति वाक्येन गोदोहनस्य गुणत्वेन

‡ नीवाराणां चोत्पादका इत्यन्वयः ।

(१) जैसू. ४।२।२३-२४.

(२) जैसू. ४।२।२७-२८.

(१) जैसू. ४।३।२०-२४.

विधानाद्वैषम्यम् । प्रस्तरप्रहरणादावपि मन्त्रलिङ्गेन क्लृप्तम् । सुबोधिनी.

**वीते च नियमस्तदर्थम् ॥**

वीते इच्छानिवृत्तौ समाप्तिनियमः तदर्थं प्रत्यवायपरिहारार्थम्, 'यो यक्ष्य इत्युक्त्वा न यजते' इति प्रायश्चित्तश्रवणात् । सुबोधिनी.

**(१)द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥**

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र स्वर्गकामः यागं प्रति गुणः उत प्रधानमिति संशये पूर्वपक्षमाह— द्रव्याणामिति । द्रव्याणां स्वर्गादीनां कर्मणा यागेन संयोगे संबन्धे श्रूयमाणे गुणत्वेन संबन्धः कार्यः । अयं भावः पूर्वपक्षे— स्वर्गशब्दः सुखसाधनद्रव्यमात्रपरः । द्रव्यस्य क्रियासाधनत्वं लोकसिद्धम् । तस्य यावतः प्राप्तावाक्षेपेण 'कर्तुः यत्सुखसाधनं तेनैवायं कार्यः यागः' इति नियम्यते । स्वर्गकामः इत्यत्र स्वर्गेच्छावान्पुरुषो बुध्यते । तदिच्छाया आकारश्च 'मम स्वर्गेण यागो भवतु' इति । स्वर्गस्तु द्रव्यरूपः सिद्धः, यागस्तु श्रवणवेलायामसिद्ध इति 'सिद्धसाध्ययोः समभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति न्यायाद्यागस्य भाव्यत्वमेवोचितम् । अपि च भावनायां प्रथममन्वयवेलायां भाव्याकाङ्क्षा, पश्चात्साधनाकाङ्क्षा, तत्र भाव्याकाङ्क्षायां पदान्तरोपात्तस्य त्वा( ? पात्तस्वर्गा )पेक्षया एकपदश्रुत्या यागस्यैवान्वयो भाव्यत्वेनोचितः । यद्यपि स्वर्गकाम इति विशिष्टार्थस्यैव विधिः प्रतीयते तथापि आख्यातलक्षितकर्तृत्वेन पुरुषस्य प्राप्तत्वात् पुरुषस्यानुवादः, स्वर्गमात्रं साधनत्वेन विधीयते । यथा श्येने अतिदेशप्राप्तऋत्विजः अनूद्य लोहितोष्णीषादिरूपगुणमात्रविधानं तथेति अलं विस्तरेण । सुबोधिनी.

**असाधकं तु तादर्थ्यात् ॥**

सिद्धान्तमाह— असाधकमिति । †तादर्थ्यात् स्वर्गार्थत्वाद्यागस्य असाधकं स्वर्गो यागसाधको न । अयं भावः— पुरुषस्य प्रथमं फले इच्छा । फलं सुखं दुःखाभावो वा । तदनन्तरं तयोः कृत्यसाध्यत्वात् तदुपायसाध्यत्वात् उपायेच्छा, ततः तद्विषयिणी प्रवृत्तिः इति लोकानुभवः । क्रियायाः सुखदुःखा(भावा)तिरिक्तत्वं लोकगम्यम्, ‡अतः तद्विषयिणी इच्छा न संभवति । तयोः साधनविषयिण्यपि न, तव मते यागस्य फलाभावात् । मन्मते स्वर्गकामस्य भाव्यत्वेनान्वये विशेष्ये पुरुषे भाव्यत्वासंभवेऽपि 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति न्यायेन स्वर्गे साध्यतोपपत्तिः । यत्तु असिद्धस्य साधनत्वं न संभवतीति, तन्न, 'तृप्तिकामो भोजनं कुर्यात्' इत्यादौ असिद्धस्यापि भोजनस्य तृप्तिसाधनत्वग्रहणे 'सिद्धसाध्ययोः' इति न्यायस्य व्यभिचारात् । तस्माद्यागस्य स्वर्गफलत्वमपरिहार्यम् । सुबोधिनी.

**प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसंबन्धस्तस्मात्कर्मोपदेशः स्यात् ॥**

ननु पदश्रुत्या भाव्यत्वं यागस्येत्युक्तम्, तस्योत्तरं किम्? इत्याकाङ्क्षायामाह— प्रत्यर्थमिति । हि यतः उक्तयुक्त्या कर्मतः यागेन साकं कस्यचित्संबन्ध आवश्यकः, अतः प्रत्यर्थं स्वर्गे प्रति अभिसंयोगः साध्यताख्यः

† तादर्थ्यं स्वर्गफलकत्वम् । असाधकत्वं यागसाधकत्वाभावः । तथा च 'स्वर्गः यागसाधकत्वाभाववान्, स्वर्गफलकत्वात्' इत्यनुमानाकारः संपद्यते । तत्र यद्यपि हेतोः पक्षधर्मत्वाभावादसिद्धिरापद्यते, तथापि स्वर्गफलकत्वपदार्थघटकं यत् यागनिरूपितफलत्वं तत्र तादर्थ्यपदलक्षणायां नासिद्धिरिति बोध्यम् ।

‡ दुर्बोधोऽयं ग्रन्थः । अयं त्वत्राभिप्रायः प्रतीयते— इच्छा फलविषयिणी फलसाधनविषयिणी वेति द्विधैव संभवति, फलं च सुखं दुःखाभावो वा, क्रिया च न फलरूपा । अतः क्रियायाः सुखदुःखाभावातिरिक्तत्वात् तद्विषयिणी क्रियाविषयिणी इच्छा फलत्वप्रयुक्ता इच्छा न संभवति, क्रियायाः फलत्वाभावात् । नापि फलसाधनत्वप्रयुक्ता क्रियाविषयिणीच्छा संभवतीत्याह— तयोरिति । तयोः फलरूपयोः सुखदुःखाभावयोः संबन्धि यत् साधनं तद्विषयिण्यपि फलसाधनत्वप्रयुक्ता क्रियाविषयिण्यपि इच्छा न संभवति, तव मते यागस्य सुखदुःखाभावरूपफलाभावात् । उक्तफलोद्देशेन यागस्याविहितत्वेन यागे फलसाधनत्वाभावादित्यर्थ इति ।

(१) जैसू. ६।१।१-५.

संबन्धः कल्प्यः । तस्मात्स्वर्गमुद्दिश्य कर्मोपदेशः यागविधिः । अयं भावः— उक्तयुक्त्या उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धे यागे द्रव्यस्यानाकाङ्क्षितत्वात् यागप्रवृत्त्यर्थं फलस्याऽऽकाङ्क्षितत्वात् पदश्रुतिं बाधित्वा वाक्यश्रुत्यादर इति भावः । सुबोधिनी.

यज्ञकर्मणि अधिकारविचारः

**फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥**

दर्शपूर्णमासाधिकारः अन्धादिसाधारण उत यावदङ्गसहितप्रधानानुष्ठानसमर्थस्येति संशये पूर्वपक्षमाह— फलेति । शास्त्रं 'दर्शपूर्णमासाभ्याम्' इति वाक्यं सर्वाधिकारं सर्वेषामधिकारदर्शकम्, सर्वेषां कर्मणः यागात् फलार्थत्वात् फलेच्छावत्वात् । सुबोधिनी.

**कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥**

सिद्धान्तमाह— कर्तुरिति । कार्त्स्न्येन कर्तुः यावदङ्गसहितप्रधानकर्तुः विधिः अधिकारविधिः, श्रुतिसंयोगात् उक्तार्थे विधितात्पर्यात् । सेतिकर्तव्यताकप्रधानस्यैव प्रधानापूर्वजनकत्वबोधनादन्धादीनामाज्यावेक्षणादियावदङ्गानुष्ठानासंभवान्नाधिकार इति भावः । सुबोधिनी.

**\$[1]न देवानां देवतान्तराभावात् ॥**

इति सूत्रं यपुस्तके वर्तते । कुतूहले च व्याख्यातम् । ननु अस्तु तर्हि स्वयंप्रभातविद्यानामधिकारः, तत्राऽऽह— देवतानामपि नाधिकारः, देवतान्तराभावात् । न हि इन्द्रादिभ्योऽन्ये इन्द्रादयः सन्ति, येभ्यो हविर्दीयेत । न च प्राकल्पवर्तिनां देवानां यजनं संभवति, अतीतत्वात् । तस्मात् देवतानामपि न कर्माधिकारः । केवलानन्दी.

**न ऋषीणामार्षेयाभावात् ॥**

इत्यपि अधिकं सूत्रं यपुस्तके । परंतु तत् कुतूहले व्याख्यातं न दृश्यते । तदर्थस्तु— ऋषीणामपि कर्मशास्त्राधि( ? कर्माधि )कारो नास्ति, आर्षेयाभावात् । आर्षेयाणि प्रवराः । गोत्रप्रवर्तकऋषीणां प्रवरा एव न सन्ति इति तेषां साङ्गकर्माधिकारो न संभवति इति । केवलानन्दी.

**[1]लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥**

पुंस एवाधिकारः, किं स्त्रिया अपि ? इति संशये पूर्वपक्षमाह— लिङ्गेति । लिङ्गविशेषस्य पुंलिङ्गस्य 'स्वर्गकामः' इत्यत्र निर्देशात् पुंयुक्तं यजमानत्वमिति ऐतिशायनमतम् । सुबोधिनी.

**तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥**

ननु ग्रहैकत्वाधिकरणे उद्देश्यविशेषणानामविवक्षेति स्थिते कथमयं पूर्वपक्षः ? अत आह— तदिति । तदुक्तित्वात् लिङ्गस्य विवक्षितत्वादेव अविज्ञाने दोषश्रुतिः । अयं भावः— 'गर्भेणाविज्ञातेन भ्रूणहा' इति । अस्यार्थः— गर्भिण्या हनने उदरस्थो गर्भः पुमान्स्त्री वेत्यज्ञानाद्भ्रूणहत्यापापं प्राप्नोति । भ्रूणो यज्ञः, तन्नाशकः । यदि स्त्रीपुंसयोरधिकारः तदा गर्भमात्रहनने यज्ञकर्तृवधः संपन्न इत्यविज्ञातपदं व्यर्थं स्यात् । पुरुषमात्रस्य तथात्वे स्त्रीगर्भे न दोषः, पुंगर्भे यज्ञहा । अन्यतरनिर्णयाभावेन शङ्का अविज्ञात इत्यनेन सूचिता । तस्मादत्रोद्देश्यगतमपि पुंस्त्वं विवक्षितमिति । सुबोधिनी.

यज्ञकर्मणि स्त्रियाः अपि अधिकारः पुरुषस्येव

**जातिं तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत, जात्यर्थस्याविशिष्टत्वात् ॥**

सिद्धान्तमाह— जातिमिति । अविशेषात् पुंस्त्वस्याविवक्षणात् जातिं स्वर्गविषयकेच्छामधिकारितावच्छेदक-

\$ 'न देवानां०' 'न ऋषीणां०' इतीदं वाक्यद्वयं तिर्यगधिकरणे शाबरभाष्ये वर्तते । श्रीमच्छंकराचार्यैरपि देवताधिकरणे वाक्यद्वयमिदं सूत्रत्वं शाबरत्वं वाऽनुक्त्वा समुद्धृतम् । यद्यपि शाबरभाष्य-वार्तिक-भाट्टदीपिकादीनां पर्यालोचनेन शाबरमेवेदं वाक्यद्वयम्, न जैमिनिसूत्रे इति निर्णीयते, तथापि क्वचिज्जैमिनिसूत्रपाठपुस्तके उपलभ्यमानं सूत्रत्वेन पाठमनुरुध्य केवलानन्द्यां व्याख्याततत्वात् विशिष्य देवर्ष्यधिकारविषयकत्वेन संग्राह्यत्वाच्चात्र संगृहीतम् ।

(१) जैसू. ६।१।५ इत्यतः परं प्रक्षिप्ते सूत्रे.

(१) जैसू. ६।१।६–१६, १९–२१.

त्वेन बादरायणाचार्यो मनुते । जात्यर्थस्य तादृगिच्छाया उभयत्राविशेषेण सत्त्वेन स्त्र्यपि अधिकारिणी । यदुक्तं लिङ्गविशेषेण विवक्षितं लिङ्गं तत् 'अविज्ञातो वा एष गृह्यते यदाग्रयणः' इतिविधिस्तावकं सन्न पुंस्त्वविवक्षायां समर्थमिति भावः । सुबोधिनी.

‡विभक्त्येति चेन्न ॥

'पशुना यजेत' इत्यत्र कथं विवक्षेति शङ्कते– विभक्त्येति । एकत्वबोध इति शेषः । सुबोधिनी.

चोदितत्वाद्यथाश्रुति ॥

समाधत्ते– चोदितेति । चोदितत्वात् विहितत्वात् यथा श्रुतं तथा । अत्र त्वनुत्राद्यगतमिति भावः । सुबोधिनी.

द्रव्यवत्त्वात्तु पुंसां स्याद्द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥

स्त्रिया नाधिकारः स्वस्वत्वाश्रयद्रव्याभावादिति सिद्धान्तमाक्षिपति– द्रव्येति । यतो द्रव्यसंयुक्तं द्रव्यसाध्यं कर्म अतः द्रव्यवत्त्वात्पुंसामेवाधिकारः, स्त्रीणां क्रयविक्रयाभ्यां द्रव्यैः समानयोगित्वात् साध्यसाधनभावसंबन्धात् । पितुः स्वकन्याविक्रयेण द्रव्यस्य साध्यत्वात् स्त्रीद्रव्ये साध्यतासंबन्धः, भर्तुः क्रयसाधनत्वं संबन्धः, तादृशसंबन्धवत्त्वात् अद्रव्यत्वम् । अयं भावः– पित्रा विक्रीतत्वात्पितृद्रव्येणासंबन्धः । भर्त्रा क्रीतत्वाद्दासादिवत्पतिद्रव्येणासंबन्धः । अतोऽद्रव्येति स्त्रीणामद्रव्यत्वम् । अद्रव्यायाः द्रव्यसाध्यक्रतुः कथं भवेत्? अतो नाधिकारः । 'शतमधिरथं दुहितृमते दद्यात्' इति विक्रयलिङ्गम् । सुबोधिनी.

तथा चान्यार्थदर्शनम् ॥

भर्तुः क्रयलिङ्गं दर्शयति– तथा चेति । तथा च पितुः विक्रये सिद्धे च अन्यार्थस्य भर्तुः क्रयस्य च दर्शनम् । 'या पत्या क्रीताऽथान्यैश्चरति' इति क्रयदर्शनवाक्यम् । सुबोधिनी.

तादर्थ्यात्कर्मतादर्थ्यम् ॥

ननु कर्तनादिना साऽपि द्रव्यं लभताम्, अत्राऽऽह– क्रीतत्वेन तादर्थ्यात् भर्त्रर्थत्वात् भर्त्रर्थे यत्कर्म तदेव तया कार्यम्, नान्यत्कर्तनादि । अत एव स्मृतिः– 'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते । यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥' (मनुस्मृ. ८।४१६) इति । सुबोधिनी.

फलोत्साहाविशेषात्तु ॥

इमं पक्षं दूषयति– फलेति । फलोत्साहः फलेच्छा, तस्याविशेषादस्त्यधिकारः स्त्रियाः । सुबोधिनी.

अर्थेन च समवेतत्वात् ॥

तस्या द्रव्याभावोऽसिद्ध इत्याह– अर्थेनेति । समवेतत्वात् युक्तत्वात् । 'पत्नी हि पारिणय्यस्येशे' इति श्रुत्या 'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मृत्या च तस्या द्रव्यस्वामित्वं सिद्धमिति भावः । सुबोधिनी.

क्रयस्य धर्ममात्रत्वम् ॥

यत्र क्रयः लोके गवादीनां तत्र कस्याश्चिदश्च मुद्राः अपरव्यक्त्याश्च ततो न्यूनोऽधिको वा दृश्यते । इह तु क्रयो विक्रयश्च नियतद्रव्यक इत्यदृष्टार्थ एवेत्याह– क्रयस्येति । धर्ममात्रत्वमदृष्टसाधनत्वम् । सुबोधिनी.

स्ववत्तामपि दर्शयति ॥

स्त्रीणां न कर्माधिकारः अद्रव्यत्वात् इति पूर्वपक्षे उत्तरमाह सिद्धान्ती । स्त्री द्रव्यवती, न अद्रव्या । यतः श्रुतिरेव स्त्रियाः स्ववत्तामपि दर्शयति, न केवलं क्रयविक्रयाभावम् 'पत्नी वै पारिणय्यस्येष्टे' इति । पारिणय्यं नाम गृहगताः पीठपिठरादयः पदार्थाः । तेषां स्वामिनी पत्नी इति श्रुत्यर्थः । 'जाघन्या पत्नीः संयाजयन्ति । भसद्वीर्या हि पत्नयः । भसदा वा एताः परगृहाणामैश्वर्यमवरुन्धते' इति च । दर्शादौ पत्नीसंयाजेषु पशुजाघनी द्रव्यम् । कुतः? पत्नीनां वीर्यं भसत् योनिरेव । तया भसदा योन्या स्त्रियः पतिगृहेषु ऐश्वर्यं लभन्ते इत्यर्थः । तस्मात् द्रव्यवत्यः स्त्रियः । द्रव्यवत्त्वात्तासां कर्मण्यधिकार इति सिद्धान्तः । केवलानन्दी.

---

‡ श्रीकेवलानन्दस्वामिसंपादिते मीमांसासूत्रपाठे आदर्शत्वेन स्वीकृते सूत्रस्यास्यासत्त्वेऽपि उत्तरसूत्रवृत्तिसंगत्यर्थं सुबोधिन्यभिमतमिदं सूत्रं संगृहीतम् ।

**क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥**

पूर्वशेषं पूरयति । तत्र सिद्धान्ताक्षेपसूत्रम्– क्रीतेति । पत्न्याः क्रीतत्वात् स्वामित्वं द्रव्यस्वामित्वं भक्त्या गौणवृत्त्योच्यते, न मुख्यवृत्त्या । सुबोधिनी.

**फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः ॥**

दूषयति–फलेति । फलार्थित्वात् मिलितयोः फलार्थित्वश्रवणात् न गौणवृत्त्या स्वामित्वम् , किंतु मुख्यस्वामित्वेनाभिसंबन्धः । सुबोधिनी.

**फलवत्तां च दर्शयति ॥**

फलवत्तां मिलितयोः फलवत्तां दर्शयति 'यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीः । दिवि ज्योतिरजरमारभेथाम्' ( तैब्रा. ३।७।५।११ ) इति श्रुतिः । सुबोधिनी.

**[1]स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥**

एवमपरिसमाप्ते एतदधिकरणे विचारान्तरम् । पत्न्या अधिकारे सिद्धे यजमानेन तया च पृथगेव यज्ञः कार्य इति पूर्वपक्षे सिद्धान्तमाह– स्वेति । स्ववतोर्वचनात् आज्यस्य एकप्रयोगे उभययोगे उभयोरवेक्षणवचनात् ऐककर्म्यं मिलित्वैकप्रयोगः । सुबोधिनी.

**लिङ्गदर्शनाच्च ॥**

उक्तार्थे लिङ्गमाह– लिङ्गेति । 'मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय' इति भिन्नप्रयोगे यजमानप्रयोगे योक्त्राभावेन मिथुनत्वं विरुध्येत । सुबोधिनी.

सर्ववर्णानां कर्मसु अधिकारः इति बादरिमतम् , त्रैवर्णिकानामेव न शूद्रस्य इति सिद्धान्तः

**[2]चातुर्वर्ण्यमविशेषात् ॥**

कर्मण्यधिकारः त्रैवर्णिकानामुत चातुर्वर्ण्यस्य इति संशये पूर्वपक्षमाह– चातुरिति । अविशेषात् विशेषवचनाभावात् । सुबोधिनी.

**निर्देशाद्वा त्रयाणां स्यादग्न्याधेयेऽप्यसंबन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥**

'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति त्रयाणां निर्देशादाधाने ब्राह्मणादिश्रुतेः क्रतुषु दर्शपूर्णमासादिष्वसंबन्धः , आहवनीयाभावात् इत्यात्रेयमतम् ।

**निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात् ॥**

वसन्ते इति वाक्यं निमित्तार्थकं ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः । एवं क्षत्रियादेस्तत्तत्कालो नियम्यते । शूद्रस्यानियतकाल इत्यभिप्रायं बादरिमतमाह– निमित्तेति । स्पष्टोऽर्थः । सुबोधिनी.

**अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥**

सिद्धान्तमाह– अपि वेति । अन्यत्र अर्थदर्शनात् त्रैवर्णिकं गृहीत्वा तत्तन्निमित्ते अर्थदर्शनात् । यथा 'पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्य' इति, एवं 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्य' इति यथा निमित्तत्वं तथाऽऽधानवाक्ये उत्पत्तिवाक्ये वसन्तादिश्रवणेन निमित्तत्वासंभवात् यथाश्रुति वसन्तादिविशिष्टमपूर्वकर्म प्रतीयते । सुबोधिनी.

**निर्देशात्तु पक्षे स्यात् ॥**

पुनर्निमित्तत्वपक्षमेवोत्थापयति– निर्देशादिति । निर्देशात् 'य एवं विद्वानग्निमाधत्ते' इत्युत्पत्तिवाक्यनिर्देशात् पक्षे उक्तनिमित्ते वसन्तादिः स्यात् । सुबोधिनी.

**वैगुण्यान्नेति चेत् ॥**

पूर्वोक्तपयोव्रतादीनां ब्रह्मसामादीनामभावेन शूद्रक्रतुर्विगुणः स्यादित्याशङ्कते– वैगुण्यादिति । सुबोधिनी.

**न काम्यत्वात् ॥**

परिहरति– नेति । काम्यत्वात् स्वर्गकामो यजेत इति अविशेषेण श्रवणेन तस्यापि शूद्रस्यापि कामनावत्त्वात् । पयोव्रतादीनां तत्तत्कर्तृकत्वे निमित्ते नियमः, शूद्रस्यानियमाद्येन केनापि व्रतादीति भावः । सुबोधिनी.

**संस्कारे च तत्प्रधानत्वात् ॥**

व्रतस्य पुरुषसंस्कारत्वाद्यस्य श्रूयते तस्यैव, नान्यस्येत्याह– संस्कार इति । संस्कारे पयोव्रतरूपसंस्कारे तत्प्रधानत्वात् पुरुषप्रधानत्वात् । सुबोधिनी.

---

(१) जैसू. ६।१।१७–१८.
(२) जैसू. ६।१।२५–३८.

**अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥**

उपनयनस्य वेदग्रहणार्थत्वात्त्रैवर्णिकानामेव उपनयनं विहितम् । 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' इति शूद्रस्योपनयनाभावेन वेदाभावात् त्रैवर्णिकानामेवाऽऽधानेऽधिकार इत्याह– अपि वेति । वेदस्य त्रैवर्णिकेषु निर्देशादपशूद्राणां शूद्रभिन्नानामेवाधिकारः प्रतीयेत । सुबोधिनी.

**गुणार्थित्वान्नेति चेत् ॥**

उपनयनं पुरुषसंस्कारः, न विद्यार्थ इत्याह–गुणार्थत्वात् संस्कारार्थत्वान्न उक्तार्थसिद्धिः । सुबोधिनी.

**संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥**

दृष्टे संभवत्यदृष्टकल्पनमन्याय्यमिति भावेनाऽऽह– संस्कारस्येति । संस्कारस्य उपनयनस्य तदर्थत्वात् विद्यार्थत्वात् विद्यायामेव ब्राह्मणादिपुरुषश्रुतिः । सुबोधिनी.

**विद्यानिर्देशान्नेति चेत् ॥**

स्वर्गकामश्रवणादेव विद्या कल्पनीयेत्याशङ्कते– विद्येति । विद्या(या)निर्देशात् कल्पनादिति चेत् । सुबोधिनी.

**अवैद्यत्वादभावः कर्मणि स्यात् ॥**

परमसिद्धान्तमाह– अवैद्यत्वादिति । अवैद्यत्वात् विद्याभावात् कर्मण्यधिकाराभावः स्यात् । सुबोधिनी.

**तथा चान्यार्थदर्शनम् ॥**

अवैद्यत्वे साधकमाह– तथा चेति । 'एतच्छ्मशानं यः शूद्रः, तस्माच्छूद्रसकाशे नाध्येयम्' इति समीपे अध्ययनाभावः, किमु वक्तव्यं विद्याभाव इति भावः । सुबोधिनी.

द्रव्यसंपन्नः अङ्गहानिरहितः फलेच्छावांश्च कर्मणि अधिकृतः

**[१]त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धत्वात् ॥**

द्रव्यहीनो दर्शपूर्णमासादावधिक्रियते, न वेति संशये पूर्वपक्षमाह– त्रयाणामिति । कर्मणो द्रव्यसिद्धित्वात् द्रव्यसाध्यत्वात् त्रिवर्णानां मध्ये द्रव्यवानधिकारी । सुबोधिनी.

**अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥**

सिद्धान्तमाह– अनित्यत्वादिति । दारिद्र्यस्यानित्यत्वात् नैवं स्यात् । दरिद्र इति काचन जातिर्न स्यात् । अर्थात् संपादनात् द्रव्यसंयोगो भविष्यति । सुबोधिनी.

**अङ्गहीनश्च तद्धर्मा ॥**

यो द्रव्यस्य न्याय उक्तः स एवाङ्गहीने । अन्धत्वमौषधेन दूरीकृत्याधिकारीति भावः । सुबोधिनी.

**उत्पत्तौ नित्यसंयोगात् ॥**

यस्तु चिकित्सादिभिरङ्गवैकल्यं परिहर्तुमक्षमः स नाधिकारीति सिद्धान्तमाह– उत्पत्ताविति । उत्पत्तिवेलायामेव योऽन्धः तस्यान्धत्वस्य नित्यसंयोगात् अपरिहार्यत्वात् नाधिकारी । सुबोधिनी.

**[१]प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥**

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ आख्यातप्रतिपाद्यमेकत्वं विवक्षितं न वेति संशये पूर्वपक्षमाह– प्रयोग इति । प्रयोगे उदाहृतवाक्ये पुरुषश्रुतेः पुरुषमात्रश्रुतेः प्रयोगे अनुष्ठाने यथाकामी यथेच्छमेको द्वौ त्रयो वा यागं निर्वर्तयेयुः । अयं भावः– 'यजेत स्वर्गकामः' इति 'अनेन यागेन फलं प्राप्नुयात्' इत्यर्थः, न 'यागं कुर्यात्' इति । तथा च भावनायाः अविधाने आक्षेपलभ्यकर्तुरनुष्ठानं प्रति गुणत्वाभावात् वाक्ये श्रूयमाणपुरुषस्य फलं प्रति प्रधानत्वादुद्देश्यगतसंख्याऽविवक्षितेति भावः । सुबोधिनी.

**प्रत्यर्थं श्रुतिभाव इति चेत् ॥**

सिद्धान्ती शङ्कते– प्रत्यर्थमिति । प्रत्यर्थम् अर्थमर्थं प्रतीति प्रत्यर्थम् । अर्थमेदेनेति फलितम् । श्रुतिभावः गुणप्रधानभावः । स्वर्गकाम इतिपदप्रतिपाद्यपुरुषस्य फलं प्रत्युद्देश्यत्वात् तद्गतसंख्याऽविवक्षिता भवतु, तथा-

(१) जैसू. ६।१।३९–४२.

(१) जैसू. ६।२।३–१३.

ऽप्याख्यातेन यागानुरक्तां क्रियां विदधता क्रियागुणभूत-कर्तुराक्षेपात्तदुपात्तसंख्या विधेयगता कर्तृपरिच्छेदकतया विवक्षिताऽपि वक्तव्येति। अन्यथा पुरुषव्यापारशक्त्या-ख्यातस्य प्राप्त्यर्थत्वे लक्षणापत्तेरिति भावः। सुबोधिनी.

**तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात्कर्तुः प्रधानभूतत्वात् ॥**

गुणप्रधानभाव एकत्र न संभवतीत्याह—तादर्थ्ये नेति। तादर्थ्ये फलस्य तदर्थत्वे तत्र प्राधान्यान्न गुणार्थता गुणभूतो यो यागः तदर्थता तदङ्गत्वं पुरुषस्य न। प्रधानत्व-गुणत्वयोर्विरोधादिति भावः। ननु अनयोर्विरोधो न शब्दगम्योऽत आह— अनुक्तेऽर्थान्तरत्वात्। अनुक्तेऽपि शब्दागम्ये अर्थान्तरं प्रमाणान्तरं प्रत्यक्षादि तत्त्वात् तद्गम्यत्वात्। लोके यत्र प्रधानत्वं राशि तत्र न गुणत्वम् अप्रधानत्वम् इति दृष्टमिति भावः। कर्तुः प्रधानभूतत्वादिति तादर्थ्ये हेतुः। सुबोधिनी.

**चोदनैकत्वात् ॥**

'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' इति वाक्य-द्वयप्रतिपाद्ये यागे विरुद्धो गुणप्रधानभावो दृश्यतेऽत आह— चोदनेति। एको विधिः एकस्मिन्प्राधान्यं तत्रापरस्याङ्गत्वं वदेत्। इह पुरुषं प्रधानीकृत्य तत्र फलस्याङ्गत्वम्, एवं यागं प्रधानीकृत्य तत्र कर्तुरङ्गत्वं चेति उभयं वक्तुमक्षम एको विधिः। अग्निहोत्रविधौ वाक्यभेदात्तथा कथनं युक्तमिति भावः। सुबोधिनी.

**अपि वा कामसंयोगे संबन्धात्प्रयोगायोप-दिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ॥**

सिद्धान्तमाह— अपि वेति। आख्यातस्येति शेषः। कामस्य कामशब्दस्य संयोगो यस्मिन् 'यजेत स्वर्गकामः' इति वाक्ये आख्यातस्य संबन्धात् घटकत्वसंबन्धात् प्रयो-गाय पुरुषप्रवृत्त्यर्थमुपदिश्यते श्रूयते। अयं भावः— यथा तृप्तिकामेन भोजनेऽनुष्ठितेऽनुष्ठातरि तृप्तिप्राप्तिरवश्यं भावि-नीति पुरुषे फलप्राप्तिरर्थसिद्धेति, तथेह पुरुषप्राधान्यं न शास्त्रतात्पर्यविषयः, किं त्वनेन यागानुष्ठानमेव विधीयते। अनुष्ठानविधौ अनुष्ठानसाधनकर्ताऽनुष्ठानाङ्गम्, तत्परि-च्छेदकतयाऽऽख्यातसंख्या विवक्षितेति। यत्रैकस्मिन्नेव गुणप्रधानभावः शास्त्रविषयः तत्र तत्तात्पर्यज्ञापिका श्रुति-र्दृश्यते। यथा 'कृष्णविषाणया कण्डूयते' इत्यत्र तृतीया-श्रुतिः। विषाणे तृतीयाश्रुत्याऽङ्गत्वम्, 'चात्वाले कृष्णविषाणां प्रास्यति' इत्यत्र द्वितीयाश्रुत्या प्राधान्यम्, तथा नात्रेति वक्तुं दृष्टान्तमाह— प्रत्यर्थमिति। प्रत्यर्थे प्राधान्यार्थे विधेयत्वार्थे (च) विधिश्रुतिः विधितात्पर्य-ज्ञापिका विषाणायां तथाऽत्र नेति फलितम्। सुबोधिनी.

**अन्यस्यापीति चेत् ॥**

ननु कर्तारमुद्दिश्य फलप्राप्तिर्यदि न विधीयते, किं त्वनुष्ठानमात्रम्, तर्हि परस्य स्वर्गकामनावताऽप्यनुष्ठेयं स्यात्। न हि स्वर्गकाम इत्यत्राऽऽत्मनः परस्य वेति विशेषः श्रूयते इत्याह— अन्यस्येति। सुबोधिनी.

**अन्यार्थे नाभिसंबन्धः ॥**

इदं दूषणं परिहरति— अन्येति। अन्यार्थेन अन्यस्य स्वर्गेच्छावता समं कर्तुः नाभिसंबन्धः नाभेदः। आत्मने-पदश्रवणादिति पूरणीयम्, कर्तृगामिनि क्रियाफल एवा-ऽऽत्मनेपदस्य साधुत्वादिति भावः। सुबोधिनी.

**फलकामो निमित्तमिति चेत् ॥**

स्वर्गकामपदं निमित्तत्वद्योतकयावज्जीवपदवदित्याह— फलेति। फलकामः स्वर्गकामशब्दः निमित्तं निमित्तत्व-द्योतकम्। सुबोधिनी.

**न नित्यत्वात् ॥**

नेति। निमित्तं न, नित्यत्वात्। निमित्तत्वसूचक-णमुल्प्रत्ययादेरभावादिति भावः। सुबोधिनी.

**कर्म तथेति चेत् ॥**

"'युवं हि स्थः स्वःपती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" इति वाक्यमेककर्मणि उभयकर्तृकत्वं द्रढयतीत्याह— कर्मेति। अस्मिन्सूत्र उदाहृतवाक्यार्थानु-पपत्तेरिति हेतुः पूरणीयः। कर्म ज्योतिष्टोमादि तथा उभयकर्तृकमपि क्वचित्। सुबोधिनी

**न समवायात् ॥**

दूषयति— नेति। समवायात् 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति क्लृप्तोभयकर्तृके साव-काशत्वात्। सुबोधिनी.

फलप्राप्त्यर्थं प्रारब्धं कर्म फलप्राप्त्युत्तरमपि समापनीयम्

**'प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात् ॥**

'कारीर्या वृष्टिकामो यजेत' इति वृष्टिसाधने प्रवर्तते। मध्ये संपन्नायां वृष्ट्यां तत्रैव विरामः उत समापनीयमिति संदेहे सिद्धान्तसूत्रमाह— प्रक्रमादिति। प्रक्रमात् कर्मारम्भात् नियम्येत कर्मसमाप्तिर्नियता। कुतः? आरम्भस्य क्रियानिमित्तत्वात् क्रियायां समाप्तिक्रियायां निमित्तत्वात्। अयं भावः— यजेतेत्यत्र विधिगम्यशब्दभावनोद्देश्यत्वमाख्यातार्थरूपार्थभावनायाम्। सा चार्थभावना समाप्तिरूपा, नाऽऽरम्भसमाप्त्युभयरूपा, आरम्भं विना समाप्तेरसंभवेन समाप्तिविधाने तस्याऽऽर्थिकस्य विध्यविषयत्वात्, पाकविधौ वह्निसंपादनमिव। तथा च समाप्त्युद्देशेनैव प्रवृत्तत्वात् तत्सिद्धिरावश्यकीति। कामनायाः अनुष्ठाननिमित्तत्वादनुष्ठानस्य समाप्तिरूपत्वान्निमित्तस्य कामस्य नाशेऽपि समाप्तिरनुष्ठेयेति फलितोऽर्थः। यथा क्षुतो निवृत्तावप्याचमनं तथा। सुबोधिनी.

**फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते ॥**

सिद्धान्तमाक्षिपति— फलेति। फलार्थित्वात्, यागस्येति शेषः। फलसाधनत्वमात्रप्रतिपादनात् निमित्तत्वस्य फलेच्छायाः पूर्वाधिकरणे निरस्तत्वात् अनियमः समापनीयमित्यनियमः। यथाऽनुपक्रान्ते कामनासत्त्वेऽपि आरम्भाभावे समाप्त्यभावः तथाऽऽरम्भेऽपीति भावः। सुबोधिनी.

**नियमो वा तन्निमित्तत्वात् कर्तुस्तत्कारणं स्यात् ॥**

कामनायाः समाप्त्यनिमित्तत्वेऽपि आरम्भस्य समाप्तिनिमित्तत्वमावश्यकमित्याह— नियमो वेति। नियमः समाप्तिनियमः। आरम्भस्येति मण्डूकप्लुतिन्यायेन प्रथमसूत्रादनुवृत्तिः। आरम्भस्य तन्निमित्तत्वात्। अनुष्ठानस्य फलं किमित्याकाङ्क्षायामाह— कर्तुः आरम्भकर्तुः तत् असमापनं कारणं प्रत्यवायकारणं स्यात्। 'यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत' इति प्रायश्चित्तश्रवणादिति भावः। सुबोधिनी.

(१) जैसू. ६।२।१४-१६.

निषेधवाक्यानां न पर्युदासे लक्षणा

**'प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥**

'न कलञ्जं भक्षयेत्' इति पर्युदासो निषेधो वेति संशये पूर्वपक्षमाह— प्रतिषेधेष्विति। प्रतिषेधेषु सिद्धान्तिनो निषेधत्वेनाभिमतेषु 'न कलञ्जम्' इति (? इत्यादि—) वाक्येषु अकर्मत्वात् भक्षणविरोधिसंकल्पविधित्वात् क्रिया स्यात् तत्कामनारहितपुरुषैर्भक्षणमनुष्ठेयं स्यात्। अयं भावः— नञो न भावनायामन्वयः, भक्षणव्यवहितत्वात्। न कलञ्जेन, समासापत्तेः। भक्षणे ऽन्वेतीत्यपि न, तथा सति भक्षणाभावस्य कृत्यसाध्यतया कर्तव्यताप्रतिपादकविध्यनन्वयात्। तस्मादगत्या 'नेक्षेतोद्यन्तमादित्यम्' इतिवन्नञ्भक्षणपदस्य भक्षणविरोधिसंकल्पादौ लक्षणा। तस्य कर्तव्यतया विधानम्। तस्य फलाकाङ्क्षायां विश्वजिन्न्यायात्स्वर्गः फलम्। तत्फलेच्छारहितेन भक्षणं कर्तव्यमिति फलितमिति। अकर्मणां भक्षणविरुद्धसंकल्परूपकर्मप्रतिपादकानां पर्युदासरूपाणां निषिद्धानां च विभक्तत्वात् परस्परं भिन्नत्वादित्यर्थः। नञ्पदसमभिव्याहृतधातोः स्वविरुद्धार्थे लक्षणा यादृशवाक्ये स पर्युदासः। प्रवर्तकवाक्यमिति फलितम्, यच्च निवर्तकं तस्य निषेधरूपत्वात्। सुबोधिनी.

**शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयेत तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥**

प्राजापत्यव्रतदृष्टान्तवैषम्यं दर्शयन् सिद्धान्तमाह— शास्त्राणामिति। प्राजापत्यव्रते त्रीणि शास्त्राणि सन्ति— 'तस्य व्रतम्' इत्येकम्, 'नेक्षेतोद्यन्तमादित्यम्' इति द्वितीयम्, 'एतावता हैनसा (विमुक्तो) भवति' इति तृतीयम्। शास्त्राणां त्रयाणां वाक्यानामर्थवत्त्वेन पुरुषार्थः पुरुषस्यार्थः फलं यस्मादिति व्युत्पत्त्या ईक्षणविरोधी 'नेक्षिष्ये' इति संकल्परूपः विधीयते। अयं भावः—

(१) जैसू. ६।२।२०-२१.

'तस्य व्रतम्' इत्यत्र व्रतशब्दार्थो मानसो व्यापारः। तदुत्तरं मानसव्यापारविशेषजिज्ञासायां 'नेक्षेत' इति ईक्षणविरोधी संकल्पः। तस्य फलजिज्ञासायां तृतीयं वाक्यमिति त्रयमेकवाक्यतापन्नं भवतीति लक्षणा धातोर्युक्तेति। तयोः प्रथमतृतीयवाक्ययोः 'न कलञ्जम्' इत्यत्रासमवायित्वात् अभावात् तादर्थ्ये, चतुर्थ्यर्थे सप्तमी, वाक्यार्थलाभाय विध्यतिक्रमः विधीयमानार्थनिषेधः स्यात्। नञ्समभिव्याहारे भक्षणानुष्ठानापरपर्यायो( ? या )भावना विधीयते, नञा तन्निषेधः। इत्थं च धातोः मुख्यार्थः संपद्यते, तदर्थं व्यवहितान्वयोऽपि न दोषायेति भावः। सुबोधिनी.

आचमनादयः स्मार्तधर्माः उपनयनोत्तरमेवानुष्ठेयाः

**तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥**

'क्षुते आचामेत्' इत्यादिस्मार्तधर्माः जन्मप्रभृति उतोपनयनमारभ्येति संशये पूर्वपक्षमाह– तस्मिन्निति। तस्मिन् मन्वादिग्रन्थे शिष्यमाणानि पठ्यमाणानि आचमनादीनि जननेन जन्ममात्रेण प्रवर्तेरन्। विशेषाश्रवणादिति शेषः। सुबोधिनी.

**अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥**

सिद्धान्तमाह– अपि वेति। स्मृतीनां वेदतुल्यत्वादुपायेन उपनयनेन सह प्रवर्तेरन्। सुबोधिनी.

विहितानां कर्मणां विहितकाले अभ्यासः

**अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते ॥**

'यावज्जीवमग्निहोत्रं जुहोति', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति वाक्येनाभ्यासो विधीयत इति द्वितीये स्थितम्। अयमभ्यासोऽजस्रं कार्य उत सायंप्रातरिति संशये पूर्वपक्षमाह– अभ्यास इति। अयमभ्यासः अकर्मशेषत्वात् पुरुषार्थो विधीयते, अतः सातत्येन होतव्यम्। अयं भावः– जीवने निमित्ते विधानान्निमित्तस्य सर्वदा सत्त्वादजस्रमनुष्ठानमिति। सुबोधिनी.

**एतस्मिन्नसंभवन्नर्थात् ॥**

एतस्मिन् अजस्रानुष्ठाने असंभवन्, निद्राविहारादिलोपभियेति शेषः। अर्थात् निद्राहारादिरूपावश्यकानुष्ठानातिरिक्ते काले सर्वदा होतव्यमिति। सुबोधिनी.

**न कालेभ्य उपदिश्यन्ते ॥**

सिद्धान्तमाह– कालेभ्यः विहितकालेभ्यः अन्यत्र न। अतः उपदिश्यन्ते कालाः 'सायं प्रातरग्निहोत्रं जुहोति' इति, 'अमावास्यायाममावास्यया यजेत' इत्यादिभिः। सुबोधिनी.

**दर्शनात्काललिङ्गानां कालविधानम् ॥**

उक्तार्थे लिङ्गमप्याह– दर्शनादिति। काललिङ्गानां विहितकाल एवेत्यत्र लिङ्गानां दर्शनात्। 'अमावास्यां वा पौर्णमासीं वाऽतिपादयति' इति तत्राननुष्ठाने प्रायश्चित्तश्रवणं लिङ्गम्। अतः काले विधानम् अनुष्ठानम्, नाजस्रम्, कालविधिना निमित्तसंकोचादिति भावः। सुबोधिनी.

**तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥**

दर्शपूर्णमासादि सकृदनुष्ठेयमुत काले काल इति संशये 'सकृत्कृतश्चरितार्थः' इति न्यायेन सकृदेवानुष्ठानमिति बहिःपूर्वपक्षे सिद्धान्तमाह– तेषामिति। तेषां विहितकालानामौत्पत्तिकत्वात् उत्पत्तेरनुष्ठाने निमित्तत्वान्निमित्तस्याऽऽगमेन पुनः प्रवर्तते। सुबोधिनी.

**तथा हि लिङ्गदर्शनम् ॥**

तथा हि उक्तार्थे हि लिङ्गदर्शनम् 'यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयति' इति प्रायश्चित्तश्रवणम्। सुबोधिनी.

**तथाऽन्तःक्रतुयुक्तानि ॥**

यथा क्रतुनिमित्तावृत्तौ क्रत्वावृत्तिः तथाऽन्तःक्रतुयुक्तानि क्रतुमध्ये यानि नैमित्तिकानि 'भिन्ने जुहोति', (छिन्ने जुहोति) इत्यादीनि क्रत्वर्थानि तथा( ? तानि ) आवर्तन्ते। सुबोधिनी.

**आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥**

गुर्वनुगमनादिषु आचारप्राप्तेषु तथा आवृत्तिः स्यात् पुरुषार्थत्वात् गुरुप्रीत्यर्थत्वात्। सुबोधिनी.

नित्यकर्मणः अङ्गानां यथाशक्ति अनुष्ठानं युक्तम्, काम्यकर्मणस्तु सर्वाङ्गानामनुष्ठानमेव युक्तम्

**[१]सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥**

(१) जैसू. ६।३।१–२६.

यावज्जीवमिति विहितनित्याग्निहोत्रे यावदङ्गानुष्ठानसमर्थ एवाधिकारी, अथ वा यावच्छक्त्यङ्गानुष्ठानसमर्थोऽप्यधिकारीति संशये पूर्वपक्षमाह—सर्वेति । सर्वशक्तौ प्रवृत्तिः स्यात् सर्वानुष्ठानसमर्थस्य प्रवृत्तिः यागप्रवृत्तिः स्यात् तथाभूतोपदेशात् साङ्गानुष्ठानस्यैव विवक्षितत्वात् । सुबोधिनी.

**अपि वाऽप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥**

सिद्धान्तमाह— अपि वेति । एकदेशे अङ्गैकदेशानुष्ठानेऽपि प्रयोगः स्यात् । प्रधाने प्रधानानुष्ठानेऽपि अर्थस्य फलस्य प्रत्यवायाभावरूपस्य निर्वृत्तिः सिद्धिः । इतरत्र इतरफले स्वर्गादौ गुणमात्रं यावदङ्गानुष्ठानम्, यावदङ्गानुष्ठानस्य तदर्थत्वात् स्वर्गाद्यर्थत्वात् । सुबोधिनी.

**तदकर्मणि च दोषस्तस्मात्ततो विशेषः स्यात्प्रधानेनाभिसंबन्धात् ॥**

ननु दर्शपूर्णमासेभ्यः प्रधानेभ्यः पृथक्कृत्वा नित्ये प्रयोगे अङ्गानामप्रयोजकत्वे प्रधानमप्यप्रयोजकं किं न स्यात् ? तत्राऽऽह—तदेति । तदकर्मणि तस्य प्रधानस्याननुष्ठाने दोषः श्रूयते—'पयो वा एषोऽध्यपथेनैति' इति । तस्मात्ततः अङ्गात् विशेषः, प्रधानेनाभिसंबन्धात् प्रधानमात्रानुष्ठानस्याऽऽवश्यकत्वात् । सुबोधिनी.

**कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यात् ॥**

'अमावास्यायाममावास्यया पौर्णमास्यां पौर्णमास्या यजेत' इति साङ्गप्रधानानुष्ठानश्रवणं नित्ये यथाशक्ति, काम्ये नेति वैरूप्यसूचकं नेति जैमिनिमतमाह— कर्मेति । कर्मणोः प्रयोगयोः अभेदम् एकरूपतां जैमिनिराह । प्रयोगवचनस्य दर्शितस्यैकरूपत्वात् प्रयोगद्वयेऽपि सर्वेषां यावदङ्गानाम् उपदेशः अनुष्ठानं स्यात् । सुबोधिनी.

**अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥**

सिद्धान्तरहस्यमाह— अर्थस्येति । एकस्य प्रयोगेऽपि किंचिदङ्गकनित्यप्रयोगेऽपि फलं प्रत्यवायाभावः स्यात् । कुतः ? अर्थस्य प्रधानस्य अङ्गेभ्यः पृथक्कृतत्वात् । 'अमावास्यया यजेत, पौर्णमास्या यजेत' इत्यत्रामावास्यापौर्णमासीशब्दौ न साङ्गप्रधानपरौ किंतु केवलप्रधानषड्यागपराविति विद्वदधिकरणे प्रपञ्चितत्वान्न पूर्वसूत्राक्षेपावकाश इति भावः । इत्थं च नित्यकाम्यप्रयोगयोः परस्परमनपेक्षत्वान्नित्यं विगुणमपि कर्तव्यम् । अत्र दृष्टान्तमाह— यथा क्रत्वन्तरेषु । यथा दर्शपूर्णमासाग्निहोत्रयोः परस्परनिरपेक्षत्वं तथा नित्यकाम्ययोरित्यर्थः । सुबोधिनी.

**विध्यपराधे च दर्शनात्समाप्तेः ॥**

साधकान्तरमाह— विध्यपराध इति । विध्यपराधेऽपि अङ्गानुष्ठानासंभवेऽपि समाप्तेः दर्शनात्समापनस्य श्रुतत्वात् 'तदेव यादृक्कीदृक् च होतव्यम्' इत्यच्छिद्रकाण्डे दर्शनात् । यादृक्कीदृग् यथाकथंचिदङ्गहीनमपि प्रधानमनुष्ठेयमिति वाक्यार्थः । सुबोधिनी.

**प्रायश्चित्तविधानाच्च ॥**

नित्ये किंचिदङ्गलोपे अभ्यनुज्ञासूचकमन्यदप्याह— प्रायश्चित्तेति । 'यस्याग्निमनुद्धृतं सूर्योऽभ्युदेति चतुर्गृहीतमाज्यं पुरस्ताद्धरेत्' इत्यादिभिः प्रायश्चित्तश्रवणात् अङ्गलोपेऽपि अनुष्ठेयमिति ज्ञापयतीति भावः । सुबोधिनी.

**काम्येषु चैवमर्थित्वात् ॥**

यथा नित्यं विगुणमनुष्ठेयं तथा काम्यमिति पूर्वसिद्धान्तमाक्षिपन् पूर्वपक्षसूत्रमाह— काम्येष्विति । एवं विगुणस्याप्यनुष्ठानम् । अर्थित्वात् प्रधानजन्यफलेच्छायाः सत्त्वात् । सुबोधिनी.

**असंयोगात्तु नैव स्याद्विधेः शब्दप्रमाणत्वात् ॥**

एवं न, विधेः असंयोगात् केवलप्रधानस्यापूर्वजनकत्वे तात्पर्याभावात्, अपूर्वजनकत्वस्य शब्दप्रमाणत्वात् शब्दैकगम्यत्वात् । केवलयागभावना न विधीयते, किंतु इतिकर्तव्यतासहिताऽपूर्वजनिकेति विधीयत इति भावः । सुबोधिनी.

**अकर्मणि चाप्रत्यवायात् ॥**

ननु नित्येऽपि तुल्यमत आह— अकर्मणीति । अकर्मणि नित्याननुष्ठाने यथा प्रत्यवायः तथा काम्ये अश्रवणान्न काम्यनित्ययोः साम्यमिति भावः । सुबोधिनी,

**एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥**

अग्निहोत्रादीनां नित्यप्रयोगाणां सर्वाङ्गोपसंहारो नेति षष्ठे साधितम् । तथा काम्ये तु सर्वाङ्गोपसंहार इति तमाक्षिपन्पूर्वपक्षमाह— एकेनापीति । एकेनाप्यङ्गेन समाप्येत । प्रयोग इति शेषः । कृतार्थत्वात् कथंभावाकाङ्क्षायाः पूर्णत्वात् । यथा क्रत्वन्तरेषु स्वर्गसाधनेषु ज्योतिष्टोमाग्निहोत्रदर्शपूर्णमासादिषु सत्सु एका स्वर्गभावना एकेनैव क्रतुवाचकेन शब्देन निराकाङ्क्षं (ङ्क्षा) तथा । ननु तत्संनिधानाविशेषेण विनिगमनाविरहात्सर्वाङ्गाण्याकाङ्क्षापरिपूरकाणीत्यत आह— उत्तरावदिति । सर्वाङ्गाणां संबन्धेऽपि न नियमेन संबन्धः, किंतु यावदङ्गानुष्ठानं तावत्फले उपकाराधिक्यम्; यथा वा सांनाय्ये 'तिस्रो वाग्यतो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति' इत्यत्र गवामनियम उत्तरासाम्, गृहे यावत्यः, तथा यथाशक्ति अनुष्ठानमिति भावः । सुबोधिनी.

**फलाभावान्नेति चेत् ॥**

'यजेत स्वर्गकामः' इति फलं प्रति सर्वेषामविशेषेण विधानादेकदेशानुष्ठाने फलाभावप्रसङ्ग इति शङ्कते— फलाभावादिति । फलाभावात् फलानुत्पत्तेः । सुबोधिनी.

**न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥**

पूर्वशङ्कां दूरीकरोति— नेति । कर्मणा प्रधानकर्मणा फलस्य संयोगान्न पूर्वदोषः । इत्थं सति प्रयोजनं फलम् अशब्ददोषं शब्ददोषरहितम् अबाधितार्थमिति यावत् । अयं भावः 'यजेत स्वर्गकामः' इति वाक्येन प्रधानकर्मणा फलं संबद्धम्, नाङ्गैः । यदि चाङ्गान्यपि फलेन संबध्येरन् तर्हि दर्शपूर्णमासाभ्यामिति तृतीयानुपपत्तिः । करणत्वस्य प्रकृत्यर्थेतरसापेक्षत्वात् तृतीयानुपपत्तिः । विस्तरो व्रीहियवयोः समुच्चयखण्डनावसरे ज्ञेयः । तृतीयासहितवाक्यादितरनैरपेक्ष्यं प्रधानकर्मणः फलसंबन्धे प्रतीयमाने बाध्येत । सुबोधिनी.

**ऐकशब्द्यादिति चेत् ॥**

पुनर्युक्त्यन्तरेणाऽऽशङ्कते— ऐकेति । ऐकशब्द्यात् एकविधिविषयत्वात्, निखिलाङ्गानामिति शेषः । इत्थं चोभयोः फलसंबन्ध आवश्यक इति भावः । सुबोधिनी.

**नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥**

इमं पक्षं दूषयित्वा पूर्वपक्षं द्रढयति— नेति । न सर्वेषां फलसंबन्धः । कुतः? अर्थपृथक्त्वात् अर्थभेदात् प्रधानस्य फलार्थत्वात् अङ्गानां प्रधानार्थत्वात् । यद्यङ्गानां प्रधानस्य च फलसंबन्धः तदा समत्वात्प्रधानाङ्गयोः तुल्यत्वात् अगुणत्वम् एको गुणः अपरं प्रधानमिति विवेको न स्यादिति भावः । तस्मान्न सर्वाङ्गोपसंहार इति पूर्वपक्षः । सुबोधिनी.

**विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाक्रमं निवीतवत्तस्मात्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥**

सिद्धान्तमाह— विधेरिति । सर्वाङ्गानुष्ठानं सर्वप्रयोगेष्विति प्रतिज्ञावाक्यं पूरणीयम् । कुतः? विधेः यावदङ्गानुष्ठानबोधकविधेः एकश्रुतित्वात् प्रधानविधिगम्यत्वात् । यावदङ्गप्रयोगविधेरिति भावः । नन्वेकविधिगम्यत्वेऽपि पर्यायेण प्रयोगभेदेन सर्वेषां निवेशोऽस्त्वत आह— अपर्यायविधानादिति । एतस्यैवार्थं विवृणोति— नित्यवदिति । नित्यवच्छ्रुतान्द्भावनावाचकशब्दात् भूता उत्थिता आकाङ्क्षा कथंभावाकाङ्क्षा तयाऽभिसंबन्धात् । यथा प्रधानकरणाकाङ्क्षाया नित्यं यावत्प्रयोगेषु संबन्धः तथा नित्यं यावदङ्गानां कथंभावाकाङ्क्षया संबन्धान्न पर्यायेणानुष्ठानमिति भावः । ननु नित्यवच्छ्रुतस्यापि पर्यायेणानुष्ठाने किं बाधकमित्यत आह— अर्थेनेति । अर्थेन प्रधानोपकारेण युगपदेककालं प्राप्तेः संबन्धात् यथाक्रमं प्रथमं यथाऽऽकाङ्क्षापूरकतयाऽन्वितं तथैवानुष्ठानम् । अयं भावः— भावनावाचकशब्दश्रवणे उत्थितायाः कथंभावाकाङ्क्षायाः पूरकतया खलेकपोतन्यायेन युगपत्सर्वेषामङ्गानामन्वितत्वात्पर्यायेण प्रयोगेऽङ्गानां संबन्धे प्राथमिकयुगपदन्वयो बाधितः स्यादिति । अत्र दृष्टान्तमाह—निवीतव-

दिति । 'निवीता ऋत्विजः प्रचरन्ति' इत्यत्राविशेषात्सर्वेषां संनिधानात्सर्वर्त्विक्साधारणं तथा सर्वप्रधानप्रयोगसाधारणं सर्वाङ्गम् । प्रतिज्ञातमर्थं निगमयति– तस्मादिति । सुबोधिनी.

**तथा कर्मोपदेशः स्यात् ॥**

उक्तार्थे उपष्टम्भकं दर्शयति– तथेति । तथा सति यावदङ्गानां यावत्प्रयोगेष्वनुष्ठाने सति कर्मोपदेशः 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम्' इत्याहुतिसंख्योपदेशः संगतः स्यात् । पौर्णमास्यां चतुर्दशत्वं च द्वे चक्षुषी पञ्च प्रयाजास्त्रीणि प्रधानानि स्विष्टकृत् त्रयोऽनूयाजा इति । अमावास्यायामैन्द्रयागयोरेकाहुतित्वात्त्रयोदशत्वम् । इयं संख्या नित्यं सर्वाङ्गेष्वनुष्ठितेष्वेवोपपद्यत इति भावः । सुबोधिनी.

**क्रत्वन्तरेषु पुनर्वचनम् ॥**

एतदधिकरणप्रारम्भसूत्रे क्रतुदृष्टान्तो दर्शितः । तद्वैषम्यं दर्शयति– क्रत्वन्तरेष्विति । पुनर्वचनम् । ज्योतिष्टोमदर्शपूर्णमासादिषु स्वर्गकाम इति पुनः पुनः श्रुतमतः प्रत्येकं फलेन संबन्धो युक्त इति भावः । सुबोधिनी.

**उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत ॥**

उत्तरासु दृष्टान्तवैषम्यं दर्शयति– उत्तरास्विति । उत्तरासु तिसृभ्यो गोभ्य उत्तरासु अश्रुतित्वात् 'विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति' इत्यनेन दोहनस्याविहितत्वात् । ननु तर्हि वाक्यं व्यर्थमत आह– विशेषाणां वाग्विसर्गादीनां विधानेन कृतार्थत्वात् स्वदोहे स्वीयस्वत्वं यावत्सु तावद्दोहे यथाकामी यथेच्छं( ? च्छत्वं ) प्रतीयते (?येत) 'नास्यैतां रात्रिं कुमाराः पयो लभन्ते' इत्यनेन स्वत्वाश्रयसकलगोदोहप्राप्तिरिति भावः । सुबोधिनी.

काम्यं कर्म कृषिकर्मवत् फलाधिक्येच्छया
आवर्तनीयम्

**कर्मण्यारम्भभाव्यत्वात् कृषिवत्प्रत्यारम्भं फलानि स्युः ॥**

काम्यं कर्म सकृदेव कर्तव्यं फलाधिक्यमिच्छताऽपि, अथवाऽसकृदनुष्ठेयमिति संशये प्रथमं सिद्धान्तसूत्रमाह– कर्मणीति । कर्मणि फले आरम्भेण कर्मानुष्ठानेन भाव्यत्वात् उत्पाद्यत्वात् प्रत्यारम्भं प्रत्यनुष्ठानं फलानि स्युः । फलाधिक्येच्छावता आवृत्तिः कार्येति भावः । यथा कृषिः प्रतिसंवत्सरं कर्षणाद्यनुष्ठाने धान्योत्पत्त्याऽऽवृत्तिः । सुबोधिनी.

**अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥**

उक्तार्थे साधकं लिङ्गमप्याह– अधिकार इति । सर्वेषां बहूनां कार्यत्वादनुष्ठेयत्वात् विशेषः अधिकारः 'प्रथमं यजेरन्, द्वितीयं यजेरन्' इति क्वचिच्छ्रुतः उपपद्यते । सुबोधिनी.

**सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ॥**

पूर्वपक्षी स्वाभिप्रायमाह– सकृदिति । सकृदेवानुष्ठानं स्यात् । यथा एकप्रयोगे सकृदङ्गानुष्ठानेन ( कृतार्थत्वं तथा ) कृतार्थत्वात् । सुबोधिनी.

**शब्दार्थश्च तथा लोके ॥**

स्वमतेऽप्युपष्टम्भकमाह– शब्दार्थ इति । लोके लोकव्यवहारे तथा 'सकृत्काष्ठान्यानय' इति गुरुणोक्ते शब्दार्थः शब्दार्थानुष्ठानं काष्ठाहरणं सकृदेव करोतीति भावः । सुबोधिनी.

**अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥**

उक्तपक्षं दूषयन् सिद्धान्तं दृढीकरोति– अपि वेति । अपि वेति पक्षान्तरद्योतकम् । संप्रयोगे प्रयोगानुष्ठाने यथाकामीति प्रतीयेत ज्ञातव्यम् । कुतः ? अश्रुतित्वात् सकृदेव कर्तव्यमिति शास्त्राभावात् । विधिषु अनुष्ठानमात्रविषयाणि विधिवचनानि स्युः । न सकृदसकृद्वेत्यत्रापि तात्पर्यमिति भावः । सुबोधिनी.

**ऐकशब्द्यात्तथाऽङ्गेषु ॥**

नन्वङ्गेष्वपि सकृदसकृदिति शास्त्राभावादभ्यासः स्यादत आह– ऐकशब्द्यादिति । अयं भावः– अङ्गानां प्रधानानां च विधायक एको विधिप्रत्ययः, तत्र कथंभावाकाङ्क्षा सकृदेवेति । फले तु फलेच्छाया यदा यदा सत्त्वं तदा तदा उपायाकाङ्क्षा 'किं साधनम् ?' इत्याकारिकेति तदाऽऽवृत्तिरिति भावः । सुबोधिनी.

**लोके कर्मार्थलक्षणम् ॥**

यश्च लोकदृष्टान्तः पूर्वपक्षिणोक्तः तं निवारयति– लोक इति । लौकिकं कर्म अर्थलक्षणं लौकिकप्रत्यक्षविषयकार्यकम् । अयं भावः– लोके 'काष्ठान्यानय' इत्युक्ते सकृदानयनेन पाकनिष्पत्तौ सकृदेवाऽऽहरति, तदनिष्पत्तौ द्विवारं त्रिवारमानयति, तेन विनाऽपि कार्यसिद्धौ नाऽऽनयति च । अत्र बीजं फलदर्शनमस्तीति । स्वर्गादिस्थले तददर्शनाल्लौकिकदृष्टान्तोऽनुचित इति । सुबोधिनी.

## ब्रह्मसूत्राणि

मनुष्याणामिव देवानाम् ऋषीणां च ब्रह्मविद्यायामधिकारः

**[1]तदुपर्यपि बादरायणः संभवात् ॥**

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षया, मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तम्, तत्प्रसङ्गेनेदमुच्यते– बाढं मनुष्यानधिकरोति शास्त्रम्, न तु मनुष्यानेवेतीह ब्रह्मज्ञाने नियमोऽस्ति । तेषां मनुष्याणाम् उपरिष्टाद्ये देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते । कस्मात्? संभवात् । संभवति हि तेषामप्यर्थित्वाद्यधिकारकारणम् । तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम् । तथा सामर्थ्यमपि तेषां संभवति, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात् । न च तेषां कश्चित्प्रतिषेधोऽस्ति । न चोपनयनशास्त्रेणैषामधिकारो निवर्त्येत, उपनयनस्य वेदाध्ययनार्थत्वात् तेषां च स्वयंप्रतिभातवेदत्वात् । अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति– 'एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास' (छाउ. ८।११।३), 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म' (तैउ. ३।१) इत्यादि । यदपि कर्मस्वनधिकारकारणमुक्तम्– 'न देवानां देवतान्तराभावात्' इति, 'न ऋषीणामार्षेयान्तराभावात्' इति, न तद्विद्यास्वस्ति । न हीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति, न च भृग्वादीनां भृग्वादिसगोत्रतया । तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते? देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते । शंकर.

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥**

स्यादेतत्– यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत, विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसंनिधानेन कर्माङ्गभावोऽभ्युपगम्येत । तदा च विरोधः कर्मणि स्यात् । न हीन्द्रादीनां स्वरूपसंनिधानेन यागेऽङ्गभावो दृश्यते । न च संभवति, बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसंनिधानता(? धाना)नुपपत्तेरिति चेत् । नायमस्ति विरोधः । कस्मात्? अनेकप्रतिपत्तेः । एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति । कथमेतदवगम्यते? दर्शनात् । तथाहि– 'कति देवाः' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति निरुच्य 'कतमे ते' इत्यस्यां पृच्छायाम् 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' (बृउ. ३।९।१, २) इति निर्ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति । तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण 'कतम एको देव इति प्राणः' इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति । तथा स्मृतिरपि 'आत्मनो वै शरीराणि बहूनि भरतर्षभ । योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् । संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥' इत्येवंजातीयका प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति, किमु वक्तव्यमाजानसिद्धानां देवानाम्? अनेकरूपप्रतिपत्तिसंभवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति । परैश्च न दृश्यतेऽन्तर्धानादिक्रियायोगादित्युपपद्यते । 'अनेकप्रतिपत्तेर्दर्शनात्' इत्यस्यापरा व्याख्या– विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते । क्वचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं न गच्छति, यथा बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते । कचि-

(१) ब्रसू. १।३।२६, २७, ३१, ३२, ३३.

चैकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं गच्छति, यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते । तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवतानां न किंचित्कर्मणि विरुध्यते । शंकर.

**मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥**

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्यावर्त्यते । देवादीनामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात् ? मध्वादिष्वसंभवात् । ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत । न चैवं संभवति । कथम् ? 'असौ वा आदित्यो देवमधु' इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन् । देवादिषु ह्युपासकेष्वभ्युपगम्यमानेष्वादित्यः कमन्यमादित्यमुपासीत ? पुनश्चाऽऽदित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृतान्युपक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति । वस्वादयस्तु कानन्यान्वस्वादीनमृतोपजीविनो विजानीयुः ? कं वाऽन्यं वस्वादिमहिमानं प्रेप्सेयुः ? तथा 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' (छाउ. ३।१८।२), 'वायुर्वाव संवर्गः' (छाउ. ४।३।१), 'आदित्यो ब्रह्मेत्यादेशः' (छाउ. ३।१९।१) इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः संभवति । तथा 'इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाजः' (बृउ. २।२।४) इत्यादिष्वप्यृषिसंबन्धेषूपासनेषु न तेषामेवर्षीणामधिकारः संभवति । शंकर.

**ज्योतिषि भावाच्च ॥**

कुतश्च देवादीनामनधिकारः ? — ज्योतिषि भावाच्च । यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगद्वभासयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते, लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च । न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयाऽर्थित्वादिना वा योगोऽवगन्तुं शक्यते, मृतादिवदचेतनत्वावगमात् । एतेनाग्न्यादयो व्याख्याताः । स्यादेतत्— मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति । नेत्युच्यते । न हि तावल्लोको नाम किंचित्स्वतन्त्रं प्रमाणमस्ति । प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसिध्यन्नर्थो लोकात्प्रसिध्यतीत्युच्यते । न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति । इतिहासपुराणमपि पौरुषेयत्वात्प्रमाणान्तरमूलमाकाङ्क्षति । अर्थवादा अपि विधिनैकवाक्यत्वात्स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते । मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते । तस्मादभावो देवादीनामधिकारस्य । शंकर.

**भावं तु बादरायणोऽस्ति हि ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसंभवोऽधिकारस्य, तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः, अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य । न च क्वचिदसंभव इत्येतावता यत्र संभवस्तत्राप्यधिकारोऽपोद्येत । मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः संभवति । तत्र यो न्यायः सोऽत्रापि भविष्यति । ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्— 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' (बृउ. १।४।१०) इति, 'ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' (छाउ. ८।७।२) इत्यादि च । स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि । यदप्युक्तं ज्योतिषि भावच्चेति, अत्र ब्रूमः— ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः

शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादिषु तथा व्यवहारात् । अस्ति चैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम् । तथा हि श्रूयते सुब्रह्मण्यार्थवादे– 'मेधातिथेर्मेषेति । मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंशब्राह्मणम् १।१) इति । स्मर्यते च– 'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह ।' इति । मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते, 'मृदब्रवीत्, आपोऽब्रुवन्' इत्यादिदर्शनात् । ज्योतिरादेस्तु भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते । चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम् । यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति, अत्र ब्रूमः– प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणम् । नान्यार्थत्वमनन्यार्थत्वं वा । तथा ह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णादि 'अस्ति' इत्येव प्रतिपद्यते, अत्राऽऽह– विषम उपन्यासः । तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति, येन तदस्तित्वं प्रतिपद्यते । अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याऽध्यवसातुम् । न हि महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य पृथक्प्रत्यायकत्वमस्ति । यथा 'न सुरां पिबेत्' इति नञ्वति वाक्ये पदत्रयसंबन्धात्सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते, न पुनः 'सुरां पिबेत्' इति पदद्वयसंबन्धात्सुरापानविधिरपीति । अत्रोच्यते– विषम उपन्यासः । युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणम्, विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयवृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते । यथा हि 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना संबन्धः, नैवं 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्येषामर्थवादगतानां पदानाम् । न हि भवति 'वायुर्वा आलभेत' इति, 'क्षेपिष्ठा देवता वा आलभेत' इत्यादि । वायुस्वभावसंकीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवंविशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति । तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्तते । यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन । यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यादाहोस्वित्प्रमाणान्तराविरोधाद्विद्यमानवाद इति प्रतीतिशरणैर्विद्यमानवाद आश्रयणीयः, न गुणवादः । एतेन मन्त्रो व्याख्यातः । अपिच विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम् । न हि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते, न च चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते । श्रावयति च– 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इति । न च शब्दमात्रमर्थस्वरूपं संभवति, शब्दार्थयोर्भेदात् । तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम् । इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम् । प्रत्यक्षादिमूलमपि संभवति । भवति ह्यस्माकमप्रत्यक्षमपि चिरंतनानां प्रत्यक्षम् । तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते । यस्तु ब्रूयादिदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत्, इदानीमिव च नान्यदाऽपि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात् । ततश्च राजसूयादिचोदनोपरुन्ध्यात् । इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीत । ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात् । तस्माद्धर्मोत्कर्षवशाच्चिरंतना देवादिभिः प्रत्यक्षं व्यवजहुरिति श्लिष्यते । अपि च स्मरन्ति 'स्वाध्यायादिष्टदेवतासंप्रयोगः' (योसू. २।४४) इत्यादि । योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योगमाहात्म्यं प्रख्यापयति– 'पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥' (श्वेउ. २।१२)

इति । ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात्समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति संभवे निरालम्बनाऽध्यवसातुं युक्ता । तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः । ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते । शंकर.

जीवानाम् इष्टादिकारिणां चन्द्रमण्डलात् अस्मिन्
लोके पुनर्निवृत्तिकारणविचारः

**'कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥**

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते– 'तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' ( छाउ. ५।१०।५ ) इत्यारभ्य यावद्रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते, कपूयचरणाः श्वादियोनिमिति । तत्रेदं विचार्यते– किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्ति, आहोस्वित्सानुशयाः ? इति । किं तावत्प्राप्तम् ? निरनुशया इति । कुतः ? यावत्संपातमिति विशेषणात् । संपातशब्देनात्र कर्माशय उच्यते– संपतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति । यावत्संपातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति । 'तेषां यदा तत्पर्यवैति' ( बृउ. ६।२।१६ ) इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते । स्यादेतत्– यावदमुष्मिँल्लोक उपभोक्तव्यं कर्म तावदुपभुङ्क्त इति कल्पयिष्यामीति । नैवं कल्पयितुं शक्यते, 'यत्किंच' इत्यन्यत्र परामर्शात् । 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे ॥' ( बृउ. ४।४।६ ) इति ह्यपरा श्रुतिर्यत्किंचेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षयितां दर्शयति । अपि च, प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम्, प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः । तच्चाविशेषाद्यावत्किंचिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकम् । न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति । न ह्यविशिष्टे प्रदीपसंनिधौ घटोऽभिव्यज्यते, न पट इत्युपपद्यते । तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः– कृतात्ययेऽनुशयवानिति । येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायाऽऽरब्धं तत् उपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते, सवितृकिरणसंपर्कादिव हिमकरकाः, हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम् । ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति । केन हेतुना ? दृष्टस्मृतिभ्यामित्याह । तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति– 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' ( छाउ. ५।१०।७ ) इति । चरणशब्देनानुशयः सूच्यत इति वर्णयिष्यति । दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति, अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृतिरपि 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' ( गौध. ११।२९) इति सानुशयानामेवावरोहं दर्शयति ।

कः पुनरनुशयो नामेति ? केचित्तावदाहुः– स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत् । यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते, भाण्डानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते, तथाऽनुशयोऽपीति । ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यम् । नायं दोषः । न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे । ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढः । बाढम् । तथाऽपि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न लभ्यते । यथा किल कश्चित्सेवकः सकलैः सेवोपकरणै राज-

(१) ब्रसू. ३।१।८–११.

कुलमुपसृप्तश्चिरप्रवासात्परिक्षीणबहूपकरणश्छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति, एवमनुशयमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति। नचैतद्युक्तमिव। न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते, कार्यविरोधित्वादित्युक्तम्। नन्वेतदप्युक्तम्— न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति। तदेतदपेशलम्— स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं न जनयति, स्वर्गच्युतस्यापि कंचित्फललेशं जनयतीति। न शब्दप्रमाणकानामीदृशी कल्पनाऽवकल्पते। स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते। तथा सेवकस्योपकरणलेशानुवृत्तिश्च दृश्यते। न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते, नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात्।

अवश्यं चैतदेवं विज्ञेयम्— न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति। यदि हि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभूवंस्तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत ततो रमणीय एवैकोऽनुशयः स्यात्, न विपरीतः। तत्रेयमनुशयविभागश्रुतिरुपरुध्येत— ‘तद्य इह रमणीयचरणाः, अथ य इह कपूयचरणाः’ (छाउ. ५।१०।७) इति। तस्मादामुष्मिकफले कर्मजात उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः, तद्वन्तोऽवरोहन्तीति। यदुक्तं यत्किंचेत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति। नैतदेवम्, अनुशयसद्भावस्यावगमितत्वात् यत्किंचिदिह कृतमामुष्मिकफलं कर्माऽऽरब्धभोगं तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते। यदप्युक्तम्— प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति, तत्र केनचित्कर्मणाऽमुष्मिंल्लोके फलमारभ्यते केनचिदस्मिन्नित्ययं विभागो न संभवतीति, तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम्।

अपि च, केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायते इति वक्तव्यम्। आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात्प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत, ततो वक्तव्यम्— यथैव तर्हि प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिरिति एवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासंभवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति। न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन्प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात्। नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्, ऐकान्तिकफलत्वविरोधात्। न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभाव्यते। स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति ‘कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते॥’ इत्येवंजातीयका। यदि च कृत्स्नमनारब्धफलं कर्मैकस्मिन्प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत। ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत। न च धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम्। न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीत्यव्यापिकाऽपीयं प्रायणस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः। स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्चेदं द्रष्टव्यम्। यथा हि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपमभिव्यनक्ति, न सूक्ष्मम्, एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति। तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः।

शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः, सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः। तस्मात्स्थितमेतदेवानुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्ति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्यु-

पात्तयोरवरोहे संकीर्तनाद्यथेतंशब्दाच्च यथागतमिति प्रतीयते । रात्र्याद्यसंकीर्तनादभ्रायुपसंख्यानाच्च विपर्ययोऽपि प्रतीयते । शंकर.

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः॥**

अथापि स्यात्– या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता– 'तद्य इह रमणीयचरणाः' इति सा खलु चरणाद्योन्यापत्तिं दर्शयति, नानुशयात् । अन्यच्चरणमन्योऽनुशयः । चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम् । अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम् । श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति– 'यथाकारी यथाचारी तथा भवति' (बृउ. ४।४।५) इति, 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि, यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' (तैउ. १।११।२) इति च । तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत् । नैष दोषः । यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते । शंकर.

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥**

स्यादेतत्– कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते ? ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति । अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम् । अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत् । नैष दोषः । कुतः ? तदपेक्षत्वात् । इष्टादि हि कर्मजातं चरणापेक्षम् । न हि सदाचारहीनः कश्चिदधिकृतः स्यात्, 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः । पुरुषार्थत्वेऽप्याचारस्य नाऽऽनर्थक्यम् । इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाऽऽचारस्तत्रैव कंचिदतिशयमारप्स्यते । कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः । तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम् । न हि कर्मणि संभवति शीलाद्योन्यापत्तिर्युक्ता । न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति । शंकर.

**सुकृतदुष्कृते एवेति तु बादरिः ॥**

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते । चरणमनुष्ठानं कर्मेत्यनर्थान्तरम् । तथा हि– अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते । यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते 'धर्मं चरत्येष महात्मा' इति । आचारोऽपि च धर्मविशेष एव । भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्माद्रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निन्दितकर्माण इति निर्णयः । शंकर.

कर्मफलदातृत्वमीश्वरस्य न धर्माधर्मजन्यस्यापूर्वस्य

**[1]फलमत उपपत्तेः ॥**

तस्यैव ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते । यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनाम्, किमेतत्कर्मणो भवत्याहोस्विदीश्वरादिति भवति विचारणा । तत्र तावत्प्रतिपाद्यते– फलम् अतः ईश्वरात् भवितुमर्हति । कुतः ? उपपत्तेः । स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधद्देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं संपादयतीत्युपपद्यते । कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्, अभावाद्भावानुत्पत्तेः । स्यादेतत्– कर्म विनश्यत्स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति, तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति । तदपि न परिशुध्यति, प्राग्भोक्तृसंबन्धात्फलत्वानुपपत्तेः । यत्कालं हि यत्सुखं दुःखं वाऽऽत्मना भुज्यते तस्यैव लोके फलत्वं प्रसिद्धम् । न ह्यसंबद्धस्याऽऽत्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः । अथोच्येत– मा भूत्कर्मानन्तरं फलोत्पादः, कर्मकार्यादपूर्वात्फलमुत्पत्स्यत इति । तदपि नोपपद्यते, अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः, तदस्तित्वे च प्रमाणाभावात् । अर्थापत्तिः प्रमाणमिति चेत् । न, ईश्वरसिद्धेरर्थापत्तिक्षयात् । शंकर.

---

(१) ब्रसू. ३।२।३८–४१.

**श्रुतत्वाच्च ॥**

न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः, किं तर्हि? श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे। तथा च श्रुतिर्भवति— 'स वा एष महानज आत्माऽन्नादो वसुदानः' (बृउ. ४।४।२४) इत्येवंजातीयका। शंकर.

**धर्मं जैमिनिरत एव ॥**

जैमिनिरत्वाचार्यो धर्मं फलस्य दातारं मन्यते। अत एव हेतोः श्रुतेरुपपत्तेश्च। श्रूयते तावदयमर्थः 'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु। तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते। अन्यथा ह्यननुष्ठातृको याग आपद्येत, तत्रास्योपदेशवैयर्थ्यं स्यात्। नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः। नैष दोषः, श्रुतिप्रामाण्यात्। श्रुतिश्चेत्प्रमाणं यथाऽयं कर्मफलसंबन्धः श्रुत उपपद्यते तथा कल्पयितव्यः। न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्कालान्तरितं फलं दातुं शक्नोति। अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामास्तीति तर्क्यते। उपपद्यते चायमर्थ उक्तेन प्रकारेण। ईश्वरस्तु फलं ददातीत्यनुपपन्नम्। अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गादनुष्ठानवैयर्थ्यापत्तेश्च। तस्माद्धर्मादेव फलमिति। शंकर.

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥**

बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते। केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं पक्षस्तुशब्देन व्यावर्त्यते। कर्मापेक्षादपूर्वापेक्षाद्वा यथा तथाऽस्तु, ईश्वरात्फलमिति सिद्धान्तः। कुतः? हेतुव्यपदेशात्। धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन— 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' (कौउ. ३।८) इति। स्मर्यते चायमर्थो भगवद्गीतासु— 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते। लभते च ततः कामान्मयैव विहितान्हि तान्॥' (भगी. ७।२१, २२) इति। सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजतीति। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते। शंकर.

आत्मज्ञानं वेदान्तजन्यं स्वतन्त्रं पुरुषार्थसाधनं न कर्मसमुच्चितम्

**'पुरुषार्थोऽतः शब्दादिति बादरायणः ॥**

अथेदानीमौपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानुप्रविशति, आहोस्वित्स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः सिद्धान्तेनैव तावदुपक्रमते— पुरुषार्थोऽत इति। अस्माद्वेदान्तविहितादात्मज्ञानात्स्वतन्त्रात्पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते। कुत एतदवगम्यते? शब्दादित्याह। तथाहि— 'तरति शोकमात्मवित्' (छाउ. ७।१।३), 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मुउ. ३।२।९), 'ब्रह्मविदाप्नोति परम्' (तैउ. २।१।१), 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छाउ. ६।१४।२) इति, 'य आत्माऽपहतपाप्मा' इत्युपक्रम्य 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' इति (छाउ. ८।७।१), 'आत्मा वा अरे द्रष्टव्यः' (बृउ. ४।५।६) इत्युपक्रम्य 'एतावदरे खल्वमृतत्वम्' (बृउ. ४।५।१५) इत्येवंजातीयका श्रुतिः केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति। शंकर.

**शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥**

अथात्र प्रत्यवतिष्ठते— शेषत्वादिति। कर्तृत्वेनाऽऽत्मनः कर्मशेषत्वात्तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद्विषयद्वारेण कर्मसंबन्ध्येवेत्यतस्तस्मिन्नवगतप्रयोजन आत्मज्ञाने

(१) ब्रसू. ३।४।१–१७.

या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्यो मन्यते, यथाऽन्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति । यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते । यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिरर्थवादः तद्वत् । कथं पुनरस्यानारभ्याधीतस्याऽऽत्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते ? कर्तृद्वारेण वाक्यात्तद्विज्ञानस्य क्रतुसंबन्ध इति चेत् । न, वाक्याद्विनियोगानुपपत्तेः । अव्यभिचारिणा हि केनचिद्द्वारेणानारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसंबन्धोऽवकल्पते । कर्ता तु व्यभिचारि द्वारम्, लौकिकवैदिककर्मसाधारण्यात् । तस्मान्न तद्द्वारेणाऽऽत्मज्ञानस्य क्रतुसंबन्धसिद्धिरिति । न, व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात् । न हि देहव्यतिरिक्तात्मज्ञानं लौकिकेषु कर्मसूपयुज्यते, सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः । वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मज्ञानमन्तरेण प्रवृत्तिर्नोपपद्यत इत्युपयुज्यते व्यतिरेकविज्ञानम् । नन्वपहतपाप्मत्वादिविशेषणादसंसार्यात्मविषयमौपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात् । न, प्रियादिसंसूचितस्य संसारिण एवाऽऽत्मनो द्रष्टव्यत्वेनोपदेशात् । अपहतपाप्मत्वादि विशेषणं तु स्तुत्यर्थं भविष्यति । ननु तत्र तत्र प्रसाधितमेतत्— अधिकमसंसारि ब्रह्म जगत्कारणं तदेव च संसारिण आत्मनः पारमार्थिकं स्वरूपमुपनिषत्सूपदिश्यत इति । सत्यं प्रसाधितम्, तस्यैव तु स्थूणानिखननवत्फलद्वारेणाऽऽक्षेपसमाधाने क्रियेते दार्ढ्याय । शंकर.

**आचारदर्शनात् ॥**

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृउ. ३।१।१), 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' (छाउ. ५।११।५) इत्येवमादीनि ब्रह्मविदामप्यन्यपरेषु वाक्येषु कर्मसंबन्धदर्शनानि भवन्ति । तथोद्दालकादीनामपि पुत्रानुशासनादिदर्शनाद्गार्हस्थ्यसंबन्धोऽवगम्यते । केवलाच्चेज्ज्ञानात्पुरुषार्थसिद्धिः स्यात्, किमर्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः ? 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् । शंकर.

**तच्छ्रुतेः ॥**

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छाउ. १।१।१०) इति च कर्मशेषत्वश्रवणाद्विद्याया न केवलायाः पुरुषार्थहेतुत्वम् । शंकर.

**समन्वारम्भणात् ॥**

'तं विद्याकर्मणी समन्वारभेते' (बृउ. ४।४।२) इति च विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनान्न स्वातन्त्र्यं विद्यायाः । शंकर.

**तद्वतो विधानात् ॥**

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' (छाउ. ८।१५।१) इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति, तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम् । नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते, नार्थविज्ञानम् । नैष दोषः । दृष्टार्थत्वाद्वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितम् । शंकर.

**नियमाच्च ॥**

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥' (ईउ. २) इति, तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' इत्येवंजातीयकान्नियमादपि कर्मशेषत्वमेव विद्याया इति । शंकर.

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥**

एवं प्राप्ते प्रतिविधत्ते— अधिकोपदेशादिति । तुशब्दात्पक्षो विपरिवर्तते । यदुक्तम्— 'शेषत्वात्पुरुषार्थवादः' इति, तन्नोपपद्यते । कस्मात् ? अधिकोपदेशात् । यदि संसार्येवाऽऽत्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात् । अधिकस्तावच्छारीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारिधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु । न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्युच्छिन-

चीति वक्ष्यति 'उपमर्दं च' इत्यत्र। तस्मात् 'पुरुषार्थोऽतः शब्दात्' इति यन्मतं भगवतो बादरायणस्य तत्तथैव तिष्ठति, न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथा हि– तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः 'यः सर्वज्ञः सर्ववित्' (मुउ. १।१।९), 'भीषाऽस्माद्वातः पवते' (तैउ. २।८।१), 'महद्भयं वज्रमुद्यतम्' (काउ. ६।२), 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृउ. ३।८।९), 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छाउ. ६।२।३) इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एवाऽऽत्मनो वेद्यतयाऽनुकर्षणम् 'आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः' (बृउ. २।४।५) 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' (बृउ. ३।४।१), 'य एषोऽक्षिणि पुरुषो दृश्यते' (छाउ. ८।७।४) इत्युपक्रम्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छाउ. ८।९।३) इति चैवमादि, तदपि 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृउ. २।४।१०), 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृउ. ३।५।१), 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छाउ. ८।१२।३) इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायामत्यन्तामेदाभिप्रायमित्यविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्, उपाधिकृतं तु शारीरत्वम्, 'तत्त्वमसि' (छाउ. ६।८।७), 'नान्यदतोऽस्ति द्रष्टृ' (बृउ. ३।८।११) इत्यादिश्रुतिभ्यः। सर्वं चैतद्विस्तरेणास्माभिः पुरस्तात्तत्र तत्र वर्णितम्।

शंकर.

**तुल्यं तु दर्शनम् ॥**

यत्तूक्तमाचारदर्शनात्कर्मशेषो विद्येति, अत्र ब्रूमः– तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः। तथा हि श्रुतिर्भवति– 'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे। एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे', 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृउ. ३।५।१) इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते– 'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार' (बृउ. ४।५।१५) इत्यादिश्रुतिभ्यः। अपि च 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयम्। संभवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनम्। न त्वत्रापि कर्माङ्गत्वमस्ति, प्रकरणाद्यभावात्।

शंकर.

**असार्वत्रिकी ॥**

यत्पुनरुक्तम्– 'तच्छ्रुतेः' इति, अत्र ब्रूमः– 'यदेव विद्यया करोति' इत्येषा श्रुतिर्न सर्वविद्याविषया, प्रकृतविद्याभिसंबन्धात्। प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छाउ. १।१।१) इत्यत्र।

शंकर.

**विभागः शतवत् ॥**

यदप्युक्तम्– 'तं विद्याकर्मणी समन्वारभेते' इत्येतत्समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति, तत्प्रत्युच्यते। विभागोऽत्र द्रष्टव्यः– विद्याऽन्यं पुरुषमन्वारभते, कर्मान्यमिति। शतवत्। यथा 'शतमाभ्यां दीयताम्' इत्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत्। न चेदं समन्वारम्भवचनं मुमुक्षुविषयम् 'इति नु कामयमानः' इति संसारिविषयत्वोपसंहारात्, 'अथाकामयमानः' (बृउ. ४।४।६) इति च मुमुक्षोः पृथगुपक्रमात्। तत्र संसारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते, विशेषाभावात्। कर्मापि विहितं प्रतिषिद्धं च, यथाप्राप्तानुवादित्वात्। एवं सत्यविभागेनापीदं समन्वारम्भवचनमवकल्पते।

शंकर.

**अध्ययनमात्रवतः ॥**

यच्चैतत् 'तद्वतो विधानात्' इति, अत उत्तरं पठति– अध्ययनेति। 'आचार्यकुलाद्वेदमधीत्य' इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः। नन्वेवं सत्यविद्यत्वादनधिकारः कर्मसु

प्रसज्येत । नैष दोषः । न वयमध्ययनप्रभवं कर्मावबोधनमधिकारकारणं वारयामः, किं तर्हि ? औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इत्येतावत्प्रतिपादयामः । यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यत एवमेतदपि द्रष्टव्यमिति । शंकर.

**नाविशेषात् ॥**

यदप्युक्तं 'नियमाच्च' इति, अत्राभिधीयते– नेति । 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति । अविशेषेण नियमविधानात् । शंकर.

**स्तुतयेऽनुमतिर्वा ॥**

'कुर्वन्नेवेह कर्माणि' इत्यत्रापरो विशेष आख्यायते । यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति संबध्यते तथाऽपि विद्यास्तुतये कर्मानुज्ञानमेतद्द्रष्टव्यम् । 'न कर्म लिप्यते नरे' ( ईउ. २ ) इति हि वक्ष्यति । एतदुक्तं भवति– यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति विद्यासामर्थ्यादिति तदेवं विद्या स्तूयते । शंकर.

**कामकारेण चैके ॥**

अपि चैके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात्फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति कामकारेणेति श्रुतिर्भवति वाजसनेयिनाम्– 'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इति । अनुभवारूढमेव च विद्याफलं न क्रियाफलवत्कालान्तरभावीत्यसकृदवोचाम । अतोऽपि न विद्यायाः कर्मशेषत्वम्, नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् । शंकर.

**उपमर्दं च ॥**

अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति– 'यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' ( बृउ. २।४।१४ ) इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत । तस्मादपि स्वातन्त्र्यं विद्यायाः । शंकर.

**ऊर्ध्वरेतःसु च शब्दे हि ॥**

ऊर्ध्वरेतःसु चाऽऽश्रमेषु विद्या श्रूयते । न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते, कर्माभावात् । न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति । स्यादेतत्– ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति । तदपि नास्ति । तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते– 'त्रयो धर्मस्कन्धाः' ( छाउ. २।२३।१ ), 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' ( छाउ. ५।१०।१ ), 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' ( मुउ. १।२।११ ) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृउ. ४।४।२२ ), 'ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ. ४) इत्येवमादिषु । प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानामपाकृतानपाकृतर्णत्रयाणां चोर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम् । तस्मादपि स्वातन्त्र्यं विद्यायाः । शंकर.

**[१]अत एव चाग्नीन्धनाद्यनपेक्षा ॥**

'पुरुषार्थोऽतः शब्दात्' इत्येतद्व्यवहितमपि संभवादत इति परामृश्यते । अत एव च विद्यायाः पुरुषार्थहेतुत्वादग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीत्याद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया । शंकर.

आश्रमकर्मणामात्मज्ञानोपायता न मोक्षोपायता

**[२]सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥**

इदमिदानीं चिन्त्यते–किं विद्याया अत्यन्तमेवानपेक्षाऽऽश्रमकर्मणाम्, उतास्ति काचिदपेक्षेति । तत्रात एवाग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्ष्यन्त एवमत्यन्तमेवानपेक्षायां प्राप्तायामिदमुच्यते– सर्वापेक्षा चेति । अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव । ननु विरुद्धमिदं वचनम्– अपेक्षते चाऽऽश्रमकर्माणि विद्या, नापेक्षते चेति । नेति ब्रूमः । उत्पन्ना हि

(१) ब्रसू. ३।४।२५.
(२) ब्रसू. ३।४।२६–२७, ३२–३५.

विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते, उत्पत्तिं प्रति त्वपेक्षते। कुतः? यज्ञादिश्रुतेः। तथा हि श्रुतिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृउ. ४।४।२२) इति यज्ञादीनां विद्यासाधनभावं दर्शयति। विविदिषासंयोगाच्चैषामुत्पत्तिसाधनभावोऽवसीयते। 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्' (छाउ. ८।५।१) इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवाद्यज्ञादीनामपि हि साधनभावः सूच्यते। 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि॥' (काउ. २।१५) इत्येवमाद्या च श्रुतिराश्रमकर्मणां विद्यासाधनभावं सूचयति। स्मृतिरपि— 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते॥' इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनम्। यथा च योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते। एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते, उत्पत्तौ चापेक्ष्यन्त इति। शंकर.

**शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥**

यदि कश्चिन्मन्येत— यज्ञादीनां विद्यासाधनभावो न न्याय्यः, विध्यभावात्। 'यज्ञेन विविदिषन्ति' इत्येवंजातीयका हि श्रुतिरनुवादस्वरूपा विद्याभिष्टवपरा, न यज्ञादिविधिपरा। इत्थं महाभागा विद्या यद्यज्ञादिभिरेतामवाप्तुमिच्छन्तीति। तथाऽपि तु शमदमाद्युपेतः स्याद्विद्यार्थी, 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' (बृउ. ४।४।२३) इति विद्यासाधनत्वेन शमदमादीनां विधानाद्विहितानां चावश्यानुष्ठेयत्वात्। नन्वत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते, न विधिः। नेति ब्रूमः। तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः। पश्येदिति च माध्यंदिना विस्पष्टमेव विधिमधीयते। तस्माद्यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि। यज्ञादीन्यपि त्वपेक्षितव्यानीति यज्ञादिश्रुतेरेव। ननूक्तं यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति। सत्यमुक्तम्, तथापि त्वपूर्वत्वात्संयोगस्य विधिः परिकल्प्यते। न ह्ययं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तः येनानूद्येत। 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि' इत्येवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्विधिं परिकल्प्य 'पौष्णं पेषणं विकृतौ प्रतीयेत' (जैसू. ३।३।३४) इत्यादिविचारः प्रथमे तन्त्रे प्रवर्तितः। तथा चोक्तम् — 'विधिर्वा धारणवत्' (ब्रसू. ३।४।२०) इति। स्मृतिष्वपि भगवद्गीताद्यास्वनभिसंधाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम्। तस्माद्यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्येवाऽऽश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि। तत्राप्येवंविदिति विद्यासंयोगात्प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम्। शंकर.

**विहितत्वाच्चाऽऽश्रमकर्मापि॥**

'सर्वापेक्षा च' (ब्रसू. ३।४।२६) इत्यत्राऽऽश्रमकर्मणां विद्यासाधनत्वमवधारितम्। इदानीं तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयान्युताहो नेति चिन्त्यते। तत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृउ. ४।४।२२) इत्यादिनाऽऽश्रमकर्मणां विद्यासाधनत्वेन विहितत्वाद्विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि; अथ तस्याप्यनुष्ठेयानि, न तर्ह्येषां विद्यासाधनत्वम्, नित्यानित्यसंयोगविरोधादित्यस्यां प्राप्तौ पठति— आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि, 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात्। न हि वचनस्यातिभारो नाम कश्चिदस्ति। शंकर.

**सहकारित्वेन च॥**

विद्यासहकारीणि चैतानि स्युः, विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृउ. ४।४।२२) इत्यादिना। तदुक्तम्— 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्रसू. ३।४।२६) इति। नचेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवद्विद्याफल-

विषयं मन्तव्यम् , अविधिलक्षणत्वाद्विद्यायाः , असाध्यत्वाच्च विद्याफलस्य । विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलसिषाधयिषया सहकारिसाधनान्तरमपेक्षते, नैवं विद्या । तथा चोक्तम्– 'अत एव चाग्नीन्धनाद्यनपेक्षा ' इति । तस्मादुत्पत्तिसाधनत्व एवैषां सहकारित्ववाचोयुक्तिः । न चात्र नित्यानित्यसंयोगविरोध आशङ्क्यः , कर्माभेदेऽपि संयोगभेदात् । नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितः , न तस्य विद्याफलत्वम् । अनित्यस्त्वपरः संयोगः ' तमेतं वेदानुवचनेन ' इत्यादिवाक्यकल्पितः , तस्य विद्याफलत्वम् । यथैकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थत्वमनित्येन संयोगेन पुरुषार्थत्वं तद्वत् । शंकर.

**सर्वथाऽपि त एवोभयलिङ्गात् ॥**

सर्वथाऽप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः । त एवेत्यवधारयन्नाचार्यः किं निवर्तयति ? कर्मभेदशङ्कामिति ब्रूमः । यथा कुण्डपायिनामयने ' मासमग्निहोत्रं जुहुति ' इत्यत्र नित्यादग्निहोत्रात्कर्मान्तरमुपदिश्यते, नैवमिह कर्मभेदोऽस्तीत्यर्थः । कुतः ? उभयलिङ्गात् । श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ' ( बृउ. ४।४।२२ ) इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते, न तु जुहुतीत्यादिवदपूर्वमेषां रूपमुत्पादयतीति । स्मृतिलिङ्गमपि ' अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।' ( भगी. ६।१ ) इति विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति । ' यस्यैतेऽष्टाचत्वारिंशत्संस्काराः ' ( गौध. ८।२२ ) इत्याद्या च संस्कारत्वप्रसिद्धिर्वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति । तस्मात्साध्विदमभेदावधारणम् । शंकर.

**अनभिभवं च दर्शयति ॥**

सहकारित्वस्यैवैतदुपोद्बलकं लिङ्गदर्शनमनभिभवं च दर्शयति श्रुतिर्ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः– ' एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ' इत्यादिना । तस्माद्यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति निश्चितम् । शंकर.

## न्यायसूत्राणि

विहितकर्मणः निषिद्धकर्मणश्च फलमामुष्मिकं कर्मजन्यधर्माधर्माभ्यामात्माश्रिताभ्याम्

**[1]सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥**

प्रेत्यभावानन्तरं फलम् , तस्मिन्– सद्य इति । पचति, दोग्धीति सद्यः फलमोदनपयसी; कर्षति, वपतीति कालान्तरे फलं सस्याधिगम इति । अस्ति चेयं क्रिया ' अग्निहोत्रं जुहुयात्स्वर्गकामः ' इति । एतस्याः फले संशयः । न्याभा.

**न सद्यः कालान्तरोपभोग्यत्वात् ॥**

स्वर्गः फलं श्रूयते, तच्च भिन्नेऽस्मिन्देहभेदादुत्पद्यते इति न सद्यः ग्रामादिकामानामारम्भफलमिति । न्याभा.

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥**

ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति, न खलु वै विनष्टात्कारणात्किंचिदुत्पद्यते इति । न्याभा.

**प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥**

यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते, तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति, स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण संनिविशमानः पर्णादि फलं निर्वर्तयति, एवं परिषेकादि कर्म चार्थवत् । न च विनष्टात्फलनिष्पत्तिः । तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते, स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयतीति । उक्तं चैतत् ' § पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ' (न्यासू. ३।२।६१) इति । न्याभा.

§ ' पूर्वशरीरे या प्रवृत्तिः वाग्बुद्धिशरीरारम्भलक्षणा तत् पूर्वकृतं कर्मोक्तम् , तस्य फलं तज्जनितौ धर्माधर्मौ,

(१) न्यासू. ४।१।४४–५४.

**नासन्न सन्न सदसन्सदसतोर्वैधर्म्यात् ॥**

तदिदं प्राङ्निष्पत्तेर्निष्पद्यमानम्—नासदिति । प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नासत्, उपादाननियमात् । कस्यचिदुत्पत्तये किंचिदुपादेयम्, न सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यते इति । न सत्, प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति । सदसत् न, सदसतोर्वैधर्म्यात् । सदित्यर्थाभ्यनुज्ञा, असदिति अर्थप्रतिषेधः । एतयोर्व्याघातो वैधर्म्यम् । व्याघातादव्यतिरेकानुपपत्तिरिति । न्याभा.

**§ प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धोत्पादव्ययदर्शनात् ॥**

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा । कस्मात्? उत्पादव्ययदर्शनात् । न्याभा.

**बुद्धिसिद्धं तु तदसत् ॥**

यत्पुनरुक्तं प्रागुत्पत्तेः कार्यं नासदुपादाननियमादिति—बुद्धिसिद्धं तु तदसत् । इदमस्योत्पत्तये समर्थम्, न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं बुद्ध्या सिद्धम्, उत्पत्तिनियमदर्शनात् । तस्मादुपादाननियमस्योपपत्तिः । सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति । न्याभा.

**आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥**

मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयम्; कर्म चेह शरीरे, फलं चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति । न्याभा.

**प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥**

प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया, तदाश्रयमेव कर्म धर्मसंज्ञितम्, धर्मस्याऽऽत्मगुणत्वात् । तस्मादाश्रयव्यतिरेकानुपपत्तिरिति । न्याभा.

**न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥**

पुत्रादि फलं निर्दिश्यते, न प्रीतिः 'ग्रामकामो यजेत, पुत्रकामो यजेत' इति । तत्र यदुक्तं प्रीतिः फलमित्येतदयुक्तमिति । न्याभा.

**तत्संबन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः ॥**

पुत्रादिसंबन्धात् फलं प्रीतिलक्षणमुत्पद्यते इति पुत्रादिषु फलवदुपचारः । यथाऽन्ने प्राणशब्दः 'अन्नं वै प्राणाः' इति । न्याभा.

---

तत्फलस्यानुबन्धः आत्मसमवेतस्यावस्थानम्, तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्य इति' इति सूत्रस्यास्य भाष्यम् ।

§ अत्रेदमवधेयम्— अस्मदुपलब्धेषु बहुषु मूलमात्रसव्याख्यमुद्रितसूत्रपुस्तकेषु केषुचिदद्धान्तो भागः सूत्रांशत्वेन मुद्रितः, अन्येषु 'उत्पादव्ययदर्शनात्' इत्येतावन्मात्रं सूत्रं मुद्रितम्, अद्धान्तो भागः ततः परं 'कस्मात्' इति प्रश्नश्च भाष्यत्वेन मुद्रितः । एकस्मिन् पुस्तके 'कस्मात्' इति शब्दोऽपि सूत्रे निवेशितः । अत्रेयमस्माकं प्रतिपत्तिः— यत्रानेकाः कोटयोऽनेकनिश्चयविषयत्वेन वा संशयविषयत्वेन वा पूर्वपक्षत्वेन पूर्वं प्रकृताः, तत्र तदन्तर्गतामेकां तदतिरिक्तां वा कोटिं सिद्धान्तत्वेनाप्रतिज्ञाय तत्साधकं साकाङ्क्षं हेतुमात्रप्रदर्शनं सूत्रेऽपि न युज्यते । अतोऽत्र पूर्वपक्षनिषिद्धसत्त्वादिकोटिषु असत्त्वकोटेः सिद्धान्तत्वेन प्रतिज्ञानमावश्यकम् । विशेषतः प्राचीनमहापण्डितविश्वनाथपञ्चाननव्याख्यानमन्यथासिद्धिशून्यं प्रमाणान्तराविरुद्धं च सत् 'अद्धान्तो भागः सूत्रावयव एव' इत्यत्र प्रमाणमुपलभ्यते, न तथा सूत्रानवयवत्वे प्रमाणोपलब्धिः । सूत्रानवयवत्ववादिनां यदि प्राचीनग्रन्थेषु भाष्यत्वेन तल्लेखनं प्रमाणमभिमतं स्यात् तदप्यन्यथासिद्धमुक्तप्रमाणविरुद्धं च सत् न प्रमाणभावं भजते । अन्यथासिद्धिश्चेत्थम्— व्याख्यानानपेक्षो व्याख्येयग्रन्थः केवलमनूद्यते वक्तव्यार्थान्तरसंगत्यर्थमिति प्राचीनव्याख्यातॄणां रीतिः । तामनुसृत्य 'कस्मात्' इत्याकाङ्क्षोत्थापनेन हेतुमवतारयितुं भाष्येऽद्धान्तसूत्रभागस्य यथाक्षरमनुवाद उपपद्यते । अव्युत्पन्नैर्लेखकैस्तु पौनरुक्त्यं दोषं शङ्कित्वा सूत्रात् सोंऽशो निष्कासित इति । अत एव 'कस्मात्' इति न सूत्रावयव इति निर्णीयते, सूत्रे कुत्राप्येवमाकाङ्क्षोत्थापनस्यादर्शनाच्च । तमिमं विचारमाश्रित्यास्माभिरद्धान्तो भागः सूत्रे भाष्ये च स्वीकृतः । सूत्रावयवत्वं स्वीकृत्यापि 'त्यद्धा उत्पाद' इति विच्छिद्यैव मुद्रणं सर्वत्रोपलभ्यते । सूत्रपाठेषु सर्वत्र संहितानित्यत्वदर्शनात्, तत्र संधिकार्यमस्माभिः प्रकल्पितमिति ।

## योगसूत्राणि

चतुर्विधं कर्म कृष्णं शुक्लं शुक्लकृष्णमशुक्लाकृष्णं च, अशुक्लाकृष्णेतरत् त्रिविधं विपाकानुगुण-वासनाजनकम्

**[1]कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥**

चतुष्पदी खल्वियं कर्मजातिः । कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाकृष्णा चेति । तत्र कृष्णा दुरात्मनाम् । शुक्लकृष्णा बहिःसाधनसाध्या । तत्र परपीडानुग्रहद्वारेणैव कर्माशयप्रचयः । शुक्ला तपःस्वाध्यायध्यानवताम् । सा हि केवले मनस्यायत्तत्वात् बहिःसाधनानधीना न परान्पीडयित्वा भवति । अशुक्लाकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति । तत्राशुक्लं योगिन एव, फलसंन्यासात् ; अकृष्णं च, अनुपादानात् । इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति । व्याभा.

**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥**

तत इति त्रिविधात्कर्मणः । तद्विपाकानुगुणानामेवेति । यज्जातीयस्य कर्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाभिव्यक्तिः । न हि दैवं कर्म विपच्यमानं नारकतिर्यङ्मनुष्यवासनाभिव्यक्तिनिमित्तं संभवति, किंतु दैवानुगुणा एवास्य वासना व्यज्यन्ते । नारकतिर्यङ्मनुष्येषु चैवं समानश्चर्चः । व्याभा.

**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥**

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः । स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एवोदियात् द्रागित्येवं पूर्वानुभूतवृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत । कस्मात् ? यतो व्यवहितानामप्यासां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्यमेव । कुतश्च ? स्मृतिसंस्कारयोरेकरूपत्वात् । यथाऽनुभवास्तथा संस्काराः । ते च कर्मवासनानुरूपाः । यथा च वासनास्तथा स्मृतिरिति । जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः, स्मृतेश्च पुनः संस्कारा इत्येवमेते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशाद्व्यज्यन्ते । अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेव सिद्धमिति । वासनाः संस्कारा आशया इत्यर्थः । व्याभा.

(१) योसू. ४।७–९.

## सांख्यकारिका

धर्माधर्मफलम् ऊर्ध्वाधोगती, ज्ञानात् मोक्षः

**[1]धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण । ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥**

अवगतानि निमित्तनैमित्तिकानि, कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह– धर्मेणेति । धर्मेण गमनमूर्ध्वं द्युप्रभृतिषु लोकेषु, गमनमधस्ताद्भवत्यधर्मेण भूतलादिषु । ज्ञानेन चापवर्गः । तावदेव प्रकृतिरारभते न यावद्विवेकख्यातिं करोति, अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते । यदाहुः– 'विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम् ।' इति । विपर्ययात् अतत्त्वज्ञानात् इष्यते बन्धः । स च त्रिविधः– प्राकृतिको वैकृतिको दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानात् ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धो यः पुराणे प्रकृतिलयान् प्रत्युच्यते– 'पूर्णं $शतसहस्रं

$ अस्याः संख्यायाः, तथोत्तरत्र 'शतम्, सहस्रम्, दश सहस्राणि' इति संख्यानां च संख्येयानामनुक्तावपि मन्वन्तराणि संख्येयानीति बोध्यम्, इन्द्रियलयलयकालवचने मन्वन्तराणां संख्येयानामुक्तत्वात्, अभ्यर्हितत्वतारतम्येन लयकालतारतम्यस्य प्रतीयमानत्वाच्च । तत्र मूलप्रकृतिमहदहङ्कारतन्मात्रेषु पूर्वपूर्वस्योत्तरोत्तरप्रकृतित्वेनोत्तरोत्तरादभ्यर्हितत्वं स्पष्टमेव । तन्मात्राणामिन्द्रियाणां च परस्परप्रकृतिविकृतिभावाभावेऽपि अहङ्कारप्रकृतिकत्वे समानेऽपि च तन्मात्राणां स्थूलभूतप्रकृतित्वात् इन्द्रियाणां च केवलविकृतिरूपत्वात् इन्द्रियेभ्यस्तन्मात्राणामभ्यर्हितत्वं बोध्यम् । उत्तरत्र भूतशब्दस्तन्मात्रपरः बुद्धिशब्दश्च महत्तत्त्वपरः । अन्तिमवचने

(१) सांका. ४४.

तु तिष्ठन्त्यव्यक्तचिन्तकाः । ' इति । वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषबुद्ध्योपासते । तान्प्रतीदमुच्यते— ' दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥ बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः । ते खल्वमी विदेहा येषां वैकृतिको बन्धः ॥ ' इति । इष्टापूर्तेन $दाक्षिणकः, पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति । सांको.

## सांख्यसूत्राणि

धर्माधर्माधिकरणम् अन्तःकरणम्

**(१)अन्तःकरणधर्मत्वं धर्मादीनाम् ॥**

ननु धर्मादिकं चेत्स्वीकृतं तर्हि पुरुषाणां धर्मादिमत्त्वेन परिणामाद्यापत्तिरित्याशङ्कां परिहरति— अन्तःकरणधर्मत्वमिति । आदिशब्देन वैशेषिकशास्त्रोक्ताः सर्व आत्मविशेषगुणा गृह्यन्ते । न चैवं प्रलयेऽन्तःकरणाभावाद्धर्मादिकं क्व तिष्ठत्विति वाच्यम्, आकाशवदन्तःकरणस्यात्यन्तविनाशाभावात् । अन्तःकरणं हि कार्यकारणोभयरूपमिति प्रागेव व्याख्यातम् । अतः कारणावस्थे प्रकृत्यंशविशेषेऽन्तःकरणे धर्माधर्मसंस्कारादिकं तिष्ठतीति । भिक्षुभा.

विशिष्टदेहवतो विहितकर्माधिकारः

**न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥**

ननु वृक्षादिष्वप्येवं चेतनत्वेन धर्माधर्मोत्पत्तिप्रसङ्गस्तत्राऽऽह— न देह मात्रत इति । न देहमात्रेण धर्माधर्मोत्पत्तियोग्यत्वं जीवस्य । कुतः ? वैशिष्ट्यश्रुतेः । ब्राह्मणादिदेहविशिष्टत्वेनैवाधिकारश्रवणादित्यर्थः । भिक्षुभा.

**त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥**

देहभेदेनैव कर्माधिकारं दर्शयन् देहत्रैविध्यमाह— त्रिधेति । त्रयाणाम् उत्तमाधममध्यमानां सर्वप्राणिनां त्रिप्रकारो देहविभागः कर्मदेहभोगदेहोभयदेहा इतीत्यर्थः । तत्र कर्मदेहः परमर्षीणाम्, भोगदेह इन्द्रादीनाम्, उभयदेहश्च राजर्षीणामिति । अत्र प्राधान्येन त्रिधा विभागः, अन्यथा सर्वस्यैव भोगदेहत्वापत्तेः । भिक्षुभा.

**न किंचिदप्यनुशयिनः ॥**

चतुर्थमपि शरीरमाह— नेति । ' विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः । ' इति वाक्यादनुशयो वैराग्यम् । विरक्तानां शरीरमेतत्त्रयविलक्षणमित्यर्थः । यथा दत्तात्रेयजडभरतादीनामिति । भिक्षुभा.

## गौतमः

स्वधर्मनिष्ठानामधार्मिकाणां च मरणोत्तरं विभिन्ना गतिः

**(१)वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते ॥**

( १ ) ततः शेषेण इति तस्यैव कर्मणः शेषेणेति भर्तृयज्ञः । तस्मादन्येन शेषेण कर्मणेति भट्टपादाः । यदाहुः— ' गौतमीयेऽपि तच्छेषस्तस्माच्चित्ता( ? त्रा )द्यपेक्षया । ' इति । मेधस इति सकारान्तं वीर्यवाचि । ब्रक. १५

---

विदेहशब्दो विविधदेहपर इति केचित्, विगतदेहपर इत्यपरे । प्रकृत्यादिलीनानां देहानुपपत्तेर्द्वितीयमेव व्याख्यानं साध्विति प्रतीमः ।

$ धूमादिमार्गघटकदक्षिणायनसंबन्धात् दाक्षिणक इत्यर्थः ।

(१) **सांसू.** ५।२५, १२३–१२५.

(१) **गौध.** ११।३१ ; **ब्रक.** १४ वर्णा आश्रमाश्च स्वकर्म (वर्णाश्रमाश्च स्वस्वधर्म) (देश०) (वित्त०); **ममा.** ; **गौमि.** ११।२९ वर्णा आश्रमाश्च स्वकर्म (वर्णाश्रमाः स्वस्वधर्म) ; **हर.** १८ वृत्तवित्त (वित्तवृत्त) ; **निप्र.** १।१२ (वर्णाश्रमाः स्वधर्मनिष्ठाः प्रत्येककर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपासु श्रुतिवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते ॥ ) ; **पप्र.** ६१ वर्णा आश्रमा (वर्णाश्चाऽऽश्रमा) स्वकर्म ( स्वधर्म ).

(२) वर्णाः ब्राह्मणादयः अनुपनीताः, आश्रमाः ब्रह्मचार्यादयः स्वकर्मनिष्ठाः स्वकर्मानुष्ठानपराः प्रेत्य परलोके कर्मफलमनुभूय उपभुज्य तत्फलोपभोगस्यावशेषेणेह विशिष्टदेशादिसंबन्धं जन्म प्रतिपद्यन्ते । विशिष्टशब्दः प्रत्येकमभिसंबध्यते । विशिष्टदेशः आर्यावर्तादिः । विशिष्टजातिः ब्राह्मणादिः । विशिष्टं कुलम् अध्ययनादिसंपन्नम् । विशिष्टं रूपं प्रियदर्शनत्वम् । विशिष्टमायुः समग्रशतवर्षादि । विशिष्टं श्रुतं वेदार्थविज्ञानसहितम् । विशिष्टं वृत्तं विशिष्टं चारित्रम् । विशिष्टं वित्तं गवाश्वादिलक्षणम् । विशिष्टं सुखम् अभिलषितपदार्थस्याविघ्नेनानुभवसिद्धिः । मेधःशब्देनाऽऽरोग्यमुच्यते । विशिष्टारोग्यम् अभिलषितभक्षणेऽप्यरोगोत्पत्तिः । एवं च ब्रुवता नित्यकर्मणां च कर्ता तत्फलस्य चोपभोक्ता शरीरव्यतिरिक्त आत्मा प्रतिपादितो भवति । तथा च श्रुतिः— 'स एष महानज आत्मा योऽयं विज्ञानमयः कर्ता भोक्ता स उ क्षेत्रज्ञोऽमृतमयः प्राणे प्रतिष्ठितः' इति । तथा च मनुः— 'यो ह्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥' (मस्मृ. १२।१२) इत्यादि । तस्य च नित्यस्य सतः कर्मक्षयात्तदारब्धस्य शरीरस्य पतने तत्कृतं कर्मफलं स्वर्गादि तत्कर्मणैवाऽऽरब्धेन तत्फलोपभोगयोग्येन शरीरेणाहंकारेन्द्रियशक्तिमनःप्राणसहितेनानुभूयौषधादिद्वारेण अन्नमयो भूत्वा रेतोरूपेण परिणम्य तत्स्थेन वायुना पूर्वं मातुरुदरं प्रविष्टेनाऽऽकृष्टः सन् तच्छोणितसहितः (भूत्वा) पूर्वानुभुक्तशिष्टकर्मानुगृहीतस्य शरीरस्योपादानं जन्मेत्याचक्षते ।

एवं व्यवस्थिते सूत्रार्थे चोद्यते— आश्रमग्रहणमनर्थकम्, वर्णानामेवाऽऽश्रमविधानात् आश्रमत्वेऽपि वर्णत्वानपगमाच्च । आश्रमग्रहणे कर्तव्येऽपि विसमासचकारावनर्थकौ, तद्वाच्यस्याभावात् । स्वग्रहणं चानर्थकम्, अनुष्ठानादेव स्वत्वसिद्धेः । कर्मग्रहणमप्यनर्थकम्, कर्मफलमनुभूयेत्यत्र कर्मग्रहणेनैवार्थसिद्धत्वात् । निष्ठाग्रहणमप्यनर्थकम्, बुद्धिपूर्वत्वेन विना तत्करणासंभवात् । प्रेत्येत्यपि न कर्तव्यम्, 'जन्म प्रतिपद्यन्ते' इत्यनेनैवार्थसिद्धत्वात् । फलमनुभूयेति वक्तव्ये कर्मग्रहणमतिरिच्यते, फलस्य कर्मसाध्यत्वात् । तत इत्येतदप्यनर्थकम्, अधिकारादेव कर्मणः परामर्शसिद्धेः । शेषानुपपत्तिश्च, कृत्स्नस्य कर्मणः फलोपभोगेनोपक्षीणत्वात् । न हि फलदानाभिमुखीभूतस्य कर्मण एकदेशेनावस्थानमुपपद्यते । न हि क्षीराद्येकदेशेन दध्यादिकार्यारम्भणमिति । न च घृतघटादिवद्वासनाशेषः शेषशब्दवाच्यः, अमूर्तत्वात्कर्मणो वासनाशेषानुपपत्तेः । न चामुत्रानुष्ठितं कर्मेह शेषशब्देनोच्यते, तत्राधिकाराभावात्, उपयुक्तेतरार्थस्वासंभवाच्च । न हि फलोपभोगविच्छेदस्यैव शेषत्वमध्यवसितुं युक्तम्, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । कर्मणो हि फलं श्रुतम्, न फलविच्छेदस्य । न च अक्षीणे कर्मण्युपभोगविच्छेदः संभवति, तस्य कर्माश्रितत्वात् । यथा प्रदीपस्तैलाश्रितः तैलक्षयादेव क्षीयते । अपि च, तस्योपहन्तारः शलभादयो विद्यन्ते, न तु कर्मफलस्य । तस्मान्न फलविच्छेदस्य शेषशब्दवाच्यता । न च कर्मफलस्यैव विभागं कर्तुं शक्नोति— 'अनेनामुत्र सुखमनुभोक्ष्ये, अनेन विशिष्टदेशादिसंबन्धं लप्स्ये' इति, निष्पन्नत्वात् । अनिष्पन्नस्य हि विभागः श्रूयते— 'इदं व्रीहीणां क्षेत्रम्, इदं यवानाम्' इति, न तु निष्पन्ना व्रीहयो यवाः क्रियन्त इति । यदि च स्वकर्मनिष्ठा अप्यमुत्र फलोपभोगशेषेणेह जन्म प्रतिपद्यन्ते, एवं मोक्षाभावप्रसङ्गे श्रुतेर्विरोधो भवति 'ब्रह्मविदाप्नोति परम्', 'तमेव विदित्वा अति मृत्युमेति' इत्यादिकायाः । यदि कर्मशेषेण विशिष्टदेशादिप्राप्तिलक्षणं जन्म भवति ततो जगद्वैचित्र्यानुपपत्तिप्रसङ्गः, दृश्यते हि तत् इति । प्राप्तस्य च कर्मणः फलाभ्युपगमे पुरुषकारोऽपि निष्फल एवेति । तस्माच्छेषशब्दवाच्याभावात् सूत्रेण समस्तेनापि प्रक्रान्तस्यार्थस्यानुपपद्यमानत्वात् असमञ्जसमिदं सूत्रमिति ।

तत्र समाधिः— उभयग्रहणं तावत्कर्तव्यम्, वर्णानामाश्रमाणां च धर्मभेदात् । प्रागुपनयनाद्वर्णाः, ऊर्ध्वमाश्रमा इति । अस्ति चानुपनीतानामपि केश्चिद्वर्णधर्मैरधिकार इति । असमासो द्वन्द्वपरिग्रहार्थः, मा भूत्

समानाधिकरणाशङ्केति । द्वन्द्वपक्षे तूभयपदप्रधानत्वादुभयोरुपादानं सिद्धं भवति इति । सृष्टयन्तरजोपसंग्रहार्थश्चशब्दः, तेषामपि स्वकर्मानुष्ठानादुत्कर्षो लभ्यत इति । यथाऽऽह मनुः– 'ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः । स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥' (मस्मृ. ११।७९) इति । स्वग्रहणमपि प्राथमिककल्पोपसंग्रहार्थम् । आपद्विहितस्य प्रायश्चित्तविधानादेवैतत्सिद्धमिति चेन्न वर्णान्तरकर्मानुष्ठान एव प्रायश्चित्तविधानम्, न स्वकर्मण एव विगुणस्येति । तथा चोक्तं नारदवाक्यम्– 'आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या भृते जने । उत्सृजेत् क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः ॥' (नास. १।५५) इत्यादि । तस्माद्विगुणस्य कर्मणः फलप्रतिषेधार्थं स्वग्रहणम् । एवं च विगुणं यत्कर्म न तत्फलसाधनम्, प्रायश्चित्तविधानाभावात् नापि दोषसाधनं चेति द्रष्टव्यम् । निष्ठाग्रहणं सातत्यार्थम् । यो ह्या शरीरनिपातनात् कर्म करोति स एवानेन फलेन संबध्यत इति । प्रेत्यग्रहणमवश्यंभावि फलमिति ज्ञापनार्थम् । यथा दृष्टफलैरिह सिद्धिस्तथा अवश्यं तत्राप्यदृष्टफलैरिति, न तु कृतं कर्म निष्फलं भवतीति । कर्मग्रहणं तु केवलं कर्मकृत एवानेन फलेन संबन्धः, न ज्ञानकर्मसमुच्चयकारिण इति । असौ मुक्त एव भवतीति । अनेनैव मोक्षाभावप्रसङ्गचोद्यमपि परिहृतं द्रष्टव्यम् । तत इत्येतदपि कर्मनानात्वप्रतिपादनार्थम् । तस्य तस्य कर्मणः शेषेण अतिरेकेण । अतश्च कर्मणां तारतम्यात् फलवैचित्र्ये सति जगद्वैचित्र्यमुपपद्यत इति । तारतम्यं च कर्मणां देशकालशौचद्रव्यश्रद्धापात्राभ्यासविशेषादिति । शेषशब्दश्च कर्मसमुदायापेक्षया द्रष्टव्यः । कथम्? यत्कर्म स्वर्गफलं तत्रैव फलं ददाति, यत्त्वैहिकफलं तेन विशिष्टदेशादिसंबन्धं जन्म भवति, स च तस्य समुदायस्य शेष इति । प्रधानकर्मणोऽग्निहोत्रादेरङ्गभूतं यत्कर्म तच्छेषशब्देनोच्यते । यथा– 'गोदोहनेन पशुकामस्य प्रणयेत्', 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादि । तत्र प्रधानकर्मफलममुत्रोपभुज्यते, अङ्गफलमिहेति । वृक्षवद्वैतद्द्रष्टव्यम् । वृक्षो हि बहुभिर्मूलैर्जायते । स यदा छिन्नप्रधानभूयिष्ठमूलो भवति तदाऽल्पनिःसारमूलत्वात् भारमसहमानः पतति, एवं कर्मण्यपि प्रधानरूपे उपभोगादुपक्षीणे शिष्टरूपं कर्तारं तत्र स्थापयितुमशक्नुवद्विशिष्टदेशादिसंबन्धं फलं ददातीति । घृतघटवद्वा द्रष्टव्यम् । यथा घृतघटे उपयुक्तेऽपि स्नेहवासनाशेषादग्निना संयुक्तो ज्वलति, एवं कर्मकृदपि वासनाशेषादेव विशिष्टदेशाद्यनुभविष्यतीति । सावयवत्वाच्च कर्मणो वासनोपपद्यत एवेति । सावयवत्वमपि कार्यत्वादिति । यत्तूक्तं पुरुषकारोऽनर्थक इति तत्रोच्यते– पुरुषकारयुक्तस्यैव फलसंबन्धः, तद्विहीनस्यान्नादिसंबन्धोऽपि नास्तीति । तस्मात्फलदानकारणं पूर्वशिष्टम्, संबन्धकारणं पुरुषकारः इति नानर्थकः पुरुषकारः । इति सर्वं सूत्रमुपपद्यत एवेति । मभा.

(३) वर्णाः ब्राह्मणादयः । आश्रमाः ब्रह्मचर्यादयः । ते स्वधर्मनिष्ठा वर्णप्रयुक्तानाश्रमप्रयुक्तानुभयप्रयुक्तांश्च धर्माननुष्ठितवन्तः । प्रेत्य मरणेन लोकान्तरं गत्वा तस्य तस्य कर्मणः फलं स्वर्गादिकमनुभूय ततस्तदनन्तरं शेषेण भुक्तावशिष्टेन कर्मणा विशिष्टदेशादिकान् भुक्त्वा(?) जन्म प्रतिपद्यन्ते । तत्र विशिष्टशब्दो देशादिभिः सर्वैः संबध्यते । विशिष्टो देश आर्यावर्तादिः । विशिष्टजातिः ब्राह्मणजातिः । विशिष्टकुलम् अध्ययनादिसंपन्नम् । विशिष्टरूपं कान्तिमत् । विशिष्टायुः सषोडशं वर्षशतम्, 'सहषोडशं वर्षशतमजीवत्' इति दर्शनात् । रोगरहितत्वमप्यायुषो विशेषः । विशिष्टश्रुतं 'ब्राह्मणश्च बहुश्रुतः' (गौध. ८।१) इत्यत्र व्याख्यातम् । विशिष्टवृत्तमनुपाधि चारित्रम् । विशिष्टवित्तं धर्मार्जितं धर्मे प्रयुज्यमानं च । सुखं निरपायस्थानाधिष्ठानेनानिषिद्धसुखसेवनम् । विशिष्टमेधा ग्रन्थार्थयोर्ग्रहणशक्तिरिति । मेधाशब्दे सकारान्तत्वमार्षम्, सुमेधसो दुर्मेधस इत्यादिष्वेव दर्शनात् । कर्माणि भुज्यमानानि पुण्यान्यपुण्यानि च सशेषाण्येव भुज्यन्ते । ऐहिकस्य शरीरग्रहणादेरपि पुण्यापुण्यनिबन्धनत्वात् । ‡ गौमि.

‡ पप्र. गौमिगतम् ।

( ४ ) ततः शेषेणेत्यत्र कस्येत्यपेक्षायां 'कर्मफलशेषेण' ( आध. २।२।३ ) इत्यापस्तम्बवचनाद्व्यवस्था। अत एव– 'नैव ह्यन्यफलं कर्म साधयेन्नः फलान्तरम्। ( इति ? ) गोतमीयेऽपि तच्छेषस्तस्माच्चित्ता(?त्रा)द्यपेक्षया ॥' इति वदतां भट्टानां 'तस्मादन्येन शेषेण' इति व्याख्यानमपेशलमिव। तथा तत्तं इत्यत्रापि श्लिष्टे (?शेषे) षष्ठ्येव विवक्षिता। ततश्च कर्मशेषे विनष्टे फलेन धर्मेण परिशिष्टो धर्मस्तदेव धर्मस्वरूपं वा जनिता कियत्फलं शेषो विवक्षाविशेषात्(?)। मेधो वीर्यम्। तेनायमर्थः– वर्णा आश्रमाश्च स्वकीयादृष्टहेतुकर्मवशात् पारलौकिकमिष्टमनुभूय देशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधोवैशिष्ट्यमादाय जायन्ते। कुर. १९

( ५ ) अत्र तच्छेषेणेति तस्यैव नित्याचारकर्मणः शेषेणेति भर्तृयज्ञः। तेन दुरितक्षयादिफलान्तरं जन्मान्तरे विशिष्टजन्मलाभ इति तस्य मतम्। भट्टाचार्यास्तु प्रथमपादे 'तस्मादन्येन कर्मणा' इति, 'गौतमीये तु तच्छेषस्तस्माच्च तद( ? चित्राद्य )पेक्षया' इत्याहुः। तेन नित्यकर्मणा पापक्षये प्रतिबन्धविगमात् कर्मान्तरेण विशिष्टजातिलाभ इत्याशयः। निप्र. १।१२–१३

[१]विष्वञ्चो विपरीता नश्यन्ति ॥

( १ ) विष्वञ्चः सर्वतो गामिनः। यथेष्टचेष्टा इति यावत्। विपरीताः नरकादौ पापफलमनुभूय नश्यन्ति। विरुद्धदेशादौ जन्म प्रतिपद्य पापरता भवन्ति। ब्रक. १५

( २ ) ये पुनः न स्वयं कर्म कुर्वन्ति, राज्ञा च न स्थाप्यन्ते, ते विष्वञ्चः तिर्यग्गतयो नश्यन्ति, विशिष्टदेशादिसंबन्धाभावात्। विपरीताः स्वकर्मनिष्ठितराः। एवं च ब्रुवता ये स्वकर्मनिष्ठास्तेषामुत्तमगतित्वम्, ये राज्ञा स्वधर्मे स्थाप्यन्ते तेषां मध्यमगतित्वम्, ये स्वकर्मनिष्ठा न भवन्ति, न राज्ञा च स्थाप्यन्ते तेषामधमगतित्वं च दर्शितं भवति। तथा चोक्तं पुराणे– 'शुभैर्भवति देवत्वं व्यामिश्रैर्जन्म मानुषम्। अशुभैश्चाप्यधो जन्म कर्मभिर्लभते नरः ॥' इति। मभा.

( ३ ) ये वर्णाश्रमाः स्वानि कर्माणि यथावन्नानुतिष्ठन्ति ते विपरीता विष्वञ्चो नानायोनीर्गच्छन्तो नश्यन्ति अनर्थपरम्परामनुभवन्तीति। गौमि.

( ४ ) विष्वञ्चः सर्वतो गामिनः विरुद्धकर्मरता इति यावत्। विपरीता नश्यन्तीति प्रेत्य दुष्कर्मफलमनुभूय शेषेण देशादिमेधोन्तेन जायन्ते इति। कुर. १९

( ५ ) विष्वञ्चः यथेष्टचेष्टाः। विनश्यन्ति पापफलमनुभवन्ति। निप्र. १।१२

( ६ ) विष्वञ्चः सर्वतो गामिनः यथेष्टचेष्टा इति यावत्। अनेन निषिद्धकारिण उक्ताः। विपरीताः वर्णाश्रमधर्मत्यागिनः। अनेन विहिताकारिण उक्ताः। नश्यन्ति नरकादौ पापफलमनुभूय भुक्तावशिष्टेन पापकर्मणा विरुद्धदेशादौ जन्म प्रतिपद्य पापरता भवन्तीत्यर्थः। पप्र. ६२

[१]धर्मिणां विशेषेण स्वर्गं लोकं धर्मविदाप्नोति ज्ञानाभिनिवेशाभ्याम् ॥

( १ ) सांप्रतं धर्मविदः फलमाह– धर्मिणामिति। धर्मी केवलधर्मी। विशेषेण आ प्रलयादित्यभिप्रायः। धर्मवित् ज्ञात्वाऽनुष्ठायी। कुतः ? ज्ञानग्रहणात्। अभिनिवेशः तदनुष्ठानम्। तथा च वसिष्ठः– 'धार्मिकः' इत्यादि। मभा.

( २ ) सांप्रतं ये केवलं धर्ममनुतिष्ठन्ति तेभ्यो ज्ञात्वाऽनुतिष्ठन् विशिष्ट इत्याह– धर्मिणामिति। धर्मिणः धर्मवन्तः धार्मिकाः। तेषां मध्ये यो धर्मवित् धर्मशास्त्रं यावतो( ? पाठतो)ऽर्थतोऽधीत्य धर्मं तत्त्वतो वेत्ति सः ज्ञानाभिनिवेशाभ्याम्, ज्ञानं सम( ? सम्यग )र्थावगतिः, अभिनिवेशः तात्पर्येणानुष्ठानम्, ज्ञानेनाभिनिवेशेन च केवलानुष्ठातृभ्यो विशेषेण स्वर्गं लोकमाप्नोति। गौमि.

---

(१) गौध. ११।३२ ; ब्रक. १४ ; मभा. ; गौमि. ११।३० ; कुर. १८ ; निप्र. १।१२ (विश्वञ्चो विपरीतानि विनश्यन्ति) ; पप्र. ६१.

(१) गौध. २८।५४ ; मभा. ; गौमि. २८।५०.

[1]इति धर्मो धर्मः ॥

(१) 'वेदो धर्ममूलम्' (गौध. १।१) इत्यारम्य एतत्पर्यन्तं धर्मसंज्ञा, गौतमस्येति वाक्यशेषः । मभा.

(२) द्विरुक्तिः शास्त्रपरिसमाप्त्यर्था । $ गौमि.

आचारात् पुरुषार्थलाभः

[2]अथाऽऽचारान् प्रवक्ष्यामि । आचाराल्लभते धर्मम् । आचाराल्लभते धनम् । आचाराल्लभते सुखम् । आचारादेव मोक्षं प्राप्नुयात् ॥

[3]एवं क्रियाकाण्डमाचरतो धर्मार्थकाममोक्षाणां सिद्धिर्भवति ॥

## वृद्धगौतमः

धर्मेण सुगतिः अधर्मेण दुर्गतिः

[4]धर्मः श्रुतो वा दृष्टो वा
कृतो वा कथितोऽपि वा ।
आमोदितो वा राजेन्द्र
पुनाति ह नरं सदा ॥
धर्मः पिता च माता च
धर्मश्च सुहृदस्तथा ।
धर्मो भ्राता सखा चैव
धर्मः स्वामी परन्तपः ॥
धर्मादर्थश्च कामश्च धर्माद्भोगाः सुखानि च ।
धर्मादैश्वर्यमेवं च धर्माः( ? र्मात् ) स्वर्गगतिः प्रभो ॥
धर्मो वंशे विपन्नं च त्रायते महतो भयात् ।
द्विजत्वं देवतात्वं च धर्मः प्रापयते नरम् ॥
यदा च क्रियते पापः कालेन पुरुषस्य च ।
तदा संजायते बुद्धिर्धर्मे कर्तुं युधिष्ठिर ॥
जन्मान्तरसहस्रैस्तु मानुषत्वं सुखी भव ।
तत्तवापीह यो धर्मं न करोति स वञ्चितः ॥

$ शेषं मभागतम् ।

(१) गौध. २८।५५ ; मभा. ; गौमि. २८।५१.
(२) गौधक्रि. १.
(३) गौधक्रि. १८.
(४) वृगौस्मृ. १।२९–३७.

कीटाश्चैव पुरीषस्य विरूपा व्याधितास्तथा ।
परद्वेष्याश्च मूर्खाश्च न तैर्धर्माः कृताः पुरा ॥
एके दीर्घायुषः शूराः पण्डिता भोगिनस्तथा ।
अरोगा रूपसंपन्नास्तैर्धर्माः स्युः कृताः पुरा ॥
एवं धर्मः कृतः सद्यो नयते गतिमुत्तमाम् ।
अधर्मः सेव्यमानस्तु तिर्यग्योनिं नयत्यसौ ॥
[1]एवं धर्मात्परं नास्ति महत् संसर्गसाक्षिणः ।
स(?न) स्वधर्मात्परं किंचित्पापकर्मव्यपोहनम् ।
तस्माद्धर्मः सदा कार्यो मानुष्यं प्राप्य दुर्लभम् ॥
[2]एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एको हि भुङ्क्ते सुकृतमेकश्चाऽऽप्नोति दुष्कृतम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥
अनागतानि कार्याणि कर्तुं गणयते जनः ।
स शिरःकम्पमुद्वीक्ष्य सूयते दिनमन्तकम् ॥
तस्माद्धर्मः सहायोऽस्तु धर्मं संचिनुयात्सदा ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥
येषां तटाकानि समाः( ? भाः ) प्रपाश्च
कूपाश्च यूपाश्च प्रतिश्रयाश्च ।
अन्नप्रदानं मधुरा च वाणी
यमस्य ते निर्वचना भवन्ति ॥

अहिंसासत्यादीनि विविधानि धर्मलक्षणानि

युधिष्ठिर उवाच–
[3]अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किंलक्षणोऽसौ भवति तन्मे ब्रूहि सुरेश्वर ॥
भगवानुवाच–
शृणु राजन् समासेन धर्मशौचविधिक्रमम् ।
अहिंसा सत्यमस्तेयमानृशंस्यं दमः शमः ॥
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ।
ब्रह्मचर्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम् ॥

(१) वृगौस्मृ. २।३२–३३.
(२) वृगौस्मृ. ११।३२–३६.
(३) वृगौस्मृ. १२।१–५.

मर्यादायाः स्थितिश्चैवम(? मा)शौचस्य च लक्षणम् ।
बाल्ये विद्यां निषेवेत यौवने दारसंग्रहम् ॥
स्थाविर्ये मोक्षमातिष्ठेत्सर्वदा धर्ममाचरेत् ।
ब्राह्मणान्नावमन्येत गुरून् परिवदेन्न च ।
यतीनामनुकूलः स्यादेष धर्मः सनातनः ॥
[1]आचारप्रभवो धर्मो ह्यहिंसा सत्यमेव च ।
दानं चैव यथा शान्तिर्नियमानि यमैः सह ॥

## हारीतः

विहितस्वधर्माचरणात् सद्गतिः , अधर्माचरणात् पतनम्

[2]धर्ममेव हि यः कुर्यात्स याति ब्रह्मणः पदम् ॥
[3]यः कश्चित्कुरुते धर्मं विधिं हित्वा दुरात्मवान् ।
न तत्फलमवाप्नोति कुर्वाणोऽपि विधिच्युतः ॥
[4]धर्मशास्त्रमिदं सर्वं हारीतमुखनिःसृतम् ।
अधीत्य कुरुते धर्मं स याति परमां गतिम् ॥
ब्राह्मणस्य तु यत्कर्म कथितं बाहुजस्य च ।
ऊरुजस्यापि यत्कर्म कथितं पादजस्य च ॥
[5]स्वं स्वं कर्म प्रकुर्वाणा विप्राद्या यान्ति सद्गतिम् ।
अन्यथा वर्तमानो हि सद्यः पतति जातितः ॥
[6]यो यस्याभिहितो धर्मः स तु तस्य तथैव च ।
तस्मात्स्वधर्मं कुर्वीत द्विजो नित्यमनापदि ॥
वर्णाश्चत्वारो राजेन्द्र चत्वारश्चापि चाऽऽश्रमाः ।
स्वधर्मे ये तु तिष्ठन्ति ते यान्ति परमां गतिम् ॥

(१) वृगौस्मृ. १४।५१–५२.
(२) हास्मृ. १।३१.
(३) हास्मृ. ३।४ ; मुक्ता. ११५.
(४) हास्मृ. ७।१५–१६.
(५) हास्मृ. (नरसिंहपुराणान्तर्गता) ६१।१८.
(६) हास्मृ. ७।१७–१८.

[1]कर्मणा प्राप्नुयाल्लोकान्कर्मणा मुच्यतेऽशुभात् ।
कर्मणा सर्वमाप्नोति यत्किंचिन्मनसेच्छति ॥
अहिंस्रे कर्मणि शुभे मोक्षं गच्छति पण्डितः ।
एतद्वः कथये विप्रा नाकर्मा किंचिदाप्नुयात् ॥

अहिंस्रे अविहितहिंसारहिते । पण्डितः अत्र परमात्मज्ञः । अकर्मा च आश्रमकर्मरहितः । गृक. २८६

[2]यमेषु नियमेषु चाप्रमत्त-
स्तिष्ठति याति लोकान् वरिष्ठान् ।
भ्रष्टस्तेभ्यो विविधा याति योनी-
र्यासूत्पन्नो मज्जते यातनासु ॥

तेभ्यः यमनियमेभ्यः । ¶ गृक. ३३२

[3]तस्माद्धीरः शुश्रुवान् न्यायवृत्तो
यस्मिन् यशो न व्यथते नापि धर्मः ।
धर्मो ह्येकः सुसहायो जनानां
य एतान् घोरात्त्रायते मृत्युदुर्गात् ॥

शुश्रुवान् श्रुतवान् । ¶ गृक. ३३३

[4]त्रिसंध्यमवस्कन्नदेवार्चनजपहोमध्याननियमानुष्ठानं दृढव्रतत्वम् । त्रिसंध्यनियमिनां पाप्मा शीर्यते, तपो भूयस्त्वमुपैति, ब्रह्म प्रकाशतां गच्छति ॥

अवस्कन्नं सर्वाङ्गोपेतम् । देवार्चनादिनियमाः, तैर्ब्रह्म प्रकाशतां यातीत्यर्थः । जपः प्रणवस्य । ध्यानं निराकारं साकारं च । होमस्तु नित्य एव । गप. ४४३

¶ गृर. गृकवत् ।
(१) गृक. २८६.
(२) गृक. ३३२ चाप्रमत्त (वा प्रसन्न) (याति०); गृर. ५२८ ; निप्र. २।४६७ चाप्रमत्तस्तिष्ठति (च प्रमत्तस्तिष्ठन् ) वरिष्ठान् (परिभ्रष्टान्) विविधा (विविधां) योनीर्यासूत्पन्नो मज्जते (योनिं यास्वत्यन्तं सज्जते).
(३) गृक. ३३३ द्धीरः (द्वीरः) ; गृर. ५२८ तस्माद्धीरः (तेभ्यो धीरः) शुश्रुवान् (शुश्रूषावान्) ह्येकः (ह्येषः) दुर्गात् (योगात्) ; निप्र. २।४६७ वृत्तो (वृत्तौ) नापि (न) सुसहायो (ससहायो) य एतान् (योऽस्मात्). (४) गप. ४४३.

[1]काम्यैः केचिद्यज्ञदानैस्तपोभि-
र्लब्ध्वा लोकान् पुनरायान्ति जन्म।
कामैर्मुक्ताः सत्ययज्ञाः सुदाना-
स्तपोनिष्ठा अक्षयान् यान्ति लोकान्॥

एतेन कामनासदसद्भावनिबन्धनः फलभेदो दर्शितः।

§ ब्रक. १७

[2]मन्त्रार्थज्ञो जपञ्जुह्वत्तथैवाध्यापयन् द्विजः।
स्वर्गलोकमवाप्नोति नरकं तु विपर्यये॥

[3]य एवं विद्वांसो यथाश्रमं चतुर्विधं धर्मं धारयन्ति ते परब्रह्मामृतमवाप्नुवन्ति॥

[4]आचारः परमो धर्म इति वेदविदो विदुः।
न ह्यनाचारिणो लोकान् प्रवदन्ति मनीषिणः॥

आश्रमाणां धर्मचतुष्टयम्

[5]अथाऽऽश्रमाणां पृथग्धर्मो विशेषधर्मः समानधर्मः कृत्स्नधर्मश्चेति। पृथगाश्रमानुष्ठानात् पृथग्धर्मो यथा चातुर्वर्ण्यधर्माः। स्वाश्रमविशेषानुष्ठानाद्विशेषधर्मो यथा नैष्ठिकयायावरानुशायिकचातुराश्रम्यसिद्धानाम्। सर्वेषां यः समानः स समानधर्मः। नैष्ठिकः कृत्स्नधर्मः॥

§ कुर., पप्र. ब्रकवत्।

(१) ब्रक. १६; चव्र. ४ म्यैः केचिद्यज्ञदानै (म्यैरेतैः क्रियमाणै) लब्ध्वा लोकान् (स्वर्गाल्लोकात्) यज्ञाः सुदाना (लोकाः सयज्ञा) निष्ठा अक्ष (निष्ठानक्ष); कुर. २१ सुदाना (प्रदाना); पप्र. ६५.

(२) स्मृच. १।१३२ जुह्वत्त (जुह्वंस्त); पमा. १।१४४; मुक्ता. ३० स्मृचवत्; संप्र. ५१०; संग. ५ स्मृचवत्.

(३) कुर. २१.

(४) ब्रक. १६; कुर. २१.

(५) ब्रक. ६–७ धर्मो यथा नैष्ठि (धर्मो नैष्ठि) (स समानधर्मः। नैष्ठिकः०); कुर. ९ श्रमाणां (श्रमिणां) श्रमानु (श्रमधर्मानु) चातुर्वर्ण्य (चतुर्वर्णाश्रम); पप्र. ४४ चातुर्वर्ण्यधर्माः (चतुर्वर्णाश्रमधर्मः) समानः (समानो धर्मः).

(१) अनुशायिकः वानप्रस्थविशेषः। चातुराश्रम्यसिद्धोऽयमिति(? द्धो यतिवि-) शेषः। नैष्ठिकः कृत्स्नधर्म(इति। निष्ठा) संसारसमाप्तिः। आत्मज्ञानवतः प्रत्यवायपरिहाराय नित्यनैमित्तिकानुष्ठानमिति यावत्। ब्रक. ७

(२) नैष्ठिकयायावरौ ब्रह्मचारि(गृहस्थ)विशेषौ। अनुशायिकः वानप्रस्थविशेषः। चातुराश्रम्यसिद्धः यतिविशेषः। नैष्ठिकः कृत्स्नधर्म इति। निष्ठा संसारसमाप्तिः। आत्मज्ञानवतः प्रत्यवायपरिहाराय नित्यनैमित्तिककर्मानुष्ठानमिति यावत्। तत्प्रयोजनको नैष्ठिकः। कुर. ९

(३) स्वोक्तं पृथग्धर्मादिपदं स्वयमेव व्याचष्टे—पृथगाश्रमानुष्ठानादित्यादि। पृथगाश्रमम् एकैकाश्रमम् (?)अनुष्ठानात्पृथग्धर्मः, यथा समिदाधानपुत्रोत्पादनादिः। स्वाश्रमेषु ब्रह्मचर्यादिषु विशेषः अवान्तरभेदः। नैष्ठिकः यावज्जीवं ब्रह्मचारी। इदमुपकुर्वाणब्रह्मचारिणोऽप्युपलक्षणम्। तत्र नैष्ठिकधर्मः आमरणं गुरुकुलवासादिः। उपकुर्वाणधर्मस्तु गुरुदक्षिणादानपूर्वकस्नानादिः। यायावरः वृत्त्यर्थाध्यापनादिशून्यो गृहस्थविशेषः। इदं च वृत्त्यर्थाध्यापनादियुक्तशालीनाख्यगृहस्थविशेषस्याप्युपलक्षणम्। तत्र यायावरधर्मः शिलोञ्छादिः। शालीनधर्मो वृत्त्यर्थयाजनादिः। अनुशायिकः वानप्रस्थविशेषः। चातुराश्रम्यसिद्धोऽयमिति(? द्धो यति-) विशेषः। समानधर्मः अहिंसादिः। नैष्ठिकः कृत्स्नधर्म इति। निष्ठा संसारसमाप्तिः तत्प्रयोजकः विविदिषोः प्रत्यवायपरिहाराय नित्यनैमित्तिकानुष्ठानं कृत्स्नधर्म इत्यर्थः। पप्र. ४४

## वृद्धहारीतः

विकर्मस्थस्य नास्तिकस्य च लक्षणम्

[1]श्रुतिस्मृत्युदितं धर्ममकृत्वा यश्चरेन्नरः।
विकर्मस्थः स विज्ञेयः सर्वकर्मसु गर्हितः॥

(१) वृहास्मृ. ८।२०–२२.

यो देवार्थं गर्हयति धर्माधर्मौ न विन्दति ।
न बुध्येत्परलोकं यः स नास्तिक उदाहृतः ॥
उक्तधर्मं परित्यज्य यो ह्यधर्मे च वर्तते ।
पतितः स तु विज्ञेयः सर्वधर्मबहिष्कृतः ॥

त्रिविधं विहितं कर्म

[1]दानं तपश्च यज्ञश्च त्रिविधं कर्म कीर्तितम् ।
तत्सर्वं भगवत्प्रीत्यै कुर्वीत सुसमाहितः ॥

वेदविहितधर्मेणैव विष्णुपूजनं युक्तम्

[2]धर्मस्य कर्ता भोक्ता च परमात्मा सनातनः ।
अधर्मं मनसा वाचा कर्मणाऽपि त्यजेत्सदा ॥
अकृत्यकरणाद्विप्रः कृत्यस्याकरणादपि ।
अनिग्रहाच्चेन्द्रियाणां सद्यः पतनमृच्छति ॥
[3]यज्ञार्थमेव संसृष्टमात्मवर्गं चतुर्विधम् ।
यज्ञार्थात्कर्मणोऽन्यत्तु तदेषां कर्मबन्धनम् ॥
[4]समस्तयज्ञभोक्तारमज्ञात्वा विष्णुमव्ययम् ।
वेदोदितं यः कुरुते स लोकायतिकः स्मृतः ॥
यस्तु वेदोदितं धर्मं त्यक्त्वा विष्णुं समर्चयेत् ।
स पाषण्डीति विज्ञेयो नरकं चाधिगच्छति ॥
वेदाः प्राणा भगवतो वासुदेवस्य सर्वदा ।
तदुक्तकर्माकुर्वाणः प्राणहर्ता भवेद्धरेः ॥
विष्णोराराधनाद्वेदं विना यस्त्वन्यकर्मणि ।
प्रयुञ्जीत विमूढात्मा वेदहन्ता न संशयः ॥
वत्सं माता लेढि तथा यथा लेढि स मातरम् ।
श्रुतिं विष्णोः प्रियां ज्ञात्वा विष्णुं वेदेन वै यजेत् ॥
तस्माद्वेदस्य विष्णोश्च संयोगो यस्तु दृश्यते ।
स एव परमो धर्मो वैष्णवानां यथा नृप ॥
कश्चित्पुरा नृपश्रेष्ठ काश्यपो ब्राह्मणोत्तमः ।
शाण्डिल्य इति विख्यातः सर्वशास्त्रविशारदः ॥

(१) बृहास्मृ. ८।२७.
(२) बृहास्मृ. ९।१५८–१५९.
(३) बृहास्मृ. १०।१३.
(४) बृहास्मृ. ११।१७४–१९३.

स तु धर्मप्रसङ्गेन विष्णोराराधनं प्रति ।
अवैदिकेन विधिना कृतवान्धर्मसंहिताम् ॥
अवलम्ब्य मतं तस्य केचिदत्र महर्षयः ।
अवैदिकेन मार्गेण पूजयन्ति स्म केशवम् ॥
अशास्त्रविहितं धर्मं सर्वे कुर्वन्ति मानवाः ।
स्वाहास्वधावषट्कारवर्जितं स्यान्महीतलम् ॥
ततः क्रुद्धो जगन्नाथः शङ्खचक्रगदाधरः ।
इदमाह मुनिश्रेष्ठं शाण्डिल्यममितौजसम् ॥
दुर्बुद्धे मामकं धर्मं परमं वैदिकं महत् ।
अवैदिकक्रियाजुष्टं प्रागल्भ्यात्कृतवानसि ॥
यस्मादवैदिकं धर्मं प्रवर्तयसि मां (? यद्) द्विज ।
तस्मादवैदिकं लोकं निरयं गच्छ दारुणम् ॥
तस्य देवस्य वाक्यात्तु शाण्डिल्योऽभूद्भयाकुलः ।
स्तुवन्प्राह जगन्नाथं प्रणिपत्य पुनः पुनः ॥
त्राहि त्राहीति लोकेश मां विभो सापराधिनम् ।
ततः स कृपया विष्णुर्भगवान्भूतभावनः ॥
दिव्यं वर्षशतं विप्र भुक्त्वा निरययातनाम् ।
उत्पत्स्यसे भृगोर्वंशे जमदग्निरितीरितः ॥
तत्राऽऽराध्य पुनर्मां तु वैदिकेनैव धर्मतः ।
गच्छ तस्मिन्मुनिश्रेष्ठ मम लोकं सुनिर्मलम् ॥
इत्युक्त्वा भगवान्विष्णुस्तत्रैवान्तरधीयत ।
शाण्डिल्यो निरयं प्राप्य पुनरुत्पद्य भूतले ॥
वेदोक्तविधिना विष्णुमर्चयित्वा सनातनम् ।
विशुद्धभावात्संप्राप्तस्तद्धाम परमं हरेः ॥
तस्मादवैदिकं धर्मं दूरतः परिवर्जयेत् ।
वैदिकेनैव विधिना भक्त्या संपूजयेद्धरिम् ॥

## लघुहारीतः

जुगुप्सारहितस्य कर्मणः कर्तव्यता

[1]यत्कर्म कुर्वंश्च नासौ जुगुप्सामेति पुत्रक ।
तत्कर्तव्यमशङ्केन यन्न गोप्यं महाजने ॥

(१) गृर. ४९४.

## बौधायनः

कर्मण्यधिकारः श्रद्धया

**[1]बीभत्सवः शुचिकामा हि देवा नाश्रद्दधानाय हविर्जुषन्त इति ॥**

बीभत्सवः ( शुचिकामाः ) अपि सन्तः अश्रद्दधानात् पुरुषात् हविर्न जुषन्ते न सेवन्ते । तस्मान्नूनं श्रद्धाऽपि शुचिकारणमित्यवगम्यते । बौवि.

**शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।**
**मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥**
**प्रजापतिस्तु तानाह न समं विषमं हि तत् ।**
**हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यत इति ॥**

किंच– शुचेरिति । दीर्घकालं मीमांसित्वा विचार्य देवैः शुचेरश्रद्दधानस्य अशुचेः श्रद्दधानस्य च तयोः समीकरणे कृते देवान् प्रजापतिरब्रवीत्– विषमसमीकरणमेतद्युष्माभिः कृतम्, तथा मा कार्ष्टेति । किं तत्र कारणमित्याह– हतमश्रद्दधानस्य, तस्मात् श्रद्धापूतमेव विशिष्यते इति । बौवि.

**अथाप्युदाहरन्ति–**

**अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः ।**
**तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवताः ॥**

श्रद्धा आदरः कौतूहलम् आस्तिक्यम् । यस्मादश्रद्धैवंभूता तस्मादश्रद्धया न दातव्यमिति शेषः । आह च कृष्णो धनंजयाय– 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥' ( भगी. १७।२८ ) इति । बौवि.

कृत्याकृत्यविवेकाभावे कर्मफलाभावः

**इष्ट्वा दत्त्वाऽपि वा मूर्खः स्वर्गे न हि स गच्छति ॥**
**शङ्कापिहितचारित्रो यः स्वाभिप्रायमाश्रितः ।**
**शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनादिति ॥**

(१) बोध. १।१०।४–८, ३३.

मूर्ख इत्युक्तम्, कोऽसावित्यत आह– शङ्केति । शङ्का कृत्याकृत्यविवेकशून्यता, श्रेयःसंशयात् । तया पिहितं चारित्रम् अनुष्ठानं यस्य स तथोक्तः । ततश्च शास्त्रतो ¶निश्चित्य हेयोपादेयौ चावेक्ष्य विवेकाभावे स्वाभिप्रायमाश्रितः । स्वेच्छाचारी भवतीत्यर्थः । एतस्मादेव शास्त्रातिगश्च भवति शास्त्रार्थमतीत्य गच्छति । तत्राप्युक्तम्, यतो भगवद्गीतासूक्तम्– 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।' ( भगी. १६।२४ ) इति । एवंविधो यः पुरुषः स मूर्खः स्मृतः । को हेतुः ? धर्मतन्त्रोपरोधनादिति । धर्मस्य तन्त्रम् अनुष्ठानं तस्योपरोधो भवति । बौवि.

**यद्यौवने चरति विभ्रमेण**
**सद्वाऽसद्वा यादृशं वा यदा वा ।**
**उत्तरे चेद्वयसि साधुवृत्त-**
**स्तदेवास्य भवति नेतराणि ॥**

असंयतात्मेत्युक्तम्, तत्रापवादमाह– यदिति । उत्तरं वयः पञ्चाशद्वर्षादुपरि । एतस्योर्ध्वम् आचार्याभिमतम्– 'ऊनषष्टेश्च वर्षेभ्यो द्वाषाम्यश्च मासेभ्यः' । एतस्मादर्वाग्यौवनम् । सद्वाऽसद्वेति विहितप्रतिषिद्धोभयाभावः । यादृशं वेति प्रकारानियमः । यदा वेति कालानियमः । अयमत्रार्थः– यौवनोद्धतः पुरुषो व्यामोहात्पूर्वस्मिन् वयसि साध्वसाधु वाऽत्यन्तनिकृष्टमपि कर्म यदाचरति, स चेदुत्तरस्मिन् वयसि साधुवृत्तः कल्याणाचारः भवति प्रतिषिद्धं परिहाप्य स्वविहितमनुतिष्ठति, तदेवास्य फलदं भवति, नेतराणि दुष्कृतानि पूर्ववयोनुष्ठितानि । अनेन च प्रायश्चित्तात्परत्वं ख्यापितं भवति, न पुनरकरणमेव प्रायश्चित्तस्य । बौवि.

¶ 'निश्चित्य, अवेक्ष्य' इति ल्यबन्तयोरेकदेशान्वयमाश्रित्य विवेकेऽन्वयः । यदा तु क्वचित् पुस्तके 'अनवेक्ष्य' इतिपाठोपलब्धेस्तदनुरोधेन 'निश्चित्य' इत्यत्रापि 'अनिश्चित्य' इति पाठः कल्प्यते, तदा तयोः स्वाभिप्रायाश्रयणेऽन्वयो बोध्यः ।

साध्वाचारशीलस्य ब्रह्मभावः

**¹एवमेवाऽऽचरन् ब्रह्मभूयाय कल्पते ब्रह्मभूयाय कल्पत इति ॥**

ब्राह्मणो ब्रह्म, तद्भूयं तद्भावः । बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

धनकीर्त्यादि लौकिकं फलमुद्दिश्य कृतं धर्माचरणं निष्फलम्, लौकिकफलमानुषङ्गिकम्

**²नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥**

(१) इमं धनकीर्त्यादिकम् । पुरस्कृत्य उद्दिश्य ।
† ब्रक. १८

(२) इमं लौकिकं लोके विदितं ख्यातिलाभपूजात्मकम् अर्थं प्रयोजनम् पुरस्कृत्य अभिसंधाय धर्मान् चरेत् । उ.

**³निष्फला ह्यभ्युदये भवन्ति ॥**

(१) अभ्युदये शास्त्रीयफलविषये । ¶ ब्रक. १८

(२) हि यस्मात् एवं क्रियमाणा धर्माः अभ्युदये फलकाले निष्फला भवन्ति । लोकार्थं ह्यसौ धर्मं चरति, न कर्तव्यमिति श्रद्धया । न च श्रद्धया विना धर्मः फलं साधयति, 'यो वै श्रद्धामनारभ्य' (तैसं. १।६।८।१) इति श्रुतेः । उ.

**⁴तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ॥**

(१) किमत्रेदानीं दृष्टं फलं त्याज्यमेव ? नेत्याह– तद्यथेति । तदिति वाक्योपन्यासे । फलार्थं ह्याम्रवृक्षो निर्मीयते आरोप्यते । तस्मिन् फलार्थे निमित्ते(? र्मिते) छाया गन्धश्चानूत्पद्येते । एवं धर्मं चर्यमाणमर्थाः ख्यात्यादयोऽनूत्पद्यन्ते अनुनिष्पद्यन्ते । तथैव स्वीकार्याः, न चोद्देश्यतया । तथा चाऽऽह– 'यथेक्षुहेतोः सलिलं प्रसेचयंस्तृणानि वल्लीरपि च प्रसिञ्चति । तथा नरो धर्मपथेन वर्तयन् यशश्च कामांश्च वसूनि चाश्नुते ॥' इति । उ.

(२) इदं च वाक्यं नित्यकर्मविषयत्वेन वार्तिके विश्वरूपाचार्य उदाजहार– 'आम्रे फलार्थ इत्यादि ह्यापस्तम्बस्मृतेर्वचः । फलवत्त्वं समाचष्टे नित्यानामपि कर्मणाम् ॥' इति । तथा च मनुः– 'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥' (मस्मृ. ४।१४) इति ।
पमा. १।५१-५२

(३) निर्मिते आरोपिते । न चैतानि नित्यमात्रपराणि, सामान्ये बाधकाभावात्, नित्यानां फलानुद्देश्यकत्वेन फलोद्देश्यकाम्रारोपणजलसेकादिदृष्टान्तानामफलत्वप्रसङ्गाच्च । पप्र. ६७

**¹नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥**

यद्यपि दैवादर्था नानूत्पद्यन्ते तथाऽपि धर्मस्तावद्भवति । स च स्वतन्त्रः पुरुषार्थः, किमन्यैरर्थैः ? इति । उ.

आर्यैः प्रशस्तो धर्मः, निन्दितोऽधर्मः इति धर्माधर्मयोः लक्षणम्

**²न धर्माधर्मौ चरत आवं स्व इति, न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥**

---

† कुर. ब्रकगतम् ।

¶ कुर. ब्रकवत् ।

(१) बौध. २।१३।१४.

(२) आध. १।२०।१ ; हिध. २६।६।१५ ; ब्रक. १८ ; कुर. २४ नेमं (नेदं).

(३) आध. १।२०।२ ; हिध. २६।६।१६ ; ब्रक. १८ ; कुर. २४.

(४) आध. १।२०।३ निर्मिते (निमित्ते) ; हिध. २६।६।१७ ; पमा. १।५१ नूत्पद्येते (नूद्यते) अनूत्पद्य (अनूद्य) स्मृतिः ; पप्र. ६७ छाया गन्ध इत्यनू (छायागन्धावनू) ; आन. ७ (धर्मं चर्यमाणमर्था अनूत्पद्यन्ते) एतावदेव ; आभू. ८० छाया गन्ध इत्यनू (छायागन्धावनू) णमर्था (णस्यार्था).

(१) आध. १।२०।४ ; हिध. २६।६।१८ नो (न).

(२) आध. १।२०।६ ; हिध. २६।६।२० देवगन्धर्वा (देवा न गन्धर्वा) ; ब्रक. ५ आवं (आवां) देवगन्धर्वा (देवा न गन्धर्वा) ; चव्र. १० आवं स्व (आवां स्वत) देवगन्धर्वा (देवा न गन्धर्वा); कुर. ८ आवं स्व (आवां

( १ ) अयमर्थः- आत्मकथनाय सर्वलोकप्रत्यक्षं धर्माधर्मौ 'आवां वर्तावहे' इति ब्रुवाणौ न भ्रमतः । ब्रक. ६

( २ ) आवम् इति छान्दसं रूपम् । भाषायां तु 'प्रथमायाश्च द्विवचने भाषायाम्' (पासू. ७।२।८८) इत्यात्वं प्राप्नोति । यदि हि धर्माधर्मौ विग्रहवन्तौ गोव्याघ्रवच्चरेताम् 'आवां स्वः' इति ब्रुवाणौ, यदि वा देवादयः प्रकृष्टज्ञाना ब्रूयुः 'इमौ धर्माधर्मौ' इति, ततः कुहकादिवादेषु न स्याद्वञ्चना । तदभावात्तु वञ्चनासंभव इति । इदं चात्र द्रष्टव्यम्– प्रत्यक्षादेर्न गोचरौ धर्माधर्मौ, किंतु नित्यनिर्दोषवेदगम्यौ, तदभावे तन्मूलधर्मशास्त्रगम्याविति । ‡ उ.

( ३ ) न धर्माधर्मौ 'एवमस्तु' इति वदन्तौ भ्रमतः, न सुरा देवादयः 'धर्माधर्माविमौ तिष्ठतः' इति वदन्ति, किंतु प्रशस्ताप्रशस्तक्रियमाणविशेषयोरेव यथासंख्यं धर्माधर्मपदप्रयोग इत्यर्थः । कुर. ८

( ४ ) ... नापि देवादयः 'अयं धर्मोऽयमधर्मः' इत्याचक्षते । † पप्र. ३२

**[1]यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः ॥**

( १ ) यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह– यमिति । आर्याः शिष्टास्त्रैवर्णिकाः । बहुवचनाच्चत्वारस्त्रयो वा । यथाऽऽह याज्ञवल्क्यः– 'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥' (यास्मृ. १।९) इति । उ.

‡ मुक्ता. उगतम् ।

† शेषं ब्रकगतम् ।

स्वत) देवगन्धर्वा (सुरा न गन्धर्वा) र इत्याचक्षतेऽयं (रोऽयं) ; **मुक्ता.** ३ यमधर्म (यं धर्मं) ; **पप्र.** ३२ ब्रकवत्.

(१) **आध.** १।२०।७ ; **हिध.** २०।६।२१ यं त्वा (यत्त्वा) यं ग (यद्ग). शेषः स्थलादिनिर्देशः 'धर्मप्रमाणविचारः' इत्यस्मिन् प्रकरणे (पृ. ६३) द्रष्टव्यः .

( २ ) शिष्टा यं प्रशंसन्ति स धर्मः, यं गर्हन्ते सोऽधर्म इत्यर्थः । मुक्ता. ३

**[1]एवमुभौ लोकावभिजयति ॥**

एवं श्रुतिस्मृतिसदाचारमूलमनुष्ठानं कुर्वन् उभौ लोकावभिजयति इमं चामुं च । उ.

सर्वेषामैहिकामुष्मिकसुखकरः स्वधर्मः

**[2]सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम् ॥**

( १ ) परं श्रेष्ठम् । अपरिमितं चिरकालानुवृत्ति । $ ब्रक. १५

( २ ) सर्वेषामेव वर्णानां ब्राह्मणादीनां चतुर्णां ये स्वधर्मा वर्णप्रयुक्ता आश्रमप्रयुक्ता उभयप्रयुक्ता वा तेषामवैगुण्येन आऽन्तादनुष्ठाने सति परम् उत्कृष्टम् अपरिमितम् अक्षयं सुखं स्वर्गाख्यं भवति । ‡ उ.

**[3]ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ॥**

( १ ) परिवृत्तिः पुनरावृत्तिः । कर्मफलशेषेण कर्मफलसाधनशेषेणेत्यर्थः । एतच्च नित्यानामेव कर्मणां फला-

$ कुर. ब्रकगतम् । पप्र. ब्रकवत् ।

‡ मुक्ता., आभू. उगतम् ।

(१) **आध.** १।२०।९ ; **हिध.** २६।६।३ एवमु (एवं वर्तमान उ) ; **मुक्ता.** ३ ; **निप्र.** २।४८१ जयति (जायते).

(२) **आध.** २।२।२ ; **हिध.** २७।१।२४ ; **ब्रक.** १५ ; **कुर.** २० : २२ (सर्ववर्णानां०) ; **मुक्ता.** ३ ; **पप्र.** ६२ ; **आभू.** १४७.

(३) **आध.** २।२।३ ; **हिध.** २७।१।२५ (वर्णं०) धर्मा (स्वधर्मा) ; **ब्रक.** १५ प्रतिपद्यते (प्रपद्यन्ते) ; **कुर.** २० पद्यते (पद्यन्ते) वर्तते (प्रवर्तते) ; **निप्र.** १।१३ (ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं बलं मेधां प्रज्ञां प्रतिपद्यन्ते) एतावदेव ; **मुक्ता.** ३ ; **पप्र.** ६२ रूपं वर्णं (वर्णं रूपं) प्रतिप (प्रप).

न्तरमिति कपर्दिभाष्यम्। तत् तस्मात् सुख एव वर्तते, न दुःखम् (१ खे)। ब्रक. १५-१६

(२) ततः सुखानुभवानन्तरं परिवृत्तिः इह लोके जन्म भवति। तस्यां च कर्मणां यः फलशेषः अभुक्तोंऽशः तेन जातिं ब्राह्मणादिकां विशिष्टे वा कुले जन्म, रूपं कान्तिम्, वर्णं हेमादितुल्यम्, बलं प्रतिपक्षनिग्रहक्षमम्, मेधां ग्रन्थधारणशक्तिम्, प्रज्ञाम् अर्थधारणशक्तिम्, द्रव्याणि स्वर्णादीनि, धर्मानुष्ठानम्, इतिकरणाद्यच्चान्यदेवं युक्तं तत्सर्वं प्रतिपद्यते। सर्वत्र धर्मशेषो हेतुः। कर्माणि भुज्यमानानि सावशेषाणि भुज्यन्ते, ऐहिकस्य शरीरग्रहणादेरपि कर्मफलत्वात्। धर्मानुष्ठानं प्रतिपद्यत इत्युक्तम्। यदा चैवं तदा सर्ववर्णानां स्वधर्मानुष्ठान इत्यादि प्रतिपद्यत इत्यन्तं पुनर्भवतीत्यनुक्तसिद्धम्। तत् तस्मात् चक्रवदुभयोर्लोकयोः इह चामुष्मिंश्च सुख एव वर्तते, न जातुचित् दुःखे वर्तते। सुखानुबन्धेनैवाऽऽवृत्तिर्भवतीत्यर्थः। उ.

(३) परिवृत्तिः पुनरिह लोके जन्म कर्मफलशेषेण विहितकर्मजनितधर्मशेषेणेत्यर्थः। कुर. २०

(४) कर्मफलम् अपूर्वम्, तच्छेषेणेति रत्नाकरादयः। तत् स्वधर्मानुष्ठानम्। उभयोर्लोकयोः इहामुष्मिंश्च। § पप्र. ६२

**'यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेवम्॥**

(१) क्षेत्रे बीजस्योप्तस्य (कर्षणादिना यथा) फलपरिवृद्धिः सर्वतः परिमाणतः वीर्यादिभिर्वृद्धिः तथा आवश्यककर्मानुष्ठातरि पुरुषे। ब्रक. १६

(२) चलोपोऽत्र द्रष्टव्यः। यथा च ओषधीनां व्रीह्यादीनां वनस्पतीनां च आम्रादीनां बीजस्य क्षेत्रविशेषे कर्मविशेषे संस्कारविशेषे च, क्षेत्रस्य वा कृष्यादौ कर्मविशेषे, फलपरिवृद्धिर्भवति। त एव व्रीह्यादय ऊषर उप्ता न प्ररोहन्ति, कृष्यादिपरिकर्मिते तु क्षेत्रे उप्ताः स्तम्बकरयो भवन्ति। एवं पुरुषेऽपि गर्भाधानादिसंस्कारसंपन्ने द्रष्टव्यम्। उ.

(३) यथा क्षेत्रगतामन्दमन्दसंस्काराभ्यां सत्फलासत्फले, एवमात्मगतमन्दामन्दकर्मभ्यामसत्फलसत्फले इति। तच्च नित्यानामेव कर्मणां फलान्तरमिति कपर्दिभाष्यम्। कुर. २०

(४) ओषधीनां व्रीह्यादीनाम्। वनस्पतीनां वृक्षाणाम्, 'वनस्पतिर्वृक्षमात्रे' इति कोशात्। बीजस्य क्षेत्रकर्मविशेषे क्षेत्रस्य कर्षणादिना संस्कारविशेषे सति फलपरिवृद्धिः, एवं स्वधर्मानुष्ठातुरपि।

अत्र 'स्वकर्मनिष्ठाः' इति गौतमीये, 'स्वक(१ध)र्मानुष्ठाने' इत्यापस्तम्बीये च दर्शनात्स्वस्वाश्रमादिविहितानां नित्यानामेव कर्मणामानुषङ्गिकमकाम्यमानमपि जात्यादिकं वाचनिकं फलमिदम्। तदुक्तं भविष्यपुराणे— 'नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम्।' इति। न तु काम्यानाम्, तेषां काम्यमानमात्रफलजनकत्वादिति कपर्दिभाष्याभिप्रायः।

इदं तु प्रतिभाति। गौतमीयापस्तम्बस्मृत्योर्नित्यकर्मपरत्वे तेषां निष्फलत्वात्स्वर्गादिफलमनुभूय शेषेण जात्यादि लभते इति न संगच्छत इति। अथ अस्तु काम्यमात्रपरत्वम्, तत्र च स्वर्गादिफलं जात्यादि च फलान्तरं जन्यत इत्युच्यते; तदा योगसिद्ध्यधिकरणविरोधः। अथ जात्यादिविशिष्टस्य स्वर्गादेः फलत्वमस्तु, न कोऽपि विरोध इति चेत्, न 'ज्योतिष्टोमेन' इत्यादिवाक्यैः स्वर्गादिमात्रार्थत्वावगमात्। तस्मात् न विशिष्टं फलम्। का तर्हि गौतमापस्तम्बवाक्ययोर्गतिः? केचिदाहुः— ज्योतिष्टोमादिजन्ये स्वर्गफले भुक्ते सति ततः शेषेण तेभ्योऽवशिष्टेन भिन्नेन जात्यादिफलकेन कर्मान्तरेण गौतमादिवचनसिद्धतत्तत्फलभोगावसानकालरूपसहकारिसंपन्नेन जात्यादि जन्यत इति। वस्तुतस्तु स्वर्गादिजनककर्मशेषेणैवाकामितमपि जात्यादि जन्यते, वचनप्रामाण्यात्। परं तु न तत् जात्यादिप्रयुक्तम्। अत एव न योगसिद्ध्यधिकरण-

§ शेषं ब्रकगतम्।

(१) आध. २।२।४; हिध. २७।१।२६ (परि०); ब्रक. १५ क्षेत्रकर्मविशेषे फलपरि (क्षेत्रे कर्मविशेषेण फल); कुर. २०; पप्र. ६२.

विरोधः। यत्र हि परस्परपरिहारेणानेकमनुष्ठाननिमित्तं यथा पशुपुत्रादि स एव योगसिद्धिविषयः। नित्यकाम्यप्रयोगयोस्तु न पराहित्यं नित्यप्रयोगस्य, ततश्चाविरोधः। एवं खादिरतादिष्वपि द्रष्टव्यम्। पप्र. ६३–६४

ऐहिकामुष्मिकदुःखदोऽधर्मः सर्वेषाम्

**[1]एतेन दोषफलपरिवृद्धिरुक्ता॥**

एतेनैव न्यायेन दुष्टकर्मफलपरिवृद्धिरप्युक्ता वेदितव्या। तत्रोहेन पठनीयम् 'सर्ववर्णानां स्वधर्माननुष्ठाने परमपरिमितं दुःखम्,' 'ततः परिवृत्तौ कर्मफलशेषेण– दुष्टां जा(? इजा)त्यादिका(? क)मद्रव्यान्ताम् (? तम्)– अधर्मानुष्ठानमिति प्रतिपद्यते,' 'तच्चक्रवदुभयोर्दुःख एव वर्तते,' 'यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषाभावे फलहानिरेवम्' इति। $ उ.

**[2]स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोकेऽपरिमिते निरये वृत्ते जायते चण्डालो ब्राह्मणः पौल्कसो राजन्यो वैणो वैश्यः॥**

(१) स्तेनः सन् लोके यः प्रसिद्धः। ‡ गृक. ३१४

(२) स्तेनः सुवर्णचोरः। अभिशस्तः ब्रह्महा। स्तेनोऽभिशस्तो वा ब्राह्मणादिरमुष्मिँल्लोके अपरिमिते निरये दोषफलमनुभूय तस्मिन् वृत्ते परिक्षीणे ब्राह्मणश्चण्डालो जायते। शूद्रात् ब्राह्मण्यां जातः चण्डालः। राजन्यः पौल्कसः। शूद्रात् क्षत्रियायां जातः पुल्कसः, स एव पौल्कसः। प्रज्ञादित्वादण्। वैश्यो वैणो जायते। वेणुना नर्तको वैणः। उ.

(३) स्तेनः ब्राह्मणसुवर्णापहर्ता, अभिशस्तः महापातकान्तरवान्, स्मृत्यन्तरे महापातकिन एव पापभोगानन्तरं चण्डालादिजन्मस्मरणात्। पातक्यन्तरस्याप्युपलक्षणमेतत्। परस्मिँल्लोके अपरिमिते बहुतरे निरये नरके वृत्ते भोगेन क्षीणे सति ब्राह्मणश्चाण्डालो जायते। राजन्यः पौल्कसः हीनजातिविशेषः। वैश्यः वैणवः वंशविदलजीवी हीनजातिः। इदमपि हीनजात्यन्तरोपलक्षणम्। पप्र. ६३

**[1]एतेनान्ये दोषफलैः कर्मभिः परिध्वंसा दोषफलासु योनिषु जायन्ते वर्णपरिध्वंसायाम्॥**

वर्णपरिध्वंसा वर्णेभ्यः प्रच्यवनम्, तस्यां वर्णपरिध्वंसायाम्। यथा ब्राह्मणादयश्चण्डालाद्या जायन्ते। एतेन प्रकारेण स्तेनाभिशस्ताभ्यामन्येऽपि दोषफलैः कर्मभिर्दोषफलासु सूकरादिषु योनिषु जायन्ते। परिध्वंसाः स्वजातिपरिभ्रष्टाः इत्यर्थः। ते तथाऽवगन्तव्या इति। उ.

जन्मपरिवर्तने धर्मेण उच्चवर्णप्राप्तिः, अधर्मेण च जघन्यवर्णप्राप्तिः

**[2]धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ॥**

धर्मचर्यया स्वधर्मानुष्ठानेन जघन्यो वर्णः शूद्रादिः पूर्वं पूर्वं वर्णमापद्यते वैश्यादिकं प्राप्नोति जातिपरिवृत्तौ जन्मनः परिवर्तने। शूद्रो वैश्यो जायते, तत्रापि स्वधर्मनिष्ठः क्षत्रियो जायते, तत्रापि स्वधर्मपरो ब्राह्मण इति। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम्। उ.

**[3]अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ॥**

पूर्वेण गतम्। महापातकव्यतिरिक्ताधर्मानुष्ठानविषयमेतत्, महापातकेषु 'स्तेनोऽभिशस्तः' (आध.

---

$ पप्र. उगतम्।

‡ गृर. गृकवत्।

(१) आध. २।२।५ ; हिध. २७।१।२७ परिवृद्धिरुक्ता (वृद्धिर्निरुक्ता) ; ब्रक. १५ ; कुर. २० (परि०) ; पप्र. ६२.

(२) आध. २।२।६ ; हिध. २७।१।२८ चण्डालो (चाण्डालो) ; गृक. ३१४ ; गृर. ५१४ हिधवत् ; पप्र. ६२ वैणो (वैणवो).

(१) आध. २।२।७ ; हिध. २७।१।२९ एतेना... फलासु (एवमेतेन वर्णपरिध्वंसा दोषफलैः कर्मभिर्दोषफलासु).

(२) आध. २।११।१० ; हिध. २७।४।२५.

(३) आध. २।११।११ ; हिध. २७।४।२६ पूर्वो वर्णो जघन्यं जघन्यं (पूर्वो जघन्यं).

२।२।६ ) इत्यादिना नीचजातिप्राप्तेरुक्तत्वात् । उ.

धर्माधर्मकर्तृप्रकाराः, तेषां फलविशेषः

**[1]प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥**

ननु– शास्त्रफलं प्रयोक्तरि, तत्कथमन्यकृतमेनोऽन्यं स्पृशतीति ? बहुविधत्वात् कर्तृभेदस्येत्याह– प्रयोजयितेति । धर्ममधर्मं वा प्रकुर्वाणं यः प्रयुङ्क्ते 'इदमित्थं कुरु' इति, स प्रयोजयिता । स चानेकप्रकारः– आज्ञापकोऽभ्यर्थयिता अनुग्राहक इति । भृत्यादेर्निकृष्टस्य प्रवर्तना आज्ञा । गुर्वादेराराध्यस्य प्रवर्तना अभ्यर्थना । अनुग्रहो द्विविधः– उपदेशस्तत्सधर्माचरणं चेति । तत्र य इत्थमर्थमुपदिशति– 'त्वं शत्रुमित्थं व्यापादय', 'धर्मार्जनेऽयं तेऽभ्युपायः' इति, स उपदेष्टा । यः पुनः केनचिज्जिघांसितं पलायमानं वा निरुणद्धि, निरुद्धश्च हन्यते, स निरोद्धा अनुग्राहकः । मन्ता अनुमन्ता । यस्यानुमतिमन्तरेणार्थो न निर्वर्तते स राजादिको धर्माधर्मयोरनुमन्ता । कर्ता साक्षात्क्रियाया निर्वर्तकः । एते त्रयोऽपि स्वर्गफलेषु नरकफलेषु च कर्मसु धर्मेष्वधर्मेषु च भागिनः फलस्यांशभागिनः अंशभाजः । सर्वेषां च यथाकथंचित् कर्तृत्वम् । उ.

**यो भूय आरभते तस्मिन् फलविशेषः ॥**

तेषु प्रयोजकादिषु यो भूय आरभते यस्य व्यापारोऽर्थनिर्वृत्तावधिकमुपयुज्यते तस्मिन् फलविशेषो भवति । उ.

## वैखानसधर्मसूत्रम्

वर्णभेदेन आश्रमसंख्याव्यवस्था, सकामनिष्काम-कर्मणां स्वरूपं फलं च

**[1]ब्राह्मणानां चातुराश्रम्यं क्षत्रियाणां त्र्याश्रम्यं वैश्यानां द्व्याश्रम्यं विहितम् ॥**

**तत्फलं हि सकामं निष्कामं चेति द्विविधं भवति ॥**

**सकामं नामेह संसारेऽभिवृद्धिं ज्ञात्वा पुत्रलाभाद्यभिकाङ्क्षणमन्यत्स्वर्गादिफलकाङ्क्षणं वा ॥**

**निष्कामं नाम किंचिदनभिकाङ्क्ष्य यथाविहितानुष्ठानमिति ॥**

**तत्र निष्कामं द्विविधं भवति प्रवृत्तिर्निवृत्तिश्चेति ॥**

**प्रवृत्तिर्नाम संसारमनादृत्य संख्य( ? सांख्य)-ज्ञानं समाश्रित्य प्राणायामासनप्रत्याहारधारणायुक्तो वायुजयं कृत्वाऽणिमाद्यैश्वर्यप्रापणम् ॥**

**तत्पुनरपि तपःक्षयाज्जन्मप्रापकत्वाद्व्याधिबाहुल्याच्च नाऽऽद्रियन्ते परमर्षयः ॥**

**निवृत्तिर्नाम लोकानामनित्यत्वं ज्ञात्वा परमात्मनोऽन्यन्न किंचिदस्तीति संसारमनादृत्य च्छित्वा भार्यामयं पाशं जितेन्द्रियो भूत्वा शरीरं विहाय क्षेत्रज्ञपरमात्मनोर्योगं कृत्वाऽतीन्द्रियं सर्वजगद्बीजमशेषविशेषं नित्यानन्दममृतरसपानवत्सर्वदा तृप्तिकरं परं $ज्योतिः प्रवेशकमिति विज्ञायते ॥**

**[2]नित्यं श्रुतिस्मृत्युदितं कर्म कुर्वन्मनोवाक्कायकर्मभिः शनैर्धर्मं समाचरति ॥**

## वसिष्ठः

ऐहिकामुष्मिकश्रेयःसाधनं धर्मः

**[1]अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा ॥**

**[2]ज्ञात्वा चानुतिष्ठन् धार्मिकः ॥**

---

$ 'ज्योतिः' इत्यस्य प्रवेशनकर्मत्वम्, कर्मणि द्वितीया, असमानकर्तृकत्वेऽपि पूर्वे क्त्वान्तप्रयोगाश्चेति सर्वं छान्दसम् ।

(१) आप. २।२९।१–२ ; हिध. २७।६।१४–१५ ता म (ताऽनुम) (नरक०).

(२) बंध. १।९.

(१) बंध. २।१५.    (२) वाध. १।१.

(३) वाध. १।२–३ ; कुर. १८ (धार्मिकः प्रशस्यतामेति लोके प्रेत्य च स्वर्गभाक् भवति । ).

धर्मः विहितं कर्म, तत्कारी धार्मिकः । कुर.१८

**प्रशस्यतमो भवति लोके प्रेत्य च स्वर्गलोकं समश्नुते ॥**

**[2]अगृह्यमाणकारणो धर्मः ॥**

**[3]नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।**
**न च प्राणिवधः स्वर्ग्यस्तस्माद्यागे वधोऽवधः ॥**

आचारः परमो धर्मः

**[4]आचारः परमो धर्मः सर्वेषामिति निश्चयः ।**
**हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति ॥**

**नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणाः ।**
**हीनाचारमितो भ्रष्टं तारयन्ति कथंचन ॥**

**[5]आचारहीनं न पुनन्ति वेदा**
**यद्यप्यधीताः सह षड्भिरङ्गैः ।**
**छन्दांस्येनं मृत्युकाले त्यजन्ति**
**नीडं शकुन्ता इव जातपक्षाः ॥**

**[5]आचारहीनस्य तु ब्राह्मणस्य**
**वेदाः षडङ्गास्त्वखिलाः सयज्ञाः ।**
**कां प्रीतिमुत्पादयितुं समर्था**
**अन्धस्य दारा इव दर्शनीयाः ॥**

**नैनं छन्दांसि वृजिनात्तारयन्ति**
**मायाविनं मायया वर्तमानम् ।**
**द्वेऽप्यक्षरे सम्यगधीयमाने**
**पुनाति तद्ब्रह्म यथा इषेऽब्दाः ॥**

(१) **बाध.** १।७ ; **विश्व.** १।७ पृ. १३ ; **ब्रक.** ४७ (धर्मः) एतावदेव ; **ममा.** १।५ ; **चव्र.** २८ ब्रकवत् ; **कुर.** ४४ ब्रकवत् ; **पप्र.** ५७ ब्रकवत्.

(२) **बाध.** ४।७.

(३) **बाध.** ६।१–२.

(४) **बाध.** ६।३ ; **मच.** १।१०८ प्रथमपादमात्रम् (=).

(५) **बाध.** ६।४–५.

**[1]दुराचारो हि पुरुषो लोके भवति निन्दितः ।**
**दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥**

(१) दुराचारः निन्दिताचारः । ब्रक. १७

(२) दुराचारः मन्दाचारः । कुर. २४

**[2]आचारात्फलते धर्म आचारात्फलते धनम् ।**
**आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥**

**[3]सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।**
**श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥**

**†[4]तपोदानोपहारेषु व्रतेषु नियमेषु च ।**
**इज्याध्ययनधर्मेषु यो नाऽऽसक्तः स निष्क्रियः ॥**

**[5]धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम् ।**
**दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ॥**

**[6]कपालस्थं यथा तोयं श्वदृतौ च यथा पयः ।**
**दुष्टं स्यात्स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥**

## विष्णुः

मनुष्यस्योपकारको धर्म एव

**[7]जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**अर्थे दुष्परिहार्येऽस्मिन्नास्ति लोके सहायता ॥**

† स्थलनिर्देशादर्शे 'व्रतेषु नियमेषु चेज्याध्ययनधर्मेषु' इति द्वितीयतृतीयचरणमात्रम् । आदर्शान्तरे संपूर्णः श्लोक उपलभ्यते ।

(१) **बाध.** ६।६ ; **ब्रक.** १७ मनुवसिष्ठौ ; **कुर.** २४ मनुवसिष्ठौ ; **गप.** ८ पराशरः ; **सस्मृ.** २–३ पराशरः.

(२) **बाध.** ६।७.

(३) **बाध.** ६।८ ; **ब्रक.** १६ मनुवसिष्ठयमाः ; **कुर.** २१ यः सदा (समुदा) मनुवसिष्ठयमाः.

(४) **बाध.** ६।२२.

(५) **बाध.** ३०।१.

(६) **मुक्ता.** ४.

(७) **विस्मृ.** २०।२९, ३१.

किंच, उत्पन्नस्य जन्तोः शरीरारम्भककर्मक्षये मृत्युर्निश्चितः। मृतस्य च तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव। जन्मात्ययरूपेऽस्मिन्नर्थे प्रवृत्तिनिवृत्त्योः सहायता सहकारिता कस्यापि नास्ति, यतोऽयमर्थो दुःखेनाप्यपरिहरणीयः, प्रारब्धकर्मणां भोगैकनाश्यत्वात्। वै.

**सुकृतं दुष्कृतं चोभौ सहायौ यस्य गच्छतः॥**

किंच, इष्टानिष्टप्राप्तौ धर्माधर्मौ पुरुषस्य सहायौ। तावपि यस्य मृतस्य सहैव गच्छतः, नात्रैव स्वफलं प्रयच्छतः, शरीरारम्भककर्मसमाप्त्या शरीरसमाप्तेः। वै.

**[१]दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान्।**
**धर्ममेकं सहायार्थं वरयध्वं सदा नराः॥**

यदुक्तम् 'नास्ति लोके सहायता' इति, तदुपपादयति— दृष्ट्वेति। आक्रन्दः पृष्ठरक्षकः, मृतस्य लोके पश्चात् प्रियानुष्ठानेनोपकर्ता, तद्रहितोऽयं लोकः। यतः प्रतिदिनं म्रियमाणा एव बान्धवा दृश्यन्ते। अतः स्वस्यासहायतां ज्ञात्वा इहामुत्र च सहायार्थं धर्ममेवैकं भो नराः, सदा वरयध्वम्। वै.

**धर्म एकोऽनुयात्येनं यत्र क्वचन गामिनम्।**
**नन्वसारे नृलोकेऽस्मिन् धर्मं कुरुत मा चिरम्॥**

यदुक्तं 'धर्ममेकं सहायार्थं वरयध्वम्' इति, तदुपपादयति— धर्म इति। प्रातिस्विकशुभाशुभकर्मवशेन जन्तुर्यासु यासु योनिषु येषु येषु लोकेषु वा गच्छति तत्र तत्र धर्म एनमनुयाति। यद्यप्यधर्मोऽप्यनुयाति तथाऽपि तदनुगमनस्य दुःखहेतुतया परिहरणीयतयैव नानुष्ठेयता। धर्मानुगमनस्य तु सुखहेतुतयेष्टत्वेनासारे धर्मातिरिक्तसुखहेतुरहितेऽस्मिन् मनुष्यलोके कर्तव्यान्तरपरिहारेण धर्ममेव कुरुतेति। वै.

**श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।**
**न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वाऽकृतम्॥**

(१) **विस्मृ.** २०।३८, ४०–४१.

अचिरत्वमुपपादयति— श्व इति। 'न श्वः श्वमुपासीत। को हि मनुष्यस्य श्वो वेद' इति श्रुत्या संसारानित्यतां प्रतीत्य श्वः कार्यं कर्माद्यैव कार्यम्। तथा अपराह्णकर्तव्यं पूर्वाह्ण एव कार्यम्। यतोऽस्य जन्तोः कृतमकृतं च मृत्युर्न प्रतीक्षते, प्राप्ते काले नयत्येव। वै.

पशुहिंसा वर्ज्या, यज्ञार्थं कृता हिंसा न दोषाय

**[१]यावन्ति पशुरोमाणि तावत्कृत्वेह मारणम्।**
**वृथा पशुघ्नः प्राप्नोति प्रेत्य चेह च निष्कृतिम्॥**

वृथा पशुहिंसायामाह— यावन्तीति। पशुघ्नः इह लोके वृथा श्रौतस्मार्तपशुयागादिमन्तरेण पशुमारणं कृत्वा पशुरोमसमसंख्यानि दिनानीह लोके परलोके च निष्कृतिं दुःखानुभवनरकोपभोगरूपां प्राप्नोति, 'दिनानि पशुरोमभिः' इति स्मरणात्। वै.

**[२]यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा।**
**यज्ञो हि भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः॥**

वृथाशब्दव्यावर्त्यमाह— यज्ञार्थमिति। पशुसृष्टिः यज्ञार्थमेव ब्रह्मणा कृता। यतो यज्ञः ऐहिकामुष्मिकसकलकाम्यफलसाधनम्, अतः तदर्थे वधः अवधः अदृष्टदूषणं न हि। वै.

**[३]ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा।**
**यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः॥**

यज्ञेषु वध्यं स्तौति— ओषध्य इति। ओषध्यः पुरोडाशार्थं व्रीहियवादयः। पशवः वपाद्यर्थं छागादयः। वृक्षाः यूपाद्यर्थं पलाशादयः। तिर्यञ्चः विकर्षणाद्यर्थं मण्डूकादयः। पक्षिणः यागार्थं कपिञ्जलादयः। एते यज्ञार्थं वध्यमाना अप्युत्कृष्टं गन्धर्वादियोनित्वं परलोकं पुनः पुनः प्राप्नुवन्ति। वै.

(१) **विस्मृ.** ५१।६० ; **निक.** ३२९ चेह च निष्कृतिम् (जन्मनि जन्मनि) मनुर्विष्णुश्च.

(२) **विस्मृ.** ५१।६१ ; **निक.** ३२७ यज्ञो हि (यज्ञोऽस्य) मनुर्विष्णुश्च.

(३) **विस्मृ.** ५१।६३ ; **निक.** ३२७ पुनः (पराः) मनुर्विष्णुश्च.

मधुपर्के यज्ञे पितृदैवतकर्मणि च हिंसा अनुमता नान्यत्र

**'मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।**
**अत्रैव पशवो हिंस्या नान्यत्रेति कथंचन ॥**

पशुवधनिमित्तेषु परिसंख्यामाह– मधुपर्क इति । मधुपर्कः वरादीनाम् । यज्ञः ज्योतिष्टोमादिः । पितृकर्म श्राद्धम् । दैवतकर्म दुर्गाबलिदानादि । एतेष्वेव पशवो हिंस्याः, अन्यत्र मांसबुभुक्षादिषु कथंचित् प्राणात्ययादिष्वपि न । यत्तु 'प्राणात्यये तथा श्राद्धे' इति, तत् सिद्धमांसभक्षणार्थम्, न पशुहिंसार्थम् । वै.

**'यज्ञार्थेषु पशून् हिंसन्वेदतत्त्वार्थविद्द्विजः ।**
**आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥**

यज्ञपशुहिंसकं स्तौति– यज्ञार्थेष्विति । यः वेदानां तत्त्वम् अबाधितमर्थं ज्ञात्वा वेदविहितयज्ञार्थम्, न तु भक्षणार्थम्, पशून् हिनस्ति, स तान् पशून् आत्मानं च उत्तमां गतिं स्वर्गलक्षणां गमयतीत्युक्तोपसंहारः । वै.

**'गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ।**
**नावेदविहितां हिंसामापद्यपि समाचरेत् ॥**

मांसार्थं हिंसानिषेधस्य सर्वाश्रमसाधारण्यमाह– गृह इति । गृहादिवासिनः गृहस्थब्रह्मचारिवानप्रस्थाः, आत्मवान् संन्यासी च । द्विजग्रहणात् शूद्रस्यानिषेधः । एते आपदि प्राणसंशयेऽपि तद्रक्षार्थे मांसार्थे वेदाविहितां हिंसां नाऽऽचरेयुः । हिंसानिषेधात् सिद्धोपादानं वेदाविहितनिषेधाच्च यज्ञशिष्टोपादानमनिषिद्धम् । वै.

**'या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।**
**अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥**

नित्यां वैदिकहिंसां स्तौति– येति । वैदिकी नित्याऽग्नीषोमीयादिहिंसा अकरणे दोषहेतुत्वात् अहिंसैव अविहितहिंसावत् न दोषजनिका, वेदमूलत्वाद्धर्मस्य । वै.

आचारमहिमा

**'आचाराल्लभते ह्यायुराचारादीप्सितां गतिम् ।**
**आचाराद्धनमक्षय्यमाचाराद्धन्त्यलक्षणम् ॥**

इदानीं तत्तत्फलसाधनीभूतकर्माङ्गतया आचारस्य नैमित्तिकत्वमाह– आचारादिति । दीर्घायुष्यस्वर्गादीप्सितगत्यक्षय्यधनदुर्लक्षणसूचितदुःखध्वंससाधनानां कर्मणामाचारानुगृहीतानामेव तत्तत्फलनिष्पादकत्वम्, नान्यथा । चकारात् संततिसाधनत्वमपि, 'आचारादीप्सितां प्रजाम्' (मस्मृ. ४।१५६) इति मानवात् । न च साक्षादेवाऽऽचारस्य तत्तत्साधनत्वं साधु, आचाराभावे फलस्यैवासिद्धया तत्तत्फलश्रवणविरोधात् । यथा– 'दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥' इति । वै.

**'सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।**
**श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥**

आचारानुगृहीतेनापि तत्साधनेन कर्मणा न तत्सिद्धिः, प्राचीनादृष्टरूपसहकार्यभावादित्यत आह– सर्वेति । आयुरादिफलसूचकलक्षणरहितस्याप्याचारादनीर्ष्याद्यङ्गानुगृहीतायुरादिसाधनकर्मजन्यैहिकादृष्टेनैवाऽऽयुष्यादिफलसिद्धेर्न प्राचीनादृष्टापेक्षेति । यद्वाऽऽचारवत् श्रद्धानसूययोरपि सर्वकर्माङ्गत्वमाह– सर्वलक्षणहीनोऽपि यः सदा इति, 'यच्छ्रद्धया करोति तदेवास्य वीर्यवत्तरं भवति' इति श्रुतेः । वै.

ऐहिकामुष्मिकहितप्रदो धर्मः मुक्तिसाधनं च

**'युवैव धर्ममन्विच्छेदनित्यं जीवितं यतः ।**
**कृते धर्मे भवेत्कीर्तिरिह प्रेत्य च वै सुखम् ॥**

(१) विस्मृ. ५१।६४ ; निक. ३२७ यज्ञे (सोमे) ति कथंचन (त्यब्रवीन्मनुः) मनुर्विष्णुश्च.

(२) विस्मृ. ५१।६५ ; निक. ३२८ यज्ञा (एष्व) मनुर्विष्णुश्च.

(३) विस्मृ. ५१।६६.

(४) विस्मृ. ५१।६७ ; निक. ३२८ मनुर्विष्णुश्च.

(१) विस्मृ. ७१।९१ ; आपा. २ चाऽऽयु (ह्यायु) द्धन (द्द्रव्य) राद्ध (रो ह).

(२) विस्मृ. ७१।९२ ; आपा. २ यः सदा (समुदा).

(३) चव्र. १६-१७.

**यथेक्षुहेतोरपि सेवि( ? चि )तं पय-**
**स्तृणानि वल्लीरपि च प्रसिञ्चति ।**
**तथा नरो धर्मपथेन संचरन्**
**सुखं च कामांश्च वसूनि चाश्नुते ॥**
[१]**एवं $ज्ञानवतां कर्म कुर्वतोऽपि स्वजातिकम् ।**
**भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्यस्य वचनं यथा ॥**
**अनिर्वातो यथा वह्निर्ध्मायमानः प्रणश्यति ।**
**तथा कर्मविहीनस्य ज्ञानाग्निः संप्रणश्यति ॥**
**तस्मादाश्रमिभिः सर्वैर्नित्यं यज्ञोपवीतिभिः ।**
**नित्यनैमित्तिकं कर्म काले कार्यमतन्द्रितैः ॥**

## शङ्खलिखितौ

धर्मशास्त्रं द्विजशुद्धिसाधनम्

[२]**यथा हि मृन्मयं पात्रं दुष्टं दोषशतैरपि ।**
**पुनर्दाहेन शुध्येत धर्मशास्त्रैस्तथा द्विजाः ॥**
**धर्मशास्त्रप्रदीपोऽयं धार्यः पथानुदेशिकः ।**
**निष्यन्दं सर्वशास्त्राणां व्याधीनामिव भेषजम् ॥**

सप्त धर्मसाधनानि देशकालोपायद्रव्यश्रद्धापात्रत्यागाः

[३]**तत्र धर्मलक्षणानि— देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति । समस्तेषु धर्मोदयः साधारणोऽन्यथा विपरीतः । श्रद्धापात्रसंपन्नो धर्मः कालापेक्षः । श्रद्धाद्रव्योत्पत्तिरिति कालः । तन्मूलो देशः ॥**

$ निर्धारणे षष्ठीयम् । 'ज्ञानवतामपि' इत्यपिर्भिन्नक्रमः, कर्मविहीनं प्रति ज्ञानवैयर्थ्यस्य वक्ष्यमाणत्वात् । 'ज्ञानवतः' इति वा मूलपाठः । तत्राप्यपेर्भिन्नक्रमत्वं पूर्ववदेव ।

(१) **अप.** ३।५७ पृ. ९६१.

(२) **शंलिस्मृ.** ११–१३.

(३) **विश्व.** १।६ इति । समस्तेषु (इति समयः । तेषु) (श्रद्धापात्र... देशः ०) शङ्खः ; **अप.** १।६ (तत्र धर्मलक्षणानि०) साधारणो + (न्याय्यो) (श्रद्धापात्र ...देशः ०) शङ्खः ; **ब्रक.** ४४ ; **चव्र.** २५ कालापेक्षः (कालः संक्रान्त्यादिः) ; **कुर.** ४१ ; **पप्र.** ५३.

( १ ) देशाद्यभावे विपरीत इति वदन् नित्यानीमानीति दर्शयति । **विश्व. १।६**

( २ ) साधारणः दानेन समानः । न्याय्योऽन्येषां यागादिधर्माणाम् । अन्यथा सामस्त्याभावे विपरीतः धर्मस्यानुदय इत्यर्थः । सति सामर्थ्ये सर्वाङ्गानुष्ठानम् । असति तु काम्यं हेयम्, आवश्यकं तु यथाशक्ति कार्यम् । **अप. १।६**

( ३ ) देशः ब्रह्मावर्तादिः । कालः संक्रान्त्यादिः । उपायः इतिकर्तव्यता । ( द्रव्यं गवादि ) श्रद्धा शास्त्रार्थे दृढप्रत्ययः । श्रद्धा दृढद्रव्योत्पत्तिरिति कालः । अयमपि संक्रान्त्यादिवद्दानादिधर्मकालः । तन्मूलो देशः । एवंभूतकालसंपत्तौ देशोऽपि धर्मः संपद्यत इत्यर्थः । **ब्रक. ४४–४५**

( ४ ) द्रव्यं स्ववृत्त्युपार्जितम्, श्रद्धा आस्तिक्यबुद्धिः, पात्रं विद्यातपोवृत्तसंपन्नम्, एषु साधारणधर्मोत्पत्तिः । अन्यथा धर्मानुदयः । † **चव्र. २५**

( ५ ) देशः आर्यावर्तादिः । कालः संक्रान्त्यादिः । उपायः इतिकर्तव्यता । द्रव्यं त्याज्यमाज्यादि । श्रद्धा शास्त्रार्थेऽतिप्रत्ययः । पात्रं विद्यातपोवृत्तसंपन्नम् । त्यागः जपादेरप्युपलक्षणम् । समस्तेषु सर्वेषु सत्सु धर्मोदयः धर्मोत्पादः साधारणः सर्वेषु सत्सु भवति, भवति चैकेनापि विना । एवं च देशादीनामपि यथासंभवं प्रत्येकं कारणत्वमुक्तम् । अन्यथा देशादीनामन्यतमस्याभावे विपरीतः धर्मानुदयो वैगुण्यं वा । विशेषविहितदेशकालविशेषं विनाऽपि श्रद्धापात्रविशेषसंपत्तिमात्रेण विशिष्टधर्मसिद्धिमाह— श्रद्धापात्रसंपन्नो धर्मः कालापेक्षः । श्रद्धापात्रविशेषाभ्यामेव तावत्संपद्यते धर्मः, यदि कालो लभ्येत । कोऽसौ ? इत्यत आह— श्रद्धाद्रव्योत्पत्तिरिति कालः । श्रद्धापात्रसंपत्तौ यदा द्रव्यं स्यात् स एव कालो विशिष्टधर्महेतुः नापरो विषुवादिवदपेक्षणीयः । एवं देशोऽपीत्याह— तन्मूलो देशः । श्रद्धादिसंपत्तिरेव मूलं धर्मजनकत्वेन सहकारि यस्य स तथोक्तः । तेन श्रद्धा-

† शेषं ब्रकगतम् ।

पात्रद्रव्यसंपत्तौ विशेषविहितदेशकालव्यतिरेकेणापि निषिद्धेतरदेशकालयोर्धर्मो जायत इति समुदायार्थः ।
कृर. ४१

( ६ ) पात्रं विद्यातपोवृत्तसंपन्नम् । त्यागः स्वस्वत्वनिवृत्तिपूर्वकः परस्वत्वोत्पत्तिफलको व्यापारविशेषः । समस्तेषु सत्सु धर्मोदयः विशिष्टदानधर्मफलोदयः । उपलक्षणमिदम् । अन्येष्वपि सर्वाङ्गसंपन्नेष्वेव यागादिषु विशिष्टफलोदय इत्याह– साधारण इति । सर्वधर्मसाधारणोऽयं न्याय इत्यर्थः । अपरार्के तु साधारण इत्यस्यानन्तरं न्याय इत्यपि पाठो दृश्यते । याज्ञवल्क्योऽपि– 'देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् । पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥' ( यास्मृ. १।६ ) इति । अन्यथा उक्तदेशाद्यभावे विपरीतः तादृशधर्मफलाजनकः । विशेषविहितदेशादिकं विनाऽपि श्रद्धापात्रविशेषसंपत्तिमात्रेण पूर्वोक्तात् न्यूनां धर्मसिद्धिमाह– श्रद्धापात्रसंपन्नो धर्मः कालापेक्ष इति । श्रद्धापात्राभ्यामेव पूर्वोक्तकालातिरिक्तानिषिद्धकालसापेक्षाभ्यां धर्मः संपद्यते इति वाक्यार्थः । कालमेवाऽऽह– श्रद्धाद्रव्योत्पत्तिरिति काल इति । यस्मिन्नेव काले श्रद्धा द्रव्यं च स एव कालोऽपेक्षणीय इत्यर्थः । एवंभूतकालसंपन्नो यः कश्चनानिषिद्धो देशो धर्मस्य कारणमित्याह– तन्मूलो देश इति । स प्रागुक्तः कालो मूलं धर्मजनने सहकारी यस्येत्यर्थः । श्रद्धापात्रद्रव्यसंपत्तिरप्रतिषिद्धौ देशकालौ धर्मसंपत्तिरिति समुदायार्थः ।
¶ पप्र. ५३–५४

धर्मशास्त्राणि अज्ञानरागद्वेषनाशसाधनानि

**'रागद्वेषाग्निदग्धानामज्ञानविषपायिनाम् ।**
**चिकित्सा धर्मशास्त्राणि व्याधीनामिव भेषजम् ॥**

( १ ) रागद्वेषांशेन तन्मूलं भ्रान्तिज्ञानं लक्ष्यते ।
ब्रक. ३३

( २ ) रागद्वेषादिदग्धानां सतामज्ञानविषपायिनां भ्रमरूपज्ञानभाजां चिकित्सा धर्मशास्त्राणि, वैषयिकज्ञानाधानद्वारा मोहनिवर्तकत्वात् ।
कृर. ३९

**'श्रुतिस्मृत्युदितान्धर्मान्मानवांस्तान्पृथक्पृथक् ।**
**कुर्वन्तः प्राप्नुयुर्धर्ममन्यथा नरके गतिः ॥**

## महाभारतम्

तपोऽध्ययनं वैदिककर्माणि वित्तार्जनं च शुद्धचित्तेन कर्तव्यानि, अशुद्धचित्तकृतानि तानि पापकराणि

**'तपो न कल्कोऽध्ययनं न कल्कः**
**स्वाभाविको वेदविधिर्न कल्कः ।**
**प्रसह्य वित्ताहरणं न कल्क-**
**स्तान्येव भावोपहतानि कल्कः ॥**

ननु अज्ञानर्थको युद्धादिप्रलापो भूयान् दृश्यते, कणिकनीत्यादिश्चाधर्मप्रवर्तकोऽपि ग्रन्थोऽस्ति । ततश्च क्वचिद्धर्मादिकथने सत्यपि विषसंपृक्तान्नवत्कृत्स्नमप्येतद्धेयमेव स्यादित्याशङ्क्याऽऽह– तप इति । तपः कृच्छ्रचान्द्रायणादि, कल्कः पापम्, तदभावो नकल्कः । 'कल्कोऽस्त्री शमलैनसोः' इत्यमरः । नभ्राडादिवन्नञः प्रकृतिभावः । तपः निर्मलं नैर्मल्यसाधनमित्यर्थः । विरोधित्वं वा नञर्थः । तेन तपः पापनाशकमित्यर्थः । अध्ययनं वेदस्य । स्वाभाविकः स्वस्ववर्णाश्रमादिपुरस्कारेण विहितः 'शमो दमस्तपः शौचम्' ( भगी. १८।४२ ) इत्यादिः, $वेदविधिः वेदोक्तो विधिः अग्निहोत्रसंध्योपासनादिः । प्रसह्य प्रकर्षेण सोढ्वा क्षुधादिदुःखमपि सोढ्वा वित्तस्य आहरणं शिलोञ्छादिना अर्जनं तदपि नकल्कः नैर्मल्यसाधनम् । तान्येव तपआदीनि भावेन चित्ताभिप्रायेण उपहतानि कल्कः पापं पापहेतुः भवन्ति । यथा– शीतादिसहनं वानप्रस्थैः कटकस्थैश्च तुल्यवत्क्रियते तथाऽपि भावभेदात्तदेकस्य स्वर्गाय अन्यस्य नरकाय भवति । वक्ष्यति च– 'चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छ-

---

¶ शेषं ब्रकगतम् ।

(१) ब्रक. ३३ ; चव. २३ द्वितीयचरणे (मग्नानां विषयाम्भसि) धर्म (सर्व) ; कृर. ३९ षाग्नि (षादि) ; प्रपा. २ ; मुक्ता. ६.

$ स्वाभाविकविधिर्वेदविधिश्चेति कोटिद्वयमिति नीलकण्ठाभिप्रायोऽस्माद्व्याख्यानात्प्रतीयते ।

(१) चव. २४.

(२) भा. १।१।२१० ; भाप्र. १।१।२७५.

न्यथाकृतानि । मानाग्निहोत्रमुत मानमौनं माने-नाधीतमुत मानयज्ञः ॥' इति । एवं शिलोञ्छादिकमपि दम्भेन कृतं पापाय, अन्यथा श्रेयसे भवति । एवं भारतेऽपि धर्मब्रह्मप्रतिपादने एव परमतात्पर्यम्, अर्थ-वादजातमपि 'युधिष्ठिरादिवद्व्यवहर्तव्यम्, न दुर्योधना-दिवत्' इत्याशयेनोक्तम् । तत्र हीनं पक्षमुपाददानः स्वार्थात् भ्रश्यति, तेनाधीतमपि भारतं पापायैव भवती-त्यर्थः । तथा च सर्वस्मादपि ग्रन्थात्सारमेवाऽऽदेयम्, इतरत् त्याज्यमिति श्रूयते– 'ग्रन्थमभ्यस्य मेधावी ज्ञान-विज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थ-मशेषतः ॥' इति । नीटी.

**'यद्वै नृशंसं तदपथ्यमाहु-**
**र्यः सेवते धर्ममनर्थबुद्धिः ।**
**अस्वोऽप्यनीशश्च तथैव राजं-**
**स्तदार्जवं स समाधिस्तदार्यम् ॥**

इदं पदमप्राप्तो मोक्षेच्छया धर्ममेव सेवेतेत्याह– तद्वा इति । यः पुरुषोऽनर्थबुद्धिः नास्ति अर्थे मोक्षे बुद्धिर्यस्य स तथाभूतः सन् स्वर्गाद्यर्थं धर्मं सेवते, तत्सेवनं नृशंसं असत्यं च, मुमुक्षाहीनत्वादनित्यफलत्वाच्च । 'विवि-दिषन्ति यज्ञेन दानेन' इत्यादिश्रुतिसिद्धं धर्मस्य मोक्ष-हेतुत्वं परित्यज्य काम्यधर्मकृत आत्मानं नानादुःखमये संसारे पातयित्वा हन्तीत्यर्थः । एवम् अनीशस्य अजिते-न्द्रियस्य अर्थः धनमपि नृशंसमसत्यं च । यत्तु मोक्षार्थे कर्मकरणं तदार्जवं कर्मणामुचितं फलम् । तदेव समाधिः योगसिद्धिमूलम् । तत् आर्यं तदेव गम्यं प्राप्यं ज्ञान-साधनमित्यर्थः । 'ऋ गतौ' अस्मात् 'ऋहलोर्ण्यत्' (पासू. ३।१।१२४) । द्वयोरपि योगज्ञानमूलयोर्मूलं निष्कामधर्म एवेत्यर्थः । नीटी.

अधर्मो दुःखदः

**'स्वल्पमेव यथा दत्तं दानं बहुगुणं भवेत् ।**
**अधर्म एवं विप्रर्षे बहुदुःखफलप्रदः ॥**

(१) भा. १।८७।४ ; भाम्. १।९२।५ यद्वै (तद्वै) पथ्य (सत्य) अस्वोऽप्यनीशश्च (अर्थोऽप्यनीशस्य).

(२) भाम्. १।१०८।१२, १४.

अणीमाण्डव्यस्थापिता मर्यादा– चतुर्दशवर्षपर्यन्तं निषिद्धाचरणं नाधर्म इति

**अणीमाण्डव्य उवाच–**

**बालो हि द्वादशाद्वर्षाज्जन्मतो यत्करिष्यति ।**
**न भविष्यत्यधर्मोऽत्र न प्रज्ञास्यन्ति वै दिशः ॥**

दिशः देशनाः धर्मशास्त्राणि यतो न प्रज्ञास्यन्ति, बालत्वात् । नीटी.

**'मर्यादां स्थापयाम्यद्य लोके धर्मफलोदयाम् ।**
**आ चतुर्दशमाद्वर्षान्न भविष्यति पातकम् ।**
**परतः कुर्वतामेवं दोष एव भविष्यति ॥**

'बालो हि' इति हेतूपन्यासपूर्वकं द्वादशवर्षपर्यन्तं कृताकृतप्रत्यवायो नास्तीत्युत्सर्ग उक्तः । स्वयं तु वर्षद्वयं तत्राधिकं प्रचिक्षेप । चतुर्दशादूर्ध्वं पापमस्तीति पौराणं मतमिदम् । वस्तुतस्तूक्तहेतोः पुण्यपापविभागज्ञानपर्यन्त-मेव पापानुत्पत्तिः । तेन पञ्चवर्षाद्यन्तर एव दोषो नास्तीत्यादिवचनं विद्वदभिप्रायम् । अन्यथा कलिशेषे अल्पायुष्ट्वेन पापाभावप्रसङ्गः स्यात् । नीटी.

लोकवेदविरुद्धाचारोऽधर्मः

**'लोकवेदविरुद्धं त्वं नाधर्मं धार्मिकः शुचिः ।**
**कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी ॥**

**युधिष्ठिर उवाच–**

**'सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।**
**पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥**

सूक्ष्मः 'नैकस्यै बहवः सहपतयः' इति श्रुत्या सहेति युगपद्बहुपतित्वनिषेधो विहितो न तु समयभेदेन, तत्रश्चापि नि(१ अनि)षिद्धम् । मात्रा 'समेत्य भुङ्क्त' इत्याज्ञप्तं च न लङ्घनीयम् । पित्रोराज्ञया निषिद्धमपि कर्तव्यं

(१) भा. १।१०१।२६ परतः (परेण) ; भाम्. १।१०८।१६–१७ दशमा (दशका) मेवं (मेव).

(२) भा. १।१८७।२७ ; भाम्. १।१९५।२८ धार्मिकः शुचिः (धर्मविच्छुचिः) ; पमा. १।८२ (लोक-वेदविरुद्धोऽयं धर्मो धर्मभृतां वर ।) पू.

(३) भा. १।१८७।२८ ; भाम्. १।१९५।२९ ; पमा. १।८२ विद्मो वयं गतिम् (विद्म गतिं वयम्) पू.

परशुरामकृतमातृवधवत् , किमुतानिषिद्धमिति भावः । पूर्वेषां प्रचेतःप्रभृतीनाम् । तैर्यातं वर्त्म बहूनामेकपत्नीत्वम् अनुयामहे । तच्च आनुपूर्व्येणैव, न त्वक्रमेण । नीटी.

**[1]अधर्मो वा महानस्तु वने वा मरणं मम ।**
**शरीरस्यापि नाशेन धर्म एव विशिष्यते ॥**

वाशब्दः इवार्थे । येनाधर्मेण मम वने मरणमिव स्यात्स एवास्तु, यतोऽस्मात् ब्रह्मस्वरक्षणजो धर्मः श्रेष्ठः । नीटी.

**अर्जुन उवाच—**

**[2]न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ॥**

विपरीतार्थदर्शनं नाशाय न देवाः कालो वा

**धृतराष्ट्र उवाच—**

**[3]यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।**
**बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति ॥**

अवाचीनानि विपरीतानि । नीटी.

**[4]बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।**
**अनयो नयसंकाशो हृदयान्नापसर्पति ॥**
**[5]अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः ।**
**उत्तिष्ठन्ति विनाशान्ते नरं तच्चास्य रोचते ॥**
**[6]न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।**
**कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥**

(१) भा. १।२०५।१७ ; भामु. १।२१३।२० र्मो वा (र्मो वै) स्यापि ना (स्य विना).
(२) भा. १।२०५।२९ ; भामु. १।२१३।३४.
(३) भा. २।७२।८ ; भामु. २।८१।८ सोऽपा (सोऽवा).
(४) भा. २।७२।९ ; भामु. २।८१।९ प्रत्युप (समुप).
(५) भा. २।७२।१० ; भामु. २।८१।१० शान्ते नरं (शाय नूनं).
(६) भा. २।७२।११ ; भामु. २।८१।११.

श्रेयःकामेन साधुजनसंसर्गः कार्यः , असतां च संसर्गस्त्याज्यः

**[1]श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः ।**
**शुभाशुभाधिवासेन संसर्गं कुरुते यथा ॥**
**[2]वस्त्रमापस्तिलान्भूमिं गन्धो वासयते यथा ।**
**पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥**

आपः अपः । नीटी.

**[3]मोहजालस्य योनिर्हि मूढैरेव समागमः ।**
**अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥**
**तस्मात्प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ।**
**सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥**
**[4]येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।**
**तान्सेवेत्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी ॥**

अवदातानि शुद्धानि । विद्या वैदिकी, न तु लौकिक्यादिः । कर्म वेदार्थानुष्ठानम् । योनिः पूर्वप्रज्ञा । श्येनयागादेर्हिंसासाधनस्य वेदार्थत्वेऽपि नावदातत्वमस्ति । अतो जन्मान्तरीयसंस्कारोऽपि शुद्ध एवापेक्षितः । ' तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ' इति श्रुतेरत्र योनिशब्देन मुख्यं प्रवृत्तिकारणं पूर्वप्रज्ञैव ग्राह्यम् । अन्ये तु योनिशब्देन पितृमातृशुद्धिमाहुः । समास्या संगतिः, संपूर्वस्य ' अस गतौ ' इत्यस्य रूपम् । अपिशब्दाच्छास्त्रमपि सम्यग्ज्ञानहेतुतया गुरु । सत्सङ्गस्तु ततोऽपि गरीयान् , ' न गाथा गाथिनं शास्ति ' इति केवलशास्त्रस्य प्रागेव अकिंचित्करत्वोक्तेः । नीटी.

**[5]निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु ।**
**पुण्यमेवाऽऽप्नुयामेह पापं पापोपसेवनात् ॥**

(१) भा. ३।१।२१ ; भामु. ३।१।२३ संसर्गं (संसर्गः).
(२) भा. ३।१।२२ ; भामु. ३।१।२४.
(३) भा. ३।१।२३–२४ ; भामु. ३।१।२५–२६.
(४) भा. ३।१।२५ ; भामु. ३।१।२७ योनिर्विद्या च (विद्या योनिश्च).
(५) भा. ३।१।२६ ; भामु. ३।१।२८.

निरारम्भाः अग्निहोत्राद्यकुर्वाणा अपि । हिशब्दः 'एतद्ध स्म वै तद्विद्वांसः पूर्वेऽग्निहोत्रं न जुहवाञ्चक्रिरे' इति श्रौतीं प्रसिद्धिं द्योतयति । सत्सङ्गाल्लब्धात्मविद्यानां किमग्निहोत्रादिनेति भावः । नीटी.

'असतां दर्शनात्स्पर्शात्संजल्पनसहासनात् ।
धर्माचाराः प्रहीयन्ते न च सिध्यन्ति मानवाः ॥

न सिध्यन्ति । सिद्धिः चित्तशुद्धिः, तां न प्राप्नुवन्ति, धर्माचारहीनत्वात् । नीटी.

'बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥

'अनीचैर्नाप्यविषयैर्नाधर्मिष्ठैर्विशेषतः ।
ये गुणाः कीर्तिता लोके धर्मकामार्थसंभवाः ।
लोकाचारात्मसंभूता वेदोक्ताः शिष्टसंमताः ॥

अविषयैः अगोचरैः अपरिचितैरित्यर्थः । धर्मकामार्थसंभवाः धर्मादीनां संभवः उत्पत्तिः येभ्यस्ते । शिष्टानां वेदप्रामाण्यवादिनां संमताः । नीटी.

'ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः ।
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोभिकाङ्क्षिणः ॥

समस्ताः एकीभूताः । व्यस्ताः पृथक्पृथग्भूताः । श्रेयः प्रशस्ततरमात्मसुखम् । नीटी.

अष्टविधो धर्ममार्गः

'इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥
अत्र पूर्वश्चतुर्वर्गः पितृयानपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ॥

पितृयानपथे धूमादिमार्गे आवृत्तिफले । कर्तव्यम् अवश्यानुष्ठेयं नित्याग्निहोत्रसंध्योपासनादि । अभिमानात् सङ्गात् । नीटी.

(१) भा. ३।१।२७ ; भामु. ३।१।२९ जल्पन (जल्पाच्च) न च सिध्यन्ति (सिध्यन्ति न च).

(२) भा. ३।१।२८ ; भामु. ३।१।३०.

(३) भा. ३।१।२९ प्रथमार्धं नास्ति ; भामु. ३।१।३१ चारात्म (चारेषु).

(४) भा. ३।१।३० ; भामु. ३।१।३२.

(५) भा. ३।२।७१–७६ ; भामु. ३।२।७५–८०.

उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥

उत्तरश्चतुर्वर्गः सत्यं दमः क्षमा अलोभश्च देवयानः अर्चिरादिमार्गः अनावृत्तिफलः । अष्टाङ्गेन वक्ष्यमाणसंकल्पसंबन्धाद्यङ्गाष्टकवता मार्गेण प्रकारेण यत्कर्तव्यं तदाचरेदिति पूर्वेण संबन्धः । विशुद्धात्मा शुद्धचित्तः । नीटी.

अष्टविधानि सम्यक्कर्माणि

सम्यक्संकल्पसंबन्धात्सम्यक्चेन्द्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ॥

सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात् ।
सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ।
एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ॥
रागद्वेषविनिर्मुक्ता ऐश्वर्यं देवता गताः ॥

संकल्पः मानसं कर्म, तस्य संबन्धः निरोधः, तेन अन्तरिन्द्रियनिग्रहाख्यः शम उक्तः । इन्द्रियनिग्रहः दमः । व्रतविशेषः अहिंसादीनि व्रतानि, तेषां विशेषः सार्वभौमत्वम् । सर्वदेशे(षु) कालेषु च सर्वप्रकारेण हिंसात्याग इत्यर्थः । आहारः हितमितमेध्याशनम्, तस्य योगात् । कर्मणां विधिवत् त्यागः, ततश्चित्तनिरोधनात् । नीटी.

राज्यस्य त्रिवर्गस्य च मूलं धर्मः

विदुर उवाच–

'त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ॥

द्रौपदीयुधिष्ठिरसंवादः– ईश्वरस्य वैषम्यं नैर्घृण्यं चेत्याक्षेपो द्रौपद्याः

'न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।
रोषादिव प्रवृत्तोऽयं यथाऽयमितरो जनः ॥

ईशो न दयालुः, प्रत्युत नृशंस इत्यर्थः । नीटी.

(१) भा. ३।५।४ ; भामु. ३।४।४.

(१) भा. ३।३१।३७ ; भामु. ३।३०।३८.

**¹आर्यान्छीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।**
**अनार्यान्सुखिनश्चैव विह्वलामीव चिन्तया ॥**

किंच, ईशस्य दुष्टेषु पक्षपातः साधुषु च द्वेषो दृश्यते, अतः स निन्द्य एवेत्याह– आर्यानित्यादित्रिभिः । चिन्तया धनादिध्यानेन । नीटी.

**²तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।**
**धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥**

**आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।**
**धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥**

धर्माभिशङ्किनीति पाठे धर्मश्रद्धाशून्ये । फलं यज्ञादिना तृप्तिं किमश्नुते ? अपि तु नैवेत्यर्थः । नीटी.

**कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।**
**कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥**

कृतं कर्म यदि कर्तारमेव गच्छति, न त्वन्यम् , तर्हि कारयितृत्वादीश्वरोऽपि पापेन लिप्येतैवेत्यर्थः । नीटी.

**³अथ कर्म कृतं पापं न चेत्कर्तारमृच्छति ।**
**कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥**

कर्तारं कारयितारमीश्वरम् ऐश्वर्यादेव कर्म न स्पृशति तर्हि तत्प्रयोज्या जीवा एव कर्मभिर्हताः । तथा च ईश्वरो बलादीनान् नरके पातयतीत्यत्यन्तं निन्द्य एव स इति भावः । नीटी.

(१) भा. ३।३१।३८ ; भाम्. ३।३०।३९ कर्शि (कर्षि) लामीव (लानिव).

(२) भा. ३।३१।३९–४१ ; भाम्. ३।३०।४०–४२.

(३) भा. ३।३१।४२ ; भाम्. ३।३०।४३ कर्म कृ (कर्मकृ).

युधिष्ठिरोक्तिः– द्रौपद्या उक्तं नास्तिक्यमयुक्तम् , धर्मः जगद्धारणकरः अमरत्वफलकः निष्काममाचरणीयः

**युधिष्ठिर उवाच–**

**¹वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।**
**उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥**

एवं धर्मेश्वरयोराक्षेपे प्राप्ते प्रत्यक्षानुमानागमैस्तौ समर्थयितुमध्याय आरभ्यते– वल्गु चित्रेति । वल्गु शोभनम् । श्लक्ष्णं सुकुमारम् । नास्तिक्यं वेदविद्विष्टम् । नीटी.

**²नाहं धर्मफलान्वेषी राजपुत्रि चराम्युत ।**
**ददामि देयमित्येव यजे यष्टव्यमित्युत ॥**

यदुक्तं 'त्वां चेद्व्यसनिनम्' (३।३०।४) इत्यादिना धर्मस्य नैष्फल्ये त्वदभिभव एव दृष्टान्त इति तत्राऽऽह– नाहमिति । कर्म धर्मम् । फलार्थिना कृतो धर्मो यदि निष्फलः स्यात्तर्हि भवेदयमाक्षेपः , न त्वहं तथा चरामीत्यर्थः । ननु फलेच्छाया अभावे किमर्थं धर्मः कर्तव्य इत्यत आह– ददामीत्यादिना । $देयम् ऋणम् इत्येव ददामि, 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति श्रुतेः । ऋणवा ऋणवान् । नीटी.

**³अस्तु वाऽत्र फलं मा वा कर्तव्यं पुरुषेण यत् ।**
**गृहानावसता कृष्णे यथाशक्ति करोमि तत् ॥**

$ अध्ययनदानप्रतिग्रहेष्वन्यतमो यो दानधर्मः स कर्तव्य इत्येवाहं ददामीति मूलवाक्यार्थबोधः सरलः, दाधातोरभिधेयार्थपरत्वात् । वाक्यस्यास्य ऋणत्रयविषयकत्वं तु क्लिष्टबोधम् । 'जायमानो वै' इति श्रुतौ न ऋणदानं विधीयते, अपि तु औत्पत्तिकर्णापाकरणमेव । दाधातोर्ऋणापाकरणपरत्वे तु लक्षणाक्लेशः । किंच, तथा सति 'यजे यष्टव्यमिति' इत्यर्थस्य पौनरुक्त्यदोष आपद्यते, यजनकर्तव्यताया ऋणत्रयापाकरणकर्तव्यतायामन्तर्भावात् ।

(१) भा. ३।३२।१ ; भाम्. ३।३१।१.

(२) भा. ३।३२।२ ; भाम्. ३।३१।२ धर्म (कर्म).

(३) भा. ३।३२।३ ; भाम्. ३।३१।३ गृहानाव (गृहे वा व).

यथाशक्ति यत्कर्तव्यं तत्करोमीत्यन्वयः । नीटी.

[1]**धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।**
**आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ।**
**धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ॥**
[2]**धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥**

वेदवाक्यात् शिष्टाचाराच्च निष्काममेव धर्मं चरामि । 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति स्वर्गादिफलश्रुतिस्तु धर्मे प्ररोचनार्थेति भावः । स्वभावात् 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥' इति गीतावचनोक्तधर्माचरणशील एव क्षत्रियः, नान्य इति नियमात् मे मया धर्मे मनो धृतम्, यतः धर्मवाणिज्यकः धर्मात्स्वर्गादिफलमिच्छन् हीनः मुख्यफलात् च्युतः, अत एव जघन्यः नीचः । नीटी.

[3]**न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।**
**यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥**

धर्मफलं 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेर्विद्या विविदिषा वा धर्मफलं मुख्यम्, तन्नाऽऽप्नोति । यश्चैनं धर्मं शङ्कते विश्वासं न कुरुते सोऽपि धर्मफलं नाऽऽप्नोति । पापचेतनः पापबुद्धिः । नीटी.

[4]**अतिवादान्मदाच्चैव मा धर्ममतिशङ्किथाः ।**
**धर्मातिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥**

अतिवादात् मानान्तरमतिक्रान्तः वादः वचनं तस्मात् वेदैकप्रामाण्यात् । नीटी.

[5]**धर्मो यस्यातिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।**
**वेदाच्छूद्र इवापेयात्स लोकादजरामरात् ॥**

आर्षम्, ऋषयो मन्त्रास्तद्द्रष्टारो मन्वादयो वा । धर्ममूलभूतं मन्त्रजातं वा मन्वादिवाक्यं वेत्यर्थः । 'अर्थे वा' इति पाठे फले विषये इत्यर्थः । दुर्बलात्मनः विवेकाक्षमचित्तस्य । अपेयात् अपगच्छेत् । लोकात् आत्मलोकात् । 'स्वर्लोकात्' इति पाठेऽपि आनन्दरूपादात्मलोकादित्यर्थः, अनात्मलोकेषु अजरामरत्वयोरसंभवात् । अजरामरात् मोक्षरूपात् । नीटी.

[1]**वेदाध्यायी धर्मपरः कुले जातो यशस्विनि ।**
**स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥**

बालोऽपि स्थविरेषु योक्तव्यः नियोक्तव्यः गणनीयः । नीटी.

[2]**पापीयान्हि स शूद्रेभ्यस्तस्करेभ्यो विशेषतः ।**
**शास्त्रातिगो मन्दबुद्धिर्यो धर्ममतिशङ्कते ॥**

[3]**प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ।**
**मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविताम् ॥**

एवं धर्मस्य वेदैकगम्यत्वादनतिशङ्क्यत्वं वेदस्य च श्रेष्ठप्रमाणत्वमुक्त्वा प्रत्यक्षत्वादपि धर्मफलस्यानतिशङ्क्यत्वमाह– प्रत्यक्षं हीत्यादिना । चिरजीविता चिरजीवी । नीटी.

[4]**व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।**
**अन्ये च ऋषयः सिद्धा धर्मेणैव सुचेतसः ॥**
[5]**प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान् ।**
**शापानुग्रहणे शक्तान्देवैरपि गरीयसः ॥**

---

(१) **मा.** ३।३२।४ ; **मामु.** ३।३१।४–५.
(२) **मामु.** ३।३१।५.
(३) **मा.** ३।३२।५ ; **मामु.** ३।३१।६.
(४) **मा.** ३।३२।६ ; **मामु.** ३।३१।७ न्मदान्चैव (द्वदाम्येष) मति (मभि) धर्माति (धर्माभि).
(५) **मा.** ३।३२।७ ; **मामु.** ३।३१।८ यस्याति (यस्याभि).

(१) **मा.** ३।३२।८ ; **मामु.** ३।३१।९ यश (मन) राजभि (राजर्षि).
(२) **मा.** ३।३२।९ ; **मामु.** ३।३१।१० न्हि स (न्स हि) विशेषतः (विशिष्यते) मति (मभि).
(३) **मा.** ३।३२।१० ; **मामु.** ३।३१।११ जीविताम् (जीविता).
(४) **मा.** ३।३२।११ ; **मामु.** ३।३१।१२ सिद्धा (सर्वे).
(५) **मा.** ३।३२।१२ ; **मामु.** ३।३१।१३ देवैर (देवेभ्योऽ).

[1]एते हि धर्ममेवाऽऽदौ वर्णयन्ति सदा मम ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥

धर्मं कर्तव्यं वर्णयन्ति । प्रत्यक्षागमबुद्धयः अस्माकं वेदैकगम्यमप्यर्थं प्रत्यक्षेण पश्यन्त इत्यर्थः । नीटी.

[2]अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥

क्षेपः निन्दा । शङ्का फले संशयः । नीटी.

[3]उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ॥

एतच्च मूढकार्यमित्याह— उन्मत्तानित्यादिना । आगतनिश्चयान् प्राप्ततत्त्वनिश्चयान् । नीटी.

[4]धर्मातिशङ्की नान्यस्मिन्प्रमाणमधिगच्छति ।
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ॥

[5]इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ।
एतावान्मन्यते बालो मोहमन्यत्र गच्छति ॥

उन्नद्धः दृप्तः । श्रेयसः धर्मस्य । अन्यत्र अतीन्द्रिये धर्माद्यर्थे । नीटी.

[6]प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते ।
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ॥

ध्यायन् अर्थान् चिन्तयन्नपि । लोकान् धर्मप्राप्यान् । नीटी.

[7]प्रमाणान्यतिवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभानुगो मूढो नरकं प्रतिपद्यते ॥

(१) भा. ३।३२।१३ ; भामु. ३।३१।१४ दा मम (दाऽनघे).

(२) भा. ३।३२।१४ ; भामु. ३।३१।१५ रजोमू (राज्ञि मू).

(३) भामु. ३।३१।१६.

(४) भा. ३।३२।१५ ; भामु. ३।३१।१६–१७ धर्माति (धर्माभि) स्मिन्प्र (स्मात्प्र).

(५) भा. ३।३२।१६ ; भामु. ३।३१।१७ एतावा (एताव).

(६) भा. ३।३२।१७ ; भामु. ३।३१।१८ मति (मभि).

(७) भा. ३।३२।१८ ; भामु. ३।३१।१९ न्यतिवृ (द्धि निवृ) नुगो (तिगो).

कामलोभौ अति अत्यन्तं गच्छति प्राप्नोतीति कामलोभातिगः । नीटी.

[1]यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि सोऽमुत्राऽऽनन्त्यमश्नुते ॥

आनन्त्यं ब्रह्मभावम् । नीटी.

[2]आर्षं प्रमाणमुत्क्रम्य धर्मानपरिपालयन् ।
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥

शं कल्याणम् । नीटी.

[3]यस्य नाऽऽर्षं प्रमाणं स्याच्छिष्टाचारश्च भाविनि ।
न वै तस्य परो लोको नायमस्तीति निश्चयः ॥

[4]शिष्टैराचरितं धर्मं कृष्णे मा स्मातिशङ्किथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥

[5]धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमृच्छतः ॥

[6]अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥

अनुमानमपि धर्मे प्रमाणमित्याह— अफल इति । अयं भावः— यदि धर्मो न स्यात्तर्हि ऊर्ध्वगतिं कश्चिदपि नाऽऽप्नुयात् । जायस्व म्रियस्वेति मशकादीनां पूर्वसंस्कारात्पुनः पुनस्तत्तज्जातीयदेहस्यैव प्राप्तिश्रुतेरन्धतमःप्राप्तिरेव सर्वेषां स्यात् । ततश्च शास्त्रानर्थक्यम् । यदि तु धर्मोऽस्ति तर्हि तेषामपि विशिष्टदेशनिवासादिजनितस्य पुण्यस्यापरिहार्यत्वात् ऊर्ध्वगतिः संभवति । नीटी.

(१) भा. ३।३२।१९ ; भामु. ३।३१।२०.

(२) भा. ३।३२।२० ; भामु. ३।३१।२१ धर्मानपरि (धर्मं न प्रति).

(३) भामु. ३।३१।२२.

(४) भा. ३।३२।२१ ; भामु. ३।३१।२३ स्माति (स्माभि).

(५) भा. ३।३२।२२ ; भामु. ३।३१।२४ पारमृ (पारमि).

(६) भा. ३।३२।२३ ; भामु. ३।३१।२५.

¹निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विघातेनैव युज्येयुर्न चार्थं किंचिदाप्नुयुः ॥

ननु यथा तृणात् क्षीरं क्षीराद्दधीतिवत् परिणामक्रमादेव तत्तद्विशिष्टदेहलाभादूर्ध्वगतिर्भविष्यति, किं धर्मेण ? इत्याशङ्क्याऽऽह- निर्वाणमिति । दध्नोऽपि गवोपभुक्तात् क्षीरमूत्रादिनीचपरिणामदृष्टेर्नैतद्युक्तम् । तथा च मोक्षासिद्धिः । तस्यां च सत्यां बोधशून्यां पशुजीविकां जीवेयुः अन्धतमः प्रविशेयुरेवेत्यर्थः । ततश्च ते पशुतुल्याः विद्यां विद्यया नैव युज्येरन् । सन्तु तर्हि स्वभावेनैव सर्वेऽपि प्राणिनः, किं विद्यया ? किं वा मोक्षेण ? इत्याशङ्क्याऽऽह- न चार्थं केचिदाप्नुयुरिति । अयं भावः- घटशरावोदञ्चनादिकार्यवैचित्र्यं क्रियावैचित्र्यायत्तं यथा दृष्टं तथा ऐहिकयत्नाभावेऽपि नृषु पश्वादिषु ज्ञानैश्वर्यतारतम्यं दृश्यमानं जन्मान्तरीयक्रियानुमापकम् । तदभावे जगद्वैचित्र्यस्याऽऽकस्मिकनिखिलाभादेश्चासंभवः स्यादिति । नीटी.

²तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥

अनादिपरंपरागतः शिष्टाचारोऽपि धर्मास्तित्वे प्रमाणमित्याह- तपश्चेत्यादिना । नीटी.

नाऽऽचरिष्यन्परे धर्मं परे परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥

विप्रलम्भः वञ्चनम् । अयं यज्ञादिधर्मः । नीटी.

ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥

³फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवे ।
धर्मं ते ह्याचरन्कृष्णे तद्धि धर्मं सनातनम् ॥

श्रेयसि श्रेयोनिमित्तं धर्मं व्यचरन् । तद्धि धर्मो हि श्रेयः श्रेयःसाधनं सनातनम् अनाद्यनन्तम् । नीटी.

(१) भा. ३।३२।२४ ; भामु. ३।३१।२६ विघातेनै (विद्यां ते नै) किंचि (केचि).

(२) भा. ३।३२।२५-२७ ; भामु. ३।३१।२७-२९.

(३) भा. ३।३२।२८ ; भामु. ३।३१।३० ध्रुवे (ध्रुवम्) ह्याच (व्यच) धर्मं (श्रेयः).

¹स चायं सफलो धर्मो न धर्मोऽफल उच्यते ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥

²त्वय्येतद्वै विजानीहि जन्म कृष्णे यथा श्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥

अनुभवोऽपि धर्मे प्रमाणमित्याह- त्वमिति । अयं भावः- 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' (मस्मृ. ३।७६) इति स्मृतेः, पञ्चाग्निविद्यायां च द्युपर्जन्यपृथिवीपुरुषयोषासु अग्निषु श्रद्धासोमवर्षान्नरेतआहुतयो हूयन्ते, ततः शरीरमिति क्रमेण 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छाउ. ५।९।१) इति श्रुतेश्च सर्वेषां प्राणिनामुत्पत्तिरवगता । तत्र गर्भवासाख्या रेतोद्रव्यकपञ्चम्याहुत्यवस्थाऽत्यन्तदुःखमयी पुण्यवशात् द्रोणस्य नाऽऽसीत् । द्रौपदीधृष्टद्युम्नयोस्त्वतिपुण्यवशात् रेतोरूपमलपरिणामहेतुरन्नाहुतिरपि नास्ति, साक्षादग्निकुण्डोद्भवत्वात् । तदिदं धर्मफलं तवानुभवसिद्धम्, अतो धर्मं माऽवमंस्था इति । नीटी.

³एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ॥

उपमानं निदर्शनम् । कर्मस्वादरवशात् अल्पेन अन्नाच्छादनमात्रेण तुष्टो भवति, न तु कर्माण्युपेक्ष्य बहुलाभार्थं यतते इत्यर्थः । नीटी.

⁴बहुनाऽपि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किंचित्प्रेत्य शर्मास्ति कर्म वा ॥

(१) भा. ३।३२।२९ ; भामु. ३।३१।३१ पूर्वार्धे (स नायमफलो धर्मो नाधर्मोऽफलवानपि ।).

(२) भा. ३।३२।३० ; भामु. ३।३१।३२ त्वय्येतद्वै (त्वमात्मनो).

(३) भा. ३।३२।३१ ; भामु. ३।३१।३३ मस्तीति (माप्नोति).

(४) भा. ३।३२।३२ ; भामु. ३।३१।३४ नाऽपि ह्यवि (ना ह्यपि वि) कर्म वा (वा पुनः).

धर्माधर्मफलदर्शने शुद्धं मनः समर्थम्

**[1]कर्मणामुत पुण्यानां पापानां च फलोदयः ।**
**प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥**

श्रुतं वेदोदितं पुण्यं येषाम्, पापानामनिष्टसाधनानां च फलोदयः स्वर्गनरकहेतुत्वम्, प्रभवः उत्पत्तिः अविद्येति यावत्, अत्ययः नाशः विद्येति यावत्, देवगुह्यानि, वेदैकवेद्यत्वात् । 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति श्रुतेर्देवगोप्यानि एतानि, स्वपशुभूतपुरुषविनाशकत्वात् । नीटी.

**[2]नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।**
**अपि कल्पसहस्रेण न स श्रेयोऽधिगच्छति ।**
**रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ॥**

अत्र एतेषु देवगुह्येषु विषयेषु इमाः प्राकृताः प्रजाः मुह्यन्ते अविद्यामपि विद्यात्वेन विद्यां चाविद्यात्वेन गृह्णन्ति । एवं पुण्यपापविपर्ययोऽपि ज्ञेयः । अत एतानि यस्तत्त्वतो वेद सः श्रेयः देवानां हिततरं कर्म नाधिगच्छति नानुसरति, कर्तृत्वादिमदन्तःकरणस्य विविक्तत्वादिति भावः । नीटी.

**[3]कृशाशाः सुव्रताश्चैव तपसा दग्धकिल्बिषाः ।**
**प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ॥**

कृताः नाशिताः आशाः यैस्ते, कॄ हिंसायां स्वादिः, व्रतं हितं मितं मेध्यं चाश्नन्ति ते कृताशाश्च व्रताशाश्च । शान्ता दान्ता इत्यर्थः । तपसा श्रवणमननात्मकेन आलोचनेन । मनःप्रसादैः ध्यानफलैः युक्ताः । द्विजाः योगिनः । एतानि देवगुह्यानि । नीटी.

(१) भा. ३।३२।३३ ; भामु. ३।३१।३५ णामुत पु (णां श्रुतपु) श्चाप्यय (श्चात्यय) देवगु (देव गु) भामिनि (भाविनि).

(२) भा. ३।३२।३४ द्वितीयार्धं नास्ति ; भामु. ३।३१।३६–३७ नैता (एता) ह्यन्त्यत्र (ह्यन्तेऽत्र).

(३) भा. ३।३२।३५ ; भामु. ३।३१।३७ प्रथमचरणे (कृताशाश्च व्रताशाश्च) प्रसन्नै (प्रसादै).

कर्मफलदाता ईश्वरः अनाक्षेपणीयः नाऽऽशङ्कनीयश्च

**[1]न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ।**
**यष्टव्यं चाप्रमत्तेन दातव्यं चानसूयता ॥**

**[2]कर्मणां फलमस्तीति तथैतद्धर्म शाश्वतम् ।**
**ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ॥**

धर्मशाश्वतं धर्मस्य शश्वद्भवोऽयं स्वभावः । नीटी.

**[3]तस्माते संशयः कृष्णे नीहार इव नश्यतु ।**
**व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ॥**

व्यवस्य निश्चित्य । भावम् अभिप्रायम् । नीटी.

**[4]ईश्वरं चापि भूतानां धातारं मा विचिक्षिपः ।**
**शिक्षस्वैनं नमस्वैनं मा ते भूद्बुद्धिरीदृशी ॥**

एवं धर्मश्रैष्ठ्यं निश्चित्य ईश्वरश्रैष्ठ्यमप्याह— ईश्वरमिति । धातारं दधाति कर्मफलानि यथास्वं विभजतीति तम्, कर्मणामाशुतरविनाशित्वात्, नष्टानां च कालान्तरीयफलहेतुत्वायोगात्, §अपूर्वकल्पनायाश्च 'सर्वस्य वशी सर्वस्येशानः' (बृउ. ४।४।२२) इति सर्वस्येश्वराधीनत्वप्रतिपादकश्रुत्या बाधात् । लौकिकराजभृत्यदृष्टान्ताच्च कर्मभिस्तुष्टो रुष्टो वा ईश्वर एव सदसत्फलविभाजक इति भावः । मा क्षिप मा निन्दां कुरु । शिक्षस्व शास्त्राचार्योपदेशादधीष्व । नीटी.

§ उभयसंप्रतिपन्नस्य कर्मफलयोः निर्व्यापारकार्यकारणभावस्येशानत्वेन सर्वेशानत्वोपपत्तिवत् अपूर्वव्यापारकस्य तस्येशानत्वेनापि सर्वेशानत्वमुपपद्यत एवेति प्रत्यवस्थानं तु एकेनैव कार्यकारणभावेनोपपत्तौ तद्द्वयकल्पनस्यान्याय्यत्वेन पराहतमिति भावः । सोऽयमर्थः 'लौकिकराज' इत्याद्यग्रिमग्रन्थेन सूचितः ।

(१) भा. ३।३२।३६ ; भामु. ३।३१।३८ चाप्रमत्तेन (च प्रयत्नेन).

(२) भा. ३।३२।३७ ; भामु. ३।३१।३९ मस्तीति (मस्तीह) धर्म शा (धर्मशा).

(३) भा. ३।३२।३८ ; भामु. ३।३१।४०.

(४) भा. ३।३२।३९ ; भामु. ३।३१।४१ विचिक्षिपः (च वै क्षिप).

[1]यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमं दैवतं कृष्णे माऽतिवोचः कथंचन ॥

ऐहिकपारलौकिकफलदाता जगद्धारको धर्मः

[2]दानं यज्ञः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन् फलवान्प्रेत्य चेह च ॥
[3]धर्ममूलं जगद्राजन्नान्यद्धर्माद्विशिष्यते ॥

अधर्मः सद्योवृद्धिकरोऽपि अन्ततो नाशकरः

**लोमश उवाच–**

[4]नात्र दुःखं त्वया राजन्कार्यं पार्थ कथंचन ।
यदधर्मेण वर्धेरन्नधर्मरुचयो जनाः ॥
[5]वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥

समूलः पुत्रपौत्रादिवंशवृद्धिर्मूलम्, तत्सहितः ।
नीटी.

गौरवलाघवविवेकेन धर्माधर्मयोर्निर्णयः

[6]धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् ।
अविरोधी तु यो धर्मः स धर्मः सत्यविक्रम ॥
[7]विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुदाचरेत् ॥
[8]गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चये ।
यतो भूयांस्ततो राजन्कुरु धर्मविनिश्चयम् ॥

---

(१) भा. ३।३२।४० ; भामु. ३।३१।४२ उत्तरार्धे (उत्तमां देवतां कृष्णे माऽवमंस्थाः कथंचन ॥ ).

(२) भा. ३।३४।४५ ; भामु. ३।३३।४६ यज्ञः (यज्ञाः) फलवा (बलवा).

(३) भा. ३।३४।४७ ; भामु. ३।३३।४८.

(४) भा. ३।९२।३ ; भामु. ३।९४।३ रन्नध (युरध).

(५) भा. ३।९२।४ ; भामु. ३।९४।४.

(६) भा. ३।१३१।१० ; भामु. ३।१३१।११ कुधर्म (कुवर्त्म) धी तु (धात्तु).

(७) भा. ३।१३१।११ ; भामु. ३।१३१।१२ समुदा (समुपा).

(८) भा. ३।१३१।१२ ; भामु. ३।१३१।१३ माज्ञाय (मादाय) कुरु धर्मविनि (कुरुष्व धर्मनि),

[1]न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥
[2]अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ।
विज्ञातव्यो विभागेन यत्र मुह्यन्त्यबुद्धयः ॥

$दुर्जनवधोऽधर्मोऽपि धर्म एव । परोपघातकं सत्यं धर्मोऽपि अधर्म एव । नीटी.

श्रुतिप्रमाणकः शाश्वतो धर्मः सत्यनिष्ठः

[3]आचारसंभवो धर्मो धर्माद्वेदाः समुत्थिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः ॥

आचारः शौचादिः, तेन धर्मः प्राप्यते, ततो वेदाधिगमः, ततो यज्ञानुष्ठानम्, ततो देवताप्रसाद इत्यर्थः । नीटी.

[4]वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः ॥

यज्ञैर्देवानां नीत्या मनुष्याणां च स्थितिरित्यर्थः ।
नीटी.

[5]ये धर्ममेव प्रथमं चरन्ति
धर्मेण लब्ध्वा च धनानि काले ।
दारानवाप्य क्रतुभिर्यजन्ते
तेषामयं चैव परश्च लोकः ॥

---

$ अत्र दुर्जनवधाद्येकविशेष्यके अधर्मत्वप्रकारकधर्मत्वप्रकारके उभे अपि ज्ञाने न प्रमारूपे, अपि तु तयोरन्यतरत् अपवाद्यसामान्यशास्त्रापादितविषयकत्वेनाऽऽहार्यम्, अपरं तु अपवादकविशेषशास्त्रविहितविषयकत्वेन प्रमेति न विरोधः ।

(१) भा. ३।१४९।२६ ; भामु. ३।१५०।२६ तृतीयचरणे (धर्मार्थौ वेदितुं शक्यौ).

(२) भा. ३।१४९।२७ ; भामु. ३।१५०।२७ विज्ञातव्यो (स विज्ञेयो).

(३) भा. ३।१४९।२८ ; भामु. ३।१५०।२८ द्वितीयचरणे ( धर्मे वेदाः प्रतिष्ठिताः ).

(४) भा. ३।१४९।२९ ; भामु. ३।१५०।२९ नोक्तैश्च न (नःप्रोक्तैर्न).

(५) भा. ३।१८१।३७ ; भामु. ३।१८३।९१.

देवैर्ज्ञातं ब्राह्मण्यम्, स्वाध्यायादयो ब्राह्मणधर्माः

[1]क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः॥
यो वदेदिह सत्यानि गुरुं संतोषयेत च।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः॥

सा (सार्वज्ञ्यप्राप्तिः) च ब्रह्मविदामेवास्तीति तल्लक्षणान्याह– क्रोध इति। अत्र लक्षणकथनं निष्प्रयोजनमिति यान्येव विद्वल्लक्षणानि तानि विद्यासाधनानीति न्यायेन ब्राह्मण्यकामस्य क्रोधादित्यागो गुर्वाराधनादि च कर्तव्यत्वेन विधीयते– य इति। सत्यवाक् गुरुभक्तः क्षमावांश्च भवेदित्यर्थः। नीटी.

[2]जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः।
कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः॥
[3]यस्य चाऽऽत्मसमो लोको धर्मज्ञस्य मनस्विनः।
सर्वधर्मेषु च रतस्तं देवा ब्राह्मणं विदुः॥
योऽध्यापयेदधीयीत यजेद्वा याजयीत वा।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः॥
[4]ब्रह्मचारी च वेदान्यो अधीयीत द्विजोत्तमः।
स्वाध्याये चाप्रमत्तो वै तं देवा ब्राह्मणं विदुः॥
[5]यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत्।
सत्यं तथा व्याहरतां नानृते रमते मनः॥
[6]धनं तु ब्राह्मणस्याऽऽहुः स्वाध्यायं दममार्जवम्।
इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम।
सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः॥

(१) भा. ३।१९७।३१–३२; भामु. ३।२०६।३२–३४.

(२) भा. ३।१९७।३३; भामु. ३।२०६।३४–३५ वशे (वशौ).

(३) भा. ३।१९७।३४–३५; भामु. ३।२०६।३५–३७.

(४) भा. ३।१९७।३६; भामु. ३।२०६।३७–३८ पूर्वार्धे (ब्रह्मचारी वदान्यो योऽप्यधीयाद्द्विजपुङ्गवः।) ये चाप्रम (यवानम).

(५) भा. ३।१९७।३७; भामु. ३।२०६।३८–३९.

(६) भा. ३।१९७।३८; भामु. ३।२०६।३९–४० धनं (धर्मं).

[1]दुर्ज्ञेयः शाश्वतो धर्मः स तु सत्ये प्रतिष्ठितः।
श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम्॥

शाश्वतो धर्मः आत्मदर्शनम्। यदाह याज्ञवल्क्यः– 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्॥' (यास्मृ. १।८) इति। सत्ये त्रैकालिकबाधशून्ये वस्तुनि प्रतिष्ठितः पर्यवसितः। अन्यो धर्मस्त्वसत्ये प्रतिष्ठित इत्यर्थात् सिद्धम्। नीटी.

[2]बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम।
भवानपि च धर्मज्ञः स्वाध्यायनिरतः शुचिः।
न तु तत्त्वेन भगवन् धर्मान्वेत्सीति मे मतिः॥

कुलोचितं कर्म वर्णानुरूपं धात्रा विहितं कर्तव्यम्

व्याध उवाच–

[3]कुलोचितमिदं कर्म पितृपैतामहं मम।
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज॥
[4]धात्रा तु विहितं पूर्वं कर्म स्वं पालयाम्यहम्।
प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम॥

गुरू मातापितरौ। नीटी.

[5]सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च।
देवतातिथिभृत्यानामवशिष्टेन वर्तये॥

नाभ्यसूये परगुणेषु दोषं नाऽऽविष्कुर्वे। वर्तये जीवामि। नीटी.

(१) भा. ३।१९७।३९; भामु. ३।२०६।४१ स तु (स च).

(२) भा. ३।१९७।४०; भामु. ३।२०६।४२–४३ भवानपि च (भगवानपि) धर्मान् (धर्मं); पमा. १।८३ प्रथमार्धमात्रम्.

(३) भा. ३।१९८।१९; भामु. ३।२०७।२० मम (परम्).

(४) भा. ३।१९८।२०; भामु. ३।२०७।२१ धात्रा तु (विधात्रा) स्वं पालयाम्यहम् (स्वमनुपालयन्).

(५) भा. ३।१९८।२१; भामु. ३।२०७।२२ ददामि (ददानि).

[1]न कुत्सयाम्यहं किंचिन्न गर्हे बलवत्तरम् ।
कृतमन्वेति कर्तारं पुराकर्म द्विजोत्तम ॥

कुत्सा विद्यमानदोषसंकीर्तनम् । गर्हा अविद्यमान-दोषारोपः । पुराकृतं कर्मेति संबन्धः । नीटी.

[2]कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम् ।
दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत ॥

लोकः परलोकः । नीटी.

[3]कर्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः ।
ब्रह्मचर्यं तपो मन्त्राः सत्यं च ब्राह्मणे सदा ॥
राजा प्रशास्ति धर्मेण स्वकर्मनिरताः प्रजाः ।
विकर्माणश्च ये केचित्तान्युनक्ति स्वकर्मसु ॥
[4]भेतव्यं हि सदा राज्ञां प्रजानामधिपा हि ते ।
मारयन्ति विकर्मस्थं लुब्धा मृगमिवेषुभिः ॥
[5]जनकस्येह विप्रर्षे विकर्मस्थो न विद्यते ।
स्वकर्मनिरता वर्णाश्चत्वारोऽपि द्विजोत्तम ॥
स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ।
दण्ड्यं दण्डे निक्षिपति तथा न ग्लाति धार्मिकम् ॥

न ग्लाति न ग्लानिं नयति । नीटी.

सुयुक्तचारो नृपतिः सर्वं धर्मेण पश्यति ।
श्रीश्च राज्यं च दण्डश्च क्षत्रियाणां द्विजोत्तम ॥
राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीम् ।
सर्वेषामेव वर्णानां त्राता राजा भवत्युत ॥
परेण हि हतान्ब्रह्मन्वराहमहिषानहम् ।
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम् ॥

(१) भा. ३।१९८।२२ ; भामु. ३।२०७।२३.

(२) भा. ३।१९८।२३ ; भामु. ३।२०७।२४ लोका भवन्त्युत (लोको भवत्युत).

(३) भा. ३।१९८।२४–२५ ; भामु. ३।२०७।२५–२६.

(४) भा. ३।१९८।२६ ; भामु. ३।२०७।२७ मार (वार) लुब्धा (नृपा).

(५) भा. ३।१९८।२७–३१ ; भामु. ३।२०७।२८–३२.

[1]न भक्षयामि मांसानि ऋतुगामी तथा ह्यहम् ।
सदोपवासी च तथा नक्तभोजी तथा द्विज ॥
[2]अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ।
प्राणिहिंसारतश्चापि भवते धार्मिकः पुनः ॥
[3]व्यभिचारान्नरेन्द्राणां धर्मः संकीर्यते महान् ।
अधर्मो वर्धते चापि संकीर्यन्ते तथा प्रजाः ॥

अभिचारात् स्वैरगतेः । नीटी.

[4]उरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ।
क्लीबाश्चान्धाश्च जायन्ते बधिरा लम्बचूचुकाः ।
पार्थिवानामधर्मत्वात्प्रजानामभवः सदा ॥

भेरुण्डाः भयानकाः । नीटी.

[5]स एष राजा जनकः सर्वं धर्मेण पश्यति ।
अनुगृह्णन्प्रजाः सर्वाः स्वधर्मनिरताः सदा ॥
[6]ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः ।
सर्वान्सुपरिणीतेन कर्मणा तोषयाम्यहम् ॥

सुपरिणीतेन साधुना । नीटी.

[7]ये जीवन्ति स्वधर्मेण संभुञ्जन्ते च पार्थिवाः ।
न किंचिदुपजीवन्ति दक्षा उत्थानशीलिनः ॥

ये संयुञ्जन्ति सम्यग्योगं सेनानिवेशं कुर्वन्ति त एव पार्थिवाः । नीटी.

(१) भा. ३।१९८।३२ ; भामु. ३।२०७।३३ तथा द्विज (सदा द्विज).

(२) भा. ३।१९८।३३ ; भामु. ३।२०७।३४ रत (रति).

(३) भा. ३।१९८।३४ ; भामु. ३।२०७।३५ व्यभिचा (अभिचा) वर्धते (वर्तते) तथा (ततः).

(४) भा. ३।१९८।३५ ; भामु. ३।२०७।३६–३७ उरुण्डा (भेरुण्डा) द्वितीयार्धे (क्लीबाश्चान्धाश्च बधिरा जायन्तेऽत्युच्चलोचनाः ।).

(५) भा. ३।१९८।३६ ; भामु. ३।२०७।३७–३८ सर्वं (प्रजा).

(६) भा. ३।१९८।३७ ; भामु. ३।२०७।३८–३९.

(७) भा. ३।१९८।३८ ; भामु. ३।२०७।३९–४० संभुञ्जन्ते (संयुञ्जन्ति) दक्षा (दान्ता).

[1]शक्त्याऽन्नदानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ।
त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे ॥
[2]मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥

संरम्भात् भयात् । नीटी.

प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ॥
[3]कर्म चेत्किंचिदन्यत्स्यादितरन्न समाचरेत् ।
यत्कल्याणमभिध्यायेत्तत्राऽऽत्मानं नियोजयेत् ॥

अन्यत् विपरीतं स्यात् । इतरत् तादृशं द्वितीयम् । कल्याणमेवाऽऽत्मनः परस्य चाभिध्यायेत् जानीयात् । नीटी.

[4]न पापं प्रति पापः स्यात्साधुरेव सदा भवेत् ।
आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ॥

पापे पापिनि प्रतिपापः प्रतिपापी न स्यात् । नीटी.

[5]कर्म चैतदसाधूनां वृजिनानामसाधुवत् ।
न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये ।
अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः ॥

वृजिनानां व्यसनवताम् । असाधुः चोरादिस्तद्वत् । नीटी.

[6]महादृतिरिवाऽऽध्मातः पापो भवति नित्यदा ।
मूढानामवलिप्तानामसारं भाषितं भवेत् ।
दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥

दृतिः भस्त्रा आध्मातः सन्नसारोऽपि पुष्टो भवेत् । तद्वन्मूढानां भाषितं विस्तितम् । अन्तरात्मैव तं मूढं दर्शयति मूढस्य मौढ्यमेव स्वरूपज्ञापकम् । नीटी.

[1]न लोके राजते मूर्खः केवलात्मप्रशंसया ।
अपि चेह मृजा हीनः कृतविद्यः प्रकाशते ॥

मृजा हीनः मलिनदेहः । श्रियेति पाठान्तरे स्पष्टोऽर्थः । नीटी.

अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते ॥

मूढतममाह– अब्रुवन्निति । नीटी.

[2]विकर्मणा तप्यमानः पापाद्विपरिमुच्यते ।
नैतत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ॥

पापात् प्राक् कृतात् । द्वितीयात् करिष्यमाणात् । नीटी.

[3]कर्मणा येन तेनेह पापाद्द्विजवरोत्तम ।
एवं श्रुतिरियं ब्रह्मन्धर्मेषु परिदृश्यते ॥

येन तेनेति जपतपस्तीर्थाद्यन्यतमेन येन केनचिदपि पापात्, परिमुच्यत इत्यनुषज्यते । 'स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव स्यात्' इति श्रुतिर्हि धर्मेषु धर्मोत्पत्तिविषया । ज्ञानोत्पत्तौ त्वेक एव श्रवणादिमार्गः 'नान्यः पन्था विद्यतेऽयनाय' (श्वेउ. ३।८) इति श्रूयते । नीटी.

[4]पापान्यबुद्ध्वेह पुरा कृतानि
प्राग्धर्मशीलो विनिहन्ति पश्चात् ।
धर्मो ब्रह्मन्नुदते पूरुषाणां
यत्कुर्वते पापमिह प्रमादात् ॥

---

(१) भा. ३।१९८।३९ ; भामु. ३।२०७।४०–४१ प्रतिपूजा (प्रति पूजा) दया (सदा).

(२) भा. ३।१९८।४०–४१ ; भामु. ३।२०७।४२–४३.

(३) भा. ३।१९८।४२ ; भामु. ३।२०७।४४ समा (तदा).

(४) भा. ३।१९८।४३ ; भामु. ३।२०७।४५ पापं प्रति पापः (पापे प्रतिपापः).

(५) भा. ३।१९८।४४ ; भामु. ३।२०७।४६–४७.

(६) भा. ३।१९८।४५ ; भामु. ३।२०७।४७–४८ भाषितं (भावितं) रात्मानं (रात्मा तं).

(१) भा. ३।१९८।४६–४७ ; भामु. ३।२०७।४९–५०.

(२) भा. ३।१९८।४८ ; भामु. ३।२०७।५१ नैतत्कु (न तत्कु).

(३) भा. ३।१९८।४९ ; भामु. ३।२०७।५२ परिदृ (प्रतिदृ).

(४) भा. ३।१९८।५० ; भामु. ३।२०७।५३ विनिहन्ति (ऽपि विहन्ति).

प्राक् कृतानीति संबन्धः । नीटी.

[1]पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ॥
[2]तं तु देवाः प्रपश्यन्ति स्वस्यैवाऽऽन्तरपूरुषः ॥
[3]चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥
[4]वसनस्येव च्छिद्राणि साधूनां विवृणोति यः ।
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते ।
मुच्यते सर्वपापेभ्यो महाभ्रैरिव चन्द्रमाः ॥

चिकीर्षेदिति । यः साधूनां छिद्राणि धनादिहीनतया रिक्तानि श्राद्धादीनि ( यः ? ) विवृणोति धनादिदानेन विवृणोति विशेषतः पिदधाति, सः कल्याणं मोक्षोपायं कर्तुमिच्छेदेव । साधुसेवनजातपुण्यात् मुमुक्षा उदेतीत्यर्थः । नीटी.

[5]यथाऽऽदित्यः समुद्यन्वै तमः सर्वं व्यपोहति ।
एवं कल्याणमातिष्ठन् सर्वपापैः प्रमुच्यते ॥

यथेति । मुमुक्षा पापनाशपूर्विकैवोदेतीति भावः । नीटी.

[6]पापानां विद्ध्यधिष्ठानं लोभमेव द्विजोत्तम ।
लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ।
अधर्मा धर्मरूपेण तृणैः कूपा इवाऽऽवृताः ॥
तेषां दमः पवित्राणि प्रलापा धर्मसंश्रिताः ।
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥

अधर्मा इति । लुब्धाः धर्मशून्या अपि धर्मस्य रूपमिव रूपं यस्य तेन दम्भेन आवृताः तेषां दम्भिनाम्, अत एव दम्भिनां साधूनां च विशेषानवगमात् तेषु दम्भिषु शिष्टाचारः सुदुर्लभः दुर्बोध इत्यर्थः । नीटी.

(१) भा. ३।१९८।५१ ; भामु. ३।२०७।५४.

(२) भामु. ३।२०७।५४.

(३) भा. ३।१९८।५१ ; भामु. ३।२०७।५५.

(४) भा. ३।१९८।५२ ; भामु. ३।२०७।५५–५६ भ्रैरिव (भ्रेणेव).

(५) भा. ३।१९८।५३ ; भामु. ३।२०७।५७ सर्वं (पूर्वं).

(६) भा. ३।१९८।५४–५५ ; भामु. ३।२०७।५८–५९.

मांसे भक्ष्याभक्ष्यत्वविवेकः अहिंसाधर्मापवादश्च

**मार्कण्डेय उवाच–**

[1]स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ।
यदहं ह्याचरे कर्म घोरमेतदसंशयम् ॥

एतत् मांसविक्रयात्मकम् । नीटी.

[2]विधिस्तु बलवान्ब्रह्मन्दुस्तरं हि पुराकृतम् ।
पुराकृतस्य पापस्य कर्मदोषो भवत्ययम् ।
दोषस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् ॥

यत्नवानपि न परिहर्तुं शक्नोमि, विधेः प्राबल्यादित्यर्थः । नीटी.

[3]विधिना विहिते पूर्वं निमित्तं घातको भवेत् ।
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥

शरवन्निमित्तभूता वयम्, संघातृवत् कर्ता तु विधिरेवेत्यर्थः । नीटी.

[4]येषां हतानां मांसानि विक्रीणामो वयं द्विज ।
तेषामपि भवेद्धर्म उपभोगेन भक्षणात् ।
देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात् ॥
[5]ओषध्यो वीरुधश्चापि पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥

अन्नाद्यभूताः अन्नं च तत् अ(?आ)द्यं च, भोग्यं(?ज्यं) भक्ष्यं चेत्यर्थः, 'सर्वमस्यान्नं भवति' इति श्रुतेः । नीटी.

(१) भा. ३।१९९।१ ; भामु. ३।२०८।१ हं ह्या (हमा).

(२) भा. ३।१९९।२ ; भामु. ३।२०८।२–३ पुराकृ (पुरा कृ).

(३) भा. ३।१९९।३ ; भामु. ३।२०८।३–४ विहिते (हि हते).

(४) भा. ३।१९९।४ ; भामु. ३।२०८।४–५ मो वयं (मीह वै) भोगेन भक्षणात् (योगेन भक्षणे) प्रतिपूजनात् (चापि पूजनम्).

(५) भा. ३।१९९।५ ; भामु. ३।२०८।६ श्चापि (श्चैव).

[1]आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ॥

[2]राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥
[3]अहन्यहनि वध्येते द्वे सहस्रे गवां तथा ॥

[4]समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ।
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ।
चातुर्मास्येषु पशवो वध्यन्त इति नित्यशः ॥

[5]अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः ।
यज्ञेषु पशवो ब्रह्मन्वध्यन्ते सततं द्विजैः ।
संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ॥

'येऽस्याग्नयो जुह्वतो मांसकामाः' इति मन्त्रलिङ्गमपि श्रुतिरेव । नीटी.

[6]यदि नैवाग्नयो ब्रह्मन् मांसकामाऽभवन् पुरा ।
भक्ष्यं नैव भवेन्मांसं कस्यचिद्द्विजसत्तम ॥

[7]अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे ।
देवतानां पितॄणां च भुङ्क्ते दत्त्वा तु यः सदा ।
यथाविधि यथाश्रद्धं न स दुष्यति भक्षणात् ॥

अत्रापीत्यादिसार्धः श्लोकः । कलौ तु मांसेन पैतृकस्य निषेधाद्देवताशेषाद्यज्ञियमांसादन्यत्र मांसभक्षणं दुष्यत्येवेति भावः । नीटी.

(१) भा. ३।१९९।६ ; भामु. ३।२०८।७ प्रदानेन (प्रसादेन) दुर्लभं (दुर्गमं).

(२) भा. ३।१९९।७ ; भामु. ३।२०८।८.

(३) भामु. ३।२०८।९.

(४) भा. ३।१९९।८ ; भामु. ३।२०८।९-१० स्येषु (स्ये च).

(५) भा. ३।१९९।९ ; भामु. ३।२०८।११-१२.

(६) भा. ३।१९९।१० ; भामु. ३।२०८।१२-१३ व भवे (वाभव).

(७) भा. ३।१९९।११ ; भामु. ३।२०८।१४ त्त्वा तु (त्त्वाऽपि) श्रद्धं (श्राद्धं) स दु (प्रदु).

[1]अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥

यज्ञियमांसभुजोऽपि ऋतुगामिनो ब्रह्मचर्यमिव औपचारिकममांसाशित्वमिति भावः । नीटी.

[2]सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते ।
सौदासेन पुरा राज्ञा मानुषा भक्षिता द्विज ।
शापाभिभूतेन भृशमत्र किं प्रतिभाति ते ॥

सत्यानृते ज्ञानकर्ममार्गौ । अत्रापि यज्ञियमांसभक्षणे विधिः विशेषः । तमेवाऽऽह परकृतिमुखेन- सौदासेनेति । कर्तृत्वाद्यभिमानवता मूढेन कर्मठेन यज्ञियमपि मांसं भक्षणीयं न ज्ञानमार्गस्थेनेति भावः । रन्तिदेवनिदर्शनं तु युगान्तराभिप्रायम् । अत्र किं प्रतिभाति मे । किंशब्दः कुत्सायाम् । अत्र मांसे भक्षणीये मम निन्दा प्रतिभाति । अत एव 'न हन्मि, न भक्षयामि' इति प्रागेवोक्तं मयेत्यर्थः । नीटी.

[3]स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ।
पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा ॥

कुतस्तर्हि त्वं मांसविक्रयं करोषि ? तत्कर्तुरपि प्रयोजकत्वाद्धिंसादोषोऽस्तीत्याशङ्क्याऽऽह- स्वेति । स्वकर्म इत्यस्य व्याख्या पुराकृतमित्यादि । नीटी.

[4]स्वकर्म त्यजतो ब्रह्मन्नधर्म इह दृश्यते ।
स्वकर्मनिरतो यस्तु स धर्म इति निश्चयः ॥

[5]पूर्वं हि विहितं कर्म देहिनं न विमुञ्चति ।
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये ॥

(१) भा. ३।१९९।१२ ; भामु. ३।२०८।१५.

(२) भा. ३।१९९।१३ ; भामु. ३।२०८।१६ पुरा (तदा) ते (मे).

(३) भा. ३।१९९।१४ ; भामु. ३।२०८।१७ पुराकृ (पुरा कृ).

(४) भा. ३।१९९।१५ ; भामु. ३।२०८।१८ स धर्म (धर्मः स).

(५) भा. ३।१९९।१६ ; भामु. ३।२०८।१९.

[1]द्रष्टव्यं तु भवेत्प्राज्ञ क्रूरे कर्मणि वर्तता ।
कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात् ।
कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ॥

[2]दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा ।
द्विजातिपूजने चाहं धर्मे च निरतः सदा ।
अतिवादातिमानाभ्यां निवृत्तोऽस्मि द्विजोत्तम ॥

[3]कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ।
कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान्बहून् ।
जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते ॥

तथाऽपि हिंसामिश्रं कर्म तवाप्ययोग्यमित्याशङ्क्य सर्वत्र हिंसाया अपरिहार्यत्वमाह– कृषिं साध्वीतीत्यादिना । के नरा जीवान्न हिंसन्ति ? अपि तु सर्वेऽपि हिंसन्त्येवेत्यर्थः । नीटी.

[4]धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते ॥

[5]अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च ।
वृक्षानथौषधीश्चैव च्छिन्दन्ति पुरुषा द्विज ॥

[6]जीवा हि बहवो ब्रह्मन्वृक्षेषु च फलेषु च ।
उदके बहवश्चापि तत्र किं प्रतिभाति ते ॥

(१) भा. ३।१९९।१७ ; भामु. ३।२०८।२०–२१ प्रथमचरणे (द्रष्टव्या तु भवेत्प्रज्ञा).

(२) भा. ३।१९९।१८ ; भामु. ३।२०८।२१–२२ सदा (तदा) अतिवादातिमाना (अभिमानातिवादा).

(३) भा. ३।१९९।१९ ; भामु. ३।२०८।२३–२४ ध्विति (ध्वीति) ते (मे).

(४) भा. ३।१९९।२० ; भामु. ३।२०८।२४–२५ ते (मे).

(५) भा. ३।१९९।२१ ; भामु. ३।२०८।२५–२६ वृक्षान (वृक्षांस्त) श्चैव (श्चापि).

(६) भा. ३।१९९।२२ ; भामु. ३।२०८।२६–२७ ते (मे).

[1]सर्वं व्याप्तमिदं ब्रह्मन्प्राणिभिः प्राणिजीवनैः ।
मत्स्या ग्रसन्ते मत्स्यांश्च तत्र किं प्रतिभाति ते ॥

[2]सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम ।
प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते ॥

[3]चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून् ।
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥

[4]उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः ।
ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते ॥

[5]जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा ।
अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ॥

[6]अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा ।
के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम ।
बहु संचिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥

[7]अहिंसायां तु निरता यतयो द्विजसत्तम ।
कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् ॥
आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च ॥
सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ।
सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यतः ॥

(१) भा. ३।१९९।२३ ; भामु. ३।२०८।२७–२८ तृतीयचरणे (मत्स्यान् ग्रसन्ते मत्स्याश्च) ते (मे).

(२) भा. ३।१९९।२४ ; भामु. ३।२०८।२८–२९ ते (मे).

(३) भा. ३।१९९।२५ ; भामु. ३।२०८।२९–३० ते (मे).

(४) भा. ३।१९९।२६ ; भामु. ३।२०८।३०–३१ ते (मे).

(५) भा. ३।१९९।२७ ; भामु. ३।२०८।३१–३२ ते (मे).

(६) भा. ३।१९९।२८ ; भामु. ३।२०८।३२–३३ इह (इति).

(७) भा. ३।१९९।२९–३२ ; भामु. ३।२०८।३४–३७.

समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः ॥
[1]बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ॥
[2]वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥

धर्मस्य सूक्ष्मा गतिः, कर्मविपाकसिद्धान्तः

मार्कण्डेय उवाच–
[3]धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतां वरः ॥

शान्त्यादयो ज्ञानाङ्गभूता धर्माः प्रोक्ताः । संप्रति ज्ञानं विना कृतकृत्यता नास्तीति वक्तुं धर्मतत्त्वस्य दुरवगाहत्वं प्रपञ्चस्य निःसारत्वं चोच्यते धर्मव्याधस्त्वित्यादिना । नीटी.

[4]श्रुतिप्रमाणो धर्मो हि वृद्धानामिति भाषितम् ।
सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥
[5]प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अनृतं च भवेत्सत्यं सत्यं चैवानृतं भवेत् ॥
[6]यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा ।
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ॥

धारणा अवधारणं निश्चय इत्यर्थः । नीटी.

[7]यत्करोत्यशुभं कर्म शुभं वा द्विजसत्तम ।
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ॥

[1]विषमां च दशां प्राप्य देवान् गर्हति वै भृशम् ।
आत्मनः कर्मदोषाणि न विजानात्यपण्डितः ॥
[2]मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।
सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥

सुनीतं गुरुशिक्षा । नीटी.

[3]यो यमिच्छेद्यथा कामं तं तं कामं समश्नुयात् ।
यदि स्यादपराधीनं पुरुषस्य क्रियाफलम् ॥
[4]संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥

प्रहीणाः भ्रान्ता अपीत्यर्थः । नीटी.

[5]भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनेह जीवति ॥
[6]अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठति ।
कश्चित्कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ॥
[7]देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दशमासधृता गर्भे जायन्ते कुलपांसनाः ॥

पुत्रगृद्धिभिः पुत्रकामैः । नीटी.

अपरे धनधान्यैश्च भोगैश्च पितृसंचितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥

(१) भा. ३।१९९।३३ ; भामु. ३।२०८।३८ ते (मे).

(२) भा. ३।१९९।३४ ; भामु. ३।२०८।३९.

(३) भा. ३।२००।१ ; भामु. ३।२०९।१.

(४) भा. ३।२००।२ ; भामु. ३।२०९।२ पूर्वार्धे (श्रुतिप्रमाणो धर्मोऽयमिति वृद्धानुशासनम् । ).

(५) भा. ३।२००।३ ; भामु. ३।२०९।३ प्राणात्यये (प्राणान्तिके) तं च (तेन) सत्यं चैवा (सत्येनैवा).

(६) भा. ३।२००।४ ; भामु. ३।२०९।४.

(७) भा. ३।२००।५ ; भामु. ३।२०९।५ द्विज (यदि).

(१) भा. ३।२००।६ ; भामु. ३।२०९।६ प्राप्य (प्राप्तो).

(२) भा. ३।२००।७ ; भामु. ३।२०९।७–८ र्यासो यदा (र्यासान् सदा).

(३) भा. ३।२००।८ ; भामु. ३।२०९।८–९ यो यमि (योऽयमि) समश्नु (स आप्नु) पुरु (पौरु).

(४) भा. ३।२००।९ ; भामु. ३।२०९।९–१०.

(५) भा. ३।२००।१० ; भामु. ३।२०९।१०–११ चतुर्थचरणे (स सुखी जायते सदा).

(६) भा. ३।२००।११ ; भामु. ३।२०९।११–१२ मानमा (मपि चाऽऽ).

(७) भा. ३।२००।१२–१३ ; भामु. ३।२०९।१२–१४.

[1]कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः।
आधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव॥
[2]ते चापि कुशलैर्वैद्यैर्निपुणैः संभृतौषधैः।
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज॥
येषामस्ति च भोक्तव्यं ग्रहणीदोषपीडिताः।
न शक्नुवन्ति ते भोक्तुं पश्य धर्मभृतां वर॥

ग्रहणी विष्टम्भरोगः। नीटी.

[3]अपरे बाहुबलिनः क्लिश्यन्ते बहवो जनाः।
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम॥
[4]इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम्।
स्रोतसाऽसकृदाक्षिप्तं ह्रियमाणं बलीयसा॥

अनाक्रन्दम् असहायम्। 'आक्रन्दः क्रन्दनेऽऽह्वाने मित्रदारुणयुद्धयोः।' इति मेदिनी। स्रोतसा कर्मप्रवाहेण। असकृदाक्षिप्तम् आधिव्याधिभिस्ताडितम्। ह्रियमाणम् अवशम्। नीटी.

[5]न म्रियेयुर्न जीर्येयुः सर्वे स्युः सार्वकामिकाः।
नाप्रियं प्रतिपश्येयुर्वशित्वं यदि वै भवेत्॥

ननु सर्वेऽपि स्ववशा एव दृश्यन्ते, नेत्याह— नेति। नीटी.

[6]उपर्युपरि लोकस्य सर्वो गन्तुं समीहते।
यतते च यथाशक्ति न च तद्वर्तते तथा॥
[7]बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः।
महच्च फलवैषम्यं दृश्यते कर्मसंधिषु॥

बहवः इति। दैवशास्त्रमपि व्यभिचारिफलमित्याशयः। नीटी.

[1]न कश्चिदीशते ब्रह्मन्स्वयंग्राहस्य सत्तम।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते॥

नेति। स्वीयमपि वस्तु स्वस्यानधीनं प्राक्कर्मवशाद्भवतीत्यर्थः। तत्रापि दृष्टसामग्रीवैकल्यमिति लोकायतमतमाशङ्क्याऽऽह— कर्मणेति। प्राकृतानां देहात्मवादिनाम्। कृतहानाकृताभ्यागमादिदोषदर्शिनां तु प्राक्कर्मैव प्रधानमिति भावः। नीटी.

[2]यथा श्रुतिरियं ब्रह्मञ्जीवः किल सनातनः।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह॥

एतदेव वक्तुं जीवस्य नित्यत्वमाह— यथेति। नीटी.

[3]वध्यमाने शरीरे तु देहनाशो भवत्युत।
जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः॥

ब्राह्मण उवाच—

[4]कथं धर्मभृतां श्रेष्ठ जीवो भवति शाश्वतः।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतां वर॥

व्याध उवाच—

[5]न जीवनाशोऽस्ति हि देहभेदे
मिथ्यैतदाहुर्म्रियतेति मूढाः।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास्य शरीरभेदः॥

दशार्धता पञ्चत्वम्। नीटी.

(१) भा. ३।२००।१४ ; भामु. ३।२०९।१४–१५ तृतीयचरणे (व्याधयो विनिवार्यन्ते).
(२) भा. ३।२००।१५–१६ ; भामु. ३।२०९।१५–१७.
(३) भा. ३।२००।१७ ; भामु. ३।२०९।१७–१८ क्लिश्यन्ते (क्लिश्यन्ति).
(४) भा. ३।२००।१८ ; भामु. ३।२०९।१८–१९.
(५) भा. ३।२००।१९ ; भामु. ३।२०९।१९–२० सार्व (सर्व).
(६) भा. ३।२००।२० ; भामु. ३।२०९।२०.
(७) भा. ३।२००।२१ ; भामु. ३।२०९।२१ महच्च (महत्).

(१) भा. ३।२००।२२ ; भामु. ३।२०९।२२ कश्चि (केचि) कर्मणां (कर्मणा).
(२) भा. ३।२००।२३ ; भामु. ३।२०९।२३ यथा श्रु (यथाश्रु).
(३) भा. ३।२००।२४ ; भामु. ३।२०९।२४.
(४) भा. ३।२००।२५ ; भामु. ३।२०९।२५ धर्मभृतां (कर्मविदां).
(५) भा. ३।२००।२६ ; भामु. ३।२०९।२६ यतेति (यतीति).

[1]अन्यो हि नाश्नाति कृतं हि कर्म
स एव कर्ता सुखदुःखभागी ।
यत्तेन किंचिद्धि कृतं हि कर्म
तदश्नुते नास्ति कृतस्य नाशः ॥

ननु कृतनाशोऽपि कृष्यादिफलेषु दृश्यतेऽतः कृतं कर्म न देहान्तरेऽनुवर्तिष्यते, देहादन्यस्याऽऽत्मनोऽभावादित्याशङ्क्याऽऽह– अन्यो हीति । भोजनफलवत् कृतस्य कर्मणः फलमपरिहार्यम् । यत्र तु सद्यः फलं न दृष्टं तत्रापि जन्मान्तरे भविष्यतीत्यनुमेयम् । यत्र चाकृतमपि फलं निधिलाभादि उपैति तत्र जन्मान्तरीयं साधनं कल्प्यमित्यर्थः । नीटी.

[2]अपुण्यशीलाश्च भवन्ति पुण्या
नरोत्तमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वै-
स्ततः समुत्पद्यति भावितस्तैः ॥

उत्पद्यति जन्मान्तरं लभते यतस्तैः प्राचीनैः कर्मभिर्भावितः रञ्जितः । अत एव क्रममाणं प्रकृत्य श्रूयते– 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति । तस्मात्स्वकृतमेव स्वयं भुङ्क्ते न त्वन्यकृतमन्यः, अतो नास्ति कृतस्य नाश इत्युक्तम् । नीटी.

ब्राह्मण उवाच–

[3]कथं संभवते योनौ कथं वा पुण्यपापयोः ।
जातीः पुण्या ह्यपुण्याश्च कथं गच्छति सत्तम ॥

व्याध उवाच–

[4]गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ॥

(१) भा. ३।२००।२७; भामु. ३।२०९।२७ द्वितीयचरणे (मनुष्यलोके मनुजस्य कश्चित्).

(२) भा. ३।२००।२८; भामु. ३।२०९।२८ अपुण्यशीलाश्च (सुपुण्यशीला हि) नरोत्तमाः (नराधमाः).

(३) भा. ३।२००।२९; भामु. ३।२०९।२९ ण्या ह्यपु (ण्यास्त्वपु).

(४) भा. ३।२००।३०–३१; भामु. ३।२०९।३०–३१.

एवं स्थूलशरीरादन्यत्वमात्मनः प्रसाध्य लिङ्गशरीरादपि व्यतिरेकं साधयितुं वैराग्योत्पत्त्यर्थं जन्मादीनां दुःखरूपत्वमाह– गर्भेत्यादिना । गर्भाधानेन पिण्डोत्पत्तिप्रकाशकेन ग्रन्थेन । एतत्सर्वं समायुक्तं समाहितम् । तदेव संक्षिप्याऽऽह– इदं यत्संप्रदृश्यते स्थूलदेहादिघटान्तं तत्सर्वं कर्मैवेति । अयमर्थः– म्रियमाणो जन्तुर्विद्याकर्मपूर्वप्रज्ञाभिः पञ्चप्राणमनोबुद्धिदशेन्द्रियरूपसप्तदशकात्मकेन लिङ्गेन इत उत्क्रम्य यथाकर्म स्वर्गं नरकं वा गत्वा तत्र भोगान्भुक्त्वा कर्मशेषेण वृष्टिद्वारेण पुनर्बीजभावं प्राप्य शुक्रशोणितरूपेण परिणमते । बीजे पुनर्लिङ्गशरीरेणाऽऽविश्य तैरेव पूर्वैर्विद्यादिसंस्कारैर्युक्तो जायते । तत्केन कर्मणा कुत्र जायत इत्येतत् प्रवक्ष्यामीत्यर्थः । नीटी.

यथा संभृतसंभारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥

संभृताः संभाराः कर्मबीजानि येन । नीटी.

[1]शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ॥

मोहनीयैः तामसैः । अधः नरकतिर्यक्षु । नीटी.

[2]जातिमृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः ॥

जातिः जन्म । संचरे योनिसंचरे उत्क्रान्त्यादिषु च । नीटी.

[3]तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ॥

[4]जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थमपुण्यां योनिमश्नुते ॥

(१) भा. ३।२००।३२; भामु. ३।२०९।३२ किल्बिषैः (किल्बिषी).

(२) भा. ३।२००।३३; भामु. ३।२०९।३३ संसारे (संचरे).

(३) भा. ३।२००।३४; भामु. ३।२०९।३४.

(४) भा. ३।२००।३५; भामु. ३।२०९।३५ मश्नुते (माप्नुते).

प्रेत्य मृत्वा । दुःखात्मकः प्रतीघातः दुःखं भोक्तुमित्यर्थः । नीटी.

[1]ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवाऽऽतुरः ॥

अपथ्यमिति छेदः । नीटी.

[2]अजस्रमेव दुःखार्तोऽदुःखितः सुखसंज्ञितः ।
ततोऽनिवृत्तबन्धत्वात्कर्मणामुदयादपि ।
परिक्रामति संसारे चक्रवद्बहुवेदनः ॥

अदुःखित इति छेदः । दुःखाभावस्य च सुखमिति संज्ञा । न तु संसारे स्वरूपतः सुखमस्ति । तथा चाऽऽहुः– 'भारेऽपनीते सुखिनः संवृत्ताः स्मः' इति । ततः अदुःखे सुखाध्यासात् । अनिवृत्तेति छेदः । नीटी.

[3]स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ।
तपोयोगसमारम्भं कुरुते द्विजसत्तम ।
कर्मभिर्बहुभिश्चापि लोकानश्नाति मानवः ॥

निवृत्तबन्धः वीतरागः । तत्र हेतुः विशुद्धश्चेति । तस्य फलं तपोयोगयोः आलोचनध्यानयोः समारम्भम् । नीटी.

[4]स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ।
प्राप्नोति सुकृताँल्लोकान्यत्र गत्वा न शोचति ॥

[5]पापं कुर्वन्पापवृत्तः पापस्यान्तं न गच्छति ।
तस्मात्पुण्यं यतेत्कर्तुं वर्जयेत च पातकम् ॥

यतेत् यतेत । नीटी.

(१) भा. ३।२००।३६ ; भामु. ३।२०९।३६ रन्यन्नवं (रन्यं नवं).

(२) भा. ३।२००।३७ ; भामु. ३।२०९।३७–३८ संज्ञितः (संज्ञकः).

(३) भामु. ३।२०९।३८–३९.

(४) भा. ३।२००।३८ ; भामु. ३।२०९।४०.

(५) भा. ३।२००।३९ ; भामु. ३।२०९।४१ चतुर्थचरणे (वर्जयीत च पापकम्).

[1]अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते ।
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ॥

पुण्यफलमाह– अनसूयुरिति । नीटी.

[2]संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ॥

संस्कृतस्य अष्टाचत्वारिंशत्संस्कारयुक्तस्य । दान्तस्य जितबाह्येन्द्रियस्य । नियतस्य शौचादिपरस्य । यतात्मनः जितचित्तस्य । अनन्तरा सुलभा वृत्तिर्जीवनं विषयसुखमिति यावत् । नीटी.

[3]सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज ॥

[4]सन्ति ह्यागतविज्ञानाः शिष्टाः शास्त्रविचक्षणाः ।
स्वधर्मेण क्रिया लोके कर्मणः सोऽप्यसंकरः ॥

स्वधर्मेणेति । यतः शिष्टा उपदेष्टारः सन्ति अतः । कर्मणः कर्मणि षष्ठी । कर्म स्वधर्मेण स्वोचितेनाऽऽचारेण क्रियाः कुरुष्व । आशीर्लिङ्मध्यमैकवचनम् । सोऽपि असंकरः धर्माणामिति शेषः । नीटी.

[5]प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ।
तस्य धर्मादवाप्तेषु धनेषु द्विजसत्तम ।
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥

यत्र धर्मे । नीटी.

(१) भा. ३।२००।४० ; भामु. ३।२०९।४२ णान्येव (णानि च).

(२) भा. ३।२००।४१ ; भामु. ३।२०९।४३ हि (च).

(३) भा. ३।२००।४२ ; भामु. ३।२०९।४४ द्विज (द्विजः).

(४) भा. ३।२००।४३ ; भामु. ३।२०९।४५ ह्यागत (ह्यागम) शास्त्र (शास्त्रे) पूर्वार्धोत्तरार्धक्रमो नाऽऽदर्शानुसारी.

(५) भा. ३।२००।४४ ; भामु. ३।२०९।४६–४७ द्वितीयार्धे (तस्माद्धर्मादवाप्तेन धनेन द्विजसत्तम ।).

[1]धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।
स मैत्रजनसंतुष्ट इह प्रेत्य च नन्दति ॥
[2]शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदुः ॥

प्रभुत्वमप्रतिहतेच्छत्वं धर्मस्येति चित्तशुद्ध्या भोगेच्छायां क्षीणायां स्वर्गेऽपि वैराग्यं जायत इत्यर्थः ।
नीटी.

[3]धर्मस्य च फलं लब्ध्वा न तृप्यति महाद्विज ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥

अतृप्यमाणः प्रीतिमलभमानः । निर्वेदं वैराग्यम् । आपेदे आप्नोति । लकारव्यत्यय आर्षः । नीटी.

[4]प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।
विरज्यति यथाकामं न च धर्मं विमुञ्चति ॥

दोषं रागद्वेषादिकं नानुरुध्यते तद्वशो न भवतीत्यर्थः ।
नीटी.

[5]सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥

उपायत एव मोक्षे प्रयतते न त्वनुपायाद्दैवमात्राश्रयादिति योजना । नीटी.

[6]एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकश्चापि भवति मोक्षं च लभते परम् ॥
तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥

तपः ज्ञानं निःश्रेयसं मोक्षसाधनम् । तेन तपसा ।
नीटी.

(१) भा. ३।२००।४५ ; भामु. ३।२०९।४७–४८ मैत्र (मित्र).

(२) भा. ३।२००।४६ ; भामु. ३।२०९।४८–४९.

(३) भा. ३।२००।४७ ; भामु. ३।२०९।४९–५० तृप्यति (तुष्यति) मादत्ते (मापेदे).

(४) भा. ३।२००।४८ ; भामु. ३।२०९।५०–५१ रज्यति (रज्यते).

(५) भा. ३।२००।४९ ; भामु. ३।२०९।५१–५२.

(६) भा. ३।२००।५०–५२ ; भामु. ३।२०९।५२–५४.

इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ॥

अर्थकामाभ्यां धर्मो न बाध्यः

[1]कामा मनुष्यं प्रसजन्त एव
धर्मस्य ये विघ्नमूलं नरेन्द्र ।
पूर्वं नरस्तान् धृतिमान्विनिघ्नं-
ल्लोके प्रशंसां लभतेऽनवद्याम् ॥

प्रसजन्ते स्पृहयन्ति । नीटी.

[2]निबन्धनी ह्यर्थतृष्णेह पार्थ
तामेषतो बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणीते स बुद्धः
कामे गृद्धो हीयतेऽर्थानुरोधात् ॥

गृध्नः स्पृहावान् । नीटी.

[3]धर्मं कृत्वा कर्मणां तात मुख्यं
महाप्रतापः सवितेव भाति ।
हानेन धर्मस्य महीमपीमां
लब्ध्वा नरः सीदति पापबुद्धिः ॥

कर्मणाम् अर्थकामाद्यर्थानां मध्ये । नीटी.

[4]सुखप्रिये सेवमानोऽतिवेलं
योगाभ्यासे यो न करोति कर्म ।
वित्तक्षये हीनसुखोऽतिवेलं
दुःखं शेते कामवेगप्रणुन्नः ॥

सुखप्रिये भोगान् पुत्रादींश्च सेवमानः योगाभ्यासे चित्तवृत्तिनिरोधमभ्यसितुं कर्म आसनप्राणायामादिकं न करोति । नीटी.

(१) भा. ५।२७।४ ; भामु. ५।२७।४ एव (एते) धृतिमान्विनि (मतिमान्प्रणि).

(२) भा. ५।२७।५ ; भामु. ५।२७।५ मेषतो (मिच्छतां) गृद्धो (गृध्नो).

(३) भा. ५।२७।६ ; भामु. ५।२७।६ हानेन धर्मस्य (हीनो हि धर्मेण).

(४) भा. ५।२७।८ ; भामु. ५।२७।८.

¹एवं पुनरर्थचर्याप्रसक्तो
हित्वा धर्मं यः प्रकरोत्यधर्मम् ।
अश्रद्दधत्परलोकाय मूढो
हित्वा देहं तप्यते प्रेत्य मन्दः ॥

ब्रह्मचर्येति । ब्रह्मणि चर्या आत्मानुसंधानम्, तत्र अप्रसक्तः प्रकर्षेण अनासक्तः योगाद्व्यावृत्तः धर्मं च यज्ञादिरूपं हित्वा यः अधर्ममेव प्रकरोति संचिनोति । नीटी.

कर्मविपाकसिद्धान्तः

²न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाऽप्यथ वा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेतदनुयात्येव कर्ता ॥

ननु 'धर्मेण पापमपनुदति' इति श्रुतेः कालान्तरे अधर्मस्य नाशार्थं धर्ममप्यनुष्ठास्यामः, किं मुक्त्येत्याशङ्क्याऽऽह– न कर्मणामिति । कृतं कर्म भोगं विना आत्मज्ञानं विना वा न नश्यतीत्यर्थः, 'नाभुक्तं क्षीयते कर्म' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।' इत्यादिवाक्येभ्यः । उदाहृतश्रुतिस्तु प्रायश्चित्तादिना पापनाशो भवति, सोऽपि अत्रैव व्यवहार्यत्वमापादयति, न तु परलोकेऽपि पापास्पर्शाय प्रभवतीत्येवंपरा । नीटी.

³इह क्षेत्रे क्रियते पार्थ कार्यं
न वै किंचिद्विद्यते प्रेत्य कार्यम् ।
कृतं त्वया पारलोक्यं च कार्यं
पुण्यं महत्सद्भिरनुप्रशस्तम् ॥

कार्यं धर्मः । प्रेत्य मृत्वा । नीटी.

(१) भा. ५।२७।९ ; भामु. ५।२७।९ रथं (ब्रह्म).

(२) भा. ५।२७।१० ; भामु. ५।२७।१० त्वेतद (त्वेनम).

(३) भा. ५।२७।१२ ; भामु. ५।२७।१२ द्विद्यते (त्क्रियते) लोक्यं च कार्यं (लौक्यं च कर्म) रनु (रति).

¹अहाति मृत्युं च जरां भयं च
न क्षुत्पिपासे मनसश्चाप्रियाणि ।
न कर्तव्यं विद्यते तत्र किंचि-
दन्यत्र वै इन्द्रियप्रीणनार्थात् ॥

परलोके कर्म नास्तीत्याह– अहातीति । नीटी.

धर्मपरीक्षायाः त्रिविधो विषयः

²यत्राधर्मो धर्मरूपाणि बिभ्र-
द्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
तथा धर्मो धारयन्धर्मरूपं
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥

धर्माधर्मपरिक्षायां त्रैविध्यमाह– यत्रेति । यत्र पुरुषे दम्भादिमति अधर्मः अभिचारार्थे मन्त्रजपादिः धर्म इत्येवान्ये जानन्ति, तथा प्रच्छन्नयोगिनि दत्तात्रेयादौ धर्मः रागद्वेषादिशून्यतारूपो योगधर्मोऽपि उन्मत्तवदाचरणादधर्मरूप इव दृश्यते, यत्र वसिष्ठादौ धर्मः धर्मरूप एव । यद्यपि चाण्डालादौ अधर्मोऽप्यधर्मरूप एवास्ति तथाऽपि तस्यानुपादेयत्वात्त्रयमेव विचार्यम् । ¶पाठान्तरेऽधर्मेति छेदः । एतच्च त्वयाऽपि विदुषा मयि विचार्यमित्याशयः । नीटी.

³एवमेतावापदि लिङ्गमेत-
द्धर्माधर्मौ वृत्तिनित्यौ भजेताम् ।
आद्यं लिङ्गं यस्य तस्य प्रमाण-
मापद्धर्मे संजय तं निबोध ॥

¶ ग्रन्थोऽयं दुर्बोधः । 'बिभ्रद्धर्मो धर्मरूपम्' इत्यत्रैवाधर्मपदच्छेदः संभवति, नान्यत्र । तत्र तु तथा छेदो नोपपद्यते, द्वितीयतृतीयप्रकारयोरेकरूपत्वापत्त्या पौनरुक्त्यापातात्, त्रैविध्यभङ्गापत्तेश्च ।

(१) भा. ५।२७।१३ ; भामु. ५।२७।१३ सश्चाप्रि (सोऽप्रि) इन्द्रियप्रीणनार्थात् (चेन्द्रियप्रीणनाद्धि).

(२) भा. ५।२८।२ ; भामु. ५।२८।२ बिभ्रद्ध (धत्ते ध) तृतीयचरणे (बिभ्रद्धर्मो धर्मरूपं तथा च).

(३) भा. ५।२८।३ ; भामु. ५।२८।३ एवमेतावा (एवं तथैवाऽऽ) वृत्तिनित्यौ (नित्यवृत्ती).

अत्र आद्ययोः प्रच्छन्नत्वात् चिरकालेन तत्त्वनिश्चयः, अन्त्ये तु प्रत्यक्षलिङ्गेऽपि आपत्कालवशाद्धर्माधर्मयोर्व्यत्यासो जायत इत्याह– एवमिति। एतदेवंरूपं लोकप्रत्यक्षं लिङ्गं ब्राह्मणस्य स्वाध्यायप्रवचनादि, क्षत्रियस्य शौर्यादि, वैश्यस्य कृष्यादि, तत्तथैव यथोक्तमेव, तथाऽपि नित्यवृत्ती नित्यं वर्तेते तौ नित्यवृत्ती धर्माधर्मौ तल्लिङ्गं भजेताम्। अयं भावः– क्षत्रलिङ्गं ब्राह्मणवैश्ययोरापदि धर्मः, अनापद्यधर्मः। तथा चैकस्यैव लिङ्गस्य वर्णान्तरे अवस्थाभेदाद्धर्मत्वमधर्मत्वं च नित्यमिति। तत्रापि विशेषमाह– आद्यमिति। आद्यं ब्राह्मणलिङ्गं याजनादि यस्यास्ति ब्राह्मणस्य तस्यैव तत् प्रमाणम् अव्यभिचारि। आपद्यपि क्षत्रियेण याजनाध्यापनादिकं न कर्तव्यमित्यर्थः। एवंविधं तमापद्धर्मं शास्त्रान्निबोध बुध्यस्व। नीटी.

'लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत्तत्परीप्सेद्विहीनः।
प्रकृतिस्थश्चाऽऽपदि वर्तमान
उभौ गर्ह्यौ भवतः संजयैतौ॥

ननु कथं तर्हि एकचक्रायां भिक्षाटनं ब्राह्मणस्यैवासाधारणत्वेन विहितं भवद्भिः कृतमित्याशङ्क्याऽऽह– लुप्तायामिति। प्रकृतिः जीविकाहेतुभूतं धनं तच्च क्षत्रियस्य भूमिशस्त्रादिकम्, वैश्यस्य धनपश्वादिकं तस्मिन्सर्वात्मना नष्टे सति येन कर्म संध्योपासनादिकं निष्पादयेत् तत् भिक्षाटनादिकमपि परीप्सेत् कर्तुमिच्छेत्, अन्यथा जीविकाया अभावात्कर्मलोपः प्राणनाशश्च स्यादतोऽत्यन्तापदि तावान् विप्रधर्मोऽपीतरैरनुष्ठेय एव। प्रकृतिस्थश्चेति। आपदि आपद्धर्मे प्रकृतिस्थोऽपि यद्यापद्धर्ममनुसरेत् स लोभाद्गर्ह्यः। आपत्स्थोऽपि यदि प्राकृतं धर्ममनुसरेत् स जीवनलोपात् कुटुम्बहिंसया च गर्ह्य इत्यर्थः। नीटी.

'अविलोपमिच्छतां ब्राह्मणानां
प्रायश्चित्तं विहितं यद्विधात्रा।
आपद्यथाकर्मसु वर्तमाना-
न्विकर्मस्थान्संजय गर्हयेत॥

यत् यस्माद्धेतोः विधात्रा अविनाशः वृत्त्यन्तरोपजीवनेन ब्राह्मण्यस्य नाशो विनाशस्तदभावमिच्छतां ब्राह्मणानामापद्वृत्तीर्णानां प्रायश्चित्तं विहितं तस्माद्धेतोरापदि अन्यस्यान्यधर्माश्रयणं प्रसक्तमेवेति ज्ञायते। अत एव एकचक्रायामस्माभिः कृतं भिक्षाटनं नानुचितमित्यर्थः। एवमनापदि कर्मसु वर्तमानान् आपदि च विकर्मस्थान् संपश्येथाः सम्यगेवेदमिति पश्येथाः। अन्यथा तु आपदि कर्मस्थान् आत्मपरहिंस्रान् अनापदि विकर्मस्थांश्चातिलुब्धान् विगर्हयेस्त्वम्। नीटी.

'मनीषिणां तत्त्वविच्छेदनाय
विधीयते सत्सु वृत्तिः सदैव।
अब्राह्मणाः सन्ति तु ये न वैद्याः
सर्वोच्छेदं साधु मन्येत तेभ्यः॥

किंच, मनीषिणां मनसः निग्रहं नाशं कर्तुमिच्छताम्। 'ईष गतिहिंसादर्शनेषु' इत्यस्य रूपम्। सत्त्वविच्छेदनाय सत्त्वस्य बुद्धिसत्त्वस्य चिदात्मना सह एकलोलीभूतस्य विच्छेदनाय मुञ्जेषीकान्यायेन पृथक्करणाय सत्सु सतां गृहेषु वृत्तिः जीविका शास्त्रे विधीयते। 'वेदानिमं लोकममुं च परित्यज्याऽऽत्मनाऽऽत्मानमन्विच्छेत्' इति श्रुत्याऽऽत्मान्वेषणाय सर्वसंन्यासपूर्वकं भिक्षाचर्यविधानात् न ब्राह्मी वृत्तिः कस्यापि निन्द्या। ये तु अब्राह्मणा अपि वैद्याः विद्यानिष्ठाः न भवन्ति तेषां भिक्षाचर्यस्याविधानात्। तेभ्यः तेषामर्थे सर्वोत्सङ्गं सर्वेषामुत्सङ्गं समीपं स्वधर्मसंयोगमापदनापदोरुचित्तं साधु मन्येत। सर्वोच्छेदमिति पाठे तेभ्यस्तेषामर्थे भिक्षाटनं सर्वधर्मोच्छेदाय मन्येतेत्यर्थः। नीटी.

स्वकर्ममहिमा

'या वै विद्याः साधयन्तीह कर्म
तासां फलं विद्यते नेतरासाम्।
तत्रेह वै दृष्टफलं तु कर्म
पीत्वोदकं शाम्यति तृष्णयाऽऽर्तः॥

(१) भा. ५।२८।४; भामु. ५।२८।४.
(२) भा. ५।२८।५; भामु. ५।२८।५ अविलोप (अविनाश) आपद्यथाक (संपश्येथाः क) येत (येस्त्वम्).

(१) भा. ५।२८।६; भामु. ५।२८।६ तत्त्व (सत्त्व) च्छेदं (त्सङ्गं). (२) भा. ५।२९।६; भामु. ५।२९।७.

तेन कर्मणामनुकूला या विद्यास्ता एव फलवत्यः, न तु तत्प्रतिकूला इत्याह– या इति । तथा हि– 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्ता' (छान्दो. १।११।५) इति छान्दोग्ये सर्वभूतसंवेशनोद्गमनलिङ्गेन जगत्कारणतया निश्चितस्य प्राणाख्यपरमात्मनो विद्यायाः प्रस्तावकर्मसाधकत्वं दृष्टम् । तासां कर्मसाधकानां विद्यानां फलमस्ति, नेतरासां स्वतन्त्राणाम् । अयं भावः– गृहस्थः स्वात्मानमन्यांश्च पित्रादींस्तारयति, यतींश्च पुष्णाति; यतिस्त्वात्मानमेव तारयति, न पित्रादीन्; पोषणं च स्वस्यापि न करोति, भैक्षोपजीवित्वात्, अतो गार्हस्थ्यमेव श्रेष्ठमिति । किंच, नैष्कर्म्यं दृष्टविरुद्धमपीत्याह– तत्रेति । तत्र कर्मतदभावतारतम्ये विचारणीये कर्म इहैव दृष्टफलम् । नीटी.

[१]सोऽयं विधिर्विहितः कर्मणैव
तद्वर्तते संजय तत्र कर्म ।
तत्र योऽन्यत्कर्मणः साधु मन्ये-
न्मोघं तस्य लपितं दुर्बलस्य ॥

सोऽयं ज्ञानविधिः कर्मणैव सह विहितः । तत्र च अनुष्ठीयमाने कर्म उद्वर्तते उच्छिद्यते । कर्मसमवेतमेव ज्ञानं सकलकर्मोच्छेदहेतुरित्यर्थः । कर्मणोऽन्यत् संन्यासम् । मन्येत् मन्यते । नीटी.

[२]कर्मणाऽमी भान्ति देवाः परत्र
कर्मणैवेह प्लवते मातरिश्वा ।
अहोरात्रे विदधत्कर्मणैव
अतन्द्रितो नित्यमुदेति सूर्यः ॥

कर्मसमुच्चितं ज्ञानं स्तौति– कर्मणाऽमी भान्तीत्यादिना । 'ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च निषेवमाणाः' इत्युपसंहारात् । नीटी.

(१) भा. ५।२९।७ ; भामु. ५।२९।८ तद्वर्त (संवर्त) तस्य ल (तस्याऽऽल).

(२) भा. ५।२९।८ ; भामु. ५।२९।९.

[१]मासार्धमासानथ नक्षत्रयोगा-
मतन्द्रितश्चन्द्रमा अभ्युपैति ।
अतन्द्रितो दहते जातवेदाः
समिध्यमानः कर्म कुर्वन्प्रजाभ्यः ॥
[२]अतन्द्रिता भारमिमं महान्तं
बिभर्ति देवी पृथिवी बलेन ।
अतन्द्रिताः शीघ्रमपो वहन्ति
संतर्पयन्त्यः सर्वभूतानि नद्यः ॥
[३]अतन्द्रितो वर्षति भूरितेजाः
संनादयन्नन्तरिक्षं दिवं च ।
अतन्द्रितो ब्रह्मचर्यं चचार
श्रेष्ठत्वमिच्छन् बलभिद्देवतानाम् ॥
[४]हित्वा सुखं मनसश्च प्रियाणि
तेन शक्रः कर्मणा श्रैष्ठ्यमाप ।
सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियं च ।
एतानि सर्वाण्युपसेवमानो
देवराज्यं मघवान्प्राप मुख्यम् ॥
[५]बृहस्पतिर्ब्रह्मचर्यं चचार
समाहितः संशितात्मा यथावत् ।
हित्वा सुखं प्रतिरुध्येन्द्रियाणि
तेन देवानामगमद्गौरवं सः ॥
[६]नक्षत्राणि कर्मणाऽमुत्र भान्ति
रुद्रादित्या वसवोऽथापि विश्वे ।
यमो राजा वैश्रवणः कुबेरो
गन्धर्वयक्षाप्सरसश्च शुभ्राः ।

(१) भा. ५।२९।९ ; भामु. ५।२९।१० मा अभ्यु (माश्चाभ्यु).

(२) भा. ५।२९।१० ; भामु. ५।२९।११.

(३) भा. ५।२९।११ ; भामु. ५।२९।१२ दिवं च (दिशश्च).

(४) भा. ५।२९।१२ ; भामु. ५।२९।१३–१४ मानो देव (मानः स देव).

(५) भा. ५।२९।१३ ; भामु. ५।२९।१४–१५.

(६) भा. ५।२९।१४ ; भामु. ५।२९।१५–१६

ब्रह्मचर्यं वेदविद्याः क्रियाश्च
निषेवमाणा मुनयोऽमुत्र भान्ति ॥

[1]एको धर्मः परं श्रेयः ... ॥

[2]न कल्माषो न कपिलो न कृष्णो न च लोहितः ।
अणीयान्क्षुरधारायाः को धर्मं वक्तुमर्हति ॥

पापेन प्रज्ञानाशः, पुण्येन प्रज्ञावृद्धिः

[3]पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमेवाश्नुते फलम् ॥

पापकीर्तिः कलङ्कित्वेन प्रसिद्धः । नीटी.

[4]तस्मात्पापं न कुर्वीत पुरुषः शंसि(? संशि)-तव्रतः ॥

[5]पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥

[6]पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥

[7]पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यं स्थानं स्म गच्छति ।
तस्मात्पुण्यं निषेवेत पुरुषः सुसमाहितः ॥

[8]अर्थसिद्धिं परामिच्छन्धर्ममेवाऽऽदितश्चरेत् ।
न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥

नक्षत्राणि (तथा नक्षत्राणि) शुभ्राः (सूत) ब्रह्मचर्यं वेदविद्याः क्रियाश्च (ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च) मुनयो (ऋषयो).

(१) भा. ५।३३।४८ ; भामु. ५।३३।५२.

(२) भा. ५।३५।१९ इत्यस्मादनन्तरं टिप्पणीस्थः श्लोकः ; पमा. १।८१.

(३) भा. ५।३५।५१ ; भामु. ५।३५।६० चतुर्थचरणे (पुण्यमत्यन्तमश्नुते).

(४) भामु. ५।३५।६१.

(५) भा. ५।३५।५२ ; भामु. ५।३५।६१–६२.

(६) भा. ५।३५।५३ ; भामु. ५।३५।६२–६३ ; चव. १३ (धर्मः प्रज्ञां वर्धयति क्रियमाणः पुनः पुनः । वृद्धप्रज्ञस्ततो नित्यं पुण्यमारभते नरः ॥ ).

(७) भामु. ५।३५।६३.

(८) भा. ५।३७।४४ ; भामु. ५।३७।४८ ; चव. १२ दपैत्यर्थः (द्विनैश्वर्यं) दिवामृ (दि वा मृ).

[1]इदं च त्वां सर्वपरं ब्रवीमि
पुण्यं पदं तात महाविशिष्टम् ।
न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्यापि हेतोः ॥

सर्वपरं सर्वेभ्यः पुण्यहेतुभ्यः परम् उत्कृष्टम् । महाविशिष्टं महेन उत्सवेन अविशिष्टं समानं माङ्गलिकमित्यर्थः । नीटी.

धर्मस्य नित्यत्वम्

[2]नित्यो धर्मः सुखदुःखे त्वनित्ये
नित्यो जीवो धातुरस्य त्वनित्यः ।
त्यक्त्वाऽनित्यं प्रतितिष्ठस्व नित्ये
संतुष्य त्वं तोषपरो हि लाभः ॥

अस्य जीवत्वस्य हेतुः अविद्या । अनित्यं सुखदुःखे अविद्यां च । नित्ये धर्मे निरवद्ये आत्मनि च प्रतितिष्ठस्व निष्ठां कुरु । संतुष्य संतोषं प्राप्नुहि । तोषः परः उत्कृष्टः यस्मिन् लाभे । नीटी.

[3]महाबलान्पश्य महानुभावा-
न्प्रशास्य भूमिं धनधान्यपूर्णाम् ।
राज्यानि हित्वा विपुलांश्च भोगान्
गतान्नरेन्द्रान्वशमन्तकस्य ॥

[4]मृतं पुत्रं दुःखपुष्टं मनुष्या
उत्क्षिप्य राजन्स्वगृहान्निर्हरन्ति ।
तं मुक्तकेशाः करुणं रुदन्त-
श्चितामध्ये काष्ठमिव क्षिपन्ति ॥

(१) भा. ५।४०।११ ; भामु. ५।४०।१२ त्यजेज्जी (जह्याज्जी) ; ब्रक. १९ त्वां सर्वप (त्वामत्र प) पुण्यं पदं (पुण्यप्रदं) शेषं भामुवत् ; चव. १५ त्वां सर्वप (त्वामप) पुण्यं पदं (पुण्यप्रदं) शेषं भामुवत् ; कुर. २५ ब्रकवत्.

(२) भा. ५।४०।१२ ; भामु. ५।४०।१३ नित्यो जीवो (जीवो नित्यो) धातु (हेतु).

(३) भा. ५।४०।१३ ; भामु. ५।४०।१४.

(४) भा. ५।४०।१४ ; भामु. ५।४०।१५ रुदन्तश्चि (रुदन्ति चि).

गृहात् निर्हरन्ति दूरीकुर्वन्ति । नीटी.

[1]अन्यो धनं प्रेतगतस्य भुङ्क्ते
वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र
पुण्येन पापेन च चेष्ट्यमानः ॥

[2]उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ।
अपुष्पानफलान् वृक्षान् यथा तात पतत्रिणः ॥

उत्सृज्य मृतस्य देहं त्यक्त्वा । नीटी.

[3]अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं संचिनुयाच्छनैः ॥

धर्माधर्मौ सफलौ

धृतराष्ट्र उवाच–

[4]येऽस्मिन्धर्मान्नाऽऽचरन्तीह केचित्
तथा धर्मान्केचिदिहाऽऽचरन्ति ।
धर्मः पापेन प्रतिहन्यते स्म
उताहो धर्मः प्रतिहन्ति पापम् ॥

एवं जीवेशयोरभेदात् जगतो मिथ्यात्वात् जगज्जन्मादिनिमित्तभूतायाः प्रकृतेः ब्रह्मानन्यत्वाच्च ब्रह्माद्वैतं सिद्धम् । तेन मृत्युर्नास्तीति पक्षः स्थिरः । येषां च मते कर्मणा मृत्युनाशस्तेषामपि क्रममुक्तिप्रणाड्या कर्मणां मोक्षहेतुत्वं च स्थितम् । ये केचित्तु अस्मिन् मोक्षे निमित्ते धर्मान् अग्निहोत्रादीनि कर्माणि नाऽऽचरन्ति, किंतु मोक्षार्थं संन्यासमेव कुर्वन्तिः ये केचित्क्रममुक्त्यर्थं कर्माण्येव उपासनासहितानि कुर्वन्ति, येषां तु तादृशो महान् धर्मो नास्ति किंतु अल्प एवाग्निहोत्रादिर्नित्यानुष्ठानात्मकोऽस्ति तेषामपि स धर्मः पापेन रागादिदोषेण हन्यते, उत धर्म एव पापं हन्तीति प्रश्नार्थः । नीटी.

सनत्सुजात उवाच–

[1]उभयमेव तत्रोपभुज्यते
फलं धर्मस्यैवेतरस्य च ॥

उत्तरमाह– उभयमिति । तत्र मोक्षे उभयं संन्यासः सोपासनं कर्म च उपयुज्यते । तथा धर्मस्य फलं स्वर्गः चित्तशुद्धिर्वा, इतरस्य अधर्मस्य पापस्य नित्यकर्मत्यागस्य वा फलं नरकः उपयुज्यत इति । नीटी.

[2]तस्मिन् स्थितौ वाऽप्युभयं हि नित्यं
ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम् ।
तथाऽन्यथा पुण्यमुपैति देही
तथागतं पापमुपैति सिद्धम् ॥

इदमेव संग्रहवाक्यं विवृणोति– तस्मिन् स्थिताविति द्वाभ्याम् । उभयं संन्यासः सोपासनं कर्म च तस्मिन् मोक्षे स्वस्वरूपे स्थितौ स्थितिनिमित्तं नित्यम् अविचलम् । वाशब्द एवार्थः । तयोर्विशेषमाह– ज्ञानेनेति । संन्यासपूर्वकेण ज्ञानेन ब्रह्मविद्यया सिद्धं नित्यनिर्वृत्तं ब्रह्म प्रतिहन्ति अनृतजडदुःखादिप्रातिकूल्येन सच्चिदानन्दात्मकं गच्छति प्राप्नोति । हन्तेरत्र गत्यर्थत्वं ज्ञेयम् । तथा सोपासनेन कर्मणा अन्यथा सिद्धाद्विपरीतं साध्यं पुण्यं प्रशस्तं देवतादिभावम् उपैति, यतः देही देहाभिमानी भवति । तथागतं तेन प्रकारेण स्थितं सिद्धं नरदेहाभिमानजं पापमपि कदाचित् उपैति । देवभावं प्राप्तोऽपि कदाचिन्मुच्यते, अन्यथा जयविजयादिवत्ततो भ्रश्यत्यपीति ज्ञानमेव श्रेष्ठमिति भावः । नीटी.

[3]गत्वोभयं कर्मणा युज्यते स्थिरं
शुभस्य पापस्य स चापि कर्मणा ।
धर्मेणाधर्मं प्रणुदतीह विद्वान्
धर्मो बलीयानिति तस्य विद्धि ॥

(१) भा. ५।४०।१५ ; भाकु. ५।४०।१६.

(२) भा. ५।४०।१६ पू. ; भाकु. ५।४०।१७.

(३) भा. ५।४०।१६ उत्त. ; भाकु. ५।४०।१८.

(४) भा. ५।४२।१५ ; भाकु. ५।४२।२२ स्म (स्वित्).

(१) भा. ५।४२।१६ ; भाकु. ५।४२।२३ भुज्य (युज्य).

(२) भाकु. ५।४२।२४.

(३) भा. ५।४२।१६ उत्त. ; भाकु. ५।४२।२५ णाधर्मं (ण पापं) विद्धि (सिद्धिः).

'फलं धर्मस्यैवेतरस्य च' इत्युत्तरार्धं विवृणोति— गत्वेति। उभयं पुण्यस्य पापस्य च फलं स्वर्गनरकाख्यं तच्च अस्थिरं क्षयिष्णु गत्वा प्राप्य पुनरस्मिन् लोके कर्मणा पूर्वसंस्कारानुगुणेन तत्तद्योन्युचितेन युज्यते योगं प्राप्नोति। कर्म कृत्वा तत्फलं भुक्त्वा पुनः कर्मैव कुरुते, तेन कर्मपाशान्न मुच्यते इत्यर्थः। यद्यप्येवं तथापि स चापि कर्मयोगी कर्मणा धर्मेण धर्मरूपेण पापं प्रणुदति दूरीकरोति विद्वान्। मूढस्तु कर्मणः फलं स्वर्गपश्वादिकमेवेच्छतीति भावः। अतो हेतोर्धर्मो बलीयान्, न स्वधर्मः। इति हेतोः तस्य धर्मं कुर्वतः सिद्धिः कालेन रागादिदोषनाशद्वारा मोक्षोऽप्यस्तीत्यर्थः। विद्धीति पाठे सिद्धिमिति शेषः। नीटी.

दैवमानुषकर्मणोः बलाबलविचारादि

[1]जिज्ञासन्तो हि धर्मस्य संदिग्धस्य वृकोदर।
पर्यायं न व्यवस्यन्ति दैवमानुषयोर्जनाः॥

दैवमानुषयोः धर्मस्य पर्यायमिति संबन्धः। दैवधर्मस्य भाविनः पुण्यपापफलस्य पर्यायं पर्यन्तं दैवज्ञादेः सकाशाज्जिज्ञासन्तो ज्ञातुमिच्छन्तोऽपि नाध्यवस्यन्ति न निश्चिन्वन्ति, कदाचिद्दैवज्ञायुक्तावपि विसंवाददर्शनात्। तथा मानुषधर्मस्य पुरुषकारस्य पर्यायं बलाबलनिर्णयमिति पूर्ववत्, शूरस्यापि कदाचित् क्लीबत्वदृष्टेरिति भावः। नीटी.

[2]स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु।
विनाशेऽपि स एवास्य संदिग्धं कर्म पौरुषम्॥

स एव धर्म एव। संदिग्धं संदिग्धफलम्। नीटी.

अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः॥

परिदृष्टानि कर्तव्यत्वेन निश्चितानि कार्याणि। नीटी.

सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम्।
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते॥

सुनीतं सम्यगनुष्ठितम्। विरुध्यते निष्फलं क्रियते। नीटी.

दैवमप्यकृतं कर्म पौरुषेण विहन्यते।
शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत॥

अकृतं भोगायानारब्धं कर्म पुण्यादिकम् आगामि- (सुख)दुःखं दैवज्ञादिभिरुपदिष्टतया निश्चितसद्भावं पौरुषेण विहन्यते। तेन काम्यकर्मणामपि फलवत्त्वमस्त्येवेति सिद्धम्। यद्वा, अकृतं कालस्वभावजं कर्म अनुभूयमानं शीतोष्णादि, तत् पौरुषेण प्रावरणादिसंपादनेन निवार्यत इत्यर्थः। नीटी.

[1]यदन्यद्दिष्टभावस्य पुरुषस्य स्वयंकृतम्।
तस्मादनवरोधश्च विद्यते तत्र लक्षणम्॥

दिष्टः फलभोगाय आज्ञप्तः भावः सत्ता यस्य तत् दिष्टभावं प्रारब्धकर्म। पञ्चम्यर्थे षष्ठी। प्रारब्धादन्यदित्यर्थः। पुरुषस्य पुरुषेण संचितं यत् स्वयं कृतं कर्म तस्मादनुपरोधः जन्मान्तरे निरोधः नास्ति। तत्र ज्ञानेन प्रायश्चित्तेन वा संचितपापानां नाशे लक्षणं ज्ञापकं श्रुतिस्मृतिजातं विद्यते— 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।', 'धर्मेण पापमपनुदति', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा।' इति। (भावः प्रारब्धकर्म?)। यद्वा अकृतात् दैवात् शीतादेरन्यत्स्वयंकृतं दैवं देहान्तःकरणसंतापहेतुः तस्मादपि उपरोधोऽत्रैव नास्ति। यतस्तत्रापि लक्षणं चिकित्साविवेकहेतुः शास्त्रं प्रवर्तते। सर्वेष्वपि पौरुषं कर्तव्यमिति भावः। नीटी.

[2]लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः।
एवंबुद्धिः प्रवर्तेत फलं स्यादुभयान्वयात्॥

एतदेवाऽऽह— लोकस्येति। कर्मणोऽन्यत्र पौरुषं विना अन्यतः एकस्माद्दैवादेव वृत्तिर्जीविका नास्ति। एवंबुद्धिः ईदृग्ज्ञानवान् सन् प्रवर्तेत पुरुषकारं कुर्यात्। तथा सति

(१) भा. ५।७५।५ ; भामु. ५।७७।५ न व्यव (नाध्यव) दैव (देव).

(२) भा. ५।७५।६–९ ; भामु. ५।७७।६–९.

(१) भा. ५।७५।१० ; भामु. ५।७७।१० स्वयंकृ (स्वयं कृ) दनव (दनुप).

(२) भा. ५।७५।११ ; भामु. ५।७७।११ न्वयात् (न्वये).

उभयान्वये दैवपौरुषयोः संबन्धे फलं भवति, नान्यतरत इत्यर्थः । नीटी.

¹य एवं कृतबुद्धिः सत्कर्मस्वेव प्रवर्तते ।
नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥

यथा कर्षकः कर्म कृत्वा दैवानुकूल्यात् फलं लब्ध्वाऽपि न हृष्यति, अनाकस्मिकत्वात् फलस्य ; दैवप्रातिकूल्यादलब्ध्वाऽपि न व्यथते, अनुचितस्याकरणात् ; तद्वदत्रापि ज्ञेयमित्याशयः । नीटी.

²धर्मकार्यं यतञ्शक्त्या न चेच्छक्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥

यतन् यतमानः । नीटी.

मानसं पापं साक्षादकृतं न ह्यनर्थे

³मनसा चिन्तयन्पापं कर्मणा नाभिरोचयन् ।
न प्राप्नोति फलं तस्य एवं धर्मविदो विदुः ॥

मिथ्यावचनं धर्मनाशकरम्

⁴प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।
मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥

करिष्येतीति संधिरार्षः । नीटी.

⁵न रूपमनृतस्यास्ति नानृतस्यास्ति संततिः ।
नानृतस्याऽऽधिपत्यं च कुत एव गतिः शुभा ॥

अनृतस्य सत्यहीनस्य । रूपं स्वरूपम् । जीवन्नेव स मृत इत्यर्थः । नीटी.

कर्मणः फलं कर्तुरेव

⁶ददाति यत्पार्थिव यत्करोति
यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापकर्षो
नान्यस्तदश्नाति स एव कर्ता ॥

(१) भा. ५।७५।१२ ; भामु. ५।७७।१२ सन् (स).
(२) भा. ५।९१।६ ; भामु. ५।९३।६ न चेच्छक्नोति (नो चेत्प्राप्नोति).
(३) भा. ५।९१।७ ; भामु. ५।९३।७ नाभि (नाति) तस्य ए (तस्येत्ये).
(४) भा. ५।१०५।८–९ ; भामु. ५।१०७।८–९.
(५) भा. ५।१२१।२१ ; भामु. ५।१२३।२२.



पापिष्ठत्वेन त्वत्कृतं पापं त्वयैव भोक्तव्यम्, न तु भ्रात्रादिभिरित्याशयेनाऽऽह– ददातीति । किंतु कर्तैव तदाप्नोति । नीटी.

धर्मार्थकामानां धर्मः प्रधानः

¹त्रिवर्गयुक्ताः प्राज्ञानामारम्भा भरतर्षभ ।
धर्मार्थावनुरुध्यन्ते त्रिवर्गासंभवे नराः ॥

²पृथक्तु विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुध्यते ॥

अर्थं कलिं कलहहेतुम् । नीटी.

³इन्द्रियैः प्रसृतो लोभाद्धर्मं विप्रजहाति यः ।
कामार्थावनुपायेन लिप्समानो विनश्यति ॥

अनुपायेन हीनोपायेन । नीटी.

⁴कामार्थौ लिप्समानस्तु धर्ममेवाऽऽदितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वाऽपि कदाचन ॥
उपायं धर्ममेवाऽऽहुस्त्रिवर्गस्य विशां पते ।
लिप्समानो हि तेनाऽऽशु कक्षेऽग्निरिव वर्धते ॥

⁵नमो धर्माय महते धर्मो धारयति प्रजाः ॥

आत्मकृतदुश्चरितस्य दैवं कालो वा न कारणम्

⁶य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
एनसा न स दैवं वा कालं वा गन्तुमर्हति ॥

एनसा दोषेण देवान् कालं वा गन्तुम् उपालब्धुं नार्हति, दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् । दृष्टापराधाभावे दैवस्य कालस्य वा उपालम्भः कर्तु-

(१) भा. ५।१२२।३२ ; भामु. ५।१२४।३४ युक्ताः (युक्तः) मारम्भा (मारम्भो).
(२) भा. ५।१२२।३३ ; भामु. ५।१२४।३५ पृथक्तु (पृथक्च).
(३) भा. ५।१२२।३४ ; भामु. ५।१२४।३६ प्रसृ (प्राकृ).
(४) भा. ५।१२२।३५–३६ ; भामु. ५।१२४।३७–३८ लिप्समा (लिप्यमा).
(५) भा. ५।१३५।८ ; भामु. ५।१३७।८.
(६) भा. ५।१५६।१९ ; भामु. ५।१५९।१९ उत्तरार्धं (न स कालं न वा देवानेनसा गन्तुमर्हति ॥ ).

मुचितः, न तु तस्मिन् सतीत्यर्थः। 'न स कालं न वा देवं वक्तुमेतदिहार्हति।' इति पाठेऽप्ययमेवार्थः।
नीटी.

अतर्क्यलक्षणम्

**'अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्।**
**प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्॥**

ये भावाः जगज्जन्मोपादाननिमित्तपरिमाणधर्माधर्मादयः पदार्थाश्चिन्तयितुमयोग्यास्तान् तर्केण साधयेत् न हि ते तर्केण साधयितुं शक्यन्ते, तर्कान्तरेण तस्य बाधसंभवात्, 'तर्काप्रतिष्ठानात्' (ब्रसू. २।१।११) इति न्यायाच्च। अत एवास्य श्लोकस्योत्तरार्धमन्यत्र पठन्ति– 'नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः।' इति। तथा हि– कन्दुकाकारे भुवनकोशे कल्प्यमाने ये कन्दुकपृष्ठे कमठपृष्ठोपमे तिष्ठन्ति तेषां कियानपि देशो जलपशुमनुष्याश्रययोग्योऽस्तीति वक्तुं युक्तम्, ये तु तन्निम्ने तदधश्च वसन्ति तेषां गुरुत्ववतामधर्थानामधस्तादाश्रयाभावेनावश्यं पतनं भवतीति तावान्देशो रिक्त एवास्तीति वक्तव्यम्। तथा च तदाश्रया तत्कृता द्वीपान्तरकल्पना लोकदृष्टिविरुद्धेति पामरा अपि प्रतियन्ति। ननु यथा पृथिव्या अन्तरिक्षेऽवस्थानशक्तिर्दिगम्बरादन्यैः सर्वैर्वादिभिः कल्प्यते तथा वयमपि तस्या आकर्षणशक्तिमन्यां कल्पयामहे, यया सर्वदिक्स्थाः प्राणिनः पृथिवीं पादाधःस्थामेव मन्यन्ते खं चोपरिस्थमिति। तर्हि लोकदृष्टिविरुद्धकल्पनापेक्षया सर्वप्राणिप्रत्यक्षस्वप्नमायेन्द्रजालादितुल्यतैवास्याः कुतो न कल्प्यते? ननु स्वप्नादिवदस्या बाधो न दृश्यत इति चेत्, प्राक् ब्रह्मात्मज्ञानात् मा दर्शि, किं नश्छिन्नम्? श्रुत्या तु ज्ञाते द्वैतं न विद्यते। 'नेह नानाऽस्ति किंचन' इत्यादिकया ब्रह्मदर्शनेन रज्जुदर्शनेन सर्पस्येव प्रपञ्चबाध आम्नायते। तथा च निष्कलङ्कात् श्रुतिप्रमाणात् ब्रह्माद्वैतमेवाऽऽदर्तव्यम्, न तु सकलङ्कात्तर्काज्जगतो निर्वचनीयत्वमिति भावः।
नीटी.

(१) भा. ६।६।११; भामु. ६।५।१२.

सुखदुःखादिद्वन्द्वसमत्वबुद्ध्या कृतं विहितं कर्म मोक्षाय

**'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥**

स्वधर्मस्य युद्धस्याकरणे धर्मकीर्त्योर्नाशः पापावाप्तिश्च 'अथ चेत्' इति श्लोकेन भगवता यद्यप्युक्ता, तथाऽपि युद्धस्य अर्जुनाभिमते काम्यत्वपक्षे 'अहो बत महत्पापं कर्तुं व्यवसिता वयम्। यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः॥' इति तत्करणे पापप्रसक्तिरस्ति। तां निवारयितुं सिद्ध्यसिद्ध्योः समत्वलक्षणं योगमाह– सुखदुःखे इति। समे कृत्वा सुखदुःखयोस्तद्धेत्वोः राज्यलाभालाभयोस्तद्धेत्वोश्च जयाजययोः रागद्वेषावकृत्वेत्यर्थः। केवलं स्वधर्मोऽयमिति मत्वा युद्धाय युज्यस्व घटस्व। एवं कुर्वंस्त्वं पापं नावाप्स्यसि। यस्तु राज्यलोभेन युद्धद्वयं करोति तस्यास्त्येव पापमिति भावः। कथं तर्हि स्वधर्मत्वेनानुष्ठितेऽपि युद्धे 'हतो वा प्राप्स्यसि स्वर्गम्' इत्यादिफलस्मरणम्? आनुषङ्गिकमिति ब्रूमः। तथा चाऽऽपस्तम्बः– 'तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते। न धर्महानिर्भवति' (आध. १।२०।३,४) इति आम्रनिदर्शनेन प्रतिपादयति।
नीटी.

**'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥**

(१) इह कर्मबन्धप्रहाणार्थे कर्मयोगेऽनुष्ठीयमाने, अभिक्रम्यते व्याप्यते इत्यभिक्रमः कर्मारम्भः कर्मैव वा, तस्य नाशो नास्ति। अन्यत् फलं दत्त्वा नश्यति, न त्विदम्, इष्टफलस्याजननात्। नन्वेतस्यापि काम्यान्तःपातितया नित्याकरणजनितः प्रत्यवाय उत्पद्येतैव, सकृदनुष्ठितस्य बन्धप्रहाणप्रत्यवायपरिहाराख्यफलद्वयहेतुत्वायोगादित्याशङ्क्याऽऽह– प्रत्यवायो न विद्यत इति। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाश-

(१) भा. ६।२४।३८; भामु. ६।२६।३८.

(२) भा. ६।२४।४०; भामु. ६।२६।४०; चमव्याआ. ५२ धर्मस्य (पुण्यस्य); आन. ८, ५७०.

केन ' इति श्रुत्या संयोगपृथक्त्वन्यायेन ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्यनेन नित्यस्य दध्नो वीर्यार्थत्वमिव नित्यानामपि कर्मणां विविदिषार्थत्वं विनियोगबलात्सिध्यति । ततश्च काम्येनैव प्रयोगेण नित्यस्यापि सिद्धेर्न नित्याकरणनिमित्तो वा काम्यत्वात्सर्वाङ्गानुपसंहारनिमित्तो वा प्रत्यवायो विद्यते, नित्यानामेव विनियोगात् नित्येषु च यथाशक्त्युपबन्धस्यानुज्ञानात् । वार्तिके तु काम्यानामप्यत्र विनियोगो दृष्टः । यथा– ' वेदानुवचनादीनामैकात्म्यज्ञानजन्मने । तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् । तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ॥ ' इति । अस्मिन्पक्षे काम्यानामपि तुल्यफलत्वान्नित्यवद्यथाशक्त्युपबन्धो भविष्यतीति न सर्वाङ्गानुपसंहारजनितः प्रत्यवायो विद्यते । स्वल्पमपि अस्य योगधर्मस्यानुष्ठितमनुपभुक्तबीजकल्पम् ' जन्मजन्मान्तराभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तच्चैवाभ्यस( ? स्यते ) पुनः ॥ ' इति स्मृतेरुत्तरोत्तरसंस्काराधानद्वारा स्वसजातीयवृद्धेर्निमित्तं सत् कामादिदोषक्षपणद्वारा महतो भयात् संसारात् त्रायते । तस्मात्सांख्यानधिकारिणा कर्मयोग एवानुष्ठेय इति भावः । नीटी.

( २ ) इह निष्कामकर्मणि । महतो भयात् संसारात् त्रायते चित्तशुद्धिद्वारेण मोक्षं साधयतीत्यर्थः । आन. ५७०

'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥

( १ ) कर्मण्येवेति । कर्मण्येव आश्रमोचिते तवाधिकारः, अवश्यकर्तव्यत्वात्, न तु कर्मफलेषु । मा ते फलेष्वधिकार इत्येतस्यार्थं स्फुटयति– मा कर्मफलहेतुर्भूरिति । कर्मफलं कामयमानः कर्म( फल )हेतुः कर्मणोऽनुष्ठाता मा भूस्त्वमिति फलेच्छा त्वया मा कर्तव्येत्युक्तं भवति । मा ते सङ्गोऽस्त्वकर्मणीति ( न च ? )एवं सति कर्म( ? र्मा )करण आसक्तिस्त्वया न कर्तव्या, किंतु कर्तव्यान्येव कर्माणीत्यर्थः । मोक. १५०

( २ ) गीतायां भगवता मुमुक्षोरर्जुनस्य फलासक्तिनिषिद्धा ' कर्मण्येव ' इत्यादिना । पमा. १।५४

( ३ ) बन्धहेतुफलं विना कर्म कर्तव्यमिति तात्पर्यम् । आत. ३५०

( ४ ) ननु ममाप्यौपनिषदात्मज्ञानार्थिनः शम एवेष्टः, तत्कथं मां युध्यस्वेति प्रेरयसि ? इत्याशङ्क्याऽऽह– कर्मण्येवेति । कर्मण्येवाधिकारः, न ज्ञाननिष्ठायाम् । मा फलेषु, सङ्गोऽस्त्वित्यपकृष्यते । कर्मफलं स्वर्गपश्वादि हेतुः कर्मसु प्रवर्तकं यस्य तादृशो मा भूः । अकर्मणि कर्माकरणेऽपि तव सङ्गो माऽस्तु । नीटी.

'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥

( १ ) कथं तर्हि कर्माणि कर्तव्यानि ? इत्याकाङ्क्षायामाह– योगस्थ इत्यादि । यानि नित्यानि कर्माणि संध्यावन्दनादीनि ( तानि ) योगस्थः फलसङ्गं त्यक्त्वा कर्मफलसिद्ध्यसिद्ध्योः हर्षविषादरहितत्वेन समो भूत्वा कुरु । ईश्वराराधनार्थं च क्रियमाणे कर्मणि नास्ति वैषम्यम् । स एव कर्ता तदात्मकं च कर्मेति क्रियमाणं तत्प्राप्तिहेतुत्वं भजत इत्यर्थः । तदिदं समत्वं योग उच्यते । मोक. १५०–१५१

( २ ) एतदेव विवृणोति– योगस्थ इति । योगस्थः सन् सङ्गं फलतृष्णां कर्तृत्वाभिमानं च त्यक्त्वा कर्माणि ज्ञानार्थं कुरु हे धनंजय । सिद्ध्यसिद्ध्योः कर्मफलस्य विविदिषादेः सिद्धावसिद्धौ वा समः हर्षविषादशून्यः भूत्वा कर्माणि कुर्विति संबन्धः । इदमेव सिद्ध्यसिद्ध्योः समत्वं योग इत्युच्यते । नीटी.

---

(१) भा. ६।२४।४७ ; भामु. ६।२६।४७ ; मेधा. २।५ तृतीयचरणमात्रम् : ६।७५ उत्त. ; मोक. १५० ; पमा. १।५५ (कर्मण्येवा...फलहेतुः) एतावदेव ; आत. ३५० उत्त.

(१) भा. ६।२४।४८ ; भामु. ६।२६।४८ ; मोक. १५० ; पमा. १।५५.

**¹दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥**

( १ ) समत्वबुद्धियुक्तादस्मात् कर्मणो दूरेण ज्ञानरहितं कर्म जघन्यम् । बुद्धौ शरणमन्विच्छ बुद्धिमाश्रयेत्यर्थः । फलहेतवः फलं प्रवृत्तिहेतुर्येषां ते तथा । मोक. १५१

( २ ) इममेव बुद्धियोगं स्तौति— दूरेणेति । कर्म फलकामेन क्रियमाणं बुद्धियोगात् पूर्वोक्तान्निष्कामात्कर्मणः दूरेण हि प्रसिद्धम् अवरम् अत्यन्तनिकृष्टम् । अतो बुद्धौ योगरूपायां तत्फलभूतायां सांख्यरूपायां वा तन्निमित्तं शरणं रक्षितारम् आश्रयं वा ईश्वरम् अन्विच्छ प्रार्थयस्व तत्प्रीत्यर्थं कर्माणि कुर्वित्यर्थः । यतः फलहेतवः फलमेव हेतुः प्रवर्तकं येषां तादृशाः फलतृष्णावन्तः कृपणाः दीनाः भवन्ति, ' यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः ' इति श्रुतेः । नीटी.

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥**

( १ ) बुद्धियुक्त इति ईश्वराराधनार्थे कर्मेत्यनया बुद्ध्या युक्तः कर्म कुर्वन् नाऽऽ( ? आ)रब्धे शुभाशुभे कर्मणी जहातीत्यर्थः । योगाय युज्यस्व समत्वयोगाय यतस्व । कर्मसु कौशलमिति । इदं यत् ब्रह्मणि समर्पणं कर्मणः फलसंकल्परहितता च । मोक. १५१

( २ ) किंच— बुद्धीति । बुद्धियुक्तः समत्वबुद्धियुक्तः योगाय समत्वबुद्धियोगाय युज्यस्व घटस्व । योगः सिद्ध्यसिद्ध्योः समत्वबुद्धिः कर्मसु बन्धकेष्वपि कौशलं बन्धनिवर्तकत्वसंपादनम् । ननु बुद्धियुक्तः कर्मभिर्दुष्कृतं त्यजतु, ' धर्मेण पापमपनुदति ' इति श्रुतेः ; सुकृतं तु सजातीयत्वाच्चैर्दुष्परिहरमिति कथमुभे सुकृतदुष्कृते जहातीत्युच्यते ? सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेति प्राञ्चः । अर्वाञ्चस्तु— दुष्कृतत्यागमुक्तरीत्याऽभ्युपेत्य †, फलत्यागात् सुकृतत्यागोऽपि कर्मयोगिनो भवति, दुष्कृतफलवन्मोक्षप्रतिबन्धकतत्फलस्यानुत्पादात् । यत्तु आपस्तम्बोक्ताम्रवृक्षनिदर्शनेन नान्तरीयकं सुकृतफलमुक्तम्, न तत्फलत्वेनोपपद्यते, नान्तरीयकत्वादेव । तस्मात्फलद्वारा मोक्षप्रतिबन्धके क्रियमाणे एव सुकृतदुष्कृते कर्मयोगी जहाति, ज्ञानी तु संचिते अपि ते जहातीति तयोर्विशेष इत्याहुः । नीटी.

† ल्यबन्तस्यास्य आहुरिति दूरव्यवहितेनान्वयः ।

(१) भा. ६।२४।४९-५१ ; भाम्. ६।२६।४९-५१ ; मोक. १।५०.

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥**

( १ ) कर्मजमिति । शुभाशुभकर्मजं फलं त्यक्त्वा जन्मलक्षण(बन्ध)रहिताः सर्वोपद्रवशून्यं विष्णोः स्थानं गच्छन्ति इत्यर्थः । मोक. १५१

( २ ) एतदेवाऽऽह— कर्मजमिति । बुद्धियुक्ताः समत्वबुद्धियुक्ताः क्रियमाणकर्मजं फलं त्यक्त्वा मनीषिणः मनोनिग्रहसमर्थाः भूत्वा जन्मरूपेण बन्धेन मुक्ताः सन्तः अनामयं निरुपद्रवं पदं मोक्षाख्यं गच्छन्ति । नीटी.

मिथ्याचारलक्षणम्

**¹कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥**

ननु संन्यासपूर्वकं ध्यानेनैव चित्तशुद्धिमपि संपादयिष्यामि, किं कर्मभिः ? इत्याशङ्क्याऽऽह— कर्मेन्द्रियाणीति । यो विमूढात्मा रागाद्याक्रान्तचित्तः कर्मेन्द्रियाणि वागादीनि संयम्य निगृह्य आस्ते एकान्ते ध्यानापदेशेनोपविशति स मिथ्याचारः । तस्य तत् आसननियमनादिकमाचरणं मिथ्या अलीकमेव, निष्फलत्वात् । तत्र हेतुः— इन्द्रियार्थान्मनसा स्मरन्निति । यतः इन्द्रियार्थान् शब्दादीन् श्रोत्रादिभिर्गृह्णाति मनसा च स्मरति अतो मिथ्याचारः सः विषयांश्चिन्तयन्योगनिष्ठामात्मनो लोकेऽभिव्यनक्ति अतः कपटीत्यर्थः । तस्मात्कर्मव्यतिरिक्तश्चित्तशुद्ध्युपायो नास्तीति भावः । नीटी.

(१) भा. ६।२५।६-८ ; भाम्. ६।२७।६-८ ; मोक. १४८.

अनासक्तियुक्तं यज्ञार्थमाचरितं कर्म मोक्षाय

**यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥**

( १ ) असक्तः फलसङ्गरहितः । मोक. १४९

( २ ) यस्तु पूर्वस्मान्मिथ्याचाराद्विलक्षणः पुरुषधौरेय इन्द्रियाणि मनसा सह नियम्य रागद्वेषवियुक्तानि कृत्वा कर्मेन्द्रियैः कर्मयोगमारभते हे अर्जुन, सः कर्मफले स्वर्गादावैहिके वा शब्दादौ असक्तः अनासक्तः, अतो विशिष्यते पूर्वस्मादधिको भवतीत्यर्थः । नीटी.

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥**

नियतमिति । यस्मादेवं तस्मात्त्वं नियतं संध्योपासनादिकर्मैव कुरु । यद्वा, नियतं नियमेन त्वं कर्म नित्यकाम्यसाधारणं यत्पापनिवर्तकस्वभावं तत्तदेव कुरु । हि यस्मात् अकर्मणः सकलकर्मेन्द्रियनिग्रहेण तदकरणात् चित्तजयशून्यात् कर्मैव ज्यायः प्रशस्ततरम् । अपि च ते तव क्षत्रियस्य अकर्मणः सत्यामपि चित्तशुद्धौ सर्वकर्मत्यागिनः शरीरयात्रा देहव्यवहारः न प्रसिध्येत्, भैक्ष्यचर्यायामनधिकारात् । 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति संन्यासविधायके वाक्ये 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राजपदवद्ब्राह्मणपदस्य विवक्षितत्वार्थत्वात्, 'चत्वार आश्रमा ब्राह्मणस्य, त्रयो राजन्यस्य, द्वौ वैश्यस्य' इति स्मृतेश्च । अन्यत्राप्युक्तं पारिव्राज्यं प्रकृत्य 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥' इति । नीटी.

**'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥**

( १ ) यज्ञशब्देन यज्ञपुरुष उच्यते, 'यज्ञो वै विष्णुः' इति श्रुतेः । तेनेश्वराराधनार्थं कर्म वर्जयित्वाऽन्यत् स्वर्गादिफलार्थं कर्म बन्धाय भवतीत्यर्थः । मोक. १४९

( २ ) ननु 'कर्मणा बध्यते जन्तुः' इति कर्मणां बन्धकत्वस्मृतेः कथं मुमुक्षुं मां तत्र नियोजयसीत्याशङ्क्याऽऽह— यज्ञार्थादिति । यज्ञः परमेश्वराराधनम्, 'यज देवपूजायाम्' इति धात्वर्थानुगमात्, तदर्थम्, 'यज्ञो वै विष्णुः' इति श्रुतेर्विष्णुर्वा, तदाराधनार्थं यत्कर्म ततोऽन्यत्र कर्मणि स्वर्गाद्यर्थे प्रवृत्तोऽयं लोकः कर्मबन्धनः कर्मणा बध्यते, न त्वीश्वराराधनार्थेन, अतः तदर्थम् ईश्वराराधनार्थं कर्म वर्णाश्रमोचितं हे कौन्तेय, मुक्तसङ्गः फलाभिलाषशून्यः सन् समाचार सम्यक्कुरु । नीटी.

**'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥**

एतदेवार्थवादेन द्रढयति— सहेति । यज्ञैः सहेति सहयज्ञाः । 'वोपसर्जनस्य' ( पासू. ६।३।८२ ) इति पक्षे सादेशाभावः । कर्माधिकृता इति यावत् । प्रजाः त्रैवर्णिकाः । अनेन यज्ञेन प्रसविष्यध्वम्, प्रसवो वृद्धिः, तां लभध्वम् । एषः यज्ञः वः युष्माकम् इष्टकामधुक् इष्टार्थपूरकोऽस्तु । नीटी.

**'देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥**

इष्टार्थपूरकत्वमेवाऽऽह— देवानिति । भावयत तर्पयत । अनेन देवतापूजात्मकेन यज्ञेन । वः युष्मान् भावयन्तु वृष्ट्यादिदानेन । परस्परं भावयन्तो देवाश्च यूयं च श्रेयः परं प्राप्स्यथ । नीटी.

**'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥**

---

(१) भा. ६।२५।९ ; भामु. ६।२७।९ ; मोक. १४८ : १४९ प्रथमचरणमात्रम् ; निप्र. १।१४ पू.

(१) भा. ६।२५।१० ; भामु. ६।२७।१० पुरोवा (स होवा) ; पमा. १।१५० ; मुक्ता. १९ ; आन. ५५४.

(२) भा. ६।२५।११ ; भामु. ६।२७।११ ; पमा. १।१५० ; मुक्ता. १९ ; आन. ५५४.

(३) भा. ६।२५।१२ ; भामु. ६।२७।१२ ; पमा. १।१५० ; मच. ११।२४२ पू. ; अप. ४३३ ; मुक्ता. १९ ; आन. ५५४.

( १ ) यज्ञैः संवर्धिताः वः युष्मभ्यं भोगान् अन्नादीन् वृष्ट्यादिद्वारा दास्यन्ति, अतो देवैर्दत्तान् अन्नादीन् तेभ्योऽदत्त्वा यो भुङ्क्ते स चौर एव । आत. ४३३

( २ ) किंच, इष्टान् पुत्रपश्वादीन् । वः युष्मभ्यम् । एभ्यो देवेभ्यः तद्दत्तानेव व्रीहिपश्वाज्यादीन् अप्रदाय अदत्त्वा देवतोद्देशेन द्रव्यत्यागात्मकं यागं नित्यनैमित्तिकरूपं वैश्वदेवाग्निहोत्रजातेष्ट्यादिरूपमकृत्वेत्यर्थः, ( अदत्त्वा ? ) यो भुङ्क्ते स स्तेन एव । नीटी.

( ३ ) देवद्रव्यापहारीत्यर्थः । अतः विद्यमानान्नेन येन यज्ञो न क्रियते स देवद्रव्यापहारात् स्वर्णस्तेयी भवेत् इत्यर्थः । आन. ५५४

**[१]यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥**

( १ ) बलिवैश्वदेवावशिष्टानां भोज्यतामाह भगवद्गीता– यज्ञेति । वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनाकृतैः सर्वैः पापैर्मुच्यन्ते । ये आत्मभोजनार्थमेव पचन्ति, न तु वैश्वदेवार्थम्, ते पापात्मानोऽघमेव भुञ्जते । आत. ४२५

( २ ) ये तु यज्ञशिष्टाशिनः वैश्वदेवादिशेषान्नभोजनशीलाः सन्तः ऋणापाकरणात् ते मुच्यन्ते सर्वकिल्बिषैः प्रमादकृतैर्विहिताकरणनिमित्तैः पञ्चसूनानिमित्तैर्वा । ये त्वात्मकारणात् स्वार्थमेव पचन्ति, न तु पञ्चमहायज्ञार्थम्, ते पापाः स्वयं पापरूपा एव सन्तः पापमेव भुञ्जते । तथा च स्मृतिः– 'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥' इति, 'पञ्चसूनाकृतं पापं पञ्चयज्ञैर्व्यपोहति ।' इति च । श्रुतिश्च– 'इदमेवास्य तत्साधारणमन्नं यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते । मिश्रं ह्येतत्' इति । मन्त्रवर्णोऽपि– 'मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥' ( ऋसं. १०।११७।६ ) इति । नीटी.

( ३ ) 'यज्ञशिष्टाशिनः ...' इति करणे फलातिशयोऽकरणे प्रत्यवायश्च स्मर्यते । अत्र यज्ञो वैश्वदेव इति श्रीधरस्वामिना व्याख्यातम् । तेन साग्निकैर्निरग्निकैश्च भोजनलोपेऽपि येन केनापि द्रव्येण यथाकथंचित्पञ्च महायज्ञाः कर्तव्या एवेति निष्कर्षः । संर. ९६७-९६८

**[१]अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥**

जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यमित्याह– अन्नादिति । अन्नात् रेतोरूपेण परिणतात् भूतानि प्राणिशरीराणि भवन्ति । अन्नं च पर्जन्यात् । एतत्प्रसिद्धमेव । यज्ञाद्भवति पर्जन्यः, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' ( मस्मृ. ३।७६ ) इति स्मृतेः । यज्ञः देवताराधनजो धर्मः कर्मभ्यो यागहोमदानादिभ्यः समुद्भवतीति कर्मसमुद्भवः । नीटी.

**[२]कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥**

कर्म ब्रह्मोद्भवं वेदोद्भवम् । वेद एव धर्मे प्रमाणम्, न तु पाखण्डादिप्रणीतागमः । ब्रह्म वेदोऽपि अक्षरसमुद्भवम्, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः' ( बृउ. २।४।१० ) इत्यादिश्रुतेः । साक्षात्परमेश्वरादेवोत्पन्नोऽतो न तत्र भ्रमविप्रलम्भकत्वादिदोषाक्रान्तपाखण्डादिवाक्यवदप्रामाण्यशङ्काऽस्तीति भावः । यस्मादेवं तस्मात्सर्वस्मिन् देशे काले च वर्तमानं

---

(१) भा. ६।२५।१३ ; भामु. ६।२७।१३ ; पमा. १।२०३ ; आत. ४२५ किल्बिषैः (पातकैः) ; मुक्ता. ४०८ ; संर. ९६७ ; आमू. ३०६.

(१) भा. ६।२५।१४ ; भामु. ६।२७।१४ ; मच. ५।३९ (यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः । अन्नाद्भवन्ति भूतानि) एतावदेव.

(२) भा. ६।२५।१५ ; भामु. ६।२७।१५ ; मच. १।९९, ५।४४ (कर्म ब्रह्मोद्भवं विद्धि) एतावदेव, स्मृतिः .

ब्रह्म वेदः । $एतेन वेदस्य नित्यत्वं शब्दस्य विभुत्वं च दर्शितम् । नित्यं नियमेन यज्ञे प्रतिष्ठितं तात्पर्येण पर्यवसन्नम् । नीटी.

[1]एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥

भवत्वेवम्, ततः किं फलितम्? इत्यत आह— एवमिति । भूतानामादौ वेदाधिगमस्ततः कर्मानुष्ठानं ततो देवानां तृप्तिस्ततो वृष्टिस्ततोऽन्नं ततो भूतानि तेषां वेदाधिगम इत्येवंरूपं चक्रमिव चक्रं निरन्तरमावर्तमानं जगद्यात्रानिर्वाहकं नानुवर्तयति नानुतिष्ठति सः अघायुः पापजीवनः, इन्द्रियारामः, न तु धर्मारामः आत्मारामो वा, मोघं व्यर्थं दंशमशकादिवत् जीवति । यस्त्वेतदनुवर्तयति स जगदुपकारको धन्य इति भावः । तथा च श्रुतिः— 'अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत् पितृभ्यो निपृणाति यत्प्रजामिच्छति तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयांस्या पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः' (बृउ. १।४।१६) इति । नीटी.

[2]तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥

(१) यतो लोकव्यवहारानुगतस्य कर्मत्यागानुपपत्तिः तस्मात्कर्मफलेच्छारहितोऽवश्यं कर्तव्यं कर्म कुर्वित्याह— तस्मादसक्त इत्यादिना । मोक. १५६–१५७

(२) यस्मान्निष्कामस्य कर्मलेपो नास्ति तस्मात्त्वमपि असक्तः फलासक्तिशून्यः सततं सर्वदा कार्यम् अवश्यकर्तव्यं कर्म नित्यनैमित्तिकं समाचर । हि यस्मात् असक्तः कर्माऽऽचरन् परं मोक्षं सत्त्वशुद्धिद्वारेणाऽऽप्नोति । नीटी.

विदुषा लोकसंग्रहार्थं कर्म कर्तव्यम्

[1]कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥

(१) कर्मणैव, न कर्मत्यागेन । लोकसंग्रहं लोकपरिपालनम् । मोक. १५७

(२) अत्र शिष्टाचारं प्रमाणयति— कर्मणेति । कर्मणैव सह संसिद्धिं श्रवणादिसाध्यां ज्ञाननिष्ठां गन्तुमास्थिताः प्रवृत्ताः जनकादयः स्वादृशाः क्षत्रियाः, न तु संन्यासेन । ननु शुद्धचित्तस्य मम नास्ति कर्मापेक्षेत्याशङ्क्याऽऽह— लोकेति । लोकस्य संग्रहः स्वधर्मे प्रवर्तनम् । ¶ ननु स्वप्रयोजनाभावेऽपि केवलं लोकसंग्रहार्थं चेत्कर्म कर्तव्यं तदा विदुषां ब्राह्मणानामपि संन्यासो न स्यात् । यतीनेव संन्यासधर्मान् ग्राहयितुं तेषां संन्यास इति चेत्, अर्जुनेऽपि न तद्दण्डवारितमस्ति । ननु क्षत्रियस्य संन्यासेऽधिकारो नास्तीति चेत्, लिङ्गधारणेऽधिकाराभावेऽपि भरतऋषभादिवद्विक्षेपकर्मत्यागमात्रेऽधिकारात्, वार्तिके 'सर्वाधिकारविच्छेदि ज्ञानं चेदभ्युपेयते । कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥' इति विद्वत्संन्यासे क्षत्रियादेरप्यधिकारस्य साधितत्वात् । अतो लोकसंग्रहो न मुख्यं कर्मप्रयोजनमिति चेत्, सत्यम् । 'न मे पार्थास्ति कर्तव्यम्' इति स्वदृष्टान्तेनाधिकारित्वादर्जुन एवैवं नियोज्यते, न क्षत्रियमात्रमिति तुष्यतु भवान् । नीटी.

---

$ पूर्वं वेदस्य परमेश्वरादुत्पन्नत्वस्य व्याख्यातत्वात् नित्यत्वमिदं सर्गकालिकनाशाप्रतियोगित्वरूपम्, न तु त्रैकालिकनाशाप्रतियोगित्वरूपमिति; तथा विभुत्वमपि सर्वमूर्तद्रव्यसंयोगित्वरूपम्, न तु परिच्छेदशून्यत्वरूपमिति निष्पद्यते ।

(१) भा. ६।२५।१६ ; भामु. ६।२७।१६.

(२) भा. ६।२५।१९ ; भामु. ६।२७।१९ ; मोक. १५६.

¶ 'कर्मप्रयोजनमिति चेत्' इत्यन्तोऽयमाक्षेपः ।

(१) भा. ६।२५।२० ; भामु. ६।२७।२० ; मोक. १५६ ; बौवि. २।११।३१ पू. ; मुक्ता. १६७ पू. ; आन. ८ पू.

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥

यदि मादृश एव त्वं कृतार्थोऽसि तथाऽपि कर्मणि कर्मफले । कुर्वन्ति, कर्माणीति शेषः । असक्त इति छेदः । नीठी.

'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥

( १ ) अध्यात्मचेतसा ब्रह्मैवेदं सर्वं कार्यकरणजातमित्यभेददृष्ट्या । मोक. १५७

( २ ) त्वं तु अज्ञो मुमुक्षुश्च मयि सर्वान्तर्यामिणि सर्वाणि कर्माणि संन्यस्य समर्प्य अध्यात्मचेतसा, आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम् , तत्र प्रवणेन चेतसा । शाकपार्थिवादिवन्मध्यमपदलोपी समासः । आत्मानात्मविवेकवतेत्यर्थः । ईश्वरप्रेरितोऽहं करोमीत्यनया बुद्ध्या निराशीः फलमनिच्छन्, निर्ममः लब्धे ममत्वाभिमानशून्यश्च भूत्वा युध्यस्व विगतज्वरः विशोकः सन् । नीठी.

'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥

येऽन्येऽपि त्वादृशाः मे मम मतम् असक्त्या कर्मानुष्ठानम् अनुतिष्ठन्ति अनुवर्तन्ते मानवाः श्रद्धावन्तः अनसूयन्तः अत्र दोषमपश्यन्तः तेऽपि स्वकर्मभिः धर्माधर्माख्यैः मुच्यन्ते । नीठी.

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥

विपक्षे दोषमाह– ये त्विति । सर्वशब्द ईश्वरवाची, 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति निर्वचनात् । तस्य ज्ञाने विषये विशेषेण मूढान् पारोक्ष्येणापि ते( ? ये) ईश्वरमजानन्तो देहमात्रनिष्ठास्तान् नष्टान् स्वर्गापवर्गभ्रष्टान् अचेतसः विवेकशून्यान् । नीठी.

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥

ननु ते चेत्तव मतं नानुतिष्ठन्ति तर्हि कथं तवान्तर्यामित्वम् ? इत्यत आह– सदृशमिति । स्वस्याः प्रकृतेः स्वकीयस्य प्राग्भवीयधर्माधर्मसंस्कारस्य सदृशमनुरूपं ज्ञानवानपि चेष्टते, किमु मूर्खः ? , 'पश्वादिभिश्चाविशेषात्' इति न्यायात् । तस्मात्प्रकृतिं यान्ति अनुसरन्ति भूतानि प्राणिनः , तत्र मम वाऽन्यस्य वा निग्रहः किं करिष्यति ? , न किमपि । अहमपि पूर्वकर्मापेक्षयैव तान् प्रवर्तयामीति भावः । नीठी.

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥

एवं तर्हि पुरुषस्य स्वातन्त्र्याभावाद्विधिनिषेधशास्त्रं व्यर्थमित्याशङ्क्याऽऽह– इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्येति द्विर्वचनं वीप्सायाम् । प्रतीन्द्रियं स्वे स्वे अर्थे शब्दादौ वचनादौ च विषये रागद्वेषौ अनुकूले रागः प्रतिकूले द्वेषश्च व्यवस्थितौ नित्यसंबद्धौ । तत्र तयोर्वशं नाऽऽगच्छेदिति शास्त्रस्य † अभ्यनुज्ञा । पुरुषस्य च तदनुष्ठाने स्वातन्त्र्यमस्ति । हि यतः तौ रागद्वेषावेवास्य प्राणिनः परिपन्थिनौ विरोधिनौ, दृष्टद्वारेण प्रवर्तकत्वात् , न तु प्रकृत्यनुसारी ईश्वरोऽस्य परिपन्थी, तस्य वैषम्यादिदोषापत्तेः । अयं भावः– यथा ह्यस्तनेन स्वाज्ञोल्लङ्घनजेनापराधेन कुपितो राजाऽपराधिनं हि निगडादौ निग्रहीतुं स्वीयान् भटान् प्रवर्तयति, स एवाद्यतनेन दानमानेन प्रसादित एनं तेषामेव भटानामाधिपत्ये नियुङ्क्ते, एवं पूर्वकर्मानुसारी ईश्वरो रागादिद्वारा पुरुषं बाधमानोऽपि विधिप्रतिषेधशास्त्रानुसारिणा तेनैव भक्तिध्यानप्रणिधानेनाऽऽवर्जितः एनं रागादिजये नियुङ्क्ते, तस्माद्विधिप्रतिषेधशास्त्रस्य नाऽऽनर्थक्यम्, पुरुषस्य स्वातन्त्र्यसत्त्वात् , नापीश्वरे वैषम्यादिकम् , प्राणिकर्मायत्तत्वादिति । नीठी.

---

(१) भा ६।२५।२५ ; भामु. ६।२७।२५ ; मोक. १५६.

(२) भा. ६।२५।३० ; भामु. ६।२७।३० ; मोक. १५७.

(३) भा. ६।२५।३१–३४ ; भामु. ६।२७।३१–३४.

† अभ्यनुज्ञा आज्ञा निषेध इत्यर्थः ।

'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

( १ ) स्वधर्मः स्ववर्णाश्रमधर्मः । ब्रक. १०

( २ ) स्वधर्मः स्वस्वाश्रमधर्मः । कुर. १३

( ३ ) स्वधर्मः यस्य यदा यत्र यथा विहितः स तस्य । पप्र. ४७

( ४ ) यस्मादेवं तस्मात् श्रेयान् प्रशस्ततरः स्वधर्मः, स्वस्य वर्णाश्रमानुरूप्येण ईश्वरेण विहितत्वात् । विगुणः हिंसादिमिश्रोऽपि किंचिदङ्गहीनोऽपि परधर्मात् हिंसादिदोषरहितपरधर्मापेक्षया, स्वनुष्ठितात् सर्वाङ्गोपसंहारेण सम्यगनुष्ठितादपि स एव श्रेयान् । स्वधर्मे युद्धादौ निधनं मरणमपि श्रेयः, विहितत्वात् । परस्य धर्मो भैक्षचर्यादिर्भयावहः । नीटी.

'काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥

( १ ) कर्मणां सिद्धिमाकाङ्क्षन्तो देवानां पूजनं कुर्युरित्यर्थः । कर्मविभक्तिसमभिव्याहाराद्यजन्त इत्यत्र यजेः पूजापरत्वनियमः । आत. ३९९

( २ ) काङ्क्षन्त इति । हि यस्मात् मानुषे लोके कर्मसिद्धिः काम्यकर्मफलं पुत्रपश्वादिकं क्षिप्रं भवति, न तु निष्कामकर्मजा चित्तशुद्धिः, अतो ये कर्मणां सिद्धिं फलम् इहैव क्षिप्रं काङ्क्षन्तः काङ्क्षमाणाः देवताः इन्द्रादीम् यजन्ते तेऽपि ममैव वर्त्मानुवर्तन्त इति पूर्वेणान्वयः । वक्ष्यति च– 'येऽप्यन्यदेवताभक्ताः' इत्यादि । नीटी.

(१) भा. ६।२५।३५ ; भामु. ६।२७।३५ ; अप. १।७ पृ. ११ र्मो भयावहः (र्मोदयादपि) ; ब्रक. १० ; गृक. १८७ प्रथमचरणमात्रम् (=) ; कुर. १३ (=) ; गृर. ४२६ सर्वं गृकवत् ; मच. १०।७३ चतुर्थचरणमात्रम् : १०।९७ ( स्वधर्मो विगुणः श्रेयान् परधर्मो भयावहः । ) एतावदेव, स्मृतिः ; संम. ७७ पृ. ; पप्र. ४७ ; आन. ६२० पृ. ; आमू. ३६० पृ. .

(२) भा. ६।२६।१२ ; भामु. ६।२८।१२ ; आत. ३९९.

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥

( १ ) न मां कर्माणि लिम्पन्ति यतो मम कर्मफले स्पृहा नास्ति । एवमन्योऽपि यः स्वव्यापारे वीतफलतृष्णः परमेश्वरायेदमिति कर्मणि प्रवर्तते सोऽपि कर्मभिर्न बध्यत इत्यर्थः । मोक. १५१–१५२

( २ ) निषिद्धकर्मानुष्ठानस्य कदाचित् भयादशक्त्या वा प्रसङ्गे अप्रसङ्गोदासीनाकर्तुः पुष्करपर्णसदृशनिर्भेदात्मस्वरूपप्रतिसंधाने 'नाहं कर्ता, भूतान्येव भूतेष्विन्द्रियाण्येव इन्द्रियार्थेषु व्यवहरन्ति' इति दृढनियमकरणे न पापोत्पत्तिः । तदुक्तं भगवता– 'न मां कर्माणि... ॥' । निप्र. २।४१६

( ३ ) ननु कर्तुरपि कथमकर्तृत्वम् ? अत आह– न मामिति । कर्मलेपोऽपि कुतो नास्ति ? इत्यत आह– न मे इति । यः कर्तृत्वाभिमानी स लिप्यते यस्तु फलेच्छुः स एवाऽऽत्मनः कर्तृत्वं मनुते इति फलेच्छाभावादकर्ता अकर्तृत्वाच्च न लिप्यतेऽयम् इति मां योऽभिजानाति स कर्मफलस्पृहात्यागात् कर्मभिर्न बध्यते । नीटी.

'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥

एतदेव शिष्टाचारप्रदर्शनपूर्वकं ग्राहयति– एवं ज्ञात्वेति । पूर्वतरम्, वेदोक्तत्वात्, न त्वधुना केनचित्कल्पितमित्यर्थः । पूर्वतरं प्रथमतरं कृतम्, अत्यावश्यकत्वादिति वाऽर्थः । नीटी.

कर्माकर्मविकर्मणां विवेकः

'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा
मोक्ष्यसेऽशुभात् ॥

(१) भा. ६।२६।१४ ; भामु. ६।२८।१४ ; मोक. १५१ ; निप्र. २।४१६ चतुर्थचरणे ( कर्मभिः स न लिप्यते ).

(२) भा. ६।२६।१५ ; भामु. ६।२८।१५ ; मोक. १५१.

(३) भा. ६।२६।१६–१९ ; भामु. ६।२८।१६–१९.

आवश्यकत्वेऽपि न कर्मणो गतानुगतिकतयाऽनुष्ठानं कर्तव्यम्, किंतु ' ज्ञात्वा कर्माणि कुर्वीत ' इति वचनात्कर्माश्रितं किंचिद्विशेषं ज्ञापयितुमुपोद्घातयति— किं कर्मेति। यतः कर्माकर्मणी कवीनामपि दुर्निरूपे तत् तस्मात्ते तुभ्यं कर्म, अकर्म चाकारप्रश्लेषेण ग्राह्यम्, ते उभे प्रवक्ष्यामि, यत् द्वयं ज्ञात्वा अशुभात् संसारात् मोक्ष्यसे। नीटी.

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः॥**

एतज्ज्ञानमावश्यकमित्याह— कर्मण इति। तत्त्वं बोद्धव्यमस्तीति स्थलत्रयेऽपि तत्त्वमस्तीतिपदद्वयाध्याहारः। कर्मणः शास्त्रविहितस्य, विकर्मणः प्रतिषिद्धस्य, अकर्मणः तूष्णींभावस्य। ' गहना कर्मणः ' इत्यत्र कर्मण इति त्रितयोपलक्षणम्। कर्मविकर्माकर्मणां गतिः याथात्म्यं तत्त्वं गहनम्। नीटी.

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥**

यत्कर्मादेस्तत्त्वं वक्ष्यामीति प्रतिज्ञातं तदाह— कर्मणीति। कर्मणि कर्माकर्मविकर्मात्मके देहेन्द्रियादिव्यापारे अविद्यया प्रत्यगात्मनि आरोपिते सति तत्र अकर्म कर्माभावं नौस्थेन तीरतरौ चलने आरोपिते सति तत्त्वबुद्ध्या तत्र चलनाभावमिव यः पश्येत्, तथा ' चलं गुणवृत्तम् ' इति न्यायेन त्रिगुणात्मकेषु देहेन्द्रियादिषु नित्यकर्मवत्सु यश्चन्द्रतारकादौ गत्यभावमिव ' तूष्णींभूतोऽहमस्मि, न किंचित्करोमि ' इत्यध्यस्ते अकर्मणि कर्माभावे कर्म तन्निग्रहाख्यप्रयत्नरूपं यः पश्यति स मनुष्येषु बुद्धिमान् तत्त्वदर्शी, आत्मनि भ्रान्तिजनितव्यापारस्य अनात्मनि च तादृशनिर्व्यापारत्वस्य बाधात्। स एव च युक्तः योगी कृत्स्नकर्मकृच्च, कर्मयोगफलस्य तत्त्वज्ञानस्य प्राप्तत्वादिति स्तुतिमात्रम्। आत्मनोऽकर्तृत्वं संघातस्यैव कर्तृत्वमिति भावयता कर्माणि कर्तव्यानीत्यर्थः। यद्यप्येतद्बहुधा प्रपञ्चितम् ' अव्यक्तोऽयम् ' इत्यादौ, तथाऽपि तत्त्वस्य दुर्ज्ञेयत्वात्पुनः पुनरुच्यते। इति प्राञ्चः। यत्तु कर्मणि नित्ये परमेश्वरार्थेऽनुष्ठीयमाने बन्धहेतुत्वाभावादकर्मेदमिति यः पश्येत्, तथाऽकर्मणि नित्यकर्माकरणे प्रत्यवायहेतुत्वेन कर्मेदमिति च यः पश्येत्स बुद्धिमानिति, तदसंगतमेव, नित्यकर्मणि अकर्मेदमिति ज्ञानस्याशुभमोक्षहेतुत्वाभावात्, मिथ्याज्ञानत्वेन तस्यैवाशुभत्वाच्च। न चैतादृशं मिथ्याज्ञानं बोद्धव्यं तत्त्वम्, नाप्येतादृशज्ञाने बुद्धिमत्त्वादिस्तुत्युपपत्तिरिति दिक्। ये तु— कर्मणि ज्ञानकर्मणि दृश्ये जडे सद्रूपेण स्फुरणरूपेण वाऽनुस्यूतं सर्वभ्रमाधिष्ठानम् अकर्म अवेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत्, तथा अकर्मणि स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं न परमार्थं सदिति यः पश्यति स बुद्धिमानिति परमार्थदर्शित्वाद्वास्तवैरेव गुणैः स्तूयत इत्यपि व्याचख्युः, तदप्यसंगतमेव, ' कर्म कुरु, कर्म प्रवक्ष्यामि ' इत्यनुष्ठेयकर्मप्रस्तावे तत्त्वज्ञानानवसरात्। नापि ' कर्तुरीप्सिततमं कर्म ' ( पासू. १।४।४९) इति पारिभाषिकया कर्मसंज्ञया दृश्यस्य कर्मशब्दार्थत्वं ग्रहीतुं शक्यम्, तस्या घु–टि–भादिसंज्ञानामिवाऽऽगमार्थनिर्णयानर्हत्वादिति संक्षेपः। वस्तुतस्तु— ' कर्मणो हि ' इति श्लोके कर्मविकर्माकर्मणां गतिशब्दितं पर्यवसानं गहनत्वाद्बोद्धव्यमित्युपक्षिप्तम्, तद्व्याख्यानम् ' कर्मण्यकर्म यः पश्येत्, स मनुष्येषु बुद्धिमान् ' इति। तथा हि— कर्मणि कर्माकर्मविकर्मरूपे अकर्म तद्वैपरीत्यं शास्त्रतो दृश्यते। यथा क्रतुः कर्मणि श्रद्धाहीनस्य कृतोऽप्यकृत एव भवतीत्यकर्मणि पर्यवस्यति, दाम्भिकस्य तु विकर्मणि पर्यवस्यति। यथोक्तम्— ' अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥ ' इति, ' चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि। मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः॥ ' इति च।

एवमौदासीन्यमकर्मापि शक्तस्याऽऽर्तपरित्राणाभावाद्विकर्मणि पर्यवस्यति। दीक्षितस्य भगवद्ध्यानाद्यासक्तस्य वा स्वकाले पञ्चयज्ञाद्यकरणम् ' दीक्षितो न ददाति ' इत्यादिवचनात् ' सर्वधर्मान्परित्यज्य ' इत्यादिवचनाच्च कर्मण्येव पर्यवस्यति, नित्यकर्मकाले प्रत्यवायहेतोरन्यस्या-

विहितस्याकरणात् । एवं विकर्मापि हिंसा ‘ अग्नीषोमीयं पशुमालमेत ’ इति वचनाद्यज्ञे कर्मैव भवति । सैव वृथा नष्टे पशौ न कर्म, विध्यर्थानिष्पत्तेः ; नापि विकर्म, कामकारेणाकृतत्वात् । किंतु परिशेषात् कृताऽप्यकृतैवेत्यकर्मणि पर्यवस्यति । एवं स्तेनप्रमोचनं तत्सयूथ्यानां कर्मापि राज्ञो विकर्म, ‘ स्तेनः प्रमुक्तो राजनि पापं मार्ष्टि ’ इति वचनात् । तदेव यतीनामुपेक्षणीयत्वादकर्म । एवं हिंसाफलके सत्यादौ दानफलकेऽनृतादौ च विकर्मत्वकर्मत्वे बोध्ये । तस्मात्कर्माकर्मविकर्माख्ये कर्मणि अकर्म तद्वैपरीत्यं यः पश्येत् स कार्याकार्यविभागज्ञो बोद्धव्यानामेषां प्रबोधात् बुद्धिमानित्युच्यते । तथा ‘ किं कर्म ’ इति श्लोके यत्र कवीनामपि मोहोऽस्ति, ययोश्च ज्ञानमशुभमोक्षहेतुस्ते कर्माकर्मणी प्रवक्ष्यामीत्युपक्षिप्तं तद्व्याख्यानम् ‘ अकर्मणि च कर्म यः पश्येत्स युक्तः ’ इति । चकारो दर्शनद्वयसमुच्चयार्थः । तेन यो बुद्धिमान्युक्तश्च स एव कृत्स्नकर्मकृत्, न त्वेकैक इत्यपि ज्ञेयम् । तथाहि – अकर्मणि स्पन्दशून्ये कूटस्थे वस्तुनि कर्म सस्पन्दं बाह्यं वियदादि आभ्यन्तरं प्रमात्रादिकं चाऽऽधाराधेयभावेन वा उपादानोपादेयभावेन वा अधिष्ठानाध्यस्तभावेन वा पश्यन्तः शास्त्रविदः कर्माणि कुर्वन्ति । तत्राऽऽद्यः सांख्यः असङ्गे मयि संघातधर्म एव सन् कर्त्रादिरविवेकात् स्फटिके लौहित्यमिव भातीति मन्यते । द्वितीयस्तु कनककुण्डलवत् ब्रह्मोद्भवं सर्वं ब्रह्मैवेति कर्म तत्साधनादिकम् अहं च ब्रह्मैवेति भावयन् करोति । एतौ युक्तावप्यतिबुद्धिमानप्ययुक्तः करोति तस्य सर्वम् असदेव भवति, न त्वशुभमोक्षाय, ‘ यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके यजति ददाति तपस्तप्यतेऽपि बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति ’ ( बृउ. ३।८।१० ) इति श्रुतेः । यस्तु युक्तोऽपि निर्बुद्धित्वादकार्यमपि करोति स प्रत्यवैति, पापाश्लेषनिमित्तस्याभावात् । अनयोश्चाविद्याविद्याशब्दितयोः कर्मपरोक्षज्ञानयोः समुच्चयः श्रूयते ‘ विद्यां चाविद्यां च ’ इति मन्त्रे । यद्वा, द्विविधं कर्मणि कर्मदर्शनम्– परोक्षमपरोक्षं च । तत्राऽऽद्यवान् ज्ञानकर्मसमुच्चयानुष्ठाता बुद्धिमानुच्यते । अपरोक्षमपि द्विविधम्– उपास्यसाक्षात्काररूपं तत्त्वसाक्षात्काररूपं च । तत्राऽऽद्यमपि व्याकृताव्याकृतरूपोपास्यभेदेन द्विविधम् । तत्रापि व्याकृतं सूत्रं कार्यम्, तद्दर्शी विगतदेहाहंकारत्वात् योगशास्त्रे विदेह उच्यते । अव्याकृतं कारणम्, तद्दर्शी प्रकृतिलय उच्यते । अनयोरुपासनयोः संभवासंभवसंज्ञयोः समुच्चयो विधीयते ‘ अन्यदेवाऽऽहुः संभवात् ’ ( ईउ. १३ ) इत्यादिना । सोऽयं युक्त इत्युच्यते । अस्याप्यग्रे कर्तव्यमवशिष्टमस्तीति नायमपि कृत्स्नकर्मकृत् । किंतु यस्य कर्मबाधेनाकर्मदर्शनं मुख्यमस्ति स एव कृतकृत्यत्वान्मुख्यः कृत्स्नकर्मकृदिति । एतेष्वाद्यो मनुष्येषु देहाभिमानिष्वेव बुद्धिमानित्यक्रान्तदर्शित्वादकविरेव । मध्यमौ क्रान्तदर्शिनावपि तत्त्वविषये मूढत्वात् ‘ कवयोऽप्यत्र मोहिताः ’ इत्युक्तौ । एतयोर्व्यवधानेनाशुभान्मुक्तिः । उत्तमस्तु जीवन्नेवाशुभान्मुक्त इति श्लोकार्थः प्रतिभाति । ‘व्याख्यातुरपि मे नास्ति भाष्यकारेण तुल्यता । गुहावद्योतिनोऽप्यस्ति किं दीपस्यार्कतुल्यता ॥ ’ । यद्वा, कर्माकर्मणी वक्तव्यत्वेन बोद्धव्यत्वेन चोपक्षिप्यात्र तयोर्लक्षणप्रदर्शनमुचितम् । अतो यदकर्मणा विशेषितं तदेव कर्म, नान्यदिति कर्मलक्षणम् । यच्च कर्मणा विशेषितं तदेवाकर्मेत्यकर्मलक्षणमिति व्याख्येयम् । अक्षरार्थस्तु– कर्म यज्ञादिकंससाधनम्, तत्र अकर्म स्पन्दशून्यं कूटस्थं ब्रह्म यः पश्येत् कर्मतदङ्गेषु ब्रह्मदृष्टिमध्यस्येत् ‘ अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् । मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम् ॥ ’ ( भगी. ९।१६ ) इत्युक्तप्रकारेण । अन्यथा यत्कृतं तद्वृथाचेष्टारूपमेव । अतो गहना कर्मणो गतिः । किं तदकर्म ? यत्कर्मण्यध्यस्यत इत्याकाङ्क्षायां यत्रैतत्कर्म पुण्यपापात्मकं दृश्यते– ‘ पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन ’ ( बृउ. ३।२।१३ ) इति, तत्फलं च सुखदुःखादिकम् ‘ अहं सुखी, अहं दुःखी ’ इति, स प्रत्यक्चेतनोऽकर्म । तत्रैवेदं कर्म अस्पन्दे स्पन्दात्मकमसर्पे सर्प इवाध्यस्तमिति यः पश्येदिति । अयं भावः– रज्ज्वामध्यस्तं सर्पं पश्यन् ‘ नायं

सर्पः, रज्जुरियम्' इति वाक्यात्तस्य रज्जुत्वं विक्षेपप्राबल्यादप्रतिपद्यमानो नरः सर्पमिमं रज्जुदृष्ट्योपास्स्वेति नियोज्यते। स चोपासनादार्ढ्ये सर्पं विस्मृत्य रज्जुतत्त्वमेव विन्दति। यस्तु वाक्यादेव रज्जुतत्त्वं विन्दति, न तस्य प्रत्ययावृत्तिलक्षणया उपास्त्या प्रयोजनमस्ति। एवमकर्मण्यध्यस्तं कर्त्रादि 'तत्त्वमसि' इति वाक्याद्बाधित्वाऽकर्मप्रतिपत्तिर्भवति शुद्धसत्त्वस्य। अन्यस्य तु कर्त्रादीनेवाकर्मदृष्ट्या उपासीनस्य भावनादार्ढ्यात्कर्त्रादिरूपतिरोधानेनाकर्मतत्त्वप्रतिपत्तिरिति। यद्वा, कर्मणीव अकर्मण्यपि विकर्मसहिते अकर्मदृष्टिर्मा भूदिति (आशङ्क्य?) आह– कर्मणीति। विहिताकरणे प्रतिषिद्धाचरणे च कर्मदृष्टिरेव भवेत्। अकर्मतो बिभ्यत् कर्म ब्रह्मदृष्ट्या कुर्यात्, न त्वकर्मापि तादृशदृष्ट्या कुर्यादित्यर्थः। नीटी.

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥**

अविदुषां कर्मण्यकर्मभावनां द्रढयितुं विदुषां कर्मदर्शनं स्तौति– यस्य सर्वे समारम्भा इत्यादिभिः षड्भिः। यस्य विदुषः सर्वे समारभ्यन्त इति समारम्भाः कर्माणि कामेन फलेच्छया, संकल्पेन 'अहमिदं करोमि' इत्यभिमानेन च वर्जिताः तं ज्ञानाग्निना कर्मादावकर्मादिदर्शनेन दग्धानि अंकुरीभावाच्च्यावितानि कर्माणि शुभाशुभानि येन तं पण्डितं बुधा आहुः। नीटी.

**[1]त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः॥**

(१) रागेण निषिद्धकर्मकरणे पापमवश्यम्, 'त्यक्त्वा कर्मफलासङ्गम्' इति वचनात्। निषिद्धकर्मणैव फलम् आशंसात् (?)। निप्र. २।४१६

(२) ननु प्रायश्चित्तेनेव ज्ञानाग्निना पूर्वकर्मदाहेऽपि क्रियमाणं तत्फलाय भवेदित्यत आह– त्यक्त्वेति। आत्मलाभेन नित्यतृप्तत्वात् फलासङ्गं त्यक्त्वा; निराश्रयत्वात्, अहंकाराद्याश्रयेण हि कर्म क्रियते, निराश्रयो निरहंकारो यस्मात् ततः कर्मसङ्गम् 'अहं करोमि' इत्यभिमानं च त्यक्त्वा कर्मणि लौकिके वैदिके वा अभितः सर्वाङ्गोपसंहारेण प्रवृत्तोऽपि स नैव किंचित्करोति। अतोऽस्य क्रियमाणमपि कर्म न फलाय प्रभवतीत्यर्थः। नीटी.

**[1]निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।**
**शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम्॥**

(१) निराशीः निर्गतफलासङ्गः। यतचित्तात्मा संयतात्मा। कार्यका( ? क )रणसंघातः( ? )। शारीरमात्रं शरीर(? शारीरं शरीरमात्र)निर्वर्त्यम्। शास्त्रोक्तं कर्म केवलं फलरहितम्। नाऽऽप्नोति किल्बिषं संसारं नाऽऽप्नोतीत्यर्थः। मोक. १५७

(२) नन्वेतस्माद्गौणात्कर्मकरणादकरणं मुख्यमेव तद्वरमित्याशङ्क्य गृहस्थस्य तत्प्रत्यवायावहमिति व्यतिरेकमुखेनाऽऽह– निराशीरिति। यो निष्परिग्रहः स्त्र्यादिपरिग्रहरहितः संन्यासी, स चेत् निराशीः योगैश्वर्यमप्यनिच्छन्, यतं चित्तं बुद्धिः आत्मा च देहेन्द्रियसंघातः येन स यतचित्तात्मा। समाधिकाले निरुद्धबाह्याभ्यन्तरवृत्तिरित्यर्थः। स व्युत्थानकाले शारीरं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादि, केवलं कर्तृत्वाभिमानशून्यं पराध्यारोपितकर्तृत्वेन कुर्वन्नपि किल्बिषं 'यावज्जीवमग्निहोत्रं जुहुयात्' इति यावज्जीवाधिकारचोदिताग्निहोत्राद्यकरणजं प्रत्यवायं नाऽऽप्नोति, विधितस्तेषां त्यागात्। यस्तु सपरिग्रहः स निराशीरपि यतचित्तात्माऽपि केवलमपि शारीरं कर्म कुर्वन् विहिताकरणात्किल्बिषं प्राप्नोत्येवेत्यर्थः। नीटी.

**यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः।**
**समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते॥**

ननु सपरिग्रहः कुटुम्बभरणव्यग्रतया कथं वित्तव्ययायाससाध्यान्यग्निहोत्रादीन्यनुतिष्ठेदित्याशङ्क्याऽऽह– यद-

---

(१) भा. ६।२६।२० ; भामु. ६।२८।२० ; मोक. १५७ ; निप्र. २।४१६ ण्यभि (ण्यति).

(१) भा. ६।२६।२१–२३ ; भामु. ६।२८।२१–२३ ; मोक. १५७.

च्छेति । यदृच्छया अप्रार्थितोपनतः लाभः यदृच्छालाभः तेन संतुष्टः । तथाहि – ऋतामृताभ्यां जीवनं ब्राह्मणस्य विधाय व्याख्यातम्– 'ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम् ।' (मस्मृ. ४।५) इति । द्वन्द्वातीतः बहुलाभे अलाभे वा सुखदुःखाद्यतीतः । विमत्सरः परस्य लाभं दृष्ट्वा संतापहीनः । समः यदृच्छालाभेनैवेष्टिपशुचातुर्मास्यादेर्नित्यकर्मणः सिद्धौ असिद्धौ वा समः निर्विकारः । एवंभूत इष्टयादीनि कृत्वाऽपि तत्फलेन स्वर्गादिना न निबध्यते, ‡ अपिशब्दात्तज्जेन प्रत्यवायेन न निबध्यते, बन्धहेतोः कर्मणस्तत्त्वज्ञानेनैव दाहात् । तथा च स्मृतिः– 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥' (यास्मृ. ३।२०५) इति । भाष्ये त्वयं श्लोकः संन्यासिपरत्वेनैव व्याख्यातः । नीटी.

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते ॥

(१) मुक्तस्य रागादिद्वेषैरिति शेषः । यज्ञाय परमात्मने । मोक. १५७–१५८

(२) 'त्यक्त्वा कर्मफलासङ्गम्' इत्यादिना श्लोकत्रयेण विद्वान् कर्माणि कुर्वन्नपि न करोति, अतो न लिप्यते, लेपाभावाच्च न बध्यत इत्युक्तम् । तत्किं कर्मणां फलदानशक्तिप्रतिबन्धो वा ज्ञानेन क्रियते ? उत निरन्वयोच्छेद एव ? इत्याशङ्क्याऽऽद्ये मुक्तस्यापि पुनः संसारप्रसक्तिं पश्यन् द्वितीयमभ्युपगच्छति– गतसङ्गस्येति । यतो विद्वान् गतसङ्गः कर्तृत्वाभिमानशून्यः अतो न करोतीत्युक्तम् । यतो मुक्तः फलकामनामुक्तः अतो न लिप्यत इत्युक्तम् । यतो यज्ञायैव यज्ञेश्वरप्रीत्यर्थमेव आचरति, न फलान्तरार्थम्, प्राप्याभावात् ; अतस्तामेवोत्पाद्य कृतार्थैः कर्मभिर्न बध्यत इत्युक्तम् । यतोऽयं ज्ञाने सम्यग्दर्शने अवस्थितचेताः प्रतिष्ठितप्रज्ञः अत ईश्वरप्रीतिफलस्य ज्ञाननिष्ठाप्राप्तिरूपस्यापि प्रागेव लाभादस्य गतसङ्गस्य मुक्तस्य यज्ञाय कर्माऽऽचरतो ज्ञानावस्थितस्य सर्वं कर्म क्रियमाणादिकं सर्वप्रकारेण निष्प्रयोजनं सत् समग्रम् अग्रेण फलेन वासनया वा सह समग्रं प्रकर्षेण निरन्वयं विलीयते नश्यति, अतो न कदाचिदपि प्रादुर्भवति । अयं च क्रियमाणकर्मप्रलयो विद्वद्दृष्ट्यैव, स्वाभाविकस्य तेषां फलजननसामर्थ्यस्य वह्न्यौष्ण्यवदप्रत्याख्येयत्वात् । अत एव ज्ञानेन पूर्वकर्मणां दाह उत्तरेषामश्लेषश्च श्रूयते, न तूत्तरेषामपि दाहः– 'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छाउ. ५।२४।३) इति, 'तं विदित्वा न कर्मणा लिप्यते पापकेन' (बृउ. ४।४।२३) इति च । '† तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति विदुषो धनस्येव कर्मणामप्यन्यत्र गमन-

‡ ग्रन्थोऽयं दुर्बोधः । तथाहि – इष्टयादिनित्यकर्मजन्यस्य प्रत्यवायस्याश्रुतत्वादप्राप्तस्य प्रत्यवायबन्धस्य निषेधो न युज्यते । 'बन्धहेतोः' इत्यादिवक्ष्यमाणहेत्वन्यथानुपपत्त्या 'तज्जेन' इत्यत्र 'तदकरणजेन' इति शोधनमुपपद्यते । हेत्वन्यथानुपपत्तिस्तु हेत्वेकदेशस्य कर्माकरणदाहस्य कर्माकरणस्य प्रत्यवायजनकत्वे बाधापत्तेः । हेतौ 'कर्मणः' इति कर्माकरणस्याप्युपलक्षणमिति नीलकण्ठाभिप्रायः प्रतीयते, प्रत्यवायबन्धनिषेधोत्तरं हेतूक्तेः । किंच, कर्मदाहकेन तत्त्वज्ञानेन कर्माकरणस्यादाहो नोपपद्यते, तत्त्वज्ञानबाध्याविद्याकार्यस्य बन्धस्यैकदेशबाधानुपपत्तेः । अपि च, कर्मणोऽकिंचित्करत्वे कर्माकरणस्य किंचित्करत्वमपि नोपपद्यते । न हि यदौषधसेवनं नाऽऽरोग्यकरं तदसेवनमनारोग्यकरं भवति । एवमुपपन्नमपि 'तदकरणजेन' इति शोधनमपि कर्तुं न शक्यते, 'सपरिग्रह...विहिताकरणात् किल्बिषं प्राप्नोत्येव' इति पूर्वश्लोकव्याख्यानविरोधात् । न च– तत्र सपरिग्रहोऽतत्त्वज्ञानी, अत्र तु स तत्त्वज्ञानीति वाच्यम् , पूर्वश्लोकार्धेनासंगत्याः प्रकरणविच्छेदापत्तेः , पूर्वश्लोकव्याख्याने कर्मणः केवलत्वस्य कर्तृत्वाभिमानशून्यत्वरूपस्य स्वयं व्याख्यातस्यासंभवेन केवलत्वोक्तिविरोधापत्तेश्चेति । अत एवास्य श्लोकस्याऽऽचार्याभिमतसंन्यासिपरत्वस्य त्यागे स्वारस्यमपि न बुध्यते ।

† वाक्यमिदं ब्रह्मसूत्रशांकरभाष्ये (ब्रसू. ३।३।२६) 'शाट्यायनिनः पठन्ति' इत्यवतारितम् । जैमिनीयब्राह्मणे (जैब्रा. १।५०) 'सुहृदः' इत्यत्र 'पितरः' इति पाठोऽस्ति ।

दर्शनान्न तेषां वस्तुवृत्त्या प्रलयोऽस्तीति ध्येयम् । नीटी.

**'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥**

(१) हविः अर्प्यते प्रक्षिप्यते स्रुगादिना येन तदर्पणम् । कारकेषु क्रियायां च ब्रह्मबुद्धिकरणमनेन विधीयते । ब्रह्मात्मकं कर्म यः समादधाति बुध्यते स ब्रह्मकर्मसमाधिः । $ अप. ३।५७ पृ. ९६१

(२) कुतो विदुषां कर्माणि प्रविलीयन्त इत्याशङ्कयाऽऽह– ब्रह्मार्पणमिति । यतस्ते विद्वांसः सविकल्पसमाधौ सर्वं जगत्प्रत्यक्चितिशक्तिनिर्मितं पश्यन्ति । तथा च श्रुतिः– 'किं कारणम्' इत्युपक्रम्य 'कालः स्वभावः' इति कालादीनि लोकदृष्ट्याऽनेकानि कारणान्युपक्षिप्य कारणं निर्णीय 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।' (श्वेउ. १।३) इति समाधिना दर्शयति । तथा च समाधिना सर्वस्य ब्रह्मणि कल्पितत्वं पश्यतां तेषां यदर्पणम् अर्पणसाधनं मन्त्रजुह्वादि तत् ब्रह्मैव । एवशब्दः सर्वत्रानुषञ्जनीयः । यदर्पणीयं हविस्तदपि ब्रह्मैव । यत् हुतं हवनक्रिया तर्पितं §देवब्राह्मणादि वा तदपि ब्रह्मैव । यदग्नौ हुतं तदपि ब्रह्मण्येव हुतम् । अत्र ब्रह्मणीतिपदमध्याहर्तव्यम् । यत् यजमानेन हुतं तद्ब्रह्मणैव हुतम् । यत्तेन कर्मणा गन्तव्यं प्राप्तव्यं फलं तदपि ब्रह्मैव । किं बहुना ? यत्किंचित्तस्य कर्म शयनासनादिकं तत्सर्वं ब्रह्मैव । तत्र कारणम्– समाधिना समाधिजेनाऽऽत्मसाक्षात्कारेण । यतः सर्वमस्य ब्रह्मात्मकम्, ब्रह्म च प्रत्यगनन्यत्, अतः प्रदेयस्य फलस्याभावात् कर्माणि प्रविलीयन्ते दाह्याभावाद्दहन इवेति भावः । यत्तु– कर्मणि तदङ्गेषु च नामादिष्विव ब्रह्मदृष्टिरत्र विधीयत इति व्याख्यानं तत् उपक्रमादिविरोधाद्ब्रह्मविद्यायाः प्रकृतत्वाच्चासङ्गतमिति भाष्ये एव निरस्तम् । या हि ब्रह्मविदां कर्माङ्गेषु तात्त्विकी ब्रह्मदृष्टिः कीर्तिता सा स्थितप्रज्ञलक्षणवद्ब्रह्मविदामनुष्ठानायैव फलतो भवतीति न तत्र तस्यास्तात्पर्यं वर्णनीयमिति दिक् । नीटी.

बहुविधा यज्ञाः

**'दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥**

एवं सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थं यज्ञान्तराण्युपक्षिपति– दैवमेवेत्यादिना । दैवं देवताप्रधानमेव दर्शपूर्णमासादियज्ञम्, नान्यम्, एके योगिनः कर्मयोगिनः पर्युपासते । अपरे तु ब्रह्मैव सत्यज्ञानानन्तानन्दात्मकमखण्डैकरसं वस्तु तदेव ज्ञातं सत् सर्वकर्मदग्धृत्वात् अग्निरिवाग्निः ब्रह्माग्निः, तत्र यज्ञं जीवम्, यज्ञशब्दस्याऽऽत्मनामसु पाठात्, सोपाधिं यज्ञेनैव आत्मनैव निरुपाधिकेन रूपेण जुह्वति घटाकाशमिव महाकाशे उपाधिप्रहाणेन प्रविलापयन्ति । सोऽयं ज्ञानयज्ञो मुख्यः । नीटी.

**'श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥**

(१) यज्ञान्तरमाह– श्रोत्रादीनीति । तत्र कंचिद्बाह्यमाभ्यन्तरं वा विशेषमुपादाय तत्र चेतसो नियमनं

---

$ मोक. अपगतम् ।

§ 'ब्रह्माग्नौ ब्रह्मणा हुतम्' इत्यस्यैकवाक्यत्वेनात्र हुतपदार्थस्याग्न्यन्वितत्वेन अग्नौ तर्पणीयानां देवानां हुतपदार्थत्वसंभवेऽप्यनग्नितर्पणीयानां ब्राह्मणानां कथं हुतपदार्थत्वमिति चिन्तनीयम् । यदि तु ब्राह्मणपक्षे अग्न्यन्वयस्त्यज्यते तदा वाक्यभेदापत्तिः । यदि तु ब्रह्मब्राह्मणाभेदरूपफलस्य लाभात् सफलो वाक्यभेदो न दोषायेत्युच्यते तदा अर्पणमित्यत्र 'अर्प्यते अनेन' इति करणव्युत्पत्तिवत् 'अर्प्यते अस्मै' इति संप्रदानव्युत्पत्तिमप्याश्रित्य देवब्राह्मणसंग्रहः साधीयानिति प्रतीमः ।

(१) भा. ६।२६।२४ ; भाम्. ६।२८।२४ ; अप. ३।५७ पृ. ९६१ व्यासः ; मोक. १५७ ; मुक्ता. ३६६ ; आन. १८७.

(१) भा. ६।२६।२५ ; भाम्. ६।२८।२५.
(२) भा. ६।२६।२६ ; भाम्. ६।२८।२६ ; मच. ४।२२ उत्त.

क्रियते। ते च संयमाः अनेकविषयत्वादनेके पृथक्फलाश्च। तथा च योगसूत्रकृता प्रोक्तम्– 'भुवनज्ञानं सूर्ये संयमात्', 'चन्द्रे ताराव्यूहज्ञानम्', 'कण्ठकूपे क्षुत्पिपासानिवृत्तिः' (योसू. ३।२६,२७,३०) इत्यादि। त एवाग्नयः, इन्द्रियेन्धनसंहारहेतुत्वात्। तेषु संयमाग्निषु श्रोत्रादीनि जुह्वति प्रक्षिपन्ति। तत्र श्रोत्रम् अनाहते ध्वनौ संनियम्य हंसोपनिषदुक्तरीत्या घण्टानादादीन् दशनादाननुभवन्ति। न हि तत्र संनियते चेतसि शब्दान्तरग्रहणं तदा भवति। सोऽयं श्रोत्रस्य संयमाग्नौ होमो बोध्यः। एवमन्यत्रापि। तद्द्वारा च निष्कलं तत्त्वं प्रतिपद्यन्ते। तथाऽन्ये विषयेभ्यः प्रत्याहृतकरणाः धारणाध्यानसमाध्यात्मकं मनसः संयमम् एकत्र मूलाधाराद्यन्यतमचक्रे कर्तुमशक्ताः समनस्केन्द्रियेषु विषयवियोगाद्दग्धेन्धनानलवत्स्वयं विलीनेषु येषां समाधिबुद्धिस्तैरिन्द्रियेषु विषया एवोपसंहृताः, न त्विन्द्रियादीनि मनआदिषु पूर्वोक्तरीत्या उपसंहृतानि। तानेतानिन्द्रियचिन्तकान् प्रकृत्योक्तं वायवीये– 'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।' इति। नीटी.

[1]**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते॥**

इतो विशिष्टं योगान्तरमाह– सर्वाणीति। इन्द्रियाणां कर्माणि शब्दादिग्रहणानि। प्राणकर्माणि आकुञ्चनप्रसरणश्वासप्रश्वासादीनि। अपरे योगिनः आत्मनि बुद्धौ संयमः स एव योगोऽग्निश्च तस्मिन् ज्ञानेन देहेन्द्रियप्राणमनोव्यतिरिक्तात्मज्ञानेन दीपिते प्रकाशिते जुह्वति प्रविलापयन्ति। इन्द्रिययोगिनां हि सुप्ताविव प्राणोऽनुपसंहृत एवाऽऽस्ते, तत्सहचरस्य मनसोऽनुपसंहारात्; बुद्धियोगिनां तु मनसोऽप्युपसंहारात्तदायत्तस्य प्राणस्याप्युपसंहारो भवतीति विशेषः। एतेषामपि बुद्धौ बोद्धव्याभावात्पूर्ववल्लीनायां समाधिबुद्धिरस्ति, न त्वेतैर्बुद्धेरन्यत्वेन आत्मा ज्ञातः, नापि तस्मिन् बुद्धिरुपसंहृता। अत एवैतान् प्रकृत्योक्तं वायवीये– 'बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः।' इति। बौद्धा बुद्धौ लीनाः दशसहस्राणि मन्वन्तराणीत्यनुषङ्गात्। नीटी.

(१) भा. ६।२६।२७; भामु. ६।२८।२७; मच. ४।२४ (=).

[1]**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः॥**

एवं यज्ञपञ्चकं श्लोकत्रयेणोक्तम्। अथैकेनैव श्लोकेन पञ्चयज्ञानाह– द्रव्येति। द्रव्यसाध्याः वापीकूपारामाः, तीर्थे बहिर्वेदिकादानम्, श्रौतयज्ञानां प्रागेव ग्रहणात्। त एव यज्ञा येषां ते द्रव्ययज्ञाः। तथा तपः कृच्छ्रचान्द्रायणमासोपवासादि, तदेव यज्ञस्थानीयं येषां ते तपोयज्ञाः। तथा योगयज्ञाः सङ्गफलत्यागपूर्वकं संध्योपासनादिनिर्विकल्पसमाध्यन्तानां कर्मणामनुष्ठानं तृतीयाध्यायोक्तं योगः, स एव यज्ञो येषां ते योगयज्ञाः। यद्वा, यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपोऽष्टा-(१ पाष्टा)ङ्गोपेतः 'योगश्चित्तवृत्तिनिरोधः' (योसू. १।२) इति सूत्रितो योग एव यज्ञो येषां ते इति। तथा स्वाध्याययज्ञाः नित्यं वेदाध्ययनरतास्ते स्वाध्याययज्ञाः। ज्ञानं स्वाध्यायार्थस्य पूर्वोत्तरमीमांसाविचारः, स एव यज्ञो येषाम्। स्वाध्याययज्ञा ज्ञानयज्ञाश्चेति स्वाध्यायज्ञानयज्ञाः इति समासः। यतयो यतनशीलाः, संशितव्रताः सम्यक् शितं तीक्ष्णं व्रतम् अहिंसादिकं येषां ते इति सर्वेषां विशेषणम्। नीटी.

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः॥**

एकादशं यज्ञमाह– अपाने इति। अपरे अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिम्, पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। तथा प्राणे च अपानं प्रक्षिपन्ति, रेचकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। प्राणापानगती रुद्ध्वा मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः, तद्विपर्ययेणाधोगमनमपानस्य गतिः, ते प्राणापानगती एते निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः, कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। नीटी.

(१) भा. ६।२६।२८–३२; भामु. ६।२८।२८–३२.

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥**

द्वादशं यज्ञमाह– अपरे इति । नियतः निगृहीतः आहारः विषयभोगः येस्ते नियताहाराः वैराग्यादिमन्तः प्राणान् , अत्र समनस्कानीन्द्रियाणि प्राणशब्देन गृह्यन्ते, तान् प्राणेषु मनश्चित्ताहंकारेष्वन्तःकरणवृत्तिभेदेषु । बुद्धेः प्राग्गृहीतत्वादग्रहणम् । जुह्वति प्रविलापयन्ति । इन्द्रियाणि संकल्पात्मके मनसि संहृत्य मनोऽपि स्मरणात्मके चित्ते संहृत्य तदपि अहंकारे संहरन्ति । स चाभिमानरूपोऽहंकारोऽभिमन्तव्याभावात्स्वयमेव दग्धेन्धनानलवद्विलीयते । तत्र येषां समाधिबुद्धिरस्ति ते आभिमानिका बुद्धियोगिभ्यः पूर्वोक्तेभ्यो निकृष्टाः । अत एव एतान् प्रकृत्योक्तं वायवीये–' सहस्रं त्वाभिमानिकाः ' इति । सहस्रं मन्वन्तराणि इत्यनुषङ्गः । भौतिकस्तु योगोऽत्र नोक्तः , यदनुष्ठातॄन्प्रकृत्य तत्रैवोक्तम्– ' भौतिकास्तु शतं पूर्णम् ' इति । अत्रापि शतं मन्वन्तराणीत्यनुषङ्गनीयम् । सर्वेऽप्येते यज्ञविदः यज्ञलब्धारः यज्ञेन क्षपितं कल्मषं येषां ते तथाविधा भवन्ति । सर्वे यज्ञाः कल्मषक्षयायैव भवन्ति, न पुनः साक्षान्मोक्षायेत्यर्थः । नीटी.

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥**

सर्वेषामेतेषां मध्येऽन्यतममप्यनुष्ठातुमशक्तं प्रति प्राह – यज्ञेति । यज्ञाः पञ्चमहायज्ञाः, तेभ्यः शिष्टम् अवशिष्टमन्नममृताख्यं ये भुञ्जते तेऽपि चित्तशुद्धिद्वारा सनातनं ब्रह्म यान्ति प्राप्नुवन्ति । अयज्ञस्य पूर्वोक्तेषु द्वादशस्वन्यतमो वा नित्याः पञ्च वा यस्य यज्ञा न सन्ति स अयज्ञः , तस्य अयमपि लोको नास्ति, अन्यः परलोक आत्मलोको वा कुतो भवेत् ? न कुतश्चिदित्यर्थः। नीटी.

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥**

एवमिति । ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेणैव विततः विस्तारिताः । गुरुभिरुपदिष्टा इत्यर्थः । कर्मजान् कायिकवाचिकमानसिककर्मजान् , न तु नैष्कर्म्यरूपाम् । एवं ज्ञात्वा अस्मादशुभात् मोक्ष्यसे तत्त्वज्ञानोत्पत्तिद्वारेणेत्यर्थः । नीटी.

सर्वेषां यज्ञानां ज्ञानयज्ञः श्रेयान्

**[1]श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥**

यदर्थमेते यज्ञा उपन्यस्तास्तं ज्ञानयज्ञं स्तौति– श्रेयानिति । द्रव्यं बाह्यमाभ्यन्तरं च देहेन्द्रियादि, तत्साध्यात् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः निःशेषवाङ्मनःकायप्रवृत्त्युपरमात्मकः श्रेयान् प्रशस्ततरः । ईयसुन्प्रत्ययेन तेषामपि प्रशस्तत्वं द्योत्यते । तत्र हेतुः– सर्वमिति । कर्म कर्मफलं सर्वम् अखिलं सर्वाङ्गोपसंहारयुक्तं ज्ञाने परिसमाप्यते अन्तर्भवति, ' यथा कृतायविजितायाधरेयाः संयन्त्येवमेवैनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद ' ( छाउ. ४।१।४ ) इति । नीटी.

**[2]अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥**

अज्ञ इति । अज्ञः सुखेन चिकित्सितुं शक्यः , अश्रद्दधानो यत्नेन, संशयात्मा त्वसाध्यः एव । यतो मित्रादिष्वपि संशयं कुर्वतोऽस्यायं लोकोऽपि नास्ति, नापि परः , वेदवाक्येऽपि संशयात् । अत एव सर्वदा संशयाकुलत्वात्सुखमपि तस्य नास्ति । तस्मात्संशयो न कर्तव्यः । नीटी.

**[3]योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥**

---

(१) भा. ६।२६।३३ ; भामु. ६।२८।३३ ; मोक. १५८ ; मच. १।९७ उत्त. : ४।२४ पू. (=) : ६।८२ उत्त. , स्मृतिः : १२।८५ (सर्वं कर्माखिलं) एतावदेव, स्मृतिः : १२।८७ उत्त. , स्मृतिः : १२।११६.

(२) भा. ६।२६।४० ; भामु. ६।२८।४० ; मोक. १५९.

(३) भा. ६।२६।४१ ; भामु. ६।२८।४१ ; अप. ३।५७ पृ. ९६१ ; मोक. १५९.

किंच– योगेति । योगेन कर्मण्यकर्मदर्शनात्मकेन संन्यस्तानि फलतः स्वरूपतो वा त्यक्तानि कर्माणि येन तं योगसंन्यस्तकर्माणम्, ज्ञानेन सम्यग्दर्शनेन सम्यक् छिन्नाः संशयाः 'आत्मा देहोऽन्यो वा', 'अन्योऽपि विभुरविभुर्वा', 'विभुरपि कर्ताऽकर्ता वा', 'अकर्ताऽप्येकोऽनेको वा', 'एकोऽपि सगुणो निर्गुणो वा' इत्येवमादयः यस्य स ज्ञानसंछिन्नसंशयः तम्, आत्मवन्तं शमदमादिपरं कर्माणि कृतानि न निबध्नन्ति हे धनंजय । नीटी.

कर्मसंन्यासात् कर्मयोगस्य विशेषः

**अर्जुन उवाच–**

**'संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥**

तृतीयेऽध्याये 'लोकेऽस्मिन् द्विविधा निष्ठा' इति विभिन्नाधिकारिकं निष्ठाद्वयं प्रस्तुत्य 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।' इत्यादिना कर्मनिष्ठाया ज्ञाननिष्ठाङ्गत्वेन भूयसा निर्बन्धेनानुष्ठेयत्वमुक्तम् 'कर्मण्येवाधिकारस्ते' इत्यादिना । चतुर्थे तूत्पन्नसम्यग्दर्शनैः कृतमपि कर्माकृतमेव भवति, ज्ञानेन कर्तृत्वादिबाधात् । अतस्तैर्यथाचेष्टावत्कर्म वा कर्तव्यं संन्यासो वा कर्तव्य इत्यनास्थया प्रोक्तम् । अथेदानीं पञ्चमषष्ठयोरज्ञानिना ज्ञानार्थिना वैराग्योत्पत्तेः प्राक्कर्मैवानुष्ठेयम्, संपन्ने तु वैराग्ये दृष्टविक्षेपनिवृत्त्यर्थं कर्मसंन्यासं कृत्वा ज्ञानोत्पत्त्यर्थं योगोऽनुष्ठेय इत्युच्यते । तत्र चतुर्थे– 'त्यक्तसर्वपरिग्रहः' इति संन्यासः 'योगमातिष्ठ' इति कर्मयोगश्चैकं मां प्रति विहितः । न चैतयोः स्थितिगतिवद्युगपदेकेन मयाऽनुष्ठानं कर्तुं शक्यते, परस्परविरुद्धत्वादिति मन्वानोऽर्जुन उवाच– संन्यासमिति । हे कृष्ण पापकर्षण, मे मह्यं ज्ञानार्थिने संन्यासं कर्मयोगं चेति द्वयं परस्परविरुद्धं कथं शंससि कथयसि ? पुनरित्यनेन प्रागपि त्वया वेदकर्त्रा इदं द्वयं विहितमस्तीति गम्यते । तथा च श्रुतिस्मृती भवतः– 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति', 'संसारमेवं निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥' इति च; तथा 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति, 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।' ( मस्मृ. २।२८ ) इति च । ब्राह्मी ब्रह्मदर्शनयोग्या । अत एतयोः श्रुतिविहितत्वेन प्रशस्तयोर्मध्ये एकं श्रेयः प्रशस्ततरं यत्तन्मे सुनिश्चितं ब्रूहीति प्रश्नः । नीटी.

(१) भा. ६।२७।१–४ ; भाग्र. ६।२९।१–४ ; मोक. १५२.

**श्रीभगवानुवाच–**

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥**

(१) कर्मसंन्यासात् कर्मयोगो विशिष्यत इति । कृतानां कर्मणामीश्वरे संन्यासो य उक्तस्तस्माद्ब्रह्मैव कर्तृ कारकान्तरं च कर्म चेति यः कर्मयोगः स विशिष्यते । कथम् ? द्वैतविषयो हि संन्यासः, कर्मयोगः पुनरद्वैतविषयः, साक्षात् सम्यग्दर्शनाय इत्यर्थः । मोक. १५३

(२) अस्योत्तरं भगवानुवाच– संन्यास इति । निःश्रेयसकरौ, ज्ञानोत्पत्तिहेतुतया । तथाऽपि कर्मसंन्यासादविरक्तकृतात् कर्मयोग एव विशिष्यते, चित्तशुद्धिद्वारा वैराग्यादिहेतुत्वात् । नीटी.

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥**

(१) निर्द्वन्द्वः रागद्वेषादिद्वन्द्वरहितः । मोक. १५३

(२) ननु प्रत्यक्षः कर्मयोगिनां विक्षेपः, संन्यासिनां तु स नास्तीति कथमुच्यते 'कर्मयोगो विशिष्यते' (इति) ? इत्याशङ्क्याऽऽह– ज्ञेय इति । यो रागद्वेषरहितः स कर्मसु स्वरूपतस्त्यक्तेष्वत्यक्तेषु वा नित्यं संन्यास्येव । एतेन साधनभूतयोः सांख्ययोगयोः रागद्वेषराहित्यकृतं साम्यमुक्तम् । फलभूतयोस्तु सर्वविकल्पराहित्यरूपसाम्यमनन्तरश्लोकाभ्यामुच्यते । तथाऽपि चित्तस्वाभाव्यात्कदाचित्संन्यासिनो रागोदये पाताशङ्काऽस्ति,

नेतरस्येति स एव श्रेयानिति भावः । यद्यप्येवं तथाऽपि हि प्रसिद्धं निर्द्वन्द्वः द्वन्द्वं सत्यानृतयोरात्मानात्मनोर्मिथुनं परस्पराध्यासः तद्रहितः सांख्यः, रागाद्युदयहेतोरज्ञानस्यात्यन्तोच्छेदात् सुखं कर्मकरणायासं विनाऽपि बन्धात् संसारात् केवलज्ञानेनैव मुच्यते, न कर्माण्यपेक्षते । यद्वा निर्द्वन्द्वः 'द्वन्द्वं वै मिथुनं तस्माद्द्वन्द्वान्मिथुनं प्रजायते' (ऐब्रा. १५।६ ) इति श्रुतेः द्वन्द्वं स्त्रीपुंसयोर्मिथुनं तद्रहितः स्त्र्यादित्यागी संन्यासी अनायासेन मुच्यते, रागादिजयस्योभयत्र तुल्यत्वात् । अत्र च कुटुम्बभरणवैयग्र्याभावात्सुखं मुच्यते इत्यर्थः । नीटी.

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥**

नन्वेकत्र पाताशङ्का एकत्र कर्मश्रमः, तदनयोः पथोः कतरः श्रेयानित्याशङ्क्य द्वयोरपि फलतः साम्यमित्याह– सांख्ययोगाविति । सांख्यम् ( १ ख्यः ) । समित्येकीभावे इति यास्कः । एकीभावेन आत्मानन्यत्वेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनयेति संख्या स्थूलसूक्ष्म( कार्य )कारणप्रपञ्चस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापनेनोदिता चेतोवृत्तिः, तत्साधनभूतोऽयं सांख्यः संन्यासः । स च दारादिबुद्ध्यन्तानां पदार्थानामात्मन्येकीभावेन न्यसनं त्यागः प्रविलापनम् । तथा योगोऽप्यग्निहोत्रसंध्योपासनादिनिर्विकल्पसमाध्यन्तमनुष्ठानम् । तत्र मुख्यस्य योगस्य लक्षणम्– 'योगश्चित्तवृत्तिनिरोधः' इति । वृत्तयश्च– 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' (योसू. १।६ ) इति पञ्च । तत्र प्रत्यक्षानुमानागमाः प्रमाणानि । तेषु प्रत्यक्षमिन्द्रियं तज्जा वृत्तिः शुक्त्यादिविषयं याथार्थ्येन ज्ञानम् । विपर्ययस्तु तत्रैव रजतादिविषयं भ्रान्तिरूपं ज्ञानम् । संशयोऽपि 'इयं शुक्तिर्वा रजतं वा' इति $ अनिर्धारितान्यतरकोटिकं ज्ञानं स विपर्यय एवान्तर्भवति । विकल्पस्तु शब्दज्ञानानुपाती वस्तुशून्यः । यथा 'पुरुषस्य चैतन्यम्', 'वन्ध्यापुत्रः' इति । न हि पुरुषचैतन्यतत्संबन्धानां पृथक्त्वमस्ति, किंतु चैतन्यमेव हि शब्दत्रयेणोच्यते । नापि वन्ध्यासुतस्य स्वरूपमस्ति, अथापि शब्देनाभिलप्यते । सोऽयं विकल्पः शब्दज्ञानानुपाती वस्तुशून्यः एकस्मिन्ननेकबुद्धिरसति च सद्बुद्धिरिति । निद्रास्मृती लोकप्रसिद्धे । एतासां निरोधेऽपि निर्विकल्पः प्रत्यगात्मैवावशिष्यते । तावेतौ फलभूतौ सांख्ययोगौ । साधनभूतौ तावेव संन्यासकर्मयोगाख्यौ । तत्रान्त्ययोः साम्यम् 'ज्ञेयः स नित्यसंन्यासी' इत्यनेन सूचितम् । आद्ययोस्त्वैक्यमत्रोच्यते । आस्थितः अनुतिष्ठन् । फलं निर्विकल्पात्मनाऽवस्थितिरूपम् । नीटी.

सांख्ययोगयोः फलतः अभिन्नत्वम्

**[1]यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥**

योगैः योगिभिः । अर्शआद्यच्प्रत्ययान्तोऽयं योगशब्दः । स्थानं मोक्षाख्यम् । एकम् अभिन्नम् । स्पष्टा योजना श्लोकद्वयस्य । नीटी.

**[2]संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥**

( १ ) संन्यासः योगव्यतिरेकेणानुष्ठीयमानो दुःखं प्राप्तुं भवति, न तु ब्रह्मसाक्षात्कारायेत्यर्थः । ब्रह्म

---

$ अत्रान्यतरशब्दप्रयोगात् कोट्यन्तरस्य निर्धारितत्वेऽपि संशयत्वं नापैतीति शब्दसामर्थ्यात् प्रतीयते । तत्तु न युक्तम्, संशयस्यानिर्धारितोभयकोटिकत्वनियमात् । तथापि संशयकोट्योः परस्परविरुद्धत्वेनैकस्याः कोटेरनिर्धारणे कोट्यन्तरस्याप्यनिर्धारणस्यार्थसिद्धत्वादर्थापत्तिसहकारेणान्यतरशब्दघटितस्य लक्षणवाक्यस्योभयकोट्योरनिर्धारणे पर्यवसानं बोध्यम् । यदि तु लक्षणवाक्येनार्थापत्तिमुखप्रेक्षणं क्रियमाणं न रोचते तदा 'अन्यतरे च ते कोटी च' इतिकर्मधारयगर्भबहुव्रीहिरास्थेयः । तथा सति अनिर्धारितोभयकोटिकत्वं वाक्यादेव सिध्यति ।

(१) भा. ६।२७।५ ; भामु. ६।२९।५ ; मोक. १५२ यत्सांख्यैः (यत्सांख्ये).

(२) भा. ६।२७।६ ; भामु. ६।२९।६ ; मोक. १५२ नचिरे (न चिरे).

नचिरेणाधिगच्छति ब्रह्म अचिरेण साक्षात्करोति । मोक. १५३

(२) नन्वेवं निर्विकल्पस्थानप्राप्तये द्वौ मार्गावुक्तौ स्याताम्, तच्च 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरुद्धमित्याशङ्कयाऽऽह– संन्यासस्त्विति । संन्यासः नैष्कर्म्यम् अयोगतो योगं विना अवाप्तुं दुःखं हे महाबाहो । अयमर्थः– निर्विकल्पकसमाधिरपि 'तत्त्वमसि' इत्येतद्वाक्यार्थप्रतिपत्त्युपायभूत एव, न स्वतः पुरुषार्थ इति द्वितीयमार्गस्याभावान्नोदाहृतश्रुतिविरोधः, 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' (सुबालोपनिषत् ९) इति श्रुत्यैव शमादिवत्समाधेरप्यात्मदर्शनार्थत्वस्य दर्शितत्वात् । तथा च समाहितपदं वार्तिककारैर्व्याख्यातम्– 'स्वातन्त्र्यं येषु कर्तुः स्यात्करणाकरणं प्रति । तान्येव तु निषिद्धानि कर्माणीह शमादिभिः ॥' । (शमादिभिः) शमादिश्रुत्या । 'अस्वातन्त्र्यं तु येषु स्यात्करणाकरणं प्रति । समाहितोक्त्याऽथेदानीं तन्निरोधो विधीयते ॥' । अस्वातन्त्र्यं गुरूपदेशापेक्षत्वं येषु मानमेयव्यवहारनिरोधेषु । 'पिण्डीकृत्येन्द्रियग्रामं बुद्धावारोप्य निश्चलम् । विषयांस्तत्स्मृतीस्त्यक्त्वा तिष्ठेच्चिदनुरोधतः ॥ एषोऽभ्युपायः सर्वत्र वेदान्तेषु प्रतिष्ठितः । तत्त्वमस्यादिवाक्यार्थज्ञानोत्पत्त्यर्थमादरात् ॥' इति । एवं व्यतिरेकमुक्त्वाऽन्वयमाह– योगयुक्त इति । मुनिः संन्यासी नचिरेण शीघ्रमेव ब्रह्माधिगच्छति वाक्यश्रवणमात्रेण, न तु केवलसंन्यासी । यथोक्तम्– 'न च संन्यसनादेव सिद्धिं समधिगच्छति ।' इति । नीटी.

**'योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥**

(१) योगयुक्तः अद्वैतदर्शने स्थितः । विशुद्धात्मा निर्मलीकृतबुद्धिः । विजितात्मा जितमनोवृत्तिः । मोक. १५३

(२) योगेन निर्विकल्पसमाधिना युक्तो योगयुक्तः । अत एव विशुद्धात्मा वृत्तिसारूप्यदोषेण हीनः आत्मा प्रत्यक्चेतनः यस्य । निर्विकल्पावस्थायां केवल एव चेतनोऽस्ति नान्यदे(? ये)त्युक्तम्– 'तदा द्रष्टुः स्वरूपेऽवस्थानम्, वृत्तिसारूप्यमितरत्र' (योसू. १।३,४) इति । तदा वृत्त्यभावे, इतरत्र वृत्तिकाले इति सौत्रपदद्वयार्थः । अत्र हेतुः– यतोऽयं विजितात्मा विजितचित्तः जितेन्द्रियश्च । एवं शुद्धस्त्वंपदार्थ उक्तः, तस्य तत्पदार्थाभेदमाह– सर्वभूतात्मेति । सर्वेषां भूतानां ब्रह्मादिस्तम्बपर्यन्तानां वियदादीनां च चेतनाचेतनानाम् आत्मभूतः उपादानत्वेन स्वरूपभूतः कनकमिव कुण्डलादीनां स्वरूपभूतम्, कारणानन्यत्वात्कार्यस्य । सर्वभूतात्मभूतः आत्मा प्रत्यक्चेतनः यस्य स सर्वभूतात्मभूतात्मा । यत्तु "सर्वेषां भूतानामात्मभूत आत्मा यस्य' इति भाष्यं 'सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूत इत्यधिकम्" इति दूषितम्, स्वयं च 'सर्वभूत आत्मभूतश्चाऽऽत्मा यस्य' इति विग्रहो दर्शितः, तत्र संकोचे कारणाभावात्सर्वपदेनैव चिज्जडयोर्ग्रहे परस्याप्यात्मभूतेत्यधिकमेव, सर्वभूतः चेतनाचेतनप्रपञ्चभूत आत्मा यस्येति तत्रापीष्टार्थलाभात् । सर्वे च आत्मानश्च तद्भूत आत्मा यस्येति विगृह्य सर्वात्मभूतात्मेत्येतावतैव सिद्धे प्रथमभूतपदस्य वैयर्थ्यं च । भाष्यमते ब्रह्मादीनां प्रत्यग्भूत आत्मा यस्येति श्रुत्यैव जीवेशाभेद उच्यते, परस्य तु उपादानत्वलिङ्गेन जडसाधारण्ये(? ण्ये)न जीवस्य ब्रह्माभेदोऽवगम्यत इति विद्वद्भिरविनयः क्षन्तव्यः । यतोऽयं सर्वेषां प्रत्यगात्मा अतोऽहमिव सोऽपि कुर्वन्नपि न लिप्यते, असङ्गात्मज्ञानात् कर्त्रा(? र्तृत्वा)देर्बाधितत्वाच्च, व्युत्थाने तत्प्रतीतावप्युत्खातदंष्ट्रोरगवदबाधकत्वाच्चेत्यर्थः । नीटी.

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥**

(१) भा. ६।२७।७–९; भासु. ६।२९।७–९; मोक. १५२–१५३.

(१) एतेष्विन्द्रियार्थेषु इन्द्रियाणि वर्तन्ते, मम नात्र कर्तृत्वमिति चित्तं धारयन् योगयुक्तो मन्येतेत्यर्थः। मोक. १५३-१५४

(२) न लिप्यते इत्येतदुपपादयति— नैवेति द्वाभ्याम्। तत्त्ववित् अहं नैव किंचित् करोमीति मन्येत मन्यते। तत्र हेतुः— इन्द्रियाणि। उपलक्षणमिदं प्राणादेरपि। इन्द्रियादय इन्द्रियार्थेषु स्वेषु विषयेषु वर्तन्ते इति धारयन् निश्चिन्वन् न त्वहं विषयेषु वर्ते इति मन्यते। धारयन्निति हेतौ शतृप्रत्ययः। अत्र दर्शनादयः पञ्च ज्ञानेन्द्रियाणां व्यापाराः, गमनविसर्गप्रलपनग्रहणानि कर्मेन्द्रियाणाम्। तानि चाऽऽनन्दस्योपलक्षणानि। श्वसन्निति प्राणस्य, स्वपन्निति बुद्धेः, उन्मेषणनिमेषणे कूर्माख्यप्राणस्येति विभागः। क्रमस्त्वविवक्षितः। एतानि कुर्वन्नप्यभिमानाभावान्न लिप्यते इत्यर्थः। नीटी.

**[1]ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥**

यतो विद्वानसङ्गत्वात् कुर्वन्नपि न लिप्यते तस्मादविद्वानपि ब्रह्मणि सर्वान्तर्यामिणि कर्माण्याधाय 'अयमेव कारयिता, न त्वहं कर्ता' इति समर्प्य यः कर्माणि करोति सः पापेन न लिप्यतेऽम्भसा पद्मपत्रमिव। नीटी.

**[2]कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥**

केवलैरिति विपरिणामेन सर्वत्र संबन्धनीयम्। केवलेन कायेन 'अहमयं ब्राह्मणो युवा' इत्यात्माध्यासशून्येन। एवमन्यत्रापि। सङ्गं त्यक्त्वा देहादिभ्यो विविक्तेऽप्यात्मनि तार्किकादिवत् 'अहं करोमि' इत्यभिनिवेशं त्यक्त्वा योगिनः कर्म कुर्वन्ति आत्मशुद्धये चित्तशुद्ध्यर्थम्। तस्मात्त्वमपि तत्रैवाधिकारोऽस्तीति तदेव त्वं कुरु। नीटी.

**[1]युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते॥**

(१) शान्तिमाप्नोति नैष्ठिकीं सुखमात्यन्तिकं प्राप्नोति। मोक. १५४

(२) किंच— युक्त इति। युक्तः 'ब्रह्मण्याधाय कर्माणि' इत्यादिना उक्तलक्षणः कर्मणां फलं त्यक्त्वा ईश्वरे समर्प्य शान्तिं कैवल्यं नैष्ठिकीं सत्त्वशुद्ध्यादिक्रमप्राप्तब्रह्मनिष्ठाफलभूतां प्राप्नोति। अयुक्तः तद्विपरीतः कामकारेण स्वैरवृत्त्या फले सक्तः सन् नितरां बध्यते। नीटी.

**श्रीभगवानुवाच—**

**[2]अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥**

पूर्वाध्यायान्ते सूत्रितं ध्यानयोगं विवरीतुमिच्छंस्तत्राधिकारहेतुत्वात्कर्मयोगं तावत्स्तौति द्वाभ्याम्— अनाश्रित इति। यः कर्मणां फलम् अनाश्रितः अनपेक्षमाणः कार्यम् अवश्यकर्तव्यं नित्यं कर्म करोति स एव फलसंकल्पत्यागात् संन्यासी च योगी च भवति, न तु निरग्निः यो विधितः श्रौतस्मार्तकर्मत्यागी स एव संन्यासी, नापि अक्रियः त्यक्तवाङ्मनःकायक्रियः एव वा योगीति। नीटी.

**[3]यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन॥**

(१) भा. ६।२७।१० ; भामु. ६।२९।१० ; अप. ३।५७ पृ. ९६१ ण्याधाय (ण्यादाय) तृतीयचरणे (न स लिप्येत पापेन) व्यासः ; मोक. १५३ ; निप्र. २।४१७ ; मुक्ता. १६५.

(२) भा. ६।२७।११ ; भामु. ६।२९।११ ; मोक. १५३ ; निप्र. २।३३५ योगिनः (ये जनाः) ; मुक्ता. १६५.

(१) भा. ६।२७।१२ ; भामु. ६।२९।१२ ; अप. ३।५७ पृ. ९६१ व्यासः ; मोक. १५३ ; मुक्ता. १६५.

(२) भा. ६।२८।१ ; भामु. ६।३०।१ ; अप. ३।५७ पृ. ९६१ व्यासः ; मोक. १५५.

(३) भा. ६।२८।२ ; भामु. ६।३०।२ ; मोक. १५५.

केन साम्येनायं संन्यासी योगी चेति स्तूयते ? अत आह– यमिति । यो हि त्यक्तसर्वसंकल्पः स संन्यासी, तादृशश्च ध्यानयोगी, अतो न तयोर्भेदः, 'निःसंकल्पस्तटस्थस्तिष्ठेदेतन्मोक्षलक्षणम्' (मैत्र्युप. ६।३०) इति मैत्रायणीयोपनिषच्छ्रुतस्य मोक्षलक्षणस्य निःसंकल्पत्वस्योभयत्रापि तुल्यत्वात् । अतोऽयमपि कर्मयोगी फलसंकल्पत्यागान्निःसंकल्पत्वसाम्यात् संन्यासी योगी च भवतीति स्तूयत इत्यर्थः । योगाधिकारसिद्धये निष्कामकर्माण्यनुष्ठेयानीति श्लोकद्वयतात्पर्यार्थः । नीटी.

[1]भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥

विसर्गः देवतोद्देशेन द्रव्यत्यागात्मको यागः, स कर्मसंज्ञितः । तमेव विशिनष्टि– भूतेति । भूतानां भावः सात्त्विकादिः स्वभावः उद्भवश्च तयोः करणाद्भूतभावोद्भवकरः । तथाहि– 'बुद्धिः कर्मानुसारिणी' इति कर्मानुसारित्वं भावस्य स्मर्यते । तथा उद्भवोऽपि कर्मत एव स्मर्यते– 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' (मस्मृ. ३।७६) इति । नीटी.

द्रव्ययज्ञजन्या स्वर्गतिः अनित्या

[2]त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥

ये पुनरुक्तेषु प्रकारेष्वन्यतमेनापि मां न भजन्ते ते केवलकर्मठाः कां गतिं प्राप्नुवन्तीति शृणु– त्रैविद्या इति । तिस्रः ऋग्यजुःसामरूपाः विद्याः येषां ते त्रिविद्याः, त एव त्रैविद्याः, सोमपाः सोमपायिनो याज्ञिकाः यज्ञैर्मामिष्ट्वा स्वर्गतिं फलं प्रार्थयन्ते । दिव्यान् अप्राकृतान् संकल्पमात्रोपनतान् दुःखासंभिन्नान् । नीटी.

(१) भा. ६।३०।३ ; भामु. ६।३२।३.

(२) भा. ६।३१।२० ; भामु. ६।३३।२०.

[1]ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥

त्रयी वेदत्रयी, तस्यामुक्तं धर्मं त्रयीधर्मं काम्ययज्ञम् । कामकामाः विषयकामुकाः । गतागतं यातायातं सातत्येन लभन्ते । तथा च श्रुतिः – 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥' (मुउ. १।२।७) इति । अष्टादशेति षोडशर्त्विजः यजमानः पत्नी चेति द्वौ । नीटी.

सर्वम् ईश्वराय समर्पणीयम्

[2]यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

(१) यत् करोषि स्नानादि । यदश्नासीत्यत्राशनं प्राणाग्निहोत्ररूपम् । मोक. १४९

(२) अतः सर्वं मदर्पणं कुर्वित्याह– यदिति । यत्करोषि गमनादिकं तद्भगवत एव प्रदक्षिणादिकं करोमीति मत्प्रीत्यर्थमेव तदर्पणं कुर्विति । एवं वचनादिष्वपि नामकीर्तनादिदृष्ट्या ऊह्यम् । नीटी.

मोक्षफलजनकं कर्म भगवते समर्पितम्

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥

एवं कुर्वतः फलमाह– शुभाशुभेति । शुभाशुभफलैः इष्टानिष्टफलैः कर्मरूपैर्बन्धनैः एवं कुर्वन् त्वं मोक्ष्यसे भगवदर्पणबुद्ध्या यत्किंचित्कर्म कुर्वतः कर्मलेपो नास्तीत्यर्थः । अयमेवोक्तलक्षणः कर्मफलसंन्यासरूपो मार्गः, तत्र युक्तात्मा समाहितचित्तः सन् विमुक्तः कर्मबन्धनैर्विमुक्तः सन् मां सर्वेषां प्रत्यगात्मानम् उपैष्यसि । नीटी.

(१) भा. ६।३१।२१ ; भामु. ६।३३।२१ ; अप. ३।१९५–१९६ चतुर्थचरणमात्रम्.

(२) भा. ६।३१।२७–२८ ; भामु. ६।३३।२७–२८ ; मोक. १४९.

गुणत्रयविभागेन कर्मफलभेदः

[1]कर्मणः सुकृतस्याऽऽहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥

सुकृतस्य सात्त्विकस्य कर्मणः फलं निर्मलं दुःखाज्ञानमलशून्यं सात्त्विकं ज्ञानवैराग्यादिकम् । रजसः राजसस्य कर्मणः फलं दुःखम् । तमसः तामसस्य कर्मणः फलमज्ञानम् । नीटी.

शास्त्रविधिर्नोपेक्षणीयः

[2]यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥

न केवलं काष्ठतपस्विवत्कामादित्यागमात्रेणोच्छास्त्रवर्ती सिध्यतीत्याह– य इति । शास्त्रविधिं शास्त्रेण इष्टसाधनतयाऽनिष्टसाधनतया च ज्ञापितम् 'ब्राह्मणो यजेत' 'न सुरां पिबेत्' इत्यादिना विहितं निषिद्धं च उत्सृज्य विहितमकरणेन निषिद्धमाचरणेन चोत्सृज्य यो वर्तते कामकारतः इच्छया सः सिद्धिं चित्तशुद्धिं सुखं वैराग्यादिजनितां तृप्तिं परां गतिं मोक्षं च नावाप्नोति । नीटी.

गुणत्रयानुसारेण श्रद्धादीनां त्रैविध्यम्

श्रीभगवानुवाच–

[3]त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥

स्वभावः प्राग्भवीयो धर्माधर्मौ, ततो जाता स्वभावजा । यदि प्राग्भवे सात्त्विको देवतापूजादिधर्मोऽनेनानुष्ठितस्तर्हि तस्य शुद्धसात्त्विक्येव श्रद्धा भवति, यदि राजसो यक्षादिपूजारूपस्तर्हि राजस्येव, यदि तामसो भूतप्रेतादिपूजारूपस्तर्हि तामसी श्रद्धा भवति। एवं त्रिविधा श्रद्धा देहिनां देहाभिमानवतां भवति । नीटी.

(१) भा. ६।३६।१६ ; भामु. ६।३८।१६.

(२) भा. ६।३८।२३ ; भामु. ६।४०।२३.

(३) भा. ६।३९।२, ४ ; भामु. ६।४१।२, ४.

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥

कुत एतदेवं कल्प्यते ? यस्मात्सात्त्विकादयो देवादीनेव यजन्ते इत्याह– यजन्त इति । यजन्ते पूजयन्ति । नीटी.

[1]अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥

यज्ञत्रैविध्यमाह– अफलेति । विधिदृष्टः आवश्यकतया विहितः । यष्टव्यमेव, न तु यज्ञात् दृष्टमदृष्टं वा फलं प्राप्तव्यमिति मनः समाधाय समाहितं कृत्वा यो यज्ञ इज्यते स सात्त्विकः । नीटी.

[2]अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥

राजसं यज्ञमाह– अभिसंधायेति । नीटी.

[3]विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥

विधिहीनं शास्त्रोक्तविधिहीनम् । असृष्टं न दत्तम् अन्नं यस्मिन् तम् असृष्टान्नम् । नीटी.

ब्रह्मणस्त्रिविधो निर्देशः, तेन निर्दिष्टाः क्रियाः

[4]ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥

अदृष्टार्थानां यज्ञदानतपःप्रभृतीनां वैकल्यशङ्कायां सादुगुण्यसिद्ध्यर्थं प्रायश्चित्तमुपदिश्यते– ओं तत्सदिति । ओमिति तदिति सदिति च त्रिविधः त्रिप्रकारः अयं ब्रह्मणो निर्देशः नाम्नां पाठः । यथा सहस्रनाम्नां पाठे सहस्रं नामानि एवमस्मिन्नपि नामपाठे त्रीण्येव

(१) भा. ६।३९।११ ; भामु. ६।४१।११ ; पमा. १।१५० ; मुक्ता. १९ ; आन. ५६९.

(२) भा. ६।३९।१२ ; भामु. ६।४१।१२ ; पमा. १।१५० ; मुक्ता. १९ ; आन. ५६९ दम्भा (डम्भा) यत् (यः) इज्यते (यजते).

(३) भा. ६।३९।१३ ; भामु. ६।४१।१३ ; पमा. १।१५० ; मुक्ता. १९ ; आन. ५६९.

(४) भा. ६।३९।२३ ; भामु. ६।४१।२३.

मामामीत्यर्थः, ‘ ओमिति ब्रह्म ’ ( तैउ. १।८ ) इति तैत्तिरीयके, ‘ तदिति वा एतस्य महतो भूतस्य नाम भवति ’ ( ऐआ. ५।३।३ ) इत्यैतरेयके, ‘ सदेव सोम्येदमग्र आसीत् ’ ( छाउ. ६।२।१ ) इति छान्दोग्ये च एतेषां शब्दानां ब्रह्मनामत्वप्रसिद्धेः। तेन नामत्रयेण ब्राह्मणादयो विहिताः। पुरा सर्गादौ एतन्नामत्रयोच्चारणसामर्थ्येनैव विधात्रा विप्रादयो विहिताः प्रकाशिता इत्यर्थः। नीटी.

[1]तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥

यस्मादेतन्नामत्रयपूर्वकम् एतेषां त्रिधानं सर्गादौ दृष्टं तस्मात्त्रिष्वेतेषु नामसु ओमित्येकमेव नाम उदाहृत्य ब्रह्मवादिनां वैदिकानां विधानोक्ताः वेदोक्ताः यज्ञादयः क्रियाः सततं प्रवर्तन्ते। तथा च श्रुतिः- ‘ ओमिति ब्रह्मा प्रसौति, ओमिति शस्त्राणि शंसन्ति, ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति, ओमिति सामानि गायन्ति ’ इति यज्ञे सर्वेषामृत्विजां क्रिया ओंकारपूर्विका इत्येतद्दर्शयति। नीटी.

[2]तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥

ओमिति नाम्नः काम्याकाम्यकर्मसाधारण्येन यज्ञादौ विनियोगमुक्त्वा तदिति नाम्नो निष्कामेषु मुमुक्षुकर्मसु विनियोगं दर्शयति– तदिति। मोक्षकाङ्क्षिभिः फलम् अनभिसंधाय विविधाः यज्ञतपःक्रियाः दानक्रियाश्च क्रियन्ते इति योजना। ननु फलं चेन्नाभिसंधीयते तर्हि किमभिसंधाय क्रियन्त इत्याकाङ्क्षायामाह– तदिति क्रियन्ते इति। सर्वाः क्रियाः तदिति ब्रह्मेति क्रियन्ते। यथा ब्रह्मवादिभिः ‘ ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ’

(१) भा. ६।३९।२४ ; भामु. ६।४१।२४ ; निप्र. १।२६ (=).

(२) भा. ६।३९।२५–२७ ; भामु. ६।४१।२५–२७.

इत्युक्तदिशा सर्वाः ससाधनफलाः क्रियाः ‘ ब्रह्मैवेदं सर्वम् ’ इति बुद्ध्या क्रियन्ते तथा मुमुक्षुभिरपीत्यर्थः, यदेव हि मुक्तानां स्वाभाविकं शीलं तदेव मुमुक्षूणां शास्त्रेण विधीयत इति प्रसिद्धेः। फलमनभिसंधायेति सांनिध्यात्तदितीत्यत्रापि सामर्थ्यादभिसंधायेति लभ्यते। तेन फलमनभिसंधाय तदित्यभिसंधाय क्रियाः प्रवर्तन्त इत्यन्वयोऽपि सुलभ एव। तदिति ब्रह्माभिधानमुच्चार्येति भाष्येऽपि उदाहृत्येति पूर्वश्लोकोक्तक्रियानुवृत्त्या योजनमस्मदुक्ताभिप्रायेणैव व्याख्येयम्, उच्चारणस्यापि ब्रह्मानुसंधानार्थत्वादिति दिक्। नीटी.

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥

ओंतच्छब्दयोर्विनियोगमुक्त्वा सच्छब्दस्य विनियोगमाह द्वाभ्याम्– सद्भावे इति। सद्भाव अस्तित्वे साधुभावे समीचीनत्वे सच्छब्दः। ‘सदिदं कर्म’ इति प्रशस्ते कर्मणि सत्सत्त्वं वेदोक्तत्वादस्त्येवेति सच्छब्दः प्रयुज्यते आस्तिकैः। नीटी.

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥

किंच, यज्ञादौ स्थितिः निष्ठा सदिति समीचीनेति उच्यते। तदर्थः सच्छब्दार्थो ब्रह्म। तदर्थीयं तदर्थं कृतं तदर्थीयं परमेश्वरप्राप्त्यर्थं कृतं कर्म सदित्येव समीचीनमित्येव अभिधीयते लोके। तदेवम् असात्त्विकं विगुणं वा यज्ञादिकं श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयोच्चारणेन सात्त्विकं सद्गुणं च संपादितं भवति। नीटी.

[1]अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥

सर्वत्र श्रद्धैव साद्गुण्यहेतुरिति व्यतिरेकमुखेनाऽऽह– अश्रद्धयेति। हुतं होमः, दत्तं दानम्, तपः तप्तम् अनुष्ठितं कृतम् अश्रद्धया विहितं भगवन्नामस्मरणमपि

(१) भा. ६।३९।२८ ; भामु. ६।४१।२८ ; पमा. १।१९२.

यच्चान्यत् तत्सर्वम् असत् अभावभूतम् इत्युच्यते पार्थ । अत एव तत् प्रेत्य ¶ मृत्वा परलोके नोपयुज्यते, इह अस्मिन् लोके वा नो नैवोपयुज्यते । तस्मात् श्रद्धैव सात्त्विकी मातेव सुखकामैः शरणीकरणीयेति भावः । नीटी.

संन्यासत्यागयोः व्याख्यानम् , सङ्गफलत्यागेन विहितं कर्म चित्तशुद्धये

**श्रीभगवानुवाच–**

**'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥**

अत्रोत्तरं श्रीभगवानुवाच– काम्यानामिति । काम्यानां रागतः प्राप्तानां पुत्रकामेष्ट्यादीनाम् । ननु फलस्य कामनाविषयत्वात् सर्वस्य कर्मणः फलवत्त्वनियमात् सर्वं कर्म काम्यमेवेति नित्यादीनामपि मुमुक्षोस्त्यागः स्यादिति सिद्धं नः समीहितमित्याशङ्क्याऽऽह– सर्वेति । सर्वेषां नित्यनैमित्तिककाम्यानां कर्मणां फलत्यागमेव त्यागं विचक्षणाः प्राहुः, न स्वरूपतस्त्यागं प्राहुः । अतो न त्वदिष्टः संन्यासः सिध्यतीत्यर्थः । अयमाशयः– यद्यपि संन्यासत्यागशब्दौ निवृत्तिमेव ब्रूतः, तथाऽपि सा वैराग्याद्वा, कायक्लेशभयाद्वा, मौढ्याद्वा भवतीति तत्कारणानां सात्त्विकादिभेदेन भिन्नत्वात्तस्या अपि सात्त्विकराजसतामसभेदेन त्रैविध्यं त्रिविधश्रद्धाप्रधानत्वं च दुर्वारम् । न चाविरक्तोऽश्रद्दधानश्च त्यक्तकर्माऽपि दृष्टविक्षेपहीनो दृश्यते । यथोक्तं वार्तिकाचार्यैः– 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥ ' इति । तस्मादविरक्तकृतसंन्यासापेक्षया निष्कामकर्माचरणमेव श्रेयः इत्याशयेन भगवता काम्यकर्मत्यागः संन्यासत्वेन नित्यादिकर्मणां फलानभिसंधानं च त्यागत्वेन स्तूयत इति । तस्मादश्रद्धया कृतः संन्यासोऽप्यसन्नेवेति 'संन्यासाद्ब्रह्मणः स्थानम्' इति स्मृतं स्वफलं दातुं न समर्थः इति युक्तमुक्तं भगवता अश्रद्धया कृतं सर्वं व्यर्थमिति । यत्तु– नित्यानामेव विविदिषायोगात्काम्यानां स्वरूपतोऽपि त्यागः पूर्वार्धस्यार्थः, सर्वेषां कर्मणां फलतस्त्याग इत्युत्तरार्धार्थ इति व्याख्यानं पक्षद्वयप्रदर्शनपरम्, तदग्रिमेण श्लोकेन पौनरुक्त्यमावहतीत्युपेक्षितम् । नीटी.

¶ क्त्वाप्रत्ययस्य समानकर्तृकत्वोपाधिमनुरुध्य 'मृत्वा स्थितस्य' इत्यध्याहारेण ग्रन्थो योज्यः । अथवा 'उपयुज्यते' इति रौधादिकस्य युजेः कर्मणि रूपं ग्राह्यम् ।

(१) भा. ६।४०।२ ; भाम्. ६।४२।२ ; मोक. १५४ ; मुक्ता. १६५ पू. ; आन. ७ चतुर्थचरणे ( प्राहुरन्ये मनीषिणः ) ; नन्द. ६।९४ पू. .

**'त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥**

इदमेव पक्षद्वयमाह– त्याज्यमिति । एके मुख्याः मनीषिणः मनोनिग्रहसमर्थाः परमात्मन्युत्पन्नविविदिषाणां पुरुषाणां दोषवत् रागादयो यथा त्याज्यास्तद्वत् कर्म त्याज्यमिति प्राहुः । अपरे तु विविदिषार्थिना यज्ञादिकं न त्याज्यमिति वा, प्राहुरित्यनुवर्तते । तथा च द्विविधाः श्रुतय उपलभ्यन्ते– 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (नाउ. १२।३), 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।' ( ईउ. २ ) इत्याद्याः । अविद्वद्विषयमेवैतत्पक्षद्वयम् । विदुषां तु कर्मसु प्रवृत्तिकारणस्याज्ञानस्य नष्टत्वात्स्वतःसिद्ध एव त्याग इति न तान्प्रति कर्मविधिर्वा तत्त्यागविधिर्वा प्रवर्तते । यथोक्तम्– 'न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ । ' इति । नीटी.

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥**

तत्र कर्मणां त्यागात्यागविषये विप्रतिपत्तौ सत्यां प्रथमोपात्ते त्यागे विषये मे मद्वचनान्निश्चयं शृणु । हि यस्मात् हे पुरुषव्याघ्र, त्यागः त्रिविधः सात्त्विकराजसतामसभेदेन त्रिप्रकारः परिकीर्तितः शास्त्रे । दृढवैराग्यपूर्वकः कर्मसंन्यासः सात्त्विकः, आयासभयात्त-

(१) भा. ६।४०।३-४ ; भाम्. ६।४२।३-४ ; मोक. १५४.

स्त्यागो राजसः, मौढ्यात्तत्त्यागः तामस इति । तस्मादुहनत्वात्त्यागो निश्चयेन विचारणीय इत्यर्थः । नीटी.

[1]यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥

यज्ञादिकं कर्म न त्याज्यम्, किंतु कार्यमेव विष्टिगृहीतेनेव पुंसा अवश्यमनुष्ठेयमेव, तदकरणे प्रत्यवायश्रवणात् । चकारो हेत्वर्थः । यस्माद्यज्ञो दानं तपश्चैव मनीषिणां निष्कामानां दम्भादिरहितानां पावनानि चित्तशोधकानि । तथा च श्रुतिः— 'त्रयो धर्मस्कन्धाः— यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयः । सर्व एते पुण्यश्लोका भवन्ति' (छाउ. २।२३।१) इति यज्ञादीनां गृहस्थधर्माणां तपसो वनस्थधर्मस्य आचार्यकुलवासस्य ब्रह्मचारिधर्मस्य च पावनत्वं दर्शयति । अत्रापि यज्ञदानशब्देन गृहस्थधर्मा ज्ञेयाः, तप इति वानप्रस्थधर्माः, परिशेषात् कर्मेति ब्रह्मचारिधर्माश्च ज्ञेयाः । नीटी.

[2]एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥

तुशब्दः पूर्वोपन्यस्तात्पक्षाद्वैलक्षण्यं दर्शयति । अपिशब्द एवशब्दार्थः । एतान्येव कर्माणि यज्ञदानतपांसि सङ्गं त्यक्त्वा 'अहमेतेषां कर्ता, मयाऽवश्यमेतानि कर्तव्यानि' इत्यभिमानं वयोवर्णाद्यध्यासनिमित्तं त्यक्त्वा 'एतैः कृतैरहं स्वर्गं वा चित्तशुद्धिं वा ज्ञानं वा प्राप्स्यामि' इति फलानि च त्यक्त्वा, चकारात् 'एषामकरणे मम प्रत्यवायो भविष्यति' इत्येतमप्यभिसंधिं त्यक्त्वा ब्रह्मनिष्ठेनेवासङ्गस्वभावेन पुरुषेण कर्तव्यानि । इति एवंप्रकारं मे मम मतम् उत्तमं पूर्वमतात् श्रेष्ठम् । तत्र हि कर्तृत्वाभिमानरूपेण सङ्गेन प्रत्यवायोत्पादभयाच्च कर्मानुष्ठानं विहितम्, अत्र तु तदभावादसङ्गत्वायंशेन कर्मणां त्यागः स्वरूपेणात्याग इति भेदः । नीटी.

[1]नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥

प्राक्प्रतिज्ञातं त्यागत्रैविध्यमाह— नियतस्येति । तुशब्दः पूर्वोक्तपक्षद्वयवैलक्षण्यार्थः । यस्मादधिकृतस्य मुमुक्षोः नियतस्य अवश्यानुष्ठेयस्य कर्मणः संन्यासः स्वरूपेण त्यागः नोपपद्यते न युज्यते, अज्ञस्य शुद्ध्यपेक्षत्वात् । एवं सति यो मोहात् अज्ञानात् तस्य नियतस्य कर्मणः परित्यागः स तामसः परिकीर्तितः, आवश्यकं च त्यज्यते चेति विप्रतिषेधात् । नीटी.

[2]दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥

एवं तामसं त्यागमुक्त्वा राजसं त्यागमाह— दुःखमिति । यो दुःखरूपमेवेदं कर्मेति मत्वा कायक्लेशभयात् त्यजेत् स पुमान् तस्मादेव हेतोः राजसं रजोगुणनिर्वृत्तं त्यागं कृत्वा त्यागफलं चित्तशुद्धिद्वारा मोक्षं नैव लभेत् लभेत । नीटी.

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥

एवं द्वाभ्यां श्लोकाभ्यां तामसराजसौ मुख्यावेव त्यागावुक्तौ, तामसराजसयोरमुख्यत्यागयोरसंभवस्य भगवतैव 'मोहात्तस्य परित्यागः' इति, 'कायक्लेशभयात्त्यजेत्' इति च सूचनात् । न ह्येवं संभवति, मूढश्च करोति चेति विप्रतिषेधात् । यदि करोति नैव मूढः, यदि मूढस्तर्हि नैव करोति । एवं यदि कायक्लेशाद्बिभेति नैव करोति, यदि करोति नैव कायक्लेशाद्बिभेति ।

---

(१) भा. ६।४०।५ ; भामु. ६।४२।५ ; मोक. १५४ प्रथमचरणे (यज्ञो दानं तपः कर्म) ; मुक्ता. १६५ प्रथमचरणे (यज्ञो दानं तपश्चैव) ; नन्द. ६।९४ मुक्तावत्.

(२) भा. ६।४०।६ ; भामु. ६।४२।६ ; मोक. १५४ ; मुक्ता. १६५ ; नन्द. ६।९४ तु (च).

(१) भा. ६।४०।७ ; भामु. ६।४२।७ ; मोक. १५४ ; मुक्ता. १६५ पू. ; नन्द. ६।९४ पू. .

(२) भा. ६।४०।८–१२ ; भामु. ६।४२।८–१२ ; मोक. १५४–१५५.

तस्मात्करोति च कायक्लेशाद्बिमेति चेति विप्रतिषिद्धम् । अतस्तामसराजसयोरमुख्यत्यागयोरसंभवात्तौ नैवोक्तौ । सात्त्विकस्त्वमुख्यत्यागः संभवति । यथा स्फटिके जपाकुसुमाश्रिते लौहित्यं विवेकिनां प्रतीतित एवास्ति, न वस्तुतः, एवमात्मनि ईश्वराधीने विवेकिनां कर्तृत्वं प्रतीतित एवास्ति, न वस्तुत इति वक्तुं शक्यम् । एवं च कर्तृत्वाभिनिवेशशून्यः पुमान् प्रतीतितः करोत्येव, न वस्तुत इति संभवत्यमुख्योऽपि सात्त्विकस्त्याग इति तमेव मुख्यत्यागेऽधिकारहेतुं प्रथममाह– कार्यमिति । कार्यं कर्तव्यम् इत्येव यत्कर्म नियतं नित्यं क्रियते हे अर्जुन । सङ्गं फलं च त्यक्त्वैवेत्यवधारणं प्रागुक्तस्यात्यागपक्षस्य व्यावृत्त्यर्थम् । स एवंभूतस्त्यागः सात्त्विकः मतः वेदे दृष्टः । तथा च श्रुतिः– 'ईशा वास्यमिदं सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥' (ईउ. १) इति । ईशा ईशेन परमेश्वरेण सर्वकार्यकरणकर्त्रातिमप्रवर्तकेन इदं जगत् स्थावरजङ्गमं जगत्यां ब्रह्माण्डे स्थितं वास्यम् आच्छादितं व्याप्तम् । येन हेतुना सर्वं तदधीनं तेन कारणेन त्यक्तेन त्यागेन कर्तृत्वभोक्तृत्वाभिमानवर्जनेन भुञ्जीथाः विषयान्भुङ्क्ष्व, मा गृधः गर्धं मा कार्षीः । कस्यस्विद्धनम् ? न कस्यापि । तत्र स्वामित्वमस्तीति वृथैव तत्र गर्धं इत्यर्थः । एवं कर्माण्यपि यज्ञादीनि कर्तृत्वाभिमानं त्यक्त्वा कुर्वतस्तव कर्मलेपो न भविष्यति । एतद्व्यतिरेकेण तवोपायान्तरं च नास्तीत्यग्रिममन्त्रेण प्रदर्श्यते– 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥' इति । इदमेव मुख्यं स्वमतं भगवता प्रदर्शितम् 'एतान्यपि तु कर्माणि' इति श्लोके । ननु नित्यानां फलमेव नास्ति, किं त्यक्तव्यम् ? इति चेत्, इत एव भगवद्वचनात्तेषामपि फलमस्तीति जानीहि, निष्फलस्य वेदेनानुष्ठापनासंभवात् । तथा चाऽऽपस्तम्बः– 'तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' (आध. १।२०।३) इति आनुषङ्गिकं फलं नित्यानां दर्शयति । अकरणे प्रत्यवायस्मृत्याऽपि तेषां प्रत्यवायपरिहारः फलमिति प्रदर्श्यते । 'धर्मेण पापमपनुदति' इत्यादिना च नित्येष्वपि कर्मसु फलं दृश्यते । तदेव वक्तव्यमिति न कोऽपि दोषः ।
नीटी.

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥**

(१) न द्वेष्ट्यकुशलमिति । दुःखसाधनमवमानाक्रोशताडनादि न द्वेष्टि 'पूर्वकर्मफलं मया भुज्यते' इति मत्वा शाम्यति । कुशले सत्कारपूजादिसुखसाधने ।
मोक. १५५

(२) एवममुख्यं सात्त्विकत्यागमुक्त्वा मुख्यं तमाह– न द्वेष्टीति । सत्त्वेन सम्यक् आविष्टः व्याप्तः त्यागी मुख्यः सात्त्विकस्त्यागी संन्यासीत्यर्थः । अकुशलम् असुखप्रदं कर्म त्रिषवणस्नानचतुर्गुणशौचभिक्षाटनादिप्रयासरूपं न द्वेष्टि । कुशले मिष्टान्नभिक्षादौ नानुषज्जते न सङ्गं काकवत्प्रीतिं करोति । यद्वा कर्मकुशले सेवादिकर्मकुशले शिष्यादौ न सज्जते, तत्राकुशलं वा तं न द्वेष्टि । एतेन रागद्वेषशून्यत्वमस्य दर्शितम् । तदपि कुतः ? इत्यपेक्षायामाह– मेधावीति । ऊहापोहकुशलतया नित्यानित्यवस्तुविवेचनादौ प्रज्ञावान् । अत एव छिन्नसंशयः 'किं कर्माण्येव मुक्तिसाधनानि ? उत संन्यास एव ?' इति विचिकित्सारहितः । एवं च त्यागीत्यनेन 'यज्ञो दानं तपः कर्म न त्याज्यम्' इत्युक्तादत्यागाद्व्यावृत्तिः, मेधावीत्यनेन 'मोहात्तस्य परित्यागः' इत्युक्तात्तामसत्यागाद्व्यावृत्तिः, पूर्वार्धेन रागद्वेषाभावप्रतिपादनेन 'कायक्लेशभयात्त्यजेत्' इत्युक्ताद्राजसत्यागाद्व्यावृत्तिः, छिन्नसंशय इत्यनेन 'कार्यमित्येव यत्कर्म' इत्युक्तादमुख्यसात्त्विकत्यागाद्व्यावृत्तिः । न ह्यसौ कर्मणां तुच्छत्वं संन्यासस्य महाभाग्यत्वं च तत्त्वतो वेद । वेद चेत्क्षणमपि कर्मसु न तिष्ठेत् । न हि दाहोपशमार्थी निकटस्थां जाह्नवीमहाह्रदं जानन् ग्रीष्मोष्मप्रतप्तपाथसि पल्वले क्षणमपि रमेत । संशयच्छेदेऽपि हेतुः– सत्त्वसमाविष्ट इति । यतः सत्त्वेनैव कर्त्रा सम्यगाविष्टोऽयम्, न त्वयं सत्त्वमाश्रित इति महान्विशेषः । एवं च पूर्वश्लोकोक्तस्य सात्त्विकत्याग-

रूपस्य कर्मयोगस्य फलभूतोऽयं मुख्यः संन्यासो विविदिषुणा-मनुष्ठेयः ‘ यदहरेव विरजेत्तदहरेव प्रव्रजेत् ’ ( जाउ. ४) ‘ एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ’ ( बृउ. ४।४।२२) इतिश्रुतिप्रसिद्धः । भाष्ये तु– “ ननु कर्म-परित्यागस्त्रिविधः संन्यास इति च प्रकृतः, तत्र तामसो राजसश्चोक्तस्त्यागः, कथमिह सङ्गफलत्यागस्तृतीयत्वे-नोच्यते ? यथा ‘त्रयो ब्राह्मणा आगतास्तत्र षडङ्गविदौ द्वौ क्षत्रियस्तृतीयः ’ इति, तद्वत् । नैष दोषः, त्यागसामा-न्येन स्तुत्यर्थत्वात् । अस्ति कर्मसंन्यासस्य फलाभि-संधित्यागस्य च त्यागत्वं सामान्यम् । तत्र राजसताम-सत्वेन कर्मत्यागनिन्दया कर्मफलाभिसंधित्यागः सात्त्वि-कत्वेन स्तूयते– ‘ स त्यागः सात्त्विको मतः ’ (इति) ” इति ग्रन्थेन त्यागत्रैविध्यं समाधायैव सङ्गफलत्यागपूर्वकं नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्याऽऽत्मज्ञानाभि-मुखस्य तन्निष्ठाक्रमकथनार्थोऽयं श्लोक इत्युक्तम् । तथैव श्लोकं व्याख्याय ‘ पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तम् ’ इत्युपसंहृतम् । अन्ये तु– फलाभि-संधिविशिष्टस्य कर्मणस्त्यागस्त्रिविधः विशेषणाभावाद्वि-शेष्याभावादुभयाभावाच्च । आद्योऽत्रैव विधित्सितः । द्वितीयस्तु तामसराजसभेदेन द्विविधोऽप्यत्रैव निन्दितः । तृतीयस्तु कर्मानधिकारिणा विविदिषुणा विदुषा च कर्तुं योग्यो द्विविधः । तत्रान्त्यः स्थितप्रज्ञलक्षणादौ प्राग्व्याख्यातः । आद्यस्तु ‘ नैष्कर्म्यसिद्धिं परमाम् ’ इत्यत्र वक्ष्यते । तत्र भाष्ये तिस्रस्त्यागविधाः प्रतिज्ञाय द्वे यथावत्प्रदर्श्य तृतीयाऽपि केनचित्सामान्येन प्रति-पादिता । अत्र तु एकस्यां द्वयोरन्तर्भावं कृत्वा द्वे एव विधे उपपाद्य तृतीया प्रदेशान्तरे प्रक्षिप्तेति प्रकृते प्रति-ज्ञाया अनिर्वाह इति विशेषः । नीटी.

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥**

अमुख्यमेव सात्त्विकं त्यागमनूद्य तत्प्रयोजनमाह द्वाभ्याम्– न हीति । देहभृता देहाभिमानिना हि यस्मात् अशेषतः कर्माणि त्यक्तुं न शक्यम् अश-क्यम्, प्राणयात्रालोपप्रसङ्गात्, तस्मादधिकृतः सन् यः कर्मफलत्यागशीलः । तुशब्द एवार्थे । स एव त्यागीत्युच्यते । यस्त्वशेषतः कर्माणि त्यक्तुं शक्नोति परमार्थदर्शी स मुख्यस्त्यागीत्यर्थः । नीटी.

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥**

एवंभूतस्य त्यागस्य फलमाह– अनिष्टमिति । अनिष्टं नरकतिर्यगादिरूपम्, इष्टं देवतादिरूपम्, मिश्रं मानुष-भाव इति कर्मणः कर्मजातीयस्य फलं त्रिविधं प्रेत्य मरणानन्तरमत्यागिनां पूर्वोक्तमुख्यसंन्यासहीनानां भवति । मुख्यसंन्यासिनां तु न क्वचित् तत् भवति, तेषां कर्तृ-स्वामिमानाभावात् । अन्ये तु– गौणसंन्यासिनामेवायं कर्मालेप इत्याहुः । तथा च व्याख्यातं ‘ कार्यमित्येव यत्कर्म ’ इत्यत्र । अन्यथाऽसंन्यासिनां गौणसंन्यासिनां च विशेषो न स्यात् । न चैवं मुख्यसंन्यासिनां गौणसंन्या-सिनां चाविशेषापत्तिरिति वाच्यम्, उभयेषामुत्तरकर्मा-श्लेषसाम्येऽपि पूर्वकर्मदाहादाहकृतस्य विशेषस्य सत्त्वात् । गौणसंन्यासिनां जन्मान्तरादिकमपि पूर्वकर्मभिरेव भवि-ष्यति आपस्तम्बोक्ताम्रनिदर्शनेन योगभ्रष्टगतिवचनान्तरी-यकं वा, न तु तस्य प्रधानं फलं स्वर्गादि भवितुमर्हति, अनुद्दिष्टत्वादिति । नीटी.

पञ्च कर्मकारणानि

**‘पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥**

नन्वात्मनः कर्मालेपनिमित्तं यदकर्तृत्वानुसंधानं तत्किं योषिदग्निदृष्ट्यादिवदाहार्यम्, उत वास्तवमेव सद्विद्याध्वस्तकर्तृत्वेनाऽऽवृतमिति शास्त्रदृष्ट्या कर्तृत्व-तिरोधानेनाकर्तृत्वमेव भाव्यते इत्याशङ्क्य, अग्नित्वेन दृष्टायां योषिति दग्धृत्वादर्शनेनेव कल्पितेनाकर्तृत्वेन वास्तवस्य कर्मालेपस्यासंभवादाद्यं निरस्य द्वितीयमुपपाद-यिष्यन् पीठिकामारचयति– पञ्चेति । हे महाबाहो, सर्वकर्मणां सिद्धये इमानि वक्ष्यमाणानि पञ्च कारणानि

(१) भा. ६।४०।१३–१८ ; भाभु. ६।४२।१३–१८.

निर्वर्तकानि मे मद्वचनात् निबोध बुध्यस्व । स्ववचने विश्वासोत्पादनार्थं कारणानां समूलत्वमाह— सांख्ये कृतान्ते प्रोक्तानीति । सम्यग्विविच्य ख्यायन्ते प्रकटीक्रियन्ते तत्त्वानि आत्मानात्मपदार्थरूपाणि यस्मिंस्तत् सांख्यं वेदान्तशास्त्रम् । तदेव विशिनष्टि— कृतान्ते कृतस्य कर्मणः अन्तः परिसमाप्तिः यस्मिन्, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।' इत्यात्मज्ञाने सति सर्वकर्मणां समाप्तिदर्शनात् । तस्मिन्सांख्ये कृतान्ते प्रोक्तानि । नीटी.

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥**

तानेव पञ्च गणयति— अधिष्ठानमिति । अधिष्ठानम् इच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयो देहः । तस्यानात्मत्वं चार्वाकव्यतिरिक्तसमस्तवादिसिद्धम् । तथा कर्ता बुद्धिविशिष्टश्चिदाभासः प्रमाता नामाहंप्रत्ययविषयोऽहंकारः । तथेत्यनेन तद्वदेवानात्मत्वेन ज्ञेय इत्युक्तम्, देहस्येव सृष्टौ प्रलये च तस्याप्युत्पत्तिविनाशयोर्दर्शनात् । एतच्च विशेषणनाशाद्विशिष्टनाशं विशेषणोत्पत्त्या च विशिष्टोत्पत्तिमभिप्रेत्य श्रूयते— 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' (बृउ. २।४।१२) इति, 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेतस्मादात्मनः सर्वे एत आत्मानो व्युच्चरन्ति' (बृउ. २।१।२०) इति च । विशिष्टस्य चानतिरेकादर्शनादनात्मत्वं सिद्धम् । करणं च शब्दाद्युपलब्धिसाधनम् । पृथग्विधं द्वादशविधं पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि मनो बुद्धिश्च । तथा विविधाश्च पृथक्चेष्टाः वायवीयाः प्राणनादिरूपाः । दैवं पुण्यपापरूपं तत्तत्करणानुग्राहकसूर्यादिदेवतारूपं (वा) पञ्चमं पञ्चानां पूरणम् । नीटी.

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥**

न्याय्यं धर्म्यं शास्त्रीयम्, विपरीतम् अन्याय्यमधर्म्यमशास्त्रीयम् । ननु शरीरादिभिस्त्रिभिरारभ्यते, पञ्चैते तस्य हेतव इति च विप्रतिषिद्धमुच्यते । नैष दोषः, अत्रापि शरीरपदेनाधिष्ठानस्य नरपदेन कर्तुः वाङ्मन इति करणस्य आरभत इति चेष्टानां न्याय्यमिति धर्माधर्मरूपस्य दैवस्य च संग्रहात् । सर्वेषु कर्मसु पञ्चानां समानेऽप्युपयोगे विधिप्रतिषेधलक्षणं त्रिविधमेव कर्म शास्त्रे प्रसिद्धमिति 'इदं शारीरं कर्म, इदं मानसम्, इदं वाचिकम्' इति व्यपदेशो देहादीनां प्राधान्यापेक्ष इति न कश्चिद्विरोधः । नीटी.

आत्मनः केवलस्य अकर्तृत्वम्

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥**

एतत्प्रतिपादनफलं कर्तृत्वस्याऽऽरोपितत्वसिद्धिरकर्तृत्वस्य स्वाभाविकत्वसिद्धिश्चेति द्वाभ्यां श्लोकाभ्यां दर्शयति— तत्रेति । तत्र तस्मिन्कर्मणि एवम् उक्तरीत्या पञ्चभिर्निर्वर्त्ये सति केवलं तु अकर्तारमपि आत्मानं चेतनम्, 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेः, अधिष्ठानादिपञ्चकप्रचारदर्शिनमुदासीनमपि यः कर्तारं कर्तृत्वाश्रयं पश्यति स दुर्मतिः पापाभिभूतमतिः न पश्यति अन्ध एव सः । अदर्शने हेतुः— अकृतबुद्धित्वादिति । शास्त्राचार्योपदेशशमदमादिसंस्कृता बुद्धिर्यस्य स कृतबुद्धिः, तद्विपरीतोऽकृतबुद्धिः तस्य भावस्तत्त्वं तस्मात् । यथा स्वमुखस्योदपात्रसंसर्गिकत्वं पश्यता जलचाञ्चल्यमपि तत्राऽऽरोप्यते, एवमात्मनो बुद्धिसंसृष्टत्वं पश्यता बुद्धिधर्मः कर्तृत्वादिरप्यात्मन्यारोप्यत इति भावः । नीटी.

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥**

द्वितीयं प्रयोजनमाह— यस्येति । यस्य प्रमातुः भावः प्रत्ययमात्रस्वरूप आत्मा नाहंकृतः अहमिव कृतोऽहंकारतादात्म्यं प्रापितोऽहंकृतः, तथा न । यस्य बुद्धिर्न लिप्यते आत्मभावेन रञ्जिता न भवति । यस्य बुद्धेर्व्यतिरिक्तमात्मानं पश्यतो बुद्धिधर्माः कर्तृत्वादयो नाऽऽत्मनि प्रतीयन्ते इति कर्त्रात्मवादितार्किकनिरासः, यस्य च आत्मधर्माश्चैतन्यादयो बुद्धौ न संसृज्यन्त इति बुद्धिमेव चेतनां वदतो बौद्धस्य निरासः । चिदचितो-

रन्योन्यस्मिन्नन्योन्यधर्माध्यासो बाध्यत इति दुःखादिसंसर्गनिषेधेन भोक्तृत्वाभावो दर्शितः । 'हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ।' इति तु स्तुतिमात्रम्, कर्तृत्वस्यैव बाधेन हन्तृत्वायोगात्, दग्धपटवत्कर्तृत्वानुवृत्तावपि हननक्रियायां प्रवर्तकस्य रागद्वेषादेरभावाच्च । एतेनाऽऽत्मनस्तात्त्विकमकर्तृत्वं भावयता कृतं कर्मातात्त्विककर्तृत्वाभिमाननिमित्तं स्वफलं प्रस्तोतुं नार्हतीति दर्शितम् । न हि रज्जुसर्पे रज्जुबुद्धिं कृत्वा प्रहरतः सर्पक्षोभजं दंशनादि फलं भवति, सर्पे तु तथा कुर्वतस्तद्भवत्येव, तद्वदिदमपि ज्ञेयम् । नीटी.

त्रीणि कर्मप्रवर्तकानि, त्रीणि कर्मसमवायस्थानानि

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥**

समासः सात्त्विकत्यागोपपादनोपयोगी आत्मनोऽकर्तृत्वोपपादनप्रकारः । अत्राऽऽह सांख्यः– यदुक्तम् 'पञ्चैते तस्य हेतवः' इति, यच्चोक्तम् 'न हन्ति' इति, तन्मृष्यामहे । न ह्यपरिणामी चेतनः परिस्पन्दात्मकस्य कायिकादिभेदेन त्रिविधस्य कर्मणः कर्ता भवतीति वक्तुं युज्यते । यत्तु 'न निबध्यते' इति भोक्तृत्वमुक्तमपि प्रत्याख्यातं तन्न मृष्यामहे । न हि कुलालादयः स्वप्रयुक्ता एव घटादीन्निर्वर्तयन्ति, किंतु भोक्तृपुरुषप्रयुक्ताः । अन्यथा भोक्तॄणामभावे व्यर्थैव तत्प्रवृत्तिरित्यापतति । एवं प्रधानमात्राभूताः कर्त्रादयः पुरुषस्य भोगापवर्गसाधनप्रयुक्ताः सर्वाणि कर्माणि निर्वर्तयन्ति । तस्मात्पुरुषस्य भोक्तृस्वभावत्वादकर्तृत्वानुसंधानपूर्वकमपि कृतं कर्म भोक्त्राऽवश्यमेव भोक्तव्यमिति सात्त्विकत्यागेऽपि कर्मालेपवचनमसंगतमिति । अत्र प्रतिविधत्ते– ज्ञानं ज्ञेयमिति । ज्ञानं ज्ञायते प्रकाश्यते वस्तुतत्त्वमनेनेति प्रत्यक्षादिप्रमाणजन्यो घटादिप्रकाशः, स च वर्तमानोऽतीतो वा । ज्ञेयं बोधविषयो घटादिः । परिज्ञाता विषयी साभासधीरूपः यो भोक्तेत्युच्यते । एवंरूपप्रकारत्रयवती त्रिविधा कर्मणां चोदना । त्रयं समुच्चितं सत् कर्मणि प्रवर्तकमित्यर्थः । सत्यपि ज्ञेये ज्ञातरि चाऽज्ञाने प्रवृत्त्यनुपपत्तेः, ज्ञाने ज्ञातरि च सति देशकालव्यवहिते ज्ञेये प्रवृत्त्यनुपपत्तेः, सत्यपि संस्कारात्मके ज्ञाने ज्ञेये च संनिहिते तथाऽपि सुषुप्तौ प्रमात्रभावात् प्रवृत्त्यदर्शनाच्चैतत्त्रयं त्रिदण्डविष्टम्भवदन्योन्यापेक्षं सत् हानोपादानोपेक्षाबुद्धिरूपं कार्यं जनयित्वा हानाद्यनुकूले व्यापारे प्रवर्तयतीति कर्तृपदाभिधेयमित्यर्थः । चोदनेति । कर्तरि नन्द्यादिल्युप्रत्ययान्तत्वेन चोदनाशब्दः कर्तृवाची । लिङ्गं त्वविवक्षितम्, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वा । तथा करणम् इन्द्रियम्, कर्म तेन यत्क्रियमाणं विषयग्रहणम्, कर्ता पूर्वोक्त एव परिज्ञाता । एतत्त्रयं समुदितं सत् कर्मसंग्रहः कर्मणः ईप्सिततमस्य भोग्यस्य संग्रहः संगृह्यतेऽस्मिन्निति संश्लेषस्थानं भोक्तेत्यर्थः । सत्यपि भोक्तरि करणे च क्रियां विना भोगासंभवात् क्रियायाश्चाऽऽश्रयं विना स्वरूपालाभादाश्रयस्य करणं विना भोक्तृत्वाङ्गकर्तृत्वानुपपत्तेश्चैतत्त्रयं मिलितं सत् भोक्तेत्युच्यत इत्यर्थः । तथा च श्रुतिः– 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।' (काठ. ३।४) इति । इन्द्रियं प्रसिद्धम् । मन इत्यनेन बुद्धिरेव गृह्यते । युक्तम् इन्द्रियद्वारा मतेर्भोग्येन सह संबन्धक्रिया । इन्द्रियं च मनश्च युक्तं चेति विग्रहे इन्द्रियमनोयुक्तमिति द्वन्द्वैकवद्भावः । एतत्त्रयं भोक्ता आत्मेत्याहुर्मनीषिण इति श्रुत्यर्थः । एवं हि श्रुतिस्मृत्योर्व्याख्याने तयोर्मूलमूलिभावो युज्यते, नान्यथा । तथा च कर्तृवत् भोक्तुरप्यनात्मगणपतितत्वाद्भोक्तृत्वं भोगकर्तृत्वमिति निर्वचनाद्यः कर्ता स एव भोक्तेति प्रतिपादनादहमकर्ताऽभोक्तेति चानुसंधानपूर्वकं कर्माणि कुर्वतः कर्तृत्वभोक्तृत्वकृतः कर्मलेपो नास्तीति सिद्धम् । भाष्यस्य चायमेवार्थः । ये तु– करणं क्रियायाः साधकतमं दशविधं बाह्यम्, मनोबुद्धिरूपमान्तरम् । कर्म कर्तुरीप्सिततमं क्रियया व्याप्यमानमुत्पाद्यमाप्यं विकार्यं संस्कार्यं चेति चतुर्विधम् । कर्ता कारकान्तरप्रयोजकश्चिदचिद्ग्रन्थिः । एतत्त्रयं कर्मसंग्रहः कर्माश्रयः कर्तेत्यर्थः । तथा ज्ञानं विषयप्रकाशनशक्तिः । ज्ञेयं विषयः । परिज्ञाता ज्ञानाश्रयो भोक्ता । एतत्त्रयं कर्मणि प्रवर्तकमिति व्याचक्षते । तेषामप्यात्मा न कर्ता, नापि सांख्याना-

मिव भोक्तृत्वेन प्रकृतेः प्रवर्तक इत्येवाऽऽशयः । तथापि क्रियया व्याप्यमानस्य वक्ष्यमाणसात्त्विकादिभेदानर्हस्य घटादिरूपस्य कर्मणः कर्तृकोटौ प्रवेशायोगः। तस्य क्रियाश्रयत्वमात्रविवक्षायां प्रकृते तत्कथनानुपयोगश्च स्पष्टः । तथाऽस्माकं तु घटादिव्यापकक्रियायाः कर्मशब्दवाच्यत्वं मुख्यम् । कर्तृकोटिप्रवेशश्च क्रियाक्रियावतोर्धर्मधर्मिणोरभेदापेक्षया युज्यते । तथा ज्ञानं प्रकाशनक्रियेति मते क्रियारूपेऽस्मिन् प्रवर्तकज्ञानान्तरस्यापेक्षेति तत्र तत्रान्यस्यान्यस्यापेक्षेत्यनवस्था दुर्निवारा । नीटी.

गुणत्रयानुसारेण कर्मकर्त्रादीनां त्रैविध्यम्

[1]नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥

अथ कर्मत्रैविध्यमाह— नियतमित्यादिना । नियतं नित्यं सङ्गरहितमभिमानवर्जितम् । राग इष्टे प्रीतिः द्वेषोऽनिष्टेऽप्रीतिः ताभ्यां कृतम् इष्टानिष्टप्राप्तिपरिहारार्थं कृतं रागद्वेषतः कृतम्, तदन्यदरागद्वेषतः कृतम्, निष्काममित्यर्थः । फल्गु च लीयते चेति फलं क्रियया प्राप्यमनात्मवस्तु, तदन्यत् अफलम् अनागन्तुकं परिपूर्णमविनाशि आत्मतत्त्वम्, तत्प्रेप्सुना कृतम्, 'विविदिषन्ति यज्ञेन' इति श्रुत्या आत्मलाभार्थे यज्ञादेर्विनियोगात् । तत्कर्म सात्त्विकमुच्यते । नीटी.

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥

यत्तु— कामेप्सुना फलार्थिना । साहंकारेण, यद्यपि सात्त्विकोऽप्यनात्मवित्साहंकारः तथाऽपि 'अहमेव कर्मकुशलो महान् श्रोत्रियः' इत्यभिमानोऽहंकारः, तद्वता साहंकारेण । वाशब्दश्चार्थे । क्रियते बहुलायासम् अतिश्रमकरं तत्कर्म राजसमुदाहृतम् । नीटी.

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥

अनुबध्यतेऽनेनेत्यनुबन्धः फलम्, क्षयं शक्तेरर्थानां च नाशम्, हिंसां परपीडाम्, पौरुषम् स्वसामर्थ्यम् अनपेक्ष्य अनालोच्य केवलं मोहात् अविवेकतः यदारभ्यते कर्म तत्तामसमुदाहृतम् । नीटी.

[1]मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥

(१) मुक्तसङ्गः त्यक्तफलाभिनिवेशः । अनहंवादी गर्वरहितः । निर्विकारः हर्षविषादशून्यः । आत. ३५०

(२) कर्तृत्रैविध्यमाह— मुक्तेत्यादिना । मुक्तसङ्गः त्यक्ताभिनिवेशः । अनहंवादी पूर्वोक्ताहंकारोक्तिरहितः । धृतिः धैर्यम्, उत्साहः साधयिष्याम्येवेति बुद्धिनिश्चयः, ताभ्यां समन्वितः । सिद्ध्यसिद्ध्योः, कर्मण आरब्धस्येति शेषः । निर्विकारः हर्षविषादशून्यः । कर्ता सात्त्विक उच्यते । नीटी.

[2]रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥

रागी विषयलोलुपः, अत एव कर्मणः फलं प्रेप्सतीति कर्मफलप्रेप्सुः, लुब्धः परद्रव्यादौ संजाततृष्णः तीर्थादौ वा द्रव्यापरित्यागी, हिंसात्मकः परपीडाकरस्वभावः, अशुचिः बाह्यान्तःशौचवर्जितः, इष्टानिष्टप्राप्तौ हर्षशोकान्वितश्च यः कर्ता स राजसः परिकीर्तितः । नीटी.

[3]अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥

(१) भा. ६।४०।२३–२५ ; भामु. ६।४२।२३–२५.

(१) भा. ६।४०।२६ ; भामु. ६।४२।२६ ; आत. ३५०.

(२) भा. ६।४०।२७ ; भामु. ६।४२।२७ ; आत. ३५० रागी (वाग्मी).

(३) भा. ६।४०।२८ ; भामु. ६।४२।२८ ; आत. ३५०.

(१) अयुक्तः अनवहितः। प्राकृतः विवेकशून्यः। शठः शक्तिगूहनकारी। नैकृतिकः परापमानी। अलसः अनुद्यमशीलः। विषादी शोकशीलः। यदह्ना कार्यं तन्मासेनापि न संपादयति स दीर्घसूत्री। अत एव लिङ्गपुराणम्— 'श्वः कार्यमद्य कर्तव्यं पूर्वाह्णे वाऽपराह्णिकम्। न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्॥' इति। आत. ३५०–३५१

(२) अयुक्तः अनवहितः। प्राकृतः अत्यन्तमसंस्कृतबुद्धिर्बालसमः। स्तब्धः दण्डवन्न नमति कस्मैचित्। शठः शक्तिगूहनकारी। नैकृतिकः वञ्चकः परावमानी वा। अलसः अप्रवृत्तिशीलः कर्तव्येष्वपि। विषादी सर्वदा अवसन्नस्वभावः। दीर्घसूत्री चिरकारी। एकाहसाध्यं कार्यं मासेनापि न करोतीत्यर्थः। य एवंभूतः स कर्ता तामस उच्यते। नीटी.

अनुष्ठितः स्वधर्मः ईश्वरार्पितः सिद्धिकरः

**'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दन्ति तच्छृणु॥**

(१) अत्र संसिद्धिरूपश्रेयःसाधकतया $एतेषां कर्मणां धर्मत्वं विवक्षितम्। कुर. १३

(२) कर्मप्रविभागफलमाह— स्वे स्वे इति। स्वे स्वे मन्वादिभिरुक्तेऽध्यापनादावसाधारणे शमदमादौ साधारणे च कर्मणि अभिरतः निष्ठावान् संसिद्धिं ज्ञानयोग्यतां लभते नरः। एतदेव विवरीतुं प्रतिजानीते— स्वकर्मेति। सिद्धिं वक्ष्यमाणां मुख्यसंन्यासलक्षणां नैष्कर्म्यसिद्धिं यथा येन प्रकारेण। नीटी.

**'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥**

तमेव प्रकारमाह— यत इति। प्रवृत्तिः कायवाङ्मनोनिर्वर्त्या चेष्टा। यतः हेतोः अन्तर्यामिणः 'येन वागभ्युद्यते' (केउ. १।५) इत्यादिश्रुतेः। येन इदं सर्वं दृश्यं ततं व्याप्तम्, उपादानत्वात्। स्वकर्मणा तम् अभ्यर्च्य संतर्प्य सिद्धिं मोक्षं विन्दति लभते मानवः, मनुष्याधिकारिकत्वाच्छास्त्रस्य। परमेश्वरे नित्यकर्मणामर्पणमेव मोक्षद्वारमित्यर्थः। नीटी.

**'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम्॥**

स्वकर्मणेति विशेषणस्य फलमाह— श्रेयानिति। स्वधर्मः विगुणः किंचिदङ्गहीनोऽपि श्रेयान् प्रशस्यतरः। किमपेक्ष्य श्रेयान्? परधर्मात् स्वनुष्ठितात् सम्यग्विहितादपि। उक्तं च— 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।' इति। स्वभावनियतं पूर्वोक्तत्रिविधस्वभावाज्जातं कर्म कुर्वन् किल्बिषं दोषं नाऽऽप्नोति विषकृमेर्विषमिव न दोषकरम्। तस्मात् तव भैक्ष्यं हिंसाशून्यमपि न युक्तम्, किंतु हिंसायुक्तोऽपि स्वधर्म एव प्रशस्यतरः। धर्मत्वेन विहितेऽस्मिन्नग्नीषोमीयपश्वालम्भे इव कृते सति न किल्बिषप्रसङ्गोऽस्तीत्यर्थः। नीटी.

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः॥**

किंच, सहजं स्वाभाविकं क्षात्रं कर्म सदोषं हिंसामिश्रमपि न त्यजेत्। हि यस्मात् सर्वारम्भाः सर्वाणि कर्माणि दोषेण हिंसादिना आवृता एव। यस्माच्च परधर्मो भयावहस्तस्मात्स्वकर्म न त्यजेदित्यर्थः। नीटी.

**'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥**

(१) तेन सर्वाण्येव कर्माणि भगवति श्रीकृष्णे समर्पितानि भगवद्भक्तिरूपत्वेन पापक्षयप्रकर्षं कुर्वन्ति। निप्र. ११।१४

---

$ प्रकरणवशात् पूर्वोक्तानां ब्राह्मणादिवर्णसंबन्धिनां शमदमादीनामित्यर्थः।

(१) भा. ६।४०।४५ ; भामु. ६।४२।४५ ; ब्रक. १० पू. ; कुर. १३ पू. , भविष्यपुराणे ; पप्र. ४७ पू. ; आमू. ३५९.

(२) भा. ६।४०।४६ ; भामु. ६।४२।४६ ; नन्द. १२।९१ ; आमू. ३५९.

(१) भा. ६।४०।४७–४८ ; भामु. ६।४२।४७–४८ ; आमू. ३६०.

(२) भा. ६।४०।५६ ; भामु. ६।४२।५६ ; निप्र. ११।१४.

(२) ननु 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छाउ. ५।२४।३) इति पूर्वकर्मणां प्रायश्चित्तेनेव सत्यपि नाशश्रवणे ज्ञानोत्तरकालीनानां कर्मणां नाशाभावाज्ज्ञानोत्तरमपि देहधारणे स्वाभाविकानां कर्मणां वर्जनस्यासंभवादवश्यं ज्ञानिनोऽपि बन्धः स्यादित्याशङ्कयाऽऽह— सर्वकर्माणीति। मद्व्यपाश्रयः अहमेव प्रज्ञानघनः प्रत्यगात्मा व्यपाश्रयः आश्रयः यस्य स मद्व्यपाश्रयो ज्ञानी सर्वकर्माणि विहितानि निषिद्धानि वा सदा असकृत् कुर्वाणोऽपि मत्प्रसादात् मदनुग्रहात् शाश्वतं नित्यम् अव्ययं परमसर्वोत्कृष्टं पदं पदनीयं मोक्षम् अवाप्नोति, नतु ज्ञानोत्तरमपि क्रियमाणैः कर्मभिर्बध्यते, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति, 'न ह वा एवंविदि किंचन रज आध्वंसते', 'तं विदित्वा न लिप्यते कर्मणा पापकेन' (बृउ. ४।४।२३) इत्यादिशास्त्रेण तत्त्वज्ञानिनः कर्मालेपश्रवणात्। नीटी.

'चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव॥

एवं वर्णाश्रमादिधर्मपुरस्कारेण ससाधना सफला च ब्रह्मविद्या निरूपिता। अस्याः प्राप्तये पुनः साधनत्वेन भक्तिमेव विधत्ते— चेतसेति। चेतसा विवेकबुद्ध्या सर्वाणि कर्माणि नित्यनैमित्तिकानि मयि भगवति वासुदेवे संन्यस्य 'यत्करोषि यदश्नासि' इत्युक्तरीत्या समर्प्य मत्परः अहमेव परः प्राप्यो यस्य, न तु मद्भक्त्या अर्थादीन् प्रार्थयानः, बुद्धियोगं पूर्वोक्तं सिद्ध्यसिद्ध्योः समत्वलक्षणं बन्धहेतोरपि कर्मणो मोक्षहेतुत्वसंपादकम् उपाश्रित्य आश्रित्य मच्चित्तः मदेकशरणः सततं सर्वदा भव। नीटी.

'सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्॥

(१) भा. ६।४०।५७; भामु. ६।४२।५७.

(२) भा. ६।४०।६४–६५; भामु. ६।४२।६४–६५.

एवं यथेष्टकरणमभ्यनुज्ञायाप्यतिवात्सल्यात् श्लोकद्वयेनैव कृत्स्नं शास्त्रार्थमुपदेक्ष्यंस्तद्ग्रहणे ऐकाग्र्यमस्य संपादयितुमाह— सर्वेति। सर्वेभ्यो गुह्येभ्यः अतिशयितं गुह्यं सर्वगुह्यतमं भूयः पुनः असकृदुक्तमपि मे मम वचनं शृणु। परमम्, परमार्थविषयत्वात्। न लोभान्नापि भयात्त्वां वक्ष्यामि, किं तर्हि? मे मम इष्टोऽसि परमाप्तोऽसि इति हेतोः दृढम् अतिशयितं ते तव हितं यत् ततो वक्ष्यामि। तव इष्टत्वात् विद्यायाश्च हितत्वाच्चद्वचनम् आप्ते त्वयि अवश्यं वक्तव्यमिति भावः। नीटी.

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥

ननु यस्य भगवद्याजित्वं न संभवति दारिद्र्यात्तस्याशभावाद्वा तस्य भगवद्भक्तिदौर्लभ्याद्ब्रह्माकारा चेतोवृत्तिर्दुर्लभैतरेत्याशङ्क्याऽऽह— मां नमस्कुरु। प्राकृतभक्त्यैव प्रतिमादौ भगवन्तं सर्वोपचारसमर्पणेन नमस्कारादिना सम्यगाराधयेत्यर्थः। तथा चाऽऽश्वलायनो नमस्कारस्यैव यज्ञत्वमुदाहरति— 'यो नमसा स्वध्वरः' इति, "यज्ञो वै नमः' इति हि ब्राह्मणं भवति" (आग्र. १।१।५) इति च। एवं मुक्तस्य सोपानत्रयारूढस्य फलमाह— मामिति। मामेव तत्पदार्थं सर्वजगत्कारणं सर्वेश्वरं सर्वशक्तिमखण्डैकरसं स्वम् एष्यसि प्राप्स्यसि $बिम्ब इव प्रतिबिम्बम्, घटाकाश इव महाकाशम्। अस्मिन्नर्थे शपथं करोति— ते तव पुरः सत्यम् अबाधितार्थभूतं प्रतिजाने प्रतिज्ञां करोमि मामेवैष्यसीति। प्रियोऽसि मे। यतस्त्वं मे मम प्रियोऽसि अतः प्रतारणानर्हे त्वयि सत्यमेवाहं ब्रवीमीत्यर्थः। नीटी.

$ उपलब्धेषु त्रिष्वपि पुस्तकेष्वेवमेव ग्रन्थो मुद्रितः। स च न साधुः। वस्तुतस्तु अध्यस्तकर्तृकाया अधिष्ठानकर्मिकाया एव प्राप्तेरुपपन्नत्वात् 'बिम्बमिव प्रतिबिम्बः' इति वक्तव्यम्। यद्यपि प्रतिबिम्बस्य स्वरूपतो नाध्यस्तत्वम्, तथापि बुद्धिस्थत्वविशिष्टस्य तस्याध्यस्तत्वमस्तीति बोध्यम्। तत्रापि पूर्वोत्तरयोर्दार्ष्टान्तिक–दृष्टान्तयोरनुरोधेन 'प्रतिबिम्ब इव बिम्बम्' इति कर्तृकर्मक्रमः साधीयान्।

धर्मः सुखसाधनम्

[1]धर्मापेक्षो नरो नित्यं सर्वत्र लभते सुखम्।
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ॥

[2]दुर्ज्ञेयः परमो धर्मस्तथाऽधर्मः सुदुर्विदः ॥

[3]धर्मः सुचरितः सद्भिः सह द्वाभ्यां नियच्छति।
अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः† ॥

नियच्छति नियममेति। अर्थकामाभ्यां धर्मः संकोचमेतीत्यर्थः। नीटी.

[4]धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन्।
धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते॥

धर्मार्थौ कामेनापीडयन् धर्मकामावर्थेनापीडयन् कामार्थौ धर्मेण चापीडयन्नित्यर्थः। नीटी.

कर्मपरिपाकः

[5]शयानं चानुशयति तिष्ठन्तं चानुतिष्ठति।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥

[6]यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम्।
तस्यां तस्यामवस्थायां तत्तत्फलमुपाश्नुते ॥

अवस्थायां यौवनादिरूपायाम्। नीटी.

[7]शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ॥

[1]यदि संन्यासतः सिद्धिं राजन्कश्चिदवाप्नुयात्।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥

संन्यासयुक्तमेकाकित्वमपि निरस्यति द्वाभ्याम्– यदीति। नीटी.

[2]एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः।
अपरिग्रहवन्तश्च सततं चाऽऽत्मचारिणः ॥

[3]अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥

ननु पश्वादयः कर्मयोनयो न भवन्ति, किंतु पूर्वकृतमेव ते भुञ्जते; अहं तु कर्माधिकृतः स्वप्रयत्नेन ध्रुवं पदं प्राप्स्यामीति चेत्तत्राऽऽह– अथ चेदिति। आत्मभाग्येषु स्वसंपत्सु अन्येषां सिद्धिं परकर्मार्जितं फलं नाऽऽश्नुते, किंतु स्वकर्मार्जितमेवाऽऽश्नुते, तर्हि कर्मैव कुर्वित्यर्थः। सिद्धिः मोक्षः। नीटी.

[4]औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः।
येषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥

ननु मुमुक्षूणां देहभरणव्यतिरिक्तं कर्म नापेक्षितमित्यत आह– औदका इति। उदके भवाः मीनादयः। सृष्टयः स्थावराः। तेषामपि आत्मैव देह एव भर्तव्यः, नान्य इति तेऽपि मुच्येरन्। नीटी.

[5]अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत्।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥

लोकदृष्ट्याऽपि कर्मैव कर्तव्यमित्याह– अवेक्षस्वेति। नीटी.

[6]अभिमानकृतं कर्म नैतत्फलवदुच्यते।
त्यागयुक्तं महाराज सर्वमेव महाफलम् ॥

---

† वस्तुतः 'कुमति च' (पासू. ८।४।१३) इति शास्त्रात् 'प्रसङ्गिणः' इति भामुपाठ एव साधुः।

(१) भा. ७।६१।३० ; भामु. ७।८५।३१ पेक्षो (पेक्षी).

(२) भा. ७।१६९।३९ ; भामु. ७।१९८।४४ परमो (स परो) र्मः सुदु (र्मश्च दु).

(३) भा. ९।५९।१७ ; भामु. ९।६०।२१ सह (स च) सङ्गिनः (सङ्गिणः).

(४) भा. ९।५९।१८ ; भामु. ९।६०।२२.

(५) भा. ११।२।२२ ; भामु. ११।२।३२ नुशयति (नुशेते हि).

(६) भा. ११।२।२३ ; भामु. ११।२।३३ चतुर्थचरणे (तत्फलं समुपाश्नुते).

(७) भामु. ११।२।३६.

(१) भा. १२।१०।२४ ; भामु. १२।१०।२४ राजन् (राजा).

(२) भा. १२।१०।२५ ; भामु. १२।१०।२५ चाऽऽत्म (ब्रह्म).

(३) भा. १२।१०।२६ ; भामु. १२।१०।२६.

(४) भा. १२।१०।२७ ; भामु. १२।१०।२७ येषा (तेषा).

(५) भा. १२।१०।२८ ; भामु. १२।१०।२८.

(६) भा. १२।१२।१५ ; भामु. १२।१२।१६.

अभिमानः 'कर्ताऽहम्' इत्येवंरूपः तेन कृतं कर्म फलवन्न गतिप्रदं न। त्यागयुक्तम् अभिमानत्यागोपेतम्। नीटी.

कर्ममार्गात् त्यागमार्गः श्रेयान्
(अर्जुनं प्रति युधिष्ठिरस्योपदेशः)

**युधिष्ठिर उवाच–**

**'वेदाहं तात शास्त्राणि अपराणि पराणि च।**
**उभयं वेदवचनं कुरु कर्म त्यजेति च॥**

अन्तःसङ्गं त्यक्त्वा बहिः कर्म कुर्वित्युक्तं दूषयन् युधिष्ठिर उवाच– वेदेति। अपराणि धर्मशास्त्राणि, पराणि ब्रह्मशास्त्राणि। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।' (ईउ. २) इति, 'त्यजतैव हि तज्ज्ञेयम्' इति कुरु कर्म, त्यज इति च शास्त्रद्वयं वेद जाने। नीटी.

**'आकुलानि च शास्त्राणि हेतुभिश्चित्रितानि च।**
**निश्चयश्चैव यन्मात्रो वेदाहं तं यथाविधि॥**

तयोर्निश्चयमप्यहं वेद। 'विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुतेरात्मवेदनेच्छापर्यन्तं कर्मविषयः। नीटी.

**'त्वं तु केवलमस्त्रज्ञो वीरव्रतमनुष्ठितः।**
**शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथंचन॥**

'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति इच्छोत्तरं प्रव्रज्येति कर्मतत्त्यागश्रुत्योर्व्यवस्थामजानंस्त्वं मूर्खोऽसीत्याह– त्वं त्वित्यादिना। नीटी.

**'शास्त्रार्थसूक्ष्मदर्शी यो धर्मनिश्चयकोविदः।**
**तेनाप्येवं न वाच्योऽहं यदि धर्मं प्रपश्यसि॥**
**भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया।**
**न्याय्यं युक्तं च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन॥**

**युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च।**
**न त्वया सदृशः कश्चित्त्रिषु लोकेषु विद्यते॥**

**'धर्मसूक्ष्मं तु यद्वाक्यं तत्र दुष्प्रतरं त्वया।**
**धनञ्जय न मे बुद्धिमभिशङ्कितुमर्हसि॥**

धर्मं धर्मप्रतिपादकम्। तत्र विषये दुष्प्रतरं दुरवगाहम्। नीटी.

**'युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया।**
**समासविस्तरविदां न तेषां वेत्सि निश्चयम्॥**

**'तपस्त्यागोऽविधिरिति निश्चयस्तात धीमताम्।**
**परं परं ज्याय एषां सैषा नैःश्रेयसी गतिः॥**

कस्तर्हि निश्चय इत्यत आह– तप इति। अविधिः अनिर्देश्यं ब्रह्म। नीटी.

**'न त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति।**
**अत्र ते वर्तयिष्यामि यथा नैतत्प्रधानतः॥**

**'तपःस्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः।**
**ऋषयस्तपसा युक्ता येषां लोकाः सनातनाः॥**

एतेषु तपो विभजते– तप इति। नीटी.

**'अजातश्मश्रवो धीरास्तथाऽन्ये वनवासिनः।**
**अनन्ता अधना एव स्वाध्यायेन दिवं गताः॥**

अतिजघन्यं तपोऽपि धनाज्ज्यायः किमुत त्यागविधिरिति ($ ? त्यागाविधी इति) भावः। नीटी.

$ पूर्वम् 'अविधिः' इति तृतीया कोटिर्व्याख्याता, तदनुरोधेनेयं शुद्धिः कल्प्यते।

(१) भा. १२।१९।१ ; भामु. १२।१९।१.

(२) भा. १२।१९।२ ; भामु. १२।१९।२ श्चित्रिता (श्चिन्तिता) यन्मात्रो (यो मन्त्रे).

(३) भा. १२।१९।३ ; भामु. १२।१९।३ मनुष्ठितः (समन्वितः).

(४) भा. १२।१९।४–६ ; भामु. १२।१९।४–६.

(१) भा. १२।१९।७ ; भामु. १२।१९।७ प्रथमचरणे (धर्मं सूक्ष्मतरं वाच्यं).

(२) भा. १२।१९।८ ; भामु. १२।१९।८ समास (संक्षिप्त).

(३) भा. १२।१९।९ ; भामु. १२।१९।९ स्तात (स्त्वेष) उत्तरार्धे (परस्परं ज्याय एषां येषां नैश्रेयसी मतिः॥).

(४) भा. १२।१९।१० ; भामु. १२।१९।१० न त्वे (यस्त्वे) अत्र (तत्र).

(५) भा. १२।१९।११ ; भामु. १२।१९।११.

(६) भा. १२।१९।१२ ; भामु. १२।१९।१२ श्मश्रवो (शत्रवो) तृतीयचरणे (अरण्ये बहवश्चैव).

[1]उत्तरेण तु पन्थानमार्या विषयनिग्रहात्।
अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः॥

त्यागमाह— उत्तरेणेति। नीटी.

[2]दक्षिणेन तु पन्थानं यं भास्वन्तं प्रपश्यसि।
एते क्रियावतां लोका ये श्मशानानि भेजिरे॥

क्रियावतां जन्ममरणसंबन्धो दुर्वार इति त्याग एव कर्तव्य इति दर्शितम्। नीटी.

[3]अनिर्देश्या गतिः सा तु यां प्रपश्यन्ति मोक्षिणः।
तस्मात्त्यागः प्रधानेष्टः स तु दुःखः प्रवेदितुम्॥

अविधिमाह— अनिर्देश्येति। गतिः मोक्षः प्रत्यगानन्दरूपः। तस्मात् हेतोः तल्लाभायेत्यर्थः। योगः चित्तवृत्तिनिरोधः, सः प्रधानं च तदिष्टश्च प्रधानेष्टः। योगेनैव ब्रह्म प्राप्यते, नान्यथेत्यर्थः। यदाह दक्षः— 'स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्रीसुखं यथा। अयोगी नैव जानाति जात्यन्धो वै यथा घटम्॥' इति। स तु दुःखं प्रवेदितुं तुभ्यं ज्ञापयितुमशक्यः, तव तत्रानधिकारादित्यर्थः। नीटी.

[4]अनुसृत्य तु शास्त्राणि कवयः समवस्थिताः।
अपीह स्यादपीह स्यात्सारासारदिदृक्षया॥

अपिर्वार्थे। इह वा सारोऽस्तीह वेति, एवमिह वाऽसार इह वेति शास्त्राणि आलोक्य कवयः सारमुपादायासारं परित्यज्य समवस्थिताः सम्यक् निश्चयवन्तो जाता इत्यर्थः। नीटी.

[5]वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च।
विपाट्य कदलीस्कन्धं सारं ददृशिरे न ते॥

आरण्यकानि वेदान्तान्। नीटी.

[1]अथैकान्तव्युदासेन शरीरे पञ्चभौतिके।
इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिङ्गितैः॥

एकान्तं जनवर्जितम्, तद्व्युदासेन तत्त्यागेन केचिच्छरीरे स्थितमात्मानम् इच्छादिमन्तं प्राहुः 'ममेदं भूयात्' इत्यादिभिः इङ्गितैः लिङ्गैः। नीटी.

[2]अग्राह्यश्चक्षुषा सोऽपि अनिर्देश्यं च तद्गिरा।
कर्महेतुपुरस्कारं भूतेषु परिवर्तते॥

एवं परमतमुपन्यस्य सिद्धान्तमाह— अग्राह्यमिति। चक्षुषा समनस्कैश्चक्षुरादिभिः अग्राह्यम्, यतः सूक्ष्मम्, गिरा चानिर्देश्यम्, कर्महेतुः अविद्या तयैव पुरस्कारः 'ब्राह्मणोऽहम्, गृहस्थोऽहम्' इति चक्षुर्वाग्गोचरत्वं यस्य तत्सूक्ष्ममेव विपरिवर्तते जीवरूपेणास्तीत्यर्थः। नीटी.

कल्याणगोचरं कृत्वा मनस्तृष्णां निगृह्य च।
कर्मसंततिमुत्सृज्य स्यान्निरालम्बनः सुखी॥

कल्याणगोचरम् आत्मोन्मुखम्। निरालम्बनः निरहंकारः। नीटी.

अस्मिन्नेवं सूक्ष्मगम्ये मार्गे सद्भिर्निषेविते।
कथमर्थमनर्थाढ्यमर्जुन त्वं प्रशंससि॥

सूक्ष्मगम्ये सूक्ष्मया बुद्ध्या गम्ये सद्भिश्च निषेवितेऽन्तरहंकारत्यागरूपे (मार्गे) सति कथं बाह्यतमान् अर्थान् उपादेयत्वेन प्रशंससि? नीटी.

[4]पूर्वशास्त्रविदो ह्येवं जनाः पश्यन्ति भारत।
क्रियासु निरता नित्यं दाने यज्ञे च कर्मणि॥

(१) भा. १२।१९।१३ ; भामु. १२।१९।१३.

(२) भा. १२।१९।१४ ; भामु. १२।१९।१४ पश्यसि (चक्षते).

(३) भा. १२।१९।१५ ; भामु. १२।१९।१५ त्यागः (योगः) दुःखः (दुःखं).

(४) भा. १२।१९।१६ ; भामु. १२।१९।१६ सृत्य (स्मृत्य).

(५) भा. १२।१९।१७ ; भामु. १२।१९।१७ स्कन्धं (स्तम्भं).

(१) भा. १२।१९।१८ ; भामु. १२।१९।१८ पञ्च (पाञ्च) युक्त (सक्त).

(२) भा. १२।१९।१९ ; भामु. १२।१९।१९ ह्यश्च (ह्यं च) सोऽपि अ (सूक्ष्मम).

(३) भा. १२।१९।२०–२१ ; भामु. १२।१९।२०–२१.

(४) भा. १२।१९।२२ ; भामु. १२।१९।२२ दो ह्ये (दोऽप्ये).

पूर्वशास्त्रविदः कर्मकाण्डविदोऽपि एवमर्थमनर्थत्वेन पश्यन्ति, किमुत ज्ञानिनः ? नीटी.

[1]भवन्ति सुदुरावर्ता हेतुमन्तोऽपि पण्डिताः।
दृढपूर्वश्रुता मूढा नैतदस्तीति वादिनः ॥

दुरावर्ताः दुःखेनापि सिद्धान्तं ग्राहयितुमशक्याः। दृढः पूर्वः प्राग्भवीयः संस्कारः येषां ते दृढपूर्वे। बहुव्रीहावप्यार्षी सर्वनामता। नीटी.

[2]अमृतस्यावमन्तारो वक्तारो जनसंसदि।
चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः ॥
[3]यान्वयं नाभिजानीमः कस्ताञ्ज्ञातुमिहार्हति।
एवं प्राज्ञान्सतश्चापि महतः शास्त्रवित्तमान् ॥

हे पार्थ, यत् यान् लौकिकानप्यर्थान् वयं विजानीमस्तान् इतरः को ज्ञातुमर्हति ? न कोऽपि। यथा एवं प्राज्ञा अपि अस्माकमन्येषां च दुर्ज्ञेया इत्यर्थः। नीटी.

[4]तपसा महदाप्नोति बुद्ध्या वै विन्दते महत्।
त्यागेन सुखमाप्नोति सदा कौन्तेय धर्मवित् ॥

महत् वैराग्यम्। महत् परं ब्रह्म। तत्त्ववित् तपआदीनामेव। नीटी.

यज्ञसंन्यासादयो धर्माः

देवस्थान उवाच–

[5]अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः ॥

अत्रैव क्षत्रियस्य वैखानसधर्माश्रयणं दोषः पालनयागदानादिकं गुण इत्यस्मिन्नर्थे एव। नीटी.

[1]संतोषो वै स्वर्गतमः संतोषः परमं सुखम्।
तुष्टेर्न किंचित्परतः सुसम्यक्परितिष्ठति ॥

असंतुष्टो हि राजा प्रजाः पीडयति, अतः संतोषमेव स्तौति– संतोष इति। सा तुष्टिः। नीटी.

[2]यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः।
तदाऽऽत्मज्योतिरात्मैव स्वात्मनैव प्रसीदति ॥

सम्यक्प्रतितिष्ठति येन तदाह– यदेति। यदा प्रसीदति तदा तुष्टिः प्रतितिष्ठतीति संबन्धः। कदा प्रसीदति ? यदा कामान् जाग्रदादिविषयान् संहरते आत्मनि प्रविलापयति तदा आत्मज्योतिः स्वयंज्योतिरात्मा स्वात्मन्येव स्वस्वरूपे एव प्रसीदति द्रष्टृदर्शनेन दृश्यादिभेददर्शनरूपं मलं त्यजति। नीटी.

[3]न बिभेति यदा चायं यदा चास्मान्न बिभ्यति।
कामद्वेषौ च जयति तदाऽऽत्मानं प्रपश्यति ॥

न बिभेति, द्वितीयाभावात्। अस्मान्न बिभ्यति, अस्य निष्क्रियत्वात् समाधौ। व्युत्थाने तु कामक्रोधौ जयति। नीटी.

[4]यदाऽसौ सर्वभूतानां न क्रुध्यति न दुष्यति।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥

यदा काले। नीटी.

[5]एवं कौन्तेय भूतानि तं तं धर्मं तथा तथा।
तदा तदा प्रपश्यन्ति तस्माद्बुध्यस्व भारत ॥

भूतानि अधिकारिजीवाः यथा यथा येन येन प्रकारेण यद्यत्कर्म यज्ञादिकं वा सगुणोपासनं वा साङ्गं व्यङ्गं वा करोति तत्तत्कर्म तथा तथा तेन तेन प्रकारेण

(१) भा. १२।१९।२३ ; भामु. १२।१९।२३ पूर्वश्रु (पूर्वे स्मृ).

(२) भा. १२।१९।२४ ; भामु. १२।१९।२४ अमृत (अनृत).

(३) भा. १२।१९।२५ ; भामु. १२।१९।२५ (पार्थ यन्न विजानीमः कस्ताञ्ज्ञातुमिहार्हति। एवं प्राज्ञाः श्रुताश्चापि महान्तः शास्त्रवित्तमाः ॥ ).

(४) भा. १२।१९।२६ ; भामु. १२।१९।२६ धर्म (तत्त्व).

(५) भा. १२।२१।१ ; भामु. १२।२१।१.

(१) भा. १२।२१।२ ; भामु. १२।२१।२ सुसम्यक्परि (सा सम्यक्प्रति).

(२) भा. १२।२१।३; भामु. १२।२१।३ रात्मैव स्वात्मनै (रचिरात्स्वात्मन्ये).

(३) भा. १२।२१।४ ; भामु. १२।२१।४.

(४) भा. १२।२१।५; भामु. १२।२१।५ क्रुध्यति न दुष्यति (द्रुह्यति न काङ्क्षति).

(५) भा. १२।२१।६ ; भामु. १२।२१।६ तदा तदा (तदात्मना).

फलात्मना आविर्भूतम् आत्मना स्वानुभवेन पश्यन्ति। एतेन '¶ तं यथा यथोपासते तथैतः प्रेत्य भवति' इति श्रुतेरर्थो दर्शितः। तस्मात्सर्वेभ्यो भूतेभ्यो भयं ददद्भयं विन्दत्यभयं दददभयं विन्दतीति बुध्यस्व। सम्यक्प्रजापालनेन त्वमप्यभयं प्राप्नुहीति भावः। नीटी.

[1]अन्ये शमं प्रशंसन्ति व्यायाममपरे तथा।
नैकं न चापरं केचिदुभयं च तथाऽपरे॥

साम प्रीतिम्। व्यायामं यत्नम्। अपरे एकं ध्यानं न प्रशंसन्ति इति न, अपि तु प्रशंसन्त्येव। उभयं सामव्यायामौ एकस्यैव अवस्थाभेदेन प्रशंसन्ति। अपरे तथैव प्रशंसन्ति प्रागुपात्तमेकं श्रेयम्। नीटी.

[2]यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः।
दानमेके प्रशंसन्ति केचिदेव प्रतिग्रहम्।
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते॥

पक्षाप्येतान्पक्षान्विवृणोति— यज्ञेति त्रिभिः। यज्ञसंन्यासदानैर्देवसर्वभूतविप्राणां प्रीतिर्भवति। प्रतिग्रहं प्रजाभ्यो यजमानेभ्यो वा द्रव्यादानं व्यायामरूपं मन्दाः प्रशंसन्ति। सर्वपरित्यागेन त्वेकं केचित्। नीटी.

[3]राज्यमेके प्रशंसन्ति सर्वेषां परिपालनम्।
हत्वा भित्त्वा च छित्त्वा च केचिदेकान्तशीलिनः॥

राज्यमेके इत्यादिपादत्रयेण सामव्यायामौ एकस्यैवाऽऽह। अन्त्यं पक्षमाह— केचिदेकान्तशीलिन इति। नीटी.

[1]एतत्सर्वं समालोक्य बुधानामेष निश्चयः।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः॥

सिद्धान्तमाह— अद्रोहेणेति। नीटी.

[2]अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम्॥
धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत्॥

प्रजनं पुत्रोत्पादनम्। प्रधानं चासौ इष्टश्चेति समासः, तम्। नीटी.

त्यागः उत्तरः पन्था: प्रशस्ततरः

[3]अजाश्च पृश्नयश्चैव सिकताश्चैव भारत।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः॥

अजादयो वालखिल्यवदृषीणां गणविशेषाः। नीटी.

अवाप्यैतानि कर्माणि वेदोक्तानि धनंजय।
दानमध्ययनं यज्ञो निग्रहश्चैव दुर्ग्रहः॥
दक्षिणेन च पन्थानमर्यम्णो ये दिवं गताः।
एतान् क्रियावतां लोकानुक्तवान्पूर्वमप्यहम्॥

एतान् ग्रुरूपान्। क्रियावतां कर्मिणाम्। नीटी.

उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि।
एते यागवतां लोका भान्ति पार्थ सनातनाः॥

उत्तरेण उत्तरतः स्थितम्। नीटी.

तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुराविदः॥
[4]संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवम्।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च॥
[5]सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्॥

---

¶ 'तथैतः प्रेत्य' इत्यत्र 'तदेव' इति शतपथब्राह्मणे (१०।५।२।२०), 'तथैव' इति मुद्गलोपनिषदि च (३।३) पाठभेदेनेदं वचनमुपलभ्यते। सर्वत्र 'उपासते' इति बहुवचनमेकवचनस्थाने आर्षं वा भौवादिकस्याऽऽसते रूपं वेति बोध्यम्।

(१) भा. १२।२१।७; भामु. १२।२१।७ शमं (साम) रे तथा (रे जनाः) परं (परे).

(२) भा. १२।२१।८; भामु. १२।२१।८–९ यज्ञमेके (यज्ञमेव) देव (त्त्वैव).

(३) भा. १२।२१।९; भामु. १२।२१।९–१० सर्वेषां (प्रजानां) भित्त्वा च छित्त्वा (छित्त्वा च भित्त्वा).

(१) भा. १२।२१।१०; भामु. १२।२१।१०–११.

(२) भा. १२।२१।११–१२; भामु. १२।२१।१२–१३ धृतिः क्षमा (दया दमः) प्रजनः (प्रजनं) धर्मप्र (धर्मं प्र).

(३) भामु. १२।२६।७–११.

(४) भा. १२।२७।२८; भामु. १२।२७।३० गाश्च (गान्ता).

(५) भा. १२।२७।२९; भामु. १२।२७।३१.

[1]सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम् ।
भूतिः श्रीर्ह्रीर्धृतिः सिद्धिर्नादक्षे निवसन्त्युत ॥

आलस्यं तत्काले सुखमपि दुःखान्तम् । दाक्ष्यं तत्काले दुःखमपि सुखोदयम् । भूतिः अणिमादिः । नीटी.

[2]नालं सुखाय सुहृदो नालं दुःखाय दुर्हृदः ।
न च प्रज्ञाऽलमर्थेभ्यो न सुखेभ्योऽप्यलं धनम् ॥

[3]यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत्कुरु ।
अत एव हि सिद्धिस्ते नेशस्त्वमात्मना नृप ॥

अत एव कर्मभ्य एव । कर्मणां त्यागे त्वं नेशः न प्रभुः । नीटी.

त्रिवर्गसाधनं पितृदेवर्षीणामानृण्यं च आचरणीयम्

[4]कुर्वीत पितृदैवत्यं धर्माणि च समाचरेत् ।
यजेच्च विद्वान्विधिवत्त्रिवर्गं चाप्यनुव्रजेत् ॥

धर्म्याणि धर्मावहानि । नीटी.

[5]चरितब्रह्मचर्यो हि प्रजायेत यजेत च ।
पितृदेवमहर्षीणामानृण्यायानसूयकः ॥

प्रजायेत पुत्रादीनुत्पादयेत् । आनृण्यात् हेतोः । नीटी.

[6]स यज्ञशीलः प्रजने निविष्टः
प्राग्ब्रह्मचारी प्रविभक्तपक्षः ।
आराधयन्स्वर्गमिमं च लोकं
परं च मुक्त्वा हृदयव्यलीकम् ॥

प्रजने प्रजोत्पादने । हृदयव्यलीकं हृत्स्थम् अप्रियं शोकमनृतं वा ममत्वाद्यव्यार्त मुक्त्वा स्वर्गम् इमं च लोकं परं परमात्मानं वा आराधयेत् । नीटी.

व्यास उवाच—

[1]धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ॥

अधर्मप्रवर्तकहननं राजधर्मः, धर्माधर्मनिर्णयस्य सूक्ष्मता

व्यास उवाच—

[2]ईश्वरो वा भवेत्कर्ता पुरुषो वाऽपि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥

मया बहवो घातिता इत्युक्तम्, तत्किं हननक्रियायां तव प्रयोज्यकर्तृत्वं प्रयोजककर्तृत्वं वा ? वध्यस्य च कर्मत्वं वा प्राकृतकर्मफलभोक्तृत्वं वा ? इति विकल्पानाह— ईश्वर इति । नीटी.

[3]ईश्वरेण नियुक्ता हि साध्वसाधु च पार्थिव ।
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् ॥

नाऽऽद्य इत्याह— ईश्वरेणेति । परशोरिव परप्रयोज्यस्य तव हन्तृत्वं नास्तीत्यर्थः । नीटी.

[4]यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत्पापं परशोर्न कथंचन ॥

[5]अथ वा तदुपादानात्प्राप्नुयुः कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥

परप्रयोज्योऽप्यहं परशोः प्रयोक्ताऽस्मि, न तु परशुवदचेतनोऽस्मीति मम पापसंबन्धोऽस्त्येवेत्या( ? त्यत आ )ह— अथवेति । प्राप्नुयात् परशोरुपादाता । एवं तर्हि येन परशोर्दण्डः शस्त्रं परशुश्च कृतः तमेव पापं कर्तृ

(१) भा. १२।२७।३० ; भामु. १२।२७।३२ सिद्धि ...... न्त्युत ( कीर्तिर्दक्षे वसति नालसे ).

(२) भा. १२।२७।३१ ; भामु. १२।२७।३३ दुर्हृदः ( शत्रवः ) प्रज्ञा ( प्रजा ).

(३) भा. १२।२७।३२ ; भामु. १२।२७।३४ स्त्वमात्मना ( स्त्वं कर्मणां ).

(४) भा. १२।२८।४२ ; भामु. १२।२८।४३ धर्माणि ( धर्म्याणि ) प्यनुव्रजेत् ( प्युपाचरेत् ).

(५) भा. १२।२८।५४ ; भामु. १२।२८।५५ महर्षीणा ( मनुष्याणा ) यानसू ( दनसू ).

(६) भा. १२।२८।५५ ; भामु. १२।२८।५६ विभक्तपक्षः ( विविक्तचक्षुः ) धयन् ( धयेत् ).

(१) भा. १२।३२।७ ; भामु. १२।३२।८.

(२) भा. १२।३२।११ ; भामु. १२।३२।१२.

(३) भा. १२।३२।१२ ; भामु. १२।३२।१३ क्ता हि ( क्तो हि ) पार्थिव ( भारत ) कुर्वन्ति पुरुषाः ( कुरुते पुरुषः ).

(४) भा. १२।३२।१३ ; भामु. १२।३२।१४.

(५) भा. १२।३२।१४ ; भामु. १२।३२।१५ त्प्राप्नुयुः ( त्प्राप्नुयात् ).

प्राप्नुयात्, तस्य प्रथमप्रयोज्यत्वात्; पुरुषे उपादातरि तन्न विद्यते, तस्य जघन्यत्वात्। नीटी.

[1]न चैतदिष्टं कौन्तेय यदन्येन फलं कृतम्।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय॥

यदि च एतन्नेष्टम्, एतत्किम्? यत् अन्येन प्रहर्त्रा कृतं पापं तस्य फलं शस्त्रकर्ता आप्नुयादिति, तर्हि जघन्यप्रयोज्ये त्वय्यपि पापाभावादीश्वरे एव तन्निवेशय। नीटी.

[2]अथ वा पुरुषः कर्ता कर्मणोः शुभपापयोः।
न परं विद्यते तस्मादेवमन्यच्छुभं कुरु॥

यदा पुरुष एव कर्ता, परः ईश्वरो नास्ति तस्मादपि हेतोस्त्वया एतच्छुभमेव कृतम्। नीटी.

[3]न हि कश्चित्क्वचिद्राजन्दिष्टात्प्रतिनिवर्तते।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते॥

यतः कश्चिदपि दिष्टं प्रति अदृष्टस्य प्रतिकूलः भूत्वाऽवश्यंभाविनः कर्मणः सकाशान्न निवर्तते, दैवस्य दुर्लङ्घ्यत्वादिति भावः। ननु दिष्टमपि जन्मान्तरीयः स्वस्यैवापराध इत्याशङ्क्याऽऽह– दण्डेति। पूर्वपूर्वापराधस्य उत्तरोत्तरहेतुत्वमित्यनादित्वादिदानींतनस्य कर्तुर्नापराधोऽस्तीत्यतः प्राचीनकर्ता दण्डशस्त्रकृदिव न पर्यनुयोज्य इति भावः। नीटी.

[4]यदि वा मन्यसे राजन्हते लोकं प्रतिष्ठितम्।
एवमप्यशुभं कर्म न भूतं न भविष्यति॥

तृतीयं पक्षं दूषयति– यदीति। प्रतिष्ठितं निश्चितं यथा स्यात्तथा यदि पुरुषं हतं हननक्रियायाः कर्मीभूतमेव मन्यसे तर्हि स्वभाववादिनस्ते भूतभाव्यशुभाभावाद्वृथैव शोक इत्यर्थः। नीटी.

[1]अथाभिपत्तिर्लोकस्य कर्तव्या शुभपापयोः।
अभिपन्नतमं लोके राज्ञामुद्यतदण्डनम्॥

चतुर्थपक्षमाह– अथेति। पुण्यपापयोः सुखदुःखयोः अभिपत्तिः उपपत्तिः कर्तव्या, सा च धर्माधर्मावन्तरेण न घटते, तौ च शास्त्रैकगम्याविति चेत् राज्ञाम् उद्यतदण्डनम् उद्धतदमनं लोके शास्त्रे चोपपन्नतरमित्यर्थः। नीटी.

[2]अथापि लोके कर्माणि समावर्तन्त भारत।
शुभाशुभफलं चेमे प्राप्नुवन्तीति मे मतिः॥

अत्र शङ्कते– तथापीति। यद्यप्येवं तथापि लोके शस्यमाने कर्माणि शुभान्यशुभानि च समापतन्ति अवश्यमायान्ति फलं च प्रयच्छन्ति, अतो मम प्रायोपवेशनमेव वरमिति भावः। नीटी.

[3]एवं सत्यं शुभादेशं कर्मणस्तत्फलं ध्रुवम्।
त्यज तद्राजशार्दूल मैवं शोके मनः कृथाः॥

समाधत्ते– एवमिति। यस्मात्कर्मणः पापादशुभफलात्मकं पापप्रवृत्तिरूपं कर्म भवति तत्पापमूलं कर्म त्यज। नीटी.

[4]स्वधर्मे वर्तमानस्य सापवादेऽपि भारत।
एवमात्मपरित्यागस्तव राजन्न शोभनः॥

सापवादे निन्द्येऽपि स्वधर्मे स्थितस्य त आत्मत्यागो नोचित इत्यर्थः। नीटी.

[5]विहितानीह कौन्तेय प्रायश्चित्तानि कर्मिणाम्।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत्॥

---

(१) भा. १२।३२।१५; भामु. १२।३२।१६ फलं कृतम् (कृतं फलम्) तस्मा (यस्मा).

(२) भा. १२।३२।१६; भामु. १२।३२।१७ अथ वा (अथापि) परं (परो) मन्यच्छुभं कुरु (मेतच्छुभं कृतम्).

(३) भा. १२।३२।१७; भामु. १२।३२।१८ न्दिष्टात् (न्दिष्टं).

(४) भा. १२।३२।१८; भामु. १२।३२।१९ हते लोकं (हतमेकं).

(१) भा. १२।३२।१९; भामु. १२।३२।२० शुभ (पुण्य) तमं (मिदं).

(२) भा. १२।३२।२०; भामु. १२।३२।२१ अथापि (तथापि) वर्तन्त (वर्तन्ति) चेमे (चैते).

(३) भा. १२।३२।२१; भामु. १२।३२।२२ पूर्वार्धे (एवमप्यशुभं कर्म कर्मणस्तत्फलात्मकम्।) तद्रा (त्वं रा).

(४) भा. १२।३२।२२; भामु. १२।३२।२३.

(५) भा. १२।३२।२३; भामु. १२।३२।२४ नीह (नि ह) कर्मि (कर्म).

ननु तथापि निन्द्यात्कर्मणः पापं भवतीत्याशङ्क्याऽऽह — विहितानीति । नीटी.

[1]तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं चरिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्ताऽसि भारत ॥

[2]धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥

अधर्मस्येति च्छेदः । नीटी.

[3]एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वाऽथ राष्ट्रं वा न तद्वृत्तोपघातकम् ॥

राष्ट्रेऽनामयं स्यात्तर्हि तदेकस्य कुलस्य वा हननं वृत्तोपघातकं धर्मनाशकं न भवति । नीटी.

[4]अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ॥

अधर्मरूपो(ऽ)धर्मवद्भाति धर्मः, यथा शालावृकाल्यब्राह्मणवधः । धर्मश्चाधर्मः, यथा कर्णपर्वोक्तसत्यवादिनः चोरेभ्यः कार्पटिकमार्गं प्रदिशतः । नीटी.

विहिताकरणे निषिद्धाचरणे च प्रायश्चित्तं पापनाशकम्

[5]अकुर्वन्विहितं कर्म प्रतिषिद्धानि चाऽऽचरन् ।
प्रायश्चित्तीयते ह्येवं नरो मिथ्या च वर्तयन् ॥

मिथ्यानुवर्तयन् कापटयं चरन् । नीटी.

[6]शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकः ।
अतिरिच्येत्तयोर्यत्तु तत्कर्ता लभते फलम् ॥

यत्र पुण्ये पापे वाऽतिरिच्येत योऽधिको भवति स इतरेणेतरदभिभूयातिरिक्तस्य फलं भुङ्क्त इत्यर्थः । नीटी.

(१) भा. १२।३२।२४; भामु. १२।३२।२५ चरि (करि).
(२) भा. १२।३४।१८; भामु. १२।३३।३०.
(३) भा. १२।३४।१९; भामु. १२।३३।३१ हत्वाऽथ राष्ट्रं वा (हत्वा च राष्ट्रे च).
(४) भा. १२।३४।२०; भामु. १२।३३।३२.
(५) भा. १२।३५।२; भामु. १२।३४।२ मिथ्या च (मिथ्यानु).
(६) भा. १२।३६।३६; भामु. १२।३५।४० साक्षिकः (साक्षिकम्) त्तयोर्यत्तु (त यो यत्र).

[1]तस्माद्दानेन तपसा कर्मणा च शुभं फलम् ।
वर्धयेदशुभं कृत्वा यथा स्यादतिरेकवान् ॥

[2]जानता तु कृतं पापं गुरु सर्वं भवत्युत ।
अज्ञानात्स्खलिते दोषे प्रायश्चित्तं विधीयते ॥

व्यास उवाच—

[3]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सिद्धानां चैव संवादं मनोश्चैव प्रजापतेः ॥

[4]सिद्धास्तपोव्रतपराः समागम्य पुरा विभुम् ।
धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ॥

प्रजापतिं मनुम् । नीटी.

[5]कथमन्नं कथं दानं कथमध्ययनं तपः ।
कार्याकार्यं च नः सर्वं शंस वै त्वं प्रजापते ॥

कथं केन प्रकारेण अन्नम् अदनीयं किंद्रव्यकं कर्तव्यमित्यर्थः । नीटी.

[6]तैरेवमुक्तो भगवान्मनुः स्वायंभुवोऽब्रवीत् ।
शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः ॥

व्यासः विस्तरः । नीटी.

[7]अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोधः क्षमेज्या धर्मलक्षणम् ॥

तपः उपवासादि । नीटी.

[8]य एव धर्मः सोऽधर्मोऽदेशेऽकाले प्रतिष्ठितः ।
आदानमनृतं हिंसा धर्मो व्यावस्थिकः स्मृतः ॥

(१) भा. १२।३६।३७; भामु. १२।३५।४१ शुभं फलम् (फलं शुभम्).
(२) भा. १२।३६।४१; भामु. १२।३५।४५ उत्तरार्धे (अज्ञानात्स्वल्पको दोषः प्रायश्चित्तं विधीयते ॥).
(३) भा. १२।३७।३; भामु. १२।३६।२.
(४) भा. १२।३७।४; भामु. १२।३६।३ सिद्धास्तपोव्र (ऋषयस्तु व्र).
(५) भा. १२।३७।५; भामु. १२।३६।४ दानं कथ (पात्रं दान) नः (यत्).
(६) भा. १२।३७।६; भामु. १२।३६।५.
(७) भा. १२।३७।७; भामु. १२।३६।१० क्षमेज्या धर्म (इज्या धर्मस्य).
(८) भा. १२।३७।८; भामु. १२।३६।११ य ए (स ए) र्मोऽदेशेऽका (र्मो देशका) व्याव (ह्याव).

आदानं स्तेयम् । आवस्थिकः अवस्थाविशेषे भवः । प्राणात्ययादौ अधर्मस्यापि स्तेयादेर्धर्मत्वं धर्मस्याप्यस्तेयादेरधर्मत्वमित्यर्थः । नीटी.

[1]द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम् ।
अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः ॥

वैदिक्यौ प्रवृत्त्यप्रवृत्ती मर्त्यत्वामृतत्वप्रदे, लौकिक्यौ तु ते शुभे चेत् शुभफले अशुभे चेदशुभफले इत्याह द्वाभ्याम्— द्विविधाविति । नीटी.

अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम् ।
अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च ॥
[2]एतयोश्चोभयोः स्यातां शुभाशुभतया तथा ।
दैवं च दैवयुक्तं च प्राणश्च प्रलयश्च ह ॥
[3]अप्रेक्षापूर्वकरणादशुभानां शुभं फलम् ।
ऊर्ध्वं भवति संदेहादिह दृष्टार्थमेव वा ।
अप्रेक्षापूर्वकरणात्प्रायश्चित्तं विधीयते ॥

एतयोर्लौकिक्योः फले अपि कारणानुरूपे इत्यर्थः । दैवयुक्तं शास्त्रीयं कर्म, प्राणः जीवनम् । एतेषां चतुर्णामपेक्षापूर्वं यत्किंचित्क्रियते तर्हि अशुभानां नीचानामपि पुंसां तस्य फलं शुभं भवति । ऊर्ध्वमिति । सत्यपि संदेहे यल्लोकविगानपरिहारार्थं कृतं नित्यादि यच्च केवलं दृष्टार्थं कृतं श्येनादि तत्रोभयत्रापि । नीटी.

[4]जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः ।
वर्जयेन्न हि तं धर्मं येषां धर्मो न विद्यते ॥

जातिः ब्राह्मणत्वादिः । श्रेणी गृहस्थादीनां पङ्क्तिः । अधिवासः जन्मभूमिः । जात्यादिधर्मांश्च ये वर्जयन्ति तेषां धर्मः प्रायश्चित्तादिस्वरूपो न विद्यते । नीटी.

[1]वृषो हि भगवान्धर्मो यस्तस्य कुरुते ह्यलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥

अलं वारणं छेदनमिति यावत् । तेन वृषं लुनाति छिनत्तीति वृषल इति योगो दर्शितः । नीटी.

धर्माधर्मनिर्णयस्य सूक्ष्मत्वम् , यतः धर्मोऽप्यधर्मः अधर्मोऽपि धर्मः

[2]धर्मं वर्धति वर्धन्ति सर्वभूतानि सर्वदा ।
तस्मिन्ह्रसति हीयन्ते तस्माद्धर्मं प्रवर्धयेत् ॥
[3]धनात्स्रवति धर्मो हि धारणाद्वेति निश्चयः ।
अकार्याणां मनुष्येन्द्र स सीमान्तकरः स्मृतः ॥

धर्मपदस्य द्वेधा व्युत्पत्तिमाह— धनादिति । धनवाची नान्तो धन्शब्दः, अर्तेर्गत्यर्थान्मन्प्रत्यये ततो नलोपगुणौ । धनाद्धिस्स्रवतीति धर्म इत्यर्थः । § धनादिति पञ्चमी तु धनं प्रापयितुं स्रवति द्रवति कृपायत इति ल्यब्लोपे ज्ञेया । धारणाद्वा धर्मः । धृञो मन्प्रत्ययः । सीमान्तकरः यावत्पापं तावद्यातनाकर इत्यर्थः । नीटी.

प्रभवार्थं हि भूतानां धर्मः सृष्टः स्वयंभुवा ॥

युधिष्ठिर उवाच—

[4]कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत ।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥

§ ग्रन्थोऽयं विसंगतः । 'धनं प्रापयितुम्' इति तुमुन्नन्तेन विगृह्य ल्यब्लोपोक्तिर्महान् रभसः । न हि तुमुन्नन्तस्याप्रयोगो ल्यब्लोपो भवति । किंच, तुमुन्नन्तस्याप्रयोगे 'धनाय' इति चतुर्थ्यापत्तिः । तस्मात् 'धनमुद्दिश्य' इति विग्रहीतव्यम्, कृपाफलत्वेन धनस्योद्देश्यत्वात् ।

(१) मा. १२।३७।९–१० ; भामु. १२।३६।१२–१३.

(२) मा. १२।३७।११ ; भामु. १२।३६।१३–१४ युक्तं च ( संयुक्तं ) प्रलय ( प्राणद ).

(३) मा. १२।३७।१२ ; भामु. १२।३६।१४–१५ अप्रेक्षा ( अपेक्षा ) मेव वा ( मेव च ).

(४) मा. १२।३७।१४ ; भामु. १२।३६।१९ येन्न हि तं ( यन्ति च ये ) येषां ( तेषां ).

(१) मा. १२।९१।१३ ; भामु. १२।९०।१५ न लोपयेत् ( विवर्धयेत् ) ; ब्रक. १६३ धर्मो यस्तस्य ( धर्मस्तस्य यः ) ह्यलम् ( त्वलम् ) चतुर्थचरणो नास्ति ; गृर. २२३ ह्यलम् (मलम्) शेषं ब्रकवत् ; आप्र. २५७ ब्रकवत्.

(२) मा. १२।९१।१४ ; भामु. १२।९०।१६ प्रवर्धयेत् (न लोपयेत्).

(३) मा. १२।९१।१५–१६ ; भामु. १२।९०।१७–१८.

(४) मा. १२।११०।१–३ ; भामु. १२।१०९।१–३.

सत्यानृतयोर्धर्माधर्मरूपत्वे हिंसाहिंसायुक्तयोस्तयोवैंपरीत्यदर्शनात्संशय इत्यर्थः । नीटी.

**सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः ।**
**तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः ॥**

उभयोस्त्यागस्त्वतिदुष्कर इत्याह— सत्यमिति । लोकान् संसारिणः । नीटी.

**किं स्वित्सत्यं किमनृतं किं स्विद्धर्म्यं सनातनम् ।**
**कस्मिन्काले वदेत्सत्यं कस्मिन्कालेऽनृतं वदेत् ॥**

**भीष्म उवाच—**

**[1]सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।**
**यद्भूलोके सुदुर्ज्ञातं तत्ते वक्ष्यामि भारत ॥**
**[2]भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।**
**यत्रानृतं भवेत्सत्यं सत्यं वाऽप्यनृतं भवेत् ॥**
**[3]तादृशे मुह्यते बालो यत्र सत्यमनिष्ठितम् ।**
**सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥**

तादृशः सत्यानृतयोस्तत्त्वमजानन् बालत्वाद्बध्यते, यत्र विषये अहिंसोपकारादौ सत्यम् अनिष्ठितं न निष्ठायुक्तम् । ते सत्यानृते बहूपकारप्रधाने निश्चिन्वन्धर्मवित् भवति । नीटी.

**[4]अप्यनार्योऽकृतप्रज्ञः पुरुषोऽपि सुदारुणः ।**
**सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥**

अन्धस्य प्राणचक्षुषः सर्वप्राणिवधायोद्यतस्य वधात् बलाकः व्याधः हिंस्रस्वभावोऽपि स्वर्गं जगामेति कर्णपर्वकथाऽनुसंधेया । नीटी.

**[5]किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् ।**
**सुमहत्प्राप्नुयात्पापं गङ्गायामिव कौशिकः ॥**

मूढः कर्णपर्वोक्तः सत्यवादी चोरेभ्यः सत्यवचनाभिमानित्वान्मार्गमुपदिश्य कार्पटिकान्घातितवान्, अस्तो धर्मविन्नेत्यर्थः । कौशिकः उलूकः गङ्गातीरे सहस्रशः सर्पिण्या स्थापितान्यण्डानि भित्त्वा महत्पुण्यं प्राप, तद्भेदने तु तीक्ष्णविषाणां सर्पाणां वृद्ध्या सद्यो लोकनाशः संभवेत् । नीटी.

तर्कगम्यं धर्मलक्षणम् – भूतानां प्रभवः, अहिंसा, धारणं वा

**[1]तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्वचः ।**
**दुष्करः प्रतिसंख्यातुं तर्केणात्र व्यवस्यति ॥**

सुदुर्लभः दुर्विवेकः । अत्र धर्मलक्षणे । व्यवस्यति निश्चिनोति । नीटी.

**[2]प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।**
**यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ॥**
**[3]धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः ।**
**यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥**
**[4]अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ।**
**यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः ॥**

प्रभवः अभ्युदयः, अहिंसा अपीडनम्, धारणं संरक्षणम् । एतत् त्रयं येन सत्येनानृतेन वा मृदुना तीक्ष्णेन वा यतो भवति स धर्मः इत्याह त्रिभिः— प्रभवेति । नीटी.

धर्माधर्मविवेकः सूक्ष्मः तर्कमूलकः

**[5]श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः ।**
**न तु तत्प्रत्यसूयामो न हि सर्वं विधीयते ॥**

---

(१) भा. १२।११०।४ ; भामु. १२।१०९।४ उत्तरार्धे (यत्तु लोकेषु दुर्ज्ञानं तत्प्रवक्ष्यामि भारत ॥ ).

(२) भा. १२।११०।५ ; भामु. १२।१०९।५.

(३) भा. १२।११०।६ ; भामु. १२।१०९।६ तादृशे मुह्यते (तादृशो बध्यते).

(४) भा. १२।११०।७ ; भामु. १२।१०९।७ षोऽपि सु (षोऽप्यति).

(५) भा. १२।११०।८ ; भामु. १२।१०९।८ त्पापं (त्पुण्यं).

(१) भा. १२।११०।९ ; भामु. १२।१०९।९ दुर्वचः (दुर्लभः) तर्केणात्र (तत्केनात्र).

(२) भा. १२।११०।१० ; भामु. १२।१०९।१० तृतीयचरणे (यः स्यात्प्रभवसंयुक्तः).

(३) भा. १२।११०।११ ; भामु. १२।१०९।११ र्मं इ (र्ममि) यत् (यः) युक्तं (युक्तः).

(४) भामु. १२।१०९।१२.

(५) भा. १२।११०।१२ ; भामु. १२।१०९।१३ न तु (न च).

श्रुत्युक्तोऽर्थः सर्वो धर्म इत्यपि न, श्येनादेर्धर्मत्वाभावात्। 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते। केवलं प्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ॥' इति वचनात् श्येनादिफलस्य शत्रुवधादेरनर्थत्वादुक्तलक्षण एव धर्म इत्यर्थः। सर्वं श्येनाद्यपि विधीयते धर्मत्वेन चोद्यते। नीटी.

[1]**येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित्।**
**तेभ्यस्तन्न तदाख्येयं स धर्म इति निश्चयः ॥**

अन्यायेनेति च्छेदः। बुभुक्षितेभ्यश्चोरेभ्यो धनिकं न शापयेत्, भिक्षुभ्यस्तु शापयेदेवेत्यर्थः। नीटी.

[2]**अकूजनेन चेन्मोक्षो नात्र कूजेत्कथंचन।**
**अवश्यं कूजितव्यं वा शङ्केरन्वाऽप्यकूजनात् ॥**

चोरेषु धनिकं पृच्छत्सु न वदेत्, अवदतो मोक्षाभावे न वेद्मीति शपथपूर्वकमपि वदेत्, तादृशस्थलेऽनृते दोषो नास्तीति श्लोकद्वयार्थः। नीटी.

[3]**श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम्।**
**यः पापैः सह संबन्धान्मुच्यते शपथादिति ॥**

[4]**न च तेभ्यो धनं देयं शक्ये सति कथंचन।**
**पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥**

तेभ्यः स्तेनेभ्यः। अपिः हेत्वर्थे। नीटी.

[5]**स्वशरीरोपरोधेन वरमादातुमिच्छतः।**
**सत्यसंप्रतिपत्त्यर्थं ये ब्रूयुः साक्षिणः क्वचित्।**
**अनुक्त्वा तत्र तद्वाक्यं सर्वे तेऽनृतवादिनः ॥**

स्वेति सार्धः। यदा 'धनं त्वदीयम्, श्रमो मदीयः, लाभस्तूभाभ्यां विभज्य ग्राह्यः' इति नियमपूर्वकं प्रवृत्तेऽधमर्णे चोरादिना धननाशः स्यात्तदा उत्तमर्णः अधमर्णस्य शरीरोपरोधेन दासीकरणेन धनमादातुमिच्छति चेत्तस्य वाक्ये सत्यसंप्रतिपत्त्यर्थं संवादार्थमाहूताः साक्षिणो वाच्यं वक्तुं योग्यं वचः अनुक्त्वा 'शतं रूप्याणि धारयत्येव' इति निश्चयवादित्वादनृतवादिन इति भावः। नीटी.

[1]**प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्।**
**अर्थस्य रक्षणार्थाय परेषां धर्मकारणात्।**
**परेषां धर्ममाकाङ्क्षन्नीचः स्याद्धर्मभिक्षुकः ॥**

यदा त्वधमर्णो धनवानुत्तमर्णस्तु क्षीणस्तदा तदप्यनृतं न दोषायेत्याह– प्राणेति। ईदृशस्थले वेषान्तरेणापि परकीयमर्थं रक्षेदित्याह– अर्थस्येति। नीटी.

[2]**प्रतिश्रुत्य तु दातव्यं श्वःकार्यस्तु बलात्कृतः।**
**यः कश्चिद्धर्मसमयात्प्रच्युतोऽधर्ममास्थितः ॥**

यदि तु उक्तविषये एव लाभालाभौ समौ, उभाभ्यां विभज्य ग्राह्यमिति प्रतिश्रुतं तदा नाशितोऽर्थोऽधमर्णेन यथाभागं प्रदातव्यः। अथवा स्वकारी धनार्जनकारी अधमर्णो बलात्कृतः उक्तरीत्या दासीकृतोऽप्यस्तु, स चेत्कपटं करोत्यनष्टमपि नष्टमिति वदति चेत्तत्राऽऽह– य इत्यादिना। नीटी.

[3]**दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः।**
**च्युतः सदैव धर्मेभ्योऽमानवं धर्ममास्थितः ॥**

अमानवम् आसुरम्। नीटी.

[4]**शठः स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम्।**
**सर्वोपायैर्निहन्तव्यः पापो निकृतिजीवनः ॥**

शठः वञ्चकः। तम् अमानवम्। नीटी.

---

(१) **भा.** १२।११०।१३; **भामु.** १२।१०९।१४ कर्हि (कस्य) स्तन्न (स्तु न).

(२) **भा.** १२।११०।१४; **भामु.** १२।१०९।१५ नात्र कू (नावकू) व्यं वा (व्ये वा).

(३) **भा.** १२।११०।१५; **भामु.** १२।१०९।१६ थादिति (थादपि).

(४) **भा.** १२।११०।१६; **भामु.** १२।१०९।१७ च तेभ्यो (तेभ्योऽपि).

(५) **भा.** १२।११०।१७; **भामु.** १२।१०९।१८–१९ वर (धन) ये (यद्).

---

(१) **भा.** १२।११०।१८; **भामु.** १२।१०९।१९–२० धर्ममा (सिद्धिमा).

(२) **भा.** १२।११०।१९; **भामु.** १२।१०९।२१ तु दातव्यं श्वः (प्रदातव्यः स्व) चतुर्थचरणे (प्रच्युतो धर्मसाधनः).

(३) **भामु.** १२।१०९।२२.

(४) **भा.** १२।११०।२०; **भामु.** १२।१०९।२३.

[1]धनमित्येव पापानां सर्वेषामिह निश्चयः ।
येऽविषह्या ह्यसंभोज्या निकृत्या पतनं गताः ॥

धनमेव श्रेयः , न धर्म इत्यर्थः । नीटी.

[2]च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते ।
निर्यज्ञास्तपसा हीना मा स्म तैः सह संगमः ।
धनादानाद्दुःखतरं जीविताद्विप्रयोजनम् ॥

मा संगमः सङ्गं मा कार्षीः । तत्र हेतुः– धनेति । विप्रयोजनं वियोगः । एतदपि पापाः कुर्वन्तीत्यर्थः । नीटी.

[3]अयं वो रोचतां धर्म इति वाच्यः प्रयत्नतः ।
न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ॥

पापानां पापिनां मध्ये वाचा उपदेशार्हः कश्चिदपि नास्ति, किंतु सर्वे धर्म इत्येव तेषां निश्चय इत्यन्वयः । अधर्मकोटिस्फुरणाभावादित्याशयः । नीटी.

[4]तथागतं च यो हन्यान्नासौ पापेन लिप्यते ।
स्वकर्मणा हतं हन्ति हत एव स हन्यते ।
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु ॥

समयम् ' एतान् हनिष्यामि ' इति व्रतं यश्चिकीर्षेत् स कुर्वीत । तादृशानां वधे पुण्यमस्तीति भावः । नीटी.

[5]यथा काकश्च गृध्रश्च तथैवोपधिजीविनः ।
ऊर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु ॥

(१) भा. १२।११०।२१ ; भामु. १२।१०९।२४ येऽवि (अवि).

(२) भा. १२।११०।२२ द्वितीयार्धं नास्ति ; भामु. १२।१०९।२५–२६ धनादाना (धननाशा).

(३) भा. १२।११०।२३ ; भामु. १२।१०९।२६–२७ वो (ते).

(४) भा. १२।११०।२४ ; भामु. १२।१०९।२७–२८.

(५) भा. १२।११०।२५ ; भामु. १२।१०९।२९ काश्च गृध्रश्च (काश्च गृध्राश्च).

[1]यस्मिन्यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युदेयः ॥

तारकधर्माणां स्वरूपम्

युधिष्ठिर उवाच–

[2]क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः ।
दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥

भूतेषु प्राणिषु । दुर्गाणि दुस्तराणि । नीटी.

भीष्म उवाच–

आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।
वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥

[3]ये दम्भान्न जपन्ति स्म येषां वृत्तिश्च संवृता ।
विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते ॥

विषयान् विषयार्थानि इन्द्रियाणि । नीटी.

[4]प्रत्याहुर्नोच्यमाना ये न हिंसन्ति च हिंसिताः ।
प्रयच्छन्ति न याचन्ते दुर्गाण्यतितरन्ति ते ॥

उच्यमानाः निन्द्यमानाः । नीटी.

[5]वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः ।
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥

[6]मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः ।
वर्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते ॥

[7]स्वेषु दारेषु वर्तन्ते न्यायवृत्तेष्वृतावृतौ ।
अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते ॥

(१) भा. १२।११०।२६ ; भामु. १२।१०९।३० वर्तितव्यः (बाधितव्यः) देयः (पेयः).

(२) भा. १२।१११।१–२ ; भामु. १२।११०।१–२.

(३) भा. १२।१११।३ ; भामु. १२।११०।३ न्न जपन्ति (न्नाऽऽचरन्ति) संवृता (संयता).

(४) भामु. १२।११०।४.

(५) भा. १२।१११।४ ; भामु. १२।११०।५.

(६) भा. १२।१११।५ ; भामु. १२।११०।६ दिवास्व (दिवा स्व).

(७) भा. १२।१११।६ ; भामु. १२।११०।९ त्तेष्वृता (त्तिमृता).

[1]ये न लोभान्नयन्त्यर्थान्राजानो रजसाऽऽवृताः ।
विषयान्परिरक्षन्तो दुर्गाण्यतितरन्ति ते ॥

रजसाऽन्विताः सन्तोऽर्थान् न नयन्ति न हरन्ति । नीटी.

[2]आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम् ।
धर्मेण जयमिच्छन्तो दुर्गाण्यतितरन्ति ते ॥

[3]ये पापानि न कुर्वन्ति कर्मणा मनसा गिरा ।
निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते ॥

[4]ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥

[5]अनध्यायेषु ये विप्राः स्वाध्यायं नैव कुर्वते ।
तपोनित्याः सुतपसो दुर्गाण्यतितरन्ति ते ॥

[6]कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः ।
येषामर्थाश्च साध्वर्था दुर्गाण्यतितरन्ति ते ॥

अकुहकार्थानि अदम्भार्थानि । नीटी.

[7]ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः ।
विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥

[8]ये च संशान्तरजसः संशान्ततमसश्च ये ।
सत्ये स्थिता महात्मानो दुर्गाण्यतितरन्ति ते ॥

(१) भा. १२।१११।७ ; भामु. १२।११०।८ साऽऽवृताः (साऽन्विताः) रक्षन्तो (रक्षन्ति).

(२) भा. १२।१११।८ ; भामु. १२।११०।१० मिच्छन्तो (मिच्छन्ति).

(३) भा. १२।१११।९ ; भामु. १२।११०।७ पापानि (वा पापं).

(४) भा. १२।१११।१० ; भामु. १२।११०।११.

(५) भा. १२।१११।११ ; भामु. १२।११०।१३ नैव (नेह) नित्याः (निष्ठाः).

(६) भा. १२।१११।१२ ; भामु. १२।११०।१२ साध्वर्था (संबद्धा).

(७) भा. १२।१११।१३ ; भामु. १२।११०।१४.

(८) भा. १२।१११।१४ ; भामु. १२।११०।१५ सत्ये (सत्त्वे).

[1]येषां न कश्चित्त्रसति त्रसन्ति न च कस्यचित् ।
येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते ॥

[2]परश्रिया न तप्यन्ते ये सन्तः पुरुषर्षभाः ।
ग्राम्यादन्नान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते ॥

[3]सर्वान्देवान्नमस्यन्ति सर्वान्धर्मांश्च शृण्वते ।
ये श्रद्दधाना दान्ताश्च दुर्गाण्यतितरन्ति ते ॥

[4]ये न मानितमिच्छन्ति मानयन्ति च ये परम् ।
मान्यमाना न मन्यन्ते दुर्गाण्यतितरन्ति ते ॥

[5]ये श्राद्धानि च कुर्वन्ति तिथ्यां तिथ्यां प्रजार्थिनः ।
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते ॥

[6]ये क्रोधं नैव कुर्वन्ति क्रुद्धान्संशमयन्ति च ।
न च कुप्यन्ति भृत्येभ्यो दुर्गाण्यतितरन्ति ते ॥

[7]मधु मांसं च ये नित्यं वर्जयन्तीह मानवाः ।
जन्मप्रभृति मद्यं च दुर्गाण्यतितरन्ति ते ॥
यात्रार्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक्सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥

यात्रार्थं जीवनार्थम् । नीटी.

[8]ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं ये च दुर्गाण्यतितरन्ति ते ॥

(१) भा. १२।१११।१५ ; भामु. १२।११०।१६ त्रसन्ति न च (न त्रसन्ति हि).

(२) भा. १२।१११।१६ ; भामु. १२।११०।१७ तप्यन्ते (तप्यन्ति) दन्ना (दर्पा).

(३) भा. १२।१११।१७ ; भामु. १२।११०।१८ सर्वान्श्च (सर्वश्च) दान्ता (शान्ता).

(४) भा. १२।१११।१८ ; भामु. १२।११०।१९ मानित (मानित्व) परम् (परान्) ना न मन्यन्ते (नान्नमस्यन्ति).

(५) भा. १२।१११।१९ ; भामु. १२।११०।२० श्राद्धानि च (च श्राद्धानि).

(६) भा. १२।१११।२० ; भामु. १२।११०।२१ नैव कुर्वन्ति (संनियच्छन्ति) भृत्येभ्यो (भूतानां).

(७) भा. १२।१११।२१–२२ ; भामु. १२।११०। २२–२३.

(८) भा. १२।१११।२३ ; भामु. १२।११०।२४ ये च (देवं).

[1]य एष रक्तपद्माक्षः पीतवासा महाभुजः ।
सुहृद्भ्राता च मित्रं च संबन्धी च तवाच्युतः ॥
[2]य इमान्सकलाँल्लोकांश्चर्मवत्परिवेष्टयेत् ।
इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥
[3]स्थितः प्रियहिते जिष्णोः स एव पुरुषर्षभ ।
राजंस्तव च दुर्धर्षो वैकुण्ठः पुरुषोत्तमः ॥

तव च हिते स्थितः । नीटी.

[4]य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् ।
ते तरन्तीह दुर्गाणि न मेऽत्रास्ति विचारणा ॥
[5]दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ।
पाठयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥
[6]इति कृत्यसमुद्देशः कीर्तितस्ते मयाऽनघ ।
संतरेद्येन दुर्गाणि परत्रेह च मानवः ॥

कृत्यसमुद्देशः कर्तव्यलेशः । नीटी.

पुरुषार्था धर्मार्थकामाः समुच्चित्य लोकयात्राकारणम्

युधिष्ठिर उवाच–

[7]तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥
[8]धर्मार्थकामाः किंमूलास्त्रयाणां प्रभवश्च कः ।
अन्योन्यं चानुषज्जन्ते वर्तन्ते च पृथक्पृथक् ॥

किंमूलाः किमुद्दिश्य क्रियन्ते ? इत्यर्थः । प्रभवत्यस्मादिति प्रभवः । किमेषामुत्पत्तिस्थानम् ? तेषां साहित्यं कथम् ? पृथक् पृथक्त्वं च कथम् ? इति चत्वारः प्रश्नाः । नीटी.

भीष्म उवाच–

[1]यदा ते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥

सूचीकटाहन्यायेन साहित्यमाह– यदेति । सुमनसः शोभनचित्ताः पुमांसः यदा स्युस्तदा लोके भूमौ धर्मपूर्वके अर्थनिश्चये 'अहं गर्भाधानोक्तविधिना ऋतौ भार्यां गत्वा सुपुत्रं लप्स्याम्येव' इत्येवंरूपे प्रवृत्ते सति ते धर्मार्थकामास्त्रयोऽपि काल: ऋतुवेला, प्रभवः जाया, संस्था सम्यक् कर्मनिष्पत्तिः, तासु सतीषु सज्जन्ते युगपदुत्पद्यन्ते । योनिसंस्काररूपः धर्मः, पुत्ररूपोऽर्थः, स्त्रीसङ्गरूपः कामश्च भवतीत्यर्थः । नीटी.

[2]धर्ममूलस्तु देहोऽर्थः कामोऽर्थफलमुच्यते ।
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ॥

आद्यस्य प्रश्नद्वयस्योत्तरमाह– धर्मेति । दिव्यदेवतादिशरीरप्राप्तिमर्थोंश्च स्त्र्यादीनुद्दिश्य धर्मः क्रियतेऽतो दैवेन( ? देहेन ) सहितोऽर्थो धर्ममूलः । अर्थस्य भोगार्थत्वं प्रसिद्धमिति काममूलोऽर्थ इति नोक्तम् । कामोऽर्थफलम्, कामस्य मूलम् इन्द्रियप्रीतिरित्यर्थः । संकल्पमूलाः संकल्पप्रभवास्ते सर्वेऽपीति द्वितीयस्योत्तरम् । एतदेवोपपादयति– संकल्प इति । रूपादिविषयः संकल्पो रूपाद्याश्च भोगार्था इति सर्वेऽप्येते संकल्पमूलाः । मोक्षस्तु तद्विलक्षणो निःसंकल्परूप इत्यर्थः । नीटी.

[3]विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये ।
मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥

(१) भा. १२।१११।२४ ; भामु. १२।११०।२५ तवा (तथाऽ).

(२) भा. १२।१११।२५ ; भामु. १२।११०।२६.

(३) भा. १२।१११।२६ ; भामु. १२।११०।२७ द्वितीयचरणे (स एष पुरुषोत्तमः) षोत्तमः (षर्षभ).

(४) भा. १२।१११।२७ ; भामु. १२।११०।२८ भक्त्या (भक्ता) न मेऽत्रा (न चात्रा).

(५) भा. १२।१११।२८ ; भामु. १२।११०।२९ पाठ (कथ).

(६) भा. १२।१११।२९ ; भामु. १२।११०।३० संतरेद्येन (तरन्ते येन) मानवः (मानवाः).

(७) भा. १२।१२३।१ ; भामु. १२।१२३।१ त्रिष्वेतेषु (तिष्ठेत्केषु).

(८) भा. १२।१२३।२ ; भामु. १२।१२३।२.

(१) भा. १२।१२३।३ ; भामु. १२।१२३।३ लोकसंस्था (लोके धर्मा).

(२) भा. १२।१२३।४ ; भामु. १२।१२३।४ लस्तु देहोऽर्थः (लः सदैवार्थः).

(३) भा. १२।१२३।५ ; भामु. १२।१२३।५.

[1]धर्मः शरीरसंगुप्तिर्धर्मार्थं चार्थ इष्यते ।
कामो रतिफलश्चात्र सर्वे चैते रजस्वलाः ॥

किमेवं त्रिवर्गः सर्वेणापि न सेव्यः? इत्याशङ्क्य रजस्वलः रजःप्रधानः स न सेव्यः, सत्त्वप्रधानस्तु सेव्य एवेत्याह– धर्मादिति । आरोग्यार्थं धर्मः, काम्यधर्मार्थम् (अर्थः), इन्द्रियप्रीत्यर्थं काम इत्येते हेया इत्यर्थः । नीटी.

[2]संनिकृष्टांश्चरेदेनान्न चैनान्मनसा त्यजेत् ।
विमुक्तस्तमसा सर्वान्धर्मादीन्कामनैष्ठिकान् ॥

स्वर्गादिकं बाह्यं फलं विप्रकृष्टम्, तदर्था एते विप्रकृष्टाः, आत्मज्ञानरूपं फलं तु संनिकृष्टम्, तदर्था एते संनिकृष्टाः, तान् चरेत् सेवेत । धर्मश्चित्तशुद्ध्यर्थः अर्थो निष्कामकर्मार्थः कामो देहधारणमात्रार्थ इत्येवमेते सेव्या इत्यर्थः । धर्मादीन् कामनैष्ठिकान् कामान्तान् धर्मार्थकामान्सर्वानपि मनसाऽपि न त्यजेत्, किमुत स्वरूपेण न त्यजेत् ? इत्यर्थः । कथं तर्ह्येतांस्त्यजेत् ? इत्याह–तपसा विमुक्त इति । विचारेणैव तेभ्यो विमुक्तो भवेत् । सङ्गफलत्यागपूर्वकं धर्मादीननुतिष्ठेदिति भावः । नीटी.

[3]श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयात्क्षणात् ।
कर्मणा बुद्धिपूर्वेण भवत्यर्थो न वा पुनः ॥
[4]अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमवाप्यार्थमन्यत्राऽऽद्योपकारकम् ।
बुद्ध्या बुध्येदिहार्थे न तदज्ञा तु निकृष्टया ॥

ततश्च किम् ? अत आह– श्रेष्ठ इत्यर्धेन । त्रिवर्गस्य बुद्धिः निष्ठा श्रेष्ठे मोक्षे एवास्ति, यत् यदि अयं कर्ता तं श्रेष्ठं प्राप्नुयात् । इतस्तु निष्कामस्य तस्य दौर्लभ्यमेवेति भावः । काम्यं धर्मं निन्दति– कर्मणेति । 'अस्मात्कर्मण इदं फलं प्राप्स्ये' इतिबुद्धिपूर्वं कृतेनापि कर्मणाऽर्थः कदाचिद्भवति, कदाचिन्नेति व्यभिचारः । अर्थार्थं धर्मादपि अन्यत् सेवाकृष्यादिकं भवतीति न धर्मैकलभ्योऽर्थ इत्यर्थार्थं धर्मो न कार्यः । प्रत्युत विपरीतमपि अपरं मतमस्ति । केचिद्धठेनैवार्थो भवति स्वभावेन वा दैवेन वेति मन्यन्त इति तदर्थमलं धर्मेणेत्यर्थः । एवं धर्मस्यार्थहेतुत्वं दूरीकृत्यार्थस्यापि धर्महेतुत्वं दूषयति–अनर्थेति । अर्थमवाप्यापि जगत् अनर्थार्थम् अपायार्थं भवति । तथाहि– धनमत्तः सर्वं पापं करोतीति नार्थेन धर्मोत्पत्तिर्नित्याऽस्ति । अर्थं विनाऽपि धर्मोत्पत्तिरस्तीत्याह– अन्यत्राऽऽद्योपकारकम् । स्वार्थे त्रल् । अन्यत्र अन्यदेवोपवासव्रतादिकम् आद्यस्य धर्मस्य उपकारकं वर्धकं भवति । इहार्थे अस्मिन्नर्थे धर्मादर्थोऽर्थतो धर्म इति विषये अज्ञाननिकृष्टया बुद्ध्या उपलक्षितः अबुद्धिः विमूढः तत् उक्तरूपं धर्मार्थयोः फलं न प्राप्नुयात्, उभयत्रापि व्यभिचारस्यान्यथासिद्धेः प्रदर्शितत्वात् । तस्माच्छ्रेष्ठमेव तयोः फलमव्यभिचारीति शेयम् । नीटी.

[1]अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
संप्रमोदमलः कामो भूयः स्वगुणवर्तितः ॥

धर्मादीनां रजस्वलत्वमुक्तम्, तदेव रजो दर्शयति– अपेति । अपध्यानं फलाभिसंधिः । निगूहनं दानभोगयोरप्रतिपादनम् । संप्रमोदः प्रीतिविशेषः । स एव त्रिवर्गः स्वगुणवर्जितः सुतरामगुणो दुर्गुणोऽपध्यानादिस्तेन वर्जितः सन् भूयः बहुतरं फलं चित्तशुद्धिद्वारा ब्रह्मानन्दरूपं प्रयच्छतीति शेषः । नीटी.

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कामन्दस्य च संवादमङ्गारिष्ठस्य चोभयोः ॥

(१) भा. १२।१२३।६ ; भामु. १२।१२३।६ धर्मः श (धर्मच्छ) इष्यते (उच्यते) चैते (ते च).

(२) भा. १२।१२३।७ ; भामु. १२।१२३।७ देना (देता) चैना (चैता) स्तमसा (स्तपसा).

(३) भा. १२।१२३।८ पू. ; भामु. १२।१२३।८ श्रेष्ठबु (श्रेष्ठे बु) त्क्षणात् (न्नरः).

(४) भा. १२।१२३।८ तृतीयार्धमात्रम् ; भामु. १२।१२३।९ तृतीयार्धे (बुद्ध्या बुद्धिरिहार्थेन तदज्ञाननिकृष्टया ॥ ).

(१) भा. १२।१२३।९ ; भामु. १२।१२३।१० वर्तितः (र्वर्जितः).

(२) भा. १२।१२३।१० ; भामु. १२।१२३।११ न्दस्य च (न्दकस्य) मङ्गा (माङ्ग).

एवं पूर्वोक्तस्य प्रश्नत्रयस्योत्तरमुक्त्वा 'वर्तन्ते च पृथक्पृथक्' इति चतुर्थप्रश्नस्योत्तरमितिहासमुखेनाऽऽह–अत्रापीति । नीटी.

**[१]कामन्दमृषिमासीनमभिवाद्य नराधिपः ।**
**अङ्गारिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययम् ॥**

समयपर्ययं मर्यादाभङ्गम् । नीटी.

**[२]यः पापं कुरुते राजा काममोहबलात्कृतः ।**
**प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम् ॥**

प्रत्यासन्नस्य पश्चात्तप्तस्य । नीटी.

**[३]अधर्मो धर्म इति ह योऽज्ञानादाचरेदिह ।**
**तं चापि प्रथितं लोके कथं राजा निवर्तयेत् ॥**

**कामन्द उवाच–**

**[४]यो धर्मार्थौ समुत्सृज्य काममेवानुवर्तते ।**
**स धर्मार्थपरित्यागात्प्रज्ञानाशमिहाऽऽर्छति ॥**

अत्र आपस्तम्बाम्रनिदर्शनात् 'तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इत्येवंरूपाद्धर्मोऽर्थकामाभ्यामविनाभूतोऽर्थश्च कामेनाविनाभूतः सर्वत्रास्ति, परिशेषात्काम एव धर्मार्थौ अतिक्रम्यास्ति, तत्परं निन्दति य इति । नीटी.

**[५]प्रज्ञाप्रणाशको मोहस्तथा धर्मार्थनाशकः ।**
**तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥**

**[६]दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति ।**
**तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥**

**[१]तं प्रजा नानुवर्तन्ते ब्राह्मणा न च साधवः ।**
**ततः संक्षयमाप्नोति तथा वध्यत्वमेति च ॥**

**[२]अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।**
**जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् ॥**

**[३]अत्रैतदाहुराचार्याः पापस्य च निबर्हणम् ।**
**सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥**

एवं निन्दितस्य कर्तव्यमाह–अत्रेति । नीटी.

**[४]महामना भवेद्धर्मे विवहेच्च महाकुले ।**
**ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः ॥**

**[५]जपेदुदकशीलः स्यात्सुमुखो नान्यदास्थितः ।**
**धर्मान्वितान्संप्रविशेद्बहिः कृत्वैव दुष्कृतीन् ॥**

**[६]प्रसादयेन्मधुरया वाचाऽप्यथ च कर्मणा ।**
**इत्यस्मीति वदेन्नित्यं परेषां कीर्तयन्गुणान् ॥**

**[७]अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।**
**पापान्यपि च कृच्छ्राणि शमयेन्नात्र संशयः ॥**

**[८]गुरवोऽपि परं धर्मं यद्ब्रूयुस्तत्तथा कुरु ।**
**गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥**

**[९]आचारमेव मन्यन्ते गरीयो धर्मलक्षणम् ॥**

---

(१) भा. १२।१२३।११ ; भामु. १२।१२३।१२ अङ्गा (आङ्ग).

(२) भा. १२।१२३।१२ ; भामु. १२।१२३।१३.

(३) भा. १२।१२३।१३ ; भामु. १२।१२३।१४ अधर्मो (अधर्मं) ह (च) दिह (न्नरः).

(४) भा. १२।१२३।१४ ; भामु. १२।१२३।१५ समुत्सृज्य (परित्यज्य).

(५) भा. १२।१२३।१५ ; भामु. १२।१२३।१६ प्रणाशको (नाशात्मको).

(६) भा. १२।१२३।१६ ; भामु. १२।१२३।१७.

(१) भा. १२।१२३।१७ ; भामु. १२।१२३।१८ संक्षय (संशय).

(२) भा. १२।१२३।१८ ; भामु. १२।१२३।१९ जीवति जीवितम् (जीवितमृच्छति).

(३) भा. १२।१२३।१९ ; भामु. १२।१२३।२० च निब (परिग).

(४) भा. १२।१२३।२० ; भामु. १२।१२३।२१.

(५) भा. १२।१२३।२१ ; भामु. १२।१२३।२२ त्सुमुखो नान्यदा (त्सततं सुखमा) त्वैव (त्वेह).

(६) भा. १२।१२३।२२ ; भामु. १२।१२३।२३ ऽप्यथ च (वाऽप्यथ) इत्यस्मी (तवास्मी).

(७) भा. १२।१२३।२३ ; भामु. १२।१२३।२४ च (हि).

(८) भा. १२।१२३।२४ ; भामु. १२।१२३।२५ वोऽपि (वो हि) यद्ब्रूयुस्तत् (यं ब्रूयुस्तं) दाद्धि (दाद्वै).

(९) भा. १२।१३०।१५ ; भामु. १२।१३२।१५.

[1]यश्चतुर्गुणसंपन्नं धर्मं वेद स धर्मवित् ।
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥

चत्वारो गुणाः आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति, य एषामविरुद्धश्चतुर्गुणसंपन्नः । नीटी.

आत्मपुत्रपौत्रादिपर्यन्तः पापकर्मविपाकः

[2]इच्छयैव कृतं पापं सद्य एवोपसर्पति ।
कृतप्रतिक्रियं तेषां न नश्यति शुभाशुभम् ॥

इच्छया बुद्धिपूर्वकम् । उपसर्पति फलरूपेण कर्तारम् । नीटी.

[3]पापं कर्म कृतं किंचिन्न तस्मिन्यदि विद्यते ।
निपात्यतेऽस्य पुत्रेषु न चेत्पौत्रेषु नप्तृषु ॥

कर्तर्यदृष्टं तत्पुत्रादावपि पापं दृश्यत एवेत्याह— पापमिति । नीटी.

जीवितं धर्मार्थम्

[4]यथा यथा वै जीवेद्धि तत्कर्तव्यमपीडया ।
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥

सर्वैरुपायैः धर्मरक्षणस्य कर्तव्यता

श्वपच उवाच—

[5]यद्ब्राह्मणार्थे कृतमर्थितेन
तेनर्षिणा तच्च भक्ष्याधिकारम् ।
स वै धर्मो यत्र न पापमस्ति
सर्वैरुपायैर्हि स रक्षितव्यः ॥

(१) भा. १२।१३०।१९ ; भामु. १२।१३२।२० वेद (ब्रूयात्).

(२) भा. १२।१३७।१८ ; भामु. १२।१३९।२१ यैव (येह) सद्य एवो (सद्यस्तं चो) तृतीयचरणे (कृतं प्रतिकृतं येषां).

(३) भा. १२।१३७।१९ ; भामु. १२।१३९।२२ द्वितीयचरणे (यदि तस्मिन्न दृश्यते) उत्तरार्धे (नृपते तस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥ ).

(४) भा. १२।१३९।६१ ; भामु. १२।१४१।६५ यथा वै (यथैव) मपीडया (महेलया).

(५) भा. १२।१३९।७२ ; भामु. १२।१४१।७६ तच्च भक्ष्याधिकारम् (तदवस्थाधिकारे) हि स रक्षितव्यः (गुरवो हि रक्ष्याः).

तेन अगस्त्येन ब्राह्मणानामर्थेऽर्थितेन प्रार्थितेन, अर्थाद्ब्राह्मणैरेव वातापिभक्षणं कृतम्, न स्वार्थे । तदपि अवस्थाधिकारे स तादृश एव समयः, नान्यत् किंचित्कर्तुं शक्यमित्यर्थः । नृशंसमपि भक्षित्वा तेन वातापिना भक्ष्यमाणा ब्राह्मणा रक्षिता इति धर्म एवेत्यर्थः । नीटी.

बुद्धिपूर्वको धर्माधर्मनिर्णयः श्रेयस्करः

[1]एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥
[2]एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन्पुण्यमवाप्नोति नरो भद्राणि पश्यति ॥
[3]तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं यतात्मना ॥

[4]बृहस्पतिं देवगुरुं सुरासुराः
समेत्य सर्वे नृपतेऽन्वयुञ्जन् ।
धर्मे फलं वेत्थ कृते महर्षे
तथेतरस्मिन्नरके पापलोके ॥

अनुयुज्य अत्यादरपूर्वकमुपेत्य, अपृच्छन्निति शेषः । धर्म्ये धर्मोद्भवं फलं सुखरूपं वेत्थ जानीषे ? तथा नरके फलं दुःखं तदपि वेत्थ? नीटी.

[5]उभे तु यस्य सुकृते भवेतां
किं स्वित्तयोस्तत्र जयोत्तरं स्यात् ।
आचक्ष्व नः कर्मफलं महर्षे
कथं पापं नुदते पुण्यशीलः ॥

(१) भा. १२।१३९।९२ ; भामु. १२।१४१।१००.

(२) भा. १२।१३९।९३ ; भामु. १२।१४१।१०१ चतुर्थचरणे (पुरुषो भद्रमश्नुते).

(३) भा. १२।१३९।९४ ; भामु. १२।१४१।१०२ यता (कृता).

(४) भा. १२।१४८।२८ ; भामु. १२।१५२।३२ द्वितीयचरणे (सर्वे समेत्याभ्यनुयुज्य राजन्) धर्मे (धर्म्यं) कृते (फलं) तथेतर (तथैव त) पापलोके (पारलोक्ये).

(५) भा. १२।१४८।२९ ; भामु. १२।१५२।३३ सुकृते (सदृशे) जयोत्तरं (जयोऽथ न) कर्म (पुण्य) पुण्य (धर्मं).

यस्य योगिनः उभे अपि सुखदुःखे सदृशे, यस्य च तयोर्द्वयोस्तुल्यो जयोऽस्ति, उत न, सामान्याभावेऽपि किं पुण्यस्य फलम् ? कथं दानपुण्येन पापं नुदति ? तदाचक्ष्वेति द्वयोः संबन्धः । नीटी.

**बृहस्पतिरुवाच—**

**[1]कृत्वा पापं पूर्वमबुद्धिपूर्वं**
**पुण्यानि यः कुरुते बुद्धिपूर्वम् ।**
**स तत्पापं नुदते पुण्यशीलो**
**वासो यथा मलिनं क्षारयुक्त्या ॥**

'अबुद्धिपूर्वम्' ( भामु. १२।१५०।१ ) इत्यस्य प्रश्नस्योत्तरमाह— कृत्वेति । नीटी.

**[2]पापं कृत्वा न मन्येत नाहमस्मीति पूरुषः ।**
**चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥**

पापमिति कर्तृत्वाभिमानशून्यः पापं कुर्वन्नपि न करोत्येवेत्यर्थस्यार्थः । नीटी.

**[3]छिद्राणि वसनस्येव साधुना विवृणोति यः ।**
**यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥**

आवृणोति पिधत्ते स कल्याणं चिकीर्षतीति संबन्धः । नीटी.

**[4]यथाऽऽदित्यः पुनरुद्यंस्तमः सर्वं व्यपोहति ।**
**कल्याणमाचरन्नेवं सर्वं पापं व्यपोहति ॥**

**[5]प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।**
**न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥**

सांपरायिकं पारलौकिकम्, शठत्वात् । नीटी.

---

(१) भा. १२।१४८।३० ; भामु. १२।१५२।३४ यः (चेत्) पुण्य (कर्म) युक्त्या (युक्तम्).

(२) भा. १२।१४८।३१ ; भामु. १२।१५२।३५ न म (ऽभिम) चिकीर्षेदेव (तच्चिकीर्षति).

(३) भा. १२।१४८।३२ ; भामु. १२।१५२।३६ वसनस्येव साधुना विवृ (विवृतान्येव साधूनां चाऽऽवृ).

(४) भा. १२।१४८।३३ ; भामु. १२।१५२।३७ पुनरु (प्रातरु) सर्वं पापं (सर्वपापं).

(५) भा. १२।१५९।१६ ; भामु. १२।१६५।१७.

लोकयात्रार्थं धर्मार्थकामरूपत्रिवर्गविवेकः

**वैशंपायन उवाच—**

**[1]इत्युक्तवति भीष्मे तु तूष्णींभूते युधिष्ठिरः ।**
**पप्रच्छावसरं गत्वा भ्रातॄन्विदुरपञ्चमान् ॥**

एवं शूराणां सर्वापन्निवारणहेतुः खड्ग इति खड्गोत्पत्त्यन्ता कथा सर्वैः श्रुता । अथेदानीमेकरूपेऽप्युपदेष्टरि शिष्याः स्वस्वाभिप्रायानुसारेणैव शास्त्रतत्त्वं गृह्णन्तीति एतमर्थमाख्यायिकामुखेन दर्शयति— इत्युक्तवतीत्यादिना । आवसथं गृहम् । विदुरः पञ्चमो येषु तान् । स्वयं षष्ठः । षड्योगजा गीता इत्ययं षड्जगीताध्यायः । नीटी.

**[2]धर्मे चार्थे च कामे च लोकवृत्तिः समाहिता ।**
**तेषां गरीयान्कतमो मध्यमः को लघुश्च कः ॥**

**[3]कस्मिंश्चाऽऽत्मा नियन्तव्यस्त्रिवर्गविजयाय वै ।**
**संतुष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ॥**

त्रिवर्गविजयाय कामक्रोधलोभानां जयाय । नीटी.

**[4]ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान् ।**
**जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ॥**

**बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा ।**
**भावशुद्धिर्दया सत्यं संयमश्चाऽऽत्मसंपदः ॥**

धर्मावतारत्वाद्धर्मशास्त्रानुसारिवाक्यं विदुर उवाच— बाहुश्रुत्यमिति । बाहुश्रुत्यं बह्वध्ययनम् । तपः स्वधर्माचरणम् । त्यागः दानम् । श्रद्धा आस्तिक्यम् । यज्ञक्रिया सोमसंस्थादिः । क्षमा आक्रुष्टस्य ताडितस्य वा निर्विकारित्वम् । भावशुद्धिः निष्कपटत्वम् । दया दीनेष्वनुजिघृक्षा । सत्यं हिंसाशून्यं यथार्थवचनम् ।

---

(१) भा. १२।१६१।१ ; भामु. १२।१६७।१ वसरं ( वसथं ).

(२) भा. १२।१६१।२ ; भामु. १२।१६७।२ लोक ( लोभ ).

(३) भा. १२।१६१।३ ; भामु. १२।१६७।३ नियन्त ( निधात ) तुष्टा ( हृष्टा ).

(४) भा. १२।१६१।४–५ ; भामु. १२।१६७।४–५.

संयमः इन्द्रियनिग्रहः । एता दश आत्मनः धर्मस्य संपदः ऐश्वर्याणि । नीटी.

[1]एतदेवाभिपद्यस्व मा ते भूत्स्खलितं मनः ।
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ॥
[2]धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः ।
धर्मेण देवा दिविगा धर्मे चार्थः समाहितः ॥
[3]धर्मो राजन्गुणश्रेष्ठो मध्यमो ह्यर्थ उच्यते ।
कामो यवीयानिति च प्रवदन्ति मनीषिणः ।
तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना ॥
[4]तथा च सर्वभूतेषु वर्तितव्यं यथाऽऽत्मनि ॥

‡ वैशम्पायन उवाच–

[5]समाप्तवचने तस्मिन्नर्थशास्त्रविशारदः ।
पार्थो वाक्यार्थतत्त्वज्ञो जगौ वाक्यमतन्द्रितः ॥
[6]कर्मभूमिरियं राजन्निह वार्ता प्रशस्यते ।
कृषिवाणिज्यगोरक्ष्यं शिल्पानि विविधानि च ॥

एवं धर्मश्रेष्ठ्ये विदुरेण प्रतिपादितेऽर्थश्रैष्ठ्यमर्जुन आह– कर्मभूमिरिति । नीटी.

[7]अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः ।
न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः ॥

अव्यतिक्रमः मर्यादा । नीटी.

[1]विजयी ह्यर्थवान्धर्ममाराधयितुमुत्तमम् ।
कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥
[2]अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः ।
अर्थसिद्ध्या हि निर्वृत्तावुभावेतौ भविष्यतः ॥
[3]उद्भूतार्थं हि पुरुषं विशिष्टतरयोनयः ।
ब्रह्माणमिव भूतानि सततं पर्युपासते ॥
[4]जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥

निस्तन्तवः नैष्ठिकब्रह्मचारिणः । नीटी.

[5]काषायवसनाश्चान्ये श्मश्रुला ह्रीसुसंवृताः ।
विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः ॥
[6]अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः ।
कुलप्रत्यागमाश्चैके स्वं स्वं मार्गमनुष्ठिताः ॥
[7]आस्तिका नास्तिकाश्चैव नियताः संयमे परे ।
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशता ॥

प्रज्ञानम् अर्थश्रैष्ठ्यविषयम् । नीटी.

[8]भृत्यान्भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान् ।
एतन्मतिमतां श्रेष्ठ मतं मम यथातथम् ।

---

‡ एतदुवाचवाक्यम् अतः पराणि चैतदध्यायस्थितान्युवाचवाक्यानि केवलं भामुपाठे एव सन्ति ।

(१) भा. १२।१६१।६ ; भामु. १२।१६७।६ हितम् ( हि मे ).

(२) भा. १२।१६१।७ ; भामु. १२।१६७।७ दिविगा ( ववृधुः ).

(३) भा. १२।१६१।८ ; भामु. १२।१६७।८–९ गुणश्रे (गुणः श्रे).

(४) भामु. १२।१६७।९.

(५) भा. १२।१६१।९ ; भामु. १२।१६७।१० वाक्यार्थ (धर्मार्थ) क्यमतन्द्रि (क्यप्रचोदि).

(६) भा. १२।१६१।१० ; भामु. १२।१६७।११ वाणिज्यगोरक्ष्यं (वाणिज्यगोरक्षं).

(७) भा. १२।१६१।११ भामु. १२।१६७।१२ ऋते (ह्यृते).

(१) भा. १२।१६१।१२ ; भामु. १२।१६७।१३ विजयी ह्यर्थ (विषयैरर्थ).

(२) भा. १२।१६१।१३ ; भामु. १२।१६७।१४ हि नि (विनि).

(३) भा. १२।१६१।१४ ; भामु. १२।१६७।१५ उद्भूता (तद्गता).

(४) भा. १२।१६१।१५ ; भामु. १२।१६७।१६.

(५) भा. १२।१६१।१६ ; भामु. १२।१६७।१७ सुसंवृताः (निषेविणः).

(६) भा. १२।१६१।१७ ; भामु. १२।१६७।१८ मार्ग (धर्म).

(७) भा. १२।१६१।१८ ; भामु. १२।१६७।१९ काशता (काशिता).

(८) भा. १२।१६१।१९–२० ; भामु. १२।१६७।२०–२१.

अनयोस्तु निबोध त्वं वचनं वाक्यकण्ठयोः ॥

अनयोः नकुलसहदेवयोः । नीटी.

वैशम्पायन उवाच—

ततो धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् ।
नकुलः सहदेवश्च वाक्यं जगदतुः परम् ॥

नकुलसहदेवावूचतुः—

[1]आसीनश्च शयानश्च विचरन्नपि च स्थितः ।
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि ॥

[2]अस्मिंस्तु वै सुसंवृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥

[3]योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।
मध्विवामृतसंयुक्तं तस्मादेतौ मताविह ॥

तत् हि निश्चितं त्वा त्वां प्रति अमृतसमं यथा स्यात्तथा मतौ । आवयोरिति शेषः । नीटी.

[4]अनर्थस्य न कामोऽस्ति तथाऽर्थोऽधर्मिणः कुतः ।
तस्मादुद्विजते लोको धर्मार्थाद्यो बहिष्कृतः ॥

अनर्थस्य अर्थहीनस्य । अधर्मिणः धर्महीनस्य ।

[5]तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना ।
विश्वस्तेषु च भूतेषु कल्पते सर्व एव हि ॥

धर्मरूपेण प्रदानेन । विश्वस्तेषु अस्मद्वाक्ये विश्वासवत्सु । नीटी.

[6]धर्मं समाचरेत्पूर्वं तथाऽर्थं धर्मसंयुतम् ।
ततः कामं चरेत्पश्चात्सिद्धार्थस्य हि तत्फलम् ॥

(१) भा. १२।१६१।२१ ; भामु. १२।१६७।२२ पि च (पि वा).

(२) भा. १२।१६१।२२ ; भामु. १२।१६७।२३ सुसंवृ (विनिर्वृ).

(३) भा. १२।१६१।२३ ; भामु. १२।१६७।२४ तृतीयचरणे (तद्वित्वाऽमृतसंवादं).

(४) भा. १२।१६१।२४ ; भामु. १२।१६७।२५.

(५) भा. १२।१६१।२५ ; भामु. १२।१६७।२६ प्रधा (प्रदा) च (हि) सर्व ए (सर्वमे).

(६) भा. १२।१६१।२६ ; भामु. १२।१६७।२७ थाऽर्थं (तोऽर्थं) चतुर्थचरणे (सिद्धार्थः स हि तत्परम्).

अत्र धर्मार्थयोः समत्वेऽपि धर्मस्य पूर्वत्वाद्दिदुरमतमेवैतदीषद्भेदेन दर्शितम् । नीटी.

वैशम्पायन उवाच—

[1]विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनोः सुतौ ।
भीमसेनस्तदा वाक्यमिदं वक्तुं प्रचक्रमे ॥

भीमसेन उवाच—

[2]नाकामः काममत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥

कामस्यैव प्राधान्यं मन्वानो भीमसेन उवाच— नाकाम इति । नीटी.

[3]कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशफलमूलाशा वायुभक्षाः सुसंयताः ॥

[4]वेदोपवादेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धयज्ञक्रियायां च तथा दानप्रतिग्रहे ॥

[5]वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
दैवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥

[6]समुद्रं चाऽऽविशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन संततम् ॥

[7]नास्ति नाऽऽसीन्नाभविष्यद्भूतं कामात्मकात्परम् ।
एतत्सारं महाराज धर्मार्थावत्र संश्रितौ ॥

(१) भा. १२।१६१।२७ ; भामु. १२।१६७।२८.

(२) भा. १२।१६१।२८ ; भामु. १२।१६७।२९.

(३) भा. १२।१६१।२९ ; भामु. १२।१६७।३० मूलाशा (मूलादा).

(४) भा. १२।१६१।३० ; भामु. १२।१६७।३१ वादे (वेदे).

(५) भा. १२।१६१।३१ ; भामु. १२।१६७।३२ दैव (देव).

(६) भा. १२।१६१।३२ ; भामु. १२।१६७।३३ चाऽऽवि (वा वि).

(७) भा. १२।१६१।३३ ; भामु. १२।१६७।३४ श्रितौ (स्थितौ).

[1]नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं च पिण्याकाद्घृतं श्रेय उदश्वितः ॥

उदश्वितः तक्रात् । नीटी.

[2]श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
पुष्पतो मध्विव रसः कामात्संजायते सुखम् ॥

[3]कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः ॥

नाकामतो ब्राह्मणाः स्वन्नमर्था-
न्नाकामतो ददति ब्राह्मणेभ्यः ।
नाकामतो विविधा लोकचेष्टा
तस्मात्कामः प्राक् त्रिवर्गस्य दृष्टः ॥

अकामतः कामं विना केवलार्थात् स्वन्नं मृष्टान्नम् अस्ति( ? नादन्ति ) । न हि धनमस्तीति मृष्टं भुज्यते, अपि तु रुच्यात्मकः कामोऽस्तीति । अन्यथा ज्वरितस्यापि मृष्टं दीयेत । नीटी.

[4]सुचारुवेषाभिरलंकृताभि-
र्मदोत्कटाभिः प्रियवादिनीभिः ।
रमस्व योषाभिरुपेत्य कामं
कामो हि राजंस्तरसाऽभिपाती ॥

[5]बुद्धिर्ममैषा परिषत्स्थितस्य
मा भूद्विचारस्तव धर्मपुत्र ।
स्यात्संहितं सद्भिरफल्गुसारं
समेत्य वाक्यं परमानृशंस्यम् ॥

(१) भा. १२।१६१।३४ ; भामु. १२।१६७।३५ चपि (हि पि).

(२) भा. १२।१६१।३५ ; भामु. १२।१६७।३५–३६ चतुर्थचरणे (काम आभ्यां तथा स्मृतः).

(३) भामु. १२।१६७।३६–३७.

(४) भा. १२।१६१।३६ ; भामु. १२।१६७।३८ वादिनीभिः (दर्शनाभिः) जंस्तरसाभिपाती (जन् परमो भवेन्नः).

(५) भा. १२।१६१।३७ ; भामु. १२।१६७।३९ परिषत्स्थि (परिखास्थि) समेत्य (ममेति) शंस्यम् (शंसम्).

परिखास्थितस्य परितः खाता परिखा, सर्वतो मूलशोध इत्यर्थः, तत्र स्थितस्य । अनृशंसम् अनिष्ठुरम् । नीटी.

[1]धर्मार्थकामाः सममेव सेव्या
यस्त्वेकसेवी स नरो जघन्यः ।
द्वयोस्तु दक्षं प्रवदन्ति मध्यं
स उत्तमो यो निरतस्त्रिवर्गे ॥

दाक्ष्यम् अर्थहेतुत्वान्मध्यं मध्यमम् । अर्थात्काम उत्तमो धर्मो जघन्य इति फलितम् । नीटी.

[2]प्राज्ञः सुहृच्चन्दनसारलिप्तो
विचित्रमाल्याभरणैरुपेतः ।
ततो वचः संग्रहविग्रहेण
प्रोक्त्वा यवीयान्विरराम भीमः ॥

[3]ततो मुहूर्तादथ धर्मराजो
वाक्यानि तेषामनुचिन्त्य सम्यक् ।
उवाच वाचाऽवितथं स्मयन्वै
बहुश्रुतो धर्मभृतां वरिष्ठः ॥

लब्धं श्रुत् श्रवणं यैस्तेषां लब्धश्रुताम् । नीटी.

मोक्षः श्रेष्ठः पुरुषार्थः

युधिष्ठिर उवाच—

[4]निःसंशयं निश्चितधर्मशास्त्राः
सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्य-
मुक्तं यद्वै नैष्ठिकं तच्छ्रुतं मे ।
इह त्ववश्यं गदतो ममापि
वाक्यं निबोधध्वमनन्यभावाः ॥

(१) भा. १२।१६१।३८ ; भामु. १२।१६७।४० यस्त्वेकसेवी (यो ह्येकभक्तः) द्वयोस्तु दक्षं (तयोस्तु दाक्ष्यं) यो नि (योऽभि).

(२) भा. १२।१६१।३९ ; भामु. १२।१६७।४१ विग्रहेण (विस्तरेण) यवीयान् (ऽथ वीरान्).

(३) भा. १२।१६१।४० ; भामु. १२।१६७।४२ वाचाऽवि (वाचा वि) बहुश्रुतो (लब्धश्रुतां).

(४) भा. १२।१६१।४१ ; भामु. १२।१६७।४३ इह (इदं).

नैष्ठिकं सिद्धान्तरूपम् । एतेन पूर्वे सर्वे पूर्वपक्षा एवेत्युक्तम् । नीटी.

'यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समलोष्टकाञ्चनः
स मुच्यते दुःखसुखार्थसिद्धेः ॥

यः पापादिपञ्चके न निरतः स दुःखसुखादिसिद्धिर्यस्य( ? यस्मात् ) तस्मात् सर्वकर्मवृन्दाद्विमुच्यते । नीटी.

'भूतानि जातीमरणान्वितानि
जराविकारैश्च समन्वितानि ।
भूयश्च तैस्तैः प्रतिबोधितानि
मोक्षं प्रशंसन्ति न तं च विद्मः ॥

जातिः जन्म । स्मरणम् अतीतार्थस्मरणम्, तेनातीतत्वमात्रं लक्ष्यते । जन्ममरणात्मकानीत्यर्थः । नीटी.

'स्नेहे नबद्धस्य न सन्ति तानी-
त्येवं स्वयंभूर्भगवानुवाच ।
बुधाश्च निर्वाणपरा वदन्ति
तस्मान्न कुर्यात्प्रियमप्रियं च ॥

स्नेहेनेति रागद्वेषयोरुपलक्षणम् । एतेन मुक्तेर्दुर्लभत्वमाह– न चेति । तथाऽपि प्रार्थ्या च सेत्याह– बुधा इति । नीटी.

'एतत्प्रधानं न तु कामकारो
यथा नियुक्तोऽस्मि तथा चरामि ।
भूतानि सर्वाणि विधिर्नियुङ्क्ते
विधिर्बलीयानिति वित्त सर्वे ॥

एतत्पदार्थमाह– यथेत्यादिना । नीटी.

'न कर्मणाऽऽप्नोत्यनवाप्यमर्थं
यद्भावि सर्वं भवतीति वित्त ।
त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं
तस्मादिदं लोकहिताय गुह्यम् ॥

अर्थं मोक्षम् । वित्त जानीत । लोकहिताय मोक्षाय । त्रिवर्गहीनोऽपि गुह्यमर्थं रहस्यं ज्ञानं विन्दते लभते पूर्वोक्तोऽधिकारी । नीटी.

वैशम्पायन उवाच–

'ततस्तदग्र्यं वचनं मनोनुगं
समस्तमाज्ञाय ततोऽतिहेतुमत् ।
तदा प्रणेदुश्च जहर्षिरे च ते
कुरुप्रवीराय च चक्रुरञ्जलीन् ॥

ततः युधिष्ठिरात् । ततः पूर्वोक्तात्सर्वेषां वाक्यात् हेतुमदिति । नीटी.

सर्वो विविधो धर्मः सफल एव

भीष्म उवाच–

'सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलं तपः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥

कर्मज्ञानफले विभजति ज्ञाने श्रैष्ठ्यं वक्तुम्– सर्वत्रेति । सर्वत्र आश्रमेषु धर्मो विहितो वेदेन ' अग्निहोत्रं जुहुयात्स्वर्गकामः ' इत्यादिना । अदृष्टफलः स इत्यर्थः । सत्यप्रेत्य तपःफलम् सति सद्वस्तुनि विषये तपः आलोचनं श्रवणमनननिदिध्यासनात्मकम्, तस्य फलं साक्षात्कारः, स अप्रेत्य मरणात्प्रागेव भवति । ज्ञानं दृष्टफलमित्यर्थः । ननु तर्हि तप एव क्रियताम्, किं धर्मेण ? इत्याशङ्क्याऽऽह– बहिति । अयमर्थः– ' विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः 'अश्वेन जिगमिषति' इति-

(१) भा. १२।१६१।४२ ; भामु. १२।१६७।४४ लोष्ट (लोष्ठ) नः स मु (नो विमु).

(२) भा. १२।१६१।४३ ; भामु. १२।१६७।४५ प्रथमचरणे (भूतानि जातिस्मरणात्मकानि).

(३) भा. १२।१६१।४४ ; भामु. १२।१६७।४६ स्नेहे नबद्धस्य न सन्ति तानीत्येवं ( स्नेहेन युक्तस्य न चास्ति मुक्तिरिति) वदन्ति (भवन्ति).

(४) भा. १२।१६१।४५ ; भामु. १२।१६७।४७ न तु (च न) चरामि ( करोमि ).

(१) भा. १२।१६१।४६ ; भामु. १२।१६७।४८ सर्वं ( तद्वै ) दिदं ( दहो ).

(२) भा. १२।१६१।४७ ; भामु. १२।१६७।४९ तोऽतिहे (तो हि हे) चक्रुरञ्जलीन् ( चक्रिरेऽञ्जलिम् ).

(३) भा. १२।१६८।२ ; भामु. १२।१७४।२ द्वितीयचरणे ( सत्यप्रेत्य तपःफलम् ).

वत्करणस्य धात्वर्थेनान्वयात् विद्यार्थत्वं कर्मणाम् । यद्वा सन्प्रत्ययस्य प्राधान्यात् ज्ञानेच्छैव कर्मसाध्या । यथोक्तम्– 'प्रत्यग्विविदिषां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥' इति । तथा 'यो वेदेदं मेऽनेनाङ्गं संस्क्रियते' इति स्मृतेश्चित्तशुद्ध्यर्थमेव कर्माणि– इति त्रेधा विभागः । तत्राऽऽद्यपक्षे विशिष्टगुर्वादिलाभो निष्प्रत्यूहं श्रवणादिसिद्धिश्च कर्मभिरेव जन्या; द्वितीये इच्छोत्पत्तिरेव कर्मफलम्, इतरत्तु यत्नान्तरसाध्यम्; तृतीये चित्तशुद्धिरेव कर्मफलम्, ज्ञानेच्छादिकं सर्वं यत्नान्तरसाध्यमिति विवेकः । एवं ज्ञानाद्यर्थमपि कृतात्कर्मणः 'तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इत्यापस्तम्बोक्ताम्रनिदर्शनादानुषङ्गिकं स्वर्गाद्यपि भवति । तथा स्वर्गार्थमपि कृतं तत् विशुद्धदेवतादिदेहोत्पादनद्वारा मोक्षाय भवति । यथाऽऽहुः– 'विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते पदम् ।' इति, 'भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ।' इति च । तथा दृष्टफलः पुत्रकामेष्ट्यादिरपि धर्मः सद्यः फलप्रदर्शनेन वैदिकधर्मे श्रद्धोत्पादनद्वारा श्रेयोहेतुरिति न धर्मक्रिया विफला । सर्वथाऽपि कृतो धर्मो मोक्षद एवेत्यर्थः । 'स्वर्ग्यः सत्यफलोदयः' इतिपाठे स्वर्गार्थे तैस्तैर्वाक्यैर्विहितोऽपि धर्मः सत्यम् अबाधितं फलं मोक्षाख्यम्, तदुदयाय भवति । 'विविदिषन्ति यज्ञेन' इत्यादिश्रुत्या संयोगपृथक्त्वन्यायेन 'दध्नेन्द्रियकामस्य जुहुयात्' इति वाक्यान्तरेण नित्यस्यापि दध्न इन्द्रियार्थत्वमिव स्वर्गाद्यर्थानामपि यज्ञादीनां विद्यार्थत्वमिष्टम् । केवलकाम्यस्यापि धर्मस्य परंपरया परमपुरुषार्थत्वमाह– बह्विति । पाठान्तरं तु नाऽऽदरणीयम् । नीटी.

धर्मः अविलम्बेनाऽऽचरणीयः

**[1]श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।**
**न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ।**

(१) भा. १२।१६९।१४ ; भामु. १२।१७५।१५ तं वाऽस्य (तमस्य) षष्ठचरणे (मृत्युकालो भविष्यति).

**को हि जानाति कस्याद्य मृत्युसेना निवेक्ष्यते ॥**
**[1]युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ।**
**कृते धर्मे भवेत्कीर्तिरिह प्रेत्य च वै सुखम् ॥**

अनित्यं खलु इत्यत्रानिमित्तमिति पाठे आयुरियत्तावधारणकारणहीनम् । नीटी.

अनिवार्यः शुभाशुभकर्मणां विपाकः

**भीष्म उवाच–**

**[2]आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।**
**स कर्म कलुषं कृत्वा क्लेशे महति धीयते ॥**

स्वभाववादे सर्वेषां भौतिकानामुत्पत्त्यादौ एकरूपैव सामग्री, तथा च ह्रस्वदीर्घसाध्वसाधुसुखदुःखादिवैचित्र्यं जगति दृश्यमानं नोपपद्यते, अतस्तत्रावश्यं कर्मजन्यमदृष्टं कारणमभ्युपेयमिति मत्वा 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन', 'बुद्धिः कर्मानुसारिणी' इति श्रुतिस्मृतिसिद्धं कर्मणः सदसत्प्रज्ञाहेतुत्वमाह– आत्मनेति । आत्मना बुद्ध्या । अनर्थः कामक्रोधादिः, तद्युक्तेन । कृच्छ्रे दुःखदे नरकादौ विधीयते भोक्तुमधिक्रियते । नीटी.

**[3]दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।**
**मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः ॥**

मृतेभ्यः मरणेभ्यः प्रमृतं मरणान्तरम् । अविलम्बेन पुनः पुनः म्रियन्त इत्यर्थः, 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि' (छाउ. ५। १०।८) इति श्रुतेः । नीटी.

**[4]उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।**
**श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ॥**

(१) भा. १२।१६९।१५ ; भामु. १२।१७५।१६ दनिमित्तं हि (दनित्यं खलु).

(२) भा. १२।१७४।२ ; भामु. १२।१८१।२ उत्तरार्धे (स्वकर्मकलुषं कृत्वा कृच्छ्रे लोके विधीयते ॥).

(३) भा. १२।१७४।३ ; भामु. १२।१८१।३.

(४) भा. १२।१७४।४ ; भामु. १२।१८१।४ ; चत्र. १३ दान्ता (शान्ता).

[1]व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥

हस्तौ अवाप्येते प्रवेश्येते यस्मिन्निति हस्तावापः हस्तनिगडः, तेन निगडिताः सन्तो नास्तिकाः राष्ट्राद्दूरीकृताः व्यालादिमत्सु वनेषु गच्छन्ति, निगडितहस्तत्वाच्च व्यालादीन्वारयितुमशक्ताः अत्यन्तमुद्वेगं प्राप्नुवन्तीत्यर्थः । व्यालः दुष्टगजः । नीटी.

प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम् ॥

आतिथेयम् अतिथिहितं मृष्टान्नदानादि । आत्मवतां जितचित्तानां योगिनां मार्गं देवयानम् । हस्तदक्षिणं हस्तोपलक्षितेन तत्कर्तव्येन दानादिना कर्मणा दक्षिणम् अनुकूलम् । नीटी.

[2]पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥

पुलाकाः गर्तोष्मणा भक्तसिक्थवन्नष्टबीजभावाः, पूतिधान्यमिति यावत् । पुत्तिकाः मशकाः । कारणं सुखादिहेतुः । नीटी.

[3]सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येन येन यथा कृतम् ॥

शुभप्रज्ञाहेतुरपि धर्म एव चेत्तत्र प्रवृत्तिरपि पूर्वकर्मायत्तेति किं पुरुषकारेणेत्याशङ्क्याऽऽह– सुशीघ्रमिति । विधानं प्राक्कर्म धावन्तं यतमानम् अनुधावति फलप्रदानेनानुसरति । अन्वयमुक्त्वा व्यतिरेकमाह– शेते इति । येन येन यथा कृतं तं तं प्रति तथा प्राक्कर्म फलदमफलदं च भवति । नीटी.

[1]स्वकर्मफलविक्षिप्तं विधानपरिरक्षितम् ।
भूतग्राममिमं कालः समन्तात्परिकर्षति ॥

स्वकर्मणः फलं स्वर्गपश्वादि, तदेव निक्षेपरूपं विधानेन कर्मजन्यादृष्टेन रक्षितं गौणकर्मीभूतं भूतग्रामं प्रति कालः समनुकर्षति । नीटी.

[2]अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥

[3]यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥

तपः पापनाशकम्

समुन्नमग्रतो वस्त्रं पश्चाच्छुध्यति कर्मणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥

समुन्नं जलेन क्लिन्नम् । 'उन्दी क्लेदने', अस्य निष्ठायां रूपम् । संयुक्तमिति पाठे मलेनेति शेषः । संस्विन्नमिति पाठे स्वेदेन मलिनम् । कर्मणा क्षालनेन । उपवासः विषयत्यागः । अनन्तकं सुखं मोक्षः । नीटी.

[4]दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः ॥

मनोरथाः ज्ञानलाभविषयाः । नीटी.

[5]अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥

उपालम्भैः आक्षेपवाक्यैः, व्यतिक्रमैः अपराधैः अलम् उक्तैः पर्याप्तम्, सद्वासनोदयात्साध्वी प्रज्ञा समुदेतीति भावः । नीटी.

---

(१) भा. १२।१७४।५–६ ; भासु. १२।१८१।५–६.

(२) भा. १२।१७४।७ ; भासु. १२।१८१।७ ध्येषु ( ध्याणां ).

(३) भा. १२।१७४।८ ; भासु. १२।१८१।८.

(१) भा. १२।१७४।११ ; भासु. १२।१८१।११ विक्षिप्तं ( निक्षेपं ).

(२) भा. १२।१७४।१२ ; भासु. १२।१८१।१२ स्वकालं ( स्वं कालं ).

(३) भा. १२।१७४।१६–१७ ; भासु. १२।१८१।१६–१७.

(४) भा. १२।१७४।१८ ; भासु. १२।१८१।१८ संसिध्यन्ते ( संपद्यन्ते ).

(५) भा. १२।१७४।२० ; भासु. १२।१८१।२०.

सुखदुःखमीमांसा

**भृगुरुवाच–**

**[1]सत्यं ब्रह्म तपः सत्यं सत्यं सृजति च प्रजाः ।**
**सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति ॥**

शुक्लो ब्राह्मणधर्मः कृष्णः शूद्रधर्म इति प्रागुक्तम् । तत्र शुक्लकृष्णयोः स्वरूपे विविनक्ति– सत्यमिति । सत्यं सत्यवस्तुप्रापकम् । ब्रह्म वेदः । तपः स्वधर्मानुष्ठानम् । सत्येन ब्रह्मतपोरूपेण । नीटी.

**[2]अनृतं तमसो रूपं तमसा नीयते ह्यधः ।**
**तमोग्रस्ता न पश्यन्ति प्रकाशं तमसाऽऽवृतम् ॥**

अनृतं तद्विपरीतमवैदिकं यथेष्टाचरणम् । प्रकाशं स्वर्गम् । तमः अविद्यादिरूपो विपर्ययः, तेन ग्रस्ताः । तमसा मूलाशनेन । नीटी.

**[3]स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च ।**
**सत्यानृतात्तदुभयं प्राप्यते जगतीचरैः ॥**

स्वर्गः देवत्वं प्रकाशः सत्त्वप्राप्यः । नरकं तिर्यक्त्वं तमोगुणेन । सत्यानृतं मानुषत्वं तदुभयमिश्रणेन । नीटी.

**[4]तत्र त्वेवंविधा वृत्तिर्लोके सत्यानृता भवेत् ।**
**धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा ॥**

सत्यानृते इति धर्माधर्मौ प्रकाशतमसी सुखदुःखे इति संबन्धः । नीटी.

**[5]तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाशो यः प्रकाशस्तत्सुखमिति । तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमिति ॥**

(१) भा. १२।१८३।१ ; भामु. १२।१९०।१ सृजति च (विसृजते).

(२) भा. १२।१८३।२ ; भामु. १२।१९०।२ साऽऽवृतम् (साऽऽवृताः).

(३) भा. १२।१८३।३ ; भामु. १२।१९०।३ तात्तदु (तं तदु).

(४) भा. १२।१८३।४ ; भामु. १२।१९०।४ तत्र त्वेवं (तत्राप्येवं) वृत्तिर्लोके (लोके वृत्तिः) नृता (नृते).

(५) भा. १२।१८३।५–७ ; भामु. १२।१९०।५–७.

श्लोकं व्याचष्टे– तत्रेति । नीटी.

**अत्रोच्यते–**

**शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः ।**
**लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः ॥**
**तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः ।**
**सुखं ह्यनित्यं भूतानामिहलोके परत्र च ॥**

भूतानां संसारिणां यत्सुखं पुत्रपरिष्वङ्गादिजं तत् अनित्यम्, अतः सुखार्थं न यतेत, किंतु दुःखस्यौपाधिकस्य विमोक्षार्थमेव यतेत । नीटी.

**[1]राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते ।**
**तथा तमोभिभूतानां भूतानां भ्रश्यते सुखम् ॥**

तत्किं नित्यं सुखं नास्त्येव ? इत्याशङ्क्य सदपि न प्रकाशत इति सदृष्टान्तमाह– राह्विति । नश्यते अन्तर्हितं भवति । नीटी.

**[2]तत्खलु द्विविधं सुखमुच्यते शारीरं मानसं च । इह खल्वमुष्मिंश्च लोके सर्वारम्भप्रवृत्तयः सुखार्था अभिधीयन्ते । न ह्यतस्त्रिवर्गफलं विशिष्टतरमस्ति । स एष काम्यो गुणविशेषो धर्मार्थयोरारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजना ॥**

प्रवृत्तयः दृष्टादृष्टफलाः अभिधीयन्ते वेदे । न ह्यतः त्रिवर्गफलात् परम् । स एव अनित्यसुखमेव आत्मगुणविशेषस्तार्किकाभिमतः । धर्मार्थौ गुणभूतौ यस्य प्रधानभूतस्य सुखस्य तदर्थम् आरम्भ आरम्यत इति व्युत्पत्त्या धर्मादिः । अनुष्ठेय इति शेषः । यतः तद्धेतुः धर्महेतुः अस्य सुखस्य उत्पत्तिः अभिव्यक्तिः । आरम्भस्त्रिवर्गस्य । राहुग्रस्तेन्दुप्रकाशवत् सतोऽपि तमसा

(१) भा. १२।१८३।८ ; भामु. १२।१९०।८ भ्रश्यते (नश्यते).

(२) भा. १२।१८३।९ ; भामु. १२।१९०।९ सर्वारम्भ...सुखप्रयोजना (वस्तुप्रवृत्तयः सुखार्थमभिधीयन्ते । न ह्यतः परं त्रिवर्गफलं विशिष्टतरमस्ति । स एव काम्यो गुणविशेषो धर्मार्थगुणारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्थं आरम्भः ).

अप्रकाशमानस्य सुखस्य अभिव्यक्तये सर्वोऽप्यारम्भ इत्यर्थः। नीटी.

भरद्वाज उवाच–

[1]यदेतद्भवताऽभिहितं सुखानां परमाः स्त्रिय इति तन्न गृह्णीमः ॥

[2]न ह्येषामृषीणां महति स्थितानामप्राप्य एष गुणविशेषो न चैनमभिलषन्ति ॥

[3]श्रूयते च भगवांस्त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति ॥

[4]ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति ॥

अपि च भगवान्विश्वेश्वर उमापतिः काममभिवर्तमानमनङ्गत्वेन शममनयत् ॥

[5]तस्माद्ब्रूमो न महात्मभिरयं प्रतिगृहीतो न त्वेष तावद्विशिष्टो गुण इति नैतद्भगवतः प्रत्येमि ॥

[6]भगवता तूक्तं सुखानां परमाः स्त्रिय इति ॥

[7]लोकप्रवादोऽपि च भवति द्विविधः फलोदयः सुकृतात्सुखमवाप्यते दुष्कृताद्दुःखमिति ॥

(१) भा. १२।१८३।१० (१); भामु. १२।१९०।१० (१) परमाः स्त्रिय...गृह्णीमः (परमा स्थितिरिति न तदुपगृह्णीमः).

(२) भा. १२।१८३।१० (२); भामु. १२।१९०।१० (२) एष (एष काम्यो) लषन्ति + (च तपसि).

(३) भा. १२।१८३।१० (३); भामु. १२।१९०।१० (३) (च भगवान्०).

(४) भा. १२।१८३।१० (४–५); भामु. १२।१९०।१० (४–५).

(५) भा. १२।१८३।१० (६); भामु. १२।१९०।१० (६) न (न तु) न त्वेष (न त्वेषां) गुण (गुणविशेष).

(६) भा. १२।१८३।१० (७); भामु. १२।१९०।१० (७) सुखानां परमाः स्त्रिय इति (सुखान्न परमस्तीति).

(७) भा. १२।१८३।१० (८); भामु. १२।१९०।१० (८) दोऽपि च भवति (दो हि).

[1]अत्रोच्यताम् ॥

सुखार्थं आरम्भ इत्यत्र शङ्कते– यदेतदिति। सुखानां परमा स्थितिः नित्यं सत्त्वम्। सुखान्न परमस्तीति पाठान्तरम्। नोपगृह्णीमः, नित्यसुखस्यानुपलम्भात्। अनित्यस्य सुखस्य तुच्छत्वमाह– न हीति। महति योगैश्वर्ये। नीटी.

भृगुरुवाच–

[2]अनृतात्खलु तमः प्रादुर्भूतं तमोग्रस्ता अधर्ममेवानुवर्तन्ते न धर्मम् ॥

[3]क्रोधलोभमोहमानानृतादिभिरवच्छन्ना न खल्वस्मिँल्लोके न चामुत्र सुखमाप्नुवन्ति ॥

[4]विविधव्याधिगणोपतापैरवकीर्यन्ते ॥

[5]वधबन्धरोगपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते ॥

[6]चण्डवातात्युष्णातिशीतकृतैश्च प्रतिभयैः शारीरैर्दुःखैरुपतप्यन्ते ॥

[7]बन्धुधनविनाशविप्रयोगकृतैश्च मानसैः शोकैरभिभूयन्ते जरामृत्युकृतैश्चान्यैरिति ॥

(१) भा. १२।१८३।१० (९); भामु. १२।१९०।११ (अत्रोच्यते).

(२) भा. १२।१८३।११ (१); भामु. १२।१९०।११ (१) अनृतात्खलु...तमोग्रस्ता (अनृतात्खलु तमः प्रादुर्भूतं ततस्तमोग्रस्ता).

(३) भा. १२।१८३।११ (२); भामु. १२।१९०।११ (२) मोहमानानृता (हिंसानृता) न चामुत्र (नामुत्र).

(४) भा. १२।१८३।११ (३); भामु. १२।१९०।११ (३) गणोप (रुजोप).

(५) भा. १२।१८३।११ (४); भामु. १२।१९०।११ (४) बन्धरोग (बन्धन).

(६) भा. १२।१८३।११ (५); भामु. १२।१९०।११ (५) चण्ड (वर्ष).

(७) भा. १२।१८३।११ (६); भामु. १२।१९०।११ (६).

नित्यस्य सुखस्यानुपलम्भे हेतुमुपन्यस्यन्निराकरोति– अत्रोच्यते इत्यादिना । अनृतात् सत्त्वासत्त्वाभ्यामनिर्वचनीयादज्ञानात् तमः अविद्या अनित्याशुचिदुःखरूपेषु देहादिषु नित्यत्वशुचित्वसुखत्वबुद्धिरूपो विपर्यासः । नीटी.

[1]**यस्त्वेतैः शारीरैर्मानसैर्दुःखैर्न स्पृश्यते स सुखं वेद ॥**

[2]**न चैते दोषाः स्वर्गे प्रादुर्भवन्ति ॥**

[3]**तत्र भवति खलु ॥**

अस्य विपर्यासस्याभावे नित्यं सुखं प्रकाशत इत्याह– यस्त्वेतैरिति । एतदेव स्वर्गपदाभिधेयमित्याह– न चैत इत्यादिना । तस्मात्स्वर्गार्थिनां प्रवृत्तिः सुखार्थैवेति युक्तमुक्तम् ' सुखान्न परमस्ति ' इति । नीटी.

[4]**सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा ।**
**क्षुत्पिपासाश्रमो नास्ति न जरा न च पापकम् ॥**

[5]**नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम् ।**
**नरके दुःखमेवाऽऽहुः समं तु परमं पदम् ॥**

[6]**पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः ।**
**पुमान्प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ॥**

ऐहिकं सुखं तुच्छीकृत्य यथा स्वर्गार्थे सर्वे बुद्धिमन्तः प्रवर्तन्ते एवं स्वर्गमपि क्षयिष्णुत्वेन तुच्छीकृत्य बुद्धिमत्तरा मोक्षसुखार्थे यतन्त इत्याह– पृथिवीति । सर्वभूतानां जनित्री अविद्या पृथिवीव पृथिवी सर्वेषां क्लेशानां क्षेत्रभूता यथाऽत्रानुभूयते तद्विधाः अनन्तक्लेशसंततिक्षेत्रभूताः तत्र स्वर्गे स्त्रियः सन्ति । यथाऽत्र पुमानविद्यावाननेकक्लेशभाजनं तथा तत्र प्रजापतिः, तस्यापि ' सोऽबिभेत् ' ( बृउ. १।४।२ ), ' स नारमत ' ( मैउ. २।६ ), ' प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् ' ( ऐब्रा. १३।९ ), ' तस्य रुद्रः शिरोऽहरत् ' ' मधुकैटभौ तं हन्तुमुद्यतौ ', ' यक्षराक्षसास्तं यभितुमुद्यताः ' इत्यादिश्रुतिस्मृतिभिः ( तस्यापि ? ) भयारत्यादिप्रतिपादनात् । एतावांस्तु विशेषः– अत्र शुक्रं जन्मान्तरबीजं वासनाजालं पुण्यापुण्यमयम्, तत्र तु तेजोमयं केवलं पुण्यमयमिति । एवं च निरुपाधिसुखमेव परमः पुरुषार्थः, न स्वर्ग इति साधयता मोक्षस्य निर्विषयसुखात्मत्वमुक्तम् । नीटी.

[1]**इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा ।**
**प्रजा विपरिवर्तन्ते स्वैः स्वैः कर्मभिरावृताः ॥**

**भृगुरुवाच–**

[2]**हुतेन शाम्यते पापं स्वाध्याये शान्तिरुत्तमा ।**
**दानेन भोग इत्याहुस्तपसा सर्वमाप्नुयात् ॥**

शान्तिः उपरतिः । नीटी.

[3]**दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च ।**
**सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठति ॥**

[4]**असत्सु दीयते यत्तु तद्दानमिह भुज्यते ।**
**यादृशं दीयते दानं तादृशं फलमाप्यते ॥**

**भृगुरुवाच–**

[5]**स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः ।**
**तेषां धर्मफलावाप्तिर्योऽन्यथा स विमुह्यति ॥**

---

(१) भा. १२।१८३।१२ (१) ; भामु. १२।१९०।१२ (१) रैर्मा (रमा) स्पृश्य (संस्पृश्य).

(२) भा. १२।१८३।१२ (२) ; भामु. १२।१९०।१२ (२).

(३) भा. १२।१८३।१२ (३) ; भामु. १२।१९०।१२ (३).

(४) भा. १२।१८३।१३ ; भामु. १२।१९०।१३.

(५) भा. १२।१८३।१४ ; भामु. १२।१९०।१४ समं तु (सुखं तत्).

(६) भा. १२।१८३।१५ ; भामु. १२।१९०।१५.

(१) भा. १२।१८३।१६ ; भामु. १२।१९०।१६ जा विपरि (जाः समनु).

(२) भा. १२।१८४।२ ; भामु. १२।१९१।२ ये शा (यैः शा) भोग इ (भोगानि) सर्वं (स्वर्ग).

(३) भा. १२।१८४।३ ; भामु. १२।१९१।३ तिष्ठति (तिष्ठते).

(४) भा. १२।१८४।४ ; भामु. १२।१९१।४ असत्सु (असद्भ्यो) माप्यते (मश्नुते).

(५) भा. १२।१८४।६ ; भामु. १२।१९१।६ स्वधर्म (स्वधर्मा) धर्म (स्वर्ग) मुह्यति (मुह्यते).

स्वधर्मः वर्णाश्रमनियतधर्मः, तस्याऽऽचरणे युक्ताः अवहिताः। यः अन्यथा विपरीताचारः स मुह्यते। नीटी.

[1]**कर्मभूमिरियं लोक इह कृत्वा शुभाशुभम्।**
**शुभैः शुभमवाप्नोति कृत्वाऽशुभमतोऽन्यथा ॥**

प्रच्छन्नं कृतं पापं देवानां कर्तुश्च ज्ञानविषयः

[2]**हृदयं पापवृत्तानां पापमाख्याति वैकृतम्।**
**ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥**

आर्यवृत्तं सेव्यमित्युक्तम्, तच्चाभिवादनादिरूपं दम्भेनापि कर्तुं शक्यमिति कथमार्यत्वनिश्चयः ? तत्राऽऽह– हृदयमिति। वैकृतं नेत्रादिविकारः पापं हृदयमाख्याति। यथोक्तम्– 'नेत्रवक्त्रविकारेण ज्ञायतेऽन्तर्गतं मनः।' इति। गूहमानाः पापम्। नीटी.

[3]**ज्ञानपूर्वं कृतं पापं छादयन्त्यबहुश्रुताः।**
**नैनं मनुष्याः पश्यन्ति पश्यन्ति त्रिदिवौकसः ॥**

पापं कर्म धर्मो वा अवश्यं कर्तृगामिफलदः

[4]**पापेन हि कृतं पापं पापमेवानुवर्तते।**
**धार्मिकेण कृतो धर्मः कर्तारमनुवर्तते ॥**

पापं पापिनम्। पापं प्रकाशनीयम्, धर्मस्तु गोपनीय इत्यर्थः। नीटी.

[5]**पापं कृतं न स्मरतीह मूढो**
**विवर्तमानस्य तदेति कर्तुः।**
**राहुर्यथा चन्द्रमुपैति चापि**
**तथाऽबुधं पापमुपैति कर्म ॥**

निवर्तमानस्य अशास्त्रस्थस्य। अबुधमिति छेदः। नीटी.

(१) भा. १२।१८५।१९; भाम्. १२।१९२।१९ चतुर्थचरणे (तथाऽशुभमथान्यथा).

(२) भा. १२।१८६।२५; भाम्. १२।१९३।२६.

(३) भा. १२।१८६।२६; भाम्. १२।१९३।२७ पूर्वं कृ (पूर्वकृ) न्त्यबहुश्रुताः (त्यबहुश्रुतः) न्ति त्रि (न्त्येव).

(४) भा. १२।१८६।२७; भाम्. १२।१९३।२८ न हि कृतं (नापिहितं) र्मः कर्तारम (र्मो धर्ममेवा) (धर्मेणापिहितो धर्मो धर्ममेवानुवर्तते।) इति द्वितीयमर्धमधिकम्.

(५) भा. १२।१८६।२८; भाम्. १२।१९३।२९.

एकेनासहायेन कर्तव्यः सर्वभूतहितो मानसो धर्मः

[1]**मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः।**
**तस्मात्सर्वेषु भूतेषु मनसा शिवमाचरेत् ॥**

मानसं मनोनिर्वर्त्यम्। मनसा शिवमित्यस्य सर्वभूतेभ्योऽभयं दद्यादित्यर्थः। नीटी.

**एक एव चरेद्धर्मं नास्ति धर्मे सहायता।**
**केवलं विधिमासाद्य सहायः किं करिष्यति ॥**

धर्मं ध्यानयोगम्। ननु 'सहोभौ चरतां धर्मम्' इति विधेर्दम्पत्योरग्निहोत्रादिधर्मो विहितः, तत्कथमुच्यते एक एवेति ? इत्याशङ्क्याऽऽह– नास्ति धर्मे सहायतेति। स्त्र्यादेरिति शेषः। का तर्हि विधेर्गतिः ? इत्यत आह– केवलमिति। मनसि धर्मशून्ये बाह्यसहायो विधिप्राप्तोऽप्यनर्थक इत्यर्थः। यथोक्तम्– 'मनसैव कृतं राम न शरीरकृतं कृतम्। येनैवाऽऽलिङ्ग्यते कान्ता तेनैवाऽऽलिङ्ग्यते सुता ॥' इति। तस्मात् स्त्र्यादिसापेक्षं धर्ममनादृत्य मानसिके योगधर्मे एव मनो दध्यादिति भावः। नीटी.

[2]**देवा योनिर्मनुष्याणां देवानाममृतं दिवि।**
**प्रेत्यभावे सुखं धर्माच्छश्वत्तैरुपभुज्यते ॥**

एतमेव स्तौति– धर्म इति। योनिः उत्पत्तिप्रलयस्थानम्। देवत्वमनुष्यत्वादिप्रापको धर्म इत्यर्थः। तेषामेव देवमनुष्याणां दिवि हार्दाकाशाख्ये ब्रह्मलोके अमृतं कैवल्यकारणं धर्म एव। तथा प्रेत्यभावे अपूर्वदेहप्राप्तौ धर्मादेव सुखं तैः धर्मकर्तृभिः (उपभुज्यते)। नीटी.

धर्मो द्विविधः प्रवृत्तिः निवृत्तिश्च

**ब्राह्मण उवाच–**

[3]**द्विविधा ब्राह्मणा राजन्धर्मश्च द्विविधः स्मृतः।**
**प्रवृत्तश्च निवृत्तश्च ... ... ... ... ॥**

(१) भा. १२।१८६।३०–३१; भाम्. १२।१९३।३१–३२.

(२) भा. १२।१८६।३२; भाम्. १२।१९३।३३ देवा (धर्मो).

(३) भा. १२।१९२।३९; भाम्. १२।१९९।४० तश्च (ताश्च).

निवृत्तिलक्षणो ज्ञानतत्त्वपरो धर्मः परमः

गुरुरुवाच–

(१)न स वेद परं धर्मं यो न वेद चतुष्टयम् ।
व्यक्ताव्यक्ते च यत्तत्त्वं संप्राप्तं परमर्षिणा ॥

उक्तं वक्ष्यमाणं च साधनजातं समुच्चिनोति– न स इति । धर्ममिति पाठे 'अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ।' (यास्मृ. १।८) इति याज्ञवल्क्योक्तलक्षणं धर्मम् । चतुष्टयं पूर्वोक्तं दृष्टान्तभूतं स्वप्नसुषुप्त्याख्यं द्वयं दार्ष्टान्तिकं च सगुणनिर्गुणब्रह्मभावाख्यं द्वयमिति चतुष्टयम् । व्यक्तं दृश्यम् अव्यक्तं चिदात्मा यत्तत्त्वम् अनारोपितं रूपं यस्य तत् । परमर्षिणा नारायणेन । नीटी.

(२)व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम् ।
प्रवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ॥

व्यक्ताव्यक्तयोस्तत्त्वं स्वरूपतः फलतश्चाऽऽह द्वाभ्याम्– व्यक्तमिति । ऋषिः वेदः, स एव नारायणवाक्यत्वान्नारायणः । नीटी.

(३)अत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् ।
निवृत्तिलक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ॥

ब्रह्माण्डाधिपत्यान्तं सर्वं कर्मफलान्तर्भूतमित्यर्थः । निवृत्तिः देहेन्द्रियाद्यहंकारान्तानां बाधः, तल्लक्षणो धर्मस्तु ब्रह्मैव । नीटी.

(४)प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् ।
प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ॥

प्रजापतिः स्रष्टा, रजोमयत्वात् । नीटी.

तां गतिं परमामेति निवृत्तिपरमो मुनिः ।
ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ॥

(१) भा. १२।२१०।१ ; भामु. १२।२१७।१ धर्मं (ब्रह्म) व्यक्ते (व्यक्तं) संप्राप्तं (संप्रोक्तं).

(२) भा. १२।२१०।२ ; भामु. १२।२१७।२.

(३) भा. १२।२१०।३ ; भामु. १२।२१७।३ अत्रै (तत्रै).

(४) भा. १२।२१०।४–५ ; भामु. १२।२१७।४–५.

ताम् 'एषोऽस्य परम आनन्द एषाऽस्य परमा संपत्' (बृउ. ४।३।३२) इति श्रुतिप्रसिद्धां कैवल्यावस्थाम् । शुभाशुभे मुक्तिसंसारौ निश्चयेन द्रष्टुमिच्छन् । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (पासू. ३।३।१०) इति ण्वुल् । ज्ञानतत्त्वं चिदात्मतत्त्वम्, तद्विचारपरो नित्यं स्यात् । नीटी.

धर्मस्याज्ञानं संसारकारणम्

(१)धर्मं करोमीति करोत्यधर्म-
मधर्मकामश्च करोति धर्मम् ।
उभे बालः कर्मणी न प्रजान-
न्स जायते म्रियते चापि देही ॥

ज्ञानपूर्वकं कृतं कर्म सिद्धिदम्, दैवपौरुषस्वभाववादाः

व्यास उवाच–

(२)एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानवानेव कर्माणि कुर्वन् सर्वत्र सिध्यति ॥

आत्मज्ञानं विना कर्मापि कृतमन्तवदेव भवति, 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके यजति ददाति तपस्तप्यतेऽपि बहूनि वर्षसहस्राण्यन्तवदेवास्य भवति' इति श्रुतेः ; अतः आत्मानं जिज्ञास्यं ज्ञात्वा तत्प्राप्त्यर्थं कर्माणि कुर्वीत, 'विविदिषन्ति यज्ञेन' इत्यादिश्रुतेरित्याह– एषेति । वृत्तिः वर्तनम् । पूर्वतरा नित्या, 'एष नित्यो महिमा ब्राह्मणस्य' इति श्रुतेः । नीटी.

(३)तत्र चेन्न भवेदेवं संशयः कर्मनिश्चये ।
किं नु कर्म स्वभावोऽयं ज्ञानं कर्मेति वा पुनः ॥

तत्र कर्मणि संशयश्चेन्न भवेत्तर्हि कर्म कृतं सत् सिद्धये भवति । संशयस्वरूपं विवृणोति– किं स्विति । किं कर्म स्वभावः नित्यमेव, उत ज्ञानं ज्ञानजनकत्वेन कर्म काम्यं

(१) भा. १२।२२७।३१ ; भामु. १२।२३५।३२ भे बालः (भेऽबलः).

(२) भा. १२।२३०।१ ; भामु. १२।२३८।१.

(३) भा. १२।२३०।२ ; भामु. १२।२३८।२ निश्चये (सिद्धये) किं नु कर्म स्व (किंतु कर्मस्व).

वा ? इत्यर्थः । नित्यं चेन्न काम्यं स्यात्, काम्यं चेन्न तदकरणे प्रत्यवायः स्यादिति भावः । नीटी.

**[1]तत्र चेह विवित्सा स्याज्ज्ञानं चेत्पुरुषं प्रति ।
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥**

तत्र तस्मिन्संशये सति पुरुषं प्रति ब्रह्मोद्देशेन ज्ञानं ज्ञानजनकं चेत् कर्म स्यात्तर्हि स एव वेदविधिः नित्यविधिरपि स्यात् । आत्मविविदिषार्थैरपि कर्मभिर्नित्यप्रयोगस्यापि सिद्धिरस्तीत्यर्थः । अत्र हेतुद्वयम्— उपपत्तेरुपलब्धेश्चेति । यथा काम्योऽपि दारसंग्रहः क्रत्वर्थोऽपि भवति, न हि कामार्थमन्या स्त्री क्रत्वर्थमन्या स्त्री परिणेयेत्युपपद्यते । उपलभ्यते च संयोगपृथक्त्वन्यायेन नित्यस्यापि खादिरत्वादेः काम्यत्वम्, तच्चोदाहृतम् । तत् कर्मणामुभयार्थत्वेन प्राधान्यं वर्णयिष्याम्यहं त्वं च शृणु । नीटी.

**[2]पौरुषं कारणं केचिदाहुः कर्मसु मानवाः ।
दैवमेके प्रशंसन्ति स्वभावं चापरे जनाः ॥**

स्वभाववादनिरासमुपक्रान्तमुपसंहरिष्यन् मतान्तराण्युपन्यस्यति— केचिदिति । पौरुषम् इह जन्मनि (कृतं कर्म) जन्मान्तरे वा कृतं कर्म दैवम्, ग्रहाः काल इति यावत् । स्वभावः स्वरूपमात्रम् । नीटी.

**[3]पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रयमेतत्पृथग्भूतमविवेकं तु केचन ॥**

इति क्रमेण मीमांसकस्य दैवज्ञस्य शून्यवादिलोकायतयोश्च मतान्युपन्यस्यैतेषां विकल्पसमुच्चयावाह— पौरुषमिति । पौरुषं दैवं च कर्म दृष्टादृष्टयत्नः । स्वभावमनुसृत्य कर्मकालौ फलदावित्यर्थः । अविवेकं समुच्चयम् । पृथग्भूतम् एकमेव प्रधानम्, न त्वितरावित्यर्थः । नीटी.

(१) भा. १२।२३०।३ ; भामु. १२।२३८।३ चेह विवित्सा (वेदविधिः स).

(२) भा. १२।२३०।४ ; भामु. १२।२३८।४ वं चापरे (वमपरे).

(३) भा. १२।२३०।५ ; भामु. १२।२३८।५ फल (काल).

**[1]एवमेतच्च वाप्येवमुभे चापि न चाप्युभे ।
कर्मस्था विषमं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥**

आर्हतमतमाह— एतदिति । तर्हि स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यः, स्यादवक्तव्य इति सप्तभङ्गीनयः सर्वत्र योज्यते । अत एतदेवमिति स्यादस्तीत्युक्तम् । चात् एतन्न, एवं च नेति संबन्धेन स्यान्नास्ति, स्यादवक्तव्य इति चोक्तम् । न चोभे इत्यनेन स्यादस्ति च नास्ति च, स्यादस्ति च नास्ति चावक्तव्य इति चोक्तम् । नानुभे इति स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्य इति चोक्तम् । कर्मस्थाः आर्हताः विषयं घटादिम् एतदेवमस्तीत्यादि ब्रूयुरिति संबन्धः । एतेषु पक्षेषु कृतहानाकृताभ्यागमप्रसङ्गात्स्वभावमात्रपक्षस्तुच्छः । बन्धमोक्षादिवस्तुमात्रस्वरूपस्यास्ति नास्तीत्यादिविकल्पग्रस्तत्वेनानवधारणात्मक आर्हतपक्षोऽपि तुच्छ एव । परिशेषात्समुच्चयपक्ष एव श्रेयान् व्यवहारे, परमार्थस्तु सत्त्वस्थाः योगिनः समदर्शिनः ब्रह्मैव कारणत्वेन पश्यन्ति । नीटी.

प्रवृत्तिधर्मो बन्धकारणं निवृत्तिधर्मश्च मोक्षकारणम्

शुक उवाच—

**[2]यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥**

समाप्ता ब्रह्मविद्या । तस्याः कर्मभिः समं समुच्चयं खण्डयति— यदिदमिति । 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।' इति, 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति कर्मकरणत्यागविधी परस्परविरोधादेककार्यकारित्वमलभमानौ विसदृशकार्याकृत्वं प्रतिपद्येते, अतः पृच्छति— कामिति । नीटी.

(१) भा. १२।२३०।६ ; भामु. १२।२३८।६ पूर्वार्धे (एतदेवं च नैवं च न चोभे नानुभे तथा ।) विषमं (विषयं).

(२) भा. १२।२३३।१ ; भामु. १२।२४१।१.

[1]एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे ।
एतत्त्वन्योन्यवैरूप्ये वर्तेते प्रतिकूलतः ॥

भीष्म उवाच—

[2]इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ॥

क्षराक्षरौ नश्वरानश्वरौ, मार्गाविति शेषः । नीटी.

[3]यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ॥

गह्वरम् आकाशमिवानन्तम् । एतदन्तरम् एतयोरन्तरम् । नीटी.

[4]अस्ति धर्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिदं मम भवेदथ ॥

आस्तिकनास्तिकयोरिव पृच्छ्यमानं तारतम्यं यथाऽऽस्तिकस्य क्लेशावहं तद्वदेतन्ममेत्यर्थः । नीटी.

[5]द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च सुभाषितः ॥

निवृत्तौ आत्मदर्शने च धर्मः सुभाषितः आत्यन्तिको धर्मः स उक्तः ' अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् । ' इति । नीटी.

[6]कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

[7]कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ॥

षोडशात्मकः देहः प्रेत्य मृत्वा पुनर्जायते उत्पद्यते, विद्यया नित्यम् अव्यक्तं द्वैतभिन्नं जायते आविर्भवति । नीटी.

[1]कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।
तेन ते देहजालानि रमयन्त उपासते ॥

रमयन्तः स्त्र्यादीन् रञ्जयन्तः तद्वासनावासिताः देहशतानि प्राप्नुवन्ति । नीटी.

[2]ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥

[3]कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥

चातुराश्रम्यं ब्रह्मलोकप्राप्तिसाधनम्

[4]वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च ।
कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ॥

कुरु कर्म , त्यजेति श्रुत्योः एतत् एतम् अविरोधं च कथं विजानीयां विषयविभागेन विविच्य कथं जानीयाम् ? नीटी.

शुक उवाच—

[5]यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥

' बुद्धिं कृत्वाऽऽत्मानं द्रक्ष्यामि' ( भामु. १२।२४२। ४ ) इति स्वाभिप्रायं द्रढयितुं पृच्छति— यदिदमिति । कुरु कर्म, त्यजेति वाक्यद्वयमपि प्रमाणं चेद्विरुद्धयोर्वाक्य-

---

(१) भा. १२।२३३।२ ; भामु. १२।२४१।२ एतत्त्व (एतच्चा) वर्तेते (वर्तेते).

(२) भा. १२।२३३।३ ; भामु. १२।२४१।३.

(३) भा. १२।२३३।४ ; भामु. १२।२४१।४ नाः पुत्र (ना वत्स).

(४) भा. १२।२३३।५ ; भामु. १२।२४१।५ वेदथ (वेद्यथा).

(५) भा. १२।२३३।६ ; भामु. १२।२४१।६.

(६) भा. १२।२३३।७ ; भामु. १२।२४१।७ ; अप. ३।२०५ पृ. १०३०–१०३१ तु (च).

(७) भा. १२।२३३।८ ; भामु. १२।२४१।८ व्ययो (व्यक्तं) यात्मकः (यात्मकम्) ; अप. ३।२०५ पृ. १०३१.

(१) भा. १२।२३३।९ ; भामु. १२।२४१।९ तरा (रता) ; अप. ३।२०५ पृ. १०३१ जालानि (जातानि).

(२) भा. १२।२३३।१० ; भामु. १२।२४१।१० तु ( स्म ) ; अप. ३।३०५ पृ. १०३१ बुद्धिं परां (बुद्धिपथं) नैपुण्य (नैपुण).

(३) भा. १२।२३३।११ ; भामु. १२।२४१।११ ; अप. ३।२०५ पृ. १०३१ कर्मणः (कर्मणा).

(४) भा. १२।२३४।३ ; भामु. १२।२४२।३.

(५) भा. १२।२३४।१० ; भामु. १२।२४२।१० चाप्र (वाप्र).

योरशास्त्रत्वम्, अप्रमाणं चेत्सुतरामशास्त्रत्वम्, अतोऽनयोः शास्त्रयोः प्रामाण्यसिद्ध्यर्थं व्यवस्था वक्तव्येत्याशयः। नीटी.

[1]इत्येतच्छ्रोतुमिच्छामि भगवान्प्रब्रवीतु मे।
कर्मणामविरोधेन कथमेतत्प्रवर्तते॥

भीष्म उवाच–

[2]इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम्।
ऋषिस्तत्पूजयन्वाक्यं पुत्रस्यामिततेजसः॥

तत् वाक्यम् 'कृत्वा बुद्धिं विमुक्तात्मा द्रक्ष्याम्यात्मानमात्मनि।' (भामु. १२।२४२।४) इति कर्मणां चित्तसंस्कारार्थत्ववचनं पूजयन् सिद्धान्तत्वेन मानयन् चातुराश्रम्यधर्मानेव गन्धवत्याः योजनगन्धायाः सुतः व्यासः उवाच। नीटी.

[3]गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।
यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम्॥

परमां गतिं मोक्षम्। तेन समुच्चितानामसमुच्चितानां वा आश्रमधर्माणां तत्त्वजिज्ञासाहेतुत्वमुक्तम्। नीटी.

[4]एको य आश्रमानेताननुतिष्ठेद्यथाविधि।
अकामद्वेषसंयुक्तः स परत्र महीयते॥

परत्र ब्रह्मणि विषये विधीयते ज्ञातुं योग्यः क्रियते। नीटी.

[5]चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता।
एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते॥

(१) भा. १२।२३४।११; भामु. १२।२४२।११ द्वितीयचरणे (प्रमाणं तूभयं कथम्) कथमेतत्प्र (कथं मोक्षः प्र).

(२) भा. १२।२३४।१२; भामु. १२।२४२।१२.

(३) भा. १२।२३४।१३; भामु. १२।२४२।१३ प्रथमचरणे (ब्रह्मचारी गृहस्थश्च) कारिणः (चारिणः).

(४) भा. १२।२३४।१४; भामु. १२।२४२।१४ य आ (वाऽप्या) ननु (न्योऽनु) मही (विधी).

(५) भा. १२।२३४।१५; भामु. १२।२४२।१५ माश्रित्य (मारुह्य).

चतुष्पदी चातुराश्रम्यरूपा। नीटी.

चत्वारि धर्मप्रमाणानि, इह लोकयात्राकरो धर्मः उभयत्र हितप्रदः

युधिष्ठिर उवाच–

[1]इमे वै मानवाः सर्वे धर्मं प्रति विशङ्किताः।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह॥

एवं प्राणिनां कर्माधीनो मृत्युव्याधिसंबन्धः संतत इति ज्ञात्वा तन्निवृत्तिं धर्ममूलां मन्वानो धर्मतत्त्वेऽप्यार्यजनम्लेच्छागमानां नानापथत्वेन संदिहानो धर्मस्वरूपं लक्षणप्रमाणाभ्यां जिज्ञासमानः पृच्छति– इमे वै इति। नीटी.

[2]धर्मो न्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत्।
उभयार्थोऽपि वा धर्मस्तन्मे ब्रूहि पितामह॥

भीष्म उवाच–

[3]सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम्।
चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम्॥

तत्र 'चोदनालक्षणोऽर्थो धर्मः' इति स्मृतेर्मुख्यं धर्मस्य लक्षणं वेद एव, इतरदपि तन्मूलतया धर्मलक्षणम्, न स्वतः इति सिद्धं पूर्वतन्त्रे। कवयः विद्वांसः अर्थं प्रयोजनमेव धर्मलक्षणमाहुः। यथोक्तम्– 'परिनिर्मथ्य वाग्जालमिदमेव सुनिश्चितम्। नोपकारात्परं पुण्यं नापकारादघं परम्॥' इति। अधर्मलक्षणमपकार इत्यपि प्रश्लेषेण ध्येयम्। नीटी.

[4]अपि ह्युक्तानि कर्माणि व्यवस्यन्त्युत्तरावरे।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः।
उभयत्र सुखोदर्क इह चैव परत्र च॥

एतदेव विवृणोति– अपीति। धर्म्याणि धर्माय हितानि कर्माणि उत्तरावरे व्यवस्यन्ति न्यूनाधिकभावेन

(१) भा. १२।२५१।१; भामु. १२।२५९।१.

(२) भा. १२।२५१।२; भामु. १२।२५९।२ र्मो न्वय (र्मस्त्वय) र्थोऽपि (र्थो हि).

(३) भा. १२।२५१।३; भामु. १२।२५९।३.

(४) भा. १२।२५१।४; भामु. १२।२५९।४–५ कर्माणि (धर्म्याणि).

विपरीतं च निश्चिन्वन्ति । तथा हि– गार्हस्थ्येऽपि मोक्षोऽस्ति, अलसाः संन्यासमिच्छन्ति; त्यागेनैव मोक्षः, विषयलम्पटा गार्हस्थ्यमिच्छन्तीति । कस्तत्रात्र निर्णयः ? इत्याशङ्क्याऽऽह– लोकेति । लोकव्यवहारमनुरुध्यायं नियमः कृतः, यथा अविक्षिप्तचित्तस्य पुरुषधौरेयस्य गार्हस्थ्येऽपि जनकवसिष्ठादिवन्मोक्षोऽस्ति, अन्यस्य वेदान्तश्रवणादौ दृष्टविक्षेपनिवृत्त्यर्थः संन्यास इति । इह वा परत्रोभयत्र वा धर्मः फलतीति प्रश्नस्योत्तरमाह– उभयत्रेति । नीटी.

**[1]अलब्ध्वा निपुणं धर्मं पापः पापे प्रसज्जति ।
न च पापकृतः पापान्मुच्यन्ते केचिदापदि ॥**
**[2]अपापवादी भवति यदा भवति धर्मवित् ।
धर्मस्य निष्ठा स्वाचारस्तमेवाऽऽश्रित्य भोत्स्यसे ॥**

नैपुण्यमेवाऽऽह– न चेति । केचिदित्याहुरिति शेषः । आपदि तु यथा पापवाद्यपि अपापवादी भवति, अधर्मकृदपि धर्मकृद्भवति । तथैवोक्तमापद्धर्मेषु कर्णपर्वणि वा युधिष्ठिरं जिघांसोरर्जुनस्य बोधाय भगवता सत्यवादिनोऽहिंस्रस्य चाऽऽख्यानमुक्तं तदिहानुसंधेयम् । भोत्स्यसे ज्ञास्यसि । नीटी.

**[3]यदाऽधर्मसमाविष्टो धनं गृह्णाति तस्करः ।
रमते निर्हरन्स्तेनः परवित्तमराजके ॥**

पुरुषः परपापमेव पश्यति, प्रकाशयति, न च स्वीयमिति सदृष्टान्तमाह– यथेति त्रिभिः । नीटी.

**[4]यदाऽस्य तद्धरन्त्यन्ये तदा राजानमिच्छति ।
तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ॥**

**अभीतः शुचिरभ्येति राजद्वारमशङ्कितः ।
न हि दुश्चरितं किंचिदन्तरात्मनि पश्यति ॥
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥**

यद्यप्येवं तथापि सत्यमेव श्रेय इत्याह– सत्यस्येति । नीटी.

**[1]अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक्पृथक् ।
अद्रोहमविसंवादं प्रवर्तन्ते तदाश्रयाः ।
ते चेन्मिथोऽधृतिं कुर्युर्विनश्येयुरसंशयम् ॥**

पापिनामपि सत्यमत्याज्यमित्याह सार्धेन– अपीति । सत्यं शपथम् । अधृतिं समयत्यागम् । नीटी.

**[2]न हर्तव्यं परधनमिति धर्मः सनातनः ।
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्तितम् ।
यदा नियतिदौर्बल्यमथैषामेव रोचते ॥**

तं पूर्वोक्तं धर्मम् । नियतिदौर्बल्यं दैवप्रातिकूल्यम् । तदा त्वेषामेव स धर्मो रोचते । नीटी.

**[3]न ह्यत्यन्तं बलयुता भवन्ति सुखिनोऽपि वा ।
तस्मादनार्जवे बुद्धिर्न कार्या ते कथंचन ॥**

रुचौ हेत्वन्तरमाह– न हीति । उपसंहरति– तस्मादिति । अनार्जवे कौटिल्ये । नीटी.

**[4]असाधुभ्योऽस्य न भयं न चोरेभ्यो न राजतः ।
न किंचित्कस्यचित्कुर्वन्निर्भयः शुचिरावसेत् ॥**
**[5]सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान् ।
बहुधाऽऽचरितं पापमन्यत्रैवानुपश्यति ॥**

(१) भा. १२।२५१।५ ; भामु. १२।२५९।५–६ पापे प्रसज्जति (पापेन युज्यते).

(२) भा. १२।२५१।६ ; भामु. १२।२५९।६ यदा (यथा) वित् (कृत्) स्वाचार (त्वाचार).

(३) भा. १२।२५१।७ ; भामु. १२।२५९।७ यदाऽध (यथा ध).

(४) भा. १२।२५१।८–१० ; भामु. १२।२५९।८–१०.

(१) भा १२।२५१।११; भामु. १२।२५९।११–१२.

(२) भा. १२।२५१।१२ ; भामु. १२।२५९।१२–१३.

(३) भा. १२।२५१।१३ ; भामु. १२।२५९।१४ युता (वन्तो) कथंचन (कदाचन).

(४) भा. १२।२५१।१४ ; भामु. १२।२५९।१५ चोरे (चौरे) न किंचि (अकिंचि).

(५) भा. १२।२५१।१५–१९ ; भामु. १२।२५९।१६–२०.

मृग इव आचरितं स्वेन । शठः परमपि शठं मन्यते इत्यर्थः । नीटी.

**मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा ।**
**न हि दुश्चरितं किंचिदात्मनोऽन्येषु पश्यति ॥**
**दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।**
**तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥**
**यदा नियतिकार्पण्यमथैषामेव रोचते ।**
**न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा ॥**

उक्तन्यायमन्यत्राप्यतिदिशति– दातव्यमिति । कृपणैः निर्धनैः । नीटी.

**यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।**
**न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥**

सामान्यतो धर्मलक्षणमाह– यदन्यैरिति । नीटी.

[1]**योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ।**
**यदन्यस्तस्य तत्कुर्यान्न मृष्येदिति मे मतिः ॥**

अन्यस्य भार्यायामिति शेषः । उपपतिः जारः कं किं वक्तुमर्हति ? स्वस्यैव दुष्टत्वात् । यत् यदि अन्यस्य अन्यं ततः तस्मिन्नेव औपपत्ये विषये कुर्यात् दृग्गोचरीकुर्यात् तदा न मृष्येदिति योजना । अन्यस्येति द्वितीयार्थे षष्ठी । नीटी.

[2]**जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् ।**
**यद्यदात्मन इच्छेत तत्परस्यापि चिन्तयेत् ॥**
[3]**अतिरिक्तैः संविभजेद्भोगैरन्यानकिंचनान् ।**
**एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् ॥**

अतिरिक्तैः आवश्यकाधिकैः भोगैः भोगसाधनैर्धनादिभिः । कुसीदं वृद्ध्यर्थं धनप्रयोगः । स दीनपोषणार्थमेव कार्यः, न धनमात्रवृद्ध्यर्थम् । नीटी.

(१) भा. १२।२५१।२० ; भामु. १२।२५९।२१ न्यस्तस्य तत् (न्यस्य ततः).

(२) भा. १२।२५१।२१ ; भामु. १२।२५९।२२ न इ (नि चे).

(३) भा. १२।२५१।२२ ; भामु. १२।२५९।२३.

[1]**यस्मिंस्तु देवाः समये संतिष्ठेरंस्तथा भवेत् ।**
**अथ चेल्लाभसमये स्थितिर्धर्मेऽपि शोभना ॥**

समये सन्मार्गे संतिष्ठेरन् संमुखा भवेयुः तथा तन्मार्गाचरणशीलः दमदानदयापरः भवेदित्यर्थः । तत्र दाने विशेषमाह– अथचेति । धर्मे यज्ञदानादौ । नीटी.

[2]**सर्वं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः ।**
**पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥**

प्रियेण साम्ना, न तु हिंसया, अभ्युपगतं प्राप्तं प्रियाभ्युपगतम् । पश्य आलोचय लक्षणोद्देशं लक्षणकीर्तनम् एवं ' यदात्मनः प्रियं तदन्येषु कर्तव्यम्, यन्न तन्न ' इत्येवंविधम् । नीटी.

**लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ।**
**सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् ॥**

दयाप्रधानमित्यर्थः । सूक्ष्मधर्मार्थे सूक्ष्मधर्मलाभाय । नियतं नियमितम् । नीटी.

[3]**धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम ।**
**तस्मादनार्जवे बुद्धिर्न कार्या ते कथंचन ॥**

अनार्जवे कौटिल्ये । नीटी.

सदाचारो धर्मः इतिधर्मलक्षणस्य अनुपपन्नता

**युधिष्ठिर उवाच–**

‡[4]**सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम् ।**
**प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ॥**

‡ अस्याध्यायस्य टीका धर्मप्रमाणविचारप्रकरणे (वका. पृ. ७५) संगृहीतेऽस्मिन्नध्याये द्रष्टव्या ।

(१) भा. १२।२५१।२३ ; भामु. १२।२५९।२४ चेल्लाभ (वा लाभ).

(२) भा. १२।२५१।२४–२५ ; भामु. १२।२५९।२५–२६.

(३) भा. १२।२५१।२६ ; भामु. १२।२५९।२७ कार्या ते (ते कार्या).

(४) भा. १२।२५२।१–२० ; भामु. १२।२६०।१–२० अस्याध्यायस्य पाठभेदाः धर्मप्रमाणविचारप्रकरणे ( वका. पृ. ७५ ) इत्यत्र द्रष्टव्याः ।

भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया ।
इममन्यं प्रवक्ष्यामि न राजन्विग्रहादिव ॥
इमानि हि प्रापयन्ति सृजन्त्युत्तारयन्ति च ।
न धर्मः परिपाठेन शक्यो भारत वेदितुम् ॥
अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ।
आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ॥
सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः ।
साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणम् ॥
दृश्यते धर्मरूपेण अधर्मं प्राकृतश्चरन् ।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥
पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः ।
वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतम् ॥
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्तिकृता इव ॥
आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ।
आम्नायेभ्यः परं वेदाः प्रसृता विश्वतोमुखाः ॥
ते चेत्सर्वे प्रमाणं वै प्रमाणं तन्न विद्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
या या विक्रियते संस्था ततः साऽपि प्रणश्यति ॥
विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा ।
अणीयान्क्षुरधाराया गरीयान्पर्वतादपि ॥
गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ।
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ॥
निपानानीव गोभ्याशे क्षेत्रे कुल्येव भारत ।
स्मृतोऽपि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥
कामादन्ये क्षयादन्ये कारणैरपरैस्तथा ।
असन्तो हि वृथाचारं भजन्ते बहवोऽपरे ॥
धर्मो भवति स क्षिप्रं विलीनस्त्वेव साधुषु ।
अन्ये तानाहुरुन्मत्तानपि चावहसन्त्युत ॥
महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः ।
न हि सर्वहितः कश्चिदाचारः संप्रदृश्यते ॥
तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः ।
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया ॥
येनैवान्यः प्रभवति सोऽपरानपि बाधते ।
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् ॥
चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।
तेनाऽऽचारेण पूर्वेण संस्था भवति शाश्वती ॥

सर्वभूताभयप्रदः परो धर्मः

भीष्म उवाच–

'अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
तुलाधारस्य वाक्यानि धर्मे जाजलिना सह ॥[1]

अत्र सुखादिव्यवस्थायां स्वभाव एव नियामक उत धर्म इति विमर्शे तुलाधारवाक्यानि धर्मे प्रमाणत्वेनोदाहरन्तीत्यर्थः । नीटी.

तुलाधार उवाच–

'वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥[2]

धर्मरहस्यमेवाऽऽह– सर्वभूतहितमिति । नीटी.

'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥[3]

अल्पद्रोहेण आपदि वा, 'नानुपहत्य भूतानि भोगः संभवति' इति न्यायेनाद्रोहेण वृत्त्यसंभवाद्वा । नीटी.

परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम् ।
अलक्तं पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा ॥

अलक्तं लाक्षारससारम् । पद्मकं तुङ्गं च काष्ठविशेषौ । कस्तूर्यादीन् गन्धान् । नीटी.

'रसांश्च तांस्तान्विप्रर्षे मद्यवर्जानहं बहून् ।
क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया ॥[4]

रसान् लवणादीन् । क्रीत्वैव, न तु स्वयमुत्पाद्य । नीटी.

---

(१) भा. १२।२५३।१ ; भामु. १२।२६१।१.
(२) भा. १२।२५४।५ ; भामु. १२।२६२।५.
(३) भा. १२।२५४।६–७ ; भामु. १२।२६२।६–७.
(४) भा. १२।२५४।८ ; भामु. १२।२६२।८ द्वितीयचरणे ( मद्यवर्ज्यान्बहूनहम् ).

[1]सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥

ननु 'लाक्षालवणमांसानि पतनीयानि विक्रये ।' (यास्मृ. ३।४०) इति लाक्षादिविक्रये दोषस्मृतेस्तद्वतः कथं धार्मिकत्वमित्याशङ्कयाऽऽह– सर्वेषामिति । अयमर्थः– लोके हि उपकारिणं प्रत्युपकुर्वन्ति, अद्रोहिणे न द्रुह्यन्ति चेत्युत्सर्गः । तत्सामान्यादैहिकौ उपकारापकारौ जन्मान्तरेऽपि सुखदुःखप्रदानाय प्रभवतः, न त्वाकस्मिकं कस्यचित्सुखं दुःखं वाऽस्ति जन्मान्तरीयं कारणं विनेत्यनुमीयते । अतः स्वभाववादस्तावदयुक्त एव । श्रुत्यादीनां धर्मे प्रामाण्यमपि वक्ष्यमाणरीत्या युज्यत एवेति । नीटी.

[2]नाहं परेषां कर्माणि प्रशंसामि शपामि वा ।
आकाशस्येव विप्रर्षे पश्यँल्लोकस्य चित्रताम् ॥

आकाशस्य अभ्रपटलस्य चित्रतां विविधाकारत्वम् । नीटी.

[3]नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये ।
समोऽस्मि सर्वभूतेषु पश्य मे जाजले व्रतम् ॥

[4]इष्टानिष्टविमुक्तस्य प्रीतिरागबहिष्कृतः ।
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ॥

[5]इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समं मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनम् ॥

[6]यथाऽन्धबधिरोन्मत्ता उच्छ्वासपरमाः सदा ।
देवैरपिहितद्वाराः सोपमा पश्यतो मम ॥

(१) भा. १२।२५४।९ ; भामु. १२।२६२।९.

(२) भा. १२।२५४।१० ; भामु. १२।२६२।११ कर्माणि (कृत्यानि) शपामि वा (न गर्हये) विप्रर्षे (विप्रेन्द्र).

(३) भा. १२।२५४।११ ; भामु. १२।२६२।१० मोऽस्मि (मोऽहं).

(४) भा. १२।२५४।१२ ; भामु. १२।२६२।१० उत्त.

(५) भा. १२।२५४।१३ ; भामु. १२।२६२।१२ लोष्टा (लोष्ठा).

(६) भा. १२।२५४।१४–१५ ; भामु. १२।२६२। १३–१४.

अपिहितद्वाराः आच्छादितेन्द्रियगोलकाः । नीटी.

यथा वृद्धातुरकृशा निःस्पृहा विषयान्प्रति ।
तथाऽर्थकामभोगेषु ममापि विगता स्पृहा ॥

[1]यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि तदा सिध्यति वै द्विजः ॥

[2]यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥

[3]न भूतो न भविष्यश्च न च धर्मोऽस्ति कश्चन ।
योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम् ॥

[4]यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव ।
वाक्क्रूराद्दण्डपारुष्यात्स प्राप्नोति महद्भयम् ॥

विपक्षे दोषमाह– यस्मादिति । नीटी.

[5]यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम् ॥

'मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः' (ऋसं. ८।३०।३)' इति मन्त्रलिङ्गात्कुलाचारस्य प्रामाण्यं गम्यते, तदप्यस्माकमस्तीत्याह– यथावदिति । अहिंस्राणामिति हिंसामयः कुलाचारोऽप्यप्रमाणमित्युक्तम् । मन्त्रार्थस्तु– पित्र्यात् पित्रादिसंसेवितात् मानवात् मनुर्मन्त्रस्तत्प्रकाशितात् वेदाविरुद्धादित्यर्थः । पथः मार्गात् नः अस्मान् दूरं मा नैष्ट नयत । परावतः बह्वायुष्मतोऽस्मानिति । नीटी.

[6]प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः ।
तेन वैद्यस्तपस्वी वा बलवान्वा विमोह्यते ॥

(१) भा. १२।२५४।१६ ; भामु. १२।२६२।१५ चतुर्थचरणे (ब्रह्म संपद्यते तदा).

(२) भा. १२।२५४।१७ ; भामु. १२।२६२।१६.

(३) भा. १२।२५४।१८ ; भामु. १२।२६२।१७ भ्यश्च (भ्योऽस्ति).

(४) भा. १२।२५४।१९ ; भामु. १२।२६२।१८ पारुष्या (परुषा).

(५) भा. १२।२५४।२० ; भामु. १२।२६२।१९.

(६) भा. १२।२५४।२१ ; भामु. १२।२६२।२० मोह्य (मुह्य).

शिष्टाचारं प्रमाणयति– प्रनष्ट इति द्वाभ्याम् । शाश्वतः शश्वद्भवः परंपरया वेदमूलकत्वादनादिः धर्मः शिष्टाचारः, स प्रनष्टः यतः सदाचारेण क्वचिदंशे विरुद्धेन मोहितः मोहं प्रापितः, यथा 'अवर्त्या शुन आन्त्राणि पेचे' (ऋग्वे. ४।१८।१३), 'यः पूजयितुं पितृदेवमनुष्यान्पेच आन्त्राणि शुनः' इति श्रुतिस्मृतिभ्यां वामदेवस्य श्रेष्ठतमस्यापि बीभत्स आचार आपदि श्वमांसभक्षणरूपः प्रदर्शितः, पुराणे वा ऋषभादीनां महायोगिनामाचारं दृष्ट्वा आर्हतादयो मोहिताः पाषण्डमार्गमनुगता इत्युक्तम् । तेन मोहरूपेण कारणेन वेद्यः विद्यावान् तपस्वी जितेन्द्रियः बलवान् जितकामक्रोधः सोऽपि विमुह्यते । विमुच्यते इति पाठे तेन सदाचारेणेत्यर्थः । अयं भावः– 'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धनाशे समुत्पन्ने सर्वं त्यजति दुर्मतिः ॥' इति न्यायेन मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति स्वभाववादं चानुरुध्यन्ते । बुद्धास्तु श्रुत्यन्तरविरुद्धं विरुद्धांशमात्रं त्यक्त्वा तेनैव सदाचारेण मुच्यन्त इति । नीटी.

[1]आचाराज्ज्ञाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ।
एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा ॥

एतदेवाऽऽह– आचारादिति । धर्मं मोक्षोपयोगिनमधिकारम् । उपसंहरति– एवमिति । साधुभिश्चीर्णं धर्मं यश्चरेत्स धर्ममाप्नुयादित्यन्वयः । नीटी.

[2]नद्यां यथा चेह काष्ठमुह्यमानं यदृच्छया ।
यदृच्छयैव काष्ठेन संधिं गच्छेत केनचित् ॥

नदीप्रवाहेण काष्ठानामिव कर्मप्रवाहेण पितृपुत्रादीनां संयोगवियोगावित्याशयः । नीटी.

[3]तत्रापराणि दारूणि संसृज्यन्ते ततस्ततः ।
तृणकाष्ठकरीषाणि कदाचिन्नसमीक्षया ।

एवमेवायमाचारः प्रादुर्भूतो यतस्ततः ॥
[1]यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन ।
अभयं सर्वभूतेभ्यः स प्राप्नोति सदा मुने ॥

लोकस्य कर्माधीनत्वात् सुखार्थी न कंचिदुद्वेजयेदित्याह– यस्मादिति । एतत्फलमाह– अभयमिति । नीटी.

¶यस्मादुद्विजते विद्वन्सर्वलोको वृकादिव ।
क्रोशतस्तीरमासाद्य यथा सर्वे जलेचराः ॥

विपक्षे दोषमाह– यस्मादिति । वृकः हिंस्रपशुः । दृष्टान्ते वडवाग्निः । नीटी.

[2]सहायवान्द्रव्यवान्यः सुभगोऽन्योऽपरस्तथा ।
ततस्तानेव कवयः शास्त्रेषु प्रवदन्त्युत ।
कीर्त्यर्थमल्पहृल्लेखाः पटवः कृत्स्ननिर्णयाः ॥

$ अयं अभयदानलक्षणः यतस्ततः सर्वोपायसाध्यः सहायादिसाध्यो बन्दीमोचनादिरूपः सुभगः ऐश्वर्यहेतुः परः परलोकहेतुश्च । ततः अभयदानात् तान् सहायादियुक्तान् प्रवदन्ति प्रकृष्टान्वदन्ति । ते च यदि अल्पहृल्लेखाः अल्पं बाह्यसुखं हृदि लेखेन प्रतिष्ठितं येषां

(१) भा. १२।२५४।२२ ; भामु. १२।२६२।२१.

(२) भा. १२।२५४।२३ ; भामु. १२।२६२।२२ यथा चेह (चेह यथा).

(३) भा. १२।२५४।२४ ; भामु. १२।२६२।२३ ततस्ततः (परस्परम्) न्नसमी (न्न समी) तृतीयार्धं तु भामु.पुस्तके २६ श्लोकस्य पूर्वार्धत्वेनोपलभ्यते ।

¶ श्लोकोऽयं साकाङ्क्षार्थः । 'यस्मात्' इत्यस्य पुरुषपरत्वे प्रतिनिर्देशकतच्छब्दघटितवाक्याभावात् साकाङ्क्षता, हेतुपरत्वेऽपि हेतुमतोऽनुक्तेः साकाङ्क्षता । अत एव टीकाभिप्रेतो विपक्षे दोषोऽत्र न प्रतीयते । अत एकत्रिंशश्लोकोत्तरार्धवत् दोषपरमत्रत्यं किंचिदर्धमुच्छिन्नं स्यादिति संभाव्यते । किंच, टीकायां 'दृष्टान्ते वडवाग्निः' इत्युक्तेः 'वृकः हिंस्रपशुः' इत्यत्र 'दार्ष्टान्तिके' इति शेषः प्रतीयते । न स युज्यते, इवशब्दप्रयोगात् हिंस्रपशुपरस्यापि वृकशब्दस्य दृष्टान्तघटकत्वात् ।

$ 'एवमेवायमाचारः प्रादुर्भूतो यतस्ततः' इति भामुपाठे षड्विंशश्लोकस्य पूर्वार्धं भापाठे चतुर्विंशस्य तृतीयार्धत्वेन पूर्वं गतम्, तदनुरोधेनेदं व्याख्यानम् ।

(१) भा. १२।२५४।२५–२६ ; भामु. १२।२६२।२४–२५.

(२) भा. १२।२५४।२७ ; भामु. १२।२६२।२६–२७ न्योऽपर (थ पर).

ते बहिर्मुखाः कीर्त्यर्थमभयदानं कुर्युः, ये पटवः कुशलाः कृत्स्नं ब्रह्म तन्मूलक एव तदर्थमेवाभयदानमिति निर्णयो येषाम्। अभयदानं सर्वेषां संमतमित्यर्थः। नीटी.

[1]**तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा।**
**प्राप्नोत्यभयदानस्य यद्यत्फलमिहाश्नुते॥**

तपआदिभिर्यद्यत् फलमश्नुते तत् अभयदानस्य अभयदानेन प्राप्नोति। नीटी.

**लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम्।**
**स सर्वयज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम्।**
**न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन॥**

एतदेव प्रशंसति— लोके इत्यादिना। नीटी.

**यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन।**
**सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने॥**

[2]**यस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव।**
**न स धर्ममवाप्नोति इह लोके परत्र च॥**

[3]**सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः।**
**देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः॥**

अभयदानस्य पार्यन्तिकं फलमाह— सर्वेति। सर्वेषां भूतानाम् आत्मभूतस्य प्रत्यगात्मनः (इति) 'आत्मा ह्येषां स भवति' (बृउ. १।४।१०) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृउ. २।४।१४) इत्यादिश्रुतिप्रसिद्धा निर्विकल्पकावस्था उक्ता, 'सर्वभूतानि पश्यतः' इति 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृउ. २।४।५) इति श्रुतिप्रसिद्धसार्वज्ञ्यफला सविकल्पावस्था उक्ता। अत एवास्य विभुत्वेन गगनस्येव गत्यभावाद्देवा अपि, संधिरार्षः, मार्गे मुह्यन्ति। पदं ब्रह्मलोकादि, तद्रहितस्य पदैषिणो देवाः। नीटी.

(१) भा. १२।२५४।२८–३०; भामु. १२।२६२।२८–३०.

(२) भा. १२।२५४।३१; भामु. १२।२६२।३१ इह लो (इहलो).

(३) भा. १२।२५४।३२; भामु. १२।२६२।३२ सम्यग्भू (सर्वभू).

[1]**दानं भूताभयस्याऽऽहुः सर्वदानेभ्य उत्तमम्।**
**ब्रवीमि ते सत्यमिदं श्रद्दधस्व च जाजले॥**

अभयदानश्रैष्ठ्यमुपसंहरति— दानमिति। नीटी.

**स एव सुभगो भूत्वा पुनर्भवति दुर्भगः।**
**व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा॥**

अस्यैव स्तुत्यर्थं काम्यं कर्म क्षयिष्णुत्वेन निन्दति— स एवेति। सुभगः स्वर्गी। व्यापत्तिं नाशम्। कर्मणां कर्मफलानां स्वर्गादीनाम्। नीटी.

[2]**अकारणो हि नेहास्ति धर्मः सूक्ष्मोऽपि जाजले।**
**भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम्॥**

अकारणः कारणम् अनुष्ठानप्रयोजकं फलं तद्धीनः। सूक्ष्मः अभयदानात्मकः। भूतं ब्रह्म, भव्यं स्वर्गादि, उभयार्थमेव धर्माणां शमादीनां यज्ञादीनां च प्रवचनम् अध्ययनं वेदे कृतम्। अतः स्थूलधर्माद्यज्ञादेरन्यः सूक्ष्मधर्मोऽस्तीति भावः। नीटी.

[3]**सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः।**
**उपलभ्यान्तरा चान्यानाचारानवबुध्यते॥**

कुतः सूक्ष्मधर्मो दुर्ज्ञेयः? यतो बहुनिह्नवः। 'सप्तदश प्राजापत्यान् पशूनालभते सप्तदशः प्रजापतिः प्रजापतेराप्त्या' इत्यादिविधयः श्रेयःसाधनत्वेन हिंसामुपदिशन्तोऽहिंसाशास्त्रमुपमृद्नन्तीत्यर्थः। तर्हि तदप्रमाणमेवेत्याशङ्क्याऽऽह— उपलभ्येति। 'उक्षाणं वा वेहतं वा क्षदन्ते' 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।' (यास्मृ. १।१०९) इति श्रुतिस्मृतिविहितो मधुपर्के गवालम्भ एक आचारः; 'मा गामनागामदितिं वधिष्ट' (ऋसं. ८।१०१।१५) इति मन्त्रलिङ्गावगतो

(१) भा. १२।२५४।३३–३४; भामु. १२।२६२।३३–३४.

(२) भा. १२।२५४।३५; भामु. १२।२६२।३५ नेहा (नैवा) क्ष्मोऽपि (क्ष्मो हि).

(३) भा. १२।२५४।३६–३७; भामु. १२।२६२।३६–३७.

गवोत्सर्गविधिस्तद्विरुद्धोऽन्य आचारः । तत्रानागामिति विशेषणात् क्रत्वर्थहिंसाविधिर्व्यायानिति गम्यते, अनागस्त्वस्य प्राजापत्यपशुष्वपि तुल्यत्वादित्यास्तां तावत् । नीटी.

ये च छिन्दन्ति वृषणान्ये च भिन्दन्ति नस्तकान् ।
वहन्ति महतो भारान्बध्नन्ति दमयन्ति च ॥

यदुक्तमलक्तपद्मकादीन्यपण्यानि विक्रीणासीति, तत्राऽऽह– ये चेति । नस्तकान् नासागर्भान् वहन्ति वाहयन्ति । नीटी.

[1]हत्वा सत्त्वानि खादन्ति तान्कथं न विगर्हसे ।
मानुषा मानुषानेव दासभोगेन भुञ्जते ॥
[2]वधबन्धविरोधेन कारयन्ति दिवानिशम् ।
आत्मना चापि जानासि यद्दुःखं वधताडने ॥
[3]पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम् ।
आदित्यश्चन्द्रमा वायुर्ब्रह्मा प्राणः क्रतुर्यमः ॥
[4]तानि जीवानि विक्रीय का मृतेषु विचारणा ॥
[5]अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्वत्सश्च सोमो वै विक्रीयैतन्न सिध्यति ॥
[6]का तैले का घृते ब्रह्मन्मधुन्यप्स्वौषधेषु वा ॥
[7]अदंशमशके देशे सुखं संवर्धितान्पशून् ।
तांश्च मातुः प्रियाञ्जानन्नाक्रम्य बहुधा नराः ।
बहुदंशाकुशान्देशान्नयन्ति बहुकर्दमान् ॥

(१) भा. १२।२५४।३८ ; भामु. १२।२६२।३८ भोगेन (भावेन).

(२) भा. १२।२५४।३९ ; भामु. १२।२६२।३९ विरो (निरो) ना चापि (नश्चापि) जानासि (जानाति) ताडने (बन्धने).

(३) भा. १२।२५४।४० ; भामु. १२।२६२।४०.

(४) भा. १२।२५४।४१ ; भामु. १२।२६२।४१.

(५) भामु. १२।२६२।४१–४२.

(६) भा. १२।२५४।४१ ; भामु. १२।२६२।४२ प्स्वौष (प्यौष).

(७) भा. १२।२५४।४२ ; भामु. १२।२६२।४३–४४ सुखं सं (सुखसं) शकुशान् (शाकुलान्).

[1]बाहुसंपीडिता धुर्याः सीदन्त्यविधिनाऽपरे ।
न मन्ये भ्रूणहत्याऽपि विशिष्टा तेन कर्मणा ॥

अविधिना क्रत्वर्थाऽपि हिंसा दोषावहा, किमुताक्रत्वर्था ? इत्यर्थः । एतदेवाऽऽह– न मन्ये इति । नीटी.

[2]कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ।
तथैवानडुहो युक्तान्समवेक्षस्व जाजले ॥

भूमिशयान् सर्पादीन् । अयोमुखं काष्ठं लाङ्गलम् । नीटी.

[3]अघ्न्या इति गवां नाम क एनान्हन्तुमर्हति ।
महच्चकाराकुशलं वृषभो गाऽऽलभन्निव ॥

'आप्यायध्वमघ्न्या देवभागम्' (तैसं. १।१।१।१) इति श्रुतिप्रसिद्धमघ्न्यां इति गवां नाम । न हन्तुं शक्या अघ्न्या इति योगात् गवामवध्यत्वं श्रौतमित्यर्थः । चकार कृतवान् । आलभेत् हिंस्यात् । 'वृषभो गां लभन्निव' इति पाठे गां गोजातीयां वृषभः बाणः लभन् स्पृशन्निव व्याघ्रभ्रान्त्या विसृष्टो बाणो गवि पतितः, न तु गवि विसृष्ट इत्यर्थः । नीटी.

[4]ऋषयो यतयो ह्येतन्नहुषे प्रत्यवेदयन् ।
गां मातरं चाप्यवधीर्वृषभं च प्रजापतिम् ।
अकार्यं नहुषाकार्षीर्लप्स्यामस्त्वत्कृते भयम् ॥
[5]शतं चैकं च रोगाणां सर्वभूतेष्वपातयन् ।
ऋषयस्ते महाभागाः प्रजास्वेव हि जाजले ।
भ्रूणहं नहुषं त्वाहुर्न ते होष्यामहे हविः ॥

(१) भा. १२।२५४।४३ ; भामु. १२।२६२।४४–४५ नाऽपरे (ना परे).

(२) भा. १२।२५४।४४ ; भामु. १२।२६२।४५–४६.

(३) भा. १२।२५४।४५ ; भामु. १२।२६२।४७ एनान् (एता) चतुर्थचरणे (वृषं गां वाऽऽलभेत्तु यः).

(४) भा. १२।२५४।४६ ; भामु. १२।२६२।४८–४९ भयम् (व्यथाम्).

(५) भा. १२।२५४।४७ ; भामु. १२।२६२।४९–५०.

यथा इन्द्रस्य ब्रह्महत्या नार्यादिषु रजआदिरूपेण क्षिप्ता एवं नहुषकृता गोवृषहत्या सर्वभूतेष्वेकाधिकशतरोगरूपेण क्षिप्तेत्यर्थः । ' ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥ ' इति स्मृतेर्गवां ब्राह्मणेन सह समानवंशत्वात् गोघ्नोऽपि भ्रूणहैवेत्यर्थः । नीटी.

**'इत्युक्त्वा ते महात्मानः सर्वे तत्त्वार्थदर्शिनः ।**
**ऋषयो यतयः शान्तास्तरसा प्रत्यवेदयन् ॥**

एवमुक्त्वाऽपि तपसा ध्यानेन तं प्रत्यवेदयन् प्रतीपम् अवेदयन् हन्तारमपि धीपूर्वम् अहन्तारं नहुषं ध्यानबलेन ज्ञात्वा तथैव लोकेऽपि प्रमादात्कृतोऽपि गोवधो व्याधिरूपेण सर्वलोकापकारायाभूत्, किमुत बुद्धिपूर्वं कृतः ? इति ज्ञापितवन्त इत्यर्थः । नीटी.

**'ईदृशानशिवान्घोरानाचारानिह जाजले ।**
**केवलाचरितत्वात्तु निपुणान्नावबुध्यसे ॥**

केवलेति । मधुपर्कादौ गवाद्यालम्भः पूर्वैः कृत इत्यन्धपरम्परामात्रात्करोषि, न तु तत्त्वबुद्ध्या । नीटी.

**'कारणाद्धर्ममन्विच्छेन्न लोकचरितं चरेत् ।**
**यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले ॥**

कारणात् हेतुतः येन भूतानामभयं स धर्म इति जानीयात्, न गतानुगतिकः स्यादित्यर्थः । नीटी.

**'समौ तावपि मे स्यातां न हि मे स्तः प्रियाप्रिये ।**
**एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः ॥**

प्रियाप्रियं हर्षविषादौ । तौ हि हिंसायां प्रवर्तयतः । तथा चाऽऽपस्तम्बः– ' हृष्टो दृप्यति । दृप्तो धर्ममतिक्रामति । धर्मातिक्रमान्नश्यति ' ( आध. १।१३।४ ) इति, ' क्रुद्धो हन्यात्पितृनपि ' इति । तस्मात्सर्वभूताभयप्रदानमेव महान् धर्म इत्याशयः । नीटी.

**'उपपत्त्या हि संपन्नो यतिभिश्चैव सेव्यते ।**
**सततं धर्मशीलैश्च नैपुण्येनोपलक्षितः ॥**

सेव्यते धर्मः । निपुणेन चक्षुषा उपलक्षितश्च । नीटी.

हिंसात्मकपशुयज्ञस्य निन्द्यत्वं व्रीहियवपुरोडाशाज्यादिप्रधानस्य च यज्ञस्य प्रशस्तत्वम्

**जाजलिरुवाच–**

**'यथा प्रवर्तितो धर्मस्तुलां धारयता त्वया ।**
**स्वर्गद्वारं च वृत्तिं च भूतानामवरोत्स्यते ॥**

' ये च च्छिन्दन्ति वृषणान् ' इत्यादिना कृषिं दूषयता त्वया लोकद्वयं नाशितमित्याह– अयमिति । नीटी.

**'कृष्या ह्यन्नं प्रभवति ततस्त्वमपि जीवसि ।**
**पशुभिश्चौषधीभिश्च मर्त्या जीवन्ति वाणिज ॥**

**'यतो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि ।**
**न हि वर्तेदयं लोको वार्तामुत्सृज्य केवलम् ॥**

नास्तिक्यं हिंसात्मकत्वेन यज्ञनिन्दा । नीटी.

**तुलाधार उवाच–**

**'वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः ।**
**न च यज्ञं विनिन्दामि यज्ञवित्तु सुदुर्लभः ॥**

वृत्तिम् अहिंसां जीविकां वक्ष्यामि वच्मि । असद्वृत्त्या वानप्रस्थवृत्त्या वन्येन वा जीविकायाः संभवात्

(१) भा. १२।२५४।४८ ; भामु. १२।२६२।५१ स्तरसा (स्तपसा).

(२) भा. १२।२५४।४९ ; भामु. १२।२६२।५२ निपुणान् (निपुणो).

(३) भा. १२।२५४।५० ; भामु. १२।२६२।५३.

(४) भा. १२।२५४।५१ ; भामु. १२।२६२।५४ स्तः प्रियाप्रिये (ऽस्ति प्रियाप्रियम्).

(१) भा. १२।२५४।५२ ; भामु. १२।२६२।५५ नैपुण्ये (निपुणे).

(२) भा. १२।२५५।१ ; भामु. १२।२६३।१ यथा (अयं).

(३) भा. १२।२५५।२ ; भामु. १२।२६३।२.

(४) भा. १२।२५५।३ ; भामु. १२।२६३।३ यतो (ततो) केवलम् (केवलाम्).

(५) भा. १२।२५५।४ ; भामु. १२।२६३।४ न च यज्ञं (न यज्ञं च).

किं हिंसात्मकया कृष्येति भावः । न च कृषिद्रोहमात्रान्नास्तिक्यं यज्ञनिन्दा वा कृता भवतीत्याह– नास्तीति । तथाऽपि यज्ञवित् 'यज्ञो वै विष्णुः' इति श्रुतेर्यो यज्ञभोक्तारं परमात्मानं वेद स दुर्लभः ।
नीटी.

'नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः ।
स्वयज्ञं ब्राह्मणा हित्वा क्षात्रं यज्ञमिहाऽऽस्थिताः ॥

ब्राह्मणानां ब्रह्मविदां यज्ञः ब्रह्माग्नौ जीवहविषस्त्यागः तस्मै, योगायेत्यर्थः । स्वयज्ञं योगम् । क्षत्रयज्ञं हिंसामयं ज्योतिष्टोमादिम् । नीटी.

'लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः संप्रवर्तितम् ।
वेदवादानविज्ञाय सत्याभासमिवानृतम् ॥

क्षत्रयज्ञं विशिनष्टि– लुब्धैरिति । हे ब्रह्मन्, आस्तिकैः वेदप्रामाण्यवादिभिः वेदवादान् अर्थवादान् तेषां स्तुतिमात्रे तात्पर्यमित्यविज्ञाय सत्यवदाभासमानं स्वरूपतः अनृतम् , आविद्यकब्राह्मण्याद्यध्यासमूलत्वात् , लुब्धैः संप्रवर्तितम् । तथा च श्रुतिः– 'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' ( ऋसं. १०।८२। ७ ) इति । अज्ञानेन आवृताः । जल्प्याः अर्थवादगिरा । असुतृपः प्राणपोषकाः । उक्थशासः कर्मानुशासनपराः ।
नीटी.

'इदं देयमिदं देयमिति नान्तं चिकीर्षति ।
अतः स्तैन्यं प्रभवति विकर्माणि च जाजले ।
तदेव सुकृतं हव्यं येन तुष्यन्ति देवताः ॥

'यज्ञ आयुष्मान् स दक्षिणाभिरायुष्मान्' ( तैसं. २।३।१०।४ ) 'प्राची दिग्घोतुर्दक्षिणा ( ब्रह्मणः प्रतीची ) अध्वर्योः ( उदीची )' ( आश्रौ. १०।१०) इत्यादिश्रुतिस्मृतिविहिता दक्षिणा देया । 'षट् देया द्वादश देयाः' ( आपश्रौ. ५।२०।१३ ) इति । तादृशश्च दक्षिणावानयं यज्ञः प्रशस्यते । अन्यथा अतो यज्ञादेव स्तैन्यं लुब्धस्य यजमानस्य सामर्थ्ये सति यथोक्तदक्षिणामददतः प्रकर्षेण भवति । विकर्माणि तस्य कर्माणि विपरीतानि अश्रेयस्कराणि च भवन्ति । यथोक्तम्– 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥' इति, 'नास्ति यज्ञसमो रिपुः' इति च । एवं क्षत्रयज्ञं निन्दित्वा ब्राह्मणयज्ञस्वरूपमाह– यदेवेति । सुकृतं सुकृतार्जितं हव्यम् । नीटी.

'नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ।
पूजा स्याद्देवतानां हि यथा शास्त्रनिदर्शनम् ॥

तदेव त्रिविधमाह– नम इति । नमस्कारात्मकेन हविषेति सामानाधिकरण्यम्, 'यो नमसा स्वध्वरः' इति, 'यज्ञो वै नम इति हि ब्राह्मणं भवति' ( आगृ. १।१।५ ) इति †श्रुतिस्मृतिभ्यां नमस्कारस्यैव यज्ञत्वावगतेः । तथा स्वाध्यायैर्हविषेति संबन्धः, 'वयमग्ने अर्वता वा सुवीर्यं ब्रह्मणा वा चितयेमा जनाँ अति' ( ऋसं. २।२।१० ) इति वेदस्यापि यज्ञत्वश्रुतेः । अर्वता अश्वेन ब्रह्मणा वेदेन वा अग्ने, त्वां चिन्तयेम जानीम । तथा चाश्वमेधतुल्यत्वं ब्रह्मयज्ञस्योक्तम् । आश्वलायनगृह्येऽपि– "आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उत ॥' इत्येत एव उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति य इमं स्वाध्यायमधीयते" इति । तथा औषधैः व्रीहि-

(१) भा. १२।२५५।५ ; भाग. १२।२६३।५ क्षात्रं य (क्षत्रय).

(२) भा. १२।२५५।६ ; भाग. १२।२६३।६.

(३) भा. १२।२५५।७ ; भाग. १२।२६३।७–८ नान्तं चिकीर्षति (चायं प्रशस्यते) तदेव (यदेव) येन (तेन).

† पूर्वोद्धृते वचने एकस्यैव महत आश्वलायनीयसूत्रस्यांशौ । वृत्तिकारः संपूर्णमिदं सूत्रं ब्राह्मणानुवादं मन्यते । अतस्तन्मते प्रथमं वचनमपि ब्राह्मणरूपं सत् श्रुतिरेव । नीलकण्ठस्तु स्मृतिपदोपादानात् द्वितीयवचनमात्रस्य ब्राह्मणत्वं प्रतिपद्यमानः प्रथमवचनस्याऽऽश्वलानीयत्वम् अत एव स्मृतित्वं च मन्यते इति गम्यते । अत एव नात्र श्रुतिस्मृतिशब्दयोर्यथासंख्यान्वयः ।

(१) भा. १२।२५५।८ ; भाग. १२।२६३।८–९.

यवादिभिः, 'पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूतावजायेतां तस्मादापुः पुरोडाशसत्रं लोक्यम्' इति च तयोर्हविष्ट्वावगमात्, पुरुषाश्वगोऽजानां पशूनाममेध्यत्वश्रुतेश्च 'त एत उत्क्रान्तमेधा अमेध्याः पशवः' (ऐब्रा. ६।८) इति । तथा चैतैस्त्रिभिर्हविर्भिर्देवतापूजा यज्ञाख्या कर्तव्येति शास्त्रे वेदे निदर्शनं प्रत्यायकं वचनमस्ति तदप्युदाहृतमेव । नीटी.

'इष्टापूर्तादसाधूनां विषमा जायते प्रजा ।
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ॥

ननु 'इष्टान् भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।' (भगी. ३।१२) इति भगवता यज्ञानां धनपुत्रादिप्राप्त्यर्थत्वोक्तेः किं तैर्मोक्षानुपयोगिभिः? इत्याशङ्क्याऽऽह– इष्टेति । इष्टम् इष्टिपशुसोमादि, आपूर्तं तटाकारामादि । असाधूनां कामनावतां यज्ञात्तादृगेव लुब्धमपत्यं भवति, समेभ्यः रागद्वेषशून्येभ्यः इष्टादिकर्तृभ्योऽनीप्सिताऽपि तादृशी प्रजा जायत इत्यर्थः । नीटी.

'यजमानो यथाऽऽत्मानमृत्विजश्च तथा प्रजाः ।
यज्ञात्प्रजा प्रभवति नभसोऽम्भ इवामलम् ॥

अन्त्यमर्धं व्याचष्टे– यजमाना इति । ऋत्विजो यजमानाश्च यथा आत्मानं सकाममकामं वा पश्यन्ति तथा उभयेषामपि प्रजा भवति । तथा हि– ऋत्वङ्गोपासनस्य ऋत्विक्कर्तृकस्यापि फलम् उभयगामि दृष्टम्– 'आत्मने वा यजमानाय वा यं कामं कामयते तमागायानि( ? यति )' (बृउ. १।३।२८) इति । नीटी.

'अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

(१) भा. १२।२५५।९ ; भामु. १२।२६३।९–१० विषमा (विगुणा).

(२) भा. १२।२५५।१० ; भामु. १२।२६३।१० मानो (माना).

(३) भा. १२।२५५।११ ; भामु. १२।२६३।११ तिष्ठति (गच्छति).

यज्ञस्य प्रजाहेतुत्वे मनुवाक्यं प्रमाणयति– अग्नाविति । नीटी.

'तस्मात्स्वनुष्ठितात्पूर्वे सर्वान्कामांश्च लेभिरे ।
अकृष्टपच्या पृथिवी आशीर्भिर्वीरुधोऽभवन् ।
न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किंचन ॥

तस्मात् यज्ञात् सुनिष्ठिताः यज्ञमात्रनिष्ठाः, न तु कामपराः, पूर्वे विनाऽविफला( ? पि फला )भिसंधिं सर्वान् कामानान्तरीयकतया लेभिरे । यथोक्तमापस्तम्बेन– 'तद्यथाऽऽम्रे फलार्थे निर्मिते च्छाया गन्ध इत्यनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' (आध. १।२०।३) इति । एतदेवाऽऽह– अकृष्टेति । यथा च कर्षणाभावात् न गवां भुवो भूमिशयानां वा हिंसा भवति । अभवन्, फलपुष्पवत्य इति शेषः । आशीर्भिः जगतः शुभानुध्यानेन । न ते इति । यज्ञानां स्वाभाविकत्वादात्मनश्चानाधेयातिशयत्वाच्च कर्मणः फलं कर्तरि पश्यन्ति । नीटी.

'शङ्कमानाः फलं यज्ञे ये यजेरन्कथंचन ।
जायन्तेऽसाधवो धूर्ता लुब्धा वित्तप्रयोजनाः ॥

शङ्कमानाः 'यज्ञे फलमस्ति न वा' इति संदिहानाः । असाधवः धूर्ताः दाम्भिकाः । नीटी.

स स्म पापकृतां लोकान्गच्छेदशुभकर्मणा ।
प्रमाणमप्रमाणेन यः कुर्यादशुभं नरः ।
पापात्मा सोऽकृतप्रज्ञः सदैवेह द्विजोत्तम ॥

स स्मेत्यादिसार्धः । अप्रमाणेन कुतर्केण प्रमाणं वेदम् अशुभं कुर्यात् सः पापकृतां लोकान् गच्छेत् स्मेत्यन्वयः । स च सदैवाकृतप्रज्ञो भवति, न कदाचिदपि मुच्यत इत्यर्थः । नीटी.

'कर्तव्यमिति कर्तव्यं वेत्ति यो ब्राह्मणोभयम् ।
ब्रह्मैव वर्तते लोके नैति कर्तव्यतां पुनः ॥

(१) भा. १२।२५५।१२ ; भामु. १२।२६३।१२–१३ स्वनुष्ठितात् (सुनिष्ठिताः).

(२) भा. १२।२५५।१३–१४ ; भामु. १२।२६३। १३–१५.

(३) भा. १२।२५५।१५ ; भामु. १२।२६३।१६ णोभयम् (णो भयम्) नैति (नैव).

एवं श्लोकत्रयेण फलाभिसंधिशून्यं कर्म प्रशस्य दाम्भिककुतार्किकौ च निन्दितौ। इदानीं विद्वदभिसंधिमाह– कर्तव्यमिति। कर्मेत्युत्तरश्लोकादपकृष्यते। कर्म कर्तव्यं नित्यम् इत्येव कर्तव्यम्.। कुतो नित्यम्? यतः वै इति निश्चितं ब्राह्मणो वेदनिष्ठः भयं वेत्ति। कर्माकरणे इति शेषः। ब्राह्मणशब्दार्थमाह– ब्रह्मेति। लोके ऋत्विग्घविर्मन्त्राग्न्यादिरूपेण ब्रह्मैव वर्तते इति यो वेत्ति, कर्तव्यतां कर्तुमर्हताम् आत्मनि च यो वर्णाध्यासपूर्वकं कर्तृत्वं च पुनर्नैव वेत्ति स ब्राह्मण इत्यर्थः। कर्तृत्वाभिमानं फलाभिलाषं च त्यक्त्वा कर्माङ्गेषु ब्रह्मदृष्टिं कुर्वाणा अशनपानादाविव स्वरसेनैव कर्माणि कुर्वन्तीत्यर्थः। नीटी.

[1]विगुणं च पुनः कर्म ज्याय इत्यनुशुश्रुम।
सर्वभूतोपघातश्च फलभावे च संयमः॥

यदुक्तम् 'अतः स्तैन्यं प्रभवति' इति विगुणात्कर्मणो दोषोऽस्तीति, तत्राऽऽह– विगुणमिति। एवंविदो ब्राह्मणस्य विगुणमपि कर्म ज्यायः। तथा चानुशुश्रुम वेदे– 'यदु चैवास्मिन् शव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति' (छाउ. ४।१५।५) इति। अन्त्येष्ट्यभावेऽपि विदुषोऽर्चिरादिगतिरस्त्येव, किमुत तत्राङ्गवैगुण्ये? इति श्रुत्यर्थः। किंचैवंविदः कर्मणि सर्वैर्भूतैः श्वसूकरादिभिरमेध्यपशुभिरुपघातोऽपि ज्यायान्, आत्मानुसंधानहेतुत्वात्। न तु मूढस्य साङ्गमपि कर्म ज्याय इति भावः। तथा फलभावे उपघातफलस्य 'इदं मे कर्मानेनोपघातेन नष्टम्' इति बुद्धिस्तत्सत्त्वे(? द्धेः सत्त्वे) संयमः प्रायश्चित्तमुक्तम्, नान्यथा। चकारो हेत्वर्थः। तथा चाऽऽम्नातमैतरेयके– "तदाहुर्यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वाऽश्वो(? वा श्वा) वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैनन्मनसि कुर्यादित्याहुरात्मन्यस्य हि ता भवन्तीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविच्छिन्नामुदकधारां हरेत् 'तन्तुं तन्वन् रजसो भानुमन्विहि' (ऋसं. १०।५३।६) इत्याऽऽहवनीयात्सा तत्र प्रायश्चित्तिः" (ऐब्रा. ३२।११) इति। अनः शकटम्। एनत् एतत्। अस्य यजमानस्य। आत्मनि स्वरूपे। हि यस्मात्। ता तानि अनआदीनि। 'सुपां सुलुक्' (पासू. ७।१।३९) इति सुपो डादेशः। नीटी.

देवयानफलाः सत्यदमस्वाध्यायप्रधाना यज्ञाः तत्त्वविद्भिः निष्कामैः अनुष्ठिताः

[1]सत्ययज्ञा दमयज्ञा अलुब्धाश्चाऽऽत्मतृप्तयः।
उत्पन्नत्यागिनः सर्वे जना आसन्नमत्सराः॥

एवं विदुषः कर्मयज्ञं प्रशस्य यज्ञान्तरमप्याह शिष्टाचारप्रदर्शनमुखेन– सत्येति। अर्थलुब्धाः परमपुरुषार्थे लोभवन्तः। अर्थेषु धनेषु विषयेषु तृप्तिर्येषां ते वैराग्यतृप्ता इत्यर्थः। परमपुरुषार्थेनैव तृप्ता इति वा। उत्पन्नत्यागिनः श्वस्तनसंग्रहमकुर्वन्तः। अमत्सरा इति च्छेदः। नीटी.

[2]क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिताः।
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यमरानपि॥

स्वयज्ञो योगः। ब्राह्मं वेदं प्रणवम्। नीटी.

[3]अखिलं दैवतं सर्वं ब्रह्म ब्राह्मणसंश्रितम्।
तृप्यन्ति तृप्यतो देवास्तृप्तास्तृप्तस्य जाजले॥

कथं तोषयन्तीत्यत आह– अखिलमिति। सर्वं ब्रह्म प्रणवः, कार्यकारणोभयरूपत्वात्, 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' (प्रउ. ५।२) इति श्रुतेः। तत् अखिलं दैवतं सर्वदेवतात्मकम्, वाच्यवाचकयोरभेदात्, 'ओङ्कारः सर्वदैवत्यः' इत्यनुक्रमणिकायां कात्यायनवचनाच्च। तच्च ब्रह्मणि ब्रह्मविदि स्थितम्। अतस्तृप्यतः अश्नतः ब्रह्मविदः तृप्तस्य च, सप्तम्यर्थे

(१) भा. १२।२५५।१६; भामु. १२।२६३।१७.

(१) भा. १२।२५५।१७; भामु. १२।२६३।१८ द्वितीयचरणे (अर्थलुब्धार्थतृप्तयः).

(२) भा. १२।२५५।१८; भामु. १२।२६३।१९ न्त्यमरा (न्त्यपरा).

(३) भा. १२।२५५।१९; भामु. १२।२६३।२० ब्राह्मणसं (ब्रह्मणि सं) तृप्यन्ति (तुष्यन्ति) प्तास्तृ (प्तातृ).

षष्ठी, ब्रह्मविदि तृप्ते सति देवाः विराडवयवभूता आदित्यादयः तुष्यन्ति । तथा चोक्तं छान्दोग्ये— 'प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यति' (छाउ. ५।१९।२) इत्यादि । भुञ्जानोऽपि विद्वान्विश्वं तर्पयति, किमुताय( ? त य )जमानः ? इत्याशयः । नीटी.

[1]यथा सर्वरसैस्तृप्तो नाभिनन्दति किंचन ।
तथा प्रज्ञानतृप्तस्य नित्यं तृप्तिः सुखोदया ॥

किंचन रसान्तरं नाभिनन्दति दृष्ट्वा न तुष्यति । नीटी.

[2]धर्मारामा धर्मसुखाः कृत्स्नव्यवसितास्तथा ।
अस्ति नस्तत्त्वतो भूय इति प्रज्ञागवेषिणः ॥

ईदृक्प्रज्ञालाभे हेतुमाह— धर्मेति । धर्माधाराः धर्मकामयाः, धर्मसुखाः धर्मेणैव सुखं येषाम्, कृत्स्नं कार्याकार्यं व्यवसितं निश्चितं यैः, ईदृशा वयं स्मः । नः अस्माकं तत्त्वतः स्वरूपात् बुद्धौ चिदाभासात्मकात् सूत्रात्मकप्राणसंज्ञात् भूयः बहुतरं विश्वव्यापकत्वात् प्राण एव सर्वापेक्षया भूयान्, ततोऽपि बहुतर:( ? तरं ) प्राणाद्युत्पत्तिस्थानं भूतात्माऽस्तीति प्राज्ञः कर्मभिः शुद्धान्तःकरणः ईक्षते आलोचयति । नीटी.

[3]ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः ।
अतीव तत्सदा पुण्यं पुण्याभिजनसंहितम् ॥

तितीर्षवो यत्र गत्वा न शोचन्ति तत् ब्रह्मणः स्थानं सात्त्विकाः प्राप्नुवन्तीति द्वयोः संबन्धः । ज्ञानं शास्त्रजम्, विज्ञानम् अनुभवः, तद्वन्तः । नीटी.

[4]यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च ।
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः ॥

(१) भा. १२।२५५।२० ; भामु. १२।२६३।२१ नित्यं तृ (नित्यतृ).

(२) भा. १२।२५५।२१ ; भामु. १२।२६३।२२ रामा (धारा) चतुर्थचरणे (इति प्राज्ञस्त्ववेक्षते).

(३) भा. १२।२५५।२२ ; भामु. १२।२६३।२३ तत्सदा (पुण्यदं).

(४) भा. १२।२५५।२३ ; भामु. १२।२६३।२४.

[1]नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनैः ।
सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया ॥

ते तितीर्षवः । 'तस्य नाम महद्यशः' (नाउ. १) इति श्रुतेर्यशः ब्रह्म । धनैः धनसाध्यैः कर्मभिः । सतां वर्त्म योगमनुवर्तन्ते यजन्ते चाविहिंसया । नीटी.

[2]वनस्पतीनोषधीश्च फलमूलं च ते विदुः ।
न चैतानृत्विजो लुब्धा याजयन्ति धनार्थिनः ॥

विदुः हविष्ट्वेन । एतान् निर्धनान् ऋत्विजो न याजयन्ति, यतः फलार्थिनः धनार्थिनः । नीटी.

[3]स्वमेव चार्थं कुर्वाणा यज्ञं चक्रुः पुनर्द्विजाः ।
परिनिष्ठितकर्माणः प्रजानुग्रहकाम्यया ॥

कथं तर्हि ते यज्ञं संपादयन्ति ? इत्यत आह— स्वमेवेति । स्वम् आत्मानमेव अर्थं यज्ञोपकरणसामग्रीं संकल्पसमकालोत्थां कुर्वाणा मानसिकं यज्ञं चक्रुः । तथा चोपबृंहितं त्रिताख्यायिकया प्रागेव । मन्त्रलिङ्गं च— 'त्रितः कूपेऽवहितो देवान्हवत ऊतये' (ऋसं. १।१०५।१७) इति । ऊतये यज्ञसंतत्यविच्छेदाय । परिनिष्ठितं समापितं कर्म यैस्ते तथाभूता अपि लोकानुग्रहार्थं मानसैर्यज्ञैर्यजन्त इत्यर्थः । नीटी.

[4]तस्मात्तानृत्विजो लुब्धा याजयन्त्यशुभान्नरान् ।
[5]प्रापयेयुः प्रजाः स्वर्गं स्वधर्मचरणेन वै ।
इति मे वर्तते बुद्धिः समा सर्वत्र जाजले ॥

यस्मादेवंविधान् लुब्धा ऋत्विजो न याजयन्ति, ते च तान्नेच्छन्ति, तस्मात्तानेव अशुभान् मोक्षेच्छारहितान् ते लुब्धा ऋत्विजो याजयन्तीत्याह— तस्मादिति । इतरे

(१) भा. १२।२५५।२४ ; भामु. १२।२६३।२५ यथाबलमहिं (यजन्ते चाविहिं).

(२) भा. १२।२५५।२५ ; भामु. १२।२६३।२६ फलमूलं (फलं मूलं) धना (फला').

(३) भा. १२।२५५।२६ ; भामु. १२।२६३।२७.

(४) भामु. १२।२६३।२८.

(५) भा. १२।२५५।२७ ; भामु. १२।२६३।२८ स्वर्गं स्वधर्मंच (स्वर्गं स्वधर्माच).

तु साधवः स्वधर्माचरणेन परान् उपकुर्वन्ति, न तु धर्मफलं कामयन्ते, समबुद्धित्वादित्याह– प्रापयेयुरिति। इतीति। इति हेतोः सदसद्वृत्त्योर्विभिन्नत्वादहं सद्वृत्तमेवानुसरामीत्यर्थः। नीटी.

[1]प्रयुञ्जते यानि यज्ञे सदा प्राज्ञा द्विजर्षभ।
तेन ते देवयानेन पथा यान्ति महामुने॥

यानि मार्गदेवतानि धूमरात्र्यादीनि पुनरावृत्तिप्रदमार्गप्रदर्शकानि अर्चिरहरादीनि अपुनरावृत्तिप्रदमार्गप्रदर्शकानि वा प्राज्ञाः कर्मठा उपासका वा इज्यन्ति यजन्ते तेन यजनेन 'तं यथायथोपासते तथेतः (?तदेव) प्रेत्य(?) भवन्ति(?ति)' (शब्रा. १०।५।२।२०) इति श्रुतेः ते यजमानाः यथाभावनं तेन तेन देवयानेन पथा मार्गेण, अत्र पितृयाणोऽपि देवयानपदेनोच्यते, ते पितृलोकं देवलोकं वा यान्ति, 'कर्मणा पितृलोको विद्यया देवलोकः' (बृउ. १।५।१६) इति श्रुतेः। नीटी.

[2]आवृत्तिस्तत्र चैकस्य नास्त्यावृत्तिर्मनीषिणाम्।
उभौ तौ देवयानेन गच्छतो जाजले पथा॥

तत्र देवयानेन गतस्यापि एकस्य कर्मठस्याऽऽवृत्तिरस्ति, 'अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति धूमादिमार्गेण गतानामावृत्तिश्रुतेः। मनीषिणः मनोरोधशीलस्योपासकस्य नास्त्यावृत्तिः, 'न च पुनरावर्तन्ते(?ते)' (छाउ. ८।१५।१) इति ¶ अर्चिरादिमार्गगतानामनावृत्तिश्रुतेः। उभौ कर्मठोपासकौ देवैः धूमाग्न्यादिभिरातिवाहिकैः सह यान्त्यस्मिन्निति देवयानः। तेन द्विध्येन मार्गेण यद्यप्युभावपि गच्छतस्तथाऽपि § संकल्पभेदात्तयोरावृत्त्यनावृत्ती भवत इति महद्वैलक्षण्यमित्याशयः। नीटी.

[1]‡स्वयं चैषामनडुहो युज्यन्ति च वहन्ति च।
स्वयमुस्राश्च दुह्यन्ते मनःसंकल्पसिद्धिभिः॥

विदुषां सत्यसंकल्पानामैश्वर्यमाह– स्वयमिति। अनडुहः इत्युपलक्षणम्। सर्वमेषां सौभर्यादीनामिव संकल्पेनैव सिध्यतीत्यर्थः। उस्राः धेनवः। नीटी.

स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणैः।
यस्तथाभावितात्मा स्यात्स गामालब्धुमर्हति॥

तेषां क्रतवोऽपि मानसिका एवेत्याहार्धेन– स्वयमिति। सिद्धसंकल्पत्वाद्यूपदक्षिणादीन्मनसैव सृजन्तीत्यर्थः। ततश्च किमित्यत आह– य इति। भावितात्मा योगाभ्यासशोधितचित्तः स मधुपर्के गाम् आलब्धुं हिंसितुम् अर्हति, 'न कर्मणा लिप्यते पापकेन' इति विदुषि दोषालेपश्रुतेः। नीटी.

[2]ओषधीभिस्तथा ब्रह्मन्यजेरंस्ते नतादृशाः।
बुद्धित्यागं पुरस्कृत्य तादृशं प्रब्रवीमि ते॥

इतरस्तु पशुबीजादिवधात्प्रत्यवैत्येवेत्याह– न तादृशा इति। मूढाः न गवौषधादिभिर्यष्टुमर्हा इत्यर्थः। इतीति।

---

¶ 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते' इति वाक्ये पुनरावर्तनाभावप्रयोजकत्वं यद्यपि एवंवर्तनप्रयुक्तब्रह्मलोकप्राप्तेरेवोक्तम्, नार्चिरादिमार्गगमनस्य, तथापि तेन विना ब्रह्मलोकप्राप्त्यनुपपत्त्या तदाक्षेपो लभ्यते। अस्य वचनस्य, 'न स पुनरावर्तते' इति वचनस्य च आकरान्तरेषु तत्त्वज्ञानिनो मोक्षपदादपुनरावृत्तौ तात्पर्यात् गत्यभावेन मार्गापेक्षैव नास्ति।

§ देवयानत्वसामान्येऽप्यवान्तरमार्गभेदादेवाऽऽवृत्त्यनावृत्त्युपपत्तौ संकल्पभेदानुसरणं व्यर्थमिति भाति। संकल्पभेदस्य मार्गभेदप्रतिपत्तौ प्रयोजकत्वं तूपपद्यमानमपि न स एतद्वाक्यार्थः।

‡ श्लोकेऽस्मिन् सर्वे क्रियापदप्रयोगाः कर्मकर्तरि। तत्र दैवादिकस्याऽऽत्मनेपदिनो युजेः कर्तृस्थक्रियत्वात् कर्तरीव रूपे प्रयोक्तव्ये परस्मैपदमार्षम्। तथा अनेकविधिनिषेधप्रवृत्तिसाध्ये 'दुहते' इति रूपे प्रयोक्तव्ये 'दुह्यन्ते' इत्यप्यार्षम्।

(१) भा. १२।२५५।२८; भामु. १२।२६३।२९ पूर्वार्धे (यानि यज्ञेष्विहेज्यन्ति सदा प्राज्ञा द्विजर्षभाः।).

(२) भा. १२।२५५।२९; भामु. १२।२६३।३० स्तत्र (स्तस्य) षिणाम् (षिणः) पथा (यथा).

(१) भा. १२।२५५।३०–३१; भामु. १२।२६३।३१–३२.

(२) भा. १२।२५५।३२; भामु. १२।२६३।३३ रंस्ते नतादृशाः (रंस्तेन तादृशाः) बुद्धि (इति).

यस्मात्त्यागिनामीदृङ्माहात्म्यं तस्माद्धेतोरित्यर्थः । नीटी.

[1]निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥

संक्षेपेण त्यागिनो लक्षणमाह– निराशिषमिति । नीटी.

[2]नाऽऽश्रावयन्न च यजन्न ददद्ब्राह्मणेषु च ।
ग्राम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले ।
इदं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ॥

कां गतिं याति ? 'तस्मादाहुरयजमानमददानमासुरो बत' (‡ छाउ. ८।८।५) इति श्रुतेः स आसुरः कामपि गतिं देवमार्गे पितृमार्गे वा न यातीत्यर्थः । कथं तर्हि गतिं यान्ति ? इत्यत आहार्धेन– इदमिति । इदं 'निराशिषम्' इति श्लोकोक्तलक्षणं दैवतं दैवतमिव सेवनीयं कृत्वा यथा यथावत् यज्ञं परमात्मानम्, 'यज्ञो वै विष्णुः' (तैसं. ३।५।१।४) इति श्रुतेः, अवाप्नुयात् । नीटी.

जाजलिरुवाच–

[3]न वै मुनीनां शृणुमः स्म तत्त्वं
पृच्छामि त्वा वाणिज कष्टमेतत् ।
पूर्वे पूर्वे चास्य नावेक्षमाणा
नातः परं तमृषयः स्थापयन्ति ॥

मुनीनां 'स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणैः ।' इत्युक्तरूपाणामात्मयाजिनाम् एतत् तत्त्वं रहस्यं न स्म शृणुम न श्रुतवन्तो वयम्, यतः कष्टं गहनम्, अतस्त्वां पृच्छामि । अस्य योगधर्मस्य नावेक्षमाणाः न आलोचनं कृतवन्तः । अवेक्षमाणा अपि अतः परमपि तं धर्मं न स्थापयन्ति लोके न प्रवर्तयन्ति रहस्यत्वादेव । नीटी.

[1]अस्मिन्नेवाऽऽत्मतीर्थे न पशवः प्राप्नुयुः सुखम् ।
अथ स्वकर्मणा केन वाणिज प्राप्नुयात्सुखम् ।
शंस मे तन्महाप्राज्ञ भृशं वै श्रद्दधामि ते ॥

यस्मिन्निति विभक्तिप्रतिरूपकमव्ययं यद्यर्थे । एव एवम् । यद्येवं त्वदुक्तप्रकारेण आत्मतीर्थे आत्मैव तीर्थे यज्ञभूमिः तत्र पशवः पशुप्रायाः मन्दमतयः मखं मानसिकं क्रतुं न प्राप्नुयुः, तत्प्राप्तेर्बहुपुण्यसाध्यत्वात् । अथ तर्हि । प्राप्नुयात् प्राप्नुयुः । वचनव्यत्यय आर्षः । तत् कर्म । ते तव, वाक्यमिति शेषः । नीटी.

तुलाधार उवाच–

[2]उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित् ।
आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः ।
वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम् ॥

एक उतशब्दोऽधिकविवक्षायाम्, अन्योऽप्यर्थे । किंच, येषां दाम्भिकानां यज्ञा अपि श्रद्धादिराहित्यात् अयज्ञा भवन्ति, ते क्वचित् अन्तर्बहिर्वा मखं नार्हन्ति । श्रद्दधानानां तु एकया गवैव बाह्यक्रतुसिद्धिरित्याह –आज्येनेति । दर्शपूर्णमासयोः श्रूयते– 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' (तैब्रा. ३।३।५।५), 'ऐन्द्रं पयोऽमावास्यायाम्', 'ऐन्द्रं दध्यमावास्यायाम्' (तैसं. २।५।४।१), आधानप्रकरणे च 'द्वादशगृहीतेन स्रुचं पूरयित्वा सप्तवत्या पूर्णाहुतिं जुहोति' इति । आज्येनेति शेषः । 'सप्त ते अग्ने समिधः' इत्यृचा । विशेषत इति श्रौतमखो दर्शितः । तत्राशक्तानां तु वालैः गोपुच्छैः पितृतर्पणादिना, शृङ्गेण

---

‡ छान्दोग्योपनिषदि 'तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेति' इति वाक्यमुपलभ्यते ।

(१) भा. १२।२५५।३३ ; भामु. १२।२६३।३४.

(२) भा. १२।२५५।३४ ; भामु. १२।२६३।३५ नाऽऽश्रा (न श्रा) ग्राम्यां (काम्यां).

(३) भा. १२।२५५।३५ ; भामु. १२।२६३।३६ त्वा (ते).

(१) भा. १२।२५५।३६ ; भामु. १२।२६३।३७ अस्मिन् (यस्मिन्) तीर्थे न (तीर्थेन) युः सु (युर्मं) अथ स्व (अथ स्म).

(२) भा. १२।२५५।३७ ; भामु. १२।२६३।३८ संभव (संभर),

गोशृङ्गेण अभिषेकादिना, पादेनेति पादरजसेत्यर्थः । एतेषां गोस्पर्शनादीनां च सद्यः पापनाशकत्वं परलोकप्रदत्वं च स्मृत्युक्तं दर्शितम् । नीटी.

[1]पत्नीं चानेन विधिना प्रकरोति नियोजयन् ।
इष्टं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ।
पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ॥

ननु पत्न्यभावे विशेषवान् श्रौतो मखः कथं स्यादित्यत आह– पत्नीमिति । अनेन पशुहिंसारहितेन आज्यादिसाध्यक्रतुविधिना आज्यादिद्रव्यं देवतार्थे विनियोजयन्, हेतौ शतृप्रत्ययः, विनियोगहेतोः पत्नीं च मानसीमेव करोति, श्रद्धामिति शेषः, 'तस्मादपत्नीकोऽग्निहोत्रमाहरेत्' (ऐब्रा. ३२।८), 'तस्मादपत्नीकस्याऽऽधानं कुर्वन्ति' (ऐब्रा. ३२।१०) इत्युक्त्वा 'श्रद्धा पत्नी सत्यं यजमानः' (ऐब्रा. ३२।१०) इति बह्वृचब्राह्मणे अपत्नीकस्याग्निहोत्राधानादौ श्रद्धायाः पत्नीत्वदर्शनात् । इष्टम्, भावे क्तः । यागमेव दैवतवदत्यन्तं सेवनीयं कृत्वा यथा यथावत् यज्ञं विष्णुं प्राप्नुयात् । तत्र यागविशेषं नियमयति– पुरोडाशो हीति । हिशब्देन 'त एत उत्क्रान्तमेधा अमेध्याः पशवः' (ऐब्रा. ६।८) इति पशूनाममेध्यत्वम्, 'तस्मादाहुः पुरोडाशसत्रं लोक्यम्' (ऐब्रा. ६।९) इति पुरोडाशसत्रप्राशस्त्यं च श्रुतिप्रसिद्धं द्योत्यते । मेधो यज्ञः, तदर्हो मेध्यः, 'सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोडाशेन यजते' (ऐब्रा. ६।९) इति श्रुतेः । मूले पशूनामिति न निर्धारणे षष्ठी, पशूनाममेध्यत्वात् पुरोडाशस्य चापशुत्वात् । तेन पशुसंबन्धी यो मेधस्तदर्हः पुरोडाश इति श्रुत्यनुसारेण स्मृत्यर्थो वर्णनीयः । नीटी.

श्रद्धावतः यज्ञादिषु अधिकारः

[2]सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ॥

[3]एतानीदृशकान्धर्मानाचरन्निह जाजले ।
कारणैर्धर्ममन्विच्छन्न लोकानाप्नुते शुभान् ॥

एवं श्रद्धावतामविदुषां यज्ञमुक्त्वा विदुषां यज्ञमाह– सर्वा इति । तीर्थं यज्ञभूमिः । यत्रैवाऽऽत्मसमाधानं तत्रैव सर्वाणि तीर्थानि सन्तीत्यर्थः । तीर्थमिति यज्ञाद्युपलक्षणम् । ईदृशकान् अहिंस्रान् । कारणैः अर्थित्वसमर्थत्वविद्वत्त्वतारतम्यैः । नीटी.

भीष्म उवाच–

[4]एतानीदृशकान्धर्मांस्तुलाधारः प्रशंसति ।
उपपत्त्या हि संपन्नानित्यं सद्भिर्निषेवितान् ॥

उपपत्त्या युक्त्या । नीटी.

तुलाधार उवाच–

[5]सद्भिर्वा यदि वाऽसद्भिरयं पन्थाः समाश्रितः ।
प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ॥

एवं श्रुत्यविरोधेनाहिंसात्मको धर्मः प्रतिपादितः, तत्र दृष्टप्रत्ययोत्पादनपूर्वकं श्रद्धां द्रढयितुमारभते– सद्भिरिति । क्रियतां कुरु 'पन्थानम् आतिष्ठ, अस्य फलं च त्वया प्रत्यक्षं क्रियताम्' इत्यध्याहृत्य वा योज्यम् । आहूय तत्फलं यथा तथा ज्ञास्यसीति चतुर्थेन संबन्धः । नीटी.

[6]एते शकुन्ता बहवः समन्ताद्विचरन्ति हि ।
तवोत्तमाङ्गे संभूताः श्येनाश्चान्याश्च जातयः ॥

[7]आह्वयैनान्महाब्रह्मन्विशमानांस्ततस्ततः ।
पश्येमान्हस्तपादेषु श्लिष्टान्देहे च सर्वशः ॥

---

(१) भा. १२।२५५।३८ द्वितीयार्धं नास्ति ; भामु. १२।२६३।३९–४०.

(२) भा. १२।२५५।३९ ; भामु. १२।२६३।४०.

(१) भा. १२।२५५।४० ; भामु. १२।२६३।४१ च्छन्न (च्छन्स).

(२) भा. १२।२५५।४१ ; भामु. १२।२६३।४२ त्या हि (त्याऽभि).

(३) भा. १२।२५६।१ ; भामु. १२।२६४।१ द्भिरयं पन्थाः समाश्रितः (द्भिः पन्थानमिममास्थितम्).

(४) भा. १२।२५६।२ ; भामु. १२।२६४।२ हि (ह).

(५) भा. १२।२५६।३ ; भामु. १२।२६४।३ आह्व (आहू) पादेषु (पादैश्च) न्देहे च (न्देहेषु).

ततस्ततः तेषु तेषु नीडेषु प्रवेशाय श्लिष्टान् संकुचितहस्तपादान् । नीटी.

[1]संभावयन्ति पितरं त्वया संभाविताः खगाः ।
असंशयं पिता च त्वं पुत्रानाह्वय जाजले ॥

भीष्म उवाच–

[2]ततो जाजलिना तेन समाहूताः पतत्रिणः ।
वाचमुच्चारयन्दिव्यां धर्मस्य वचनात्किल ॥

वाचमुच्चारयन्ति निःशङ्कं प्रत्युत्तरं प्रयच्छन्तीत्यर्थः । तत्र हेतुः– धर्मस्य अहिंसात्मकस्य संबन्धिनो वचनात्, प्रियवचनादित्यर्थः । नीटी.

[3]अहिंसादिकृतं कर्म इह चैव परत्र च ।
स्पर्धा निहन्ति वै ब्रह्मन्सा हता हन्ति तं नरम् ॥

एवमहिंसाधर्मे प्रत्ययमुत्पाद्य फलितमाह– अहिंसादीति । हिंसा आदिपदार्थः । इह परत्र च, प्रत्यक्षफलमिति शेषः । तत्र हि फलमनुभवेन दर्शयित्वा हिंसाफलमाह– श्रद्धामिति । हिंसा श्रद्धां विश्वासं निहन्तीत्यध्याहृत्य योज्यम् । तं विश्वासघातिनम् । नीटी.

[4]श्रद्धावृत्तं वाङ्मनसी न यज्ञस्त्रातुमर्हति ।
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ॥

श्रद्धाहीनं तु व्यर्थमेव कर्म, अतो न त्रातुमर्हति कंचित् । श्रद्धाशुचित्वयोः श्रद्धाऽधिकेत्यत्राऽऽख्यायिकामाह– अत्रेति । नीटी.

[5]शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
देवाश्चित्तममन्यन्त सदृशं यज्ञकर्मणि ॥

(१) भा. १२।२५६।४ ; भामु. १२।२६४।४ च (वै) ह्वय (हूय).

(२) भा. १२।२५६।५ ; भामु. १२।२६४।५ न्दिव्यां (न्ति स्म).

(३) भा. १२।२५६।६ ; भामु, १२।२६४।६ स्पर्धा (श्रद्धां).

(४) भा. १२।२५६।७ ; भामु. १२।२६४।९–१० यज्ञस्त्रा (कर्म त्रा).

(५) भा. १२।२५६।८ ; भामु. १२।२६४।१०–११ वाश्चित्त (वा वित्त).

[1]श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥

कदर्यस्य कृपणस्य । वार्धुषेः धान्यविक्रयिणः । मीमांसित्वा विचार्य । नीटी.

प्रजापतिस्तानुवाच विषमं कृतमित्युत ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।
भोज्यमन्नं $ वदान्यस्य कदर्यस्य न वार्धुषेः ॥
अश्रद्दधान एवैको देवानां नार्हते हविः ।
तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ॥

हविः, दातुमिति शेषः । नीटी.

[2]अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी ।
जहाति पापं श्रद्धावान्सर्पो जीर्णामिव त्वचम् ॥

[3]ज्यायसी याऽपवित्राणां निवृत्तिः श्रद्धया सह ।
निवृत्तशीलदोषो यः श्रद्धावान्पूत एव सः ॥

निवृत्तः शीलदोषः आचारलाञ्छनं रागादिर्यस्य सः, निर्दोषशीलवान् । नीटी.

[4]किं तस्य तपसा कार्यं किं वृत्तेन किमात्मना ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥

¶ यत् या सात्त्विकी राजसी तामसी वा श्रद्धा यस्य स यच्छ्रद्धः स एव सात्त्विको राजसस्तामसो वा । नीटी.

[5]इति धर्मः समाख्यातः सद्भिर्धर्मार्थदर्शिभिः ।
वयं जिज्ञासमानास्त्वा संप्राप्ता धर्मदर्शनात् ॥

$ 'वदान्यस्य वार्धुषेर्भोज्यम्, न कदर्यस्य, श्रोत्रियस्येति शेषः' इत्यन्वयः प्रकरणगम्यः ।

¶ समासे एव पुंवद्भावेन 'यत्' इति भवति, समस्यमानं पदं तु 'या' इत्येव । तेन लौकिकविग्रहवाक्ये 'यत्' इत्ययं प्रयोगो न साधुः ।

(१) भा. १२।२५६।९–११ ; भामु. १२।२६४।११–१४.

(२) भा. १२।२५६।१२ ; भामु. १२।२६४।१५ मोचनी (मोचिनी).

(३) भा. १२।२५६।१३ ; भामु. १२।२६४।१६ याऽपवि (या पवि).

(४) भा. १२।२५६।१४ ; भामु. १२।२६४।१७.

(५) भा. १२।२५६।१५ ; भामु. १२।२६४।१८ नास्त्वा (नास्तु).

धर्मदर्शनाख्यान्मुनेः धर्मं वयं प्राप्तवन्तः । नीटी.

[1]स्पर्धां जहि महाप्राज्ञ ततः प्राप्स्यसि यत्परम् ।
श्रद्धावाञ्श्रद्दधानश्च धर्मांश्चैवेह वाणिजः ।
स्ववर्त्मनि स्थितश्चैव गरीयानेष जाजले ॥

श्रद्धावान् वेदवाक्ये । श्रद्दधानः तदर्थमनुष्ठातुं 'ममेदं श्रेयः' इति निश्चयवान् । धर्मः धर्मात्मा । गरीयान् श्रेष्ठतरः । नीटी.

[2]एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
सम्यक्चैवमुपालब्धो धर्मश्चोक्तः सनातनः ॥

[3]तस्य विख्यातवीर्यस्य श्रुत्वा वाक्यानि स द्विजः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत ॥

भीष्म उवाच–

[4]ततोऽचिरेण कालेन तुलाधारः स एव च ।
दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम् ।
स्वं स्वं स्थानमुपागम्य स्वकर्मफलनिर्जितम् ॥

अचिरेण अल्पेन । दिवं हार्दाकाशाख्यं ब्रह्म । विहरेतां 'सत्यकामः सत्यसंकल्पः' इति श्रुतेर्योगैश्वर्येण क्रीडामकुरुताम् । स्वं स्वं स्थानं वासदेशं स्वकर्मभिः परिवर्जितम् अर्जितम् उपागम्येति सार्धः । नीटी.

[5]समानां श्रद्दधानानां संयतानां सुचेतसाम् ।
कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥

समानां लाभालाभयोस्तुल्यानाम् । संयतानां दान्तानाम् । सुचेतसां शान्तानाम् । यज्ञः कर्तव्य इत्येवाभिसंधाय कुर्वतां यज्ञमनुतिष्ठताम् । न तु कर्तृत्वाभिमानं फलं चाभिसंधायेति एवार्थः । तेषां यज्ञो जातु कदाचित् नेष्यत इति न, किं त्विष्यत एव । नीटी.

[1]श्रद्धा वै सात्त्विकी देवी सूर्यस्य दुहिता नृप ।
साऽवित्री प्रसवित्री च जीवविश्वासिनी तथा ॥

श्रद्धां स्तौति– श्रद्धेत्यादिना । विवस्वान् प्रकाशरूपश्चिदात्मा, तत्संबन्धिनी वैवस्वती ब्रह्मविषयिणीति यावत् । सेयं सूर्यस्य सूर्यवत्प्रकाशधर्मिणः सत्त्वस्य दुहितेव दुहिता सात्त्विकीत्यर्थः । सैव च श्रद्धा अवित्री पालयित्री प्रसवित्री विशुद्धजन्मप्रदा । तथा वाङ्मनसयोरपि साऽन्तरङ्गम् । निश्चयात्मिका हि श्रद्धा । संकल्पात्मकं संशयात्मकं मनस्ततो बहिरङ्गम् । ततोऽपि बाह्यतरा वाणी । जपध्यानजधर्मापेक्षया श्रद्धैव श्रेष्ठेत्यर्थः । नीटी.

[2]वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च भारत ॥

एतदेवाऽऽह– वाग्वृद्धमिति । वाचा स्वरवर्णविपर्यासेन यद्वृद्धं छिन्नं नष्टं मन्त्राद्युच्चारणे तत् श्रद्धा त्रायते समाधत्ते । मनसा व्यग्रेण यन्नष्टं देवध्यानादि तत् । नीटी.

[3]एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
यथौपम्योपदेशेन किं भूयः श्रोतुमिच्छसि ॥

यथौपम्योपदेशेन यथावद्दृष्टान्तकीर्तनेन । नीटी.

गवादिपशूनां यज्ञिया हिंसाऽपि वर्ज्या

भीष्म उवाच–

[4]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्नुना ॥

(१) भा. १२।२५६।१६ ; भामु. १२।२६४।१९ स्पर्धां जहि (श्रद्धां कुरु) चतुर्थचरणे (धर्मश्चैव हि जाजले) यानेष (यानेव).

(२) भा. १२।२५६।१७ ; भामु. १२।२६४।२१–२२ मतार्थं (विधार्थं) क्चैव (क्वेद).

(३) भा. १२।२५६।१८ ; भामु. १२।२६४।२२–२३.

(४) भा. १२।२५६।१९ ; भामु. १२।२६४।२०–२१ फलनिर्जितम् (परिवर्जितम्).

(५) भा. १२।२५६।२० ; भामु. १२।२६४।७.

(१) भा. १२।२५६।२१ ; भामु. १२।२६४।८ प्रथमचरणे (श्रद्धा वैवस्वती सेयं) नृप (द्विज) चतुर्थचरणे (बहिर्वाङ्मनसी ततः).

(२) भा. १२।२५६।२२ ; भामु. १२।२६४।९.

(३) भा. १२।२५६।२२ उत्त. ; भामु. १२।२६४। २३.

(४) भा. १२।२५७।१ ; भामु. १२।२६५।१.

एवं तुलाधारवाक्यैरहिंसात्मकस्य धर्मस्य श्रेष्ठयमुपपाद्य तस्यैव स्तुतये हिंसात्मकं धर्मं निन्दत्याख्यायिकामुखेन– अत्रापीत्यादिना । प्रजानां पुरुषादिपशूनाम् । नीटी.

**¹छिन्नस्थूणं वृषं दृष्ट्वा विरावं च गवां भृशम् ।**
**गोग्रहे यज्ञवाटस्य प्रेक्षमाणः स पार्थिवः ॥**

छिन्ना विशस्ता स्थूणा प्रतिमा शरीरं यस्य तम् 'स्थूणाऽयसि स्मृता । प्रतिमायां गृहस्तम्भे' इति विश्वः । गोग्रहे गवालम्भवति यज्ञे यज्ञवाटस्य, कर्मणि षष्ठी, यज्ञवाटस्थान् ब्राह्मणान्निर्दयान् प्रेक्षमाणः । नीटी.

**²स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम् ।**
**हिंसायां हि प्रवृत्तायामाशीरेषाऽनुकल्पिता ॥**

निश्चितं वचनं निर्वचनम् । एषा 'स्वस्ति गोभ्योऽस्तु' इति । नीटी.

**³अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः ।**
**संशयात्मभिरव्यक्तैर्हिंसा समनुकीर्तिता ॥**

तदेवाऽऽह– अव्यवस्थितेत्यादिना । हिंस्रः क्षत्रयज्ञः, तदन्यो ब्राह्मणयज्ञ इति मर्यादा । अव्यवस्थिता विचलिता मर्यादा येषां तैः, यतो विमूढैः । तत्रापि हेतुः– नास्तिकैः नास्ति ब्रह्मेति वदद्भिः संशयात्मभिः । आत्मा देहोऽन्यो वा, अन्योऽपि कर्ताऽकर्ता वा, अकर्ताऽप्येकोऽनेको वा, एकोऽपि सङ्गवान् असङ्गो वा इत्यादिरूपः संशयः, तद्वान् आत्मा चित्तं येषां तैः । अव्यक्तैः यज्ञादिद्वारैव ख्यातिमिच्छद्भिरिति भावः । हिंसा क्रतौ पश्वालम्भः श्रेष्ठः कृतः । नीटी.

(१) भा. १२।२५७।२ ; भामु. १२।२६५।२ विरावं (विलापं).

(२) भा. १२।२५७।३ ; भामु. १२।२६५।३ रेषाऽनु (रेषा तु).

(३) भा. १२।२५७।४ ; भामु. १२।२६५।४ कीर्तिता (वर्णिता).

**¹सर्वकर्मस्वहिंसा हि धर्मात्मा मनुरब्रवीत् ।**
**कामरागाद्विहिंसन्ति बहिर्वेद्यां पशून्नराः ॥**

बहिर्वेद्यामिव सर्वकर्मसु ज्योतिष्टोमादिष्वपि नराः कामकारादेव पशून् हिंसन्ति, न तु शास्त्रात् । यतः धर्मात्मा मनुः सर्ववेदार्थतत्त्ववित् अहिंसामेव अब्रवीत् प्रशशंस । ननु 'वसन्ते वसन्ते ज्योतिषा यजेत', 'प्रतिसंवत्सरं सोमः' (यास्मृ. १।१२५) इति श्रुतिस्मृतिभ्यां नित्यत्वेन विहितेषु ज्योतिष्टोमादिषु विहितः पश्वालम्भः कथं कामकारः स्यात् ? 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इत्यृणश्रुतेश्चानधीत्यानिष्ट्वा प्रजामनुत्पाद्य च कथमनृणो वा स्यात् ? अनाहिताग्नितायाश्चोपपातकेषु स्मरणात् कृताधानस्य समर्थस्य क्रत्वनारम्भो वा कथं स्यात् ? इति चेन्न, गार्हस्थ्यस्यैव कामकारत्वेन तन्मूलकानामाधानादीनामपि तथात्वात् । 'जायमानो वै' इत्यत्रापि नोत्पद्यमान इत्यर्थः, किंतु गृहस्थः अधिकारी वा संपद्यमान इति व्याख्येयम् । अन्यथा पित्रादिष्वकृताधानेषु पुत्रादीनामनाहिताग्निताजनितदोषभाक्त्वोपपत्तेः( ? क्त्वापत्तेः) । किंच 'यदहरेवैनं श्रद्धोपनमेदथाऽऽदधीताथ यजेत' इति शतपथश्रुतेः( ? ) आधानादिविधिषु श्रद्धावानधिकारी । श्रद्धा चाधीतसाङ्गवेदस्य आपातप्रतिपन्नवेदार्थस्य 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवाऽऽविशन्ति ॥' (मुउ. १।२।७) इत्यादिश्रुत्या, षोडश ऋत्विजो यजमानः पत्नी चेत्यष्टादश, तैर्निष्पाद्यानां यज्ञानामदृढत्वं तत्कर्तृणां च मूढत्वं दर्शयन्त्या ज्योतिष्टोमादिभ्यो हिंसावद्भ्यो यज्ञेभ्यः प्रागेवापनीता । तथा च 'वसन्ते वसन्ते' (इति ?) 'ज्योतिषा यजेत' इति विधितो निन्दार्थवादानुमितनिषेधाच्च 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति विहितप्रतिषिद्धत्वात् षोडशिग्रहणवत् ज्योतिष्टोमोऽपि

(१) भा. १२।२५७।५ ; भामु. १२।२६५।५ रागा (कारा).

कृताकृत एवेति । अश्रद्दधानस्य तत्र प्रवृत्तिः कामकारकृतैव । न चोपनिषदध्ययनात्प्रागेव ज्योतिष्टोमे प्रवृत्तिः संभवति, येन निन्दाश्रवणात् प्राक् तत्र श्रद्धा आवश्यकत्वबुद्धिश्च संभाव्यते, 'स्वाध्यायोऽध्येतव्यः' इति ब्रह्मचर्ये एवार्थज्ञानपर्यन्तस्योपनिषदध्ययनस्य सिद्धत्वात् । ननु काण्डद्वयाध्याय्यपि कर्मकाण्ड एव श्रद्धावानहमस्मि, न ज्ञानकाण्डे इति चेत्, तर्हि मोहसर्पदष्टस्य तव कर्मनिम्बं मधुरीकुर्वतस्तत्त्वज्ञानसितेयं तिक्तायताम्, न नः किंचिच्छिन्नम् । सर्वथाऽप्यज्ञानात् कामकारकृता हिंस्रकर्मणि प्रवृत्तिरिति सिद्धम् । तस्मादुक्तविध एव श्लोकार्थः । नीटी.

[1]तस्मात्प्रमाणतः कार्यो धर्मः सूक्ष्मो विजानता ।
अहिंसैव हि सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ॥

प्रमाणतः प्रमाणयोर्बलाबलं विजानता सूक्ष्मो धर्मः कार्यः । तमेवाऽऽह– अहिंसेति । नीटी.

[2]उपोष्य संशितो भूत्वा हित्वा वेदकृताः श्रुतीः ।
आचार इत्यनाचाराः कृपणाः फलहेतवः ॥

गृहस्थस्य पञ्चसूनानामपरिहार्यत्वात्कथम् अहिंसा कार्या ? इत्यत आह– उपोष्येति । उप समीपे ग्रामस्य वासं कृत्वा, 'भिक्षार्थं ग्रामं प्रविशेत्' (नारदोपनिषत् ३।५५) इति विधेः । संन्यस्येत्यर्थः । संशितः तीक्ष्णव्रतो भूत्वा वेदेन कृताः श्रुतीः फलश्रुतीः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्याद्याः हित्वा आचार इति बुद्ध्या अनाचारः गृहस्थाचारहीनः स्यात् । पुरुषस्येदमेव श्रेय इति बुद्ध्या नैष्कर्म्यं श्रयेदित्यर्थः । कृपणाः क्षुद्राः । फलमेव कर्मणि प्रवृत्तौ हेतुः कारणं येषां तथाभूताः । नीटी

[3]यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते ॥

(१) भा. १२।२५७।६ ; भाम्. १२।२६५।६ तृतीयचरणे (अहिंसा सर्वभूतेभ्यो).

(२) भा. १२।२५७।७ ; भाम्. १२।२६५।७ चाराः (चारः).

(३) भा. १२।२५७।८ ; भाम्. १२।२६५।८ मांसानि (मांसं न).

एतदेव कर्मनिन्दया स्तौति– यदीति । यज्ञादिमुद्दिश्य मानवाः वृथा मांसं न खादन्ति इति यः स एष धर्मो न प्रशस्यते । नीटी.

[1]मांसं मधु सुरा मत्स्या आसवं कृसरौदनम् ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ॥

वैदिकं धर्मं निन्दित्वा कामकारकृतं कर्म निन्दति– सुरामिति सार्धेन । आसवं मद्यम् । कृसरौदनं तिलमिश्रौदनम् । नीटी.

[2]कामान्मोहाच्च लोभाच्च लौल्यमेतत्प्रवर्तितम् ।
विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः ।
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् ॥

एवं निरस्ताखिलदोषो विष्णुम् आत्मानमेव श्रयेदित्याह– विष्णुमिति । तस्यार्चनार्थं च न शक्तेरिव सुरामांसाद्यपेक्षितमित्याह– पायसैरिति । नीटी.

[3]यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किंचित्कर्तव्यमन्यच्चोक्षैः सुसंस्कृतम् ।
महासत्त्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ॥

चोक्षैः विशुद्धैः । नीटी.

युधिष्ठिर उवाच–

[4]शरीरमापदश्चापि विवदन्त्यविहिंसतः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यति ॥

आपदः शरीरं शोषयन्ति शरीरं चाऽऽपदां नाशमिच्छति, अतोऽत्यन्तं हिंसाशून्यस्य कथं शरीरनिर्वाह इत्याह– शरीरमिति । नीटी.

(१) भा. १२।२५७।९ ; भाम्. १२।२६५।९ प्रथमचरणे (सुरा मत्स्या मधु मांसम्).

(२) भा. १२।२५७।१० ; भाम्. १२।२६५।१०–११ कामा (माना) त्प्रवर्ति (त्प्रकल्पि).

(३) भा. १२।२५७।११ ; भाम्. १२।२६५।११–१२ महास (महत्स).

(४) भा. १२।२५७।१२ ; भाम्. १२।२६५।१३ सेत्स्यति (सेत्स्यते).

भीष्म उवाच–

'यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत्॥

शरीराविरोधेनैव धर्मं चरेत्, न तु धर्मानुरोधेन शरीरं नाशयेत्। नीटी.

चत्वारोऽप्याश्रमाः देवयानाः मोक्षविषयाः श्रेयस्कराश्च

युधिष्ठिर उवाच–

'अविरोधेन भूतानां त्यागः षाड्गुण्यकारकः।
यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह॥

वृत्तमनूद्य पृच्छति– अविरोधेनेति। राज्ञामप्यहिंसाप्रधानः षाड्गुण्यकारकः षट् गुणाः ऐश्वर्यादयः, यैर्भगवच्छब्दभाग्भवति, उत्पत्त्यादयः प्रकृतिगुणाः, तेषां समूहः षाड्गुण्यम्, तस्य कारकः हेतुः योगः, उक्त इति शेषः। 'ऐश्वर्यस्य समग्रस्य ज्ञानस्य यशसः श्रियः। वैराग्यस्य च धर्मस्य षण्णां भग इतीङ्गना॥ उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥'। नीटी.

'गार्हस्थ्यस्य च धर्मस्य त्यागधर्मस्य चोभयोः।
अदूरसंप्रस्थितयोः किंस्विच्छ्रेयः पितामह॥

उभयभाक्त्वमेव विवृणोति– गार्हस्थ्यस्येति। गार्हस्थ्ये पञ्च सूना अनिवार्याः। योगे तु हिंसा सर्वात्मना त्याज्या। अदूरे समीपे एककार्यार्थत्वेन संप्रस्थितयोः प्रवृत्तयोः, 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते॥' (यास्मृ. ३।२०५) 'प्राणायामैर्दहेद्देनो धारणाभिश्च किल्बिषान्। प्रत्याहारेण संसर्गान् ध्यानेनानैश्वरान्गुणान्॥' (मस्मृ. ६।७२) इति स्मृतिभ्याम्। गुणान् जीवत्वादीन्। अतस्तुल्यार्थयोरेतयोर्मध्ये किंस्विच्छ्रेयः? नीटी.

भीष्म उवाच–

'उभौ धर्मौ महाभागावुभौ परमदुश्चरौ।
उभौ महाफलौ तात सद्भिराचरितावुभौ॥

उभौ गार्हस्थ्ययोगधर्मौ। नीटी.

'अत्र ते वर्तयिष्यामि प्रामाण्यमुभयोस्तयोः।
शृणुष्वैकमनाः पार्थ छिन्नधर्मार्थसंशयम्॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर॥

अक्षराधिक्यमार्षम्। नीटी.

आम्नायमनुपश्यन्हि पुराणं शाश्वतं ध्रुवम्।
नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम्॥

'तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते' (ऐब्रा. ३।४) इति श्रुतिमनुपश्यन् त्वष्टुः त्वष्ट्रे गृहागताय मधुपर्के गामालेभे। वेहतं वध्यां गाम्। क्षदन्ते हिंसन्ति। नीटी.

'तां नियुक्तामदीनात्मा सत्त्वस्थः समये रतः।
ज्ञानवान्नियताहारो ददर्श कपिलस्तदा॥

नियुक्तां हन्तुं पुरस्कृताम्। दृष्ट्वा वेदा इत्यब्रवीदिति द्वयोः संबन्धः दृष्ट्वेत्यस्याध्याहारश्च। नीटी.

'स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम्।
स्यूमरश्मिः शिथिलं सत्यं वेदा इत्यब्रवीत्सकृत्॥

वेदा इति गर्हायां प्लुतिः। नीटी.

'तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत्।
हंहो वेदा यदि मता धर्माः केनापरे मताः॥

(१) भा. १२।२५७।१३; भामु. १२।२६५।१४.

(२) भा. १२।२६०।१; भामु. १२।२६८।१ त्यागः (योगः).

(३) भा. १२।२६०।२; भामु. १२।२६८।२ त्याग (योग).

(१) भा. १२।२६०।३; भामु. १२।२६८।३ तात (तौ तु).

(२) भा. १२।२६०।४–६; भामु. १२।२६८।४–६.

(३) भा. १२।२६०।७; भामु. १२।२६८।७ समये (संयमे) स्तदा (स्तथा).

(४) भा. १२।२६०।८; भामु. १२।२६८।८ तृतीयचरणे (सतीमशिथिलां सत्यां) वेदा (वेदा ३).

(५) भा. १२।२६०।९; भामु. १२।२६८।९.

प्रविश्य योगबलेनेत्यर्थः। यतिं कपिलमुनिम्। हंहो इति विस्मये। वेदा यदि मताः गर्हितत्वेन संमताः। अत्रापि गर्हार्थायाः प्लुतेरनुवादः। अपरे हिंसाशून्या धर्माः केन मताः? प्रामाण्यमप्रामाण्यं वा कर्मज्ञानकाण्डयोस्तुल्यम्, अतो नान्यतरन्निन्देत्प्रशंसेद्वेति भावः। नीटी.

(१)तपस्विनो धृतिमतः श्रुतिविज्ञानचक्षुषः।
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः॥

तपस्विनः आर्षं मन्यन्ते। किम्? विदितात्मनः नित्यज्ञानवतः परमेश्वरस्य व्याहृतम् 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इति श्रुतेर्निःश्वासवदयत्नोच्चारितं च वेदम्। अतोऽनेकमप्यक्षरमप्रमाणीकर्तुमशक्यमित्यर्थः। नीटी.

(२)तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः।
का विवक्षाऽस्ति वेदेषु निरारम्भस्य सर्वशः॥

ननु 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति श्रुत्या सतां मुक्तिम् असतां बन्धं च दातुं विवक्षाभेदेन ज्ञानकर्मकाण्डे प्रवृत्ते इत्याशङ्क्याऽऽह– तस्येति। तस्य ईश्वरस्य गततृष्णस्य फलाशाहीनस्य विज्वरस्य द्वेषहीनस्य निराशिषः नीरागस्य निरारम्भस्य, अवाप्तसकलकामत्वात्, न वैषम्यविवक्षया वेदवचनं संभवतीत्यर्थः। नीटी.

कपिल उवाच–

(३)नाहं वेदान्विनिन्दामि न विवक्षामि कर्हिचित्।
पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम्॥

विवक्ष्यामि विषमान् वक्ष्यामि। नीटी.

(१)गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति।
गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः॥

एकार्थत्वमाह– गच्छत्येवेति। परित्यागी संन्यासी गच्छत्येव, परं पदमिति शेषः। नीटी.

(२)देवयाना हि पन्थानश्चत्वारः शाश्वता मताः।
तेषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम्॥

देवयानाः देवम् आत्मानं यान्त्येभिरिति तथाभूताश्चत्वार आश्रमाः। एषां ज्यायस्त्वकनीयस्त्वरूपं बलाबलं फलेषु निमित्तेषूक्तम्। यथोक्तम्– 'संन्यासी मोक्षमाप्नोति ब्रह्मलोकं वनी तथा। स्वर्लोकमृषिलोकं च गृहस्थब्रह्मचारिणौ॥' इति। नीटी.

(३)एवं विदित्वा सर्वार्थानारभेदिति वैदिकम्।
नाऽऽरभेदिति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः॥

आरभेत सर्वार्थान् स्वर्गादिप्रदान् यज्ञादीन् इति वैदिकं मतम्। यथोक्तमापस्तम्बेन– 'त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबद्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते' (आप. २।२३।९), 'अथापि प्रजापतेर्वचनम्। त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम्। य एतानि कुर्वते तैरित्सह स्मो रजोभूता(? जो भूत्वा) ध्वंसतेऽन्यत्प्रशंसन्॥' (आप. २।२४।७–८) इति। श्रुतिश्च 'भस्मान्तं शरीरम्' इति आमरणमग्निसाध्यकर्मानुष्ठानं कर्तव्यमिति दर्शयति। तथा अन्यत्र प्रकरणान्तरे नाऽऽरभेत, कर्माणीति शेषः। तथा च वार्तिककारोदाहृतं भाल्लविश्रुतिवचनम्– 'त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्। त्यजतैव हि विज्ञेयं त्यक्तुः प्रत्यक्परं पदम्॥' इति। नैष्ठिकीत्यनेनैतस्याः सिद्धान्तत्वं दर्शितम्। नीटी.

(१) भा. १२।२६०।१०; भामु. १२।२६८।१० धृतिमतः (धृतिमन्तः).

(२) भा. १२।२६०।११; भामु. १२।२६८।११ सर्वशः (सर्वतः).

(३) भा. १२।२६०।१२; भामु. १२।२६८।१२ वक्षामि (वक्ष्यामि).

(१) भा. १२।२६०।१३; भामु. १२।२६८।१३.

(२) भा. १२।२६०।१४; भामु. १२।२६८।१४ तेषां (एषां).

(३) भा. १२।२६०।१५; भामु. १२।२६८।१५ भेदिति (भेतेति).

'अनारम्भे ह्यदोषः स्यादारम्भे दोष उत्तमः ।
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥

तदेवाऽऽह्यर्धेन— अनारम्भे इति । अत्र शङ्कते- ऽर्धेन— एवमिति । कर्मतत्यागविध्योर्बलाबलं दुर्ज्ञेयम्, उभयत्र निन्दास्तुत्योस्तुल्यत्वादिति भावः । नीटी.

'यद्यत्र किंचित्प्रत्यक्षमहिंसायाः परं मतम् ।
ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥

एतद्दूषयति— यद्यत्रेति । अहिंसायाः परम् अहिंसातोऽन्यत् यत्किंचित् हिंसाशास्त्रम् आगमशास्त्रेभ्यः ऋते यदि प्रत्यक्षं दृष्टफलम्, मतं युक्त्या, यदि वा तत् पश्यसि अनुभवेन, तर्हि ब्रूहि । अयं भावः— योगफलं प्रत्यक्षम् । यथोक्तमापस्तम्बेन— ' अथापि संकल्पसिद्धयो भवन्ति । यथा वर्षं प्रजा दानं दूरेदर्शनं मनोजवता यच्चान्यदेवंयुक्तम् । तस्मात् श्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ' ( आध. २।२३।६-८ ) इति । अनुमानगम्यं च । तथा हि— 'नीहारेण प्रावृताः' ( ऋसं. १०।८२।७ ), 'अनृतेन हि प्रत्यूढाः' ( छाउ. ८।३।२ ) इत्यादिश्रुतिभ्यो रज्जूरगस्येव बन्धस्य मिथ्याज्ञानकार्यत्वं सिद्धम् । ततो ज्ञानमात्रापनोद्यत्वं युक्तम् । न हि रज्जूरगभीतस्य भयनिवृत्तिर्गङ्गास्नानसहस्रेणापि भवत्यधिष्ठानसाक्षात्कारजनिततद्बाधमन्तरेण । स्मृ( ? श्रु)- तिश्च— ' भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ' ( मुउ. २।२।९ ) इति । तथा च ( यथा ? ) प्रत्यक्षानुमानागमगम्यं तत्त्वज्ञानफलम्, कर्मफलं तु श्रुत्यैकगम्यम्, न तत्र प्रत्यक्षानुमाने संक्रामत इति कर्मतत्यागविध्योर्बलाबलं सुज्ञेयमेव । यत्तु आपस्तम्बेनोक्तम्— ' तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते' (आध. २।२४।१३ ) इति तारारूपिणां कर्मकृतामपि प्रत्यक्षं ज्योतिर्मयत्वमिति, तदपि श्रौतमेव । न हि ' सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि ' ( तैसं. ५।४।१।३ ) इति श्रुतिमन्तरेण तेषां चेतनत्वमध्यवसातुं शक्यम् । अचेतनत्वं तु जैमिनिसंमतमित्यास्तां तावत् । यत्तु तेनैव ' स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति, संकल्पसिद्धिश्च स्यात्, न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ' ( आध. २।२४।१४ ) इति ज्ञानफलस्य प्रत्यक्षत्वमभ्युपेत्यापि तत्साधकाश्रमस्य ज्यैष्ठ्यं निषिद्धम्, यच्च गौतमेन— ' ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य ' इति, 'भस्मान्तं शरीरम्' ( बृउ. ५।१५।१), ' कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः ' ( छाउ. ८। १५।१ ) इति प्रत्यक्षश्रुतिमूलकतया गार्हस्थ्यस्य ज्यैष्ठ्यमुक्तम्, तत्सर्वं ' न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते- ऽपि तु विधेयं स्तोतुम् ' इति न्यायेन ज्ञानानधिकारिणामाश्रमधर्मेषु श्रद्धोत्पादनार्थमिति द्रष्टव्यमिति । नीटी.

पशवो धान्यं च यज्ञस्याङ्गानि, यज्ञस्य सप्तदश अङ्गानि, यज्ञः स्वर्गफलः

स्यूमरश्मिरुवाच—
स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः ।
फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥

अत्र प्रत्यवतिष्ठते— स्वर्गेति । यागविधौ उद्देश्यस्य स्वर्गस्य स्वरूपाविवक्षायां कृत्स्नं शास्त्रमनर्थकं स्यादित्यर्थः । प्रतायते प्रतन्यते । नीटी.

'अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये ।
ग्राम्यारण्या ओषधयः प्राणस्यान्नमिति श्रुतिः ॥

ननु स्वर्गो नास्तीति न ब्रूमः, किंतु हिंसायुक्तं तत्साधनं निन्दाम इत्याशङ्क्य प्राणविद्यायां ' स होवाच किं मेऽन्नं भविष्यतीति यत्किंचिदिदमा श्वभ्य आ शकुनिभ्यः ' ( छाउ. ५।२।१ ) इति श्रुतिं प्रत्यक्षं च सर्वस्यान्नत्वे प्रमाणयति— अजश्चेति सार्धेन । मेषः मुण्डशिराः । ग्राम्या ओषधयः यवाद्याः । यस्य यदन्नं तद्भक्षणे तस्य दोषो नास्तीति भावः । नीटी.

---

(१) भा. १२।२६०।१६ दोष (ऽदोष) ; भाम्. १२।२६८।१६.

(२) भा. १२।२६०।१७-१८ ; भाम्. १२।२६८। १७-१८.

(१) भा. १२।२६०।१९ ; भाम्. १२।२६८।१९ ण्या ओ (ण्याश्चौ).

**[1]तथैवान्नं ह्यहरहः सायं प्रातर्निरुप्यते ।**
**पशवश्चाथ धान्यं च यज्ञस्याङ्गमिति श्रुतिः ॥**

यदेवं तदा श्रौते कर्मणि हिंसादोषः कैमुतिकन्यायनिरस्त इत्याशयेनाऽऽह– पशव इति । नीटी.

**[2]एतानि सह यज्ञेन प्रजापतिरकल्पयत् ।**
**तेन प्रजापतिर्देवान्यज्ञेनायजत प्रभुः ॥**

**[3]ते स्मान्योन्यंचराः सर्वे प्राणिनः सप्त सप्त च ।**
**यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् ॥**

अन्योन्यवराः परस्परापेक्षया श्रेष्ठाः । सप्तधा सप्तधेति चात्र आवृत्तिः । ते च– ‘ गौरजो मनुजोऽश्वश्च मेषाश्वतरगर्दभाः । ग्राम्याः सप्त समाख्याताः पशवः साधुवेदिभिः ॥ सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा । ऋक्षाश्च वानराश्चैव सप्ताऽऽरण्याः प्रकीर्तिताः ॥ ’ इति । उत्तममिति संज्ञा संजाता यस्य । ‘ पुरुषो वाव सुकृतम् ’ ( ऐआ. २।४।२।३ ) इति श्रुतेरुत्तमसंज्ञितं पुरुषाख्यमपि यज्ञेषु उपाकृतं विनियुक्तं ‘ पुरुषं वै देवाः पशुमालभन्ते ’ ( ऐब्रा. ६।८ ) इति वेदाः प्राहुः, तच्च शिष्टैरादृतम् । ‘ पुरुषो ह वै नारायणोऽकामयतात्यतिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति । स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् ’ ( शब्रा. १३।६।१।१ ) इति श्रुतेः पूर्वैर्ब्रह्मादिभिः पूर्वतरैर्नारायणादिभिः यत्र सर्वोत्कृष्टः पुरुषोऽपि श्रुतित आचाराच्च हिंस्यते तत्र का कथा इतरेषाम् ? इति भावः । सार्धः । नीटी.

**[4]एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा ।**
**को जातु न विचिन्वीत विद्वान्स्वां शक्तिमात्मनः ॥**

स्वां शक्तिं विद्वान् ‘ मयेदम् अजस्याश्वस्य पुरुषस्य वा आलम्भनं कर्तुं शक्यम् ’ इति जानन् कः पुमान् आत्मनः जीवान् न विचिन्वीत न विवेचयेत् ? आलम्भार्थमिति शेषः । किंतु सर्वोऽप्यास्तिकः स्वस्य शक्यं क्रतुं कुर्यादेवेत्यर्थः । नीटी.

**[1]पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह ।**
**स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गस्त्वृते मखम् ॥**

न चात्र हिंसादोषोऽस्ति, प्रत्युत स्वर्गार्थिना पश्वादीनां ‘ न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः ’ ( ऋसं. १।१६२।२१ ) इति मन्त्रवर्णादयमुपकार एवेत्याह– पशवश्चेति । मखात् मखं विना स्वर्गः ततः विस्तृतः नास्ति । जपादिजः स्वर्गः स्वल्प इति भावः । न रिष्यसि न हिंस्यसे । देवाँ इत् देवानेव । नीटी.

**[2]ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि ।**
**हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश ॥**

**[3]ऋचो यजूंषि सामानि यजमानश्च षोडशः ।**
**अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते ।**
**अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः ॥**

यज्ञो मूलम् । लोकस्थितेरिति शेषः । श्रुतिः ‘ यज्ञाद्भवति पर्जन्यः ’ ( भगी. ३।१४ ) इत्यादिर्भगवद्वचनरूपा, वेदस्यापीश्वरकर्तृकत्वाभ्युपगमेन भगवद्गीतानामुपनिषदामपि समानकर्तृकत्वेन श्रुतित्वौचित्यात् । नीटी.

**[4]आज्येन पयसा दध्ना शकृताऽऽमिक्षया त्वचा ।**
**वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम् ।**
**एवं प्रत्येकशः सर्वं यद्यदस्य विधीयते ॥**

---

(१) मा. १२।२६०।२० ; मामु. १२।२६८।२० सायं प्रा (सायंप्रा) रुप्यते (रूप्यते).

(२) मा. १२।२६०।२१ ; मामु. १२।२६८।२१.

(३) मा. १२।२६०।२२ ; मामु. १२।२६८।२२ प्रथमचरणे (तदन्योन्यवराः सर्वे) सप्त च (सप्तधा).

(४) मा. १२।२६०।२३ ; मामु. १२।२६८।२३.

(१) मा. १२।२६०।२४ ; मामु. १२।२६८।२४ स्त्वृते मखम् (स्ततो मखात्).

(२) मा. १२।२६०।२५ ; मामु. १२।२६८।२५.

(३) मा. १२।२६०।२६ ; मामु. १२।२६८।२६–२७ षोडशः (षोडश).

(४) मा. १२।२६०।२७ ; मामु. १२।२६८।२७–२८.

शकृता गोमयेन । आमिक्षया दधिमिश्रेण पयसा । त्वचा आनडुहे चर्मणि निर्वापादेर्विधानात् । शेषं व्याख्यातम् । नीटी.

(१)यज्ञं वहन्ति संभूय सहर्त्विग्भिः सदक्षिणैः ।
संहृत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत ॥

संहृत्य गुणोपसंहारन्यायेनैकीकृत्य आरमेतैव यज्ञमिति भावः । नीटी.

(२)यज्ञार्थानि हि सृष्टानि यथा वै श्रूयते श्रुतिः ।
एवं पूर्वे पूर्वतराः प्रवृत्ताश्चैव मानवाः ॥
(३)न हिनस्ति ह्यारभते नाभिद्रुह्यति किंचन ।
यज्ञो यष्टव्य इत्येव यो यजत्यफलेप्सया ॥

हिंसारम्भयोरुपपादितमदोषत्वमुपसंहरति— नेति । फलार्थिनामेव हिंसारम्भौ दोषावहौ, न त्वफलार्थिनां 'ममेदमावश्यकम्' इति बुद्ध्या यज्ञमनुतिष्ठतामित्यर्थः। नीटी.

(४)यज्ञाङ्गान्यपि चैतानि यथोक्तानि न संशयः ।
विधिना विधियुक्तानि तारयन्ति परस्परम् ॥

यज्ञाङ्गानि ओषध्यादीनि यज्ञोक्तानि । §यूपदार्वादिवत्समासः । विधियुक्तानि अलौकिकानि यूपाहवनीयादीनि विधिना उच्छ्रयणप्रणयनादिरूपेण धारयन्ति स्वस्वकार्ये परस्परमुपकुर्वन्तीत्यर्थः । नीटी.

(१)आम्नायमार्षं पश्यामि यस्मिन्वेदाः प्रतिष्ठिताः ।
तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात् ॥

ब्राह्मणस्य क्रियायां प्रवर्तकस्य वाक्यस्य । नीटी.

(२)ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च ।
अनु यज्ञं जगत्सर्वं यज्ञश्चानु जगत्सदा ॥

ब्राह्मणप्रभवः वेदविप्रोद्भवः । 'नपुंसकमनपुंसकेन' (पासू. १।२।६९) इत्येकशेषपूर्वकोऽयं समासः । नीटी.

(३)ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट् ।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥

ब्रह्मणः वेदस्य, तस्मात् प्रणवपूर्विका यज्ञादिक्रिया कर्तव्येत्यर्थः । नीटी.

न तस्य त्रिषु लोकेषु परलोकभयं विदुः ।
इति वेदा वदन्तीह सिद्धाश्च परमर्षयः ॥
(४)ऋचो यजूंषि सामानि स्तोभाश्च विधिचोदिताः ।
यस्मिन्नेतानि सर्वाणि बहिरेव स वै द्विजः ॥

स्तोभाः सामपूरकाक्षराणि 'हाऽऽयि, हाऽऽवु' इत्यादीनि । नीटी.

(५)अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज ।
यच्चेतरैर्महायज्ञैर्वेद तद्भगवान्स्वतः ॥

'मानुषाद्दैव्यमुपैमि' (तैब्रा. १।२।१।१५) इति मन्त्रवर्णादाधानकृदिहैव देवभावं प्राप्नोति, 'सोमं सुनोति

---

§ 'यूपदारु' इत्यत्र 'यूपाय दारु' इति तादर्थ्यचतुर्थ्यन्तस्य समासापेक्षया 'यूपार्थं दारु यूपदारु' इत्यर्थपदलोपेन मध्यमपदलोपिसमासस्य अवान्तरसमासार्थपदलोपरूपप्रक्रियागौरवेण जघन्यत्वेऽपि स एवात्र ग्राह्यः । अन्यथा 'तादर्थ्यचतुर्थ्यन्तसमासः प्रकृतिविकृतिभावे एव' इति नियमात् 'यज्ञोक्तानि' इत्यत्र प्रकृतिविकृतिभावाभावेन 'यज्ञार्थम् उक्तानि' इति मध्यमपदलोपिसमासस्यैव ग्राह्यत्वात् यूपदारुसमासस्य दृष्टान्तत्वं नोपपद्येत ।

(१) भा. १२।२६०।२८ ; भामु. १२।२६८।२९ संहत्यै (संहृत्यै).

(२) भा. १२।२६०।२९ ; भामु. १२।२६८।३० यथा वै (यथार्था) पूर्वे पूर्वतराः (पूर्वतराः सर्वे).

(३) भा. १२।२६०।३० ; भामु. १२।२६८।३१ ह्यार (नाऽऽर).

(४) भा. १२।२६०।३१ ; भामु. १२।२६८।३२ नि न संशयः (न्यनुपूर्वशः) तार (धार).

(१) भा. १२।२६०।३२ ; भामु. १२।२६८।३३.

(२) भा. १२।२६०।३३ ; भामु. १२।२६८।३४ अनु य (अनुय) नु जग (नुजग).

(३) भा. १२।२६०।३४–३५ ; भामु. १२।२६८। ३५–३६.

(४) भा. १२।२६०।३६ ; भामु. १२।२६८।३७ बहिरेव (भवन्तीह).

(५) भा. १२।२६०।३७ ; भामु. १२।२६८।३८ स्वतः (पुनः).

भवति द्युमाँ अह ' ( ऋग्. ५।३४।३ ) इति मन्त्रवर्णात् सोमं सुन्वन्तः स्वर्गाधिपत्यं प्राप्नुवन्तीत्येवमादि तद्भगवान् ज्ञानैश्वर्यसंपन्नतमः भवानेव वेद । नीटी.

**[1]तस्माद्ब्रह्मन्यजेतैव याजयेच्चाविचारयन् ।**
**यजतः स्वर्गविधिना प्रेत्य स्वर्गफलं महत् ॥**

स्वर्गविधिना स्वर्गप्रदज्योतिष्टोमादिना । यतः प्रेत्य महत्स्वर्गफलं भवति । नीटी.

**[2]नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः ।**
**वेदवादविदश्चैव प्रमाणमुभयं तदा ॥**

वेदवादविदः यो वेदगतानर्थवादान्वेद तस्योभयं फलसमर्पकमर्थवादद्वयं प्रमाणं स्तुत्यर्थत्वेनेत्यर्थः । यथा ' यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति ' (तैसं. ३।५।७।२ ) इति फलं क्रत्वङ्गजुहूसंबन्धादविवक्षितस्वार्थम् , किंतु लक्षणया स्तुतिमात्रपरम् ; एवं ' सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति ' ( छाउ. ८।१२।६ ) इत्यात्मज्ञानफलमपि ज्ञेयम् । ननु लोकवेदसाधारणस्य कर्त्रात्मनो जुहूवदव्यभिचरितक्रतुसंबन्धाभावात् कथं तज्ज्ञानफलस्य जुहूफलवदर्थवादत्वम् ? उच्यते— देहातिरिक्त आत्मा वेदैकगम्यो यूपाहवनीयादिवदलौकिकोऽस्ति । तस्य च क्रतुसंबन्धो न व्यभिचरति, आमुष्मिकव्यवहारमात्रस्य तत्सापेक्षत्वात् , ऐहिकव्यवहारे च तदनपेक्षणात् , देहात्मवादेऽपि तदुपपत्तेः । (यद्यपि?) 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत ' इत्यादिविशेषणमात्रस्य पत्न्यादिवल्लोकवेदसाधारणत्वेऽपि फलभोक्तुर्न तथात्वमस्ति । तस्माज्जुहूवत्स्वर्गकामस्यापि अव्यभिचरितक्रतुसंबन्धात् सामदृश्यादिवदनारभ्याधीतमपि तज्ज्ञानं क्रतुप्रवेशं लभते तत्फलस्य चार्थवादत्वमिति युक्तमुत्पश्यामः । तथा च सूत्रम्— ' शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ' ( ब्रसू. ३।४।२ ) इति । यत्तु विद्याफलं प्रत्यक्षमिति, तत्राप्युक्तमापस्तम्बेन— ' बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ' ( आध. २।२१।१४–१६ ) इति । बुद्धे आत्मनि ज्ञाते क्षेमप्रापणम् आनन्दप्राप्तिः नास्ति, ज्ञातात्मतत्त्वस्यापि दुःखोपलम्भात् । अयुक्तं च तत् , ' रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन् ' इति कर्ममार्गात् अन्यत् ज्ञानं प्रशंसतो निन्दाश्रवणात् । तस्माज्जुह्वात्मज्ञानफलयोः समानमर्थवादत्वमिति पूर्वः पक्षः । नीटी.

इन्द्रियनिग्रहपरेण सर्वभूतहितरतेन निष्कामेन
कर्तव्यमित्येव स्वधर्मोऽनुष्ठेयः

**कपिल उवाच—**

**[1]एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः ।**
**नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥**

अत्रोत्तरमाह— एतावदिति । यतयः यमनियमादिमन्तः यान्ति प्रकरणादात्मानं प्राप्नुवन्ति । ते मार्गगाः प्रागेव शुद्धात्मप्राप्तेर्मार्गे सविशेषावस्थायां स्थिताः एतावत् दृश्यत्वेन परिच्छिन्नं ब्रह्माण्डं पार्यन्तिकं कर्मफलम् अनुपश्यन्ति गुरुशास्त्रोपदेशमनु साक्षात्कुर्वन्ति । तथा च श्रुतिः— ' ब्रह्मविदाप्नोति परम् ' इति महत्फलमुपक्षिप्य ' यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान् सह ' ( तैउ. २।१ ) इति शरीरगुहास्थं सत्यादिलक्षणं ब्रह्म यो वेद सः परमे व्योमन् अव्याकृतावस्थां गतः सर्वकामभाग्भवतीति च दर्शयति । ननु फलश्रुतेरर्थवादत्वमुक्तमित्याशङ्क्याऽऽह— नैषामिति । एषां यतीनां सर्वेषु लोकेषु भोग्यपदार्थेषु कश्चित् व्यतिक्रमः मिथ्यासंकल्पत्वं नास्ति, ' संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ' ( छाउ. ८।२।१ ) ' संकल्पादेव तु तच्छ्रुतेः ' ( ब्रसू. ४।४।८ ) इति श्रुतिन्यायाभ्याम् । तथा हि छान्दोग्ये— ' सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् ' ( छाउ. ८।७।२ ) इति प्रजापतिना आत्मज्ञानफलमुपन्यस्तम् , तदेवोद्दिश्य इन्द्रविरोचनौ प्रजापतौ ब्रह्मचर्यमूषतुः । ' तं वा एतं देवा आत्मानमुपासते । तस्मात्तेषां सर्वे च लोकाः सर्वे च कामा आप्ताः '

(१) भा. १२।२६०।३८ ; भाम्. १२।२६८।३९ तैव (च्चैव).

(२) भा. १२।२६०।३९ ; भाम्. १२।२६८।४०.

(१) भा. १२।२६१।१ ; भाम्. १२।२६९।१ पश्यन्तो (पश्यन्ति).

( छाउ. ८।१२।६ ) इति परकृतिसरूपार्थवादेन सिद्धवन्निर्दिष्टम् । एतस्याविवक्षायां कृत्स्नं कर्मफलमप्यविवक्षितं स्यात् , न्यायसाम्यात् प्राकरणिकफलत्वाच्च । ननूक्तं देहादन्यस्य कर्त्रात्मनो जुह्वा इव नित्यः क्रतुसंबन्ध इति । सत्यम् , तथाऽपि 'अन्यत्र धर्मादन्यत्राधर्मात्' ( काउ. २।१४ ), 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' ( बृउ. ३।५।१ ) इति विदितवेदान्तवेद्यस्य धर्माद्यतीतस्याशनायादिरहितस्य आत्मनो ज्ञानं न कर्माङ्गत्वं प्रतिपद्यते, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृउ. २।४।१४ ) इति तदधिगमे द्वैतोपमर्दश्रवणात् । तस्मात् नाऽऽत्मज्ञानफलस्यार्थवादत्वं पर्णमयीदृष्टान्तेन युज्यते । तथा च सूत्रम्— 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' ( ब्रसू. ३।४।८ ) इति । नीटी.

[1]निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥

यत्तु 'बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत' इत्यार्षं वचनमुदाहृतं तत्राऽऽह— निर्द्वन्द्वा इति । निर्द्वन्द्वाः शीतोष्णादिजहर्षविषादशून्याः , अत एव निर्नमस्काराः न कंचिन्नमस्कुर्वन्ति, यतः निराशीर्बन्धनाः प्रार्थनापाशशून्याः , यतः पापेभ्यो वासनाहेतुभ्यो विमुक्ताः , शुचयः स्वभावशुद्धाः , अमलाः आगन्तुकदोषशून्याः । यत एवंविधा भरतसंवर्तादयो बहव उपलभ्यन्तेऽतः आपस्तम्बोक्तिर्ज्ञानानधिकारिणां कर्मणि श्रद्धोत्पादनार्था । अन्यथा पूर्वोदाहृतेन तदीयेन ज्ञानफलाभ्युपगमवचनेन विरोधः स्यात् । एतेन गौतमोक्तिरपि ऐकाश्रम्यपरा व्याख्याता वेदितव्या । नीटी.

अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः ।
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥

विशोका नष्टरजसस्तेषां लोकाः सनातनाः ।
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥

लोकाः लोक्यन्ते इति लोकाः काम्यमाना विषयाः सनातनाः नित्यसिद्धाः , 'त एते सत्याः कामा अनृतापिधानाः' ( छाउ. ८।३।१ ) इति श्रुतेः । अनृतं देहादितादात्म्याध्यासः । गार्हस्थ्ये असत्यस्वर्गादिप्रदकर्माधिकारनिमित्ते किमपि प्रयोजनं नास्ति । न हि प्राप्तसाम्राज्यो भिक्षामन्विच्छति । नीटी.

स्यूमरश्मिरुवाच—

[1]यद्येषा परमा निष्ठा यद्येषा परमा गतिः ।
गृहस्थानव्यपाश्रित्य नाऽऽश्रमोऽन्यः प्रवर्तते ॥

ननु तथापि केकेयजनकादीनां गार्हस्थ्य एव विद्वत्त्वदर्शनात्कर्मसमुच्चितैव विद्या फलाय भवतीत्यभिप्रेत्याऽऽह— यदीति । यदि एषा निर्द्वन्द्वादिविशेषणवत्त्वेव ज्ञाननिष्ठा तर्हि सा गार्हस्थ्यमन्तरेण न भवति । प्रवर्तते एनां निष्ठां दातुं समर्थो भवति । नीटी.

[2]यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य वर्तन्त इतरेऽऽश्रमाः ॥

[3]गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
गार्हस्थ्यमस्य धर्मस्य मूलं यत्किंचिदेजते ॥

एजते, 'एजृ कम्पने' । यत्किंचित्सुखार्थी चेष्टते तस्य धर्मफलस्य सुखस्य मूलं गार्हस्थ्यमेव । नीटी.

[4]प्रजनाद्ध्यभिनिर्वृत्ताः सर्वे प्राणभृतो मुने ।
प्रजनं चाप्युतान्यत्र न कथंचन विद्यते ॥

जनाः येन प्रजनादिना प्रजोत्पादनादिना अभिनिर्वृत्ताः सर्वतः सुखिनो भवन्ति तत्प्रजनं प्रजनादि अन्यत्राऽऽश्रमान्तरे नास्ति । नीटी.

---

(१) भा. १२।२६११२–४ ; भाम्. १२।२६९।२–४.

(१) भा. १२।२६१।५ ; भाम्. १२।२६९।५ निष्ठा (काष्ठा).

(२) भा. १२।२६१।६ ; भाम्. १२।२६९।६ गृहस्थ (गार्हस्थ्य) रेऽऽश्रमाः (राश्रमाः).

(३) भा. १२।२६१।७ ; भाम्. १२।२६९।७.

(४) भा. १२।२६१।८ ; भाम्. १२।२६९।८ द्ध्यभि (त्वभि) मुने (जनाः).

[1]यास्ताः स्युर्बर्हिरोषध्यो बह्वरण्यास्तथा द्विज ।
ओषधिभ्यो बहिर्यस्मात्प्राणी कश्चिन्न विद्यते ।
कस्यैषा वाग्भवेत्सत्या मोक्षो नास्ति गृहादिति ॥

बर्हींषि तृणानि । ओषध्यः धान्यानि । बहिः अन्या ओषध्यः अद्रिजाः सोमपूतिकाद्या यास्तासामपि मूलं वृष्ट्यादि गार्हस्थ्यमेवेति व्यवहितातीतेन संबन्धः । तथा ह्याह– 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति । ओषधिभ्यः प्राणादिति समानाधिकरणे पञ्चम्यौ । औषध्यात्मकात् प्राणाद्बहिर्न कश्चिद्दृश्यते । अतो विश्वोत्पत्त्यादिहेतुर्गार्हस्थ्यमेवेति भावः । तथाऽपि मोक्षसाधनत्वं गार्हस्थ्यस्य नास्तीत्याशङ्क्याऽऽह– कस्येति । नीटी.

[2]अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्जितैः ।
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः ।
श्रमस्योपरमो दृष्टः प्रव्रज्या नाम पण्डितैः ॥

( १ ) समस्य सर्वस्य । मोक. ६४

( २ ) निरासैः अप्रतिष्ठैः, काणत्वादिदोषाद्गार्हस्थ्यं कर्तुमशक्तैरित्यर्थः । अत एव स्वकर्मभिः काणत्वादिप्रदैः प्राक्कृतैस्तप्यमानैः । नीटी.

[3]त्रैलोक्यस्यैव हेतुर्हि मर्यादा शाश्वती ध्रुवा ।
ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते ॥

ब्राह्मणः वेदवित् । नीटी.

प्राग्गर्भाधानान्मन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
अविश्रम्भेषु वर्तन्ते विश्रम्भेष्वप्यसंशयम् ॥

अविश्रम्भेषु मानान्तरागम्येषु स्वर्गादिषु विश्रम्भेषु ऐहिकेषु वृष्ट्यादिषु साध्येषु मन्त्रा एव साधयितुं प्रवर्तन्ते । नीटी.

[1]दाहः पुनः संश्रयणे संस्थिते पात्रभोजनम् ।
दानं गवां पशूनां वा पिण्डानां चाप्सु मज्जनम् ॥

[2]अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरः स्मृताः ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥

मृतस्य दाहादिकं पितरो मन्त्राश्चानुमन्यन्त इति द्वयोः संबन्धः । तत्र 'मैनमग्ने वि दहः' ( ऋसं. १०।१६।१ ) इति दाहं प्रकाशयति मन्त्रः । 'सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् । हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥' (ऋसं. १०।१४।८ ) इति मन्त्रे अवद्यं जीर्णदेहं हित्वाय हित्वा, आर्षः क्त्वो यक्, पितृभिर्यमेन इष्टादिफलेन च स्वर्गे संगतिं संप्राप्य पुनः अस्तं गृहं पौत्ररूपेण प्रपौत्ररूपेण वा एहि, तन्वा देहेन संगच्छे( १ च्छस्वे )ति पुनर्देहप्राप्तिः प्रकाश्यते । तदिदं पुनःसंश्रयणम्, देहस्येति शेषः । तस्मिन्निमित्ते दाह इति संबन्धः । देहे पुनः संश्रिते सति मृतस्य तृप्तये पात्रभोजने पीयत इति पात्रं जलं भोजनं च ते उभे तर्पणनित्यश्राद्धादिरूपेण देये, तथा गवां वैतरण्यादीनां दानं पशूनां वा गोवृषादीनामुत्सर्गः पिण्डानां वाऽप्सु मज्जनं क्रियते । एतत्सर्वं मन्त्रमूलं न ह्यशरीरस्य मुक्तस्योपकाराय भवतीति न तादृशोऽशरीरतालक्षणो मोक्षोऽस्ति । नीटी.

[3]एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ।
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ॥

---

(१) **मा.** १२।२६१।९ ; **मामु.** १२।२६९।९–१० यास्ताः (यास्तु) र्बर्हि (र्बर्हि) द्वितीयचरणे (बहिरन्यास्तथाऽद्रिजाः) त्प्राणी (त्प्राणात्) विद्यते (दृश्यते) ; **मोक.** ६४ तृतीयार्धमात्रम् ; **वीक.** ३।३०५ मोकवत्.

(२) **मा.** १२।२६१।१० ; **मामु.** १२।२६९।१०–११ निराशै (निरासै) श्रमस्यो (शमस्यो) ज्या नाम प (ज्यायामप) ; **मोक.** ६४ रप्राज्ञैः (रल्पज्ञैः) तृतीयचरणे (अलसैरवर्णैरज्ञैः) श्रमस्यो (समस्यो).

(३) **मा.** १२।२६१।११–१२ ; **मामु.** १२।२६९। १२–१३.

(१) **मा.** १२।२६१।१३ ; **मामु.** १२।२६९।१४ दाहः (दाहे) द्वितीयचरणे (संश्रिते पात्रभोजने) दानं (दाने) नां चाप्सु मज्जनम् (नामप्सु मज्जने).

(२) **मा.** १२।२६१।१४ ; **मामु.** १२।२६९।१५ स्मृताः (तथा).

(३) **मा.** १२।२६१।१५ ; **मामु.** १२।२६९।१६.

अत्रैव हेत्वन्तरमाह– ऋणवन्त इति। तथा च श्रुतिः– 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति। नीटी.

[1]श्रिया विहीनैरलसैः पण्डितैरपलापितम्।
वेदवादापरिज्ञानं सत्याभासमिवानृतम्॥

वेदवादानां 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' इति संतत्यविच्छेदस्यैवामृतत्वं वदतां न परिज्ञानं यस्मिंस्तत् सत्याभासमनृतम् अशरीरतालक्षणं मोक्षस्वरूपं दर्शितम्। नीटी.

[2]न वै पापैर्ह्रियते कृष्यते वा
यो ब्राह्मणो यजते वेदशास्त्रैः।
ऊर्ध्वं यज्ञः पशुभिः सार्धमेति
संतर्पितस्तर्पयते च कामैः॥

प्रतिपादितमर्थमुपसंहरति– न वा इति द्वाभ्याम्। नीटी.

[3]न वेदानां परिभवाच्च शाठ्येन न मायया।
महत्प्राप्नोति पुरुषो ब्रह्म ब्रह्मणि विन्दति॥

परिभवात् वेदोक्तकर्मानादरात्। ब्रह्मणि वैदिककर्मणि ब्रह्म 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छाउ. ८।७।१) इत्यष्टगुणयुक्तं प्राप्नोति। तथा च सूत्रम्– 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' (ब्रसू. ४।४।५) इति। ब्राह्मेण अपहतपाप्मत्वादिगुणाष्टकवता रूपेण मुक्तः संपद्यते। कुतः? उपन्यासादिभ्यः। उपन्यासः अज्ञातज्ञापनम्। उद्देशः सिद्धवद्व्यपदेशश्चाऽऽदिपदार्थः। ते च प्राग्व्याख्याताः। तथा चाग्निहोत्रादिकर्मसमुच्चितादुपासनारूपात् ज्ञानान्मोक्षः, स च गार्हस्थ्ये एव सिध्यतीति निष्कृष्टोऽर्थः। जैमिनिमते सृष्टिप्रलययोरभावात् 'इमं मानवमावर्तं नाऽऽवर्तन्ते' (छाउ. ४।१५।६) इति देवयानेन पथा गतानामनावृत्तिश्रुतेश्च सगुणभाव एव नित्यः। वस्तुतस्तु इममिति विशेषणात् मानवान्तरे त एव बीजभूता आवर्तन्त इति गम्यते। तथा च 'पुनरस्तमेहि' इति प्रागुक्तं मन्त्रलिङ्गं संगच्छते, आपस्तम्बवचनं च 'आभूतसंप्लवात्ते स्वर्गजितः। पुनः सर्गे बीजार्था भवन्ति' (आध. २।२४।५, ६) इति। नीटी.

कपिल उवाच–

[1]दर्शं च पौर्णमासं च अग्निहोत्रं च धीमताम्।
चातुर्मास्यानि चैवाऽऽसंस्तेषु यज्ञः सनातनः॥

तत्र यदुक्तं कर्मभिरेव चेष्टादिकं करोति तदङ्गीकरोति– दर्श चेति। चित्तशुद्ध्यर्थिना एतान्येव कर्माण्यनुष्ठेयानि, न पुनर्हिंस्राणि पशुबन्धादीनीति भावः। नीटी.

[2]अनारम्भाः सुधृतयः शुचयो ब्रह्मसंश्रिताः।
ब्रह्मणैव स्म ते देवांस्तर्पयन्त्यमृतैषिणः॥

यत्पुनः संन्यासोऽलसैः कल्पित इति, तत्राऽऽह– अनारम्भा इति। ये कर्माणि नाऽऽरभन्ते, संन्यस्यन्ति, त एव सुतरां धैर्यवन्तः, वैराग्यबलेन जितकामत्वात्। अत एव शुचयः रागादिमलरहिताः, ब्रह्मेति संज्ञां प्राप्ताः। ब्रह्मज्ञा इत्यर्थः, 'ब्रह्मविद्(?ह्म वेद) ब्रह्मैव भवति' (मुउ. ३।२।९) इति श्रुतेः। यत्तु ऋणत्रयवान्न मुच्यत इति, तत्राऽऽह– ब्रह्मणैव साक्षात्कृतेन ते संन्यासिनो देवान् देवऋषिपितॄन् अमृतानि हविःस्वाध्यायप्रजाख्यानि इच्छन्ति तादृशांस्तर्पयन्ति, 'क्षणमेकं क्रतुशतस्य चतुःसप्तत्या यत्फलं तदवाप्नोति' (अथर्वशिखोप. ३) इत्यल्पकालकृतस्यापि ध्यानस्य महाफलत्वात्। नीटी.

---

(१) भा. १२।२६१।१६; भामु. १२।२६९।१७ द्वितीयचरणे (पण्डितैः संप्रवर्तितम्).

(२) भा. १२।२६१।१७; भामु. १२।२६९।१८ यज्ञः (यज्ञैः).

(३) भा. १२।२६१।१८; भामु. १२।२६९।१९ ब्रह्म ब्रह्मणि (ब्रह्मणि ब्रह्म).

(१) भा. १२।२६१।१९; भामु. १२।२६९।२० धीमताम् (धीमतः) यज्ञः (धर्मः).

(२) भा. १२।२६१।२०; भामु. १२।२६९।२१ संश्रिताः (संज्ञिताः).

[1]सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥

यदुक्तम् ' ऊर्ध्वं यशैः पशुभिः सार्धमेति ' इति, तत् 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनी(? ली)यन्ते ' (नृसिंहोत्तरतापिन्युप. ५) इति श्रुत्युक्तेन ब्रह्मविदां गत्यभावेन विरुद्धमित्याशयवानाह– सर्वेति । नहि सार्वात्म्यं सार्वज्ञ्यं च प्राप्तस्य गतिर्भोगो वा युज्यते, अतस्तस्य मार्गे देवा अपि मुह्यन्ति । अपदस्य, पद्यते गम्यते वस्तुस्वरूपमेभिरिति पदानि गुणाः, तद्रहितस्य पदैषिणः गुणकामाः देवाः । एतेन मुक्तस्य सोपाधिकावस्थायां सार्वात्म्यम्, वास्तवं तु चिन्मात्रत्वमिति दर्शितम् । तथा च सूत्रम्– ' एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ' ( ब्रसू. ४।४।७ ) इति । सगुणैकान्तवादी जैमिनिः, निर्गुणैकान्तवादी औडुलोमिः, अवस्थाभेदेन उभयमुपगच्छतो बादरायणस्य त्वविरोध इति भावः । तदिदं द्वयं सर्वभूतात्मभूतस्येत्यपदस्येति विशेषणाभ्यां दर्शितम् । नीटी.

[2]चतुर्द्वारं पुरुषं चतुर्मुखं
चतुर्धा चैनमुपयाति निन्दा ।
बाहुभ्यां वाच उदरादुपस्था-
त्तेषां द्वारं द्वारपालो बुभूषेत् ॥

ननु कथमात्मनो द्वैरूप्यम्, कथं वा तत्र देवानामपि मोहः ? इत्याशङ्क्याऽऽह– चतुर्द्वारमिति । एवं सर्वात्मानम् अपदं पुरुषं शरीरान्तःस्थं वाचा गुरूपदेशेन चतुर्धा विराट्सूत्रान्तर्यामिशुद्धरूपेण । उपयाति अवगच्छति । अतः सोपाधिकानुपाधिकरूपेणाऽऽत्मनो द्वैविध्यं युक्तम् । ननु सर्वेषामात्मत्वात्सर्वदेवायमवगत एवास्तीत्याशङ्क्याऽऽह– चतुर्द्वारं चत्वारि बाह्वादीनि द्वाराणीव पिधायकानि यस्य तम्, चत्वारि देहेन्द्रियमनोबुद्ध्याख्यानि मुखानीव भोगसाधनानि यस्य तम् । आत्माऽपि कर्मादिभिरावृतत्वाद्भोक्तृत्वादिरूपेण अन्यथाग्रहणादावृत एवेत्यर्थः । बाहुभ्यामिति कर्मोपलक्षणम् । भोगप्रदेन कर्मणेत्यर्थः । हेत्वर्थे पञ्चम्यः । वाच इति कर्मकाण्डतन्त्रान्तरीयसिद्धान्तानां ग्रहणम् । उदरोपस्थयोरपि विपरीतप्रवृत्तिहेतुतया आत्मावरकत्वम् । एतैश्चतुर्भिर्निमित्तैः तेषां देवानामपि द्वारं पिधानम् अस्ति । ' दृ स्वगने ' अस्माद्भावे घञ् । अतः द्वारपालः बाह्वादीनां पालकः विनियन्ता बुभूषेत् भवितुमिच्छेत् । नीटी.

[1]नाक्षैर्दीव्येन्नाऽऽददीतान्यवित्तं
न वाऽयोनीयस्य शृतं प्रगृह्णेत् ।
क्रुद्धो न चैव प्रहरेत धीमां-
स्तथाऽस्य तत्पाणिपादं सुगुप्तम् ॥

नियमनप्रकारमाह– नाक्षैरित्यादिना । अयोनीयस्य, नास्ति योनीयं योनिसंबन्धः यस्य स तथा, तस्य शृतं हविः न प्रगृह्णात् न प्रतिगृह्णीयात् । पञ्चमलकारोऽयम् ' लिङर्थे लेट् ' (पासू. ३।४।७ ) । योनिसंबन्धायोग्यं न तु याजयेदित्यर्थः । तथा च स्मृतिः – ' यथा कन्या तथा हविः ' इति । नीटी.

[2]नाऽऽक्रोशमर्छेन्न मृषा वदेच्च
न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त-
स्तथाऽस्य वाग्द्वारमथो सुगुप्तम् ॥

[3]नानाशनः स्यान्न महाशनः स्या-
दलोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाऽऽददीत
तथाऽस्य स्याज्जाठरी द्वारगुप्तिः ॥

(१) भा. १२।२६१।२१ ; भामु. १२।२६९।२२.

(२) भा. १२।२६१।२२ ; भामु. १२।२६९।२३ निन्दा (वाचा).

(१) भा. १२।२६१।२३ ; भामु. १२।२६९।२४ गृह्णेत् (गृह्णात्).

(२) भा. १२।२६१।२४ ; भामु. १२।२६९।२५ मर्छेन्न मृषा (मृच्छेन्न वृथा).

(३) भा. १२।२६१।२५–२६ ; भामु. १२।२६९। २६–२७.

**न वीरपत्नीं विहरेत नारीं**
**न चापि नारीमनृतावाह्वयीत ।**
**भार्याव्रतं ह्यात्मनि धारयीत**
**तथाऽस्योपस्थद्वारगुप्तिर्भवेत ॥**

हे वीर युधिष्ठिर, पत्नीं यज्ञसंबन्धवतीं नारीं न विहरेत न विभजेत तदुपरि स्त्र्यन्तरकरणेन धर्मार्थकामेषु तां विभागवतीं न कुर्यात् । तथोक्तमापस्तम्बेन— 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीतान्यतराभावे कार्या प्रागग्न्याधेयादाधाने सति हि कर्मभिः संबध्यते' (आध. २।११।१२-१४) इति । भार्याव्रतं परस्त्रीवर्जनम् । नीटी.

[1]**द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।**
**उपस्थमुदरं बाहू वाक्चतुर्थी स वै द्विजः ॥**
[2]**मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।**
**किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥**

मोघानि निष्फलानि सर्वाणि तपआदीनि । नीटी.

**अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।**
**बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ॥**
**द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः ।**
**परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥**

अननुध्यायन् सुखं दुःखं वा । नीटी.

**येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।**
**गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥**

प्रकृतिः ब्रह्म । विकृतिः द्वैतम् । नीटी.

**अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।**
**सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥**
[3]**नान्तरेणानुजानन्ति वेदानां यत्क्रियाफलम् ।**
**अनुज्ञाय च तत्सर्वमन्यद्रोचयतेऽफलम् ॥**

(१) भा. १२।२६१।२७ ; भामु. १२।२६९।२८ स वै द्विजः (भवेद्द्विज).

(२) भा. १२।२६१।२८-३२ ; भामु. १२।२६९।२९-३३.

(३) भा. १२।२६१।३३ ; भामु. १२।२६९।३४ द्वितीयचरणे (दानयज्ञक्रियाफलम्) अनुज्ञा (अविज्ञा) ऽफलम् (फलम्).

ईदृशं ब्राह्मण्यमज्ञात्वा मूढाः कर्मसु सज्जन्ते योगं चावमन्यन्ते इत्याह— नेति चतुर्भिः । दानादिक्रियायाः फलं चित्तशुद्धिः, ताम् अन्तरेण विना न अनुजानन्ति गुर्वादिभिरुक्तं नानुबुध्यन्ते । ब्राह्मण्यमिति शेषः । अन्यत् स्वर्गादि । नीटी.

[1]**स्वकर्मभिः संश्रितानां तपो घोरत्वमागतम् ।**
**तं सदाचारमाश्रित्य पुराणं शाश्वतं ध्रुवम् ॥**

यमाश्रित्य संश्रितानामाश्रमाणां स्वकर्मभिः सहितं तपः वेदान्तश्रवणाद्यात्मकमात्मालोचनं घोरत्वं संसारमूलाज्ञानदाहकत्वम् आगतं भवति तं सदाचारं चरितुमशक्नुवन्त एतानि विगुणानि अनैकान्तिकानि व्यभिचारीणि पश्यन्तीति त्रयाणां संबन्धः । पुराणम् अनादिम्, शाश्वतं मुमुक्षूणां नित्यानुष्ठेयम्, ध्रुवम् अव्यभिचारिफलम् । नीटी.

**अशक्नुवन्तश्चरितुं किंचिद्धर्मेषु सूत्रितम् ।**
**निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ॥**

अप्रमादः सावधानता । अपराभवः कामाद्यनाक्रान्तता । नीटी.

[2]**फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।**
**विगुणानि च पश्यन्ति तथाऽनैकान्तिकानि च ॥**

फलवन्ति प्रत्यक्षफलानि कर्माणि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्याख्यानि, व्युष्टिः पारमैश्वर्यम्, तद्वन्ति, ध्रुवाणि अविनाशीन्यपि विगुणानि यज्ञादिकर्मस्थागान्निष्फलानि, अनैकान्तिकानि चेति पश्यन्ति । नीटी.

[3]**गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चापि सुदुष्कराः ।**
**अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥**

गुणाः गुणकार्याणि यज्ञादीनि । यज्ञादीनामन्तवत्फलत्वं जानन् ज्ञाननिष्ठामेव श्रयस्वेति भावः । नीटी.

(१) भामु. १२।२६९।३५-३६.

(२) भा. १२।२६१।३४ ; भामु. १२।२६९।३७.

(३) भा. १२।२६१।३५ ; भामु. १२।२६९।३८ श्चापि (श्चात्र).

**स्यूमरश्मिरुवाच–**

**'यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा ।**
**तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥**

एवं श्रद्धोपपत्तिभ्यां कर्मतत्त्यागदिशोराकृष्यमाणतयाऽन्यतरस्य श्रेयस्त्वे संदिहानः स्यूमरश्मिः पृच्छति– यथा चेति । 'कुरु कर्म, त्यज' इति चेति परस्परविरुद्धं पक्षद्वयमुपदिशतो वेदस्य प्रामाण्यं यथा निर्वहेत् । यथा च त्यागः, चात् अत्यागः । एतौ पक्षौ व्यक्तौ 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ईउ. २.), 'त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम्' इति श्रुतिभ्यां विस्पष्टमुक्तौ । भगवन् सर्वैश्वर्यज्ञानादिसंपन्न, तत् तयोस्तत्त्वं मे मह्यं ब्रवीहि । नीटी.

**कपिल उवाच–**

**प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः ।**
**प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥**

अत्रानुभवमेव प्रमाणयन्नुत्तरमाह– प्रत्यक्षमिति । सतः पन्थाः ब्रह्मप्राप्तिमार्गो योगः, तत्र स्थिताः सन्तो भवन्तः इह जीवत्येव देहे प्रत्यक्षं पश्यन्तु परीक्षयन्तु । विधौ लेट् । किं तत्परीक्षणीयं प्रत्यक्षम्? 'घटं प्रत्यक्षीकरोमि', 'घटं प्रत्यक्षेण पश्यामि' इति विषयकरणयोरपि प्रत्यक्षशब्दप्रयोगादिति, तत्राऽऽह– प्रत्यक्षमिति । यद्भवन्तः कर्मठा उपासते प्रार्थयन्ते तत्प्रत्यक्षं सुखाद्यनुभवरूपम् अत्र अस्मिँल्लोके किं किंस्वरूपमस्ति? इति । नीटी.

**स्यूमरश्मिरुवाच–**

**स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहाऽऽगतः ।**
**श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ।**
**इमं च संशयं घोरं भगवान्प्रब्रवीतु मे ॥**

तत्र सुखाद्यनुभवं परीक्षितुमशक्तः प्रतिवादित्वं परित्यज्य शिष्यत्वेन कपिलमनुसरन् स्यूमरश्मिरुवाच– स्यूमेति । इहाऽऽगतः गवि प्रविष्टः । विवक्षया स्वपक्षनिर्वाहेच्छया । वहतेरिदं रूपम् । न प्रातिभटयेनेत्यर्थः । संशयं किं विषयात्मकं प्रत्यक्षं ज्योतिष्टोमादिप्राप्यम्? उत इन्द्रियमनोबुद्ध्याख्यकरणात्मकम्? आद्ये एकस्यां युवत्यां कामुकसपत्न्यो रागद्वेषदर्शनेन विषयस्य सुखरूपत्वानियमेन काम्यत्वायोगात्, अन्त्ये सुखकरणत्वादेव तेषां सुखत्वाभावेनाकाम्यत्वात्; अथ स्वरूपसुखाभिव्यक्तये करणपाटवमेव काम्यं तदा विरक्तानां विनाऽपि विषयं सुखसिद्धेः स्वर्गकामादिपदवैयर्थ्यम्, पराभिमतचित्तसंस्कारपक्षानतिरेकादिति अन्यतरानिर्णयात्संशयस्य घोरत्वम् । नीटी.

**'प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः ।**
**किमत्र प्रत्यक्षतमं भवन्तो यदुपासते ।**
**अन्यत्र तर्कशास्त्रेभ्य आगमाच्च यथागमम् ॥**

विशेषं जिज्ञासुः कपिलोक्तिमनुवदति– प्रत्यक्षमिति । विषयः प्रत्यक्षम्, बुद्धिः प्रत्यक्षतरम्, प्रत्यक्षतमं तु किं बुद्धिविशिष्टश्चिदाभासः, उत बुद्धिनिष्कृष्टोऽन्यः कश्चिदात्मा? इति यं भवन्त उपासते तं मे ब्रुवन्त्विति विपरिणामेनानुषङ्क्तनीयम् । स्वमतमाह– अन्यत्रेति । तर्कैकप्रधानानि वेदविरोधीनि लोकायतार्हतसौगतकापालिकादिशास्त्राणि, तेभ्योऽन्यत्र तानि वर्जयित्वा आगमस्यार्थं यथा यथावत् अगमम् अधिगतवानस्मि । नीटी.

**'आगमो वेदवादस्तु तर्कशास्त्राणि चाऽऽगमः ।**
**यथागममुपासीत आगमस्तत्र सिध्यति ।**
**सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥**

तत्र आगमः किं पाशुपतपाञ्चरात्रादिः? इत्येतां शङ्कां निरस्यति– आगम इति । तर्कशास्त्राणि वेदार्थनिर्णयकानि पूर्वोत्तरमीमांसे सांख्यपातञ्जले च, यत्र वेदस्य

(१) भा. १२।२६१।३६–३८; भामु. १२।२६९। ३९–४२.

(१) भा. १२।२६१।३९; भामु. १२।२६९।४२–४३ माच्च (मार्थं).

(२) भा. १२।२६१।४०; भामु. १२।२६९।४३–४४ वादस्तु (वादास्तु) यथागम (यथाश्रम).

स्वतःप्रामाण्यमाश्रीयते, नानुमा( ? न तु मा )-नान्तरसंवादसापेक्षम् । तान्येतानि यथाश्रमम् आश्रम-धर्ममनतिक्रम्य उपासीत । तत्राप्यागमो मीमांसाद्युपगृहीतः सिध्यति । सांख्यपातञ्जले त्वंशतो वेदविरोधान्न सिध्यतः । तथा हि– सांख्यैरहिंसैव प्रशस्यते, पातञ्जलैश्च चित्तनिरोध एव । तावुभौ यागाद्यनुष्ठानप्रतिबन्धकौ, अतो न सिध्यतः । ननु ' पृथ्व्याप्यतेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तत्र रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ ' इति पञ्चभूतजयाद्योगिनामप्यजरत्वामरत्वादिसिद्धिः प्रत्यक्षागममूला दृश्यते । सत्यम् । प्रतिक्षणपरिणामिनो जन्मवतः शरीरस्याजरत्वामरत्वे प्रत्यक्षानुमानविरुद्धे । अतो या प्रत्यक्षस्य रूपमिव रूपं यस्या इति प्रत्यक्षाविरुद्धा, चादनुमानाविरुद्धा च, आगमनिश्रयात् दृश्यति दृश्यते गत्यागतिदिव्यभोगप्राप्त्यादिरूपा सैव सिद्धिरिति । नीटी.

**[1]नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना ।**
**ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति ।**
**एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भोः ॥**

एवमुपन्यस्तं स्वमतं परमतजिज्ञासया निन्दति– नौर्नावीति । यथा नावि निबद्धा नौः स्रोतसा ह्रियमाणा न तारयति, एवमन्धपरंपरया कर्मनौकां सनिबन्धनां पूर्वपूर्वकर्मवासनाबन्धवतीम् आश्रिता वयं जन्मजरामृत्युप्रवाहं न तर्तुं क्षमा इत्यर्थः । फलितमाह– एतदिति । एतत् प्रत्यक्षतमम् । उपपन्नः उपसन्नः शिष्योऽस्मि अधिकार्यस्मीति वा । अधीहि अध्यापय । नीटी.

**[2]नैव त्यागी न संतुष्टो नाशोको न निरामयः ।**
**न निर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥**

ननु ' तरति शोकमात्मवित् ' इति त्वयाऽप्यधीतमस्त्येव, ' निर्द्वन्द्वा निर्नमस्काराः ' इत्यादिना मयाऽप्युक्तं च, किमतः परमध्यापयितव्यम् ? इत्याशङ्क्य तत्र प्रत्यक्षविरोधमुपन्यस्यति– नैवेति । ना पुरुषः । निर्विवित्सः चिकीर्षाशून्यः । आवृत्तः सङ्गविमुखः । अपवृत्तः निष्कर्मा । नीटी.

**[1]भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।**
**इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥**
**एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।**
**एकमालम्बमानानां निर्णये किं निरामयम् ॥**

एकं सर्वेषामीप्सितं सुखम् आलम्बमानानां सुखार्थिनां वर्णादीनां निर्णये सिद्धान्ते किं सुखं निरामयम् अपचयहीनम् ? तदधीहीति पूर्वेण संबन्धः । नीटी.

**कपिल उवाच–**

**[2]यद्यदाचरते शास्त्रमथ सर्वप्रवृत्तिषु ।**
**यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयम् ॥**

अत्रोत्तरमाह– यद्यदिति । वैदिकमवैदिकं यद्ग्रन्थजातं यस्य यस्य मोक्षशास्त्रस्यार्थम् आचरते सम्यगनुतिष्ठति । $ ' भावकर्मणोः ' ( पासू. १।३।१३ ) इति कर्मणि तङ् । तत्तत् अर्थ्यम् अर्थात् प्रयोजनात् अनपेतं सफलम् । एतत्प्रसिद्धमेवेत्याह– यस्येति । अयं भावः– ' सर्वं ज्ञानं धर्मिण्यभ्रान्तम् , प्रकारे तु विपर्ययः ' इति न्यायेन सर्वेषां घटस्वरूपे तत्साक्षात्कारसाधने चक्षुरुन्मीलनादौ च न विगानम् , एवमात्मनि वादिविप्रतिपत्त्याऽनेकेषु विकल्पेषु ' शून्यम् , क्षणिकविज्ञानम् , कर्ता, भोक्ता ' इत्यादिषु सत्स्वपि मोक्षे तत्स्वरूपं निरस्ताशेष-

---

(१) भा. १२।२६१।४१ ; भामु. १२।२६९।४४–४५.

(२) भा. १२।२६१।४२ ; भामु. १२।२६९।४६ न निर्विवित्सो (नानिर्विधित्सो).

---

$ ग्रन्थोऽयं विसंगतः । ' आचरते ' इत्यत्र न भावे, न वा कर्मणि तङ् । ' आचर्यते ' इति पाठकल्पनाऽपि ' अर्थम् ' इति द्वितीयया ' अनुतिष्ठति ' इति व्याख्यानेन च विरोधात् दुष्करा । छन्दसि सर्वविधीनां वैकल्पिकत्वेनात्राऽऽत्मनेपदं सुसाधम् ।

(१) भा. १२।२६१।४३–४४ ; भामु. १२।२६९। ४७–४८.

(२) भा. १२।२६१।४५ ; भामु. १२।२६९।४९ मथ (मर्थ्यं).

विषयदर्शनं तत्साधनं च शमदमोपरमतितिक्षाश्रद्धासमाधानात्मकमविगीतम् । एवं व्यावहारिकप्रक्रियायां विगानेऽपि फलसाधनयोरविगानात् यत्र यत्र मते स्थित्वाऽस्य शमाद्यनुष्ठानं संपद्यते तेन तत्र तत्र निरामयं सर्वदोषशून्यं स्वरूपं लभ्यते । एतेन ' अन्यत्र तर्कशास्त्रेभ्यः ' इति पूर्ववाद्युक्तं शास्त्रान्तरविगानमुपादेयांशस्याविगानादेवेत्युक्तम् । उक्तं च व्यावहारिकप्रक्रियाणां सर्वासामविगीतत्वमनवस्थितत्वं च– 'यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता ॥ ' इति । नीटी.

[1]सर्वं पावयते ज्ञानं यो ज्ञानं ह्यनुवर्तते ।
ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥

यथोक्तसाधनानुष्ठानादुत्पन्नं ज्ञानं सर्वं संसारं नाशयति । कस्य ? यो ज्ञानं ह्यनुवर्तते तस्य । ज्ञानं विना या वैदिक्यपि वृत्तिः सा प्रजा नाशयति जन्ममरणप्रवाहपातनेन क्लेशयति । नीटी.

[2]भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरागमाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥

एक एव द्वैतदर्शनहीनः आत्मा यत्र भवति तदैकात्म्यं नाम ज्ञानं भवतां ज्ञानिनां मध्ये कश्चिदुपपद्यते उपसन्नो भूत्वा प्राप्नोति ? नैवेत्यर्थः , शमाद्यभावात् । नीटी.

[3]शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबला जनाः ।
कामद्वेषाभिभूतत्वादहङ्कारवशं गताः ॥

अतः सर्वे यूयं भ्रान्ता इत्याह– शास्त्रं हीत्यादिना । नीटी.

[1]याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्वमतयोऽशिवाः ॥

ब्रह्म त्रिविधपरिच्छेदशून्यं वस्तु, तस्य स्तेनाः अपलापकर्तारः । निरारम्भाः शमाद्यारम्भशून्याः । नीटी.

[2]वैगुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ।
तेषां तमःशरीराणां तम एव परायणम् ॥

नैर्गुण्यं फलाभावम् । गुणान् ज्ञानैश्वर्यादीन् न अनुयुञ्जते आत्मसंवेद्यतामापाद्य परेषु न योजयन्ति । पाषाणवत्स्वयं मज्जन्तो नान्यमुद्धर्तुं शक्नुवन्तीत्यर्थः । नीटी.

[3]यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः ।
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ।
नित्यमेवाभिवर्तन्ते गुणाः प्रकृतिसंभवाः ॥

[4]एतद्बुद्ध्वाऽनुपश्यन्तः संत्यजेयुः शुभाशुभम् ।
परां गतिमभीप्सन्तो यतयः संयमे रताः ॥

संयमे धारणाध्यानसमाध्यात्मके । समये इति पाठे सिद्धान्ते । नीटी.

स्यूमरश्मिरुवाच–

[5]सर्वमेतन्मया ब्रह्मञ्शास्त्रतः परिकीर्तितम् ।
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥

एतत् कर्मणां प्राशस्त्यं संन्यासस्याप्राशस्त्यं च । प्रवृत्तयः वाचां विलासाः । नीटी.

---

(१) भा. १२।२६१।४६ ; भामु. १२।२६९।५० प्रथमचरणे (ज्ञानं प्लावयते सर्वं).

(२) भा. १२।२६१।४७ ; भामु. १२।२६९।५१ नित्यं (व्यक्तं) गमाः (मयाः) दभि (दुप).

(३) भा. १२।२६१।४८ ; भामु. १२।२६९।५२ ला जनाः (लाज्जनाः).

(१) भा. १२।२६१।४९ ; भामु. १२।२६९।५३ चतुर्थचरणे (दम्भमोहवशानुगाः).

(२) भा. १२।२६१।५० ; भामु. १२।२६९।५४ वैगुण्य (नैर्गुण्य).

(३) भा. १२।२६१।५१ ; भामु. १२।२६९।५५ यथाप्र (यथा प्र).

(४) भा. १२।२६१।५२ ; भामु. १२।२६९।५६ प्रथमचरणे (एवं ध्यात्वाऽनुपश्यन्तः).

(५) भा. १२।२६१।५३–५५ ; भामु. १२।२६९। ५७–५९.

**यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।**
**यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥**
**न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।**
**यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥**
[1]**शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः ।**
**शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे ॥**

व्यक्तं प्रत्यक्षसिद्धं तदेव मन्यन्ते इति दृष्टमात्रपराः अत एव शास्त्रादपेतं इहलोकमेव पश्यन्ति । शास्त्रदोषान् शास्त्रोक्तान् कृतहानाकृताभ्यागमादिदोषान् । अन्याय्यमवैदिकं च मतमाश्रित्य यथा लोकायताः शोचन्ति तथा वयमपि शोचाम इत्यर्थः । नीटी.

[2]**इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ।**
**एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ॥**
**एकमालम्बमानानां निर्णये सर्वतोदिशम् ।**
**आनन्त्यं वदमानेन शक्तेनाऽऽवर्जिताऽऽत्मना ॥**
[3]**अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥**

अत्र हेतुमाह– इन्द्रियार्था इति । शीतोष्णादीनां स्पर्शः सर्वेषां सुखादिप्रदः पशुपामरपण्डितानां तुल्यरूप इत्यर्थः । एवमिति । द्वयोः संबन्धः । एकसुखार्थिनां वर्णादीनां मध्ये वयं त्वया आत्मना चित्तेन आवर्जिताः शान्तिं नीताः । संधिरार्षः । कीदृशेन त्वया ? निर्णये सिद्धान्ते सर्वतोदिशं सर्वतःप्रकारं सर्वशास्त्रसिद्धान्तत्वेन आनन्त्यं वदमानेन 'यद्यदाचरते शास्त्रम्' इत्यत्र प्राग्व्याख्यातरीत्या प्रकाशयता । 'भासनोपसंभाषा०' ( पासू. १।३।४७ ) इति वदेर्भासनार्थे तङ् । शक्तेन ऊहापोहकुशलेन । कीदृशा वयम् ? अविज्ञानेन आत्माननुभवेन हता प्रज्ञा स्वरूपनिष्ठा येषाम् । अत एव हीने विषये एव प्रज्ञा धीः येषाम् । एतयोरावरणविक्षेपयोः कारणमाह– तमोवृता इति । नीटी.

[1]**शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः ।**
**पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतोदिशम् ।**
**वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ॥**
[2]**अपेतन्यायशास्त्रेण सर्वलोकविगर्हिणा ॥**

यद्यपि त्वया इयं निष्ठा उक्ता तथापि दुष्करेत्याह– शक्यं त्विति द्वयेन । येन सर्वशः सर्वतोदिशं चरितुं शक्यं तेन मोक्षोऽस्तीति प्रभाषितुं युक्तमिति अध्याहृत्य व्यवहितेन योज्यम् । संन्यासं विना मोक्षो दुष्प्राप इत्यर्थः । नीटी.

[3]**इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।**
**दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ॥**

अत्रानुपपत्तिमाह सार्धद्वयेन– इदं त्विति । कर्मकाण्डस्य वैयर्थ्ये प्रतिपत्तॄणां नास्तिक्यं चास्मिन्मते स्यादित्यर्थः । नीटी.

**यद्येतदेवं कृत्वाऽपि न विमोक्षोऽस्ति कस्यचित् ।**
**धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ॥**
**नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतः क्रिया ।**
**एतस्याऽऽनन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ॥**

एतस्य कर्मकाण्डस्य आनन्त्यम् आनन्त्यहेतुत्वम् । अयं भावः– कर्मज्ञानकाण्डयोः पार्थगर्थ्ये वेदस्यैकस्मिन्नर्थे पर्यवसानाभावाद्वाक्यभेदः स्यात् । स च 'संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इति न्यायेनायुक्तः । अतः कर्मकाण्डस्यैव ज्ञानकाण्डशेषत्वं वाच्यम्, वैपरीत्यस्य प्रागेव निरस्तत्वादिति । नीटी.

[4]**तथ्यं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः ।**
**यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥**

---

(१) भा. १२।२६१।५६ ; भामु. १२।२६९।६० चतुर्थचरणे (शोचन्ति च यथा वयम्).

(२) भामु. १२।२६९।६०–६२.

(३) भा. १२।२६१।५६ ; भामु. १२।२६९।६२.

(१) भा. १२।२६१।५७ ; भामु. १२।२६९।६३–६४ मुक्तेन (युक्तेन) सर्वतोदिशम् (विजितात्मना).

(२) भामु. १२।२६९।६४.

(३) भा. १२।२६१।५८–६० ; भामु. १२।२६९।६५–६७.

(४) भा. १२।२६१।६१ ; भामु. १२।२६९।६८ तथ्यं (तत्त्वं).

वेदाः प्रमाणम् , धर्मः परमसुखदः

**कपिल उवाच–**

**[1]वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः ।**
**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥**

कर्मणां ज्ञानाङ्गत्वं विवक्षुस्तद्वैयर्थ्यशङ्कां तावत्परिहरत्यर्धेन– वेदा इति । शब्दब्रह्म कर्मोपास्तिकाण्डः । परं ब्रह्म प्रत्यगात्मा । नीटी.

**[2]देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः ।**
**धार्मिकान्पूजयन्तीह न धनाढयान्न कामिनः ॥**

**[3]सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः ।**
**धने सुखकला काचिद्धर्मे तु परमं सुखम् ॥**

पापस्य धर्मस्य निर्वेदस्य मोक्षस्य च मीमांसा

**युधिष्ठिर उवाच–**

**[4]कथं भवति पापात्मा कथं धर्मं करोति वा ।**
**केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥**

अहिंसाधर्म एव वैराग्योत्पादनद्वारा मोक्षहेतुरिति निश्चित्य धर्मविरोधिनः पापस्योत्पत्तिपरिहाराय इतरस्योपादानाय जिज्ञासते– कथमिति । नीटी.

**भीष्म उवाच–**

**[5]विदिताः सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि ।**
**शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः ॥**

**[6]विज्ञानार्थं हि पञ्चानामिच्छा पूर्वं प्रवर्तते ।**
**प्राप्य ताञ्जायते कामो द्वेषो वा भरतर्षभ ॥**

पञ्चानां शब्दादीनामेकं प्राप्य तत्र रागद्वेषौ जायेते इत्यर्थः । नीटी.

**[1]ततस्तदर्थं यतते कर्म चाऽऽरभते पुनः ।**
**इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ॥**

तदर्थं काम्यस्य प्राप्तये द्वेष्यस्य हानाय च । अभ्यासं पुनः पुनः सेवनम् । नीटी.

**[2]ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।**
**ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥**
**लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।**
**न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥**

**[3]व्याजेन चरतो धर्ममर्थव्याजोऽपि रोचते ।**
**व्याजेन सिध्यमानेषु धनेषु कुरुनन्दन ॥**

व्याजेन कपटेन । अर्थम् अर्थजातम् । नीटी.

**[4]तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ।**
**सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ॥**

पापं पित्रादिद्रोहम् । नीटी.

**[5]उत्तरं न्यायसंबद्धं ब्रवीति विधियोजितम् ।**
**अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥**

न्यायसंबद्धम् ' आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ' इत्यादि । त्रिविधः कायिको वाचिको मानसश्च । नीटी.

**[6]पापं चिन्तयते चैव प्रब्रवीति करोति च ।**
**तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः ॥**

---

(१) भा. १२।२६२।१ ; भामु. १२।२७०।१–२.

(२) भा. १२।२६३।५४ ; भामु. १२।२७१।५५.

(३) भा. १२।२६३।५५ ; भामु. १२।२७१।५६ धने (धर्मे).

(४) भा. १२।२६५।१ ; भामु. १२।२७३।१.

(५) भा. १२।२६५।२ ; भामु. १२।२७३।२ र्थमनु (र्थं त्वं तु).

(६) भा. १२।२६५।३ ; भामु. १२।२७३।३ प्राप्य ताञ् (प्राप्यैकं).

(१) भा. १२।२६५।४ ; भामु. १२।२७३।४ पुनः (महत्).

(२) भा. १२।२६५।५–६ ; भामु. १२।२७३।५–६.

(३) भा. १२।२६५।७ ; भामु. १२।२७३।७ पूर्वार्धे (व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।).

(४) भा. १२।२६५।८ ; भामु. १२।२७३।८.

(५) भा. १२।२६५।९ ; भामु. १२।२७३।९ योजितम् (चोदितम्).

(६) भा. १२।२६५।१०–१२ ; भामु. १२।२७३। १०–१२.

पापं परानिष्टम् । नीटी.

एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स नेह सुखमाप्नोति कुत एव परत्र वै ॥
एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ।
यथा कुशलधर्मा स कुशलं प्रतिपद्यते ॥

कुशलं कल्याणं परहितमित्यर्थः । नीटी.

[1]कुशलेनैव धर्मेण गतिमिष्टां प्रपद्यते ॥
[2]य एतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखानां साधूंश्चाप्युपसेवते ॥

सुखदुःखानां विवेचने कुशलः चतुरः । नीटी.

[3]तस्य साधुसमाचारादभ्यासाच्चैव वर्धते ।
प्रज्ञा धर्मे च रमते धर्मं चैवोपजीवति ॥
सोऽथ धर्मादवाप्तेषु धनेषु कुरुते मनः ।
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥

मूलं सिञ्चते यत्र वै गुणान्पश्यति तदेव वर्धयति । नीटी.

धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम् ।
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ॥
[4]शब्दे स्पर्शे तथा रूपे रसे गन्धे च भारत ।
प्रभुत्वं लभते जन्तुर्धर्मस्यैतत्फलं विदुः ॥

प्रभुत्वं संकल्पसिद्धत्वम् । नीटी.

[5]स धर्मस्य फलं लब्ध्वा न तृप्यति युधिष्ठिर ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥

निर्वेदं वैराग्यम् । नीटी.

[1]प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति ।
शब्दे स्पर्शे तथा रूपे न च भावयते मनः ।
विरज्यते तदा कामान्न च धर्मं विमुञ्चति ॥

भावयते चिन्तावशं करोति । नीटी.

[2]सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षाय यतते नानुपायादुपायतः ॥

धर्मत्यागे धर्मफलस्य स्वर्गादेस्त्यागे । नानुपायात् उपायाननुष्ठानात्, किंतु उपायत एव । नीटी.

[3]शनैर्निर्वेदमादत्ते पापं कर्म जहाति च ।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥
[4]एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
पापं धर्मं तथा मोक्षं निर्वेदं चैव भारत ॥
[5]तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर ।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥

धर्माय वित्तविनियोगः श्रेयान्

[6]न कामाननुरुध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मे कामं विवर्जयेत् ॥

धर्मार्थमपि वित्तं न लिप्सेत । यथोक्तम्– 'धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥' इति । धर्ममपि अर्थं प्राप्यैव उपयुञ्जीत, कामांस्तु अर्थं प्राप्यापि विसर्जयेदेव । नीटी.

(१) भामु. १२।२७३।१३.

(२) भा. १२।२६५।१३ ; भामु. १२।२७३।१३–१४ प्युपसे (प्यथ से).

(३) भा. १२।२६५।१४–१६ ; भामु. १२।२७३।१४–१७.

(४) भा. १२।२६५।१७ ; भामु. १२।२७३।१७–१८ तथा रूपे रसे (रसे रूपे तथा) ; चव. १२ तथा रूपे (च रूपे च) र्मस्यै (र्मदि).

(५) भा. १२।२६५।१८ ; भामु. १२।२७३।१८–१९ धर्मस्य फलं (तु धर्मफलं) तृप्यति (हृष्यति).

(१) भा. १२।२६५।१९ द्वितीयार्धं नास्ति ; भामु. १२।२७३।१९–२० द्वितीयचरणे (रसे गन्धे न रज्यते) रज्यते (मुच्यते).

(२) भा. १२।२६५।२० ; भामु. १२।२७३।२१ सर्व (धर्म).

(३) भा. १२।२६५।२१ ; भामु. १२।२७३।२२.

(४) भा. १२।२६५।२२ ; भामु. १२।२७३।२३ उत्तरार्धे (पापं धर्मस्तथा मोक्षो निर्वेदश्चैव भारत ॥).

(५) भा. १२।२६५।२३ ; भामु. १२।२७३।२४.

(६) भा. १२।२६८।९ ; भामु. १२।२७६।९ धर्मे कामं विव (धर्मं कामान् विस).

[1]**विद्वान्सर्वेषु भूतेषु व्याघ्रमांसोपमो भवेत् ।**
**कृतकृत्यो विशुद्धात्मा सर्वं त्यजति वै सह ॥**

आत्मना सोपमः आत्मौपम्येन सर्वेषां सुखमिच्छेत् दुःखं च नेच्छेदित्यर्थः । सर्वं पुण्यपापसंचयम् । नीटी.

[2]**चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम् ।**
**धर्मात्मा लभते कीर्तिं प्रेत्य चेह यथासुखम् ॥**

चारित्रं सदाचारम् । नीटी.

धर्म एव उभयत्र परमः श्रेयस्करः

**पराशर उवाच—**

[3]**धर्म एव कृतः श्रेयानिहलोके परत्र च ।**
**तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ॥**
**प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ।**
**धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम ।**
**तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥**

धर्मस्य लक्षणमाह— धर्मेति । कर्मविधिः यजेत, जुहुयात्, दद्यादित्यादिः । स एव धर्मः । एतेन 'चोदनालक्षणोऽर्थो धर्मः' इत्युक्तं भवति । चोदनेति क्रियायाः प्रवर्तकं वचनं यजेतेत्यादि । इदमेव धर्मे प्रमाणं च । तस्मिन् धर्मे । आश्रमिणः सन्तः तन्निष्ठाः । कुर्वते । विधौ लेट् । नीटी.

पापं नाऽऽचरणीयम्, पुण्यकर्मैव ज्ञानयुक्त-माचरणीयम्

**पराशर उवाच—**

[4]**मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः ।**
**रश्मिभिर्ज्ञानसंभूतैर्यो गच्छति स बुद्धिमान् ॥**

एवं सुखादिहेतूनां प्राक्कर्मणामस्तित्वं बुद्ध्वा सकलकर्मोच्छेदाय योगमाश्रयेदिति सूचितम्, तदेव व्याचष्टे— मन इति द्वाभ्याम् । मनोमयो रथः शरीरम्, तदेव रथ इव लोकान्तरगतिसाधनम् । इन्द्रियार्थाः शब्दादय हया इव वाहका यस्य तं प्राप्य यो ज्ञानसंभूतैः तत्तदाकार-वृत्तिसंवलितैः रश्मिभिः चिद्भाभिः गच्छति विषयां-श्चिन्मयत्वेनैव पश्यति स बुद्धिमान् । देहं प्राप्य ब्रह्म-भावेन विश्वं पश्यन्मुच्यत इत्यर्थः । नीटी.

[1]**सेवाऽश्रितेन मनसा वृत्तिहीनस्य शस्यते ।**
**द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात्परस्परम् ॥**

अन्वयमुक्त्वा व्यतिरेकमाह— सेवेति । अश्रितेन यत्किंचिदालम्बनमनाश्रितेन निरालम्बेन मनसा स्थितस्य अत एव वृत्तिहीनस्य पुंसः सेवा भक्तिध्यानरूपेश्वर-प्रणिधानं शस्यते निर्विकल्पसमाधिनाऽवस्थानं श्रेष्ठ-मित्यर्थः । हे द्विज । कीदृशी सेवा ? अतिहस्तान्निर्वृत्ता । हस्तशब्देन तत्साध्यं कर्म लक्ष्यते । अतिहस्तः अति-क्रान्तकर्मा । 'सर्वं पाप्मानं तरति' (बृउ. ४।४।२३), 'नैनं कृताकृते तपतः' (बृउ. ४।४।२२), 'क्षीयन्ते चास्य कर्माणि' (मुउ. २।२।८) इत्यादिश्रुतिभ्यः क्षीणकर्मा ब्रह्मवित्, तं प्राप्य निर्वृत्ता निष्पन्ना सदाचार्य-प्रसादाल्लब्धा, न तु परस्परात्तुल्यान्निर्वृत्ता । परोक्ष-ज्ञानिनां न परस्परोपदेशेऽधिकारः, किंत्वपरोक्षज्ञान्येव उपदेष्टा युक्त इत्यर्थः । यथोक्तम्— 'परोक्षज्ञानमात्रेण नाऽऽचार्यत्वे नियुज्यते ।' इति, 'तद्विज्ञानार्थं स गुरु-मेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' (मुउ. १।२।१२), 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्व-दर्शिनः ।' (भगी. ४।३४) इति श्रुतिस्मृत्योः 'ब्रह्म-निष्ठम्,' 'तत्त्वदर्शिनः' इति विशेषणाच्च । नीटी.

[2]**आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशां पते ।**
**उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ॥**

एतदेव शीघ्रं साधनीयमित्याह— आयुरिति । न सुल-भम्, किंतु दुर्लभम् । नावकर्षेत् विषयसेवनैर्न नाशयेत्,

(१) भा. १२।२६८।१० ; भामु. १२।२७६।१० व्याघ्रमांसो (आत्मना सो) वै सह (चैव ह).

(२) भा. १२।२६८।१३ ; भामु. १२।२७६।१३.

(३) भा. १२।२७९।६–७ ; भामु. १२।२९०।६–८.

(४) भा. १२।२८०।१ ; भामु. १२।२९१।१.

(१) भा. १२।२८०।२ ; भामु. १२।२९१।२ स्परम् (स्परात्).

(२) भा. १२।२८०।३ ; भामु. १२।२९१।३ यतते (यतेत).

किंतु पुण्येन कर्मणा उत्कर्षार्थमुत्तरोत्तरश्रेष्ठभूमिलाभार्थं प्रयतेत । नीटी.

[1]**वर्णेभ्योऽपि परिभ्रष्टः स वै संमानमर्हति ।**
**न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते ॥**

वर्णेभ्यः वृत्रगीतासूक्तेभ्यः षड्भ्यः कृष्णधूम्रनीलरक्तहारिद्रशुक्लेभ्यः सत्त्वरजस्तमसां ह्रासवृद्धितारतम्यात्कल्पितेभ्यः परिभ्रष्टः उच्चवर्णान्नीचवर्णं प्राप्तः संमानं श्रेष्ठ्यं नार्हति । परिभ्रष्टत्वमेव व्याचष्टे– न त्विति । नीटी.

[2]**वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ।**
**दुर्लभं तमलब्धा हि हन्यात्पापेन कर्मणा ॥**

तं वर्णोत्कर्षम् अलब्धा कुपुरुषः पापेनाऽऽत्मानं हन्यात् नानानरकपातेन हिंस्यात् । नीटी.

अज्ञानकृतपापस्य प्रायश्चित्तेन नाशः, न ज्ञात्वा कृतस्य

[3]**अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत् ।**
**पापं हि कर्म फलति पापमेव स्वयं कृतम् ।**
**तस्मात्पापं न सेवेत कर्म दुःखफलोदयम् ॥**

पापं दुःखं पापं कर्मेति संबन्धः । नीटी.

[4]**पापानुबन्धं यत्कर्म यद्यपि स्यान्महाफलम् ।**
**न तत्सेवेत मेधावी शुचिः कुसलिलं यथा ॥**

कुशलिनं कारुकं चण्डालविशेषमित्यर्थः । नीटी.

[5]**किंकष्टमनुपश्यामि फलं पापस्य कर्मणः ।**
**प्रत्यापन्नस्य हि सतो नाऽऽत्मा तावद्विरोचते ॥**

कुत्सितं च तत्कष्टं च किंकष्टम् । ततः पापाद्धेतोः प्रत्यासन्नस्य विपरीतदृष्टेः अनात्मा देहादिरेव विशेषेण आत्मत्वेन रोचते । नीटी.

(१) भा. १२।२८०।४ ; भामु. १२।२९१।४ ऽपि परिभ्रष्टः स (हि परिभ्रष्टो न).

(२) भा. १२।२८०।५ ; भामु. १२।२९१।५.

(३) भा. १२।२८०।६ ; भामु. १२।२९१।६.

(४) भा. १२।२८०।७ ; भामु. १२।२९१।७ न तत् (तन्न) कुसलिलं (कुशलिनं).

(५) भा. १२।२८०।८ ; भामु. १२।२९१।८ सतो (ततो).

[1]**प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते ।**
**तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते ॥**

प्रत्यापत्तिः वैराग्यम् । प्रस्थितस्य योगे प्रवृत्तस्य उत्तरभूम्यलाभात्तापो जायते । प्रस्थितस्य मृतस्य वा तापो नरकजः । नीटी.

**विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम् ।**
**प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे ॥**

विरक्तं स्वतःशुद्धं सत् विपरीतेन रागेणाऽऽक्रान्तं वस्त्रं शोध्यते, परं तु कृष्णेन भल्लातकेन उपसंहितं रक्तं न शोध्यते । एवं मे मत्तः पापं किंचिच्छोधितुं शक्यं किंचिदशक्यमिति निबोध बुध्यस्व । नीटी.

**स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति ।**
**प्रायश्चित्तं नरः कर्तुमुभयं सोऽश्नुते पृथक् ॥**

धीपूर्वकृतं न नश्यतीत्याह– स्वयमिति । नीटी.

**अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति ।**
**ब्राह्मणाः शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः ॥**

अहिंसा अहिंसया । तृतीयालोप आर्षः । ब्राह्मण इति पाठे वेदसंबन्धिनः । नीटी.

[2]**तथा कामकृतं चास्य विहिंसैवापकर्षति ।**
**इत्याहुर्धर्मशास्त्रज्ञा ब्राह्मणा वेदपारगाः ॥**

तथा अस्य पुंसः कर्म कामकृतं विहिंसा अहिंसा नैवानुकर्षति । ब्रह्मवादिनः स्मृतिकाराः । यथोक्तम्– 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते ॥' ( यास्मृ. ३।२२६ ) इति । 'कर्म कृतम्' इति पाठे कामत इत्यध्याहर्तव्यम् । 'तथा कामकृतं चास्य' इति पाठे तु अकामकृतवत् कामकृतमपि अहिंसैवापकर्षतीत्यर्थः । नीटी.

(१) भा. १२।२८०।९–१२ ; भामु. १२।२९१।९–१२.

(२) भा. १२।२८०।१३ ; भामु. १२।२९१।१३ चास्य (नास्य) वापक (वानुक) धर्म (ब्रह्म) वेदपारगाः (ब्रह्मवादिनः).

सर्वं कर्म फलदम्

[1]अहं तु तावत्पश्यामि कर्म यद्वर्तते कृतम् ।
गुणयुक्तं प्रकाशं च पापेनानुपसंहितम् ॥

एवं परमतमुक्त्वाऽस्य कामतोऽकामतो वा कृतं कर्म बहु अल्पं वा भोगमदत्त्वा नैव नश्यतीति स्वमतमाह— अहं त्विल्यादिना । गुणयुक्तं पुण्यं कर्म । प्रकाशं बुद्धिपूर्वकं प्रकाश्य, ज्ञात्वेत्यर्थः । णमुलन्तमिदम् । नीटी.

[2]यथा सूक्ष्माणि कर्माणि फलन्तीह यथातथम् ।
बुद्धियुक्तानि तानीह कृतानि मनसा सह ॥

मनसा बुद्धियुक्तानि 'इदमित्थं कुर्यात्, न वा' इति विमर्शपूर्वकम् 'इदमित्थं कर्तव्यमेव' इति निश्चित्येत्यर्थः । यथातथं स्थूलसूक्ष्मतारतम्येन फलन्ति सुखदुःखादिकं यच्छन्ति । नीटी.

भवत्यल्पफलं कर्म सेवितं नित्यमुल्बणम् ।
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा ॥

नित्यम् अव्यभिचारिफलम् । उल्बणं नरकावहम् । उग्रेण हिंस्रेण । यथा बुद्धिपूर्वकृतं कर्म नियमेन फलदमेवमबुद्धिपूर्वकृतमपि । तयोर्विशेषस्तु फलबहुत्वाल्पत्वकृतः, न तु फलसदसद्भावकृत इति श्लोकत्रयार्थः । नीटी.

[3]कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
नाऽऽचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥

ननु कर्मफलस्यापरिहार्यत्वे कथं विश्वामित्रेण वसिष्ठस्य पुत्रशतं हतं तत्फलं नरकपातश्च न प्राप्त इत्याशङ्क्यालौकिकत्वान्न तदुदाहरणमित्याह— कृतानीति । नीटी.

(१) भा. १२।२८०।१४ ; भामु. १२।२९१।१४ च (वा).

(२) भा. १२।२८०।१५–१६ ; भामु. १२।२९१। १५–१६.

(३) भा. १२।२८०।१७ ; भामु. १२।२९१।१७ नाऽऽच (न च).

शुभं कर्म कर्तव्यं यथाशक्ति

[1]संचिन्त्य मनसा राजन्विदित्वा शक्तिमात्मनः ।
करोति यः शुभं कर्म स वै भद्राणि पश्यति ॥
[2]नवे कपाले सलिलं संन्यस्तं हीयते यथा ।
नवेतरे तथाभावं प्राप्नोति सुखभावितम् ॥

नवे अपक्वे सलिलं न्यस्तं चेद्धीयते कपालमेव । नवेतरे पक्वे जलं न्यस्तं चेत् तथाभावं यथा पूर्वरूपं स्थितं तथारूपत्वमेव प्राप्नोति, न हीयते । एवं तेजस्विनं पापपुण्योदासीनं कर्म न हिनस्ति, इतरं तु हिनस्त्येवेति भावः । नीटी.

सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते ।
वृद्धे वृद्धिमवाप्नोति सलिले सलिलं यथा ॥
[3]एवं कर्माणि यानीह बुद्धियुक्तानि भूपते ।
नसमानीह हीनानि तानि पुण्यतमान्यपि ॥

समानि, चात् विषमाणि । नीटी.

आत्मौपम्यबुद्धिः श्रेयस्करी

[4]दमान्वितः पुरुषो धर्मशीलो
भूतानि चाऽऽत्मानमिवानुपश्येत् ।
गरीयसः पूजयेदात्मशक्त्या
सत्येन शीलेन सुखं नरेन्द्र ॥

आत्मानमिवेत्यहिंसा सूचिता । गरीयसः गुरुतरान् ब्रह्मविद्याप्रदान् । सत्येन ब्रह्मप्राप्तये । अध्ययनेन वसतीतिवद्धेतौ तृतीया । नीटी.

अधर्मेण अर्थार्जनं गर्ह्यम्

[5]येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् ।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥

(१) भा. १२।२८०।१८ ; भामु. १२।२९१।१८ शक्ति (शक्य).

(२) भा. १२।१८०।१९–२० ; भामु. १२।२९१। १९–२०.

(३) भा. १२।२८०।२१ ; भामु. १२।२९१।२१ भूपते (पार्थिव) तृतीयचरणे (समानि चैव यानीह).

(४) भा. १२।२८०।२३ ; भामु. १२।२९१।२३.

(५) भा. १२।२८१।१९ ; भामु. १२।२९२।१९ ; चव. १३ येऽर्था (यथा) वै शाश्वतं (हि शाश्वते).

धर्माधर्मविचारे मानवा एव अधिकृताः

[1]धर्म एव सदा नृणामिह राजन्प्रशस्यते ।
धर्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ॥
मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥

निषिद्धं कर्म वर्णत्रयपतनकारणम्

[2]विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथासन्तमाश्रित्येह स्वकर्मसु ॥

विकर्म निषिद्धं कर्म । स्वकर्मसु सन्तं नरमाश्रित्य वर्णाः सत्त्वादिगुणजा उन्नमन्ति । नीटी.

निषिद्धं कर्म दूषकम्

जनक उवाच–

[3]किं कर्म दूषयत्येनमथ जातिर्महामुने ।
संदेहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि ॥

एनं नरम् । दूषयति हीनतां नयति । नीटी.

पराशर उवाच–

[4]असंशयं महाराज उभयं दोषकारकम् ।
कर्म चैव हि जातिश्च विशेषं तु निशामय ॥
[5]जात्या च कर्मणा चैव दुष्टं कर्म निषेधते ।
जात्या दुष्टश्च यः पापं न करोति स पूरुषः ॥

दुष्टकर्मत्यागे जातिकर्मणोर्द्वयोरन्यतरस्यापि च हेतुत्वमाह द्वाभ्याम्– जात्येति । नीटी.

[6]जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम् ।
कर्म तद्दूषयत्येनं तस्मात्कर्म नशोभनम् ॥

(१) भा. १२।२८३।८, २८ ; भामु. १२।२९४।९, २९.

(२) भा. १२।२८५।२६ ; भामु. १२।२९६।२६ ; स्मृकौ. ५४ कर्माव (कर्म चा) कर्मसु (कर्म तु) मोक्षधर्मेषु भगवान्व्यासः .

(३) भा. १२।२८५।३१ ; भामु. १२।२९६।३१ मथ (मथो).

(४) भा. १२।२८५।३२ ; भामु. १२।२९६।३२.

(५) भा. १२।२८५।३३ ; भामु. १२।२९६।३३ निषेधते (न सेवते).

(६) भा. १२।२८५।३४ ; भामु. १२।२९६।३४ नशो (न शो).

अहिंसाप्रधानानि कर्माणि तारकाणि, संन्यासः निःश्रेयसकरः , धर्मः सर्वेषां स्वर्गप्रदः

जनक उवाच–

[1]कानि कर्माणि धर्म्याणि लोकेऽस्मिन्द्विजसत्तम ।
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा ॥

पराशर उवाच–

शृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि ।
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ॥
[2]संन्यस्याग्नीनुपासीनाः पश्यन्ति विगतज्वराः ।
नैःश्रेयसं धर्मपथं समारुह्य यथाक्रमम् ॥

संन्यस्याग्नीन् पारिव्राज्यं कृत्वेत्यर्थः । यथाक्रमं वितर्कविचारानन्दास्मितारूयासु योगभूमिषु पूर्वपूर्वभूमिकां त्यक्त्वोत्तरोत्तरभूमिकामारुह्य । कर्मपथं योगम् । नीटी.

[3]प्रश्रिता विनयोपेता दमनित्याः सुसंशिताः ।
प्रयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ॥

प्रश्रिताः श्रद्धावन्तः । सुसंशिताः अतिसूक्ष्मबुद्धयः । नीटी.

[4]सर्वे वर्णा धर्मकार्याणि सम्य-
क्कृत्वा राजन्सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वाऽधर्मं दारुणं जीवलोके
यान्ति स्वर्गं नात्र कार्यो विचारः ॥

त्यक्त्वा अधर्ममिति च्छेदः । नीटी.

मानुष्यमेव धर्माधिकारप्रदम्

[5]उपभोगैरपि त्यक्तं नाऽऽत्मानमवसादयेत् ।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात दुर्लभम् ॥

(१) भा. १२।२८५।३५–३६ ; भामु. १२।२९६। ३५–३६.

(२) भा. १२।२८५।३७ ; भामु. १२।२९६।३७ नुपा (नुदा) धर्म (कर्म).

(३) भा. १२।२८५।३८ ; भामु. १२।२९६।३८.

(४) भा. १२।२८५।३९ ; भामु. १२।२९६।३९ ऽधर्मं (धर्मं).

(५) भा. १२।२८६।३१ ; भामु. १२।२९७।३१ द्वितीयचरणे (नाऽऽत्मानं सादयेन्नरः) दुर्लभम् (शोभनम्).

अध्ययनादियोग्यां नृयोनिं प्रशंसति– उपभोगैरिति चतुर्भिः । नीटी.

[1]इयं हि योनिः प्रथमा यां प्राप्य जगतीपते ।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥
कथं न विप्रणश्येम योनितोऽस्या इति प्रभो ।
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥

[2]यो दुर्लभतरं प्राप्य मानुष्यमिह वै नरः ।
धर्मावमन्ता कामात्मा भवेत्स खलु वञ्च्यते ॥

यो धर्मावमन्ता स कामात्मा भवेत्, स च कामेन वञ्च्यते । नीटी.

सर्वभूतेभ्यः अभयदानं सर्वदानेभ्यः श्रेष्ठम्

[3]यस्तु प्रीतिपुरोगेण चक्षुषा तात पश्यति ।
दीपोपमानि भूतानि यावदर्चिर्न नश्यति ॥

प्रीतिपुराणेन प्रीत्या चिरन्तनेन । पुरोगेणेति पाठः स्वच्छः । दीपोपमानि स्नेहेन संवर्धनीयानि । यावदर्थान् सर्वान्विषयान् । दयावान् भूतानि पश्यति, विरक्तोऽर्थान्न पश्यति यः स महीयते इत्युत्तरेण संबन्धः । नीटी.

[4]धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप ।
श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ॥

[5]छित्त्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते ।
दत्त्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुयात् ॥

'किं कृतं न विनश्यति' इत्यस्यैवोत्तरं प्रायेणाध्यायशेषः । अधर्मेति च्छेदः । अभयंकृतं अभयंकरं दानं दत्त्वा, संन्यासं कृत्वेत्यर्थः । सिद्धिं मोक्षम् अनिवर्तनं स्थानम् । $ इदं चतुर्थप्रश्नस्योत्तरम् । नीटी.

[1]यो ददाति सहस्राणि गवामश्वशतानि च ।
अभयं सर्वभूतेभ्यस्तद्दानमतिवर्तते ॥

अभयं सर्वभूतेभ्यो यो ददाति तमभितः सदाऽभयं वर्तते । नीटी.

अनासक्तबुद्धिः पापस्पर्शाभावकारणम्

[2]वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान् ।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ॥

बुद्धिमान् आसङ्गशून्यः । दुर्बुद्धिः मनसा विषयसङ्गवान् । नीटी.

[3]नाधर्मः श्लिष्यते प्राज्ञमापः पुष्करपर्णवत् ।
अप्राज्ञमधिकं पापं श्लिष्यते ¶जतु काष्ठवत् ॥

श्लिष्यते आलिङ्गति । तङार्षः । पर्णवत् पर्णमिव । नीटी.

---

(1) भा. १२।२८६।३२–३३ ; भामु. १२।२९७।३२–३३.

(2) भा. १२।२८६।३४ ; भामु. १२।२९७।३४ ष्यमिह वै (ष्यं द्विषते) ; गुर. ४९२ यो दुर्ल (सुदुर्ल) वै (यो) भवेत्स (स भवेत्) वञ्च्यते (वञ्चितः).

(3) भा. १२।२८६।३५ ; भामु. १२।२९७।३५ पुरोगेण (पुराणेन) चतुर्थचरणे (यावदर्थान्न पश्यति).

(4) भा. १२।२८६।४० ; भामु. १२।२९७।४०.

(5) भा. १२।२८७।४ ; भामु. १२।२९८।४ प्नुयात् (प्नुते).

$ 'क्व गतो न निवर्तेत' इति प्रश्नस्येत्यर्थः ।

¶ अत्र 'जतुकाष्ठवत्' इति समस्तपाठ एव साधुः । तथाहि– 'यथा जतु काष्ठं श्लिष्यति तथा पापमप्राज्ञं श्लिष्यति' इति विवक्षिते वाक्यार्थे जतुन उपमानत्वं प्रतीयते । असमस्तपाठे काष्ठपदमात्रोत्पन्नवत्यर्थे उपमानत्वे जतुनोऽन्वयाभावात् तदुपमानत्वं न प्रतीयते । अत एव तत्र 'यथा जतु काष्ठं श्लिष्यति तथा लोहं श्लिष्यति' इति जतुश्लेषविषये काष्ठतदितरपदार्थयोरुपमानोपमेयभावः प्रतीयते । समस्तपाठे तु 'जतुकाष्ठाभ्यां तुल्यम्' इत्यस्मिन्नर्थे वतेर्जतुकाष्ठशब्दादुत्पन्नत्वेन विवक्षितार्थः सिध्यति । अत एव पूर्वार्धेऽपि अप्शब्दस्थाने पयःशब्दपाठे 'पयःपुष्करपर्णवत्' इति समाससंभवात् स एव पाठः श्रेयान् ।

(1) भा. १२।२८७।५ ; भामु. १२।२९८।५ तद्दानमति (सदा तमभि).

(2) भा. १२।२८७।६ ; भामु. १२।२९८।६.

(3) भा. १२।२८७।७ ; भामु. १२।२९८।७ प्राज्ञमापः (प्राज्ञं पयः) जतु का (जतुका).

[1]नाधर्मः कारणापेक्षी कर्तारमभिमुञ्चति ।
कर्ता खलु यथाकालं तत्सर्वमभिपद्यते ।
न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः ॥

कारणा फलदानात्मिका क्रिया, तन्निर्वृत्त्यपेक्षी । समभिपद्यते फलं प्राप्नोति । ततः अधर्मात् । कर्ता कर्तृत्वाभिमानी । न भिद्यन्ते कर्मफलैर्न क्लिश्यन्ति, तेषां कर्मालेपात् । नीटी.

[2]बुद्धिकर्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते ।
शुभाशुभेषु सक्तात्मा प्राप्नोति सुमहद्भयम् ॥

कस्तर्हि भिद्यते ? अत आह– बुद्धीति । न बुध्यते, दुश्चेष्टितमिति शेषः । नीटी.

[3]वीतरागो जितक्रोधः सम्यग्भवति यः सदा ।
विषये वर्तमानोऽपि न स पापेन युज्यते ॥
[4]मर्यादायां धर्मसेतुर्निबद्धो नैव सीदति ।
पुष्टस्रोत इवाऽऽयत्तः स्फीतो भवति संचयः ॥

यथा नद्यां बद्धः सेतुर्नैव सीदति, स्रोतःपुष्टिं करोति, एवं असक्तः धर्म एव सेतुर्यस्य सः मर्यादायां बद्धो नैव सीदति । संचयः तपोवृद्धिश्च स्फीता भवतीत्यर्थः । नीटी.

श्रेयस्करी भूतानां प्रतिकूलकर्मभ्यो निवृत्तिः, धर्मः उभयत्र हितप्रदः, दानपात्रलक्षणानि, पापनिर्हरणस्य कर्तव्यता

भीष्म उवाच–

[5]मृगयां विचरन्कश्चिद्विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः ॥
[1]तमासीनमुपासीनः प्रणम्य शिरसा मुनिम् ।
पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥
[2]भगवन्किमिदं श्रेयः प्रेत्य वाऽपीह वा भवेत् ।
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ॥
[3]सत्कृत्य परिपृष्टः सन्सुमहात्मा महातपाः ।
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥

ऋषिरुवाच–

मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि ।
भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः ॥
[4]धर्मः सतां हितः पुंसां धर्मश्चैवाऽऽश्रयः सताम् ।
धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः ॥
[5]स्वादुकामुककामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥
[6]यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना ।
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ॥
असता धर्मकामेन विशुद्धं कर्म दुष्करम् ।
सता तु धर्मकामेन सुकरं कर्म दुष्करम् ॥
वने ग्राम्यसुखाचारो यथा ग्राम्यस्तथैव सः ।
ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥
[7]मनोवाक्कर्मके धर्मे कुरु श्रद्धां समाहितः ।
निवृत्तौ वा प्रवृत्तौ वा संप्रधार्य गुणागुणान् ॥

---

(१) भा. १२।२८७।८ ; भामु. १२।२९८।८–९ तत्सर्वमभि (ततः समभि).

(२) भा. १२।२८७।९ ; भामु. १२।२९८।९ भेषु स (भे प्रस).

(३) भा. १२।२८७।१० ; भामु. १२।२९८।१०.

(४) भा. १२।२८७।११ ; भामु. १२।२९८।११ इवाऽऽयत्तः (इवासक्तः).

(५) भा. १२।२९७।१ ; भामु. १२।३०९।१.

(१) भा. १२।२९७।२ ; भामु. १२।३०९।२ तमासी (उपासी).

(२) भा. १२।२९७।३ ; भामु. १२।३०९।३ वाऽपी (चापी).

(३) भा. १२।२९७।४–५ ; भामु. १२।३०९।४–५.

(४) भा. १२।२९७।६ ; भामु. १२।३०९।६ ; वन. १५ हितः (गतिः) उत्तरार्धे (धर्मो लोकाश्रयश्चातः प्रवृत्तः सचराचरम् ॥).

(५) भा. १२।२९७।७ ; भामु. १२।३०९।७.

(६) भा. १२।२९७।८–१० ; भामु. १२।३०९।८–१०.

(७) भा. १२।२९७।११ ; भामु. १२।३०९।११ क्कर्मके (क्कायिके).

[1]नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता ।
प्रार्थितं व्रतशौचाभ्यां सत्कृतं देशकालयोः ॥
[2]शुभेन विधिना लब्धमर्हाय प्रतिपादयेत् ।
क्रोधमुत्सृज्य दत्त्वा च नानुतप्येन्न कीर्तयेत् ॥
[3]अनृशंसः शुचिर्दान्तः सत्यवागार्जवे स्थितः ।
योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ॥
सत्कृता चैकपत्नी च जात्या योनिरिहेष्यते ।
ऋग्यजुःसामगो विद्वान्षट्कर्मा पात्रमुच्यते ॥

योनिकर्मविशुद्धः पात्रमित्युक्तम्, तत्र योनिशुद्धिं कर्मशुद्धिं च व्याचष्टे– सत्कृतेति । एकस्यैव पत्नी एकपत्नी, न त्वन्यपूर्वा, जात्याः पुत्रोत्पत्तेः योनिः स्थानम् । नीटी.

नरभेदेन धर्माधर्मभेदः

[4]स एव धर्मः सोऽधर्मस्तं तं प्रतिनरं भवेत् ।
पात्रकर्मविशेषेण देशकालाववेक्ष्य च ॥
[5]लीलयाऽल्पं यथा गात्रात्प्रमृज्याद्रजसः पुमान् ।
बहुयत्नेन महता पापनिर्हरणं तथा ॥
[6]विरिक्तस्य यथा सम्यग्घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्यधर्मः सुखावहः ॥

विरेचनानन्तरमेव यथा घृतपानं भेषजम् एवं दानेन निर्हृतदोषस्यैव यागादिधर्मः सुखावह इत्यर्थः । नीटी.

धर्मे धृतिः प्रशस्ता

[1]मानसं सर्वभूतेषु वर्तते वै शुभाशुभे ।
अशुभेभ्यः समाक्षिप्य शुभेष्वेवावतारयेत् ॥
[2]सर्वं सर्वेण सर्वत्र क्रियमाणं च पूजय ।
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् ॥
[3]अधृतात्मन्धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान्भव ।
अप्रशान्त प्रशाम्य त्वमप्राज्ञ प्राज्ञवच्चर ॥
[4]तेजसा शक्यते प्राप्तुमुपायसहचारिणा ।
इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा ॥
[5]राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः ।
ययातिः क्षीणपुण्यश्च धृत्या लोकानवाप्तवान् ॥

सतां सङ्गः श्रेयस्करबुद्धिप्रदः

[6]तपस्विनां धर्मवतां विदुषां चोपसेवनात् ।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे ॥

भीष्म उवाच–

स तु स्वभावसंपन्नस्तच्छ्रुत्वा मुनिभाषितम् ।
विनिवर्त्य मनः कामाद्धर्मे बुद्धिं चकार ह ॥

पित्रा व्यासेन कृतं धर्मानुशासनं पुत्राय शुकाय

युधिष्ठिर उवाच–

[7]कथं निर्वेदमापन्नः शुको वैयासकिः पुरा ।
एतदिच्छामि कौरव्य श्रोतुं कौतूहलं हि मे ॥

---

(१) भा. १२।२९७।१२ ; भामु. १२।३०९।१२.

(२) भा. १२।२९७।१३ ; भामु. १२।३०९।१३ दत्त्वा च (दद्याच्च).

(३) भा. १२।२९७।१४–१५ ; भामु. १२।३०९। १४–१५.

(४) भा. १२।२९७।१६ ; भामु. १२।३०९।१६ प्रतिन (प्रति न).

(५) भा. १२।२९७।१७ ; भामु. १२।३०९।१७ द्रजसः (त्तु रजः) महता (च महत्).

(६) भा. १२।२९७।१८ ; भामु. १२।३०९।१८ प्रेत्यध (प्रेत्य ध).

(१) भा. १२।२९७।१९ ; भामु. १२।३०९।१९ शुभाशुभे (शुभाशुभम्) समाक्षि (सदाऽऽक्षि).

(२) भा. १२।२९७।२० ; भामु. १२।३०९।२० पूजय (पूजयेत्) धर्मो (धर्मे).

(३) भा. १२।२९७।२१ ; भामु. १२।३०९।२१ शान्त (शान्तः) प्राज्ञ (प्राज्ञः).

(४) भा. १२।२९७।२२ ; भामु. १२।३०९।२२ यसह (यः सह).

(५) भा. १२।२९७।२३ ; भामु. १२।३०९।२३ पुण्यश्च (पुण्योऽपि).

(६) भा. १२।२९७।२४–२५ ; भामु. १२।३०९। २४–२५.

(७) भा. १२।३०९।१ ; भामु. १२।३२१।१ च्छामि कौरव्य श्रोतुं (च्छाम्यहं श्रोतुं परं).

संन्यासस्य श्रैष्ठ्यमुक्त्वा तद्धर्मान् शुकचरितेनैव दर्शयति प्रश्नोत्तरमुखेन— कथमित्यादिना। निर्वेदं वैराग्यं संन्यासे मुख्यं विशेषणम्, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेः। नीटी.

[1]अव्यक्तव्यक्ततत्त्वानां निश्चयं बुद्धिनिश्चयम्।
वक्तुमर्हसि कौरव्य देवस्याजस्य या कृतिः॥

अव्यक्तं कारणम्, व्यक्तं कार्यम्, तत्त्वं तयोरनारोपितरूपं ब्रह्म, तेषां निश्चयम्। अजस्य नारायणस्य कृतिः लीला। आकृतिरिति छेदे सगुणं रूपम्। अत्र प्रथमस्य प्रश्नस्योत्तरं शुकोत्पत्तिः, इतरयोरुत्तरं शेषग्रन्थ इति विभागः। नीटी.

भीष्म उवाच—

[2]प्राकृतेन सुवृत्तेन चरन्तमकुतोभयम्।
अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम्॥

स्वाध्यायं पितृपितामहपरम्परया परिगृहीतं वेदभागम् अध्याप्य शब्दतोऽर्थतश्च ग्राहयित्वा तत्रानधिगतान् शाखान्तरीयानर्थान् अन्वशात् अनुशासितवान्। न च अध्याप्येति शब्दत एव स्वाध्यायग्रहणमुच्यते, न त्वर्थतोऽपि, 'चैत्रोऽयमधीते' इत्यक्षरोच्चारणमात्रेऽधीतिशब्दप्रयोगादिति वाच्यम्, अध्ययनविधेर्वाक्योपक्रमेणोक्तार्थस्य दर्शितत्वात्। तथाहि— "यस्तित्याज सचि(? खि)विदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्॥' इति। तस्मात् स्वाध्यायोऽध्येतव्यः" (तैआ. २।१५।१) इति सुकृतमार्गाज्ञाने वेदस्य श्रवणग्रहणे निष्फले इत्युक्त्वा विधीयमानस्यार्थज्ञानपर्यन्तताऽवसीयते। अयं मन्त्रः प्रागेव व्याख्यातः। 'काव्यमधीते, पाणिनीयमधीते, काणादमधीते' इत्यर्थग्रहणेऽप्यधीतिप्रयोगदर्शनात् 'मैत्रोऽयमधीते' इत्यक्षरमात्रोच्चारणे स गौण इति मन्तव्यम्। अन्यथा अध्याप्यान्वशादिति क्रममात्रं विधीयेत, तच्च व्यर्थम्। आकाङ्क्षितसमर्पणे तु वाक्यस्यार्थवत्त्वमिति दिक्। नीटी.

(१) भामु. १२।३२१।२.
(२) भा. १२।३०९।२; भामु. १२।३२१।३.

द्वन्द्वविजयः कर्तव्यः, सत्याहिंसादिसाधारणधर्मनिष्ठा इष्टा, धर्मेण प्राणयात्रा, धर्मदर्शिनां मतस्य अनुसरणम्, चित्तवृत्तिनिरोधः, मृत्योरनियतकालतानुसंधानम्, ब्राह्मण्यमहिमा, अधर्मपरिपाकविचारः, गुरुद्रोहदुर्गतिविचारः, परलोकानुगतं शुभाशुभं कर्म, धर्मसंचयः कर्तव्यः

व्यास उवाच—

[1]धर्मं पुत्र निषेवस्व सुतीक्ष्णौ हि हिमातपौ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः॥
[2]सत्यमार्जवमक्रोधमनसूयां दमं तपः।
अहिंसां चाऽऽनृशंस्यं च विधिवत्परिपालय॥
[3]सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम्।
देवतातिथिशेषेण यात्रां प्राणस्य संश्रय॥

संलिह स्पृश। स्वाद्वस्वादुविवेकं मा कार्षीरित्यर्थः। नीटी.

[4]फेनपात्रोपमे देहे जीवे शकुनिवत्स्थिते।
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक॥

स्वपिषि पुरुषार्थसाधने न प्रवर्तसे। नीटी.

अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु।
अन्तरं लिप्समानेषु बालस्त्वं नावबुध्यसे॥

शत्रुषु कामादिषु। अन्तरं छिद्रम्। नीटी.

[5]गण्यमानेषु वर्षेषु क्षीयमाणे तथाऽऽयुषि।
जीविते शिष्यमाणे च किमुत्थाय न धावसि॥

(१) भा. १२।३०९।३; भामु. १२।३२१।४ हि (च).
(२) भा. १२।३०९।४; भामु. १२।३२१।५.
(३) भा. १२।३०९।५; भामु. १२।३२१।६ संश्रय (संलिह).
(४) भा. १२।३०९।६–७; भामु. १२।३२१।७–८.
(५) भा. १२।३०९।८; भामु. १२।३२१।९ प्रथमचरणे (अहःसु गण्यमानेषु) शिष्यमाणे (लिख्यमाने).

न धावसि देवं गुरुं वा शरणं न यासि । नीटी.

[1]ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥
[2]धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाताऽपि पीड्यते ॥

अपथा अपथेन । नीटी.

[3]ये तु तुष्टाः सुनियताः सत्यागमपरायणाः ।
धर्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च ॥
[4]उपधार्य मतं तेषां वृद्धानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥
[5]अद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः ।
सर्वभक्षा न पश्यन्ति कर्मभूमिं विचेतसः ॥

आद्यकालिकया वर्तमानमात्रदर्शिन्या । नीटी.

[6]धर्मनिःश्रेणिमास्थाय किंचित्किंचित्समारुह ।
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे ॥
[7]नास्तिकं भिन्नमर्यादं कूलपातमिवास्थिरम् ।
वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धतम् ॥

कूलपातं महानदीपूरम् । नीटी.

[8]कामं क्रोधं च मृत्युं च पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥

धृतिः प्राणादिवेगधारणम् , योग इत्यर्थः । नीटी.

[1]मृत्युनाऽभ्याहते लोके जरया परिपीडिते ।
अमोघासु पतन्तीषु धर्मयानेन संतर ॥

अमोघासु आयुर्हरणेन सफलासु रात्रिषु । धर्मपोतेन धर्मनौकया । नीटी.

[2]तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा ।
निर्वृतिं लभसे कस्मादकस्मान्मृत्युनाऽशितः ॥
[3]संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥

संचिन्वानकं धनादिसंचयपरम् । नीटी.

[4]क्रमशः संचितशिखो धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्ये दीपो यत्नेन धार्यताम् ॥

अन्धकारे संसारे । दीपः ज्ञानम् । नीटी.

[5]संपतन्देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥
[6]ब्राह्मणस्य हि देहोऽयं न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥
[7]ब्राह्मण्यं बहुभिरवाप्यते तपोभि-
स्तल्लब्ध्वा न परिपणेन हेडितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः
क्षेमार्थी कुशलपरः सदा यतस्व ॥

---

(१) भा. १२।३०९।९ ; भामु. १२।३२१।१०.

(२) भा. १२।३०९।१० ; भामु. १२।३२१।११ ; ब्रक. १९ पीड्यते (नश्यति) ; कुर. २५ ब्रकवत्.

(३) भा. १२।३०९।११ ; भामु. १२।३२१।१२ पूर्वार्धे (ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः ।).

(४) भा. १२।३०९।१२ ; भामु. १२।३२१।१३ वृद्धानां (बुधानां).

(५) भा. १२।३०९।१३ ; भामु. १२।३२१।१४ अद्य (आद्य) भक्षा (भक्ष्या) र्मिं विचे (र्मिमचे).

(६) भा. १२।३०९।१४ ; भामु. १२।३२१।१५ धर्म (धर्मं) कोश (कोष).

(७) भा. १२।३०९।१५ ; भामु. १२।३२१।१६ मिवास्थिरम् (मिव स्थितम्) वोद्धतम् (वोद्धृतम्).

(८) भा. १२।३०९।१६ ; भामु. १२।३२१।१७.

---

(१) भा. १२।३०९।१७ ; भामु. १२।३२१।१८ यानेन (पोतेन).

(२) भा. १२।३०९।१८ ; भामु. १२।३२१।१९ निर्वृतिं (निर्वृत्तिं) लभसे (लभते).

(३) भा. १२।३०९।१९ ; भामु. १२।३२१।२०.

(४) भा. १२।३०९।२० ; भामु. १२।३२१।२१ ष्टव्ये (ष्टव्यं).

(५) भा. १२।३०९।२१ ; भामु. १२।३२१।२२.

(६) भा. १२।३०९।२२ ; भामु. १२।३२१।२३ हि (तु).

(७) भा. १२।३०९।२३ ; भामु. १२।३२१।२४ परिपणेन हेडि (रतिपरेण हेलि).

¹अव्यक्तप्रकृतिरयं कलाशरीरः
सूक्ष्मात्मा क्षणत्रुटिशो निमेषरोमा ।
ऋत्वास्यः समबलशुक्लकृष्णनेत्रो
मासाङ्गो द्रवति वयोहयो नराणाम् ॥

संवास्यः छेत्तुं योग्यः । संधास्यः इति पाठे उच्छेत्तुं योग्यः । संध्यांशः इति पाठे संध्याद्वयम् अंशस्थानीयं यस्य । शुक्लकृष्णौ पक्षौ । नीटी.

²तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं
गच्छन्तं सततमिहाव्यपेक्षमाणम् ।
चक्षुस्ते यदि न परप्रणेतृनेयं
धर्मे ते भवतु मनः परं निशाम्य ॥

चक्षुः ज्ञानं परप्रणेतृनेयम् । अन्धवत् यदि न भवसीत्यर्थः । परं परलोकम् आत्मानं वा । नीटी.

³येऽमी तु प्रचलितधर्मकामवृत्ताः
क्रोशन्तः सततमनिष्टसंप्रयोगाः ।
क्लिश्यन्ते परिगतवेदनाशरीरा
बह्वीभिः सुभृशमधर्मवासनाभिः ॥

परिगतं प्राप्तं वेदनाशरीरं यमलोके यातनाशरीरं यैस्ते तथाभूताः, भवन्तीति शेषः । अधर्मकारणाभिः अधर्मक्रियाभिः । नीटी.

⁴राजा धर्मपरः सदा शुभगोप्ता
समीक्ष्य सुकृतिनां दधाति लोकान् ।
बहुविधमपि चरतः प्रदिशति
सुखमनुपगतं निरवद्यम् ॥

एतत् भयं श्रुत्वा भीतं राजानमाश्वासयति— राजेति । शुभाशुभस्य उत्तमाधमवर्णजातस्य, सुकृते प्रवर्तकत्वात् । सुकृतिनां लोकान् दधाति धारयते प्राप्नोतीत्यर्थः । अनुपगतं नानायोनिसहस्रेष्वप्राप्तं मोक्षं( ? सुखं ) स्वर्गं मोक्षं च साधुर्नृपः प्राप्नोतीत्यर्थः । नीटी.

¹श्वानो भीषणायोमुखानि वयांसि
वडगृध्रकुलपक्षिणां च संघाः ।
नरां कदने रुधिरपा गुरुवचन-
नुदमुपरतं विशसन्ति ॥

गुरुद्रोहिणां दुर्गतिमाह— श्वान इति । नराणां कदनं यत्र तस्मिन् नरके । रुधिरपाः कीटाः । गुरूणां मातृपितृप्रभृतीनां वचनं नुदति दूरीकरोति तं गुरुवचननुदम् । उपरतं मृतम् । नीटी.

²मर्यादा नियताः स्वयंभुवा य इहेमाः
प्रभिनत्ति दशगुणा मनोनुगत्वात् ।
निवसति भृशमसुखं पितृविषय-
विपिनमवगाह्य स पापः ॥

नियताः विहिताः स्वयंभुवा वेदेन, 'ब्रह्म स्वयंभु' इति श्रुतेः । दशगुणाः दशविधाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि पञ्च विधिरूपाः, अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाख्याः निषेधरूपाश्च पञ्च । पितृविषये यमलोके विपिनम् असिपत्रवनम्, तदेवावगाह्य तत्रैव निवसति । नीटी.

³यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः
सततनिकृतिवञ्चनारतिः स्यात् ।
उपनिधिभिरसुखकृत्स परमनिरयगो
भृशमसुखमनुभवति दुष्कृतकर्मा ॥

---

(१) भा. १२।३०९।२४ ; भामु. १२।३२१।२५ ऋत्वास्यः (संवास्यः).

(२) भा. १२।३०९।२५ ; भामु. १२।३२१।२६ व्यपेक्ष (न्ववेक्ष) निशम्य (निशाम्य).

(३) भा. १२।३०९।२६ ; भामु. १२।३२१।२७ येऽमी तु (ये चात्र) क्लिश्यन्ते (क्लिश्यन्तः) वासनाभिः (कारणाभिः).

(४) भा. १२।३०९।२७ ; भामु. १२।३२१।२८ प्रथमचरणे (राजा सदा धर्मपरः शुभाशुभस्य गोप्ता) दधाति (ददाति) चरतः प्रदिशति (चरति प्रविशति).

(१) भा. १२।३०९।२८ ; भामु. १२।३२१।२९ प्रथमचरणे (श्वानो भीषणकाया अयोमुख्यानि वयांसि) वडगृध्रकुल (बलगृध्र[ कुरर ] ) नरां (नर) विशसन्ति (विशन्त्यसन्तः).

(२) भा. १२।३०९।२९ ; भामु. १२।३२१।३० दशगुणा (दश गुणा).

(३) भा. १२।३०९।३० ; भामु. १२।३२१।३१ नारतिः (नाभिरतिः).

निकृतिः नीचकर्म । वञ्चना चौर्यादि । उपनिधिभिः छलेन । नीटी.

[1]उष्णां वैतरणीं महानदी-
मवगाढोऽसिपत्रवनभिन्नगात्रः ।
परशुवनशयो निपतितो
वसति च महानिरये भृशार्तः ॥

[2]महापदानि कत्थसे न चाप्यवेक्षसे परम् ।
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ॥

नरकादुद्विजेदित्युक्त्वा स्वर्गेऽपि न रज्येतेत्याह– महापदानीत्यादिना । ब्रह्मादीनां स्थानानि दृष्ट्वा कत्थसे धन्योऽहमिति श्लाघसे, परं तु ब्रह्म नावेक्षसे । मृत्युकारिकां जराम् । नीटी.

[3]प्रयास्यतां किमास्यते समुत्थितं महद्भयम् ।
अतिप्रमाथि दारुणं सुखस्य संविधीयताम् ॥

प्रयायतां प्रचल्यतां मोक्षमार्गेण प्रस्थातव्यम् । सुखस्य प्रमाथि संविधीयतां प्रयत्यताम् । नीटी.

[4]पुरा मृतः प्रणीयसे यमस्य मृत्युशासनात् ।
तदन्तिकाय दारुणैः प्रयत्नमार्जवे कुरु ॥

अन्तकाय भयतिसुखाय । दारुणैः कृच्छ्रादितपोभिः । नीटी.

[5]पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित् ।
तवेह जीवितं यमो न चास्ति तस्य वारकः ॥

यावत् जीवितहरणं न जायते ततः प्रागेव सांपरायिकं परलोकहितं कुरुष्वेत्युत्तरेण संबन्धः । नीटी.

[6]पुरा विवाति मारुतो यमस्य यः पुरःसरः ।
पुरैक एव नीयसे कुरुष्व सांपरायिकम् ॥

(१) भा. १२।३०९।३१ ; भामु. १२।३२१।३२.

(२) भा. १२।३०९।३२ ; भामु. १२।३२१।३३.

(३) भा. १२।३०९।३३ ; भामु. १२।३३१।३४ प्रयास्य (प्रयाय).

(४) भा. १२।३०९।३४ ; भामु. १२।३२१।३५ णीयसे (णीयते) मृत्यु (राज) तदन्ति (त्वमन्त).

(५) भा. १२।३०९।३५ ; भामु. १२।३२१।३६.

(६) भा. १२।३०९।३६ ; भामु. १२।३२१।३७ विवाति (ऽभिवाति).

[1]पुरा सहिक्क एव ते प्रवाति मारुतोऽन्तकः ।
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ॥

[2]स्मृतिश्च संनिरुध्यते पुरा तवेह पुत्रक ।
समाकुलस्य गच्छतः समाधिमुत्तमं कुरु ॥

[3]कृताकृते शुभाशुभे प्रमादकर्मविप्लुते ।
स्मरन्पुरा न तप्यसे निधत्स्व केवलं निधिम् ॥

[4]पुरा जरा कलेवरं विजर्जरीकरोति ते ।
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ॥

[5]पुरा शरीरमन्तको भिनत्ति रोगसायकैः ।
प्रसह्य जीवितक्षये तपो महत्समाचर ॥

[6]पुरा वृका भयंकरा मनुष्यदेहगोचराः ।
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ॥

वृकाः कामादयः । नीटी.

पुराऽन्धकारमेककोऽनुपश्यसि त्वरस्व वै ।
पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि ॥

हिरण्मयवृक्षदर्शनं मरणचिह्नम् । नीटी.

पुरा कुसंगतानि ते सुहृन्मुखाश्च शत्रवः ।
विचालयन्ति दर्शनाद्घटस्व पुत्र यत्परम् ॥

ते त्वां तव मतिं वा । नीटी.

[7]धनस्य यस्य राजतो भयं न चास्ति चौरतः ।
मृतं च यन्न मुञ्चति समर्जयस्व तद्धनम् ॥

तद्धनं विद्याम् । नीटी.

(१) भा. १२।३०९।३७ ; भामु. १२।३२१।३८ सहिक्क (स हि क्व).

(२) भा. १२।३०९।३८ ; भामु. १२।३२१।३९ स्मृतिश्च (श्रुतिश्च).

(३) भा. १२।३०९।३९ ; भामु. १२।३२१।४० प्रथमचरणे (शुभाशुभे पुरा कृते).

(४) भा. १२।३०९।४० ; भामु. १२।३२१।४१.

(५) भा. १२।३०९।४१ ; भामु. १२।३२१।४२ सायकैः (सारथिः).

(६) भा. १२।३०९।४२–४४ ; भामु. १२।३२१।४३–४५.

(७) भा. १२।३०९।४५ ; भामु. १२।३२१।४६ चौर (चोर).

[1]न तत्र संविभज्यते स्वकर्मभिः परस्परम् ।
यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ॥

यौतकं विवाहासं धनं दायादाग्राह्यं पाथेयमित्यर्थः । नीटी.

[2]परत्र येन जीव्यते तदेव पुत्र दीयताम् ।
धनं यदक्षयं ध्रुवं समर्जयस्व तत्स्वयम् ॥
[3]न यावदेव पच्यते महाजनस्य यावकम् ।
अपक्व एव यावके पुरा प्रणीयसे त्वर ॥

यावके घृतखण्डमिश्रे यवपिष्टविकारे । त्वरं त्वरायुक्तं यथा स्यात्तथा प्रलीयसे म्रियसे । भोगान् भुक्त्वा मोक्षे यत्नं करिष्यामीति न मन्तव्यम् । अप्राप्त एव भोगे मृत्युभयमस्तीति भावः । नीटी.

[4]न मातृपितृबान्धवा न संस्तुतः प्रियो जनः ।
अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम् ॥
[5]यदेव कर्म केवलं स्वयं कृतं शुभाशुभम् ।
तदेव तस्य यौतकं भवत्यमुत्र गच्छतः ॥

सार्थिकं देहेन्द्रियादिसार्थवाहकम् । नीटी.

[6]हिरण्यरत्नसंचयाः शुभाशुभेन संचिताः ।
न तस्य देहसंक्षये भवन्ति कार्यसाधकाः ॥
[7]परत्रगामिकस्य ते कृताकृतस्य कर्मणः ।
न साक्षिरात्मना समो नृणामिहास्ति कश्चन ॥

परत्रगामिकस्य गमनशीलस्य । साक्षि आत्मनेति 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (पासू. ६।१।१२७) इति प्रकृतिभावे ह्रस्वः । साक्षिताऽऽत्मनेति पाठः प्रामादिकः । मामन्यो न जानातीति मत्वा पापं न कर्तव्यमिति भावः । नीटी.

[1]मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः ।
प्रपश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वतः ॥

ननु कर्त्रात्मनोऽतिरिक्तस्य साक्षिणः सत्त्वे मानं किम्? अत आह– मनुष्येति । अमुत्र साक्षिणि गच्छतो लीयमानस्य कर्तुः मनुष्यदेहस्य शून्यमिव शून्यकम् अभावः भवति । परदृष्ट्या सन्नपि योगिदृष्ट्या मनुष्यदेहो नष्टो भवतीत्यर्थः । अत्र विद्वदनुभवं प्रमाणयति– प्रविश्येति । हार्दाकाशमिति शेषः । नीटी.

[2]इहाग्निसूर्यवायवः शरीरमाश्रितास्त्रयः ।
त एव तस्य साक्षिणो भवन्ति धर्मदर्शिनः ॥

साक्ष्यन्तराण्याह– इहेति । नीटी.

[3]यथाऽनिशेषु सर्वतः स्पृशत्सु सर्वदाऽरिषु ।
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय ॥
[4]अनेकपारिपन्थिके विरूपरौद्ररक्षिते ।
स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति ॥

तत्र परलोकमार्गे । विरूपाः रौद्राश्च मक्षिकाः दंशाः यस्मिन् । अनेके परिपन्थिनः शत्रवः लोहतुण्डाः पक्षिवृकादयः यस्मिन् । नीटी.

[5]न तत्र संविभज्यते स्वकर्मणा परस्परम् ।
यथाकृतं स्वकर्मजं तदेव भुज्यते फलम् ॥

---

(१) भा. १२।३०९।४६ ; भामु. १२।३२१।४७ भज्यते ( युज्यते ).

(२) भा. १२।३०९।४७ ; भामु. १२।३२१।४८ यदक्षयं (यदक्षरं).

(३) भा. १२।३०९।४८ ; भामु. १२।३२१।४९ प्रणीयसे (प्रलीयसे) त्वर (त्वरम्).

(४) भा. १२।३०९।४९ ; भामु. १२।३२१।५० पितृ (पुत्र).

(५) भा. १२।३०९।५० ; भामु. १२।३२१।५१ स्वयं (पुरा) तस्य यौतकं (पुत्र सार्थिकं).

(६) भा. १२।३०९।५१ ; भामु. १२।३२१।५२.

(७) भा. १२।३०९।५२ ; भामु. १२।३२१।५३ साक्षिरा (साक्षि आ).

(१) भा. १२।३०९।५३ ; भामु. १२।३२१।५४ प्रपश्य (प्रविश्य) सर्वतः (सर्वशः).

(२) भा. १२।३०९।५४ ; भामु. १२।३२१।५५.

(३) भा. १२।३०९।५५ ; भामु. १२।३२१।५६ यथाऽनि (अर्हनि) दाऽरिषु (चारिषु).

(४) भा. १२।३०९।५६ ; भामु. १२।३२१।५७ रक्षिते (मक्षिके).

(५) भा. १२।३०९।५७ ; भामु. १२।३२१।५८ यथाकृ (तथा कृ).

[1]यथाऽप्सरोगणाः फलं सुखं महर्षिभिः सह ।
तथाऽऽप्नुवन्ति कर्मतो विमानकामगामिनः ॥
[2]यथेह यत्कृतं शुभं विपाप्मभिः कृतात्मभिः ।
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः ॥
प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः ।
व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः ॥
[3]सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे ।
अबुद्धिमोहनं पुनः प्रभुर्विना न यावकम् ॥

अबुद्धीन् मोहयतीति तथा । पावकः पुनाति पवित्रीकरोतीतिव्युत्पत्त्या धर्मः । क्लीबपाठे पावकं सत्कर्म । यावकमिति पाठेऽपि यावकमिव पाथेयरूपो धर्म एव । नीटी.

[4]गता द्विरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः ।
कुरुष्व धर्मसंचयं वयो हि तेऽतिवर्तते ॥
[5]पुरा करोति सोऽन्तकः प्रमादगोमुखं दमम् ।
यथागृहीतमुत्थितं त्वरस्व धर्मपालने ॥

प्रमादगः प्रमादगृहवासी अन्तकः । चमूं चमति भक्षयतीति चमूः इन्द्रियसेना ताम् अमुखाम् अन्तकत्वादिदोषेण स्वस्वविषयभोगहीनां यावत् करोति ततः पुरैव गृहीतं देहम् अनतिक्रम्येति यथागृहीतं देहमात्रेणेत्यर्थः । नीटी.

[6]यदा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि ।
तथा गतिं गमिष्यतः किमात्मना परेण वा ॥

पुरः पश्चाच्च सर्वम् आत्ममात्रं यथा भवति तथा गतिम् आत्मज्ञानरूपाम् । आत्मना देहेन । परेण तत्संबन्धिपुत्रादिना । नीटी.

[1]यदेकपातिनां सतां भवत्यमुत्र गच्छताम् ।
भयेषु सांपरायिकं निधत्स्व तं महानिधिम् ॥

भयेषु उपस्थितेषु एकपातिना एकाकिना यत् सांपरायिकं परलोके हितं तमेव धर्मं ज्ञानं वा निधिमिव निगूह्य निधत्स्व केवलं शुद्धं निष्कामं निर्गुणम् । नीटी.

[2]सकूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान् ।
न सन्ति यस्य वारकाः कुरुष्व धर्मसंनिधिम् ॥

कूलम् अग्रम्, 'प्राक्कूलेषु दर्भेषूपविश्य.' इति लिङ्गात् । बालवृद्धैर्वयस्थैः सहितं यथा स्यात्तथेत्यर्थः । नीटी.

[3]इदं निदर्शनं मया तवेह पुत्र संमतम् ।
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥
[4]दधाति यः स्वकर्मणा धनानि यस्य कस्यचित् ।
अबुद्धिमोहजैर्गुणैः शतैक एव युज्यते ॥

यः स्वकर्मणा दधाति आत्मानं देहं पुष्णाति यस्य कस्यचित् फलस्य कृते ददाति च । अबुद्धिः अज्ञानम्, मोहः विपरीतज्ञानम्, तदुभयजैः गुणैः दुःखादिभिः । मुच्यते इति पाठे आत्मानं चित्तं दधाति एकस्मिंस्तत्त्वे धारयति । यस्येति । यत्किंचिद्ददाति सर्वं त्यजतीत्यर्थः । नीटी.

[5]श्रुतं समर्थमस्तु ते प्रकुर्वतः शुभाः क्रियाः ।
तदेव तत्र दर्शनं कृतज्ञमर्थसंहितम् ॥

---

(१) भा. १२।३०९।५८; भामु. १२।३२१।५९ कर्मतो (कर्मजं).

(२) भा. १२।३०९।५९–६०; भामु. १२।३२१।६०–६१.

(३) भा. १२।३०९।६१; भामु. १२।३२१।६२ हामहे (हाम ते) चतुर्थचरणे (प्रभुर्निनाय पावकः).

(४) भा. १२।३०९।६२; भामु. १२।३२१।६३ द्विरष्ट (त्रिरष्ट).

(५) भा. १२।३०९।६३; भामु. १२।३२१।६४ मुखं दमम् (मुखां चमूम्) त्थितं त्व (त्थितस्त्व).

(६) भा. १२।३०९।६४; भामु. १२।३२१।६५ यदा (यथा).

(१) भा. १२।३०९।६५; भामु. १२।३२१।६६ नां सतां (ना सतां) तं महानि (केवलं वि).

(२) भा. १२।३०९।६६; भामु. १२।३२१।६७.

(३) भा. १२।३०९।६७; भामु. १२।३२१।६८ संमतम् (सांप्रतम्).

(४) भा. १२।३०९।६८; भामु. १२।३२१।६९ धनानि (ददाति) शतैक (स एक).

(५) भा. १२।३०९।६९; भामु. १२।३२१।७० प्रथमचरणे (श्रुतं समस्तमश्नुते) तदेव तत्र (तदेतदर्थ).

श्रुतं तत्त्वमस्यादिवाक्यजं ज्ञानं कर्तृ समस्तं ब्रह्माण्डम् अश्नुते व्याप्नोति, 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' (महावाक्यरत्नावलिः १९) इति ब्रह्मविदः सार्वात्म्यश्रुतेः । तदेतत्सार्वात्म्यं सार्वज्ञ्यं च अर्थस्य मोक्षाख्यपरमपुरुषार्थस्य दर्शनम्, नान्यत्, कृतश्च कृतश्चे उपदिष्टम् अर्थसंहितं पुरुषार्थसंगतं भवति, न तु कृतघ्नादौ । सार्वज्ञ्यसार्वात्म्यदा इयं विद्या उत्तमायैव दातव्येत्यर्थः । नीटी.

[1]निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥

[2]किं ते धनेन किं बन्धुभिस्ते
किं ते पुत्रैः पुत्रक यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताश्च सर्वे ॥

[3]श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ।
को हि तद्वेद कस्याद्य मृत्युसेना निवेक्ष्यते ॥

[4]अनुगम्य श्मशानान्तं निवर्तन्तीह बान्धवाः ।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥

[5]नास्तिकान्निरनुक्रोशान्नरान्पापमतौ स्थितान् ।
वामतः कुरु विश्रब्धं परं प्रेप्सुरतन्द्रितः ॥

[6]एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥

(१) भा. १२।३०९।७० ; भामु. १२।३२१।७१ निबन्ध (विबन्ध) त्वैनां (त्वैतां).

(२) भा. १२।३०९।७१ ; भामु. १२।३२१।७२.

(३) भा. १२।३०९।७२ ; भामु. १२।३२१।७३ उत्तरार्धे (न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वाऽकृतम् ॥ ).

(४) भा. १२।३०९।७३ ; भामु. १२।३२१।७४ श्मशानान्तं निवर्तन्तीह (विनाशान्ते निवर्तन्ते ह).

(५) भा. १२।३०९।७४ ; भामु. १२।३२१।७५ मतौ (मते) विश्रब्धं (विस्रब्धं).

(६) भा. १२।३०९।७५ ; भामु. १२।३२१।७६.

[1]अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः ।
सम्यक्स धर्मं कृत्वेह परत्र सुखमेधते ॥

[2]न देहभेदे मरणं विजानतां
न च प्रणाशः स्वनुपालिते पथि ।
धर्मं हि यो वर्धयते स पण्डितो
य एव धर्माच्च्यवते स मुह्यति ॥

देहभेदेऽपि मरणं नास्तीति जानताम् । अनुपालिते शिष्टैराद्दृते पथि वर्तमानानाम् । नीटी.

[3]प्रयुक्तयोः कर्मपथि स्वकर्मणोः
फलं प्रयोक्ता लभते यथाविधि ।
निहीनकर्मा निरयं प्रपद्यते
त्रिविष्टपं गच्छति धर्मपारगः ॥

[4]सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।
तथाऽऽत्मानं समादध्याद्भ्रश्येत न पुनर्यथा ॥

[5]यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी ।
तमाहुः पुण्यकर्माणमशोच्यं मित्रबान्धवैः ॥

नोत्क्रामति, धर्ममिति शेषः । नीटी.

[6]यस्य नोपहता बुद्धिर्निश्चयेष्ववलम्बते ।
स्वर्गे कृतावकाशस्य तस्य नास्ति महद्भयम् ॥

नोपहतेति नैकवेतिवत्समासः । नीटी.

(१) भा. १२।३०९।७६ ; भामु. १२।३२१।७७ क्स धर्मं (क्स्वधर्मं) मेधते (मश्नुते).

(२) भा. १२।३०९।७७ ; भामु. १२।३२१।७८.

(३) भा. १२।३०९।७८ ; भामु. १२।३२१।७९ यथाविधि (यथा कृतम्).

(४) भा. १२।३०९।७९ ; भामु. १२।३२१।८० भ्रश्येत (भ्रश्यते) ; ब्रक. १९ चतुर्थचरणे (न भ्रश्येत यथा पुनः) ; कुर. २५ उत्तरार्धे ( तथाऽभिधानं संदध्यान्न भ्रश्येत यथा पुनः ॥ ).

(५) भा. १२।३०९।८० ; भामु. १२।३२१।८१ मित्र (पुत्र) ; ब्रक. १९ तिः स्वर्ग (तिर्धर्म) ; कुर. २५ सारिणी (सारिणः) शेषं ब्रकवत्.

(६) भा. १२।३०९।८१ ; भामु. १२।३२१।८२ येष्वव (ये ह्यव) तस्य नास्ति (नास्ति तस्य).

[1]तपोवनेषु ये जातास्तत्रैव निधनं गताः ।
तेषामल्पतरो धर्मः कामभोगमजानताम् ॥
[2]यस्तु भोगान्परित्यज्य शरीरेण तपश्चरेत् ।
न तेन किंचिन्नप्राप्तं तन्मे बहुमतं फलम् ॥
[3]मातापितृसहस्राणि पुत्रदारशतानि च ।
अनागतान्यतीतानि कस्य ते कस्य वा वयम् ॥
[4]अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं तं न पश्यामि यो मम ॥
[5]न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि यातानि भवांश्चैव गमिष्यति ॥
[6]इह लोके हि धनिनः परोऽपि स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामेव नश्यति ॥
[7]संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥
[8]पश्य त्वं छिद्रभूतं हि जीवलोकं स्वकर्मणा ।
तत्कुरुष्व तथा पुत्र कृत्स्नं यत्समुदाहृतम् ॥
[9]तदेतत्संप्रदृश्यैव कर्मभूमिं प्रविश्य ताम् ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥

---

(१) भा. १२।३०९।८२ ; भामु. १२।३२१।८३ भोगम (भोगान).

(२) भा. १२।३०९।८३ ; भामु. १२।३२१।८४ चिन्नप्रा (चिन्न प्रा).

(३) भा. १२।३०९।८४ ; भामु. १२।३२१।८५.

(४) भामु. १२।३२१।८६.

(५) भा. १२।३०९।८५ ; भामु. १२।३२१।८७ यातानि (जातानि).

(६) भा. १२।३०९।८६ ; भामु. १२।३२१।८८ धनिनः परोऽपि ( धनिनां स्वजनः ) मेव (मपि).

(७) भा. १२।३०९।८७ ; भामु. १२।३२१।८९.

(८) भा. १२।३०९।८८ ; भामु. १२।३२१।९० पश्य त्वं छिद्र (पश्यति छिन्न).

(९) भा. १२।३०९।८९ ; भामु. १२।३२१।९१ प्रविश्य ताम् (प्रपश्यतः).

[1]मासर्तुसंज्ञापरिवर्तकेन
सूर्याग्निना रात्रिदिवेन्धनेन ।
स्वकर्मनिष्ठाफलसाक्षिकेण
भूतानि कालः पचति प्रसह्य ॥
[2]धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपून्न बाधते ।
श्रुतेन किं येन न धर्ममाचरे-
त्किमात्मना यो न जितेन्द्रियो वशी ॥
[3]इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुको गतः परित्यज्य पितरं मोक्षदेशिकम् ॥
मोक्षदैशिकं मोक्षोपदेष्टारम् । नीटी.

पशुयज्ञनिषेधः

युधिष्ठिर उवाच–
[4]यदा भक्तो भगवत आसीद्राजा महावसुः ।
किमर्थं स परिभ्रष्टो विवेश विवरं भुवः ॥
'यदा भागवतोऽत्यर्थम्' इत्यादिरध्यायो वैष्णवानां हिंसयज्ञवर्जनार्थः । नीटी.

भीष्म उवाच–
[5]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषीणां चैव संवादं त्रिदशानां च भारत ॥
[6]अजेन यष्टव्यमिति देवाः प्राहुर्द्विजोत्तमान् ।
स च छागो ह्यजो ज्ञेयो नान्यः पशुरिति स्थितिः ॥

---

(१) भा. १२।३०९।९० ; भामु. १२।३२१।९२ तंकेन (तंकेण).

(२) भा. १२।३०९।९१ ; भामु. १२।३२१।९३ रिपून्न (रिपुं न).

(३) भा. १२।३०९।९२ ; भामु. १२।३२१।९४ देशि (दैशि).

(४) भा. १२।३२४।१ ; भामु. १२।३३७।१ भक्तो भगवत आसी (भागवतोऽत्यर्थमासी) महाव (महान्व).

(५) भा. १२।३२४।२ ; भामु. १२।३३७।२.

(६) भा. १२।३२४।३ ; भामु. १२।३३७।३ देवाः प्राहुर्द्वि (प्राहुर्देवा द्वि) गो ह्यजो (गोऽप्यजो).

ऋषय ऊचुः–

[1]बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः।
अजसंज्ञानि बीजानि छागं न घ्नन्तुमर्हथ॥

अजसंज्ञानि बीजानि। 'तस्मादेत एतेषां पशूनां प्रयुक्ततमो यदजस्तेऽजमालभन्त सोऽस्मादालब्धादुदक्रामत्स इमां प्राविशत्तस्मादियं मेध्याऽभवत्... तमन्ववायन् (? तमस्मामन्वगच्छन्) सोऽनुगतो व्रीहिरभवत्' (ऐब्रा. ६।८) इति बह्वृचब्राह्मणम्। सर्वेषां पशूनां स यज्ञो मेध्यता(? मेधा)ख्यः इमां पृथिवीं प्रविष्टः। अन्ववायन् अन्वेषितवन्तः। इयं श्रुतिः पुरोडाशस्तुतिमात्रपरा, न तु पशूनाममेध्यत्वप्रतिपादनपरा, 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुम्' इति न्यायात् इति भोगलोलुपानां देवानां मतम्। वीतरागाणामृषीणां तु मानान्तराविसंवादाददहिंसाशास्त्रानुग्रहाच्च अवान्तरतात्पर्येण प्रतीयमानोऽर्थो यथाभूत एव, न तु स स्वार्थे अप्रमाणम्। यथाऽऽहुः संप्रदायविदः– 'विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥' इति। तत्र 'यजमानः प्रस्तरः' इत्यादिः प्रस्तरयजमानयोरभेदस्य प्रत्यक्षविरोधात् प्रस्तरस्तुत्यर्थं गुणवादोऽयम्; 'अग्निर्हिमस्य भेषजम्' इति लोकावगतार्थत्वादनुवादः; 'मेधातिथिं ह काण्वायनं मेषो भूत्वेन्द्रो जहार' इत्यादिर्विरोधानुवादयोरभावात् भूतार्थवाद इति वृद्धश्लोकार्थः। न चात्रापि क्रत्वर्थेनाऽऽलम्भविधिना पुरुषार्थनिषेधस्य विरोधोऽस्ति। अतोऽर्थवादोऽप्ययं स्वार्थेऽवान्तरतात्पर्यविषया देवताधिकरणन्यायेन प्रामाण्यमश्नुवीत। अन्यथा भारतरामायणादीनामपि स्वार्थे प्रामाण्यं विहन्येतेति। तस्मादजस्यस्य मेधस्य बीजेषु संक्रमाद्बीजान्येवाजसंज्ञानीति युक्तम्। नीटी.

[2]नैष धर्मः सतां देवा यत्र वध्येत वै पशुः।
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः॥

(१) भा. १२।३२४।४ ; भामु. १२।३३७।४ न घ्नन्तु (नो हन्तु).

(२) भा. १२।३२४।५ ; भामु. १२।३३७।५.

धर्मो बहुविषयः स्वर्ग्यः सफलश्च

भीष्म उवाच–

[1]सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलोदयः।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया॥

सर्वत्र आश्रमेषु विहितो धर्मः स्वर्गः स्वर्गसाधनं सत्यफलम् अबाधितमोक्षाख्यफलसाधनं च भवति। साधने साध्योपचारः। बहूनि यज्ञदानादीनि द्वाराणि यस्य। नीटी.

[2]यस्मिन्यस्मिंस्तु विषये यो यो याति विनिश्चयम्।
स तमेवाभिजानाति नान्यं भरतसत्तम॥

सर्वेष्वाश्रमेषु स्वर्गो मोक्षश्चास्ति। तेषु यत्र यस्य रुचिस्तेन स कृतकृत्यो नान्यं धर्मं बहु मन्यते इति श्लोकद्वयार्थः। नीटी.

निश्चितं धर्मलक्षणम्

युधिष्ठिर उवाच–

[3]अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः।
किं निश्चितं भवेत्तत्र तन्मे ब्रूहि पितामह॥

अन्तः निष्ठा। अनेकान्तम् अनेकफलाकारमित्यर्थः। पात्रगुणानामनन्तत्वात्के गुणा नियमेन पात्रताया निमित्तम्? तानेव संक्षेपेण ब्रूहीति प्रश्नार्थः। नीटी.

भीष्म उवाच–

[4]अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम्॥

उत्तरमाह– अहिंसेति। नीटी.

(१) भा. १२।३४०।२ ; भामु. १२।३५२।२ द्वितीयचरणे (स्वर्गः सत्यफलं महत्).

(२) भा. १२।३४०।३; भामु. १२।३५२।३ स्मिंस्तु (स्मिश्च).

(३) भा. १३।२३।१८ ; भामु. १३।२२।१८ तृतीयचरणे (किंनिमित्तं भवेदत्र).

(४) भा. १३।२३।१९ ; भामु. १३।२२।१९.

[1]दानेन तपसा चैव सत्येन च युधिष्ठिर ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥

तपआदीनां धर्माणां विविधानि फलानि

‡[2]रहस्यमद्भुतं चैव शृणु वक्ष्यामि यत्त्वयि ।
या गतिः प्राप्यते येन प्रेत्यभावेषु भारत ॥

वीरधर्मस्य श्रेष्ठ्यं विवक्षुस्तपआदीनां तावत्प्राशस्त्यं दर्शयन् भीष्म उवाच– रहस्यमित्यादिना । या गतिः फलं येन साधनेन प्रेत्यभावे मरणानन्तरम् । नीटी.

[3]तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥
ज्ञानं विज्ञानमारोग्यं रूपं संपत्तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ॥

[4]धनं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥

मौनेन जगदाज्ञाकारी भवतीत्यर्थः । जीवितम् आयुः । नीटी.

[5]अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले ।
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत् ॥

[6]पयोभक्षो दिवं याति स्नानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्या नित्यश्राद्धेन संततिः ॥

---

‡ अत्रोक्तानां वर्णाश्रमकर्मविशेषविपाकानां वर्णाश्रमधर्मप्रकरणेष्वेवाऽऽनुषङ्गिकत्वेन संग्राह्यत्वेऽपि एकप्रकरणनिबद्धत्वादत्रैव ते संगृहीताः । तथापि दानविशेषविपाकानां दानकाण्डे संग्राह्यत्वात् बहुत्वाच्च तेषां संग्रहोऽत्र विस्तरपरिहाराय परिहृतः ।

(१) भा. १३।२४।८३ ; भामु. १३।२३।८५.

(२) भा. १३।५७।७; भामु. १३।५७।७ वेषु भारत (वे विशांपते).

(३) भा. १३।५७।८–९ ; भामु. १३।५७।८–९.

(४) भा. १३।५७।१० ; भामु. १३।५७।१० नं ज्ञानं (नेनाऽऽज्ञां).

(५) भा. १३।५७।११ ; भामु. १३।५७।११.

(६) भा. १३।५७।१२ ; भामु. १३।५७।१२ स्नानेन (दानेन).

[1]गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशनात् ।
स्त्रियस्त्रिषवणस्नानाद्वायुं पीत्वा क्रतुं लभेत् ॥

क्रतुं प्रजापतिम् । प्राणायामैः प्रजापतिलोकं प्राप्नोतीत्यर्थः । नीटी.

[2]नित्यस्नायी भवेद्दक्षः संध्ये तु द्वे जपन्द्विजः ।
मरुं साधयतो राज्यं नाकपृष्ठमनाशके ॥

दक्षोऽपि प्रजापतिविशेषः । मरुम् अनुदकम् अनाशकम् अनाहारः । नीटी.

[3]स्थण्डिले शयमानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर्वासांस्याभरणानि च ॥

[4]शय्यासनानि यानानि योगयुक्ते तपोधने ।
अग्निप्रवेशे नियतं ब्रह्मलोको विधीयते ॥

[5]रसानां प्रतिसंहारात्सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारात्प्रजाऽस्याऽऽयुष्मती भवेत् ॥

प्रतिसंहारात् त्यागात् । नीटी.

[6]उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।
सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ॥

[7]कीर्तिर्भवति दानेन तथाऽऽरोग्यमहिंसया ।
द्विजशुश्रूषया राज्यं द्विजत्वं वाऽपि पुष्कलम् ॥

[8]देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति ॥

---

(१) भा. १३।५७।१३ ; भामु. १३।५७।१३ शनात् (शिनाम्) णस्नानाद् (णं स्नात्वा).

(२) भा. १३।५७।१४ ; भामु. १३।५७।१४ राज्यं (राजन्).

(३) भा. १३।५७।१५ ; भामु. १३।५७।१५.

(४) भा. १३।५७।१६ ; भामु. १३।५७।१६ को विधी (के मही).

(५) भा. १३।५७।१७ ; भामु. १३।५७।१७ जाऽस्याऽऽ(जा ह्या).

(६) भा. १३।५७।१८ ; भामु. १३।५७।१८.

(७) भा. १३।५७।१९ ; भामु. १३।५७।१९ वाऽपि (चापि).

(८) भा. १३।५७।२१ ; भामु. १३।५७।२१.

[1]गन्धमाल्यनिवृत्त्या तु कीर्तिर्भवति पुष्कला ।
केशश्मश्रून्धारयतामग्र्या भवति संततिः ॥
[2]उपवासं च दीक्षां च अभिषेकं च पार्थिव ।
कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते ॥

उपवासः सर्वभोगत्यागः । दीक्षा जपादिनियमस्वीकारः । अभिषेकः त्रिषवणं स्नानम् । त्रयाणां समुच्चयः । नीटी.

क्रतुभिश्चोपवासैश्च त्रिदिवं याति भारत ॥
[3]पितामहस्यानुचरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते तस्मादित्याहुः परमर्षयः ॥

तात्पर्यमाह– पितामहस्येति । अनवरः समानः । यस्मात् पितामहात् । नीटी.

विविधशुभाचरणस्य गोलोकादिदिव्यलोक-
प्राप्तिः फलम्

भीष्मोवाच–

[4]सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि ।
पश्यामि यानहं लोकानेकपत्न्यश्च याः स्त्रियः ॥
[5]कर्मभिश्चापि सुशुभैः सुव्रता ऋषयस्तथा ।
सशरीरा हि तान्यान्ति ब्राह्मणाः शुभवृत्तयः ॥
[6]शरीरन्यासमोक्षेण मनसा निर्मलेन च ।
स्वप्नभूतांश्च ताँल्लोकान्पश्यन्तीहापि सुव्रताः ॥

शरीरस्य न्यासः समाधिकाले, मोक्षः मरणे । निर्मलेन मनसा योगिनो न्यासे मोक्षे च ताँल्लोकान्पश्यन्ति । नीटी.

तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्तिनः ।
अहंकारैर्विरहिता यान्ति शक्र नरोत्तमाः ॥
[1]यः सर्वमांसानि न भक्षयीत
पुमान्सदा यावदन्ताय युक्तः ।
मातापित्रोरर्चिता सत्ययुक्तः
शुश्रूषिता ब्राह्मणानामनिन्द्यः ॥
[2]अक्रोधनो गोषु तथा द्विजेषु
धर्मे रतो गुरुशुश्रूषकश्च ।
यावज्जीवं सत्यवृत्ते रतश्च
दाने रतो यः क्षमी चापराधे ॥
[3]मृदुर्दान्तो देवपरायणश्च
सर्वातिथिश्चापि तथा दयावान् ।
ईदृग्गुणो मानवः संप्रयाति
लोकं गवां शाश्वतं चाव्ययं च ॥

आचारप्रभवो धर्मः, आचारमहिमा

[4]आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥
[5]दुराचारो हि पुरुषो नेहाऽऽयुर्विन्दते महत् ।
त्रसन्ति यस्माद्भूतानि तथा परिभवन्ति च ॥
[6]तस्मात्कुर्यादिहाऽऽचारं य इच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥

अलक्षणं कुष्ठापस्मारादि विरुद्धं लक्षणम् । नीटी.

---

(१) भा. १३।५७।२३ ; भामु. १३।५७।२३ निवृत्त्या तु (प्रदानेन) श्मश्रून्धा (श्मश्रु धा).

(२) भा. १३।५७।२४, २६ ; भामु. १३।५७।२४, २६.

(३) भा. १३।५७।४१ ; भामु. १३।५७।४१ नुचरो (नवरो) तस्मा (यस्मा).

(४) भा. १३।७२।२ ; भामु. १३।७३।२.

(५) भा. १३।७२।३ ; भामु. १३।७३।३ वृत्तयः (बुद्धयः).

(६) भा. १३।७२।४, ९ ; भामु. १३।७३।४, १०.

(१) भा. १३।७२।१० ; भामु. १३।७३।११ यावदन्ताय यु (भावितो धर्मयु).

(२) भा. १३।७२।११ ; भामु. १३।७३।१२.

(३) भा. १३।७२।१२ ; भामु. १३।७३।१३ वः संप्र (वस्तं प्र).

(४) भा. १३।१०७।६ ; भामु. १३।१०४।६ ; पमा. १।१३३ ; मुक्ता. ५ ह्यायु ( चाऽऽयु ) त्कीर्तिमाप्नोति (ल्लभते कीर्तिं).

(५) भा. १३।१०७।७ ; भामु. १३।१०४।७ ; पमा. १।१३३ तृतीयचरणे (त्रसन्ति चास्य भूतानि).

(६) भा. १३।१०७।८ ; भामु. १३।१०४।८ य इच्छे (यदिच्छे) ; पमा. १।१३३ य इच्छे (यदीच्छे).

[1]आचारलक्षणो धर्मः सन्तश्चाऽऽचारलक्षणाः ।
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ॥
[2]अप्यदृष्टं श्रुतं वाऽपि पुरुषं धर्मचारिणम् ।
भूतिकर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् ॥

श्रवात् श्रवणात् । तं पुरुषम् । जनाः साधवः ।
नीटी.

[3]ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥
[4]विशीला भिन्नमर्यादा नित्यं संकीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥
[5]सर्वलक्षणहीनोऽपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥
[6]अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥
[7]लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः संकुसुको नेहाऽऽयुर्विन्दते महत् ॥

संकुसुकः दुर्जनः अस्थिरश्च । 'संकुसुकोऽस्थिरः' इत्यमरः । नीटी.

[1]आचारो भूतिजननं आचारः कीर्तिवर्धनः ।
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ।
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥
[2]एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्पता सर्ववर्णान्ब्रह्मणा समुदाहृतम् ॥
[3]धर्मं हि श्रेय इत्याहुरिति धर्मविदो विदुः ॥
[4]न धर्मात्परमो लाभः ...... ॥

धर्म एव परलोकसहायः

युधिष्ठिर उवाच–

[5]भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
मर्त्यस्य कः सहायो वै पिता माता सुतो गुरुः ॥
[6]मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
गच्छन्त्यमुत्रलोकं वै क एनमनुगच्छति ॥

बृहस्पतिरुवाच–

[7]एकः प्रसूतो राजेन्द्र जन्तुरेको विनश्यति ।
एकस्तरति दुर्गाणि गच्छत्येकश्च दुर्गतिम् ॥
[8]असहायः पिता माता तथा भ्राता सुतो गुरुः ।
ज्ञातिसंबन्धिवर्गश्च मित्रवर्गस्तथैव च ॥
[9]मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
मुहूर्तमुपतिष्ठन्ति ततो यान्ति पराङ्मुखाः ।

---

(१) भा. १३।१०७।९ ; भामु. १३।१०४।९ श्चाऽऽचार (श्चारित्र) यथा वृ (यथावृ) ; पमा. १।१३३ यथा वृ (यथावृ).

(२) भा. १३।१०७।१० ; भामु. १३।१०४।१० श्रुतं वाऽपि (श्रवादेव).

(३) भा. १३।१०७।११ ; भामु. १३।१०४।११ तिल (भिल) ; मुक्ता. ५.

(४) भा. १३।१०७।१२ ; भामु. १३।१०४।१२.

(५) भा. १३।१०७।१३ ; भामु. १३।१०४।१३ सूय (सूयु) ; विपा. ३।४०२ समुदा (सम्यगा) (=).

(६) भा. १३।१०७।१४ ; भामु. १३।१०४।१४; विपा. ३।४०२ मविहिं (मप्यहिं) तृतीयचरणे (अजिह्मश्च वदान्यश्च).

(७) भा. १३।१०७।१५ ; भामु. १३।१०४।१५ लोष्ट (लोष्ठ).

(१) भा. १३।१०७।१४६–१४७ ; भामु. १३।१०४।१५५–१५६.

(२) भा. १३।१०७।१४८ ; भामु. १३।१०४।१५७ कम्पता (कम्प्य).

(३) भा. १३।१०८।१३ ; भामु. १२।१०५।१४.

(४) भा. १३।१०९।६२ ; भामु. १३।१०६।६५.

(५) भा. १३।११२।९ ; भामु. १३।१११।९.

(६) भा. १३।११२।१० ; भामु. १३।१११।१०–११ त्रलोकं (त्र लोकं).

(७) भा. १३।११२।११ ; भामु. १३।१११।११–१२ पूर्वार्धे (एकः प्रसूयते राजन्नेक एव विनश्यति । ) कश्च (कस्तु).

(८) भा. १३।११२।१२ ; भामु. १३।१११।१२–१३.

(९) भा. १३।११२।१३ ; भामु. १३।१११।१३–१४ मुपतिष्ठन्ति (मिव रोदित्वा).

तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ॥

[1]तस्माद्धर्मः सहायार्थे सेवितव्यः सदा नृभिः ।
प्राणी धर्मसमायुक्तो गच्छते स्वर्गतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकायोपपद्यते ॥

[2]तस्मान्न्यायागतैरर्थैर्धर्मं सेवेत पण्डितः ।
धर्म एको मनुष्याणां सहायः पारलौकिकः ॥
लोभान्मोहादनुक्रोशाद्भयाद्वाऽप्यबहुश्रुतः ।
नरः करोत्यकार्याणि परार्थे लोभमोहितः ॥
धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम् ॥

पृथिव्यादयः सप्त सर्वदैव धर्मे साक्षिणः

युधिष्ठिर उवाच–

[3]श्रुतं भगवतो वाक्यं धर्मयुक्तं परं हितम् ।
शरीरविचयं ज्ञातुं बुद्धिस्तु मम जायते ॥

शरीरस्य निचयं संचयम् अवस्थितिमिति यावत् ।
नीटी.

[4]मृतं शरीररहितं सूक्ष्ममव्यक्ततां गतम् ।
अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति ॥

बृहस्पतिरुवाच–

[5]पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
बुद्धिरात्मा च सहिता धर्मं पश्यन्ति नित्यदा ॥

अन्तगः यमः, अन्तार्थे गच्छतीति योगात् । आत्मा साक्षी ।
नीटी.

[1]प्राणिनामिह सर्वेषां साक्षिभूतानि चानिशम् ।
एतैश्च सह धर्मोऽपि तं जीवमनुगच्छति ॥

निशेति दिवसस्याप्युपलक्षणम् । एतैः सह धर्मोऽपूर्वरूपो जीवमनुगच्छति ।
नीटी.

[2]त्वगस्थिमांसं शुक्रं च शोणितं च महामते ।
शरीरं वर्जयन्त्येते जीवितेन विवर्जितम् ॥

$[3]ततो धर्मसमायुक्तः प्राप्नुते जीव एव हि ।
ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाऽशुभम् ।
देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि ॥

[4]ततो धर्मसमायुक्तः स जीवः सुखमेधते ।
इह लोके परे चैव किं भूयः कथयामि ते ॥

अहिंसाश्रयः कामक्रोधलोभरहितो धर्मः सिद्धिदः

युधिष्ठिर उवाच–

[5]अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः ।
तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥

बृहस्पतिरुवाच–

[6]सर्वाण्येतानि धर्मस्य पृथग्द्वाराणि सर्वशः ।
शृणु संकीर्त्यमानानि षडेव भरतर्षभ ॥

---

(१) भा. १३।११२।१४ ; भामु. १३।१११।१५–१६ यार्थे (यश्च) गच्छते स्वर्गतिं (गच्छेत्स्वर्गगतिं) कायो (कं चो) ; चन्न. १५ यार्थे (यत्वे) प्रथमार्धमात्रम्.

(२) भा. १३।११२।१५–१७ ; भामु. १३।१११।१६–१९.

(३) भा. १३।११२।१८ ; भामु. १३।१११।१९–२० विचयं (निचयं).

(४) भा. १३।११२।१९ ; भामु. १३।१११।२०–२१ ररहितं (रं हि नृणां).

(५) भा. १३।११२।२० ; भामु. १३।१११।२१–२२ तिश्च पञ्चमम् (तिर्मनोऽन्तगः).

$ इदमर्धत्रयमग्रिमश्लोकश्च परस्परस्थाने पाठभेदाविति व्यवस्थैवोपपद्यते । अतः केनचिदन्यतरपाठेन सह पाठान्तरमपि प्रक्षिप्तं भामुग्रन्थे तथैवाविचार्य मुद्रितं चेति सुवचम् । अन्यथा प्रकृतानुशासनमसमाप्यैव 'किं भूयः श्रोतुमिच्छसि ?' इति प्रश्नोऽनुपपन्नः स्यात् ।

(१) भा. १३।११२।२१ ; भामु. १३।१११।२२–२३ तानि चा (ता निशा) स ह (सह).

(२) भा. १३।११२।२२ ; भामु. १३।१११।२३–२४.

(३) भामु. १३।१११।२४–२५.

(४) भा. १३।११२।२३ ; भामु. १३।१११।२६.

(५) भा. १३।११४।१ ; भामु. १३।११३।१.

(६) भा. १३।११४।२ ; भामु. १३।११३।२ धर्मस्य (धर्म्याणि).

[1]हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं यः साधयति वै नरः ॥
त्रीन्दोषान्सर्वभूतेषु निधाय पुरुषः सदा ।
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥

त्रीन्दोषान् कामक्रोधलोभान् लोकेषु निधाय, न तु स्वात्मनि । कामक्रोधौ चाल्लोभम् । नीटी.

[2]अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनः सुखमन्विच्छन्न स प्रेत्य सुखी भवेत् ॥

धर्मः आत्मौपम्येन वर्तनम्

[3]आत्मोपमश्च भूतेषु यो वै भवति पूरुषः ।
न्यस्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ॥

[4]सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥

सर्वेषां भूतानामात्मभूतस्य आत्मदुःखेनेव परदुःखेनापि उद्विजतः सर्वभूतानि आत्मत्वेन तत्त्वदृश्या पश्यतः मार्गे देवाः मुह्यन्ति । स व्यापको भूत्वा मुच्यत इत्यर्थः । अपदस्य गत्यागतिहीनत्वान्मार्गसूचकपदरहितस्य । पदैषिणः स्थानैषिणः बहिर्मुखा इत्यर्थः । नीटी.

[5]न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
एष संक्षेपतो धर्मः कामादन्यः प्रवर्तते ॥

[6]प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः समाधिमधिगच्छति ॥

[1]यथा परः प्रक्रमतेऽपरेषु
तथाऽपरः प्रक्रमते परस्मिन् ।
एषैव तेऽस्तूपमा जीवलोके
यथा धर्मो नैपुणेनोपदिष्टः ॥

हिंसितो हिनस्ति, पालितः पालयति, तस्मात्पालयेदेव, नो हिंसयेदित्यर्थः । नीटी.

आचारो धर्ममूलम्

[2]सर्वागमानामाचारः प्रथमं परिकल्प्यते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥

धर्माचरणं स्वर्गफलदम्

युधिष्ठिर उवाच–

[3]ये च धर्ममसूयन्ति ये चैनं पर्युपासते ।
ब्रवीतु भगवानेतत्क्व ते गच्छन्ति तादृशाः ॥

भीष्म उवाच–

[4]रजसा तमसा चैव समवस्तीर्णचेतसः ।
नरकं प्रतिपद्यन्ते धर्मविद्वेषिणो नराः ॥
[5]ये तु धर्मं महाराज सततं पर्युपासते ।
सत्यार्जवपराः सन्तस्ते वै स्वर्गभुजो नराः ॥
[6]धर्म एव रतिस्तेषामाचार्योपासनाद्भवेत् ।
देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते ॥
[7]मनुष्या यदि वा देवाः शरीरमुपताप्य वै ।
धर्मिणः सुखमेधन्ते लोभद्वेषविवर्जिताः ॥

---

(१) भा. १३।११४।३–४ ; भामु. १३।११३।३–४.

(२) भा. १३।११४।५ ; भामु. १३।११३।५ न स प्रेत्य ( स प्रेत्य न).

(३) भा. १३।११४।६ ; भामु. १३।११३।६ मश्च (मस्तु).

(४) भा. १३।११४।७ ; भामु. १३।११३।७.

(५) भा. १३।११४।८ ; भामु. १३।११३।८ दध्या (दध्या).

(६) भा. १३।११४।९ ; भामु. १३।११३।९ समाधि (प्रमाण).

(१) भा. १३।११४।१० ; भामु. १३।११३।१० ऽपरेषु (परेषु) द्वितीयचरणे (तथाऽपरे प्रक्रमन्ते परस्मिन् ) एषैव (तथैव).

(२) भा. १३।१३५।१३७ ; भामु. १३।१४९।१३७ आचारप्रभवो (आचारः प्रथमो).

(३) भा. १३।१४८।१ ; भामु. १३।१६२।२७ सूयन्ति (सूयन्ते).

(४) भा. १३।१४८।२ ; भामु. १३।१६२।२८ नराः (जनाः).

(५) भा. १३।१४८।३ ; भामु. १३।१६२।२९.

(६) भा. १३।१४८।४ ; भामु. १३।१६२।३० रति (गति).

(७) भा. १३।१४८।५–६ ; भामु. १३।१६२।३१–३२.

प्रथमं ब्राह्मणः पुत्रं धर्ममाहुर्मनीषिणः ।
धर्मिणः पर्युपासन्ते फलं पक्वमिवाऽऽशयः ॥

पापस्य साक्षि कर्तुः हृदयम्

[1]पापमाचक्षते नित्यं हृदयं पापकर्मिणाम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥

पापकर्मिणः स्वहृदयं पापिष्ठमित्याचक्षते । कर्मणैव तेषां हृदयं ज्ञायत इत्यर्थः । नीटी.

ज्ञानपूर्वं कृतं कर्म च्छादयन्ते ह्यसाधवः ।
न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः ।
पापेनाभिहतः पापः पापमेवाभिजायते ॥
[2]यथा वार्धुषिको वृद्धिं देहभेदे प्रतीक्षते ।
धर्मेणापिहितं पापं धर्ममेवाभिवर्धयेत् ॥
[3]यथा लवणमम्भोभिराप्लुतं प्रविलीयते ।
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति ॥
[4]तस्मात्पापं न गूहेत गूहमानं विवर्धते ।
कृत्वा तु साधुष्वाख्येयं ते तत्प्रशमयन्त्युत ॥

निष्कामधर्माचरणं प्रशस्तम्

[5]आशया संचितं द्रव्यं यत्काले नोपभुज्यते ।
अन्ये चैतत्प्रपद्यन्ते वियोगे तस्य देहिनः ॥
[6]मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात्सर्वाणि भूतानि धर्ममेव समासते ॥
एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् ।
धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ॥

धर्मध्वजिकः तत्प्रकाशकः । नीटी.

(१) भा. १३।१४८।२८–२९ ; भामु. १३।१६२।५४–५६ कर्मिणाम् ( कर्मिणः ) पूर्वं कृतं ( पूर्वकृतं ) द्वितीयतृतीयश्लोकार्धौ व्यत्यासेन पठितौ.

(२) भा. १३।१४८।३० ; भामु. १३।१६२।५७ देह (दिन) णापिहि (ण पिहि).

(३) भा. १३।१४८।३१ ; भामु. १३।१६२।५८.

(४) भा. १३।१४८।३२ ; भामु. १३।१६२।५९ वर्धते (वर्धयेत्) तु (तत्).

(५) भा. १३।१४८।३३ ; भामु. १३।१६२।६० यत्काले नोप (कालेनैवोप).

(६) भा. १३।१४८।३४–३६ ; भामु. १३।१६२।६१–६३.

अर्चेद्देवानदम्भेन सेवेतामायया गुरून् ।
निधिं निदध्यात्पारत्र्यं यात्रार्थं दानशब्दितम् ॥

पारत्र्यं परलोकहितम् । नीटी.

दानं वृद्धसेवा अहिंसा च त्रयमेतत् हितकरम्

भीष्म उवाच–

[1]ईहमानः समारम्भान्यदि नाऽऽसादयेद्धनम् ।
उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति ॥
दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥
[2]तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
स्वाभाषी प्रियकृच्छुद्धः सर्वसत्त्वाविहिंसकः ॥

धर्मश्रद्धा श्रेयस्करी

भीष्म उवाच–

[3]कार्यते यच्च क्रियते सच्चासच्च कृतं ततः ।
तत्राऽऽश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् ॥
[4]काल एवात्र कालेन निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्मार्थेषु प्रवर्तते ॥

प्रवर्तते प्रवर्तयति । नीटी.

[5]यदा त्वस्य भवेद्बुद्धिर्धर्म्या चार्थप्रदर्शिनी ।
तदाऽऽश्वसीत धर्मात्मा दृढबुद्धिर्न विश्वसेत् ॥

धर्मार्थस्य धर्मफलस्य प्रदर्शनात् यदा धर्म एव श्रेयस्कर इति बुद्धिर्भवेत्तदाऽयं धर्मात्मा धर्मचित्तः धर्मे आश्वसीत विश्वासं कुर्वीत । अदृढबुद्धिस्तु न विश्वसेत् धर्मफले । नीटी.

(१) भा. १३।१४९।१०–११ ; भामु. १३।१६३।११–१२.

(२) भा. १३।१४९।१२ ; भामु. १३।१६३।१३ स्वाभाषी (सुभाषी) च्छुद्धः (च्छान्तः).

(३) भा. १३।१५०।१ ; भामु. १३।१६४।१ कृतं ततः ( कृताकृतम् ).

(४) भा. १३।१५०।२ ; भामु. १३।१६४।२ एवात्र कालेन (एव सर्वकाले) धर्मार्थेषु (धर्माधर्मौ).

(५) भा. १३।१५०।३ ; भामु. १३।१६४।३ द्वितीयचरणे (धर्मार्थस्य प्रदर्शनात् ) दृढ (ऽदृढ).

[1]एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम् ।
कालयुक्तोऽप्युभयविच्छेषमर्थं समाचरेत् ॥

एतावत् धर्मे विश्वासवत्त्वम् । उभयवित् कर्तव्याकर्तव्यवित् । नीटी.

[2]यथा ह्युपस्थितैश्वर्याः पूजयन्ते नरा नरान् ।
एवमेवाऽऽत्मनाऽऽत्मानं पूजयन्तीह धार्मिकाः ॥

राजसाः मलिनाः । नीटी.

[3]न ह्यधर्मतया धर्मं दद्यात्कालः कथंचन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥

धर्मः कदाऽप्यधर्मो न भवेदित्याह— न हीति । अधर्मतया दुःखहेतुतया । नीटी.

स्प्रष्टुमप्यसमर्थो हि ज्वलन्तमिव पावकम् ।
अधर्मः सततो धर्मं कालेन परिरक्षितम् ॥

[4]कार्यावेतौ हि कालेन धर्मो हि विजयावहः ।
त्रयाणामपि लोकानामालोककरणो भवेत् ॥

एतौ विशुद्धताधर्मास्पर्शौ । नीटी.

[5]तत्र कश्चिन्नयेत्प्राज्ञो गृहीत्वैव करे नरम् ।
उह्यमानः स धर्मेण धर्मे बहुभयच्छले ॥

नयेत्, धर्ममिति शेषः । धर्मेण धर्मानुष्ठानार्थमितरैरुह्यमानः प्रेर्यमाणः सन् सर्वलोकभयच्छले तेषां प्रतारणे प्रवर्तते । यद्वा स्वं निस्तारं स्वयमेवाऽऽचरेदित्याह— न त्विति । नयेत्, ऊर्ध्वमिति शेषः । किंतु धर्मभयलोकभययोश्छले छलने निवृत्तिनिमित्तं धर्मेण हेतुना अर्थात्प्राज्ञेन उह्यमान एव नरः, ऊर्ध्वं गच्छतीति शेषः । 'शूद्रोऽहम्' इत्यादि वदन्निति शेषपूरणेन योज्यम् । नीटी.

[1]शूद्रोऽहं नाधिकारो मे चातुराश्रम्यसेवने ।
इति विज्ञानमपरे नाऽऽत्मन्युपदधत्युत ॥

अपरे साधवः न उपदधति न छलं कुर्वन्ति, यथाधिकारं धर्मं कुर्वन्ति, न छलमित्यर्थः । तस्मात्प्रवर्तना सर्वा व्यर्थैवेति भावः । नीटी.

विशेषेण च वक्ष्यामि चातुर्वर्ण्यस्य लिङ्गतः ।
पञ्चभूतशरीराणां सर्वेषां सदृशात्मनाम् ॥
लोकधर्मं च धर्मं च विशेषकरणं कृतम् ।
यथैकत्वं पुनर्यान्ति प्राणिनस्तत्र विस्तरः ॥

विशेषेणेति युग्मम् । सर्वेषां प्राणिनां पुरुषाणां वा पाञ्चभौतिकत्वे प्रत्यक्षेऽपि विशेषकरणम् इदं पवित्रमिदमपवित्रमिति व्यवस्थापनं लोकधर्मे शास्त्रीयधर्मे च निमित्ते सति कृतम् । पशुपामरपण्डितानां यथा पुनर्निहितेनैते एकत्वं प्राकृतं गच्छेयुरिति शास्त्रेण धर्मनियमः कृत इत्यर्थः । नीटी.

अध्रुवो हि कथं लोकः स्मृतो धर्मः कथं ध्रुवः ।
यत्र कालो ध्रुवस्तात तत्र धर्मः सनातनः ॥

अत्र शङ्कते— अध्रुव इति । लोकस्य धर्मस्य च कार्यकारणभावात्कार्यस्याध्रुवत्वं कारणस्य ध्रुवत्वं च न युक्तम्, तन्तुनाशमन्तरेण पटनाशायोगादित्यर्थः । उत्तरमाह— कालः संकल्पः । निष्कामधर्म एव ध्रुवस्तत्फलम्, न तु सकाम इत्यर्थः । नीटी.

सर्वेषां तुल्यदेहानां सर्वेषां सदृशात्मनाम् ।
कालो धर्मेण संयुक्तः शेष एव स्वयं गुरुः ॥

धर्मसंयुक्तः संकल्प एव शेषः शिष्यते, नान्यः । स च कथमुदेष्यतीत्यत्राऽऽह— स्वयं गुरुरिति । धर्मबलात्स्वयमेव च स उदेति, न शिक्षयेदित्यर्थः । नीटी.

एवं सति न दोषोऽस्ति भूतानां धर्मसेवने ।
तिर्यग्योनावपि सतां लोक एव मतो गुरुः ॥

---

(१) भा. १३।१५०।४ ; भामु. १३।१६४।४ चमर्थं (चं युक्तं).

(२) भा. १३।१५०।५ ; भामु. १३।१६४।५ द्वितीयचरणे (प्रजायन्ते न राजसाः).

(३) भा. १३।१५०।६–७ ; भामु. १३।१६४।६–७.

(४) भा. १३।१५०।८ ; भामु. १३।१६४।८ कालेन (धर्मेण) लोककरणो (लोकः कारणं).

(५) भा. १३।१५०।९ ; भामु. १३।१६४।९ तत्र (न तु) उह्यमानः स (उच्यमानस्तु) धर्मे बहु (धर्मलोक).

(१) भामु. १३।१६४।१०–१५.

यदा भूतानां प्राक्कर्मैव तत्र तत्र सुखदुःखसाधने प्रवर्तकम् अतो धर्मसेवने कर्मफलभोगे असमञ्जसेऽपि भूतानां दोषो नास्ति । यतः तिर्यग्योनावपि सतां विद्यमानानां भूतानां सदसत्प्रवृत्तौ पूर्वकर्मानुसाराल्लोक एव गुरुर्दृष्टः । विधिनियन्त्रितो लोकदृष्टान्तेनैव साधुन्यसाधुनि वा कर्मणि प्रवर्तते इत्यर्थः । नीटी.

[1]धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः ।
देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ।
जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने ॥
शरीरकालधर्माश्च आपद्धर्मास्तथैव च ।
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः ॥

शुभमशुभं च कर्म फलदमेव

[2]शुभानामशुभानां च नेह नाशोऽस्ति कर्मणाम् ।
प्राप्य प्राप्य तु पच्यन्ते क्षेत्रं क्षेत्रं तथा तथा ॥

क्षेत्रं क्षेत्रं देहं देहं प्राप्य प्राप्य आसाद्य आसाद्य पच्यन्ते फलं प्रयच्छन्ति । नीटी.

[3]यथा प्रसूयमानस्तु फली दद्यात्फलं बहु ।
तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् ॥

चित्तशुद्ध्यशुद्धितारतम्येनाल्पादपि पुण्यात्पापाद्वा फलं बह्वस्तीत्याह सार्धेन– यथेति । फली वृक्षः । नीटी.

[4]पापं चापि तथैव स्यात्पापेन मनसा कृतम् ।
पुरोधाय मनो हीह कर्मण्यात्मा प्रवर्तते ॥

पुरोधायेति । तस्मान्मन एव प्रधानम्, न कर्मेति भावः । नीटी.

[5]यद्यच्च कुरुते कर्म शुभं वा यदि वाऽशुभम् ।
पूर्वदेहकृतं सर्वमवश्यमुपभुज्यते ॥

---

(१) पमा. १।७४ आनुशासनिके पर्वणि.

(२) भा. १४।१८।१ ; भामु. १४।१८।१ प्य तु प (प्यानुप).

(३) भा. १४।१८।२ ; भामु. १४।१८।२.

(४) भा. १४।१८।३ ; भामु. १४।१८।३ हीह (हीदं).

(५) भा. १४।१८।११ ; भामु. १४।१८।१२.

दीपवदसङ्गाया अपि चेतनायाः दुःखादिसंप्रवीतौ हेतुमाह– यद्यच्चेति । यथा प्रकाशः अतदाकारोऽपि अङ्गुल्याद्युपाधिना ऋजुवक्राद्याकार इव प्रतीयते, एवं कर्मजदुःखप्रकाशिकायां चिति दुःखाकारतेव भाति, वस्तुतस्तु नास्ति, 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः, अवस्थान्तरगतस्य दुःखस्यावस्थान्तरेऽनुवृत्त्यदर्शनाच्चेति भावः । नीटी.

[1]ततस्तत्क्षीयते चैव पुनश्चान्यत्प्रचीयते ।
यावत्तन्मोक्षयोगस्थं धर्मं नैवावबुध्यते ॥

ततः उपभोगात् । नीटी.

दानादयः साधारणधर्माः आचारप्रमाणकाः

[2]तत्र धर्मं प्रवक्ष्यामि सुखी भवति येन वै ।
आवर्तमानो जातीषु तथाऽन्योन्यासु सत्तम ॥

कथं कष्टाच्च संसारान्मुच्यते ? इत्यस्योत्तरमाह– तत्र कर्मेत्यादिना । जातीषु योनिषु । नीटी.

[3]दानं व्रतं ब्रह्मचर्यं यथोक्तव्रतधारणम् ।
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् ॥

[4]संयमश्चाऽऽनृशंस्यं च परस्वादानवर्जनम् ।
व्यलीकानामकरणं भूतानां यत्र सा भुवि ॥

संयमः चित्तैकाग्र्यम् । नीटी.

[5]मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम् ।
गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ॥
प्रवर्तनं शुभानां च तत्सतां वृत्तमुच्यते ।
ततो धर्मः प्रभवति यः प्रजाः पाति शाश्वतीः ॥

---

(१) भा. १४।१८।१२ ; भामु. १४।१८।१३ स्तत्क्षी (स्तु क्षी).

(२) भा. १४।१८।१३ ; भामु. १४।१८।१४ धर्मं (कर्म) तथा (यथा).

(३) भा. १४।१८।१४ ; भामु. १४।१८।१५ क्तव्रत (क्तं ब्रह्म).

(४) भा. १४।१८।१५ ; भामु. १४।१८।१६ यत्र सा (मनसा).

(५) भा. १४।१८।१६–१७ ; भामु. १४।१८।१७–१८.

[1]एवं सत्सु सदा पश्येत्तत्र ह्येषा ध्रुवा स्थितिः।
आचारो धर्ममाचष्टे यस्मिन्सन्तो व्यवस्थिताः॥

[2]तेषु तद्धर्मनिक्षिप्तं यः स धर्मः सनातनः।
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात्॥

[3]अतो नियम्यते लोकः प्रमुह्य धर्मवर्त्मसु।
यस्तु योगी च मुक्तश्च स एतेभ्यो विशिष्यते॥

सर्पदंशो विषविद्याविदमिव कर्मसङ्गः प्रतीयमानोऽपि योगिनं न बाधते। योगी इतरेभ्यः श्रेष्ठ इत्यर्थः। यतो योगी अतो मुक्तः। चस्त्वर्थे, परो च शब्दो हेत्ववधारणार्थौ। यस्तु योगी स हि योगबलान्मुक्त एवेत्यर्थः।
नीटी.

[4]वर्तमानस्य धर्मेण पुरुषस्य यथा तथा।
संसारतारणं ह्यस्य कालेन महता भवेत्॥

कर्मिणां विलम्बेन मुक्तिरित्याह– वर्तमानस्येति।
नीटी.

अन्यायाधिगतद्रव्येण धर्माचरणं निषिद्धम्

[5]अन्यायोपगतं द्रव्यमतीतं यो ह्यपण्डितः।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते॥

[6]धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा।
ददाति दानं विप्रेभ्यो लोकविश्वासकारकम्॥

(१) भा. १४।१८।१८ ; भामु. १४।१८।१९ तत्र ह्ये (तत्राप्ये) सन्तो (शान्ता).

(२) भा. १४।१८।१९ ; भामु. १४।१८।२० तद्धर्मनि (तत्कर्म नि).

(३) भा. १४।१८।२० ; भामु. १४।१८।२१ प्रमुह्य (प्रच्यवन्) यस्तु (यश्च).

(४) भा. १४।१८।२१ ; भामु. १४।१८।२२ पुरुषस्य (शुभं यत्र).

(५) भा. १४।९४।२३ ; भामु. १४।९१।२७ मतीतं (मभीक्ष्णं) काङ्क्षी (शङ्की) चतुर्थचरणे (न स धर्मफलं लभेत्).

(६) भा. १४।९४।२४ ; भामु. १४।९१।२८ षस्तथा (थाधमः) कारकम् (कारणम्).

[1]पापेन कर्मणा विप्रो धनं लब्ध्वा निरङ्कुशः।
रागमोहान्वितः सोऽन्ते कलुषां गतिमाप्नुते॥

[2]तेन दत्तानि दानानि पापेन हतबुद्धिना।
तानि सत्त्वमनासाद्य नश्यन्ति विपुलान्यपि॥

तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः।
दाने न कीर्तिर्भवति प्रेत्य चेह च दुर्मतेः॥

[3]अपि संचयबुद्धिर्हि लोभमोहवशंगतः।
उद्वेजयति भूतानि हिंसया पापचेतनः॥

[4]एवं लब्ध्वा धनं लोभाद्यजते यो ददाति च।
स कृत्वा कर्मणा तेन न सिध्यति दुरागमात्॥

सनातनधर्मस्य मूलस्वरूपम्

[5]उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धर्मिणः॥

[6]एष धर्मो महांस्त्यागो दानं भूतदया तथा।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा।
सनातनस्य धर्मस्य मूलमेतत्सनातनम्॥

[7]श्रूयन्ते हि पुरा विप्रा विश्वामित्रादयो नृपाः।
विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः।
कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः॥

(१) भा. १४।९४।२५ ; भामु. १४।९१।२९ लब्ध्वा (प्राप्य) माप्नुते (मश्नुते).

(२) भा. १४।९४।२६–२७.

(३) भा. १४।९४।२८ ; भामु. १४।९१।३० चतुर्थचरणे (पापेनाशुद्धबुद्धिना).

(४) भा. १४।९४।२९ ; भामु. १४।९१।३१ (एवं लब्ध्वा धनं मोहाद्यो हि दद्याद्यजेत वा। न तस्य स फलं प्रेत्य भुङ्क्ते पापधनागमात्॥).

(५) भा. १४।९४।३० ; भामु. १४।९१।३२ धर्मिणः (धार्मिकाः).

(६) भा. १४।९४।३१ ; भामु. १४।९१।३३–३४ महांस्त्या (महायो).

(७) भा. १४।९४।३२ ; भामु. १४।९१।३४–३५ विप्रा (वृत्ता) षेणौ (सेनौ).

[1]एते चान्ये च बहवः सिद्धिं परमिकां गताः ।
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाऽऽश्रितास्तपः ।
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥

धर्मः अर्थकामफलदः नित्यश्च

[2]मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥

[3]ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥

[4]न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्यापि हेतोः ।
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥

संध्यायां भारतं पठनीयमित्युक्तम् । तत्र पठनयोग्यं भारतसारसंग्रहं चतुःश्लोकीरूपमाह– मातेति । नीटी.

[5]विद्या वित्तं वपुः शौर्यं कुले जन्म विरागिता ।
संसारोच्छित्तिहेतुश्च धर्मादेव प्रकीर्तितः ॥

[1]धर्मं चिन्तयमानोऽपि यदि प्राणैर्विमुच्यते ।
ततः स्वर्गमवाप्नोति धर्मस्यैतत्फलं विदुः ॥
[2]बाल एव चरेद्धर्ममनित्यं जीवितं यतः ।
फलानामिव पक्वानां शश्वत्पतनतो भयम् ॥
न कामान्न च संरम्भान्नोद्वेगाद्धर्ममुत्सृजेत् ।
धर्म एव परे लोक इह चैवाऽऽश्रयः सताम् ॥
[3]धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा ।
धर्मो भ्राता सखा चैव धर्मः स्वामी परंतपः ॥
नास्ति धर्मसमो बन्धुर्नास्ति धर्मसमः सुहृत् ।
नास्ति धर्मसमो लाभो नास्ति धर्मसमा गतिः ॥
[4]एकस्मिन्नप्यतिक्रान्ते दिवसे धर्मवर्जिते ।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं चिरम् ॥
अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥
यस्य त्रिवर्गशून्यस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव स सन्नपि न जीवति ॥
तस्मात्सर्वात्मना धर्मं नित्यमेव समाचरेत् ।
मा धर्मविमुखः प्रेत्य तमस्यन्धे पतिष्यति ॥
[5]नावसीदति चेद्धर्मः कपालेनापि जीवतः ।
आढ्योऽस्मीत्येव मन्तव्यं धर्मवित्ता हि साधवः ॥

[6]यथेक्षुहेतोः सलिलं निषेचितं
तृणानि वल्लीरपि च प्रसिञ्चति ।
एवं नरो धर्मपथेन वर्तयन्
यशांश्च कामांश्च वसूनि सोऽश्नुते ॥

---

(१) भा. १४।९४।३३–३४ ; भामु. १४।९१।३६–३७.

(२) भा. १८।५।४७–४८ ; भामु. १८।५।६०–६१ ; निप. १५ (=) ; आप्र. २१ ; इन्दु. २१.

(३) भा. १८।५।४९ ; भामु. १८।५।६२ ; मेधा. २।२२४ तृतीयचरणमात्रम् (=) ; चत्र. १३ रौम्येष ( रौत्येष ) च्छृणोति ( द्वृणोति ) ; निप. १५ मे ( नः ) (=) ; आप्र. २१ ; इन्दु. २१.

(४) भा. १८।५।५० ; भामु. १८।५।६३ ; निप. १६ खे त्व (खेऽप्य) हेतुरस्य त्वनित्यः (धातवश्चाप्यनित्याः) ; मच. ८।१७ तृतीयचरणमात्रम् (=) ; आप्र. २१ त्यजे (जह्या) ; इन्दु. २२.

(५) चत्र. १२.

(१) चत्र. १३.

(२) चत्र. १५.

(३) चत्र. १४–१५.

(४) चत्र. १६.

(५) चत्र. १६ जीवतः ( जीवता ) ; गृर. ४९२ त्येव मन्तव्यं (त्यवगन्तव्यं).

(६) मेधा. २।१३ हेतोः सलिलं निषेचितं ( हेतोरिह सेचितं पयः) एवं ( तथा ) वर्तयन् ( संचरन् ) सोऽश्नु (चाश्नु) (=) : १२।३६ प्रथमचरणे (यथेक्षु

¹यज्ञेन देवानाप्नोति वैराजं तपसा पुनः ।
संन्यासाद्ब्रह्मणः स्थानं वैराग्यात्प्रकृतौ लयम् ।
ज्ञानात् कैवल्यमाप्नोति पञ्चैता गतयः स्मृताः ॥

वैराजं स्थूलमहाभूतशरीरभोक्तृत्वाख्यत्वच्छिन्नपरमात्मस्वरूपं विराट्, तस्य स्थानम् । ब्रह्म सूक्ष्मं प्रा( ? सूक्ष्मप्रा )णेन्द्रियावच्छिन्नः परमात्मैव । प्रकृतिः सिसृक्षावच्छिन्नः स एव । मोक. ८

²भूषितोऽपि चरेद्धर्मं यत्रतत्राऽऽश्रमे वसन् ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥

³फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥

⁴इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधं देशमवशः किं करिष्यति ॥

## वाल्मीकिरामायणम्

पित्राज्ञापालनं पुत्रधर्मः

⁵न खल्वेतन्मयैतेन( ? केन ) क्रियते पितृशासनम् ।
अरण्यवासः साधूनां विशेषेण प्रशस्यते ॥
इदं च मे कथयतां ब्राह्मणानां परिश्रुतम् ।
पुरा कृतं पितृवचो यदन्यैरपि साधुभिः ॥

¹जामदग्न्येन रामेण जनन्याः किल धीमता ।
शिरश्छिन्नं परशुना क्रुद्धस्य पितुराज्ञया ॥
²कण्डुना चापि सिद्धेन वनाश्रमनिवासिना ।
महर्षिणा गौर्विशस्ता तथैव पितुराज्ञया ॥

मद्विपत्तिकरं कथं करिष्यसीत्यत्राऽऽह– ऋषिणेत्यादिना । राभू.

³अस्माकं पूर्वकैश्चापि खनद्भिः पितुराज्ञया ।
भूतलं सगरापत्यैर्महासत्त्ववधः कृतः ॥

⁴तदेतन्न मयैकेन क्रियते पितृशासनम् ।
प्रायशः पितृभिः सद्भिर्गतो मार्गोऽनुगम्यते ॥

अपूर्वम् अभिनवम् । अभिप्रेतः अङ्गीकृत इत्यर्थः । सर्वसंमत इति वा अर्थः । तेन चन्द्रकृततारागमनादिव्यावृत्तिः । ननु 'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम्' ( आध. २।१३।७ ) इति मातृवधादिकं साहसत्वेन निन्दितमिति चेन्न, साहसस्य पितृनियुक्तव्यतिरिक्तविषयत्वात् । व्याख्यातृभिस्तदुदाहरणमज्ञानविजृम्भितम् । 'पितुः शतगुणं माता गौरवेणातिरिच्यते' इति शुश्रूषामात्रे न तु वचनकरणे, पितुरेव नियन्तृत्वात् । अत एव 'माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः' इति वचनेनाप्यविरोधः । राभू.

---

सक्तो युधि कर्षकोऽस्ति) च प्रसिञ्चति (संचिनोति) एवं (तथा) वर्तयन् ( संचरन् ) सोऽश्नु ( चाश्नु ) ; उ. १।२०।३ निषेचितं तृ ( प्रसेचयंस्तु ) एवं (तथा) सोऽश्नु ( चाश्नु ) (=) ; मुक्ता. ४–५ स्मृत्यन्तरे ; पद्म. ६७ हेतोः सलिलं निषेचितं ( हेतोरपि सेचितं पयः ) एवं (तथा) वर्तयन् यशश्च ( संचरन् सुखं च) सोऽश्नु (चाश्नु) ( = ).

(१) मोक. ८.

(२) मोक. ५१ वसन् ( रतः ), ६४.

(३) मोक. ६४.

(४) गुरु. ४९२.

(५) वारा. २।२१।३३–३४.

(१) वारा. २।२१।३५ ; वाराकु. २।२१।३४ द्वितीयचरणे (रेणुका जननी स्वयम् ) उत्तरार्धे ( कृता परशुनाऽरण्ये पितुर्वचनकारिणा ॥ ).

(२) वारा. २।२१।३६ ; वाराकु. २।२१।३२ (ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा । गौर्हता जानता धर्मं कण्डुनाऽपि विपश्चिता ॥ ).

(३) वारा. २।२१।३७ ; वाराकु. २।२१।३३ (अस्माकं च कुले पूर्वं सगरस्याऽऽज्ञया पितुः । खनद्भिः सागरैर्भूमिमवाप्तः सुमहान् वधः ॥ ).

(४) वारा. २।२१।३८ ; वाराकु. २।२१।३६–३७ (न खल्वेतन्मयैकेन क्रियते पितृशासनम् । एतैरपि कृतं देवि ये मया तव कीर्तिताः ॥ नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये । पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ).

[1]करिष्ये वचनं तस्मात्पितुरद्य प्रसीद मे ।
पितुर्हि वचनं कुर्वन्न कश्चिन्न प्रशस्यते ॥

तत् तस्मात्कारणात् भुवि कार्यं कर्तव्यम् एतत् पितृवचनं मया त्वन्यथा न क्रियते इति संबन्धः । हि यस्मात् पितृवचनं कुर्वन् कश्चिन्न हीयते नाम । नामेति प्रसिद्धौ । राभू.

[2]धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥

धर्मतत्त्वमाह– धर्मो हीति । लोके पुरुषार्थेषु धर्मः परमः प्राथमिकः प्रधानभूतः । ततः किमित्यत्राऽऽह– धर्मे सत्यं प्रतिष्ठितमिति । धर्मैकपर्यवसायि सत्यमित्यर्थः । उत्तमं मातृवचनापेक्षया उत्कृष्टमेतत् पितृवचनं च धर्मसंश्रितं धर्मैकफलकम् । राभू.

[3]धर्मस्थितिः परो लाभो धर्मो धारयते धृतः ।
न च धर्मो धृतो मेऽन्यः पितुराज्ञामृतेऽनघ ॥

सर्वपुरुषार्थसाधनं धर्मः

[4]धर्मार्थकामाः किल तात लोके
समीक्षिता धर्मफलोदयेषु ।
ते तत्र सर्वे स्युरसंशयं मे
भार्येव वश्याऽभिमता सुपुत्रा ॥

'धर्मो हि परमो लोके' इत्यादिना पूर्वं संग्रहेणोक्तं प्रपञ्चयति– धर्मेति । तातेति सान्त्वसंबोधने । किलेति प्रसिद्धौ । लोक इति मोक्षव्यावृत्तिः । धर्मफलोदयेषु धर्मस्य फलभूतानां सौख्यानामुदयेषु प्राप्तिषु समीक्षिताः उपायत्वेन निश्चिताः ये धर्मार्थकामाः ते सर्वे तत्र धर्मे स्युः । धर्म एवानुष्ठिते सौख्यातिशयप्रदानस्वभावाः सर्वे पुरुषार्थाः सिध्यन्तीति भावः । अत्रार्थे मे असंशयं संशयो नास्ति । अर्थाभावेऽव्ययीभावः । उक्तार्थे दृष्टान्तमाह– भार्येत्यादि । यथा भार्या वश्या अनुकूला सती धर्मं जनयति, अभिमता प्रिया कामम्, सुपुत्रा सती अर्थम्, सुलक्षणसुलग्नप्रभवपुत्रे जाते हि पितुरर्थाः सिध्यन्तीति । तथा सर्वपुरुषार्थानां धर्म एव निदानम् । तथाहि– धर्मो हि धर्महेतुरर्थहेतुः काम्यमानस्रक्चन्दनवनितादिहेतुश्च । अतो धर्म एव समाश्रयणीय इति भावः । यद्वा, लोके धर्मादयः फलसाधनत्वेन समीक्षिताः शास्त्रादिभिरवगताः । ते सर्वे तत्र फलोदयेषु स्युः समर्थाः स्युः । मे असंशयं मया निश्चितमित्यर्थः । यथा उक्तगुणविशिष्टा भार्या फलसाधनं तथेति । अस्मिन्पक्षे अध्याहारादिक्लेशो नास्ति, उत्तरश्लोकानुरूप्यं च । राभू.

यस्मिंस्तु सर्वे स्युरसंनिविष्टा
धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके
कामात्मता खल्वपि न प्रशस्ता ॥

एवं धर्मादीनां फलसाधनत्वं निर्णीतम्, तेष्वविशेषादन्यतमस्याऽऽश्रयणीयत्वे प्राप्ते आह– यस्मिन्निति । यस्मिन्कर्मणि आश्रीयमाणे सर्वे अर्थादयस्त्रयः असंनिविष्टाः न प्रविशन्ति, न संभवन्तीति यावत् । किंतु यतो धर्मः यस्माद्धर्म एव स्यात् तदारभेत । अथवा यस्मिन्कर्मणि सर्वे धर्मार्थकामाः असंनिविष्टाः स्युः अविद्यमाना भवेयुः, तत्कर्म नोपक्रमेत । यतः यस्मात्कर्मणः धर्मः स्यात् तदुपक्रमेत । ¶ प्रथमयोजनायामर्थकामयोः संनिवेशे को दोष इत्यत्राऽऽह– द्वेष्य इति ।

¶ यदि प्रथमयोजनापरमेवोत्तरार्धम्, तर्हि कुतस्तद्विरुद्धाऽध्याहारगुर्वी च द्वितीया योजना कल्प्यते? वस्तुतस्तु द्वितीययोजनापरत्वमप्युत्तरार्धस्य संभवत्येव । तथाहि– द्वितीययोजनायां निषेध्यकर्मविशेषणीभूतो धर्मार्थकामानामसंनिवेशो यदि व्यस्तानां धर्मादीनां विवक्ष्येत तदा व्यस्तानां तेषां संनिवेशे कर्मणो विधेयताऽर्थसिद्धा । तथा च धर्मांशे द्वितीयचरणे पौनरुक्त्यम् उत्तरार्धविरोधश्च । अतो धर्मादीनां समुच्चितानामेवासंनिवेशो निषेध्यकर्मविशेषणं विवक्षणीयम् । तथा च समस्तसंनिवेशेऽर्थसिद्धां विधेयतां द्वारीकृत्य व्यस्त-

(१) वारा. २।२१।३९ ; वाराकु. २।२१।३८ (तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा । पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ).

(२) वाराकु. २।२१।४२.

(३) वारा. २।२१।४७.

(४) वाराकु. २।२१।५८–५९.

तस्मादर्थकामौ परित्यज्य केवलधर्मपरो भवेदित्यर्थः । राभू.

[1]यशो ह्यहं देवि न राज्यकारणात्
परित्यजेयं सुकृतेन ते शपे ।
अदीर्घकाले नरलोकजीविते
वृणोमि धर्मं न महीमधर्मतः ॥

केवलराज्यकारणात् धर्मविरहितराज्यहेतोः महोदयं महाफलं यशः पृष्ठतः कर्तुम् उपेक्षितुम् अहं नालं न समर्थोऽस्मि । किंच, अदीर्घकाले चञ्चले जीविते प्राणधारणे । निमित्तसप्तमीयम् । तदि(?डि)द्वच्चञ्चलजीवितनिमित्तम् अवरां तुच्छप्रयोजनभूतां महीम् अधर्मतो न वृणे न स्वीकरोमि । राभू.

[2]अपि चेयं पुरा गीता गाथा सर्वत्र विश्रुता ।
मनुना मानवेन्द्रेण तां श्रुत्वा मे वचः कुरु ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
कामचारप्रवृत्तस्य न कार्यं ब्रुवतो वचः ॥
[3]राजा च प्राक्प्रतिश्रुत्य ददावस्यै यदा वरम् ।
भीतोऽनृतात्ततो राज्ञः को दोषः सत्यवादिनः ॥
व्यक्तमेव परं धर्मं भर्ता ते देवि मन्यते ।
चलेद्धि राजा धर्माच्चेत्स सकामो भविष्यति ॥

अहिंसा सत्यं च धर्माधारौ

[1]द्वावेव कथितौ सद्भिः पन्थानौ वदतां वर ।
अहिंसा चैव सत्यं च यत्र धर्मः प्रतिष्ठितः ॥
[2]वाति गन्धः सुमनसां प्रतिवातं कथंचन ।
धर्मयुक्तमनुष्याणां वाति गन्धः समन्ततः ॥
[3]आत्मा धर्मेऽभियोक्तव्यो धर्मज्ञेन विपश्चिता ॥

सर्वं कर्तव्यं स्वर्गमार्गः

[4]कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ।
अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥

अष्टकोदाहरणेन वैदिककर्मणां निष्फलत्वं यदुक्तं तत्र परिहारमाह— कर्मभूमिमित्यादिना । यच्छुभं कर्म तत्कर्तव्यम् , जनैरिति शेषः । तत्र फलवदनुष्ठानं दर्शयति— अग्निरित्यादि । कर्मणां कर्मभूमिकृतस्वस्वकर्मणां फलभागिनः अग्नित्वादि फलं प्राप्तवन्तः । राभू.

शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः ।
तपांस्युग्राणि चाऽऽस्थाय दिवं याता महर्षयः ॥

क्रतूनां शतम् आहृत्य कृत्वेत्यर्थः । राभू.

[5]सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥
तेनैवमाज्ञाय यथावदर्थ-
मेकोदयं संप्रतिपद्य विप्राः ।
धर्मं चरन्तः सकलं यथाव-
त्काङ्क्षन्ति लोकागममप्रमत्ताः ॥

तेन हेतुना विप्राः एवमर्थं यथावत् आज्ञाय ज्ञात्वा एकोदयं संप्रतिपद्य ऐककण्ठ्यं प्राप्य सकलं धर्मं स्वस्ववर्णाश्रमोचितधर्मम् अप्रमत्ताः सावधानाः यथावच्चरन्तः

संनिवेशे कर्मणो निषेधोऽप्यर्थसिद्धः । तत्र धर्मांशे व्यस्तसंनिवेशे कर्मणो विधेयता द्वितीयचरणेन प्रतिप्रसूयते । एवं च केवलधर्मसंनिवेशे समुच्चितधर्मार्थकामसंनिवेशे वा कर्मोपक्रमेतेति पूर्वार्धस्य निष्कृष्टोऽर्थो लभ्यते । ततश्च द्वितीययोजनायामपि व्यस्तयोः समुच्चितयोर्वाऽर्थकामयोः संनिवेशे दोषो वक्तव्य एवेत्युत्तरार्धेन स उच्यत इति ।

(१) वारा. २।२१।५४ ; वाराकु. २।२१।६४ देवि न रा ( केवलरा ) द्वितीयचरणे ( न पृष्ठतः कर्तुमलं महोदयम्) नरलोकजी ( न तु देवि जी ) वृणोमि धर्मं न (वृणेऽवरामद्य).
(२) वारा. २।२५।११–१२.
(३) वारा. २।२६।२१–२२.

(१) वारा. २।६५।१८.
(२) वारा. २।६५।२०.
(३) वारा. २।११९।१७ ; वाराकु. २।१०५।३१ (आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥ ).
(४) वाराकु. २।१०९।२८–२९.
(५) वाराकु. २।१०९।३१–३२.

अनुतिष्ठन्तः लोकागमं स्वर्गादिलोकप्राप्तिं काङ्क्षन्तीति। राभू.

ऐहिकामुष्मिकफलदो धर्मः

[1]त्वत्तो जनाः पूर्वतरे वराश्च
शुभानि कर्माणि बहूनि चक्रुः।
जित्वा सदेमं च परं च लोकं
तस्माद्द्विजाः स्वस्ति हुतं कृतं च॥

ऐहिकामुष्मिकफलसाधने धर्मे शिष्टाचारं प्रमाणयति– त्वत्त इत्यादिना। त्वत्तः पूर्वतरे पुरातनाश्च वराश्च ज्ञानतः श्रेष्ठाश्च जनाः बहूनि शुभानि कर्माणि चक्रुः। ते इमं परं च लोकं जित्वा, सदा वर्तन्त इति शेषः। सदावर्तमानत्वं च ग्रहनक्षत्रादिरूपेण दृश्यमानत्वात्, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' (तैसं. ५।४।१।३) इति श्रुतेः। तस्मात् कर्मानुष्ठानस्यैहिकामुष्मिकसकलफलसाधनत्वात् द्विजाः स्वस्ति मङ्गलात्मकं कर्म, हुतं यज्ञादि कृतं च तपोदानादिकं च, कुर्वन्तीति शेषः। एवं प्रत्यक्षमेव न प्रमाणम्, तदतिरिक्तानां वेदानामपि प्रमाणत्वात्। तत्त्वं च तेषां महाजनपरिग्रहात्, स चापौरुषेयत्वेन, तच्चाविच्छिन्नसंप्रदायत्वे सति अस्मर्यमाणकर्तृकत्वात्। वैदिकानि च कर्माणि सफलानि, अग्निरविसोमनक्षत्रेन्द्रादिफलभोगस्य अबाधितप्रत्यक्षसिद्धत्वात्। अन्यकृतभोजनस्य पथिकाशनत्वाभावस्तु अदर्शनादविहितत्वाच्चेत्युक्तम्। राभू.

[2]धर्मे रताः सत्पुरुषैः समेता-
स्तेजस्विनो दानगुणप्रधानाः।
अहिंसका वीतमलाश्च लोके
भवन्ति पूज्या मुनयः प्रधानाः॥

[1]धर्मादर्थः प्रभवते धर्मात्प्रभवते सुखम्।
धर्मेण लभते सर्वं धर्मसारमिदं जगत्॥

केवलधर्मानुष्ठानस्य सर्वश्रेयोमूलत्वमाह– धर्मादित्यादिना। सर्वं मुक्तिमपि ज्ञानद्वारा लभत इत्यर्थः। राभू.

[2]आत्मानं नियमैस्तैस्तैः कर्षयित्वा प्रयत्नतः।
प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम्॥

धर्मार्थज्ञानप्रकारमाह– आत्मानमिति। नियमैः चान्द्रायणादिव्रतैः। आत्मानं शरीरम्। राभू.

पापकर्मणो दुःखरूपः परिणामोऽवश्यंभावी

[3]न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः।
ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः॥

ननु तर्हि कथं पापिनोऽपि बहवो जीवन्तीत्यत्राऽऽह– न चिरमिति। केवलपापिनो जन्मान्तरे फलं भुञ्जते, क्रूरास्तु पुण्यलेशेन ऐश्वर्यं प्राप्यापि न चिरं तिष्ठन्ति, क्षिप्रमेव विनश्यन्तीत्यर्थः। राभू.

[4]अवश्यं लभते जन्तुः फलं पापस्य कर्मणः।
घोरं पर्यागते काले द्रुमः पुष्पमिवाऽऽर्तवम्॥

पापस्य कर्ता जन्तुः काले प्राप्ते अवश्यं घोरं दुःखरूपं फलं लभते, ऋतुलक्षणे काले पर्यागते प्राप्ते आर्तवं तत्तदृतुप्राप्तं पुष्पमिव। राभू.

[5]नचिरात्प्राप्यते लोके पापानां कर्मणां फलम्।
सविषाणामिवान्नानां भुक्तानां क्षणदावर॥

नचिरादित्येकं पदम्। अविलम्बेनेत्यर्थः। अत्र पुरुषेणेति शेषः। पापानाम् अत्युत्कटानामित्यर्थः। राभू.

---

(१) बारा. २।१२१।१८ तरे वराश्च (तराः परे च) द्वितीयचरणे (बहूनि कर्माणि शुभानि कृत्वा) सदेमं च परं च (ह्यदोषं परमं च) तस्माद्द्विजाः स्वस्ति (कस्मात्परत्रास्ति); बाराकु. २।१०९।३५.

(२) बाराकु. २।१०९।३६.

(१) बारा. ३।१०।२५ सर्वं (स्वर्गं); बाराकु. ३।९।३० दर्थः प्रभवते (दर्थः प्रभवति).

(२) बारा. ३।१०।२६ मैस्तैस्तैः (मैः सत्यैः) कर्ष (कर्ष) निपुणैर्ध (निपुणो ध) ल्लभ्यते (ल्लभते); बाराकु. ३।९।३१.

(३) बारा. ३।३४।७ शीर्ण (जीर्ण); बाराकु. ३।२९।७.

(४) बारा. ३।३४।८ जन्तुः (कर्ता) घोरं (क्षयं) पुष्पमिवाऽऽर्तवम् (फलमिवाऽऽर्तौ); बाराकु. ३।२९।८.

(५) बारा. ३।३४।९; बाराकु. ३।२९।९.

[1]यत्कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो भुवि ।
शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ॥

यत्कार्यं कृत्वा स्थितस्य न धर्मो भवेत्, कीर्तिः ऐश्वर्यादिजनिता प्रथा वा न भवेत्, यशः भोगित्वकृतप्रथा वा न भवेत्, प्रत्युत शरीरदुःखमेव भवेत्, तत्कर्म कः समाचरेत् ? मूढ एवाऽऽचरेत् । राभू.

नास्तिक्यं धर्मनाशजन्यम्

[2]यदा धर्मप्रधानस्य धर्मसेतुर्विपद्यते ।
तदा दीनस्य सौमित्रे नास्तिक्यमुपजायते ॥

हृदि स्थितः आत्मा शुभाशुभसाक्षी

[3]सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम ।
हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥

सूक्ष्मः अतीन्द्रियः अत एव सतामपि परमदुर्ज्ञेयः । किमुत मत्सदृशस्य ? इति भावः । यद्वा जनस्य धर्माधर्मकरणं न कोऽपि वेत्तुमर्हति । तर्हि को वेत्तीत्यत्राऽऽह– हृदिस्थ इति । सर्वभूतानां हृदिस्थः सर्वान्तर्यामी । अलुक् । आत्मा परमात्मा शुभाशुभं शुभाशुभकरणं वेत्तीत्यर्थः । सूक्ष्मं धर्मं परमात्मना मया विना को वेत्तुं दक्षः ? इति भावः । राभू.

[4]न च धर्मोऽपि संहार्यो ह्यधर्मफलसंयुतः ।
स एव फलमभ्येति धर्मो नाधर्मनाशनः ॥

[5]अधर्मेण हि धर्मश्च भुज्यमानं सुखं सदा ।
नाशयत्याशु तत्पापमधर्मो विदितस्ततः ।
आहरत्यापदं घोरामसुहृत्प्रीतिवर्धनीम् ॥

धर्माविरुद्धौ अर्थकामौ एव सेव्यौ

[1]इह धर्मार्थकामानामवाप्तिः फलमिष्यते ।
तत्रार्थः सह कामेन परीक्ष्यो धर्मचक्षुषा ॥
परित्यज्य हि यो धर्ममर्थमर्थाय पश्यति ।
कामं वा कामलाभार्थं न स बुद्धि( ? द्धे )षु बुद्धिमान् ॥

धर्मो दुस्तरः, लोकयोः सुखसंयाने धर्मः निमित्तम्

[2]दुस्तरः प्राकृतैर्धर्मो बाहुभ्यामिव सागरः ।
इच्छाद्वेषादयो भावा नित्यमात्मगुणा यथा ।
तथा धर्मगुणाः कृत्स्नाः सुखानि सुखिनामिव ॥
पर्याप्तं चाप्यविज्ञानं धर्मस्य परिरक्षणे ।
यदल्पसुखितो लोकः कृत्स्नो भूयिष्ठदुःखितः ॥
यश्चाऽऽत्मसुखिताश्लाघी न मनः परितापयेत् ।
किं ततः परमं किंचित्सुलभं फलमुत्तमम् ॥
यथा च सुखसंयाने नौर्निमित्तमिवाम्भसि ।
लोकयोः सुखसंयाने तथा धर्मः स्वनुष्ठितः ॥

धर्माविरुद्धौ अर्थकामौ सेव्यौ

प्रकृतीनां विधानस्य यथा नेता नयानुगः ।
तथा धर्मार्थकामानां धर्मः सम्यगनुष्ठितः ॥
यथा ह्यर्थविशेषार्थमर्थः पुंभिर्नियुज्यते ।
तथा निश्चितमायत्यां धर्मः सुखकरः सताम् ॥
यथा ह्यर्थस्तथा कामः सद्यः सुखशुभावहौ ।
तथा क्षमा च धर्मश्च मनसः प्रीतिवर्धनौ ॥
दुश्चरत्वाच्च धर्मस्य केचिद्धर्मपरा नराः ।
कामे चार्थे च लुब्धानामन्तो भुवि न विद्यते ॥
†[3]कर्म चैव हि सर्वेषां कारणानां प्रयोजकम् ।
श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥

(१) बारा. ३।५५।१९ उत्तरार्धे ( शरीरतो भवेत्कर्म कथं प्राज्ञस्तदाचरेत् ॥ ) ; बाराकु. ३।५०।१८.

(२) बारा. ३।७०।५.

(३) बारा. ४।१४।७ पूर्वार्धे (सूक्ष्मोऽपराधो विज्ञेयः सतां धर्ममनुस्मरन् । ) ; बाराकु. ४।१८।१५.

(४) बारा. ५।४७।२९ ; बाराकु. ५।५१।२९ पूर्वार्धे (न तु धर्मोपसंहारमधर्मफलसंहितम् । ) स एव (तदेव) मभ्येति (मन्वेति) धर्मो ना (धर्मश्चा).

(५) बारा. ५।७५।५.

† कुम्भकर्णं प्रति सीताहरणस्य न्याय्यत्वं समर्थयितुं श्रुतिस्मृतिविरुद्धा धर्माधर्मविषयिका महोदरस्य रक्षस उक्तिरियम् ।

(१) बारा. ५।८५।५–६.

(२) बारा. ५।८९।५–११, १३–१४.

(३) बारा. ६।४३।७ कर्म चैव (काम एव) जकम् (जनम्) ; बाराकु. ६।६४।७.

सर्वेषां कारणानां स्वर्गनरकरूपाणां फलानां कर्मैव प्रयोजकं साधकम्। जात्येकवचनम्। किंतु अत्र कर्मजाते पापीयसामपि कर्मणां श्रेयः फलं भवति। राभू.

'निःश्रेयसफलत्वे च धर्मार्थावितरावपि।
इह धर्मार्थयोः प्राप्तिः फलं च प्रेत्यभाविकम्॥

उक्तमेवार्थं विशदयति— निःश्रेयसेति। धर्मार्थौ धर्मार्थसाधनभूते कर्मणी, इतरौ अधर्मानर्थसाधनभूते कर्मणी च निःश्रेयसफलौ एतानि चतुर्विधानि निःश्रेयसकराण्येव, किंतु कदाचिदधर्मानर्थयोः प्रत्यवायिकम् अश्रेय इति यावत्। प्रत्यवायोऽस्मिन् कारणतयाऽस्तीति प्रत्यवायिकम्। 'अत इनिठनौ' (पासू. ५।२।११५) इति ठन्। प्राप्यते इति प्राप्तिः फलम्। कर्मणि क्तिन्प्रत्ययः। एतेनाधर्मानर्थयोः श्रेयस्तदितरच्चोभयं फलं भवतीत्युक्तम्। राभू.

'ऐहलौकिकपारत्र्यं कर्म पुम्भिर्निषेव्यते।
कर्मणाऽत्र तु कल्याणं लभते काममास्थितः॥

एवं धर्माधर्मयोरव्यवस्थितफलत्वमुक्त्वा कामस्यापि तदाह— ऐहलौकिकेति। ऐहलौकिकम् इहलोकोपयोगि पारत्र्यं परलोकोपयोगि च कर्म पुम्भिर्निषेव्यते तत्फलं चानुभूयते। तथैव काममास्थितः यथेच्छाचारोऽपि कल्यानि कर्माणि कल्याणानि कर्मफलानि लभते। अतो विहितमेव शुभप्रदम्, निषिद्धं तु तथा न भवतीति नियमो नास्तीत्यर्थः। राभू.

नियमेन धर्माचरणस्य लक्ष्मणप्रतिपादितं न्यायरहितत्वम्, लक्ष्मणोक्तो बलमहिमा

‡'बाहुभ्यां संपरिष्वज्य सुदुःखितमुवाच ह।
लक्ष्मणो राममस्वस्थं वाक्यं हेत्वर्थसंयुतम्॥

हेत्वर्थसंयुतम्। हेतुः उपपत्तिः, अर्थः प्रयोजनम्। हेतुरूपोऽर्थोऽभिधेयो हेत्वर्थं इति वा। राभू.

'शुभे वर्त्मनि तिष्ठन्तं त्वामृजुं विजितेन्द्रियम्।
अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः॥

एवं सीताहननश्रवणजनितमनवधिकमधैर्यमाश्रयन्तं राममाश्वासयितुं लक्ष्मणोऽन्वारुह्यवादेन धर्माधर्मयोः स्वरूपं खण्डयन् नीतिशास्त्रानुसारेण बलमेव प्रधानतयाऽऽलम्ब्यतामित्याह— शुभ इत्यादिना। पितृवाक्यपरिपालनादिरूपे शुभे वर्त्मनि तिष्ठन्तं स्थिरतया तदनुतिष्ठन्तमित्यर्थः, विजितेन्द्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपर्यपि मनःकालुष्याभावेन विजितेन्द्रियं त्वां निरर्थकः अवस्तुभूतः अप्रामाणिक इति यावत्, शशविषाणवत् केवलव्यवहारमात्रावलम्बनो धर्मः अनर्थेभ्यः व्यसनेभ्यः त्रातुं व्यसनानि निवारयितुं न शक्नोति। 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायादिति भावः। निरर्थकमेव त्वया पितृवचनपरिपालनमारब्धम् (इति) आदावेव मयोक्तमिति भावः। धर्म इत्युपलक्षणम्। अधर्मोऽपि निरर्थकः सन् रावणमर्थेभ्यो न निवारयितुं शक्नोतीत्यर्थः। राभू.

---

(१) बारा. ६।४३।८; बाराकु. ६।६४।८ फलत्वे च (फलावेव) इह धर्मार्थं (अधर्मानर्थं) प्रेत्यभावि (प्रत्यवायि).

(२) बारा. ६।४३।९ ऐह (इह); बाराकु. ६।६४।९ तृतीयचरणे (कर्माण्यपि तु कल्यानि).

‡ इन्द्रजित्कृतसीतामारणश्रवणेन दुःखव्याकुलं रामं प्रति तत्पौरुषमुद्बोधयितुं लक्ष्मणस्येयमुक्तिः। सा च 'नास्तिक्यवादाश्रयणेन' इत्यादर्शपुस्तकसंपादकाः, 'अन्वारुह्यवादेन' इति गोविन्दराजः।

(१) बारा. ६।६१।१४; बाराकु. ६।८३।१३ पूर्वार्धे (तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः।) लक्ष्मणो (उवाच).

(२) बारा. ६।६१।१५; बाराकु. ६।८३।१४ त्वामृजुं (त्वामार्य).

[1]भूतानां स्थावराणां च जङ्गमानां च दर्शनम् ।
यथाऽस्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥

ननु कथमनयोरप्रामाणिकत्वम् ? इत्यपेक्षायाम् , तत्र किं प्रत्यक्षं प्रमाणम्, उतानुमानम्, अथ शब्दो वा ? नाऽऽद्य इत्याह– भूतानामिति । स्थावराणां जङ्गमानां च भूतानां पदार्थानां यथा दर्शनं प्रत्यक्षत उपलम्भनम् अस्ति तथा धर्माधर्मयोः दर्शनं न, अस्तीत्यनुषङ्गः । तेन अदर्शनेन धर्मोऽधर्मश्च नास्तीति मे मतिः निर्णयः । राभू.

[2]यथैव स्थावरं सर्वं जङ्गमं च तथाविधम् ।
नायं धर्मस्तथा युक्तस्त्वद्विधेन निषेवितुम् ॥

उक्तमेवार्थं प्रत्यक्षानुग्राहकेण तर्केण द्रढयति– यथेति । यथैव स्थावरं व्यक्तं प्रत्यक्षत उपलब्धम्, जङ्गमं च तथाविधं व्यक्तं भवति । अयं धर्माधर्मरूपोऽर्थः तथा युक्तो न भवति । तथा प्रत्यक्षो न भवतीत्यर्थः । यदि कश्चिद्धर्मोऽधर्मो वाऽर्थः प्रत्यक्षसिद्धः स्यात् तर्हि स जङ्गमतया वा स्थावरतया दृश्येत, न च दृश्यते, तस्मान्नासौ प्रत्यक्ष इति भावः । किंच, त्वद्विधो न विपद्यते धर्मस्य प्रत्यक्षसिद्धतया सद्भावे त्वद्विधः धार्मिकः विपत्तिं नाऽऽप्नुयात् । रावणश्चार्थे न प्राप्नुयादित्यपि द्रष्टव्यम् । राभू.

[3]यदि धर्मो भवेत्सत्यो रावणो नरकं व्रजेत् ।
भवांश्च धर्मसंयुक्तो नेदं व्यसनमाप्नुयात् ॥

नाप्यनुमानं धर्माधर्मयोः प्रमाणमित्याह– यदीति । यद्यधर्मो भूतो भवेत् तदा अधर्मयुक्तो रावणः नरकं व्रजेत् व्यसनं गच्छेत् । यदि धर्मो भूतो भवेत् तदा धर्मयुक्तो भवांश्च एवं व्यसनं नाऽऽप्नुयात् । व्यसनाव्यसनरूपकार्याभ्यां हि धर्माधर्मावनुमेयौ । न तथा संभवति, धार्मिकतयाऽभिमते त्वयि व्यसनदर्शनात्, अधार्मिकतयाऽभिमते रावणे व्यसनादर्शनाच्च । $साध्यवति पक्षे हेत्वभावात् स्वरूपासिद्धो हेतुरित्यर्थः । राभू.

[1]तस्य च व्यसनाभावाद्व्यसनं च गते त्वयि ।
धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥

विरुद्धत्वाच्च सुखदुःखयोः कार्ययोर्न धर्माधर्मानुमापकत्वमित्याह– तस्य चेति । तस्य च अधर्मिष्ठस्य रावणस्य व्यसनाभावात् । व्यसनाभावशब्देन सुखं लक्ष्यते, सुखसद्भावादित्यर्थः । त्वयि च परमधार्मिके व्यसनं दुःखं गते सति धर्मः अधर्मो भवति अधर्मफलप्रदो भवति । चकारादधर्मोऽपि धर्मफलाभ्युदयप्रदो भवतीति लभ्यते । अत एव परस्परविरोधिनौ स्वाभाविकव्याप्तहेतुकावित्यर्थः । राभू.

[2]धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः ।
यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥
[3]यदि धर्मेण युज्येरन्नाधर्मरुचयो जनाः ।
धर्मेण चरतां धर्मस्तथा चैषां फलं भवेत् ॥
[4]यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ।
क्लिश्यन्तेऽधर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥

(१) बारा. ६।६१।१६ ; बाराकु. ६।८३।१५.

(२) बारा. ६।६१।१७ ; बाराकु. ६।८३।१६ सर्वं (व्यक्तं) नायं धर्म ( नायमर्थ ) धेन निषेवितुम् ( धो न विपद्यते).

(३) बारा. ६।६१।१८ ; बाराकु. ६।८३।१७ प्रथमचरणे (यद्यधर्मो भवेद्भूतो) संयुक्तो नेदं (युक्तो वै नैवं).

$ अस्योपपत्तिश्चिन्तनीया ।

(१) बारा. ६।६१।१९ पूर्वार्धे ( तस्य चाव्यसनं दृष्ट्वा तव च व्यसनं तथा । ) उत्तरार्धं नास्ति ; बाराकु. ६।८३।१८.

(२) बारा. ६।६१।१९ ( धर्मेणोपलभे धर्ममधर्मं वाऽप्यधर्मताम् । ) पू. ; बाराकु. ६।८३।१९.

(३) बारा. ६।६१।२० ( ये हि धर्मेण युज्येरंस्ते हि धर्मव्रता नराः । अधार्मिका ह्यधर्मेण फलं स्यात्समेतयोः ॥ ) ; बाराकु. ६।८३।२०.

(४) बारा. ६।६१।२१ (यस्मादर्थैर्विवर्धन्ते येष्वधर्मः सुदारुणः । अनर्थो येषु धर्मश्च तस्माद्धर्मो निरर्थकः ॥ ); बाराकु. ६।८३।२१.

व्यभिचारात् व्याप्यत्वासिद्धत्वाद्वा न ताभ्यां तदनुमानमित्याह– धर्मेणेत्यादिना निरर्थकावित्यन्तेन । उपलभेदित्यत्र काकुः । धर्मेण धर्मानुष्ठानेन धर्मं धर्मफलं सुखमुपलभेत् ? अधर्मतः अधर्मानुष्ठानेन अधर्मफलं दुःखमुपलभेत् ? उपलभेतेति मन्यसे किमित्यर्थः । एवमनूद्य तत्र दूषणमाह– यदीति । येष्वधर्मः प्रतिष्ठितः, ये अधार्मिका इति यावत्, ते अधर्मेण अधर्मफलेन यदि युज्येयुः युज्येरन् नाधर्मरुचयो जनाः । धर्मरुचय इति यावत्, 'द्वौ नञौ प्रकृतमर्थं गमयतः' इति न्यायात् । ते धर्मेण धर्मफलेन यदि युज्येरन् तदा धर्मेण चरतामेषां जनानां धर्मः धर्मफलं सुखं भवेत् । चकारात् अधर्मेण चरतां दुःखं भवेदिति सिद्धम् । न चैवमित्याह– यस्मादिति । अनेन च हिताहितप्राप्तिलक्षणकार्ययोरनियतत्वेन व्याप्त्यभावान्न ताभ्यां धर्माधर्मावनुमातुं शक्याविति व्याप्यत्वासिद्धिर्व्यभिचारो वा दर्शितः । राभू.

**[1]बध्यन्ते पुण्यकर्माणो यद्यधर्मेण राघव ।**
**अधर्मेण हतो धर्मः स हतः किं करिष्यति ॥**

शब्दोऽपि न धर्माधर्मयोः प्रमाणमित्याह– बध्यन्त इति । हे राघव, पापकर्माणः पापिनः अधर्मेण कर्मरूपेण बध्यन्ते यदि बाध्यन्ते चेत् वधकर्म वधकर्मरूपोऽधर्मः । धर्मस्याप्युपलक्षणम् हतः त्रिक्षणावस्थायित्वेन ध्वस्तो भवति, शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वात् । हतः सः कं वधिष्यति ? कं श्रेयसि नियोक्ष्यतीत्यपि द्रष्टव्यम् । धर्माधर्मयोः क्रियारूपयोः क्षणिकत्वेन कालान्तरभाविफलजनकत्वासंभवात् बाधितविषयो वेदो ग्रावप्लवनादिवाक्यवदुपचरितार्थक इति भावः । राभू.

**[2]अथवा विहितेनायं हन्यते हन्ति चापरम् ।**
**विधाता लिप्यते तेन तस्मात्पापेन कर्मणा ॥**

कर्मणः क्षणध्वंसित्वेऽपि तदाराधिता देवतैव फलप्रदेत्यत्राऽऽह– अथवेति । विहितेन विधिना देवतयेत्यर्थः, अयं जनः हन्यते बाध्यते परम् अन्यं हन्ति वा बाधते वा । एवं यदि तेन पापेन कर्मणा पापफलभूतदुःखेन विधिरेव आलिप्यते संबध्यते, सः प्रयोक्ता नाऽऽलिप्यते । अस्य न्यायस्य पुण्यकर्मण्यपि तुल्यत्वात् सुखेनापि प्रयोक्ता न संबध्यते । यदि हि सत्कर्माराधितः असत्कर्माप्रीतो वा ईश्वरः धर्माधर्मशब्दवाच्यः स्यात्, तर्हि स एव सुखदुःखभागी कारयिता स्यात्, न तु प्रयोक्ता इति भावः । राभू.

**[1]अदृष्टः प्रतिसंस्कारो यदि पापस्य कर्मणः ।**
**कथं शक्यं परं प्राप्तुं धर्मेण रिपुसूदन ॥**

ननु यथा स्वतन्त्रो राजा लीलार्थं कामपि मर्यादां प्रवर्त्य तदनुवर्तिनमनुगृह्णाति तदतिलङ्घिनं निगृह्णाति च, तथेश्वरोऽपि स्वाज्ञारूपकर्मानुष्ठायिनमनुगृह्णाति तदननुष्ठायिनं विपरीतानुष्ठायिनं च निगृह्णातीति चेन्न । स हि किं स्वार्थमनुगृह्णाति, उत परार्थम् ? नाऽऽद्यः, अवाप्तसमस्तकामस्यावाप्तव्याभावात् । न द्वितीयः, कंचन ‡ विरिञ्चनं कंचनाकिंचनं च वितन्वतस्तस्य पक्षपातनैर्घृण्यापत्तेः । तत्तत्कर्मानुगुणतया सृष्टेर्न पक्षपातादिप्रसक्तिरिति चेन्न, समीचीने कर्मण्यप्रवर्तयतस्तस्य सर्वज्ञस्य निर्दयत्वापत्तेः । अनादिकर्मप्रवाहकृतपूर्वपूर्वकर्मानुगुण्येन पुनः पुनः सदसतोः कर्मणोः पुरुषं प्रवर्तयतीति चेत्, तर्हि कस्यचिन्नियमेन दुःखं कस्यचिन्नियमेन सुखं च स्यात् । न च तथा दृश्यते, अनियमदर्शनात् ।

---

(१) बारा. ६।६१।२२ ; बाराकु. ६।८३।२२ पुण्य (पाप) अधर्मेण हतो (वधकर्महतो) किं करिष्यति (कं वधिष्यति).

(२) बारा. ६।६१।२३ ; बाराकु. ६।८३।२३ चापरम् ( वा परम् ) विधाता लि ( विधिरालि ) तस्मात्पा (न स पा).

‡ अस्मदुपलब्धेष्वधिकसप्तेषु कोशेषु केवलमेकस्मिन् मोनिअर-विल्यम-कोशे एव विरञ्चनविरिञ्चनशब्दौ ब्रह्मादेवार्थकौ समुपलभ्येते । तत्रापि प्रयोगस्थलविशेषो न निर्दिष्टः ।

(१) बारा. ६।६१।२४ ; बाराकु. ६।८३।२४ पूर्वार्धे ( अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता । ) ण रिपुसूदन (णारिविकर्शन).

तर्हि कर्मजन्योऽपूर्वरूपोऽतिशयः फलप्रदो धर्म इत्याशङ्कयाऽऽह– अदृष्टेति । हे अरिविकर्शन, प्रतिक्रियते परप्रतिपत्तिर्जन्यत इति प्रतिकारः लिङ्गम् । अदृष्टप्रतिकारेण अदृष्टलिङ्गेन अनुमानागम्येनेत्यर्थः, अव्यक्तेन अप्रत्यक्षेण असता सता असद्भूतेन अग्नीन्द्रादिवदर्थवादवाक्येनागम्येन धर्मेण अपूर्वाख्येन परं श्रेयः कथं प्राप्तुं शक्यम् ? न शक्यमित्यर्थः । राभू.

**[1]यदि सत्स्यात्सतां मुख्य नासत्स्यात्तव किंचन ।**
**त्वया यदीदृशं प्राप्तं तस्मात्सन्नोपपद्यते ॥**

उक्तमेवार्थं पुनस्तर्केण दृढीकरोति– यदीति । हे सतां मुख्य, यदि सत् स्यात्, धर्माख्यं वस्त्विति शेषः, धार्मिकस्य तव असत् अनिष्टं किंचन न स्यात् । तर्कस्य विपर्यये पर्यवसानमाह– त्वयेति । यत् यस्मात्कारणात् त्वया ईदृशं दुःसहं व्यसनं प्राप्तं तस्मात् सन्नोपपद्यते, असदेव भवतीत्यर्थः । कार्यानुपलम्भादपूर्वाख्यधर्मो न कल्प्य इत्यर्थः । राभू.

**[2]अथवा दुर्बलं त्यक्त्वा बलं धर्मोऽनुवर्तते ।**
**दुर्बलो हतमर्यादो न सेव्य इति मे मतिः ॥**

ननु न कार्यानुपलम्भमात्रादर्थस्याभावो निश्चेतुं शक्यः, अतीन्द्रियोच्छेदापत्तेः । किंतु सहकारिसंपत्तौ सत्यां कार्यानुपलम्भः कारणत्वाभावं साधयति । सहकारि च पौरुषम् । अतस्तदभावात्फलानुदय इत्यत आह– अथवेति । दुर्बलः बलरहितः निरपेक्षतया कार्याक्षमः अत एव क्लीबः कातरः स्वतःकार्यकरणासमर्थः धर्मः बलमनुवर्तते, कार्योत्पादने पौरुषमपेक्षत इत्यर्थः । एवं चेद्दुर्बलः हतमर्यादः स्वातन्त्र्येण फलप्रदत्वमर्यादाहीनो धर्मः प्राधान्येन न सेव्य इति मे मतिः । राभू.

**[3]बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमे ।**
**धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥**

(१) बाराक्. ६।८३।२५.

(२) बारा. ६।६१।२५ ; बाराक्. ६।८३।२६ लं त्यक्त्वा (लः क्लीबो) हत (हृत).

(३) बारा. ६।६१।२६ चेद्ध ( वा ध ) पराक्रमे (समाहितः) ; बाराक्. ६।८३।२७.

प्रधानभूतं बलमेव आश्रयणीयमित्याह– बलस्येति । पराक्रमे कार्यसाधने विषये बलस्य धर्मः गुणभूतो यदि चेत् उपसर्जनभूतो यदि स्यात् तदा यथेदानीं धर्मे वर्तसे तथा धर्ममुत्सृज्य धर्मप्राधान्यमुत्सृज्य धर्म इव बलेऽपि वर्तस्व । राभू.

**[1]अथ चेत्सत्यवचनं धर्मः किल परंतप ।**
**अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥**

एवं सामान्येन धर्मे दूषितेऽपि सत्यवचनरूपधर्मविशेषस्य रामेण प्राधान्येनानुरोधात्तत्पृथक् दूषयति– अथेति । हे परंतप, सत्यवचनं धर्मः किल, अथ चेत् एवं चेत् अनृतः ' त्वामभिषेक्ष्यामि ' इत्युक्त्वा तदकरणेन सत्यत्वरहितः । अनृतमिति पाठे वदन्निति शेषः । त्वयि सकलकल्याणगुणाश्रये ज्येष्ठपुत्रे अकरुणः राज्याद्वनं प्रति निष्कासनान्निर्दयः अतो बन्धनयोग्यः पिता त्वया ' पितृवचनं करिष्यामि ' इति कृतप्रतिज्ञेन त्वया किं न बद्धः किं न नियमितः ? सर्वप्रजासंनिधौ ' राममभिषेक्ष्यामि ' इत्युक्तं प्राथमिकं पितृवचनं परित्यज्य पाश्चात्यं वनगमनविषयं ' पितृवचनं करिष्यामि ' इति कृतप्रतिज्ञेन त्वया पालयता सत्यवचनमपि सम्यक् पालितमिति भावः । राभू.

**[2]यदि धर्मो भवेद्भूतो अधर्मो वा परंतप ।**
**न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥**

धर्माधर्मयोः सद्भावेऽपि राज्ञा धर्मोऽधर्मो वा नियमेन नानुष्ठातव्यः, किंतु तत्तत्कालप्रयोजनानुगुण्येनोभावपि कर्तव्यावित्यत्र शिष्टाचारं प्रमाणयति– यदीति । भूतो अधर्मो वेत्यत्र वृत्तानुरोधाय संध्यभावः । यदि धर्मो भवेद्भूतः यदि केवलं धर्म एवानुष्ठेयत्वेन प्राप्तो भवेत् तदा वज्री शतक्रतुः मुनिं विश्वरूपं हत्वा इज्यां न कुर्यात्, किंत्विज्यामेव कुर्यात् । अधर्मो वा केवलमधर्मो वा यद्यनुष्ठेयः स्यात्, तदा शतक्रतुः वज्री

(१) बारा. ६।६१।२७ अथ चेत्स ( यदि वा स ) परंतप ( परो मतः) स्त्वय्यक (स्त्यक्तक) त्वया पिता (पिता त्वया) ; बाराक्. ६।८३।२८.

(२) बाराक्. ६।८३।२९–३०.

मुनिं हत्वा हत्यां न कुर्यात्, किंतु हननमेव कुर्यात्। क्षत्रधर्मनिष्ठेनेन्द्रेण धर्माधर्मयोरनुष्ठितत्वाद्राज्ञा यथाकालमुभयमपि कर्तव्यमिति भावः। 'यान्येतानि देवक्षत्राणीन्द्रो वरुणः पर्जन्यो यम ईशानः' (बृउ. १।४।११) इतीन्द्रस्य क्षत्रियत्वं श्रूयते। राभू.

**अधर्मसंश्रितो धर्मो विनाशयति राघव।**
**सर्वमेतद्यथाकामं काकुत्स्थ कुरुते नरः॥**

इदानीमभ्युपगमवादेनैकान्ततो धर्माधर्मयोः एकस्य आश्रयणमनर्थपर्यन्तमायातीत्याह– अधर्मेति। अधर्मसंश्रितो धर्मः अधर्मसहितो धर्मः, धर्मश्चाधर्मश्चेत्यर्थः। विनाशयति, कर्तारमिति शेषः। नियमेन पृथक् पृथगनुष्ठीयमानौ धर्माधर्मौ कर्तारं विनाशयतः। अत एवैतत्सर्वं धर्माधर्मात्मकं सर्वं कर्मजातं यथाकामं तत्तत्कालोचितम् अनियमेन नरः कुरुते, कुर्यादित्यर्थः। राभू.

धर्मस्य ऐकान्तिकहितकरत्वम्

[1]**न हि धर्माभिरक्तानां किंचिल्लोकेऽस्ति दुर्लभम्॥**

[2]**योऽध्रुवेण शरीरेण न करोति तपोर्जनम्।**
**स पश्चात्तप्यते मूढो मृतो दुःखां गतिं गतः॥**

तपसः अर्जनं संपादनम्। राभू.

[3]**धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखमेव च।**
**तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विसर्जयेत्॥**
**पापस्य हि फलं दुःखं तद्भोक्तव्यमिहाऽऽत्मना।**
**तस्मादात्मापघातार्थं मूढः पापं करिष्यति॥**

[4]**न हि सर्वस्य दुर्बुद्धे दीप्यते छन्दतो मतिः।**
**यादृशं कुरुते कर्म तादृशं फलमश्नुते॥**

दुर्बुद्धेः बुद्धिरहितस्य कस्यापि पुरुषस्य छन्दतः पितृमात्रादिसेवां विना स्वेच्छामात्रेण धीर्मतिः शुभमतिः न हि जायते। राभू.

[1]**बुद्धिं रूपं कुलं पुत्राञ्छौर्यं गाम्भीर्यमेव च।**
**प्राप्नुवन्ति नरा लोके निर्जितं पूर्वकर्मभिः॥**

[2]**धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः।**
**यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम्।**
**तस्माद्धारण इत्युक्तः स धर्म इति निश्चयः॥**

[3]**एष राम परो धर्मो रक्षणात्प्रेत्य चेह च।**
**न हि धर्माद्भवेत्किंचिद्दुष्प्रापमिति मे मतिः॥**

[4]**दानं दया सतां पूजा व्यवहारेषु चाऽऽर्जवम्।**
**एष राजन् परो धर्मः फलवान् प्रेत्य राघव॥**

## मनुः

धर्माधर्मयोः सुखदुःखादिद्वन्द्वानां च स्वयंभुकृता व्यवस्था

[5]**कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत्।**
**द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः॥**

(१) धर्माधर्मौ व्यवेचयत् विवेकेन पृथग्भावेन व्यवस्थापितवान्– 'अयं धर्म एव, अयमधर्म एव'। ननु च नैवायं विवेकोऽस्ति। सन्ति हि कर्माण्युभयरूपाणि धर्माधर्मात्मकानि। यथाऽऽहुः– 'शबलानि

---

(१) वारा. ७।९।२६; वाराकु. ७।१०।३३ किंचिल्लोकेऽस्ति (लोके किंचन).

(२) वारा. ७।१४।१९; वाराकु. ७।१५।२३ प्रथमचरणे (अध्रुवे हि शरीरे यो) दुःखां गतिं गतः (दृष्ट्वाऽऽत्मनो गतिम्).

(३) वाराकु. ७।१५।२४–२५.

(४) वारा. ७।१४।२०; वाराकु. ७।१५।२६ पूर्वार्धे (कस्यचिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः।).

(१) वारा. ७।१४।२१; वाराकु. ७।१५।२७ पूर्वार्धे (बुद्धिरूपं फलं पुत्राञ्छौर्यं धीरत्वमेव च।) पूर्व (पुण्य).

(२) वारा. ७।६२।६ विधृताः (रञ्जयन्) द्वितीयार्धं नास्ति; वाराकु. ७।५९।७–८ ण इत्युक्तः (णमित्युक्तं).

(३) वारा. ७।६२।७; वाराकु. ७।५९।९ राम (राजन्) धर्मो रक्षणात् (धर्मः फलवान्) चेह च (राघव).

(४) वारा. ७।६२।८; वाराकु. ७।५९।१० राजन् (राम) धर्मः फलवान् (धर्मो रक्षणात्) राघव (चेह च).

(५) मस्मृ. १।२६; मेधा. च विवेकार्थं (तु विवेकाय); माच. विवेकार्थं (विवेकाय).

वैदिकानि कर्माणि, हिंसासाधनकत्वात् । यथा ज्योतिष्टोमः स्वरूपेण धर्मो हिंसाङ्गत्वात्त्वधर्मः ' इति । अत आह– कर्मणां तु विवेकाय । कर्मशब्देनात्र प्रयोगः कर्मणामनुष्ठानमुच्यते । स एव पदार्थोऽन्यथा प्रयुज्यमानो विपरीतस्वभावो भवति । धर्मः सन्नधर्मरूपतामापद्यते, अधर्मो धर्मत्वम् । तथा हिंसैव । हिंसा बहिःप्रयुज्यमाना अधर्मः सः, ' न हिंस्यात्सर्वभूतानि ' इति प्रतिषेधगोचरत्वात् । अन्तर्वेदिकृता अग्नीषोमीये धर्मः, विधिलक्षणत्वात् । एवं तपो धर्मः, तदेव तु दम्भेनासामर्थ्यादिना वा क्रियमाणमधर्मः । एवं देवरगमनं स्त्रीणामधर्मः, गुरुनियुक्तानां पुत्रार्थिनीनां घृताक्ताद्यनुग्रहेण धर्मः । अत: स्वरूपैकत्वेऽपि प्रयोगभेदाद्धर्माधर्मव्यवस्था । एकत्वेऽपि प्रमाणान्तरदृष्ट्या स्वरूपभेद एव ।

अथ च कर्मफलेषु कर्मशब्दः, कारणे कार्यो-(? कार्ये कारणो-)पचारात् । तेनैतदुक्तं भवति– कर्माणि व्यवेचयत् कर्मफलविभागाय । कः पुनः कर्मणां फलविभागः ? अत उक्तम्– द्वन्द्वैरयोजयत्सुखदुःखादिभिः । धर्मस्य फलं सुखमधर्मस्य दुःखम् । अत उभयकारिणो द्वन्द्वैर्योज्यन्ते धर्मकारित्वात्सुखेनाधर्मकारित्वाद्दुःखेन । द्वन्द्वशब्दोऽयं रूढया परस्परविरुद्धेषु पीडाकरेषु वर्तते शीतोष्णक्षुद्पातपक्षुत्सौहित्यादिषु । आदिग्रहणं सामान्यविशेषभावेन ज्ञेयम् । केवलो सुखदुःखशब्दो स्वर्गनरकयोर्वाचको निरतिशयानन्दपरितापवचनो वा । विशेषः स्वर्गग्रामपुत्रपश्वादिलाभस्तदपहारश्च आदिशब्दस्य विषयः । कर्मणां पूर्वमुत्पत्तिरुक्ता । अनेन तेषामेव प्रयोगविभागः फलविभागश्च प्रजापतिना कृत इति प्रतिपाद्यविवेकः । मेधा.

(२) ' अयं धर्मः, अतस्तत्साधकं दानादि कर्म कर्तव्यम् । अयं पुनरधर्मः, अतस्तत्संपादकं चौर्यादि न कार्यम् ' इत्येवं दानचौर्यादिकर्मणां विभागाय धर्माधर्मौ पृथक्पृथक् कृतवान् । धर्माधर्मफलभूतैश्च द्वन्द्वैः परस्परविरुद्धैः पुत्रोत्पत्तिविनाशादिभिः सुखदुःखैः आदिशब्दात् क्षुत्सौहित्यादिभिश्चेमाः प्रजा योजितवान् । गोरा.

(३) कर्मणां कार्याणाम् अकार्येभ्यो विवेकार्यं धर्माधर्मसाधने कर्मणी व्यवेचयत् । द्वन्द्वैः अन्योन्यविरुद्धरूपतया सदा युग्मतयैव बुद्धिसंनिहितैः सुखदुःखकामक्रोधादिभिः इमाः प्रजाः सृष्टाः अयोजयत् । मवि.

(४) धर्मो यज्ञादिः कर्तव्यः । अधर्मो ब्रह्मवधादिः, स न कर्तव्यः । † ममु.

(५) सृज्यमानकारणमाह– कर्मणामिति । अश्वमेधादिर्धर्मकारणं ब्राह्मणवधाद्यधर्मकारणमिति कर्तव्याकर्तव्यार्थे व्यवेचयत् विवेकेनोक्तवान् । द्वन्द्वैः सुखदुःखाद्यैः । मच.

(६) ' इदं कार्यम्, इदं वर्ज्यम् ' इति ज्ञानं विवेकः । तदर्थं धर्माधर्मौ व्यवेचयत् असंकीर्णरूपौ कृतवान् । $ नन्द.

(७) ¶ कर्मणामिति ब्राह्मणादीनां विवेकाय ' ब्राह्मणस्येदं कर्म, क्षत्रियस्येदं कर्म ' इति विवेकाय । $ भाच.

वैदिककर्मसहितः आचारः परमो धर्मः सफलश्च

[1]आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः ॥

† शेषं गोरागतम् ।

$ शेषं मविगतम् ।

¶ व्यधिकरणे इमे षष्ठ्यौ । ब्राह्मणादिकर्तृकाणां कर्मणामित्यर्थः ।

(१) मस्मृ. १।१०८ ; मपा. ११ द्वितीयचरणे ( विद्वद्भिः परिकीर्तितः ) पू. ; गप. ८ न्सदा यु ( न्समायु ) ; मुक्ता. २ स्मिन्सदा युक्तो ( स्मिंस्त्रये युक्ते ); विपा. ३।२।४०२ परमो ( प्रथमो ) शेषं गपवत् ( = ) ; आन. १० ( आचारप्रभवो धर्मः ) एतावदेव, स्मृतिः ; मन्व. ४।१५५ रः परमो ( रप्रभवो ) पू. ( = ).

(१) परमः प्रकृष्टः धर्मः। आचारस्तथा, श्रुतौ वेदे य उक्तः, स्मार्तः स्मृतिषूक्तः। तस्मादाचारधर्मे नित्यं युक्तः स्यात् नित्यमनुतिष्ठेत्। आत्मवान् आत्मनो हितमिच्छन्। सर्वस्याऽऽत्माऽस्ति, अतो मतुपा तद्धित-परत्वमुच्यते। मेधा.

(२) यः श्रुत्युक्तः आचारः पुरुषसाधारणप्राधान्य-ख्यापनार्थं च धर्माख्यः, यश्च स्मार्तः, सः परमः प्रकृष्टः धर्मः। परमो ज्योतिष्टोमाष्टकादिभ्यः श्रौतस्मार्त-धर्मेभ्यः यतः तस्मात् यो नित्यं प्रशस्तात्मा आचारे सर्वकाले युक्तः यत्नवान् स्यात्। गोरा.

(३) नन्वाचारो यदि न साक्षाद्धर्महेतुः किमिति कर्तव्य इत्यत आह– आचार इति। यद्यप्यसावङ्गमेव, न प्रधानम्, तथाप्ययमपि परमो धर्मः, तं विनाऽप्य-प्रवृत्तेः। स च श्रुत्युक्तः दीक्षादौ नवनीताभ्यञ्जनादिः, आचमनादिः स्मार्तः। यद्यप्यसावपि श्रौतस्तथापि श्रुतेः प्रत्यक्षायाः तत्परायाः भूलोकेऽनध्ययनात्स्मार्ततोक्ता। अस्मिन् आचारे सदा युक्तः उद्युक्तः। आत्मवान् धृतिमान्। मवि.

(४) प्राधान्यमेव स्पष्टयति– आचार इति। युक्तः यत्नवान् आत्महितेच्छुः। सर्वस्याऽऽत्माऽस्तीति आत्म-शब्देन आत्महितेच्छा लक्ष्यते। ममु.

(५) अत्र कार्यकारणयोरभेदोपचारः। धर्मः तज्जन्यं सुकृतापूर्वम्। मपा. ११

(६) 'आचारहीनं न पुनन्ति वेदाः' इत्युक्ति-मालम्ब्य वेदार्थानुष्ठानहेतुमाचारं विधास्यंस्तमेव सप्रमा-णकं स्तौति– आचार इति त्रिभिः। सदा युक्तः सर्वदोद्युक्तः। आत्मवान् पारलौकिकात्मतत्त्वज्ञानवान्, तदभावे आचारं विश्वसन् (? रेऽविश्वासात्)। प्रहृष्टमना वा। मच.

(७) आ समन्तात् च ये ते (? चर्यते) अनु-ष्ठीयते सद्भिरित्याचारः शौचाचमनादिलक्षणः क्रिया-विशेषः। स च शास्त्रैकगम्यः। शास्त्रं च मन्वादि-प्रणीतं धर्मशास्त्रम्। तथा च पराशरः– 'न कश्चि-द्वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः। तथैव धर्मान् स्मरति मनुः कल्पान्तरे प्रभुः॥' (पस्मृ. १।२१) इति। आन. ११

(८) धर्म एव निःश्रेयससाधनम्, तस्मात्स एव वक्तव्यः, किमाचारेण? इति चेदत्राऽऽह– ¶ आचार इति। श्रुत्युक्तोऽग्निहोत्रहोमादिः, स्मार्तोऽष्टकादिः। अस्मिन् द्वये। नन्द.

(९) द्विजः नित्यमात्मवान् भवेत् जितेन्द्रियः भवेत्। $ भाच.

**'आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।**
**आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत्॥**

(१) प्रकारान्तरेणेयमाचारस्तुतिः। आचारात्प्रच्युतः आचारहीनः न वेदफलं प्राप्नोति। वेदविहितकर्मा-नुष्ठानफलं वेदफलम् इत्युक्तम्। समग्राण्यविकलानि वैदिकानि कर्माण्यनुतिष्ठन् यद्याचारभ्रष्टः, न ततः पुत्र-कामादिफलमश्नुत इति निन्दा। एष एवार्थो विपर्य-येणोच्यते– आचारेण तु संयुक्तः सकलं फलं प्राप्नोति काम्यानाम्। अत्र यद्वदन्ति– 'संपूर्णवचनादाचार-हीनस्याप्यस्ति कामेभ्यः फलसंबन्धः, न कृत्स्नफललाभः' इति, तन्न किंचित्, अर्थवादत्वादस्य। † मेधा.

¶ एतस्मात् प्रतीकात् 'आचारः परमो धर्मः' इति पाठ एव नन्दनाभिमत इत्यादर्शपुस्तकसंपादका मन्यन्ते इति प्रतीयते। वस्तुतस्तु मस्मृ. ४।१५५ इति श्लोके सदाचारविशेषणस्य 'धर्ममूलम्' इत्यस्य "धर्मस्य मूलम्। धर्ममूलत्वं च 'आचारप्रभवो धर्मः श्रुत्युक्तः स्मार्त एव च' इत्यत्र प्रतिपादितम्" इति नन्दनकृत-व्याख्यानात् 'आचारप्रभवो' इति पाठ एव तदभिमत इति निश्चीयते। एतेन तत्रापि 'प्रभवो (परमो)' इति प्रभवशब्दस्थाने परमशब्दसूचनात् संपादकैः प्रभव-शब्दघटितपाठस्य यत् प्रामादिकत्वमाशङ्कितम्, तदपि न सुशङ्कम्, परमशब्दघटितपाठे आचारस्य धर्म-मूलत्वाप्रतीतेः।

$ शेषं मेधागतम्।

† ममु., भाच. मेधागतम्।

(१) मस्मृ. १।१०९; मेधा. द्विच्यु (त्प्रच्यु); मपा. १३; गप. ८; मुक्ता. ४; विपा. ३।२।४०२ ('=).

( २ ) आचाराद्विच्युतः श्रौतस्मार्ताधिकारात् भ्रष्टाचारः । ¶ गोरा.

( ३ ) विच्युतः सम्यगकर्ता वेदफलं वैदिकं कर्मफलं संपूर्णं नाश्नुते, व्यङ्गात्ताद्दक्फलासिद्धेः । अत एवाऽऽह — आचारेण त्विति । मवि.

( ४ ) आचारात् यथाविध्याचमनादेः । मच.

( ५ ) श्रौतस्मार्ताचाराणामादरार्थमेतमेवार्थं प्रपञ्चयति— आचारादिति द्वाभ्याम् । वेदफलं वेदोक्तफलम्, धर्मफलम् इति यावत् । नन्द.

**[१]एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।**
**सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥**

( १ ) यावत्किंचित्तपः प्राणायाममौनयमनियमकृच्छ्रचान्द्रायणानशनादि तस्य सर्वस्य फलप्रसवे मूलमाचारः, अतस्तमेव मुनयस्तपःफलार्थिनो मूलत्वेन कारणतया जगृहुः गृहीतवन्तः । आचारात् दृष्ट्वा धर्मस्य मुनयो गतिं प्राप्तिम् । अतिक्लेशकरं तपस्तथाप्याचारहीनस्य न फलतीति श्रुतिः । मेधा.

( २ ) एवमाचारात् धर्मस्य प्राप्तिमृषयो बुद्ध्वा कृच्छ्रचान्द्रायणादेस्तपसः सफ( ? क )लात् परं प्रकृष्टं मूलकारणम्, तस्मिन् सति तपसः साफल्यात्, आचारमनुष्ठेयत्वेन गृहीतवन्त इति । एवमिहाऽऽचारस्तुतिः शास्त्रस्तुत्यर्था उत्तरत्र तु आचारानुष्ठानार्थम् । ‡ गोरा.

( ३ ) गतिं प्राप्तिम् । तपसः प्रधानस्य धर्मसाधनस्य मूलं वृक्षस्येव मूलं प्रधानमङ्गम् । मवि.

( ४ ) आचारतः आचारानुष्ठानेन शुद्धान्तःकरणात् धर्मस्य गतिं स्वरूपं दृष्ट्वा ज्ञात्वा सर्वस्य तपसः धर्मस्य आचारो मूलम् इत्यनुष्ठेयतया जगृहुरित्यन्वयः । मच.

( ५ ) अथ शिष्टपुरुषव्यवहारेण धर्मस्याऽऽचाराधीनत्वं द्रढयति— एवमिति । यथा मुनयस्तात्पर्येण धर्मान्तरमुपेक्षितवन्तः, न तथा कदाचिदाचारम् । तस्मादाचाराधीनत्वं धर्मस्य दृष्टवन्त इत्यभिप्रायः । नन्द.

शास्त्रव्यापकं सर्वधर्मलक्षणम्

**[१]विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।**
**हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥**

( १ ) प्रथमोऽध्यायः शास्त्रप्रतिपाद्यार्थतत्त्वदर्शनार्थोऽनुक्रान्तः । जगत्सृष्ट्यादिवर्णनं च तच्छेषमेव व्याख्यातम् । इदानीं शास्त्रमारभते । तत्र प्रतिज्ञातोऽर्थो जगत्सर्गादिवर्णनेन व्यवायाद्विस्मृत इत्यनुसंधानार्थं पुनः शिष्यान् प्रति बोधयति— यो धर्मो भवतां शुश्रूषितस्तमिदानीं मयोच्यमानं निबोधत अवहिता भूत्वा शृणुत । प्रथमेऽध्याये पञ्चषाः श्लोकाः प्रयोजनादिप्रतिपादनार्थाः । परिशिष्टमर्थवादरूपम् । तच्चेनातिसम्यगवधारितं न धर्मपरिज्ञाने महती क्षतिः । इह तु साक्षाद्धर्म उपदिश्यते । ततोऽवधानवद्भिरवधारणीयोऽयमर्थ इति पुनरुपन्यासफलम् । धर्मशब्दः उक्तार्थोऽष्टकाद्यनुष्ठानवचनः । बाह्यदर्शनिनस्तु भस्मकपालादिधारणमपि धर्मं मन्यन्ते । तन्निवृत्त्यर्थं विद्वद्भिरित्यादीनि विशेषणपदानि । विद्वांसः शास्त्रसंस्कृतमतयः प्रमाणप्रमेयस्वरूपविज्ञानकुशलाः । ते च वेदार्थविदो विद्वांसः, नान्ये । यतो वेदादन्यत्र धर्मं प्रति ये गृहीतप्रामाण्यास्ते विपरीतप्रमाणप्रमेयग्रहणादविद्वांस एव । एतच्च मीमांसातस्त्वतो निश्चीयते । सन्तः साधवः प्रमाणपरिच्छिन्नार्थानुष्ठायिनो हिताहितप्राप्तिपरिहारार्थाय यत्नवन्तः । हिताहितं च दृष्टं प्रसिद्धम् । अदृष्टं च विधिप्रति-

---

¶ शेषं मेधागतम् ।

‡ मनु. गोरागतम् ।

(१) मस्मृ. १।११० ; मपा. १३ ; मच. २।१ पू. ; गप. ८ जगृहुः ( जगदुः ) ; मुक्ता. ४ चारतो ( चरतो ).

(१) मस्मृ. २।१ ; मेधा. २।२ चतुर्थचरणमात्रम् ; शक. ५ ; स्मृच. १।१३ ; चव. १० ; कुर. ७ ; पमा. १।८० ; प्रपा. २ चतुर्थचरणे ( यो धर्मं तं व्यवस्यत ) ; मुक्ता. २ चतुर्थचरणे ( यस्तं धर्मं व्यवस्यत ) ; पप्र. ३० ; आन. ५ मुक्तावत् ; नन्द. मुक्तावत्.

धर्मलक्षणम् । तदनुष्ठानबाह्या असन्त उच्यन्ते । अत उभयमत्रोपात्तं ज्ञानमनुष्ठानं च । विद्यमानतावचनः सच्छब्दो न संभवति, आनर्थक्यात् । यदि येन सेव्यते तत्तेन विद्यमानेनैव । सेवा अनुष्ठानशीलता । भूतप्रत्ययेनानादिकालप्रवृत्ततामाह । नायमष्टकादिधर्मोऽद्यत्वे केनचित्प्रवर्तितः इतरधर्मवत् । एतदेव नित्यशब्देन दर्शयति । यावत्संसारमेष धर्मः । बाह्यधर्मास्तु सर्वे मूर्खदुःशीलपुरुषप्रवर्तिताः कियन्तं कालं लब्धावसरा अपि पुनरन्तर्धीयन्ते । न हि व्यामोहो युगसहस्रानुवर्ती भवति । सम्यग्ज्ञानमविद्यया संछन्नमपि तत्क्षये निर्मलतामेवैति । न हि तस्य निर्मलतया छेदः संभवति ।

अद्वेषरागिभिः । इदं बाह्यधर्माननुष्ठाने द्वितीयं कारणम् । व्यामोहः पूर्वमुक्तः, अनेन लोभादय उच्यन्ते, रागद्वेषग्रहणस्य प्रदर्शनार्थत्वात् । लोभेन मन्त्रतन्त्रादिषु प्रवर्तयन्ति । अथवा रागद्वेषयोर्लोभोऽन्तर्भूतः । आत्मनो ये भोगोपायास्तेषु रक्ता उपायान्तरेण जीवितुमसमर्था लिङ्गधारणादिना जीवन्ति । तदुक्तम्— ‘ भस्मकपालादिधारणम् , नग्नता, काषाये च वाससी बुद्धिपौरुषहीनानां जीविका ’ इति । द्वेषः विपरीतानुष्ठानकारणम् । द्वेषप्रधाना हि नातीव तत्त्वावधारणे समर्था भवन्ति, अतोऽधर्ममेव धर्मत्वेनाध्यवस्यन्तीति । अथवोभावपि रागद्वेषौ तत्त्वावधारणे प्रतिबन्धकौ । सत्यामपि कस्यांचिच्छास्त्रवेदनमात्रायां लब्धेऽपि विद्वद्व्यपदेशे रागद्वेषवत्तया विपरीतानुष्ठानं संभवति । जानाना अपि यथावच्छास्त्रं कस्यचिद्द्वेष्यस्योपघाताय प्रियस्य चोपकाराय कौटसाक्ष्याद्यधर्मं सेवन्ते । तेषां वेदमूलमेवानुष्ठानमित्यशक्यनिश्चयम् , कारणान्तरस्य रागद्वेषलक्षणस्य संभवात् । अतस्तत्प्रतिषेधः । अत्र चोद्यते— सद्भिरिति सच्छब्दः साधुतावचनो वर्णितः । कीदृशी च साधुता तस्य ? यदि रागद्वेषाभ्यामधर्मे प्रवृत्तिः संभाव्यते । तस्मादद्वेषरागिभिरिति न वक्तव्यम् । एवं तर्हि हेतुत्वेनोच्यते । यतो रागादिवर्जिता अतः सन्तो भवन्ति । रागद्वेषप्रधानत्वाभावश्चात्र प्रतिपाद्यते । न सर्वेण सर्वं तदभावयोग्यावस्थागतस्य हेतोर्निरन्वयमुच्छिद्यते । तथा च श्रुतिः— ‘ न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ’ ( छान्दो. ८।१२।१ ) इति । रागः विषयोपभोगगृध्नुता । तत्प्रतिषेधव्यापारः द्वेषः । लोभो मात्सर्यम् असाधारण्येन स्पृहा ‘ परस्य चैतन्मा भूदिमवस्यात्यादि ’ । चित्तधर्मा एते । अथवा चेतनावत्सु स्त्रीसुतसुहृद्बान्धवादिषु स्नेहो रागः, लोभोऽचेतनेष्वपि धनादिषु स्पृहा ।

हृदयेन । हृदयशब्देन चित्तमाचष्टे । अनुज्ञानं च हृदयस्य प्रसादः । एषा हि स्थितिः । अन्तर्हृदयवर्तीनि बुद्ध्यादितत्त्वानि । यद्यपि बाह्यहिंसाभक्ष्यभक्षणादिषु मूढा धर्मबुद्ध्या प्रवर्तन्ते तथापि हृदयाक्रोशनं तेषां भवति । वैदिके त्वनुष्ठाने परितुष्यति मनः ।

तदस्य सर्वस्यायमर्थः— न मया तादृशो धर्म उच्यते यत्रैते दोषाः सन्ति । किंतु य एवंविधैर्महात्मभिरनुष्ठीयते स्वयं च यत्र चित्तं प्रवर्तयति वा । अत आदरातिशय उच्यमानेषु धर्मेषु युक्तः । अथवा हृदयं वेदः । स ह्यधीतो भावनारूपेण हृदयस्थितो हृदयम् । ततश्च त्रितयमत्रोपात्तम् । यदि तावदविचार्यैव स्वाग्रहात्काचित्प्रवृत्तिः कस्यचित्तथाप्यत्रैव युक्ता । एतत् हृदयेनाभ्यनुज्ञात इत्यनेनोच्यते । अथाप्ययं न्यायः ‘ महाजनो येन गतः स पन्थाः ’ इति तदप्यत्रैवास्ति । विद्वांसो ह्यत्र निष्कामाः प्रवृत्तपूर्वा अनिन्द्याश्च लोके । अथाप्रामाणिकी प्रवृत्तिः साऽपि वेदप्रामाण्यात्सिद्धैवेति । सर्वप्रकारं प्रवृत्त्याभिमुख्यमनेन जन्यते । अन्ये त्वेतं श्लोकं सामान्येन धर्मलक्षणार्थं व्याचक्षते । एवंविधैर्यः सेव्यते स धर्मोऽवगन्तव्यः । प्रत्यक्षवेदविहितस्य स्मार्तस्य वाऽऽचारतः प्राप्तस्य सर्वस्यैतल्लक्षणं विद्यते । अत्र तु य एतैः सेव्यते तं धर्मं निबोधतेति पाठो युक्तः । मेधा.

( २ ) एवमध्ययनश्रवणार्थं महाप्रयोजनतां शास्त्रस्य प्रतिपाद्याधुना प्रकृताभिधानार्थमुपक्रमते । तत्र तावदभिधास्यमानं धर्मसामान्यलक्षणं सकलशास्त्रव्यापकत्वेन परिभाषार्थमाह— विद्वद्भिरिति । धर्मस्यानन्यप्रमाणत्वात् विद्वद्भिः वेदार्थज्ञैः सद्भिः धार्मिकैः सर्वदा रागद्वेषशून्यैः

आचरितः हृदयेनाभ्यनुज्ञातः अन्तःकरणविचिकित्साशून्यः यो धर्मोऽदृष्टार्थकर्तव्यरूपस्तं शृणुत । गोरा.

(३) सेवितः सततमनुष्ठितः । नित्यम् अनिन्दितं प्रथमतया । अद्वेषरागिभिः ¶ विध्यनुमितरागद्वेषशून्यैः । $ ब्रक. १

(४) अथ प्रकृतप्रतिज्ञातं धर्मसाधनमभिधातुमवतारयति– विद्वद्भिरिति । विद्वद्भिः विद्यावद्भिः, सद्भिः आचारपरैः, द्वेषः क्रोधानुबन्धः, रागः अभिलाषानुबन्धः, तद्रहितैः सेवितो यो धर्मः धर्महेतुः । तथा सेव्यमानोऽपि हृदयेन शङ्कावतां नाभ्यनुज्ञायते चेन्नासौ धर्मः, अत उक्तम्– हृदयेनेति । अभ्यनुज्ञातः स्वीकृतः । एवंविधो यो धर्मः तम् अस्माच्छास्त्रात् निबोधत । तत्तत्कालपठ्यमानश्रुतिप्रतिपादितोऽपि हि धर्मस्तत एव प्रसिद्धोऽपि दुरूहपदवाक्यार्थसंकीर्णश्रुतिप्रमाणकतया स्मृतिमपेक्षत एव । मधि.

(५) प्रकृष्टपरमात्मज्ञानरूपधर्मज्ञानाय जगत्कारणं ब्रह्म प्रतिपाद्याधुना ब्रह्मज्ञानाङ्गभूतं संस्कारादिरूपं धर्मं प्रतिपिपादयिषुर्धर्मसामान्यलक्षणं प्रथममाह– विद्वद्भिरिति । विद्वद्भिः वेदविद्भिः सद्भिः धार्मिकैः रागद्वेषशून्यैरनुष्ठितः । हृदयेनाऽऽभिमुख्येन ज्ञात इत्यनेन श्रेयःसाधनमभिहितम् । तत्र हि स्वरसान्मनोऽभिमुखीभवति । वेदविद्भिर्ज्ञात इति विशेषणोपादानसामर्थ्यात् ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितम् । 'खड्गधारिणा हतः' इत्युक्ते धृतखड्गस्यैव हनने प्राधान्यम् । अतो वेदप्रमाणकः श्रेयःसाधनं धर्म इत्युक्तम् । एवंविधो यो धर्मस्तं निबोधत । उक्तार्थसंग्रहश्लोकाः– 'वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणम् । वेदादेव परिज्ञातो धर्म इत्युक्तवान्मनुः ॥ हृदयेनाऽऽभिमुख्येन ज्ञात इत्यपि निर्दिशन् । श्रेयःसाधनमित्याह तत्र ह्यभिमुखं मनः ॥ वेदप्रमाणकः श्रेयःसाधनं धर्म इत्यतः । मनूक्तमेव मुनयः प्रणिन्युर्धर्मलक्षणम् ॥' । अत एव हारीतः– 'अथातो धर्मं व्याख्यास्यामः । श्रुतिप्रमाणको धर्मः । श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च'। भविष्यपुराणे– 'धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम् । स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः ॥ अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते । इह लोके सुखैश्वर्यमतुलं च खगाधिप ॥' । श्रेयःसाधनमित्यर्थः । जैमिनिरपि इदमपि धर्मलक्षणमसूचयत्– 'चोदनालक्षणोऽर्थो धर्मः' (जैसू. १।१।२) इति । उभयं चोदनया लक्ष्यते– अर्थः श्रेयःसाधनं ज्योतिष्टोमादिः, अनर्थः प्रत्यवायसाधनं श्येनादिः । तत्र वेदप्रमाणकं श्रेयःसाधनं ज्योतिष्टोमादि धर्मः इति सूत्रार्थः । स्मृत्यादयोऽपि वेदमूलत्वेनैव धर्मे प्रमाणमिति दर्शयिष्यामः । गोविन्दराजस्तु हृदयेनाभ्यनुज्ञात इत्यन्तःकरणविचिकित्साशून्यः इति व्याख्यातवान् । तन्मते वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म इति धर्मलक्षणं स्यात् । एवं च दृष्टार्थग्रामगमनादिसाधारणं धर्मलक्षणं विचक्षणा न श्रद्दधते । मेधातिथिस्तु हृदयेनाभ्यनुज्ञात इति यत्र चित्तं प्रवर्तयतीति व्याख्याय, अथवा हृदयं वेदः स ह्यधीतो भावनारूपेण हृदयस्थितो हृदयमित्युच्यत इत्युक्तवान् । ममु.

(६) अद्वेषरागिभिः अविहितरागद्वेषशून्यैः । ¶ चव्र. १०

---

¶ काम्यादिसाधारणेऽस्मिन् धर्मलक्षणे व्याख्यानस्यास्यानुपपन्नत्वात् पाठस्यास्य प्रामादिकत्वम् 'अविध्यनुमित' इति पाठस्य प्रामाणिकत्वं च संभाव्यते । विधिशब्देनात्र निषेधोऽपि गृह्यते । 'स्वर्गकामो यजेत' इत्यादिविधिभिः प्रवर्तमानस्य स्वर्गादिविषयको रागोऽनुमीयते । 'मा हिंस्यात्' इत्यादिनिषेधैर्निवर्तमानस्य हिंसादिविषयको द्वेषोऽनुमीयते । तदेतद्विधिनिषेधानुमितरागद्वेषभिन्नरागद्वेषशून्यैरित्यर्थः । तमिमं पाठम् 'अविहितरागद्वेषशून्यैः' इति चव्रव्याख्यानं 'निषिद्धफलकरागद्वेषशून्यैः' इति पव्रव्याख्यानं चानुगृह्णाति ।

$ शेषं गोरागतम् ।

¶ शेषं ब्रकगतम् ।

( ७ ) सद्भिः महाजनैः । अद्वेषरागिभिः निषिद्धरागद्वेषशून्यैः । हृदयेनाभ्यनुज्ञातः अतिश्रद्धाविषयीकृतः । कुर. ७

( ८ ) 'एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्' (मस्मृ. १।११०) इत्यनेन पूर्वाध्याये धर्म उपक्षिप्तस्तमनुष्ठातृविशेषा( नुष्ठितत्वेना )नुष्ठेयत्वेनाऽऽह– विद्वद्भिरिति । विद्वद्भिः धर्मबुद्धया अनुष्ठेयत्वेन वेदवेदार्थविद्भिः । सद्भिः वेदप्रमाणकाग्निहोत्राद्यनुष्ठानवद्भिः । एतेन बौद्धादीनां परजिगीषाकुतूहलादिना वेदतत्त्वार्थवित्त्वेऽपि वेदार्थाननुष्ठातृत्वेनाशिष्टता व्याख्याता । अद्वेषरागिभिरित्यनेन श्येनयागवामदेव्युपासनादीनां वेदबोधितत्वेऽपि दृष्टार्थतया न धर्मतेति दर्शितम् । हृदयेनेति शास्त्रद्वैधे सति साधूनां मनस्सतीवेष्टो यः स धर्मः । तथा च व्यासः– 'वैकल्पिके आत्मतुष्टिः प्रमाणम्' इति । तं निबोधतेत्यन्वयः । मच.

( ९ ) विद्वद्भिः वेदार्थविद्भिः अद्वेषरागिभिः सद्भिः धर्मो नित्यं सेवितः धर्मत्वेन नित्यमनुष्ठितः, न शोकमोहादिना कादाचित्कनिमित्तेन । किंच, हृदयेनाभ्यनुज्ञातः 'इदमेव श्रेयः' इति स्वारस्ययुक्तेन हृदयेन स्वीकृतः । एवंभूतो योऽर्थस्तं धर्मं व्यत्रवत हे महर्षयः, निश्चिनुतेत्यर्थः । § मुक्ता. २

( १० ) अत्र 'यो धर्मः' इति धर्मसामान्यमुद्दिश्य विद्वद्भिरित्यादिना लक्षणं विधीयते । विद्वद्भिः वेदार्थविद्भिः । सद्भिः प्रमातृभिः । अनेन विशेषणद्वयेन वेदप्रमापितत्वं लक्ष्यते । अद्वेषरागिभिः निषिद्धफलकरागद्वेषशून्यैः । अनेन बलवदनिष्टाप्रयोजकत्वं लक्ष्यते । हृदयेनाभ्यनुज्ञातः इत्यनेन श्रेयःसाधनत्वम् । तत्रैव हि मनोऽभिमुखं भवति । तदयमर्थः– बलवदनिष्टाप्रयोजकत्वे सति श्रेयःसाधनतया वेदप्रमापितत्वं तत्त्वमिति । श्येनस्वर्गभोजनव्यावृत्त्यर्थं विशेषणत्रयम् । कादाचित्कदुर्वृत्तपुत्रजनकपुत्रेष्ट्यादिसंग्रहार्थं च बलवदनिष्टं निर्धारणेन विशेषणीयम् । श्येनस्तु न धर्मः, अवधारितबलवदनिष्टप्रयोजकत्वात् । यदि तु पुत्रेष्ट्यादेः फलस्य पुत्रस्य कूटसाक्ष्यकारित्वं ज्योतिःशास्त्रादितोऽवधार्यते तदा पुत्रेष्टिरप्यधर्म एव निर्धारितगवादिपतनसंकीर्णमार्गस्थकूपखननमिव । अथवेष्टतावच्छेदकस्य बलवदनिष्टजनकतानवच्छेदकत्वं वाच्यम् । पुत्रत्वं तु तथा, अभिचारत्वं तु न तथेति तद्व्यावृत्तिः । तथा च जैमिनिः 'चोदनालक्षणोऽर्थो धर्मः' (जैसू. १।१।२) इति धर्मलक्षणमाह । अर्थग्रहणं श्येनव्यावृत्त्यर्थमिति शबरादयः । अनेनाधर्मलक्षणमपि सूचितम् । तच्च बलवदनिष्टानुबन्धित्वेन वेदप्रमापितत्वम् । तदप्युक्तं भाष्यकृता– 'कोऽर्थो योऽभ्युदयाय ? कोऽनर्थो योऽनभ्युदयाय ?' इति । अथवा विधिविषयो धर्मः । रागतः प्राप्तत्वे सति प्रतिषेधविषयोऽधर्मः । श्येनस्तु विधिविषयत्वाद्धर्म एव । तत्फलं त्वभिचारो नाभिचरेदिति निषेधविषयत्वादधर्मः । अत एव च श्येने शिष्टानां विगानम् । पप्र. ३०

शास्त्रविहितकर्मणि प्रवृत्तिः सकामाऽपि
न दोषावहा

**[1]कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।**
**काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥**

( १ ) फलाभिलाषः कर्मप्रवृत्तेर्हेतुर्यस्य स कामात्मा, तद्भावः कामात्मता । तत्प्रधानता आत्मशब्देन प्रतिपाद्यते । सा न प्रशस्ता, निन्दिता । अतश्च निन्दया प्रतिषेधानुमाने 'न कर्तव्या' इति प्रतीयते । अर्थात्सौर्यादीनां सर्वेषां काम्यानां निषेधोऽयम् । अथवा किं विशेषेण ब्रूमः सौर्यादीनामिति ? सर्वमेव क्रियानुष्ठानं फलसिद्ध्यर्थम्, न स्वरूपनिष्पत्तये । न च काचन निष्फला क्रिया । यदपि– 'न कुर्वीत वृथा चेष्टाम्' (मस्मृ. ४।६३) इति, 'भस्मनि हुतम्' (मस्मृ. ३।१८१), 'विषयान्तरे देशराजवार्ता-

§ नन्द., भाच. मुक्तागतम् ।

(१) मस्मृ. २।२ ; विश्व. ३।२१० प्रथमचरणमात्रम् (=) ; मेधा. २।२८,६।७५, १२।९० विश्ववत् ; ममु. ६।७५ विश्ववत् ; आन. ६ कामता (कामतः).

न्वेषणम्' तत्रापि क्रियाफलं विद्यते। किंतु प्रधानफलं स्वर्गग्रामादि पुरुषस्य यद्दृष्टादृष्टयोरुपयुज्यते तदभावाद्वृथा चेष्टेत्युच्यते। अथोच्यते— भवतु क्रिया फलवती, तद्विषयेऽभिलाषो न कर्तव्यः, वस्तुस्वाभाव्यात्फलं भविष्यति। अत्रापि सौर्यादीनामफलत्वम्। काम्यमानं फलं ज्ञातम्। नानिच्छोस्तद्भविष्यतीति। न च लौकिकी प्रवृत्तिर्दृश्यते फलाभिसंधिनिरपेक्षा। न चात्र विशेषः श्रुतौ(? तो) वैदिकेषु कर्मसु फलं नाभिसंधेयमिति। तत्र फलवत्सु श्रुतेषु कामनानिषेधादप्रवृत्तौ श्रुतिविरोधः। नित्येषु तु प्राप्तिरेव नास्ति। विशेषानुपादानाच्च लौकिकव्यापारनिवृत्तौ दृष्टविरोधः। तदिदमापतितम्— 'न किंचित्केनचित्कर्तव्यम्, सर्वैस्तूष्णींभूतैः स्थातव्यम्'। उच्यते— यत्तावदुक्तं काम्येषु सौर्यादिषु निषेधप्रसङ्ग इति, तत्र वक्ष्यति— 'यथासंकल्पितांश्चेह सर्वान् कामान् समश्नुते' (मस्मृ. २।५) इति। निषेधे हि कुतः संकल्पः, कुतश्च कामावाप्तिः? यदपि विशेषानुपादानाल्लौकिकेऽपि प्रसक्त इति, तत्रोपात्त एव विशेषः, 'यो धर्मस्तं निबोधत' इति धर्मस्य प्रकृतत्वात्। यदप्युक्तं नित्येषु फलाश्रवणात्फलाभिसंधेः प्राप्तिरेव नास्ति, किं निषेधेन? इति, तत्राप्युच्यते— फलाभावात्कश्चित्सम्यक्शास्त्रार्थमजानानो न प्रवर्तेत, सौर्यादिषु च श्रुतफलेषु फलाभिसंधिपूर्विकां प्रवृत्तिं दृष्ट्वा सामान्यतोदृष्टेन 'यत्कर्तव्यं तत्फलहेतोः क्रियते' इत्यश्रुतमपि फलमभिसंदधीत, तन्निवृत्त्यर्थमिदमारभ्यते। यद्यप्ययं न्यायः— 'यत्फलवच्छ्रुतं तत्तथैव कर्तव्यम्, यदपि निष्फलमेव कर्तव्यतया शास्त्रेण यावज्जीवादिपदैर्विनैव विश्वजिन्न्यायेन फलकल्पनयाऽवगमितं तस्यान्यथाऽनुष्ठाने प्रसङ्ग एव नास्ति', तथापि य एतं न्यायं प्रतिपत्तुमसमर्थः स वचनेन प्रतिपाद्यते। न्यायतः प्रतिपत्तौ हि गौरवम्, वचनात्तु लघीयसी सुखप्रतिपत्तिरिति सुहृद्भूत्वा प्रमाणसिद्धमर्थमुपदिशति स्म। कामशब्दोऽयं यद्यपि इच्छावचनो दृष्टस्तथापि तस्येहासंभवात्काम इच्छाऽभिलाष इत्यनर्थान्तरम्। तत्र वक्ष्यमाणपर्यालोचनया फलाभिलाषेण न सर्वत्र प्रवर्तितव्यमित्ययमर्थः स्थास्यति। परस्तु कामात्मतामिच्छामात्रसंबन्धमात्रं पदार्थं मन्वानश्चोदयति— न चैवेहास्त्यकामतेति। न चेह लोके काचिदकामिनः प्रवृत्तिरस्तीत्यर्थः। आस्तां तावत्कृषिवाणिज्यादि व्युत्पन्नबुद्धिना क्रियमाणम्, यः स्वयं वेदाधिगमः वेदाध्ययनं बालः कार्यते पित्रादिना ताड्यमानः सोऽपि न काममन्तरेणोपपद्यते। अध्ययनं हि शब्दोच्चारणरूपम्। न चोच्चारणमिच्छया विना निर्घातध्वनिवदुत्तिष्ठति। इच्छति चेत्किमिति ताड्यते? इति। सैव तथेच्छोपजन्यते। अभिमते तु विषये स्वयमुपजायत इत्येतावान् विशेषः। यश्चायं वैदिकः वेदविहितः कर्मयोगः दर्शपूर्णमासादिकर्मानुष्ठाने (? नं) नित्यत्वेनावगतः सोऽपि न प्राप्नोति। न ह्यनिच्छतो देवतोद्देशेन स्वद्रव्यत्यागोपपत्तिः। तस्मात्कामात्मतानिषेधे सर्वश्रौतस्मार्तकर्मनिषेधः प्रसक्त इति। मेधा.

(२) परिभाषान्तरमाह— कामात्मतेति। कामात्मता न प्रशस्ता फलाभिलाषशीलत्वमयुक्तम्, यतः शास्त्रचोदितकर्माणि फलाभिलाषत्यागेनाऽऽचर्यमाणान्यात्मज्ञानसाचिव्येन मोक्षाय कल्पन्ते, फलेच्छया त्वनुष्ठाने तेषां संसारहेतुत्वात्। अस्तु, कामात्मता न प्रशस्तेत्यनेनेच्छा निषिद्धैतन्मत्वा आह— न चैवेति। इच्छामन्तरेण न इह शास्त्रे प्रवृत्तिरस्ति। यस्माद्वेदस्वीकरणं वैदिककर्मसंबन्धश्चाभिलषणीय एव। § गोरा.

(३) धर्ममात्रमभिधेयतया प्रतिज्ञातमत्रावमृशति। कामात्मता रागपरता न प्रशस्ता आयत्यां नाभ्युदयहेतुः, कामतः कर्मणि प्रवृत्तौ पुनःपुनर्वासनानुच्छेदे संसारानुच्छेदात्। न चाकामता इह लोकेऽस्ति। संभवत्वादुपपादयति— काम्यो हीति। वेदानामधिगमः अध्ययनं काम्यः कामविषयः, कामनोपनिबद्धयजनयाजनादितात्पर्येण तत्र प्रवृत्तेः। अध्ययनानन्तरं कर्तव्योऽपि वैदिकः वेदप्रतिपादितः कर्मयोगः कर्मप्रयोगः काम्यः कामनाविषयः। तद्द्वाराऽध्ययनमपि तथेत्यर्थः। मन्वि.

---

§ मम्. गोराग़तम्।

(४) सर्वेषां कर्तव्यस्य तु काममूलता प्रत्यक्षसिद्धा, अतस्तत्र व्यवस्थामाह– कामात्मतेति चतुर्भिः । इहेति प्राणिभूमौ । अतीव फलाभिलाषिता कामात्मता, तदभावस्त्वकामता । तथा च किं कार्यम्? इत्यपेक्षायामाह– वेदाधिगमेति । वेदाधिगमः वेदतदर्थज्ञानम्, वैदिकः वेदप्रमाणकः अग्निहोत्रादिः, चकारात्स्मार्तोऽपि धर्मपत्नीसंयोगादिः काम्यः । एतेनैव पुमर्थसिद्धेः न सर्वत्र काममूलप्रवृत्तिरिति भावः । मच.

(५) चोदितेषु कर्मसु फलाभिसंधिः कामात्मता । सा प्रशस्ता न भवति, किंतु निषिद्धैव । कर्मसु प्रवृत्तिं प्रति सकामता प्रशस्तेवेत्याह– न चैवेहास्त्यकामतेति । ईहा कर्मप्रवृत्तिरेव नास्तीत्यर्थः । अत्र हेतुमाह– काम्यो हीति । हि यस्माद्वेदाधिगमः वेदाध्ययनं तदर्थज्ञानं च, वैदिकः कर्मयोगः वेदोक्तकर्मणामनुष्ठानमपि काम्यः इच्छासाध्यः इत्यर्थः । एवं फलाभिसंधिराहित्येनानुष्ठितं कर्म मोक्षसाधनं भवतीत्यर्थः । आन. ६

(६) अस्मिञ्छास्त्रेऽनुशिष्यमाणस्य धर्मस्य प्रवृत्तिफलस्यापि निवृत्तिफलत्वं क्रियाविशेषसाध्यमिति चतुर्भिः श्लोकैराह– कामात्मतेति । † नन्द.

(७) कामे आत्मा यस्य सः, कामात्मनो भावः कामात्मता प्रशस्ता न । सकामता ईहाः चेष्टाः प्रशस्ता न (?) । वेदाधिगमः काम्यः वेदानामधिगमः अध्ययनं काम्यः कामार्हः, च पुनः कर्मयोगः कर्ममार्गः वैदिकः वेदैश्चोक्तः काम्यः कार्यः । माच.

**[१]संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।**
**व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥**

(१) ततश्च यदुक्तं यागस्य कामेन विना न स्वरूपनिष्पत्तिरिति तदनेन विस्पष्टं कृत्वा कथयति । संकल्पो यागादीनां मूलं कामस्य च । यागादींश्चिकीर्षन्नवश्यं संकल्पं करोति । संकल्पे च क्रियमाणे $ तत्कारणेन कामेन संनिधातव्यमनिष्टेनापि । यथा पाकार्थिनो ज्वलनं कुर्वतस्तत्समानकारणो धूमोऽप्यनिष्टो जायते । तत्र न शक्यं यज्ञादयः करिष्यन्ते, कामश्च न भविष्यतीति । अथ कोऽयं संकल्पो नाम यः सर्वक्रियामूलम्? उच्यते– यश्चेतःसंदर्शनं नाम, यदनन्तरं प्रार्थनाध्यवसायौ क्रमेण भवतः । एते हि मानसा व्यापाराः सर्वक्रियाप्रवृत्तिषु मूलतां प्रतिपद्यन्ते । न हि भौतिका व्यापारास्तमन्तरेण संभवन्ति । तथाहि– प्रथमं पदार्थस्वरूपनिरूपणम् 'अयं पदार्थः इमामर्थक्रियां साधयति' इति यज्ज्ञानं स इह संकल्पोऽभिप्रेतः । अनन्तरं प्रार्थना भवति इच्छा । सैव कामः । 'कथमहमिदमनेन साधयामि?' इतीच्छायां सत्याम् अध्यवस्यति 'करोमि' इति निश्चिनोति सोऽध्यवसायः । ततः साधनोपादाने बाह्यव्यापारविषये प्रवर्तते । तथाहि– बुभुक्षितः आदौ भुजिक्रियां पश्यति, तत इच्छति 'भुञ्जीय' इति, ततोऽध्यवस्यति 'व्यापारान्तरेभ्यो विनिवृत्य भोजनं करोमि' इति, ततः कर्मकारणस्थानाधिकारिण आह 'सज्जीकुरुत रसवतीम्, संचारयत' इति । नन्वेवं सति न यज्ञादयः संकल्पमात्राद्भवन्ति, अपि तु संकल्पप्रार्थनाध्यवसायेभ्यः । तत्र किमुच्यते 'यज्ञाः संकल्पसंभवाः' इति? संकल्पस्याऽऽद्यकारणत्वाददोषः । अत एवोत्तरत्र 'नाकामस्य क्रिया काचित् दृश्यते' इति वक्ष्यति । व्रतानि । मानसोऽध्यवसायो व्रतम् 'इदं मया यावज्जीवं कर्तव्यम्' इति यद्विहितम् । यथा स्नातकव्रतानि । यमधर्माः प्रतिषेधरूपाः अहिंसादयः । कर्तव्येषु प्रवृत्तिः निषिद्धेभ्यो निवृत्तिः नान्तरेण संकल्पमस्ति । मेधा.

(२) तदनु च अध्यवसायः भौतिकव्यापारेण करणोद्योगो भवति । ¶ गोरा.

(३) तथाऽपरमप्याह– संकल्पेति । संकल्पः एतत्फलं मम संपद्यतामिति फलाभिलाषः । तन्मूलः

† शेषम् आनगतम् ।

(१) मस्मृ. २।३ ; मेधा. ११।२३० प्रथमचरणमात्रम् ; आकं. १२ व्रतानि य (व्रतं नि्य).

$ तत्कारणकेनेत्यर्थः ।

¶ शेषं मेधागतम् ।

कामः साक्षात्प्रयत्नहेतुः तत्साधनविषयेच्छा । न चैतावता वैदिककर्मणां कामहेतुकता सिध्यतीत्यत उक्तम्— यज्ञा इति । यज्ञाः पाकयज्ञहविर्यज्ञसोमयज्ञजपयज्ञरूपाः । व्रतानि स्नातकव्रतादीनि । यमाः निषिद्धाननुष्ठाननियमाः । सर्वे संकल्पजाः संकल्पाच्च कामः इति । सर्वाणि रागजानि, रागश्च तद्विरुद्धविषयद्वेषानुबन्धः । ततः कथं धर्मद्वेषिणां विदुषां रागद्वेषराहित्यं संभवति ? इत्याक्षेपतात्पर्यम् । मवि.

(४) अत्रोपपत्तिमाह— संकल्पेति । व्रतानि यमरूपाश्च धर्माश्चतुर्थाध्याये वक्ष्यमाणाः । सर्व इत्यनेन पदेन अन्येऽपि शास्त्रार्थाः संकल्पादेव जायन्ते । इच्छामन्तरेण तान्यपि न संभवन्तीत्यर्थः । गोविन्दराजस्तु व्रतान्यनुष्ठेयरूपाणि यमधर्माः प्रतिषेधार्थका इत्याह । ‡ ममु.

(५) स च कामः संकल्पमूल इत्याह— संकल्पमूल इति । 'काम जानामि ते मूलं संकल्पात्किल जायसे' इत्याद्युक्तेः । यज्ञाः संकल्पसंभवा इति । 'मनसा संकल्पयति वाचा विलपति कर्मणा चोपपादयति' इति श्रुतेः । § मच.

(६) एतदेव प्रपञ्चयति— संकल्पमूलमिति । संकल्पः कर्मानुष्ठानाध्यवसायः । तस्य मूलं कारणं कामः । यज्ञा इति गृहस्थधर्मो लक्ष्यते । व्रतानीति ब्रह्मचारिधर्माः । यमधर्माः इति वानप्रस्थसंन्यासिधर्माः । नन्द.

**'अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् ।**
**यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥**

(१) पूर्वेण शास्त्रीये प्रवृत्तिनिवृत्ती संकल्पाधीने व्याख्याते । अनेन लौकिकेषु कर्मसु तदधीनतोच्यते इति विशेषः । नेह लोके कर्हिचित् कदाचिदपि जाग्रदवस्थायां क्रिया काचिदनुष्ठेयत्वेनानिच्छतः संभवति । यत्किंचिल्लौकिकं वैदिकं वा कुरुते कर्म विहितं प्रतिषिद्धं च तत्सर्वं कामस्य चेष्टितम् । ¶ मेधा.

(२) किंचान्यापि या काचित्क्रिया, काममूलैवेत्याह— अकामस्येति । कारणप्रोषितं व्यतिरेकमुक्त्वाऽन्वयमाह— यद्यद्धीति । मवि.

(३) किंच, प्रकृतेः काममूलतामन्वयव्यतिरेकाभ्यामाह— अकामस्येति । नात्र प्रमाणयुक्त्यपेक्षेति भावः । मच.

(४) आश्रमाणां तत्तत्प्रधानत्वाद्व्यतिरेकान्वयाभ्यामेतदेव निगमयति— अकामस्येति । नन्द.

**'तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् ।**
**यथा संकल्पितांश्चेह सर्वान्कामान्समश्नुते ॥**

(१) हेतुत्वाचेष्टितं कामस्यैवेत्युक्तम् । तदिदमतिसंकटं कामात्मता न प्रशस्ता, न चानया विना किंचिदनुष्ठानमस्ति । अत्र प्रतिविधत्ते— तेष्विति । तेषु कामेषु सम्यग्वर्तितव्यम् । का पुनः सम्यग्वृत्तिः ? यद्यथा श्रुतं तत्तथैवानुष्ठेयम् । नित्येषु फलं नाभिसंधेयम्, अश्रुतत्वात् । काम्येषु त्वनिषेधः, तेषां तथाश्रुतत्वात् । फलसाधनतयैव तानि विधितोऽवगम्यन्ते । फलानिच्छोस्तदनुष्ठानमश्रुतकरणं स्यात् । नित्येषु फलाभिसंधिर्व्यामोह एव । न ह्यभिसंधिमात्रात्प्रमाणतोऽनवगते फलसाधनत्वे फलमुत्पद्यते । एवं कुर्वन् गच्छति प्राप्नोति अमरलोकताम् । अमराः देवाः, तेषां लोकः स्वर्गः । तन्निवासात् अमरेषु लोकशब्दः स्थानस्थानिनोरभेदात् 'मञ्चाः क्रोशन्ति' इतिवत् । तेनायं समासः— अमराश्च ते लोकाश्च अमरलोकाः, तद्भावः अमरलोकता । देवजनत्वं प्राप्नोति देवत्वं प्राप्नोतीत्यर्थः । वृत्तानुरोधादेवमुक्तम् । अथवा अमरान् लोकयति पश्यति अमरलोकः । 'कर्मण्यण्' (पासू. ३।२।१) । तदन्ताद्भाव-

‡ शेषं मेधागतम् ।
§ शेषं गोरागतम् ।

(१) मस्मृ. २।४ ; मेधा. २।३ ( नाकामस्य क्रिया काचिद् दृश्यते ) एतावदेव ; पत्र. ७० किंचित्त ( जन्तुस्त ) उत्त.

¶ गोरा., ममु., भाच. मेधागतम् ।

(१) मस्मृ. २।५ ; मेधा. २।२ उत्त. ; आन. ७.

प्रत्ययः । देवदर्शी संपद्यते । अनेनापि प्रकारेण स्वर्गप्राप्तिरेवोक्ता भवति । अथवा अमर इव लोक्यते लोके । अर्थवादश्चायम् । नात्र स्वर्गः फलत्वेन विधीयते, नित्यानां फलाभावात्काम्यानां च नानाफलश्रवणात् । तेन स्वर्गप्राप्त्या शास्त्रानुष्ठानसंपत्तिरेवोच्यते लक्षणया । यदर्थं कर्मणामनुष्ठानं तत्संपद्यत इत्यर्थः । तत्र नित्यानां प्रत्यवायानुत्पत्तिर्विध्यर्थसंपत्तिर्वा प्रयोजनम् । काम्येषु तु यथा संकल्पितान् यथाश्रुतं संकल्पितान् । प्रयोगकाले यस्य कर्मणो यत्फलं श्रुतं तत्संकल्प्य अभिसंधाय मनसा कामयित्वा 'इदमहमतः फलं प्राप्नुयाम्' इति, ततः सर्वान् कामान् काम्यानर्थान् समश्नुते प्राप्नोति । अतः परिहृता संकटापत्तिः, यतो न सर्वविषयः कामो निषिध्यते । किं तर्हि ? नित्येषु फलाभिलाषलक्षणः । साधनसंपत्तिस्तु काम्यैव । ब्रह्मवादिनस्तु सौर्यादीनां निषेधार्थं कामात्मतेति मन्यन्ते । फलार्थितया क्रियमाणा बन्धात्मका भवन्ति, निष्कामस्तु ब्रह्मार्पणन्यायेन कुर्वन् मुच्यते । तदुक्तं भगवता कृष्णद्वैपायनेन 'मा कर्मफलहेतुर्भूः' (भगी. २।४७) । तथा 'साधनानामकृत्स्नत्वान्मौख्यात्कर्मकृतस्तथा । फलस्य चाभिसंधानादपवित्रो विधिः स्मृतः ॥' इति । बहवश्चात्र व्याख्याविकल्पाः, असारत्वात्तु न प्रदर्शिताः । † मेधा.

(२) अत्र परिहारमाह— तेष्विति । नात्रेच्छा निषिध्यते, अपि तु यथा श्रुतं तत् तथैवानुष्ठेयमितीयं सम्यग्वृत्तिः (विधीयते) । तत्र तेषु कर्मसु फलाभिलाषत्यागेन प्रवर्तमानो बन्धात्मकत्वाभावात् अमरलोकताम् अमरधर्मित्वं मोक्षं प्राप्नोति । इह संसार आत्मज्ञानाभ्यासेनाष्टगुणैश्वर्ययोगात् यथाभिलषितान् सर्वान् अर्थान् समश्नुते । ¶ गोरा.

(३) फलार्थं तु कृतैः यथा संकल्पितान् कामान् काम्यानि फलानि अश्नुते । § मवि.

† भाच. मेधागतम् ।

¶ ममु. गोरावत् ।

§ शेषं गोरागतम् ।

(४) ततः किमित्याह— तेष्विति । तेषु कर्मसु सम्यगिति अर्थकामाद्युपाधिं विना प्रवर्तते योऽनुष्ठाता सः अमरलोकतां स्वर्गं साक्षात् मुक्तिं वा सत्त्वशुद्धिद्वारेति भावः । इह च मर्त्यलोके कामान् पशुपुत्रादीन् अश्नुते प्राप्नोति । इह संकल्पितान् वा परलोके प्राप्नोति, 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छाउ. ३।१४।१) इति श्रुतेः । क्रतुरत्र संकल्पः । मच.

(५) तेषु वेदोक्तकर्मसु सम्यक् निष्कामनया वर्तमानः कर्म कुर्वाणः अमरलोकतां मरणरहितलोकतां मुक्तिमित्यर्थः । इह अस्मिन् लोकेऽपि यथा यथायोग्यम् अनिषिद्धमिति यावत् असंकल्पितान् भोगांश्च समश्नुते प्राप्नोतीत्यर्थः । फलेच्छाराहित्येन कर्म कुर्वाणस्यापि स्वयमेवानिषिद्धा भोगा उत्पद्यन्त इत्यर्थः । आन. ७

(६) केचित्तु वक्ष्यमाणयोर्धर्मप्रवृत्तिनिवृत्त्योः प्रतिपक्षनिराकरणपरत्वेन श्लोकचतुष्टयमिदानीं व्याचक्षते — कामात्मतेति । कामात्मता निषिद्धेष्वपि प्रवर्तकः कामप्रकर्षः । 'न चैवेहास्त्यकामता' इति कामस्यात्यन्तोच्छेदः प्रतिषिध्यते, कार्यवशेन कामस्यावर्जनीयत्वात् । अविहितत्वेन सर्वत्र कामो दुस्त्यज इत्यर्थः । 'काम्यो हि' इत्यर्धेन कारणतोऽपि कामस्यावर्जनीयत्वं प्रतिपाद्यते । संकल्पमूलमिति । सम्यगधिगतं ज्ञानं संकल्पः । तत्संभवो यज्ञाद्यनुष्ठानलक्षणः कामोऽपि संकल्पमूलत्वेनावर्जनीयः सिद्ध इत्यर्थः । 'अकामस्य' इत्यत्र नास्ति व्याख्याविकल्पः । तेष्विति । सम्यग्वर्तमानः समीचीनकामः समीचीनसंकल्पश्च । अमरलोकतां देवत्वमिति । ‡ नन्द.

[१]असद्वृत्तस्तु कामेषु कामोपहतचेतनः ।
नरकं समवाप्नोति तत्फलं न समश्नुते ॥
तस्माच्छ्रुतिस्मृतिप्रोक्तं यथाविध्युपपादितम् ।
काम्यं कर्मेह भवति श्रेयसे न विपर्ययः ॥

‡ शेषम् आनगतम् ।

(१) मस्मु. २।५ इत्यस्यानन्तरं प्रक्षिप्तं श्लोकद्वयं मण्डलिकसंपादितपुस्तके.

[1]श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥

(१) यो नास्तिकतया वैदिकानि निष्फलानि कर्माणीति व्यामुग्ध न तदनुष्ठाने प्रवर्तेत तस्य प्रवृत्त्यर्थं सुहृद्भूत्वा दृष्टफलप्रदर्शनं करोति। तिष्ठतु तावदन्यत्फलम्, श्रुतौ स्मृतिषु च यत् उदितम् उक्तं धर्माख्यं कर्म तदनुतिष्ठन् इह अस्मिंल्लोके यावज्जीवति तावत् कीर्तिं प्रशस्यतां पूज्यतां सौभाग्यं लभते । न्याय्ये पथि स्थितो महापुण्योऽयमिति सर्वेण पूज्यते, प्रियश्च सर्वस्य भवति । प्रेत्य देहान्तरे यस्मात् अन्यत् उत्तमं नास्ति तत्सुखं प्राप्नोति । प्रायेण स्वर्गकामस्याधिकारः, निरतिशया च प्रीतिः स्वर्गः, तत उच्यते अनुत्तमम् इति । तस्मान्नास्तिकस्यापि दृष्टफलार्थिनोऽत्रैव प्रवृत्तिर्युक्तेत्येवंपरमेतत् । † मेधा.

(२) सद्भूतगुणाख्यानेनानुष्ठानस्तुतिः प्ररोचनार्था। न ह्यकस्मान्निष्प्रयोजना स्तुतिः प्रवर्तत इत्येवं सर्वत्रेह श्रुतिषु ज्ञेयम्। § गोरा.

(३) अनुत्तमं सुखमिति यथाप्राप्ततत्तत्फलोपलक्षणार्थम् । ‡ कु. १४

(४) अत्र फलमाह— श्रुतीति । श्रुतिस्तत्कालोपलभ्या । अनुत्तमं सुखं स्वर्गाख्यं मोक्षाख्यं च । अत्र च शीलादीनामनुक्तिरपकृष्टत्वकथनार्थम् । अत एव वक्ष्यमाणस्य श्रुतिस्मृत्यमीमांस्यत्वस्य शीलादावपि प्रसङ्गं निवारयितुं श्रुतिस्मृतिपदार्थौ व्याकर्तव्यौ । मवि.

(५) अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्ममनुतिष्ठेदिति विधिः कल्प्यते । § ममु.

(६) किंच— श्रुतीति । अनुत्तमं नास्त्युत्तमं यस्मात् । मानवः, 'मनुष्याधिकारकं शास्त्रम्' इति न्यायात् । मच.

(७) श्रुतिस्मृत्योस्तुल्यकक्षतां विशदयति— श्रुतीति । नन्द.

त्रिवर्गः धर्मार्थकामाः समुच्चित्य श्रेयः

[1]धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥

(१) यत्प्रशस्यं यदाचर्यमाणं दृष्टादृष्टे नोपहन्ति यत् (? तत्) श्रेयो लोके उच्यते, किं पुनस्तत् ? इति सुहृद्भूत्वाऽन्वाचष्टे । नायं वेदमूलोऽर्थः, नाऽऽचार्यादिशब्दवत्पदार्थकथनम् । किं तर्हि ? श्रेयोऽर्थी सर्वः पुरुषः प्रवर्तते । तत्रेदमुच्यते— इदं श्रेयः, एतदर्थे यत्नः कर्तव्यः । तत्र मतान्तराणि तावदुपन्यस्यति । केषांचिन्मतं धर्मार्थौ श्रेयः । धर्मः शास्त्रविहितौ विधिप्रतिषेधौ । अर्थः गोभूमिहिरण्यादिः । एतदेव श्रेयः, एतदधीनत्वात्पुरुषप्रीतेः । अपरं मतं कामार्थाविति । कामस्तावन्मुख्य एव पुरुषार्थः । प्रीतिर्हि श्रेयः । अर्थोऽपि तत्साधनत्वात् । एवं हि चार्वाका आहुः— 'काम एवैकः पुरुषार्थस्तस्य साधनमर्थः धर्मोऽपि यद्यस्ति' । धर्म एव सर्वेभ्यः श्रेयान्, सर्वस्य तन्मूलत्वाच्च । उक्तं च— 'धर्मादर्थश्च कामश्च' इति । अर्थ एवेति वणिजः प्रयोगजीविनः । सिद्धान्तस्तु त्रिवर्ग इति तु स्थितिः । अतो धर्माविरोधिनावर्थकामावपि सेवितव्यौ, न तद्विरोधिनौ । तथा च गौतमः— 'न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्यात् यथाशक्ति धर्मार्थकामेभ्यः' (गौध. ९।४६) इति । त्र्यात्मको वर्गस्त्रिवर्गः । त्रिषु समुदितेष्वयं रूढः । मेधा.

(२) न च ब्रह्मचारिणः कामसेवनमतो नोपदिश्यते, श्रेयःपदार्थनिरूपणपरत्वात् । ¶ गोरा.

(३) अत्र प्रसङ्गेन पुरुषार्थं निरूपयति— धर्मार्थाविति । धर्मार्थयोरेव प्रयत्नसंभवात् । धर्मस्याप्यर्थद्वारा कामहेतुत्वेनैवोपादेयत्वम् । $ तेन कामस्ततः साक्षात्

† भाच. मेधागतम् ।
§ शेषं मेधागतम् ।
‡ कुर., पप्र. कगतम् ।

(१) मस्मृ. २।९; कु. १४; चव. १४ चानु (वाप्नु); कुर. १८; गप. १० त्युदितं (त्युचितं); मुक्ता. १६६ मं सुखम् (मां गतिम्).

¶ शेषं मेधागतम् ।

$ पूर्वोक्तहेतुना कामः पुरुषार्थः, धर्मार्थयोर्मध्ये धर्मस्य न साक्षात् कामहेतुत्वम्, अर्थस्य तु साक्षात्

(१) मस्मृ. २।२२४.

न हेतुरर्थश्च हेतुरित्यन्ये । धर्मश्च सर्वमूलत्वात् धर्म एवेत्यन्ये । इह लोकेऽर्थ एव कामहेतुतया श्रेयानित्यन्ये । स्वमतमाह– त्रिवर्ग इति । अन्योन्यवादिकथितयुक्तिभि- त्रयाणां पुरुषार्थानां वर्गः समूहः श्रेयः । मोक्षार्थिनां विरलप्रचारत्वेनात्र मोक्षो न गणितः । मवि.

(४) एवं च मुमुक्षून्प्रत्युपदेशः, न मुमुक्षून् । मुमुक्षूणां तु मोक्ष एव श्रेयः इति षष्ठे वक्ष्यते । † ममु.

(५) स्थितिः शास्त्रमर्यादा । मोक्षरूपश्रेयसो वक्ष्यमाणत्वात् श्रेयः सोपाधिकसुखम् । † मच.

(६) काम एव श्रेयो धर्मकामौ वा श्रेय इति संभवतोरपि पक्षयोर्हेयत्वमनुपन्यासादेव सूचितम् । † नन्द.

(७) इति त्रिवर्गस्थितिः । † भाच.

नित्यमनुष्ठेयः स्वधर्मो वेदविहितः
परमगतिफलकः

¶ 'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ॥

(१) वेदमूलत्वात् स्मृतीनां वेदोदितमिति श्रूयते । स्वकं कर्म वक्ष्यमाणो व्रतसमूहः । विहितत्वात् स्वक- मित्युच्यते । नित्यं कुर्यात् यावज्जीवम् । अतन्द्रितः अनलसः । एतद्व्रतधारणं कुर्वन् यथाशक्ति । अनेन सत्यां शक्तौ यथासंभवमनुष्ठानमाह । तदुक्तम्– 'मनसा वा तत्समग्रमाचारमनुपालयन् ।' परमां गतिं ब्रह्मत्वप्राप्तिरूपाम् । मेधा.

(२) श्रौतं वेदोदितं स्मार्तमपि च वेदमूलत्वा- द्वेदोक्तं स्वकं यदत्र च उदितं कर्म नित्यम्, न काम्यम्, तत् अनलसः सन् कुर्यात् यस्माद्यथाशक्ति कुर्वन् नित्यकरणात्पापक्षयानुत्पत्तिभ्यां काम्याकरणाच्च फलहेतुधर्माभावे सति शुभाशुभकार्याभावान्मोक्षं प्राप्नोति । गोरा.

(३) कर्म च परमात्मज्ञानसहितं मुक्तये कल्पत इति व्याख्येयम्, वचनान्तरवशात् ।

¶ अप. १।१५४ पृ.२१७

(४) वेदोदितं प्रत्यक्षानुमेयवेदबोधितम् । यथा- शक्ति असंभवे किंचिदङ्गहानेनापि । † गृक. २७४

(५) स्वकं स्वाश्रमवर्णोक्तम् । कुर्याद्यथाशक्ति । $ मवि.

(६) एतत् स्मार्तस्यापि प्रदर्शनार्थम् ।

स्मृच. २।४११

(७) एतच्च नित्यविषयम् । गृर. ४८२

(८) (नित्यं) यावज्जीवम् । ... नित्यकर्मानुष्ठा- नात्पापक्षये सति निष्पापान्तःकरणेन ब्रह्मसाक्षात्कारा- न्मोक्षावाप्तेः । तदुक्तं मोक्षधर्मे– 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । तत्राऽऽदर्शतलप्रख्ये पश्यत्या- त्मानमात्मनि ॥' (भा. १२।१९७।८) । आत्मनि अन्तःकरणे । ¶ ममु.

(९) किंच– वेदेति । वेदोदितं स्वशाखोक्तं स्मार्तं च । परमां गतिं सत्त्वशुद्धिद्वारा । मच.

(१०) शक्तिमनतिक्रम्य यथाशक्ति, अनुपेक्षक इति यावत् । आन. १५७

(११) व्रतविधेर्वक्ष्यमाणस्य वैदिकत्वं वक्ष्यमाणफलं चाऽऽह– वेदेति । वेदोदितं वेदमूलतया स्मृत्युदितम् । नन्द.

---

कामहेतुत्वम्, ततोऽर्थः पुरुषार्थ इति द्वितीयपक्षसमर्थनमत्र चिकीर्षितमिति भाति। ग्रन्थतस्तु न तत् सम्यक् प्रतीयते।

† शेषं मेधागतम् ।

¶ वचनस्यास्य मेधा-नन्दनमतेन वक्ष्यमाणस्नातक- व्रतमात्रविषयकत्वेन गृहस्थधर्मप्रकरणे संग्राह्यत्वेऽपि तदन्यमतेन सकलवर्णाश्रमकर्मविषयकत्वादत्र संगृहीतम्।

(१) मस्मृ. ४।१४ ; समु. ६८ ; अप. १।१५४ पृ. २१७ ; गृक. २७४ ; स्मृच. २।४११ ; गृर. ४८२ ; पमा. १।५२ तन्द्रितः (तन्त्रितः) ; निप्र. २।३३१ (अतन्द्रितः०) पू. ; मुक्ता. ३५५,४५७ ; पप्र. ४८ ; आन. १५७ : ४०० नित्यं (यथा) ; सन्न. ४।२५९ प्रथमचरणमात्रम् .

¶ शेषं गोरागतम् ।

† शेषं मेधागतम् ।

$ भाच. मविगतम् ।

'श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥

(१) श्रुतिस्मृतिभ्यां सम्यगुक्तं स्वेषु चाध्ययनयागादिष्वङ्गत्वेन संबद्धं धर्मस्य मूलभूतं साध्वाचारमनलसः सन् अभीक्ष्णमनुतिष्ठेत् । गोरा.

(२) धर्ममूलं धर्मसाधनम् । स्वेषु (कर्मसु) स्ववर्णाश्रमकर्मसु । निबद्धं तत्कर्मानुगुणम् । ¶ मवि.

(३) (निषेवेत) नितान्तं सेवेतेति सामान्येनाऽऽचारानुष्ठानोपदेशः फलकथनाय । $ ममु.

(४) सदाचारं 'दूर्वाभिः पूयते विप्रः' इत्यादिना आचमनाद्यनुष्ठानम् । धर्ममूलं अङ्गारपात्रादिधारणलक्षणशिरोव्रतादिधर्महेतुः । ‡ मच.

(५) धर्मस्य मूलं धर्ममूलम्, धर्मस्याऽऽचाराधीनत्वम् (? त्वात्) । मुक्ता. ४

(६) धर्ममूलत्वं च 'आचारप्रभवो धर्मः श्रुत्युक्तः स्मार्त एव च' (मस्मृ. १।१०८) इत्यत्र प्रतिपादितम् । § नन्द.

सदाचारः ऐहिकहितकरः, दुराचारः ऐहिकहितविरोधी

'आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥

(१) न चायमेष विद्वत्तादिगुणसंपन्नः साध्यते । प्रजाया ह्येते गुणाः प्रार्थ्यन्ते । तदुक्तम्— 'तया गवा किं क्रियते या न धेनुर्न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥' । अक्षय्यमपि प्र(? व्यम् अतिप्र)भूतं यदसद्व्यसनैरपि अक्षयम् । अलक्षणं स्कन्धोपरितिलकादि दारिद्र्यादिदौर्भाग्यसूचकम् । तदप्याचारो हन्ति । तेन ह्यधर्म आचारपरत्वेन नश्यति । मेधा.

(२) यदर्थमाचारस्य पुनर्वचनं तदाह— आचारादिति । आयुरिष्टापत्याक्षयधनानि आचारात् तदनुष्ठानात् लभते । दुष्टलक्षणं च प्रियभार्याविनाशसंसूचकं तिलकादि आचारो निष्फलीकरोतीत्याचारफलकथनम् । न चानित्यतापत्तिः, 'सावित्रीसारमात्रोऽपि' (मस्मृ. २।११८) इत्यादिना नित्यत्वस्य समर्पितत्वात् । $ गोरा.

(३) आचारः आवश्यकं कर्म । अक्षय्यम् अतिप्रभूतम् इत्यर्थः । † व्रक. १६

(४) आचारात् धर्माचरणात् । अलक्षणम् अलक्ष्मीम् । ¶ मवि.

(५) आचारानुष्ठानं स्तौति— आचारादिति । आचारः स्मार्ताचमनादिः । अक्षय्यं कुशपवित्रादि (?) । अलक्षणं निन्दितरोगपरदारादिसेवनम् । मच.

'दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥

(१) यस्मात् दुराचारः पुरुषो लोके च गर्हितः सर्वदा च दुःखितो व्याधितोऽल्पायुर्भवति तस्मात् स्वाचारेण भाव्यम् । $ गोरा.

(२) दुराचारः निन्दिताचारः । व्रक. १७

(३) दुराचारः दुष्टाचरणशीलः । मवि.

(४) दुराचारः मन्दाचारः । कुर. २४

(५) विपक्षे त्वाह— दुराचार इति । मच.

(६) दुराचारः अश्रद्दधानः । भाच.

---

¶ शेषं गोरागतम् ।

$ शेषं गोरावत् ।

‡ शेषं मविगतम् ।

§ शेषं गोरागतं मविगतं च ।

(१) मस्मृ. ४।१५५ ; मुक्ता. ४ सम्यङ्निबद्धं (कुर्यान्निबद्धः).

(२) मस्मृ. ४।१५६ ; मेधा. ५१२ प्रथमचरणमात्रम् ; अप. १।१५४ पृ. २३१ ; व्रक. १६ ; कुर. २० ; निप. ६ ; मिप्र. १।१२ ; मुक्ता. ४.

$ ममु. गोरागतम् ।

† शेषं मेधागतम् । कुर. व्रकवत् ।

¶ भाच. मविगतम् ।

(१) मस्मृ. ४।१५७ ; अप. १।१५४ पृ. २३१ ; व्रक. १७ मनुवसिष्ठौ ; कुर. २४ सर्वं व्रकवत् ; मुक्ता. ४.

**'सर्वलक्षणहीनोऽपि यः सदाचारवान् नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥**

( १ ) यः सम्यगाचारवान् श्रद्दधानः अकुत्सकः स आजानुबाहुत्वादिसर्वप्रशस्तलक्षणशून्योऽपि वर्षशतं जीवति । प्रथमेऽध्याये शास्त्रस्तुत्यर्था आचारस्तुतिः, इह त्वाचारफलसमर्पणार्थमेतत् । § गोरा.

( २ ) लक्षणम् एतज्जन्मशुभसूचकं कुलरेखादि । सदाचारः समीचीनाचारः । तत्राऽऽचारे श्रद्दधानः । अनसूयः परगुणसहनः । मवि.

( ३ ) सदाचारः सतामाचारे (? चारः । सदाचारे) श्रद्दधानः । मच.

सुखदुःखयोः स्वरूपम्

**'यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥**

( १ ) यत्परप्रार्थनया स्वपरहितादि क्रियते तत्परवशं वर्ज्यते, न तु यद्वृत्तिसाध्यमार्त्विज्यादि । तद्धि स्ववशमेव । तद्विषयकमेव भृत्यादि स्वीक्रियते । न चानेन परवशमपि दीक्षितस्य निषिध्यते, स्मृत्या श्रुतिं बाधितुमन्याय्यत्वात्, उक्ते च विषये सावकाशत्वात्स्मृतेः । यत्त्वात्मनो वश्यं स्वल्पया धनमात्रया परोपकारः स्वल्पोऽपि तं स्वयमेव कुर्यात् । नित्यकर्मासंपत्तौ कुटुम्बोपयोगिनि धनेऽसति कर्तव्यैव याच्ञा उपायान्तराभावे । किन्तु(? न तु) 'विशेषतो यक्ष्ये', 'विशेषतो दास्ये' इति । सत्यां कस्यांचिद्धनमात्रायां संतोषपरेण भवितव्यमित्येवमस्य तात्पर्यम् । § मेधा.

( २ ) परवशं नित्यं पराधीनं कर्म इष्टार्थम् । मवि.

( ३ ) यद्यत्स्वाधीनदेहव्यापारसाध्यं परमात्मध्यानादि तत्तद्यत्नतोऽनुतिष्ठेत् । $ ममु.

( ४ ) नैतादृशं दुःखहेतुरित्यनुभवाविरुद्धमाह— यदिति त्रिभिः । अध्यापनादि त्रितयं परित्यज्य यथालाभेन संतुष्टो वेदानभ्यसेदिति तात्पर्यार्थः । मच.

( ५ ) परवशं पराधीनम् अनावश्यकं यत्कर्म तत्फलवदपि वर्जनीयमित्यर्थः । नन्द.

**'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥**

( १ ) याच्ञां निन्दति— यत्परवशं तत्सर्वं दुःखम् । तिष्ठतु तावत्परस्य गृहद्वार्युपस्थानमनुवृत्तिरत्र चामुत्र च भ्रमणम् । यत्तु— 'संकल्प एव याच्ञायां हृदयं म प्रसह्यते । नूनं मायामसंदिग्धां सृष्टिर्नासौ स्वयंभुवः ॥' समासेन संक्षेपेण एतत् दुःखस्य लक्षणं या याच्ञा, सुखं चैतद्याऽस्पृहा । मेधा.

( २ ) यत्परप्रार्थनादिसंसाध्यं तत्सर्वं दुःखहेतुः, यच्चाऽऽत्मैकसाधनं तत्सर्वं सुखनिमित्तमित्येतत् संक्षेपतः सुखदुःखलक्षणं जानीयात् । ‡ गोरा.

( ३ ) लक्षणं कारणम् । मवि.

( ४ ) आत्मवशं देहमात्रनिर्वाह्यम्, 'शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम्' इति गीतोक्तेः । समासेन संक्षेपेण लक्षणं गमकम् । मच.

( ५ ) यस्मादेवं तस्मादिदं मनसि कर्तव्यमित्याह— सर्वमिति । नन्द.

§ ममु. गोरागतम् ।

(१) मस्मृ. ४।१५८ ; अप. १।१५४ पृ. २३१ यः सदाचा ( सर्वदाऽऽचा ) ; बक. १६ मनुवसिष्ठयमाः ; कुर. २१ यः सदा (समुदा) मनुवसिष्ठयमाः ; मुक्ता. ४ ; विपा. ३।२।४०२ यः सदा ( सम्यगा ) (=).

(२) मस्मृ. ४।१५९ ; अप. १।१५४ पृ. २२४ त्सेवेत यत्नतः ( द्यत्नेन सेवयेत् ) ; गृक. २८७ ; गृर. ४९३ तत्तद्य ( तत्प्रय ) स्यात्तत्तत्से ( स्यादेतत्से ) ; मपा. १४ तु स्यात् ( कर्म ) ; गप. ९ मपावत् ; मुक्ता. ४६०.

§ गोरा., गृक., गृर. मेधागतम् ।

$ शेषं मेधागतम् ।

‡ ममु. गोरागतम् ।

(१) मस्मृ. ४।१६० ; अप. १।१५४ पृ. २२४ ; गृक. २८७ ; गृर. ४९३ ; मपा. १४ ; गप. ९ ; मुक्ता. ४६० ; आन. ६४६ सर्वं ( यद्यत् ).

आत्मतुष्टिः धर्मलक्षणम्

**'यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।**
**तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥**

( १ ) आत्मतुष्टेः प्रागुक्तायाः पुनर्वचनं स्मरणार्थम् । विषयश्च तस्या दर्शित एव । यत्र कर्मणि क्रियमाणे किंकथिका न भवति तत्कर्तव्यम्, यत्र तु हृदयं न तुष्यति तद्वर्जनीयम् । मेधा.

( २ ) अशिष्टाप्रतिषिद्धं वैकल्पिकं वा यत्कर्मानुतिष्ठतः पुंसोऽन्तरात्मनः परितोषो भवति तद्यत्नतः कुर्वीत । आत्मातुष्टिकरं पुनर्वर्जयेत् । † गोरा.

( ३ ) यत्कर्म धर्मम् इत्यर्थः ।
अप. १।१५४ पृ. २२४

( ४ ) परितोषः ' धर्मसाधनं ममैतत् ' इति बुद्ध्या प्रीतिः । एतच्च बहुषु धर्मप्रकारेषु मध्ये द्रष्टव्यम् । एतदेव ' स्वस्य च प्रियमात्मनः ' ( मस्मृ. २।१२ ) इति प्रागुक्तम् । विपरीतं यत्र न कदाचित्परितोषः । मवि.

( ५ ) यत्कर्म कुर्वत इत्यादिना तुष्टेः पुनर्वचनं तु स्नातकव्रतत्वख्यापनाय । ‡ गृर. ४९३

( ६ ) किंच, परवशमपि पुत्रोत्पादनादि कार्यम्, अन्तरात्मनः मनसः संतोषहेतुत्वात् । तद्विपरीतं पारदार्यादि न कार्यम्, तस्योदर्के असंतोषहेतुत्वात् । मच.

( ७ ) एवं वर्जनीयं च कार्यं च यत्तल्लक्षणमुक्तम् । इदानीं लक्षणान्तरमाह— यत्कर्मेति । सतामयमुपदेशः, नासताम् । नन्द.

† ममु., मपा., गप., भाच. गोरागतम् ।

‡ निप्र. गृरवत् ।

(१) मस्मृ. ४।१६१ ; अप. १।१५४ पृ. २२४ ; गृक. २८७ ; मवि. २।६ (यत्कर्म कुर्वतोऽस्य स्यात्परितोषः ) एतावदेव ; गृर. ४९३ ; पमा. १।५२३ तोऽस्य स्यात् ( तोऽप्यस्य ) ; मपा. १४ ; निप्र. २।३३४ तु व ( विव ) ; गप. ९.

अधर्माचरणस्य दुःखात्मकः परिपाकोऽपरिहार्यः

**'न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।**
**अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥**

( १ ) धर्मः शास्त्रमर्यादा, तेन वर्तमानः सीदन्नपि अवसादमपि प्राप्नुवन् नाधर्मे मनो निवेशयेत् । यतः अधार्मिका यद्यपि चौर्योत्कोचदम्भादिभिर्धनसमृद्धा दृश्यन्ते, तथापि तेषामाशु विपर्ययो दृश्यते धननाशादिः, अतो न धर्माद्विचलेत् । $ मेधा.

( २ ) यथा धर्मशब्दो यागादौ तज्जन्ये चाऽऽत्मसंस्कारे दृष्टप्रयोग एवमधर्मशब्दोऽपि हिंसादौ तज्जन्ये चाऽऽत्मसंस्कारे दृष्टप्रयोगः । अतः अधार्मिकाणां पापानाम् इत्येवं व्याख्यायते । हिंसाद्यधर्मचरणशीलानां तज्जन्यपापाख्यसंस्कारयुक्तानामिह लोके राजोपद्रवं क्षिप्रं पश्यन् परलोके च शास्त्रदृष्ट्या नरकं पश्यन् धर्मानुष्ठानेनाऽऽत्मसंयमातिशये सत्यवसादं गच्छन्नपि मनः अधर्मे न नियोजयेत् । ¶ गोरा.

( ३ ) अधार्मिकाणां विहितमकुर्वताम् । पापानां निषिद्धकारिणाम् । आशु इति निन्दातिशयार्थम् । ‡ व्रक. १९

( ४ ) धर्मेण धर्मे क्रियमाणे सीदन् अवसीदन्नपि । अधार्मिकाणाम् अधर्महेतुहिंसादिकारिणाम् । पापानाम् अकृतप्रायश्चित्ततया तज्जन्यपापवताम् । आशु परलोके परलोकगमनमात्रेण । विपर्ययं दुःखम् । मवि.

( ५ ) न केवलमधर्मप्रकर्षो लोकोपक्रोशभयाद्वर्जनीयः, किंतु प्रत्यक्षतोऽनर्थबहुत्वादपीत्याह— नेति ।

$ मच., भाच. मेधागतम् । पप्र. मेधागतं वकवच्च ।

¶ ममु. गोरागतम् ।

‡ कुर. व्रकगतम् ।

(१) मस्मृ. ४।१७१ ; अप. १।१५४ पृ. २३० ; व्रक. १८ पूर्वार्धे ( सीदन्नपि हि धर्मेण मनो धर्मे न वारयेत् ) ; कुर. २५ पूर्वार्धे ( सीदन्नपि हि धर्मेण मनो धर्मे निवेशयेत् । ) माशु ( मन्ते ) ; पप्र. ६८ न सीदन्नपि ( सीदन्नपि न ).

प्रमुखदुःखेन परिणामसुखेन भेषजेनेव सेव्यमानेन धर्मेण शास्त्रव्यवस्थारूपेणाऽऽत्मसंकोचाख्येन सीदन्नपि तद्विपरीतरूपे विषमिश्रे मधुनीवाधर्मे मनो न निवेशयेत् । अत्र हेतुरुत्तरार्धेनोक्तः । अधार्मिकाणां धर्मानुष्ठानरहितानां पापानां पापकारिणां चोरादीनाम् आशु सद्यः विपर्ययम् अनर्थं राजदण्डादिकं पश्यन्निति । नन्द.

**'नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।**
**शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥**

(१) सुहृद्भूत्वा दृष्टमर्थं दर्शितवान् । इदानीं शास्त्रार्थमाह– नाधर्म इति । अनियतकालत्वाद्वैदिकानां शुभाशुभफलानां कर्मणामेवमुच्यते । नाधर्मः चरितः अनुष्ठितः सद्यः फलति फलं ददाति । वेदे हि केवलं कर्मणां विहितप्रतिषिद्धानां सुखदुःखफलत्वं श्रुतम् । कालविशेषस्तु नावगमितः । वाक्यव्यापारो हि कर्तव्यतावगमपरत्वेऽपि कर्मफलसंबन्धबोधमात्रे पर्यवस्यति, न कालविशेषमाक्षिपति फलवतां कर्मणाम् । नित्यानां तु न फलतः कर्तव्यता । प्रतिषिद्धपरिहारेऽपि नैव नरकादिदुःखनिवृत्तिकामस्याधिकारः, किंतु शास्त्रप्रतिषेधसामर्थ्यात् । स तु प्रतिषेधो दुःखफलत्वं प्रतिषिद्धानुष्ठानस्य बोधयति । निपुणत एतदुच्यमानमतिग्रन्थविस्तरमाक्षिपतीत्युपरम्यते । गौरिव । साधर्म्यवैधर्म्याभ्यामयं दृष्टान्तः । यथा गौः पृथिवी व्युप्तबीजा न तदैवानेकसस्यशालिनी भवति, किं तर्हि ? परिपाकमपेक्षते, तादृशं वैदिकं कर्मेति साधर्म्यम् । वैधर्म्येणापि यथा गौः पशुः वाहदोहाभ्यां सद्यः फलति, नैवं धर्माधर्मौ । अधर्मग्रहणं धर्मस्यापि फलदानं प्रति कालानियमप्रदर्शनार्थम् । आवर्त्यमानः कालेनोपचीयमानः कर्तुः प्रतिषिद्धानुष्ठातुः मूलानि कृन्तति छिनत्ति । मूलकर्तनेन सर्वेण सर्वविनाश उपलक्ष्यते । यथा मूलच्छेदात् वृक्षादिस्थावराणामपुनर्भवस्तद्वदधर्मकारिणाम् । $ मेधा.

(२) तच्छेदानन्तरं तु स्वफलं दुःखं करोतीत्यपि द्रष्टव्यम् । ¶ मवि.

(३) विपर्ययं विवृणोति– नेति । $ मच.

(४) न हि पापानां पापाचरणानन्तरमेवानर्थं उपलभ्यते, तत् दृष्टविरुद्धमिदमुक्तमित्याशङ्क्य परिहरति– नेति । गौरिवेति वैधर्म्यदृष्टान्तः । लोके अस्मिँल्लोके । कर्तुर्मूलानि कर्तुरपेक्षितार्थमूलानि गृहक्षेत्रादीनि । तस्मात्कालान्तरेऽपि फलोपलम्भान्न दृष्टविरोध इत्यभिप्रायः । नन्द.

**'यदि नाऽऽत्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।**
**न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥**

(१) इदमयुक्तं यदन्यकृतस्य कर्मणोऽन्यगामिता फलस्योच्यते । कर्तुः फलदानि वैदिकानि कर्माणि । न वैश्वानरन्यायोऽस्ति, श्रवणाभावात् । न हि पुत्रार्थंताऽत्र श्रुता । सत्यम् । पुत्रे पीड्यमाने पीडितस्य पितुरधिकतरं दुःखं भवति । अतः कर्तुरेव दुःखम् । पुत्रस्यापि स्वकृतात्पौर्वदेहिकात् कर्मणस्तत्फलमित्यविरुद्धम् । एवं नप्तृष्वपि द्रष्टव्यम् । नप्तारः पौत्राः । कृतो धर्म इति संहितायास्तुल्यत्वाद्धर्माधर्मौ द्वावप्युपात्तौ । मेधा.

(२) यदि स्वशरीरव्याध्याद्युत्पादनद्वारेणाधर्मो न फलति तदा पुत्रपौत्ररोगाद्युद्भवमुखेन फलति । नन्वसौ कृतः कदाचित्कर्तुर्निष्फलो भवति । येऽत्र दुष्कृतवशेन व्याध्याद्युपेतैर्भवितव्यं तथाविधास्तस्याऽऽत्मदुष्कृतबलात्तद्विपत्त्यादिदर्शनपीडानुभावार्थं पुत्रपौत्रा इह जन्मनि जन्मान्तरे वा जायन्ते । $ गोरा.

(३) अस्मिन्नेव तावद्रोगादि दुःखं जनयति । कथंचिदुत्कटधर्मप्रतिरोधेन साक्षाद्दुःखजननाशक्तौ पुत्र-

---

$ गोरा., पप्र., भाच. मेधागतम् ।

(१) मस्मृ. ४।१७२ ; अप. १।१५४ पृ. २३० ; पप्र. ६८.

¶ शेषं मेधागतम् । वैधर्म्यदृष्टान्तमात्रम् ।

$ शेषं मेधागतम् ।

(१) मस्मृ. ४।१७३ ; अप. १।१५४ पृ. २३० न चेत्पुत्रेषु ( नो चेत्पौत्रेषु ) त्वेव तु ( त्वेवं हि ) ऽधर्मः ( धर्मः ) ; पप्र. ६८.

पौत्रादिद्वारेण रोगाद्युत्पादनद्वाराऽपि दुःखं जनयतीत्यर्थः । मवि.

(४) ननु अन्यकृतस्य कर्मणः कथमन्यत्र फलजनकत्वम् ? उच्यते– पुत्रादिनाशस्य पितुः क्लेशहेतुत्वात् । शास्त्रीयत्वाच्चास्यार्थस्य नाविश्वासः । † ममु.

(५) कर्तर्यदृश्यमानमपि कृतं पुत्रादिषु फलतीत्याह– यदीति । 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इति स्मरणात् नाऽऽत्मनि तच्छरीरावच्छेदेन फलति चेत्पुत्रपौत्रादिरूपशरीरप्राप्तावपि फलति, वाचनिकातिरिक्तफलस्यान्यत्रासंभवात् (?) । न चैतद्वचनं व्यर्थम्, अर्थवादेनाप्युपपत्तेः । अत एव 'प्रियेषु स्वेषु सुकृतमप्रियेषु तु दुष्कृतम्' इत्याद्यपि स्तुतिवादः 'हानौ तूपायन( म् ? )०' (ब्रसू. ३।३।२६) इत्यादिसूत्रे निरटङ्कि । मच.

(६) अधर्म इति छेदः, तत्प्रकरणपाठात् । न निष्फलः । अकृतप्रायश्चित्त इति शेषः । मार्कण्डेयपुराणे– 'द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च । भार्यायां च ग्रहे दुष्टे भयं पुण्यवतां नृणाम् ॥ आत्मन्यथाल्पपुण्यानां सर्वत्रैवातिपापिनाम् । नैकत्रापि ह्यपापानां नराणां जायते भयम् ॥' । अकृतप्रायश्चित्तं पापं कर्तुः पापभोगप्रतिबन्धके पुण्यविशेषे सति तत्पुत्रादौ फलति । तेषामपि तादृशपुण्यविशेषश्चेत्स्वयमेव नश्यति नष्टेन्धनाग्निवत् । एवं धर्मेऽपि द्रष्टव्यम्, समानन्यायत्वात् । भवन्ति चात्र वक्तारः– 'निषिद्धाचारोऽप्ययं पितुः पुण्येन वर्धते' इति । एवं च यत् 'शास्त्रफलं प्रयोक्तरि' (जैसू. ३।७।१८) इति जैमिनिनोक्तं तदसत्यपवादे द्रष्टव्यम् । तस्मात्सर्वात्मना धर्मः सेव्यः, नाधर्मः । तदाह व्यासः– 'सुदुर्लभमिदं प्राप्य मानुष्यमिह यो नरः । धर्मावमन्ता कामात्मा स भवेत्खलु वञ्चकः ॥' इति । पम्र. ६८–६९

† शेषं मेधागतम् ।

(७) पुत्राद्यनर्थकरणस्य कर्तृफलत्वं कर्तुस्तथाऽभिमानात् तत्पीडया पीडोपलम्भाद्वेति । $ नन्द.

'अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥

(१) अधर्मेण प्रभुद्रोहादिना एधते वृद्धिं लभते, तावत् तस्मिन्नेव काले ततो धनं ग्रामं वा प्राप्य ततो भद्राणि बहुभृत्यगवाश्वादिसंपत्तिलक्षणानि पश्यति अनुभवति, ततः सपत्नान् अरीन् दरिद्रान् जयति परिभवति । तर्हि धर्मे स्थितान् कुतश्चन कुसृतिहीना लभन्ते । अतस्तेषां दारिद्र्यशब्द ऐश्वर्ये परिभवः । समूलं च कियन्तं कालमेवं भूत्वा सपुत्रज्ञातिधनबान्धवा उच्छिद्यन्ते । तस्माद्धर्मो न हातव्यः । ¶ मेधा.

(२) अधर्मेण परस्वहरणादिना संप्रति धनवृद्ध्यादियुक्तो भवति । तदनन्तरं तद्धनाद्युपभोगद्वारेण सुखान्यनुभवति । तदनुभवाच्च सुखितत्वादिना शत्रूनभिभवति । ततोऽस्मिन्नेव जन्मनि सर्वनाशं नश्यति । मृतो वा अ( ? आ )पुनर्भवं नरकमुपैति । गोरा.

(३) अधर्मेणापि क्रियमाणेनोपलक्षितो धनादिभिर्वर्धत एव तावद्यावदुत्कटधर्मोऽस्ति । तदनन्तरं च भद्राणि सुखानि पश्यति । ततः शत्रूनभिभवति । ततस्तेन फलदानोपक्षीणेन धर्मेण भोगमूलेन सह नश्यति । † मवि.

(४) इदमत्राऽऽकूतम्– चित्रायागादिरिवेहामुत्रानियतफलतया कदाचिदपि कुत्रचित्फलं निन्दाभावि । अथवा सर्वधर्मस्य ज्ञानमेव फलं प्रसिद्धम्, 'धर्मात्सुखं ज्ञानं च' इति श्रुतेः । प्राक्तनकर्मफलं भुञ्जानः ऐहिकं मन्यते । ‡ मच.

$ शेषं मविगतम् ।
¶ ममु. मेधागतम् ।
† भाच. मविगतम् ।
‡ शेषं मेधागतम् ।

(१) मस्मृ. ४।१७४; मेधा. समूलस्तु (समूलं च); भाच. समूलस्तु (समूलं तु).

(५) नन्वधर्मं कुर्वन् कश्चित्क्षेमी दृश्यते, तेनाभ्युदयहेतुत्वमपि अधर्मस्याभ्युपगन्तुं शक्यते, ततः कथं तस्यैकान्ततोऽनर्थहेतुत्वम् ? इत्याशङ्क्य परिहरति– अधर्मेणेति । नन्द.

सेव्याः धर्माविरुद्धौ अर्थकामौ धर्मश्च
दुःखरहित एव

**'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।**
**धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥**

(१) उक्तस्त्रिवर्गः पुरुषार्थः । कश्चित्तुल्यतां मन्यमानः– "अर्थकामपरिहारेण यथा धर्मः सेव्यते तद्विरोधी ज्योतिष्टोमादिः, स ह्यर्थविरोधी दक्षिणादिदानेन, कामविरोधी दीक्षितस्य ब्रह्मचर्यविधानात्, एवमर्थकामावपि धर्मपरिहारेण सेवेत । तत्र 'न हिंस्याद्भूतानि' इति यत्र कामो हिंसाया वैरानुबन्धाद्यः कश्चिद्वक्तुमिष्यते तत्र स विषयप्रतिषेधाय, यत्र तु कस्यचिद्धिंसयाऽर्थकामाविष्येते तत्र नास्ति हिंसादोषः" इति प्रवर्तते, तद्भ्रान्तिनिवृत्त्यर्थमिदमुच्यते । परित्यजेत् परिहरेत्तादृशार्थकामौ यत्र धर्मविरोधः । एवं सर्वतो धर्मस्य बलीयस्त्वमुक्त्वा कस्मिंश्चिद्विषये तस्यापि परिहर्तव्यतामाह– धर्मं चाप्यसुखोदर्कम् । उदर्कः उत्तरकालः, सः असुखो यस्य । यथा सर्वस्वदानं वा ददाति 'धार्मिकोऽयं महापुण्यः' इति । यथा नदीतीरेष्वेकान्तेष्वपि प्राकृतजना बहवः पश्यन्ति तत्र स्नानम् । भवति इत्यर्थं(? तीर्थे)स्नानं धर्मार्जनस(? नम्, स)मक्षापेक्षा तु साधुवादाय । यथा च तीर्थकाकेभ्यो दानम् । भवति दानं धर्मः, दातृत्वप्रसिद्ध्युत्पादनार्थत्वात्तेभ्यो भि(? वि)द्यते । अथवा यद्दृष्टतया लोकः संक्रोशति । यथा गोः अवध्यस्य(? अनुबन्ध्यायाः) वधः मांसस्य भक्षणं च । तद्विगर्हिततरं पश्वन्तरेभ्यो लोके । दृष्टमूलश्चायमहिस्पर्शवत्प्रतिषेधः । विहितोऽयमर्थ इत्यवेद्यतया प्राकृतजना अजानाना अधार्मिकत्वं यच्चः प्रख्यापयेयुस्तेषां च बहुत्वतः प्रसिद्धया शिष्टा अप्येवं प्रसिद्धमूल(? द्धं मूल)मनवगच्छन्तः परिवर्जयेयुः । तदुक्तम्– 'धार्मिके सति राजनि' (मस्मृ. ११।११) इति । एतदुक्तं पूर्वैर्व्याख्यातमित्यनुगतम् । न हि प्रत्यक्षश्रुतिविहितस्य स्मृत्या बाधो न्याय्यः । इदं तु युक्ततरमुदाहरणम्– 'नियोगधर्मः स्मृत्या विहितो लोकसंक्रुष्टत्वान्न क्रियते । तथा यः कश्चिदनाथतरुणीं स्त्रियं कारुण्याद्बिभर्ति, तत्र यदि लोकसंक्रोश आशङ्क्यते– 'स्त्रीत्वेनैवास्मा एषा रोचते', स लोकसंक्रुष्टधर्मः । मेधा.

(२) सत्यपि त्रिवर्गस्य पुरुषार्थत्वाभिधाने– परित्यजेदिति । धर्मविरुद्धावर्थकामौ असुखोत्तरकालं चाशक्तस्य तीव्रतपश्चरणादिरूपं धर्मं लोकाभिशापजनकं च मधुपर्कगोवधादिरूपं नाऽऽचरेत् । गोरा.

(३) धर्मवर्जितौ धर्मविरोधिनौ । असुखोदर्कं यावान्धर्मस्तदधिकप्रत्यवायविनाकृतम्, यथा वातरोगिण उपवासादितीक्ष्णव्रतानुष्ठानमित्यादि । लोकविक्रुष्टं लोकनिन्दितं कलियुगे सुराग्रहादि । § मवि.

(४) यावर्थकामौ धर्मविरोधिनौ भवेतां तौ परिहरेत् । यथा चौर्यादिनाऽर्थोपपादनम्, दीक्षादिने यजमानस्य पत्न्युपगमः । उदर्कम् उत्तरकालः, तत्रासुखं यत्र धर्मे तं धर्ममपि परित्यजेत् । यथा पुत्रादिवर्गपोष्ययुक्तस्य सर्वस्वदानम् । लोकविक्रुष्टं यत्र लोकानां विक्रोशः, यथा कलौ मध्यमाष्टकादिषु गोवधादिः । ममु.

(५) धर्मवर्जितौ धर्मविरोधिनौ । असुखोदर्कम् अनुशयहेतुम् । लोकविक्रुष्टं देशकालाननुरूपत्वेन लोकगर्हितम्, यथा कस्मिंश्चिद्देशे महिषमांसेन श्राद्धाचरणम् । ईदृशं धर्ममपि त्यजेदित्यर्थः । गृर. ४९४

(१) मस्मृ. ४।१७६ ; विश्व. १।११४ प्रथमचरणमात्रम् ; मेधा. विक्रुष्ट (संक्रुष्ट) ; गोरा. धर्मं चा (धर्मम) शेषं मेधावत् ; अप. १।११५ पृ. १५९ (यौ०) वर्जितौ (विवर्जितौ) विक्रुष्ट (संक्रुष्ट) ; गौमि. ९।४७ पृ. ; गृर. ४९४ धर्मं चा (धर्मम) ; वीक. १।१५६ ; आप्र. ११ क्रुष्ट (द्विष्ट) ; भाच. मेधावत्.

§ भाच. मविगतं ममुगतं च ।

( ६ ) असुखोदर्कम् आयत्यामनुतापजननं द्यूतेनादि, पुत्राद्यर्थपरस्वादानं वा । † मच.

धर्म एव पारलौकिकहितफलकः

**'धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ।**
**परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥**

( १ ) महति दाने महति च तपसि महति च यज्ञे ज्योतिष्टोमादौ यद्यसमर्थस्तदा नोदासीनेन भवितव्यम् । किं तर्हि ? शनैः शनैः स्वल्पेन दानेन स्वल्पेन तपसा यथाशक्ति परोपकारेण जपहोमाभ्यां स्मार्ताभ्यां धर्मः संचेतव्यः । यथा मृत्संघातं पुत्तिकाः पिपीलिकाः संचिन्वन्ति । परलोकसहायार्थमिति धर्मफलानुवादः । सर्वभूतान्यपीडयन् । याञ्चया धर्मार्थिया भूतानां पीडा न कर्तव्या । $ मेधा.

( २ ) वम्रिकाः पिपीलिकाविशेषाः । अप. १।१५६ पृ. २३२

( ३ ) वल्मीकं मृद्रूपम् । वल्मीका मृत्करकीटः । पुत्रिकेति क्वचित्पाठः । सहायः सहगामी । भूतान्यपीडयन्निति हिंसाद्यधर्मेषु नात्यन्तं प्रसज्येतेत्यर्थः । मवि.

( ४ ) धर्मस्यावश्यकर्तव्यतामाह– धर्ममिति षड्भिः । पुत्तिकाः स्वमूत्रेण भूमिमार्द्रीकृत्य सच्छिद्रं मृत्पुञ्जं संचिन्वन्ति याः पिपीलिकाविशेषाः ताः । वल्मीकं प्रसिद्धम् । तत्किमर्थं तत्राऽऽह– परेति । अपीडयन् वैधेतरहिंसामकुर्वाणः, 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः ' इति श्रुतेः । मच.

( ५ ) पुत्तिका पिपीलिकाभेदः । पप्र. ६४

† शेषं ममुगतम् ।
$ गोरा., ममु. मेधागतम् ।

(१) मस्मृ. ४।२३८; गोरा. पुत्तिकाः (वम्रिकाः) कसहायार्थं सर्वभूता ( के सहायं हि सर्वलोका ) ; अप. १।१५६ पुत्तिकाः ( वम्रिकाः ) ; मवि. 'पुत्रिकाः' इति पाठमपि निर्दिशति ; मुक्ता. ४ ; पप्र. ६४.

**'नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।**
**न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥**

( १ ) भूतानुवादोऽयम् । अमुत्र जन्मान्तरे सहायार्थे नरकादिदुःखादुद्धरणार्थे न कस्यचित्सुहृद्बान्धवादेः शक्तिरस्ति । केवल एव जीवता यो धर्मः कृतः स तमुद्धरति । § मेधा.

( २ ) तस्मान्न मात्राद्यपेक्षया धर्ममुत्सृजेत् । † गोरा.

( ३ ) धर्मस्तिष्ठति केवलः कृत्स्नः । मवि.

( ४ ) तस्मात्पुत्रादिभ्योऽपि महोपकारकं धर्ममनुतिष्ठेत् । † ममु.

( ५ ) पुत्राश्च दाराश्च तत्पुत्रदारम् । † मच.

**'एकः प्रजायते जन्तुरेक एव प्रलीयते ।**
**एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥**

( १ ) यथा जन्तुः प्राणी एक एव जायते, न सुहृद्बान्धवादिना सह । एक एव प्रलीयते, न सुहृदो बान्धवाः सहमरणमनुभवन्ति । यदि नाम भार्याऽन्यो वा भक्तो जनस्तन्मरणकाल आत्मानं हन्यात्तथाऽपि पृथगेवासौ मरणक्रिया । अनया न गर्भैक्यमग्निवदनुभवन्ति । एवं सुकृतदुष्कृते अपि पृथगेवानुभवन्ति । ननु च ' न पुत्रदारम् ' इत्युक्तम् । यावता पुत्रः श्राद्धादिक्रियया पितुरुपकरोत्येव मृतस्य, एवं भार्याऽपि ।

§ भाच. मेधागतम् ।
† शेषं मेधागतम् ।

(१) मस्मृ. ४।२३९ ; मेधा. दारा ( दारं ) : ४।२४० 'न पुत्रदारम्' एतावदेव ; अप. १।१५६ दारा ( दारं ); स्मृच. २।४५९ ; आपा. ११३ केवलः ( केवलम् ) ; मुक्ता. ४ ; पप्र. ६४ अपवत् .

(२) मस्मृ. ४।२४० ; अप. १।१५६ प्रली (विली) ; मवि. जायते (सूयते) ; स्मृच. २।४५९ ; आपा. ११३ प्रली (प्रमी) ; मच. आपावत् ; मुक्ता. ४ आपावत् ; पप्र. ६४ प्रली ( विली ) एव च (एव तु ).

सत्यम् । धार्मिकस्यैव तादृशः पुत्रो भवतीति तत्परमेतत् । यथा जीवतः कस्यचिद्दस्तग्राहिकया कश्चित्सहायो भवत्येवं मृतस्य पुत्रो धर्मद्वारेणैवोपकरोति । ¶ मेधा.

( २ ) अतो मात्रादीनां जननमरणदुष्कृतपीडांशमोक्तृत्वाभावात्र तदपेक्षया धर्मे बध्नात् । † गोरा.

'मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥

( १ ) सह गच्छति । इदं प्रत्यक्षसिद्धं प्रसंख्यानार्थमुच्यते । मृतस्य शरीरं क्षितावुत्सृज्य काष्ठमिव निष्प्रयोजनं विमुखा बान्धवाः प्रतिगच्छन्ति । धर्मस्तु केवलं पुरुषमनुगच्छति । § मेधा.

( २ ) काष्ठसमं दाहपक्षे । लोष्टसमं भूमिप्रापणपक्षे । मवि.

( ३ ) मृतं शरीरं मनःप्राणादित्यक्तम् । ‡ मम्.

( ४ ) क्षितौ प्रक्षेपाधारे । यान्ति स्वगृहं प्रति । तत्रापि विमुखाः । 'अहो, कष्टं वर्तते' (इति) $स्वौत्सुक्यमाह । मच.

'तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥

¶ मवि. , मच. मेधागतम् ।
† शेषं मेधागतम् । मम्. गोरागतम् ।
§ गोरा. मेधागतम् ।
‡ शेषं मेधागतम् ।

$ द्वयोरप्यस्मदीयमुद्रितपुस्तकयोरयं ग्रन्थ उत्तरश्लोकावतरणिकारूपेण 'तस्मादिति' इतिप्रतीकोत्तरको मुद्रितः । स तत्र न संगच्छते, अत्र तु संगच्छते इत्यस्माभिरत्रापकृष्टः । 'विमुखा यान्ति' इत्यनेन मनुः 'अहो, कष्टं वर्तते' इति स्वीयं चित्तास्वास्थ्यं बोधयतीति तदर्थः ।

(१) मस्मृ. ४।२४१ ; समु. ४८ मृतं (कृतं) लोष्ट (लोष्ठ) ; अप. १।१५६ रमुत्सृज्य (रं संत्यज्य) ; स्मृच. २।४५९–४६० ; आपा. ११३ ; मुक्ता. ४ ; पप्र. ६४ लोष्ट (लोष्ठ).

(२) मस्मृ. ४।२४२ ; समु. ४८ पू. ; अप.

( १ ) उपसंहारोऽयम् । दुस्तरं तमः कृच्छ्रेण यत्तीर्यते । तमः दुःखम् । तदपि धर्मेण सहायेन सुतरं भवति । न हि तादृशे तमसि मज्जतीत्यर्थः । मेधा.

( २ ) तस्माद्धर्मं सहायार्थं शनैरर्जयेत् । † गोरा.

( ३ ) तमः पापम् । ‡ ब्रक. १८

( ४ ) शनैरिति नात्यन्तमात्मानमवसादयेदित्यर्थः । मवि.

(५) तमः नरकम् अविद्याम् । अन्तःकरणशुद्धिद्वारा ज्ञानावाप्त्या । ¶ मच.

( ६ ) तमः पापम् । इत्यादिस्तु फलार्थवादो धर्मप्रशंसार्थः । पप्र. ६४

'धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥

( १ ) धर्मः प्रधानं यस्यासौ धर्मप्रधानः धर्मपरायणः यथाविहितकर्मानुष्ठायी । तपसा हतकिल्बिषम् । कथंचित्प्रमादकृतव्यतिक्रमे तपसा प्रायश्चित्तेन हतकल्मषं शास्त्रव्यतिक्रमे जातोऽसौ दोषस्तस्मिंस्तत्प्रायश्चित्तेन नष्टे परलोकं नयति भास्वन्तं परलोकं देवस्थानं स्वर्गादि नयति प्रापयति । कः ? प्रकृतत्वाद्धर्म एव । शरीरिणं पुरुषम् । खेन शरीरेण खशरीरी, न यथाऽन्येषां पुरुषाणां पाञ्चभौतिकं शरीरमेवं तस्य । किं तर्हि ? खमेव शरीरं ब्रह्म । विभुत्वमनेनोच्यते । मेधा.

( २ ) विचरत्वात् ब्रह्मवदाकाशात्मकं सन्तम् । † गोरा.

( ३ ) तपसा चान्द्रायणादिना । नयति धर्मः खशरीरिणम् आकाशवत् क्वचिदप्यप्रतिहतदेहम् । मवि.

† शेषं मेधागतम् ।
‡ कुर. ब्रकवत् ।
¶ भाच. मचगतम् ।

१।१५६ पू. ; ब्रक. १८ दुस्तरम् (दुःसहम्) ; स्मृच. २।४६० पू.; वप्र. १४; कुर. २५ चिनुया (चिन्तये); आपा. ११३ पू. ; मुक्ता. ४ ; पप्र. ६४–६५.

(१) मस्मृ. ४।२४३ ; मुक्ता. ४ हतकिल्बिषम् (वीतकल्मषम्) खश (खे श).

(४) 'खं ब्रह्म' (छाउ. ४।१०।४) इत्याद्युपनिषत्सु खशब्दस्य ब्रह्मणि प्रयोगः। ... यद्यपि लिङ्गशरीरावच्छिन्नो जीव एव गच्छति तथापि ब्रह्मांशत्वाद्ब्रह्मस्वरूपमुपपन्नम्। धर्म एव चेत्परं लोकं नयति ततो धर्ममनुतिष्ठेत्। 'न हि वेदाः स्वधीतास्तु शास्त्राणि विविधानि च। तत्र गच्छन्ति यत्रास्य धर्म एकोऽनुगच्छति॥'। ¶ ममु.

(५) अहो, धर्मस्यासाध्यं नास्तीत्याह— धर्मेति। धर्मप्रधानं फलप्रधानम्। परलोकम्। परं ब्रह्मैव लोकम्। आत्मा, 'येषां नोऽयमात्माऽयं लोकः' इति श्रुतेः। खशरीरिणम् आकाशशरीरं ब्रह्मभूतम्, '$ आकाशो वै नामरूपयोर्निर्वहिता' (छाउ. ८।१४।१) इत्यादौ ब्रह्मण्याकाशशब्दप्रयोगात्। नयति प्रापयति धर्म एव परम्परयेति शेषः। मच.

पशुहिंसा देवपितृकर्मसु विहिता अनुष्ठेया, नान्यत्र;
घृतपिष्टपशुकरणम् अपवाद एव

**'यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः॥**

(१) यज्ञार्थमित्याद्योऽर्धश्लोकोऽर्थवाद एव। तत्र हि वधः प्रत्यक्षश्रुतिविहितत्वादेव सिद्धः। प्रशस्ताः ये भक्ष्यतयाऽनुज्ञाताः। एष एवार्थ उत्तरश्लोके विस्तरतः कर्मार्थवादतया कथ्यते। मेधा.

(२) प्रशस्ताः ये चोदिताः श्रुतौ। † गोरा.

(३) यज्ञार्थमिति § दृष्टान्तार्थम्। ‡ निक. ३२७

(४) यज्ञार्थे पाकयज्ञहविर्यज्ञसोमयज्ञसिद्ध्यर्थम्। मवि.

(५) भक्ष्यत्वेनानुज्ञातानां मृगपक्षिणां यज्ञार्थे वधो ब्राह्मणानामपि निर्दोष इत्याह— यज्ञार्थमिति। नन्द.

(६) वध्याः हिंस्याः। † भाच.

**'बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम्।**
**पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च॥**

(१) षड्विंशत्संवत्सरं नाम सत्रम्, तत्र मृगपक्षिवध आम्नातः, सोऽनेनानूद्यते। इदं तत्र ब्राह्मणम्— 'संस्थितेऽहनि गृहपतिर्मृगयां याति स तत्र यान्यान्मृगान् हन्ति तेषां तरसाः पुरोडाशा भवन्ति'। अर्थवादत्वाद्बभूवुरिति भूतप्रत्यये न विवक्षा। तेनाद्यत्वेऽपि भवन्ति। एवं पुराणेष्वपि। न केवलं कश्चिदद्यत्वे सत्राणां व्यवहार इति दर्शनाभिप्रायमेतत् पुराणेष्विति। न पुनः अद्यत्वे यदि केचित् सर्वाण्येव हरेयुः( ? सत्राण्याहरेयुः) तेषामेष विधिर्न भवतीति मन्तव्यम्। अथवा यः स्वयं शास्त्रार्थे वेदितुमसमर्थः केवलं परप्रसिद्ध्या 'महाजनो येन गतः स पन्थाः' इति न्यायेन प्रवर्तते तत्र त्वेतदुच्यते— पुराणेष्विति। नायमिदंप्रथमको धर्मः। किं तर्हि ? अनादिः। पुराणा ऋषयः ब्राह्मणाः केचन तपःसिद्धाः जात्यन्तरं वा। यथा महाभारतादौ वर्णितम्। न चात्र निर्बन्धः कर्तव्यः— 'ऋषीणां जात्यन्तरत्वे गन्धर्वादिवत्कथं यागेष्वधिकारः ?' इति। यतोऽयमर्थवादो येन केनचिदालम्बनेन प्रतीयते। ब्रह्मक्षत्रसवाः ब्रह्मक्षत्रिययज्ञाः। मेधा.

(२) बभूवुरिति। यस्माच्चिरंतनेष्वपि संबन्धिषु यज्ञेषु ब्राह्मणक्षत्रिययज्ञेषु च भक्ष्याणां मृगपक्षिणां संबन्धिना मांसेन पुरोडाशा अभूवन्। तस्माद्यज्ञार्थमपि ते वध्याः। § गोरा.

---

¶ शेषं मेधावत्।

$ 'खं ब्रह्म' (छाउ. ४।१०।४, बृउ. ५।१।१) इति ब्रह्मणि खशब्दप्रयोगं सुप्रसिद्धमुपेक्ष्य तत्र आकाशशब्दस्य प्रयोगात् तत्पर्यायखशब्दस्य ब्रह्मपरत्वोक्तिरियं द्राविडप्राणायामः।

† शेषं मेधागतम्। ममु. गोरावत्।

§ ''भृत्यानां चैव वृत्त्यर्थम्' इत्युत्तरार्धविधेयार्थे इति शेषः।

‡ शेषं मेधागतम्। गप. निकवत्।

(१) मस्मृ. ५।२२; मिता. १।१७९; निक. ३२६; गप. ४०६; वीमि. १।१७८-१८१ पृ. २५१; आप्र. ५३७.

† शेषं गोरागतम्।

§ ममु. गोरावत्। नन्द. गोरागतम्।

(१) मस्मृ. ५।२३; मवि., मच. ष्वपि य (ष्वृषिय).

(३) तथा ह्यन्येष्वृषीणां यज्ञेषु सत्रेषु पुराणेषु अतिपूर्वकालेषु मृगपक्षिमांसेन पुरोडाशा बभूवुः। तानि तु ब्रह्मक्षत्रसवेषु ब्राह्मणक्षत्रियजातीयैर्मिलितैः कृतेषु सवेषु यज्ञेषु सत्ररूपेषु वा बभूवुः। 'भवति हि ब्राह्मणक्षत्रियौ गृहपती कृत्वा ब्राह्मणैर्ऋत्विग्भूतैः सत्रम्, तत्र तरसाः पुरोडाशा भवन्ति' इति श्रुतावुक्तम्। तरसाः मांसमयाः। तदुत्पादनप्रकारश्च 'संस्थिते गृहपतिर्मृगयामेति' इत्यादिनोक्तः। तत्र मृगयाप्रकारस्य ब्राह्मणैरशानात्क्षत्रियस्यापि गृहपतित्वेनान्तर्भावनं क्रियत इति ब्रह्मक्षत्रसवेष्विति विशेषितम्। मवि.

(४) 'संस्थितेऽहनि गृहपतिर्मृगयां याति स यांस्तत्र मृगान् हिनस्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति' इति, 'वसन्ताय कपिञ्जलानालभेत' इत्यादिश्रुतेर्यज्ञार्थे तेषां पुरोडाशा इत्याह– बभूवुरिति। ऋषीणां यज्ञेषु। ब्रह्म ब्राह्मणजातिः, तथा क्षत्रम्, तयोः सवेषु यागेषु मृगाणां पक्ष्यादीनां पुरोडाशादयो बभूवुरिति पुराणेषु, श्रूयत इति शेषः। मच.

(५) भक्ष्याणां मृगपक्षिणामगस्त्येन प्रोक्षितानां मांसैः पुरोडाशा बभूवुः। $ भाच.

**'कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा।**
**न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन॥**

(१) यद्येषां बुद्धिः स्यात्– 'सीतायज्ञखण्डियज्ञचण्डिकायागादिषु समाचारप्रमाणेषु पशुवधः फलकामस्य न्याय्यः, दृष्टा हि पशुवधोपयाचितकेनातिशयवती सस्यसंपत्तिः' इति, तन्निषेधार्थमाह– कुर्यादिति। सङ्गे प्रस्तावात्पशुवधप्रसङ्गे घृतपशुमेव कुर्यात्। पशुना यद्दव्ये तत्स्थाने घृतेन यजेत देवताः। तद्धि सामान्येन यागद्रव्यम्। अथवा पिष्टपशुं पिष्टमयपशुप्रतिकृतिं कृत्वा देवताभ्य उपहरेत्, पिष्टेन वा पुरोडाशादि कृत्वा। कथमयं वृथा पशुवधः? उच्यते– शिष्टानां समाचारः प्रमाणम्, न तु स्त्रीशूद्रजनानाम्, अवैद्यत्वात्। नात्र वेदमूलता शक्या कल्पयितुम्। देवताराधनार्थं ह्येतदाचरन्ति। न च देवताराधनार्थानि वैदिकानि कर्माणि, गुणत्वेन देवताश्रुतेः। अन्वयव्यतिरेकमूलतां चात्रेच्छन्ति 'दृश्यते पशुवधोपयाचितकेन फलसंपत्तिः' इति मन्यमानाः। अतो न वेदमूलता। अन्वयव्यतिरेकावपि भ्रान्तिमात्रम्, असकृद् व्यभिचारात्। अतोऽयं श्लोको न्यायप्राप्तार्थानुवाद एव सौहार्दादाचार्येण पठितः। ‡ मेधा.

(२) सङ्गे भूतादिदोषेण शरीराद्यवसादे सति तद्विनाशार्थं घृतमयीं (पिष्टमयीं) वा पशुप्रतिकृतिमुपहरेत्। न पुनर्देवाद्युद्देशमन्तरेणैव पशुं हन्तुं कदाचिदपीच्छेत्। गोरा.

(३) सङ्गे लोकाचारप्राप्तसीतायज्ञादौ पशुवधसंप्रयोगे। † निक. ३२९

(४) यदा तु सर्वथाऽत्यन्तोत्कटरागता पशुभक्षणे भवति तदाऽपि §प्रकारेण तदाकाङ्क्षा निवर्तनीया, न तु पशुहिंसा युक्तेत्याह– कुर्यादिति। घृतपशुः घृतविकारः पशुमांसतुल्यरूपत्वात्पशुः। एवं पिष्टपशुः सङ्गे अत्यन्तेच्छायाम्। भूताद्यभिभवः सङ्ग इति तु केचित्, तच्च न लोकप्रसिद्धमिति हेयमेव। मवि.

(५) सङ्गे आसक्तौ। $ ममु.

(६) सङ्गे पशुबलिप्रसक्तौ आसक्त्या भोजने रागप्रसक्तौ वा आवश्यके स्मार्ते कर्मणि वा, न तु वैदिके कर्मणि, घृतपश्वादावेकादशावदानबाधापत्तेः। 'तस्माद्यज्ञे वधोऽवधः' ¶ इत्युक्तम्। * मच.

$ शेषं मविगतम्।

(१) मस्मृ. ५।३७ ; मेधा. ५।४० (कदाचन०) उत्त. ; निक. ३२९ त्कदा (त्कथं) ; ममा. १७।३५ पू. ; गृर. ३९२ निकवत् ; गप. ४०६ निकवत् ; आप्र. ५३८ ; बाल. १।१८१ पृ. ४४८.

‡ गृर., गप., बाल. मेधागतम्।

† शेषं मेधागतम्।

§ 'प्रकृष्टः कारः यत्नः' इति योजनीयम्। अथवा 'प्रयत्नेन' इत्येव पाठः।

$ शेषं गोरावत्। भाच. ममुगतम्।

¶ 'इति वक्ष्यते' इति वक्तुं युक्तम्।

* शेषं गोरागतम्।

(७) केचित्तु– सञ्ज्ञशब्दस्य यज्ञवचनत्वम् । तथा च अग्नीषोमीयादौ पशुना सह विकल्पितः पिष्टमयः पशुरित्याहुः । तत्र, सञ्ज्ञशब्दस्य यागवचनत्वे मानाभावात् , किंच, उत्पत्तिशिष्टश्रौतपशुबाधेन द्रव्यान्तरस्य स्मृत्या विधातुमशक्यत्वात् । तस्मादुक्तैव व्याख्या साधीयसी । § आप्र. ५३९

(८) हिंसामविधिना न कुर्यादित्याह– कुर्यादिति । सङ्गे संगते, उत्सवादिनिमित्ते शत्यादिसमवाये इति यावत् , घृतपशुमुपाकुर्यात् । पशुस्थाने प्रभूतं घृतं पिष्टम् अपूपादिकं च दद्यादिति । नन्द.

**'यावन्ति पशुरोमाणि तावत्कृत्वो ह मारणम् ।**
**वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥**

(१) तावतीर्जन्मनामावृत्तीर्मारणं प्राप्नोति । वृथापशुघ्नः श्रुतिस्मृत्योरचोदितं पशुवधं यः करोति । तच्च प्रकरणान्महानवम्यादिषु लौकिकैर्यत्क्रियते । पशुघ्न इति कप्रत्यये ‡छान्दसं रूपम् । मेधा.

(२) वृथा उद्देशमन्तरेण, यः पशुं हन्ति स मृतः सन् तस्य हतस्य पशोः सकाशात् (यावन्ति पशुरोमाणि) तत्संख्याकान् वारान् जन्मनि जन्मनि मारणं प्राप्नोति । तस्माद्वृथा पशुं न हन्यात् । हशब्द आगम(प्रसिद्धि)-सूचकः । गोरा.

(३) तावत्कृत्वः तावत्संख्यान्वारान् । वृथा उपाकरणादन्यत्र पशुघ्नः । मवि.

(४) तावत्कृत्व इति वत्वन्तात्क्रियाभ्यावृत्तिगणने कृत्वसुच्प्रत्ययः । ¶ ममु.

§ शेषं मेधा–निक–ममु. इत्येतेषामर्थतोऽनुवादः ।

‡ 'शत्रुघ्नः , कृतघ्नः ' इत्यादाविव मूलविभुजादित्वात् लौकिके के संभवति छान्दसत्वोक्तिरियं चिन्त्या ।

¶ शेषं गोरावत् ।

(१) मस्मृ. ५।३८ ; निक. ३२९ त्वो ह (त्वेह) मनुः विष्णुश्च ; गृर. ३९२ त्वोह ( त्वैव ) ; मुक्ता. ४५१ ह ( हि ) ; आप्र. ५३८ ; भाच. निकवत् ; बाल. १।१८१ पृ. ४४८ त्वो ह (त्वेह).

(५) विपक्षे दण्डमाह– यावन्तीति । $ मच.

(६) हशब्दोऽनुकम्पायाम् । ¶ नन्द.

(७) वृथापशुघ्नः पुरुषः इहलोके अधर्मान्मारणं कृत्वा यावन्ति पशुरोमाणि अष्टकोटिरोमाणि तावन्ति पशुप्रायतां प्रेत्य संप्राप्नोति जन्मनि जन्मनि । भाच.

**'यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।**
**यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥**

(१) नायमनन्तरोक्तो दोषः श्रुतिस्मृतिचोदिते वधे । यो वधो यज्ञाङ्गभूतस्तन्निर्वृत्त्यर्थमेव स्वयंभुवा प्रजापतिना पशवः सृष्टाः उत्पादिताः । स्वयमेवेत्यर्थवादः । अस्य जगतः विश्वस्य । यज्ञः ज्योतिष्टोमादिः । भूत्यै, भूतिः विभवः पुष्टिः स्फीतिः । तस्मात्तत्र यो वधः सोऽवधो विज्ञेयः । हिंसाजन्यस्य पापस्य निवृत्तिरेवमुच्यते । मेधा.

(२) यज्ञसंपत्त्यर्थं प्रजापतिनाऽऽत्मनैवाऽऽदरेण पशवः सृष्टाः , यज्ञश्च ' अग्नौ प्रास्ता ' (मस्मृ. ३।७६) इति न्यायेन अस्य जगतः भूत्यै अभिवृद्ध्यर्थम् । तस्माद्यज्ञे यो वधः सोऽधर्माख्यवधकार्याभावादवध एव । § गोरा.

(३) अत्र यज्ञार्थहनने कथं तादृग्दोषाभाव इत्याशङ्कामपनयति– यज्ञार्थमिति । ( अस्य ) लोकस्य भूत्यै जन्मने, आहुत्या सूर्याप्यायनवृष्टिबीजपरंपरया शुक्रोत्पत्तौ प्राण्युत्पादात् । एतेनैकपशुहिंसयाऽनेकप्राणिनिस्तारात्तादृशदोषाभाव उक्तः । ‡ मवि.

$ शेषं गोरागतम् ।

¶ शेषं मविगतम् ।

§ ममु. गोरावत् मविगतं च । नन्द. गोरागतम् ।

‡ मच. मविगतम् ।

(१) मस्मृ. ५।३९ ; मेधा. ५।४० प्रथमचरणमात्रम् ; निक. ३२७ मनुः विष्णुश्च ; गृर. ३९१ ज्ञोऽस्य भू ( ज्ञश्च भू ) ; मच. ५।३७ चतुर्थचरणमात्रम् ; मुक्ता. ४५१ ज्ञोऽस्य ( ज्ञो हि) आप्र. ५३८ ; आन. ३८६ पू. ; भाच. वधोऽवधः ( पशोर्वधः ) इत्यपि पाठः ; बाल. १।१८१ पृ. ४४८.

(४) भूत्यै भरणाय । सर्वस्य देवादेः । गर. ३९१

(५) यज्ञः अस्य द्विजस्य सर्वस्य क्षत्रियादेः भूत्यै ऐश्वर्याय भवति । तस्माद्यज्ञे वधोऽवध एव । 'पशोर्वधः' इति पाठः । भाच.

**'ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।**
**यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥**

(१) कथं पुनर्यज्ञे हिंसादोषो नास्ति ? उच्यते– हिंसा हिंस्यमानस्य महानपकारः, प्राणवियोगेन पुत्रदारधनविभवादिवियोगेन सर्वानर्थोत्पत्तेर्दुष्कृतस्य च समनन्तरं नरकादिफलविपाकस्य प्रत्यासत्तेः । यज्ञे तु हतानामुपकारः, नापकारः, नरकादिफलानुत्पत्तेः । यतो यज्ञे निधनं विनाशं गताः उच्छ्रितीः उत्कर्षं जातितो देवगन्धर्वयोनित्वं द्वीपान्तरेषूत्तरकुरुप्रभृतिषु वर्षान्तरे वा जन्म प्राप्नुवन्ति । अर्थवादश्चायम् । न ह्यत्र विधिः श्रूयते, प्राप्नुवन्तीति वर्तमानापदेशात् । न चार्थवादात् 'प्रतितिष्ठन्ति' इतिवद्विधिप्रतिपत्तिर्युक्ता, विध्यन्तरस्याभावादसंभवाच्च । सर्वोऽयमविधिमांसभक्षणप्रतिषेधशेषः । ऐहलोकसंपाद्यतयाऽप्ययं प्रतिषेधः– 'न त्वेव तु वृथा हन्तुं पशुमिच्छेत्' इति । यच्चाभ्यनुज्ञानं 'यज्ञार्थं पशवः सृष्टाः' इति, तत्सर्वं भक्षणप्रतिषेधतया प्रतीयते । तथा च वक्ष्यति– 'नाकृत्वा प्राणिनां हिंसाम्' (मस्मृ. ५।४८) इत्यादि । न चात्र विधेरस्ति संभवः । न तिरश्चामधिकारः संभवति, विशेषविज्ञानाभावात् । न चानधिकृतस्य कर्तृत्वम् । नाप्यकर्तृत्वे शास्त्रीयात्कर्मणः फलोत्पत्तिः । न ह्यत्र दृष्टवस्तु( ? दृष्टा वस्तु )स्वाभाव्येन फलोत्पत्तिः । यथा विषमविदुषोऽपि पीतवतो जनयत्येव स्वफलम् । नैवं वैदिकार्थाः । अचैतन्याच्चौषधा( ? ध्या )दीनामृत्विङ्न्यायोऽपि नास्ति । दृष्टं किल कुतश्चन कर्मणः परप्रयुक्तादप्युत्विजां फलम् 'यः कामयेत् पापीयान् स्यात्' इत्यादि । तत्र विध्यन्तरशेषत्वाभावात्स्पष्टत्वाच्च विधिप्रतिपत्तेर्मनुष्याधिकारत्वाच्च शास्त्रस्य युक्तोऽङ्गव्यापारसमाश्रितो वाचनिकस्तावन्मात्रोऽधिकारः । यथा परकीयाश्वमेधावभृथे ब्राह्मणस्य प्रायश्चित्तमुक्तम् । इह त्वधिकार एव नास्तीत्युक्तम् ।

ओषध्यः दर्भादयः । पशवः छागादयः । वृक्षाः पूज्याः । तिर्यञ्चः अपशवोऽपि 'पशवः' येषां हविष्ट्वेन चोदना 'कपिञ्जलानालभेत' इति । भारप्रवहणादनड्वाहस्तिर्यञ्चो वाजपेयादौ तिर्यञ्च इति व्यपदिश्यन्ते । यद्यपि तेषां तत्र निधनं नास्ति तथापि यावती च पीडा विद्यत इति सा निधनशब्देन लक्ष्यते । पक्षिणः कपिञ्जलादयः । यद्यपि ते पशुत्वेन चोद्य( ? द्य )न्ते, अप्रसिद्धतरप्रयोगस्तु 'सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः' इति । गवादयोऽपक्षिणः । चतुष्पाज्जातिवचनः पशुशब्दः । गोबलीवर्दवद्वा भेदो द्रष्टव्यः । मेधा.

(२) वृक्षाः प्लक्षाद्याः । तिर्यञ्चः कूर्मादयः । यज्ञार्थं विनाशं प्राप्तास्ते ततः तमधर्मार्जितं निकर्षं हित्वा पुनः आत्मज्ञानाधिकृतशरीरलाभेन उत्कर्षान् प्राप्नुवन्ति । § गोरा.

(३) तथा च वध्यस्याप्युपकारो भवेदित्याह– ओषध्य इति । पशवः छागाः । तिर्यञ्चः ततोऽन्ये च चतुष्पदाः । उच्छ्रितीः उत्तमजातीः । मवि.

(४) ओषध्यः व्रीहियवाद्याः । वृक्षा यूपाद्यर्थाः । (उच्छ्रितीः) जात्युत्कर्षम् । ¶ ममु.

(५) न वधो ह्यनुपकाराय पश्वादेः, अयमुपकारक इत्यवध इति भावः । † मच.

(६) यज्ञार्थे वधे न केवलं यजमानस्यैवाभ्युदयः, किंतु पश्वादीनामपीत्याह– ओषध्य इति । उच्छ्रितीः उच्छ्रयान् अभ्युदयानिति यावत् । नन्द.

(१) मस्मृ. ५।४० ; निक. ३२७ पुनः ( पराः ) मनुर्विष्णुश्च ; गर. ३९१ निकवत् ; मच. ५।४२ तृतीयचरणमात्रम् ; मुक्ता. ४५१ च्छ्रितीः (च्छ्रितिं); आप्र. ५३८ च्छ्रितीः पुनः (च्छृतीः पुरा ).

§ शेषं मेधागतम् ।
¶ शेषं गोरावत् । भाच. ममुगतम् ।
† शेषं ममुगतम् ।

**'मधुपर्के च यज्ञे च पितृदैवतकर्मणि।**
**अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥**

(१) यावत्यः काश्चित् शास्त्रचोदितहिंसास्ताः संक्षिप्य दर्शयति— मधुपर्क इति। मधुपर्को व्याख्यातः। तत्र गोवधो विहितः। यज्ञः ज्योतिष्टोमादिः। तत्र संस्थैकादशिन्यादिपशुवधो निरूढपशुवधादिः स्वतन्त्र एव च। पितृदैवतं पितरो देवता यस्मिन्कर्मण्यष्टकादौ, न तु श्राद्धम्। तद्धि सिद्धेन मांसेन विहितम्, न च पशुवधश्चोदितः। न चेदमेव विधायकं युक्तम्, उत्पत्तौ श्राद्धस्य हिंसाया अचोदितत्वात्, अस्य च विस्पष्टविधानादष्टकापशुवधेनापि नेतुं शक्यत्वात्, विधित्वे चास्य मूलकल्पनाप्रसङ्गात्, विध्यन्तरशेषतायाश्च वक्ष्यमाणत्वात्। येषां (? अन्येषां) तु मतं पितृणां देवतानां च कर्म महायज्ञादि। 'ब्राह्मणैर्वध्याः ... भृत्यानां चैव वृत्त्यर्थम्' (मस्मृ. ५।२२) (इत्यादिषु) आपदि पशुहिंसनमप्राप्तं प्राणात्ययेऽभ्यनुज्ञायते। † मेधा.

(२) पित्र्ये दैवे च कर्मणि। ¶ गोरा.

(३) उपसंहरति— मधुपर्के चेति। यज्ञे पशुबन्धसौत्रामणीसोमेषु। पितृकर्मणि अष्टकायाम्। दैवतकर्मणि आश्वलायनगृह्याद्युक्तपशुकल्पे। अत्रैव ब्राह्मणेन हिंस्या इत्येवकारेण व्यवच्छिद्यापि नान्यत्रेति पुनर्वदन् 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति न्यायेन निमित्तान्तरेण पार्वणादावपि हिंसाया अतिशयितप्रत्यवायहेतुतां दर्शयति। मवि.

(४) त्रिष्वेव पशुवध इत्याह— मध्विति। पितृदैवत्यं कर्म श्राद्धम्। नन्द.

(५) अत्र मधुपर्के पशुवधः सत्ययुगपरो ज्ञेयः। भाच.

---

† मच. मेधागतम्।

¶ शेषं मेधागतम्। ममु. गोरावत्।

(१) मस्मृ. ५।४१ ; अप. १।१०९ यज्ञे (सोमे) ; निक. ३२७ अपवत्, मनुर्विष्णुश्च ; गृर. ३९१ अपवत् ; आप्र. ५३८.

**'एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः।**
**आत्मानं च पशुं चैव गमयत्युत्तमां गतिम्॥**

(१) पारमार्थिकवेदार्थज्ञो द्विजः एतेषु मधुपर्कादिषु पदार्थेषु पशून् हिंसन् आत्मानं तांश्च पशून् उत्तमां गतिं स्वर्गादौ विचित्रशरीरसंबन्धं प्रापयति। न चा(न्य ?)त्र अन्यदीयकर्मणः कथमन्यस्य फलप्राप्तिरिति नो(?चो)दनीयः शब्दप्रमाणकोऽर्थः। यत् शब्दो बोधयति तत् तथैव प्रतिपादनीयम्। अन्यथा शब्दप्रमाणकधर्मार्थफललाभेऽपि क आश्वासः? पशुसञ्ज्ञव(? संज्ञपन)मन्त्रमध्ये वेद आम्नायते—'न वा उ एतन्म्रियसे न रिष्यसि। देवाँ इदेषि पथिभिः सुगेभिः॥' (ऋसं. १।१६२।२१) इति। पशुं किल होतैवमाह— न वै त्वं म्रियसे, नापि रिष्यसि हिंस्यसे। किं तर्हि? सुगैः निकृष्टयोनिव्यवधानशून्यैर्मार्गैः देवानेषि स्वर्गं प्राप्नोषीत्यर्थः। ¶ गोरा.

(२) वेदतत्त्वार्थविदिति वेदस्य तात्त्विकं तात्पर्यविषयमर्थं यदि जानाति, यदि तत्कर्म साङ्गं करोतीति यावत्, गमयत्युत्तमां गतिम्। अत उपकाराधिक्याददोष इत्यर्थः। मवि.

वेदविहितादन्यत्र पशुहिंसा निषिद्धा

**'गृहे गुरावरण्ये वा निवसन्नात्मवान्द्विजः।**
**नावेदविहितां हिंसामापद्यपि समाचरेत्॥**

(१) अवेदविहितहिंसाप्रतिषेधोऽयम्। न च वेदविहिताऽभ्यनुज्ञायते। न च गुरौ वसतो ब्रह्मचारिणोऽरण्ये च तपस्यतोऽन्या काचिद्धिंसाऽस्ति। अवकीर्णिनो ब्रह्मचारिणः स्यादपि। वानप्रस्थस्य तु नैवास्ति। ब्रह्मचारिणो-

---

¶ ममु., मच., भाच. गोरागतम्।

(१) मस्मृ. ५।४२ ; गोरा. पशुं चै (पशूंश्चै) ; निक. ३२८ गोरावत्, मनुर्विष्णुश्च ; गृर. ३९१ गोरावत् ; मच. गोरावत् ; आप्र. ५३८ गोरावत् ; भाच. गोरावत्.

(२) मस्मृ. ५।४३ ; निक. ३२८ ; गृर. ३९१ ; आप्र. ५३८ वान्द्वि (ने द्वि) ; बाल. १।१८१ पृ. ४४८ उत्त.

ऽप्यात्मोपेक्षणं नैवेष्यते । अतोऽयं विधिरेव श्राद्धे । गृह इत्यनुवाद एव । यदि चायं विधिः स्यात् , 'अरण्ये' 'आपद्यपि' इति किमालम्बनमेतत्स्यात् ? न च वानप्रस्थस्य साग्निकस्यापि पशुयागोऽस्ति । 'पुरोडाशांश्चरूंश्चैव' ( मस्मृ. ६।११ ) इत्यत्र दर्शयिष्याम इति केचित् । उपाध्यायस्त्वाह— युक्तं ब्रह्मचारिणः । वानप्रस्थस्य तु 'अपराजितां वाऽऽस्थाय' ( मस्मृ. ६।३१ ) इत्यादिनाऽऽत्मत्यागोऽपि विहितः , तस्य नास्ति जीवितार्था हिंसेति स्फुटतरं तत्रैव निरूपयिष्यते । ननु चाऽऽपद्ययं प्रतिषेध उच्यते, तत्कुतस्तत्रैवानुज्ञानं व्याख्यायते ? सत्यम् । अन्यथा न किंचिदनेन कृतं स्यात् । अर्थवादार्थमिति चेत् , अर्थवादस्याप्यालम्बनमन्वेषणीयम् । अतोऽनापद्ययं प्रतिषेधः , विधिश्चाऽऽपद्यविरुद्धः । बहुभेदादापदाम् अल्पीयस्यामापदि 'मासिकमर्धमासिकं वा भोजनं भविष्यति' इति बुद्ध्या प्रवृत्तिर्निषिध्यते । यदा त्वेषा बुद्धिः— 'अधुनैवानश्नन् जीवामि', यदा वाऽभिमुखागत उद्यतशस्त्र आततायी तदाऽऽपद्यनुज्ञा । एवं 'सर्वत एवाऽऽत्मानं गोपायेत्' इति श्रुतिरनुगृहीता भवति । मेधा.

( २ ) गृहस्थवानप्रस्थब्रह्मचारिभिक्षवस्थः प्रशस्तात्मा द्विजः आपद्यपि अशास्त्रीयां हिंसां नाऽऽचरेत् । ¶ गोरा.

( ३ ) गुरौ वसन् ब्रह्मचारी । गृहे वसन् गृहस्थः । अरण्ये वसन् वानप्रस्थः । अवेदविहिताम् अविहिताम् । आपदि क्षुधादिक्लेशे । प्राणात्ययसंभावनायां तु विहितत्वात् कर्तव्यैव हिंसा । § निक. ३२९

( ४ ) गृहे गार्हस्थ्ये । गुरौ ब्रह्मचर्ये । अरण्ये वनस्थत्वभिक्षुत्वयोः । एतेन यथा ब्रह्मचार्यादीनां हिंसादोषस्तादृगेव गृहिणोऽपीत्युक्तम् । मवि.

( ५ ) अवेदविहितां भक्षणमात्रार्थमेव कृताम् । गर. ३९२

¶ ममु., नन्द. चतुर्थाश्रमं विना गोरागतम् ।

§ आप्र., बाल. निकगतम् ।

( ६ ) गृह इत्यादित्रयमाश्रमत्रयसंग्राहकम् , ब्रह्मचारिगृहस्थयोः( ? वानप्रस्थयोः ) स्वतो मांसाभोजित्वेऽपि गुर्वाद्यर्थे हिंसासंभवात् । मच.

( ७ ) आत्मवान् यत्नवान् । ¶ भाच.

**'या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।**
**अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥**

( १ ) वेदविहितो यः प्राणिवधः सोऽस्मिञ्जगति चराचरे स्थावरजङ्गमे नित्यः अनादिः । यस्तु तन्त्रादिः ( ? दिविहितः ) सोऽन्वयव्यतिरेकभ्रान्त्या इदानींतनः । अतो वैदिकीं हिंसामहिंसामेव विद्यात् , अमुत्र प्रत्यवायाभावात् । अहिंसेति कार्यत उच्यते, न स्वरूपतः । ननु च सैव हिंसा, रूपाभेदात् ; कथं कार्यो भेदः ? उच्यते— वेदाद्धर्मो हि निर्बभौ । धर्मस्याधर्मस्य च यत्कथनं तद्वेदादेव, पौरुषेयाणामप्रामाण्यात् । वेदश्च तस्या एवाभ्युदयहेतुत्वं क्वचित् ज्ञापयति । स्वरूपाभेदोऽपि नास्ति, क्रत्वर्थपुरुषार्थत्वेन भेदात् , आशयभेदेन प्रवृत्तेः । लौकिक्यां मांसीयतो द्विषाणस्य वा प्रवृत्तिः , वैदिक्यां तु 'शास्त्रेण चोदितमिदं क्रत्वर्थम्' इति । निर्बभौ निःशेषेण भातः , प्रकाशतां गत इति यावत् । मेधा.

( २ ) कथं पुनस्तुल्ये प्राणिव्यापादने लौकिक्या अधर्मः , शास्त्रीयाया धर्म इत्याह— येति । या शास्त्रनोदिता हिंसा स्थावरजङ्गमेऽस्मिञ्जगति अनादिकालप्रवृत्ता तां हिंसाकार्याभावादहिंसामेव विद्यात् । अतो नान्यप्रमाणको धर्मो निर्बभौ प्रकाशतां गतः । एवं च नात्र कुतार्किकवितर्का आक्रामन्ते । $ गोरा.

( ३ ) नियता सर्वैरनुष्ठीयमाना । अहिंसामेव तां तामेवाहिंसाम् । अहिंसासाम्याभिधाने एवकारस्यानुपयोगात् । ¶ मवि.

¶ शेषं. गोरागतम् ।

$ नन्द. गोरागतम् ।

(१) मस्मृ. ५।४४ ; निक. ३२८ मनुर्विष्णुश्च ; गर. ३९१ ; मच. १।९९ चतुर्थचरणमात्रम् ; मुक्ता. ४५१ ; आप्र. ५३८ ; बाल. १।१८१ पृ. ४४८.

(४) कथं तर्हि तुल्ये हिंसात्वे वैदिकी देवादिपशुहिंसा नाधर्मायेत्यत आह— या वेदविहितेति । या श्रुतिविहिता कर्मविशेषदेशकालादिनियता । 'देवपशुहननमधर्मः, प्राणिहननत्वात्, ब्राह्मणहननवत्' इत्याद्यनुमानमुपजीव्यशास्त्रबाधादेव न प्रवर्तते । दृष्टान्तीकृतब्राह्मणहननस्याप्यधर्मत्वे शास्त्रमेवोपजीव्यम् । निर्बभौ निःशेषेण प्रकाशतां गतः । ¶ ममु.

(५) किंच, वेदविहिता हिंसा न हिंसेत्याह— येति । हिंसातोऽधर्मो यथा वेदप्रमाणकस्तथा यज्ञे हिंसातो धर्मस्तत्प्रमाणक इति भावः, 'कर्म ब्रह्मोद्भवं विद्धि' (भगी. ३।१५) इति स्मृतेः । मच.

नियमेन फलदः आत्मपरित्राणार्थं धर्मो रक्षणीयः

**[1]धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।**
**तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥**

(१) न भयादन्यथादर्शनं कर्तव्यम्, यतो धर्मो व्यतिक्रान्तः सन् हन्ति इत्यर्थः, नोऽर्थी तत्सहायो राजा वा । तथा धर्म एव पालितः सर्वतो भयमपनुदति । नापकर्तुमर्थ्यादयः क्षुद्राः शक्नुवन्ति । तस्मादेवंजानता— 'सुखदुःखे धर्माधीने' इति, धर्मो न हन्तव्यः इति । यदि वयं धर्मं हन्मस्तदा सोऽस्मान् सर्प इव रोषितः प्रतिहन्तीत्यतो धर्मो हतः सन् माऽस्मान् वधीत् इत्यात्मपरित्राणार्थं धर्मो रक्षितव्यः । मेधा.

(२) तस्माद्धर्म एव व्यतिक्रान्तो दृष्टादृष्टाभ्यां नाशयति, नार्थिप्रत्यर्थ्यादि । स एव चानतिक्रान्ततया (? न्तस्तथा) रक्षति । तस्माद्धर्मो नातिक्रमणीयः । 'माऽस्माकं त्वत्सहितानां धर्मो व्यतिक्रान्तो दृष्टादृष्टार्थं नाशं कार्षीत्' इति सभ्यैरसत्प्रवृत्तः प्राड्विवाकः संबोधनीयः । गोरा.

(३) हतः हन्यमानः । मा वधीत्, ‡इति पूरणीयम् । मवि.

(४) अथवा 'नो' निषेधेऽव्ययम् । नो हतो धर्मो मा वधीत् न हन्त्येवेत्यभिप्रायः । § ममु.

(५) धर्मस्य हननाद्रक्षणमेव पथ्यमित्याह— धर्म इति । धर्मो न हन्तव्योऽस्माभिः, यतः नः अस्मान् हतः अधर्मेण प्रतिबद्धः मा वधीत् मा हिंस्यात् इत्यन्वयः । अन्यथा धर्मस्य हननाभावाद्धतो वा कथं हन्यात्? इति भावः । मच.

(६) कथं धर्मे हन्यमाने सभासदो हन्यन्त इत्याह— धर्म एव हत इति । यैर्धर्मो हतस्तान् धर्मो हन्त्येव । हे महर्षयः, मा नः स्वान्(? अस्मान्) धर्मो वधीत् । नन्द.

(७) धर्म एव पुरुषं हन्ति । हतो धर्मः नः अस्माकम् अवधीत् । भाच.

**[1]वृषो हि भगवान्धर्मस्तस्य यः कुरुते ह्यलम् ।**
**वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥**

(१) वृषलशब्दनिर्वचनेन मिथ्यादर्शी निन्द्यते । न जातिवृषलो वृषलः, किं तर्हि? यो वृषस्य कामवर्षिणो धर्मस्य अलं कुरुते । निवृत्तिवचनः अलंशब्दः । स वृषल इत्येतमर्थं देवाः प्रतिपन्नाः । मनुष्यास्तु यदि जातिशब्दमेव मन्यन्ते, कामं मन्यन्ताम्, प्रमाणतरास्तु देवाः । ते चानेन प्रवृत्तिनिमित्तेन वृषलशब्दप्रयोगं मन्यन्ते । देवग्रहणमर्थवादः । तस्मात् 'श्राद्धकाले वृषलैर्न प्राप्तव्यम्', 'हन्तव्यो वृषलश्चौरः' इत्याद्यासु क्रियासु मिथ्यादर्शी ब्राह्मण एव वृषलशब्देन ग्रहीतव्य इति । अतो वृषलत्वं मा प्रापमिति धर्मं न लोपयेत् न नाशयेदिति । वृषलत्वाध्यारोपो निन्दा । $ मेधा.

---

¶ शेषं गोरावत् । भाच. ममुगतम् ।

(१) मस्मृ. ८।१५; मेधा. ८।१७ प्रथमचरणमात्रम्; बाल. १५.

‡ 'इति' इतिपदमित्यर्थः ।

§ शेषं गोरागतम् ।

$ अप., मवि., ममु.; भाच. मेधागतम् ।

(१) मस्मृ. ८।१६; अप. १।२२४ ह्यलम् (त्वलम्) चतुर्थचरणे (सर्वधर्मबहिष्कृतम्); स्मृच. ४।१८४ ते ह्यलम् (तेऽप्ययम्).

( २ ) तस्मात् सकलकामवर्णानां न(? वर्षणेन) वृषशब्देन धर्म उच्यते । तस्य वा(ह ?)रणं कुरुते तं देवा वृषलं मन्यन्ते । धर्मव्यतिक्रमपरिहारार्थं वृषलवचनम् । ‡ गोरा.

( ३ ) अलं निवारणम् । एवं च व्यवहारद्रष्टृषु यो धर्मबाधनं कुरुते स वृषलः । स्मृच. ४।१८५

( ४ ) वृषः प्रवर्षत्यर्थकाममोक्षानिति । वृषलं शूद्रं गवाधिचण्डालं वा । § मच.

( ५ ) हि हेतौ । † नन्द.

'एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥

( १ ) भयाद्धर्मातिक्रमो न कर्तव्य इत्येतत् 'धर्म एव हतो हन्ति' इत्यनेनोपदिष्टम्, स्नेहतो न कर्तव्य इत्यनेनोपदिश्यते । यत एकः सुहृद्धर्मः, तत्र स्नेहो भावनीयः । अन्यो हि मनुष्यः सुहृत् कार्यमपेक्ष्य जहाति जीवन्तम् । योऽपि स्यादत्यन्तमित्रं तस्यापि सौहार्दमा निधनात् । धर्मस्तु मृतमपि पुरुषमन्वेति । अतो न सुहृदपेक्षया मिथ्यादर्शनमुपेक्षा वा कर्तव्या । 'भार्या पुत्रो मित्रमर्थाश्च रिक्थं नश्यन्त्येते देहनाशे नरस्य । धर्मस्त्वेको नैनमुज्झत्यजस्रं तस्माज्जह्यात्पुत्रदारान् न धर्मम् ॥' । यदन्यद्धर्माद्भार्यादि तत्सर्वं शरीरेण समं सह नाशं गच्छति । धर्मादन्यो मृतं न परित्रातुं कश्चित्समर्थः इत्यतः सुहृद्बान्धवानुरोधादपि धर्मो न हातव्यः । ¶ मेधा.

( २ ) अनुयाति न त्यजति । मवि.

( ३ ) अहो, सर्वप्रयत्नेन धर्मो रक्षणीय इत्याह— एक इति । सुहृत् प्रत्युपकारं नापेक्षते, अथवो(? चो)पकरोति, अत एव शायते— 'धर्मो नित्यः सुखदुःखे त्वनित्ये' इति । अहो कष्टम्, यदेतादृशं धर्मं जना न पालयन्तीत्याह— शरीरेणेति स्थूलेन । प्रत्यक्षं ह्येतत् । $ मच.

( ४ ) कुतश्च धर्मं न लोपयेदित्याह— एक एवेति । अनुयाति कर्तारं रक्षति । यत् यस्मादिति यावत् । अन्यत् पुत्रमित्रादि कर्म । हिशब्दः हेतौ । तस्मान्न लोपयेदिति । नन्द.

परकर्म नानुष्ठेयम्, स्वकर्मैव अनुष्ठेयम्

'स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥

( १ ) पूर्वोक्तस्य जानपदादेर्धर्मस्य दृष्टादृष्टताऽनेन प्रदर्श्यते । स्वानि कर्माणि कुलस्थित्यनुरूपाणि ये कुर्वन्ति ते दूरस्था अपि प्रिया भवन्ति । सर्वस्यान्यो निकटवर्ती संसर्गातिशयात्प्रियो भवति । स्वकर्मकारी तु दूरस्थ एव प्रियः । स्वे स्वे कर्मण्यवस्थिता इत्यनेन परकर्माननुष्ठानमाह । ये न परकर्माणि कुर्वन्ति ते सर्वस्य प्रिया भवन्तीति श्लोकार्थः । † मेधा.

( २ ) दूरे देशे देशान्तरे । अतो लोकाविरुद्धत्वात्स्वस्वजात्यादिधर्म एव ग्राह्यस्तेषामित्यर्थः । स्वे स्वे धर्म इति प्रियत्वे हेतुतया पुनरुक्तम् । मवि.

( ३ ) स्वे स्वे च नित्यनैमित्तिकादौ कर्मणि वर्तमानाः । $ ममु.

( ४ ) अत्रैवार्थवादमाह— स्वानीति । स्वे स्वे नित्ये नैमित्तिके च । यथोक्तकारी हि दूरे वर्तमानः लोकस्य रक्षणादौ लोकेन रक्षणसमर्थस्य राज्ञः, सामान्योक्तिर्वा । मच.

'अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम् ।
संप्रधार्याब्रवीद्धाता न समौ नासमाविति ॥

‡ शेषं मेधागतम् ।
§ शेषं गोरागतम् ।
† शेषं स्मृचगतम् ।
¶ गोरा., ममु., भाच. मेधागतम् ।
(१) मस्मृ. ८।१७ ; मेधा. २१६ पू. ; व्यक. १४.

$ शेषं मेधागतम् ।
† गोरा. मेधागतम् ।
(१) मस्मृ. ८।४२.
(२) मस्मृ. १०।७३ ; पृक. २७२ ; गुर. ४८१.

(१) अनार्यः शूद्रः । स आर्यकर्मा द्विजातिशुश्रूषादिरतः पाकयज्ञयाजी च देवद्विजनमस्कारपरः । आर्यो ब्राह्मणादिः सोऽनार्यकर्मा प्रतिषिद्धाचरणो विहितकर्मत्यागी । तावुभौ संप्रधार्य तद्गुणत्वेनावगम्य तयोः किं कस्यचित्सातिशयो गुणः कस्मिंश्चित् वा अन्ते(?) निरूपणबुद्धिः । संप्रधार्य धाता प्रजापतिर्मनुः बुद्ध्या निरूप्याब्रवीत् । न समौ जातेर्गरीयस्त्वा उत्कृष्टगुणोऽपि शूद्रः तुल्यो न स्यात् । पुनराह– नासमौ । किं जात्या तूत्कृष्टयाऽपि बहुदोषावगृहीतस्य ? एतदुक्तं भवति– न जातिबलमाश्रित्य नरो माननीयः, किंतु गुणा माननीयाः । न गुणहीनं जातिः परित्रातुमलम्, प्रायश्चित्तोपदेशवैयर्थ्यप्रसङ्गात् । 'अनार्यायां समुत्पन्नः' (मस्मृ. १०।६६) इत्यत आरभ्य यावदयं श्लोको वर्णसंकरनिन्दा कर्मप्रशंसाऽर्थः(? सार्था) । नात्र किंचिद्विधीयते प्रतिषिध्यतेवा, नापूर्वार्थो ज्ञाप्यतेऽभिलक्षणवत् । तस्मात्प्रशंसार्था एवैते । मेधा.

(२) शूद्रं द्विजातिकर्मकारिणं द्विजातिं च शूद्रकर्मकारिणं प्रजापतिर्विचार्य न समौ तौ नाप्यसमावित्याह । यतः शूद्रो द्विजातिकर्माऽपि न द्विजातिसमः, तस्य द्विजातिकर्माधिकारे( ऽ )सति तत उत्कर्षाभावात् । निषिद्धाचरणेन च प्रत्यवायात् द्विजातिरपि शूद्रकर्माणि आचरन् न शूद्रसमः, निषिद्धसेवने जातेऽपि (? सेवनेऽपि जातेः) महाभाग्यात् । नाप्यसमोऽपि (? प्यसमौ), निषिद्धाचरणेनोभयोः पातित्यात् । तस्माद् यस्य विहितं तत्तेन कर्तव्यमिति संकरपर्यन्तवर्णोपदेशः । ‡ गोरा.

(३) न समौ, जातितः एकस्योत्कृष्टत्वात् । नासमौ, उत्कृष्टजातेरपि ब्राह्मणादेर्नीचकर्मकारित्वात् । तेन तस्येतरेण शुश्रूषादिकं न कर्तव्यमिति तात्पर्यार्थः । § गृक. २७२

(४) यथा क्षेत्रविशेषोत्पन्नत्वेऽपि बीजदोषान्न श्रेष्ठत्वं तथा दुष्टकर्मकरणादपि न श्रैष्ठ्यमित्याह– अनार्यमिति । अनार्ये ब्रात्यादुत्पन्नम् आर्यकर्माणं ब्राह्मणकर्मकर्तारम् । तथा आर्यम् अव्रात्योत्पन्नमपि निन्दितकृष्यादिकरम् । न समौ ब्राह्मणैः सदृशौ, दोषसद्भावात् । नासमौ नात्यन्तमपकृष्टौ, ब्राह्मण्यभावात् । एवं च वृत्त्युत्कर्षे तेषामपि क्रमादुत्कर्ष इत्युक्तम् । अत एवाऽऽपस्तम्बो येषामप( ? षां प )तितसावित्रीकाः पूर्वपुरुषाः केऽपि ज्ञायन्ते तेषामपि प्रायश्चित्तपूर्वकं संस्कारं विहितवान् । एतदर्थमेव च 'आर्ये चानार्यकर्माणम्' इत्यप्रकृतमप्युक्तम् । मवि.

(५) अनधिकारिणा क्रियमाणं कर्म न फलयेति ज्ञापनार्थे चातुर्वर्ण्येषु प्रथमाध्यायाद्युक्ताः स्वधर्मवृत्तीः संसारयन्नापद्धर्ममाह– अनार्येत्य(? त्याऽ)ध्यायसमाप्तेः । अनार्ये क्षत्रियादिमार्यकम् आर्यकर्माणं याजनादिकर्तारम् । आर्ये शूद्रसेवादिकारिणम् । ( न ) समौ, कर्मणा जात्यन्तरानुत्पत्तेः । नासमौ, उभयोर्निषिद्धाचरणस्य तुल्यत्वात्, 'परधर्मो भयावहः' इत्युक्तेः । मच.

(६) अनार्ये द्विजातितोऽपकृष्टम् । आर्यकर्माणं गुणतो विशिष्टम् । न समौ नातिविषमौ, अल्पान्तरावित्यर्थः । नन्द.

(७) अनार्ये ब्रात्यादुत्पन्नम् आर्यकर्माणं च, पुनः आर्यमनार्यकर्मिणं धाता संप्रधार्य अवधार्य समौ न असमौ न इत्यब्रवीत् । भाच.

**[1]वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।**
**परधर्मेण जीवन् हि सद्यः पतति जातितः ॥**

(१) पूर्वस्य विधेर्निन्दार्थवादोऽयम् । यो यस्य विहितो धर्मो जात्याश्रयेण, विगुणोऽप्यपरिपूर्णाङ्गोऽपि

‡ ममु. गोरावत् ।

§ गृर. गृकवत् ।

(१) मस्मृ. १०।९७ ; मिता. ३।४१ तृतीयचरणे (परधर्माश्रयाद्विप्रः) ; अप. ३।४० ; गृक. १८४ ; मभा. ७।६ पूर्वार्धे (श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।) ; स्मच. २।४६६, ४७५ ; ममु. १०।१०१ (स्वधर्मो वरं विगुणः) एतावदेव ; गृर. ४२३ पूर्वार्धे (स्वधर्मो वरं विगुणो न पारक्योऽनुष्ठितः ।) ; मपा. २३३ द्वितीयचरणे (परधर्मात्स्वनुष्ठितात्) ; मर. १८९ क्यः स्व (क्यस्त्व) ;

युक्तोऽनुष्ठातुम्, न परधर्मः सर्वाङ्गसंपूर्णोऽपि । अत्र निन्दार्थवादः– परधर्मेणेति । § मेधा.

(२) अत्र वैश्यवृत्तेरुक्ताया वरमशुद्धात्प्रतिग्रहः, विगुणीभूताऽपि स्ववृत्तिः स्ववृत्तितया प्रशस्तेत्यवतारयति –वरमिति । पतति जातितः स्वानन्तरजातितुल्यतां याति । मवि.

(३) आपद्यप्यन्यवृत्तिभ्योऽपि स्ववृत्तिरेव ब्राह्मणस्य ज्यायसीत्याह मनुः– वरमित्यादि । मपा. २३३

(४) पारक्यः परकीयः स्वनुष्ठितः साङ्गोऽपि न श्रेयान्, 'स्वधर्मो विगुणः श्रेयान् परधर्मो भयावहः' इति स्मृतेः । जातितः कर्मजात्यन्तरप्राप्त्या जात्यन्तरं जायते, 'ततः साम्यात्' इति मनुभट्टोक्तेः । मच.

(५) वरं स्व० इत्यादीनि मन्वादिवचनानि आपदि विगुणस्यापि स्वधर्मस्य याजनादेः संभवे वेदितव्यानि । असंभवे त्वापदि क्षत्रियादिवृत्तिः । इयं हि हिंसाप्राया कलौ वर्जनीया, 'आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा ॥' इति कलौ निषिद्धत्वात् । मुक्ता. ६०

(६) वरशब्दः उत्कृष्टवचनः । नन्द.

सामर्थ्ये अनापदि आपद्धर्मो नानुष्ठेयः

**[1]आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।**
**स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम् ॥**

(१) आपत्कल्पप्रतिनिधिं वैश्वानरीं वा विद्यमानधनो यो गौणपक्षमाश्रयति तस्य न सोऽर्थः सिध्यति । ‡ मेधा.

(२) न चैवं विभवेऽपि तन्मात्रेऽपि प्रत्यवायासंभव इत्याह– आपत्कल्पेनेति । मवि.

**[2]विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।**
**आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ॥**

(१) एष एवार्थः– आपदि प्रतिनिधिराश्रयितव्यः, न संपदि । § मेधा.

(२) मरणाद्भीतैः 'नासोमपो म्रियेत' इत्यादिनिषिद्धोऽसोमपादिर्मरणमीतैः । विधेर्विहितस्य प्रतिनिधिः प्रतिरूपकः । मवि.

(३) मरणात् आवश्यकानामकरणाच्चजन्यनरकाद्वा भीतैस्तैः । प्रतिनिधिः सोमाद्यभावे वैश्वानर्यादि । चत्रयं समुच्चयः(१ ये) । मच.

(४) आपदि त्वकरणादापत्कल्प एव श्रेयानिति परकृतिरूपेणार्थवादेनाऽऽह– विश्वैश्च देवैरिति । नन्द.

**[3]प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।**
**न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥**

(१) अयमपि पूर्वशेषोऽपवादः । सांपरायिकं पारलौकिकम् । मेधा.

§ गोरा., ममु. मेधागतम् ।

‡ गोरा., ममु., मच., नन्द., भाच. मेधागतम् ।

निप्र. २।२७३ मरवत् ; मुक्ता. ६० मपावत् ; संम. ७७ मितावत् ; बाल. ३।४१ द्वितीयतृतीयचरणयोः (परधर्मात्स्वनुष्ठितात् । परधर्मेण जीवन् हि ) इत्यपि पाठान्तरं निर्दिशति ; इन्दु. २०१.

(१) मस्मृ. ११।२८ ; अप. १।१२६ ; स्मृच. २।४१५ ; ममु. ११।३० प्रथमचरणमात्रम्.

§ गोरा., स्मृच., ममु. मेधागतम् ।

(१) मस्मृ. ११।२९ ; अप. १।१२६ ; स्मृच. २।४१५.

(२) मस्मृ. ११।३० ; विश्व. १।३८ पू. ; अप. १।१२६ कल्पेन ( कल्पेऽनु ) ; ब्रह्म. ५१ ; स्मृच. ४।१६० ; चत्र. ३२ ; स्मृसा. ८९ वर्तते ( वर्तयेत् ) (=) ; पमा. १।६८४ ; निप्र. १।९, १९६ (=) ; सावी. २७ उत्तरार्धे (स नाऽऽप्नोति फलं चेह न परत्रेति च श्रुतिः ।) (=) ; प्रर. ५०–५१ उत्तरार्धे (स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥) संग्रहे ; गप. २० कल्पेन व ( कल्पेऽनुव ) : ६४ कल्पेन व (कल्पे प्रव) (=) ; मुक्ता. १५ उत्तरार्धे (स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिस्मृती ॥ ) आदर्शमुत्तरार्धपाठमपि पाठान्तरत्वेन निर्दिशति, स्मृत्यर्थसारे : २९२ पूर्वार्धे ( प्रभुः प्रथमकल्पेऽपि योऽनुकल्पे प्रवर्तते । ) विद्यते (वर्तते) ; पप्र. २९, ७१ ; संर. १४ प्ररवत्.

(२) यो मुख्यानुष्ठानसमर्थः सन्नापद्योदितेन प्रतिनिधेरनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकमभ्युदयप्रत्यवायाभावाख्यं न भवतीति 'आपत्कल्पेन यो धर्मम्' इत्यनेनोक्तमप्येतदुपसंहारार्थे पुनरुच्यते । ¶ गोरा.

(३) ऐहिककीर्त्यादेस्तु लाभो भवत्येव । † मवि.

(४) साम्परायः उत्तरकालः, 'युद्धायत्योः साम्परायः' इत्यमरसिंहाभिधानात् । एवं चायमर्थः— साम्पराये भविष्यत्काले स्वर्गादिकं फलं न विद्यते न सिध्यति । § स्मृच. ४।१६०

(५) 'प्रभुः०' इति वाक्यस्यापि प्रथमकल्पसामर्थ्ये सत्यनुकल्पनिन्दापरत्वम्, साङ्गप्रधाननिरूप्यत्वात् सामर्थ्यस्य । स्मृसा. १६५

(६) सर्वत्र हि मुख्यालाभे विधीयमानानामनुकल्पत्वादशक्तविषयत्वमेवाऽऽभाति । तदुक्तम्— 'प्रभुः०' इति । यथाऽन्नाभावे विहितं हेमश्राद्धादि । सादी. २७

(७) सामर्थ्ये तु 'प्रभुः ०' इति न्यायान्न फलं न वा प्रत्यवायपरिहार इति मण्डनाचार्यः । गप. २०

(८) साम्परायो विपत्, ततः उत्तारकं साम्परायिकम् । † नन्द.

**'एवं संचिन्त्य मनसा प्रेत्य कर्मफलोदयम् ।**
**मनोवाङ्मूर्तिभिर्नित्यं शुभं कर्म समाचरेत् ॥**

(१) एवमिति कृत्स्नस्य विधिनिषेधसमूहस्य प्रत्यवमर्शः । प्रेत्य कर्मफलोदयं शुभस्य कर्मणः स्वर्गादिफलावाप्तिरशुभस्य नरकोपपत्तिरकृते प्रायश्चित्ते प्रायश्चित्तं चातिदुःखरूपम् । एतन्मनसि संचिन्त्य शुभं कर्म समाचरेत् । विहितं शुभम् । तथा 'संकल्पमूलः कामो वै' (मस्मृ. २।३) 'वाच्यर्था नियताः' (मस्मृ. ४।२५६) इति च । तस्माद्यद्यपि 'न हिंस्यात्' इत्युद्यमननिपातने न दण्डादेः परदुःखोत्पादने उच्येते, तथाऽप्येवमादिशास्त्रपर्यालोचनयाऽध्यवसायादिनिषेधः । एवमभक्ष्यभक्षणादावपि द्रष्टव्यम् । यद्यपि भक्षणम् अन्नादिनिगरणपर्यन्तं तथाऽपि मानसोऽध्यवसायो निषिद्ध एव । एवमगम्यागमनेऽपि । यद्यपि द्वीन्द्रियसमापत्तिर्गमनं तथापि तदर्थाध्यवसायो व्यापार एवमादिशास्त्रान्तरैर्निषिध्यते । यद्येवम्, हननभक्षणागम्यागमनेषु यत्प्रायश्चित्तं तदध्यवसायेऽपि प्राप्नोति । नैष दोषः । ब्राह्मणवधे तावदिष्टमेव, 'अहत्वाऽपि' (गौध. २२।१०) इति वचनात् । अन्यत्र तु मुख्यस्यैव शब्दार्थस्य परिग्रहो न्याय्यः । प्रतिषेधे तूक्तशास्त्रपर्यालोचनया स मनोव्यापारात्प्रभृति कायव्यापारपर्यन्तविषयोऽवतिष्ठते । यद्येवं 'निन्दितं समाचरन्' (मस्मृ. ११।४४) इति प्रायश्चित्तनिमित्तोपदेशात्प्रतिषेधानुसारिप्रायश्चित्तं प्राप्नोति । क एवमाह नास्ति प्रायश्चित्तमिति ? किंच, तच्छब्दचोदितान्न भवत्यन्यस्य लघु कल्प्यम् । तथा च सर्वप्रायश्चित्तानामेवमादिरपि विषयो न्याय्यः । कुतः पुनरयं विशेषो लभ्यते ? प्रतिषेधाध्यवसायादिति । प्रायश्चित्तानि तु शब्दार्थेष्वेव । 'व्रतानि यमधर्माश्च सर्वे संकल्पजाः' (मस्मृ. २।३) इत्यनेन विधिप्रतिषेधावेवोच्येते । व्रतानि विधिरूपाणि, नियमाः प्रतिषेधलक्षणाः, तत्रैव च कृतार्थत्वान्नैमित्तिकेषु यावत्प्रवर्तितुमर्हन्ति । अस्ति च प्रतिषेधसामान्यनिमित्ततो भवति प्रायश्चित्तम् । न च तदेव । 'परद्रव्येष्वभिध्यानम्' (मस्मृ. १२।५) इति चात्रैवान्ते दर्शयिष्यामः । मेधा.

(२) एवं शुभाशुभानां कर्मणां परलोक इष्टफलोत्पत्तिं मनसा विचार्य मनोवाक्कायैः शुभमेव कर्म कुर्यात्, इष्टफलत्वात् । नाशुभम्, अकृतप्रायश्चित्तानामदृष्टदुःखोत्पादनत्वात् प्रायश्चित्तकरणस्यापि दुःखरूपत्वात् । $ गोरा.

(३) कर्मफलोदयं वक्ष्यमाणं यातनोत्थम् । ¶ मच.

---

¶ व्रक., ममु., मच., पप्र., भाच. गोरागतम् ।

† शेषं गोरागतम् ।

§ पमा., मुक्ता. स्मृचगतम् ।

(१) मस्मृ. ११।२३१.

$ मवि., ममु., भाच. गोरागतम् ।

¶ शेषं गोरागतम् ।

**'एता दृष्ट्वाऽस्य जीवस्य गतीः स्वेनैव चेतसा।**
**धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः॥**

(१) स्वल्पार्थोऽयम्। धर्मतोऽधर्मत इति नञः प्रश्लेषः। धर्माधर्मनिमित्तात्। जीवस्य क्षेत्रज्ञस्याऽऽत्मनः। स्वेनैव चेतसा शास्त्रप्रामाण्यात् तदनुभवेत् (? न स्वनुभवेन)। कृत्स्नशास्त्रार्थफलोपसंहारः। मेधा.

(२) अस्य क्षेत्रज्ञस्य एताः (धर्मा)धर्महेतुकाः स्वर्गादाविष्टानिष्टशरीरप्राप्तीः स्वबुद्ध्या ज्ञात्वा धर्मानुष्ठाने सदा मनो विकुर्यात्। § गोरा.

(३) धर्मतो गतिं स्वर्गम्, अधर्मतश्च नरकम्। मवि.

(४) तथा च श्रुतिः– 'धर्मेण पापमपनुदति'। 'धर्मात्सुखं च ज्ञानं च' इति स्मृतिः। श्रुतिस्मृत्योर्धर्मस्यैव ज्ञानादिहेतुत्वात्। ¶ मच.

कर्मणि सात्त्विकादिभावानुसारेण फलविपाकः

**'यादृशेन तु भावेन यद्यत्कर्म निषेवते।**
**तादृशेन शरीरेण तत्तत्फलमुपाश्नुते॥**

(१) सात्त्विकेन राजसेन तामसेन वा भावेन यद्यत्कर्म निषेवते सात्त्विकं राजसं तामसं वा, शरीरेण तादृशेन सत्त्वबहुलेन रजोबहुलेन तमोबहुलेन वा तत्तत्फलमुपाश्नुते सात्त्विकं राजसं तामसं वा। यतश्चैतदेवं रजस्तमोबहुलात् कर्मणोऽकुशलसंकल्पहेतोरनिष्टफलप्राप्तिः अतस्तत्परिवर्जनेन कुशलसंकल्पकर्मणा भवितव्यम्। ‡ मेधा.

(२) कर्म स्नानयागादि। † गोरा.

(३) यादृशेन भावेन सत्त्वाद्युत्कटेन। तादृशेन देवादिशरीरेण। मवि.

(४) भावेन मनोवृत्तिरूपेण। यादृशेन सात्त्विकादिरूपेण। तादृशेन सात्त्विक(? कादि)भेदभिन्नेन देवादिदेहेन। तदुक्तम्– 'योऽर्चितः प्रतिगृह्णाति योऽर्चितं च प्रयच्छति' इति। मच.

(५) भावेन मनसा। नन्द.

मोक्षसाधनानि कर्माणि

**'एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः।**
**नैःश्रेयसकरं कर्म विप्रस्येदं निबोधत॥**

(१) (विहितानां) प्रतिषिद्धानां च कर्मणां यावत्फलोत्पत्तिस्तानि समुपदिष्टानि। ततो निवर्तितव्यम्। यतो दुःखानुबन्धी विषयसुखोपभोगोऽतस्ततो निवर्तन्ते। (नैः)श्रेयसे कर्मविधौ मोक्षोपाये वक्ष्यमाणविद्याकाण्डे उपदिष्टे स्थातव्यम्, तदिदानीं वक्ष्यामः। मेधा.

(२) एषा शुभाशुभकर्मणाम् अखिला उत्पत्तिर्युष्माकमुक्ता। इदानीं ब्राह्मणस्य (स्वर्ग ?)मोक्षार्थं कर्मानुष्ठानमिदं वक्ष्यमाणं शृणुत। $ गोरा.

(३) नैःश्रेयसकरं मोक्षहेतुम्। मवि.

(४) वैराग्यार्थमुक्तेन्द्रियप्रसक्तिजनिता गतीरुपसंहरन्मोक्षोपयोगि कर्म प्रतिजानीते– एष इति पञ्चविंशत्या। नैःश्रेयसं निःश्रेयसस्य मोक्षस्य साधनम्। मच.

(५) श्रेयः पुरुषार्थः। नितरां श्रेयः निःश्रेयसम्। तत्र भवं च नैःश्रेयसम्। अत्र पूर्वोक्तेषु श्रेयस्कारेष्व(?स्करेषु)कर्मसु प्रकृष्टतरमित्यर्थः। विप्रग्रहणं क्षत्रियवैश्ययोरप्युपलक्षणार्थम्। नन्द.

(६) नैःश्रेयसं निःश्रेयसः भावः नैःश्रेयसम्, तं मोक्षसाधनम्। भाच.

---

§ ममु., नन्द., भाच. गोरागतम्।

¶ शेषं गोरागतम्।

‡ भाच. मेधागतम्।

† शेषं मेधागतम्। ममु. गोरावत्।

(१) मस्मृ. १२।२३.

(२) मस्मृ. १२।८१.

$ ममु. गोरावत्।

(१) मस्मृ. १२।८२ ; गोरा. उत्तरार्धे (नैःश्रेयसं कर्मविधिं विप्रस्येमं निबोधत॥'). मेधा., ममु., मच., नन्द., भाच. एतेषां व्याख्यानात् गोरावत् पाठ इति भाति। तत्रापि 'नैःश्रेयसम्' इत्यत्र विसर्गरहितः पाठो नन्दनस्य।

**'वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥**

(१) निःश्रेयसशब्देन न पुनः पुरुषार्थसिद्धिरुच्यते, अपि तु निश्चितसुखदुःखानुबन्धः प्रीतिविशेषोऽपि । वेदाभ्यासादीनां तत्रतत्रोक्तानां पुनर्वचनमात्मज्ञानस्तुत्यर्थम् । ज्ञानं वेदार्थविषयम् । उक्तार्थान्यन्यानि पदानि । मेधा.

(२) वेदस्य ग्रन्थार्थतोऽभ्यसनम्, कृच्छ्रादि तपः, आत्मज्ञानम्, इन्द्रियजयः, हिंसावर्जनम्, गुरुचर्या इत्येतत् प्रकृष्टम् अर्थ(? अप)वर्गसाधनम् । गोरा.

(३) तपः प्राणायामादि । ज्ञानं ध्यानम् । मवि.

(४) अविहितहिंसावर्जनम् । ‡ ममु.

(५) वेदाभ्यासोऽर्थतः शब्दतश्च । तपः ऐकाग्र्यं मनसः, 'मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः' इत्युक्तेः । ज्ञानं ज्ञानार्थे नित्यनैमित्तिककर्म, 'देवयाजिनः श्रेयानात्मयाजी' इति श्रुतेः । देवयाजिनः फलार्थं( कर्मानुष्ठातुः ) आत्मयाजी अन्तःकरणशुद्ध्यर्थं नित्यनैमित्तिककर्मानुष्ठाता श्रेष्ठः । तथा च सूत्रम्– 'सर्वापेक्षा ( च ) यज्ञादिश्रुतेरश्ववत्' ( ब्रसू. ३।४।२६ ) इति । ज्ञाने जनयितव्ये सर्वेषां कर्मणामपि तज्जनकतयाऽपेक्षेति 'तमेतं वेदानुवचनेन' इत्यादिश्रुतेरित्यर्थः । संयम इत्युपलक्षणं नियमादेः । तथा च पतञ्जलेः सूत्रम्– 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि' ( योसू. २।२९ ) इति । परं वेदाभ्यासादि कर्मभ्य इत्यन्वयः । मच.

(६) ज्ञानं धर्माधर्मज्ञानम् । नन्द.

(७) वेदानाम् अभ्यासः । तपः दानादि । ज्ञानं ध्यानम् । परम् उत्कृष्टम् । भाच.

‡ शेषं गोरावत् ।

(१) मस्मृ. १२।८३–८५.



**सर्वेषामपि चैतेषां शुभानामिह कर्मणाम् ।
किंचिच्छ्रेयस्करतरं कर्मोक्तं पुरुषं प्रति ॥**

(१) एवं वेदाभ्यासकर्मादीनाम् आध्यात्मिकं कर्मातिशयेन श्रेयसः साधनं पुरुषस्य स्यादिति वितर्केण ऋषीणां जिज्ञासामुत्पाद्योत्तरेण निश्चय इति । गोरा.

(२) सर्वेषामिति मुनीनां प्रश्नः । किंचिदिति किमित्यर्थे । मवि.

(३) सर्वेषामप्येतेषां वेदाभ्यासादीनां शुभकर्मणां मध्ये किंचित्कर्म अतिशयेन मोक्षसाधनं स्यादिति वितर्के ऋषीणां जिज्ञासाविशेषादुत्तरश्लोकेन निर्णयमाह । ममु.

(४) 'कर्मण आरादुपकारकत्वम्' इत्युक्तेः स्यादाशङ्का ऋषीणाम्– शुभकर्मणां मध्ये ( श्रेयस्करतरं ) कर्म पुरुषं प्रति न किंचित्, जन्मप्रवाहानुच्छेदकत्वात् । मच.

(५) किं स्यादिति पृच्छेदय(? पृच्छा) चेदित्यर्थः । नन्द.

(६) सर्वेषां वेदाभ्यासादीनां कर्मणां पुरुषं प्रति किं निःश्रेयसकरं परं कर्म ? सर्वेषां वेदानां कर्मफलसत्त्वा(?त्त्व)-नियमात्कर्मसाध्यफलानां भस्मीभूतदेहादान(?दाव)संभवात् देहव्यतिरिक्तात्मदर्शनार्थं 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुतीनामात्मज्ञानं मोक्षसाधनतरमपि कर्मैव चोत्तरमीमांसामतमाश्रित्य श्रेयस्तरमिति । भाच.

परमं मोक्षसाधनमात्मज्ञानमेव

**सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥**

(१) द्विविधमात्मज्ञानम्– देहेन्द्रियबुद्ध्यादिव्यतिरिक्तस्य कर्तृभोक्तृत्वोपपत्तिरूपस्य अहंप्रत्ययप्रमेयतयाऽऽत्मनि विषयप्रतीत्यन्तर्गतस्य जीवक्षेत्रज्ञविज्ञानात्मादिपर्यायस्य शरीरनाशेऽप्यनष्टानां कर्मफलानामौर्ध्वदेहिकानां भोक्तृत्वज्ञानम्, अपरं सर्वस्य जगतो जन्मादीनां परमात्मैककारणत्वे( न ) नित्यस्य सत एकस्याविद्यावासनोपहितनानारूपस्य तिर्यङ्मनुष्यादिष्वेकत्वदर्शनम् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या-

सितव्यः ' ( बृउ. २।४।५ ) इत्येवमादिश्रुतिभिरुपदर्शित-स्वरूपस्य ज्ञानम् । तत्र क्षेत्रज्ञपरिज्ञानं कर्मविधिषूप-युज्यते । असति हि देहादिव्यतिरिक्तेऽस्मिन्नौर्ध्वदेहि-कानां भोक्तरि फलानां स्वर्गकामादिचोदना अनर्थिकाः स्युः , अतस्तत्र न कश्चित्प्रवर्तेत । अतस्तत् कर्मानुष्ठा-नोपयोगि । यत्तु परमात्मैकत्वज्ञानं तिरोधानोप-सेवनाभ्याससामर्थ्येनोपपद्यमानं शुद्धबुद्धमुक्तानन्दनित्या-विनश्वर( स्व )भावस्याऽऽत्मनः प्रकाशनं तत्रेदमुप-पद्यते– ' तदग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः । ' इति । अमृतं ततः गतेर्र्यापत्तिम् । तत इति विद्यानिर्देश आत्मविद्यायाः । क्षेत्रज्ञज्ञानं तु कर्मोप-कारकत्वादमृतत्वाय न कल्पते । अतो वेदान्तोपदिष्टस्य समस्तस्य द्वैताद्वैतत्रिषयस्य सदात्मनो दर्शनं तदात्मज्ञान-मभिप्रेतम् । मेधा.

( २ ) तेषां वेदाभ्यासादीनां सर्वेषामपि मध्या-दुपनिषदुक्तोपासनाभिः परमात्मस्वरूपावधारणं प्रकृष्टं स्मृतम् । यस्मात् सर्वविद्यानां तत् प्रधानं यतो मोक्ष-स्तस्मात् प्राप्यते । ‡ गोरा.

( ३ ) आत्मज्ञानं ध्यानम् । अग्र्यं मुख्यम् । मवि.

( ४ ) तत्रोत्तरम्– सर्वेषामिति । आत्मज्ञानं परं स्मृतमिति कर्मणोऽप्युद्देश्यम्, ' तं वेदा० ' इति श्रुतेः, ' सर्वं कर्माखिलम् ' इति स्मृतेः । तत् अग्र्यं श्रेष्ठम् उपासनाया अप्युद्देश्यं जानीहि । तत्र हेतुः– प्राप्यते ह्यमृतम्, तस्यैव सर्वपुंवाञ्छास्पदत्वात् । मच.

( ५ ) तच्छृणुतेत्याह– सर्वेषामिति । पञ्चम्यर्थे षष्ठी । आत्मज्ञानं परात्मज्ञानम् । नन्द.

षण्णां कर्मणां सर्वदा ऐहिकामुष्मिकश्रेयःसाधनं वैदिकं कर्मैव मुख्यम्

**[१]षण्णामेषां तु सर्वेषां कर्मणां प्रेत्य चेह च ।**
**श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम् ॥**

( १ ) वेदाभ्यासादीनि षट्कर्माणि श्रेयस्कराणि । तेभ्यो निःश्रेयसकरतरत्वं वैदिकस्य ज्योतिष्टोमादेः कर्मणः । ननु च यदि तावत्पूर्वेषामिति निर्धारणे षष्ठी तदनुपपन्नम् । निर्धारणं हि समुदायभूत( ? यान्तर्भूत )-विशेषस्य केनचिद्धर्मेण तदेकविषयेण, चो( ? न चो )-पपद्यमानस्यावान्तरेणासंभविना( ? ) । ' क्षत्रियो मनु-ष्याणां शूरतमः ' इति मनुष्यजातौ क्षत्रियोऽप्यन्तर्भूतः स शूरतमत्वेन निर्धार्यते । अनुपदिष्टस्यानन्तरितस्य कुतो निर्धारणम् ? न चेह प्राग्वैदिकं कर्माऽऽदिष्टम् । अथो-च्यते– वेदाभ्यासादीनि वैदिकान्येव, कथमनुद्दिष्टं वैदिकं कर्म ? यद्येवम्, सामान्यस्य सामान्यात्सुतरामनिर्धा-रणम् । न हि भवति ' गवां गौरुत्पन्नक्षीरतमा ' इति । यदि ह्यवैदिकानि ( वैदिकानि ) चोद्दिष्टार्थान्यभविष्यंस्तत एवैतदपेक्षेत ' वैदिकं श्रेयस्करतरम् ' इति ।

किंच, कानि तावदत्र वैदिकानि कर्माण्यभिप्रेतानि ? यदि तावत् ज्योतिष्टोमादीनि, विशेषग्रहणे प्रमाणं वक्तव्यम्, वेदाभ्यासादीनामपि वैदिकत्वात् । अथ स्मार्तत्वान्न तानि वैदिकानि, यान्येव प्रत्यक्षश्रुतिविहि-तानि तान्येव वैदिकानीति । न हि सर्वे( षु ) वैदिकेषु कर्मसु वेदाभ्यासादीनामङ्गत्वेनान्तर्भावः । एतच्च यद्वक्ष्यति– ' अन्तर्भवन्ति क्रमशः तस्मिंस्तस्मिन् क्रिया-विधौ ' इति । तद्धि तस्य नेति तर्ह्यग्निहोत्रादौ तपो गुरु संपाद्यं स्यात् । अनेन तेनोक्तेन न कश्चिदर्थः । वेदाभ्यासादीन्यप्यनुष्ठेयान्यग्निहोत्रादीन्यपि । तत्र न विद्मः कीदृशममीषां श्रेयस्करतरत्वम् ? नापि समानि फलानि, येन फलस्योत्कर्षवत्तयैवमुच्यते । यथा गोदानात्स्वर्गस्य ज्योतिष्टोमाच्च दीर्घकालाद्यनुवृत्तता । यथोक्तं ' लोक-वत्परिमाणतः फलविशेषः स्यात् ' ( जैसू. १।२।१७ ) इति । अत्रोच्यते– यदुक्तं नैतेनोक्तेन कश्चिदर्थ इति, तत्र केचिदाहुः– विरोधे स्मार्ते श्रौते बाधकत्वज्ञापनार्थं वैदिकानां श्रेयस्करत्ववचनम् । यथोक्तम्– ' तुल्यबल-विरोधे विकल्पः ' । अतुल्यबलायाः स्मृतेः श्रुत्या बाध इति । ' श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ' । श्रुतिस्मृतिद्वैधे अनुवादः स्मृतिरित्यर्थादुक्तं भवति ।

---

‡ ममु., भाच., गोरावत् ।

(१) मस्मृ. १२।८६ ; मेधा. सर्वेषां ( पूर्वेषां ) सर्वदा (सर्वथा) ; नन्द. मेधावत्.

अमुनैवावगतत्वादवाच्यमेतत् विस्पष्टीकरणार्थमेव पुनरुच्यत इत्यदोषः । अथवाऽन्योऽपि तथा( ? स्या )र्थः संभाव्यते । शुद्धे च विकल्पवचनम् । स्मृतिद्वैधे न तद्विकल्पार्थम् । तेनायमर्थः— स्मार्तेभ्यो वैदिकानि बलीयांसि । वेदाभ्यासादिग्रहणं सर्वस्मार्तप्रदर्शनार्थम् । वृत्तानुरोधादेवं पठितम् ।

वयं तु ब्रूमः— न्यायसिद्धोऽयमर्थः , न्यायसिद्धस्यापि सौहार्देनाभिधानमनारभ्य युक्तम् । इहाऽऽत्मनो ज्ञानं प्रतिपदं पठ्यते । तत्र कः प्रसङ्गो बाधात्तस्य ? स्मृतिकारा न च स्ववाक्यानि स्ववाक्यैरेव प्रमाणयितुमर्हन्ति । अथोच्यते— याज्ञवल्कीयायाः स्मृतेर्विधिरुच्यते, नाऽऽत्मीयायाः समानता । यत्तावदात्मीयायामप्युक्तं भवति । अतः प्रकरणानुरोधाद्वेदाभ्यासादि पदं पृथक् । नेहाऽऽत्मज्ञानं प्रतिज्ञायेदं पठ्यते । कथं च आत्मज्ञानं श्रुतिपरत्वेन तैर्व्याख्यातमिति ? वेदाभ्यासादिभ्यो वैदिकं यागादि कर्म श्रेष्ठमिति ततोऽध्यात्मज्ञानम् । इतरथाऽन्यत्र प्रजाया अन्यदुच्यमानमन्यत्रास्तमन्यत्र पतितं स्यात् ।

अथवा वैदिकमत्र आत्मज्ञानमेव, वेदस्य तत्प्रतिपादनपरत्वात् । अग्निहोत्राद्युपदेश औषधपाने वृद्ध्युपदेशवद्बालादिप्रवृत्त्यर्थः । यदि वा कर्मकाण्डेन शिष्टाः स्वाभाविकीमेनामनाद्यविद्यां वासनाविषयासङ्गहेतुभूतामवधूय शास्त्राभ्यासवासनासामर्थ्यवशात् क्रमेणोपजातवैराग्यशिथिलीभूतदृढतृष्णारागग्रहणे उत्तमाधिकारानुशासने नियोज्यतां प्रतिपत्तुं समस्तमपि श्रुत्यादिष्टत्वमधिकारोपकारकत्वं कर्मकाण्डस्य विज्ञायत इति ब्रह्मवादिनः । अतो वक्ष्यमाणनिवृत्त्याख्यकर्माभिप्रायमेतत्— श्रेयस्करतरं ज्ञेयं सर्वथा कर्म वैदिकमिति । अथवा भेदो यदि सर्वेषामपि स्वप्नवदसत्यदर्शनद्वयेऽप्यात्मैकत्वज्ञाने श्रेय इत्यर्थः । वेदाभ्यासादीनां भेदोपदेशादिनोद्यं तत्कर्तव्यम् । षष्ठीनोद्यं तु तैरेव समाहितं बुद्ध्यारोपितान्तरेण पृथक्त्वोपपत्तेः । यथा 'माथुराः पाटलीपुत्रकेभ्य आढ्यतराः' इति । तथा सतीयं पञ्चमी स्यादिति चेत् , अत्रापि प्रतिविहितं धर्मीविशेषात् । मेधा.

( २ ) एषां पूर्वोक्तानां वेदाभ्यासादीनां षण्णां कर्मणां मध्यात् स्मार्तकर्मापेक्षया वैदिकं कर्म सर्वदेहपरलोकयोरतिशयेन स्वर्गादिसाधनं विज्ञेयम् । आत्मज्ञानस्यामृतफलत्वाद्वि( ? त्ववि )धानाद्वैदिकत्वाच्च ( न ) तदपेक्षमन्यस्य वैदिकस्येदं श्रेष्ठमुच्यते, अपि तु स्मार्तापेक्षम् । गोरा.

( ३ ) षण्णामेषां वेदाभ्यासादीनां मध्ये यदेतैर्जन्यं श्रेयोऽपवर्गाख्यं प्रेत्येह च जीवन्मुक्तिभुक्तिकरं वैदिकं कर्म यज्ञादिफलानभिसंधिना कृतम् । मचि.

( ४ ) एषां पुनः षण्णां पूर्वोक्तानां वेदाभ्यासादीनां कर्मणां मध्ये वैदिकं कर्म परमात्मज्ञानम् ऐहिकामुष्मिकश्रेयस्करतरं ज्ञातव्यम् । पूर्वश्लोके मोक्षहेतुत्वमात्मज्ञानस्योक्तम् , इह त्वैहिकामुष्मिकश्रेयोन्तरहेतुत्वमुच्यत इत्यपौनरुक्त्यम् । तथा हि— प्रतीकोपासनानां संशयोदयम् ( ? ) 'नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारी भवति' ( छाउ. ७।१।५ ) । गोविन्दराजस्तु— 'एषां पूर्वश्लोकोक्तानां वेदाभ्यासादीनां षण्णां कर्मणां मध्यात् स्मार्तकर्मापेक्षया वैदिकं कर्म सर्वदेहपरलोके सातिशयं सातिशयेन कीर्तिस्वर्गनिःश्रेयःसाधनं ज्ञेयम्' इति व्याख्यातवान् , तदयुक्तम् । वेदाभ्यासादीनां षण्णामपि प्रत्येकं श्रुतिविहितत्वात्तेषु मध्ये स्मार्तापेक्षया किंचिदेवं किंचिच्च नेति न संभवति, ततश्च कथं निर्धारणे षष्ठी ? तस्माद्यथोक्तैव व्याख्या । मभु.

( ५ ) षण्णां वेदाभ्यासादीनां कर्मणां कृतिसाध्यानां श्रेयस्करतरं निष्कामं नित्यादिकर्म, कर्मणा शुद्धान्तःकरणस्यैव ज्ञानाधिकारात् , 'श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते । ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥' ( भगी. १२।१२ ) इति भगवतोक्तत्वात् , 'नावेदविन्मनुते तं बृहन्तम्' ( तैब्रा. ३।१२।९।७ ) इति श्रुतेः । कर्म 'क्रियते' इति व्युत्पत्त्या श्रवणमननादि, तत्साध्याहंब्रह्मास्मीतिज्ञानं वा । अत एव वैदिकम् । मच.

( ६ ) अपरमपि श्रेयस्करमाह— षण्णामेषां तु पूर्वेषामिति । वेदाभ्यासादीनाम् । वैदिकं कर्म अग्निहोत्रादि । नन्द.

(७) एषां षण्णां वेदाभ्यासादीनां सर्वेषां कर्मणां मध्ये फलं च पुनः इहलोके च फलम्( ? परलोकफलं च पुनः इहलोकफलं च ) वैदिकं कर्म सर्वदा श्रेयस्करतरं ज्ञेयम् । भाच.

[१]वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः ।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन्क्रियाविधौ ॥

(१) एतावद्वैदिकं कर्म ज्योतिष्टोमाद्याचक्षते। तेषामेव श्लोकयोजना— क्रियाविधिः कर्मविधिर्वैदिकः । कर्मयोगे कर्मप्रयोगे बहिः संपाद्यावस्थाः । एतान्युपनिषद्वेदाभ्यासादीन्यन्तर्भवन्ति । तस्मिन्निति व्याप्यतया क्वचित् कस्यचित्सममेषामन्तर्भावमाह । कर्मयोग इत्युक्ते क्रियाविधिग्रहणं श्लोकपूरणार्थम् । ¶ 'क्रतुयज्ञेभ्यः (च)' (पासू. ४।३।६८) इति तद्वा( ? इतिवद्वा ) सोमयागभेदेन भेदो व्याख्येयः । तत्र वेदाभ्यासस्तावत् सत्रेऽन्तर्भवति, यजमानमन्त्रेषु सर्वत्रोपयोगतः । तपो दीक्षोपसत्सोमयागेषु 'पयोऽमृतं( ? यो व्रतं) ब्राह्मणस्य' इत्यादि । ज्ञानं सर्वत्र, विदुषाम( न ? )धिकारात् । एवमिन्द्रियसंयमः प्रतियागगामी 'न स्त्रियमुपेयान्न मांसमश्नीयात्' इति । अहिंसाऽपि 'एतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य' इति । गुरुसेवादेरित्थमप्रवृत्तिः(?) । ये तु निवृत्तमेव कर्माऽऽहुस्तेषां वेदाभ्यासादीनामनुवृत्त्यर्थः श्लोकः । अन्तर्भवन्त्युपासनापरस्यापि तेषामनुष्ठानादन्तर्भावः । तथा चोपनिषद्भ्य उपासकस्य प्रायश्चित्तनिर्देशः पापक्षपणार्थः, न पुनः प्रतिविधानविकार एवोक्तो भवति । अतो विहिताकरणे प्रतिषिद्धसेवने सति प्रत्यवायः । एवं तर्हि कुतो मोक्षः ? फलोपभोगेन जन्मान्तरोपात्तदुरितक्षयात्, अकरणात्स्वबुद्धिपूर्वमन्यस्य, प्रमादकृतस्य प्राणायामविद्याविशेषाभ्यासातिशयेन कृतनिष्कृतित्वात् निरुपाध्यात्मस्वरूपसाक्षात्करणाच्च । प्रथमं तं वेदयेत्, तद्भावापत्तिर्मोक्षः । अतश्च ब्रह्मनिष्ठापरेणापि वेदाभ्यासादीन्यनुष्ठेयानि । यस्य यस्य कर्मन्यासः श्रूयते स षष्ठे व्याख्यातः । क्रियाविधिरुपासनविधिरेव 'द्रष्टव्यः श्रोतव्यः' इत्यादिनोदितः । बहुत्वाच्चोपासनाप्रकाराणां तस्मिंस्तस्मिन्निति वीप्सा युज्यत एव । अतः 'ब्राह्मणान्युपासीत,' 'य एष आदित्ये हिरण्मयः पुरुषः' इति, 'स च एष आत्माऽपहतपाप्मा' इत्यादि क्वचिदुपात्तबुद्ध्याऽध्यारोपितश्चोद्यते, क्वचिद्धिरण्मय इत्यादौ लक्षणया तस्यैवोपासना, क्वचित्सर्वोपासनाधिपत्येन निष्कलङ्कमिवाऽऽत्मनः 'तस्यैवा( ? स एवा )धस्तात्स उपरिष्टात्' इति चोदनाबहुत्वाद्वीप्सोपपत्तिः । मेधा.

(२) ज्योतिष्टोमादिवेदोक्तकर्मानुष्ठाने क्रमेणान्तर्भवन्ति । तथा च श्रौतस्मार्तादौ वेदाभ्यासोऽन्तर्भवति । तपश्च दीक्षोपसत्य( ? त्प )योव्रतादौ । ज्ञानं चाऽऽत्मज्ञानस्य समुच्चयेन वैदिककर्मणोपसर्गफलत्वात् । इन्द्रियसंयमश्च 'न मांसमश्नीयान्न मैथुनमुपेयात्' इति । कर्माङ्गत्वेनोक्तत्वादहिंसा च, 'तस्मादेतां रात्रिं प्राणभृतः प्राणान्न छिन्द्यात्' इति भागत्वेनाभिधानात् । गुरुशुश्रूषा च यथाकर्मानुष्ठानकारणभूतं वेदमधिगच्छतीति । एवं सर्वाणि वैदिकयोगेन( ? गेऽन्तर् ) भवन्ति । गोरा.

(३) सर्वाण्यन्तर्भवन्ति यस्मिन् क्रियमाणे एतान्यपि विनाभावितानि सिध्यन्तीत्यर्थः । तस्मिंस्तस्मिन्निति । यथा यज्ञे जपादिवेदाभ्यासः । तपो दीक्षानियमादौ । उद्गीथादिचिन्तनेन ध्यानम् । इतराणि च त्रीणि सर्वेषामनुसंततानि । मवि.

¶ विश्वबन्धुपदानुक्रमकोशे पाणिनिसूत्रादन्यत्र क्रतुयज्ञशब्दप्रयोगस्यादर्शनात् पाणिनिसूत्रमेवेदं दृष्टान्तितमिति संभाव्येदमुच्यते— पाणिनिसूत्रस्य दृष्टान्तीकरणात् तत्र सत्रतदितरसोमयागभेदेन क्रतुयज्ञशब्दौ व्यवस्थिताविति मेधातिथेरभिप्रायः प्रतीयते । महाभाष्यकारादिमतेन तु क्रतुयज्ञशब्दावुभावपि सर्वेषु सोमयागेषु मुख्यौ, असोमयागेष्वमुख्यौ । तयोरन्यतरग्रहणे गौणमुख्यपरिभाषया मुख्येभ्योऽग्निष्टोमादिशब्देभ्यः, अमुख्येभ्योऽपि बहुवचनप्राप्ततदन्तविधिग्राह्येभ्यः, पाकयज्ञादिशब्देभ्यश्च प्रत्ययः स्यात्, पञ्चौदनदशौदनादिशब्देभ्योऽमुख्येभ्यो न स्यात् । अतो मुख्यामुख्येभ्यः सर्वेभ्यः प्रत्ययप्राप्त्यर्थमुभयग्रहणमिति ।

(१) मस्मृ. १२।८७ ; मत्र. तु (हि).

(४) इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवाऽऽत्मज्ञानस्य स्पष्टयति— वैदिक इति । वैदिके पुनः कर्मयोगे परमात्मोपासनारूपे सर्वाण्येतानि पूर्वश्लोकोक्तान्यैहिकामुष्मिकश्रेयांसि तस्मिन् उपासनाविधौ क्रमशः संभवन्ति । अथवा सर्वाण्येतानीति वेदाभ्यासादीन्येव परामृश्यन्ते। परात्मज्ञाने वेदाभ्यासादीनि 'तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिविहिताङ्गत्वेनान्तर्भवन्ति । $ ममु.

(५) अत एवाऽऽह— वैदिक इति । वैदिके वेदैकसाध्ये ज्ञाने, अत एव कर्मयोगे, कर्मणः परंपरया साधनतया युज्यमानत्वात्, अन्तर्भूतं कारणतया, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' (भगी. ४।३३) इत्यादिस्मृतेः । कथमन्तर्भवन्तीत्याकाङ्क्षायामाह— तस्मिन्निति । क्रियामित्यादि कर्म विधीयते अस्मै अन्तःकरणशुद्धिरूपा यत्तदप्युपासना यैर्विधीयते, तेन च श्रवणादि, तदपि ज्ञाने पर्यवस्यतीति । मच.

(६) वैदिककर्मणो वैशिष्ट्यकारणमाह— वैदिके कर्मयोगे हीति । कर्मयोगे कर्मानुष्ठाने । एतानि वेदाभ्यासादीनि । श्रौतानां मन्त्रसाध्यत्वात्तेषु वेदाभ्यासस्यान्तर्भावः। उपवासव्रतादिचोदना( त् )तपसोऽन्तर्भावः । अज्ञातस्यानुष्ठानासंभवाज्ज्ञानस्यान्तर्भावः । स्त्रीसङ्गवर्जनमौनादिविधानादिन्द्रियसंयमस्यान्तर्भावः । 'तस्मादेतां रात्रिं प्राणभृतः प्राणान्न विच्छिन्द्यात्' इति विधानादहिंसायाम( ? या अ )न्तर्भावः । ऋत्विगाचार्यानुवर्तनाद्गुरुसेवायाम( ? या अ )न्तर्भाव इति । नन्द.

[1]सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥

(१) ननु च प्रवृत्तमेव वैदिकं कर्म व्याख्यातं किमिदमुच्यते द्विविधमिति । नैष दोषः । प्राधान्येन तत्र प्रवृत्तं वैदिकं व्याख्यातम् । वैदिकं( ? कत्वं ) तु सर्वत्राविशिष्टम् । ¶ सुखमुपैत्युपपद्यते । यदपि सुखाभ्युदयिकम्, सुखाभ्युदयः प्रयोजनमस्येति वाऽन्वर्थो( ? मत्वर्थो ) वा कर्तव्यः । निःश्रेयसं प्रयोजनमस्येति च केचन । प्रवृत्तनिवृत्तपदे यथासंख्यं पूर्ववत् ( ? पूर्वत्र ) संबन्धनीये । मेधा.

(२) सुखं कर्म( ? शर्म ) ग्रामादे( र् )वाप्तेः यतोऽभ्युदिते( ? भ्युदेति ) तत् सुखाभ्युदयिकं संसारप्रवृत्तिहेतुत्वाख्यम् ( ? त्वात्प्रवृत्ताख्यम् ) वैदिकं कर्म, तथा निःश्रेयसो मोक्षः, तदर्थं कर्म नैःश्रेयसिकं संसार( निवृत्ति )हेतुत्वान्निवृत्ताख्यमित्येवं वैदिकं द्विप्रकारं वेदितव्यम् । ‡ गोरा.

(३) सुखाभ्युदयिकम् इत्यत्र सुखस्य अभ्युदयः उत्पत्तिः फलमस्यास्तीति मत्वर्थीयष्ठन् ।
§ मोक. १४७

(४) स्वर्गादिसुखं तद्रूपाभ्युदयो यत्र तत्सुखाभ्युदयिकं कर्म प्रवृत्तम्, उत्तरोत्तरप्रवृत्तिहेतुत्वात् । निःश्रेयसजनकं तु निवृत्तम्, अत्यन्तनिवृत्तिहेतुत्वात् । मवि.

(५) वैदिकं कर्मात्र ज्योतिष्टोमादि प्रतीकोपासनादि च गृह्यते । † ममु.

(६) नित्यनैमित्तिकानामेव कर्मणां ज्ञानहेतुत्वं वदन् काम्यं ततो भिनत्ति— सुखेति । सुखाभ्युदयिकं सुखं स्वर्गादि, अभ्युदयं पशुपुत्रादि, तयोः साधनम् । प्रवृत्तं काम्यम्, निवृत्तं निष्कामं नित्यनैमित्तिकम्, तन्नैःश्रेयसिकम्, निःश्रेयसः मुक्तेः तदर्थत्वात् । मच.

---

$ भाच. ममुगतम् ।

(१) मस्मृ. १२।८८ ; मिता. ३।५८ ; अप. ३।२०५ पृ. १०३३ चैव नैः ( चैतन्नैः ) ; मोक. १४६–१४७ ; वीमि. १।१ उत्त. ; यप्र. ९३ सुखा (कर्मा).

¶ अत्र उपपूर्वकेण्धातुघटितम् उपपूर्वकपदधातुघटितं वा पाठान्तरं व्याख्यातम्, अग्रे च 'सुखाभ्युदयिकम्' इति पाठो व्याख्यात इति भाति ।

‡ नन्द. गोरागतम् ।

§ शेषं गोरागतम् ।

† शेषं गोरावत् ।

प्रवृत्तं निवृत्तं चेति सत्कर्म द्विविधम् , तत्र निवृत्तं मोक्षकरम्

**'इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते।**
**निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥**

( १ ) इह कारीरीवैश्वानर्यादि अमुत्र ज्योतिष्टोमादि काम्यसंपादकं कर्म काम्यते इति काम्यम् । फलस्य काम्यत्वात् तत्साधनमपि कर्म काम्यमेव । निष्कामं नित्यम् । ज्ञानपूर्वमुभयत्र शेषम्, अविदुषोऽनधिकारात् । अथापि रहस्याधिकारिज्ञानमुपदिश्यते तदा नोभयशेषः । पूर्वशब्दश्चाद्य( ? द्या )र्थे लक्षयति । ज्ञानमाद्यं मुख्यं यस्येति विग्रहः । योऽभिमुख्यः स लोकः पूर्वे क्रियां प्रतिलभते । अतश्चैतदुक्तं भवति— ज्ञानं प्रधानं प्रधानतोऽनुष्ठेयम्, वेदाभ्यासादि तु शास्त्रमात्रया । मेधा.

( २ ) एतदेव व्यक्तयितुमाह— इह चेति । स्वर्गाद्यैहिकामुत्रफल( ता ? )कामतया यत् क्रियते तत् काम्यम् । निष्कामतया ज्ञानपूर्वकं तु तत् संसारनिवृत्तिहेतुत्वान्निवृत्तमुच्यते । † गोरा.

( ३ ) प्रवृत्तनिवृत्ते कर्मणी यथाक्रमं संसारप्रवृत्तिनिवृत्तिहेतुभूते उच्येते । मोक. १४७

( ४ ) एतदेव स्पष्टयति— इहेति । इह काम्यसाधनं वृष्टिहेतुकारीरीयागादि अमुत्र स्वर्गादिफलसाधनं ज्योतिष्टोमादि यत् कामनया क्रियते तत् संसारप्रवृत्तिहेतुत्वात्प्रवृत्तमित्युच्यते । दृष्टादृष्टफलकामनारहितं पुनर्ब्रह्मज्ञानाभ्यासपूर्वकं संसारनिवृत्तिहेतुत्वान्निवृत्तमित्युच्यते । ममु.

( ५ ) एतद्विभजते—इहेति । इह काम्यं कारीर्यादि, अमुत्र ज्योतिष्टोमादि । निष्कामं तु ज्ञानपूर्वं ज्ञानस्य पूर्वम्, जनकतया वर्तमानत्वात्, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' ( भा. १२।१९७।८ ) इति स्मृतेः । मच.

( ६ ) ज्ञानं 'सर्वभूतेषु चाऽऽत्मानम्' ( मस्मृ. १२।९१ ) इत्युत्तरत्र वक्ष्यमाणम् । नन्द.

**'अकामोपहतं नित्यं निवृत्तं च विधीयते।**
**कामतस्तु कृतं कर्म प्रवृत्तमुपदिश्यते ॥**

**'प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्।**
**निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥**

( १ ) ननु च 'काम्यं कर्म प्रवृत्तम्' इत्युक्तम्। काम्यानि च कानिचित्स्वर्गफलानि कानिचिद्दृष्टफलानि। न च देवसाम्यताफलं किंचिदिष्टं( ? चिद्दृष्टं ) कर्म। अतः किमिदमुच्यते 'देवानामेति साम्यताम्' इति ? यान्यश्रुतफलानि विश्वजिदादीनि तान्यपि ( निष्काम ? ) स्वर्गफलानि । अतो न विद्मः कर्मणा देवसाम्यताप्राप्तिः फलम् । न च शक्यं वक्तुं 'यानि फलवन्ति श्रुतानि तानि निष्कामेणानुष्ठेयानि, तथा चानुष्ठितानि वै देवत्वफलानि संपद्यन्ते' । श्रुतहानिरश्रुतपरिकल्पना च तथा स्यात् । काम्यमानं च वेदे फलं 'ग्रामकामः', 'स्वर्गकामः' इति, न वस्तुस्वाभाव्येन विषभक्षणवत् । अथो देवत्वादिप्राप्तिर्भवति, न च काम्यम् इति विरुद्धमिति । प्रतिषेधाधिकारेष्वकामिनं(?तं) कथमिति चेत्, तथाभूतस्यैव तत्र फलत्वेनान्वयः । न ह्यनिष्टं काम्यं भवति । अथ नित्यानां फलमितः कथ्यते, नित्यताहानिः । यावज्जीवादिफले( ? पदे )श्च तत्र नित्यफल-

---

† भाच. गोरागतम् ।

(१) मस्मृ. १२।८९ ; मिता. ३।५८ चामु ( वाऽमु ) ; अप. ३।२०५ पृ. १०३३ चामु ( वाऽमु ) तृतीयचरणे (ज्ञानपूर्वं तु विद्वद्भिः ) ; मोक. १४७; वीमि. १।१ ; यप्र. ९३ मितावत्.

(१) मस्मृ. १२।८९ इत्यस्यानन्तरं मण्डलिकमुद्रितपुस्तके प्रक्षिप्तश्लोकोऽयम् ।

(२) मस्मृ. १२।९० ; मेधा. न्यत्येति (न्यभ्येति) इत्यपि पाठः ; गोरा. संसेव्य ( संसेवन् ) साम्यताम् (साष्टर्यताम्) ; अप. ३।२०५ पृ. १०३३ साम्यताम् (सात्म्यताम् ) तान्यत्येति ( तान्पश्यति ) ; मोक. १४७ साम्यताम् ( सातमताम् ) मानस्तु ( मानं तु ) पञ्च वै (पञ्चमे) ; मवि. साम्यताम् (सार्ष्टिताम्) न्यत्येति (न्यभ्येति) ; मच. साम्यताम् (सार्ष्टिताम्) 'साम्यताम्' इत्यपि पाठः, न्यत्येति ( न्यभ्येति ) इत्यपि पाठ इति व्याख्यानात्प्रतीयते.

(?निष्फलत्व) मवगमितम् । अथावश्यं कल्प्यते, प्रत्यवायपरिहारः कल्प्यताम् । तद्धि कल्प्यमानं नित्यत्वे न विरुध्यते । योऽपि §उत्तरः श्लोकः 'भूतान्यत्येति पञ्च वै' इति, तत्रापि अत्येति विमुच्यते इति न विद्मः । अन्यत्रात्ययो लय उच्यते । न चेह भूतेषु जीवस्य लय इष्यते, अपि तु ब्रह्मरूपापत्तिः । अन्येऽपि व्याचक्षते— स चातिक्रामति पञ्चभूतानि । न पाञ्चभौतिकं तस्य शरीरं भवति, अपि तु तेजोमूर्तिरेवान्वेति । तदपि न किंचित् । शरीराग्रहणं हि मोक्षः । तच्च शरीरमेकं( ? मैकभौतिकं ) वा भवतु पाञ्चभौतिकं वा, को विशेषः संसारित्वे? अतो व्याख्येयोऽयं श्लोकः । उच्यते— यत्तावदुक्तं कस्य कर्मणो देवसाम्यता फलमिति, नित्यानामफलत्वात्, काम्यानां च फलान्तरयोगादिति, तत्र ब्रूमः— नानेन सर्वेषां वैदिकानां कर्मणामेतत्फलमुच्यते । किं तर्हि ? निवृत्तस्य कर्मणो यत्फलं तत्र प्रवृत्तिः । किंच कर्म विद्यते ? येन तत्फलमाप्यत इति प्रशंसा । सन्ति च कानिचित् देवत्वप्राप्तिफलानि कर्माणि । तेनैतदुक्तं भवति— कर्मकाण्डे यत्कर्तव्यतया वेदितं साऽस्य परा गतिर्देवत्वप्राप्तिः, न तु मोक्षः । यत्तु रहस्याधिकारोक्तं कर्म तदनावृत्तिहेतुः । तत्र कामयमानस्य फलसंकल्पोपहतत्वात्कर्म बन्धहेतुः । कर्मणां ह्येष स्वभावो यत्स्वफलदानार्थमधिकारिणः कार्यकरणमारभन्ते । तथैव नित्यान्यप्यक्रियमाणानि प्रत्यवायहेतवो भवन्ति । तान्यपि शरीरमारभन्त एव । यद्येवम्, नित्यानि करिष्यति, काम्यानि प्रतिषिद्धानि न करिष्यति, तस्य शरीरारम्भककर्माभावाद्देहाभावेन मोक्षमवाप्स्यति, आत्मज्ञानस्य क्वोपयोगः? यथोक्तम्— 'नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया । मोक्षहीनः( ? क्षार्थी न ) प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥' इत्युक्तं § भगवद्भिः । न विद्यामनभ्यस्यमानस्याविद्यायाः क्षयोऽस्ति । न ज्ञानानुच्छिन्नायामविद्यायां ब्रह्मरूपापत्तिः । एतदेवाभिप्रेत्योक्तं 'निष्कामं ज्ञानपूर्वम्' इति, तथा 'कामात्मता न प्रशस्ता' । समानक्रियस्य सामार्ष्टिस्तस्य भावः साम्यता । देवैः समानगतिर्भवतीत्यर्थः । यच्च 'भूतान्यत्येति' इत्यप्ययुं प्रति व्यामोहः, सोऽपि न युक्तः । विप्रलापनमपि अ(त्य)य उच्यते । तुषारनिखिलप्रपञ्चो भवतीत्यर्थः । 'अभ्येति' इत्यपि पाठेऽशरीरत्वमुक्तं भवति । मेधा.

(२) प्रवृत्तकर्माभ्यासेन देवानां समानगतित्वं प्राप्नोति । निवृत्तकर्माभ्यासेन पुनः शरीरारम्भकाणि भूतानि अतिक्रामति, मोक्षं प्राप्नोतीत्यर्थः । गोरा.

(३) सात्मतां समानशक्तित्वम् । मोक. १४७

(४) सार्ष्टितां सायुज्यतां समानाकारतामिति यावत् । भूतान्यभ्येति लिङ्गदेहं जहाति । मवि.

(५) एतच्च प्रदर्शनार्थम् । अन्यफलकेन कर्मणा प्रवृत्तेन फलान्तरमपि प्राप्नोति । ¶ ममु.

(६) अत एवाऽऽह— प्रवृत्तमिति । सार्ष्टितां समानैश्वर्यम् । साम्यतामिति क्वचित् । तावत्पर्यन्तमेव प्रवृत्तकर्मणां गतिः । भूतानि सकारणभूतभौतिकानि स्थूललिङ्गशरीरद्वयम् अत्येति नाशयति । अभितो वोपादानतयाऽऽप्नोति, भूतारभ्यत्वादुभयोः । यज्ज्ञानेनाज्ञाननाशद्वारेणेति शेषः, आरोपितस्य ज्ञाननाश्यत्वेऽविप्रतिपत्तेः । मच.

(७) साष्टाङ्गसायुज्यं साधर्म्यादिति यावत् । भूतात्ययः मुक्तिः । नन्द.

(८) प्रवृत्तं कर्म संसेव्य कृत्वा देवानां साम्यताम् एति प्राप्नोति । तु पुनः निवृत्तं कर्म सेवमानः पञ्चभूतात्मकं लिङ्गदेहं प्रा( ? नाऽऽ )प्नोत्येव । भाच.

---

§ सर्वेषु पुस्तकेषु 'उत्तरः श्लोकः' इति विश्लिष्टं मुद्रितम् । तत्तु श्लोकशब्दस्य व्यवरचरणकपद्यरूपमुख्यार्थत्वे नोपपद्यते । अतः श्लोकशब्दोऽत्र श्लोकावयवे लाक्षणिकः । 'उत्तरश्लोकः' इति समस्तपाठो वा । तदा 'श्लोकस्य उत्तरः उत्तरश्लोकः' इत्येकदेशिसमासः ।

§ श्लोकवार्तिककारैरिति शेषः । श्लोकवार्तिके अत्रत्यपूर्वोत्तरार्धे व्यत्यासेन पठिते ।

¶ शेषं गोरावत् ।

'एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम् ।
अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम् ॥

(१) प्रतिज्ञातधर्मोपसंहारः श्लोकोऽयम् । 'धर्माञ्जो वक्तुमर्हसि' इति यत्पृष्टम्, 'महर्षीन् श्रूयतामिति' (इति) यद्वक्तव्यतया प्रतिज्ञातं तत्सर्वं कथितमिति शास्त्रपरिसमाप्तिमाह । ननु च परस्तादप्यस्ति शास्त्रं हन्तव्यादिशास्त्रम्, सा च विधितः श्रूयते । तत्र विधिविषये कश्चिदिति कथमुच्यते शास्त्रमुपसंहियत इति ? वक्तुर्न करोति प्राय उपसंहारः । परस्ताच्च अकर्मशेषात् (? षा) स्वप्रधाना शुद्धैव विद्योपदिश्यते इति न विरोधः । सर्वत्र श्रेयसी शास्त्रार्थधर्मलक्षणा विद्येत्युपसंहृत्याभिधाने प्रयोजनम् । मेधा.

(२) एतत् प्रकृष्टं श्रेयसो धर्मं सर्वं युष्माकमुक्तम् । एतदनुतिष्ठन् ब्राह्मणादिः स्वर्गापवर्गादि प्राप्नोतीति कृत्स्नं धर्मोपसंहारमेतत् । ‡ गोरा.

(३) अप्रच्युतः अत्यक्तोद्यमः । मवि.

(४) 'धर्माञ्जो वक्तुमर्हसि' इति यत्पृष्टम्, 'महर्षीन् श्रूयतामिति' (इति) यत् प्रतिज्ञातं तत्सर्वं स्वोक्तं परमप्रकृतमुपसंहरन् धर्मस्य मोक्षफलत्वमाह— एतदिति । अस्मान्मनूक्तान्नित्यनैमित्तिकाद्धर्मात् अप्रच्युतः अपरिभ्रष्टः परमां मोक्षाख्यां (गतिं) प्राप्नोत्येव । तदुक्तं भगवता वासुदेवेन— 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।' (भगी. ४।३३) इति । आरादुपकारकत्वेन ज्ञानहेतुत्वं कर्मणामित्युक्तं तत्र प्रसर्तव्यम् । मच.

(५) एतद् वः युष्माकं परं नैःश्रेयसकरं गुह्यं धर्मजातं सर्वम् अभिहितं कथितम् । अस्मादप्रच्युतः अत्यक्तधर्मः । भाच.

'अमार्गेण प्रवृत्तानां व्याकुलेन्द्रियचेतसाम् ।
निवर्तकं धर्मशास्त्रं व्याधीनामिव भेषजम् ॥

‡ मभु. गोरावत् ।

(१) मस्मृ. १२।११६ ; अप. ३।१९८-२०१ पृ. १०२७ ; भाच. निःश्रे (नैःश्रे).

(२) मुक्ता. ६.

'आचारः परमो धर्मो नृणां श्रेयस्करो भवेत् ।
इह लोके परा कीर्तिः परत्र परमं सुखम् ॥
आचारात्प्राप्यते श्रेष्ठ्यमाचारात्कर्म लभ्यते ।
कर्मणा जायते ज्ञानं ज्ञानान्मोक्षमवाप्व(? प्नु)ते ॥

## याज्ञवल्क्यः

धर्मोपदेशः, धर्मशास्त्रविषया धर्माः धर्माधिकारिणश्च

§'योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥

(१) कस्मात् पुनर्वेदसिद्ध एवार्थे भगवतः शास्त्रारम्भप्रयत्नः ? यस्मात्— योगीश्वरमिति । वेदार्थतत्त्वविदोऽपि मुनयो यस्मात् संपूज्य उपेत्यार्थितवा अब्रुवन्, ततस्तदनुरोधाद्भगवतोऽयं प्रयत्न इति मन्तव्यम् । युक्तं चैतत्, तादृशानामध्याप्यत्वात् । तथा चाऽऽह मनुः— 'आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । शक्तोऽर्थदोऽर्थी स्वः साधुरध्याप्या दश धर्मतः ॥' (मस्मृ. २।१०९) इति । ते तु पुनः कस्मादेवं प्रयत्नेनाब्रुवन् ? योगीश्वरं मन्यमानाः याज्ञवल्क्यतयाऽपि च महाभिजनत्वादध्यापनार्हम् । तथा चाऽऽपस्तम्बः— 'तस्माद्विद्याभिजनसमुदेतं संस्कर्तारमीप्सेत्' (आध. १।१।१२) इति । युक्तं च गुणातिशयवति याज्ञवल्क्ये मुनीनां प्रश्नकरणम्, ज्ञाततत्त्वानामपि कदाचित्संशयोत्पत्तेः । तथा च व्यासः— 'ज्ञातवेदार्थतत्त्वेन धर्मानप्यनुतिष्ठता । असंशयाय कर्तव्यः कियांश्चिद्गुरुसंनिधिः ॥' इति । अथवा मन्दख्यातियुक्ता ज्ञानिनोऽप्यतिविख्यातं कंचिच्छिष्यभावेनानुगम्याऽऽत्मानं प्रख्यापयितुं पृच्छन्त्येव । किंनिमित्ता वाऽस्येयं योगीश्वरत्वख्यातिः ? इति जिज्ञासवः । सर्वथा च प्रश्नोपपत्तेरुपसन्नानां च नियोगतोऽध्याप्यत्वा-

§ यद्यपि प्रश्नरूपो धर्मविवरणहीनोऽयं श्लोकस्तथापि टीकासु धर्मविवरणात्संगृहीतः ।

(१) आर्क. १.

(२) यास्मृ. १।१ ; विश्व. तराणां (तरेषां) 'वर्णानां साश्रमाणाम्' इत्यपि पाठः ; मिता. ; अप. ; वीमि.

दनुपालम्भः । तथा चोक्तम्– ‘उपसन्नाय तु निर्ब्रूयात्’ इति । किं पुनरब्रुवन्? ब्रूहि धर्मानिति । ¶ उच्यते– अर्थकामापवर्गास्तर्ह्यपृष्टत्वाच्छास्त्रस्याविषयाः । किंच, एकत्वाद्धर्मस्य धर्मानिति बहुवचनमयुक्तमेव । न च धर्मभेदोपसंग्रहार्थं तदिति युक्तम्, अशेषत इति पदान्तरानर्थक्यप्रसङ्गात् । नैष दोषः, धर्मपदस्योपलक्षणार्थत्वेनोक्तत्वात्, न ह्यन्यथा योगीश्वरपदोपपत्तिः । अथ स्तुत्यर्थं तदित्युच्येत, तदप्यसत् । न हि कार्यान्वयिनः स्तुतिमात्रता युक्ता । अस्तु नाम कार्यान्वयः, तथाप्युपलक्षणत्वं कथम्? इति वक्तव्यम् । तदुच्यते– योगीश्वरं मन्यमाना धर्मं पृच्छन्तीत्यसंबद्धमिव स्यात् । यस्माद्योगिनो हि ब्रह्मविदः, तेषामाचार्यत्वेनेश्वरो ब्रह्मवित्तमः । स च ब्रह्मैव प्रष्टव्यः, न धर्मम् । ननु च धर्मज्ञोऽपि परमार्थतो योगीश्वर एव । अर्थकामौ वा स किं न जानाति? न ब्रूमो न जानातीति, न धर्मज्ञविवक्षयाऽत्र योगीश्वराभिधानम् । नैतद्युक्तम् । नोपक्रमस्थं योगीश्वरपदं तदधीनात्मलाभोपसंहारस्थेन धर्मपदेन विरुध्यमानं विशेषेऽवस्थापयितुं शक्यम् । न चैवं सति केवलापवर्गविषय एव प्रश्न इत्यवसेयम्, सर्वज्ञत्वाद्योगीश्वरस्य, धर्मानिति च बहुवचनोपपत्तेः । किंच, केवलधर्मप्रश्नेऽपवर्गमात्रप्रश्ने वा कृत्स्नं शास्त्रमसमञ्जसं स्यात्, चतुर्णामपि वक्ष्यमाणत्वात् । भूयसां चैवमनुग्रहो भवति । मुख्यावपि च योगीश्वरधर्मशब्दावन्योन्यापादितविरोधव्याहतसामर्थ्यौ दुर्बलावेव । महाविषयता चैवं शास्त्रस्येत्यलं प्रसङ्गेन । तमेवंविधं योगीश्वरं मन्यमाना याज्ञवल्क्यमब्रुवन् । यज्ञवल्कः ब्रह्मा इति पौराणिकाः । तदपत्यं याज्ञवल्क्यः । कथं कृत्वाऽब्रुवन्? संपूज्य । पूजा चात्रोपसदनादिलक्षणा विज्ञेया, समित्युपसर्गस्य सम्यगर्थत्वात् । मुनयः वेदार्थतत्त्वविदः । † वर्णाश्रमेतरेषां नो ब्रूहि धर्मानशेषतः इत्यत्रब्रुवन्निति संबन्धः । वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचार्यादयः, वर्णेतरा अन्तरप्रभवा अनुलोमादयः, आश्रमेतराः पाषण्डादयः, तेषां वर्णाश्रमेतरेषाम् । समग्राभ्युदयारम्भकाष्टवर्गप्रतिपादकं शास्त्रं नो ब्रूहीति श्लोकार्थः । धर्मादीनां वक्तुमशक्यत्वादेवमभिधीयते । ब्रूहीति चाध्येषणेयम्, आचार्यत्वाद्भगवतः । अशेषतः इति कात्स्न्र्येनेत्यर्थः । वेदादिति चाध्याहार्यम् । वेद एव वाऽनन्यशेषत्वादशेष इत्युच्यते । तस्मादशेषतोऽनुग्रहार्थमस्माकं धर्मान् ब्रूहीति । अन्यः पाठः ‘वर्णानां आश्रमाणाम्’ इति । अत्रापि स एवार्थः । अन्तरजा अप्यनुलोमा वर्णा एव । यथाऽऽह मनुः– ‘पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् । ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥’ (मस्मृ. १०।१४) इति । अनन्तरग्रहणं चैकान्तरद्व्यन्तरार्थमपि द्रष्टव्यम् । क्रमानन्तर्यवचनाच्च प्रतिलोमानामवर्णत्वम् । तथा च गौतमः ‘प्रतिलोमास्तु धर्महीनः’ (गौध. ४।२५) इत्यवर्णविवक्षयैवाऽऽह । जातूकर्ण्यश्चाऽऽह– ‘प्रतिलोमास्त्वन्त्यावसायिनः’ इति । यत्तु किंचिद्व्रतधर्माभिधानं तदानुषङ्गिकविषयम् । प्रयोजकविषयस्तु प्रश्नः । पाषण्डिनां त्वाश्रमप्रतिपत्त्यर्थो धर्म इत्याश्रमशब्देन ग्रहणम् । एवं

¶ चोद्यते इत्यर्थः ।

† याज्ञवल्क्यप्रयोगेऽस्मिन् द्वन्द्वत्वेन सर्वनामत्वस्यावैधत्वादार्षत्वं कल्प्यते । व्याख्यातुः प्रयोगास्त्वसाधवः । तथाहि– अग्रे ‘वर्णेतराः, आश्रमेतराः’ इत्यत्र तत्पुरुषत्वेन सर्वनामसंज्ञाया नित्यत्वेऽपि तदकरणं न साधु । तथा व्याख्यानान्ते संबन्धविषयकपक्षान्तरे ‘वर्णाश्रमेतरेषाम्’ इत्यार्षपदानुवादे तत्पुरुषत्वेन सर्वनामत्वस्य वैधत्वात् तस्यैव व्याख्यातृकृतप्रातिपदिकांशानुवादे ‘वर्णाश्रमेतराः’ इत्यत्र सर्वनामत्वाप्रवृत्तिरसाधुरेव । न चास्मिन् पक्षे पूर्ववत् द्वन्द्वसमास एवेति वाच्यम्, व्याख्यानविरोधात् । तथाहि– वर्णत्वाश्रमत्वयोर्विधिगम्यत्वेन धर्मनिर्णयाधीननिर्णयत्वात् ‘यावत् धर्मो न निर्णीतः तावत् वयं वर्णाश्रमेभ्य इतरे अनिर्णीतवर्णत्वाश्रमत्वा इत्यर्थः’ इत्येवमर्थपरमेव व्याख्यानमुपपद्यते, न द्वन्द्वपक्षे ‘वयं वर्णाः आश्रमाः इतरे च’ इत्येवमर्थपरम्, धर्मनिर्णयात् प्राक् वर्णत्वादीनामनिर्णयात् । न च तत्पुरुषत्वे द्वन्द्व इवेतरत्वकोटिस्तृतीया न समुच्चीयते इति न्यूनतेति वाच्यम्, वर्णत्वाश्रमत्वनिर्णये इतरत्वस्यार्थसिद्धत्वात् ।

च पाठान्तराण्यपि व्याख्येयानि । यद्वा 'वर्णाश्रमेतरेषां नः' इति संबन्धः । वर्णाश्रमेतरा एव हि तावद्वयम्, यावदनिर्णीतो धर्मः । तेनास्माकं निर्णयाय ब्रूहीति । विश्व.

(२) याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यमुनिप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास, यथा मनुप्रणीतं भृगुः । यस्य चायमाद्यः श्लोकः– योगीश्वरमिति । योगिनां सनकादीनामीश्वरः श्रेष्ठः, तं याज्ञवल्क्यं संपूज्य मनोवाक्कायकर्मभिः पूजयित्वा मुनयः सामश्रवःप्रभृतयः श्रवणधारणयोग्याः अब्रुवन् उक्तवन्तः– धर्मान् नः अस्मभ्यं ब्रूहीति । कथम्? अशेषतः कार्त्स्न्येन । केषाम्? वर्णाश्रमेतराणाम् । वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचारिप्रभृतयः, इतरे अनुलोमप्रतिलोमजाता मूर्धावसिक्तादयः । इतरशब्दस्य 'द्वन्द्वे च' (पासू. १।१।३१) इति सर्वनामसंज्ञाप्रतिषेधः । अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः । तद्यथा– वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति । तत्र वर्णधर्मः 'ब्राह्मणो नित्यं मद्यं वर्जयेत्' इत्यादिः । आश्रमधर्मः अग्नीन्धनभैक्षचर्यादिः । वर्णाश्रमधर्मः 'पालाशो दण्डो ब्राह्मणस्य' इत्येवमादिः । गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनादिः । निमित्तधर्मः विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम् । साधारणधर्मः अहिंसादिः । 'न हिंस्यात्सर्वा भूतानि' इत्याचण्डालं साधारणो धर्मः । 'शौचाचारांश्च शिक्षयेत्' (यास्मृ. १।१५) इत्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते । तत्र चायं क्रमः– प्रागुपनयनात्कामचारकामवादकामभक्षाः, ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनम्, ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनम्, ततस्तदर्थजिज्ञासा, ततस्तदर्थानुष्ठानमिति । तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम् । प्राधान्यं च धर्ममूलत्वादितरेषाम् । न च वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म इत्यविशेष इति । यतोऽर्थमन्तरेणापि जपतपस्तीर्थयात्रादिना धर्मनिष्पत्तिः, अर्थलेशोऽपि न धर्ममन्तरेणेति । एवं काममोक्षावपीति । मिता.

[अत्रत्य आश्रमशब्द अर्श आद्यजन्ततया धर्मिपरोऽन्यथाऽसंभवः । बाल.]

(३) धर्मसंहितामारभमाणस्तस्याः पौरुषेयत्वसामान्याज्जायमानामप्रामाण्यशङ्कां महाजनस्य तदध्ययनधारणादिविषये परिपन्थिनीमपनेतुमाह– योगीश्वरमिति । योगी संयमवान् । तत्रापि चेश्वरः अणिमादिगुणशाली । एषां च गुणानामीश्वरशब्दप्रवृत्तिनिमित्तत्वं गम्यते मार्कण्डेयपुराणे– 'अणिमा लघिमा चैव महिमा प्राप्तिरेव च । प्राकाम्यं च तथेशित्वं वशित्वं च तथा परम् ॥ यत्रकामावसायित्वं गुणानेतानथैश्वरान् । प्राप्नोत्यष्टौ नरव्याघ्र परनिर्वाणसूचकान् ॥ सूक्ष्मात्सूक्ष्मतरोऽणीयाञ्शीघ्रत्वाल्लघिमा गुणः । महिमाऽशेषपूज्यत्वात्प्राप्तिर्नाप्राप्यमस्य यत् ॥ प्राकाम्यमस्य व्याप्य(? पि)त्वादीशित्वं चेश्वरो यतः । वशित्वाद्वशिता नाम योगिनः सप्तमो गुणः ॥ यत्रेच्छास्थानमप्युक्तं यत्रकामावसायिता । ऐश्वर्यं कारणैरेभिर्योगिनः प्रोक्तमष्टधा ॥ मुक्तिसंसूचकं रूपं परनिर्वाणचेतसः ॥' (मार्क. ३७।२९–३४) इति । एवं चाणिमादिगुणपर एवायमीश्वरशब्दः । ततश्च 'योगी चासावीश्वरश्च योगीश्वरः' इति मुख्यार्थोभयशब्दः कर्मधारयः, न तु 'योगिनामीश्वरः' इति षष्ठीतत्पुरुषः, षष्ठ्यर्थलक्षणाप्रसङ्गात्, योगीश्वरशब्दप्रयोगवैयर्थ्यप्रसङ्गाच्च । न हि तदा योगिनामणिमादिलक्षणमैश्वर्यं याज्ञवल्क्यस्योक्तं भवति, किंतु योगिनः सनकादीन् प्रति स्वामित्वम् । तच्च प्रकृतानुपयोगि । कर्मधारयपक्षे तु योगनिमित्तमणिमाद्यैश्वर्यं ग्रन्थकारस्य गम्यते । ततश्च योगविरोधिनोऽज्ञानरागद्वेषा योगिपदेनार्थान्निरस्ताः । उक्तं च योगस्य तन्निरासकत्वं पुराणे– 'प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् । प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥' इति । ईश्वरपदेन च यथावस्थितवेदवेदान्तबोद्धृत्वं

परमकारुणिकत्वं च सूच्यत इति तत्प्रणीतग्रन्थस्य प्रामाण्ये निश्चिते कथमप्रामाण्यशङ्कोदियात्? यज्ञवल्कस्यापत्यं याज्ञवल्क्यः। संपूज्य संमान्य। मुनयः महर्षयः वर्णादिधर्मान् अशेषतः निरवशेषतः नः अस्मान् ब्रूहि बोधय इत्यब्रुवन्। वर्णाः ब्राह्मणादयः। आश्रमशब्दो यद्यपि ब्रह्मचारिगृहस्थादिकर्मसु वर्तते तथाऽपि तत्संबन्धिनां धर्माणामभावादाश्रमशब्देनाऽऽश्रमिणो लक्ष्यन्ते। अत एवाऽऽह वसिष्ठः– 'चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः' (वाध. ७।१, २) इति। केवलाद्वर्णत्वात्केवलाच्चाऽऽश्रमित्वाद्यतिरिक्तानि (यानि) विशेषरूपाणि तद्विशेषस्था ये वक्ष्यमाणधर्माधिकारिणस्त इहेतरे। तानि च विशेषा(? षरूपा)णि यथा तावत्– भवत्पूर्वभिक्षाचर्याविधौ ब्राह्मणत्वसहितं ब्रह्मचर्यम्, एवं भवन्मध्यादितो भैक्षचर्याविधौ तदेव क्षत्रियाद्यपेक्षम्, विवाहविधौ वनितारागः स्नातकत्वं च, जायोपगमनविधावृतुमद्दारत्वं [1]संभोगदारत्वं वा, स्त्रीधर्मेषु स्त्रीत्वं क्वचिज्जायात्वं क्वचित्प्रोषितभर्तृकात्वं क्वचिद्विधवात्वम्, द्रव्यशुद्धिविधौ शोध्यद्रव्यवत्त्वम्, प्रतिषेधे तु प्रतिषेध्यक्रियाप्रवर्तकपौष्कल्यक्रियावत्त्वम्, श्राद्धविधौ श्राद्धकालावच्छिन्नजीवनवतः प्रमीतपितृकत्वम्, विनायकस्नपनविधौ विनायकोपसृष्टत्वम्, ग्रहयज्ञविधौ श्रिया(? श्रया)दिकामित्वम्, राजधर्मविधौ क्षत्रियस्याभिषिक्तत्वम्, निर्हरणादिविधौ मृतसपिण्डत्वम्, आपद्धर्मविधौ दुर्गतत्वम्, वनस्थविधौ वलीपलितत्वं जातपौत्रत्वम्, परिव्राजकविधौ वेदाध्ययनपुत्रोत्पादनयागानुष्ठानवतः संसारवैराग्यवत्त्वम्, प्रायश्चित्तविधौ पापवत्त्वमित्यादीनि। एतद्विशिष्टा ये त इतरे। वर्णाश्चाऽऽश्रमाश्चेतरे च ते वर्णाश्रमेतराः तेषां वर्णाश्रमेतराणाम्। अत्रेतरशब्दस्य 'द्वन्द्वे च' (पासू. १।१।३१) इति सर्वनामसंज्ञाप्रतिषेधः। शास्त्रप्रमेयो निःश्रेयसकरो धर्मः। क्रत्वङ्गप्रतिषेधनमधर्मः। वक्ष्यमाणशास्त्रार्थनिरवद्यनिरवशेषोदीरणक्रियां प्रति अशेषत इति धर्मसामान्याभिप्रायसाकल्यवचनम्। निरवशेषाभिप्राये ह्यस्मिन्नुपनयनादौ गृह्योक्तहोमादि न कार्यं स्यात्। वर्णाश्रमेतरसंबन्धोपाधिकानि त्रीणि धर्मसामान्यानि 'धर्मान् ब्रूहि' इति प्रार्थितस्य च धर्मसंहिताकरणे तन्मध्येऽध्येतृ(? तदध्येतृ)समवायिधर्मज्ञानमेव प्रायेण प्रयोजकम्। ततश्चाध्येतृणामध्ययनप्रयोजकं तदेव। न हि तेषामप्रयोज(न)कमध्ययनं भवितुमर्हति। तस्माद्धर्मशास्त्राध्ययनं धर्मशास्त्रत्वज्ञानप्रयुक्तमेव। याज्ञवल्क्यप्रणीतेऽप्यत्र श्लोके 'याज्ञवल्क्यं संपूज्य' इति वचनं तथोत्तरश्लोके 'योगीन्द्रोऽब्रवीत्' इति प्रथमपुरुषप्रयोगश्च नायुक्तः। दृश्यते हि मानवे ग्रन्थे 'मनुरब्रवीत्' इति प्रयोगः, बौधायने च 'स ह स्माऽऽह बौधायनः' इति। न च 'मनुरब्रवीत्' इति भृगोर्वचनमिदम्, न मनोरिति वाच्यम्। यत एतदुत्तरकालमेव मनुराह– 'एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः। एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः॥' (मस्मृ. १।५९) इति। अधिजगे अधीतवान्। अस्याश्च संहिताया याज्ञवल्क्यः प्रणेतेति व्याख्यातॄणां स्मृतिरेव प्रमाणम्। न चार्थमेव याज्ञवल्कीयतया ते स्मरन्तीति वाच्यम्। ग्रन्थे हि प्रणेतृतया तस्यासाधारण्यं संभवति, न चार्थे द्रष्टृतया, मुन्यन्तरैरपि तस्य दृष्टत्वात्। असाधारण्येन च व्यपदेशो न साधारण्ये घटते। असाधारण्येन हि व्यपदेशा भवन्ति। अप.

(४) प्रतिलोमजानामहिंसासत्यादिसामान्यधर्माधिकारोऽस्ति। 'प्रतिलोमजा धर्महीनाः' (गौध. ४।२५) इति गोतमीयनिषेधो विशेषधर्मपरः। धर्मानिति बहुत्वं नित्यनैमित्तिककाम्यपरम्। अशेषतः सामस्त्येन। एतेन पूजितेन धर्मो वक्तव्यः, अभिधेयसंबन्धप्रयोजनम्, ग्रन्थस्याधिकारिणोऽपि दर्शिताः। तत्र धर्मोऽभिधेयः, तेन सह जन्यजनकप्रतिपाद्यप्रतिपादकलक्षणः संबन्धः, स्वर्गादि प्रयोजनम्। पत्न्युपगमनादिकं नियमतया धर्म एव। पश्चादधर्माभिधानं प्रायश्चित्ताभिधानार्थम्। ननु स्वोक्तत्वे मां संपूज्येति स्यात् (इति चेन्न)

[1] 'संभोगकामदारवत्त्वम्' इत्यादर्शपुस्तकटिप्पणीस्थः पाठः साधीयान्।

आचार्याणां स्वप्रणीतेऽपि तथा प्रयोगदर्शनात् । तथा 'कर्माण्याह( ? ण्यपि ) जैमिनिः फलार्थत्वात् (तत् ?)' ( जैसू. ३।१।४ ) इति । याज्ञवल्क्यशिष्येणाप्ययं कृत इति केचित् । ¶ दीक.

(५) 'इह हि भगवता महर्षिणा याज्ञवल्क्येन लोकहिताय प्रणीतं धर्मशास्त्रं तच्छिष्यप्रवरो मानवं भृगुरिव प्रश्नोत्तरप्रबन्धेन संक्षिप्य वक्तुं प्रस्तौति— योगीश्वरमिति । ' इत्येवं संप्रदायविदोऽवतारयन्ति । परे पुनः 'योगीश्वरम्' इत्याद्यपि याज्ञवल्क्यप्रणीतमेव, 'कर्माण्यपि जैमिनिः फलार्थत्वात्' ( जैसू. ३।१।४ ) इति, 'तदुपर्यपि बादरायणः संभवात्' (ब्रसू. १।३।२६) इत्यादावाचार्याणामित्थमेव स्वग्रन्थे स्वनामकीर्तनस्य दर्शनात् । योगीश्वरमित्यादि स्वोत्कर्षकीर्तनं तु शिष्याणां श्रद्धादार्ढ्याय, न त्वभिमानविशेषविजृम्भितमिति वर्णयन्ति । ... तदेतद्यथामति प्राचीननिबन्धानुपजीव्य व्याख्यायते— योगीश्वरमित्यादि । योगो वृत्तिनिरोधः, तद्वतामीश्वरं श्रेष्ठम् । एतेन सार्वज्ञ्यं सूचितम् । यद्वा प्रशंसायामिनिः । प्रशस्तयोगवन्तम् ईश्वरम् अणिमादिविभूतियुक्तं च, अणिमादिकमभिधाय 'ऐश्वर्यं कारणैरेभिर्योगिनः प्रोक्तमष्टधा' इति मार्कण्डेयपुराणात् । अत्र योगीश्वरपदप्रयोगान्मङ्गलमपि निबद्धं वेदितव्यम् । ... वर्णादीनां पुंस्त्वं चात्र न विवक्षितम्, बीजाभावात्; स्त्रीणामपि संग्रहः, सामान्यपरत्वान्नपुंसकता, इतरशब्देन तासामप्युक्तिरित्यप्याहुः । तेषां धर्मान् स्मार्तान् अस्मत्संदेहास्पदत्वोचितान् । ... ... इत्थं व्याख्याने च केषांचिद्धर्माणामग्रेऽनभिधानेऽपि न न्यूनतेत्यवधेयम् । न च दण्डनीतिदारोपगमादीनां लौकिकत्वेन धर्मभिन्नानामप्यभिधानादाधिक्यमाशङ्कनीयम्, तेषामपि नियमविषयतया धर्मत्वात्, विध्यादिविषयतयैव यागादीनां स्वरूपतस्तेषामलौकिकत्वात् । विध्युपसंदानेन तु तेषामलौकिकत्वम्, दण्डनीत्यादीनां च नियमोपसंदानेनेति न कश्चिद्विशेषः । इदमेव चाभिसंधाय भगवाञ्जैमिनिर्धर्मलक्षणं विवक्षन्सूत्रयत्— 'चोदनालक्षणोऽर्थो धर्मः' ( जैसू. १।१।२ ) इति । एतत्सूत्रव्याख्यानं च प्रकृतोपयोग्यपि विस्तरभयान्नेह ततम्, अन्यत्र द्रष्टव्यम् । धर्मानित्याद्यर्थं बहुवचनेन चतुर्वर्गस्य ग्रहणमिति स्मृतयः । अतो धर्मोऽभिधेयः कण्ठत एव दर्शितः। ... ... द्विविधश्च प्रवृत्तनिवृत्तभेदात्, तथा च मनुः— 'प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते । निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥' ( मस्मृ. १२।८८, ८९ ) इति, त्रिविधश्च नित्यनैमित्तिककाम्यभेदादिति विवेक्तव्यम् । प्रयोजनं तु स्वर्गाद्यलौकिकश्रेयःसाधनवाचिना धर्मपदेनैव सूचितम्, धर्मज्ञानादिप्रणाडिकयैतच्छास्त्रस्य धर्मप्रयोजकतायाः कटाक्षितत्वादिति । $ वीमि.

¶ शेषं मितागतम् ।

धर्मलक्षणकारकाणि

**[1]देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।**
**पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥**

(१) देशः सामान्यविशेषात्मकत्वेन द्विविधः । सामान्यतः कृष्णोपलक्षितः, विशेषतः शुद्धादिकः । कालोऽप्यहःपूर्वाह्णादिकः । उपायस्त्वङ्गकलापो दृष्टादृष्टार्थः । यथा— 'अभिगम्योपविश्य हिरण्यं दद्यात्' इति । देशकालयोस्तूपायत्वेऽप्यधिकारान्वयाद्भेदेनोपन्यासः, द्रव्यस्य च प्राधान्यात् । द्रव्यं शुक्लं हिरण्यमित्यादि । श्रद्धा प्रसिद्धैव । संशब्दः सम्यगर्थे । अन्वितैः युक्तैरित्यर्थः । पात्रं जातिसंस्कारविद्यावृत्ततपोभिः संपन्नम् । एवं यद्दानं सोऽनवद्यः कृत्स्नो धर्म इति । दानशब्दश्चायं यागाद्यशेषविहितकृत्योपलक्षणार्थो द्रष्टव्यः । विपरीतश्चाधर्मः । यत्तु दानमेवोदाहृतं तत्सार्ववर्णिकाधिकारप्रतिपादनार्थम् । कुरुक्षेत्रग्रहोपरागादवस्तु

$ शेषं मितागतम् ।

(१) यास्मृ. १।६ ; विश्व. न्वितम् ( न्वितैः ) ; मिता. ; अप. ; आपा. १०४ उपायेन (उपस्थेन) ; मुक्ता. २ ; वीमि. १।१९८ उत्त. ; पप्र. ५३ ; आर्क. २ शंखः.

काम्यनैमित्तिकतयाऽवसेयाः । तथा च शङ्खः– 'तत्र धर्मलक्षणानि । देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति समयः । तेषु धर्मोदयः साधारणोऽन्यथा विपरीतः' इति देशाद्यभावे विपरीत इति वदन् नित्यानीमानीति दर्शयति । न च कुरुक्षेत्रादीनां नित्यत्वोपपत्तिः, अन्यत्र निवासाभावप्रसङ्गात् । न चैतद्युक्तम् । अतः सूक्तं काम्यनैमित्तिकत्वमेवमादीनामिति । विश्व.

(२) देशः 'यस्मिन् देशे मृगः कृष्णः' इत्युक्तलक्षणः । कालः संक्रान्त्यादिः । उपायः शास्त्रोक्तेतिकर्तव्यताकलापः । द्रव्यं प्रतिग्रहादिलब्धं गवादि । श्रद्धा आस्तिक्यबुद्धिः, तदन्वितं यथा भवति तथा । पात्रं 'न विद्यया केवलया' इत्येवमादिवक्ष्यमाणलक्षणम् । प्रदीयते यथा न प्रत्यावर्तते तथा परस्वत्वापत्त्यवसानं त्यज्यते । एतद्धर्मस्योत्पादकम् । किमेतावदेव ? नेत्याह – सकलमिति । अन्यदपि शास्त्रोक्तं जातिगुणहोमयागादि । तत्सकलं धर्मस्य कारकं जातिगुणद्रव्यक्रियाभावार्थात्मकं चतुर्विधं धर्मस्य कारकमित्युक्तं भवति । तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम् । श्रद्धा सर्वत्रानुवर्तत एव । ‡ मिता.

[ भावार्थः श्रद्धा । बाल. ]

(३) संप्रति यच्छास्त्रं शास्त्रान्तरनिरपेक्षं समग्रमर्थं न शक्नोत्यवगमयितुं तच्छास्त्रान्तरसापेक्षमेव धर्मे प्रमाणमिति दानमुदाहृत्याऽऽह– देश इति । देशे कुरुक्षेत्रादौ काले उपरागादौ उपायेन इतिकर्तव्यतया द्रव्यं गवादि श्रद्धया तथेति प्रत्ययेन समन्वितं पात्रे वक्ष्यमाणलक्षणे प्रदीयते ख्यात्याद्यनपेक्षितस्वरूपेण प्रकर्षेण पात्रस्वीकारपर्यन्ततया त्यज्यते इत्येतत्प्रतिपादकं वाक्यं सकलं सर्वसाधनोपेतस्येदंपर्यन्तविशेषवतो धर्मस्य बोधकं सर्वं धर्मलक्षणं धर्मे प्रमाणं वेदितव्यम्, न पुनः सर्वप्रकारयुक्तस्य धर्मस्य बोधकं धर्मलक्षणम् । तथा च शङ्खः– 'देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति समस्तेषु धर्मोदयः साधारणो न्याय्योऽन्यथा विपरीतः' इति । साधारणः दानेन समानः । न्याय्यः अन्येषां यागादिधर्माणाम् । अन्यथा सामस्त्याभावे विपरीतः धर्मस्यानुदयः इत्यर्थः । सति सामर्थ्ये सर्वाङ्गानुष्ठानम्, असति तु काम्यं हेयम्, आवश्यकं तु यथाशक्ति कार्यम् । यत्तु कात्यायनवाक्यम्– 'बहल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' इति, तन्निरपेक्षार्थाभिधायकस्वशाखाविषयम् । सापेक्षे तु स्वशाखे शास्त्रान्तरोक्तं ग्राह्यमिति स एवाऽऽह– 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति । अप.

(४) पात्रे श्रुतशीलवति । यत्प्रकर्षेण दीयते तत्संपूर्णधर्मकारणम्, देशादिहीनस्य तामसधर्मत्वात् । प्रदर्शनार्थमिदं यागादिष्वपि बोध्यम् । § दीक.

(५) पात्रं श्रोत्रियादि वक्ष्यमाणम् । सप्तमी चेह चतुर्थ्यर्थे । प्रदीयत इति दानं सप्रदानकस्त्यागः स्वस्वत्वध्वंसपरस्वत्वोत्पत्तिफलको विक्रयादिव्यावृत्तः, इच्छाविशेषो वा । तत्र प्रकर्षः प्रत्युपकारादिप्रतिसंधानराहित्यं जातिगुणादिरूपदानोपयोगितत्तन्निमित्तसाचिव्यं च । अत्र दानं चतुर्षु धर्मचरणेषु युगचतुष्टयावस्थायित्वेन प्राधान्यादुदाहरणम्, शास्त्रदेशिततत्तत्स्वकारकसंवलितानां यागहोमादीनां सर्वेषामुपलक्षणम् । यदिति देशादिरूपकारकविशिष्टक्रियापरामर्शः । तदिति यच्छब्दाव्यवहितोत्तरस्थस्य तच्छब्दस्य 'यत्तदूर्जितम्' इत्यादाविवोत्सर्गतः प्रसिद्धपरामर्शकत्वेऽपि 'मयि क्रूरे यत्तत्सविषयमिव' इत्यादाविव तदपवादेन यच्छब्दनिर्दिष्टार्थनिर्देश(क)तैवेति स्मर्तव्यम् । सकलं संपूर्णम् । धर्मलक्षणं तत्स्वरूपम्, शास्त्रदेशितसंपूर्णफलसंपादकत्वात् । देशाद्येकैकादिरहितं तु विफलं विफलतरं विफलतमम्, तादृक्फलासाधकत्वादित्याशयः । एवं च यागादिरूपो धर्मो यच्चाङ्गविशिष्टो विध्युपदिष्टः तत्समुच्चयं वाऽनु- (? अयथावानु)ष्ठेयः । अङ्गानां विरोधे नैराकाङ्क्षये च विकल्पः, अनन्यगतिकत्वादनाकाङ्क्षितानन्वयाच्च ।

‡ मुक्ता मितागतम् ।

§ शेषम् अपगतम् ।

यदाहुः— 'विरोधे तु विकल्पः स्यात्' इति, 'स्मृतिशास्त्रविकल्पस्तु आकाङ्क्षापूरणे सति' इति च । § वीमि.

आत्मज्ञानं परमो धर्मः

**'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।**
**अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥**

(१) नन्वेवं सति 'धर्ममूलमिदं स्मृतम्' (यास्मृ. १।७) इति वचनादर्थादेर्मूलं न प्राप्नोति । मैवम्, धर्मपदस्य प्रदर्शनार्थत्वात् । अथापि धर्ममात्र एव धर्मपदं स्यात्, तथाप्यर्थकामौ तावच्छास्त्रनियतौ धर्म्या- (? र्मा )वेव । अपवर्गस्यान्यत्वमिति चेत्, तदप्यसत्— इज्येति । इज्येति यागादीनां वैदिकानामुपलक्षणम् । आचार इति स्मार्तानां सोपनिबन्धानामनुपनिबद्धानां च । दमः इन्द्रियसंयमः । अहिंसा यज्ञाद्या- (? क्रिया)तताधिन्यतिरेकेण । दानं प्रसिद्धम् । स्वाध्यायः ब्रह्मयज्ञः । एषां कर्मणां धर्म्य( ? र्म )त्वं यद्यपि प्रसिद्धं तथाप्यल्पधर्मोऽयम्, धारणाल्पत्वेन योगस्यापौष्कल्यात् । अयमेव परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् । मनोवृत्तिसंनिरोधः योगः । तेन यदाङ्गस्येनाऽऽत्मदर्शनं तदेवाऽऽत्यन्तिकधारणत्वेन परमो धर्मः । तस्मात्सिद्धमर्थादीनां शास्त्रावसेयत्वम् । कस्मात्पुनः श्रुतिस्मृत्यन्तर्गतत्वेऽपि दमादीनां पृथगुपन्यासः? स्मार्तत्वप्रदर्शनार्थः । आचारः स्मार्तानां ग्राहकः, तानि पुनर्दमादीन्यपि । अत एव ब्रह्मयज्ञोऽप्यत्रैवोदाहृतः प्रत्यक्षश्रुतिपाठेऽपि स्मार्तत्वाद्गायादिलक्षणः शूद्रस्यापि कथं स्यादिति । सर्वाधिकारार्थे वा दमादीनां पृथग्विधानम् । आचारशब्देन त्वष्टकादीनां त्रैवर्णिकार्थानां ग्रहणम् । तथा चाऽऽहुः—

'अहिंसा सत्यमक्रोधः शौचमिन्द्रियनिग्रहः । एष साधारणो धर्मश्चातुर्वर्ण्ये प्रकीर्तितः ॥' (मस्मृ. १०।६३) इति । सत्यमिति चात्र व्याहृत्युपलक्षितो ब्रह्मयज्ञः परिगृह्यते, सत्यवचनस्येन्द्रियनिग्रहादेव लब्धत्वात् । तथा च वक्ष्यत्येतत्— 'पञ्चयज्ञान्न हापयेत्' (यास्मृ. १।१२१) इति । अथवा इज्येति संस्कारोपलक्षणम्, आचार इत्यात्मगुणानाम्, दमादयस्तूदाहरणार्थाः । समानमन्यत् । अपवर्गनिरूपणार्थश्चायं श्लोकः । तदेतदृचाऽप्युक्तम्— 'तमेवं विदित्वा मृत्युमत्येति' इति । स्मृतिश्चाऽऽत्मज्ञानं प्रकृत्याऽऽह— 'तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः' इति । सर्वं चैतच्छ्रुतिस्मृत्यवसेयमिति तयोः सूक्तं धर्ममूलत्वम् । विश्व.

(२) देशादिकारकहेतूनामपवादमाह— इज्येति । इज्यादीनां कर्मणामयमेव परमो धर्मः यत् योगेन बाह्यचित्तवृत्तिनिरोधेन आत्मनो दर्शनं याथातथ्यज्ञानम् । योगेनाऽऽत्मज्ञाने देशादिनियमो नास्तीत्यर्थः । तदुक्तम्— 'यत्रैकाग्रता तत्राविशेषात्' इति पातञ्जले (?)। मिता.

(३) ननु यदि श्रुतिस्मृत्योर्धर्म एव प्रामाण्यं कथं तर्ह्यात्मज्ञानप्रधानयोः श्रुतिस्मृत्योर्धर्मप्रामाण्यनिर्वाह इति? न ह्यात्मज्ञानं धर्मः, अननुष्ठेयत्वात् । 'तत्त्वमसि' इत्यादिवाक्यार्थावधारणतस्तज्ज्ञा( ? ज्ञा )यते, न तु वाक्यार्थमवधार्य यागादिवदनुष्ठीयते इत्याशङ्क्याऽऽह— इज्येति । इज्यादिधर्माणामितिकर्तव्यतात्मनां संबन्धी परमः प्रधानभूतः अयं धर्मः यत् योगेन समाधिना आत्मदर्शनं नाम । आत्मशब्दोऽयं परमात्मनि वर्तते, न जीवात्मनि, तस्येज्यादिकमन्तरेण समाधिं विनैव च प्राप्तत्वात् । 'आत्मा वा अरे द्रष्टव्यः' इति तत्रोत्पत्तिविधिः । 'ब्रह्मविदाप्नोति परम्' इत्यधिकारविधिः । अत्र हि परशब्देन परमात्माऽभिधीयते । तदाप्तिश्च तदात्मनैव क्षेत्रज्ञस्यावस्थानम् । तत्र ब्रह्मविदितिपदोपात्ता ब्रह्मविद्या करणम् । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यत्र यज्ञेनेत्यादिश्रुतिः सकलनित्य-

§ शेषं मिता—अपगतम् ।

(१) यास्मृ. १।८ ; विश्व. ; मिता. ; अप. ; व्रक. ११ दमा (दया) अयं तु (अयं स) ; कृर. १५ व्रकवत् ; मपा. १६ सारसंग्रहे ; गप. २५ दान (ज्ञान) ; मुक्ता. ३ : १९४ उत्त. ; वीमि. कर्मणाम् (कर्म वा) अयं (इदं) तु (च) इत्यपि पाठाः ; पप्र. ३६ ; यसं. ३५ उत्त.

नैमित्तिकवर्णाश्रमधर्मोपलक्षणार्थम् ( १ र्थो ) । अत एव विष्णुपुराणम्— ‘आराध्यते स्ववर्णोक्तधर्मानुष्ठानकारिणा । तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः । तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥ ’ । तथा च वसिष्ठः— ‘ यथाऽन्नं मधुसंपृक्तं मधु चाप्यन्नसंयुतम् । एवं तपश्च विद्या च संयुक्तं भेषजं हि तत् ॥ ’ इति । एवमादि मत्वोक्तवान्— इज्याचारदमाहिंसेति । रागप्राप्तं कर्माऽऽश्रित्य शास्त्रेण पुरुषाभ्युदयाय विधीयमानोऽर्थ आचारः । यथा ‘प्राङ्मुखोऽन्नानि भुञ्जीत तूष्णीम्’ इत्यादि । मनसो दमनं दमः । रागप्राप्तहिंसानिवृत्तिरहिंसा । स्वस्वत्वनिवृत्तिः परस्वत्वापत्तिर्दानम् । स्वाध्यायोऽध्ययनम् । कर्मशब्दः काम्यव्यतिरिक्तानामन्येषामपि चोदितकर्मणां परिग्रहार्थः । यद्योगेनाऽऽत्मदर्शनं न च तद्वाक्यार्थावधारणादेव सिध्यति, किंतु श्रवणमनननिदिध्यासनेभ्य इति । अप.

( ४ ) धर्मस्वरूपमाह— इज्येत्यादि । इज्या यज्ञः । आचारः आवश्यकं कर्म । दमः मनोनियमनम् । हिंसा वधरूपेच्छा । तदभावोऽहिंसा । स्वाध्यायकर्म वेदाध्ययनम् । योगेन योगजधर्मेण आत्मदर्शनम् । दीक.

( ५ ) योगेन चित्तवृत्तिनिरोधेन । मुक्ता. २

( ६ ) नन्विदं धर्मलक्षणमात्मतत्त्वसाक्षात्कारेऽतिव्यापकम् । न च सोऽपि धर्म एव, यागादीनामिव कर्मकाण्ड एव व्युत्पादनप्रसङ्गादित्याशङ्कायामाह— इज्येति । इज्या यागः । आचारः आह्निकादिः । दमः इन्द्रियनिग्रहः । अहिंसा विहितातिरिक्तहिंसाविरहः । दानम् उक्तम् । स्वाध्यायः वेदाध्ययनम् । कर्म इज्याद्यतिरिक्तं होमादि गोबलीवर्दन्यायात् पृथगुक्तम् । तेषां मध्ये योगेनाष्टाङ्गेन तु मनःसंनिकर्षमात्रेण यदात्मदर्शनमात्मतत्त्वसाक्षात्कार इति फलितार्थः । सोऽयं परमो धर्मः ‘ पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ’ (रघु. ८।४) इत्यादौ प्रक्रंस्यमानलिङ्गस्यापि प्रक्रान्तलिङ्गस्येव सर्वनाम्ना ग्रहणदर्शनान्न लिङ्गासंगतिः । § क्वचित् ‘ अयं ( १ इदं ) तु ’ इति पाठः । तत्र तुशब्दः कर्मणामित्यनन्तरं योज्यः । तेन— ‘ तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च । युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिर्दृढा भवेत् ॥ ’ इत्युक्ताभ्यासावच्छेदः , तस्य तत्त्वसाक्षात्कारादप्युत्कर्षात् । यथाश्रुतक्रमे कर्मणामिति निर्धारणषष्ठ्येव, तुशब्दस्य गतार्थत्वादित्यवधेयम् । यद्वा कर्मणामिति शेषषष्ठी । इज्यादिकर्मसंबन्धि तन्निमित्तकम् आत्मदर्शनमित्यर्थः , ‘ तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ’ इत्यादिश्रुतेः । परमत्वं त्वात्मदर्शनस्य सकलप्रयोजनमौलिभूतमोक्षान्तरङ्गत्वात् , इज्यादीनामपि तादर्थ्यात् , तत्तदवान्तरफलस्य स्वर्गादेरानुषङ्गिकत्वात् । तथा चैतेनोत्कर्षेणेज्यादिधर्मेभ्यो निष्कृष्य धर्मरूपस्याऽऽत्मदर्शनस्य ज्ञानकाण्डेऽभिधानमिति सर्वं चतुरस्रम् । क्वचित्तु ‘ कर्मणाम् ’ इत्यत्र ‘ कर्म वा ’ इति, ‘ः(१ तु )’ इत्यत्र ‘च’ इति पठितं व्याख्यातं च— ‘ धर्मस्वरूपमाह— इज्येति । प्रदर्शनमात्रमेतत् । तेन वैदिकं सर्वं कर्म धर्मः आत्मदर्शनं च प्रकृष्टो धर्मः ’ इति, ‘ देशे काले ’

§ अयंशब्दघटितपाठस्य ‘ सोऽयं परमो धर्मः ’ इति प्रागनुवादात् लिङ्गासंगत्यभावोपपादनानुरोधाच्च “ क्वचित् ‘ इदं तु इति पाठः ” इत्येव ग्रन्थः साधुः । तथाहि— सर्वनाम्नां प्रकान्तपरामर्शित्वस्यौत्सर्गिकत्वेन प्रक्रान्तलिङ्गस्य ग्रहणमप्यौत्सर्गिकम् । अत एव प्रक्रंस्यमानलिङ्गस्य ग्रहणमुपपत्तिप्रदर्शनरूपप्रयत्नसाध्यम् । सा चोपपत्तिः क्वचित् दृष्टान्ते प्रक्रंस्यमानलिङ्गग्रहणदर्शनमित्येवंरूपाऽत्र प्रदर्श्यते । उक्तदृष्टान्ते ‘अस्त्रतेजसा सहितं यत् ब्रह्म , अयं पवनाग्निसमागमः ’ इति वाक्यव्यक्तिः । तत्र उद्देश्यविधेययोर्यथाक्रमं पौर्वापर्यस्य नियमात् ब्रह्म उद्देश्यत्वेन प्रक्रान्तम् , समागमश्च विधेयत्वेन प्रक्रंस्यमानः । तथा चात्र अयमिति सर्वनाम्ना यथा प्रक्रान्तस्य ब्रह्मणो नपुंसकलिङ्गमौत्सर्गिकमपि न गृहीतम् , एवं प्रकृतेऽपि ‘ यद्योगेनाऽऽत्मदर्शनम् , अयं परमो धर्मः ’ इति वाक्यव्यक्तौ अयमिति सर्वनाम्ना प्रक्रंस्यमानस्य धर्मस्य पुंल्लिङ्गं गृहीतमिति लिङ्गासंगत्यभावोपपादनस्य ‘ अयं तु ’ इति पाठे एव समन्वयात् औत्सर्गिकप्रक्रान्तलिङ्गग्राहिसर्वनामघटितस्यैव पाठान्तरस्य वक्तव्यत्वेन “ क्वचित् ‘ इदं तु ’ इति पाठः ” इति ग्रन्थ एव साधुः ।

इत्यादिवचनं तु धर्मकारकप्रदर्शनमात्रपरतयैवावतारितमिति, तदनवद्यम्। वीमि.

(६) योगो बाह्यविषयकचित्तवृत्तिनिरोधः। परमः देशकालजात्याद्यनपेक्षः सन् परमपुरुषार्थसाधनम्। ननु 'नावेदविन्मनुते तं बृहन्तम्' इति श्रुत्या अवेदविदः आत्मसाक्षात्कारप्रतिषेधात्, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुतिभिश्च वेदैकजन्यत्वविधानात् वेदानधिकारिणां शूद्रादीनां कथमात्मसाक्षात्कारः? इति चेत्, पुराणश्रवणादिनेति ब्रूमः, अन्यथा पुराणादावात्मनिरूपणवैयर्थ्यापत्तेः। तथा च भागवते— 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं मुनिना कृपया कृतम्॥' इति। अत्र त्रयीं प्रतिषिध्य तत्स्थाने भारतं विधीयते। स्थानापत्त्या च 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्' इत्यत्रैरापदस्य गिरापदकार्यकारित्ववत् वेदकार्यकारित्वावगमात् भारतस्य वेदकार्यात्मज्ञानकारित्वसिद्धिः। किंच, 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इत्यत्र णिजर्थस्य रागतः प्राप्तत्वेनाविधेयत्वात् 'एतया निषादस्थपतिं याजयेत्' इतिवत् प्रयोज्यव्यापार एव पुराणश्रवणं विधीयते। तस्य च प्रयोजनाकाङ्क्षायां 'श्रुतेन पुराणेन यच्छक्यते तत्कुर्यात्' इत्युपबन्धात् 'आत्मप्रतिपादकपुराणश्रवणेनाऽऽत्मज्ञानं भावयेत्' इतिविधानात्सिध्यति शूद्रस्याप्यात्मज्ञानाधिकारः। 'नावेदविन्मनुते' इति श्रुतिस्तु वेदाधिकारिणो वेदातिरिक्तप्रमाणनिषेधपरा वेदविरुद्धतर्कादिनिषेधपरा वा व्याख्येया। 'तं त्वौपनिषदम्' इत्येषाऽपि उपनिषदतिरिक्ततार्किकादिसंमतानुमानादिमूलप्रमाणनिवृत्त्यर्था। न चाननुगतकारणजन्यत्वान्मोक्षे वैजात्यापत्तिरिति वाच्यम्, उभयविधस्यापि साक्षात्कारस्य साक्षात्कारत्वेनैकेनैव रूपेण मोक्षजनकत्वाङ्गीकारात्। स्पष्टं च पुराणेन शूद्रस्य तत्त्वज्ञानं पुराणान्तरे, 'अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम्। वदन्ति केचिन्मुनयः स्त्रीणां शूद्रसमानताम्॥' इति। स च साक्षात्कारो योगाभ्यासादिव काशीमरणादितोऽपि भवतीत्यन्यदेतत्। विस्तरस्तु मोक्षप्रकाशे वक्ष्यते। पप्र. ३६–४१

मनोवाक्कर्मभिः धर्माचरणम्, लोकविद्विष्टो विहितोऽपि धर्मो नानुष्ठेयः

**'कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्। अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ॥**

(१) अनेकार्थत्वाद्धातूनामदेर्गत्यर्थत्वम्। अस्वत्तम् असुगतम्। असुपरिनिश्चितमित्यर्थः। अन्यः पाठः अस्वन्तमिति। तस्याप्ययमेवार्थः। अस्वन्तम् अशोभनान्तम्। अन्ते न शोभनम् अनिश्चितत्वादिति। तस्यैव निगमनं लोकविद्विष्टमित्यादि(? मिति)। तुशब्दोऽवधारणार्थः। अन्ये तु अस्वन्तं रूढ्यैव धर्मान्तरविरोधिनम् आचक्षते। यथा स्वाध्यायातिशय इति। तत्त्वन्वेष्यम्। लोकविद्विष्टं सर्वजनानभ्युपगतं गोवधादीति केचित्। तत्त्वयुक्तम्, विधानानर्थक्यात्। अतो लोकं कर्मसाध्यं ये जानन्ति ते लोकविदः मन्वादयः, तैर्द्विष्टं नाऽऽचरेत्। उत्प(? पप)न्नेऽप्ययं धर्म इति स्वबमभिमानेन मन्वादिभिर्निन्दिते न प्रवर्तेतेत्यर्थः। अद्विष्टे त्वविरुद्धा प्रवृत्तिः। विश्व.

(२) कर्मणा कायेन यथाशक्ति धर्ममनुतिष्ठेत्, तमेव मनसा ध्यायेत्, वाचा च वदेत्। धर्म्यं विहितमपि लोकविद्विष्टं लोकाभिशस्तिजननं मधुपर्के गोवधादिकं नाऽऽचरेत्। यस्मात् अस्वर्ग्यम् अग्नीषोमीयवत्स्वर्गसाधनं न भवति। ‡ मिता.

‡ मुक्ता. मितागतम्।

(१) याज्ञ. १।१५६; विश्व. १।१५५ अस्वर्ग्यं (अस्वत्तं) 'अस्वन्तम्' इत्यन्यः पाठः, धर्म्यं (धर्मं); मिता. १।१०९ उत्त. (=): ३।१८ उत्त., मनुः; अप. धर्म्यं (धर्मं); स्मृच. १।१९१ उत्त., मनुः; चव. १५ यत्ना (यस्मा) पू.; मपा. १४ धर्म्यं (धर्म); गप. ९ मपावत्; चमव्या. ६७–६८ मपावत्; मुक्ता. ५ मपावत्: १३१ उत्त., मनुः; आर. ९ (=); सिन्धु. १००७ उत्त. (=); संम. ४५ मपावत्; वीमि. मपावत्; विपा. ३।२।७८८ धर्म्यं (धर्म) तु (हि) (=); संप्र. ९८९ उत्त., स्मृतिः; आप्र. ११ मपावत्, उत्त.; संवी. २।२२ उत्त.

( ३ ) अत्र यत्नादिति विधीयते, अन्यदनूद्यते । तथा च सति कर्मणेति पदमनुवादकत्वाद्वाङ्मनःशब्दसाहचर्याच्च लक्षणया शरीरे वर्तते । ततश्चायमर्थो भवति– शरीरेण यं धर्मं तपश्चर्यादिकमाचरेत् , यं च मनसा यागदाना( ? योगध्याना )दिकम् , यं च वाचा वेदाध्ययनादिकम् , तं यत्नात् आदरात् समाचरेत् , न प्रमाद्येदित्यर्थः , धर्मस्य सर्वपुरुषार्थहेतुत्वात् । अत एव मनुः– ' धर्मं शनैः संचिनुयाद्वल्मीकमिव वम्रिकाः । परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ ' । वम्रिकाः पिपीलिकाविशेषाः । ' नामुत्र हि सहायार्थं पिता माता च तिष्ठतः । न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ एकः प्रजायते जन्तुरेक एव विलीयते । एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ मृतं शरीरं संत्यज्य काष्ठलोष्टसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ॥ ' ( मस्मृ. ४।२३८–२४२ ) इति । अत्रापवादमाह– अस्वर्ग्यमिति । अस्वर्ग्यमनामुष्मिकमैहिकफलं लौकिकैर्विद्विष्टं निन्दितं धर्ममपि शास्त्रविहितमपि नाऽऽचरेदभिचारादिकम् । विहितो हि बौधायनेनाभिचारः क्वचिद्विषये । यथा– ' षट्स्वनभिचरन् पतति ' इति । मनुरपि– 'क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः । धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् । तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन् द्विजः ॥ ' ( मस्मृ. ११।३४, ३२ ) इति । तस्मादभिचारो मधुपर्कादौ गोवधो विधवानियोगः शूद्राविवाह इत्यादयोऽस्वर्ग्यत्वाल्लोकविद्विष्टत्वाद्विहिता अपि न कार्याः , विशेषेण कलियुगे । अत एव स्मरन्ति– ' गोपशुं देवरात्पुत्रं सत्रयागं कमण्डलुम् । सुराप्रयोगं भिक्षुं च न कुर्वीत कलौ युगे ॥ ' । भिक्षुः परमहंसः । तथा– ' अक्षता नरमेधश्च गोयज्ञश्च कमण्डलुः । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥ ' । अत एव मधुपर्केऽनुकल्पस्मरणम् । यन्मार्कण्डेयः– ' माधुपर्किकपश्वर्थे ततो मात्रां निवेदयेत् । सहिरण्यं बीजपात्रं द्रविणेन सदैव तु । पशुः कलौ न कर्तव्य इत्याह भगवान् भृगुः ॥ ' । माधुपर्किकपशुरत्र गौरेव, मधुपर्के ' तस्मा असिपाणिर्गां प्राह ' इत्यादौ गोहननक्रियानियोगादेः स्मरणात्कलौ गोहननस्य निषेधोपपत्तेश्च । अप.

( ४ ) शास्त्राविरुद्धेऽपि क्वचिदपवादो दृश्यते । यथाऽऽह याज्ञवल्क्यः– कर्मणेति । ¶ मपा. १४

( ५ ) अस्वर्ग्यं यथा बहुपुत्रादिबहुपोष्यस्य सर्वस्वदानम् । लोकविद्विष्टं कलौ मध्यमष्टकायां गोवधादि । ' परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥ ' ( मस्मृ. ४।१७६ ) इति । दीक.

( ६ ) अभ्यनुज्ञातमपि भोजनावशिष्टमांसभक्षणादिकं लोकविद्विष्टमत एवास्वर्ग्यं नाऽऽचरेत् । धर्मपदेना( ? दस्या )पिना योगात्न स्वार्थे तात्पर्यम् । केचित्त्विदानींतनानां मधुपर्के पशुप्रधानाचरणादीनामेतद्वचनमूलकत्वमिति वदन्ति । तन्न, कलिनिषिद्धत्वेनैवानाचरणात् विधिविहितबाधकत्वायोगाच्च । संम. ४५

( ७ ) कर्मणा कायेन । अत्र यत्नादिति विधेयम् । अत्रापवादः– अस्वर्ग्यमित्यादिः । धर्ममिष्टसाधनत्वेन वेदादिविहितमपि अस्वर्ग्यं बलवदनिष्टजनकमभिचारादि लोकविद्विष्टं राजादेर्मध्यदेशीयानामविधिमांसभक्षणनिवर्तनादि च नाऽऽचरेत् । तुशब्देन ' धर्मं समाचरेत् ' इत्युक्तं व्यवच्छिनत्ति । वीमि.

( ८ ) इति स्मृतेः कलौ गोपशोर्निषिद्धत्वात्तन्निषिद्धेन छागादिनाऽयं पशुः कर्तव्यः । ' नियते सामान्यतः प्रतिनिधिः स्यात् ' इति एतासामष्टकानां नित्यत्वात्प्रतिनिधिनाऽपि कर्तव्या भवन्त्येव । संप्र. ९९०

**'सदाचारेण देवत्वमृषित्वं च तथैव च ।**
**प्राप्नुवन्ति कुयोनित्वं मनुष्यास्तद्विपर्यये ॥**

---

¶ गप. मपावत् ।

(१) [आपा. २.

## बृहद्योगियाज्ञवल्क्यः

ज्ञानकर्मसमुच्चयः कर्तव्यः

[1]ज्ञानकर्मसमायोगात्परमाप्नोति पूरुषम् ।
पृथग्भावे न सिध्येत उभे तस्मात्समाश्रयेत् ॥

न सिध्येत न मुच्येत । उभे ज्ञानकर्मणी । मोक. १४६

[2]ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्माद्द्वयोरेव भवेत सिद्धि-
र्न ह्येकपक्षो विहगः प्रयाति ॥

[3]गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
निःसृतं कर्मचरितं पुनस्तस्यैव भेषजम् ॥
एवं सति शरीरस्थः सर्पिर्वत्परमेश्वरः ।
विना चोपासनादेव न करोति हितं नृषु ॥
कर्माणि ह्यविनाशीनि बीजवत्प्रभवन्ति च ।
तानि योगाग्निदग्धानि न प्ररोहन्ति वै पुनः ॥
एतस्मात्कारणाद्ध्यानं धारणां प्राणसंयमम् ।
कुर्याद्यत्नेन योगज्ञः कर्मसंन्यासचिन्तनम् ॥

[4]परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः ॥

[5]आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति
नीडं शकुन्ता इव जातपक्षाः ॥

(१) बृयास्मृ. ९।२८ ; अप. ३।२०५ पूरुषम् ( पुरुषः ) भावे ( भावो ) योगयाज्ञवल्क्यः ; मोक. १४६, १४९ योगियाज्ञवल्क्यः ; वीक. ३।१६० भावे न ( भावेन ) उभे ( तात ) योगियाज्ञवल्क्यः ; वीमि. ३।१६० पू. , योगसंहितायाम्.

(२) बृयास्मृ. ९।२९ ; मोक. १४६ भवेत (भवेत्तु) योगियाज्ञवल्क्यः ; वीक. ३।१६० तस्माद्द्वयोरेव भवेत (अतस्तयोरेव भवेच्च) योगियाज्ञवल्क्यः .

(३) बृयास्मृ. ९।३०–३३.

(४) बृयास्मृ. ९।३४ ; अप. ३।२०५ पृ. १०३४ न्त्यप (न्ति प) योगयाज्ञवल्क्यः ; मोक. १४६ भयाच्चै (मयं चै) योगियाज्ञवल्क्यः .

(५) बृयास्मृ. ११।२० .

आत्मज्ञानं परमो धर्मः

[1]इज्याऽऽचारो दमोऽहिंसा दानं स्वाध्याय-कर्म च ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥

[2]प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ।
निःश्रेयसकरं ज्ञेयं द्विजानामिह सर्वशः ॥
कर्मणां समनुष्ठानमाश्रमाणां च सेवनम् ।
पुत्रदारादिसंसक्तिः प्रवृत्तं कर्म चोच्यते ॥
नियमानामनुष्ठानं सम्यगात्मविचिन्तनम् ।
सुतादिष्वनभिष्वङ्गो निवृत्तं कर्म वैदिकम् ॥
प्रवृत्तं सेवमानस्तु स्वर्गलोके महीयते ।
निवृत्तं सेवमानस्तु ब्रह्मभूयाय कल्पते ॥
न तमः कारणं किंचिद्योगधर्मे प्रवर्तते ।
आनन्तर्यात्प्रमाणं तु सर्वमेतदकारणम् ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
आत्मज्ञानेन मुच्यन्ते यत्र तत्राऽऽश्रमे रताः ॥

[3]स्वकर्मणामनुष्ठानात्सम्यगात्मनि दर्शनात् ।
वेदान्तानां परिज्ञानाद्गृहस्थोऽपि हि मुच्यते ॥

अपिशब्दादन्येऽप्याश्रमिणः एवं विमुच्यन्त इति गमयति । अप. ३।५७ पृ. ९६०

[4]यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमेवाऽऽर्च्य सिद्धिं प्राप्नोति मानवः ॥
कर्मसंन्यासयोगेन ब्राह्मणः सिद्धिमाप्नुयात् ।
कर्मणां नियतानां तु त्यागो नैव विधीयते ॥
तेषां कर्मफलत्यागः स त्याग इति कीर्त्यते ।
ब्रह्मप्रधानकर्मस्था न सीदन्ति कदाचन ॥

(१) बृयास्मृ. ११।३४.

(२) बृयास्मृ. ११।३९–४४.

(३) बृयास्मृ. ११।४५ ; अप. ३।५७ पृ. ९६० नि दर्शं (निदर्शं) हि मु (विमु) योगयाज्ञवल्क्यः .

(४) बृयास्मृ. ११।४६–४८.

## नारदः

धर्मः परोक्षः, आचारमहिमा

[1]सूक्ष्मो हि बलवान् धर्मो दुर्विचारस्त्वतीन्द्रियः ॥

सूक्ष्मः दुर्बोधः । दुर्विचारः अनुमानादिभिरशक्यो विचारयितुं यथा च न संप्रतिपत्तव्यः । अतीन्द्रियः परोक्षः चक्षुरादिभिरग्राह्यः । नाभा.

[2]धिग्जन्माऽऽचाररहितं जन्म धिङ्मानवर्जितम् ।
शूद्रेऽपि दृश्यते वृत्तं ब्राह्मणे न तु दृश्यते ।
शूद्रोऽपि ब्राह्मणो ज्ञेयो ब्राह्मणः शूद्र एव सः ॥
[3]हरिभक्तिपरो वाऽपि हरिध्यानरतोऽपि वा ।
भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते ॥
[4]वेदो वा हरिभक्तिर्वा भक्तिर्वाऽपि महेश्वरे ।
स्वाचारात्पतितं मूढं न पुनाति द्विजोत्तमम् ॥
पुण्यक्षेत्राभिगमनं पुण्यतीर्थनिषेवणम् ।
यज्ञो वा विविधो ब्रह्मंस्त्यक्ताचारं न रक्षति ॥
[5]आचारात्प्राप्यते स्वर्ग आचारात्प्राप्यते सुखम् ।
आचारात्प्राप्यते मोक्ष आचारात्किं न सिध्यति ॥

## बृहस्पतिः

त्रैवर्णिकगुणविशेषाः

[6]शौर्यवीर्यार्थरहितस्तपोज्ञानविवर्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः ॥

शौर्यादिरहितः क्षत्रियपुत्रः, अर्थरहितो वैश्यपुत्रः, तपोज्ञानाचाररहितो ब्राह्मणपुत्र इति विवेकः । मुक्ता. ४

धर्मसाधनं धर्मफलं च, विद्याफलम्

[7]सत्यं यज्ञस्तपो दानमेतद्धर्मस्य साधनम् ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षो विधीयते ॥
[8]तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासाय परं कर्म विद्याऽन्या शिल्पनैपुणम् ॥

## भृगुः

प्रवृत्तं निवृत्तं च द्विविधं कर्म, प्रवृत्तकर्मणः त्रैविध्यम्

[1]प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
सर्गादौ सृजता सृष्टं ब्रह्मणा वेदरूपिणा ॥
प्रवृत्तसंज्ञको धर्मो गुणतस्त्रिविधो भवेत् ।
सात्त्विको राजसश्चैव तामसश्चेति भेदतः ॥
काम्यबुद्ध्या च यत्कर्म मोक्षेऽपि फलवर्जितम् ।
क्रियते द्विज कर्मेह तत्सात्त्विकमुदाहृतम् ॥
मोक्षायेदं करोमीति संकल्प्य क्रियते तु यत् ।
तत्कर्म राजसं ज्ञेयं न साक्षान्मोक्षकृद्भवेत् ॥
कार्यबुद्ध्यनपेक्षं यत्कर्म विध्यनपेक्षया ।
क्रियते द्विजवर्येह तत्तामसमुदाहृतम् ॥

## व्यासः

धर्मादर्थश्च कामश्च

[2]अशाश्वतानि गात्राणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥
[3]कामार्थौ लिप्समानस्तु धर्ममेवाऽऽदितश्चरेत् ।
न हि धर्मादृते किंचिद्दुष्प्रापमिति मे मतिः ॥
निपानमिव मण्डूका रसपूर्णमिवाण्डजाः ।
शुभकर्माणमायान्ति विवशाः सर्वसंपदः ॥
[4]धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ।
न तत्सेवेत मेधावी शुचिः कुशतिलं यथा ॥

---

(१) नासं. १।३५. (२) मुक्ता. ५.
(३) आपा. २ रतोऽपि (परोऽपि) बृहन्नारदीये ; मुक्ता. ५.
(४) आपा. २ बृहन्नारदीये ; मुक्ता. ५.
(५) आपा. २ स्वर्ग ( सर्ग ) सिध्यति (साध्यते) बृहन्नारदीये ; मुक्ता. ५. (६) मुक्ता. ४.
(७) अप. ३।२०५ पृ. १०३१ यज्ञस्त ( ज्ञानं त ) विधीयते (ऽधिगम्यते) ; गृक. २९२ साधनम् ( लक्षणम्) विधीयते (विशिष्यते) ; मोक. १४६ साधनम् (लक्षणम्) विधीयते (ऽधिगम्यते) ; गृर. ४९७.

(१) मुक्ता. २०५.
(२) चव. १०-११.
(३) व्यास्मृ. ४।१९.
(४) चव. १३.
(५) चव. १५.

¹सुदुर्लभमिदं प्राप्य मानुष्यं लोकमध्रुवम् ।
न कुर्यादात्मनः श्रेयस्तेनात्माद्वञ्चितश्चिरम् ॥
²तृणपत्राग्रगाम्यम्बुबिन्दुवच्चपले यतः ।
जीवितं वा धनं विप्रास्तस्माद्धर्मं समाचरेत् ॥

वैदिकं कर्म अभीष्टदम्

³वर्णाश्रमाश्रितो धर्मो वेदकर्माश्रितो मतः ।
विद्वान् हि वैदिकं कर्म कुर्वाणोऽभीष्टमश्नुते ॥
⁴प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठोऽतिप्रमाणं बाधयन्यात्यधोगतिम् ॥

(१) वेदकर्माश्रितः वैदिककर्माश्रितः । गुणनिष्ठः स्मृत्याचारनिष्ठः । अतिप्रमाणं वेदम् । गृक. २७५

(२) वेदकर्माश्रितः वैदिककर्मणि गुणभूतः । इतरत् स्मार्तादि गुणनिष्ठं स्मृत्याचारनिष्ठम् । अतिप्रमाणं वेदम् । गृर. ४८२

श्रौतस्मार्तयोः कर्मणोः मुख्यत्वामुख्यत्वे

⁵श्रौतं कर्म न चेच्छक्तः कर्तुं स्मार्तं समाचरेत् ।
अत्राप्यशक्तः करणे सदाचारो भवेद्बुधः ॥

(१) अनेन सति सामर्थ्ये भवितव्यं वैदिकेनेत्युक्तं भवति । उक्तं च वसिष्ठेन– ' अलमग्न्याधेयाय नानाहिताग्निः स्यात् , अलं च सोमाय नासोमयाजी ' इति । स्मृच. २।४१२

(२) सदाचारः स्नानसंध्यादिः । अत्राशक्तिः द्रव्याभावात् , व्याध्यादेः , ज्ञानाभावाच्चेति बहुविधा । अर्थाभावाच्च ' अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तोऽधिकारी ' इति सिद्धान्तात् । तथा च माधवीये अङ्गिराः– ' स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितम् । क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम् ॥ ' इति । ¶ चमव्याआ. ३५-३६

सनातनसाधारणधर्माः

¹सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमाऽऽर्जवम् ।
ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः ॥
²सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् ॥
³संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥
⁴ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।
दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ॥

सत्यादीनां लक्षणं स एवाऽऽह– ' सत्यं भूतहितं ... निर्विषयं मनः ॥ ' इति । स्मृच. १।१४-१५

⁵दानं यज्ञः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो ज्ञेयः फलवान्प्रेत्य चेह च ॥
⁶भोगेष्वासक्तिरहितं तथैवाऽऽत्मावलोकनम् ।
श्रेयः परं मनुष्याणां कपिलः प्राह पार्थिव ॥
⁷सर्वत्र समदर्शित्वं निर्ममत्वमसङ्गिता ।
श्रेयः परं मनुष्याणां प्राह पञ्चशिखो मुनिः ॥

(१) चव्र. १५ ; पप्र. ६९ ष्यं लोकमध्रुवम् (ष्यमिह यो नरः ) उत्तरार्धे ( धर्मावमन्ता कामात्मा स भवेत्खलु वञ्चकः ॥ ).

(२) चव्र. १५.

(३) गृक. २७४ ; गृर. ४८२.

(४) गृक. २७४ ; गृर. ४८२ गुणभूतं (गुणनिष्ठं) निष्ठो (भूतो).

(५) स्मृच. २।४१२ ; पमा. १।२९३ कर्म (कर्तुं) कर्तुं (कर्म) अत्रा (तत्रा) रो भवे ( रं लभे ) ; मर. १६५ रो भवे ( रं लभे ) ; चमव्याआ. ३५ अत्रा ( तत्रा ) रो भवे ( रं लभे ) ; आर. ५० चमव्याआवत् ; आभू. ११७ रो भवे (रं लभे) ; इन्दु. १० चमव्याआवत्.

¶ इन्दु. चमव्याआगतम् ।

(१) अप. १।१२२ पृ. १६४ ; स्मृच. १।१४.

(२) अप. १।१२२ पृ. १६३ प्रथमचरणमात्रम् : पृ. १६४ ; स्मृच. १।१४ ; पमा. १।१०९ उत्त.

(३) अप. १।१२२ पृ. १६४ ; स्मृच. १।१४.

(४) अप. १।१२२ पृ. १६४ चतुर्थचरणे (एष धर्मः सनातनः ) ; स्मृच. १।१४.

(५) स्मृच. १।१५ ; मुक्ता. ३ बृहस्पतिः .

(६) स्मृच. १।१५ ; मुक्ता. ३ प्रथमचरणे (भोगेष्वसक्तिः सततं) चतुर्थचरणे (प्राह पञ्चशिखो मुनिः) बृहस्पतिः .

(७) स्मृच. १।१५.

## देवलः

सर्वधर्मतत्त्वम् , स्वकृतधर्मकीर्तनं फलहानिकरम्

[1]श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

[2]इष्टं दत्तमधीतं वा प्रणश्यत्यनुकीर्तनात् ।
श्लाघानुशोचनाभ्यां वा भग्नतेजो विपद्यते ।
तस्मादात्मकृतं पुण्यं न वृथा परिकीर्तयेत् ॥

अनुकीर्तनं कथनम् । श्लाघा प्रशंसा । अनुशोचनं धनव्ययेन पश्चात्तापः । भग्नतेजः फलजननशक्तिहीनम् । वृथा ( रक्षा ? ) प्रयोजनं विना । आत. ३४८

## उशना

ईश्वरार्पितबुद्ध्या स्वधर्माचरणमिष्टतमम्

[3]यः स्वधर्मपरो नित्यमीश्वरार्पितमानसः ।
प्राप्नोति परमं स्थानं यदुक्तं वेदसंमितम् ॥

## यमः

देशकालद्रव्यादिज्ञानपूर्वकं चित्तशुद्धिपूर्वकं च धर्माचरणमिष्टम् , सदाचारः दीर्घायुष्यकरः

[4]देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा धर्मं समाचरेत् ॥

[5]सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥

तपः धर्मः , तस्य लक्षणानि, शरीरं धर्मक्षेत्रम्

ऋषय ऊचुः–

[6]किंलक्षणो भवेद्धर्मः क्व वा धर्मः प्रतिष्ठितः ।
कः सर्वसंमतो धर्मः किंच धर्मपरायणम् ॥

(१) ब्रक. १४ ; कुर. १७ ; पप्र. ३५.

(२) पमा. १।१७०–१७१ ; आत. ३४८ तं वा ( तं यत् ) प्रण ( विन ) भ्यां वा ( भ्यां च ) विप (विभि) ; मुक्ता. ८७ तं वा (तं च).

(३) औसं. ७।२३. (४) यमस्मृ. ५१.

(५) ब्रक. १६ मनुवसिष्ठयमाः ; कुर. २१ यः सदा (समुदा) मनुवसिष्ठयमाः .

(६) गृक. २९१ ; गृर. ४९६.

यम उवाच–

[1]तपःपरमको धर्मो दानेच्याऽलोभलक्षणः ।
मर्यादायां स्थितो धर्मः संस्थया च प्रवर्तते ।
सत्यं सदुदितो धर्मः सत्यं धर्मपरायणम् ॥

( १ ) तपःपरमकः तपःप्रधानकः । संस्था मर्यादा । सत्यं भूतार्थवादित्वम् । द्वितीयसत्यशब्देनात्र ब्रह्मोच्यते । गृक. २९१

( २ ) द्वितीयसत्यशब्दो ब्राह्मणपरः । ¶ गृर. ४९७

[2]धर्मक्षेत्रं शरीरं हि यत्नेन परिपालयेत् ।
शरीरात्स्रवते धर्मः पर्वतात्सलिलं यथा ॥

[3]सर्वत्र विद्यते-व्याजो धर्मे व्याजो न विद्यते ।
व्याजोपहतधर्माणां स्वर्गे वासो न विद्यते ॥

तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्कः
तान्येव भावोपहतानि कल्कः ॥

कल्कः पापम् । स्वाभाविकः नौपाधिकः । प्रसह्य वित्ताहरणं भ्रान्त्या नर्मणा वा स्वाम्यननुमतवस्तुग्रहणम् । † गृक. ३३१

[4]य इमां धर्ममर्यादामृषिभिः स्थापितां पुरा ।
यथा च विन्दते विप्रः स प्रेत्येह च नन्दति ॥
शिष्टाचरितमार्गोऽयमशिष्टानामतोऽन्यथा ।
शिष्टास्ततो दिवं यान्ति यान्त्यशिष्टास्त्वधोगतिम् ॥

¶ शेषं गृकवत् ।

† गृर. गृकवत् ।

(१) गृक. २९१ ; गृर. ४९६–४९७ मर्यादायां ( यमादाय ) संस्थया ( संस्थायै ) सदुदि ( सर्वहि).

(२) गृक. २९४ ; गृर. ४९९.

(३) गृक. ३३१ ; गृर. ५२७.

(४) गृक. ४२८.

**'शास्त्रार्थमार्गमाश्रित्य ये गता ये च संस्थिताः ।**
**ये बुध्यन्ते महात्मानस्ते यान्ति परमां गतिम् ॥**

गताः शास्त्रार्थमार्गेण प्रवृत्ताः । संस्थिताः संप्राप्ताः लोकान्तरं गता इति यावत् । बुध्यन्ति अनुतिष्ठन्त आसते । $ निक. २८

## दक्षः

धर्मशास्त्रविषया आश्रमधर्माः, नित्यनैमित्तिक-
काम्यकर्मार्थं सर्वः विप्रकाल:

**'ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।**
**एतेषां तु हितार्थाय धर्मशास्त्रमकल्पयत् ॥**

**'उदयास्तमयं यावन्न विप्रः क्षणिको भवेत् ।**
**नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः ॥**

(१) क्षणिकः अत्र शास्त्रानुमतव्यापाररहितः । अन्यैः अगर्हितैः अनिषिद्धैः दृष्टार्थैः । निक. ४

(२) न क्षणिको भवेत् उक्तकर्महीनः क्षणमपि न तिष्ठेदित्यर्थः । अनिषिद्धैः अगर्हितैः । गृर. १३५

(३) उदयास्तमयमित्यहोरात्रोपलक्षणम् । विप्र इति प्रधाननिर्देशः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इति कोषात्क्षणः व्यापारशून्यत्वम् । 'अत इनिठनौ' (पासू. ५।२।११५) इति सूत्रेण मत्वर्थीयठन्प्रत्यये क्षणिकः व्यापारशून्य इत्यर्थः । अत्र– 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' (भगी. ३।५) इत्यादिना सर्वदैव सर्वस्य यत्किंचिद्व्यापारवत्त्वावगमात्तच्छून्यत्वस्याप्रसक्तेस्तन्निषेधानुपपत्तिमभिप्रेत्य क्षणिकः शास्त्रानुमतव्यापारशून्य इति कल्पतरुणा व्याख्यातम् । अत्र यद्यपि शास्त्रानुमतव्यापारान्तर्गतानां काम्यानां दृष्टार्थकानां च व्यापाराणामभावतः प्रत्यवायरूपमनिष्टमनुपपन्नं तथापि इष्टाभावरूपमेवानिष्टं तत इति प्रत्याय्यते । तथा चोपदेशपरमिदं वाक्यमिति तदभिप्रायः । अन्ये तु– क्षणिकोऽत्र लोकशास्त्रगर्हितव्यापारवान् । लोकगर्हितो व्यापारो जलताडनादिः, शास्त्रगर्हितः परस्वहरणादिः । द्वितीयार्धेन अगर्हितव्यापारवत्त्वं विधीयते, पूर्वार्धेन तु गर्हितव्यापारवत्त्वं निषिध्यते इत्याहुः । अन्यैः दृष्टार्थैः, अगर्हितैः लोकशास्त्रानिन्दितैः । अत एव याज्ञवल्क्यः– 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' । आप्र. १०–११

**'स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः ।**
**अज्ञानादथवा लोभात्स तेन पतितो भवेत् ॥**

स्वकं निजवर्णाश्रमोक्तम् । परित्यज्य चिरकालं परित्यज्येत्यर्थः । गृर. १३५

**'नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।**
**तथा तथा हि कार्याणि न कालं तु विलम्बयेत् ॥**

**'यथैवाऽऽत्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता ।**
**सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥**

$ आप्र. निकगतम् ।

(१) निक. २८ बुध्यन्ते ( बुध्यन्ति ); आप्र. १५५.

(२) दस्मृ. १।२.

(३) दस्मृ. २।२ ; निक. ३ मयं ( मनं ); गृर. १३४ ; निप्र. १।२२९ ; गप. १८ नित्यनै (नित्यैर्नै) : ४३९ पू. ; आप्र. ९.

(१) दस्मृ. २।३ ; निक. ३ स तेन (त्यक्तेन) ; गृर. १३५ ; निप्र. १।२२९ नादथवा (नाद्यदि वा) ; गप. १८ ; आप्र. ९.

(२) दस्मृ. २।७३ ; निप्र. १।२३० यथा यथा (यदा यदा) तथा तथा हि (तदा तदा तु) चतुर्थचरणे (न कालस्तु विधीयते) : १।२३१ (न कालस्तु विधीयते) एतावदेव ; आत. ३६५ तथा हि ( तथैव ) विलम्बयेत् ( विधीयते ) ; गप. १८ काम्यानि (कार्याणि) शेषं निप्र. १।२३० वत् ; वीमि. १।१०० पृ. १९४ काम्यानि ( कर्माणि ) यथा यथा ( यदा यदा ) उत्तरार्धे (तदा तदैव कर्माणि न कालस्तु विधीयते ॥ ) ; आप्र. १५९ कार्याणि ( कर्माणि ) शेषं वीमिवत् ; कृभ. ६० कालं तु ( कालस्तु ) शेषम् आतवत्.

(३) दस्मृ. ३।२२–२६.

**सुखं वा यदि वा दुःखं यत्किंचित्क्रियते परे ।**
**तत्कृतं तु पुनः पश्चात्सर्वमात्मनि तद्भवेत् ॥**
**न क्लेशेन विना द्रव्यं द्रव्यहीने कुतः क्रिया ।**
**क्रियाहीने न धर्मः स्याद्धर्महीने कुतः सुखम् ॥**

धर्मः सुखसाधनम्

**सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम् ।**
**तस्माद्धर्मः सदा कार्यः सर्ववर्णैः प्रयत्नतः ॥**
**न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम् ॥**

## संवर्तः

धर्मक्षरणकारणानि

**[1]'यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।**
**आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥**

## वृद्धशातातपः

संकल्पः कामकारणम् , महाभयावृतो मानवः

**[2]'काम जानामि ते मूलं संकल्पात्किल जायसे ।**
**संकल्पं न करिष्यामि मूलच्छिन्नो भविष्यसि ॥**
**उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।**
**मरणव्याधिशोकानां किमद्य निपतिष्यति ॥**
**[3]'श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ।**
**न हि प्रतीक्षते मृत्युः कृतं चास्य न वाऽकृतम् ॥**

( १ ) इदं चाऽऽदरातिशयार्थमनियतकालविषयम् ।
गृक. २८७

( २ ) इदं श्वःकार्यादावावश्यककरणार्थम् ।
गृर. ४९३

## पराशरः

सर्वेषाम् आचारो धर्मः

**[4]'चतुर्णामपि वर्णानामाचारो धर्मपालकः ।**
**आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥**

( १ ) आचारस्यान्वयव्यतिरेकाभ्यामैहिकामुष्मिकश्रेयोहेतुत्वमाचारलक्षणं चाऽऽनुशासनिके पर्वण्यभिहितम्— 'आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् । आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ दुराचारो हि पुरुषो नेहाऽऽयुर्विन्दते महत् । त्रसन्ति चास्य भूतानि तथा परिभवन्ति च ॥ तस्मात्कुर्यादिहाऽऽचारं यदीच्छेद्भूतिमात्मनः । अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥ आचारलक्षणो धर्मः सन्तश्चाऽऽचारलक्षणाः । साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥' ( भा. १३।१०७।६–९ ) इति । हारीतोऽपि स्मरति— 'साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः । तेषामाचरणं यत्तु सदाचारः स उच्यते ॥' इति । मनुरप्याह— 'तस्मिन् देशे य आचारः पारंपर्यक्रमागतः । वर्णानां सान्तरालानां स सदाचार उच्यते ॥' ( मस्मृ. २।१८ ) इति । सन्तः शिष्टाः । तेषां स्वरूपमाह भगवान् बोधायनः— 'शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः' ( बौध. १।१।५ ) इति । आरण्यपर्वणि— 'अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः । ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ॥ त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः । गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्ति ते ॥' ( भा. ३।१९८।७३,७४ ) इति । अत्र शिष्टानामभिमतो दयादाक्षिण्यविनयाद्यन्वितो वृत्तविशेष आचार इत्युक्तं भवति । स आचारः श्रौतं स्मार्तं च धर्मं पालयति, धर्मविघातिनां नैर्घृण्यक्रोधादीनामभावात् । असति त्वाचारे विरोधिसद्भावाद्धर्म एव न प्रवर्तते, कथंचित्प्रवृत्तोऽपि परावर्तते । सोऽयं धर्मपालक आचारश्चतुर्णां वर्णानां साधारणः । ननु 'किंचित्साधारणं वद' इति धर्मः पृष्टः, प्रत्युत्तरं त्वाचारविषयमिति न संगच्छते, इति चेत् , न, निमित्त-

---

(१) संस्मृ. ९५.
(२) वृशास्मृ. ६४–६५.
(३) वृशास्मृ. ६६ ; गृक. २८६–२८७ कार्यमद्य ( कार्यं सद्यः ) चास्य ( वाऽस्य ); गृर. ४९३ चास्य (वाऽस्य).
(४) पस्मृ. १।३७ ; पमा. १।१३० ( आचारो धर्मपालकः ) एतावदेव : १।२०४ प्रथमचरणमात्रम् ; गर. ७ पालकः ( पालनम् ) ; मुक्ता. ४ ; विम. पालकः ( पालकम् ) ; सस्मृ. २ गपवत्.

नैमित्तिकयोराचारधर्मयोरभेदस्य विवक्षितत्वात् ।

¶ पमा. १।१३३-१३५

(२) इदानीं वक्ष्यमाणाचारस्य प्रयोजनवत्त्वायान्वयव्यतिरेकाभ्यां धर्मसाधनतामाह— चतुर्णामिति । चतुर्णामपि वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणाम् आचारः श्रुतिस्मृत्युदितसाधुसेवितक्रियानुष्ठानम्, 'श्रुतिस्मृत्युदितो यश्च साधुभिर्यश्च सेवितः । तमाचारं निरीक्षेत धर्मकामजितेन्द्रियः ॥' (विस्मृ. ७१।९०) इति विष्णुस्मरणात् । धर्मस्य सुकृतपूर्वस्य पालकम् अनुत्पन्नस्योत्पादकमुत्पन्नस्य च संरक्षकम्, 'आचारप्रभवो धर्म आचारो धर्मपालनम्' इति स्मरणात् । आचारात् पूर्वोक्तात् भ्रष्टः अनुष्ठानाशक्तः देहो येषां तेषां धर्मः सुकृतं पराङ्मुखः उत्पत्तिकारणसद्भावेऽप्यङ्गवैकल्येन नोत्पद्यत इत्यर्थः । तदाह वसिष्ठः— 'नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणाः । हीनाचारमितो भ्रष्टं तारयन्ति कथंचन ॥' (वाध. ६।२) इति । बृहत्पराशरोऽप्येतदेवाऽऽह— 'चतुर्णामपि वर्णानामाचारो धर्मपालनम् । आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥' इति ।

विम.

[1]आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमाप्नोति ह्याचारो हन्त्यलक्षणम् ॥

[2]आचारात्पूज्यते लोक आचाराद्यश आप्नुयात् ।
आचारो हन्त्यकल्याणि आचारात्कुलवान् भवेत् ॥

[3]दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥

[1]कुत्सितश्च सदा लोके विप्रो गतिविवर्जितः ।
आचारहीनः पुरुषो हीनो हीनां गतिं लभेत् ॥

[2]न कार्यमावसथ्येन नाग्निहोत्रेण वा पुनः ।
स भवेत्कर्मचाण्डालो यस्तु धर्मपराङ्मुखः ॥

यस्तु वेदे विश्वासरहितो वेदोक्ताद्धर्मात्पराङ्मुखस्तं नानुतिष्ठति स जन्मना ब्राह्मणोऽपि कर्मणा चाण्डालो भवेत् । तस्य धर्मपराङ्मुखत्वं तदीयोक्तिरूपेण पूर्वार्धेन द्योत्यते । आवसथ्यः पञ्चमः अग्निः । तेन च गार्हपत्याद्यग्निपञ्चकमुपलक्ष्यते । न चाग्निपञ्चकेन वा तत्साध्येनाग्निहोत्रादिना वा किंचित्फलमस्ति, ऐहिकस्य फलस्यादर्शनादामुष्मिकस्य फलस्य संदिग्धत्वात् । तथा च श्रूयते— 'को हि तद्वेद यदमुष्मिंल्लोकेऽस्ति वा न वा' (तैसं. ६।१।१।१) इति । ‡ पमा. २।३३

[3]आचारमूलं श्रुतिशास्त्रतत्त्व-
माचारशाखास्तु तदुक्तकृत्यम् ।
आचारपर्णानि च यज्ञयोगा
आचारपुष्पाणि यशोधनानि ॥
आचारवृक्षस्य फलं हि नाक-
स्तस्मात्सुखस्वादुरसश्च मुक्तिः ।
तस्मादनन्तं फलदं तु तत्त्व-
माचारमेवाथ श्रयेत्प्रयत्नात् ॥

[4]आचारः परमो धर्म आचारः परमं तपः ।
आचारः परमं ज्ञानमाचारात्किं न साध्यते ॥
यस्त्वाचारविहीनोऽपि विद्वान्वेदपरायणः ।
सर्वधर्मबहिःकार्यो यथा शूद्रस्तथैव सः ॥

आपत्सु देहरक्षणमेव धर्मो नान्यः

[5]देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि ।
रक्षेदेव स्वदेहादि पश्चाद्धर्मं समाचरेत् ॥

---

¶ मुक्ता. पमागतम् ।

(१) गप. ८ ; सस्मृ. २ ल्लभते ( ल्लभ्यते ) ताः प्र (तं प्र) द्धन (द्धर्म).

(२) गप. ८ ; सस्मृ. २ त्पूज्यते लोक आ (त्प्राप्यते लोको ह्या) हन्त्यकल्याणि (त्यन्तकल्याण) त्कुलवान् (त्कुशली).

(३) गप. ८ ; सस्मृ. २-३.

‡ विम. पमागतम् ।

(१) गप. ८ ; सस्मृ. ३ विप्रो गतिवि ( विप्रः सम्यग्वि ). (२) पस्मृ. ४।१९.

(३) इन्दु. २. (४) आर्क. १.

(५) पस्मृ. ७।३६ ; आर्क. ३८ वा (च) नेष्वपि ( नेषु च ) देहादि ( देहं तु ) ; इन्दु. २३४ देहादि (देहं च) शेषम् आर्कवत्.

(१) येयं पूर्वोक्ता शुद्धिः, सा सर्वाऽप्यनापद्-विषयेत्यभिप्रेत्याऽऽह– देशभङ्ग इति । देशभङ्गः परसैन्यापादितः । प्रवासः तीर्थयात्रादौ परगृहावस्थानम् । व्याधयः ज्वरादयः । व्यसनानि स्वामिकोपादि-जनितानि । एतेषु प्राप्तेषु भक्ष्याभक्ष्येन शुद्धयशुद्धी न विचारयितव्ये । किं तर्हि ? शुचिभिरशुचिभिर्वा द्रव्यैरात्मपुत्रकलत्रादीनां यथा रक्षा भवति तथा कृत्वा शान्तायामापदि पश्चात् द्रव्यशुद्धयादिरूपं शास्त्रोक्तं धर्ममाचरेत् । पमा. २।१४९

(२) अशुद्धद्रव्योपभोगनिमित्तप्रायश्चित्तपूर्वकं धर्मानाचरेत् । $ विम.

अनापदि धर्माचरणं युक्तम्

[१]येन केन च धर्मेण मृदुना दारुणेन वा ।
उद्धरेद्दीन आत्मानं समर्थो धर्ममाचरेत् ॥

(१) 'रक्षेदेव स्वदेहादि' इत्यमुमर्थं प्रपञ्चयति– येनेति । शुद्धद्रव्यादिसंपादितो धर्मो मृदुः, तद्विपरीतो धर्मो दारुणः स्तन्यपानमांसभक्षणादि । तयोर्मध्ये येन केनापि व्याध्यादिभिर्दीनमात्मानमापद्भ्यः उद्धृत्य समर्थः व्याध्यादिरहितो यथाशास्त्रं धर्ममाचरेत् । पमा. २।१५०

(२) एवं शुद्धिविषयमुक्त्वा प्रसङ्गान्मुख्यगौणयोरपि कल्पयोर्विषयमाह– येनेति । मृदुना सुकरेण यथोपपन्नदेशकालद्रव्यात्मसाध्येन, दारुणेन वा उद्धरेद्दीन आत्मानम् । समर्थो धर्ममाचरेत्, न दुष्करेण यथोक्तदेशकालद्रव्यात्मसाध्येन वा येन केनचिदव्यवस्थितेन धर्मेण दीन आपद्ग्रस्तमात्मानमुद्धरेत् अनापदं कुर्यात् । समर्थः निस्तीर्णापत् धर्मं मुख्यं शास्त्रेणोक्तमेवाऽऽचरेत्, न तु कल्पं शास्त्रोक्तमिति । अनेनासमर्थो मुख्यगौणयोर्धर्मयोर्यथोपपत्त्यधिकारी, समर्थस्तु मुख्यधर्म एवेत्युक्तं भवति, 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥' (मस्मृ. ११।३०) इति स्मरणात् । विम.

[१]आपत्कालं तु निस्तीर्य शौचाचारं तु चिन्तयेत् ।
शुद्धिं समुद्धरेत्पश्चात्स्वस्थो धर्मं समाचरेत् ॥

(१) तत्राऽऽचरणीयो धर्मो द्विविधः– आचारकाण्डोक्तविहितानुष्ठानप्रतिषिद्धवर्जनरूप एकः, प्रायश्चित्तकाण्डोक्तविधिनिषेधातिक्रमसमाधानरूपः अपरः । तदुभयं विविच्योभयत्रापि शान्तापदेवाधिकारीत्याह– आपत्कालमिति । शौचाचारमित्यनेन प्रथमकाण्डोक्तो धर्मः परामृष्टः । शुद्धिमित्यनेन प्रायश्चित्तकाण्डोक्तो धर्मो निर्दिष्टः । शुद्धो यथा भवति तथा पापात् समुद्धरेदित्यर्थः । स्वस्थ इत्युपसंहारः । उक्तं द्विविधमपि धर्मं स्वस्थ एव समाचरेत्, न त्वापन्नः । एतदभिप्रेत्य याज्ञवल्क्य आह– 'क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः । निस्तीर्य तामथाऽऽत्मानं पावयित्वा न्यसेत् सुधीः ॥' (यास्मृ. ३।३५) इति । पमा. २।१५०

(२) निस्तीर्णापत्काल एव पुमान् शौचाचारमाचारकाण्डोक्तं धर्मं विचिन्तयेत् अनुतिष्ठेत्, शुद्धिं प्रायश्चित्तकाण्डोक्तां च समुद्धरेत् आचरेत् । अनेन मुख्यगौणकल्पयोराचारप्रायश्चित्तयोरेव संभवः, नान्यत्रेत्युक्तं भवति । स्वस्थो धर्मं समाचरेदित्युक्तोपसंहारः । द्विविधमपि धर्मं स्वस्थ एवाऽऽचरेत्, नाऽऽपन्न इति । विम.

[२]अशक्तो निन्दितं कुर्यात्प्रायश्चित्तं पुनश्चरेत् ॥

## बृहत्पराशरः

स्वधर्माचरणमेव युक्तम्

[३]वसन्वा यत्र तत्रापि स्वाचारं न विवर्जयेत् ।
षट्कर्माणि च कुर्वीरन्निति धर्मस्य निश्चयः ॥
[४]चतुर्णामपि वर्णानामाचारो धर्मपालनम् ।
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥

$ शेषं पमागतम् ।

(१) पस्मृ. ७।३७ ; पमा. दीन आ (दीनमा).

(१) पस्मृ. ७।३८ ; विम. तु चिन्त (विचिन्त).

(२) संम. ७९.

(३) बृपसं. ११४८.

(४) बृपसं. २१२.

श्रद्धा-विधि-शौचैकाग्र्ययुतं कर्म फलप्रदम्

[1]विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ।
न किंचित्फलमाप्नोति क्लेशमात्रं हि तस्य तत् ॥
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ।
तिष्ठन्तोऽपि च ते स्नानफलं नैवाऽऽप्नुयुर्यतः ॥
विधिहीनं भावदुष्टं कृतमश्रद्धयाऽपि च ।
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः ॥
श्रद्धाविधिसमायुक्तं यत्कर्म क्रियते नृभिः ।
शुचिभिर्ह्येकचित्तैश्च तदानन्त्याय कल्पते ॥

धर्मस्य दीर्घायुष्यादि ऐहिकं श्रेयः, अधर्मस्य तद्विपरीतम्

[2]येऽजस्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम् ॥
दीर्घायुष्यमदारिद्र्यं सुप्रजास्त्वमरोगिताम् ।
अगर्हितत्वं लोकेऽत्र विदुरनिषिद्धकारिणः ॥
क्षीणायुस्त्वं दरिद्रत्वमप्रजास्त्वं च रोगिताम् ।
गर्हितत्वं च लोकेषु विदुर्निषिद्धकारिणः ॥
[3]आचारः परमो धर्मः सर्वेषामिति निश्चयः ।
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ॥
क्लेशभागी च सततं व्याधितोऽल्पायुरेव च ।
आचारे व्यवहारे च दुराचारो विपर्ययः ॥
नृणामाचारतो धर्मः स्यादधर्मो विपर्ययात् ।
तस्मादाद्येऽनुवर्तेत व्यत्ययं तु विवर्जयेत् ॥
आचारवन्तो मनुजा लभन्ते
आयुश्च वित्तं च सुतांश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोक-
मत्रापि विद्वज्जनपूज्यतां च ॥

वेदाद्यागमविहितो धर्मः अनुष्ठेयः

वेदाः सहाङ्गैः सपुराणविद्याः
शास्त्राणि वेद्यानि च तद्विहीनम् ।
कुर्युर्न वै तान्यपि संस्कृतानि
नरं पवित्रं प्रवदन्ति वेदाः ॥
येऽधीतवेदाः क्रियया विहीना
जीवन्ति वेदैर्मनुजाधमास्तान् ।
वेदास्त्यजेयुर्निधनस्य काले
नीडं शकुन्ता इव जातपक्षाः ॥
आचारहीननरदेहगताश्च वेदाः
शोचन्ति किं नु कृतवन्त इति स्म चित्ते ।
यन्नोऽभवद्वपुषि चास्य शुभप्रहीणे
स्थानं तदत्र भगवान् विधिरेव शोच्यः ॥

शौचाचारमहिमा

कर्तव्यं यत्नतः शौचं शौचमूला द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्युर्निष्फलाः क्रियाः ॥
[1]आचारेण सदा विद्वान्वर्तते यो जितेन्द्रियः ।
स ब्रह्म परमाप्नोति वरेण्योऽमुत्र चेह च ॥
आचारमूलं श्रुतिशास्त्रवित्त-
माचारशाखाश्च तदुक्तकृत्यम् ।
आचारपर्णानि हि तन्नियोग
आचारपुष्पाणि यशोधनानि ॥
आचारवृक्षस्य फलं हि नाक-
स्तस्याश्च सुस्वादुरसश्च मुक्तिः ।
तस्मादनन्तं फलदं तु तस्य-
माचारमेवाऽऽश्रय यत्नपूर्वम् ॥
ये धर्मशास्त्रे विहिताश्च केचि-
द्धर्मा द्विजाग्र्योरपि ते च सर्वे ।
यत्नेन कार्याः पितृदेवभक्तैः
श्राद्धानि कार्याण्यथ तानि वक्ष्ये ॥
यत्नेन धर्मो गृहमेधिविप्रैः
प्रीतेन वाचा वपुषा च कार्यः ।
आयुः $प्रजा श्रीर्भुवि पूजितत्वं
तस्माल्लभन्ते दिवि देवभोगान् ॥

(१) बृपसं. २।१४७–१५०.
(२) बृपसं. ६।१७१–१७३.
(३) बृपसं. ६।२०५–२१२.

$ 'सुपां सुलुक्०' (पासू. ७।१।३९) इत्यमः सुरादेश आर्षः ।

(१) बृपसं. ६।३७६–३८०.

ज्ञानकर्मसमुच्चयोऽनुष्ठेयः

[1]ज्ञानयोगस्तथा कर्म विद्याविद्ये स्मृते बुधैः ।
अपवर्गाय द्वे चापि कर्म कृत्वा निवेदयेत् ॥
कर्मापि क्रियमाणं वै निरपेक्षं तु मोक्षकृत् ।
विष्णवे गुरवे वाऽपि कर्म कृत्वा निवेदयेत् ॥
आत्मनः फलमिच्छंस्तु यत्कर्म कुरुते नरः ।
तेनैव वाञ्छितप्राप्तिस्तेनान्यन्नोपजायते ॥

## अत्रिः

स्वधर्म एव प्रशस्तः, परधर्मो निषिद्धः

[2]स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥
[3]मयैष धर्मोऽभिहितः संस्थिता यत्र वर्णिनः ।
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम् ॥

वर्णिनः वर्णाः । मर. ९

[4]ये व्यपेताः स्वधर्मेभ्यः परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ।
परधर्मो भवेत्याज्यः सुरूपपरदारवत् ॥

दश यमाः दश नियमाश्च

[5]यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥
आनृशंस्यं क्षमा सत्यमहिंसा क्षान्तिरार्जवम् ।
प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥
[6]शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः ।
व्रतमौनोपवासाश्च स्नानं च नियमा दश ॥

---

(१) बृपसं. १२।१६७–१६९.

(२) अत्रिसं. १२.

(३) अत्रिसं. १६ ; मर. ९ प्रथमचरणे ( तदेष धर्मो विहितः) न्ति परमां (न्त्यनुपमां).

(४) अत्रिसं. १७–१८.

(५) अत्रिसं. ४७–४८.

(६) अत्रिसं. ४९ ; मिप्र. २।४१५ तृतीयचरणे (व्रतोपवासमौनं च) मा दश ( माः स्मृताः ) (=).

नित्यं नैमित्तिकं काम्यं च कर्म

[1]तस्माद्धर्मं सदा कुर्याच्छ्रुतिस्मृत्युदितं च यत् ।
नित्यं नैमित्तिकं काम्यं यच्च स्वर्गस्य साधनम् ॥

## सुमन्तुः

वर्णाद्यधिकारभेदेन धर्मभेदः

[2]वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते ।
वर्णधर्मः स उक्तस्तु यथोपनयनं किल ॥
[3]यस्त्वाश्रमत्वमाश्रित्य अधिकारः प्रवर्तते ।
स एवाऽऽश्रमधर्मः स्याद्भिक्षादण्डादिको यथा ॥
[4]वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते ।
स वर्णाश्रमधर्मस्तु यथा मौञ्जी तु मेखला ॥
[5]यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते ।
यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

## पैठीनसिः

स्वधर्मफलं देवतास्थानम्

[6]ब्राह्मणस्य प्राजापत्यम्, ऐन्द्रं पदं क्षत्रियस्य, मारुतं वैश्यस्य, गान्धर्वं शूद्रस्य । स्वस्वस्थानं व्रजन्ति स्वे स्वे कर्मण्यभिरताश्च ये ॥

## अङ्गिराः

चोदनावाचका लिङादयः

[7]धर्मः स्याच्चोदनाप्रोक्तस्तदन्यस्तूपचारतः ।
लिङादिरूपा सा ज्ञेया मुक्तिदा श्रुतिचोदिता ॥

---

(१) अत्रिसं. १११.

(२) स्मृच. १।१५; मुक्ता. ४ चन्द्रिकायाम् .

(३) स्मृच. १।१५ ; मुक्ता. ४ यस्त्वाश्रमत्व (तथैवाऽऽश्रम) चन्द्रिकायाम् .

(४) स्मृच. १।१५ ; मुक्ता. ४ चन्द्रिकायाम्.

(५) स्मृच. १।१५.

(६) मपा. २३५ ; स्मृकौ. ९६ (ब्राह्मं प्राजापत्यं वा स्थानं ब्राह्मणस्यैन्द्रं राजन्यस्य मारुतं वैश्यस्य गान्धर्वं शूद्रस्य स्वे स्वे कर्मण्यभिरताः स्वं स्वं स्थानं जनयन्ति ते ॥ ).

(७) पूर्वाङ्गिस्मृ. ३–४.

श्रुत्युक्तलिङ्लोट्तव्यप्रत्ययलक्षणलक्षिता ।
चोदना सैव नान्या सा पुराणस्मृतिचोदिता ॥

ज्ञानकर्मसमुच्चयः श्रेयस्करः

[1]स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितम् ।
क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम् ॥
[2]हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानतः क्रियाः ।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः ॥

## आश्वलायनः

धर्मस्य विविधानि रूपाणि, सदाचारमहिमा

[3]अहिंसा सत्यमस्तेयमार्जवं ह्रीरचापलम् ।
अद्रोहश्चाभिमानश्च धर्मस्यैतेऽष्ट विग्रहाः ॥
शमो दमस्तपो दानं तितिक्षेज्या जपस्तथा ।
व्रततीर्थोपवासाश्च दशैते धर्मसाधनाः ॥
धर्मस्य करणान्यष्टौ वर्णाश्चत्वार आश्रमाः ॥
[4]धर्मः संसेवितः शुद्धस्त्रायते महतो भयात् ।
श्रुत्वाऽपि सन्तो हृष्यन्ति दूराद्धर्मपरं नरम् ॥
[5]धर्मः कृतः श्रुतो दृष्टः कथितश्चिन्तितोऽपि वा ।
तथाऽनुमोदितोऽपीह पुनाति पुरुषं शुभम् ॥
[6]तस्माद्धर्मो यथाशक्त्या यत्नात्सेव्यो नृभिर्बुधैः ॥
[7]अतः परं प्रवक्ष्यामि सदाचारं समासतः ।
सदाचारपरो नित्यमुभयत्र विराजते ॥

(१) मुक्ता. ३६४.

(२) स्मृच. २।४३२ हतं ज्ञानं क्रि (हुतं ज्ञानक्रि) हता (हुता) ; पमा. १।२९१ ; मुक्ता. ३६४ ज्ञानतः (ज्ञानिनः) ; आन. १७९ ज्ञानतः (ज्ञानिनः) पङ्गुकः (पङ्कुकः).

(३) आश्वस्मृ. २।९–११.

(४) आश्वस्मृ. २।१५ ; प्रपा. २ सन्तो हृ (सन्तस्तु).

(५) आश्वस्मृ. २।१६ धर्मः कृतः (कृतो धर्मः); प्रपा. २ पुनाति पुरुषं (पुष्णाति परमं).

(६) आश्वस्मृ. २।१७ ; प्रपा. २ शक्त्या (शक्ति).

(७) आश्वस्मृ. १०।१ ; आपा. १.

[1]शतायुरुक्तः पुरुषः शतवीर्य इति श्रुतिः ।
तथा न स्यात्कथमिति सतामप्यस्ति संशयः ॥
[2]सदाचारविहीनत्वान्न भवन्ति शतायुषः ।
सन्तोऽपि मानवाः सर्वे प्रायो भारतभूमिजाः ॥
[3]सदाचाररतो यस्तु प्राग्जन्मन्यपि मानवः ।
स सदाचारहीनोऽपि शतायुः स्यात्पुनर्भवेत् (? भवे) ॥
[4]दीर्घायुषो दुरात्मानो ये भवन्तीह मानवाः ।
प्राणाभयप्रदातारस्ते प्राग्जन्मनि वै नृणाम् ॥
श्रुतयः स्मृतयः सन्तः पुराणाश्चातिविस्तराः ।
प्रमाणाश्चत्वारः पुण्याः सदाचारस्य हि स्मृताः ॥
सद्भिराचरितत्वाच्च सदाचार इति स्मृतः ।
श्रुतिप्रत्ययधर्माणः सन्तो विप्रा मनीषिणः ॥
[5]सदाचारपरो नित्यं देवानां द्युसदामपि ।
चण्डालोऽपि प्रियोऽतीव श्रवणादपि चेद्भवेत् ॥
[6]सदाचारविहीनस्तु सर्वज्ञोऽप्यप्रियो नरः ।
सर्वलोकस्य भवति नात्र कार्या विचारणा ॥
[7]सदाचारपरस्तस्माद्भवेद्यत्नेन मानवः ।
सदाऽमृतद्युतो दान्तः शान्तः प्राणिदयापरः (?) ॥

(१) आश्वस्मृ. १०।२ ; आपा. १ न स्यात् (तस्मात्).

(२) आश्वस्मृ. १०।३ ; आपा. १.

(३) आश्वस्मृ. १०।४ ; आपा. १ स सदाचार (सदाचारवि).

(४) आश्वस्मृ. १०।५–७ ; आपा. १.

(५) आश्वस्मृ. १०।८ ; आपा. १ द्युसदा (हि सता).

(६) आश्वस्मृ. १०।९ ; आपा. १.

(७) आश्वस्मृ. १०।१० (सदाचारपरस्तस्मान्मूर्खो वा पण्डितोऽपि वा । ब्राह्मणो वाऽथ चण्डालो विद्वानप्यथवा नरः ॥ ) ; आपा. १–२.

विरूपो वा सुरूपो वा
मूर्खो वा पण्डितोऽपि वा ।
ब्राह्मणो वाऽथ चाण्डालो
विद्वांश्चाप्यथवेतरः ॥

[1]सर्वलक्षणहीनोऽपि सदाचारपरः शुभः ।
राजते मोदते सर्वैः स्तूयतेऽमुत्र चेह च ॥

[2]विद्वान्वाऽप्यथवाऽविद्वान् कुलीनो वाऽथवा परः ।
सदाचारपरः सर्वैः स्तूयतेऽमुत्र चेह च ॥

[3]श्रियमायुर्यशो वर्चः प्रजाः पशुवसूनि च ।
सर्वसंवननं मर्त्यः सदाचारपरो लभेत् ॥

कार्याकार्यविचारः श्रेयस्करः, द्वादश दोषा वर्ज्याः

[4]परद्रव्यपरस्त्रीषु न प्रसज्ज्येद्यथा मनः ।
तथा नियच्छेन्मतिमाञ्छास्त्रं दृष्ट्वा विचक्षणः ॥

अकार्यस्मरणान्नित्यं कार्यस्यास्मरणान्मनः ।
स्मरणाद्वैपरीत्यस्य नियच्छेदात्मनाऽऽत्मनि ॥

वाचं च मनसा यच्छेत्तथा कायं च यत्नतः ।
किं कृत्वा मे भवेच्छ्रेयः किमकृत्वेति सर्वदा ॥

विचार्य संसरेद्युक्तान्
पदे विद्वांस्तथाऽऽचरेत् ।
स्पृ( ? पृ )ष्ट्वा बहुश्रुतमपि
छित्त्य (?विविच्य) शास्त्रान् समाममन् ॥

पृथक्चतुर्विधान्दोषान्मनोवाक्कायसंभवान् ।
वर्जयन्नाचरेच्छ्रेयो विमृश्याऽऽत्महितं बुधः ॥

दोषान् द्वादश यो नित्यमकृत्वा त्रिविधाचरः ।
अपाप्मा सं( ? स )भवेच्छुद्रः प्रायश्चित्तं च चा( ? ना )ऽऽप्नुयात् ॥

दोषान् द्वादश नित्यं तु यतीनामपि कृत्स्नशः ।
हातुं प्रयतमानानामशक्यमिति मे मतिः ॥

यमाद्द्वादशदोषाणां ब्रह्मभूयाय कल्पते ।
प्रायः सङ्गविमुक्तश्चेत्त्वन्यथा स्वर्गमृच्छति ॥

यमा( ? मो ) द्वादशदोषाणां मूलमाचार-पुण्ययोः ।
प्रायो नाकस्य मोक्षस्य सुखस्य च महात्मनाम् ॥

स्वकर्मणोऽनुष्ठेयत्वम्

[1]यस्तु त्यक्त्वा स्वकर्माणि करोत्यन्यानि मानवः ।
उपवासव्रतादीनि तस्य स्युर्निष्फलानि हि ॥

स्वकर्माचरणान्नित्यं विदुषां गृहमेधिनाम् ।
अपि पुण्यप्रवृद्ध्यर्थमुपवासादि शस्यते ॥

[2]कर्तव्यानामकरणादकीर्तिर्महती भवेत् ।
इह प्रेत्य च दुष्टात्मा गृही निरयमृच्छति ॥

## विश्वामित्रः

धर्मलक्षणम्

[3]यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥

( १ ) आगमवेदिभिः क्रियमाणमिति संबन्धः । गप. ९

( २ ) शंसन्ति विहितं मन्यन्ते । विगर्हन्ति प्रतिषिद्धं मन्यन्ते । पप्र. ३१

[4]ईदृशस्य हि धर्मस्य स्वरूपं व्याकुलो न तु ।
जानातीत्यस्ति तत्रापि प्रावीण्यं धर्मशालिनाम् ॥

---

(१) आश्वस्मृ. १०।११ ; आपा. २ प्रथमचरणे (सर्वलोकस्य भवति) स्तूयते (श्रूयते).

(२) आश्वस्मृ. १०।१२ ; आपा. २ पू.

(३) आश्वस्मृ. १०।१३ प्रजाः प (प्रजाप); आपा. २ संवननं (संमननं).

(४) आश्वस्मृ. १०।१४-२२.

(१) आश्वस्मृ. १०।१६०-१६१.

(२) आश्वस्मृ. ११।६२९-६३०.

(३) ब्रक. ५ ; स्मृच. १।१३ हि (तु) गर्हन्ति (गर्हन्ते) ; बव्र. १० यमार्याः (यथार्यं) ; कुर. ७ ; पमा. १।८० स्मृचवत् ; प्रपा. २ ; गप. ९ वेदिनः (वेदिभिः) ; मुक्ता. २; पप्र. ३१.

(४) पमा. १।८०.

## कौशिकः

विहितमेव कर्तव्यम्

[1]विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ।
फलं न किंचिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥

## पुलस्त्यः

विहितकाले एव कर्मानुष्ठानम्

[2]अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत् ॥

(१) अकाले †अनागते काले कृते पुनः काले कर्तव्यम् । अतीते तु काले कृते तस्यानुपादेयत्वात्कृतमप्यकृतमेवेत्यर्थः । स्मृच. २।४२७

(२) प्रायश्चित्ताकरणे कृतमप्यकृतमित्याह पुलस्त्यः– अकाल इति । प्रपा. ३९१

(३) अकाले अनागतकाले । कालातीतं प्रायश्चित्तरहितं कुर्याच्चेदकृतमेवेत्यर्थः । आर्क. २०

## बैजवापः

धर्मः संचितः परलोकफलः

[3]धर्मं शनैः संचिनुयाद्वल्मीकमिव वर्तिका ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥

वर्तिका पिप्प( ? पी )लिकाविशेषः । तत्र कारणमुक्तं धर्मसारे– ' एकः प्रजायते जन्तुरेक एव प्रमीयते । एकस्तु भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ॥ ' इति । आपा. १०२

† अनागतशब्दोऽत्र न भविष्यद्वचनः, तत्र काले कर्मणः कृतत्वासंभवात्, अपि तु विधिप्राप्तभिन्नवचनः । तादृशश्च कालो यद्यपि विधिप्राप्तोत्तरोऽपि संभवति, तथापि ' कालं प्राप्य...... ' इति वाक्यशेषात् विधिप्राप्तात्पूर्व एव गृह्यते ।

(१) मुक्ता. २५४.

(२) स्मृच. २।४२७ ' कालेऽतीते तु ' इति पाठो व्याख्यानात् प्रतीयते ; प्रपा. ३९१ चेत्कृ (यत्कृ) ; आर. ५३ यत्कु (तत्कु) ; आर्क. २० चेत्कृ (यत्कृ) क्रिया (क्रियाः) .

(३) आपा. १०२.

## चतुर्विंशतिमतम्

आचारमहिमा

[1]अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥
आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति
नीडं शकुन्ता इव जातपक्षाः ॥

सत्यासत्यविवेकः

असत्यमपि वक्तव्यं गोब्राह्मणहिताय वै ।
सत्यादपि हि तत्सत्यं न सत्यं सत्यमुच्यते ॥

सत्कर्मरूपो धर्मः पापनाशकः स्वर्गमोक्षदश्च

[2]पतिते निष्कृतिर्दृष्टा क्रियाहीने न निष्कृतिः ।
तस्मात्सर्वप्रयत्नेन क्रियायुक्तो भवेन्नरः ॥
क्रियया सिध्यते धर्मः स्वर्गमोक्षादिकं तथा ।
क्रियया मुच्यते पापैर्ब्रह्महत्यादिदुस्तरैः ॥
क्रियाहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
तस्मात्सर्वप्रयत्नेन क्रियाहीनं परित्यजेत् ॥

[3]सत्यं दमस्तपः शौचं संतोषोऽभैक्ष्यमार्जवम् ।
दानं दमो( ? जपो ) दया ध्यानमेष
धर्मः सनातनः ॥
शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः ।
श्रुतवानपि मूर्खस्तु यो धर्मविमुखो नरः ॥
धर्मं चिन्तयमानोऽपि यस्तु प्राणैर्विमुच्यते ।
मृतः स्वर्गमवाप्नोति धर्मस्यैतत्फलं विदुः ॥
धर्मो नास्तीति मन्वानाः शुचीनपि हनन्ति चेत् ।
अश्रद्दधाना धर्मज्ञा( ? घ्ना )स्ते वै
निरयगामिनः ॥

(१) चम. ३८, ३२२, ३९६.

(२) चम. ४०१–४०३.

(३) चम. ४०७–४१०.

[1]पृथिव्यां व्यवहारा यैर( ? ये अ )र्पिता न्यायवर्तिभिः ।
ते सर्वे चामृतं चिन्त्या नरैर्लोकहिते रतैः ॥
यदुच्छिष्टं भवेल्लोके मुनिभिः परिभाषितम् ।
तत्सर्वं चिन्तयेद्धर्मं गौतमो मुनिरब्रवीत् ॥

## वायुपुराणं ब्रह्माण्डपुराणं च

वर्णाश्रमधर्मप्राप्याणि दिव्यस्थानानि,
चित्तशुद्धिः धर्मसाफल्यकारणम्

[2]प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वपलायिनाम् ॥
[3]वैश्यानां मारुतं स्थानं स्वधर्ममुपजीविनाम् ।
गान्धर्वं शूद्रजातीनां प्रतिचारेण तिष्ठताम् ॥
[4]स्थानान्येतानि वर्णानां व्यत्या( ? योग्या )-
चारवतां स्वयम्( ? सताम् ) ॥
[5]सत्यार्जवं तपः क्षान्तिर्योगेज्या दमपूर्विका ।
वेदाः साङ्गाश्च यज्ञाश्च व्रतानि नियमाश्च ये ।
न सिध्यन्ति प्रदुष्टस्य भावदोष उपागते ॥
बहिः कर्माणि सर्वाणि प्रसिध्यन्ति कदाचन ।
अन्तर्भावप्रदुष्टस्य कुर्वतोऽपि पराक्रमान् ॥
सर्वस्वमपि यो दद्यात्कलुषेणान्तरात्मना ।
न तेन धर्मभाक् स स्याद्भाव एवात्र कारणम् ॥
[6]एवं देवाः सपितर ऋषयो मनवस्तथा ।
तेषां स्थानममुष्मिंस्तु संस्थितानां प्रचक्षते ॥

(१) चम. ५२१-५२३.

(२) वायु. १।८।१६६ ; ब्रह्माण्ड. १।७।१६५-१६६ ब्राह्मणानां (द्विजातीनां).

(३) वायु. १।८।१६७ ; ब्रह्माण्ड. १।७।१६६-१६७ स्वधर्ममुप ( स्वस्वकर्मोप ) प्रतिचारेण ( पारिचर्ये च).

(४) वायु. १।८।१६८ ; ब्रह्माण्ड. १।७।१६७ व्यत्या(योग्या) स्वयम् (सताम् ).

(५) वायु. १।८।१८०-१८३.

(६) वायु. १।८।१८४ ; ब्रह्माण्ड. १।७।१७९ (तेषां स्थानान्यमुष्मिंश्च संस्थितानामचष्ट सः ॥ ) उत्त.

[1]अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम् ।
स्मृतं तु तेषां तत्स्थानं तदेव गुरुवासिनाम् ॥
[2]सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै दिवौकसाम् ।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मणः क्षयः ॥
[3]योगिनाममृतं स्थानं नानाधीनां न विद्यते ।
स्थानान्याश्रमिणां तानि ये स्वधर्मे व्यवस्थिताः ॥

यज्ञीयहिंसा निषिद्धा

[4]तस्मान्न हिंसा धर्मस्य द्वारमुक्तं मनीषिभिः ।
ऋषिकोटिसहस्राणि कर्मभिः स्वैर्दिवं ययुः ॥
[5]तस्मान्न दानं यज्ञं वा प्रशंसन्ति महर्षयः ।
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
एवं दत्त्वा विभवतः स्वर्गलोके प्रतिष्ठिताः ॥

धर्मस्य मूलम् , पञ्च यज्ञादिप्रयोजनानि

[6]अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशः क्षमा धृतिः ।
सनातनस्य धर्मस्य मूलमेतद्दुरासदम् ॥
[7]धर्ममन्त्रात्मको यज्ञस्तपश्चानशनात्मकम् ।
यज्ञेन देवानाप्नोति वैराग्यं तपसा पुनः ॥

(१) वायु. १।८।१८५ ; ब्रह्माण्ड. १।७।१८० तृतीयचरणे (स्मृतं तेषां तु यत्स्थानं ).

(२) वायु. १।८।१८६ ; ब्रह्माण्ड. १।७।१८१ दिवौक (वनौक) क्षयः (क्षयम् ).

(३) वायु. १।८।१८६-१८७ ; ब्रह्माण्ड. १।७।१८२ ममृतं (मकृतं) नानाधीनां (तानाजित्वा) मिणां ता (मिणस्ता) चतुर्थचरणे (ब्रह्मस्थानस्थितानि तु).

(४) वायु. १।५७।११४ ; ब्रह्माण्ड. १।३०।३५ न्न हिंसा (दहिंसा) कर्मभिः स्वै (स्वतपोभि).

(५) वायु. १।५७।११५ ; ब्रह्माण्ड. १।३०।३६-३७ उञ्छं मूलं फलं ( उञ्छमूलफलं) एवं द ( एतद् ) स्वर्ग (स्वर्गे).

(६) वायु. १।५७।११६ ; ब्रह्माण्ड. १।३०।३७-३८ दमो (तपो) तपः ( दमः ).

(७) वायु. १।५७।११७ ; ब्रह्माण्ड. १।३०।४३-४४ धर्म (द्रव्य) पश्चान (पस्त्वन) वैराग्यं (वैराजं) ; मभा. ३।१ पू. (=).

[1]ब्राह्मण्यं कर्मसंन्यासाद्वैराग्यात्प्रेक्षते लयम् ।
ज्ञानात्प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ॥

धर्मस्य अधर्मस्य च लक्षणम्

[2]न च देवा न पितरो मुनयो न च मानवाः ।
अयं धर्मो ह्ययं नेति ब्रुवते भिन्नदर्शनाः ॥
[3]धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ ।
कुशलाकुशलं कर्म धर्माधर्माविति स्मृतौ ॥
[4]धारणा धृतिरित्यर्थाद्धातोर्धर्मः प्रकीर्तितः ।
अधारणेऽमहत्त्वे च अधर्म इति चोच्यते ॥
[5]धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विधा द्विजैः ।
दाराग्निहोत्रसंबन्धादृद्विधा श्रौतस्य लक्षणम् ॥
स्मार्तो वर्णाश्रमाचारैर्यमैः सनियमैः स्मृतः ॥
[6]विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त उच्यते ।
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ॥
[7]धर्मार्थकाममोक्षाणां मानुषाः साधकास्तु वै ॥
[8]धर्म एव स्थितिर्येषां तेषां नास्त्यत्र विप्लवः ।
न तं रक्षति किं धर्मः स्वयं येनाभिरक्षितः ॥

तपोदानादि शुद्धचित्तकृतं सफलम्

ऋषय ऊचुः–
[9]किंलक्षणेन धर्मेण तपसेह श्रुतेन वा ।
ब्राह्मण्यं समनुप्राप्तं विश्वामित्रादिभिर्नृपैः ॥

(१) वायु. १।५७।११८ ; ब्रह्माण्ड. १।३०।४४–४५ ब्राह्मण्यं (ब्राह्मं तु) त्प्रेक्षते लयम् (त्प्रकृतेर्जयम्).

(२) वायु. १।५९।२६ ; ब्रह्माण्ड. १।३२।२७ न च देवा ( अथ देवा ) मानवाः ( मानुषाः ) ब्रुवते (विन्दते).

(३) वायु. १।५९।२७ ; ब्रह्माण्ड. १।३२।२८ विति स्मृतौ (विति स्मृतम् ).

(४) वायु. १।५९।२८ ; ब्रह्माण्ड. १।३२।२९ पूर्वार्धे (धारणार्थो धृतिश्चैष धातुः शब्दे प्रकीर्तितः । ) णेऽम (णाम).

(५) ब्रह्माण्ड. १।३२।३३–३४.

(६) वायु. १।५९।३९ ; ब्रह्माण्ड. १।३२।४३–४४.

(७) वायु. २।८।३४२ ; ब्रह्माण्ड. २।७।४७४.

(८) ब्रह्माण्ड. २।५०।५४.

(९) वायु. २।२९।१०० ; ब्रह्माण्ड. २।६६।७६–७७.

[1]येन येनाभिधानेन ब्राह्मण्यं क्षत्रिया गताः ।
विशेषं ज्ञातुमिच्छामस्तपसो दानतस्तथा ॥
[2]एवमुक्तस्ततो वाक्यमब्रवीदिदमर्थवत् ।
अन्यायोपगतैर्द्रव्यैराहूय द्विजसत्तमान् ।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥
[3]धर्म चैतं समाख्याय पापात्मा पुरुषाधमः ।
ददाति दानं विप्रेभ्यो लोकानां दम्भकारणात् ॥
[4]जपं कृत्वा तथा तीव्रं धनलोभान्निरङ्कुशः ।
रागमोहान्वितो ह्यन्ते पावनार्थं ददाति यः ॥
[5]तेन दत्तानि दानानि अफलानि भवन्त्युत ।
तस्य धर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ॥
[6]एवं लब्ध्वा धनं मोहाद्ददतो यजतश्च ह ।
संक्लिष्टकर्मणो दानं न तिष्ठति दुरात्मनः ॥
[7]न्यायागतानां द्रव्याणां तीर्थे संप्रतिपादनम् ।
कामाननभिसंधाय यजते च ददाति च ॥
स दानफलमाप्नोति तच्च दानं सुखोदयम् ।
दानेन भोगानाप्नोति स्वर्गं सत्येन गच्छति ॥
[8]तपसा तु सुतप्तेन लोकान्विष्टभ्य तिष्ठति ।
विष्टभ्य स तु तेजस्वी लोकेष्वानन्त्यमश्नुते ॥

(१) वायु. २।२९।१०१ ; ब्रह्माण्ड. २।६६।७७–७८ मस्त ( मि त ).

(२) वायु. २।२९।१०२ ; ब्रह्माण्ड. २।६६।७८–७९.

(३) वायु. २।२९।१०३.

(४) वायु. २।२९।१०४ ; ब्रह्माण्ड. २।६६।८०.

(५) वायु. २।२९।१०५ ; ब्रह्माण्ड. २।६६।८१ अफ (ह्यफ).

(६) वायु. २।२९।१०६ ; ब्रह्माण्ड. २।६६।८२ ष्टकर्मणो ( ष्टं कर्मणा ).

(७) वायु. २।२९।१०७–१०८ ; ब्रह्माण्ड. २।६६।८३–८४.

(८) वायु. २।२९।१०९ ; ब्रह्माण्ड. २।६६।८५ पूर्वार्धमात्रम्.

[1]दानाच्छ्रेयांस्तथा यज्ञो यज्ञाच्छ्रेयस्तथा तपः ।
संन्यासस्तपसः श्रेयांस्तस्माज्ज्ञानं गुरु स्मृतम् ॥
[2]श्रूयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः ।
विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः ॥
[3]कपेश्च पुरुकुत्सश्च सत्यश्चानूहवानृथुः ।
आर्ष्टिषेणोऽजमीढश्च भागान्योऽन्यस्तथैव च ॥
[4]कक्षीवश्चैव शिजयस्तथाऽन्ये च महारथाः ।
रथीतरश्च रुन्दश्च विष्णुवृद्धादयो नृपाः ॥
[5]क्षात्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः ।
एते राजर्षयः सर्वे सिद्धिं सुमहतीं गताः ॥
[6]वर्णाश्रमाणां धर्मोऽयं देवस्थानेषु कारणम् ॥

## मार्कण्डेयपुराणम्

सर्वथा आत्मरक्षणं कर्तव्यम् , स्वधर्मणा संसिद्धिः

[7]जीवन्भद्राण्यवाप्नोति जीवन्पुण्यं करोति च ।
मृतस्य देहनाशश्च धर्माद्युपरतिस्तथा ।
आत्मानं सर्वतो रक्ष्यमाहुर्धर्मविदो जनाः ॥
[8]स्ववर्णधर्मात्संसिद्धिं नरः प्राप्नोति न च्युतः ।
प्रयाति नरकं प्रेत्य प्रतिषिद्धनिषेवणात् ॥

नित्यनैमित्तिकादिभेदेन कर्तव्यभेदस्त्रिविधः

मदालसोवाच–
[9]नित्यं नैमित्तिकं चैव नित्यनैमित्तिकं तथा ।
गृहस्थस्य त्रिधा कर्म तन्निशामय पुत्रक ॥
पञ्चयज्ञाश्रितं नित्यं यदेतत्कथितं तव ।
नैमित्तिकं तथा चान्यत्पुत्रजन्मक्रियादिकम् ॥
नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैः ॥

सदाचारः इह परत्र च श्रेयस्करः

अलर्क उवाच–
[1]कथितं मे त्वया मातर्नित्यं नैमित्तिकं च यत् ।
नित्यनैमित्तिकं चैव त्रिविधं कर्म पौरुषम् ॥
[2]सदाचारमहं श्रोतुमिच्छामि कुलनन्दिनि ।
यं कुर्वन्सुखमाप्नोति परत्रेह च मानवः ॥

मदालसोवाच–
गृहस्थेन सदा कार्यमाचारपरिपालनम् ।
न ह्याचारविहीनस्य सुखमत्र परत्र वा ॥
[3]यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्तते ॥
[4]दुराचारो हि पुरुषो नेहाऽऽयुर्विन्दते महत् ।
कार्यो यत्नः सदाचारे आचारो हन्त्यलक्षणम् ॥
[5]सदाचाररतो मर्त्यः स्वर्गमोक्षमवाप्नुयात् ॥

धर्मार्थकामाः परस्परानुबन्धिनः सेव्याः

[6]तदुत्पापनिषेधार्थं धर्मः कार्यो विपश्चिता ।
परत्रार्थं तथा चान्यः काम्योऽत्रैव फलप्रदः ॥
प्रत्यवायभयात्कामस्तथाऽन्यश्चाविरोधवान् ।
द्विधा कामो निगदितस्त्रिवर्गोऽस्याविरोधतः ॥
[7]परस्परानुबन्धांश्च सर्वानेतान्विचिन्तयेत् ।
विपरीतानुबन्धांश्च धर्मादींस्ताञ्छृणुष्व मे ॥
एतान् धर्मार्थकामान् । आप्र. ११

---

(१) वायु. २।२९।११० ; ब्रह्माण्ड. २।६६।८५ तृतीयचरणे (सत्यं तु तपसः श्रेयः ) उत्तरार्धमात्रम् .

(२) वायु. २।२९।१११ ; ब्रह्माण्ड. २।६६।८६ श्रूयन्ते (श्रूयते) क्षात्रो (क्षत्रो).

(३) वायु. २।२९।११२ ; ब्रह्माण्ड. २।६६।८७ कपेश्च ( काश्यश्च ) द्वितीयचरणे ( शलो गृत्समदः प्रभुः ) भागान्योऽन्य (भार्गव्योम).

(४) वायु. २।२९।११३ ; ब्रह्माण्ड. २।६६।८८ (कक्षीवांश्चैवोशिनश्च नृपश्च शिशिरस्तथा । रथान्तरः शौनकश्च विष्णुवृद्धादयो नृपाः ॥ ).

(५) वायु. २।२९।११४ ; ब्रह्माण्ड. २।६६।८९ क्षात्रो (क्षत्रो) सुमहतीं (तु महतीं).

(६) वायु. २।४०।९६. (७) मार्क. ३।४१–४२.

(८) मार्क. २५।९. (९) मार्क. २७।१–३.

(१) मार्क. ३१।४ ; पमा. १।१५४ नित्यनैमित्तिकं चैव (नित्यं नैमित्तिकं काम्यं) उत्त., मदालसोक्तिः .

(२) मार्क. ३१।५–६.

(३) मार्क. ३१।७ ; गृक. २९९ प्रथमचरणे ( न यज्ञं न तपांसी वा) न भूतये (विभूतये) ; गृर. ५०४.

(४) मार्क. ३१।८. (५) समु. १२६.

(६) मार्क. ३१।१३–१४.

(७) मार्क. ३१।१५ ; आप्र. १३ बन्धांश्च (बद्धांश्च) दींस्ताञ्छृणुष्व मे ( दींस्तात वर्जयेत् ).

[1]धर्मो धर्मानुबन्धार्थो धर्मो नाऽऽत्मार्थबाधकः ।
उभाभ्यां च द्विधा कामस्तेन तौ च द्विधा पुनः ॥

नित्यकर्मणः नित्यकर्तव्यता

[2]स्वधर्मं यः समुच्छिद्य परधर्मं समाश्रयेत् ।
अनापदि स विद्वद्भिः पतितः परिकीर्तितः ॥
नित्यस्य कर्मणो हानिं न कुर्वीत कदाचन ।
तस्य त्वकरणे बन्धः केवलं मृतजन्मसु ॥
यच्चापि कुर्वतो नाऽऽत्मा जुगुप्सामेति पुत्रक ।
तत्कर्तव्यमशङ्केन यन्न गोप्यं महाजने ॥
[3]उपभोगेन पुण्यानामपुण्यानां च पार्थिव ।
कर्तव्यमिति नित्यानामकामकरणात्तथा ॥
असंचयादपूर्वस्य क्षयात्पूर्वार्जितस्य च ।
कर्मणा मोक्षमाप्नोति न शरीरं पुनः पुनः ॥
कर्मणा बन्धमाप्नोति वैपरीत्येन तस्य तु ॥

वर्णाश्रमाणां स्वधर्मनिष्ठानां भिन्नानि
दिव्यस्थानानि

[4]प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तताम् ।
गान्धर्वं शूद्रजातीनां परिचर्यानुवर्तिनाम् ॥
अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ॥
सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मणः क्षयम् ।
योगिनाममृतं स्थानमिति वै स्थानकल्पना ॥

पितर ऊचुः–

[5]युक्तं प्रक्षालनं कर्तुमात्मनो नियतेन्द्रियैः ।
किंतु लेपाय मार्गोऽयं यत्र त्वं पुत्र वर्तसे ॥
पञ्चर्णदीनैरशुभं नुद्यतेऽनभिसंधितैः ।
फलैस्तथोपभोगैश्च पूर्वकर्म शुभाशुभैः ॥

(१) मार्क. ३१।१६.
(२) मार्क. ३२।६७, ७४, ९७.
(३) मार्क. ३६।६–८.
(४) मार्क. ४६।७६–८०.
(५) मार्क. ९२।१३–२२.

एवं न बन्धो भवति कुर्वतः कारणात्मकः ।
न च बन्धाय तत्कर्म भवत्यनभिसंधितम् ॥
पूर्वकर्म कृतं भोगैः क्षीयतेऽहर्निशं तथा ।
सुखदुःखात्मकैर्वत्स पुण्यापुण्यात्मकैर्नृणाम् ॥
एवं प्रक्षाल्यते प्राज्ञैरात्मा बन्धाच्च रक्ष्यते ।
न त्वेवमविवेकेन पापपङ्केन लिप्यते ॥

कर्ममार्गो विद्याद्वारा मुक्तये

रुचिरुवाच–

अविद्या पठ्यते वेदैः कर्ममार्गः पितामहाः ।
तत्कथं कर्मणो मार्गे भवन्तो योजयन्ति माम् ॥

पितर ऊचुः–

अविद्या सत्यमेवैतत्कर्म नैतन्मृषा वचः ।
किंतु विद्यापरिप्राप्तौ हेतुः कर्म न संशयः ॥
विहिताकरणात्पुंभिरसद्भिः क्रियते तु यः ।
संयमो मुक्तये नासौ प्रत्युताधोगतिप्रदः ॥
प्रक्षालयामीति भवान् वत्साऽऽत्मानं तु मन्यते ।
विहिताकरणोद्भूतैः पापैस्त्वं तु विलिप्यसे ॥
अविद्याऽप्युपकाराय विषवज्जायते नृणाम् ।
अनुष्ठिताऽभ्युपायेन बन्धायान्यायतो हि सा ॥
[1]द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च ।
भार्यायां च ग्रहे दुष्टे भयं पुण्यवतां नृणाम् ॥
आत्मन्यथाल्पपुण्यानां सर्वत्रैवातिपापिनाम् ।
नैकत्रापि ह्यपापानां नराणां जायते भयम् ॥

## मत्स्यपुराणम्

अधर्मस्य अनिष्टो विपाकः

[2]नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
शनैरावर्त्यमानस्तु मूलान्यपि निकृन्तति ॥
यदि नाऽऽत्मनि पुत्रेषु न चेत्पश्यति नप्तृषु ।
पापमाचरितं कर्म त्रिवर्गमतिवर्तते ॥

(१) पद्म. ६९.
(२) मत्स्य. २९।२–३.

[1]पुण्यां योनिं पुण्यकृतो विशन्ति
पापां योनिं पापकृतो व्रजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा-
न मे विवक्षाऽस्ति महानुभाव ॥
चत्वारि कर्माणि भयंकराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥

ज्ञानसाधनं कर्मयोगः अष्टावात्मगुणाश्च

ऋषय ऊचुः–
[2]श्रोतुमिच्छामहे सूत कर्मयोगस्य लक्षणम् ।
यस्मादविदितं लोके न किंचित्तव सुव्रत ॥
सूत उवाच–
[3]कर्मयोगं च वक्ष्यामि यथा विष्णुविभाषितम् ।
ज्ञानयोगसहस्राद्धि कर्मयोगः प्रशस्यते ॥
[4]कर्मयोगोद्भवं ज्ञानं तस्मात्तत्परमं पदम् ।
कर्मज्ञानोद्भवं ब्रह्म न च ज्ञानमकर्मणः ॥
[5]तस्मात्कर्मणि युक्तात्मा तत्त्वमाप्नोति शाश्वतम् ।
वेदोऽखिलो धर्ममूलमाचारश्चैव तद्विदाम् ॥
[6]अष्टावात्मगुणास्तस्मिन्प्रधानत्वेन संस्थिताः ।
दया सर्वेषु भूतेषु क्षान्ती रक्षाऽऽतुरस्य तु ॥
[7]अनसूया तथा लोके शौचमन्तर्बहिर्द्विजाः ।
अनायासेषु कार्येषु माङ्गल्याचारसेवनम् ॥

(१) मत्स्य. ३९।१९, २५. (२) मत्स्य. ५२।४.

(३) मत्स्य. ५२।५ ; मपा. १३ उत्त. ; गप. ८ उत्त.

(४) मत्स्य. ५२।६ ; मपा. १३ तत्प ( त्तु प ) ; गप. ८.

(५) मत्स्य. ५२।७ ; मपा. १३ तत्त्वमा ( तत्त्वं प्रा) ; गप. ८ र्मणि यु (र्मनियु) शेषं मपावत् , पू .

(६) मत्स्य. ५२।८ ; मपा. १३ तु ( च ).

(७) मत्स्य. ५२।९ ; मपा. १३ सेषु ( सस्तु ) माङ्गल्या (मङ्गला).

[1]न च द्रव्येषु कार्पण्यमार्तेषूपार्जितेषु च ।
तथाऽस्पृहा परद्रव्ये परस्त्रीषु च सर्वदा ॥
[2]अष्टावात्मगुणाः प्रोक्ताः पुराणस्य तु कोविदैः ।
अयमेव क्रियायोगो ज्ञानयोगस्य साधकः ॥
[3]कर्मयोगं विना ज्ञानं कस्यचिन्नेह दृश्यते ।
श्रुतिस्मृत्युदितं धर्ममुपतिष्ठेत्प्रयत्नतः ॥

यत्तु 'अयमेव' इति आत्मज्ञानार्थत्वमुक्तम् , तत्र 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।' इति वचनात् उपात्तदुरितक्षयहेतुद्वारैव, न साक्षात् । निप. ७–८

[4]देवानां च मनुष्याणां पितॄणां चैव सर्वदा ।
तृप्तिं करोति विपुलां कर्म कुर्वन् यथोदितम् ॥
[5]द्वाविंशतिस्तथाऽष्टौ च ये संस्काराः प्रकीर्तिताः ।
तद्युक्तोऽपि न मोक्षाय यस्त्वात्मगुणवर्जितः ॥
तस्मादात्मगुणोपेतः श्रुतिकर्म समाचरेत् ॥
इति क्रियायोगपरायणस्य
वेदान्तशास्त्रस्मृतिवत्सलस्य ।
विकर्मभीतस्य सदा न किंचि-
त्प्राप्तव्यमस्तीह परे च लोके ॥

धर्मलक्षणम्

[6]धर्मेति धारणे धातुर्माहात्म्ये चैव पठ्यते ।
धारणाच्च महत्त्वेन धर्म एष निरुच्यते ॥
स इष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
इतरश्चानिष्टफल आचार्यैर्नोपदिश्यते ॥

(१) मत्स्य. ५२।१० ; मपा. १३ मार्तेषूपा (मात्मपाण्य) परद्रव्ये परस्त्रीषु (परस्त्रीषु परार्थेषु).

(२) मत्स्य. ५२।११ ; मोक. १६१ उत्त. ; मपा. १३–१४ णस्य तु (णे चैव) ; निप. ७ उत्त. (=) ; वीक. ३।१६० उत्त.

(३) मत्स्य. ५२।१२ ; मोक. १६१ दृश्यते (विद्यते ) पू. ; मपा. १४ कस्यचि ( कुत्रचि ) पू. ; निप. ७ पू. (=) ; वीक. ३।१६० पू.

(४) मपा. १४ ; गप. ९ (=).

(५) मत्स्य. ५२।१७–१८, २६.

(६) मत्स्य. १३४।१७–१८.

यज्ञीयहिंसाऽपि निषिद्धा, सनातनधर्मस्य मूलम्, पञ्च गतयः

[1]तस्मान्न हिंसा यज्ञे स्याद्यदुक्तमृषिभिः पुरा ।
ऋषिकोटिसहस्राणि स्वैस्तपोभिर्दिवं गताः ॥
तस्मान्न हिंसायज्ञं च प्रशंसन्ति महर्षयः ।
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ॥
एतद्दत्त्वा विभवतः स्वर्गलोके प्रतिष्ठिताः ।
अद्रोहश्चाप्यलोभश्च दमो भूतदया शमः ॥
ब्रह्मचर्यं तपः शौचमनुक्रोशं क्षमा धृतिः ।
सनातनस्य धर्मस्य मूलमेव दुरासदम् ॥
द्रव्यमन्त्रात्मको यज्ञस्तपश्च समतात्मकम् ।
यज्ञैश्च देवानाप्नोति वैराजं तपसा पुनः ॥
ब्रह्मणः कर्मसंन्यासाद्वैराग्यात्प्रकृतेर्लयम् ।
ज्ञानात्प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ॥
[2]तस्माद्विशिष्यते यज्ञात्तपः सर्वैस्तु कारणैः ॥
ब्रह्मणा तपसा सृष्टं जगद्विश्वमिदं पुरा ।
तस्मान्नाऽऽप्नोति तद्यज्ञात्तपोमूलमिदं स्मृतम् ॥
यज्ञप्रवर्तनं ह्येवमासीत्स्वायम्भुवेऽन्तरे ।
तदाप्रभृति यज्ञोऽयं युगैः सार्धं प्रवर्तितः ॥

धर्मलक्षणम् अधर्मलक्षणं च

[3]वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतौ ।
श्रौतस्मार्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ॥
[4]धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः ।
कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत्प्रभुः ॥
अथ देवाश्च पितर ऋषयश्चैव मानुषाः ।
अयं धर्मो ह्ययं नेति ब्रुवते मौनमूर्तिना ॥
धर्मेति धारणे धातुर्महत्त्वे चैव उच्यते ।
आधारणे महत्त्वे वा धर्मः स तु निरुच्यते ॥
तत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
अधर्मश्चानिष्टफल आचार्यैर्नोपदिश्यते ॥

(१) मत्स्य. १४३।२९–३४.
(२) मत्स्य. १४३।४०–४२.
(३) मत्स्य. १४५।२२.
(४) मत्स्य. १४५।२५–२८.

[1]धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विजातिभिः ।
दाराग्निहोत्रसंबन्धमिज्या श्रौतस्य लक्षणम् ।
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ॥
विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त उच्यते ।
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ॥
श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ।
शिष्टाचारप्रवृद्धश्च धर्मोऽयं साधुसंमतः ॥
[2]धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ।
धर्मपथ्योदनो जन्तुर्मृतोऽपि सुखमश्नुते ॥
[3]श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं चास्य न वा कृतम् ॥

धर्मः धर्मार्थकामत्रिवर्गसाधनम्

[4]धर्मार्जनं तथा कार्यं पुरुषेण विजानता ।
तल्लाभः सर्वलाभेभ्यो यदा( ? था ) देव विशिष्यते ॥
धर्मश्चार्थश्च कामश्च त्रिवर्गो जन्मनः फलम् ।
धर्महीनस्य कामार्थौ वन्ध्यासुतसमौ प्रभो ॥
धर्मादर्थस्तथा कामो धर्माल्लोकद्वयं तथा ।
धर्म एकोऽनुयात्येनं यत्रक्वचनगामिनम् ॥
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ।
एको हि जायते जन्तुरेक एव विपद्यते ॥
धर्मस्तमनु यात्येको न सुहृन्न च बान्धवाः ।
क्रिया सौभाग्यलावण्यं सर्वं धर्मेण लभ्यते ॥
ब्रह्मेन्द्रोपेन्द्रशर्वेन्दुयमार्काग्न्यनिलाम्भसाम् ।
वस्वश्विधनदाद्यानां ये लोकाः सर्वकामदाः ।
धर्मेण तानवाप्नोति पुरुषः पुरुषान्तक ॥
मनोहराणि द्वीपानि वर्षाणि सुसुखानि च ।
प्रयान्ति धर्मेण नरास्तथैव नरगण्डकाः ॥

(१) मत्स्य. १४५।३०–३१, ४०, ५२.
(२) मत्स्य. २०१।६–७.
(३) मत्स्य. २०१।७–८ ; आत. ३५१ कुर्वीत ( कर्तव्यम् ) चाप ( वाऽप ) तं चास्य ( तमस्य ) लिङ्गपुराणम् .
(४) मत्स्य. २१२।२–२७.

नन्दनादीनि मुख्यानि देवोद्यानानि यानि च ।
तानि पुण्येन लभ्यन्ते नाकपृष्ठं तथा नरैः ॥
विमानानि विचित्राणि तथैवाप्सरसः शुभाः ।
तैजसानि शरीराणि सदा पुण्यवतां फलम् ॥
राज्यं नृपतिपूजा च कार्यसिद्धिस्तथेप्सिता ।
संस्काराणि च मुख्यानि फलं पुण्यस्य दृश्यते ॥
रुक्मवैदूर्यदण्डानि चन्द्रांशुसदृशानि च ।
चामराणि सुराध्यक्ष भवन्ति शुभकर्मणाम् ॥
पूर्णेन्दुमण्डलाभेन रत्नांशुकविकाशिना ।
धार्यतां याति च्छत्रेण नरः पुण्येन कर्मणा ॥
जयशङ्खस्वरौघेण सूतमागधनिःस्वनैः ।
वरासनं सभृङ्गारं फलं पुण्यस्य कर्मणः ॥
वरान्नपानं गीतं च नृत्यमाल्यानुलेपनम् ।
रत्नवस्त्राणि मुख्यानि फलं पुण्यस्य कर्मणः ॥
रूपौदार्यगुणोपेताः स्त्रियश्चातिमनोहराः ।
वासाः प्रासादपृष्ठेषु भवन्ति शुभकर्मिणाम् ॥
सुवर्णकिङ्किणीमिश्रचामरापीडधारिणः ।
वहन्ति तुरगा देव नरं पुण्येन कर्मणा ॥
हैमकक्षैश्च मातङ्गैश्चलत्पर्वतसंनिभैः ।
खेलद्भिः पादविन्यासैर्यान्ति पुण्येन कर्मणा ॥
सर्वकामप्रदे देव सर्वाघदुरितापहे ।
वहन्ति भक्तिं पुरुषाः सदा पुण्येन कर्मणा ॥
तस्य द्वाराणि यजनं तपो दानं दमः क्षमा ।
ब्रह्मचर्यं तथा सत्यं तीर्थानुसरणं शुभम् ॥
स्वाध्यायसेवा साधूनां सहवासः सुरार्चनम् ।
गुरूणां चैव शुश्रूषा ब्राह्मणानां च पूजनम् ।
इन्द्रियाणां जयश्चैव ब्रह्मचर्यममत्सरम् ॥
तस्माद्धर्मः सदा कार्यो नित्यमेव विजानता ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥
बाल एव चरेद्धर्ममनित्यं देव जीवितम् ।
को हि जानाति कस्याद्य मृत्युरेवाऽऽपतिष्यति ॥
पश्यतोऽप्यस्य लोकस्य मरणं पुरतः स्थितम् ।
अमरस्येव चरितमत्याश्चर्यं सुरोत्तम ॥
युवत्वापेक्षया बालो वृद्धत्वापेक्षया युवा ।
मृत्योरुत्सङ्गमारूढः स्थविरः किमपेक्षते ॥
तत्रापि विन्दतस्त्राणं मृत्युना तस्य का गतिः ।
न भयं मरणादेव प्राणिनामभयं क्वचित् ।
तत्रापि निर्भयाः सन्तः सदा सुकृतकारिणः ॥
[1]अनित्यं जीवितं यस्माद्वसु चातीव चञ्चलम् ।
केशेष्विव गृहीतस्तु मृत्युना धर्ममाचरेत् ॥

## विष्णुपुराणम्

यज्ञः कल्याणहेतुः

[2]यज्ञैराप्यायिता देवा वृष्ट्युत्सर्गेण वै प्रजाः ।
आप्याययन्ते धर्मज्ञ यज्ञाः कल्याणहेतवः ॥

यज्ञनिष्पादनस्योपयोगमाह– यज्ञैरिति । तर्पिता देवास्ता यज्ञकर्त्रीः प्रजास्तर्पयन्ति, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' ( मनु. ३।७६ ) इति स्मृतेः । अतो यज्ञाः कल्याणहेतवः । वैच.

स्वधर्मः वर्णाश्रमाणां दिव्यविशेषस्थानहेतुः

निष्पाद्यन्ते नरैस्तैस्तु स्वधर्माभिरतैस्तदा ।
विरुद्धाचरणापेतैः सद्भिः सन्मार्गगामिभिः ॥

यज्ञेषु श्रेष्ठाधिकारिणो दर्शयति– निष्पाद्यन्त इति । स्वधर्मेषु श्रौतेषु स्मार्तेषु चाभिरतैः विरुद्धाचरणात् अपेतैः निर्गतैः । 'विशुद्धाचरणोपेतैः' इति पाठस्तु सुगमः । सद्भिः विद्वद्भिः सन्मार्गगामिभिः, सन्मार्गः सदाचारः मोक्षप्राप्त्युपायो वा, तद्गामिभिः । वैच.

स्वर्गापवर्गौ मानुष्यात्प्राप्नुवन्ति नरा मुने ।
यच्चाभिरुचितं स्थानं तद्यान्ति मनुजा द्विज ॥

अतो धर्माधिकारित्वान्मानुष्यं स्तौति– स्वर्गापवर्गाविति । मानुष्यात् मानुष्यं प्राप्य अभिरुचितं स्थानम् उपासनानुष्ठानसमये कामनाविषयसत्यलोकाद्यपि मनुष्या एवादृष्टद्वारा भोगार्थं लोकान्संपाद्य तेषु यान्तीति मनुष्यस्तुतिः । वैच.

---

(१) चत्र. १६.
(२) विष्णु. १।६।८–११.

**प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्वर्ण्यव्यवस्थितौ।**
**सम्यक्श्रद्धासमाचारप्रवणा मुनिसत्तम॥**

तर्हि किं मानुष्यं प्राप्यैव यान्ति ? नेत्याह— प्रजा इति। ताः सृष्टाः प्रजाः यदि चातुर्वर्ण्यव्यवस्थितये सम्यक्श्रद्धया यः समाचारः तस्मिन् प्रवणा भवन्ति तदा यान्तीति पूर्वेणान्वयः। 　　वैच.

**'संसिद्धायां तु वार्तायां प्रजाः सृष्ट्वा प्रजापतिः।**
**मर्यादां स्थापयामास यथास्थानं यथागुणम्॥**

**वर्णानामाश्रमाणां च धर्मान् धर्मभृतां वरः।**
**लोकांश्च सर्ववर्णानां सम्यग्धर्मानुपालिनाम्॥**

तदेवं प्रजाः सृष्ट्वा तासां कृष्यादिना वार्तायां संसिद्धायां यथागुणं सत्त्वोद्रेकाद्यनुसारेण ब्राह्मणादीनां वर्णानां गृहस्थाद्याश्रमाणां च मर्यादां धर्मव्यवस्थां यथास्थानम् 'अस्मिन् देशेऽयं च धर्मः' इति स्थानानतिक्रमेण तत्तत्स्वधर्मावस्थानुसारेण वा धर्मान् लोकव्यवस्थां च कृतवानिति द्वयोरन्वयः। 　　वैच.

**प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्।**
**स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वनिवर्तिनाम्॥**

लोकानाह— प्राजापत्यमिति। क्रियावतां नित्यनैमित्तिकाग्निहोत्राद्यनुष्ठानवतां प्राजापत्यं पितृलोकः, 'कर्मणा पितृलोकः' इति श्रुतेः। 　　वैच.

**वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम्।**
**गान्धर्वं शूद्रजातीनां परिचर्यासु वर्तताम्॥**

मारुतं स्थानं देवलोकः। 　　वैच.

**अष्टाशीतिसहस्राणां यतीनामूर्ध्वरेतसाम्।**
**स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम्॥**

यतीनामूर्ध्वरेतसां वालखिल्यानां स्थानं यत् तद्गुरुवासिनां नैष्ठिकब्रह्मचारिणाम्। 　　वैच.

**सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम्।**
**प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम्॥**

(१) विष्णु. १।६।३२–४१.

वनौकसां वानप्रस्थानां संन्यासिनां ब्राह्मणादीनां च विशेषं वक्तुं पूर्वोक्तमेव गृहस्थस्थानमनुवदति— प्राजापत्यमिति। ब्रह्मसंज्ञितं सत्यलोकस्थानम्, 'संन्यासाद् ब्रह्मणः स्थानम्' इति वचनात्। 　　वैच.

**योगिनाममृतं स्थानं तद्विष्णोः परमं पदम्।**
**एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये।**
**तेषां तु परमं स्थानं यत्तत्पश्यन्ति सूरयः॥**

योगिनां ज्ञानिनाम्। तदेव स्पष्टयति— एकान्तिन इति। यद्वा योगिनां प्रतीकोपासकानाम्। अमृतं विष्णुपदं यतो गङ्गा आयाति। आश्रमिष्वेव एकान्तिनः अद्वैतध्यायिनः परब्रह्मनिदिध्यासनशीलाः तेषां परमं पदं ब्रह्मैव यत् सूरयः जीवन्मुक्ताः पश्यन्ति। शेषं समानम्। 　　वैच.

**गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः।**
**अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः॥**

भगवदुपासकानामपि तदेव स्थानं क्रममुक्त्या भवतीत्याशयेनाऽऽह— गत्वा गत्वेति। द्वादशाक्षरो वासुदेवमन्त्रः। 　　वैच.

स्वधर्मत्यागिनामधोगतिः

**तामिस्रमन्धतामिस्रं महारौरवरौरवौ।**
**असिपत्रवनं घोरं कालसूत्रमवीचिमत्॥**

**विनिन्दकानां वेदस्य यज्ञव्याघातकारिणाम्।**
**स्थानमेतत्समाख्यातं स्वधर्मत्यागिनश्च ये॥**

सुकृतिनां स्थानमुक्त्वा दुष्कृतिनामाह— तामिस्रमिति। अवीचिमत्, स्वार्थे तद्धितः लिङ्गव्यत्ययश्च। 'अवीचि यत्' इति पाठे यत्तामिस्रादि तत्तेषां स्थानमिति। 　　वैच.

यज्ञजन्यं जगत्

**'हविषां परिणामोऽयं यदेतदखिलं जगत्।**
**धर्मे च संक्षयं याते क्षीयते चाखिलं जगत्॥**

हविषां परिणामः वृष्ट्यादिद्वारा कार्यम्। 　　वैच.

(१) विष्णु. १।१३।२५.

[1]तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥

'शोभने यत्नः कर्तव्यः' इति यदुक्तं तदेव शोभनं कर्मादिकमाह— तत्कर्मेति । अपरम् अर्थकामाद्यर्थं कर्म आयासाय श्रमार्थमेव । अन्या विद्या अर्थकामादिशास्त्रं शिल्पनैपुणम् ऐन्द्रजालिकादिशिल्पिविद्यावत् कौशलमात्रमेव, तुच्छफलत्वात् । वैच.

तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियम् ।
यतितव्यं समत्वे च निर्वाणमपि चेच्छता ॥

पूर्वोक्तद्वयमुपसंहरति— तस्मादिति । य इच्छेदिति संभावनामात्रम् । वैच.

[2]वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः ।
कर्मणा मनसा वाचा निरयेषु पतन्ति ते ॥

[3]सुखदुःखोपभोगौ तु तौ देशाद्युपपादकौ ।
धर्माधर्मोद्भवौ भोक्तुं जन्तुर्देशादिमृच्छति ॥

देशकालादिः उपपादकः ययोस्तौ । तयोर्हेत्वन्तरमाह— धर्माधर्मे( ? र्मावि )ति । भोक्तुं ‡कर्तुम् ऋच्छति गच्छति । वैच.

सर्वस्यैव हि भूपाल जन्तोः सर्वत्र कारणम् ।
धर्माधर्मौ यतस्तस्मात्कारणं पृच्छ्यते कुतः ॥

हि यस्मात् सर्वजन्तोः सर्वत्र भोगतत्साधनादौ धर्माधर्मावेव कारणम् । तस्मात् विशिष्य समागमकारणं कुतः कस्मात् पृच्छ्यते इत्यर्थः । वैच.

‡ 'सुखदुःखोपभोगौ' इति द्वितीयान्तं 'भोक्तुम्' इत्यस्य कर्मपदमित्येकवाक्यतामभिमत्य लाक्षणिकार्थकथनमिदम् । वस्तुतस्तु 'सुखदुःखोपभोगौ' इति प्रथमान्तमुद्देश्यपदम्, अग्रिमे द्वे प्रथमान्ते विधेयपदे इत्येकं वाक्यम्, भोक्तुमित्यादि भिन्नं वाक्यमित्येव युक्तम्, लक्षणादोषाभावात् ।

(१) विष्णु. १।१९।४१, ४६.
(२) विष्णु. २।६।३०.
(३) विष्णु. २।१३।७७-७८.

[1]कर्म यज्ञात्मकं श्रेयः स्वर्लोकफलदायि यत् ।
श्रेयः प्रधानं च फले तदेवानभिसंहिते ॥

फले अनभिसंहिते असंकल्पिते यत्कर्म क्रियते तत्संकल्पितराज्यादिफलेभ्यः प्रधानं मुख्यं श्रेयः । वैच.

[2]ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव ।
परमार्थभूतं तत्रापि श्रूयतां गदतो मम ॥

यज्ञादिफलस्याप्यपरमार्थत्वं दृष्टान्तेन साधयन्नाह— ऋगिति चतुर्भिः । यज्ञकर्मेत्यत्र यज्ञफलं विवक्षितम् । वैच.

यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ।
तत्कारणानुगमनाज्जायते नृप मृण्मयम् ॥
एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः ।
निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥

क्रिया या निष्पाद्यते क्रियाद्वारा अदृष्टस्वर्गादिफलं यन्निष्पाद्यते तद्विनाशि भवेदित्यर्थः । वैच.

अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥

ननु भवतु नाम विनाशित्वं ततः किमत आह— अनाशीति । वैच.

तदेवाफलदं कर्म परमार्थो यतो मतः ।
मुक्तिसाधनभूतत्वात्परमार्थो न साधनम् ॥

तत् असंकल्पितफलं कर्म अफलदमित्येतन्नास्ति, मुक्तिसाधनत्वात् । ततश्चान्यार्थत्वान्न परमार्थ इत्यर्थः । वैच.

स्वधर्मेण विष्णोराराधनं श्रेयस्करम्

[3]वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम् ॥

वर्णाश्रमाचारवतेत्यधिकारिविशेषणाद्वेदोक्ततदविरुद्धपुराणागमाद्युक्ताचारवानेव तत्राधिकारी, न विगीता-

(१) विष्णु. २।१४।१४.
(२) विष्णु. २।१४।२१-२५.
(३) विष्णु. ३।८।९; आपा. १६६ कारणम् (कारकः); निप्र. १।१२ आपावत्.

चारः । अन्यः श्रुत्युक्तधर्मपरित्यागेन तद्व्रतधारण-श्रवणकीर्तनादिरूपः पन्थाः न भवति । वैच.

[१]तस्मात्सदाचारवता पुरुषेण जनार्दनः ।
आराध्यते स्ववर्णोक्तधर्मानुष्ठानकारिणा ॥

तस्मात्तदाज्ञया वर्णाश्रमधर्मान् यागादीन् सदाचारं च कुर्वता विष्णुः आराध्यते तोष्यते । सदाचारः अविगीतशिष्टाचारः । वैच.

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च धरणीपते ।
स्वधर्मतत्परो विष्णुमाराधयति नान्यथा ॥

उक्तमर्थमेवाधिकारिदर्शनपूर्वकं व्यतिरेकमुखेन द्रढयति– ब्राह्मण इति । वैच.

वर्णाश्रमेषु ये धर्माः शास्त्रोक्ता नृपसत्तम ।
तेषु तिष्ठन्नरो विष्णुमाराधयति नान्यथा ॥

इदानीं हरितोषकान् साधारणधर्मानाह– वर्णेति । तिष्ठन्निति हेतौ शतृप्रत्ययः । तेषु स्थितिः तदनुष्ठानम् आराधनहेतुरित्यर्थः । वैच.

[२]सदाचारवता पुंसा जितौ लोकावुभावपि ॥
[३]परित्यजेदर्थकामौ धर्मपीडाकरौ नृप ।
धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च ॥

धर्ममपीति । व्याघ्रचोरादिसमाक्रान्ततीर्थगमनादि असुखोदर्कम् असुखोत्तरफलम् । लोकविद्विष्टं सौत्रामण्यादौ सुराग्रहादि । वैच.

[४]प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
ताभ्यामुभाभ्यां पुरुषैः सर्वमूर्तिः स इज्यते ॥
ऋग्यजुःसामभिर्मार्गे प्रवृत्ते इज्यते ह्यसौ ।
यज्ञेश्वरो यज्ञपुमान्पुरुषैः पुरुषोत्तमः ॥
ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्तिः स इज्यते ।
निवृत्ते योगिभिर्मार्गे विष्णुर्मुक्तिफलप्रदः ॥

तस्मात् स एव परमपुरुषार्थः, तत्प्राप्त्यर्थमेव प्रवृत्तिनिवृत्तिकर्मरूपसाधनानुष्ठानमित्याह– प्रवृत्तमिति त्रिभिः । तदेव विशिष्याऽऽह– ऋगिति द्वाभ्याम् । वैच.

[१]तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः ।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥
निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेकान्ताऽऽत्यन्तिकी मता ॥

यतस्त्रिविधस्य दुःखसमूहस्य जन्मादिस्थानेषु प्रकर्षेण भविष्यतो भगवत्प्राप्तिरेव भेषजं मता शास्त्रेषु संमता । आह्लादः प्रमोदः, तद्युक्तं( ? क्तः ) सुखभावः सुखत्वं सुखसामान्यमेव एकं लक्षणं स्वरूपं यस्याः सा । किंभूता प्राप्तिः? आत्यन्तिकी, पुनर्वियोगाभावात् । एकान्ता किंचित्साधनवैगुण्येऽपि यागादिफलवन्न साधनव्यभिचारिणीत्यर्थः । किंच, ' एकैव ' इति पाठे भोक्तृभोग्यभावहीना ब्रह्मात्मैक्यलक्षणेति । वैच.

[२]तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥

कथं सा भवति ? इत्यत आह– तस्मादिति । यत्नस्य साधनभातिष्ठत्वेन( ? नाधिष्ठितत्वेन ) साधनं तावदाह– तत्प्राप्तीति । कर्मणः साधनत्वमपि साक्षादिति प्राचीनाः, अपरे तु सत्त्वशुद्धिद्वारा परंपरयेति वदन्ति । वैच.

[३]अपहाय निजं कर्म कृष्ण कृष्णेति वादिनः ।
ते हरेर्द्वेषिणः पापा धर्मार्थं जन्म यद्धरेः ॥

## विष्णुधर्मोत्तरपुराणम्

वर्णाश्रमाणां स्वधर्मनिष्ठानां भिन्नानि दिव्यस्थानानि

[४]वर्णानामाश्रमाणां च धर्मं चक्रे पृथक् पृथक् ।
स्वधर्मे च निविष्टानां स्थानानि व्यदधात्प्रभुः ।
ब्रह्मलोकं ब्राह्मणानां शाक्रं क्षत्रियजन्मनाम् ॥

(१) विष्णु. ३।८।११–१२, १९.
(२) विष्णु. ३।१२।१२ ; मुक्ता. ५.
(३) विष्णु. ३।११।७.
(४) विष्णु. ६।४।४०–४२.

(१) विष्णु. ६।५।५८–५९.
(२) विष्णु. ६।५।६० ; अप. ११८ तुज्ञानं (तुर्ज्ञानं).
(३) शूक. ६५.
(४) विध. १।१०७।५७–६१.

मारुतं च विशां स्थानं गान्धर्वं शूद्रजन्मनाम् ।
ब्रह्मचारिव्रतस्थानां ब्रह्मलोकं प्रजापतिः ॥
प्राजापत्यं गृहस्थानां यथाविहितकारिणाम् ।
स्थानं सप्तऋषीणां च तथैव वनवासिनाम् ॥
यतीनामक्ष(?मृ)तं स्थानं यत्रेच्छागामिनां सदा ॥

राज्ञा वेनेनोक्तो लोकायतिकवादः ऋषिभिः कृतस्तस्य प्रतिवादश्च

[1]अङ्गस्य वेनः पुत्रस्तु नास्तिको धर्मवर्जितः ।
असच्छास्त्ररतो नित्यं लोकायतिकसत्तमः ।
चकार लोके मर्यादां धर्मबाह्यो नराधिपः ॥
न यष्टव्यं न होतव्यं न देयं धर्मकारणम् ।
ऋषयस्तं समागम्य कदाचिद्वाक्यमब्रुवन् ॥

ऋषय ऊचुः–

पूर्वप्रवृत्तां मर्यादां पूर्वैः पूर्वतरैः कृताम् ।
लोकायतिकवाक्येन न त्वं हन्तुमिहार्हसि ॥
कर्मणा सुकृतेनेह सुखं जन्तुः समश्नुते ।
दुःखं जन्तुश्च प्राप्नोति दुष्कृतेन च कर्मणा ॥
ये यजन्ते सदा देवान्गुरुशुश्रूषकाश्च ये ।
विप्रपूजारता ये च तीर्थयात्रारताश्च ये ॥
तपस्विनः सत्यरता ये च दाने सदा रताः ।
समश्नुवन्ति भूपाल परलोके सुखानि ते ॥
स त्वं सुखपरिभ्रष्टान्नृलोकान्गन्तुमर्हसि ।

वेन उवाच–

भवतां किं प्रलापेन वृथैव द्विजपुङ्गवाः ॥
ये मृतास्ते मृताः सर्वे मृतानां संभवः कुतः ।
प्राणस्य वायुभूतस्य निष्क्रान्तस्य शरीरतः ॥
भूयः शरीरग्रहणं युक्त्या नैवोपपद्यते ।
तपांसि हायनाश्चित्राः संयमो भोगवञ्चना ॥
अग्निहोत्रादिकं कर्म बालक्रीडेव लक्ष्यते ।
ग्राम्याणां मूढचित्तानां स्त्रग्विणां चैव योषिताम् ॥
अन्येषां चैव धनिनां धूर्तैरादित्सुभिर्धनम् ।
शास्त्राण्यनेकरूपाणि ग्रथितानि सहस्रशः ॥
देहि नित्यं यजस्वैवं देवास्तेऽनुग्रहीकृताः ।
धनमाप्स्यसि शत्रूंश्च विजेष्यसि सुखं च ते ॥
मुग्धा एवं प्रतार्यन्ते धूर्तैर्धनजिहीर्षया ।
यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरम् ॥
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ।
नास्ति दत्तं हुतं चेष्टं न देवा ऋषयो न च ॥
मयाऽऽप्तं भुवि राज्यं च भोगाश्चान्ये पृथग्विधाः ।
कथं प्राप्तं हि त्यक्ष्यामि भवतां वचनेन वै ॥

मार्कण्डेय उवाच–

एतच्छ्रुत्वा वचस्तस्य वेनस्य नृपसत्तम ।
ऋषयस्तमथोचुस्ते राजानं दुष्टचेतसम् ॥

ऋषय ऊचुः–

नैतदौपयिकं वाक्यं ध्रुववंशोद्भवस्य ते ।
प्रत्यक्षं कर्मणां लोके फलं पार्थिव दृश्यते ॥
काङ्क्षमाणाञ्जनान्पश्य भोजनाच्छादनं परम् ।
सहस्रभरकानन्यान्पश्य भूपाल मानवान् ॥
शिबिकाभ्यस्तथैवान्यान्गच्छमानान्यथासुखम् ।
क्षुधया च परीतांश्च शाकोच्छिष्टभुजस्तथा ॥
काष्ठभारसमाक्रान्तान्परिभूतान्परैस्तथा ।
जुगुप्सितांस्तथा दीनान्बहुशल्याश्नरांस्तथा ॥
पङ्गूनन्यान्कुब्जकांश्च कुष्ठज्वरविपीडितान् ।
रोगैर्बहुभिराक्रान्तान्परिभूतान्परैस्तथा ॥
तार्किकान्कृपणान्दीनान्व्याधिग्रस्तान्सुखच्युतान् ।
इष्टबन्धुवियोगार्तान्पश्य पापेन मानवान् ॥
आरोग्यरूपसत्त्वौजोधनधान्यसमन्वितान् ।
धर्मेण च जनान्पश्य बन्धुभृत्यसमन्वितान् ॥
राजमार्गमिमं लोकास्तत्र कर्मानुवर्तते ।

मार्कण्डेय उवाच–

ततस्तेषां वचः श्रुत्वा ऋषीणामुग्रचेतसाम् ।
हस्तेन हस्तं संघट्य प्रहसंस्तानुवाच ह ॥

वेन उवाच–

शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ॥

---

(१) विध. १।१०८।५–५२.

नाऽऽप्नुवन्ति जना विप्राः प्राप्नुवन्ति स्वभावतः ।
स्वभावश्च विचित्रोऽयं संसारोद्वेजकः सदा ॥
नात्र पूर्वकृतं कर्म धूर्तवादो यथा द्विजाः ।
अश्मानः कर्मणा केन सूक्ष्माश्चान्ये महत्तराः ॥
विन्यस्ताः कर्मणा केन सुरार्चापापभूमिषु ।
पाषाणार्चादिदत्तेन कथं तुष्यन्ति देवताः ॥
के देशा न मया दृष्टा नापि पूर्वं पितामहैः ।
नान्यैर्जन्यैस्तथा तांश्च धूर्तवाक्यात्प्रतीमहे ॥
अन्यभुक्तेन चान्यस्य तृप्तिश्चैव कथं भवेत् ।
अन्यभुक्तेन चान्यस्य यदि तृप्तिर्भविष्यति ॥
दद्यात्प्रवसि(? स)ते श्राद्धं न स पथ्यौदनं महत् ।
मृतस्य पक्षे दग्धस्य भस्मीभूतस्य वा पुनः ॥
सर्वभावविनष्टस्य किं नु श्राद्धैः प्रयोजनम् ।
कृपणैर्यज देहीति धनलुब्धैः प्रकीर्तितम् ॥
धनिनां धननाशाय सततं स्वार्थतत्परैः ।
धर्मे निविष्टाः पुरुषा दृश्यन्ते दुःखजीविनः ॥
सुखान्विता हि दृश्यन्ते पापकर्मरतास्तथा ।
तस्माद्धर्मेण किं कार्यं सुखं जीवेत्तु पण्डितः ।
पुरुषार्थः परः कामो धनेन च तदाप्यते ॥
ऋषय ऊचुः–
प्रत्यक्षमेव पश्यन्तः पूर्वजन्मनि मानवाः ॥
परलोकं न पश्यन्ति पश्य दैवेन वञ्चिताः ।
जातमात्रो यथा जन्तुः स्तनं गृह्णाति पार्थिव ॥
पूर्वजन्मान्तराभ्यासं विना तत्कस्य चेष्टितम् ।
प्राणेन वायुभूतेन जन्मन्यस्मिन्यथा नरः ॥
करोति देहग्रहणं जन्मान्तरगतस्तथा ।
महीविकारमश्मानः कर्मजीवविवर्जितान् ॥
सूक्ष्मत्वं च महत्त्वं च तेषामीश्वरकारितम् ।
मन्त्रेण नीयते श्राद्धं परलोकगते जने ॥
दृष्टः प्रवासिनो नैव तथा मन्त्रस्य ( ? मन्त्रः स ) पार्थिव ।
प्राकाम्ययुक्ता देवाश्च युक्ता लघिमना तथा ॥
ज्ञानयुक्ताश्च गृह्णन्ति सर्वत्र विनिवेदितम् ।
धर्ममासेवतां नृणां विपत्तिर्या नराधिप ॥
पूर्वजन्मकृतेनेह सुकृ(? दुष्कृ)तेन च कर्मणा ।
सुतप्तेनेह तपसा ब्राह्मणैर्वसुधाधिप ॥
शापानि दीयमानानि प्रत्यक्षं किं न पश्यसि ।
अमोघाशास्तथा विप्राः सुतप्ततपसो नृप ॥
किं न पश्यसि लोकेऽस्मिन्प्रत्यक्षं धर्मदर्शनम् ।
बीजानि बीजकालेषु यैरुप्तानि पार्थिव ॥
त एव लोके दृश्यन्ते प्रत्यक्षं फलभागिनः ।
दृष्ट्वा मन्त्रप्रभावेण विप्रकर्षणतत्परान् ॥
विषापहारं कुर्वाणान्धर्मोऽप्यस्तीति चिन्तय ।
येषामपि वचः क्षुद्रं परलोकं न विद्यते ॥
तेऽप्युद्विजन्ते पापानां तस्मात्पापं विवर्जय ॥

मृत्युभयं विचार्य धर्मकर्तव्यता

[1]धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ।
धर्ममार्गरतो जन्तुर्मृतोऽपि सुखमश्नुते ॥
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ॥
क्षेत्रापत्यगृहासक्तमन्यत्र गतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥

संसारकारणं कर्म कर्मक्षययुक्तिश्च

पुलस्त्य उवाच–
[2]अविद्याप्रभवं कर्म हेतुभूतं द्विजोत्तम ।
संसारस्यास्य तन्मुक्तिः संक्षेपाच्छ्रूयतां मम ॥
स्वजातिविहितं कर्म रागद्वेषविवर्जितम् ।
कुर्वतः क्षीयते पूर्वमन्यबन्धश्च नेष्यते ॥
अपूर्वसंभवाभावात्क्षयं याते तु कर्मणि ।
दारभ्य संसारविच्छेदः कारणाभावसंभवः ॥
भवत्यसंशयं चान्यच्छ्रूयतामत्र कारणम् ।
संसारविच्युतेर्दाल्भ्य समासाद्वदतो मम ॥
गृहीता कर्मणा येन पुंसा जातिर्द्विजोत्तम ।
तत्प्रायश्चित्तभूतं वै शृणु कर्म क्षयावहम् ॥
ब्राह्मणक्षत्रियविशां शूद्रान्त्यानां च सत्तम ।
स्वजातिविहितं कर्म रागद्वेषविवर्जितम् ॥

(१) विध. १।११७।७–९.
(२) विध. १।१४६।३–९.

जातिप्रदस्य क्षयदं तदेवाऽऽद्यस्य कर्मणः ।
ज्ञानकारणभावं च तदेव प्रतिपद्यते ॥

शुभकर्मावसरः मनुष्यत्वे

[1]इह यत्क्रियते कर्म प्रेत्य तत्रोपभुज्यते ।
येनोक्तं फलकाले तु स एवाश्नाति भामिनि ॥
मानुष्यं दुर्लभं प्राप्य विद्युत्संपातचञ्चलम् ।
नाऽऽचरन्ति शुभं ये तु तेषां जन्म निरर्थकम् ॥

अर्थकामफलो धर्मः अनुष्ठेय एव

[2]धर्मो धारयते लोकान् यतो धर्मस्ततो जयः ॥
[3]धर्मार्जनं सदा कार्यं पुरुषेण विजानता ।
तल्लाभः सर्वलाभेभ्यो यतो देव विशिष्यते ॥
धर्मश्चार्थश्च कामश्च त्रिवर्गो जीवतः फलम् ।
धर्महीनस्य कामार्थौ वन्ध्यासुतसमावुभौ ।
धर्मादर्थस्तथा कामो धर्माल्लोकद्वयं तथा ॥
धर्म एकोऽनुयात्येनं यत्र कुत्र च गामिनम् ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥
एको हि जायते जन्तुरेक एव विपद्यते ।
धर्मस्तमनुयात्येको न सुहृन्न च बान्धवाः ॥
रूपसौभाग्यलावण्यं संपद्धर्मेण लभ्यते ॥
ब्रह्मेन्द्रोपेन्द्रशर्वेन्द्र( ? र्वेन्दु )यमार्काग्न्य-
निलाम्भसाम् ।
वस्वश्विधनदाद्यानां ये लोकाः सर्वकामदाः ।
धर्मेण तानवाप्नोति पुरुषः पुरुषान्तक ॥
मनोहराणि द्वीपानि वर्षाणि सुसुखानि च ।
प्रयान्ति धर्मेण नरास्तथैवामरतामिताः ॥
नन्दनादीनि मुख्यानि देवोद्यानानि यानि च ।
तानि पुण्येन लभ्यन्ते नाकपृष्ठं तथा नरैः ॥
विमानानि विचित्राणि तथैवाप्सरसः शुभाः ।
तैजसानि शरीराणि सदा पुण्यवतां फलम् ॥
राज्यं नृपतिपूजा च कामसिद्धिस्तथेप्सिता ।
उपस्कराणि मुख्यानि फलं पुण्यस्य दृश्यते ॥
रुक्मवैडूर्यदण्डानि चन्द्रांशुसदृशानि च ।
चामराणि सुराध्यक्ष भवन्ति शुभकर्मणाम् ॥
पूर्णेन्दुमण्डलाभेन रक्तांशुकसितेन च ।
धार्यतां यान्ति छत्रेण नरः पुण्येन कर्मणा ॥
जयशङ्खस्वना देव सूतमागधनिःस्वनम् ।
वरासनं सभृङ्गारं फलं पुण्यस्य कर्मणः ॥
वरान्नपानं गीतं च नृत्यमाल्यानुलेपनम् ।
रत्नवस्त्राणि मुख्यानि फलं पुण्यस्य कर्मणः ॥
रूपौदार्यगुणोपेताः स्त्रियश्चातिमनोहराः ।
वासः प्रासादपृष्ठेषु भवन्ति शुभकर्मणाम् ॥
सुवर्णकिङ्किणीमिश्रचामराः पीठधारिणः ।
वहन्ति तुरगा देव नरं पुण्येन कर्मणा ॥
हेमकक्षैश्च मातङ्गैश्चलत्पर्वतसंनिभैः ।
खेलाङ्घ्रिपदविन्यासैर्यान्ति पुण्येन कर्मणा ॥
सर्वकामप्रदे देवे सर्वापद्दुरितापहे ।
वहन्ति भक्तिं पुरुषाः सदा पुण्येन कर्मणा ॥
तस्य द्वाराणि यजनं तपो दानं दया क्षमा ।
ब्रह्मचर्यं च सत्यं च तीर्थानुसरणं शुभे ॥
स्वाध्यायसेवा साधूनां सहवासः सुरार्चनम् ।
गुरूणां चैव शुश्रूषा ब्राह्मणानां च पूजनम् ।
इन्द्रियाणां जयश्चैव मार्दवं ह्रीरमत्सरम् ॥
तस्माद्धर्मः सदा कार्यो नित्यमेव विजानता ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥
बाल एवाऽऽचरेद्धर्ममनित्यं देव जीवितम् ।
को हि जानाति कस्याद्य मृत्युः केन भविष्यति ॥
पश्यतोऽप्यस्य लोकस्य मरणं पुरतः स्थितम् ।
अमरस्येव चरितमत्याश्चर्यं सुरोत्तम ॥
युवत्वापेक्षया बालो वृद्धत्वापेक्षया युवा ।
मृत्योरुत्सङ्गमारूढः स्थविरः किमपेक्षते ॥
भुवः शैलं समारूढस्ततो वृक्षाग्रमाश्रितः ।
तत्राप्यविन्दतत्त्राणं मृत्योर्भीतस्य का गतिः ॥
न भयं मरणाद्देव प्राणिनामधिकं क्वचित् ।
तत्रापि निर्भयाः सन्तः सदा सुकृतकारिणः ॥

(१) विध. १।१६४।१८–१९.
(२) विध. १।२२२।४१.
(३) विध. २।३९।३–२९.

[१]दृष्ट्वा लोकमनाक्रन्दं$ म्रियमाणांश्च बान्धवान् ।
धर्ममेकं सहायार्थे कारयध्वं सदा नराः ॥
¶मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरैर्यतः ।
जायावर्ज्य(? र्जं) हि सर्वस्य यस्या भर्ता
विभि(? प)द्यते ॥
धर्म एकोऽनुयात्येनं यत्र कुत्र च गामिनम् ।
नन्वसारे त्रिलोकेऽस्मिन्धर्मं कुरुत मा चिरम् ॥
[२]श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

आश्रमिणां धर्मस्य दश लक्षणानि

पुष्कर उवाच–
[३]आश्रमेषु यथोक्तेषु वर्तन्ते ये द्विजोत्तमाः ।
स्वधर्मसक्ताः सततं ते नराः स्वर्गगामिनः ॥
पुष्कर उवाच–
[४]आश्रमेषु यथोक्तेषु यथोक्तं ते द्विजातयः ।
वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥
[५]चतुर्भिरपि तत्त्वज्ञैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलाक्षणिको धर्मः सेवितव्यः प्रयत्नतः ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥
दश चिह्नानि धर्मस्य ये विप्राः समधीयते ।
अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम् ॥

$ दुःखातिशयेन मूढत्वादनुत्पन्नाक्रन्दमित्यर्थः ।

¶ अत्र वाक्ये 'नरैः' इति तृतीयान्तान्वयानुरोधेन 'शक्तः' इत्यत्र 'शक्यः' इति शोधकल्पने अपिर्व्यर्थः स्यात् । तस्मात् अधिकार्थलाभाच्च एवं वाक्यार्थोऽत्र कल्प्यते– प्रेयसः पित्रादेर्मरणे शोकातिशयेन सद्यो मृतोऽपि पुत्रादिर्बान्धवः प्रेयोभिर्मृतैः पित्रादिभिर्नरैः सह नानुगन्तुं शक्तः, किमुत जीवन्? ग्रन्थस्याऽऽर्षत्वा-न्नरसाहित्यं गमने ग्राह्यम्, नानुगमने । यथाविधि भर्तृचितारूढा जाया तु भर्त्रा सह गच्छत्येवेत्यभिप्रेत्य 'जायावर्जम्' इत्युक्तम् ।

(१) विध. २।७८।१८–२०.
(२) विध. २।८२।३३. (३) विध. २।११७।२.
(४) विध. २।१२२।७.
(५) विध. २।१३१।५८–६०.

[१]स्वल्पोऽपि धर्मश्चरितो यथाऽयं
महाफलः स्यात्सततं द्विजानाम् ।
तस्मात्प्रयत्नादयमेव कार्यः
सर्वं समुत्सृज्य महानुभावः ॥

इह परत्र च धर्मः सुखदः

[२]श्रुतिस्मृत्युदितं धर्मं त्वनुतिष्ठेत्तथा सदा ।
सुखी स्यात्तत्प्रसक्तस्तु इह लोके परत्र च ॥
[३]धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ॥
[४]आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।
समा(? स नाऽऽ)प्नोति फलं तस्य
परत्रेति विचारितम् ॥
प्रभुः प्रथमकल्पस्य योऽनुकल्पेषु वर्तते ।
धर्मेण योगं नाऽऽप्नोति नरकं चैव गच्छति ॥
[५]एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् ॥
[६]आहरेज्ज्ञानमर्थांश्च नरो ह्यमरवत्सदा ।
केशैरिव गृहीतस्तु मृत्युना धर्ममाचरेत् ॥

सदाचारमहिमा

[७]आचारयुक्तस्त्रिदिवं प्रयाति
आचारवानेव भवत्यरोगः ।
आचारवानेव चिरं तु जीवे-
दाचारवानेव भुनक्ति लक्ष्मणम् ॥
[८]मानसं हि धनं धर्मः स्वर्गलोकमवाप्नुयात् ॥
हंस उवाच–
[९]आचारहीनाः पुरुषा भवन्त्यल्पायुषो द्विजाः ।
आचारहीनश्च तथा राक्षसैरभिभूयते ॥

(१) विध. २।१३१।६४.
(२) विध. ३।२३३।५९–६०.
(३) विध. ३।२३३।२०६.
(४) विध. ३।२३३।२२५–२२६.
(५) विध. ३।२३३।२४५.
(६) विध. ३।२३३।२५४.
(७) विध. ३।२३३।२८२.
(८) विध. ३।२३७।३३.
(९) विध. ३।२५०।१–५.

यक्षैः पिशाचैर्गन्धर्वैस्तथा चान्यैर्निशाचरैः ।
डाकिनीभिः सुराणां च तथा
पार्षगणाः ( ? पर्षद्गणैः ) पृथक् ॥
दत्तमाचारहीनेन न प्रतीच्छन्ति देवताः ।
पितरश्च महाभाग ऋषयश्च तपोधनाः ॥
सर्वलक्षणयुक्तोऽपि नरस्त्वाचारवर्जितः ।
न प्राप्नोति तथा विद्यां न च किंचिदभीप्सितम् ।
आचारहीनः पुरुषो नरकं प्रतिपद्यते ॥
आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः ।
आचारहीनेन तु धर्मकार्यं
कृतं हि सर्वं भवतीह मिथ्या ॥

वेदविहिता हिंसा अहिंसैव

[1]या वेदविहिता हिंसा न सा हिंसा मता यतः ।
ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ॥
यज्ञार्थे निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रिताः पुनः ।
मधुपर्के च यज्ञे च पितृदैवतकर्मणि ॥
अत्रैव पशवो हिंस्या नान्यत्रेति कदाचन ॥

धर्मलक्षणम् , धर्मो जगतः कारणम्

हंस उवाच–

[2]धर्मे यत्नः सदा कार्यो धर्म एकः सुखावहः ।
धर्मेण पाल्यते सर्वं त्रैलोक्यं सचराचरम् ॥
धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः ।
धर्मे संसेविते कामान्प्राप्नोति मनसेप्सितान् ।
धर्मेणार्थं तथा लोके प्राप्नोति मनसेप्सितम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्म-
स्त्वेकोऽनुगच्छति ॥
एकस्मिन्नप्यतिक्रान्ते दिने धर्मविवर्जिते ।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितं चिरम् ॥
बलादेव चरेद्धर्ममनित्यं जीवितं यतः ।
नास्ति धर्मविहीनस्य सुखमण्वपि वै द्विजाः ॥

(१) विध. ३।२५२।२६–२८.
(२) विध. ३।२५५।१–८.

धर्मेण देवैर्देवत्वमृषित्वमृषिभिस्तथा ।
प्राप्तं धर्मेण सकलं ब्रह्मणा च कृतं जगत् ।
येन सर्वमिदं सृष्टं स वै धर्मे हरिः स्थितः ॥
कृतस्य धर्मस्य न चास्ति नाश-
स्तस्मात्तु धर्मः पुरुषेण कार्यः ।
धर्मे कृते नास्ति भयं नराणां
लोके परे चेह तथा द्विजेन्द्राः ॥

सदाचारमहिमा

हंस उवाच–

[1]आचारः स्वर्गजनन आचारः कीर्तिवर्धनः ।
आचारश्च तथाऽऽयुष्यो धन्यो लोकसुखावहः ॥
सर्वलक्षणहीनोऽपि स सदाचारवान्नरः ।
सर्वलक्षणलक्षण्यैर्विज्ञेयः पुरुषो वरः ॥
आचारस्त्रिविधो लोके सेवितव्यो विचक्षणैः ।
श्रुतिस्मृत्युदितश्चैव सदाचारस्तथा परः ।
आचारप्रभवं सौख्यं धनं च द्विजसत्तमाः ॥
आचारयुक्तस्त्रिदिवं प्रयाति
आचारवानेव भवत्यरोगः ।
आचारवानेव चिरं तु जीवे-
दाचारवानेव भुनक्ति लक्ष्मीम् ॥

श्रद्धया धर्मः सफलः

[2]श्रद्धान्वितेन मनसा यद्यत्किंचित्समाचरेत् ।
तत्तद्बहुफलं तस्य जायते लोकयोर्द्वयोः ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।
देवश्रद्धा नरा देवाः कथिता देवयाजिनः ॥
पितृश्रद्धाश्च पितरो दैत्ये श्रद्धा( ? त्यश्रद्धा )
दितेः सुताः ।
पापश्रद्धास्तथा पापा विज्ञेया नरकंगमाः ॥
तस्माच्छ्रद्धां समास्थाय धर्मे धर्मी समाचरेत् ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥
आस्तिक्यभावमास्थाय नरः श्रद्धासमन्वितः ।
नित्यं पुण्यानि कुर्वीत पापानि परिवर्जयेत् ।
पुण्यं बहुफलं तस्य श्रद्धामास्थाय यत्कृतम् ॥

(१) विध. ३।२७१।१–४.
(२) विध. ३।२७६।१–६.

श्रद्धा पवित्रं परमं हि लोके
श्रद्धा शरीरं पुरुषस्य चोक्तम् ।
श्रद्धां समास्थाय नरश्च कृत्वा
पुण्यानि पुण्यां गतिमाप्नुवन्ति ॥

धर्मस्य बहूनि द्वाराणि

[1]तस्य द्वाराणि यजनं तपो दानं दया क्षमा ।
ब्रह्मचर्यं तथा सत्यं तीर्थानुसरणं शुभम् ॥
स्वाध्यायसेवा साधूनां सहवासः सुरार्चनम् ।
गुरूणां चैव शुश्रूषा ब्राह्मणानां च पूजनम् ।
इन्द्रियाणां यमश्चैव ब्रह्मचर्यममत्सरम् ॥
[2]गङ्गास्नानं शिवो देवो विप्रपूजा-ऽऽत्मचिन्तनम् ।
ध्यानं नारायणस्यैतत्संक्षेपाद्धर्मलक्षणम् ॥

दानमित्यनेन दानखण्डप्रतिपाद्यानां तीर्थानुसरणमित्यनेनापि तीर्थखण्डप्रतिपाद्यानां देवब्राह्मणपूजनमित्यनेनापि परिशेषखण्डप्रतिपाद्यानां देवतापूजनादिधर्माणां साधारणत्वम् । चम्र. ८

सात्त्विकराजसतामसकर्मणां स्वरूपं फलं च

[3]कृतानि विधिहीनानि वञ्चनार्थं परस्य वा ।
क्रोधलोभाभिभूतेन तामसानि विनिर्दिशेत् ।
सात्त्विकानि भवन्तीह श्रद्धया परया द्विज ॥
[4]तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदा ।
वर्णसंकरभावेन वार्धके यदि वा पुनः ।
बाल्ये वा दासभावे वा नात्र कार्या विचारणा ॥
[5]अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत् ।
सात्त्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः ॥

प्रवृत्तं निवृत्तं चेति कर्मद्वैविध्यम्

[1]द्वे कर्मणी नरश्रेष्ठ ब्रह्मणा समुदाहृते ।
प्रवृत्तं च निवृत्तं च स्वर्गमुक्तिफले हि ते ॥
प्रवृत्तमपि मोक्षाय कर्म पार्थिव जायते ।
कर्म स्वरूपतो श्रेष्ठमनाकाङ्क्षितफलं स्मृतम् ॥

धर्मोल्लङ्घनविपाकः

[2]श्रुतिस्मृत्युदितं धर्मं वर्णाश्रमविभागजम् ।
उल्लङ्घ्य ये प्रवर्तन्ते स्वेच्छया कूटयुक्तिभिः ॥
विकर्माभिरता मूढा युक्तिप्रागल्भ्यदुर्मदाः ।
पाषण्डिनस्ते दुःशीला नरकार्हा नराधमाः ॥
[3]पाषण्डिनो दुराचारा दुष्टाश्नगुणवादिनः ।
असंस्कृताश्नभोक्तारो व्रात्याः संस्कारवर्जिताः ॥
पाषण्डाः पापकर्माणो दाम्भिकाः शठबुद्धयः ।
वर्णसंकरकर्तारो धर्मव्याजोपजीविनः ॥
निःशौचा वक्रमतयो नान्यदस्तीति वादिनः ।
एवंविधास्ते सन्मार्गाद्वेदप्रोक्ताद्बहिष्कृताः ॥
क्रियाकलापं निन्दन्त ऋग्यजुःसामलक्षणम् ।
आत्मानं च परांश्चैव कुर्वन्ति नरकस्थितौ ॥
[4]पाषण्डिनामशेषाणामप्रीतिर्वेदकर्मणि ।
ते ह्यधोगामिनः प्रोक्ता आसुरं भावमाश्रिताः ॥
तन्मोहितानामचिराद्विवेको याति संक्षयम् ।
क्षीणज्ञाना विकर्माणि कुर्वन्त्यहरहर्नराः ॥
निजवर्णात्मकं धर्मं परित्यज्य विमोहिताः ।
धर्मबुद्ध्या ततः पापं कुर्वन्त्यज्ञानमोहिताः ॥
ज्ञानावलेपस्तत्रैव ततस्तेषां प्रजायते ।
सुहृद्भिर्वार्यमाणास्ते पण्डितैश्च दयालुभिः ।
प्रयच्छन्त्युत्तरं मूढाः कूटयुक्तिसमन्वितम् ॥
ततस्ते स्वयमात्मानमन्यं चाल्पमतिं नरम् ।
विकर्मणा योजयन्तश्च्यावयन्ति स्वधर्मतः ॥

(१) चम्र. ८.
(२) चम्र. ८ ; आर्क. २ विप्र (प्रिय) त्संक्षेपात् (त्सकलं) हेमाद्रौ विष्णुधर्मोत्तरेऽपि.
(३) चवा. १८.
(४) चवा. १८ संकर (संस्कार) ; पमा. १।१७१ भावे वा (भावेन) ; मुक्ता. ४१ पृ. ( = ) ; विपा. ४।९ संकर (संस्कार) हेमाद्रावपि.
(५) चवा. १८ ; पमा. १।१७१ ; मुक्ता. ४० पूर्वोत्तरार्धे व्यत्यासेन पठिते ( = ) ; विपा. ४।९ हेमाद्रावपि.

(१) अप. ३।५७ पृ. ९६१ विष्णुधर्मे अश्विनौ.
(२) अप. १।१३० पृ. १७१.
(३) अप. १।१३० पृ. १७१.
(४) अप. १।१३० पृ. १७२.

## हरिवंशः

योगधर्मः सर्वधर्माणां वरिष्ठः

[1]यैः क्रियन्ते हि कर्माणि शरीरैर्दिवि दैवतैः ।
तैरेव तत्कर्मफलं प्राप्नुवन्तीह देवताः ॥
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ॥

सद्यः संकल्पमात्रात् । कर्माणि योगजधर्माः । देवत्वे तैजसदेहप्राप्तौ सत्याम् । मानुषे तु कर्मा(न)न्तरं प्रेत्य मृत्वा कर्माणि फलन्ति । नीटी.

[2]योगधर्माद्धि धर्मज्ञ न धर्मोऽस्ति विशेषवान् ।
वरिष्ठः सर्वधर्माणां तमेवाऽऽचर भार्गव ॥

धर्मः ऐहिकपारलौकिकश्रेयःसाधनम्

[3]धर्मे प्रयतमानानां मानवानां कुतो भयम् ।
सत्ये धर्मे च निरतान्मानवान्विगतज्वरान् ।
नाकाले धर्मिणो मृत्युः शक्नोति प्रसमीक्षितुम् ॥
[4]गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्मणाम् ।
ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः ॥
[5]बुधेन तात दान्तेन नित्यमभ्युच्छ्रितात्मना ।
धर्मस्य गतिरन्वेष्या मत्स्यस्य गतिरप्स्विव ॥
[6]स्वर्गे तपोभृतां वासः फलं पुण्यस्य कर्मणः ।
इहापि यशसा युक्तः स्वर्गस्थैरवधार्यते ॥

स्वर्गस्थैः, तुल्य इति शेषः । नीटी.

अतीव देवा रक्षन्ति नरं धर्मपरायणम् ।
कर्तारः सुलभा लोके दुष्कृतस्य हि कर्मणः ॥
[7]यज्ञैर्जप्याह्निकैश्चैव नित्यमाप्याययन्ति नः ।
मानुषाः स्वर्गमिच्छन्तः श्रद्दधानास्तपोधन ॥
[8]धर्मस्तपश्च सत्यं च यत्र तत्र जयो ध्रुवम् ॥

(१) हरि. १।१८।३६–३७.
(२) हरि. १।१९।१८.
(३) हरि. १।५१।३–४.
(४) हरि. २।१९।३३–३४.
(५) हरि. २।२३।१३.
(६) हरि. २।३२।१०, १३.
(७) हरि. २।६९।६४.
(८) हरि. ३।९४।४१.

कर्मयोगो मोक्षकरः

[1]ब्रह्मणो नियतं कर्म प्रभावेण प्रचोदितम् ।
प्रवर्तमानं भावेन शश्वदच्छलवादिनाम् ॥

अस्य मुक्त्युपायमुपदिशन् रक्षणमेवाध्यायशेषेणाऽऽह –ब्रह्मण इति । ब्रह्मणः ईश्वरस्य प्रभावेण निःश्वसितमात्रेण वेदेन प्रचोदितं यत् नियतं नित्यं कर्म अकरणात्प्रत्यवायजनकम् एतद्धितमित्युत्तरेण संबन्धः । शश्वत् निरन्तरम् अच्छलवादिनां भावेन शुद्धचेतसा प्रवर्तमानं क्रियमाणं कर्म । येषां वाचाऽपि छलं कदाचिदपि नास्ति, किमुत कर्मणा? तैः कृतं वेदोक्तं कर्म हितमित्यर्थः । नीटी.

एतद्धितमिति प्रोक्तं ब्राह्मणैर्वेदपारगैः ।
यदेकं ब्रह्मणः पादं दिष्टत्वं गमितं पदम् ॥

आसक्तिं निषेद्धुं कर्मफलस्येयत्तामाह– यदेकमिति । यत्पदं दिष्टत्वं गमितं कर्मजसुकृतफलत्वं प्रापितं तत् ब्रह्मणः पादं लेशमात्रं प्राहुः श्रुतयः 'पादोऽस्य विश्वा भूतानि' इत्याद्या इत्यर्थः । नीटी.

[2]अपुनर्भाविनां लोकाः कर्मयोगप्रतिष्ठिताः ।
अनादानेन मनसा राजन्कर्मणि कर्मणि ॥

कथं कर्मयोगेषु पुनर्भवराहित्यं प्रतिष्ठितम्? अत आह– अनादानेनेति । फलस्येति शेषः । कर्मणीति द्विरुक्तिर्वीप्सार्था । सर्वस्मादपि कर्मणः फलाकाङ्क्षां न कुर्यात् । यथोक्तं भगवता– 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥' इति । नीटी.

आदानाद्बध्यते जन्तुर्निरादानात्प्रमुच्यते ।
ब्राह्मणेभ्यः क्रियावाप्तिर्जन्तोः पूर्वाज्जनाधिप ॥

तत्राऽऽदानं तत्संगत्या पूर्वजन्मसंस्काराच्च भवति । तेन क्रियाणाम् अवाप्तिः प्राप्तिः भवति । अन्यथा क्षुद्रफलोपधानेन व्यर्थं कर्म गच्छतीत्यर्थः । नीटी.

मुक्तश्चेन्द्रियबन्धेन प्राप्तश्च परमं पदम् ।
न भूयः पुनरायाति मानुषं देहविग्रहम् ॥

(१) हरि. ३।१७।१७–१८.
(२) हरि. ३।१७।६७–६९.

अनादानस्यैव महाफलत्वमाह– मुक्त इति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेर्विविदिषोत्पादनद्वारा कर्मैव मोक्षहेतुरित्यर्थः । नीटी.

**[1]कर्मणः कर्मयोगज्ञो भूतेभ्यो नात्र संशयः ।**
**अविनाशाय लोकस्य धर्मस्याऽऽप्यायनेन च ॥**

जगज्जन्मादिहेतुत्वेन योगिनः ऐश्वर्यमुक्त्वा कर्मफलविभाजकत्वेनापि तदाह– कर्मण इति । योगज्ञो भूतेभ्यः कर्मणः योगादेः, सुखभाजकत्वं विभजते इति शेषः । धर्मस्याऽऽप्यायनेन लोकस्याविनाशायेति योज्यम् । अस्यैव प्रीत्यै धर्मः क्रियते, अनेनैव प्रीतेन लोको रक्ष्यत इत्यर्थः । नीटी.

**[2]धर्म एव परं श्रेय इति ते मेनिरे नृप ॥**

## श्रीमद्भागवतपुराणम्

निष्कामभगवद्भक्तिकारणं परमो धर्मः ज्ञानवैराग्यजनकश्च

**[3]स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।**
**अहैतुक्यप्रतिहता ययाऽऽत्मा संप्रसीदति ॥**

तत्र यत्प्रथमं पृष्टं सर्वशास्त्रसारमैकान्तिकं श्रेयो ब्रूहीति तत्रोत्तरम्– स वै पुंसामिति । अयमर्थः– धर्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः सोऽपरः । यतस्तु धर्माच्छ्रवणादरादिलक्षणा भक्तिर्भवति स परो धर्मः, स एवैकान्तिकं श्रेय इति । कथंभूता ? अहैतुकी, हेतुः फलानुसंधानम्, तद्रहिता । अप्रतिहता विघ्नैरनभिभूता । श्रीटी.

**वासुदेवे भगवति भक्तियोगः प्रयोजितः ।**
**जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥**

ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतिभ्यो धर्मस्य ज्ञानाङ्गत्वं प्रसिद्धम्, तत्कुतो भक्तिहेतुत्वम् ? उच्यते– सत्यम्, तत्तु भक्तिद्वारेणेत्याह– वासुदेव इति । अहैतुकं शुष्कतर्काद्यगोचरम् औपनिषदमित्यर्थः । श्रीटी.

**धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।**
**नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥**

व्यतिरेकमाह– धर्म इति । यो धर्म इति प्रसिद्धः स यदि विष्वक्सेनस्य कथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोऽपि सन् अयं श्रमो ज्ञेयः । ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येव, अत आह– केवलम् । विफलः श्रम इत्यर्थः । नन्वस्ति तत्रापि स्वर्गादिफलमित्याशङ्क्यैवकारेण निराकरोति । क्षयिष्णुत्वात्त तत्फलमित्यर्थः । ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिश्रुतेर्न तत्फलस्य क्षयिष्णुत्वमित्याशङ्क्य हिशब्देन साधयति, 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति तर्कानुगृहीतया श्रुत्या क्षयिष्णुत्वप्रतिपादनात् । श्रीटी.

**धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।**
**नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥**

तदेवं हरिभक्तिद्वारा तदितरवैराग्यात्मज्ञानपर्यन्तः परो धर्म इत्युक्तम् । अन्ये तु मन्यन्ते– धर्मस्यार्थः फलम्, तस्य च कामः फलम्, तस्य चेन्द्रियप्रीतिः, तत्प्रीतेश्च पुनरपि धर्मार्थादिपरंपरेति । यथाऽऽहुः– 'धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते' इत्यादि, तन्निराकरोति– धर्मस्येति द्वाभ्याम् । आपवर्ग्यस्य उक्तन्यायेनापवर्गपर्यन्तस्य धर्मस्यार्थाय फलत्वायार्थो नोपकल्पते योग्यो न भवति तथाऽर्थस्याप्येवंभूतधर्माव्यभिचारिणः कामो लाभाय फलत्वाय न हि स्मृतो मुनिभिः । श्रीटी.

**कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।**
**जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥**

कामस्य च विषयभोगस्य इन्द्रियप्रीतिः लाभः फलं न भवति, किंतु यावता जीवेत तावानेव कामस्य लाभः । जीवनपर्याप्त एव कामः सेव्य इत्यर्थः । जीवस्य जीवनस्य च पुनः कर्मानुष्ठानद्वारा कर्मभिर्य इह प्रसिद्धः सोऽर्थो न भवति, किंतु तत्त्वजिज्ञासैवेति । श्रीटी.

**अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ।**
**स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥**

(१) हरि. ३।१८।३३. (२) हरि. ३।१०५।२७.
(३) भाग. १।२।६–१०, १३.

धर्मस्य फलं भक्तिः, नार्थकामादिकमितीममर्थमुपपाद्योपसंहरति— अत इति । हे द्विजश्रेष्ठाः, हरितोषणं हरेराराधनं संसिद्धिः फलम् । श्रीटी.

[1]नैष्कर्म्यमप्यच्युतभाववर्जितं
न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म यदप्यकारणम् ॥

भक्तिहीनं कर्म शून्यमेवेति कैमुत्यन्यायेन दर्शयति —नैष्कर्म्यमिति । निष्कर्म ब्रह्म तदेकाकारत्वान्निष्कर्मतारूपं नैष्कर्म्यम् । अज्यते अनेनेत्यञ्जनम् उपाधिः, तन्निवर्तकं निरञ्जनम् । एवंभूतमपि ज्ञानम् अच्युते भावः भक्तिः तद्वर्जितं चेत् अलम् अत्यर्थं न शोभते । सम्यगापरोक्ष्याय न कल्पत इत्यर्थः । तदा शश्वत् साधनकाले फलकाले च अभद्रं दुःखरूपं यत्काम्यं कर्म यदपि अकारणम् अकाम्यं तच्चेति चकारस्यान्वयः । तदपि कर्म ईश्वरे नार्पितं चेत् कुतः पुनः शोभते? बहिर्मुखत्वेन सत्य( ? त्त्व )शोधकत्वाभावात् । श्रीटी.

कर्म भगवति समर्पितं तापत्रयनाशकम्

[2]एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥

तत्साधनधर्मरहस्यं च सूचितमित्याह— एतदिति । तापत्रयस्य आध्यात्मिकादेः चिकित्सितं भेषजं निवर्तकं सत्त्वशोधकमिति यावत् । किं तत्? भगवति भावितं समर्पितं यत्कर्म तत् । कथंभूते भगवति? ईश्वरे सर्वनियन्तरि । एवमपि च ब्रह्मणि अप्रच्युतपूर्णरूपे । श्रीटी.

आमयो यश्च भूतानां जायते येन सुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥

ननु संसारहेतोः कर्मणः कथं तापत्रयनिवर्तकत्वम्? सामग्रीभेदेन घटत इति सदृष्टान्तमाह द्वाभ्याम् । यः आमयः रोगः येन घृतादिना जायते तदेव केवलमामयकारणभूतं द्रव्यं तमामयं न पुनाति न निवर्तयतीत्यर्थः । किंतु चिकित्सितं द्रव्यान्तरैर्भावितं सत् पुनात्येव यथा । श्रीटी.

एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवाऽऽत्मविनाशाय कल्पन्ते कल्पिताः परे ॥

तथा(? त एव) आत्मविनाशाय कर्मनिवृत्तये कल्पन्ते समर्था भवन्ति परे ईश्वरे कल्पिताः अर्पिताः सन्तः । अत्र च प्रथमं महत्सेवा, ततश्च तत्कृपा, ततस्तद्धर्मश्रद्धा, ततो भगवत्कथाश्रवणम्, ततो भगवति रतिः, तया च देहद्वयविवेकात्मज्ञानम्, ततो दृढा भक्तिः, ततो भगवत्तत्त्वज्ञानम्, ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भाव इति क्रमो दर्शितः । श्रीटी.

यदत्र क्रियते कर्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥

ननु च ज्ञानेनाज्ञानप्राप्तकर्मनाशः, तच्च ज्ञानं भक्तियोगाद्भवति, कथं कर्मणा कर्मनाशः स्यात्? तत्राऽऽह— यदत्रेति । श्रीटी.

[1]पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना ।
राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥

न च मत्प्रीतेरप्यधिकं किंचिदस्तीत्याह— पूर्तेनेति । पूर्तादिभिः राद्धं सिद्धं यन्निःश्रेयसं फलं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् । श्रीटी.

[2]धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥

हि यस्मात् अनिमित्तस्य निष्कामस्य धर्मस्य विपाकः फलरूपः असौ । उपलक्षणमेतत् सत्यलोकस्य महत्प्रभृतिलोकानां तद्वासिनां च । त्रैलोक्यस्य काम्यकर्मफलत्वात्प्रतिकल्पमुत्पत्तिविनाशौ भवतः, महःप्रभृतीनामुपासनासमुचितनिष्कामधर्मफलत्वाद्द्विपरार्धपर्यन्तं न नाशः तत्रस्थानां च ततः परं प्रायेण मुक्तिरिति भावः । श्रीटी.

(१) भाग. १।५।१२.
(२) भाग. १।५।३२–३५.

(१) भाग. ३।९।४१.
(२) भाग. ३।१०।९.

कामार्थोद्देशेनानुष्ठितो धर्मः पुनरावृत्तिकारणम्,
निष्काममनुष्ठितश्च भगवत्प्राप्तये

**कपिल उवाच–**

**[1]'अथ यो गृहमेधीयान्धर्मानेवाऽऽवसन् गृहे ।**
**काममर्थं च धर्मान्स्वान्दोग्धि भूयः पिपर्ति तान् ॥**

इदानीं काम्यकर्मणो गतिमाह– अथेति चतुर्भिः । यो गृह एवाऽऽवसन् स्वान्धर्मान् दोग्धि । दोह्यमाह– काममर्थं च । तान्दुग्धान्धर्मान् भूयः पिपर्ति पूरयति अनुतिष्ठति । श्रीटी.

**स चापि भगवद्धर्मात्काममूढः पराङ्मुखः ।**
**यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयाऽन्वितः ॥**

सोऽपि भगवदाराधनरूपाद्धर्मात् पराङ्मुखः सन् प्राकृतानपि देवान्पितॄंश्च यजते । श्रीटी.

**तच्छ्रद्धयाऽऽक्रान्तमतिः पितृदेवव्रतः पुमान् ।**
**गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥**

ततः किम्? तत्राऽऽह– तच्छ्रद्धयेति । तेषां श्रद्धया आक्रान्ता व्याप्ता मतिर्यस्य । पित्रर्थे देवार्थे च व्रतं नियमः यस्य । सोमपाः तत्र सोमं पीत्वेत्यर्थः । श्रीटी.

**यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ।**
**तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥**

लोके तिष्ठत्यपि पुण्यक्षयात्पातमुक्त्वा लोकानामपि लयमाह– यदेति । यदा च अहरहः प्रलये । श्रीटी.

**ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे ।**
**निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥**
**निवृत्तिधर्मनिरता निर्ममा निरहंकृताः ।**
**स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥**

भगवद्धर्मनिष्ठानां तत्प्राप्तिमेव गतिमाह त्रिभिः । ये तु कामार्थप्रयोजनाय स्वधर्मान्न दुह्यन्ति न दुहन्ति । निःसङ्गाः अनासक्ताः । न्यस्तानि ईश्वरे समर्पितानि कर्माणि यैः । श्रीटी.

**सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ।**
**परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥**

(१) भाग. ३।३२।१–७.

विश्वतोमुखं परिपूर्णं पुरुषं यान्ति । तथा च श्रुतिः– 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा' (मुउ. १।२।११) इति । प्रकृतिः उपादानकारणम् । उत्पत्त्यन्तभावनं निमित्तकारणम् । श्रीटी.

प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च धर्मः

**[1]'यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।**
**एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिः ॥**

ननु ज्ञानयोगस्याऽऽत्मलाभः फलं शास्त्रेणावगम्यते, भक्तियोगस्य तु भजनीयेश्वरप्राप्तिः, कुतस्तयोरेकार्थत्वम्? इत्याशङ्क्य दृष्टान्तेनोपपादयति– यथेन्द्रियैरिति । यथा बहूनां रूपरसादिनां गुणानामाश्रयो गुडक्षीरादिरेक एवार्थो मार्गभेदप्रवृत्तैरिन्द्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति, रसनेन मधुर इति, स्पर्शनेन शीत इत्यादि, तथा भगवानेक एव तत्तद्रूपेणावगम्यते । श्रीटी.

**क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः ।**
**आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥**

शास्त्रमार्गानेव प्रपञ्चयति– क्रिययेति त्रिभिः । क्रियया पूर्तरूपया । क्रतुभिः यागैः । मर्शनं मीमांसा । आत्मेन्द्रियजयः निषिद्धवर्जनम् । श्रीटी.

**योगेन विविधाङ्गेन भक्तियोगेन चैव हि ।**
**धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥**

उभयचिह्नेन सकामनिष्कामलक्षणेन । तमेवाऽऽह– योगेनेति । सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणं स्वरूपमिति भावः । श्रीटी.

**आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ।**
**ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥**

एभिः वर्त्मभिः । स्वदृक् स्वप्रकाशः । श्रीटी.

**[2]'न वेदवादाननुवर्तेत मतिः**
**स्व एव लोके रमतो महामुनेः ।**
**यथा गतिर्देवमनुष्ययोः पृथक्**
**स्व एव धर्मे न परं क्षिपेत्स्थितः ॥**

(१) भाग. ३।३२।३३–३६.
(२) भाग. ४।४।१९–२०.

यदुक्तं '$कुतक्रियायाशुचये' (भाग. ४।२।१३) इति, तत्प्रत्याह– नेति । वेदवादान् विधिनिषेधरूपान् स्व एव लोके स्वात्मन्येव रममाणस्य महतो मुनेः सम्यग्विरक्तस्य मतिर्नानुवर्तते, निवृत्ताधिकारत्वात् । अधिकारभेदे दृष्टान्तः– यथा देवानां गतिराकाश एव, मनुष्याणां पृथिव्यामेव । अतः स्व एव धर्मे प्रवृत्तिलक्षणे निवृत्तिलक्षणे वा स्थितः सन् परम् अन्यं धर्मं पुरुषं वा न क्षिपेत् न निन्देत्, व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात् । नाक्षिपेदेवेति वाऽन्वयः । श्रीटी.

कर्म प्रवृत्तं च निवृत्तमप्यृतं
वेदे विविच्योभयलिङ्गमाश्रितम् ।
विरोधि तद्यौगपदैककर्तरि
द्वयं तथा ब्रह्मणि कर्म नर्च्छति ॥

एतदेवोपपादयन्नाह– कर्मेति । प्रवृत्तम् अग्निहोत्रादि, निवृत्तं शमदमादि, ऋतं सत्यमेव यतो वेदे आश्रितं विहितम्, तच्च विविच्य व्यवस्थया आश्रितम्, न त्वविशेषेण । व्यवस्थामेवाऽऽह– उभयं रागवैराग्यलक्षणं लिङ्गं चिह्नम् अधिकारिविशेषणं यस्मिंस्तत् । ननु 'यावज्जीवमग्निहोत्रं जुहोति', 'शान्तो दान्तः' इत्यादिषु नैवं व्यवस्था प्रतीयते । सत्यम् । तथाप्युभयोरेकाधिकारविरोधात्तथा पर्यवस्यतीत्याह– युगपद्भावो यौगपद्म्, यौगपद्येनैकस्मिन्कर्तरि तत्कर्मद्वयं विरोधि । ननु तर्हि निवृत्तं कर्म शिवेनापि कर्तव्यमेव, नेत्याह– ब्रह्मणि सदाशिवे किंचिदपि कर्म न ऋच्छति न प्राप्नोति । अतो यथा प्रवृत्तनिवृत्तयोः परस्परधर्मीकरणे न दोषस्तथेश्वरे एतदुभयधर्मीकरणेऽपीति भावः । श्रीटी.

[1]धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः ।
लोकान्विशोकान्वितरत्यथाऽऽनन्त्य-
मसङ्गिनाम् ॥

निष्कामानाम् आनन्त्यं मोक्षमपि । श्रीटी.

[1]अस्मिँल्लोकेऽथवाऽमुष्मिन्मुनिभिस्तत्त्व-
दर्शिभिः ।
दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥

मयि क्षीणौषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिध्यति, नान्यथेत्याह– अस्मिन्निति त्रिभिः । पुंसां श्रेयसः पुरुषार्थस्य प्रसिद्धयेऽस्मिंल्लोके कृष्यादयः अमुष्मिंश्च लोकेऽग्निहोत्रादयो योगा उपायाः दृष्टाः प्रयुक्ता अनुष्ठिताश्च । श्रीटी.

तानातिष्ठति यः सम्यगुपायान्पूर्वदर्शितान् ।
अवरः श्रद्धयोपेत उपेयान्विन्दतेऽञ्जसा ॥

पूर्वैर्दर्शितान् । अवरः अर्वाचीनः । श्रीटी.

ताननादृत्य योऽविद्वानर्थानारभते स्वयम् ।
तस्य व्यभिचरन्त्यर्था आरब्धाश्च पुनः पुनः ॥

अविद्वान् विद्वानपीति वा । व्यभिचरन्ति न सिध्यन्ति । श्रीटी.

ज्ञानं संसारतारकं परमं श्रेयः

[2]यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयाऽन्वितः ।
भजते शनकैस्तस्य मनो राजन्प्रसीदति ॥

[3]न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः ।
धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥

यद्वस्तु धर्मादीनां विघातकं तस्मिन् सङ्गम् । तमः संसारम् । श्रीटी.

तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते ।
त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥

तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रान्तिं वारयति– तत्रापीति । कृतान्तः कालः । श्रीटी.

[4]श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् ।
सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥

ज्ञानमेव नौर्यस्य । श्रीटी.

---

$ दक्षकृता शिवनिन्देयम् ।
(१) भाग. ४।१४।१५.

(१) भाग. ४।१८।३–५.
(२) भाग. ४।२०।९.
(३) भाग. ४।२२।३४–३५.
(४) भाग. ४।२४।७५.

[1]स एवं कर्म नियतं विद्वान्कुर्वीत मानवः ।
कर्मणा तेन राजेन्द्र ज्ञानेन न स लिप्यते ॥

एवं नियतं कर्म विद्वान् । तेनेत्युपलक्षणम् । तेनान्येन वा कर्मणैवमनुष्ठितेन यज्ज्ञानं भवति तेन ज्ञानेन हेतुना सोऽनुष्ठाता न लिप्यते । श्रीटी.

अन्यथा कर्म कुर्वाणो मानारूढो निबध्यते ।
गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥

अन्यथा नियमोल्लङ्घनेनान्तःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढः कर्मभिरनुबध्यते ततश्च गुणप्रवाहे पतितोऽधो व्रजति । श्रीटी.

[2]तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ॥

हरिं तोषयतीति हरितोषं यत्तदेव कर्म, यया तस्मिन् हरौ मतिर्भवति सैव विद्या, महाफलत्वात् । श्रीटी.

श्रद्धात्रैगुण्यात् भिन्ना उच्चावचाः कर्मविपाकाः

[3]पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशाः... ॥

विपाकगतयः फलभूता गतयः । श्रीटी.

राजोवाच–

[4]महर्ष एतद्वैचित्र्यं लोकस्य कथमिति ॥

पुंसो गतय उच्चावचा विसदृशा इति भोगवैचित्र्यमुक्तम्, तदेतत्कुत इति पृच्छति– महर्ष इति । श्रीटी.

ऋषिरुवाच–

त्रिगुणत्वात्कर्तुः श्रद्धया कर्मगतयः पृथग्विधाः सर्वा एव सर्वस्य तारतम्येन भवन्ति ॥

कर्मणः समानत्वेऽपि श्रद्धावैचित्र्यात्फलवैचित्र्यमिति परिहरति– त्रिगुणत्वादिति । सात्त्विक्या श्रद्धया कर्तुः सुखित्वम्, राजस्याऽसुखित्वं दुःखित्वं च, तामस्या दुःखित्वं मूढत्वं च । तत्रापि तासां श्रद्धानां तारतम्यात्सुखादितारतम्यं सर्वेषामित्यर्थः । श्रीटी.

(१) भाग. ४।२६।७–८.
(२) भाग. ४।२९।४९.
(३) भाग. ५।२५।१५.
(४) भाग. ५।२६।१–२.

भक्तियोगः पुंसां परमो धर्मः

( यम उवाच– )

[1]धर्मं तु साक्षाद्भगवत्प्रणीतं
न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः
कुतश्च विद्याधरचारणादयः ॥
स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥

ननु केऽपि चेन्न जानन्ति तस्य सत्त्वे किं प्रमाणम्? तत्राऽऽह– स्वयंभूरिति । कुमारः सनत्कुमारः । वयमित्यात्मानमेव बहुमन्यमानो निर्दिशति । श्रीटी.

द्वादशैते विजानीमो धर्मं भागवतं भटाः ।
गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते ॥

हे भटाः । श्रीटी.

एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥

तमेव धर्ममाह– एतावानिति । श्रीटी.

प्रह्लाद उवाच–

[2]कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥

इहैव मानुषजन्मनि धर्मानाचरेत्, यतोऽर्थदमेतत् । तत्र च कौमार एव, यतस्तदप्यध्रुवम् । न चैवंभूतं जन्मान्तरम्, यतो दुर्लभम् । तत्र धर्मानेवाऽऽचरेत्, न सुखार्थे प्रयासान् । तत्र भागवतानेव, न काम्यान् । श्रीटी.

यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ।
यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥

इह भागवतानेव धर्मानाचरेदित्येतदुपपादयति– यथा हीति चतुर्भिः । इह पुरुषस्य विष्णोः पादोपसर्पणमेव यथाऽनुरूपं योग्यमित्यर्थः । यत् यस्मादेष प्रिय इत्यादि । श्रीटी.

(१) भाग. ६।३।१९–२२.
(२) भाग. ७।६।१–५.

**सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ।**
**सर्वत्र लभ्यते दैवाद्यथा दुःखमयत्नतः ॥**

ननु भोगोद्यमः कथं त्याज्य इति चेत्तत्राऽऽह– सुखमिति । सर्वत्र पश्वादावपि । दैवात्पूर्वादृष्टादेव । श्रीटी.

**तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ।**
**न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥**

अतस्तदर्थं प्रयासो न कर्तव्यः । यतः प्रयासात्परं केवलमायुषो व्यय एव । यतः तथा तेन प्रकारेण क्षेमं न प्राप्नोति । श्रीटी.

**ततो यतेत कुशलः क्षेमाय भयमाश्रितः ।**
**शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥**

भयमाश्रितः संसारं प्राप्तः पुरुषरूपं शरीरं यावत्पुष्कलमस्ति, न विपद्येत अक्षमं न भवेत् न नश्येदिति वा, तावच्छीघ्रं क्षेमाय यतेत । श्रीटी.

**(१)एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।**
**एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम् ॥**

तदीक्षणं गोविन्ददृष्ट्या संमाननम् । श्रीटी.

**(२)प्रायः स्वभावविहितो नृणां धर्मो युगे युगे ।**
**वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत् ॥**

श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्म एव श्रेयानित्याह– प्राय इति । स्वभावेन सत्त्वादिप्रकृत्या विहितो धर्मः शर्मकृत् सुखहेतुः स्मृतः । कैः? वेद एव दृक् चक्षुः येषां तैः । भगवता चोक्तम्– 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' इति । श्रीटी.

**वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत् ।**
**हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥**

ननु स्वाभाविकस्य कर्मणो बन्धहेतुत्वात्कथं सुखहेतुत्वम्? तत्राऽऽह– वृत्त्येति । श्रीटी.

**(३)एके कर्ममयान्यज्ञान् ज्ञानिनो यज्ञवित्तमाः ।**
**आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥**

अत एवोत्तमाधिकारिणो बाह्यानि कर्माणि त्यजन्तीत्याह– एक इति । अनीहाः निष्कामाः । ज्ञानदीपिते आत्मस्फूर्तिमति आत्मसंयमने जुह्वति । मनो नियम्य तदन्तरायतया त्यजन्तीत्यर्थः । तदुक्तं सर्वज्ञसूक्तैः– 'प्रत्यक्स्फूर्तिरसत्स्फूर्तिस्तनुनिष्ठाविघातकम् । संलक्ष्य संत्यजेत्कर्म त्यजन्विघ्नहतोऽन्यथा ॥' इति । श्रीटी.

नित्यनैमित्तिकानि कर्तव्यानि, पञ्चाधर्मास्त्याज्याः

**द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ।**
**एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब्ध्रुवम् ॥**

मा माम् एष ध्रुवं हन्यादिति । कुतः? अकरुणः । तत्कुतः? असुतृप् प्राणतर्पकः । तत्किम्? अतज्ज्ञः आत्मतत्त्वानभिज्ञः । तथा च श्रुतिः– 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥' (ऋसं. १०।८२।७) इति । श्रीटी.

**तस्माद्दैवोपपन्नेन मुन्यन्नेनापि धर्मवित् ।**
**संतुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः ॥**

प्रस्तुतमनुवर्तयति– तस्मादिति । श्रीटी.

**विधर्मः परधर्मश्च आभास उपमा छलः ।**
**अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥**

अधर्मवत् साक्षान्निषिद्धवत् । श्रीटी.

**धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः ।**
**उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥**

क्रममनादृत्य पञ्चापि व्याचष्टे । धर्मबाधः धर्मबुद्ध्याऽपि यस्मिन्क्रियमाणे स्वधर्मबाधः । अन्यस्य चोदितोऽन्यस्य परधर्मः । उपमेति व्याचष्टे– उपधर्मस्त्विति । शब्दस्य भिद् भेदः अन्यथा व्याख्यानं यस्मिन् । 'यथा दशावरान्भोजयेत्' इत्युक्ते दशभ्योऽवरानिति । शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा । यथा 'गां दद्यात्' इत्युक्ते मरिष्यन्त्या गोर्दानम् । श्रीटी.

**यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथक् ।**
**स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये ॥**

(१) भाग. ७।७।५५.
(२) भाग. ७।११।३१–३२.
(३) भाग. ७।१५।९–१४.

स्वधर्मानुष्ठानानन्तरं धर्मभूयस्त्वार्थमपि परधर्मो नानुष्ठेयः, अनुपयोगादित्याह– स्वभावविहित इति । श्रीटी.

प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च धर्मः

**[1]'प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।**
**आवर्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥**

ननु वेदविहितेष्टापूर्तादिकारिणः पुंसः कथमेवमनर्थप्राप्तिः स्यात् ? इत्याशङ्क्य वेदोक्तकर्मणां द्वैविध्यं दर्शयन्फलभेदमाह– प्रवृत्तं चेति दशभिः । श्रीटी.

**हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ।**
**दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः सुतः ॥**

हिंस्रं श्येनादि कर्म । अशान्तिदम् अत्यासक्तियुक्तम् । आदिशब्दार्थविवरणम्– दर्शश्चेति । पशुः पशुयागः । सुतः सोमयागः । श्रीटी.

**एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ।**
**पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥**

हुतं वैश्वदेवम् । प्रहुतं बलिहरणम् । एतत्सर्वमिष्टमुच्यते । एतदेव यदि काम्यमशान्तिदं च तर्हि प्रवृत्ताख्यमपी( ? ख्यमि )त्यर्थः । आजीव्यं प्रपादि । श्रीटी.

स्वभावजकर्मण एव सर्वः सुखदुःखभोगः

**श्रीभगवानुवाच–**

**$[2]'कर्मणा जायते जन्तुः कर्मणैव विलीयते ।**
**सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥**

प्रथमं तावत्कर्मवादेन देवान्निराकरोति– कर्मणेति । ननु जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यात् ? इति चेत् अहो, अशीक्षितमीमांसानां स्वमतिविलसिता भद्रा कर्मणां फलकारणत्वे वचनतोऽवगते किं ततोऽनुपपन्नं नाम ? श्रीटी.

**अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ।**
**कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥**

केचित्पुनरतिसाहसमीताः कर्मपरतन्त्रमीश्वरं मन्यन्ते, तन्मतमनूद्य निराकरोति– अस्ति चेदिति । स्वयं कर्मभिरलिप्तोऽन्येषां जीवानां कर्मणां फलरूपी फलदाता कर्तारं भजते तत्तत्कर्मफलदानेन । श्रीटी.

**किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ।**
**अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम् ॥**

अतः कर्मण एव फलसिद्धेस्तत्पारतन्त्र्ये चाजागलस्तनतुल्यत्वात् ( न ? ) देवतया कृतमित्याह– किमिन्द्रेणेति । ननु कर्मणोऽपि प्रवृत्तिरन्तर्याम्यपेक्षैव, कथं सर्वथा देवताया अनुपयोगः ? इत्याशङ्क्याऽऽह– स्वभावविहितमिति । स्वभावेन प्राक्तनसंस्कारेणैव विहितं यत्कर्म तदन्यथा कर्तुमनीशेन । श्रीटी.

**स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते ।**
**स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥**

एतद्विवृणोति– स्वभावतन्त्र इति । प्रवृत्तेः संस्काराधीनत्वात्किमन्तर्यामिणेत्यर्थः । श्रीटी.

**देहानुच्चावचाञ्जन्तुः प्राप्योत्सृजति कर्मणा ।**
**शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥**

तस्मात्स्वभावतो निष्पन्नस्य कर्मण एव सर्वकारणत्वात् कर्मैव पूज्यमित्याह– देहानिति सार्धेन । श्रीटी.

**तस्मात्संपूजयेत्कर्म स्वभावस्थः स्वकर्मकृत् ।**
**अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥**

संपूजयेत् संमानयेत् । ननु देवतोद्देशेन द्रव्यत्यागात्मकत्वात्कर्मणः कथं देवतां विना सिद्धिरित्याशङ्क्य कर्माङ्गमात्रं देवतेति पक्षमुपसंहरन्निव हेतुवादमाश्रित्यान्यामेव देवतां समर्थयते– अञ्जसेति । श्रीटी.

वेदोक्तं कर्मैव निष्काममाचरणीयम्

**[1]'कर्मणा कर्मनिर्हार एष साधु निरूपितः ।**
**यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥**

---

$ 'वचो निशम्य नन्दस्य तथाऽन्येषां व्रजौकसाम् । इन्द्राय मन्युं जनयन् पितरं प्राह केशवः ॥' इति श्रीशुकेनावतारितेयं श्रीभगवदुक्तिः । तत्र 'इन्द्राय मन्युं जनयन्' इति वक्ष्यमाणेन्द्रगर्वपरिहारप्रसञ्जकेन्द्रमन्युजननोक्तिः श्रीभगवदुक्तेरस्याः स्वार्थपरत्वाभावबोधिका । अन्यथा 'देवान्भावयतानेन ते देवा भावयन्तु वः' ( भगी. ३।११ ) इति स्वोक्त्यैव विरोधः स्यात् ।

(१) भाग. ७।१५।४७–४९.

(२) भाग. १०।२४।१३–१८.

(१) भाग. १०।८४।३५–३६.

चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ।
दर्शितः सुगमो योगो धर्मश्चाऽऽत्ममुदावहः ॥

चित्तस्य उपशमः उपशमहेतुः । योगः मोक्षोपायश्च । शनैरात्ममुदमावहतीति तथा । सुगमः, प्रवृत्त्याश्रयत्वात् । धर्मश्च आवश्यकः । अन्यथा विहिताकरणेन मालिन्यप्रसङ्गात् । श्रीटी.

आविर्होत्र उवाच–

'कर्माकर्म विकर्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥

कर्म विहितम् । अकर्म तद्विपरीतं निषिद्धम् । विकर्म विगतं कर्म विहिताकरणम् । एतत् त्रयं वेदवादो वेदैकगम्यम्, न लौकिकः । वेदस्येश्वरात्मत्वात् ईश्वरादुद्भूतत्वात् अपौरुषेयत्वादित्यर्थः । पुंवाक्ये हि वक्तुरभिप्रायतोऽर्थज्ञानं शक्यम्, अपौरुषेये तु केवलं वाक्यपौर्वापर्येणैव तात्पर्यावधारणम्, तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि मुह्यन्ति, किमुतान्ये ? अतस्तव तदा बालत्वान्नैवाब्रुवन्निति । श्रीटी.

परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥

दुर्ज्ञेयं वेदतात्पर्यमाह– परोक्षवाद इति । यत्रान्यथास्थितोऽर्थः संगोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः । तथा च श्रुतिः– 'तं वा एतं चतुर्हूतँ सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥' (तैब्रा. २।३।११।४) इति । परोक्षवादत्वमेवाऽऽह– कर्ममोक्षायेति । ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थम्, तत्राऽऽह– बालानामिति । बालानामनुशासनं यथा भवति तथा । अत्र दृष्टान्तः– अगदम् औषधम् । यथा पिता बालमगदं पाययन्खण्डलड्डुकादिभिः प्रलोभयन् पाययति ददाति च तानि, नैतावता अगदपानस्य तल्लाभः प्रयोजनम्, अपि त्वारोग्यम्, तथा वेदोऽप्यवान्तरफलैः प्रलोभयन्कर्ममोक्षायैव कर्माणि विधत्ते । श्रीटी.

(१) भाग. ११।३।४३–४६.

नाऽऽचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥

ननु कर्ममोक्षश्चेत्पुरुषार्थस्तर्हि प्रथममेव कर्म त्यज्यताम्, अत आह– नाऽऽचरेदिति । अजितेन्द्रियत्वादज्ञः स्वयं यदि नाऽऽचरेत्तर्हि विकर्मणा कर्मानाचरणलक्षणेनाधर्मेण मृत्योरनन्तरं मृत्युमेव प्राप्नोति । तथा च श्रुतिः– 'मृत्वा पुनर्मृत्युमापद्यन्ते । अद्यमानाः स्वकर्मभिः' इति । श्रीटी.

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥

तस्माद्वेदोक्तमेव कुर्वाणः, न तु निषिद्धम् । ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत्फलं च स्यात्, न तु नैष्कर्म्यरूपा सिद्धिः, अत आह– निःसङ्ग इति । निःसङ्गः अनभिनिवेशवान् । ईश्वरेऽर्पितम्, न तु फलोद्देशेन । ननु फलस्य श्रुतत्वात्कर्मणि कृते फलं भवेदेव, न– रोचनार्थेति । कर्मणि रुच्युत्पादनार्थमगदपाने खण्डलड्डुकादिवत् । ततश्च कर्माभिरुच्या वेदार्थं सम्यग्विचारयति । तदा च 'यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणः' (बृउ. ३।८।१०) इत्यनात्मज्ञस्यैव कृपणताम्, 'तमेतं वेदानुवचनेन (ब्राह्मणाः ?) विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन' (शाआ. १३) इति यज्ञादीनां ज्ञानशेषतां चावधार्य निष्कामेषु कर्मसु प्रवर्तते । ततश्च 'स्वर्गकामो यजेत' इत्यादिभिः कामितस्यैव स्वर्गादेः फलत्वेनावगमादकामितोऽसौ न भवतीति नैष्कर्म्यसिद्धिर्भवतीति भावः । श्रीटी.

श्रीभगवानुवाच–

'मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ।
वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥

मया पञ्चरात्राद्युक्तवैष्णवधर्मेषु अवहितः अप्रमत्तः सन् तदविरोधेन वर्णाद्याचारमनुतिष्ठेत् । श्रीटी.

(१) भाग. ११।१०।१, ४.

**निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।**
**जिज्ञासायां संप्रवृत्तो नाऽऽद्रियेत्कर्म-**
**चोदनाम् ॥**

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥' इति स्मृतिः । अतः प्रवृत्तं काम्यं कर्म त्यजेत्, निवृत्तं नित्यनैमित्तिकमेव कुर्यात् । आत्मविचारे तु सम्यक् प्रवृत्तो निवृत्तकर्मचोदनामपि नाऽऽद्रियेत् । श्रीटी.

**[1]वर्णाश्रमवतां धर्म एष आचारलक्षणः ।**
**स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥**

उक्तमर्थं संक्षिप्याऽऽह— य एष आचारलक्षणः पितृलोकप्राप्तिफलः स एव मद्भक्तियुतो मदर्पणेन कृतः । श्रीटी.

**[2]धर्मो मद्भक्तिकृत्प्रोक्तः ॥**

धर्मो मद्भक्तिकृत्, यतः स एव प्रोक्तः प्रकृष्ट उक्तः शास्त्रेषु । श्रीटी.

**धर्म इष्टं धनं नृणाम् ॥**

नृणामिष्टं धनं धर्मः, न पश्वादिसाधारणम् । श्रीटी.

त्रयो योगाः तत्र गुणा दोषाश्च, कर्मयोगस्य
ज्ञानभक्त्युपायत्वम्, नरदेहमहिमा,
परमयोगमार्गः

**[3]योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।**
**ज्ञानं कर्म च भक्तिश्च नोपायो-**
**ऽन्योऽस्ति कुत्रचित् ॥**

विषयाभेदेऽप्यधिकारिभेदेनाविरोधं वक्तुं प्रथमं योगत्रयमाह— योगा इति । योगाः उपायाः ब्रह्मकर्मदेवताकाण्डैः प्रोक्ताः । कर्म च निष्कामम् । श्रेयोविधित्सया मोक्षसाधनेच्छया । अन्य उपायो नास्तीति काम्यकर्मादिकं व्यावर्तयति । तथा चोत्तराध्याये स्फुटीकरिष्यति( ते १ ) 'य एतान्' इत्यादिना । श्रीटी.

**निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।**
**तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥**

तेष्वधिकारिभेदमाह— निर्विण्णानामिति द्वाभ्याम् । इह एषां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत्फलेषु विरक्तानाम् अत एव तत्साधनभूतकर्मन्यासिनां ज्ञानयोगः, सिद्धिद इत्युत्तरेणान्वयः । अनिर्विण्णचित्तानां दुःखबुद्धिशून्यानाम् अतः कामिनां तत्फलेष्वविरक्तानामित्यर्थः । श्रीटी.

**यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।**
**न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य**
**सिद्धिदः ॥**

यदृच्छया केनापि भाग्योदयेन । तत्र काम्यकर्मसु प्रवर्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति । निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति । स च ज्ञानभक्तियोगाधिकारात्प्रागेव । तदधिकृतयोस्तु स्वल्पः । ताभ्यां सिद्धानां तु न किंचिदिति । श्रीटी.

**तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।**
**मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥**

सावधिं कर्मयोगमाह— तावदिति नवभिः । कर्माणि नित्यनैमित्तिकानि । यावता यावत् । श्रीटी.

**स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव ।**
**न याति स्वर्गनरकौ यदन्यन्न समाचरेत् ॥**

कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह— स्वधर्मस्थ इति । अनाशीःकामः अफलकामः । अन्यत् निषिद्धं काम्यं च । नरकयानं हि द्विधैव— विहितातिक्रमाद्वा, निषिद्धाचरणाद्वा । अतः स्वधर्मस्थत्वानिषिद्धवर्जनाच्च नरकं न याति । अफलकामत्वाच्च स्वर्गमपीत्यर्थः । श्रीटी.

**अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।**
**ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥**

किंतु अस्मिंल्लोके अस्मिन्नेव देहे । अनघः निषिद्धत्यागी अतः शुचिः निवृत्तरागादिमलः । यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति । श्रीटी.

(१) भाग. ११।१८।४७.
(२) भाग. ११।१९।२७, ३९.
(३) भाग. ११।२०।६–३७.

**स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।**
**साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥**

अनेन प्रकारेण ज्ञानभक्तिसाधनत्वान्नरदेहं स्तौति– स्वर्गिणोऽपीति । निरयिण इति दृष्टान्तत्वेनोक्तम् । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः । तत् उभयं स्वर्गिनारकिशरीरम् । श्रीटी.

**न नरः स्वर्गतिं काङ्क्षेन्नारकीं वा विचक्षणः ।**
**नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥**

अतो नरः स्वर्गतिं न काङ्क्षेत् । नारकीमिति दृष्टान्तः । यद्वा स्वर्गनरकसाधनकर्माणि न कुर्यादित्यर्थः । अस्यातिश्रेष्ठत्वात्पुनरपि मनुष्यो भवेयमित्यपि न काङ्क्षेत् । यतो देहावेशात् देहासक्त्या स्वार्थे प्रमाद्यति अवधानशून्यो भवति । श्रीटी.

**एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः ।**
**अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥**

अपि तु एतत् देहं साधकमिति विद्वान् तस्यार्थसिद्धिदमपि मर्त्यं ज्ञात्वा अप्रमत्तः अनलसः सन् मृत्योः पूर्वमेव मोक्षाय घटेत प्रयत्नं कुर्यात् । श्रीटी.

**छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ।**
**खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥**

अप्रमत्तः मुक्तसङ्गः सुखं प्राप्नोतीत्यत्र दृष्टान्तः– छिद्यमानमिति । यमैः यमवन्निर्दयैः पुरुषैः कृतं नीडं यस्मिंस्तम् । स्वकेतं स्वस्याऽऽश्रयम् । अलम्पटः अनासक्तः । श्रीटी.

**अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ।**
**मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥**

दार्ष्टान्तिकमाह– अहोरात्रैरिति । अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा भयेन वेपथुः कम्पः यस्य सः । श्रीटी.

**नृदेहमाद्यं सुलभं सुदुर्लभं**
**प्लवं सुकल्पं गुरुकर्णधारम् ।**
**मयाऽनुकूलेन नभस्वतेरितं**
**पुमान्भवाब्धिं न तरेत्स आत्महा ॥**

एवमयतमानं प्रमत्तं निन्दति– नृदेहमिति । नृदेहं प्लवं नावम्, प्राप्येत्यध्याहारः, यो भवाब्धिं न तरेत्स आत्महा । तत्र हेतवः– आद्यं सर्वफलानां मूलम्, एतदुपार्जितकर्मभिः सर्वप्राप्तेः । किंच, सुदुर्लभम् उद्यमकोटिभिरपि प्राप्तुमशक्यम् । तथापि तु सुलभम्, यदृच्छया लब्धत्वात् । तं च सुकल्पं पटुतरम् । किंच, गुरुः संभितमात्र एव कर्णधारः नेता यस्य तम् । मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् । श्रीटी.

**यदाऽऽरम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।**
**अभ्यासेनाऽऽत्मनो योगी धारयेदचलं मनः ॥**

एवं तावदविरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वा इदानीं सम्यग्विरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किंचित्कृत्यं वर्जनीयं चाऽऽह– सार्धैर्नवभिः । यदा त्वारम्भेषु कर्मसु निर्विण्णः दुःखदर्शनेनोद्विग्नः तत्फलेषु विरक्तश्च तदा संयतेन्द्रियः सन् आत्मनः अभ्यासेन आत्मविषयवृत्तिसंतत्या अचलं यथा भवति तथा मनो धारयेत् । श्रीटी.

**धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।**
**अतन्द्रितोऽनुरोधेन मार्गेणाऽऽत्मवशं नयेत् ॥**

तत्र प्रथममेवात्यन्तधारणासंभवात् तत्स्वभावानुसारेण वशीकरणमाह– धार्येति । यर्हि आशु भ्राम्यत् परिभ्रमत् अनवस्थितं भवति तदा अनुरोधेन किंचिदपेक्षापूरणद्वारेण । श्रीटी.

**मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।**
**सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥**

ननु तर्हि यथापूर्वमेव स्यात् तत्राऽऽह– मनोगतिमिति । मनोगतिं तु न विसृजेत् नोपेक्षेत, किंत्वप्रमत्तः सन् लक्षयेदित्यर्थः । श्रीटी.

**एष वै परमो योगो मनसः संग्रहः स्मृतः ।**
**हृदयज्ञत्वमन्विच्छन्दम्यस्येवार्वतो मुहुः ॥**

अनुरोधमार्गं सदृष्टान्तं स्तौति । एषः अनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः । तत्साधनत्वादुपचारेण स्तुतिः । यथा अदान्तस्य दमनीयस्य अर्वतः अश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिम् अन्विच्छन् अपेक्षमाणः अश्वधारकः प्रथमं किंचित्तद्गतिमनुवर्तते, तदा च रश्मिना तं धृत्वैव गच्छति, न तूपेक्षते तद्वदित्यर्थः । श्रीटी.

**सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ।**
**भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥**

एवमीषद्वशीकृतस्य मनसोऽत्यन्तनैश्चल्योपायानाह— सांख्येनेति त्रिभिः । सांख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहान्तानाम् अनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चानुध्यायेत् । प्रसीदति निश्चलं भवति । श्रीटी.

**निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।**
**मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥**

ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति, किं भूयो भूय उपदेशेन ? इति चेत्तत्राऽऽह— निर्विण्णस्येति । ततश्चाऽऽगमापायिषु तेष्ववधिभूतात्मदर्शनात्तद्विवेकापन्नसंसारे निर्विण्णस्य अतो विरक्तस्य ततश्चोक्तवेदिनः गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्यैव चिन्तितस्य पुनः पुनरनुचिन्तया दौरात्म्यं देहाद्यभिमानं त्यजति । श्रीटी.

**यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।**
**ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥**

किंच, यमादिभिर्योगमार्गैः आन्वीक्षिक्या पदार्थद्वयशोधनेन ममार्चनध्यानादिभिर्वा । वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयति । एतैरुपायैः योग्यं परमात्मानं मनः स्मरेत्, नान्यैः । अतोऽन्यन्न कुर्यादित्यर्थः । श्रीटी.

**यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ।**
**योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥**

ननु पापापत्तौ प्रायश्चित्तं कार्यमेव, तत्राऽऽह— यदीति । योगेन ज्ञानाभ्यासेनैव । एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम् । नान्यत् कृच्छ्रादि । श्रीटी.

**स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।**
**कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।**
**गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥**

ननु नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः । तत्र च तन्निवर्तकत्वात्कृच्छ्रादि प्रायश्चित्तं गुणः इति विधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तं विना योगेनैव कथं पापं दहेत् ? तत्राऽऽह— स्वे स्व इति सार्धेन । स एव गुणः, नेतरः । तदुपपादयति— यस्माद्विधिप्रतिषेधाभ्याम् अनेन गुणदोषविधानेन कर्मणां नियमः संकोचः कृतः । कुतः ? इत्यत आह— जात्या उत्पत्त्यैव अशुद्धानाम् । स च प्राप्तानां सङ्गानां त्याजनेच्छया । अयं भावः— पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्याऽस्ति, स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् । न च सहसा सर्वतो निवृत्तिः कर्तुं शक्यते । अतः 'इदं न कर्तव्यम्, इदमेव कर्तव्यम्' इत्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते । यथा च न प्रवृत्तिपरो वेदस्तथोत्तराध्याये वक्ष्यामः 'उत्पत्त्यैव हि कामेषु' इत्यादिना । अतो योगिनः स्वाभाविकप्रवृत्त्यभावान्न प्रायश्चित्तादिविधिगोचरतेति । श्रीटी.

भक्तियोगस्वरूपम्

**जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।**
**वेद दुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः ॥**

भक्त्यधिकारिणो भक्तियोगमाह— जातश्रद्ध इति नवभिः । मत्कथासु जातश्रद्धः अत एवान्येषु कर्मसु उद्विग्नः, न तु तत्फलेषु विरक्तः । तदाह— वेदेति । यद्यपि वेद तथापि तत्परित्यागे अनीश्वरः अशक्तः । श्रीटी.

**ततो भजेत मां प्रीतः( ? त्या) श्रद्धालुर्दृढनिश्चयः ।**
**जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन् ॥**

एवंभूतो यः श्रद्धालुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः सन्( ? सः) ततः तदनन्तरं मां प्रीत्या भजेत । विषयांस्तु सेवमानोऽपि तेषु प्रीतिं न कुर्यादित्याह— गर्हयन्निति । श्रीटी.

**प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।**
**कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥**

कथं भजेत ? किंवा ततो भवति ? तदाह— प्रोक्तेनेति द्वाभ्याम् । 'श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम्' (भाग. ११।१९।२०) इत्यादिना तत्रतत्रोक्तेन

मा माम् असकृत् नित्यं भजतः हृदय्याः हृद्गताः कामा नश्यन्ति । श्रीटी.

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥३**

हृदयमेव ग्रन्थिः अहंकारः तत्पूर्वकाश्च सर्वे संशयाः असंभावनादयः । कर्माणि अनारब्धफलानि संसारहेतुभूतानि च । श्रीटी.

**तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।**
**न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥**

तदेवं व्यवस्थयाऽधिकारत्रयमुक्तम् । तत्र च भक्तेरन्यनिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति– तस्मादिति त्रिभिः । मदात्मनः मयि आत्मा चित्तं यस्य तस्य । श्रेयः श्रेयःसाधनम् । श्रीटी.

**यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।**
**योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥**
**सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।**
**स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥**

तत्र हेतुः– यत्कर्मभिरित्यादि । इतरैरपि तीर्थयात्राव्रतादिभिः श्रेयःसाधनैर्यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्वम् अञ्जसा अनायासेनैव । स्वर्गमपवर्गं मद्धाम वैकुण्ठं लभत एव । वाञ्छा तु नास्तीत्युक्तम्– यदि वाञ्छतीति । श्रीटी.

**न किंचित्साधवो धीरा भक्ता ह्येकान्तिनो मम ।**
**वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥**

तत्र हेतुमाह– न किंचिदिति । धीराः धीमन्तः यतो मम एकान्तिनः मय्येव प्रीतियुक्ताः अतो मया दत्तमपि न गृह्णन्ति, किं वक्तव्यं न वाञ्छन्ति ? इत्यर्थः । अपुनर्भवम् आत्यन्तिकमपि कैवल्यम् । श्रीटी.

**नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।**
**तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥**

तदुपपादयति– नैरपेक्ष्यमेव परम् उत्कृष्टम् अनल्पकं महत् निःश्रेयसं फलं तत्साधनं च प्राहुः । मे भक्तिः निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत् । यद्वा मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः । श्रीटी.

**न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।**
**साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥**

अनेन प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति– न मयीति । गुणदोषैः विहितप्रतिषिद्धैः उद्भवो येषां ते गुणाः पुण्यपापादयः । साधूनां निरस्तरागादीनाम् अतः समचित्तानाम् अत एव बुद्धेः परम् ईश्वरं प्राप्तानाम् । श्रीटी.

**एवमेतान्मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः ।**
**क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥**

काम्यकर्मनिष्ठां निन्दिष्यन्नेतान्मुक्तिमार्गानुपसंहरति– एवमिति । मे पथः मत्प्राप्त्युपायान् येऽनुतिष्ठन्ति ते क्षेमं कालमायादिरहितं मम लोकं विन्दन्ति यत्परमं ब्रह्म तज्ज्ञा विदुः । श्रीटी.

सकामकर्माचरणं संसरणकारणम् , पदार्थानां
कर्मणश्च गुणदोषाः

**श्रीभगवानुवाच–**

**[१]य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ।**
**क्षुद्रान्कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥**

तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तम् , तत्र ज्ञानभक्तिसिद्धानां न किंचिद्गुणदोषौ; साधकानां तु प्रथमतो निवृत्तिकर्मनिष्ठानां यथाशक्ति नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः , तदकरणं निषिद्धकरणं च तन्मलीमसकरणत्वाद्दोषः , तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः ; विशुद्धसत्त्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः ; भक्तिनिष्ठानां पुनः श्रवणकीर्तनादि भक्तिरेव गुणः , तद्विरुद्धं सर्वमुभयेषां दोष इत्युक्तम् । इदानीं ये तु न सिद्धाः नापि साधकाः , किंतु केवलं काम्यकर्मप्रधानाः , तेषां सकलगुणदोषान् प्रपञ्चयिष्यन्नादौताननतिबहिर्मुखान् निन्दति– य एतानिति । मत्पथः मदुक्तमार्गान् । क्षुद्रान् तुच्छान् चलैः अस्थिरैः प्राणैः देहवायुभिः इन्द्रियैर्वा जुषन्तः सेवमानाः

(१) भाग. ११।२१।१–७.

भवन्ति ते संसरन्ति निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवन्तीत्यर्थः । श्रीटी.

**स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।**
**विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥**

ननु तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यम्? न ह्यग्निना केचित्तप्यन्ते केचिन्नेति संभवति, तत्राऽऽह– स्वे स्व इति । अधिकारभेदेन कल्पितौ गुणदोषौ, न वस्तुनिष्ठाविति भावः । श्रीटी.

**शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।**
**द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥**

तदाह– शुद्ध्यशुद्धी इति । विचिकित्सार्थं योग्यमयोग्यं वेति संदेहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमित्यर्थः । तत्र शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे । गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे । शुभाशुभौ तन्निमित्तावर्थानर्थौ । श्रीटी.

**धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ।**
**दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥**

तत्र शुद्ध्यशुद्धी धर्मार्थं शुद्धेन धर्मः अशुद्धेनाधर्म इति । गुणदोषौ व्यवहारार्थम् अशुद्धावपि राजादीनां व्यवहारदर्शनादि उपादेयम्, नान्यदिति । शुभाशुभौ यात्रार्थं दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रोपादाने न पापम्, अधिकोपादाने तु पापमिति । मया मन्वादिरूपेण । धर्मरूपां धुरं भारम् । कर्मजडानामित्यर्थः । श्रीटी.

**भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ।**
**आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥**

शुद्ध्यशुद्धी प्रपञ्चयिष्यन् वेदोक्तत्वेन तदभिनिवेशो मा भूदिति 'समानेष्वपि वस्तुषु' इति यदुक्तं तत्प्रपञ्चयति– भूमीति त्रिभिः । भूतानां प्राणिनाम् । धारयन्तीति धातवः कारणानि । शारीराः शरीरारम्भकाः । देहतः साम्यमुक्तं जीवतोऽप्याह– आत्मसंयुता इति । श्रीटी

**वेदेन नामरूपाणि विषमाणि समेष्वपि ।**
**धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये ॥**

धातुषु देहेषु । नामरूपाणि वर्णाश्रमादीनि । कल्पनायाः प्रयोजनमाह– एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये । श्रीटी.

**देशकालादिभावानां वस्तूनां मम सत्तम ।**
**गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥**

न केवलं देहेष्वेव, अपि तु देशकालादिभावानामपि । आदिशब्देनानुपादेयानां फलनिमित्ताधिकारिणां ग्रहणम् । वस्तूनाम् उपादेयानां व्रीह्यादीनामपि । मम मया । नियमार्थं संकोचार्थमित्यर्थः । श्रीटी.

धर्मसंपत्तये मन्त्रकर्मकर्तृशुद्धिस्वरूपम्

**[1]स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः ।**
**मत्स्मृत्या चाऽऽत्मनः शौचं शुद्धः कर्माऽऽचरेद्द्विजः ॥**

एवं तावद्द्रव्यशुद्धिरुक्ता, इदानीं कर्तृशुद्धिमाह– स्नानेति । अवस्था कौमारादिः । वीर्यं शक्तिः । संस्कारः उपनयनादिः । कर्म संध्योपासनदीक्षादिलक्षणम् । आत्मनः साहंकारस्य कर्तुः एतैः स्नानादिभिर्यथायथं तत्कार्यानुसारिणी शुद्धिः । इयं च शुद्धिर्न व्यवहारार्था, किंतु विहितकर्मार्थेत्याह– शुद्ध इति । द्विज इत्युपलक्षणं शूद्रादेरपि । श्रीटी.

**मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।**
**धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः ॥**

मन्त्रशुद्धिमाह– सद्गुरुमुखाद्यथावत्परिज्ञानं मन्त्रस्य शुद्धिः । कर्मशुद्धिमाह । ईश्वरार्पणं कर्मणः शुद्धिः । धर्मायेत्थं शुद्ध्यशुद्धी प्रपञ्चतः प्रदर्श्योपसंहरति– धर्म इति । देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते । एतेषां यो विपर्ययः सोऽधर्मः तद्धेतुरित्यर्थः । श्रीटी.

**क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ।**
**गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥**

अयं च गुणदोषविभागो न वास्तव इत्याह– क्वचिदिति । आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वा-

(१) भाग. ११।२१।१४–३५.

दोषः । परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः । दोषोऽपि कुटुम्बत्यागादिर्विरक्तादेर्न दोषः अपि तु विधिबलेन गुणः । एवं योऽयं गुणदोषयोरेकस्मिन्नर्थे नियमः गुणदोषार्थे वा यो नियमः नियामकं शास्त्रं स तयोर्भेदमेव बाधते । श्रीटी.

**समानकर्माचरणं पतितानां न पातकम् ।**
**औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः ॥**

दोषस्य क्वचिद्दोषत्वाभावे गुणत्वे चोदाहरणं दर्शयति— समानेति । समानस्य तस्यैव कर्मणः सुरापानादेराचरणमपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकमधिकारभ्रंशकं न भवति, पूर्वमेव पतितत्वात् । अतोऽत्र दोषस्यापि दोषता नास्तीत्यर्थः । तथा सङ्गोऽपि यो यतेर्दोषः स गृहस्थस्य औत्पत्तिकः पूर्वस्वीकृतः न दोषः, अपि तु गुणः, 'ऋतौ भार्यामुपेयात्' इत्यादिविधानात् । उभयत्र दृष्टान्तः— पूर्वमेवाधः शयानो यथा न पततीति । श्रीटी.

मानवानां परमो धर्मः निवृत्तिः, शास्त्रोक्ता फलश्रुतिः प्रशंसामात्रपरा न स्वरूपेण यथार्था

**यतो यतो निवर्तेत विमुच्येत ततस्ततः ।**
**एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥**

अतो गुणदोषनियमविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याऽऽह— यतो यत इति । श्रीटी.

**विषयेषु गुणाध्यासात्पुंसः सङ्गस्ततो भवेत् ।**
**सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥**

यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां दर्शयति— विषयेष्विति चतुर्भिः । सङ्गः आसक्तिः । तत्र तेषु विषयेषु । येन प्रतिहन्यते कामस्तेन सह कामादेव कलिः कलहः विवादः । श्रीटी.

**कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ।**
**तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥**

दुर्विषहः तीव्रः । तमः संमोहः । तं क्रोधम् । चेतना कार्याकार्यस्मृतिः । द्रुतं शीघ्रम् । श्रीटी.

**तया विरहितः साधो जन्तुः शून्याय कल्पते ।**
**ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥**

शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः । स्वार्थविभ्रंशः पुरुषार्थहानिः । मूर्च्छितस्य मृततुल्यस्य । श्रीटी.

**विषयाभिनिवेशेन नाऽऽत्मानं वेद नापरम् ।**
**वृक्षजीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् ॥**

तत्तुल्यत्वं प्रपञ्चयति— विषयेति । व्यर्थं वृक्षजीविकयैव यो जीवन्वर्तते स मूर्छिततुल्यः । अत एव यो भस्त्रेव श्वसन्वर्तते स मृततुल्यः । अतः स्वार्थनाश इत्यर्थः । श्रीटी.

**फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।**
**श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥**

ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थविभ्रंशः ? तत्राऽऽह— फलश्रुतिरिति । इयं फलश्रुतिर्न श्रेयः परमपुरुषार्थपरा न भवतीत्यर्थः । किंतु बहिर्मुखानां नृणां मोक्षविवक्षयाऽवान्तरफलैः कर्मसु रुच्युत्पादनमात्रम् । यथा भैषज्ये औषधे रोचनं रुच्युत्पादनम् । तथा हि— 'पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् । पित्रैवमुक्तः पिबति न फलं तावदेव तु ॥' । श्रीटी.

**उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।**
**आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥**

ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते, कुत एवं व्याख्यायते ? यथाश्रुतस्याघटनादित्याह— उत्पत्त्येति द्वाभ्याम् । उत्पत्त्या स्वभावत एव । कामेषु पश्वादिषु । प्राणेषु आयुरिन्द्रियबलवीर्यादिषु । स्वजनेषु पुत्रादिषु । अनर्थहेतुषु परिपाकतो दुःखहेतुषु । श्रीटी.

**नतानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।**
**कथं युञ्ज्यात्पुनस्तेषु तांस्तमो विशतो बुधः ॥**

अतस्तान् स्वार्थं परमसुखम् अविदुषः अतो नतान् प्रह्वीभूतान् वेदो यद्बोधयिष्यति तदेव श्रेय इति विश्वसितानित्यर्थः । तानेवंभूतान् वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः, ततः पुनः तमः वृक्षादियोनिं

विद्यतः । 'पशुकामः' इति, 'आयुरिन्द्रियादिकामः' इति च, 'पुत्रादिकामः' इति च कथं पुनस्तेष्वेव कामेषु स्वयं बुधः वेदः युञ्ज्यात् प्रवर्तयेत् ? तथा सत्यनाप्तः स्यादिति भावः । श्रीटी.

**एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ।**
**फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥**

कथं तर्हि कर्ममीमांसकाः फलपरतां वदन्ति ? तत्राऽऽह– एवमिति । व्यवसितं वेदस्याभिप्रायम् । कुसुमिताम् अवान्तरफलप्ररोचनया रमणीयां परमफलश्रुतिं वदन्ति । कुतः ? ते कुबुद्धयः । तदाह– हि यस्मात् वेदज्ञाः व्यासादयः तथा न वदन्तीति । श्रीटी.

**कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।**
**अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥**

कुबुद्धितां प्रपञ्चयति– कामिन इत्यष्टभिः । कामित्वात्कृपणाः, ततो लुब्धाः तृष्णाकुलाः, अतः पुष्पेषु अवान्तरफलेषु परमफलबुद्धयः, अत एव अग्निमुग्धाः अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकाः, ततश्च धूमतान्ताः धूमता धूममार्गः अन्ते येषां ते । स्वं लोकम् आत्मतत्त्वम् । तथा च श्रुतिः– 'कश्चिद्ध वा अस्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति । कश्चित्स्वं लोकं न प्रतिजानाति । अग्निमुग्धो हैव धूमतान्तः' (तैब्रा. ३।१०।११।१) इति । श्रीटी.

**न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ।**
**उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥**

कोऽसौ स्वलोकः ? तमाह– हृदिस्थम् आत्मानं मां स्वलोकम् । ननु हृदिस्थमहंकारास्पदं जानन्त्येव । सत्यम् । परमात्मानं तु न जानन्तीत्याह– य इदं यद्व्यतिरिक्तं जगन्नास्ति । कुतः ? यतः इदं जगज्जातम् । तं कुतो न जानन्ति ? हि यस्मात् उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते, अतः केवलम् असुतृपः प्राणतर्पणपराः, नीहारं तमः तेन व्याप्तानि चक्षूंषि येषां ते यथा संनिहितमपि न जानन्ति तद्वत् । तथा च श्रुतिः– 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥' (ऋसं. १०।८२।७) इति । श्रीटी.

यज्ञीयहिंसाऽपि निषिद्धा

**ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ।**
**†वृथा पशून् विहिंसन्ति हिंस्यन्ते प्रेत्य तैस्तु ते ॥**
**हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ।**
**†इति वेदध्वनिं श्रुत्वा न ते मुह्यन्ति कर्मसु ॥**

वेदतात्पर्याज्ञानाद्यान्यान् यजन्तीत्याह– ते परोक्षम् अस्फुटं मे मतमविज्ञाय देवतादीन्यजन्त इत्युत्तरेणान्वयः । स्वमतमेवाऽऽह– हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागः स्यात्तर्हि यज्ञ एवेत्यभ्यनुज्ञाद्वारा परिसंख्येयम्, न त्वावश्यकत्वेन चोदनेत्येवंरूपम् । यद्यपि नित्यनैमित्तिकयोः कामविशेषानुबन्धो नास्ति तथापि 'कर्मणा पितृलोकः' इति श्रुतेः सामान्यतः पितृलोककामनाऽस्त्येव अन्तःकरणशुद्धिकामना चेति भावः । तदुक्तम्– 'नाकामस्य क्रिया काचिद्दृश्यते चेह कर्हिचित् । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥' इति । श्रीटी.

**हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।**
**यजन्ते देवता यज्ञैः पितृभूतपतीन्खलाः ॥**

अशक्त्वादेव हिंसया विहारः क्रीडा येषां ते । श्रीटी.

**स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम् ।**
**आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥**

किंच, तेऽतिमन्दबुद्धय इत्याह– स्वप्नोपममिति । अमुं परलोकम् । आशिषश्चास्मिन् लोके संकल्प्य, न तु निश्चित्य, विघ्नबाहुल्यात् । त्यजन्ति कर्मसु विनियोजयन्ति । यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलङ्घनेन बहुधनार्जनेच्छया सिद्धं धनं त्यजन्नुभयभ्रष्टो भवति तद्वदित्यर्थः । श्रीटी.

**रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ।**
**उपासत इन्द्रमुख्यान्देवादीन्न तथैव माम् ॥**

† इदमर्धम् आदर्शभिन्नपुस्तकस्थम् ।

अतो रजःसत्त्वतमोजुषः स्वानुरूपानिन्द्रादीनेवोपासते, न तु मां गुणातीतम् । यद्यपीन्द्रादीनामपि मदंशत्वान्मदुपासनमेव तत् तथापि यथावन्नोपासते, भेददर्शित्वादित्यर्थः । श्रीटी.

**इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।**
**तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥**

इति संकल्प्येत्युक्तम्, तमेव संकल्पं दर्शयति— इष्ट्वेति । तस्य भोगस्य अन्ते । महाशालाः महागृहस्थाः । श्रीटी.

**एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ।**
**मानिनां चातिस्तब्धानां मद्वार्ताऽपि न रोचते ॥**

ततः किम्? अत आह— एवमिति । अतो मत्प्रवणत्वाभावान्नित्यं संसारिणो भवन्तीति भावः । श्रीटी.

वस्तुतः वेदा न प्रवृत्तिपराः

**वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे ।**
**परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥**

तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति— वेदा इति । कर्मब्रह्मदेवताकाण्डविषया इमे वेदाः ब्रह्मात्मविषयाः ब्रह्मैवाऽऽत्मा, न संसारीत्येतत्पराः । तत्परत्वाप्रतीतौ च 'फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् । श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥' इत्युक्तमेव कारणमनुस्मारयति— परोक्षेति । ऋषयो मन्त्राः तद्द्रष्टारो वा । तत्किमिति? यतः परोक्षमेव मम च प्रियम् । अयं भावः— शुद्धान्तःकरणैरेवैतद्बोद्धव्यम्, नान्यैरनधिकारिभिः, वृथाकर्मत्यागेन भ्रंशप्रसङ्गादिति । श्रीटी.

गुणत्रयविवेकः

**'यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।**
**तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा ॥**
**यदा आशिष आशास्य मां भजेत स्वकर्मभिः ।**
**तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥**

(१) भाग. ११।२५।१०–१५.

हिंसां शत्रुमरणादिकम् आशास्य यो भजेत्तं तामसं विद्यात् । एतैर्गुणैरेवम्भूतो भवतीति तात्पर्यार्थः । श्रीटी.

**सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे ।**
**चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥**

ननु तवापि गुणवशेन कर्तृत्वाविशेषात्केन विशेषेण त्वं सेव्यो जीवस्तु सेवक इति नियमः? यतः 'मां भजेत' इति वारंवारमुच्यते, तत्राऽऽह— सत्त्वमिति । जीवस्यैव, न मे । कुतः? यतश्चित्तजाः जीवोपाधौ चित्तेऽभिव्यज्यन्ते । अतो यैः स एव बध्यते । कीदृशः? भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानः । अहं त्वसज्जमानो गुणनियन्तृत्वेन सृष्ट्यादिकर्ताऽपि नित्यमुक्तः, अतो महान्विशेष इति भावः । यद्वा भूतानाम् अपञ्चीकृतानां यत्कार्यभूतं चित्तम्, 'अन्नमयं हि सौम्य मनः' इति श्रुतेः, तत्प्रभवाः, अतो भूतोपहितस्य जीवस्यैवेति । अन्यत्समानम् । श्रीटी.

**यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ।**
**तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥**

तदेवं मिश्रामिश्रगुणकार्याणि प्रदर्श्येदानीमेकैकगुणोद्रेककार्याणि दर्शयति— यदेति । यदेतरौ गुणौ जयेत् अभिभवेत् । भास्वरं प्रकाशकम् । विशदं स्वच्छम् । शिवं शान्तम् । शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैर्युज्येत । आदिशब्दाच्छमदमादिभिश्च । श्रीटी.

**यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा बलम् ।**
**तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥**

तमः सत्त्वं च कर्मभूतम् । रजः कर्तृ । सङ्गं सङ्गहेतुः । भिदा भेदहेतुः । बलं प्रवृत्तिस्वभावम् । अतः सङ्गहेतुत्वात् यशसा श्रिया युज्येत । तत्कामः पुमान् भवतीत्यर्थः । भिदाहेतुत्वात् दुःखेन युज्येत, 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । बलहेतुत्वात् कर्मणा युज्येत । श्रीटी.

**यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम् ।**
**युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥**

यदा रजः सत्त्वं च कर्मभूतं तमः कर्तृ जयेत् । मूढं विवेकभ्रंशकम् । लयम् आवरणात्मकम् । जडम् अनुद्यमात्मकम् । अतो मूढत्वाच्छोकमोहहिंसाभिर्लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यम् । 'जनः' इति पाठे लयात्मकमेव निद्राशयोर्हेतुः । श्रीटी.

**[1]मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ।**
**राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥**

इदानीं गुणोत्कर्षकृतमेव तत्तत्फलसाधनकर्मत्रैविध्यमाह— मदर्पणं मत्प्रीत्युद्देशेन कृतं निष्फलं केवलं दासभावेनैव कृतं यन्निजं कर्म नित्यादि तत्सात्त्विकम् । फलं संकल्प्यतेऽस्मिंस्तत् । हिंसाप्रायं हिंसोद्देशेन कृतं हिंसाबहुलं च । आदिशब्दाद्दम्भमात्सर्यादिकृतम् । श्रीटी.

गुणसङ्गवर्जनसहिता भक्तिः निःश्रेयसकरी

**तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ।**
**गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥**

तस्माद्विवेकिनामिदमेव युक्तमित्याह— तस्मादिति । ज्ञानविज्ञानयोः संभवो यस्मिंस्तमिमं नरदेहम् । श्रीटी.

**निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ।**
**रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ॥**
**सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः ।**
**संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ॥**

भजनप्रकारमाह— निःसङ्ग इति सार्धेन । सत्त्वसंसेवया 'सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये ।' इति प्रागुक्तया । नैरपेक्ष्येण उपशमात्मकेन सत्त्वेनैव । एवं च सति मां प्राप्नोतीत्याह— संपद्यत इति । जीवं जीवत्वकारणं लिङ्गशरीरम् । श्रीटी.

**श्रीभगवानुवाच—**

**[2]मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ।**
**आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥**

(१) भाग. ११।२५।२३, ३३–३५.
(२) भाग. ११।२६।१–२.

'निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः' इत्युक्तम्, तत्र विपक्षेऽनर्थं कथयिष्यन् जीवन्मुक्तस्यापि तर्हि सङ्गो दुर्वार इत्यर्थः स्यादित्याशङ्कयोक्तानुवादपूर्वकं परिहरति सार्धाभ्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन् आत्मस्थम् आत्मन्येव नियन्तृत्वेन स्थितं परम् आनन्दरूपमात्मानं मां समुपैति सम्यक्प्राप्नोति । श्रीटी.

**गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।**
**गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।**
**वर्तमानोऽपि न पुमान्युज्यतेऽवस्तुभिर्गुणैः ॥**

न चैवंभूतस्य विषयसङ्गो नामास्तीत्याह— गुणमय्येति । गुणमयी या जीवयोनिः जीवोपाधिः तया विमुक्तो गुणेषु वर्तमानोऽपि तैर्न युज्यते सङ्गं न प्राप्नोति । अत्र हेतुः— अवस्तुभिः । नन्ववस्तुभिरप्यन्ये युज्यमाना दृश्यन्ते, तत्राऽऽह— अवस्तुत्वेन दृश्यमानेषु । श्रीटी.

## लिङ्गपुराणम्

अष्टाङ्गयोगेन मुक्तिः

**[1]योगिनः सर्वतत्त्वज्ञाः परं वैराग्यमास्थिताः ।**
**प्राणायामादिभिश्चाष्टसाधनैः सहचारिणः ॥**

प्राणायामः आदिः मुख्यः येषां तानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणि, तैरष्टसाधनैः सहचारिणः सहचरणशीलाः । शितो.

**करुणादिगुणोपेताः कृत्वाऽपि विविधानि ते ।**
**कर्माणि नरकं स्वर्गं गच्छन्त्येव स्वकर्मणा ॥**

करुणा दया आदिर्येषां तैर्गुणैः उपेताः युक्ताः इत्यर्थः । दयाद्यष्टावात्मगुणा अग्निपुराणे उक्ताः— 'दया क्षमाऽनसूया च अनायासोऽथ मङ्गलम् । अकार्पण्यास्पृहे शौचं यस्यैते स परं व्रजेत् ॥' इति । शितो.

**प्रसादाज्जायते ज्ञानं ज्ञानाद्योगः प्रवर्तते ।**
**योगेन जायते मुक्तिः प्रसादादखिलं ततः ॥**

(१) लिङ्ग. १।७।२–४.

धर्माधर्मयोर्लक्षणम्

[1]वर्णाश्रमेषु युक्तस्य स्वर्गादिसुखकारिणः ।
श्रौतस्मार्तस्य धर्मस्य ज्ञानाद्धर्मश्च उच्यते ॥
[2]धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ ।
कुशलाकुशलं कर्म धर्माधर्माविति स्मृतौ ॥
धारणार्थे महान्ह्येष धर्मशब्दः प्रकीर्तितः ।
अधारणेऽमहत्त्वे च अधर्म इति चोच्यते ॥
अत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
अधर्मश्चानिष्टफलो ह्याचार्यैरुपदिश्यते ॥
[3]विज्ञेयं श्रवणाच्छ्रौतं स्मरणात्स्मार्तमुच्यते ।
इज्यावेदात्मकं श्रौतं स्मार्तं वर्णाश्रमात्मकम् ॥
श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ।
शिष्टाचाराविरुद्धश्च स धर्मः साधुरुच्यते ॥

दानादीनि भवभक्तिसाधनानि, भक्तिः ईश्वरप्रसादकरी

[4]किंतु गुह्यतमं वक्ष्ये सर्वत्र परमेश्वरे ।
भवे भक्तिर्न संदेहस्तया युक्तो विमुच्यते ।
अयोग्यस्यापि भगवान् भक्तस्य परमेश्वरः ॥
प्रसीदति न संदेहो निगृह्य विविधं तमः ।
ज्ञानमध्यापनं होमो ध्यानं यज्ञस्तपः श्रुतम् ॥
दानमध्ययनं सर्वं भवभक्त्यै न संशयः ।
चान्द्रायणसहस्रैश्च प्राजापत्यशतैस्तथा ॥
मासोपवासैश्चान्यैर्वा भक्तिर्मुनिवरोत्तमाः ॥

गुह्यतमम् अतिशयेन गोपनीयं वक्ष्ये कथयामि । किम् ? परमेश्वरे भवे शिवे सर्वत्र सर्वभूतेषु भक्तिः सेवनं तया निर्दिष्टभक्त्या युतो विमुच्यते, अत्रेति शेषः । न संदेह इत्यग्रिमेणान्वयः । तदुक्तं कैवल्योपनिषदि– ' सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि । संपश्यन्परमं याति याति नान्येन हेतुना ॥ ' इति । शितो.

अभक्ता भगवत्यस्मिँल्लोके गिरिगुहाशये ।
पतन्ति चाऽऽत्मभोगार्थं भक्तो भावेन मुच्यते ॥

भगवति शिवे अभक्ता ये ते अस्मिल्लोके गिरि वेदवाग्विषये गुहावत् दरीवत् आशयः पतनहेत्वभिप्रायः (यस्य) ' स्वर्गकामोऽग्निष्टोमेन यजेत ' इत्यादिश्रुतिप्रतिपादितः कर्ममार्गः, तस्मिन् आत्मभोगार्थे भोगप्राप्त्याशया पतन्ति मज्जन्तीत्यर्थः । यद्वा गिरिगुहावत् आशयः गाम्भीर्यं यस्य तस्मिन् संसारे पतन्ति संसरन्तीत्यर्थः । भक्तस्तु भावेन दृढनिश्चयेन मुच्यत इत्यन्वयः । शितो.

भक्तानां दर्शनादेव नृणां स्वर्गादयो द्विजाः ।
न दुर्लभा न संदेहो भक्तानां किं पुनस्तथा ॥
ब्रह्मविष्णुसुरेन्द्राणां तथाऽन्येषामपि स्थितिः ।
भक्त्या एव मुनीनां च बलसौभाग्यमेव च ॥
भवेन च तथा प्रोक्तं संप्रेक्ष्योमां पिनाकिना ॥
[1]पापं नुदति धर्मेण धर्मे सर्वं प्रतिष्ठितम् ।
धर्मादैश्वर्यमित्येषा श्रुतिरेषा सनातनी ॥
[2]कर्मयज्ञसहस्रेभ्यस्तपोयज्ञो विशिष्यते ।
तपोयज्ञसहस्रेभ्यो जपयज्ञो विशिष्यते ॥
जपयज्ञसहस्रेभ्यो ध्यानयज्ञो विशिष्यते ।
ध्यानयज्ञात्परो नास्ति ध्यानं ज्ञानस्य साधनम् ॥
यदा समरसे निष्ठो योगी ध्यानेन पश्यति ।
ध्यानयज्ञरतस्यास्य तदा संनिहितः शिवः ॥

संनिहितः प्रत्यक्ष इत्यर्थः । शितो.

आचारः परमो धर्मः

[3]सदाचारी जपन्नित्यं ध्यायन् भद्रं समश्नुते ।
सदाचारं प्रवक्ष्यामि सम्यग्धर्मस्य साधनम् ॥
यस्मादाचारहीनस्य साधनं निष्फलं भवेत् ।
आचारः परमो धर्म आचारः परमं तपः ॥
आचारः परमा विद्या आचारः परमा गतिः ।
सदाचारवतां पुंसां सर्वत्राप्यभयं भवेत् ॥

---

(१) लिङ्ग. १।१०।७–८.
(२) लिङ्ग. १।१०।११–१४.
(३) लिङ्ग. १।१०।१६–१७, २२–२३.
(४) लिङ्ग. १।१०।३०–३७.

(१) लिङ्ग. १।७१।६७–६८.
(२) लिङ्ग. १।७५।१३–१५.
(३) लिङ्ग. १।८५।१२७–१३४.

तद्वदाचारहीनानां सर्वत्रैव भयं भवेत् ।
सदाचारेण देवत्वमृषित्वं च वरानने ॥
उपयान्ति कुयोनित्वं तद्वदाचारलङ्घनात् ।
आचारहीनः पुरुषो लोके भवति निन्दितः ।
तस्मात्संसिद्धिमन्विच्छन् सम्यगाचारवान् भवेत् ॥
दुर्वृत्तोऽशुद्धिभूयिष्ठो पापीयाञ्ज्ञानदूषकः ।
वर्णाश्रमविधानोक्तं धर्मं कुर्वीत यत्नतः ॥
यस्य यद्विहितं कर्म तत्कुर्वन्मत्प्रियः सदा ॥

आचारं निरूपयति– सदाचारमित्यादिना । शिवतो.

शास्त्रव्याख्या

'शास्त्रमित्युच्यतेऽभागं श्रुतेः कर्मसु तद्विदाः ।
मूर्धानं ब्रह्मणः सारमृषीणां कर्मणः फलम् ॥

श्रुतेः कर्मसु अभागम् अनेकदेशी( ? शः ) ब्रह्मणः वेदस्य मूर्धानं मस्तकरूपम् ऋषीणाम् अतीन्द्रियद्रष्टृणां सारं कर्मणः निष्कामकर्मणः फलं यदध्यात्मशास्त्रं तच्छास्त्रमित्युच्यते इत्यन्वयः । शिवतो.

त्याग एव मुक्तिसाधनम्

ननु स्वभावः सर्वेषां कामो दृष्टो न चान्यथा ।
श्रुतिः प्रवर्तिका तेषामिति कर्मण्यतद्विदः ॥

नन्वेवं चेत् 'अग्नीषोमीयं पशुमालभेत स्वर्गकामः' इत्यादिश्रुतीनां काम्यकर्मप्रवर्तनमनुचितमित्याशङ्क्य समाधत्ते– नन्विति । सर्वेषां कामः स्वभावो दृष्टः, तेषां श्रुतिः प्रवर्तिका न । कर्मणि अतद्विदः अन्यथा, वदन्ति इति शेषः । तदुक्तं भागवते एकादशे– 'वेदोक्तमेव कुर्वाणो निःसङ्गार्पितमीश्वरे । नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥' इति । शिवतो.

निवृत्तिलक्षणो धर्मः समर्थानामिहोच्यते ।
तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् ॥

समर्थानां विरक्तानामित्यर्थः । शिवतो.

कला संशोषमायाति कर्मणाऽन्यस्वभावतः ।
सकलस्त्रिविधो जीवो ज्ञानहीनस्त्वविद्यया ॥

कर्मणा वेदोक्तनिष्कामेन कला जीवकला संशोषमायाति । अविद्यया ज्ञानहीनः त्रिविधः अग्निमोक्तत्रिप्रकारः जीवः अन्यस्वभावतः काम्यकर्मवशेन सकल इत्यन्वयः । शिवतो.

नारकी पापकृत्स्वर्गी पुण्यकृत्पुण्यगौरवात् ।
व्यतिमिश्रेण वै जीवश्चतुर्धा संव्यवस्थितः ॥
उद्भिज्जः स्वेदजश्चैव अण्डजो वै जरायुजः ।
एवं व्यवस्थितो देही कर्मणाऽज्ञो ह्यनिर्वृतः ॥
प्रजया कर्मणा मुक्तिर्धनेन च सतां न हि ।
त्यागेनैकेन मुक्तिः स्यात्तदभावाद्भ्रमत्यसौ ॥

पापकृत् नारकी, पुण्यकृत् स्वर्गी, तृतीयो व्यतिमिश्रेण कर्मणा पुण्यपापात्मककर्मणा चतुर्धा संव्यवस्थितः अग्निमोक्तोद्भिज्जादिदेहयुक्त इत्यर्थः । शिवतो.

'सदाचाररताः शान्ताः स्वधर्मपरिपालकाः ।
सर्वांल्लोकान्विनिर्जित्य ब्रह्मलोकं व्रजन्ति ते ॥

ब्रह्मोक्तं सदाचारं कथयन्फलमाह– सदाचारेति । शिवतो.

## स्कन्दपुराणम्

ज्ञानमेव ईश्वरप्राप्तिसाधनम्

हर उवाच–

'चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च द्विजसत्तम ॥
तस्मान्मे ज्ञानिनः सर्वे प्रियाः स्युर्नात्र संशयः ।
विना ज्ञानेन मां प्राप्तुं यतन्ते ते हि बालिशाः ।
केवलं कर्मणा त्वं हि संसारात्तर्तुमिच्छसि ॥
न वेदैश्च न दानैश्च न यज्ञैस्तपसा क्वचित् ।
न शक्नुवन्ति मां प्राप्तुं मूढाः कर्मवशा नराः ॥
तस्माज्ज्ञानपरो भूत्वा कुरु कर्म समाहितः ।
सुखदुःखसमो भूत्वा सुखी भव निरन्तरम् ॥

(१) लिङ्ग. १।८६।१४–२०.

(१) लिङ्ग. १।८९।३१.
(२) स्कन्द. १।१।५।३९–४३.

प्रायश्चित्तस्य कर्तव्यता

सूत उवाच–

[1]देवानां दानवानां च मनुष्याणां विशेषतः ।
कर्मैव सुखदुःखानां हेतुभूतं न संशयः ॥
इन्द्रेण च कृतं विप्रा महद्भूतं जुगुप्सितम् ।
गुरोरवज्ञा च कृता विश्वरूपवधः कृतः ॥
गौतमस्य गुरोः पत्नी सेविता तस्य तत्फलम् ।
प्राप्तं महेन्द्रेण चिरं यस्य नास्ति प्रतिक्रिया ॥
ये हि दुष्कृतकर्माणो न कुर्वन्ति च निष्कृतिम् ।
दुर्दशां प्राप्नुवन्त्येते यथैवेन्द्रः शतक्रतुः ॥
दुष्कृतोपार्जितस्यातः प्रायश्चित्तं हि तत्क्षणात् ।
कर्तव्यं विधिवद्विप्राः सर्वपापोपशान्तये ॥
उपपातकमभ्यस्तं महापातकतां व्रजेत् ॥
ततः स्वधर्मनिष्ठां च ये कुर्वन्ति सदा नराः ।
प्रातर्मध्याह्नसायाह्ने तेषां पापं विनश्यति ।
प्राप्नुवन्त्युत्तमं लोकं नात्र कार्या विचारणा ॥

धूमः अर्चिश्च द्वौ मार्गौ धर्मस्य

[2]मासैरष्टभिरह्ना च पूर्वेण वयसाऽऽयुषा ।
तत्कर्म पुरुषः कुर्याद्येनान्ते सुखमेधते ॥
अर्चिर्धूमश्च मार्गौ द्वावाहुर्वेदान्तवादिनः ।
अर्चिषा याति मोक्षं च धूमेनाऽऽवर्तते पुनः ॥
यज्ञैरासाद्यते धूमो नैष्कर्म्येणार्चिराप्यते ।
एतयोरपरो मार्गः पाखण्ड इति कीर्त्यते ॥
यो देवान्मन्यते नैव धर्मांश्च मनुसूचितान् ।
नैतौ स याति पन्थानौ तत्त्वार्थोऽयं निरूपितः ॥

आचारः ऐहिकामुष्मिकहितकरः

[3]आचारात्फलते धर्मो ह्याचारात्स्वर्गमश्नुते ।
आचाराल्लभते ह्यायुराचारो हन्त्यलक्षणम् ॥
यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्तते ॥

(१) स्कन्द. १।१।१५।२५–३२.
(२) स्कन्द. १।२।५।१३४–१३७.
(३) स्कन्द. १।२।४१।११७–११९, १७१.

धर्मः ऐहिकामुष्मिकफलदः

यत्रापि कुर्वतो नाऽऽत्मा जुगुप्सामेति पार्थिव ।
तत्कर्तव्यमसङ्गेन यन्न गोप्यं महाजने ॥
[1]यस्मिन्काले च देशे च वयसा यादृशेन च ।
कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते ॥
तस्मात्सदा शुभं कार्यमविच्छिन्नसुखार्थिभिः ।
विच्छिद्यन्तेऽन्यथा भोगा ग्रीष्मे कुसरितो यथा ॥
यस्मात्पापेन दुःखानि तीव्राणि सुबहून्यपि ।
तस्मात्पापं न कर्तव्यमात्मपीडाकरं हि तत् ॥
इतिहासपुराणेषु वेदस्मृतिषु यच्छ्रुतम् ।
पुण्यं तेन भवेत्स्वर्गो नरकस्तद्विपर्ययात् ॥
[2]शुक्लेन पुण्येन दिवं च शुद्धां
पापेन शुद्धेन तथा तमोऽन्धम् ।
मिश्रेण स्वर्गं नरकं च याति
देहस्तथैवास्य भवेच्च यादृक् ॥
[3]ये हि धर्मं न मन्यन्ते तथा ये व्यसनैर्जिताः ।
अनुमानेन बोद्धव्यं यदेते शेषपापिनः ॥
येषां त्वन्तगतं पापं स्वर्गाद्वा ये समागताः ।
सर्वव्यसननिर्मुक्ता धर्ममेकं भजन्ति ते ॥

भवन्ति चात्र श्लोकाः–

[4]धर्मादनवमं सौख्यमधर्माद्दुःखसंभवः ।
तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विवर्जयेत् ॥
[5]लोकद्वयेऽपि यत्सौख्यं तद्धर्मात्प्रोच्यते यतः ।
धर्ममेकमतः कुर्यात्सर्वकार्यार्थसिद्धये ॥

(१) स्कन्द. १।२।५०।५५–५७, ९२–९३.
(२) स्कन्द. १।२।५०।९६.
(३) स्कन्द. १।२।५१।३५–३६.
(४) स्कन्द. १।२।५१।३७ ; वंग. १४ दनवमं (द्राज्यं धनं) विवर्ज (च वर्ज) ; संम. ३ दनवमं (द्राज्यं धनं) विवर्ज ( विसर्ज ).
(५) स्कन्द. १।२।५१।३८ ; वंग. १४ त्प्रोच्यते (त्प्राप्यते) कार्या (कामा).

[1]मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा ।
न कल्पमपि जीवेत लोकद्वयविरोधिना ॥
[2]यः कर्म धर्मसंयुक्तं मनसाऽपि विचिन्तयेत् ।
स वर्धते यथा बालः शुक्लपक्ष इवोडुराट् ॥
दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिध्यन्ति मनोरथाः ॥
धर्मवृद्धौ च वर्धन्ते सर्वभूतानि सर्वदा ।
तस्मिन्नसति हीयेत तस्माद्धर्मं विवर्धयेत् ॥
[3]आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥
[4]धर्मस्य पन्था गहनः संकीर्णो बहुशासनैः ।
तत्त्वावधारणे नास्य क्षमः कोऽपि द्विजोत्तमाः ॥
अर्थकामौ हि तन्मूलावित्थं स्थूलगती सदा ।
तेषां त्रयाणां भगवाननायासेन वृद्धिकृत् ॥
धर्मो हि भगवान्विष्णुर्धर्ममूलमिदं जगत् ।
धर्मस्य जगतश्चापि प्रभुरेष जनार्दनः ॥
पुरुषार्थमये तस्मिन्भक्तिर्यस्य प्रतिष्ठिता ।
स सर्वकामतृप्तात्मा न शोचति न काङ्क्षति ॥
[5]सर्वेषामपि वर्णानां भक्तिरेषा परा स्मृता ।
भक्त्या विरहितं कर्म न विष्णोः प्रियकारणम् ॥
[6]स्वसृष्टिवृद्धये वेधा धर्माधर्मौ ससर्ज ह ।
धर्ममेवानुतिष्ठन्तः प्राप्नुवन्ति शुभां गतिम् ॥
अधर्ममनुतिष्ठन्तो यान्ति तेऽधोगतिं नराः ।
पुण्यकर्मफलं नाको नरकस्तद्विपर्ययः ॥
[7]न धर्मेण समं मित्रम् ... ...॥

सात्त्विका राजसास्तामसाश्च धर्माः

शङ्ख उवाच—
[8]येन चित्तविशुद्धिः स्याद्यः सतामुपकारकः ।
तं विद्धि सात्त्विकं धर्मं यश्च केनाप्यनिन्दितः ॥

(१) स्कन्द. १।२।५१।३९.
(२) भार. १४. (३) स्कन्द. २।२।३८।८९.
(४) स्कन्द. २।२।४७।६–९.
(५) स्कन्द. २।४।८।४.
(६) स्कन्द. २।४।३०।२२–२३.
(७) स्कन्द. २।७।२।४.
(८) स्कन्द. २।७।२०।५३–५८.

श्रुतिस्मृत्युदितो यस्तु यदि निष्कामिको भवेत् ।
यस्तु लोकाविरुद्धोऽपि तं धर्मं सात्त्विकं विदुः ॥
चतुर्विधा हि ते धर्मा वर्णाश्रमविभागतः ।
नित्यनै( ? त्या नै )मित्तिकाः काम्या इति ते च त्रिधा मताः ॥

नित्याः प्रतिदिनं चित्तशुद्ध्यर्थमाचरणीयाः । नैमित्तिकाः निमित्तं कालादिविशेषम् उपलभ्य चित्तशुद्ध्यर्थं विहिताः । काम्याः प्रसिद्धाः । वैमाटी.

ते सर्वे स्वस्वधर्माश्च यदा विष्णोः समर्पिताः ।
तदा वै सात्त्विका ज्ञेया धर्मा भागवताः शुभाः ॥

भागवताः विष्णुसंबन्धिनः । वैमाटी.

देवतान्तरदैवत्याः सकामा राजसा मताः ।
यक्षरक्षःपिशाचादिदैवत्या लोकनिष्ठुराः ॥
हिंसात्मका निन्दिताश्च धर्मास्ते तामसाः स्मृताः ॥
[1]सत्त्वस्थाः सात्त्विकान्धर्मान्विष्णुप्रीतिकराञ्छुभान् ।
कुर्वन्त्यनीहया नित्यं ते वै भागवताः स्मृताः ॥
येषां चित्तं सदा विष्णौ जिह्वायां नाम वै विभोः ।
पादौ च हृदये येषां ते वै भागवताः स्मृताः ॥
सदाचाररता ये च सर्वेषामुपकारकाः ।
सदैव ममताहीनास्ते वै भागवताः स्मृताः ॥
येषां च शास्त्रे विश्वासो गुरौ साधुषु कर्मसु ।
ये विष्णुभक्ताः सततं ते वै भागवताः स्मृताः ॥
येषां हि संमता धर्माः शाश्वता विष्णुवल्लभाः ।
श्रुतिस्मृत्युदिता ये च ते धर्माः शाश्वता मताः ॥

प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च धर्मः

स्कन्द उवाच—
[2]शृणु ब्रह्मन् प्रवक्ष्येऽहं श्रुतं पितृमुखान्मया ।
सर्वेषामपि जीवानां सुकरं मोक्षसाधनम् ॥

(१) स्कन्द. २।७।२०।५९–६३.
(२) स्कन्द. २।९।१।१४–१९.

देवताप्रीणनसमं स्वेष्टसिद्धिमभीप्सताम् ।
नास्त्यन्यत्साधनं किंचिद्वर्णाश्रमवतामिह ॥
अप्यल्पं सुकृतं कर्म देवसंबन्धतः कृतम् ।
फलं ददाति निर्विघ्नं महदेव हि तन्नृणाम् ॥
दैवं पित्र्यं स्वधर्मश्च काम्यं कर्मापि यच्च तत् ।
देवतायास्तु संबन्धात्सद्यः स्यादिष्टसिद्धिदम् ॥
सांख्ययोगविरागादि प्रागुक्तं यच्च दुष्करम् ।
तदपि स्याद्धि सुकरमनेनैवाऽऽशु सिद्धिदम् ॥
देवस्याऽऽराधनेनैव यतः सिध्यति वाञ्छितम् ।
अतः सर्वैर्यथाशक्ति प्रीत्याऽऽराध्यः स मानवैः ॥
[1]प्रवृत्तं च निवृत्तं च द्वेधा कर्मास्ति वैदिकम् ।
यथाधिकारं विहितं पुरुषार्थोपलब्धये ॥
तत्रवेदोक्तविधिना स्वोचितस्त्रीपरिग्रहः ।
वित्तार्जनं च न्यायेन द्रव्ययज्ञाः सकामनाः ॥
वासो ग्रामे च नगरे पूर्तमिष्टं च कर्म यत् ।
प्रवृत्तं तत्तु सकलमशान्तिकृदुदीरितम् ॥
स्त्रीद्रव्ययोः परित्यागः कामलोभक्रुधां तथा ।
वनवासश्च वैराग्यं तपः क्षान्तिः शमो दमः ॥
ब्रह्मयज्ञा योगयज्ञा ज्ञानयज्ञाश्च सर्वशः ।
जपयज्ञाश्चेति मुने निवृत्तं कर्म कीर्तितम् ॥
त्रिलोक्यां गतयो धर्मे प्रवृत्तमनुतिष्ठताम् ।
स्वर्गलोकावधि मुने मनुष्याणां भवन्ति वै ॥
इन्द्रचन्द्राग्निलोकादौ स्वस्वपुण्यफलं च ते ।
भोगैश्वर्यं बहुविधमभीष्टं भुञ्जते खलु ॥
यावत्पुण्यं तावदेव भुक्त्वा तत्ते सुरास्ततः ।
क्षीणे तु सुकृते भूयः पतन्ति विवशा भुवि ॥
भोगैश्वर्यादिनाशो हि कालवेगेन जायते ।
अनिच्छतामपि मुने तेषां पुण्यक्षये सति ॥
आधिकारिकदेवानामपि ब्रह्मदिने मुहुः ।
इष्टभोगैश्वर्यनाशो जायते कालरंहसा ॥
निवृत्तधर्मनिष्ठा ये योगिनश्च तपस्विनः ।
जनादीन्यान्ति लोकांस्त्रींस्ते तु त्रैलोक्यतो बहिः ॥
तत्तल्लोकैश्वर्यभोगान् भुञ्जते ते निजेप्सितान् ।
दैनन्दिनेऽपि प्रलये वर्तन्ते ते यथासुखम् ॥
ब्रह्मणो द्विपरार्धान्ते तल्लोगैश्वर्यसंपदः ।
नश्यन्ति कालशक्त्यैव लोकास्तेषां च नारद ॥
अथैतद्द्विविधं कर्म गुणात्मकमपि द्विज ।
कृतं चेद्विष्णुसंबद्धं निर्गुणं स्यात्तदा तु तत् ॥
तत्फलं चाक्षयं स्याद्धि स्वेष्टादप्यधिकं नृणाम् ।
भक्तास्ते भगवद्धाम यान्त्यष्टावृत्तितः परम् ॥
अतो विवेकिनो नित्यं विष्णुभक्त्यन्विताः क्रियाः ।
प्रवृत्ता वा निवृत्ता वा कुर्वते सकला अपि ॥

सात्त्विको धान्ययज्ञ एव कर्तव्यः न पशुहिंसायुक्तः, यज्ञीयहिंसा वर्ज्या

[1]स्वायम्भुवान्तरे पूर्वमिन्द्रो विश्वजिदाह्वयः ।
आरम्भे महायज्ञमश्वमेधाभिधं मुने ॥
निबद्धाः पशवोऽजाद्याः क्रोशन्तस्तत्र भूरिशः ।
सर्वे देवगणाश्चापि रसलुब्धास्तदाऽऽसत ॥
क्षेमाय सर्वलोकानां विचरन्तो यदृच्छया ।
महर्षय उपाजग्मुस्तत्र भास्करवर्चसः ॥
संमानिताः सुरगणैः पाद्यार्घ्यस्वागतादिभिः ।
ते बृहन्मुनयोऽपश्यन्मेध्यांस्तान्क्रोशतः पशून् ॥
सात्त्विकानामपि च तं देवानां यज्ञविस्तरम् ।
हिंसामयं समालोक्य तेऽत्याश्चर्यं हि लेभिरे ॥
धर्मव्यतिक्रमं दृष्ट्वा कृपया ते द्विजोत्तमाः ।
महेन्द्रप्रमुखानूचुर्देवान्धर्मधियस्ततः ॥

महर्षय ऊचुः—

देवैश्च ऋषिभिः साकं महेन्द्रास्मद्वचः शृणु ।
यथास्थितं धर्मतत्त्वं वदामो हि सनातनम् ॥
यूयं जगत्सर्गकाले ब्रह्मणा परमेष्ठिना ।
सत्त्वेन निर्मिताः स्थो वै चतुष्पाद्धर्मधारकाः ॥
रजसा तमसा चासौ मनूंश्चैव नराधिपान् ।
असुराणां चाधिपतीनसृजद्धर्मधारिणः ॥

(१) स्कन्द. २।९।३।१०–२५.

(१) स्कन्द. २।९।६।४–४९.

सर्वेषामथ युष्माकं यज्ञादिविधिबोधकम् ।
ससर्ज श्रेयसे वेदं सर्वाभीष्टफलप्रदम् ॥
अहिंसैव परो धर्मस्तत्र वेदेऽस्ति कीर्तितः ।
साक्षात्पशुवधो यज्ञे नहि वेदस्य संमतः ॥
चतुष्पादस्य धर्मस्य स्थापने ह्येव सर्वथा ।
तात्पर्यमस्ति वेदस्य न तु नाशेऽस्य हिंसया ॥
रजस्तमोदोषवशात्तथाऽप्यसुरपा नृपाः ।
मेध्येनाजेन यष्टव्यमित्यादौ मतिजाड्यतः ।
छागादिमर्थं बुबुधुर्व्रीह्यादिं तु न ते विदुः ॥
सात्त्विकानां तु युष्माकं वेदस्यार्थो यथा स्थितः ।
ग्रहीतव्योऽन्यथा नैव तादृशी च क्रियोचिता ॥
यादृशो हि गुणो यस्य स्वभावस्तस्य तादृशः ।
स्वस्वभावानुसारेण प्रवृत्तिः स्याच्च कर्मणि ॥
सात्त्विकानां हि वो देवः साक्षाद्विष्णू रमापतिः ।
अहिंसयज्ञेऽस्ति ततोऽधिकारस्तस्य तुष्टये ॥
प्रत्यक्षपशुमालभ्य यज्ञस्याऽऽचरणं तु यत् ।
धर्मः स विपरीतो वै युष्माकं सुरसत्तमाः ॥
रजस्तमोगुणवशादासुरीं संपदं श्रिताः ।
युष्माकं याजका ह्येते सन्त्यवेदविदो यथा ॥
तत्सङ्गादेव युष्माकं सांप्रतं व्यत्ययो मतेः ।
जातस्तेनेदृशं कर्म प्रारब्धमिति निश्चितम् ॥
राजसानां तामसानामासुराणां तथा नृणाम् ।
यथागुणं भैरवाद्या उपास्याः सन्ति देवताः ॥
स्वगुणानुगुणात्मीयदेवतातुष्टये भुवि ।
हिंस्रयज्ञविधानं यत्तेषामेवोचितं हि तत् ॥
तत्रापि विष्णुभक्ता ये दैत्यरक्षोनरादयः ।
तेषामप्युचितो नास्ति हिंस्रयज्ञः कुतस्तु वः ॥
यज्ञशेषो हि सर्वेषां यज्ञकर्मानुतिष्ठताम् ।
अनुज्ञातो भक्षणार्थं निगमेनैव वर्तते ॥
सात्त्विकानां देवतानां सुरामांसाशनं क्वचित् ।
अस्माभिस्त्वीक्षितं नैव न श्रुतं च सतां मुखात् ॥
तस्माद्व्रीहिभिरेवासौ यज्ञः क्षीरेण सर्पिषा ।
मेध्यैरन्नरसैश्चान्यैः कार्यो न पशुहिंसया ॥

तत्रापि बीजैर्यष्टव्यमजसंज्ञामुपागतैः ।
त्रिवर्षकालमुषितैर्न येषां पुनरुद्गमः ॥
अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः ।
ब्रह्मचर्यं तथा सत्यमदम्भश्च क्षमा धृतिः ॥
सनातनस्य धर्मस्य रूपमेतदुदीरितम् ।
तदतिक्रम्य यो वर्तेद्धर्मघ्नः स पतत्यधः ॥

स्कन्द उवाच–

इत्थं वेदरहस्यज्ञैर्महामुनिभिरादरात् ।
बोधिता अपि सत्प्रीत्या स्वप्रतिज्ञाविघाततः ।
तद्वाक्यं जगृहुर्नैव तत्प्रामाण्यविदोऽपि ते ॥
महद्व्यतिक्रमात्तर्हि मानक्रोधमदादयः ।
विविशुस्तेष्वधर्मस्य वंश्याश्छिद्रगवेषिणः ॥
अजश्छागो न बीजानीत्यादिवादिषु तेष्वथ ।
विमनःस्वृषिवर्येषु पुनस्तान्बोधयत्सु च ॥
राजोपरिचरः श्रीमांस्तत्रैवाऽऽगाद्यदृच्छया ।
तेजसा द्योतयन्नाशा इन्द्रस्य परमः सखा ॥
तं दृष्ट्वा सहसाऽऽयान्तं वसुं ते त्वन्तरिक्षगम् ।
ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयम् ॥
एष भूमिपतिः पूर्वं महायज्ञान्सहस्रशः ।
चक्रे सात्वततन्त्रोक्तविधिनाऽऽरण्यकेन च ॥
येषु साक्षात्पशुवधः कस्मिंश्चिदपि नाभवत् ।
न दक्षिणानुकल्पश्च नाप्रत्यक्षसुरार्चनम् ॥
अहिंसाधर्मरक्षाभ्यां ख्यातोऽसौ सर्वतो नृपः ।
अग्रणीर्विष्णुभक्तानामेकपत्नीमहाव्रतः ॥
ईदृशो धार्मिकवरः सत्यसंधश्च वेदवित् ।
कथंचिन्नान्यथा ब्रूयाद्वाक्यमेष महान्वसुः ॥
एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा ।
अपृच्छन्सहसाऽभ्येत्य वसुं राजानमुत्सुकाः ॥

देवमहर्षय ऊचुः–

भो राजन्केन यष्टव्यं पशुनाऽऽहोस्विदौषधैः ।
एतं नः संशयं छिन्धि प्रमाणं नो भवान्मतः ॥

स्कन्द उवाच–

स तान्कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः ।
कस्य वः को मतः पक्षो ब्रूत सत्यं समाहिताः ॥

महर्षय ऊचुः–
धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप ।
देवानां तु पशुः पक्षो मतं राजन्वदाऽऽत्मनः ॥
स्कन्द उवाच–
देवानां तु मतं ज्ञात्वा वसुस्तत्पक्षसंश्रयात् ।
छागादिपशुनैवेज्यमित्युवाच वचस्तदा ॥
एवं हि मानिनां पक्षमसन्तं स उपाश्रितः ।
धर्मज्ञोऽप्यवदन्मिथ्या वेदं हिंसापरं नृपः ॥
तस्मिन्नेव क्षणे राजा वाग्दोषादन्तरिक्षतः ।
अधः पपात सहसा भूमिं च प्रविवेश सः ॥
महतीं विपदं प्राप भूमिमध्यगतो नृपः ।
स्मृतिस्त्वेनं न प्रजहौ तदा नारायणाश्रयात् ॥
मोचयित्वा पशून्सर्वांस्ततस्ते त्रिदिवौकसः ।
हिंसाभीता दिवं जग्मुः स्वाश्रमांश्च महर्षयः ॥

पशुहिंसायुक्तयज्ञेतिहासः

सावर्णिरुवाच–
[1]महर्षिवारितैर्देवैस्त्यक्ते हिंसामये मखे ।
पुनः कथं संप्रवृत्ता मखाः सर्वत्र तादृशाः ॥
देवेष्वृषिषु भूतेषु प्राचीनाधुनिकेषु च ।
सनातनः शुद्धधर्मो विपर्यासं कथं गतः ॥
अत्र मे संशयो भूयान्संजातोऽद्य षडानन ।
त्वं सर्वशास्त्रतत्त्वज्ञस्तमपाकर्तुमर्हसि ॥
स्कन्द उवाच–
कालो बलीयान्बलिनां भिद्यन्ते तेन बुद्धयः ।
कामक्रोधरसास्वादलोभमानवतां मुने ॥
अतिक्रमेण महतां यथार्थहितभाषिणाम् ।
क्रोधमानवशात्पुंसां नश्यन्त्येव च सद्धियः ॥
अकार्यमपि ते कर्तुं तदानीं तु बुधा अपि ।
प्रवर्तन्तेऽनुतप्यन्ते बम्भ्रम्यन्तेऽथ संसृतौ ॥
तदा तु वृद्धा ऋषयस्तान् दृष्ट्वाऽनशनाद्धतान् ।
मनुभिः सह वेदोक्तमापद्धर्ममबोधयन् ॥

(१) स्कन्द. २।९।८।१–६.

[1]मुनयः प्रायशस्तत्र क्षुधा व्याकुलितेन्द्रियाः ।
परोक्षवादवेदार्थान्विपरीतान्प्रपेदिरे ॥
अर्थं चाजादिशब्दानां मुख्यं छागादिमेव ते ।
बुबुधुश्चाथ ते प्राहुर्यज्ञान् कुरुत भो द्विजाः ॥
या वेदविहिता हिंसा न सा हिंसाऽस्ति दोषदा ।
उद्दिश्य देवान्पितॄंश्च ततो घ्नत पशूञ्छुभान् ॥
प्रोक्षितं देवताभ्यश्च पितृभ्यश्च निवेदितम् ।
भुञ्जत स्वेप्सितं मांसं स्वार्थं तु घ्नत मा पशून् ॥
ततो देवर्षिभूपाला नराश्च स्वस्वशक्तितः ।
चक्रुस्तैर्बोधिता यज्ञानृते ह्यैकान्तिकान् हरेः ॥
गोमेधमश्वमेधं च नरमेधमुखान्मखान् ।
चक्रुर्यज्ञावशिष्टानि मांसानि बुभुजुश्च ते ॥
विनष्टायाः श्रियः प्राप्त्यै केचिद्यज्ञांश्च चक्रिरे ।
स्त्रीपुत्रमन्दिराद्यर्थं केचिच्च स्वीयवृत्तये ॥
महायज्ञेष्वशक्तास्तु पितॄनुद्दिश्य भूरिशः ।
निहत्य श्राद्धेषु पशून्मांसान्यादंस्तथाऽऽदयन् ॥
केचित्सरित्समुद्राणां तीरेष्वेवावसञ्जनाः ।
मत्स्याञ्जालैरुपादाय तदाहारा बभूविरे ॥
स्वगृहागतशिष्टेभ्यः पशूनेव निहत्य च ।
निवेदयामासुरेते गोच्छागप्रमुखान्मुने ॥
सजातीयविवाहानां नियमश्च तदा क्वचित् ।
नाभवद्धर्मसांकर्याद्विप्तवेश्माद्यभावतः ॥
ब्राह्मणाः क्षत्रियादीनां क्षत्राद्या ब्रह्मणां सुताः ।
उपयेमिरे कालगत्या स्वस्ववंशविवृद्धये ॥
इत्थं हिंसामया यज्ञाः संप्रवृत्ता महापदि ।
धर्मस्त्वाभासमात्रोऽस्थात्स्वयं तु श्रियमन्वगात् ॥
अधर्मः सान्वयो लोकांस्त्रीनपि व्याप्य सर्वतः ।
अवर्धतात्पकालेन दुर्निवार्यो बुधैरपि ॥
दरिद्राणामथैतेषामपत्यानि तु भूरिशः ।
तेषां च वंशविस्तारो महाँल्लोकेष्ववर्धत ॥
विद्वांसस्तत्र ये जातास्ते तु धर्मं तमेव हि ।
मेनिरे मुख्यमेवाथ ग्रन्थांश्चक्रुश्च तादृशान् ॥

(१) स्कन्द. २।९।९।१२–३५.

ते परंपरया ग्रन्थाः प्रामाण्यं प्रतिपेदिरे ।
आद्ये त्रेतायुगे ह्रीत्थमासीद्धर्मस्य विप्लवः ॥
ततःप्रभृति लोकेषु यज्ञादौ पशुहिंसनम् ।
बभूव सत्ये तु युगे धर्म आसीत्सनातनः ॥
कालेन महता सोऽपि सह देवैः सुराधिपः ।
आराध्य संपदं प्राप वासुदेवं प्रभुं मुने ॥
ततो धर्मनिकेतस्य श्रीपतेः कृपया हरेः ।
यथापूर्वं च सद्धर्मस्त्रिलोक्यां संप्रवर्तत ॥
तत्रापि केचिन्मुनयो नृपा देवाश्च मानुषाः ।
कामक्रोधरसास्वादलोभोपहतसद्धियः ।
तमापद्धर्ममद्यापि प्राधान्येनैव मन्वते ॥

भगवद्भक्तिमहिमा, स्वधर्मस्वरूम्, धर्मस्थानानि

एकान्तिनो भागवता जितकामादयस्तु ये ।
आपद्यपि न तेऽगृह्णंस्तं तदा किमुतान्यदा ॥
इत्थं ब्रह्मणादिकल्पे हिंस्रयज्ञप्रवर्तनम् ।
यथाऽऽसीत्तन्मयाऽऽख्यातमापत्काल-
वशाद्भुवि ॥
[1]वर्णानामाश्रमाणां च सदाचारः पृथक्पृथक् ।
सामान्यः सविशेषश्च स्वधर्मः स उदीर्यते ॥
तस्माच्चातुर्वर्ण्यजनैर्यथोक्तविधिसंस्थितैः ।
भवितव्यं प्रयत्नेन त्रे( ? मे )तव्यं
च निषेधतः ॥
[2]वर्णी यतिश्च धर्मस्थो ब्रह्मलोकमुपैति वै ।
ऋषिलोकं वनस्थश्च गृहस्थः स्वर्गमाप्नुयात् ॥
भक्त्या सहैताञ्छ्रीविष्णोराचरेयुस्तु ये जनाः ।
ते तु सर्वेऽपि देहान्ते विष्णुलोकमवाप्नुयुः ॥
[3]शौचं तपो दया सत्यमिति धर्मपदानि च ।
चतुर्भ्यो वदनेभ्यश्च चत्वारि ससृजे ततः ॥
[4]त्रिभिः स्वधर्मप्रमुखैर्युक्ता भक्तिरियं मुने ।
धर्म एकान्तिक इति प्रोक्तो भागवतश्च सः ॥

साक्षाद्भगवतः सङ्गात्तद्भक्तानां च वेदशाम् ।
धर्मो ह्येकान्तिकः पुंभिः प्राप्यते नान्यथा
क्वचित् ॥
नैतादृशं परं किंचित्साधनं हि मुमुक्षताम् ।
निःश्रेयसकरं पुंसां सर्वाभद्रविनाशनम् ॥
एकान्तधर्मसिद्ध्यर्थं क्रियायोगपरो भवेत् ।
पुमान्स्याद्येन नैष्कर्म्यं कर्मणां मुनिसत्तम ॥

धर्म एव परलोकसहायः

[1]दाराः पुत्रा धनं वा
परिजनसहितो बन्धुवर्गः प्रियो वा
माता भ्राता पिता वा
श्वशुरकुलजना भृत्य ऐश्वर्यवित्ते ।
विद्या रूपं विमलभवनं
यौवनं यौवतं वा
सर्वं व्यर्थं मरणसमये
धर्म एकः सहायः ॥
[2]पालनात्पोषणान्नृणां धर्मो भवति वै ध्रुवम् ॥

सदाचार आचरणीयः

युधिष्ठिर उवाच—
[3]पाराशर्य समाख्याहि सदाचारं च मे प्रभो ।
आचाराद्धर्ममाप्नोति आचाराल्लभते फलम् ।
आचाराच्छ्रियमाप्नोति तदाचारं वदस्व मे ॥
( व्यास उवाच— )
[4]सदाचारो हि सर्वार्हो नाऽऽचाराद्विच्युतः पुनः ।
तस्माद्विप्रेण सततं भाव्यमाचारशीलिना ॥

तर्हि किं साधारण्येन सर्व एव ब्राह्मणो जगद्गतं वस्त्वर्हति ? नेत्याह— सदाचार इति । यस्मादेवं तस्मात् ।
रामा.

(१) स्कन्द. २।९।२०।११, ५५.
(२) स्कन्द. २।९।२३।४२–४३.
(३) स्कन्द. २।९।२४।३९.
(४) स्कन्द. २।९।२५।६४–६७.

(१) स्कन्द. ३।२।१ ( मङ्गलश्लोकः ).
(२) स्कन्द. ३।२।१।९५.
(३) स्कन्द. ३।२।५।४.
(४) स्कन्द. ३।२।५।११–१२, ४।३५।२४.

[1]विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने ।
विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥

सदाचारस्य लक्षणमाह– विद्वेषेति । यं क्रियाकलापम् । धर्ममूलं पुण्यस्य हेतुम् । रामा.

[2]लक्षणैः परिहीनोऽपि सम्यगाचारतत्परः ।
श्रद्धालुरनसूयुश्च नरो जीवेत्समाः शतम् ॥

सदाचारानुष्ठानस्य फलमाह– लक्षणैरिति । अनसूयुः गुणेषु दोषाविष्करणहीनः । समाः इत्यत्यन्तसंयोगे द्वितीया । रामा.

श्रुतिस्मृतिभ्यामुदितं स्वेषु स्वेषु च कर्मसु ।
सदाचारं निषेवेत धर्ममूलमतन्द्रितः ॥

उदितं कथितम् । रामा.

दुराचाररतो लोके गर्हणीयः पुमान् भवेत् ।
व्याधिभिश्चाभिभूयेत सदाऽल्पायुः सुदुःखभाक् ॥

सदाचारं स्तुत्वा दुराचारं निन्दति– दुराचाररत इति । द्वेषरागयुक्ताः पुरुषाः अधर्मस्य मूलं यं क्रियाकलापं कुर्वन्ति स दुराचारः । रामा.

यमनियमरूपो धर्मोऽनुष्ठेयः

त्याज्यं कर्म पराधीनं कार्यमात्मवशं सदा ।
दुःखी यतः पराधीनः सदैवाऽऽत्मवशः सुखी ॥

परायत्तं धर्म्यमपि त्याज्यमित्याह– त्याज्यमिति । रामा.

यस्मिन् कर्मण्यन्तरात्मा क्रियमाणे प्रसीदति ।
तदेव कर्म कर्तव्यं विपरीतं न च क्वचित् ॥

स्वाधीनमपि कर्म न सर्वं कार्यमित्याह– यस्मिन्निति । अन्तरात्मा मनः । तथा च मनुः– 'मनःपूतं समाचरेत्' (मस्मृ. ६।४६) इति । रामा.

[3]प्रथमं धर्मसर्वस्वं प्रोक्ता यन्नियमा यमाः ।
अतस्तेष्वेव वै यत्नः कर्तव्यो धर्ममिच्छता ॥

यत् यस्मात् धर्मसर्वस्वं प्रथमं यमा नियमाश्च प्रोक्ताः अतः तेष्वेव यमनियमेष्वेव धर्ममिच्छता यत्नः कर्तव्य इत्यर्थः । प्रोक्तमिति क्वचित्पाठः । रामा.

[1]सत्यं क्षमाऽऽर्जवं ध्यानमानृशंस्यमहिंसनम् ।
दमः प्रसादो माधुर्यं मृदुतेति यमा दश ॥

तत्र क्रममनादृत्य श्लोकाभ्यां यमनियमावाह– सत्यमिति द्वाभ्याम् । सत्यं यथादृष्टस्य यथाश्रुतस्य वा आत्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक् सत्यमुच्यते । क्षमा आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता । आर्जवं मृदुता अवक्रतेति यावत् । ध्यानं शिवस्य विष्णोर्वा चिन्तनम् । आनृशंस्यम् अमारात्मकता । अहिंसा प्राणिमात्राणामपीडा । दमः बाह्येन्द्रियोपशमः इन्द्रियमात्रस्य वा । प्रसादः प्रसन्नता स्वच्छतेति यावत् । मृदुता कोमलता अकाठिन्यमिति यावत् । एते दश यमाः । रामा.

[2]शौचं स्नानं तपो दानं मौनेज्याध्ययनं व्रतम् ।
उपोषणोपस्थदण्डौ दशैते नियमाः स्मृताः ॥

शौचं द्विविधं बाह्याभ्यन्तरभेदेन । तत्र बाह्यं मृज्जलादिना, अन्तः भावशुद्ध्या । स्नानं गङ्गादौ मज्जनादि । तपः कृच्छ्रचान्द्रायणादि । दानं द्रविणादेः संत्यागः । मौनं वृथावाचामनुच्चारणम् । इज्या पञ्चयज्ञाद्यनुष्ठानम् । अध्ययनं वेदपाठः । व्रतं चातुर्मास्यादि । उपोषणम् एकादश्याद्युपवासः । उपस्थदण्डः परदारादिपराङ्मुखता । एते दश नियमाः स्मृताः । रामा.

[3]कामं क्रोधं मदं मोहं मात्सर्यं लोभमेव च ।
अमून् षड्वैरिणो जित्वा सर्वत्र विजयी भवेत् ॥

उपादेयकर्तव्यतामुक्त्वा हेयनिरोधनं दर्शयति– काममित्येकेन । रामा.

(१) स्कन्द. ३।२।५।१२–१३ विद्वांसस्तं (सद्भियस्तं) : ४।३५।२५.
(२) स्कन्द. ३।२।५।१३–१८, ४।३५।२६–३०.
(३) स्कन्द. ३।२।५।१८–१९ प्रोक्ता (प्रोक्तं) : ४।३५।३१.

(१) स्कन्द. ३।२।५।१९–२०, ४।३५।३२.
(२) स्कन्द. ३।२।५।२०–२१ दण्डौ (दण्डो) : ४।३५।३३.
(३) स्कन्द. ३।२।५।२१–२२ मदं (दमं) : ४।३५।३४.

परलोकसहायो धर्म एव संचयनीयः

[1]शनैः शनैः संचिनुयाद्धर्मं वल्मीकशृङ्गवत् ।
परपीडामकुर्वाणः परलोकसहायिनम् ॥

वल्मीकशृङ्गं वामलूरकूटं यथा वल्मीककीटाः क्रमेण संवर्धयन्ति तथा कायवाङ्मनोभिः परपीडामकुर्वाणः शनैः शनैः परलोकसहायभूतं धर्मं संचिनुयात् वर्धयेदित्यर्थः । रामा.

[2]धर्म एव सहायी स्यादमुत्र न परिच्छदः ।
पितृमातृसुतभ्रातृयोषिद्बन्धुजनादिकः ॥

धर्मस्यैव सहायित्वं प्रत्यक्षमवलम्ब्याऽऽह– धर्म एवेति । परिच्छदः करितुरगप्रासादादिः । बन्धुः प्रीतिभाक् । आदिपदेन दासादयो गृह्यन्ते । रामा.

[3]जायते चैकलः प्राणी प्रम्रियेत तथैकलः ।
एकलः सुकृतं भुङ्क्ते भुङ्क्ते दुष्कृतमेकलः ॥

एक एव एकलः । स्वार्थे लः । रामा.

[4]देहं पञ्चत्वमापन्नं त्यक्त्वा कौ काष्ठलोष्ठवत् ।
बान्धवा विमुखा यान्ति धर्मो यान्तमनुव्रजेत् ॥

'धर्म एव सहायी स्यात्' इत्येतद्विवृणोति–देहमिति । रामा.

[5]कृती संचिनुयाद्धर्मं ततोऽमुत्र सहायिनम् ।
धर्मं सहायिनं लब्ध्वा संतरेद्दुस्तरं तमः ॥

ननु यथा धर्मोऽनुगच्छति तथा पापमपि । सत्यम् । तत्तु न कर्तव्यमित्याशयेनाऽऽह– कृतीति । तमः दुःखं संसारं वा अज्ञानं वा, धर्मानुष्ठानात्सत्त्वशुद्ध्या ज्ञानोत्पत्तेः । रामा.

(१) स्कन्द. ३।२।५।२२–२३ पूर्वार्धे (शनैः संचिनुयाद्धर्मं वल्मीकं शृङ्गवान्यथा । ) : ४।३५।३५.

(२) स्कन्द. ३।२।५।२३–२४ न परिच्छदः (परिरक्षितः) नादिकः (नाधिकः) : ४।३५।३६.

(३) स्कन्द. ३।२।५।२४–२५ प्रम्रियेत (म्रियते च) : ४।३५।३७.

(४) स्कन्द. ३।२।५।२५–२६ देहं (देहे) पञ्चं त्यक्त्वा कौ (पञ्चे त्यक्त्वैकं) : ४।३५।३८.

(५) स्कन्द. ३।२।५।२६–२७ कृती (अतः) मं ततोऽमुत्र (मंमत्रामुत्र) : ४।३५।३९.

वेदोक्तो धर्मः अहिंसारूपः अनुष्ठेयः

[1]वेदोक्तं विहितं कर्म नित्यं कुर्यादतन्द्रितः ।
यदि कुर्याद्यथाशक्ति प्राप्नुयात्सद्गतिं पराम् ॥

[2]न धर्मात्परमस्तीह तपो नानशनात्परम् ॥

राजोवाच–

[3]अहिंसा परमो धर्मो अहिंसा च परं तपः ।
अहिंसा परमं ज्ञानमहिंसा परमं फलम् ॥
तृणेषु चैव वृक्षेषु पतङ्गेषु नरेषु च ।
कीटेषु मत्कुणाद्येषु अजाश्वेषु गजेषु च ॥
लूतासु चैव सर्पेषु महिष्यादिषु वै तथा ।
जन्तवः सदृशा विप्राः सूक्ष्मेषु च महत्सु च ॥
कथं यूयं प्रवर्तध्वे विप्रा हिंसापरायणाः ।
तच्छ्रुत्वा वज्रतुल्यं हि वचनं च द्विजोत्तमाः ॥
प्रत्यूचुर्वाडवाः सर्वे क्रोधरक्तेक्षणा दृशा ॥

ब्राह्मणा ऊचुः–

अहिंसा परमो धर्मः सत्यमेतत्त्वयोदितम् ।
परं तथापि धर्मोऽस्ति शृणुष्वैकाग्रमानसः ॥
या वेदविहिता हिंसा सा न हिंसेति निर्णयः ।
शस्त्रेणाऽऽहन्यते यच्च पीडा जन्तुषु जायते ।
स एवाधर्म एवास्ति लोके धर्मविदां वर ॥
वेदमन्त्रैर्विहन्यन्ते विना शस्त्रेण जन्तवः ।
जन्तुपीडाकरा नैव सा हिंसा सुखदायिनी ॥
परोपकारः पुण्याय पापाय परपीडनम् ॥
वेदोदितां विधायापि हिंसां पापैर्न लिप्यते ॥

नित्यं सत्कर्म कर्तव्यम्

[4]सदा सत्कर्म सेवेत दुष्कर्म सततं त्यजेत् ।
पुण्यं सुखार्थी कुर्वीत दुःखार्थी पापमाचरेत् ॥

श्रुतिस्मृतिविहितो धर्मोऽनुष्ठेयः

ऋषभ उवाच–

[5]श्रुतिस्मृतिपुराणेषु प्रोक्तो धर्मः सनातनः ।
वर्णाश्रमानुरूपेण निषेव्यः सर्वदा जनैः ॥

(१) स्कन्द. ३।२।६।४९. (२) स्कन्द. ३।२।२६।७.

(३) स्कन्द. ३।२।३६।६४–७३.

(४) स्कन्द. ३।३।३।१११.

(५) स्कन्द. ३।३।११।१७.

[1]आयुर्विनश्यत्ययशो विवर्धते
भाग्यं क्षयं यात्यतिदुर्गतिं व्रजेत् ।
स्वर्गाच्च्यवन्ते पितरः पुरातना
धर्मव्यपेतस्य नरस्य निश्चितम् ॥

[2]लोकसृष्टिप्रवाहार्थं स्वयमेव प्रजापतिः ।
धर्माधर्मौ ससर्जाग्रे स्ववक्षःपृष्ठभागतः ॥
धर्ममेवानुतिष्ठन्तः पुण्यं विन्दन्ति तत्फलम् ।
अधर्ममनुतिष्ठन्तस्ते पापफलभोगिनः ॥
पुण्यकर्मफलं स्वर्गो नरकस्तद्विपर्ययः ॥

[3]श्रद्धाबीजो विप्रपादाम्बुसिक्तः
शाखा विद्यास्ताश्चतस्रो दशापि ।
पुष्पाण्यर्था द्वे फले स्थूलसूक्ष्मे
मोक्षः कामो धर्मवृक्षोऽयमीड्यः ॥

वृक्षरूपेण धर्मं स्तौति– श्रद्धेति । अयं श्रुतिस्मृतिभ्यां प्रतिपादितो धर्मवृक्षः ईड्यः स्तुत्यः सेव्य इति यावदित्यन्वयः । कथंभूतः ? श्रद्धा आस्तिक्यबुद्धिः बीजं यस्य सः । पुनः कथंभूतः ? ब्राह्मणचरणजलैः सिक्तः मीढः क्षरित इति यावत् । पुनः कथंभूतः ? यस्य धर्मवृक्षस्य ताः प्रसिद्धाः चतस्रो दश चतुर्दशसंख्यकाः शिक्षाकल्पज्योतिश्छन्दोनिरुक्तव्याकरण–ऋग्यजुःसामाथर्वमीमांसान्यायपुराणधर्मशास्त्रलक्षणाः अपिशब्दादायुर्वेदधनुर्वेदगान्धर्ववेदार्थशास्त्रलक्षणाश्च (विद्याः) शाखाः स्कन्धाः (यस्य ?) सः । तदुक्तं वैष्णवे– 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥' इति । पुनः कीदृशः ? यस्य धर्मवृक्षस्यार्था न्यायोपार्जितधनानि पुष्पाणि कुसुमानि सः । पुनः कथंभूतः ? यस्य धर्मवृक्षस्य स्थूलसूक्ष्मे द्वे फले सः । के ते ? तत्राऽऽह– मोक्षः काम इति । सूक्ष्मं फलं मोक्षः स्थूलं फलं काम इत्यर्थः । रामा.

(१) स्कन्द. ३।३।१५।३५.
(२) स्कन्द. ३।३।२१।२४–२६.
(३) स्कन्द. ४।३।९५.

आचारः परमो धर्मः

[1]आचारः परमो धर्म आचारः परमं तपः ।
आचाराद्वर्धते ह्यायुराचारात्पापसंक्षयः ॥

[2]विश्वेशानुग्रहे हेतुः सदाचारो मतो नृणाम् ।
श्रुतिस्मृतिभ्यामुदितं तस्मात्तमनुसंश्रयेत् ॥

तं सदाचारम् । रामा.

[3]वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन्यथाशक्ति प्राप्नुयात्सद्गतिं पराम् ॥

[4]यथैवाऽऽत्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥
सुखं वा यदि वा चान्यद्यत्किंचित्क्रियते परे ।
तत्कृतं हि पुनः पश्चात्सर्वमात्मनि संभवेत् ॥
न क्लेशेन विना द्रव्यमर्थहीने कुतः क्रियाः ।
क्रियाहीने कुतो धर्मो धर्महीने कुतः सुखम् ॥
सुखं हि सर्वैराकाङ्क्ष्यं तच्च धर्मसमुद्भवम् ।
तस्माद्धर्मोऽत्र कर्तव्यश्चातुर्वर्ण्येन यत्नतः ॥

चतुर्वर्णाः (? चत्वारो वर्णाः) एव चातुर्वर्ण्यम्, तेन । रामा.

न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम् ॥

[5]अन्तराया भवन्त्येव धर्मस्यापि पदे पदे ।
तथापि न निजो धर्मो धर्मधीभिर्विमुच्यते ॥

तर्हि विघ्नशङ्कया धर्मस्त्याज्य एव, नेत्याह– अन्तराया इति । 'श्रेयांसि बहुविघ्नानि' इति न्यायादित्यर्थः । रामा.

अधर्मिणः समेधन्ते धनधान्यसमृद्धिभिः ।
अधर्मादेव च परं समूलं यान्त्यधोगतिम् ॥

विपक्षे बाधकमाह– अधर्मिण इति । परं केवलं पश्चादिति वा । रामा.

(१) स्कन्द. ४।३५।१५.
(२) स्कन्द. ४।३५।१४६.
(३) स्कन्द. ४।३८।४२.
(४) स्कन्द. ४।४०।२४–२८.
(५) स्कन्द. ४।४३।३९–४०.

[1]यावद्धर्मे स्थिरा बुद्धिर्यावद्धर्मे स्थिरं मनः ।
तावद्विघ्नोदयः क्वास्ति विपद्यपि रवे नृपु ॥

विपद्यपि आपत्कालेऽपि । रामा.

ईश्वरः कर्मफलदाता

[2]दक्षो दक्षोऽपि तत्रैव शंभोर्मायाविमोहितः ।
प्रोवाच च भृशं क्रुद्धः का चिन्ता तव मे क्रतोः ॥

दक्षोऽपि निपुणोऽपि चतुरोऽपीति यावत् । †वचनाग्रहणे हेतुमाह– शंभोरिति । रामा.

क्रतुमुख्यानि सर्वाणि यानि कर्माणि सर्वतः ।
तानि सिध्यन्ति नियतं यथार्थकरणादिह ॥
अयथार्थविधानेन सिध्येत्कर्मापि नेशितुः ।
स्वकर्मसिद्धये चाथ सर्व एव हि चेश्वरः ॥
ईश्वरः कर्मणां साक्षी यत्त्वयाऽपीति भाषितम् ।
तत्तथाऽस्तु परं साक्षी नार्थं दद्याच्च कुत्रचित् ॥
जडानि सर्वकर्माणि न फलन्तीश्वरं विना ।
यदुक्तं भवता तत्राप्यहो दृष्टान्तयाम्यहम् ॥
जडान्यपि च बीजानि कालं संप्राप्य चाऽऽत्मनः ।
अङ्कूरयन्ति कालाच्च पुष्प्यन्ति च फलन्ति च ॥
विनाऽपीशं तथा कर्म स्वयं कालात्फलत्यहो ।
किमीश्वरेण तेनात्र महा(ऽ)मङ्गलमूर्तिना ॥

महामङ्गलमूर्तिना सर्वमङ्गलस्वरूपेणेति वास्तवार्थः । रामा.

दधीचिरुवाच–

यथार्थकरणात्सिद्धमपि कार्यं कदाचन ।
ईश्वरप्रातिकूल्याच्च सिद्धमेवाऽऽशु नश्यति ॥

'क्रतुमुख्यानि' इत्यत्र( ? इति यदुक्तं ) तदुत्तरमाह– यथार्थेति । रामा.

ईश्वरेच्छाबलात्कर्म कृतमप्यविधानतः ।
संसिध्येत्तदधीनाश्च कथं सर्वे इहेश्वराः ॥

† 'तथेश्वरं विना यज्ञः श्मशानमिव लक्ष्यते' इति दधीच्युक्तवचनाग्रहणे इत्यर्थः ।

(१) स्कन्द. ४।४६।७.
(२) स्कन्द. ४।८७।९४–१०६.

विपक्षे बाधकमाह– तदधीनाश्चेति । रामा.

सामान्यसाक्षिवच्चेशः सर्वेषां सर्वकर्मणाम् ।
साक्षी भवेदसंदिग्धः फलस्य प्रतिभूरपि ॥

'ईश्वरः' इत्यादेरुत्तरमाह– सामान्येति । असंदिग्धः संदेहरहितः । प्रतिभूः दाता । रामा.

भूजलादिस्वरूपेण बीजमाविश्य सर्वकृत् ।
स्वयं कालस्वरूपेण विदध्यादङ्कुरोदयम् ॥

'जडानि' इत्यादिना यद्दृष्टान्तितं तद्विघटयति –भूजलादीति । रामा.

यत्त्वयोक्तं विनाऽपीशं काले कर्म फलेत्स्वयम् ।
स एव कालो भगवान्सर्वकर्ता महेशिता ॥

'विनाऽपीशम्' इति यदुक्तं तदनूद्य दूषयति– यत्त्वयोक्तमिति । रामा.

ऐहिकामुष्मिकहितकरः स्वधर्मः

व्यास उवाच–

[1]आचारः परमो धर्मः सर्वधर्मपरायणः ।
स्वधर्मनिरताश्चैव जितक्रोधा जितेन्द्रियाः ।
रुद्रलोकं व्रजन्तीह नात्र चित्रा मतिर्मम ॥
[2]धर्मान्मोक्षपथं प्राप्य पुनर्नैवावसीदति ॥
[3]नास्ति धर्मसमं मित्रं नास्ति धर्मसमा गतिः ।
नास्ति धर्मसमं त्राणं स च नास्ति मम प्रभो ॥
[4]धर्म एव परो बन्धुर्धर्म एव परा गतिः ।
धर्मेण साध्यते सर्वं तस्माद्धर्मं समाश्रयेत् ॥
[5]ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा नृपसत्तम ।
विहितं कर्म कुर्वाणः स गच्छेत्परमां गतिम् ॥

इह परलोके च स्वधर्म एव श्रेयस्करः

[6]कीर्तनान्नश्यते धर्मो वर्धतेऽसौ निगूहनात् ।
इह लोके परे चैव पापस्याप्येवमेव च ॥

(१) स्कन्द. ५।१।८।१–२.
(२) स्कन्द. ५।१।६९।३४.
(३) स्कन्द. ५।२।६८।३७.
(४) स्कन्द. ५।२।६९।२९.
(५) स्कन्द. ५।३।४३।११.
(६) स्कन्द. ५।३।१०३।१६१.

[1]धर्मो माता पिता धर्मो धर्मो बन्धुः सुहृत्तथा ।
आधारः सर्वभूतानां त्रैलोक्ये सचराचरे ॥
[2]धर्मं समाचरन्नित्यं पापांशेन न लिप्यते ।
श्रुतिस्मृत्युदितं धर्मं मनसाऽपि न लङ्घयेत् ।
इह लोके परे चैव यदीच्छेच्छ्रेय आत्मनः ॥
[3]गतिरूर्ध्वा च धर्मेण ह्यधर्मेण त्वधोगतिः ।
जायते सर्ववर्णानां स्वधर्मचलनान्नृप ॥
देवत्वे मानवत्वे च दानभोगादिकाः क्रियाः ।
दृश्यन्ते या महाराज तत्सर्वं कर्मजं फलम् ॥
[4]वेदवाक्ये पुराणार्थे स्मृत्यर्थे द्विजभाषिते ।
विस्मयो हि न कर्तव्यो ह्यनुमानं हि तत्तथा ॥
असंभाव्यं हि लोकानां पुराणे यत्प्रगीयते ।
यदि पक्षं पुरस्कृत्य लोकाः कुर्वन्ति पार्वति ।
तस्माच्च सिद्धिरेतेषां भवत्येको न विस्मयः ॥
नास्तिका भिन्नमर्यादा ये निश्चयबहिष्कृताः ।
तेषां सिद्धिर्न विद्येत आस्तिक्याद्भवते ध्रुवम् ॥
[5]अध्रुवेण शरीरेण ध्रुवं कर्म समाचरेत् ।
अवश्यमेव यास्यन्ति प्राणाः प्राघूर्णिका इव ॥
दानं वित्ताहृतं वाचः कीर्तिधर्मौ तथाऽऽयुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥
[6]मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥
[7]अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥

---

(१) स्कन्द. ५।३।१३३।६.
(२) स्कन्द. ५।३।१४६।४५–४६.
(३) स्कन्द. ५।३।१५९।४७–४८.
(४) स्कन्द. ५।३।१८०।४५–४८.
(५) स्कन्द. ५।३।२२७।१६–१७, १९.
(६) स्कन्द. ५।३।२२७।२० : ३८–३९ पूर्वार्धे (वेदे तीर्थे च देवे च दैवज्ञे चौषधे गुरौ । ), ७।१।२७८।३९.
(७) स्कन्द. ५।३।२२७।२१–२२.

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
[1]धर्मकर्म महाराज स्वयं विद्वान्समाचरेत् ।
शरीरस्याथवाऽशक्त्या अन्य( ? न्या )द्वा कार्ययोगतः ॥
धर्मकर्म सदा प्रायः सवर्णेनैव कारयेत् ।
पुत्रपौत्रादिकैर्वाऽपि ज्ञातिभिर्गोत्रसंभवैः ॥
श्रेष्ठं हि विहितं प्राहुर्धर्मकर्म युधिष्ठिर ।
तैरेव कारयेत्तस्मान्नोत्तमैर्नाधमैरपि ॥
अधमेन कृतं सम्यङ्न भवेदिति मे मतिः ।
उत्तमश्चाधमार्थे वै कुर्वन् दुर्गतिमाप्नुयात् ॥
[2]कुलदेशोचितं धर्मं यस्त्यक्त्वाऽन्यत्समाचरेत् ।
कामाद्वा यदि वा लोभात्स प्रेतो जायते नरः ॥
[3]वेदाध्ययनसंपन्नः शास्त्रासक्तः समृष्टवाक् ।
धर्माख्यानपरो नित्यं नरकं न स पश्यति ॥
एतन्मूर्खोऽपि जानाति शुभकर्मकरः पुमान् ।
न याति नरकं स्वर्गं तथा पापक्रियारतः ॥
[4]नीचैरपि प्रशास्येत श्रुतिराह सनातनी ।
सन्मार्ग एव सर्वत्र पूज्यते नापथः क्वचित् ॥
येन स्वकुलजो धर्मस्त्यक्तः स पतितो भवेत् ।
मृतश्च नरकं प्राप्य दुःखभारेण युज्यते ॥
धर्मं त्यजति नास्तिक्याज्ज्ञातिभेदमुपागतः ।
स निग्राह्यः सर्वलोकैर्मनुधर्मपरायणैः ॥
कुलधर्माञ्ज्ञातिधर्मान्देशधर्मान्महेश्वर ।
ये त्यजन्ति च तेऽवश्यं कुलाच्च पतिता जनाः ॥
अग्नित्यागो व्रतत्यागो वचनत्याग एव च ।
धर्मत्यागो नैव कार्यः कुर्वन्पतित एव हि ॥
[5]धर्मः सुदुर्लभः पुंसां विशेषेण महीक्षिताम् ।
यदि राजा मदाविष्टः स्वधर्मं न परित्यजेत् ।
ततो जगति कस्तस्मात्पुमानभ्यधिको भवेत् ॥

---

(१) स्कन्द. ५।३।२२८।४–७.
(२) स्कन्द. ६।१८।३९.
(३) स्कन्द. ६।२६।७०–७१.
(४) स्कन्द. ६।२५३।१३–१७.
(५) स्कन्द. ७।१।३३८।६६–६७.

[1]निरीक्ष्य धर्मशास्त्राणि कार्यं विहितमात्मनः ॥
[2]धर्मात्सुखं च ज्ञानं च यस्मादुभयमाप्नुयात् ।
तस्मात्सर्वं परित्यज्य विद्वान् धर्मं समाचरेत् ॥
[3]स्वधर्मं यः समुत्सृज्य परधर्मरुचिर्भवेत् ।
चकोरनयने चोरः स शूद्रश्चन्द्रसंनिभे ॥
[4]स्मृतयो धर्ममूलं हि धर्मः सर्वार्थसाधनम् ॥

## सह्याद्रिखण्डः

स्वधर्माचरणं सिद्धिदम्

[5]धर्म्यान् ग्राम्यान् जनपदान्विरुद्धांश्च तथा चरेत् ।
कालं शिष्टानुमतं धर्मं चैवाऽऽचरेद् बुधः ॥
धर्मोऽपि स्यादधर्मोऽसावधर्मोऽपि हि धर्मकः ॥
स्वस्वकर्मण्यभिरताः सिद्धिं विन्दन्ति मानवाः ॥
क्वाहं कोऽहं कुलं किं मे संबन्धः कीदृशो मम ॥
स्वस्वधर्मो न लुप्येत ह्येवं संचिन्तयेद्बुधः ।
अभिमानेन वेद्यार्थे(?) धर्माधर्मविनिर्णयः ॥

## सूतसंहिता

शिवप्रसादादेव शिवज्ञानम्

[6]अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
जायते तच्छिवज्ञानं प्रसादादेव मे हरे ॥

निष्कामकृतानि हि कर्माणि भगवदाराधनद्वारेणैव तत्त्वज्ञानं साधयन्ति । फलं तु तत्त्वज्ञानमन्यद्वा शिवप्रसादादेव भवति । उक्तं हि– 'फलमत उपपत्तेः' ( ब्रसू. ३।२।३८) इति । शिवज्ञानमिति । मदीयनिष्कलतत्त्वज्ञानमित्यर्थः । तादी.

ईश्वराराधनरूपं श्रौतस्मार्तकर्मानुष्ठानं मुक्तये

[7]स्वजात्युक्तं यथाशक्ति कुरुते कर्म यः पुमान् ।
मुक्तिस्तस्यैव संसारादिति वेदानुशासनम् ॥

जातिनिर्णयप्रयोजनमाह– स्वजात्युक्तमिति । वेदानुशासनमिति । 'धर्मो विश्वस्य जगतः प्रतिष्ठा, धर्मे सर्वं प्रतिष्ठितम्' ( नाउ. ७९ ) इति हि वेदवाक्येऽनुशिष्यते । स्वजात्युक्त एव हि धर्मः । तादी.

[1]यस्यापरोक्षविज्ञानमस्ति वेदान्तवाक्यजम् ।
तस्य नास्ति नियोज्यत्वमिति वेदार्थनिर्णयः ॥

ज्ञानिनस्तर्हि जात्यभावे कथं तस्य तत्प्रयुक्तौ विधिनिषेधाविति चेत्, न त एव तस्य तावित्याह– यस्यापरोक्षेति । वेदार्थेति । 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' (बृउ. ४।४।२२) इति वाजसनेयश्रुतिः । 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' (तैब्रा. ३।१२।९।७, बृउ. ४।४।२३) इति काठकश्रुतिः(?) । तादी.

वर्णिनामाश्रमाः प्रोक्ताः सर्वशास्त्रार्थवेदिभिः ।
तेषां वर्णाश्रमस्थानां वेदकिङ्करता सदा ॥

वर्णधर्मवदाश्रमधर्मोऽपि तत्त्वज्ञानविरहिणामेवेत्याह– वर्णिनामिति । वेदकिङ्करता वेदेन कर्मसु नियोज्यता । तादी.

अस्ति चेद्ब्रह्मविज्ञानं स्त्रिया वा पुरुषस्य वा ।
वर्णाश्रमसमाचारस्तयोर्नास्त्येव सर्वदा ॥

स्त्रीत्वादीनामपि वर्णाश्रमवद्देहधर्मत्वेन देहाध्यासविरहे सति कर्मस्वनियोज्यत्वे न तत्कृतः कोऽपि विशेष इत्याह– अस्ति चेदिति । तादी.

अविज्ञायाऽऽत्मसद्भावं स्ववर्णाश्रममास्तिकाः ।
जहाति यः स मूढात्मा पतत्येव न संशयः ॥
तस्मात्सर्वप्रयत्नेन श्रद्धया सह सर्वदा ।
कर्तव्यो वर्णिभिर्धर्मः श्रौतः स्मार्तश्च मुक्तये ॥

संश्चासौ भावश्च सद्भावः पारमार्थिकं रूपम् । आत्मनस्तदसाक्षात्कृत्य कर्मपरित्यागे पातित्यमाह– अविज्ञायेति । तादी.

[2]वर्णाश्रमाचारवता पुरुषेण महेश्वरः ।
आराध्यते प्रसादार्थं न दुर्वृत्तैः कदाचन ॥

---

(१) स्कन्द. ७।४।२३।१३३.
(२) चव. १३.
(३) अप. १।७ पृ. १७ ; स्मृकौ. ६६ ; शूशि. ७६ समुत्सृज्य (परित्यज्य) संनिभे (शेखरे).
(४) चवा. ५२९.
(५) सखं. २।५।६३–६४, ७०, ७५–७६.
(६) सूसं. १।७।१७–१८.
(७) सूसं. १।१२।५०.

(१) सूसं. १।१२।५५–५९.
(२) सूसं. २।२।१५–१९.

**यस्मिन्प्रसन्ने सर्वेषां पुष्टिर्जायेत पुष्कला ।**
**अहो तेन विना लोकश्चेष्टतेऽन्यत्र मायया ॥**

एवं वर्णाश्रमाचाराणामुत्पत्तिमभिधाय तदाचरणोपयोगमाह– वर्णाश्रमाचारवतेति । तादी.

**ब्रह्मचर्याश्रमस्थानां यतीनां च विशेषतः ।**
**वानप्रस्थाश्रमस्थानां गृहस्थानां वशो हरः ॥**
**वर्णाश्रमसमाचारात्प्रसन्ने परमेश्वरे ।**
**साक्षात्तद्विषयं ज्ञानमचिरादेव जायते ।**
**ज्ञानादज्ञानविध्वस्तिर्न कर्मभ्यः कदाचन ॥**

चतुर्णामाश्रमाणां शिवप्रसादद्वारा ज्ञानोपयोगमाह– ब्रह्मचर्याश्रमेति । तादी.

**[1]पुण्यैर्देवत्वमाप्नोति पापैः स्थावरतामियात् ।**
**समाभ्यां पुण्यपापाभ्यां मानुष्यं प्राप्नुयान्नरः ॥**

पुण्यैर्देवत्वमिति । 'पुण्येन पुण्यं लोकं न(१ न)-यति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' (प्रउ. ३।७) इति श्रुतेः । तादी.

**[2]न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**कर्म कर्तव्यमित्येवं बोधयेत्तान्समाहितः ॥**
**[3]श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥**

वेदोक्तधर्मसम्यगनुष्ठानाशक्तस्यापि यथाशक्ति तदनुष्ठानमेव, न तु विरुद्धतन्त्रार्थानुष्ठानमित्याह– श्रेयान्स्वधर्म इति । तादी.

**[4]यज्ञैर्देवत्वमाप्नोति तपोभिर्ब्रह्मणः पदम् ।**
**दानैर्भोगानवाप्नोति ज्ञानाद्ब्रह्माधिगच्छति ॥**

ज्ञानादेव मुक्तिः न कर्मणः

**[5]अज्ञानबाधकं कर्म न भवेदम्बुजेक्षण ॥**
**कर्मणा परमा मुक्तिर्यदि सिध्यति केशव ।**
**सा विनश्यत्यसंदेहः स्वर्गलोको यथा तथा ।**
**तस्मान्न कर्मणा मुक्तिः कल्पकोटिशतैरपि ॥**

(१) सूसं. २।१०।२. (२) सूसं. २।१२।२०.
(३) सूसं. २।१४।१९.
(४) सूसं. २।१६।५८.
(५) सूसं. ३।३।१२–१६.

न केवलं कर्मणः स्वमूलत्वादज्ञानं प्रत्यनिवर्तकत्वम्, निवर्तकत्वेऽज्ञाननिवृत्तिरूपाया मुक्तेः कर्मजन्यत्वेन स्वर्गवदनित्यत्वप्रसङ्गादपि तदनिवर्तकमित्याह– कर्मणेति । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भगी. ३।२०) इत्यादिभिरपि न कर्मणो मुक्तिहेतुतोच्यते, किंतु सम्यक्सिध्यत्यनया मुक्तिरिति विद्या संसिद्धिपदेनोच्यते, तत्प्रतिबन्धकपापनिराकरणद्वारा परमुक्तौ साधनता कर्मणोऽभिधीयत इति मन्तव्यम् । तादी.

**कर्मणैवापरा मुक्तिर्न ज्ञानादेव केवलात् ।**
**तत्र कर्म द्विधा विष्णो विजानीहि विचक्षण ॥**

कर्मणः साक्षात्परममुक्तावसाधनत्वे वैयर्थ्यमेव प्राप्तमिति चेन्न । विचित्रं हि कर्म, तत्र किंचित्साक्षादसाधनमपि ज्ञानद्वारा परमुक्तौ साधनम्, किंचित्पुनरपरिपक्वज्ञानसहकृतमपरमुक्तौ, किंचित्तु केवलं भोगसाधनमित्यादिप्रकारभेदेन तदुपयोगसंभवादित्याह– कर्मणैवापरेत्यादिप्रपञ्चेन । कर्मणा सहैव ज्ञानादुपासनारूपादपरिपक्वात्मज्ञानाद्वा तयोरन्यतरलाभमात्रेण कर्मत्यागेनाकरणनिमित्तप्रत्यवायात् ¶तदुपायमपि प्रतिबध्येत परिपक्वात्मज्ञानं पुनरनादिभावपरम्परोपार्जितं संचितमपि निर्दहेत्, न केनचित्प्रतिबध्यते । श्रूयते हि– 'एतं ह वाव न तपति । किमहं साधु नाकरवं किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानं स्पृणुते' (तैउ. २।९) इति । स्मर्यते च– 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन(१ ते तथा) । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।' (भगी. ४।३७, ३८) इति । विभागेनोपयोगं दर्शयितुं कर्म विभजते– तत्र कर्मेति । तादी.

कर्म द्विविधं बाह्यमान्तरं च

**एकं कर्माऽऽन्तरं बाह्यमपरं पङ्कजेक्षण ।**
**वाचिकं कायिकं बाह्यं कर्म मानसमान्तरम् ॥**

¶ अपरमुक्त्युपायभूतं तत् उपासनारूपमपरिपक्वात्मज्ञानरूपं वा ज्ञानमपीति, तस्याः अपरमुक्तेः उपायभूतमपि पूर्वोक्तोभयरूपं ज्ञानमिति वा योजनीयम् । उपायशब्दस्य नपुंसकत्वं तु चिन्त्यम् ।

**तत्र सर्वं परं ब्रह्म न चान्यदिति यः पुमान् ।**
**उपास्ते श्रद्धया नित्यं स सम्यग्ज्ञानमाप्नुयात् ॥**
**[1]बाह्येन कर्मणा मुक्तिः क्रमात्कालेन सिध्यति ।**
**आन्तरेणाचिरादेव कर्मणा मुक्तिरच्युत ॥**
**यथाऽऽन्तरोपचारेण नराणां वल्लभाः स्त्रियः ।**
**तथाऽऽन्तरेण ध्यानेन वल्लभा मम जन्तवः ॥**

मानसस्य बाह्याद्विशेषे निदर्शनमाह— यथाऽऽन्तरेति । तादी.

**बाह्यं कर्म महाविष्णो ज्ञानेच्छोत्पादकं भवेत् ।**
**त्यागश्च कर्मणां तद्वन्महाविष्णो शमादयः ।**
**इहैव सम्यग्ज्ञानाङ्गमित्येषा शाश्वती श्रुतिः ॥**

शाश्वती श्रुतिरिति । कर्मणो ज्ञानेच्छामात्रजनकत्वे ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन ' ( बृउ. ४।४।२२ ) इत्यादिश्रुतिः । शमादीनां ज्ञानं प्रत्यन्तरङ्गत्वे ' शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् ' ( बृउ. ४।४।२३ ) इति श्रुतिः । त्यागस्य तु ' त्यागेनैके अमृतत्वमानशुः ' ( नाउ. १२।३ ) इति । तादी.

**[2]यानि कर्माणि बाह्यानि मरणादूर्ध्वमच्युत ।**
**मम ज्ञानप्रदानीति कथितानि मया तव ।**
**तानि कल्याणवृत्तस्य विद्धि नान्यस्य कस्यचित् ॥**
**[3]पूर्वजन्मार्जितात्पुण्यान्नरो भूत्वा महीतले ।**
**मत्प्रसादेन वेदोक्तं कर्म कृत्वा विशुद्धधीः ॥**

इत्थं संसरतो जीवस्यापवर्गप्रक्रियामाह— पूर्वजन्मेत्यादि । तादी.

**विचार्य सर्वं दुःखाद्यमनित्यं सारवर्जितम् ।**
**विरक्तो मोक्षमाकाङ्क्षन्मोक्षोपायं महत्तरम् ॥**
**वेदेन दर्शितं सम्यक्संपाद्यास्मत्प्रसादतः ।**
**आत्ममात्रां परां मुक्तिं प्राप्नोत्यात्मा स्वयं सुराः ॥**

(१) सूसं. ३।३।५०–५३.
(२) सूसं. ३।३।५९–६०.
(३) सूसं. ३।८।४१–४४.

**सर्वेषामात्मविज्ञानादेव मुक्तिर्न चान्यतः ।**
**ज्ञानादन्यत्सुराः सर्वं विज्ञानस्यैव साधनम् ॥**

ज्ञानकर्मणोरुभयोरुक्तत्वात्समसमुच्चयभ्रमनिवर्तनाय क्रमसमुच्चय इत्याह— सर्वेषामिति । तादी.

**श्रीसूत उवाच—**

**[1]अथ वक्ष्यामि वेदार्थं शृणुत श्रद्धया द्विजाः ।**
**श्रद्धया रहितं सर्वं फलाय न कदाचन ॥**
**परापरविभागेन वेदार्थो द्विविधः स्मृतः ।**
**वेदार्थः परमः साक्षात्परात्परतरं परम् ॥**

मुनिप्रश्नानन्तर्यमथशब्दार्थः । परापरविभागेनेति । उपनिषदर्थः परः । इतरस्त्वपरः । श्रूयते हि मुण्डकोपनिषदि— ' द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ' ( मुउ. १।१।४–५ ) इत्यादि । तदेवाऽऽह— वेदार्थः परम इति । परात्सकलादतिशयेन यत्परं निष्कलं तत् उक्तद्वितयमध्ये परमो वेदार्थ इत्यर्थः । तादी.

**अपरो धर्मसंज्ञः स्यात्तत्परप्राप्तिसाधनम् ।**
**अधर्मः परिहाराय वेदार्थत्वेन भक्तितः ।**
**गीयते मुनिशार्दूलैः कदाचिन्न तु मुख्यतः ॥**

अपरोऽपि द्विविधः— विहितो यज्ञादिर्धर्मः, प्रतिषिद्धो हिंसादिरधर्मश्च । तत्राऽऽद्यस्य प्रयोजनमाह— अपर इति । तत्परेति । ' तमेतं वेदानुवचनेन ' इत्यादिश्रुतेरित्यर्थः । अननुष्ठेयस्याधर्मस्य किमुपदेशेन ? तत्राऽऽह— परिहारायेति । उक्तं हि शाबरभाष्ये— ' अधर्मोऽपि जिज्ञास्यः परिहाराय ' इति । न तु मुख्यत इति । मुखमिव प्रथमः श्रेयःसाधनत्वेनानुष्ठेयो धर्मो मुख्यः, तत्परिपन्थित्वेन तु हानाय जिज्ञास्यः सन्नधर्मो जघन्य इत्यर्थः । तादी.

**अधर्मपरिहारेण धर्मस्त्वव्याकुलो भवेत् ॥**

(१) सूसं. ४।१।२।१–५.

अधर्मपरिहारेणेति । तदपरिहारे धर्मस्य व्याकुलता कृष्णं प्रत्यर्जुनेन प्रपञ्चिता गीतासु– 'अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।' (भगी. १।४१) इत्यादि । तादी.

**अव्याकुलेन धर्मेण श्रद्धयाऽनुष्ठितेन तु ।**
**वेदार्थः परमः साक्षात्सिध्यत्येव न संशयः ॥**

**'ज्ञानयज्ञेन विप्राणामास्तिकानाममानिनाम् ।**
**जायते परमं ज्ञानं नान्यथा मुनिपुङ्गवाः ॥**

ज्ञानयज्ञेन परं ब्रह्म साक्षाज्जायते, अन्यथा तु शब्दत एव बुध्यत इत्यर्थः । तादी.

यज्ञो द्विविधः– कर्मयज्ञो ज्ञानयज्ञश्च

**यज्ञश्च द्विविधः प्रोक्तः स्थूलसूक्ष्मविभेदतः ।**
**कर्मयज्ञः समाख्यातः स्थूलः सर्वार्थवित्तमैः ।**
**ज्ञानयज्ञो भवेत्सूक्ष्मः साक्षात्संसारबाधकः ॥**

**कर्मयज्ञाभिधः स्थूलस्त्रिप्रकारो व्यवस्थितः ।**
**कायिको वाचिकश्चैव मानसश्चेति सुव्रताः ॥**

**नित्यनैमित्तिकाद्यस्तु कायिकः परिकीर्तितः ।**
**मन्त्राणां जपरूपस्तु वाचिको वेदवित्तमाः ॥**

**देवताध्यानरूपस्तु मानसः परिकीर्तितः ।**
**कायिकादधिकः प्रोक्तो वाचिको मतिमत्तमैः ॥**

**मानसो वाचिकाच्छ्रेष्ठो मानसो बहुधा स्मृतः ।**
**ध्येयभेदेन सोऽप्येवमुत्तमाधमभेदतः ॥**

परमवेदार्थप्रसङ्गेन कथितस्य ज्ञानयज्ञस्योत्कर्षसूचनाय यज्ञान्तराणि विभागेनानुक्रामति– यज्ञश्च द्विविध इति । स्थूलफलत्वेन कर्मयज्ञस्य स्थौल्यम्, सूक्ष्मविषयत्वेन ज्ञानयज्ञस्य सौक्ष्म्यम् । तादी.

कर्मयज्ञस्त्रिविधः

सूत उवाच–

**'अथातः संप्रवक्ष्यामि कर्मयज्ञस्य वैभवम् ।**
**कर्मयज्ञाभिधा प्रोक्तो मुनिभिः सूक्ष्मदर्शिभिः ॥**

उद्देशानन्तरं तत्क्रमेण यतः कर्मयज्ञो विशासितः अतस्तद्वैभवं वक्तुं प्रतिजानीते– अथात इति । तादी.

**एकः काम्योऽपरो नित्यस्तथा नैमित्तिकोऽपरः ।**
**प्राधान्येन फलं शुद्धिरार्थिकी काम्यकर्मणः ॥**
**प्राधान्येन फलं शुद्धिर्नित्यस्य फलमार्थिकम् ।**
**केवलं प्रत्यवायस्य निवृत्तिरितरस्य तु ॥**

काम्यकर्मनिमित्तफलप्राप्तिः प्रधानम् । अर्थाच्चित्तशुद्धिरपि भवति । यदाहुः– 'विड्वराहादिदेहेषु न ह्यैन्द्रं भुज्यते पदम् ' इति । नित्यस्य तु सत्त्वशुद्धिरेव प्राधान्येन फलम् । नैमित्तिकस्य प्रायश्चित्तादेरुपात्तदुरितक्षयः फलमित्यर्थः । तादी.

**काम्यरूपेषु यज्ञेषु यतन्ते श्रद्धया सह ।**
**मन्दभाग्या नरा विप्रा नित्यनैमित्तिकात्मके ।**
**महाभाग्याः प्रवर्तन्ते तेषां मुक्तिरयत्नतः ॥**

परम्परयाऽप्यपवर्गानुपयोगिषु प्रत्युत तत्प्रतिबन्धकेषु काम्ययज्ञेषु ये प्रवृत्तास्ते मन्दभाग्या इत्याह– काम्यरूपेष्विति । ये तु नित्यनैमित्तिकेषु परम्परयाऽपवर्गयोगित्वमभिसंधाय प्रवर्तन्ते ते क्रमेण मुच्यन्त इत्याह– नित्यनैमित्तिकेति । तादी.

**विध्युक्तमिति बुद्ध्या ये वर्तन्ते श्रद्धया सह ।**
**एषु यज्ञेषु सर्वेषु तेषां मन्दफलं भवेत् ॥**

ये तु तेष्वेवाभिसंधिमात्ररहिता विध्युक्तमित्येव प्रवर्तन्ते ते मन्दफलभागिन इत्याह– विध्युक्तमिति । तादी.

**शिवाराधनबुद्ध्या ये यतन्ते श्रद्धया सह ।**
**एषु यज्ञेषु ते शीघ्रं विमुक्तिफलमाप्नुयुः ॥**

ये तु तान्ये( ? ने )वेश्वराराधनबुद्ध्या कुर्वन्ति तेऽत्यन्तनिष्कामतया बुद्धिशुद्ध्यतिशयवन्तस्त्वरया मुच्यन्त इत्याह– शिवाराधनेति । तादी.

**अकर्ताऽहमभोक्ताऽहमसङ्गोऽहमहं शिवः ।**
**इति विज्ञाय मानेन स्वात्मानं तर्कतोऽपि च ॥**
**कर्मयज्ञेषु ये नित्यं यतन्ते श्रद्धयाऽन्विताः ।**
**ते महादेवविज्ञानमपरोक्षमवाप्नुयुः ॥**

(१) सूसं. ४।१।२।४७–५२.
(२) सूसं. ४।१।३।१–२६.

यज्ञरूपं महाविष्णुं यज्ञे पश्यन्ति ये द्विजाः।
ते तु( ? ऽपि ) विज्ञानमासाद्य कैवल्यं ज्ञानमाप्नुयुः ॥
प्राधान्येन महादेवो यज्ञैरिज्यो न चापरः।
इति ज्ञात्वा यजन्ते ये तेऽपि विज्ञानमाप्नुयुः॥
विष्णुं ब्रह्माणमिन्द्रं वा देवतान्तरमेव वा।
प्रधानबुद्धया ये यज्ञैर्यजन्ते मोहतोऽपि वा।
ते यान्ति नरकं घोरं यावदाभूतसंप्लवम् ॥

अकर्त्रादिरूपमौपनिषदमात्मतत्त्वं मानेन तदनुग्राहकतर्केण च विज्ञाय कर्मयज्ञं कुर्वतः शिवसाक्षात्कारः फलमित्याह– अकर्ताऽहमिति । अथवा यज्ञात्मको विष्णुरित्यभिसंधाने विज्ञानं भवति । प्राधान्येन शिव एव यष्टव्यस्तदङ्गत्वेन ब्रह्मविष्ण्वादयः । शिवादन्यस्य तु प्राधान्येन यष्टव्यत्वाभिसंधाने नरक एवेत्याह– विष्णुमित्यादि । मोहतोऽपि वेति । मोहतः प्रमादादिना । प्रमादात्तुच्छं कृत्वा झटिति तत्यागे न दोष इत्यर्थः । तादी.

नामतश्चार्थतो यस्तु महादेवो महेश्वरः।
स एव साम्बः सर्वज्ञ इज्यः सर्वमहामखैः ॥

इत्थंभावे कारणमाह– नामत इति । तादी.

यानि लोकेऽनिषिद्धानि कर्माण्यविहितानि च।
तानि शम्भोर्महापूजेत्येतज्ज्ञानं महामखः ॥

अनिषिद्धान्यविहितानि च निमेषकण्डूयनादीन्यपि शिवाराधनबुद्धया कृतानि फलन्तीत्यर्थः । तादी.

ईश्वराराधनबुद्धया कृतानि निषिद्धान्यपि कर्माणि प्रशस्तानि

यानि कर्माणि सर्वाणि निषिद्धानि श्रुतौ स्मृतौ।
तानि चाऽऽराधनं शम्भोरिति ज्ञानं महामखः॥

किंच, निषिद्धान्यप्येवमाह– यानि कर्माणीति । तादी.

ईश्वरार्थधिया पापान्यपि कर्माणि सुव्रताः।
भवन्ति पूतान्यत्यन्तं सत्यमेव न संशयः ॥

तत्र कारणमाह– ईश्वरार्थेति । तादी.

आर्द्रकाष्ठं महानग्निः शुष्कं कृत्वा दहेद्यथा।
तथेश्वरधिया पापं शुद्धविज्ञानदं भवेत् ॥

तत्रोदाहरणमाह– आर्द्रकाष्ठमिति । तादी.

विध्युक्तकर्मनिष्ठानामिष्टस्य करणं तु यत्।
सोऽपि साक्षान्महायज्ञः सम्यग्ज्ञानस्य कारणम् ॥
विध्युक्तकर्मनिष्ठानामनिष्टकरणं तु यत्।
तन्महापातकं प्रोक्तं संसारस्य प्रवर्तकम् ॥

यत्पुनर्नैवं कर्म तत्र किमु वक्तव्यमित्याह– विध्युक्तेति । विध्युक्तकर्मनिष्ठानां यदनिष्टं तत्करणकर्तॄणां संसारापादनमित्यर्थः । तादी.

दुराचारिषु सर्वेषु विना दोषस्य दर्शनम्।
उपेक्षाबुद्धिरुत्पन्ना सा तस्यायं महामखः ॥

दुराचारिष्वपि दोषदर्शनमकृत्वोपेक्षैव कार्या । उक्तं हि पतञ्जलिना– 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (योसू. १।३३) इति । तदाह– दुराचारिष्विति । यस्य ईदृश्युपेक्षाबुद्धिः सा तस्य महामख इत्यर्थः । तादी.

श्रद्धया आचरितं वैदिकं तान्त्रिकं बुद्धार्हतादिमार्गस्थमपि वा कर्म श्रेयस्करम्

बुद्धार्हतादिमार्गस्थे देवताप्रतिमासु च।
देवताबुद्धिमात्रं यत्सोऽपि यज्ञः प्रकीर्तितः ॥

बुद्धार्हतादिमार्गस्थे पुरुषे तदीयदेवताप्रतिमास्वप्यादरमकृत्वा देवताबुद्धिमात्रं समबुद्धित्वादविरुद्धं 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' (भगी. ५।१८) इति न्यायेनेत्याह– बुद्धेति । तादी.

वैदिकं तान्त्रिकं हित्वा मार्गं स्वप्रज्ञया द्विजाः।
यत्र यो देवताबुद्धिं करोति श्रद्धया सह ॥
सोऽपि यज्ञ इति प्रोक्तो मया वेदार्थवित्तमाः।
श्रद्धया सहितं सर्वं श्रेयसे भूयसे भवेत् ॥

वेदेष्वागमेषु वाऽनुक्तमपि यत्किंचिदाराधनं यज्ञः, किमुत तन्त्रोक्तम्? इत्याह– वैदिकं तान्त्रिकमिति । तादी.

स्वबुद्धया वेदशास्त्रोक्ते तन्त्रोक्तेऽपि द्विजोत्तमाः।
आस्तिक्यं देवताबुद्धिरपि लाभाय देहिनाम् ॥

स्वबुद्ध्यधीने प्रतिमादौ शास्त्रोक्ते च श्रद्धया विहिते श्रेयसे भवति । तादी.

**फलेषु तारतम्यं तु विद्यते सूक्ष्मदर्शने ॥**

तावन्मात्रमपि पर्याप्तं चेत्किमिति प्रागुक्तनियमविशेषादेरित्यत आह– फलेष्विति । तादी.

**कायिकः कर्मयज्ञस्तु कथितः संग्रहेण तु ।**
**भवन्तोऽपि महायज्ञं कायिकं कुरुत द्विजाः ॥**
**[1]श्रौतस्मार्तसदाचारे नाधिकारी च लाञ्छितः ॥**
**[2]अकुर्वन्नपि विध्युक्तं निषिद्धं परिवर्जयेत् ।**
**निषिद्धपरिहारेण विहिते लभते मतिम् ॥**

फलरागाभावान्मुमुक्षुः 'स्वर्गकामो यजेत' इत्यादिविधिवाक्योक्तं यागादिकमकुर्वन्नपि 'ब्राह्मणो न हन्तव्यः' 'न कलञ्जं भक्षयेत्' इत्यादिवाक्यैर्निषिद्धं सर्वथा परिवर्जयेदित्यर्थः, तद्वर्जनस्य फलरागप्रयुक्तत्वाभावात् । प्रत्युत निषिद्धाचरणे दोष एव रागतः प्रवृत्तिः । एवं निषिद्धपरिवर्जनेन प्रत्यवायानुदयाद्विरुद्धवासनानिरासाच्च (अ)फलप्रेप्सुनैव निर्वर्त्ये विहिते नित्यकर्मणि विषये बुद्धिं लभत इत्यर्थः । एवं विहितानुष्ठानान्निषिद्धपरिहरणाच्च अन्तःकरणमालिन्यापादकं पापं नोत्पद्यत इत्यर्थः । तादी.

**सत्याद्धर्माच्च कुशलाद्भसनोद्धूलनादपि ।**
**त्रिपुण्ड्रधारणाच्चापि स्वाध्यायाध्ययनादपि ॥**
**देवाच्च पित्र्यात्कार्याच्च मातापित्रादिपूजनात् ।**
**तथाऽन्येभ्यश्च कर्मभ्यः श्रौतेभ्यश्च तथैव च ॥**
**स्मार्तेभ्यश्च मुमुक्षुश्चेत्सदा न प्रच्युतो भवेत् ॥**

तैत्तिरीयके 'सत्यान्न प्रमदितव्यं धर्मान्न प्रमदितव्यम्' (तैउ. १।११।१) इत्यादिना यानि सत्यादीनि नित्यं मुमुक्षुभिः सेव्यानीत्याम्नातं तानि दर्शयति– सत्यादित्यादिना न प्रच्युतो भवेदित्यन्तेन । कुशलादिति । कुशलं योगक्षेमः । मातापित्रादिपूजनादिति । आदिशब्देनाऽऽचार्यातिथिसंग्रहः, मातापितृपूजनानन्तरम् 'आचार्यदेवो भव । अतिथिदेवो भव' (तैउ. १।११।२) इति तत्पूजाया उक्तत्वात् । तादी.

श्रद्धामात्रमूलको धर्मः

**स्कन्द उवाच–**

**[1]शृणुध्वं मुनयः सर्वे महाभाग्यसमन्विताः ।**
**वदामि संग्रहेणाहं युष्माकं धर्ममुत्तमम् ॥**
**स्वमनीषिकयोत्पन्नो निर्मूलो धर्मसंज्ञितः ।**
**श्रद्धया सहितो यस्तु सोऽपि धर्म उदाहृतः ॥**

वेदान्तवाक्यजनितस्य च ज्ञानस्य परमधर्मत्वं सत्स्वेवापरधर्मेष्वित्यभिप्रेत्य तानुत्तरोत्तरमुत्कृष्टत्वेन प्रतिपादयति– स्वमनीषिकयेत्यादिना । शास्त्रादनवगम्यैव बुद्ध्युत्प्रेक्षामात्रेण यत्तपः क्रियते स धर्मो भवति । निर्मूलः मूलागमरहितः । तादी.

**निर्मूलोऽपि स्वबुद्ध्यैव कल्पितोऽपि महर्षयः ।**
**देवताराधनाकारो धर्मः पूर्वोदिताद्वरः ॥**

पुरुषोत्प्रेक्षामात्रनिबन्धनो धर्मो देवताराधनरूपश्चेत्तदा पूर्वोक्ताद्धर्माद्देवताराधनविलक्षणाच्छ्रेष्ठः । एवमुत्तरत्रापि योज्यम् । तादी.

समूलाः बौद्धार्हतप्राजापत्यवैष्णवशैवागमोक्ताः
स्मार्ताः श्रौताश्च धर्माः श्रेयस्कराः, तेषु च
शैवागमोक्तः श्रेष्ठो वरिष्ठश्च

**देवताराधनाकारान्निर्मूलाद्बुद्धिकल्पितात् ।**
**धर्माच्छ्रेष्ठः समाख्यातः समूलो धर्म आस्तिकाः॥**

समूल इति । मूलसहित इत्यर्थः । तादी.

**समूलेषु च धर्मेषु बुद्धागमसमन्वितः ।**
**धर्मः श्रेष्ठ इति प्रोक्तो मया वेदार्थपारगाः ॥**

बुद्धप्रोक्ता आगमाः बुद्धागमाः । तादी.

**बुद्धागमोदिताद्धर्मादर्हागमसमीरितः ।**
**धर्मः श्रेष्ठ इति प्रोक्तो धर्मतत्त्वविशारदैः ॥**

अर्हागमेति । क्षपणकागम इत्यर्थः । तादी.

**अर्हागमोदिताद्धर्मात्प्राजापत्यागमोदितः ।**
**धर्मः श्रेष्ठ इति प्रोक्तः सर्वधर्मार्थवेदिभिः ॥**
**प्राजापत्यागमप्रोक्ताद्धर्माद्वेदविदां वराः ।**
**मया श्रेष्ठ इति प्रोक्तो धर्मो विष्ण्वागमोदितः॥**

(१) सूसं. ४।१।१६।३२.
(२) सूसं. ४।१।१६।३४–३७.

(१) सूसं. ४।१।२०।१२–२७.

**विष्णवागमोदिताद्धर्मादशेषादास्तिकोत्तमाः ।**
**शैवागमोदितो धर्मो वरिष्ठो नैव संशयः ॥**

प्राजापत्यागमेति । ब्रह्मणा प्रोक्तो ब्रह्मविषयो वाऽऽगमः । विष्णवागमशैवागमशब्दयोरप्येवमेवार्थः । तादी.

**शैवागमोदितो धर्मो द्विधा पूर्वमुदीरितः ।**
**अधःस्रोतोद्भवस्त्वेक ऊर्ध्वस्रोतोद्भवोऽपरः ॥**
**अधःस्रोतोद्भवाद्धर्मादूर्ध्वस्रोतोद्भवः परः ।**
**कामिकादिप्रभेदेन स भिन्नोऽनेकधा द्विजाः ॥**

उक्तधर्मस्य द्वैविध्यमाह— अधःस्रोतोद्भव इति । अधःस्रोतांसि लीलाविग्रहधारिणः परशिवस्य नामेरधोभागः, तदुद्भवो धर्मः अधःस्रोतोद्भवः । ऊर्ध्वस्रोतांसि ईशानतत्पुरुषादिपञ्चवक्त्राणि, तदुद्भवो धर्म ऊर्ध्वस्रोतोद्भवः कामिकादिभेदेन बहुधा भिन्नः । उक्तं ह्यागमिकैः— 'सद्योजातमुखाज्जाताः पञ्चाऽऽद्याः कामिकादयः । वामदेवमुखाज्जाता दीप्ताद्याः पञ्च संहिताः ॥ अघोरवक्त्रादुद्भूताः पञ्चाऽऽसिविजयादयः । पुंवक्त्रादपि चोद्भूताः पञ्च वै रौ( ? भै )रवादयः ॥ ईशानवदनाज्जाताः प्रोद्गीताद्यष्टसंहिताः ॥' इति । तादी.

**अधःस्रोतोद्भवो धर्मो बहुधा भेदितस्तथा ।**
**ऊर्ध्वस्रोतोद्भवाद्धर्मात्स्मार्ता धर्मा महत्तराः ॥**

अधःस्रोतोद्भवोऽपि धर्मः कापालादिमतभेदेन बहुधा भेदित इत्यर्थः । स्मार्ता धर्मा इति । मन्वादिस्मृतिपुराणस्था इत्यर्थः । तादी.

**स्मार्तेभ्यः श्रौतधर्माश्च वरिष्ठा मुनिसत्तमाः ।**
**तेषां शान्त्यादयः श्रेष्ठास्तेषां भस्मावगुण्ठनम् ॥**
**रुद्राक्षधारणं चापि शिवाद्याख्याभिभाषणम् ।**
**शिवलिङ्गार्चनं भक्त्या शिवोऽहमिति भावना ॥**
**शिवज्ञानैकनिष्ठस्य शुश्रूषा च विशिष्यते ।**
**तेषां वेदान्तवाक्यानां तात्पर्यस्य निरूपणम् ॥**

श्रौतधर्माणां मध्ये ये प्रवृत्तिहेतवो यागहोमाद्यास्तेभ्योऽपि निवृत्तिहेतवः शान्तिदान्त्यादयः श्रेयांस इत्यर्थः । तादी.

**वरिष्ठं सर्वधर्मेभ्यो ज्ञानं मोक्षैकसाधनम् ।**
**ज्ञानान्नास्ति परो धर्म इति वेदार्थनिर्णयः ॥**

उक्तानां धर्माणां पूर्वस्मात्पूर्वस्मादुत्तरोत्तरो धर्मो यथोत्कृष्यते एवं वेदान्तवाक्यजनिताज्ज्ञानादपि कश्चिदुत्कृष्टो धर्मोऽस्त्वित्यत आह— ज्ञानान्नास्तीति । तादी.

वर्णाश्रमाचारः मुक्तिसाधनम्

**ईश्वर उवाच—**

**[1]'वक्ष्यामि परमं गुह्यं मुक्तिसाधनमादरात् ।**
**वर्णाश्रमसमाचारादेव मुक्तिर्न चान्यतः ॥**
**स्वजातिविहितं धर्मं यः करोति प्रियेण तु ।**
**स जायते कुले मुख्ये विप्राणामीश्वराज्ञया ॥**

ब्राह्मणक्षत्रियवैश्यशूद्राणां मध्ये यस्य यो धर्मो विहितः स स्वजातिविहितः । ब्राह्मणस्य यजनादिकं क्षत्रियस्य राज्यपरिपालनादिकं वैश्यस्य कृषिगोरक्षादिकं शूद्रस्य द्विजशुश्रूषेत्येते स्वजातिविहिता धर्माः । तादी.

**[2]नित्यकर्माद्यनुष्ठानात्पापनाशो भवत्यतः ।**
**चित्तशुद्धिर्भवेज्जन्तो रुद्रस्यैव प्रसादतः ॥**

नित्यकर्मादीति । आदिशब्देन नैमित्तिकसंग्रहः । फलादिविरहेणेश्वरार्पणबुद्ध्या वर्णाश्रमादिविहितयोर्नित्यनैमित्तिकयोर्यदनुष्ठानं तेन तत्त्वज्ञानप्रतिबन्धकपापक्षयो भवति । अयं प्रथमः प्रसादः । अत इति । अस्मादेव पापक्षयात्मकात्प्रसादाच्चित्तशुद्धिर्भवति, कालुष्यहेतोः पापस्य तदा प्रक्षीणत्वादित्यर्थः । तादी.

**[3]सारूप्याख्या तु या मुक्तिः**
**सामीप्याख्या च याऽपरा ।**
**सालोक्याख्या च या तासां**
**केवलं कर्म साधनम् ॥**

केवलं कर्मेति । उक्ताद्वितीयब्रह्मात्मत्वज्ञानरहितं द्रव्यदेवतादिज्ञानसहकृतं चरमभावेनावस्थितमग्निहोत्रादिकं हिरण्यगर्भादिसगुणब्रह्मोपासनरूपं च कर्मैव सारूप्याद्यपरमुक्तेः साधनमित्यर्थः । तादी.

(१) सूसं. ४।१।२१।१४–१५.
(२) सूसं. ४।१।२३।९.
(३) सूसं. ४।१।३८।१०१–१०५.

ऐहिकामुष्मिकाकारा मुक्तयः सर्वदेहिनाम् ।
कर्मणैव हि सिध्यन्ति न ज्ञानेन विरोधतः ॥
ज्ञानं कर्म च वेदोक्तमेव नान्योदितं भवेत् ।
अन्योदितं तु विप्रेन्द्र व्यवहारेऽविवेकिनाम् ॥
अपेक्ष्य बुद्धिं विज्ञानं कर्म चेति विधीयते ।
तथापि व्यवहारे ते व्यावहारिकसिद्धिदे ॥
तस्मात्सर्वत्र नास्तिक्यं न कुर्यान्मतिमत्तमः ।
नास्तिक्यादेव सर्वेषां संसारे परिवर्तनम् ॥

अपेक्ष्य बुद्धिमिति । उत्तममध्यमाधमभावेनावस्थितानामधिकारिणां बुद्धितारतम्यमपेक्ष्य हिरण्यगर्भादिसगुणब्रह्मविज्ञानमग्निहोत्रादिकर्म चोभयं समुच्चित्याभिधीयते– 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह' ( ईउ. ११ ) इत्यादिना । एते च ज्ञानकर्मणी व्यवहारदशायां व्यावहारिकफलप्रयोजने इत्यर्थः । तादी.

¹क्षणध्वंसिक्रियायास्तु धर्माधर्मात्मकं फलम् ।
न ज्ञानं तेन विद्याया न साक्षात्कर्म साधनम् ॥
अधर्मस्य फलं साक्षान्नरकप्राप्तिरेव हि ।
न ज्ञानं तेन विद्याया नाधर्मः साधनं भवेत् ॥
धर्मस्य पापविच्छित्तिद्वारा शुद्धिस्तु मानसी ।
फलं न ब्रह्मविज्ञानं तेन धर्मो न साधनम् ॥

श्रवणादिवत्कर्मणोऽपि प्रसक्तं विद्योत्पत्तिसाधनत्वं निराकरोति– क्षणध्वंसीत्यादिना । तादी.

कर्मणा शुद्धचित्तस्य संसृतेर्दोषदर्शनम् ।
पुनर्विरक्तिः संसारान्मोक्षेच्छा जायते तथा ॥

एवं साक्षाद्विद्यासाधनत्वं कर्मणो निराकृत्य 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुत्या विहितं परम्परया तत्साधनत्वमाह– कर्मणा शुद्धचित्तस्येति । तादी.

वैदिकावैदिकमार्गविवेकः

²कायिकं वाचिकं चैव मानसं च तथैव च ।
त्रिविधं कर्म कर्तव्यं सर्वसिद्ध्यर्थमास्तिकैः ॥

(१) सूसं. ४।१।३९।८५–८८.
(२) सूसं. ४।१।४०।२.

¹तथैव मार्गाः सुभ्रान्ता अपि वेदोदितस्य तु ।
अर्थस्य प्राप्तिसिद्ध्यर्था भवन्त्येव न संशयः ॥

यथा चैवं तथैव मिथ्याभूता अपि मार्गा वेदप्रतिपादितस्य सच्चिदानन्दाखण्डैकरसस्य परमार्थसत्यवस्तुनः सोपानक्रमेण प्राप्तिहेतवो भवन्तीत्यर्थः । तादी.

तस्माद्वेदेतरा मार्गा नैव त्याज्या निरूपणे ।
वेदनिष्ठस्तु तान्मार्गान्कदाचिदपि न स्पृशेत् ॥
वेदनिष्ठस्तु मार्गांस्तान्मोहेनापि स्पृशेद्यदि ।
प्रायश्चित्ती भवत्येव नात्र कार्या विचारणा ॥
एकस्यामपि तैः सार्धं पङ्क्तौ वेदैकसंस्थितः ।
मोहेनापि न भुञ्जीत भुक्त्वा चान्द्रायणं चरेत् ॥
इज्यादानविवाहादिकार्यमध्ययनं श्रुतेः ।
यदि तैर्मोहतः कुर्यात्कुर्याच्चान्द्रायणत्रयम् ॥

तान्त्रिकवैदिकोभयमार्गप्रामाण्यम्

धर्माधर्मादिविज्ञानं नाऽऽददीत श्रुतौ स्थितः ।
तेभ्यो मोहादपि प्राज्ञः श्रेयस्कामी कदाचन ॥
वेदबाह्येषु मार्गेषु संस्कृता ये नराः सुराः ।
तेऽपि पाषण्डिनः साक्षात्तथा तैः सहवासिनः ॥
²तन्त्रोक्तेन प्रकारेण देवता या प्रतिष्ठिता ।
साऽपि वन्द्या सुसेव्या च पूजनीया च वैदिकैः ॥
शुद्धमेव हि सर्वत्र देवतारूपमास्तिकाः ।
तत्तत्तन्त्रोक्तपूजा तु तन्त्रनिष्ठस्य केवलम् ॥

शैववैष्णवादितन्त्रोक्तधर्मव्यवस्थावत् तदागमोक्तप्रकारेण प्रतिष्ठापितदेवतानमस्कारपूजनादिकमपि तेषामेव धर्मः , न वैदिकानामित्याशङ्क्याऽऽह– तन्त्रोक्तेनेति । देवतास्वरूपस्य निर्दोषत्वात् तत्प्रतिष्ठाप्रकारभेदेऽपि देवतास्वरूपप्रयुक्तनमस्कारपूजादिकं वैदिकैरपि कर्तव्यमेव । तत्तदागमोक्तप्रकारविशिष्टा पूजैव तेषां केवलं व्यवतिष्ठते इत्यर्थः । तादी.

³तन्त्रेषु दीक्षितो मर्त्यो वैदिकं न स्पृशेत्सदा ।
वैदिकश्चापि तन्त्रेषु दीक्षितं न स्पृशेत्सदा ॥

(१) सूसं. ४।२।१।२।२९–३५.
(२) सूसं. ४।२।२।८।४५–४६.
(३) सूसं. ४।२।२।८।४७–६१.

राजा तु वैदिकान्सर्वांस्तान्त्रिकानखिलानपि ।
असंकीर्णतया नित्यं स्थापयेन्मतिमत्तमाः ॥
अन्नपानादिभिर्वस्त्रैः सर्वान्राजाऽभिरक्षयेत् ।
वैदिकांस्तु विशेषेण ज्ञानिनं तु विशेषतः ॥
महादेवसमो देवो यथा नास्ति श्रुतौ स्मृतौ ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥
शिवज्ञानसमं ज्ञानं यथा नास्ति श्रुतौ स्मृतौ ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥
यथा वाराणसीतुल्या पुरी नास्ति श्रुतौ स्मृतौ ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥
षडक्षरसमो मन्त्रो यथा नास्ति श्रुतौ स्मृतौ ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥
यथा भागीरथीतुल्या नदी नास्ति श्रुतौ स्मृतौ ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥
ओदनेन समं भोज्यं यथा लोके न विद्यते ।
तथा वैदिकतुल्यस्तु नास्ति तन्त्रावलम्बिषु ॥
देवदेवो महादेवो यथा सर्वैः प्रपूज्यते ।
तथैव वैदिको मर्त्यः पूज्यः सर्वजनैरपि ॥
आदित्येन विहीनं तु जगदन्धं यथा भवेत् ।
तथा वैदिकहीनं तु जगदन्धं न संशयः ॥
प्राणेन्द्रियादिहीनं तु शरीरं कुणपं यथा ।
तथा वैदिकहीनं तु जगद्व्यर्थं न संशयः ॥
अहो वैदिकमाहात्म्यं मया वक्तुं न शक्यते ।
वेद एव तु माहात्म्यं वैदिकस्याब्रवीन्मुदा ॥
स्मृतयश्च पुराणानि भारतादीनि सुव्रताः ।
वैदिकस्य तु माहात्म्यं प्रवदन्ति सदा मुदा ॥

'तन्त्रेषु दीक्षितो मर्त्यः' इत्यादि वैदिकप्रशंसापरम् । तादी.

वेदोक्तं तान्त्रिकाः सर्वे स्वीकुर्वन्ति द्विजर्षभाः ।
नोपजीवन्ति तन्त्रोक्तं वेदः साक्षात्सनातनः ॥

आगमिकैरुपजीव्यत्वादपि वेदमार्गः श्रेयानित्याह—वेदोक्तमिति । तादी.

## गरुडपुराणम्

वर्णाश्रमादिभेदेन भिन्नदेवतास्थानप्राप्तिः

(१)ब्रह्मलोको ब्राह्मणानां शाक्रः क्षत्रियजन्मनाम् ।
मारुतं च विशां स्थानं गान्धर्वं शूद्रजन्मनाम् ॥
ब्रह्मचारिव्रतस्थानां ब्रह्मलोकः प्रजायते ।
प्राजापत्यं गृहस्थानां यथाविहितकारिणाम् ॥
स्थानं सप्तऋषीणां च तथैव वनवासिनाम् ।
यतीनामक्षयं स्थानं यदृच्छागामिनां सदा ॥
(२)धर्मात्संजायते मोक्षो ह्यर्थात्कामोऽभिजायते ॥
प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ।
ज्ञानं पूर्वं निवृत्तं स्यात्प्रवृत्तं चाग्निदेवकृत् ॥
(३)प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वपलायिनाम् ।
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तताम् ॥
गान्धर्वं शूद्रजातीनां परिचारे च वर्तताम् ।
अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् ॥
स्मृतं तेषां तु यत्स्थानं तदेव वन( ? गुरु )-वासिनाम् ।
सप्तर्षीणां तु यत्स्थानं स्थानं तद्वै वनौकसाम् ॥
यतीनां यतचित्तानां न्यासिनामूर्ध्वरेतसाम् ।
आनन्दं ब्रह्म तत्स्थानं यस्मान्नाऽऽवर्तते मुनिः ॥
योगिनाममृतस्थानं व्योमाख्यं परमाक्षरम् ।
आनन्दमैश्वरं यस्मान्मुक्तो नाऽऽवर्तते नरः ॥

धर्मलक्षणम्, परमो धर्मः आत्मज्ञानम्, सर्व-पुरुषार्थसाधनं धर्मः

(४)देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥
इज्याऽऽचारो दमोऽहिंसा दानं स्वाध्यायकर्म च ।
अयं च परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥

(१) गरुड. १।४।३६–३८.
(२) गरुड. १।४९।२०–२१.
(३) गरुड. १।४९।२४–२९.
(४) गरुड. १।९३।७–८.

[1]आचरेत्सर्वदा धर्मं तद्विरुद्धं तु नाऽऽचरेत् ॥
[2]आचारात्प्राप्नुयात्सर्वम् ... ... ॥
[3]स्वकर्मधर्मार्जितजीवितानां
शास्त्रेषु दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां
गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥
[4]तर्केऽप्रतिष्ठा श्रुतयो विभिन्ना
नासावृषिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥
[5]श्रुतिस्मृती तु विज्ञाय श्रौतं कर्म समाचरेत् ।
श्रौतं कर्म न चेदुक्तं तदा स्मार्तं समाचरेत् ॥
तत्राप्यशक्तः करणे सदाचारं चरेद्बुधः ।
श्रुतिस्मृती हृ विप्राणां लोचने कर्मदर्शने ॥
श्रुत्युक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
शिष्टाचारेण संप्राप्तस्त्रयो धर्माः सनातनाः ॥
[6]सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम् ॥
अदत्तस्यानुपादानं दानमध्ययनं जपः ।
विद्या वित्तं तपः शौचं कुले जन्म त्वरोगिता ॥
संसारोच्छित्तिहेतुश्च धर्मादेव प्रवर्तते ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥
[7]धर्मार्थं जीवितं येषां दुर्गाण्यतितरन्ति ते ॥
पश्यन्निवाग्रतो मृत्युं यो धर्मं नाऽऽचरेन्नरः ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥
[8]धर्मः स्वल्पोऽपि नृपते यदि सम्यगुपासितः ।
द्विजदेवप्रसादेन स याति बहुविस्तरम् ॥

(१) गरुड. १।९६।५८.
(२) गरुड. १।१०७।४.
(३) गरुड. १।१०९।४३.
(४) गरुड. १।१०९।५१.
(५) गरुड. १।२१३।२–४.
(६) गरुड. १।२१३।७–९.
(७) गरुड. १।२२१।९, १६.
(८) गरुड. २।६।१४२.

श्रीकृष्ण उवाच–
[1]स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥
कर्मविभ्रष्टकालुष्यो वासुदेवानुचिन्तया ।
बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ॥
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।
विरक्तसेवी लब्धाशी यतवाक्कायमानसः ॥
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।
अतः परं नृणां कृत्यं नास्ति कश्यपनन्दन ॥
[2]एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽपि भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
बान्धवा विमुखा यान्ति धर्मस्तमनुगच्छति ॥
[3]श्रद्धाविरहितो धर्मो नेहामुत्र च तत्फलम् ।
धर्माच्च जायते ह्यर्थो धर्मात्कामोऽपि जायते ॥
धर्म एवापवर्गाय तस्माद्धर्मं समाचरेत् ।
श्रद्धया साध्यते धर्मो बहुभिर्नार्थराशिभिः ।
अकिंचना हि मुनयः श्रद्धावन्तो दिवं गताः ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पक्षिन् प्रेत्य चेह न तत्फलम् ॥
[4]अशाश्वतं परिज्ञाय सर्वलोकोत्तरं सुखम् ।
यदा भवति मानुष्यं तदा धर्मं समाचरेत् ॥
महापुण्यप्रभावेण मानुष्यं जन्म लभ्यते ।
यस्तत्प्राप्य चरेद्धर्मं स गच्छेत्परमां गतिम् ॥
[5]स्वधर्मेणैवोर्ध्वगतिरधर्मेणाप्यधोगतिः ।
जायते सर्ववर्णानां स्वधर्मचलनात्खग ॥

(१) गरुड. २।१०।९२–९६.
(२) गरुड. २।१२।२३–२५.
(३) गरुड. २।१२।३१–३३.
(४) गरुड. २।१९।१७, १९.
(५) गरुड. २।४६।३५–३६.

देवत्वे मानुषत्वे च दानभोगादिकाः क्रियाः ।
या दृश्यन्ते वैनतेय तत्सर्वं कर्मजं फलम् ॥
[1]अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥
धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ॥
[2]वर्णाश्च चत्वार इह प्रशस्ताः
वर्णेषु धर्मिष्ठनराः प्रशस्ताः ।
धर्मेण सौख्यं समुपैति सर्वं
ज्ञानं समाप्नोति महापथे स्थितः ॥
[3]श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि मृत्युः प्रतीक्षेत कृतं वाऽप्यथवाऽकृतम् ॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तिदा ।
आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥
मोक्षं गच्छन्ति तत्त्वज्ञा धार्मिकाः स्वर्गतिं नराः ।
पापिनो दुर्गतिं यान्ति संसरन्ति खगादयः ॥

## पद्मपुराणम्

अर्थकाममोक्षपुरुषार्थसाधनम् ऐहिकपारलौकिकहितसाधनं च धर्मः

[4]आश्रमे यत्र यो धर्मो रक्षणीयः स पण्डितैः ॥
धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः ।
इत्येवं निश्चयज्ञास्ते वर्णयन्ति विपश्चितः ॥
[5]भो मृगाक्ष्यः कथं त्याज्यो धर्मो धर्मधनैर्नरैः ॥
धर्मश्चार्थश्च कामश्च मोक्षश्चैतच्चतुष्टयम् ।
यथोक्तं फलदं ज्ञेयं विपरीतं तु निष्फलम् ॥
[6]ये नियोगांश्च शास्त्रोक्तान्धर्माधर्मविमिश्रितान् ।
पालयन्तीह ये वैश्य न ते यान्ति यमालयम् ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
स्वधर्मनिरताः सर्वे नाकपृष्ठे वसन्ति ते ॥

यथोक्तचारिणः सर्वे वर्णाश्रमसमन्विताः ।
नरा जितेन्द्रिया यान्ति ब्रह्मलोकं तु शाश्वतम् ॥
इष्टापूर्तरता ये च पञ्चयज्ञरताश्च ये ।
दयान्विताश्च ये नित्यं नेक्षन्ते ते यमालयम् ॥
[1]किमत्र बहुनोक्तेन यान्त्यधर्मेण दुर्गतिम् ।
आरोहन्ति दिवं धर्मैर्नराः सर्वत्र सर्वदा ॥
तेन बालत्वमारभ्य कर्तव्यो धर्मसंग्रहः ॥
[2]वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
अकुर्वाणः पतत्याशु नरकानतिभीषणान् ॥
नित्यं धर्मार्थकामेषु युज्येत नियतो द्विजः ।
न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ॥
सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् ।
धर्मो हि भगवान्देवो गतिः सर्वेषु जन्तुषु ॥
[3]तत्तदेवाऽऽचरेत्कर्म हरिः प्रीणाति येन हि ॥
[4]आचारेण नरो देवि सुखित्वमुपजा( ? नी )यते ।
अनाचारेण पापेन नाशं याति तथा ध्रुवम् ॥
[5]धर्मोऽयं माधवस्याङ्गं सर्वदेवैश्च पालितम् ।
धर्मं च चिन्तयेद्देवि धर्मं चैव प्रपालयेत् ।
तस्य विष्णुः स धर्मात्मा सर्वदैव प्रसादवान् ॥
[6]यत्र सत्यं च धर्मश्च तपः पुण्यं तथैव च ।
यत्र विष्णुर्हृषीकेशो जयस्तत्र प्रदृश्यते ॥
[7]ब्रह्मचर्येण तपसा मखपञ्चकवर्तनैः ।
दानेन नियमैश्चापि क्षमाशौचेन वल्लभ ॥
अहिंसया सुशक्त्या च ह्यस्तेयेनापि वर्तनैः ।
एतैर्दशभिरङ्गैस्तु धर्ममेव प्रपूरयेत् ॥
संपूर्णो जायते धर्मो ग्रासैर्भोगो यथोदरे ।
धर्मं सृजति धर्मात्मा त्रिविधेनैव कर्मणा ॥

(१) गरुड. २।४७।२४–२५, ४६.
(२) गरुड. २।४८।२०.
(३) गरुड. २।४९।४१, ९४, ११६.
(४) पद्म. १।२२।८१, ८३.
(५) पद्म. १।२२।९३–९४.
(६) पद्म. १।३१।३९–४२.

(१) पद्म. १।३१।१७३–१७४.
(२) पद्म. १।५४।१३, ३८–३९.
(३) पद्म. १।६१।४३.
(४) पद्म. २।७।६. (५) पद्म. २।९।८,
(६) पद्म. २।१०।२०.
(७) पद्म. २।१२।४४–४७.

तस्य धर्मः प्रसन्नात्मा पुण्यमेवं तु प्रापयेत् ।
यं यं चिन्तयते प्राज्ञस्तं तं प्राप्नोति दुर्लभम् ॥
[1]ईदृशे चापि धर्मे तु वर्तते यो नरः सदा ।
संसारे तस्य संभूतिः पुनरेवं न जायते ॥
स्वर्गं गच्छति धर्मेण सत्यं सत्यं वदाम्यहम् ।
एवं ज्ञात्वा महाप्राज्ञ धर्ममेवं व्रजस्व हि ॥
सर्वं हि प्राप्यते कान्त यदसाध्यं महीतले ।
धर्मप्रसादतस्तस्मात्कुरु वाक्यं ममैव हि ॥
[2]धर्मेण प्राप्यते पुत्रो धनं धान्यं तथा स्त्रियः ॥
[3]सत्येन तपसा ज्ञानध्यानेनाध्ययनेन वा ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥
प्रवृत्तौ च निवृत्तौ च मुनिशास्त्रोक्तमेव च ।
आचरन्ति महात्मानस्ते नराः स्वर्गगामिनः ॥
[4]धर्मस्य गतयः सूक्ष्मा दुर्ज्ञेया हीश्वरैरपि ।
मुह्यन्ते चात्र विद्वांसोऽचिन्त्यशक्तिहरेः कृतौ ॥
फलाधिक्यं भवेद्भूप त्वाधिक्याद्भावकर्मणोः ।
सूक्ष्मा धर्मस्य विज्ञेया गतिस्तु विविधैरपि ॥
[5]यस्मिन्कस्मिन्कुले जाता दयावन्तो यशस्विनः ।
सानुक्रोशाः सदाचारास्ते नराः स्वर्गगामिनः ॥
मतिं रक्षन्ति ये लोभान्मनो रक्षन्ति कामतः ।
धर्मं रक्षन्ति दुःसङ्गात्ते नराः स्वर्गगामिनः ॥
श्रोतारो धर्मशास्त्राणां धर्मप्रत्ययसंगताः ।
प्रियंकराश्च बालानां स्वर्गलोके व्रजन्ति ते ॥
शुभानामशुभानां च कर्मणां फलसंचये ।
विपाकज्ञाश्च ये केचित्ते नराः स्वर्गगामिनः ॥
दानधर्मप्रवृत्तानां धर्ममार्गानुयायिनाम् ।
प्रोत्साहं वर्धयन्ते ये ते मोदन्ते चिरं दिवि ॥

(१) पद्म. २।१३।३१–३३.
(२) पद्म. २।१४।१५.
(३) पद्म. २।१६।२१, ३५.
(४) पद्म. ४।८७।४, २७.
(५) पद्म. ४।९२।२१, २३, ४४, ५४–५५.

[1]धर्मो हि गहनो ज्ञेयः प्रयत्नेनापि धीमता ॥
[2]एको सुहृयो महाधर्मो निधनेष्वनुयाति यः ।
सर्वमन्यच्छरीरोपभोग्यं नाशं प्रयाति च ॥
धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ।
धर्मेण हि सहायेन नरस्तरति दुर्गतिम् ॥
मृतं शरीरमुत्सृज्य लोष्टकाष्ठसमं भुवि ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥
[3]परित्यजेदर्थकामौ स्यातां चेद्धर्मवर्जितौ ।
धर्मेण प्राप्यते सर्वमर्थकामादिकं सुखम् ॥
धर्म एव ततः श्रेयान्विधिना समनुष्ठितः ।
धैर्यमालम्ब्य च ततो धर्ममेव समाचर ॥
[4]परलोकसहायो हि धर्मो भार्या न बान्धवाः ।
भार्या वा पितरौ पुत्रा यावदायुर्न बान्धवाः ॥
[5]आचाराल्लभते चाऽऽयुराचाराल्लभते धनम् ।
आचारात्स्वर्गमोक्षं च आचारो हन्त्यलक्षणम् ॥
अनाचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥
नरके नियतं वासो ह्यनाचारान्नरस्य च ।
आचाराच्च परं लोकमाचारं शृणु तत्त्वतः ॥
[6]धर्मादर्थं च कामं च मोक्षं च त्रितयं लभेत् ।
तस्माद्धर्मं समीहेत विद्वान्स बहुधा स्मृतः ॥
[7]पूर्वे वयसि यो धर्मं न करोति विमूढधीः ।
स पश्चात्तप्यते वृद्धः सार्थभ्रष्ट इवाध्वगः ॥
मासाष्टकेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ।
दिवसे चैव तत्कुर्याद्येन रात्रिं सुखं वसेत् ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवं तु तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥

(१) पद्म. ४।९४।८१.
(२) पद्म. ४।९५।१५–१६, १९.
(३) पद्म. ४।९५।२६, ४८.
(४) पद्म. ४।११३।३७.
(५) पद्म. ५।४६।७७–७९.
(६) पद्म. ६।७५।२.
(७) पद्म. ६।२३६।५५–५९.

श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ।
न च प्रतीक्षते कालः कृतमस्य न वा कृतम् ॥
[१]आरोहन्ति दिवं धर्मैर्नराः सर्वत्र सर्वदा ।
तेन बालत्वमारभ्य कर्तव्यो धर्मसंग्रहः ॥
[२]श्रुतिस्मृतिसदाचारविहितं कर्म केवलम् ।
सेवितव्यं चतुर्वर्णैर्भजन्नारायणं सदा ॥
अन्यथा निरयं याति विमार्गागमसेवनात् ।
अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म संत्यजेत् ॥

## ब्रह्मपुराणम्

भावानुरूपं कर्मफलम्

[३]कर्मणा तात लभ्यन्ते फलानि विविधानि च ।
त्रयाणां कारणानां च कर्म प्रथमकारणम् ॥
ततश्च कारणं कर्ता ततश्चान्यत्प्रकीर्तितम् ।
उपादानं तथा बीजं न च कर्म विदुर्बुधाः ॥
कर्मणां कारणत्वं च कारणे पुष्कले सति ।
भावाभावौ फले दृष्टौ तस्मात्कर्माश्रितं फलम् ॥
कर्मापि द्विविधं ज्ञेयं क्रियमाणं तथा कृतम् ।
कर्तव्यं क्रियमाणस्य साधनं यद्यदुच्यते ॥
तद्भावाः कर्मसिद्धौ च उभयत्रापि कारणम् ।
यद्यद्भावयते जन्तुः कर्म कुर्वन्विचक्षणः ।
तद्भावनानुरूपेण फलनिष्पत्तिरुच्यते ॥
करोति कर्म विधिवद्विना भावमथा यदि ।
अन्यथा स्यात्फलं सर्वं तस्य भावानुरूपतः ॥
तस्मात्तपो व्रतं दानं जपयज्ञादिकाः क्रियाः ।
कर्मणस्त्वनुरूपेण फलं दास्यन्ति भावतः ।
तस्माद्भावानुरूपेण कर्म वै दास्यते फलम् ॥
भावस्तु त्रिविधो ज्ञेयः सात्त्विको राजसस्तथा ।
तामसस्तु तथा ज्ञेयः फलं कर्मानुसारतः ॥
भावनानुगुणं चेति विचित्रा कर्मणां स्थितिः ।
तस्मादिच्छानुसारेण भावं कुर्याद्विचक्षणः ॥

(१) पद्म. ६।२४५।१०९.
(२) पद्म. ६।२५०।५५–५६.
(३) ब्रह्म. १७३।१०–२५.

पश्चात्कर्मापि कर्तव्यं फलदाताऽपि तद्विधम् ।
फलं ददाति फलिनां फले यदि प्रवर्तते ॥
कर्मकारो न तत्रास्ति कुर्यात्कर्म स्वभावतः ।
तदेव चोपदानादि सत्त्वादिगुणभेदतः ॥
भावात्प्रारभते तद्वद्भावैः फलमवाप्यते ।
धर्मार्थकाममोक्षाणां कर्म चैव हि कारणम् ॥
भावस्थितं भवेत्कर्म मुक्तिदं बन्धकारणम् ।
स्वभावानुगुणं कर्म स्वस्यैवेह परत्र च ॥
फलानि विविधान्याशु करोति समतानुगम् ।
एक एव पदार्थोऽसौ भावैर्भेदः प्रदृश्यते ।
क्रियते भुज्यते वाऽपि तस्माद्भावो विशिष्यते ॥

युगानुरूपो धर्मह्रासः

[१]सर्वत्र धर्मः सामान्यो यतो धर्मः सनातनः ।
साध्यसाधनभावेन स एव बहुधा मतः ॥
तस्याऽऽश्रयश्च द्विविधो देशः कालश्च सर्वदा ।
कालाश्रयश्च यो धर्मो हीयते वर्धते सदा ॥
युगानामनुरूपेण पादः पादोऽस्य हीयते ।
धर्मस्येति महाप्राज्ञ देशापेक्षा तथोभयम् ॥
कालेन चाऽऽश्रितो धर्मो देशे नित्यं प्रतिष्ठितः ।
युगेषु क्षीयमाणेषु न देशेषु स हीयते ॥
उभयत्र विहीने च धर्मस्य स्यादभावता ।
तस्माद्देशाश्रितो धर्मश्चतुष्पात्सुप्रतिष्ठितः ॥
स चापि धर्मो देशेषु तीर्थरूपेण तिष्ठति ।
कृते देशं च कालं च धर्मोऽवष्टभ्य तिष्ठति ॥
त्रेतायां पादहीनेन स तु पादः प्रदेशतः ।
द्वापरे चार्धतः काले धर्मो देशे समास्थितः ॥
कलौ पादेन चैकेन धर्मश्चलति संकटम् ।
एवंविधं तु यो धर्मं वेत्ति तस्य न हीयते ॥
युगानामनुभावेन जातिभेदाश्च संस्थिताः ।
गुणेभ्यो गुणकर्तृभ्यो विचित्रा धर्मसंस्थितिः ॥

चतुर्विधपुरुषार्थसाधनं धर्मः, अधर्मः अधोगतिदः

[२]तस्माद्धर्मः सेवितव्यः सदा मुक्तिफलप्रदः ।
धर्मादर्थस्तथा कामो मोक्षश्च परिकीर्त्यते ॥

(१) ब्रह्म. १७५।१७–२५.
(२) ब्रह्म. २१६।७३–८१.

धर्मो माता पिता भ्राता धर्मो नाथः सुहृत्तथा ।
धर्मः स्वामी सखा गोप्ता तथा धाता च पोषकः ॥
धर्मादर्थोऽर्थतः कामः कामाद्भोगः सुखानि च ।
धर्मादैश्वर्यमैकाग्र्यं धर्मात्स्वर्गगतिः परा ॥
धर्मस्तु सेवितो विप्रास्त्रायते महतो भयात् ।
देवत्वं च द्विजत्वं च धर्मात्प्राप्नोत्यसंशयम् ॥
यदा च क्षीयते पापं नराणां पूर्वसंचितम् ।
तदैषां भजते बुद्धिर्धर्मे चात्र द्विजोत्तमाः ॥
जन्मान्तरसहस्रेषु मानुष्यं प्राप्य दुर्लभम् ।
यो हि नाऽऽचरते धर्मं भवेत्स खलु वञ्चितः ॥
कुत्सिता ये दरिद्राश्च विरूपा व्याधितास्तथा ।
परप्रेष्याश्च मूर्खाश्च ज्ञेया धर्मविवर्जिताः ॥
ये हि दीर्घायुषः शूराः पण्डिता भोगिनोऽर्थिनः ।
अरोगा रूपवन्तश्च तैस्तु धर्मः पुरा कृतः ॥
एवं धर्मरता विप्रा गच्छन्ति गतिमुत्तमाम् ।
अधर्मं सेवमानास्तु तिर्यग्योनिं व्रजन्ति ते ॥

व्यास उवाच–

[1]एकः प्रसूयते विप्रा एक एव हि नश्यति ।
एकस्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिम् ॥
असहायः पिता माता तथा भ्राता सुतो गुरुः ।
ज्ञातिसंबन्धिवर्गश्च मित्रवर्गस्तथैव च ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
मुहूर्तमिव रोदित्वा ततो यान्ति पराङ्मुखाः ॥
तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ।
तस्माद्धर्मः सहायश्च सेवितव्यः सदा नृभिः ॥
प्राणी धर्मसमायुक्तो गच्छेत्स्वर्गगतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकं चोपपद्यते ॥
तस्मात्पापागतैरर्थैर्नानुरज्येत पण्डितः ।
धर्म एको मनुष्याणां सहायः परिकीर्तितः ॥
इह लोके स तु प्राणी जन्मप्रभृति भो द्विजाः ।
सुकृतं कर्म वै भुङ्क्ते धर्मस्य फलमाश्रितः ॥
यदि धर्मं समायुज्य जन्मप्रभृति सेवते ।
ततः स पुरुषो भूत्वा सेवते नित्यदा सुखम् ॥

(१) ब्रह्म. २१७।४–९, २८–३०.

अथान्तरान्तरं धर्ममधर्ममुपसेवते ।
सुखस्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति ॥

व्यास उवाच–

[1]गृहस्थेन सदा कार्यमाचारपरिरक्षणम् ।
न ह्याचारविहीनस्य भद्रमत्र परत्र वा ॥
यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्तते ॥
दुराचारो हि पुरुषो नेहाऽऽयुर्विन्दते महत् ।
कार्यो धर्मः सदाचार आचारो हन्त्यलक्षणम् ॥
तस्य स्वरूपं वक्ष्यामि सदाचारस्य भो द्विजाः ।
आत्मनैकमना भूत्वा तथैव परिपालयेत् ॥
त्रिवर्गसाधने यत्नः कर्तव्यो गृहमेधिना ।
तत्संसिद्धौ गृहस्थस्य सिद्धिरत्र परत्र च ॥
पादेनाप्यस्य पारत्र्यं कुर्याच्छ्रेयः स्वमात्मवान् ।
अर्धेन चाऽऽत्मभरणं नित्यनैमित्तिकानि च ॥
पादेनैव तथाप्यस्य मूलभूतं विवर्धयेत् ।
एवमाचरतो विप्रा अर्थः साफल्यमृच्छति ॥
तद्वत्पापनिषेधार्थं धर्मः कार्यो विपश्चिता ।
परत्रार्थस्तथैवान्यः कार्योऽत्रैव फलप्रदः ॥
प्रत्यवायभयात्कामस्तथाऽन्यश्चाविरोधवान् ।
द्विधा कामोऽपि रचितस्त्रिवर्गायाविरोधकृत् ॥
परस्परानुबन्धांश्च सर्वानेतान्विचिन्तयेत् ।
विपरीतानुबन्धांश्च बुध्यध्वं तान्द्विजोत्तमाः ॥
धर्मो धर्मानुबन्धार्थो धर्मो नाऽऽत्मार्थपीडकः ।
उभाभ्यां च द्विधा कामं तेन तौ च द्विधा पुनः ॥

महेश्वर उवाच–

[2]आगमालोकधर्माणां मर्यादाः पूर्वनिर्मिताः ।
प्रमाणेनानुवर्तन्ते दृश्यन्ते ह दृढव्रताः ॥
अधर्मं धर्ममित्याहुर्ये च मोहवशं गताः ।
अव्रता नष्टमर्यादास्ते नरा ब्रह्मराक्षसाः ॥

(१) ब्रह्म. २२१।६–१६.
(२) ब्रह्म. २२५।६०–६१.

[1]द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तो वा विभाषितः ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥
[2]धर्मेण राज्यं लभते मनुष्यः
स्वर्गं च धर्मेण नरः प्रयाति ।
आयुश्च कीर्तिं च तपश्च धर्मं
धर्मेण मोक्षं लभते मनुष्यः ॥
धर्मोऽत्र मातापितरौ नरस्य
धर्मः सखा चात्र परे च लोके ।
त्राता च धर्मस्त्विह मोक्षदश्च
धर्मादृते नास्ति तु किंचिदेव ॥
[3]श्रौतं स्मार्तं तथा कर्म कर्तव्यमधिकारिणा ।
शुचिना साधनैः शुद्धैः सम्यक् श्रद्धान्वितेन च ॥

## ब्रह्मवैवर्तपुराणम्

वेदविरुद्धं कर्म अशुभम्, निवृत्तिरूपं प्रवृत्तिरूपं च कर्म वेदविहितम्

[4]वेदेन विहितं कर्म तन्मन्ये मङ्गलं परम् ।
अवैदिकं तु यत्कर्म तदेवाशुभमेव च ॥
[5]शास्त्रे च द्विविधं मार्गं निर्दिष्टं मुनिपुंगव ।
प्रवृत्तिबीजमेकं च निवृत्तेः कारणं परम् ॥
कर्मवृक्षाङ्कुरच्छेदकारणं सर्वतारकम् ।
संतोषसंततिकरं प्रवरं सर्ववर्त्मनाम् ॥
दानेन तपसा वाऽपि व्रतेनानशनादिना ।
कर्मणा स्वर्गभोगादिसुखं भवति जीविनाम् ॥
काम्यानां कर्मणां चैव मूलं संछिद्य यत्नतः ।
अधुनेदं मोक्षबीजं संकल्पाभाव एव च ॥
यत्कर्म सात्त्विकं कुर्यादसंकल्पितमेव च ।
सर्वं कृष्णार्पणं कृत्वा परे ब्रह्मणि लीयते ॥

(१) ब्रह्म. २३६।६–७.
(२) ब्रह्म. २४५।३७–३८.
(३) इन्दु. १२.
(४) ब्रह्मवै. २।२५।७.
(५) ब्रह्मवै. २।३६।५३, ६६–६९.

[1]कर्म वेदविरुद्धं च सर्वेषामतिगर्हितम् ।
करोति विद्वांश्चेज्ज्ञात्वा स च जीवन्मृताधिकः ॥
[2]वेदोक्ताचरणे सर्वं मित्रं च जगतां जगत् ।
कृते वेदविरुद्धे च मित्रं शत्रुर्भवेद्ध्रुवम् ।
वेदोक्तं कृतवन्तं च हरिस्तुष्टो दिवानिशम् ॥
[3]नीतिसारं च वेदोक्तं परिणामसुखावहम् ॥
[4]सर्वेषामाश्रमाणां च स्वधर्मश्च यशः परम् ।
स्वधर्महीना नरके पतन्ति मूढचेतसः ॥
[5]नास्ति धर्मात्परो बन्धुर्नास्ति धर्मात्परं धनम् ।
धर्मात्प्रियः परः को वा स्वधर्मं रक्ष यत्नतः ॥
स्वधर्मे रक्षिते तात शश्वत्सर्वत्र मङ्गलम् ।
यशस्यं सुप्रतिष्ठा च प्रतापः पूजनं परम् ॥
[6]समाचरेत्स्वकर्मैतद्वेदोक्तं स्वात्मशुद्धये ॥
[7]एकेन कर्मणा तात स्वर्गं प्राप्नोति मानवः ।
कर्मणा न हि मोक्षं च तदेव मम सेवया ॥
स्वर्गं च सुकृतेनैव नरकं दुष्कृतेन च ॥
[8]वेदोक्तकर्मकर्तॄणामहं विश्वे वरानने ।
धर्मानुसारात्फलदो धर्मं जीवय सत्वरम् ॥
[9]गोषु विप्रेषु वेदेषु वह्निष्वथ च साधुषु ।
सुहृत्सु श्रीनिवासेषु तथा चासौ विशेषतः ।
सतीषु सत्येषु तथा दानशीलेषु तिष्ठति ॥
शुद्धसत्त्वमयः श्रीमान् सप्तलोकसमाश्रयः ।
भविष्यति मनुष्येषु नातिरिक्तः कदाचन ॥
[10]प्रवृत्तसंज्ञके धर्मे फलमभ्युदयो मतः ।
निवृत्तसंज्ञके धर्मे फलं निःश्रेयसं मतम् ॥

(१) ब्रह्मवै. ४।२५।१११.
(२) ब्रह्मवै. ४।३२।२८–२९.
(३) ब्रह्मवै. ४।४०।१३३.
(४) ब्रह्मवै. ४।५९।६८.
(५) ब्रह्मवै. ४।६२।२२–२३.
(६) ब्रह्मवै. ४।७५।१९.
(७) ब्रह्मवै. ४।८५।४६–४७.
(८) ब्रह्मवै. ४।८६।१२०.
(९) चव. १२.
(१०) चव. १२ क्रमेण ब्रह्मवैवर्ते.

## वराहपुराणम्

ईश्वरार्पणबुद्ध्या कर्म कर्तव्यम्

[1]यत्किंचित्कुरुते कर्म पुरुषः साध्वसाधु वा ।
सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते ॥

चतुष्पाद्धर्मस्य रूपम्

महातपा उवाच–

[2]अथोत्पत्तिं प्रवक्ष्यामि धर्मस्य महतो नृप ।
माहात्म्यं च तिथिं चैव तन्निबोध नराधिप ॥

[3]पूर्वं ब्रह्माऽव्ययः शुद्धः परात्परसंज्ञितः ।
स सिसृक्षुः प्रजास्त्वादौ पालनं च विचिन्तयन् ॥

[4]तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ॥

[5]तं दृष्ट्वोवाच भगवांश्चतुष्पादं वृषाकृतिम् ।
पालयेमाः प्रजाः साधो त्वं ज्येष्ठो जगतो भव ॥

[6]इत्युक्तः समवस्थोऽसौ चतुष्पात्स्यात्कृते युगे ।
त्रेतायां त्रिपदश्चासौ द्विपदो द्वापरेऽभवत् ॥

[7]कलावेकेन पादेन प्रजाः पालयते प्रभुः ।
षड्भेदो ब्राह्मणानां स त्रिधा क्षत्रे व्यवस्थितः ॥

(१) वराह. ५।१७.

(२) वराह. ३२।१ ; चव्र. ११ महतो ( महतीं ) उत्तरार्धे (माहात्म्येन समायुक्तं विस्तरेण नराधिप ॥).

(३) वराह. ३२।२ ; चव्र. ११ च विचि ( तासु चि).

(४) वराह. ३२।३ ; चव्र. ११ णाच्छ्वेत (णाङ्गात्स).

(५) वराह. ३२।४ ; चव्र. ११ साधो (पुत्र).

(६) वराह. ३२।५ ; चव्र. ११ समवस्थोऽसौ (स समुत्तस्थौ) तुष्पात्स्यात् ( तुष्पादः ) त्रिपदश्चासौ द्विपदो (स त्रिभिः पादैर्द्वाभ्यां वै).

(७) वराह. ३२।६ ; चव्र. ११ प्रभुः ( विभुः ) त्रिधा (त्रेधा).

[1]द्विधा वैश्ये तथा शूद्रे एकः सर्वगतः स्थितः ।
रसातलेषु सर्वेषु द्वीपवर्षेष्वयं प्रभुः ॥

[2]गुणद्रव्यक्रियाजातिचतुष्पात्संप्रकीर्तितः ।
त्रिशृङ्गोऽसौ स्मृतो वेदे ससंहितपदक्रमः ॥

तथा आद्यन्त ओङ्कारद्विशिराः सप्तहस्तवान् ।
उदात्तादित्रिभिर्बद्ध एवं धर्मो व्यवस्थितः ॥

प्रवृत्तिधर्मस्य निवृत्तिधर्मस्य च फलभेदः

[3]प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयो मतम् ।
निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम् ॥

प्रवृत्तिसंज्ञके कामनया क्रियमाणे । निवृत्तिसंज्ञके निष्कामे । तदुक्तं हारीतेन– ' काम्यैः केचिद्यज्ञदानैस्तपोभिर्लब्ध्वा लोकान्पुनरायान्ति जन्म । कामैर्मुक्ताः सत्ययज्ञाः सुदानास्तपोनिष्ठा अक्षयान्यान्ति लोकान् ॥ ' । अत्र कामनासदसद्भावनिबन्धनः फलभेदो दर्शितः ।

पप्र. ६५

सत्त्वं मोक्षकारकम्

[4]यद्वेदबाह्यं कर्म स्याच्छास्त्रमुद्दिश्य सेव्यते ।
तद्रौद्रमिति विख्यातं तन्नेष्टं गदितं नृणाम् ॥

यच्च न रजसा कर्म केवलं तामसं तु यत् ।
तद्दुर्गतिपरं नृणामिह लोके परत्र च ॥

सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ।
नारायणश्च भगवान्यज्ञरूपी विभाव्यते ॥

सन्मार्गाः ईश्वरगामिनः

[5]कृत्वा चाऽऽवश्यकं कर्म मम लोकं च गच्छति ।
नित्ययुक्तश्च शास्त्रज्ञो मम कर्मपरायणः ॥

(१) वराह. ३२।७ ; चव्र. ११ पूर्वार्धे ( द्वेधा वैश्येषु शूद्रेषु त्वेकधा जगतः प्रभुः । ) चतुर्थचरणे (द्वापरेषु स्वयंभुवः ).

(२) वराह. ३२।८–९ ; चव्र. १२ ( चतुःशृङ्गस्त्रिपाच्चैव द्विशिराः सप्तहस्तवान् । त्रिधैव बद्धो विप्राणां मुखगः पालयन्प्रजाः ॥ ).

(३) पप्र. ६५.

(४) वराह. ७०।२१–२३.

(५) वराह. ११७।३७–४०.

अहिंसापरमश्चैव सर्वभूतदयापरः ।
सामान्यश्च शुचिर्दक्षो मम नित्यं पथि स्थितः ॥
निगृह्य चेन्द्रियग्राममपराधविवर्जितः ।
उदारो धार्मिकश्चैव स्वदारेषु सुनिष्ठितः ॥
शास्त्रज्ञः कुशलश्चैव मम कर्मपरायणः ।
चातुर्वर्ण्यस्य मे भद्रे सन्मार्गेषु व्यवस्थितः ॥
[1]एकचित्तं मनः कृत्वा ज्ञानेन पृथुलोचने ।
समचित्तं प्रपद्यन्ते न ते लिप्यन्ति मानवाः ॥
सर्वभक्ष्याणि भक्षन्तः पेयापेयांस्तथैव च ।
समं चित्तं मयि यदि तदा तस्य न च क्रिया ॥
चित्तं मनश्च बुद्धिश्च मत्संस्थं च समं यदि ।
यत्किंचित्कुर्वतः कर्म पद्मपत्रमिवाम्भसि ।
संयोगान्न च लिप्येत समत्वादेव नान्यथा ॥
यजन्तः सर्वधर्मज्ञा ज्ञानसंस्कारसंस्कृताः ।
मयि चित्तं समाधाय मम कर्मपरायणाः ॥
ये मत्कर्माणि कुर्वन्ति मया हृदि समाश्रिताः ।
सुखं निद्रां समाधाय स्वपन्तः कर्मसंस्थिताः॥
कर्मणा यान्ति मत्स्थानम् ... ... ... ॥
ततो बुद्धिं मनश्चैव समं कृत्वा वसुन्धरे ।
पश्चात्कुर्वन्ति कर्माणि सदा ते मे हृदि स्थिताः ॥
[2]सत्येन पाल्यते धर्मो धर्मो रक्षति रक्षितः ॥
[3]लोकानां श्रेयसोऽर्थे तु पापानां तु विनाशनम् ।
क्रियाकारनियोगं च प्रोच्यमानं निबोध मे ॥
कैवल्यमभिसंपन्ने श्रद्दधानो भवेन्नरः ।
अनन्यमानसः कुर्याद्यथा धर्मानुशासनम् ।
प्राप्नुयादीप्सितान्कामान्पापैर्मुक्तो यथासुखम् ॥

(१) वराह. १४२।१७–२०, २५–२६, ४३, ४८.
(२) वराह. १९३।४९.
(३) वराह. २१०।४९–५१.

## वामनपुराणम्

देवदैत्यसिद्धगन्धर्वविद्याधरकिंपुरुषपितृऋषि-
मानवगुह्यकराक्षसपिशाचानां
धर्मविशेषाः

सुकेशिरुवाच–
[1]किंस्विच्छ्रेयः परे लोके किमु चेह द्विजोत्तमाः ।
केन पूज्यस्तथा सत्सु केनासौ सुखमेधते ॥
ऋषय ऊचुः–
श्रूयतां कथयिष्यामस्तव राक्षसपुंगव ।
यद्धि श्रेयो भवेद्वीर इह चामुत्र चाव्ययम् ॥
श्रेयो धर्मः परे लोके इह च क्षणदाचर ।
तस्मिन्समाश्रिते सत्सु पूज्यस्तेन सुखी भवेत् ॥
सुकेशिरुवाच–
किंलक्षणो भवेद्धर्मः किमाचरणसत्क्रियः ।
यमाश्रित्य न सीदन्ति देवाद्यास्तु तदुच्यताम् ॥
ऋषय ऊचुः–
देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः ।
स्वाध्यायतत्त्ववेदित्वं विष्णुपूजा इति श्रुतिः ॥
दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रियाः ।
वम्द( ? वेद )नं नीतिशास्त्राणां हर-
भक्तिरुदाहृता ॥
सिद्धानामुदितो धर्मो योगसिद्धिरनुत्तमा ।
स्वाध्यायो ब्रह्मविज्ञानं भक्तिर्विष्णौ हरे तथा ॥
उत्कृष्टोपासनं ज्ञेयं नृत्यवाद्येषु वेदिता ।
सरस्वत्यां स्थिरा भक्तिर्गान्धर्वो धर्म उच्यते ॥
विद्याधारित्वमतुलं विज्ञानं पौरुषे मतिः ।
विद्याधराणां धर्मोऽयं भवान्यां भक्तिरेव च ॥
गान्धर्वविद्यावेदित्वं भक्तिर्भानौ तथा स्थिरा ।
कौशल्यं सर्वशिल्पानां धर्मः किं( ? कैं )-
पुरुषः स्मृतः ॥
ब्रह्मचर्यममानित्वं योगाभ्यासरतिर्दृढा ।
सर्वत्र कामचारित्वं धर्मोऽयं पैत्रिकः स्मृतः ॥

(१) वामन. ११।१०, १२–२८.

ब्रह्मचर्यं सदा सत्यं जप्यं ज्ञानं च राक्षस ।
नियमो धर्मवेदित्वमार्षो धर्मः प्रचक्षते ॥
स्वाध्यायो ब्रह्मचर्यं च दानं यजनमेव च ।
अकार्पण्यमनायासो दयाहिंसाक्षमादयः ॥
जितेन्द्रियत्वं शौचं च माङ्गल्यं भक्तिरच्युते ।
शंकरे भास्करे देव्यां धर्मोऽयं मानवः स्मृतः ॥
धनाधिपत्यं भोगाश्च स्वाध्यायः शंकरार्चनम् ।
अहंकारमशौण्डीर्यं धर्मोऽयं गुह्यकेष्विति ॥
परदारावमर्शित्वं पारक्यार्थे च लोलुपाः( ? पा ) ।
स्वाध्यायस्त्र्यम्बके भक्तिर्धर्मोऽयं राक्षसः स्मृतः ॥
अविवेकस्तथाऽज्ञानं शौचहानिरसत्यता ।
पिशाचानामयं धर्मः सदा चाऽऽमिषगृध्नुता ॥
योनयो द्वादशैवैतास्तासु धर्माश्च राक्षस ।
ब्रह्मणा कथिताः पुण्या द्वादशैव गतिप्रदाः ॥

सदाचारलक्षणम् , स्वधर्मत्यागाद्भास्करकोपः

सुकेशिरुवाच—
सदाचारेति गदितं युष्माभिर्मम सुव्रताः ।
लक्षणं श्रोतुमिच्छामि कथयध्वं तदद्य मे ॥

ऋषय ऊचुः—
[1]सदाचारो निगदितस्तव योऽस्माभिरादरात् ।
लक्षणं तस्य वक्ष्यामस्तच्छृणुष्व निशाचर ॥
गृहस्थेन सदा कार्यमाचारपरिपालनम् ।
न ह्याचारविहीनस्य भद्रमत्र परत्र च ॥
यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः समुल्लङ्घ्य सदाचारं प्रवर्तते ॥
दुराचारो हि पुरुषो नेह नामुत्र नन्दते ।
कार्यो यत्नः सदाचार आचारो हन्त्यलक्षणम् ॥
तस्य स्वरूपं वक्ष्यामः सदाचारस्य राक्षस ।
शृणुष्वैकमनास्त्वं च यदि श्रेयोऽभिवाञ्छसि ॥

(१) वामन. १४।१३–१९.

धर्मोऽस्य मूलं धनमस्य शाखाः
पुष्पं च कामः फलमस्य मोक्षः ।
असौ सदाचारतरुः सुकेशिन्
संसेवितो येन स पुण्यभोक्ता ॥
[1]स्वान्स्वान्वर्णाश्रमप्रोक्तान्स्वधर्मान्नैव हापयेत् ।
स्वधर्मक्षपणादन्यविधानाद्यो द्विजस्त्रयीम् ।
संतापयति तस्यासौ परिकुप्यति भास्करः ॥
कुपितः कुलनाशाय देहरोगविवृद्धये ।
भानुर्वै यतते तस्य नरस्य क्षणदाचर ॥
तस्मात्स्वधर्मं न हि संत्यजेच्च
न हापयेच्चापि हि चाऽऽत्मवंशम् ।
यः संत्यजेच्चापि निजं हि धर्मं
तस्मै प्रकुप्येत दिवाकरस्तु ॥
[2]अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः ।
दानं दया च क्षान्तिश्च ब्रह्मचर्यममानिता ॥
शुभा सत्या च मधुरा वाङ्नित्यं सत्क्रियारतिः ।
सदाचारनिषेवित्वं परलोकप्रदायकाः ।
इत्यूचुर्मुनयो मह्यं धर्ममाद्यं पुरातनम् ॥
[3]यो धर्मशीलो जितमानरोषो
विद्याविनीतो न परोपतापी ।
स्वदारतुष्टः परदारवर्जे
न तस्य लोके भयमस्ति किंचित् ॥
यो धर्महीनः कलहप्रियः सदा
परोपतापी श्रुतशास्त्रवर्जितः ।
परार्थदारेप्सुरवर्णसंगमी
सुखं स विन्देन्न परत्र चेह ॥
धर्मान्वितोऽभूद्भगवान्प्रभाकरः
संत्यक्तरोषश्च मुनिः स वारुणिः ।
विद्यान्वितोऽभून्मनुरर्कपुत्रः
स्वदारसंतुष्टमनास्त्वगस्त्यः ॥

(१) वामन. १४।११९–१२१.
(२) वामन. १५।२–४.
(३) वामन. ६६।२९–३६.

एतानि पुण्यानि कृतान्यमीभि-
र्न पापबद्धानि कुलक्रमोक्त्या ।
तेजोन्विताः शापवरक्षमाश्च
जातास्तु सर्वे सुरसिद्धपूज्याः ॥
अधर्मयुक्तोद्भमितो बभूव
विभुश्च नित्यं कलहप्रियोऽभूत् ।
परोपतापी नमुचिर्दुरात्मा
परावलेपी सनको हि राजा ॥
परार्थलिप्सुर्दितिजो हिरण्यदृङ्-
मूर्खस्तस्याप्यनुजः सुदुर्मतिः ।
सुवर्णहारी यदुरुत्तमौजा
एते विनेशुर्ह्यनयात्पुरा हि ॥

तस्माद्धर्मो न संत्याज्यो धर्मो हि परमा गतिः ।
धर्महीना नरा यान्ति रौरवं नरकं महत् ॥
धर्मस्तु गदितः पुंभिस्तारणं दिवि चेह च ।
पतनाय तथाऽधर्म इह लोके परत्र च ॥
[1]सर्वमङ्गलमाङ्गल्यं वरेण्यं वरदं प्रभुम् ।
नारायणं नमस्कृत्य सर्वकर्माणि कारयेत् ॥

## कूर्मपुराणम्

वर्णाश्रमविधिस्तारकः

[2]तस्मात्सर्वप्रयत्नेन वर्णाश्रमविधौ स्थितः ।
समाश्रित्यान्तिमं भावं मायां लक्ष्मीं तरेद्बुधः ॥

धर्मार्थकामानां धर्मः प्रधानः

[3]अधर्मो मुनिशार्दूलाः स्वधर्मप्रतिबन्धकः ॥
[4]परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
सर्वलोकविरुद्धं च धर्ममप्याचरेन्न तु ॥
[5]धर्मात्संजायते ह्यर्थो धर्मात्कामोऽभिजायते ।
धर्म एवापवर्गाय तस्माद्धर्मं समाश्रयेत् ॥

(१) वामन. ९४।६०.
(२) कूर्म. १।१।१२२–१२३.
(३) कूर्म. १।२।३४.   (४) कूर्म. १।२।५३–५४.
(५) कूर्म. १।२।५४–५५ ; अत्र. १३ तृतीयचरणे (धर्मादेव परं ब्रह्म).

[1]धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ।
सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥
यस्मिन्धर्मसमायुक्तौ ह्यर्थकामौ व्यवस्थितौ ।
इहलोके सुखी भूत्वा प्रेत्याऽऽनन्त्याय कल्पते ॥
धर्मात्संजायते मोक्षो ह्यर्थात्कामोऽभिजायते ।
एवं साधनसाध्यत्वं चातुर्विध्ये प्रदर्शितम् ॥
य एवं वेद धर्मार्थकाममोक्षस्य मानवः ।
माहात्म्यं चानुतिष्ठेत स चाऽऽनन्त्याय कल्पते ॥
तस्मादर्थं च कामं च त्यक्त्वा धर्मं समाश्रयेत् ।
धर्मात्संजायते सर्वमित्याहुर्ब्रह्मवादिनः ॥
धर्मेण धार्यते सर्वं जगत्स्थावरजङ्गमम् ।
अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तमाः ॥

ज्ञानयुक्तः कर्मयोगोऽनुष्ठेयः, प्रवृत्तनिवृत्तयोः निवृत्तं निःश्रेयसकरम्

कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः ।
तस्माज्ज्ञानेन सहितं कर्मयोगं समाश्रयेत् ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
ज्ञानपूर्वं निवृत्तं स्यात्प्रवृत्तं यदतोऽन्यथा ॥
निवृत्तं सेवमानस्तु याति तत्परमं पदम् ।
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत्पुनः ॥

वर्णाश्रमधर्मप्राप्याणि दिव्यस्थानानि, मोक्षः परा गतिः

[2]प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वपलायिनाम् ॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तताम् ।
गान्धर्वं शूद्रजातीनां परिचारेण वर्तताम् ॥

(१) कूर्म. १।२।५५–६५.
(२) कूर्म. १।२।६८–७४.

अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ॥
सप्तर्षीणां तु यत्स्थानं स्मृतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ॥
यतीनां जितचित्तानां न्यासिनामूर्ध्वरेतसाम् ।
हैरण्यगर्भं तत्स्थानं यस्मान्नाऽऽवर्तते पुनः ॥
योगिनाममृतं स्थानं व्योमाख्यं परमक्षरम् ।
आनन्दमैश्वरं धाम सा काष्ठा सा परा गतिः ॥
(१)यदीच्छेदचिरात्स्थानं यत्तन्मोक्षाख्यमव्ययम् ।
वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः ।
पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥
(२)न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ।
स्वधर्मपालको नित्यं ब्रह्मभूयाय कल्पते ॥
(३)ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥

ब्रह्मार्पणम्

(४)ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥
(५)नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
(६)प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥
(७)यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे ।
कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ॥

ब्रह्मण्याधानं ब्रह्मार्पणम् । तदपि तत्रैवोक्तम्— 'ब्रह्मणा दीयते ... ब्रह्मार्पणमनुत्तमम् ॥' इति ।

स्मृच. २।४३३

(१)कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् ।
क्रियते विदुषा कर्म तद्भवेदपि मोक्षदम् ॥

ब्रह्मज्ञानान्नैष्कर्म्यम्

(२)अथवा यदि कर्माणि कुर्यान्नित्यान्यपि द्विजः ।
अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥
(३)तस्मात्सर्वप्रयत्नेन त्यक्त्वा कर्माश्रितं फलम् ।
अविद्वानपि कुर्वीत कर्माऽऽप्नोति चिरात्पदम् ॥
(४)कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा ।
मनःप्रसादमन्वेति ब्रह्मविज्ञायते नरः ॥
कर्मणा सहिताज्ज्ञानात्सम्यग्योगोऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम् ॥
तस्मात्सर्वप्रयत्नेन यत्र तत्राऽऽश्रमे रतः ।
कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात् ॥
संप्राप्य परमं ज्ञानं नैष्कर्म्यं तत्प्रसादतः ।
एकाकी निर्ममः शान्तो जीवन्नेव विमुच्यते ॥
वीक्षते परमात्मानं परं ब्रह्म महेश्वरम् ।
नित्यानन्दी निराभासस्तस्मिन्नेव लयं व्रजेत् ॥
(५)तस्मात्सेवेत सततं कर्मयोगं प्रसन्नधीः ।
तृप्तये परमेशस्य तत्पदं याति शाश्वतम् ॥
(६)श्रुतिस्मृत्युदितं सम्यक्कर्म वर्णाश्रमात्मकम् ।
अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ॥

---

(१) कूर्म. १।२।९९–१००.
(२) कूर्म. १।३।१३.
(३) कूर्म. १।३।१४ ; स्मृच. २।४३२ ; प्रपा. २९ ; मुक्ता. ३६५ चन्द्रिकायाम् ; आम. ३ ब्राह्मे.
(४) कूर्म. १।३।१५ ; समु. ९६ (=) ; स्मृच. २।४३३ ; प्रपा. २९.
(५) कूर्म. १।३।१६ ; स्मृच. २।४३३ तथा (तदा) ; प्रपा. २९ ; मुक्ता. ३६६ चन्द्रिकायाम्.
(६) कूर्म. १।३।१७ ; स्मृच. २।४३३ ; प्रपा. २९ करोति सततं (इति यत्कुरुते).
(७) कूर्म. १।३।१८ ; स्मृच. २।४३३ दप्या (दित्या) ; प्रपा. २९ मनुत्तमम् (मिदं परम्) ; मुक्ता. ३६६ चन्द्रिकायाम्.

(१) कूर्म. १।३।१९ ; प्रपा. २९ कर्म त (कार्यं त).
(२) कूर्म. १।३।२० ; प्रपा. २९.
(३) कूर्म. १।३।२१ ; प्रपा. २९ श्रितं फ (णि तत्फ) चतुर्थचरणे (कर्मणाऽऽप्नोति तत्फलम्).
(४) कूर्म. १।३।२२–२६.
(५) कूर्म. १।३।२७ ; स्मृच. २।४३३.
(६) कूर्म. १।१२।२५४–२५५.

धर्मात्संजायते भक्तिर्भक्त्या संप्राप्यते परम् ॥

वैदिककर्ममहिमा

[1]ममैवैषा परा शक्तिर्वेदसंज्ञा पुरातनी ।
ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ॥
तेषामेव च गुप्त्यर्थं वेदानां भगवानजः ।
ब्राह्मणादीन्ससर्जाथ स्वे स्वे कर्मण्ययोजयत् ॥
ये न कुर्वन्ति मद्धर्मं तदर्थं ब्रह्मनिर्मिताः ।
तेषामधस्तान्नरकांस्तामिस्रादीनकल्पयत् ॥
[2]वेदार्थवित्तमैः कार्यं यत्स्मृतं कर्म वैदिकम् ।
तत्प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः ॥
ज्ञानेन कर्मयोगेन भक्त्या योगेन वा नृप ।
सर्वसंसारमुक्त्यर्थमीश्वरं शरणं व्रज ॥

वसिष्ठादिप्रोक्तो यज्ञस्य तपसश्च महिमा

वसुमना उवाच–
[3]किं हि श्रेयस्करतरं लोकेऽस्मिन् ब्राह्मणर्षभाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥
वसिष्ठ उवाच–
अधीत्य वेदान्विधिवत्सुतांश्चोत्पाद्य यत्नतः ।
इष्ट्वा यज्ञेश्वरं यज्ञैर्गच्छेद्वनमथाऽऽत्मवान् ॥
पुलस्त्य उवाच–
आराध्य तपसा देवं योगिनं परमेश्वरम् ।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥
पुलह उवाच–
यमाहुरेकं पुरुषं पुराणं परमेश्वरम् ।
तमाराध्य सहस्रांशुं तमसो मोक्षमाप्नुयात् ॥
जमदग्निरुवाच–
अजो विश्वस्य कर्ता यो जगद्बीजं सनातनः ।
अन्तर्यामी च भूतानां स देवस्तपसेज्यते ॥
विश्वामित्र उवाच–
योऽग्निः सर्वात्मकोऽनन्तः स्वयंभू-
विश्वतोमुखः ।
स रुद्रस्तपसोग्रेण पूज्यते नेतरैर्मखैः ॥

(१) कूर्म. १।१२।२५७–२५९.
(२) कूर्म. १।१२।२६४, ३०१.
(३) कूर्म. १।२०।३४–४४.

भरद्वाज उवाच–
यो यज्ञैरिज्यते देवो वासुदेवः सनातनः ।
स सर्वदैवततनुः पूज्यते परमेश्वरः ॥
अत्रिरुवाच–
यतः सर्वमिदं जातं यस्यापत्यं प्रजापतिः ।
तपः सुमहदास्थाय पूज्यते स महेश्वरः ॥
गौतम उवाच–
यतः प्रधानपुरुषौ यस्य शक्तिरिदं जगत् ।
स देवदेवस्तपसा पूजनीयः सनातनः ॥
काश्यप उवाच–
सहस्रनयनो देवः साक्षी शम्भुः प्रजापतिः ।
प्रसीदति महायोगी पूजितस्तपसा परः ॥
क्रतुरुवाच–
प्राप्ताध्ययनयज्ञस्य लब्धपुत्रस्य चैव हि ।
नान्तरेण तपः कश्चिद्धर्मः शास्त्रेषु दृश्यते ॥

ईश्वरप्रसादार्थं कृतं कर्म संसारतारकम्

[1]वर्णाश्रमविभागेन स्वधर्मो मुक्तये मतः ॥
[2]सर्वकर्माण्यपि सदा कुर्वाणो मत्परायणः ।
मत्प्रसादादवाप्नोति शाश्वतं परमं पदम् ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
निराशीर्निर्ममो भूत्वा मामेकं शरणं व्रजेत् ॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यपि प्रवृत्तोऽपि नैव तेन निबध्यते ॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति तत्पदम् ॥
यदृच्छालाभतुष्टस्य द्वन्द्वातीतस्य चैव हि ।
कुर्वतो मत्प्रसादार्थं कर्म संसारनाशनम् ॥
[3]वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ।
तेनैव जन्मना ज्ञानं लब्ध्वा याति शिवं पदम् ॥
येऽपि तत्र वसन्तीह नीचा वै पापयोनयः ।
सर्वे तरन्ति संसारमीश्वरानुग्रहाद्द्विजाः ॥

(१) कूर्म. १।४०।२८.
(२) कूर्म. २।११।८०–८५.
(३) कूर्म. २।११।१०३–१०६.

किंतु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ।
धर्मान्समाश्रयेत्तस्मान्मुक्तये सततं द्विजाः ।
एतद्रहस्यं वेदानां न देयं यस्य कस्यचित् ॥
[1]धर्मः सारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥
[2]एवमाचारहीनस्तु पङ्के गौरिव सीदति ॥
[3]एवमीश्वरसमर्पितान्तरो
योऽनुतिष्ठति विधिं विधानवित् ।
मोहजालमपहाय सोऽमृतं
याति तत्पदमनामयं शिवम् ॥

विहितं कर्म नित्यमनुष्ठेयम्, तदकरणे प्रायश्चित्तम्

[4]वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
अकुर्वाणः पतत्याशु नरकान्याति भीषणान् ॥
न धर्मं ख्यापयेद्विद्वान्न पापं गूहयेदपि ।
कुर्वीताऽऽत्महितं नित्यं सर्वभूतानुकम्पनम् ॥
श्रुतिस्मृत्युदितः सम्यक्साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥
[5]यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् ॥
[6]धर्मस्याऽऽयतनं यत्नाच्छरीरं प्रतिपालयेत् ।
न च देहं विना रुद्रो विद्यते पुरुषैः परः ॥
नित्यधर्मार्थकामेषु युज्येत नियतो द्विजः ।
न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ॥
सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् ।
धर्मो हि भगवान्देवो गतिः सर्वेषु जन्तुषु ॥
[7]न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रलम्भनम् ॥
प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ।
छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥

(१) कूर्म. २।१२।३९.
(२) कूर्म. २।१४।८६.
(३) कूर्म. २।१४।९१.
(४) कूर्म. २।१५।१४, १७, १९.
(५) कूर्म. २।१५।२८ ; पमा. १।५२.
(६) कूर्म. २।१५।३८–४०.
(७) कूर्म. २।१६।११–१२, २१, २२.

अश्रौतधर्माचरणात्क्षिप्रं नश्यति वै कुलम् ॥
विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥
[1]अकृत्वा विहितं कर्म कृत्वा निन्दितमेव च ।
दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥

स्वधर्मसहिता तीर्थसेवा विहिता

[2]यः स्वधर्मान् परित्यज्य तीर्थसेवां करोति हि ।
न तस्य तीर्थं फलति इहलोके परत्र च ॥

इति च गृहस्थस्य तीर्थयात्रानिषेधवचनम्, तदग्निहोत्राद्यनुष्ठानशक्तादरिद्रविषयम्, 'यस्येष्टिधर्मेष्वधिकारिताऽस्ति' इति पूर्वोक्तविशेषवचनात्, अशक्तदरिद्रादेस्तदसंभवात् । यद्वा साग्निकस्य पत्नीसहितस्यैव गृहस्थस्य तीर्थयात्राधिकारः । 'सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः । सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात् ॥' इति कौर्मोक्तेः, 'प्रायश्चित्ती व्रजेत्तीर्थे पत्नीविरहितोऽपि वा । यज्ञेष्वनधिकारी वा यद्वा मन्त्रस्य साधकः ॥' इति स्मरणाच्च ।

विपा. ३।२।७२७–७२८

## भविष्यपुराणम्

आचारः प्रथमो धर्मः

[3]आचारः प्रथमो धर्मः श्रुत्युक्तश्च नरोत्तम ।
तस्मादस्मिन्समायुक्तो नित्यं स्यादात्मवान्द्विजः ॥
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण च संयुक्तः संपूर्णफलभाक्स्मृतः ॥
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परम् ।
अन्ये च मानवा राजन्नाचारं संश्रिताः सदा ॥

धर्मलक्षणम् , संकल्पमूलो धर्मः

ब्रह्मोवाच–
[4]विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

(१) कूर्म. २।३०।२.
(२) विपा. ३।२।७२७.
(३) भविष्य. १।१।८१–८४.
(४) भविष्य. १।७।४८–५५.

कामात्मता न प्रशस्ता न चैहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥
संकल्पाज्जायते कामो यज्ञायानि
न ( ? च ) सर्वशः ।
व्रता नियमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥
कामादृते क्रियाकारी दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते कश्चित्तत्तत्कामस्य चेष्टितम् ॥

निगमश्रुतिस्मृत्यादीनि विविधानि धर्ममूलानि

निगमो धर्ममूलं स्यात्स्मृतिशीले तथैव च ।
तथाऽऽचारश्च साधूनामात्मनस्तुष्टिरेव च ॥
सर्वं तु समवेक्षेत निश्चितं ज्ञानचक्षुषा ।
श्रुतिप्राधान्यतो विद्वान्स्वधर्मे निवसेत वै ॥
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् सदा नरः ।
प्राप्य चेह परां कीर्तिं याति शक्रसलोकताम् ॥

[1]आचारहीनान्न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः ।
शिल्पं हि वेदाध्ययनं द्विजानां
वृत्तं स्मृतं ब्राह्मणलक्षणं तु ॥
अधीत्य चतुरो वेदान्यदि वृत्ते न तिष्ठति ।
न तेन क्रियते कार्यं स्त्रीरत्नेनेव षण्ढकैः ॥
[2]मन्वन्तरेषु सर्वेषु चतुर्युगविभागशः ।
वर्णाश्रमाचारकृतं कर्म सिध्यत्यनुत्तमम् ॥
[3]संसिद्धिं यान्ति मनुजा जातिकर्मसमुच्चयात् ।
सिद्धिं गच्छेद्यथा कार्यं दैवकर्मसमुच्चयात् ।
एवं स सिद्धिमायाति पुरुषो जातिकर्मणोः ॥

भास्कर उवाच–

[4]स्मृतिधर्मं वेदमूलं शृणु त्वं गरुडाग्रज ।
पूर्वानुभूतं यद्बुया( ? ज्ञा )नमथ तत्स्मरणं
स्मृतिः ॥

(१) भविष्य. १।४१।८–९.
(२) भविष्य. १।४४।१८.
(३) भविष्य. १।४५।२–३.
(४) भविष्य. १।१८१।६.

[1]धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम् ।
स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः ॥

( १ ) धर्मः श्रेय इति । श्रेयः धर्मेण (? श्रेयःशब्देन) तत्साधनं लक्ष्यते । मुख्यं पुनः श्रेयोऽभ्युदयरूपम् । तदाह– श्रेयोऽभ्युदयलक्षणमिति । ब्रह्म. ६

( २ ) ( धर्मः श्रेयः ) श्रेयःसाधनम् इत्यर्थः ।
मनु. २।१

( ३ ) प्रथमश्रेयःशब्देनात्र श्रेयःसाधनं लक्ष्यते, श्रेयोऽभ्युदयलक्षणमिति श्रेयःशब्दस्याभ्युदयार्थत्वात् ।
चन्द्र. १०

( ४ ) धर्मः श्रेय इति श्रेयःसाधनमित्यर्थः, मुख्यं पुनः श्रेयोऽभ्युदयरूपमिति कल्पतरुः । अयं च धर्मशब्दो नित्यं नैमित्तिकं काम्यमित्याद्यभिमानुसारेण क्रियापर इति बोद्धव्यम्, अदृष्टरूपे तु धर्मे अन्य एव धर्मशब्द इति । कृत्य. ८

( ५ ) अत एव जैमिनिः– 'चोदनालक्षणोऽर्थो धर्मः' इति । तेन वेदैकप्रतिपाद्योऽर्थो धर्मः । 'कोऽर्थः ? योऽभ्युदयाय' इति भाष्यम् । आत. ३२७

[2]अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते ।
इहलोके सुखैश्वर्यमतुलं च खगाधिप ॥

अस्य धर्मस्य विहितक्रियाविशेषस्य इत्यर्थः ।
कृत्य. १८

पञ्चविधो धर्मः– वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः नैमित्तिकधर्मः गुणधर्मश्च

अनूरुरुवाच–

[3]कथं पञ्चविधो ह्येष प्रोक्तो धर्मः सनातनः ।
केऽस्य भेदास्तु ते पञ्च ब्रूहि मे देवसत्तम ॥

(१) भविष्य. १।१८१।७ श्रेयः समुद्दिष्टं (क्रियात्मा निर्दिष्टः) क्षणम् ( क्षणः ) तु पञ्चविधः ( एव च विधिः ) ; ब्रह्म. ६ पू., ७ उत्त. ; मनु. २।१ ; चन्द्र. १० पू. ; कृत्य. ८ पू., ९ उत्त. ; आत. ३२७ लक्षणम् ( साधनम् ) पू.
(२) भविष्य. १।१८१।८ सम्यगनु ( शब्दस्यानु ) मतुलं च (मलं यच्च) ; मनु. २।१ ; कृत्य. १८ मतुलं (मचलं).
(३) भविष्य. १।१८१।९.

भास्कर उवाच–

[1]वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् ।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥
[2]वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते ।
वर्णधर्मः स विज्ञेयो यथोपनयनं खग ॥

वर्णत्वमेकमाश्रित्येति एकशब्दो वक्ष्यमाणोभयनिमित्त-व्यावृत्तिपरः, वक्ष्यमाणधर्मस्य वर्ण(?वर्णाश्रम)धर्मत्वात् । अयं त्वाश्रमत्वमनपेक्ष्य वर्णत्वनिमित्तकः, अतः सत्या-मप्युपनयनस्याष्टवर्षत्वाद्यपेक्षायां नैकशब्दविरोध इति । अथवा वीप्सायामेकशब्दः, ततश्चैकैकं वर्णत्वमुद्दिश्य यो विधीयते स वर्णधर्म इति । अत एवाष्टवर्षादिवाक्यै-रनेक( ? रेक )वर्णत्वोद्देशेन विधीयमानमुपनयनं दृष्टान्ती-कृतम् । चम्र. ५

[3]वर्णमाश्रित्य यो धर्मो वर्णधर्मः स उच्यते ।
यथा विप्रो न हन्तव्यः सुरा पेया
न च द्विजैः ॥
[4]यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्तते ।
स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ॥

अधिकारः अत्र धर्मः । $ ब्रक. ७

[5]वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते ।
स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा ॥

[1]यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते ।
यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥
[2]निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते ।
नैमित्तिकः स विज्ञेयो जातिद्रव्यगुणाश्रयः ॥
[3]एष तु द्वि( ? त्रि )विधः प्रोक्तः
समासादविशेषतः ।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

निमित्तमेकमाश्रित्येत्यत्र प्रायश्चित्तस्य नित्यकाम्य-वैधर्म्यमात्रेण नैमित्तिकत्वम्, न तु राहुदर्शननिमित्त-स्नानादिवदकरणजनितदोषपरिहारार्थतया, निषिद्धकर्म-कृताधर्मपरिहारार्थतयैव तद्विधानोपपत्तेः । न च जातेष्टिवदुभयार्थत्वम्, तत्र फलनिमित्तयोरुभयोरुपात्त-त्वात्, न त्विह तथेति । चम्र. ५–६

[4]स चतुर्धा निरूप्यस्तु स्वरूपफलसाधनैः ।
प्रमाणतस्तु प्रत्येकं समस्तैश्च यथाक्रमम् ॥
[5]सम्यक्संसाधनं कर्म कर्तव्यमधिकारिणा ।
निष्कामेन सदा वीर काम्यं कामान्वितेन च ॥

( १ ) सम्यक् प्रथमकल्पादिना, संसाधनं यथा-विहितं साधनम् । अधिकारिणाऽर्थिना, समर्थेन, विदुषा च । चम्र. ३२

---

$ कूर. ब्रकवत् ।

(१) भविष्य. १।१८१।१० णामतः परम् ( णां स तत्परः ) चतुर्थचरणे (गुणनैमित्तिको यथा) ; ब्रक. ७ ; ममु. २।२५ ; चम्र. ५ ; कूर. ९.

(२) भविष्य. १।१८१।११ यो धर्मः सं ( अधि-कारे) ; ब्रक. ७ विज्ञेयो ( उक्तस्तु ) खग (नृप) ; ममु. २।२५ ब्रकवत् ; चम्र. ५ ब्रकवत् ; कूर. ९ ब्रकवत् .

(३) मच. २।२५.

(४) भविष्य. १।१८१।१२ ; ब्रक. ७ ; ममु. २।२५ ; चम्र. ५ यस्त्वाश्रमं (आश्रमं च) अधिकारः प्र (यो धर्मः संप्र) ; कूर. ९ ; मच. २।२५.

(५) भविष्य. १।१८१।१३ ; ब्रक. ७ ; ममु. २।२५ ; चम्र. ५ मौञ्जीया ( स्यान्मौञ्जी ) ; कूर. १० ; मच. २।२५ मौञ्जीया ( मौञ्जीयं ).

(१) भविष्य. १।१८१।१३–१४ गुणधर्मः स ( स गुणो धर्म ) परिपालनं ( पालनं परम् ) ; ब्रक. ७ ; ममु. २।२५ ; चम्र. ५ ; कूर. १० ; मच. २।२५ प्रवर्तेत (समुद्भूतो).

(२) भविष्य. १।१८१।१४ ; ब्रक. ७ पू. ; ममु. २।२५ पू. ; चम्र. ५ पू. ; कूर. १० पू. ; मच. २।२५ पू. .

(३) भविष्य. १।१८१।१५ ; ब्रक. ७ उत्त. ; ममु. २।५५ उत्त. ; चम्र. ५ उत्त. ; कूर. १० उत्त. ; मच. २।२५ त्तविधिर्यथा ( त्तं विधीयते ) उत्त.

(४) भविष्य. १।१८१।१६.

(५) भविष्य. १।१८१।३८–३९ कर्म ( धर्मं ) कामान्वि ( रूपान्वि ) ; चम्र. ३१ सदा वीर ( महा-वीर) ; निप्र. १।५९ वीर (पार्थ) च ( तु ) ; पप्र. ७० संसा (ससा) च (तु).

(२) सम्यक्संसाधनं यथाविहितसाधनम्। अधिकारिणा प्रत्यवायपरिहारार्थिना। निष्कामेन स्वर्गपश्वादिकाम्यानभिलाषुकेण। निप्र. १।५९

(३) ससाधनं यथाविहितेतिकर्तव्यताकम्। अधिकारिणेति। यद्धर्मविशिष्टं प्रति यत्कर्म विधीयते तद्धर्मवान् तत्राधिकारी, ते च धर्मा अननुगतास्तत्तच्छास्त्रेभ्योऽवगन्तव्याः। सम्यक् यथासामर्थ्यं प्रथमकल्पादिना कर्म कर्तव्यमित्यर्थः। नित्यं कर्माभिप्रेत्याऽऽह– निष्कामेनेति। यद्यपि कामनां विना कर्मानुष्ठानमेव न संभवति, प्रवृत्तिमात्रस्य कामनाधीनत्वात्। नित्येऽपि अनिष्टसाधनविरोधिनि अहिकण्टकनाशादाविव कामना संभवत्येव। अत एव मनुनाऽपि कर्ममात्रस्य कामनामूलकत्वमुक्तम्। यथा– 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्' इति। तथापि नित्ये फलकामनाया अधिकारनियामकत्वाभावप्रतिपादनार्थमिदम्। एवं च फलकामनां विनाऽपि अनुष्ठितान्नित्यकर्मणः फलसिद्धिः। काम्ये तु शास्त्रोक्तफलकामना फलनियामिकेति तत्कामनावतैव तत्कर्तव्यमित्याह– काम्यमित्यादिना। पप्र. ७०

[1]आचारयुक्तः श्रद्धालुर्वेदज्ञोऽध्यात्मचिन्तकः।
कर्मणां फलमाप्नोति न्यायार्जितधनश्च सः॥

(१) अध्यात्मचिन्तकः परलोकफलभागिन्यात्मनि दृढप्रत्ययवान्। न्यायार्जितधनः स्ववृत्त्याऽर्जितधनः। † चप्र. ३२

(२) आचारः शौचस्नानाचमनादिः। आचारः मन्वाद्युक्तातिथिपूजादिरिति कल्पतरुः। श्रद्धा फलावश्यंभावनिश्चयः। यथाऽऽह देवलः– 'प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता। नास्ति ह्यश्रद्दधानस्य धर्मकृत्यप्रयोजनम्॥' इति। वेदज्ञः वेदजन्यानुष्ठेयार्थज्ञानवान्। इदं च उत्तमधर्माभिप्रायकम्। तदुक्तं व्यासेन– 'अतः स परमो धर्मो यो वेदादवगम्यते' इति। अत एवात्र 'फलं संपूर्णमिति शेषः' इति कल्पतरौ व्याख्यातम्। ...... न्यायार्जितधनः स्ववृत्त्याऽर्जितकर्मोपयुक्तधनः। इदं च फलोत्कर्षार्थम्, अन्यवृत्त्यर्जितधनेनापि फलश्रवणात्। पप्र. ७०–७१

नित्यनैमित्तिककाम्यानि त्रिविधानि कर्माणि

[1]फलं विनाऽप्यनुष्ठानं नित्यानामिष्यते स्फुटम्।
काम्यानां स्वफलार्थं तु दोषघातार्थमेव च॥
[2]नैमित्तिकानां करणं त्रिविधं कर्मणां फलम्।
क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते॥
[3]अनुत्पत्तिं तथा चान्ये प्राहुरस्य विचक्षणाः।
नित्यक्रियासु चाप्यन्यैरनुषङ्गात्फलं स्मृतम्॥

(१) नित्यनैमित्तिककाम्यानि त्रिविधानि कर्माणि। तत्र कदाचित्कर्मणां रागविषयीकृतं फलमुद्दिश्य काम्यानामनुष्ठानम्, न तु नित्यानाम्। नैमित्तिकानां तु ब्रह्मवधादौ निमित्ते विहितानां दोषोपघातः फलम्। नित्यानां तर्हि किं फलमित्यु( १ त्य )पेक्षिते तदुक्तमुपात्तदुरितक्षयः प्रत्यवायानुदयो वा तत्फलमिति। यत्तु नित्यकर्मणामानुषङ्गिकः स्वर्गः फलमिति तदानुषङ्गिकत्वादेव

† निप्र. चप्रगतम्।

(१) भविष्य. १।१८१।३९–४०; चप्र. ३२ श्रद्धालुः (श्रद्धावान्) चिन्तकः (वित्तमः) सः (यः); निप्र. १।५९ वेदज्ञो (देशिको) शेषं चप्रवत्; पप्र. ७० चप्रवत्.

(१) भविष्य. १।१८६।२–३ विनाऽप्य (विना त्व) स्वफ (सफ) घातार्थं (क्षत्यर्थं); अप. ३।२१९ पृ. १०३८ च (तत्); ब्रक. १७; कृर. २१; निप्र. १।७; गप. २० च (तु); पप्र. ६५.

(२) भविष्य. १।१८६।३–४; अप. ३।२१९ पृ. १०३८; ब्रक. १७; कृर. २१; निप्र. १।७ करणं (करणे); गप. २० निप्रवत्; पप्र. ६५.

(३) भविष्य. १।१८६।४–५; अप. ३।२१९ पृ. १०३८ द्वितीयचरणे (प्रत्यवायस्य मन्वते) उत्तरार्धे (नित्यक्रियां तथा चान्ये अनुषङ्गफलश्रुतिम्॥); ब्रक. १७ द्वितीयचरणे (प्रत्यवायस्य मन्यते) उत्तरार्धे (नित्यक्रियां तथा चान्ये अनुषङ्गफलं श्रुतिम्॥); कृर. २२ चतुर्थचरणे (ह्यनुषङ्गफलां श्रुतिम्) शेषं ब्रकवत्; निप्र. १।७ कृरवत्; गप. २० लं स्मृतम् (लाश्रुतिम्) शेषं ब्रकवत्; पप्र. ६३ कृरवत्, उत्त. ६५ पूर्वार्धम् अपवत्, उत्तरार्धं कृरवत्.

प्रयोजन( ? देवाप्रयोजक )मिति ।

अप. ३।२१९ पृ. १०३८

( २ ) अत्र फलं विनाऽपि इष्टकामनाशून्यकार्यताबोधमात्रेणापि । स्वफलार्थं यत्कर्म यस्मै फलाय विहितं तदर्थम् । दोषघातार्थं दोषः ब्रह्मवधादिकं पापं तन्निर्हरणार्थम् । नन्वेवं नित्यानि निष्फलानि स्युः , तत्राऽऽह– त्रिविधं कर्मणां फलम् । त्रैविध्यमेवाऽऽह– क्षयं केचिदित्यादि । अनुत्पत्तिम् अकरणप्रसज्यमानप्रत्यवायपरीहारम् । नित्यक्रिया आवश्यकः संस्कारः । अनुषङ्गफलां पुरुषसंस्कारानुसारकृतां नित्यात् कर्मणः प्रसङ्गात् स्वर्गादिफलमपि सिध्यतीत्येवंपराम् । तेन " स्वधर्मानुष्ठाने परमपरिमितं सुखम् ' (आध. २।२।२) इत्यापस्तम्बवाक्याविरोधः " इति पारिजाते व्याख्यातम् । अन्ये तु– इच्छानन्तरं तावत्प्रवृत्तिरिति स्थितम् । इच्छा च सुखेऽनिष्टसाधनस्वरूपविरोधिनि च तत्त्वेनैव धीविषये, न हि तत्र फलान्तरहेतुताप्रयुक्त इच्छोपरागः । ततोऽन्यत्र सर्वत्र फलान्तरजनकत्वबुद्धया सा प्रयुज्यते । तथा च संध्यावन्दनादिष्वनिष्टसाधना(?न)विरोधिषु तत्त्वेनैव इच्छा, तथा तदुपादानम् । तेन नित्यानां संध्यावन्दनादीनां फलं विनाऽपि अनुष्ठानम् उत्पादनम्, तत्र स्वभावत एव इच्छोपरागादित्यव( ? त्याद्य )वाक्यखण्डार्थः । काम्यानां स्वफलार्थम् । दोषघातार्थे पापघातार्थमित्यग्रिमान्वेयम् । ' त्रिविधं कर्मणां फलम् ' इत्यादिके तु सचरणसार्धश्लोके नित्यकर्मफलविभाजकत्वेनावतारिते उपात्तदुरितक्षयो यदि फलं तदा नैमित्तिकत्वमेव स्यादिति क्व नित्यफलविभागः ? अकरणप्रसज्यमानप्रत्यवायच्छेदस्तु अग्रिमखण्डे फलत्वेन व्याख्यातोऽसंगत इव, अतात्त्विकप्रतियोगिकत्वात् । तृतीयखण्डो नित्ये संध्यावन्दनादिविषयसंस्कार एव कार्यतया प्रतीयते इत्यत्र संस्कारस्य सुखदुःखहेतुस्वरूपविरोधिभ्यामन्यस्य च यदि फलान्तरजनकत्वं विनाऽपीच्छाविषयत्वं स्यात्, स्यादप्येवम्, परं तत्रै(?त्रै)वावधेयम् । तस्मात् ' त्रिविधं कर्मणां फलम् ' इत्यादिको ग्रन्थः पूर्वपक्ष एव विवक्षितः । केचिदिति स्वरसोऽप्येवमेव । यदि त्वेकमेव कर्मानिष्टहेतुस्वरूपविरोधितया सुखसाधनतया च क्वापि बोधितमिति स्थितं तदा तदन्यथानुपपत्त्या द्विधाऽपि तत्रेच्छा जायते तदनुसारेण प्रवृत्तिरपीति । कृर. २२–२३

( ३ ) फलं विना स्वर्गादिकाम्यफलं विना । दोषघातार्थं विद्यमानादियज्ञानां यथापापक्षयार्थम् । नैमित्तिकानामित्यत्र नैमित्तिकपदं निमित्तविहितस्वसाभ्यां नित्यनैमित्तिकोभयपरम् । 'क्षयं केचिदुपात्तस्य' इति सिद्धान्तः, अन्यत् पक्षविकल्पमात्रम् । अनुषङ्गफलं आयुरादिवक्ष्यमाणफलम् । तेन भविष्यपुराणस्वरसादप्युपात्तदुरितक्षय एव फलम् । तच्च यथाशक्तिश्रुताङ्गसहितानाम् ।

न चैवमाधानमध्ययनं विना शूद्रस्यापि नित्याग्निहोत्राधिकारः स्यात्, आहवनीयकर्मज्ञानयोरप्यङ्गत्वेन तत्यागेनाङ्गान्तरसहितानां फलजनकत्वादिति वाच्यम् । ( नित्य ) नैमित्तिकविधिना हि यः (?यत्) कुर्यादित्युच्यते तत्र यथाशक्तीतिसंबन्धः । न चाग्निविद्ययोर्नित्यप्रयोगविधिना अनुष्ठानमुच्यते, किंत्वाधानाध्ययनविधिसिद्धयोरनेन स्वीकरणम् । ' गृहदाहे साङ्गां क्षामवतीं कुर्याद् यथाशक्ति ' इत्युक्तेऽग्निविद्ययोः कर्तव्यत्वाप्रतीतेरेव न यथाशक्त्या संबन्धः । एवं शौचयज्ञोपवीतशिखादेरपि विध्यन्तरसिद्धत्वात् तत्रापि न यथाशक्त्युपबन्धः । एवं देशकालयोरपि स्वतःसिद्धयोरेवाङ्गत्वेन स्वीकारेण कर्तव्यत्वमिति तत्रापि न यथाशक्तीति संबध्यते । ' ब्राह्मणोऽग्नीनादधीत ' इत्यादौ जातेरनुपादेयत्वात् तत्रापि न यथाशक्तीति । विस्मृतमपि चाङ्गस्मरणाशक्तेरेव विस्मृतमिति तत्यागेऽपि भवत्येव फलम् । कदाचित् कस्यचिदंशस्य हानिरित्यत्रानुगमकमशक्याङ्गत्वमिति न शक्याङ्गहानौ फलम् । प्रधानस्य तु श्रूयमाणत्वात् तत्रावश्यकर्तव्यत्वं प्रतीयत इति प्रधानैकदेशाकरणे न फलम् । अत एव सर्वाङ्गत्यागेन प्रधानमात्रानुष्ठाने श्रुतप्रधानाकरणस्यैव दुरितहेतुत्वात् दुरितानुत्पत्तिः , न तु पापक्षयरूपं फलम् , साङ्गादेव फलोत्पत्तेः । यत्तु गौतमस्मरणम् †'अशक्तौ मनसाऽप्येनमाचारमनुपालयेत्'

† ' मनसा वा तत्समग्रमाचारमनुपालयेदापत्कल्पः ' (गौध. ९।६७) इत्यस्यार्थतोऽनुवादोऽयम् ।

इति, नानेन प्रधानानुष्ठानाभावे फलं प्रत्यवायानुत्पादो वा कथ्यते, किंतु प्रधानाङ्गेषु च सर्वथा सामर्थ्याभावे मनसा तत्कर्मचिन्तनं तत्प्रत्याम्नायत्वेन विधीयते पशु-सोमाभावे वैश्वानरीवत्। तेन सर्वथा सामर्थ्याभावदशायां कर्मानुसंधानस्यानुकल्परूपत्वमुच्यते। सामर्थ्ये सति तु 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते। न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्॥' इति न्यायेन न फलं न वा प्रत्यवायपरिहारः। तत् सिद्धं नियतनिमित्तानि कर्माणि संध्यावन्दनाग्निहोत्रादीनि नित्यानि। नैमित्तिकेष्वशक्ति-कृताङ्गत्यागेऽप्यधिकारः, प्रधानमात्रकरणेऽपि प्रत्यवाया-नुत्पत्तिः। काम्ये तु सर्वाङ्गसंपत्तावधिकारः। प्रारब्धे काम्येऽङ्गहानौ 'यस्तप उपेत्य न यथार्थं तपस्यति असमाप्तौ वा विरमेत तत्राऽऽग्नेयो विधिश्चान्द्रायणं वा' इति, श्रुतिश्च– 'यो यस्य इत्युक्त्वा न यजते तत्र त्रैधातवी प्रायश्चित्तिः' इति प्रायश्चित्तविधिकल्पिते 'प्रारब्धमवश्यं समापयेत्' इति विधौ भाव्यापेक्षायां तत्फलकामनासत्त्वे तदेव कल्प्यते, तदभावे दुरितक्षय इति षष्ठतन्त्ररत्ने निर्णीतम्। अङ्गहानात्तु फलं न्यूनम्। तद् यथा पुत्रकामस्य मनोरिष्टौ होतुरपचारादिला नाम कन्या जज्ञ इति पुराणेषु लिङ्गदर्शनम्। अन्यथा विगुण-काम्यस्य निष्फलत्वे तत्र 'भिन्ने जुहोति', 'स्कन्ने जुहोति', 'यदु(?द)क्तो यज्ञ आर्तिमियाद् गार्हपत्यं चरेद्, भूः स्वाहेति जुहुयात्' इत्यङ्गविधिवैयर्थ्यं स्यात्। एवं कालस्यानुपादेयत्वेनान्याङ्गवैलक्षण्येऽपि काले प्रारब्धस्य दैवात्कालातिक्रमेऽकालेऽपि समापनम्। तच्च फलजनकम्। अन्यथा 'सांतपनीया तूत्कर्षेदग्निहोत्रम्' 'षोडशी चोकूथ्यसंयोगात्' (जैसू. ५।१।३०, ३५) इत्यादौ विहितकालातिक्रमे क्रमविचारो व्यर्थः स्यात्। न हि निष्फलस्य क्रमोऽङ्गम्। एवं मुख्यकाले करणा-शक्तौ गौणकालेऽपि कर्तव्यत्वम्। यदाह मण्डनः– 'मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते। गौण-कालेऽपि कर्तव्यं गौणोऽप्येतादृशो मतः॥'। गौण-कालस्तु क्वचिद् वाचनिकः, यथा स्मार्तहोमे 'आसायमाहुतेः प्रातराहुतिर्नात्येति'। क्वचिन्न्याय-मूलः 'सायमाहुत्यां हुतायां चेद्दुर्बलः स्यात् तदैव प्रातर्होमः' इत्यादौ। अत एव योगियाज्ञवल्क्यः– 'अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥'। स्कान्दे– 'यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥'। तथा ग्रन्थान्तरे 'यत्र मन्त्रभ्रंशो यज्ञभ्रंशो वा तत्र पुरुषं चिन्त-यन् तत्सूक्तं जपेत्' इति प्रायश्चित्तं विदधाति। मुख्य-कालगौणकालयोरकरणमेव दुरितहेतुरिति द्वयोरतिक्रमे 'एतेषामाचाराणामेकैकापचारेण गायत्र्यष्टसहस्रजपेन पूतो भवति' (इति), 'वेदोदितानां नित्यानां कर्मणां समतिक्रमे। स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥' इति वा सामान्येन प्रायश्चित्तम्। विशेषेण तु तत्र तत्र वक्ष्यते। यत्तु बौधायनः– 'प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत्। त्रेताग्निहोत्रमन्त्रांस्तु द्रव्याभावे यथा जपेत्॥' इति, तत्रात्यन्ताशक्तस्य महाविपदि मन्त्रजप-मात्रेणाग्निहोत्रलोपप्रत्यवायपरिहार इत्याशयः।

§ निप्र. ११८–११

(४) इयं तावत् स्थितिः– सुखदुःखाभावतदन्यतर-साधनानिष्टविरोधिषु तत्त्वेन ज्ञातेषु पुरुषस्येच्छा भवति, यथा सुखदुःखाभावयोस्तत्त्वेन ज्ञातयोरिच्छा तथा सुख-साधने ज्योतिष्टोमादौ दुःखाभावसाधने भारावतरणादौ अनिष्टसाधनविरोधिनि चाहिकण्टकादिनिवृत्तौ तत्त्वेन ज्ञाते पुरुषेच्छाया अनुभवसिद्धत्वात्। एवं च फलं विने-त्यत्र फलपदेन सुखदुःखाभावतत्साधनान्यतरद्विवक्षितम्। तथा च संध्यावन्दनादावनिष्टसाधनतदवन्दनादिविरोधिनि तत्त्वेन ज्ञाते इच्छा, तथा तदनुष्ठानम्, तेन तत्फलं विना नित्यानामनुष्ठानम्। काम्यानां स्वफलार्थमनु-ष्ठानम्। नैमित्तिकानां प्रायश्चित्तानां यथाशास्त्रं दोष-घातार्थं तत्तत्पापक्षयार्थम् अनुष्ठानम्। एवं कर्मणां नित्यकाम्यनैमित्तिकानां त्रिविधं करणम्। फलमिति मतान्तरप्रतिपादकेनाग्रिमश्लोकेन 'क्षयं केचित्' इत्यादि-नाऽन्वीयते। केचित्पापक्षयं केचिदकरणजन्यदुरितानुत्पत्तिं

§ गप. निप्रगतम्।

नित्यकर्मणां फलं वदन्ति, काम्यनैमित्तिकयोस्तत्तद्विधिबोधितफलसत्त्वात् । एतन्मतद्वये च फलत्वेनोक्तयोः पापक्षयदुरितानुत्पादयोः कामनाऽप्यङ्गमिति फलं विनेत्युक्तकल्पात् 'फलं क्षयं केचिदुपात्तस्य' इति मतस्य भेदः । नित्यक्रियां नित्यक्रियाप्रतिपादिकाम् । अनुषङ्गफलम् आनुषङ्गिकफलप्रतिपादिकाम् । यद्वा श्रुतिं श्रूयमाणाम् । ये तु नित्यकर्मणामार्थवादिकं फलमनङ्गीकृत्य फलश्रुतिं प्रशंसार्थामाहुस्तदभिप्रायेण अन्ये इत्युक्तम् । तथा च मतद्वयेऽप्यार्थवादिकं संध्यावन्दनादेर्ब्रह्मलोकावाप्त्यादिफलमानुषङ्गिकमेवेति केषांचिन्मतम् । तदिदं पर्यवसितम्– नित्यक्रियायामानुषङ्गिकमपि फलं नास्तीत्यङ्गीकृत्याफलत्वमेव, फलश्रुतिस्त्वर्थवाद इत्येकं मतम्; पापक्षय एव फलम्, न त्वानुषङ्गिकमपीत्यपरम्; दुरितानुत्पाद एव फलम्, न त्वानुषङ्गिकमपीत्यपरम्; एतन्मतद्वयान्यतराङ्गीकारेण आनुषङ्गिकमपि फलमङ्गीकृत्य मतद्वयम्, एवं पञ्च मतानीति । कर्मणि च क्वचिद्विध्युद्देशगतं फलम्, यथा ज्योतिष्टोमादौ स्वर्गादि । क्वचिदार्थवादिकम्, यथा जातेष्ट्यादौ पूतत्वादि । क्वचित्कल्प्यम्, यथा विश्वजिदादौ स्वर्गः । यत्र विध्युद्देशार्थवादयोः फलश्रवणं तत्र फलार्थवादः प्रशंसार्थः, विध्युद्देशोक्तफलेनैव निराकाङ्क्षत्वात् । एवमङ्गेष्वपि फलश्रवणमर्थवादः, यथा 'यस्य पर्णमयी जुहूर्भवति' इत्यादौ अपापश्लोकश्रवणादिः । वस्तुतस्तु अर्थवादस्य स्वार्थे बाधकाभावात्प्राशस्त्यपरत्वे लक्षणाप्रसङ्गादार्थवादिकमपि कर्मणः फलम्, परं तु तदकाम्यमानमेव जायते इत्यानुषङ्गिकमुच्यते । ननु वैधेनैव फलेन निराकाङ्क्षत्वादर्थवादस्य प्राशस्त्यपरत्वमेव स्यात् । सत्यम् । वचनावगतानुषङ्गिकफलान्तरवत्त्वरूपप्राशस्त्यमपहाय न शुष्कं प्राशस्त्यान्तरं कल्पनीयम्, गौरवात् । न चानुद्देश्यं कथं फलं स्यादिति वाच्यम्, 'यथेक्षुहेतोरपि सेचितं पयस्तृणानि वल्लीरपि च प्रसिञ्चति । तथा नरो धर्मपथेन संचरन् सुखं च कामांश्च वसूनि चाश्नुते ॥' इति, 'तद्यथाऽऽम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इति व्यासापस्तम्बवचनात्तदवगतेः । निर्मिते आरोपिते । न चैतानि नित्यमात्रपराणि, सामान्ये बाधकाभावात्, नित्यानां फलानुद्देश्यकत्वेन फलोद्देश्यकाम्रारोपणजलसेकादिदृष्टान्तानामफलत्वप्रसङ्गाच्च । एवं 'मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः । पितॄन्मधुघृताभ्यां च ऋचोऽधीते च योऽन्वहम् ॥' (यास्मृ. १।४१) इत्यादियाज्ञवल्क्यादिवचनं फलपरमेव । यत्र त्वन्यानर्थक्यं तत्र विध्युद्देशगतमपि फलवदमर्थवाद एव । यथा 'यं यं क्रतुमधीयीत तस्य तस्याऽऽप्नुयात्फलम्', 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इत्यादि । अथवा ज्योतिष्टोमाग्निहोत्रादाविव तत्रापि फलतारतम्यम् इति न काऽप्यनुपपत्तिः । यत्र तु विष्णुनामग्रहणद्वादशवार्षिकप्रायश्चित्तनाश्ये महापातके तारतम्यं कल्पयितुं न शक्यते तत्र विश्वस्ताविश्वस्ताधिकारिभेदेन व्यवस्था कल्पनीयेति प्रायश्चित्तप्रकाशे भक्तिप्रकाशे च विस्तरेण वक्ष्यामः ।

पप्र. ६५–६८

श्रद्धा धर्मस्य प्रतिष्ठा

अनूरुरुवाच–

[1]'कानि पुण्यानि कृत्वेह स्वर्गं गच्छन्ति मानवाः ।
मनुष्यलोके संभूताः स्वर्लोके गामिनः परम् ॥

कर्मयज्ञस्तपोयज्ञः स्वाध्यायो ध्याननिर्मितः ।
ज्ञानयज्ञश्च पञ्चैते महायज्ञाः प्रकीर्तिताः ॥

एतेषामेव यज्ञानामुत्तमः कतमः स्मृतः ।
एतद्यज्ञक्रियाणां च किं फलं का गतिर्भवेत् ॥
धर्माधर्मप्रभेदाश्च कियन्तः परिकीर्तिताः ।
तत्साधनानि कतिधा गतयश्च यथा वद ॥
[2]'इत्युक्तो भगवान्भानुः सर्वप्रश्नार्थमादरात् ।
प्रत्युवाच महातेजाः समासाद्व्यासयोगतः ॥
स्वर्गापवर्गफलदं नरकार्णवतारणम् ।
धर्मं पापहरं पुण्यं शृणु शूर प्रभाषतः ॥

(१) भविष्य. १।१८७।१–४.
(२) भविष्य. १।१८७।७–८.

[1]श्रद्धापूर्वः सदा धर्मः श्रद्धामध्यान्तसंस्थितः ।
श्रद्धानिष्ठप्रतिष्ठश्च धर्मः श्रद्धा प्रकीर्तिता ॥

[2]श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः ।
श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा ॥

[3]कायक्लेशैर्न बहुभिर्न चैवार्थस्य राशिभिः ।
धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ॥

[4]श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा यज्ञा हुतं तपः ।
श्रद्धा मोक्षं च स्वर्गं च श्रद्धा सर्वमिदं जगत् ॥

[5]सर्वस्वं जीवितं वाऽपि दद्यादश्रद्धयाऽपि च ।
नाऽऽप्नुयात्स फलं किंचित्तस्मा-
च्छ्रद्धापरो भवेत् ॥

[6]एवं श्रद्धामयाः सर्वे मम धर्माः प्रकीर्तिताः ।
पूज्यस्तु श्रद्धया पुंसा ध्येयः पूज्यश्च श्रद्धया ॥

वाक्यं द्विविधं सुभाषितं दुर्भाषितं चेति

[7]नैव राज्येन महता न चैवार्थस्य राशिभिः ।
प्राप्तमज्ञानशमनं परलोके सुखावहम् ॥
स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत्तु शोभनम् ।
वाक्यं ते देवदेवेन तद्विज्ञेयं सुभाषितम् ॥

रागद्वेषाक्षमाक्रोधकामतृष्णानुसारिणाम् ।
वाक्यं निरयहेतुत्वात्तद्दुर्भाषितमुच्यते ॥

संस्कृतेनापि किं तेन मृदुलालापसङ्गिना ।
अविद्यारामवाक्येन संसारक्लेशहेतुना ॥

यच्छ्रुत्वा जायते पुण्यं रागादीनां च संक्षयः ।
विरूपमपि तद्वाक्यं विज्ञेयमतिशोभनम् ॥

स्मृतयो भारतं वेदाः शास्त्राणि सुमहान्ति च ।
स्वायुषः क्षपणायैव धर्मोऽर्थसमप्रथितः ।
पुत्रदारादिसंसारनराणां ( ? रतानां )
मूढचेतसाम् ॥

संसारविदुषां शास्त्रमनादिमुखनिर्गतम् ।
इदं श्रेष्ठमिदं ज्ञेयं सर्वं त्वं ज्ञातुमिच्छसि ।
अपि वर्षसहस्रायुः शास्त्रान्तं नाधिगच्छति ॥

विज्ञायाक्षरतन्मात्रं जीवितं चाऽऽत्मवञ्चनम् ।
विहाय सर्वशास्त्राणि परलोकं समाचरेत् ॥

पण्डितेनापि किं तेन समर्थेन च देहिनाम् ।
यः पुण्यभारमुद्वोढुमशक्तः पारलौकिकम् ॥

अधर्माचरणस्य प्रायश्चित्तं कर्तव्यम्

[1]देवमानुषजीवानामधर्मनिरतात्मनाम् ।
धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्वधैः ॥

विनीतभावयुक्तानां प्रमादात्स्खलितात्मनाम् ।
प्रायश्चित्तैर्बहुविधैः पातकं नष्टतामियात् ॥

पारदारिकचोराणामन्यायव्यवहारिणाम् ।
शास्ता क्षितिपतिः प्रोक्तः प्रच्छन्नानां
च धर्मराट् ॥

तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत् ।
नाभुक्तस्यान्यथा नाशः कल्पकोटिशतैरपि ॥

यः करोति स्वयं कर्म कारयेदनुमोदयेत् ।
कायेन मनसा वाचा स विन्द्यादुत्तमं सुखम् ॥

(१) भविष्य. १।१८७।९ ; चव्र. ३० (श्रद्धापूर्वाः सर्वधर्माः श्रद्धामध्यान्तसंस्थिताः । श्रद्धानिष्ठाः प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्तिताः ।। ) वह्निपुराणे.

(२) भविष्य. १।१८७।१० मात्र (मन्त्र) करेण (परेण) न चक्षु (च चक्षु) ; चव्र. ३० वह्निपुराणे.

(३) भविष्य. १।१८७।११ ; व्रक. १३ देवीपुराणे ; चव्र. ३० वह्निपुराणे ; कृर. १६ देवीपुराणे ; पव्र. ३४ देवीपुराणे.

(४) भविष्य. १।१८७।१२ ; चव्र. ३० यज्ञा हुतं ( ज्ञानं परं ) मोक्षं च स्वर्गं च ( स्वर्गश्च मोक्षश्च ) वह्निपुराणे.

(५) भविष्य. १।१८७।१३ स्वं जी ( स्वजी ) ; चव्र. ३१ याऽपि च ( या यदि ) त्स फलं (त्सकलं) चतुर्थचरणे ( श्रद्दधानस्त्वतो भवेत् ) वह्निपुराणे.

(६) भविष्य. १।१८७।१४.

(७) भविष्य. १।१८७।३३–४२.

(१) भविष्य. १।१९१।२५–२९.

अर्थकामधर्माणां धर्मः श्रेयस्करः

[1]धर्मात्संजायते ह्यर्थो धर्मात्कामोऽभिजायते ।
धर्मादेवापवर्गोऽयं तस्माद्धर्मं समाश्रयेत् ॥
धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ।
सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥
यस्मिन्धर्मसमायुक्तौ ह्यर्थकामौ व्यवस्थितौ ।
इह लोके सुखी भूत्वा प्रेत्याऽऽनन्त्याय कल्पते ॥
तस्मादर्थं च कामं च त्यक्त्वा धर्मं समाश्रयेत् ।
धर्मात्संजायते कामो धर्मादर्थोऽभिजायते ।
एवं धर्मस्य मध्येऽयं चतुर्वर्गः प्रदर्शितः ॥
एवं च धर्मकामार्थमोक्षस्यापि च मानवः ।
माहात्म्यं चाऽनुतिष्ठेच्च स चाऽऽनन्त्याय कल्पते ॥
तस्मादर्थं च कामं च मुक्त्वा धर्मं समाचरेत् ।
धर्मात्संजायते सर्वमित्याहुर्ब्रह्मवादिनः ॥
धर्मेण धार्यते सर्वं जगत्स्थावरजङ्गमम् ।
अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तम ॥
कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः ।
तस्माज्ज्ञानेन सहितं कर्मयोगं समाचरेत् ॥

प्रवृत्तनिवृत्तकर्मणोः निवृत्तं प्रशस्ततरम्

प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ।
ज्ञानपूर्वा निवृत्तिः स्यात्प्रवृत्तिर्वर्ततेऽन्यथा ॥
निवृत्तिं सेवमानस्तु याति तत्परमं पदम् ।
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत्पुनः ॥
[2]श्रद्धापूर्वाः स्मृता धर्माः श्रद्धामध्ये तु (? ध्यास्तु) संस्थिताः ।
श्रद्धानिष्ठाः प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्तिताः ॥

(१) भविष्य. २।१।१।१९–३०.
(२) भविष्य. २।१।१।३३–४०.

वर्णाश्रमाणां स्वधर्मे वर्तमानानां विविधानि श्रेयस्कराणि स्थानानि

प्राजापत्यं ब्राह्मणानां श्रुतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां सङ्ग्रामेष्वपलायिनाम् ॥
वैश्यानाममृतं स्थानं स्वधर्ममनुवर्तताम् ।
गान्धर्वं शूद्रजातीनां परिचारेण वर्तताम् ॥
अष्टाशीतिसहस्राणां मुनीनामूर्ध्वरेतसाम् ।
स्मृतं स्थानं तु यत्स्थानं तदेव गुरुवासिनाम् ॥
सप्तर्षीणां तु यत्स्थानं श्रुतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ॥
यतीनां यतचित्तानां तदेव वनवासिनाम् ।
हिरण्यगर्भे यत्स्थानं तस्मान्नाऽऽवर्तते पुनः ॥
योगिनाममृतं स्थानं योगाख्यं परमाकरम् ।
आनन्दमैश्वरं नाम सा काष्ठा परमा गतिः ॥

धर्माधर्माभ्यां लोकनिर्मितिः

[1]इत्युक्तो नारदेनैव भगवान्भक्तवत्सलः ।
तमाह वचनं रम्यं तच्छृणुष्व सुरोत्तम ॥
मद्भक्तो भगवान्ब्रह्मा दृष्ट्वा नारायणप्रियान् ।
जनांश्च स्ववशीकृत्य लोककार्यं करोति हि ॥
धर्मोऽधर्मस्तेन कृतो धर्मो वेदमयः स्मृतः ।
सप्त लोकाश्च धर्मस्य निर्मितास्तेन धीमता ॥
भूर्भुवः स्वो महश्चैव जनश्चैव तपस्तथा ।
सत्यं तथैव क्रमतो नृणां द्विगुणदं सुखम् ॥
अधर्मो वेदरहितो भुवि शब्दान्यकर्तृकः ।
ये शब्दाश्च महावाण्या दूषितास्ते हि लोकगाः ॥
वेदेतराः पापमया दैत्यवृद्धिकराः सदा ।
अधर्मः स तु विज्ञेयः सप्तलोकाश्च तस्य वै ॥
भूमिगर्तेषु विधिना निर्मिताः सुखदायकाः ।
अतलं वितलं चैवं सुतलं च तलातलम् ॥
महातलं रसा चैव पातालं चान्यधर्मजम् ।
अन्यधर्मो ह्यधर्मश्च देवादन्ये हि तेऽसुराः ॥
धर्मपक्षाः सुरा ज्ञेया असुराश्चान्यधर्मजाः ।
तयोर्विहीनो यो धर्मो देवैर्दैत्यैश्च दूषितः ॥

(१) भविष्य. ३।४।११।२१–३७.

विधर्मः स तु विज्ञेयस्तत्र लोका व्यथाकुलाः ।
तामिस्रमन्धतामिस्रं कुम्भीपाकं च रौरवम् ॥
महारौरव एवापि तथा मूर्तिरयस्तथा ।
इक्षुयन्त्रं शाल्मलं च ह्यसिपत्रवनं तथा ॥
ज्ञेयमित्येव रचितं विधिना चैकविंशतिः ।
ब्रह्माण्डोऽयं लोकमयः परं तस्माच्च मत्पदम् ॥
मद्भक्ता भूतले ये वै ते गच्छन्ति परं पदम् ।
देवभक्ताश्च ये लोकाः सप्तलोकान्व्रजन्ति ते ॥
ये तु वै तामसा लोका दैत्यपूजनतत्पराः ।
ते गच्छन्ति महीं लोकानतलादिमयांस्तथा ॥
पातालाद्योजनं लक्षमधो लोकः प्रकीर्तितः ।
विधर्मतत्परा लोकास्ते गच्छन्ति ह्यधोगतिम् ॥
अतो वै विधिना भ्रष्टा मद्भक्ताश्च दरिद्रगाः ।
ये मद्भक्ताः सुरान्पूर्वं पूजयित्वा भजन्ति माम् ॥
लक्ष्मीवन्तश्च ते ज्ञेया भुक्तिमुक्तिपरायणाः ॥

कर्मविशेषैः देवत्वमानुषत्वतिर्यक्त्वानि

युधिष्ठिर उवाच–

'देवत्वं मानुषत्वं च तिर्यक्त्वं केन कर्मणा ।
प्राप्नोति पुरुषः ... ... ... ॥

श्रीकृष्ण उवाच–

शुभैर्देवत्वमाप्नोति मिश्रैर्मानुषतां व्रजेत् ।
अशुभैः कर्मभिर्जन्तुस्तिर्यग्योनिः प्रजायते ॥
प्रमाणं श्रुतिरेवात्र धर्माधर्मविनिश्चये ।
पापं पापेन भवति पुण्यं पुण्येन कर्मणा ॥

मानुष्यं स्वर्गसाधनम्, पुण्यं देवत्वसाधनम्

'विचित्रा गतयः प्रोक्ताः कर्मणां गुरुलाघवात् ।
मानुष्यं यः समासाद्य स्वर्गमोक्षप्रसाधकम् ।
द्वयोर्न साधयत्येकं स मृतस्तप्यते चिरम् ॥
'देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम् ।
तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा ॥

(१) भविष्य. ४।४।१, ६–७.

(२) भविष्य. ४।६।१९४–१९५ ; चव. १६ साधकम् (दायकम्) प्रथमार्धं नास्ति, आदित्यपुराणे.

(३) भविष्य. ४।६।१९५–१९९.

स्वर्गापवर्गलाभाय यदि नास्ति समुद्यतः ।
स्वर्गस्य मूलं मानुष्यं तद्यत्नादनुपालयेत् ॥
धर्ममूलेन मानुष्यं लब्ध्वा सर्वार्थसाधकम् ।
यदि लाभे न यत्नस्ते मूलं रक्षस्व यत्नतः ॥
मनुष्यत्वे च विप्रत्वं यः संप्राप्यातिदुर्लभम् ।
न करोत्यात्मनः श्रेयः कोऽन्यस्तस्मादचेतनः ॥
'एतस्मिन् भारते पुण्ये प्राप्य मानुष्यमध्रुवम् ।
यः कुर्यादात्मनः श्रेयस्तेनाऽऽत्मा रक्षितः स्वयम् ।
यः कुर्यान्नाऽऽत्मनः श्रेयस्तेनाऽऽत्मा वञ्चितः स्वयम् ॥
भोगभूमिः स्मृतः स्वर्गः कर्मभूमिरियं मता ।
इह यत्क्रियते कर्म स्वर्गे तदुपभुज्यते ॥
'यावत्स्वास्थ्यं शरीरस्य तावद्धर्मं समाचर ।
अस्वस्थश्चातियत्नेन न किंचित्कर्तुमुत्सहेत् ॥
'अध्रुवेण शरीरेण ह्यध्रुवं यः प्रसाधयेत् ।
ध्रुवं तस्य परिभ्रष्टमध्रुवं नष्टमेव च ॥
आयुषः खण्डखण्डानि निपतन्ति तवाग्रतः ।
अहोरात्रापदेशेन किमर्थं नावबुध्यसे ॥
यदा न ज्ञायते मृत्युः कदा कस्य भविष्यति ।
आकस्मिके हि मरणे धृतिं विन्देत कस्तदा ॥
परित्यज्य यदा सर्वमेकाकी यास्यसि ध्रुवम् ।
न ददासि तदा कस्मात्पाथेयार्थमिदं धनम् ॥
गृहीतदानपाथेयाः सुखं यान्ति महाध्वनि ।
अन्यथा क्लिश्यते जन्तुः पाथेयरहितः पथि ॥
येषां द्विजेन्द्रवाहित्री पूर्णभाण्डा तु गच्छति ।
स्वर्गदेशस्य पुरतस्तेषां लाभः पदे पदे ॥

(१) भविष्य. ४।६।२००–२०२.

(२) भविष्य. ४।६।२०३ ; चव. १६ त्स्वास्थ्यं शरीरस्य (त्स्वस्थशरीरत्वं) चर (चरेत्) उत्तरार्धं (अस्वस्थश्चोदितो नान्यत्किंचित्कर्तुं समुत्सहेत् ॥) आदित्यपुराणे.

(३) भविष्य. ४।६।२०४–२१०.

इति ज्ञात्वा नरः पुण्यं कुर्यात्पापं विवर्जयेत् ।
पुण्येन याति देवत्वमपुण्यान्नरकं व्रजेत् ॥

आचारमहिमा

( श्रीकृष्ण उवाच– )

[1]आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति
नीडं शकुन्ता इव जातपक्षाः ॥

कपालस्थं यथा तोयं श्वदृतौ वा यथा पयः ।
दुष्टं स्यात्स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥
वृत्तं यत्नेन संरक्षेद्वित्तमेति प्रयाति च ।
अक्षीणो वित्ततो क्षीणो वृत्ततस्तु हतो हतः ॥
एवमाचारो धर्मस्य मूलं राजन्कुलस्य च ।
आचाराद्धि च्युतो जन्तुर्न कुलीनो
न धार्मिकः ॥

किं कुलेनोपदिष्टेन विपुलेन दुरात्मनाम् ।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥
हीनजातिप्रसूतोऽपि शौचाचारसमन्वितः ।
सर्वधर्मार्थकुशलः स कुलीनः सतां वरः ॥
न कुलं कुलमित्याहुराचारः कुलमुच्यते ।
आचारकुशलो राजन्निह चामुत्र नन्दते ॥

युधिष्ठिर उवाच–

सदाचारमहं कृष्ण श्रोतुमिच्छामि शाश्वतम् ।
सर्वधर्ममयः कोऽत्र सदाचारः प्रकीर्तितः ॥

श्रीकृष्ण उवाच–

आचारप्रभवो धर्मः सन्तश्चाऽऽचारलक्षणाः ।
साधूनां च यथावृत्तं स सदाचार उच्यते ॥
तस्मात्कुर्यादिहाऽऽचारं य इच्छेद्गतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥
अदृष्टमश्रुतं वेदं पुरुषं धर्मचारिणम् ।
स्वामि कर्माणि कुर्वाणं तं जनं कुरुते प्रियम् ॥

ये नास्तिका नैष्ठिकाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥
सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च सर्वान्कामानवाप्नुयात् ॥
आचारो भूतिजनन आचारः कीर्तिवर्धनः ।
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ।
आचारः परमो धर्म आचाराद्वर्धते धनम् ॥
पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
सर्ववर्णानुकम्पार्थं मयैतत्समुदाहृतम् ॥

आचार एव नरपुंगव सेव्यमानो
धर्मार्थकामफलदो भवतीह पुंसाम् ।
तस्मात्सदैव विदुषाऽवहितेन राज-
ञ्छास्त्रोदितो ह्यनुदिनं परिपालनीयः ॥

श्रीकृष्ण उवाच–

[2]व्रतं दानमथो राजंस्तव धर्माः प्रकाशिताः ।
धर्ममूलं यतश्चेदं तस्माद्धर्मपरो भव ॥
जानताऽपि मया पार्थ कामार्थौ न प्रकाशितौ ।
यतः स्वयं प्रवृत्तोऽत्र लोकः किमनुवर्ण्यते ॥
कामिनो वर्णयन्कामांल्लोभं लुब्धस्य वर्णयन् ।
नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन् ॥
[3]लोकवेदविरुद्धं यत्कथ्यते मनुजोत्तम ।
न तत्राऽऽस्था प्रकर्तव्या विप्रलापो हि स स्मृतः ॥

## नारदपुराणम्

मानुष्यं कर्मभूमिः धर्माचरणाय

[3]कर्मभूमिं समासाद्य यो न धर्मं समाचरेत् ।
स च सर्वाधमः प्रोक्तो वेदविद्भिर्मुनीश्वर ॥
शुभं कर्म समुत्सृज्य दुष्कर्माणि करोति यः ।
कामधेनुं परित्यज्य अर्कक्षीरं स मार्गति ॥

(१) भविष्य. ४।२०५।१७–२९, १५०–१५३.

(१) भविष्य. ४।२०७।१–३.

(२) भविष्य. ४।२०७।६.

(३) नारद. १।३।६७–६८.

हरिभक्तियुक्तानि कर्माणि ईश्वरप्रीतिकराणि, भक्तिरहितानि च निष्फलानि

[1]परं लोक( ? परलोक )फलं प्रेप्सुः कुर्यात्कर्माण्यतन्द्रितः ।
निवेद्य हरये भक्त्या तत्फलं ह्यक्षयं स्मृतम् ॥
विरागी चेत्कर्मफलेष्वपि किंचिन्न कारयेत् ।
अर्पयेत्सुकृतं कर्म प्रीयतामिति मे हरिः ॥
आब्रह्मभुवनाल्लोकाः पुनरुत्पत्तिदायकाः ।
फलागृध्नुः कर्मणां तत्प्राप्नोति परमं पदम् ॥
वेदोदितानि कर्माणि कुर्यादीश्वरतुष्टये ।
यथाश्रमं त्यक्तुकामः प्राप्नोति पदमव्ययम् ॥
निष्कामो वा सकामो वा कुर्यात्कर्म यथाविधि ।
स्वाश्रमाचारशून्यश्च पतितः प्रोच्यते बुधैः ॥
सदाचारपरो विप्रो वर्धते ब्रह्मतेजसा ।
तस्य विष्णुश्च तुष्टः स्याद्भक्तियुक्तस्य नारद ॥
भारते जन्म संप्राप्य नाऽऽत्मानं तारयेत्तु यः ।
पच्यते निरये घोरे स त्वाचन्द्रार्कतारकम् ॥
[2]श्रद्धापूर्वाः सर्वधर्मा मनोरथफलप्रदाः ।
श्रद्धया साध्यते सर्वं श्रद्धया तुष्यते हरिः ॥
भक्तिर्भक्त्यैव कर्तव्या तथा कर्माणि भक्तितः ।
कर्मश्रद्धाविहीनानि न सिध्यन्ति द्विजोत्तमाः ॥
यथाऽऽलोको हि जन्तूनां चेष्टाकारणतां गतः ।
तथैव सर्वसिद्धीनां भक्तिः परमकारणम् ॥
यथा समस्तलोकानां जीवनं सलिलं स्मृतम् ।
तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते ॥
यथा भूमिं समाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा भक्तिं समाश्रित्य सर्वकार्याणि साधयेत् ॥
श्रद्धावांल्लभते धर्मं श्रद्धावानर्थमाप्नुयात् ।
श्रद्धया साध्यते कामः श्रद्धावान्मोक्षमाप्नुयात् ॥
न दानैर्न तपोभिर्वा यज्ञैर्वा बहुदक्षिणैः ।
भक्तिहीनैर्मुनिश्रेष्ठ तुष्यते भगवान्हरिः ॥

(१) नारद. १।३।७३–७९.
(२) नारद. १।४।१–११.

मेरुमात्रसुवर्णानां कोटिकोटि( ? टिः ) सहस्रशः ।
दत्ता चाप्यर्थनाशाय यतो भक्तिविवर्जिता ॥
अभक्त्या यत्तपस्तप्तं केवलं कायशोषणम् ।
अभक्त्या यद्धुतं हव्यं भस्मनि न्यस्तहव्यवत् ॥
यत्किंचित्कुरुते कर्म श्रद्धयाऽप्यणुमात्रकम् ।
तन्नाम जायते पुंसां शाश्वतं प्रीतिदायकम् ॥
अश्वमेधसहस्रं वा कर्म वेदोदितं कृतम् ।
तत्सर्वं निष्फलं ब्रह्मन्यतो भक्तिविवर्जितम् ॥
[1]यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥
धर्मार्थकाममोक्षाख्याः पुरुषार्थाः सनातनाः ।
श्रद्धावतां हि सिध्यन्ति नान्यथा ब्रह्मनन्दन ॥

स्वाश्रमाचारसहितैव भक्तिः श्रेयस्करी

स्वाचारमनतिक्रम्य हरिभक्तिपरो हि यः ।
स याति विष्णुभवनं यद्वै पश्यन्ति सूरयः ॥
कुर्वन्वेदोदितान्धर्मान्मुनीन्द्र स्वाश्रमोचितान् ।
हरिध्यानपरो यस्तु स याति परमं पदम् ॥
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ।
आश्रमाचारयुक्तेन पूजितः सर्वदा हरिः ॥
यः स्वाचारपरिभ्रष्टः साङ्गवेदान्तगोऽपि वा ।
स एव पतितो ज्ञेयो यतः कर्मबहिष्कृतः ॥
[3]हरिभक्तिपरो वाऽपि हरिध्यानपरोऽपि वा ।
भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते ॥
[4]वेदो वा हरिभक्तिर्वा भक्तिर्वाऽपि महेश्वरे ।
आचारात्पतितं मूढं न पुनाति द्विजोत्तम ॥
पुण्यक्षेत्राभिगमनं पुण्यतीर्थनिषेवणम् ।
यज्ञो वा विविधो ब्रह्मंस्त्यक्ताचारं न रक्षति ॥

(१) नारद. १।४।१८–२३.
(२) नारद. १।४।२४ ; आपा. २.
(३) नारद. १।४।२५ ; आपा. २ आचा (स्वाचा) ; आभू. २ रात्पतितं (रविमुखं) द्विजोत्तम (कदाचन) भारतटीकायां पुराणे.
(४) नारद. १।४।२६ ; आपा. २.

[1]आचारात्प्राप्यते स्वर्ग आचारात्प्राप्यते सुखम् ।
आचारात्प्राप्यते मोक्ष आचारात्किं न लभ्यते ॥
[2]आचाराणां तु सर्वेषां योगानां चैव सत्तम ।
हरिभक्तेरपि तथा निदानं भक्तिरिष्यते ॥
भक्त्यैव पूज्यते विष्णुर्वाञ्छितार्थफलप्रदः ।
तस्मात्समस्तलोकानां भक्तिर्मातेति गीयते ॥
जीवन्ति जन्तवः सर्वे यथा मातरमाश्रिताः ।
तथा भक्तिं समाश्रित्य सर्वे जीवन्ति धार्मिकाः॥
स्वाश्रमाचारयुक्तस्य हरिभक्तिर्यदा भवेत् ।
न तस्य त्रिषु लोकेषु सदृशोऽस्त्यजनन्दन ॥
भक्त्या सिध्यन्ति कर्माणि कर्मभिस्तुष्यते हरिः ।
तस्मिंस्तुष्टे भवेज्ज्ञानं ज्ञानान्मोक्षमवाप्यते ॥
भक्तिस्तु भगवद्भक्तसङ्गेन खलु जायते ।
तत्सङ्गं प्राप्यते पुंभिः सुकृतैः पूर्वसंचितैः ॥
वर्णाश्रमाचाररता भगवद्भक्तलालसाः ।
कामादिदोषनिर्मुक्तास्ते सन्तो लोकशिक्षकाः॥
[3]सर्वभूतदयायुक्ता धर्ममार्गप्रवर्तिनः ।
प्रयान्ति परमं स्थानं गुरुपूजापरायणाः ॥
[4]तस्माच्छृणुष्व भूपाल संसारविजिगीषुणा ।
स्वकर्मणोऽविरोधेन भक्तिः कार्या जनार्दने ॥
यः स्वधर्मं परित्यज्य भक्तिमात्रेण जीवति ।
न तस्य तुष्यते विष्णुराचारेणैव तुष्यते ॥
सर्वागमन( ? माना )माचारः प्रथमं परिकल्पते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥
तस्मात्कार्या हरेर्भक्तिः स्वधर्मस्याविरोधिनी ।
सदाचारविहीनानां धर्मा अप्यसुखप्रदाः ॥
स्वधर्महीना भक्तिश्च प्राकृतेव प्रकीर्तिता ॥
[5]ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चत्वार एव ते ।
वर्णा इति समाख्याताः ...॥

(१) नारद. १।४।२७; आपा. २ लभ्यते (साध्यते).
(२) नारद. १।४।२८–३४.
(३) नारद. १।९।१३८–१३९.
(४) नारद. १।१५।१५२–१५६.
(५) नारद. १।२४।७, ९–१२.

एतैर्वर्णैः सर्वधर्माः कार्या वर्णानुरूपतः ।
स्ववर्णधर्मत्यागेन पाषण्डः प्रोच्यते बुधैः ॥

स्वाश्रमाचार एव विष्णुतुष्टिकरः

स्वगृह्यचोदितं कर्म द्विजः कुर्वन्कृती भवेत् ।
अन्यथा पतितो भूयात्सर्वधर्मबहिष्कृतः ॥
युगधर्मः परिग्राह्यो वर्णैरेतैर्यथोचितम् ।
देशाचारास्तथा ग्राह्याः स्मृतिधर्माविरोधतः ॥
कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ॥
[1]ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्च सत्तम ।
चतुर्भिराश्रमैरेभिः साध्यते धर्म उत्तमः ॥
विष्णुस्तुष्यति विप्रेन्द्र कर्मयोगरतात्मनः ।
¶निःस्पृहाशान्तमनसः स्वकर्मनिरतस्य च ।
ततो याति परं स्थानं यतो नाऽऽवर्तते पुनः ॥
[2]यः स्वधर्मं परित्यज्य परधर्मं समाचरेत् ।
पाषण्डः स हि विज्ञेयः सर्वधर्मबहिष्कृतः ॥
[3]इत्येवमादयो धर्माः स्मृतिमार्गप्रचोदिताः ।
कार्या द्विजातिभिः सम्यक्सर्वकर्मफलप्रदाः ॥
सदाचारपरा ये तु तेषां विष्णुः प्रसीदति ।
विष्णौ प्रसन्नतां याते किमसाध्यं द्विजोत्तम ॥
[4]इत्येवमाश्रमाचारान्यः करोति द्विजः क्रमात् ।
स याति परमं स्थानं यत्र गत्वा न शोचति ॥
वर्णाश्रमाचाररताः सर्वपापविवर्जिताः ।
नारायणपरा यान्ति तद्विष्णोः परमं पदम् ॥

मानुष्यं धर्माचरणायैव

[5]एवं धर्मपरा यान्ति सुखं धर्मस्य मन्दिरम् ।
यमश्चतुर्मुखो भूत्वा शङ्खचक्रगदासिभृत् ।
पुण्यकर्मरतं सम्यक्स्नेहान्मित्रमिवार्चति ॥

¶ निषेधार्थकस्य निसो स्पृहाशब्देन सुप्सुपेति समासमाश्रित्य निःस्पृहया शान्तं मनः यस्येति योजनीयम् ।

(१) नारद. १।२४।३३–३५.
(२) नारद. १।२५।२.
(३) नारद. १।२६।४५–४६.
(४) नारद. १।२७।१०५–१०६.
(५) नारद. १।३३।२९–३८.

भो भो बुद्धिमतां श्रेष्ठ( ? ष्ठा ) नरकक्लेश-
भीरवः ।
युष्माभिः साधितं पुण्यमत्रामुत्र सुखावहम् ॥
मनुष्यजन्म यः प्राप्य सुकृतं न करोति च ।
स एव पापिनां श्रेष्ठ आत्मघातं करोति च ॥
अनित्यं प्राप्य मानुष्यं नित्यं यस्तु न साधयेत् ।
स याति नरकं घोरं कोऽन्यस्तस्मादचेतनः ॥
शरीरं यातनारूपं मलाद्यैः परिदूषितम् ।
तस्मिन्यो याति विश्वासं तं विद्यादात्म-
घातकम् ॥
सर्वेषु प्राणिनः श्रेष्ठास्तेषु वै बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणास्तथा ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥
ब्रह्मवादिष्वपि तथा श्रेष्ठो निर्मम उच्यते ।
एतेभ्योऽपि परो ज्ञेयो नित्यं ध्यानपरायणः ॥
तस्मात्सर्वप्रयत्नेन कर्तव्यो धर्मसंग्रहः ।
सर्वत्र पूज्यते जन्तुर्धर्मवान्नात्र संशयः ॥

भक्तियुक्तं कर्म ज्ञानं च सिद्धिदम्

नारद उवाच—
[1]कर्मणा केन योगस्य सिद्धिर्भवति योगिनाम् ।
तदुपायं यथातत्त्वं ब्रूहि मे वदतां वर ॥
सनक उवाच—
ज्ञानलभ्यं परं मोक्षं प्राहुस्तत्त्वार्थचिन्तकाः ।
यज्ज्ञानं भक्तिमूलं च भक्तिः कर्मवतां तथा ॥
दानानि यज्ञा विविधास्तीर्थयात्रादयः कृताः ।
येन जन्मसहस्रेषु तस्य भक्तिर्भवेद्धरौ ॥
अक्षयः परमो धर्मो भक्तिलेशेन जायते ।
श्रद्धया परया चैव सर्वं पापं प्रणश्यति ॥
सर्वपापेषु नष्टेषु बुद्धिर्भवति निर्मला ।
सैव बुद्धिः समाख्याता ज्ञानशब्देन सूरिभिः ॥
ज्ञानं च मोक्षदं प्राहुस्तज्ज्ञानं योगिनां भवेत् ।
योगस्तु द्विविधः प्रोक्तः कर्मज्ञानप्रभेदतः ॥
क्रियायोगं विना नृणां ज्ञानयोगो न सिध्यति ।
क्रियायोगरतस्तस्माच्छ्रद्धया हरिमर्चयेत् ॥

यज्ञे भावशुद्धिरेव फलदा

अन्तःशुद्धिविहीनैस्तु येऽध्वरा विविधाः कृताः ।
न फलन्ति मुनिश्रेष्ठ भस्मनि न्यस्तहव्यवत् ॥
भावशुद्धिविहीनानां समस्तं कर्म निष्फलम् ।
तस्माद्रागादिकं सर्वं परित्यज्य सुखी भवेत् ॥
वाचा धर्मान्प्रवदति मनसा पापमिच्छति ।
जानीयात्तं मुनिश्रेष्ठ महापातकिनां वरम् ॥
विशुद्धमानसा ये तु धर्ममात्रमनुत्तमम् ।
कुर्वन्ति तत्फलं विद्यादक्षयं सुखदायकम् ॥

जीवितस्य क्षणभङ्गुरत्वाद्धर्मसंग्रहः कर्तव्यः

[2]शरीरं मृत्युसंयुक्तं जीवितं चातिचञ्चलम् ।
राजादिभिर्धनं बाध्यं संपदः क्षणभङ्गुराः ॥
किं न पश्यसि देवर्षे ह्यायुषा( ? षो )ऽर्धं
तु निद्रया ।
ह( ? हृ )तं च भोजनाद्यैश्च कियदायुः
समाहृतम् ॥
कियदायुर्बालभावाद्वृद्धभावात्कियद्वृथा ।
कियद्विषयभोगैश्च कदा धर्मान्करिष्यति ॥
बालभावे च वार्धक्ये न घटेताच्युतार्चनम् ।
वयस्येव ततो धर्मान्कुरु त्वमनहंकृतः ॥
यावदर्जयति द्रव्यं बान्धवास्तावदेव हि ।
धर्माधर्मौ सहैवाऽऽस्तामिहामुत्र न चापरः ॥
धर्माधर्मार्जितैर्द्रव्यैः पोषिता येन ये नराः ।
मृतमग्निमुखे हुत्वा घृताक्तं भुञ्जते हि ते ॥
गच्छन्तं परलोकं च नरं तु
ह्यनुतिष्ठतः( ? गच्छतः ) ।
धर्माधर्मौ न च धनं न पुत्रा न च बान्धवाः ॥

(१) नारद. १।३३।२६–३२, १०१–१०२, १०७–१०८.

(१) नारद. १।३४।२७–३०.
(२) नारद. १।३७।४२–५१.

कामः समृद्धिमायाति नराणां पापकर्मिणाम् ।
कामः संक्षयमायाति नराणां पुण्यकर्मणाम् ॥

वृथैव व्याकुला लोका धनादीनां सदाऽर्जने ।
यद्भावि तद्भवत्येव यदभाव्यं न तद्भवेत् ।
इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥

दैवाधीनमिदं सर्वं जगत्स्थावरजङ्गमम् ।
तस्माज्जन्म च मृत्युं च दैवं जानाति नापरः ॥

यत्र कुत्र स्थितस्यापि यद्भाव्यं तद्भवेद्ध्रुवम् ।
लोकस्तु तन्न विज्ञाय वृथाऽऽयासं करोति हि ॥

अहो दुःखं मनुष्याणां ममताकुलचेतसाम् ।
महापापानि कृत्वाऽपि परान्पुष्णन्ति यत्नतः ॥

अर्जितं च धनं सर्वं भुञ्जते बान्धवाः सदा ।
स्वयमेकतमो मूढस्तत्पापफलमश्नुते ॥

[1]अनित्या बान्धवाः सर्वे विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥

सर्वकर्माणि परमात्मार्पितानि कर्तव्यानि

[2]शक्तितः सर्वकर्माणि वेदोक्तानि विधाय च ।
समर्पयेन्महाविष्णौ नारायणपरायणः ॥

समर्पितानि कर्माणि महाविष्णौ परात्मनि ।
संपूर्णतां प्रयान्त्येव हरिस्मरणमात्रतः ॥

[3]विष्णवर्पितानि कर्माणि सफलानि भवन्ति हि ।
अनर्पितानि कर्माणि भस्मनि न्यस्तहव्यवत् ॥

[4]नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।
विष्णोः समर्पितं सर्वं सात्त्विकं सफलं भवेत् ॥

(१) नारद. १।३९।४८.

(२) नारद. १।४१।१०७–१०८.

(३) कूम. ८३० सफला (सकला) ; आभू. ३६० हव्य (हस्त) ; संवी. २।१६१ चतुर्थचरणे ( भस्मनीव हुतं हविः ) संस्कारभास्करे बृहन्नारदीयात् .

(४) कूम. ८३० ; आभू. ३६० विष्णोः (विष्णौ) बृहन्नारदीये ; इन्दु. ८८ बृहन्नारदीये ; संवी. २।१६१ सफलं (फलदं) संस्कारभास्करे बृहन्नारदीयात् .



[1]स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः ।
तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते ॥

नारद उवाच–

[2]आध्यात्मिकादित्रिविधं तापं नानुभवेद्यथा ।
प्रब्रूहि तन्मुने मह्यं प्रपन्नाय दयानिधे ॥

सनन्दन उवाच–

तदस्य त्रिविधं दुःखमिह जातस्य पण्डित ।
गर्भे जराद्यवस्थाने स्थानेषु प्रभविष्यतः ॥

निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेका चाऽऽत्यन्तिकी मता ॥

तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥

[3]मानुष्यं दुर्लभं प्राप्य सर्वलोकोपकारकम् ।
यस्तारयति नाऽऽत्मानं तस्मात्पापतरोऽत्र कः ॥

आहारश्चैव निद्रा च भयं मैथुनमेव च ।
पश्वादीनां च सर्वेषां साधारणमितीरितम् ॥

चतुर्ष्वेवानुरक्तो यः स मूर्खो ह्यात्मघातकः ।
मनुष्याणामयं धर्मः स्वबन्धच्छेदनात्मकः ॥

[4]परधर्मे रतिर्यस्य स्वधर्मविमुखो नरः ।
सोऽन्धे तमसि मज्जेत यावदिन्द्राश्चतुर्दश ॥

स्वकं कर्म परित्यज्य योऽन्यत्र कुरुते श्रमम् ।
अज्ञानाद्वा प्रमादाद्वा पतितः स न संशयः ॥

[5]कुकर्मणा पापरतिः कुजातिः
सर्वस्य नाशी त्वशुचिः स मूढः ।
न मन्यते वेदपुराणशास्त्रा–
नन्ते (?ण्यन्ते) पुरीं याति दिनेशसूनोः ॥

धर्मबाह्यो हि पुरुषः पांशुना तुल्यतां व्रजेत् ॥

(१) नारद. १।४३।१०३.

(२) नारद. १।४६।२–४, तृतीयचतुर्थौ प्रमादात् तृतीयत्वेन गणितौ.

(३) नारद. १।६३।१०४–१०६.

(४) नारद. २।२४।४१, ४४.

(५) नारद. २।२५।३२, ३७.

नैष्कर्म्यं श्रेयस्करम्

[1]सूक्ष्मा हि धर्मस्य गतिर्न ज्ञायेत कथंचन ।
केनापि कुत्रचिद्देवदैत्यराक्षसकादिना ॥
किंचिन्मनुष्याः पटवो धर्मसूक्ष्मत्वचिन्तने ।
येऽनित्येन शरीरेण नैष्कर्म्यं साधयन्त्युत ॥
[2]कीर्तिसंस्तरणार्थाय कर्तव्यं मनुजैः सदा ।
कर्म भूपाल शास्त्रोक्तं स्नेहद्वेषविवर्जितम् ॥
[3]प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तयेत् ।
न सांपरायिकं तस्य दुर्मतेर्जायते फलम् ॥

## अग्निपुराणम्

धर्म एव मृतानुगामी सहायः

[4]दृष्ट्वा लोकान्म्रियमाणान्सहायं धर्ममाचरेत् ।
मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम् ॥
जायावर्जं हि सर्वस्य याम्यः पन्था विभिद्यते ।
धर्म एको व्रजत्येनं यत्रक्वचनगामिनम् ॥
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ॥

दशलक्षणो धर्मः सर्वैराश्रमिभिराचरणीयः

[5]शुद्धभावश्चरेद्धर्मं यत्र तत्राऽऽश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

कर्म द्विविधं प्रवृत्तं निवृत्तं च

[6]प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
काम्यं कर्म प्रवृत्तं स्यान्निवृत्तं ज्ञानपूर्वकम् ॥
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥

(१) नारद. २।२८।२७–२८.
(२) नारद. २।३३।१३–१४.
(३) नारद. २।४२।९–१०.
(४) अग्नि. १५९।६–९.
(५) अग्नि. १६१।११, १७.
(६) अग्नि. १६२।३–५.

पञ्चप्रकारो धर्मः

पुष्कर उवाच-
[1]वेदस्मार्तं प्रवक्ष्यामि धर्मं वै पञ्चधा स्मृतम् ।
वर्णत्वमेकमाश्रित्य योऽधिकारः प्रवर्तते ।
वर्णधर्मः स विज्ञेयो यथोपनयनं त्रिषु ॥
यस्त्वाश्रमं समाश्रित्य पदार्थः संविधीयते ।
उक्त आश्रमधर्मस्तु भिन्नपिण्डा-
(? भिक्षादण्डा )दिको यथा ॥
उभयेन निमित्तेन यो विधिः संप्रवर्तते । ¶
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ।
ब्रह्मचारी गृही वाऽपि वानप्रस्थो यतिर्नृप ॥
उक्त आश्रमधर्मस्तु धर्मः स्यात्पञ्चधाऽपरः ।
षाड्गुण्यस्याभिधाने यो दृष्टार्थः स उदाहृतः ।
स त्रेधा मन्त्रयागाद्यदृष्टार्थ इति मानवाः ॥
उभयार्थो व्यवहारो दण्डधारणमेव च ॥

श्रौतस्मार्तविधिविवेकः

तुल्यार्थानां विकल्पः स्याद्यागमूलः प्रकीर्तितः ॥
वेदे तु विहितो धर्मः स्मृतौ तादृश एव च ।
अनुवादं स्मृतिः सूते कार्यार्थमिति मानवाः ।
गुणार्थः परिसंख्यार्थो वाऽनुवादो विशेषतः ॥
विशेषदृष्ट एवासौ फलार्थ इति मानवाः ॥

यज्ञादीनि पञ्च देवादिपदप्राप्तिसाधनानि

[2]यज्ञैश्च देवानाप्नोति वैराजं तपसा पदम् ।
ब्रह्मणः कर्मसंन्यासाद्वैराग्यात्प्रकृतौ लयम् ॥
ज्ञानात्प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ॥
†तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥
[3]ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

¶ इतः परमन्तराऽन्तरा ग्रन्थस्त्रुटित इति प्रतीयते ।
† तत्प्राप्तिहेतुः पुरुषोत्तमप्राप्तिहेतुः ।
(१) अग्नि. १६६।१–९.
(२) अग्नि. ३७९।१–२, ७.
(३) अग्नि. ३८१।९–१०, १२.

न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥

[1]यज्ञस्तपस्तथा दानं सत्त्वाद्यैस्त्रिविधं स्मृतम् ।
यष्टव्यो विधिना यज्ञो निष्कामाय स सात्त्विकः ॥
यज्ञः फलाय दम्भाय राजसस्तामसः क्रतुः ॥

[2]यज्ञदानादिकं कर्म भुक्तिमुक्तिप्रदं नृणाम् ॥

सात्त्विकराजसतामसानि त्रिविधानि कर्माणि

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥

[3]... ... ... ... कर्माकामाय सात्त्विकम् ।
कामाय राजसं कर्म मोहात्कर्म तु तामसम् ॥
सिद्ध्यसिद्ध्योः समः कर्ता सात्त्विको राजसो ह्यपि ।
शठोऽलसस्तामसः स्यात्कार्यादिधीश्च सात्त्विकी ।
कार्यार्थे सा राजसी स्याद्विपरीता तु तामसी ॥

[4]अतः(?यतः) प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य विष्णुं सिद्धिं च विन्दति ॥
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
ब्रह्मादिस्तम्बपर्यन्तं जगद्विष्णुं च वेत्ति यः ।
सिद्धिमाप्नोति भगवद्भक्तो भागवतो ध्रुवम् ॥

[5]कर्तव्यमिति यत्कर्म ऋग्यजुःसामसंज्ञितम् ।
कुरुते श्रेयसेऽसङ्गाज्जैगीषव्येण गीयते ॥
प्रवृत्तं च निवृत्तं च कार्यं कर्म परोऽब्रवीत् ॥

(१) अग्नि. ३८१।४१, ४३.
(२) अग्नि. ३८१।४८–४९.
(३) अग्नि. ३८१।५२–५४.
(४) अग्नि. ३८१।५६–५८.
(५) अग्नि. ३८२।८, ११.

## शिवपुराणम्

पशोर्जीवस्य शिवसाम्यप्राप्तिक्रमः

†[1]कर्मातिशयमासाद्य पशोः पापपरिक्षयः ।
एवं प्रक्षीणपापस्य बहुभिर्जन्मभिः क्रमात् ॥
भवेद्विषयवैराग्यं वैराग्याद्भावशोधनम् ।
भावशुद्ध्युपपन्नस्य शिवज्ञानसमन्वयः ॥
ज्ञानध्याननियुक्तस्य पुंसो योगः प्रवर्तते ।
योगेन तु परा भक्तिः प्रसादस्तदनन्तरम् ।
प्रसादान्मुच्यते जन्तुर्मुक्तः शिवसमो भवेत् ॥

## कालिकापुराणम्

कर्म इष्टं पूर्तं च

[2]इष्टापूर्तौ स्मृतौ धर्मौ श्रुतौ वै शिष्टसंमतौ ।
प्रतिष्ठाद्यं तयोः पूर्तमिष्टं यज्ञादिलक्षणम् ॥

(१) प्रतिष्ठाद्यं देवताप्रतिष्ठाजलाशयोत्सर्गादि । तयोः इष्टापूर्तयोः मध्ये । ब्रक. ८

(२) स्मृतौ स्मृतिविषयौ, श्रुतौ साक्षाच्छ्रुतिविषयौ, शिष्टसंमतौ परंपरया समायातौ । § कृर. १०

(३) श्रुतौ श्रुत्या बोधितौ । शिष्टसंमतौ सदाचारसिद्धौ । § पप्र. ४४–४५

[3]भुक्तिमुक्तिप्रदं पूर्तमिष्टं भोगार्थसाधनम् ॥

[4]एकाग्निकर्म हवनं त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥

† पराशरमाधवग्रन्थे अन्यत्र वायुपुराणीयवचनानां 'वायुपुराणे' इति निर्देशो वर्तते । अत्र तु 'वायवीयसंहितायाम्' इति निर्देशाद्वायुपुराणाद्भेदोऽवगम्यते । वायवीयसंहिता च शिवपुराणान्तर्गतोपलभ्यते । अतः शिवपुराणे एतेषां वचनानां संग्रहः कृतः ।

§ शेषं ब्रकवत् ।

(१) पमा. १।५३ वायवीयसंहितायाम्.
(२) ब्रक. ८ ; कृर. १० वै (तौ) ; पप्र. ४४ कृरवत्.
(३) ब्रक. ८ ; कृर. १० ; पप्र. ४४.
(४) ब्रक. ८ महाभारतम् ; कृर. १० पूर्तमार्याः (पूर्तं मर्त्याः) महाभारतम् ; पप्र. ४५.

एकाग्निकर्म हवनम् एकस्मिन्नग्नौ आवसथ्यादौ यत्क्रियते होमरूपं कर्म । त्रेतायाम् आहवनीयाद्यग्नित्रये । पप्र. ४५

**वापीकूपतडागानि देवतायतनानि च ।**
**अन्नप्रदानमारामाः पूर्तमार्याः प्रचक्षते ॥**

## स्मृत्यर्थसारः

समर्थेन अनुकल्पो नाऽऽचरणीयः

**'प्रभुः प्रथमकल्पे तु योऽनुकल्पेन वर्तते ।**
**स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥**
**कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।**
**अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥**

## त्रिकाण्डमण्डनकारिकाः

नित्यकाम्यनैमित्तिकाधिकाराः

**'अधिकारास्त्रिधा नित्यकाम्यनैमित्तिकत्वतः ।**
**ते च श्रौतार्थवादोत्थकल्पत्वेन त्रिधा पुनः ॥**

तत्र प्रथमोद्दिष्टमधिकारं निरूपयति– अधिकारा इति । कर्मणां त्रैविध्यादधिकारस्यापि त्रैविध्यमिति भावः । नित्यादीनां लक्षणानि वक्ष्यन्ते । पुनस्ते अधिकाराः श्रौतार्थवादकल्पत्वेन त्रिविधा भवन्ति । एतदुक्तं भवति– 'सौर्यं चरुं निर्वपेत्' इत्यादिः श्रौतोऽधिकारविधिः । 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यादिरार्थवादिकोऽधिकारः । 'विश्वजिता यजेत' इत्यादौ कल्पो विधिरित्यादूह्यम् । पदप्र.

**द्विप्रकाराधिकाराणि कर्माण्यन्यानि कानिचित् ।**
**ज्योतिष्टोमो निरूढश्च पशुः सौत्रामणी तथा ॥**
**चातुर्मास्यानि दर्शश्च पौर्णमासोऽग्निहोत्रकम् ।**
**वाजपेय इतीमे स्युर्नित्याः काम्या इति द्विधा ॥**

अथेदं श्रूयते– 'पौर्णमास्यां पौर्णमास्या यजेत', 'वसन्ते ज्योतिषा यजेत' इत्यादि च । तत्र केषुचिन्नित्यकाम्याधिकारः, केषुचित्काम्यनैमित्तिकाधिकारः, केषुचिन्नित्याधिकार इत्याह– द्विप्रकारेति । नित्यकाम्यभेदेन द्वौ प्रकारौ । अन्यानि आधानभिन्नानि । कानिचित्, न सर्वाणि, आग्रयणादीनां नैमित्तिककाम्यत्वस्य वक्ष्यमाणत्वात् । तान्येवाऽऽह– ज्योतिष्टोम इति । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'स्वाराज्यकामो वाजपेयेन यजेत' इत्यादि तत्तद्वाक्येषु फलश्रवणादिति भावः । पदप्र.

नित्यकाम्यकर्मणोर्विवेकः काम्यनैमित्तिकयोर्विवेकश्च

**काम्यबुद्ध्या यदैतानि कर्माणि कुरुते तदा ।**
**तेनैव नित्यसिद्धिः स्यान्न नित्यार्था पृथक् क्रिया ॥**

काम्येन नित्यसिद्धिमाह– काम्येति । स्पष्टम् । पदप्र.

**क्वचित्कामनिमित्ताभ्यां सहिताभ्यामधिक्रिया ।**
**यथैवाऽऽग्रयणे यागे यथा जातेष्टिकर्मणि ॥**

क्वचित्कामनिमित्ताभ्यामधिकारः, तत्र उदाहरणमाह– क्वचिदिति । अत्र शरत्कालीननवशस्याऽऽगमो निमित्तम्, तदशनं कामः । एवं पुत्रोत्पत्तिर्निमित्तम्, पूतत्वादिकं कामना । तत्र सकृदनुष्ठानेनोभयसिद्धिः । पदप्र.

**केचिन्निमित्तमात्रेणैवाधिकारमिहाब्रुवन् ।**
**पूततोत्पत्त्यन्नवातीऽ कामाभावेऽपि सिध्यतः ॥**

अत्र नैमित्तिकाधिकार एवेति एकदेशिमतमाह– केचिदिति । पूतत्वान्नवाती आनुषङ्गिकं फलम् । तत्तु कामनां विनैव संभवति । पदप्र.

**अन्ये नैमित्तिकाः केचिद्यागाः काम्यास्तथाऽपरे ।**
**काम्यनैमित्तिकाः केचिदिति त्रैधं प्रकीर्तितम् ॥**

उद्भिदादिष्वधिकारस्वरूपमाह– अन्ये इति । उक्थ्यादिभ्योऽन्ये विश्वजिदादयः । 'सत्रायाऽऽगूर्याशक्तौ विश्वजिताऽतिरात्रेण' इत्यादिवाक्यैर्नैमित्तिकत्वम् । अपरे श्येनयागादयः । उपसंहरति– इतीति । पदप्र.

**निषिद्धेषु प्रवृत्तः सन्निषेधेष्वधिकारवान् ।**
**मन्त्रशून्येऽपि भावार्थे विद्वानेवाधिकारवान् ॥**

अथ निषेधवाक्येषु निवृत्तेरेव फलत्वात्तस्याश्च प्रवृत्तं प्रत्येव सार्थकत्वात् स च रागतः शास्त्रतो वा

(१) स्मृसार. १–२.
(२) त्रिका. १।४, ८–९, १२–१५, २१.

$ भागुरिमतेन अवोपसर्गस्याकारलोपः ।

भवति । अतस्तं प्रत्येव निषेधशास्त्रमधिकारकृद्भवति, न सर्वानित्याह— निषिद्धेष्विति । विद्वत्त्वं चाधिकारितावच्छेदकमिति वक्ष्यति । दर्विहोमादौ मन्त्राभावाद्विद्वत्त्वमप्यासं स्यात्, तदर्थमाह— मन्त्र इति । पदप्र.

पतितस्य शास्त्रीयकर्माधिकारे चर्चा

**'पतितो नैव कुर्वीत शास्त्रीयं कर्म किंचन ।**
**प्रारब्धमपि संजह्यादन्तरा पतितो भवेत् ॥**

अधुना पातित्यादिदोषरहितत्वमप्यधिकारितावच्छेदकमित्याह— पतित इति । स च प्रायश्चित्तानर्हः प्रायश्चित्तानिच्छुश्चेति द्विविधः । अन्यः प्रायश्चित्ती । लौकिककर्मव्युदासार्थं शास्त्रीयमिति । ननु 'आरम्भान्नियमः' इत्यादिना तस्यापि प्रक्रान्ताधिकारः प्रसक्त इति पूर्वपक्षं निराकरोति— प्रारब्धमिति । प्रकृतिस्थेन आरम्भे कृते मध्ये पातित्यनिमित्ते तत्रैव कर्मसमाप्तिः, न तु तदुत्तरं करणमिति भावः । पदप्र.

**अद्विजेष्वेव यो धर्मो धर्मः साधारणोऽपि वा ।**
**सत्यं वक्तव्यमित्यादिः पतितोऽपि समाचरेत् ॥**

न चैतत्सत्यभाषणस्यापि शास्त्रीयत्वेन निषेधः स्यादित्याशङ्क्य निराकरोति— अद्विजेष्विति । त्रैवर्णिकव्यतिरेकेण यो धर्मोऽसाधारण उक्तः, मन्त्रादिभिरिति शेषः, प्रदक्षिणादिरूपः, अपि वा द्विजाद्विजसाधारण्येन यो धर्मः सत्यवदनस्नानाचमनरूपस्तं कुर्यादेवेत्यर्थः । पदप्र.

**अश्वमेधादिके यज्ञे महापातकनाशने ।**
**पतितस्याधिकारोऽस्मिन्प्रत्युतानुगुणो भवेत् ॥**

ननु पतितस्य शास्त्रीयकर्मनिषेधात् कथमश्वमेधावभृथस्नातः शुध्येदित्यश्वमेधेऽधिकारः ? इत्याशङ्क्याऽऽह— अश्वमेधेति । आदिपदाद्व्रात्यस्तोमादिः । हेतुगर्भं विशेषणमाह— महापातकेति । अधिकारोऽस्तीति किं वक्तव्यम् ? प्रत्युत ब्रह्महत्यादिपापक्षयकामनाया अनुगुणः प्रायश्चित्तानुकल्प( ? नुकूल ) एव भवेत्, उपदेशात् । पदप्र.

(१) त्रिका. १।१४४–१४८.

**पतितोऽपि निषिद्धानां वर्जनेऽधिकृतो भवेत् ।**
**ब्रह्मघ्नस्यापि तेनान्या ब्रह्महत्या न युज्यते ॥**

अथ श्रूयते— 'न ब्राह्मणं हन्यात्', 'न कलञ्जं भक्षयेत्' इत्यादि । निषेधास्ते पतितेन पालनीया न वेति संदेहे पूर्वोक्ताधिकारन्यायेन न पालनीया इति पूर्वपक्षं निराकरोति— पतित इति । ब्रह्मघ्नस्य ब्रह्महत्याभ्यासे प्रायश्चित्तविशेषाम्नानादित्यर्थः । पदप्र.

**पतितत्वातिदेशेषु नाधिकारो विनश्यति ।**
**निष्कृतिर्ह्यतिदेश्याऽत्र न कर्मानधिकारिता ॥**

ननु 'स कुर्यात् पतितव्रतम्' इत्यादिकेन यस्य पतितातिदेशोऽस्ति तस्य पूर्वोक्तन्यायेनानधिकारिता धर्मातिदेशाद्भवति न वेति संदेहे सिद्धान्तमाह— पतितत्वेति । 'स पतितवद्भवेत्' इत्यादिवाक्यैः पातित्यातिदेशस्तत्र, नाधिकारविघातः । न चातिदेशो व्यर्थः, प्रायश्चित्तार्थमिति भावः । पदप्र.

## अनिर्दिष्टकर्तृकवचनानि

धर्म एव मृतानुगामी सहायः, धर्मो नानारूपः

**'भार्या पुत्रो मित्रमर्थाश्च रिक्थं**
**नश्यन्त्येते देहनाशे नरस्य ।**
**धर्मस्त्वेको नैनमुज्झत्यजस्रं**
**तस्माज्जह्यात्पुत्रदारान्न धर्मम् ॥**

**'न हि वेदाः स्वधीतास्तु शास्त्राणि विविधानि च ।**
**तत्र गच्छन्ति यत्रास्य धर्म एकोऽनुगच्छति ॥**

**'संवर्धितोऽर्थकामाभ्यामद्रोहिभ्यां श्रुतीरितः ।**
**धर्मो जयति नानात्मा दुर्ज्ञानो मोक्षसाधनम् ॥**

श्रुतीरितः श्रुत्याम् ईरितः चोदितः चोदनालक्षणः । अत्र श्रुतिशब्दः स्मृतिपुराणादीनां वेदाविरुद्धानामुपलक्षकः । अद्रोहिभ्यामर्थकामाभ्यां संवर्धितः सम्यग्वृद्धिं प्रापितः, सद्भिरिति शेषः । यथा अर्थकामाभ्यां धर्मस्य द्रोहो न भवति तथा वर्धित इत्यर्थः । स्वतन्त्रतया

(१) मेधा. ८।१७.
(२) मनु. ४।२४३.
(३) मान. ३.

अर्थकामौ सेव्यमानौ धर्मभङ्गं कुरुत इति यावत् । तथा च भगवान्वाल्मीकिः— 'द्वेष्यो भवत्यात्मपरो हि लोके कामात्मता खल्वपि न प्रशस्ता ' इति । आपस्तम्बश्च 'धर्मार्थसंनिपाते अर्थग्राहिण एतदेव ' ( आध. १।२४।२३ ) इति धर्मार्थयोः संनिपाते संकटे समवाये धर्मं विहाय योऽर्थार्थे यतते तस्य एतदेवेति महापातकप्रायश्चित्तमतिदिष्टवान् । अतः यथोचितकालं यथोक्तमेवार्थं कामं च सेवमानस्य पुरुषस्य धर्मसिद्धिरिति भावः ।

स च धर्मो नानात्मा नानास्वभावः । ' आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि ' इत्यमरः( ? ) । धर्मस्य नानात्वं नाम इष्टापूर्तदानतपोदमशमादिरूपत्वं वर्णाश्रमदेशजातिकुलभेदाच्च । अत एव दुर्ज्ञानः दुःखेन प्रयासेन ज्ञातुं शक्यः । खलर्थे ' आतो युच् ' ( पासू. ३।३।१२८ ) इति युच् । प्रयासश्च श्रुतिस्मृतिपुराणादीनामीर्ष्यासूयाराहित्येन याथार्थ्यविचारकः( ? रः ), अन्यथा अर्थानृतरूपपापप्रसक्तेः, ' वैवस्वते विविच्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः ॥ ' (तैआ. ६।५।३) इति श्रुतेः । तथा च शिष्यं प्रत्याचार्योपदेशः— ' ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । ' ( तैउ. १।११ ) इति । संमर्शिनः सम्यक् निपुणं परामर्शकर्तारः । युक्ताः सावधानचित्ताः । आयुक्ताः अभिजाताः प्रसिद्धा इति यावत् । अलूक्षाः अकपटान्तःकरणाः । धर्मकामाः धर्मैकप्रधानाः । एतादृशैर्निश्चेयो धर्म इत्यर्थः । धर्मज्ञाने लक्षणमाह आपस्तम्बोऽपि— ' यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः ' ( आध. १।२०।७ ) इति । तथा च मनुः— ' विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः । हृदयेनाभ्यनुज्ञातो यस्तं धर्मं व्यवस्यत ॥ ' ( मस्मृ. २।१ ) इति । अतो धर्मनिश्चेतृत्वमुक्तलक्षणलक्षितानामार्याणामेवेति धर्मस्य दुर्ज्ञानत्वम् । ननु 'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ' इत्यारभ्य ' त्रैगुण्यविषया वेदाः ' (भगी. २।४२–४५) इत्यन्तेन ग्रन्थजातेन वेदोक्तानां नित्यानां चातुर्मास्यादीनां फलकामनया क्रियमाणानामपि नश्वरस्वर्गादिफलजनकत्वेन किं तदनुष्ठानेन ? केवलं मोक्षसाधनं धर्मो वेदान्तश्रवणादिकः सेव्यतामिति चेत्, मोक्षस्यापि वेदोक्त एव धर्मः काम्यनिषिद्धवर्जमनुष्ठितः फलेच्छारहितो मुख्यं साधनमित्याह— मोक्षसाधनमिति । तथा च मनुः— ' कामात्मता न प्रशस्ता न चैवेहास्त्यकामता । काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥ ' ( मस्मृ. २।२ ) इति । चोदितेषु कर्मसु फलाभिसंधिः कामात्मता । सा प्रशस्ता न भवति, किंतु निषिद्धैव । कर्मसु प्रवृत्तिं प्रति सकामता प्रशस्तैवेत्याह— न चैवेहास्त्यकामतेति । इह कर्मप्रवृत्तिरेव नास्तीत्यर्थः । अत्र हेतुमाह— काम्यो हीति । हि यस्मात् वेदाधिगमः वेदाध्ययनं तदर्थे ज्ञानं च, वैदिकः कर्मयोगः वेदोक्तकर्मणामनुष्ठानमपि काम्यः इच्छासाध्य इत्यर्थः । एवं फलाभिसंधिराहित्येनानुष्ठितं कर्म मोक्षसाधनं भवतीत्यर्थः । तदाह स एव— ' तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् । यथासंकल्पितांश्चेह सर्वान्कामान् समश्नुते ॥ ' ( मस्मृ. २।५ ) इति । तेषु वेदोक्तकर्मसु सम्यक् निष्कामनया वर्तमानः कर्म कुर्वाणः । अमरलोकतां मरणरहितलोकतां मुक्तिमित्यर्थः, इह अस्मिन् लोकेऽपि यथा यथायोग्यम् अनिषिद्धमिति यावत्, असंकल्पितान् भोगांश्च समश्नुते प्राप्नोतीत्यर्थः । फलेच्छाराहित्येन कर्म कुर्वाणस्यापि स्वयमेवानिषिद्धा भोगा उत्पद्यन्त इत्यर्थः । तदाह आपस्तम्बः— ' धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ' ( आध. १।२०।३ ) इति । ननु नित्यानां कर्मणां फलाश्रवणात् मनुना कथं ' कामात्मता न प्रशस्ता ' इति चोदितकर्मसु फलाभिसंधिर्न प्रशस्तेत्यु( ? स्त इत्यु )क्तम् ? इति चेन्न, भगवता नित्यानामपि फलस्योपदेशात् । तदाह भगवान्— ' काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुरन्ये मनीषिणः ॥ ' ( भगी. १८।२ ) इति । काम्यानां कर्मणां स्वरूपतः त्यागमुक्त्वा सर्वकर्मणां नित्यनैमित्तिककाम्यानां फलत्यागं वा संन्यासं प्राहुरित्याह ।

नित्यानां फलाभावे कथमेवं ब्रूयात् भगवान् ? अतः 'फलाभिसंधिर्न प्रशस्ता( ? स्तः )' इति युक्तमुक्तमिति ज्ञेयम् । एवं च निष्कामनया कर्मण्यनुष्ठिते चित्तशुद्धिद्वारा ज्ञानमुत्पद्यते मोक्षश्च भवति । तदाह भगवान्— 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' ( भगी. ३।४ ) इति कर्मणामनारम्भात् अननुष्ठानात् नैष्कर्म्यं बन्धनिवृत्तिं न प्रतिपद्यते इत्यर्थः । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ( भगी. ३।२० ) इति ( च ) । निष्कामनयाऽनुष्ठीयमानस्य नित्यनैमित्तिकस्य कर्मणः प्रत्यवायादिकमपि नास्तीत्याह स एव— 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥' ( भगी. २।४० ) इति । इह निष्कामकर्मणि । 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' । महतो भयात् संसारात् त्रायत इत्यर्थः । भयं संसारः, 'तत्त्वेव भयं विदुषोऽमन्वानस्य' ( तैउ. २।७ ) इति श्रुतेः । अमन्वानस्य अमननशीलस्यैव तद्भयं संसारः इत्यर्थः । निष्कामकर्मानुष्ठानेनैव ब्रह्मविविदिषामाह श्रुतिः— 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति । अनाशकेनेत्येतत् सर्वत्रानुषज्यते अनाशकेन यज्ञेन, अनाशकेन दानेन, अनाशकेन तपसा चेति । न विद्यते नाशकं यस्य तदनाशकम् । फलाभिसंधिरेव नाशकमित्यर्थः ।

एवं च निष्कामनया कर्मस्वनुष्ठितेषु चित्ते विशुद्धे विविदिषा जायते । चित्तस्य शुद्धिर्नाम मोहान्निवृत्तिः । तदाह भगवान्— 'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥' (भगी. २।५२) इति । मोहः देहादावात्मबुद्धिः । एवं च चित्ते शुद्धे 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृउ. २।४।५ ) इति विधीनामवकाशो भवति गुरुमुखश्रवणमात्रेण कृतार्थो भवतीत्यर्थः । एवं च बन्धनिवृत्तौ निष्कामनया वेदोक्तकर्मानुष्ठानं विना नैवोपायान्तरमस्तीति सिद्धम् । ननु वेदेषु तावत् 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'सर्वान् लोकान् पशुबन्धयाजी अभिजयति' इत्यादिफलोद्देशेनैव कर्माणि विधीयन्ते । कथमफलोद्देशेनैतेषामनुष्ठानम् ? इति चेन्न, मनुना भगवता च सर्वकर्मणां फलत्यागस्य विहितत्वात् न दोषः । यद्यपि केषांचिद्विधिवाक्येषु फलविधानात् अवश्यं फलेच्छा जायते, तेऽपि तथैव कर्माण्यनुतिष्ठन्तो विहितकर्मानुष्ठानात् विहितस्वर्ग( ? स्वर्गादि )फलानि भुञ्जतां( ? ञ्जते ), पुनः कर्मफलनाशे भुवि जायन्तां( ? यन्ते ) च, 'प्रजामनु प्रजायसे, तदु ते मर्त्यामृतम्' ( तैब्रा. १।५।५।६ ) इति श्रुतेः, तेऽपि सत्कर्मानुष्ठानवैभवेन स्वर्गलोकादिवासेन च सत्संगतिद्वारा शुद्धचित्ताः सन्तो निष्कामकर्मानुष्ठानपथमेव क्रमात् प्रपद्य मोक्षभाजो भवन्ति, 'न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' ( भगी. ६।४० ) इति भगवद्वचनादित्यनुसंधेयम् । नित्यं नैमित्तिकं च फलोद्देशं विना क्रियमाणं मोक्षसाधनं भवतीत्युक्तम्, एवंभूतो धर्मो जयति सर्वोत्कर्षेण वर्तेत इत्यन्वयः । आन. ३–१०

सुखस्य ज्ञानस्य च साधनमार्षो धर्मोऽनुष्ठेयः

[1]**ऋष्युक्तमेव कर्तव्यं न तु तत्कृतमाचरेत् ॥**

[2]**न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य देहिनः ॥**

[3]**धर्माय पुनरारम्भः संकल्पोऽपि न निष्फलः ॥**

[4]**यज्ञदानव्रतजपतीर्थयात्रादिकं च यत् ।**
**यस्त्वेवं कारयेदन्यं तेन सर्वमनुष्ठितम् ॥**

[5]**धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥**

[6]**सुखं धर्मैकनियतम् ॥**

[7]**यशोर्थे धर्मसेवनम् ॥**

---

(१) कुम. ८६७.

(२) कुर. ३४ स्मृतिः.

(३) वीक. १।७.

(४) निप्र. २।३०७. स्मरन्ति.

(५) पमा. १।४९ स्मर्यते ; मच. ११।२४४ प्रथमचरणमात्रम्, स्मृतिः.

(६) मच. १२।१०५.

(७) मच. १२।३६.

[1]वर्णानामाश्रमाणां च या मर्यादा मया कृता ।
तां ये समनुवर्तन्ते प्रसादस्तेषु संभवेत् ॥
[2]वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ।
तेनैव जन्मना ज्ञानं लब्ध्वा याति शिवं पदम् ॥
[3]सदाचारेण देवत्वमृषित्वं च तथैव च ।
प्राप्नुवन्ति कुयोनित्वं मनुष्यास्तद्विपर्यये ॥
[4]मङ्गलाचारयुक्तानां विनिपातो न विद्यते ॥
[5]आचारनष्टं धर्मिष्ठमपि विष्णुपरायणम् ।
त्यजेदन्त्यजवच्छीघ्रं तं कदाचन नाऽऽलपेत् ॥

(१) मुक्ता. ४ भगवान्.
(२) मुक्ता. १६६ भगवान्.
(३) मुक्ता. ५ पारिजाते.
(४) निप्र. १।५०९.
(५) प्रपा. २५७ स्मृतिसारसमुच्चये.

[1]पुण्यक्षेत्राभिगमनं पुण्यतीर्थनिषेवणम् ।
यज्ञो वा विविधो ब्रह्मंस्त्यक्ताचारं न रक्षति ॥
[2]अनेन विधिना विप्रः संध्याह्नोमादिकं चरन् ।
सर्वपापैः प्रमुच्येत जीवेच्च शरदां शतम् ।
सर्वकर्मसु योग्योऽसौ भवतीत्याह शौनकः ॥
[3]साधनानामकृत्स्नत्वान्मौर्ख्यात्कर्मकृतस्तथा ।
फलस्य चाभिसंधानादपविद्धो विधिः स्मृतः ॥
[4]स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ॥
[5]नित्यं सदा यावदायुर्वीप्सायोगः फलाश्रुतिः ।
प्रत्यवायोऽनुकल्पश्चेत्यष्टौ नित्यत्वबोधकाः ॥

(१) विपा. ३।२।८४१-८४२.
(२) इन्दु. ३६८ आह्निकचन्द्रिकायाम्.
(३) मेधा. २१५.
(४) निप्र. १।१३.
(५) गप. १९ संग्रहकारिका.



